॥ श्रीः ॥



# श्रीमद्ब्रह्मसूत्राणि

श्रीमज्जगन्नाथयतिकृतटिप्पणीसंवलित
श्रीमन्मध्वभाष्यसमेतानि ॥

नयनिगमान्तनिष्णातैः श्रीमुष्णं
श्रीमदार्याचार्यवंशमुक्तामणिभिः
गोपालकृष्णाचार्यैः,
संशोधितानि ॥

तानि,
सि । ऐ । इ । उपाधिविशिष्टेन
पळ्ळे, चेंचलराय
इत्यनेन.
ग्रोवुमुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितानि ॥

शालिवाहनशकाब्दाः ॥ १८२१.
क्रिस्ताब्दाः ॥ १९००.
PRINTED AT "THE GROVE PRESS,"
TEYNAMPETTE, MADRAS.

## ॥ भूमिका ॥

—*—

(१) ब्रह्मसूत्राख्यः यद्वा उत्तरमीमांसाख्यः अयं ग्रन्थः भगवता व्यासेन रचितः इति सर्वे पण्डिताः स्वीकुर्वन्ति ॥

(२) ब्रह्मविचारः ग्रन्थस्य विषयः ॥

(३)

| | |
|---|---|
| ग्रन्थे अध्यायाः | ४ |
| प्रत्यध्यायं पादाः | ४ |
| | सूत्राणि |
| शाङ्करभाष्यप्रकारेण | ५५५ |
| रामानुजभाष्यप्रकारेण | ५४५ |
| मध्वभाष्यप्रकारेण | ५६४ |

(४) सूत्रसङ्ख्यायां भेदः वक्ष्यमाणरीत्या आसीत् ॥

| | म-प्रकारेण | रा-प्रकारेण |
|---|---|---|
| शाङ्करेण एकतया पठितं सूत्रं अन्यभाष्यकाराः द्वे इति अपठन्, अतः वृद्धिः ॥ | ७ | ६ |
| शाङ्करेण अपठितैः अन्यभाष्यकारैः पठितैः सूत्रैः वृद्धिः ॥ | (ग) ४ | (क) २ |
| शाङ्करेण द्वे इति पठितस्य सूत्रस्य अन्यभाष्यकारैः एकमिति पठितत्वात् हानिः | १ | १३ |
| शाङ्करेण पठितस्य सूत्रस्य अन्यभाष्यकारैः अपठितत्वात् हानिः ॥ | (ज) १ | (च) ५ |
| शेषः वृद्धिः | ९ | |
| शेषः हानिः | | १० |

(क) १-१-९. प्रतिज्ञाविरोधात् ॥
१-२-१६. अत एव च सब्रह्म ॥

(ग) १-२-१९. दृश्यते तु ॥
२-४-३. प्रतिज्ञानुपरोधाच्च ॥
२-३-१९. युक्तेश्च ॥
३-१-९. यथेतमनेवं च ॥

( च ) १-१-१५. प्राणभृच्च ॥
२-२-२. प्रवृत्तेश्च ॥
२-२-६. अभ्युपगमेऽप्यर्थाभावात् ॥
३-३-६. श्रुतत्वाच्च ॥
४-३-५. उभयव्यामोहात्तत्सिद्धेः ॥

( ज ) ३-४-४६. श्रुतेश्च ॥

शब्देष्वपि अल्पभेदोऽस्ति, तथाऽपि तैः भेदैः विशेषतः अर्थभेदः न भवति ॥

( ५ ) सूत्राणां रचनकालः अयमिति न जानीमः, तथाऽपि भारत युद्धे अर्जुनं प्रति उपदिष्टायां भगवद्गीतायां ब्रह्मसूत्रेति पदश्रवणात् भारतयुद्धात् पूर्वमेव रचितानि इति पण्डिताः मन्यन्ते । भारतयुद्धं तु इतः पञ्चसहस्रवर्षात् पूर्वकालीनमिति सर्वे ग्रन्थकाराः स्वीकुर्वन्ति । किञ्च ब्रह्मसूत्रघटितशब्दाः प्रायेण उपनिषद्घटकाः, न रामकृष्ण रुद्रविष्णुशिवशब्दा इव पुराणस्थाः । अतोऽपि ब्रह्मसूत्राणि पुराणकालात् पूर्वतनानीति वक्तुं युज्यते ॥

( ६ ) ब्रह्मसूत्राणि अल्पाक्षरत्वात् अध्याहारापेक्षणात् सुज्ञेयानि न भवन्ति । अतः भाष्यमपेक्षणीयम् ॥

( ७ ) भाष्यकाराः अनेके । तेषां मध्ये शंकराचार्यः, रामानुजाचार्यः, मध्वाचार्यश्च दाक्षिणदेशे विशेषेण प्रख्याताः । ते देवांशेन संभूता इति तेषां शिष्यजना मन्यन्ते । शंकरस्य भाष्यं इतो द्वादशशतवर्षात् पूर्वकालिकमिति, रामानुजस्य भाष्यं शंकरभाष्यसमयात् पञ्चशतवर्षात् परमिति, मध्वाचार्यस्य भाष्यं रामानुजभाष्यसमयात् द्विशत वर्षादनन्तरमिति विज्ञायते । वर्षसङ्ख्यायां किंचिन्न्यूनाधिकभावो भवेत्, पौर्वापर्यविषये तु सन्देहो नास्ति । शङ्करभाष्यं प्रथमं, रामानुज भाष्यं तदनन्तरभवं, मध्वाचार्यस्य भाष्यं ततोप्यनन्तरभवमिति सर्वे पण्डिताः स्वीकुर्वन्ति । शङ्करभाष्यात् पुरातनं कस्यापि भाष्यं नोपलभ्यते ॥

( ८ ) इदानीं मुद्रितं भाष्यं भगवता मध्वाचार्येण कृतम् । तस्य टिप्पणी जगन्नाथयतिना शतवर्षात् पूर्वं कृता ॥

( ९ ) सूत्रपाठे विशेषभेदाभावेऽपि श्रुतिसूत्रोक्तं असतः सदुत्पत्तिः कदाऽपि न सम्भवतीति न्यायविशेषं त्रयोऽपि भाष्यकाराः स्वी

कृत्य एतद्यथायोपपत्ति मतभेदेन स्थापयामासुः। तेषां सिद्धान्तान् (१, २, ३.) परिशिष्टेषु संकुचिततया प्रश्नोत्तररूपेण अलिखम्। तत्रापि सङ्ग्रहः। जीवब्रह्मणोः भेदो नास्ति। जगत् भ्रान्तिकल्पितम्। भ्रान्तौ निवृत्तायां जगत् न स्फुरतीति, भ्रान्तिकाले तु जगत् सत्यमिति, जीवेश्वरौ भिन्नाविति च मत्वा विहितकर्मानुष्ठानं ज्ञानसाधनं च कार्यमिति शङ्कराचार्यः। ईश्वरः जीवः प्रकृतिः एते अनादय इति अत्यन्तभिन्नाश्चेति तत्र जीवः अल्पशक्त्यादिमान् ईश्वरः पूर्णशक्त्यादिमान् ईश्वरप्रसादार्थं सत्कर्मानुष्ठानं कार्यं श्रवणमननादिविचारश्च कर्तव्य इति, ईश्वरप्रसादेन अपरोक्षद्वारा जीवाः शाश्वतसुखं प्रतिपद्यन्त इति, मध्वाचार्यः।

ईश्वरः जीवः जडं च एतानि अनादीनि, तत्र चेतनाचेतनात्मकप्रपञ्चः ईश्वरस्य शरीरमिति, शरीरशरीरिणोः भेद इति, ईश्वरप्रसादार्थं सत्कर्मानुष्ठानं श्रवणमननादिकं च कार्यमिति भगवत्प्रसादेनैव जीवाः नित्यसुखं प्राप्नुवन्तीति, रामानुजाचार्यः॥

(१०) सूत्रपाठे विशेषभेदाभावेऽपि विरुद्धसिद्धान्ताः कथं आविरासन् इति चेत् तस्य उपपत्तिकारणानि अनेकानि सन्ति, तानि सङ्ग्रहेण वदामि॥

॥ प्रथमकारणम्॥

ब्रह्मसूत्रेषु इदं सूत्रं सिद्धान्तसूत्रं इदं सूत्रं पूर्वपक्षसूत्रं इति विभागो नास्ति, अतः सर्वाणि सूत्राणि सिद्धान्तसूत्राणीति मध्वाचार्यो मन्यते, कानिचित् सूत्राणि पूर्वपक्षसूत्राणि कानिचित् सूत्राणि सिद्धान्तसूत्राणीति शङ्कररामानुजौ मन्येते, पूर्वपक्षसूत्राङ्गीकारविषये शङ्कररामानुजौ एकतात्पर्यवन्तावपि इदं सूत्रं पूर्वपक्षसूत्रं इति विषये तयोरैकमत्यं नास्ति। यथा प्रान्तस्थितं प्रथमसूत्रं पूर्वपक्षसूत्र

१. नाणुरतच्छ्रुतेरिति मिति शङ्करः, सिद्धान्तसूत्रमिति रामा
चेन्नेतराधिकरणात् नुजः मन्यते॥

२-३-२१ शङ्करः
२-३-२२ रामानुजः

२. न वियदश्रुतेः २-३-१ — द्वितीयसूत्रं पूर्वपक्षसूत्रमिति उभौ मन्येते। कानि कानि सूत्राणि पूर्वपक्षसूत्राणीति विषये अस्मदुक्तचतुर्थपरिशिष्टः द्रष्टव्यः॥

॥ द्वितीयकारणम् ॥

ब्रह्मसूत्रेषु अध्यायविभागः पादविभागश्च अस्ति न अधिकरणविभागः, अतः भाष्यकाराः स्वेच्छाऽनुसारेण विषयकल्पनं कृत्वा अधिकरणविभागं अकुर्वन् ॥

| | | |
|---|---|---|
| शङ्करभाष्यप्रकारेण अधिकरणानि | .. .. | १९२ |
| रामानुजभाष्यप्रकारेण ,, | .. .. | १५६ |
| मध्वभाष्यप्रकारेण ,, | .. .. | २२३ |

अत्र अस्मदुक्तपञ्चमपरिशिष्टः द्रष्टव्यः॥

॥ तृतीयकारणम् ॥

सूत्राणि विशेषेण अध्याहारापेक्षाणि, भाष्यकाराः इच्छाऽनुसारेण पदान्यध्याहृत्य वाक्यानि पूरयन्ति। यथा प्रान्तस्थितसूत्रे

३. न वियदश्रुतेः॥ २-३-१ — "उत्पद्यते" इति शङ्करामानुजौ अध्याहरतः "अनुत्पत्तिमत्" इति मध्वाचार्यः अध्याहरति। किंच कश्चित् भाष्यकारः क्वचित् स्थले अध्याहरति कश्चित् नाध्याहरति, यथा प्रान्तस्थितसूत्रे

४. कार्यं बादरिरस्य गत्युपपत्तेः॥ ४-३-७ — "कार्यं प्रति" इति मध्वशङ्करौ व्याख्याय न किंचित् अध्याजह्रतुः। "कार्यं ये उपासते तान्" इति रामानुजो व्याख्याय उपासते इति पदं अध्याजहार॥

॥ चतुर्थकारणम् ॥

संस्कृतभाषायां शब्दाः अनेकार्थकाः भाष्यकाराः तेषां स्वाभिप्रायानुसारेण अर्थं स्वीकुर्वन्ति, यथा प्रान्तस्थितप्रथमसूत्रे

१. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्। — अन्तराशब्दः विनार्थक इति मध्वाचार्यः। मध्यार्थक

२-३-१५ शंकरः
२-३-१६ रामानुजः

इति शंकररामानुजौ मन्येते ।

२. नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥
२-३-१७. शङ्करः.
२-३-१८. रामानुजः.

द्वितीयसूत्रे आत्मशब्दः परमात्मवाचक इति मध्वाचार्यः। जीवार्थक इति शङ्कररामानुजौ मन्येते । किञ्च कश्चित् पाठभेदेन अर्थभेदान् कल्पयन्ति

३. समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४-२-७.

यथा प्रान्तस्थितसूत्रे "समाना" इति शङ्करस्य पाठः, "समना" इति मध्वाचार्यस्य पाठः । पाठभेदेन च शब्दाः भिन्नार्थका भवन्ति ॥

समाना = समानलक्षणा

समना = लक्ष्मीः

पञ्चमकारणम् ॥

वेदसंहितासु यथा पदपाठः अस्ति तथा ब्रह्मसूत्रेषु उपनिषदादिषु च पदपाठो नास्ति, अतः सूत्रभाष्यकाराः उपनिषदादिभाष्यकाराश्च इष्टानुसारेण पदविभागं कुर्वन्ति । पदविभागे व्यत्यासात् अर्थेऽपि व्यत्यासो भवति । यथा "गुणाद्वा लोकवत्" ( २-३-२६. ) इति सूत्रे लोकवत् इति शङ्करस्य पदविभागः। आलोकवत् इति मध्वाचार्यस्य पदविभागः । तथा "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" ( छा. ६-१६-३. ) इति उपनिषदि तत् त्वं असि इति शङ्करस्य पदविभागः । अतत् त्वं असि इत्यपि सम्भवतीति मध्वाचार्यः मन्यते । संहितायां कुतः नियतानि पदानि, उपनिषदादिषु अनियतानि इत्यत्र नियामकं न जानीमः । पूर्विकाः उपनिषदः ब्राह्मणानि च संहितायाः व्याख्यानरूपाणीति मत्वा तेषु पदपाठं नाकुर्वन् इति अहं मन्ये ॥

षष्ठकारणम् ॥

ब्रह्मसूत्रेषु इदं सूत्रं अस्य वेदवाक्यस्य अर्थनिरूपणाय प्रवृत्तं इति न व्यक्तम्, तत्र तत्र "तथा दर्शयति" "तथा श्रुतेः" इति सू

श्रयते, तादृशस्थलेषु भाष्यकाराः स्वस्वमतोपयुक्ताः श्रुतिस्मृतीः उदाहरन्ति। मध्वाचार्यः वर्तमानकाले अनुपलभ्यमानान् अनेकान् श्रुत्यादीन् उदाहरति॥

(११) पूर्वोक्तभाष्यकारैः वर्णितसिद्धान्तेषु मध्ये कस्सिद्धान्तः सूत्रकृद्बादरायणाभिप्रेत इति प्रथमं विचारः कर्तव्यः, योऽर्थः श्रुतिस्मृत्यनुगुणः सोऽर्थः बादरायणाभिप्रेततया ज्ञातव्य इति पण्डिताः मन्यन्ते, यदि वेदव्याख्यातारः सूत्रव्याख्यातृभ्यः भिन्नाः सर्वैः प्रामाणिकत्वेन अभ्युपगताश्च तदा पण्डितैरुक्तो मार्गः युक्त एव, तथा नास्ति, वेदेषु परस्परविरुद्धार्थप्रतिपादकानि वाक्यानि सन्ति तेषां सूत्रभाष्यकारा वा तच्छिष्या वा व्याख्यातारो वर्तन्ते, तेषां मतानुसारेण श्रुतिस्मृतीः अन्वयन्ति। यथा " सदेव सोम्येदमग्र आसीत् " ( छा.६-२-१ ) इति श्रुतौ " अद्वितीयं " इति पदस्य वस्त्वन्तरशून्यत्वमर्थ इति शङ्करो मन्यते, तस्य पदस्य समाभ्यधिकराहित्यमेव अर्थ इति न सर्ववस्तुराहित्यमर्थ इति मध्वाचार्यो मन्यते। तस्यैव पदस्य अधिष्ठात्रन्तरशून्यत्वमर्थ इति रामानुजो मन्यते। " ब्रह्मैव सन् ब्रह्माप्येति " ( बृ ४-४-६. ) इति श्रुतेः ब्रह्मैव सन् ब्रह्म प्राप्नोति, ब्रह्मप्राप्तिश्च देहान्तरप्रतिसन्धानाभावमात्रमिति अर्थ इति शङ्कराचार्यः, ब्रह्मैव सन् = जीवभावमविहायेति यावत् ब्रह्म प्राप्नोतीति अर्थ इति मध्वाचार्यः, ब्रह्मैवसन् = आविर्भूतगुणाष्टकरूपब्रह्मरूपस्सन् ब्रह्माप्येति = परब्रह्मणि लीनो भवति, लयो नाम तद्भिन्नत्वेन दर्शनाभावः इति रामानुजाचार्यो मन्यते। अतः श्रुतिस्मृत्यनुसारेण अयमेव सूत्रार्थः बादरायणाभिप्रेत इति निश्चेतुं न शक्यते॥

(१२) तर्हि कथं निश्चेतव्य इति चेत्—सूत्रे काव्यरीत्या अक्लिष्टकल्पनया च योऽर्थः प्रतीयते स एव बादरायणाभिप्रेत इति निर्णेतव्यः। एवं क्वचित् सूत्रे ( १-१-२. ) ब्रह्मणः जगज्जन्मस्थितिलयकारणत्वं उक्तम्। क्वचित् सूत्रे ( १-१-२० ) जीवात् ब्रह्मणः भिन्नत्वं उक्तम्। क्वचित् सूत्रे ( २-३-३३. ) कर्तृत्वमुक्तम्। क्वचित् सूत्रे ( ४-३-१. ) मरणानन्तरं जीवस्य लोकान्तरगमनमुक्तम्। क्वचित् सूत्रे ( १-१-७. ) ब्रह्मणः मोक्षदातृत्वमुक्तम्। क्वचित् सूत्रे ( ४-४-२३. ) विष्णुलोकप्राप्त्यनन्तरं जीवानां पुनरावृत्तिर्नास्तीति उक्तम्। एकस्मिन् एव सूत्रे मायाशब्दस्य प्रयोगो वर्तते। सोऽपि स्वप्नपदार्थविषय एव। इत्यादिसूत्रार्थै

पर्यालोचनया बादरायणः द्वैती इति मम प्रतिभाति ॥

( १३ ) व्यासः द्वैती चेत् भवतु, "तत्त्वमसि" इत्याद्यद्वैतप्रतिपादकवेदवाक्यानां का गतिः ? कुतः वेदे द्वैताद्वैतपरवाक्यानि सन्ति ? इति चेत्—वेदे द्वैताद्वैतपरवचनानि सन्तीति यत् तत्सत्यम् । तस्य कारणं वेदऋषीणां विचित्रबुद्धिरेव इति अहं मन्ये । कानि वाक्यानि अस्माभिः अङ्गीकर्तव्यानि इति विषये वक्ष्यमाणभारतश्लोके उक्तात् उत्तरात् अन्यत् उत्तमं उत्तरं मम न प्रतीयते ॥

तथा च भारतश्लोकः—

तर्कोऽप्रतिष्ठश्श्रुतयो विभिन्नाः
नैको ऋषिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतस्स पन्थाः ॥

आरण्यपर्वणि एकादशोत्तरत्रिशततमे ( ३११ ) अध्याये पञ्चदशोत्तरशततमः ( ११५ )

येये यान्यान् पूज्यजनानिति मन्यन्ते तेषांतेषां तेते महाजनाः। अस्माकं भक्त्या वा क्रियया वा ज्ञानेन वा निष्ठया वा परमात्मनः किमपि प्रयोजनं नास्ति । यत्कार्यं निष्कापट्येन अस्माभिः क्रियते तदेव भगवत्प्रीतिकरं भवतीति निष्कपटनिरीश्वरवादिनोऽपि परमात्मा रक्षितुं समर्थ इति अहं मन्ये । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति वचनं यथार्थमिति भासते ॥

( १४ ) अस्य ग्रन्थस्य मुद्राङ्कनं बहूनां मित्राणां साहाय्येन आसीत् । राजकार्यधुरन्धराः के. सि. एस्. ऐ. इति च बिरुदाङ्किताः महाराजश्री मैसूर् दिवान् शेषाद्रिअय्यर् ग्रन्थस्य मुद्राङ्कने ईप्सितं सर्वं साहाय्यं कार्यमिति मम प्रार्थनानुसारेण मैसूर् ग्रन्थशालाधिपतीन् वेदशास्त्रसम्पन्नान् बि. ए. महादेवशास्त्रिणः तदपेक्षितं सर्वं कार्यमिति विश्वासपूर्वकं आज्ञापयामासुः । ते महादेवशास्त्रिणः ग्रन्थस्य मुद्राङ्कने यद्यत्कार्यं आवश्यकं तत्सर्वं श्रद्धया जागरूकतया च अकुर्वन् । महाराजश्री रामचन्द्रराव् साहेब् इत्येतेषां, महाराजश्री आर्काड् श्रीनिवासाचार्याणां च साहाय्येन मूलग्रन्थाः लब्धाः । मैसूर् कौन्सिलर् महाराजश्री सि. ऐ. इ. कृष्णमूर्तिराव् महाराजश्री रामचन्द्रराव्

साहेब् द्वारा एकं मूलग्रन्थं अदुः । मध्वशास्त्रसम्पन्नाः वि. घ. लक्ष्मणाचार्याः मूलग्रन्थेषु कांश्चिदध्यायान् अदुः । मध्वशास्त्रसम्पन्नाः बि. ये. ये. श्रीनिवासाचार्याः मूलग्रन्थेषु कांश्चित्पादान् अदुः । मध्वशास्त्रसम्पन्नाः वेंकटेशाचार्याः शुद्धाशुद्धपत्रिकां परिनिर्मिमिरे । एतेषां सर्वेषां महाजनानां वन्दनानि समर्पयामि ॥

—*—

☞ पळ्ळे, चेंचलरावु.

# श्रीमद्ब्रह्मसूत्राधिकरणविषयसूचिका।

—:*:—

## प्रथमाध्यायस्य प्रथमः पादः ।

—:*:—



—:*:—

## प्रथमाध्यायस्य द्वितीयः पादः ।

——:*:——

——:*:——

———:*:———

द्वितीयाध्यायस्य चतुर्थः पादः ।

—*-:*:-*—

तृतीयाध्यायस्य प्रथमः पादः ।

| अधि०। | सूत्र०। | विषयाः। |
|---|---|---|
| | | नं, विशेषतस्तु मातापितृशरीरसम्बन्धं विनाऽपि जननमस्तीति निरूपणम् ॥ |

——:*:——

<u>तृतीयाध्यायस्य द्वितीयः पादः ।</u>

| | | |
|---|---|---|
| १ | १-४ | यत्स्वप्ने दृश्यते तत्सत्यं, तत्कर्ता परमात्मेति, स्वाप्निकपदार्थः जाग्रच्छुभाशुभसूचकः इति च निरूपणम् ॥ |
| २ | ५ | स्वप्नपदार्थस्य अदर्शनमपि परमात्माधीनमेव इति निरूपणम् ॥ |
| ३ | ६ | जाग्रदवस्था परमात्मनैव भवतीति निरूपणम् ॥ |
| ४ | ७ | नाडीस्थपरमात्मनि जीवस्य प्रवेशः सुषुप्तिरिति निरूपणम् ॥ |
| ५ | ८ | ब्रह्मैव सुप्तपुरुषं प्रबोधयतीति निरूपणम् ॥ |
| ६ | ९ | सर्वेषां सर्वकालेष्वपि ब्रह्मैव स्वप्नादिकारणं इति निरूपणम् ॥ |
| ७ | १० | जीवस्य परमात्मनि अर्धप्रवेशे मूर्छा संभवतीति निरूपणम् ॥ |
| ८ | ११-१३ | जाग्रत्स्वप्नसुषुप्तिषु प्रवर्तकः विश्वतैजसप्राज्ञरूपः परमात्मा एक एवेति निरूपणम् ॥ |
| ९ | १४-१७ | परमात्मा प्राकृतरूपरहितः अप्राकृतज्ञानानन्दादिरूपवान् इति निरूपणम् ॥ |
| १० | १८ | यथा सूर्यात् सूर्यप्रतिबिम्बः भिन्नः तथा जीवः परमात्मनः अन्यः इति निरूपणम् ॥ |
| ११ | १९ | जीवः ज्ञानानन्दस्वरूपोऽपि तदभिव्यक्त्यर्थं भक्तिं कुर्यादिति निरूपणम् ॥ |
| १२ | २०-२१ | साधनेषु न्यूनाधिकभावसत्त्वात् फलेऽपि न्यूनाधिकभावो वर्तते इति निरूपणम् ॥ |
| १३ | २२ | परमात्मनः सृष्टिसंहारकर्तृत्वमात्रं नास्ति, किन्तु पालनकर्तृत्वमपि अस्तीति निरूपणम् ॥ |
| १४ | २३-२७ | परमात्मा अव्यक्तोऽपि स्वप्रसादात् व्यक्तो भवतीति निरूपणम् ॥ |

—:*:—

## तृतीयाध्यायस्य तृतीयः पादः ।

——:*:——

तृतीयाध्यायस्य चतुर्थः पादः ।

——:※:——

## श्रीमद्बादरायणप्रणीतब्रह्मसूत्राणांवर्णानुक्रमसूचिका ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ ॐ ॥

॥ ब्रह्मसूत्रभाष्यम् ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

(१) नारायणं गुणैस्सर्वै-
रुदीर्णं दोषवर्जितम् ।

---

॥ भाष्यदीपिका ॥

श्री जगन्नाथयतिविरचिता.

जिज्ञास्यं जन्मरक्षालयनियतिमतिप्रत्यगज्ञानबन्ध-
श्रेयोदं शास्त्रगम्यं श्रुतिगतवचनैर्मुख्यवृत्त्याऽभिधेयम् ।
भैष्मीसत्यासमेतं बहुगुणवपुषं भीतिपूर्वारदूरं
भक्तिश्रुत्यादिचिन्त्यं भजनपरगतिं भावये वेणुकृष्णम् ॥ १ ॥

आम्रस्तम्भात्समागत्य ताम्रतुण्डान्निहत्य यः ।
नम्रं नौमि जगन्नाथं कम्रोऽपात्तं नृकेसरी ॥ २ ॥

अनधीत्य महाभाष्यं यस्य व्याकृष्यनुग्रहात् ।
तमुपासे नृसिंहार्कं प्रत्यूहतिमिरापहम् ॥ ३ ॥

पूर्णबोधगुरून्वन्दे जयार्यान् व्यासदेशिकान् ।
रामचन्द्रगुरूनार्यान् लक्ष्मीकान्तगुरूनपि ॥ ४ ॥

येनायं निरणायि मध्वगुरुसद्भाष्यप्रकाशाशयः
प्राखण्डि प्रतिवादिदर्शनगणः प्राबन्धि गुर्वर्णवः ।
शिष्येभ्यस्समदायि वित्तमुभयं प्रालम्भि विद्यासनं
सोयं श्रीरघुनाथतीर्थगुरुराट् शुद्धिं विदध्यान्मतेः ॥ ५ ॥

जयार्यरचितां टीकामनुसृत्य यथामति ।

ज्ञेयं गम्यं गुरूंश्चापि

जगन्नाथाख्ययतिना क्रियते भाष्यदीपिका ॥ ६ ॥
क्वचिद्भाष्यविवृत्यैव टीकार्थोऽपि विविच्यते ।
तत्त्वप्रदीपतात्पर्यचन्द्रिकाद्युक्तमार्गतः ॥ ७ ॥

( १ ) परमानन्दाद्यात्मकस्य परमात्मनः प्रतिबिम्बतया स्वतश्चिदानन्दाद्यात्मकस्य जीवस्य अनाद्यविद्याकामकर्मादिनिमित्तबन्धध्वंसाय निखिलजीवजडात्मकात् प्रपञ्चात् परमार्थतोऽत्यन्तभिन्नतया निखिलगुणोदारतया निरस्तसमस्तदोषतया परमपुरुषमवगमयितुं सकलसदागमानां प्रवृत्तिरिति तत्त्वम् । यदाहुः—

अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ॥

इति । 'प्रवर्तते' दुःखप्रहाणसाधनं परमात्मानं प्रतिपादयतीत्यर्थः । तेषां चार्थनिर्णयाय ब्रह्मसूत्राणि चकार भगवान् बादरायणः । तानि च पटलपिहितनयनवत् यथावदर्थावेत्तृभिः अविद्याख्यपटलपिहितनयनपदोक्तसदर्थैः अन्यैरन्यथाव्याख्यातानि यथावद्व्याचिख्यासुर्भगवानानन्दतीर्थाचार्यः समङ्गलस्यैव सफलत्वात् प्रारिप्सितभाष्यस्य कैवल्याद्यखिलफलसाधनतासिद्ध्यर्थं निरन्तरायपरिसमाप्त्याद्यर्थं च नारायणप्रणामरूपं मङ्गलमाचरन् शिष्यशिक्षार्थं ग्रथयति चिकीर्षितं च प्रतिजानीते — 'नारायणं' इति । 'सर्वगुणैः उदीर्णं' उदारं उत्कृष्टम् । 'दोषवर्जितं' दोषरहितम् । 'ज्ञेयं' परोक्षापरोक्षाख्योभयविधज्ञानविषयीकरणीयम् । 'गम्यं' प्राप्यम् । उभयत्र सद्भिरिति शेषः । नारायणं 'नत्वा गुरूंश्च' इति चकारार्थस्समुच्चयः । तथा च गुरूंश्च नत्वा साष्टाङ्गं नमस्कृत्य 'सूत्रार्थः' समस्तवेदतदुपबृंहणेतिहासपुराणादिशब्दराश्यर्थभूतो नारायणाख्यो ब्रह्मसूत्रार्थो मया 'उच्यते' भाष्यते इति योजना ॥

अत्र गुणैरुदीर्णमित्यनेन प्रथमाध्यायस्य, दोषवर्जितमित्यनेन द्वितीयाध्यायस्य, ज्ञेयमित्यनेन तृतीयाध्यायस्य, गम्यमित्यनेन चतुर्थाध्यायस्य अर्थः शिष्यहिततया आदौ संगृहीत इति ज्ञातव्यम् । अनेनैव विशेषणचतुष्टयेन विशेष्यवाचकनारायणशब्दः न डित्थादिशब्दवत्साङ्केतिकः; किंतु अराः दोषाः तद्विरुद्धाः नाराः गुणाः तेषामाश्र

नत्वा सूत्रार्थ उच्यते ॥

य इति वा, अराणामाश्रयो न भवतीति वा, विषयतया नरविशेषसं बन्धिज्ञानाश्रय इति वा, अरविधुरमुक्ताश्रय इति वा योगेनोत्कृष्टगुण वाचक इत्युक्तं भवति । तेन नारायण एव शास्त्रार्थ इति प्रदर्शितम् । अनेनैव विशेषणचतुष्टयेन वन्द्यताप्रयोजकानि बहुगुणत्व-निर्दोषत्व-शास्त्रज्ञेयत्व-शास्त्रगम्यत्वानि चोक्तानि ॥

यद्वा—अत्र नारायणमित्यादिपदपञ्चकेन समुद्रशायित्वस वैवसनोत्कर्षक्रीडाज्ञानादिगुणैरुच्चत्व-सम्यग्दोषकर्षण-प्रकृष्टद्युतिमयत्व-ज्ञानिनः प्रति प्राप्तिनिरोधरहितत्वाख्यनिमित्तपञ्चकयुतेन नारायणवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यमूर्तय उच्यन्ते ; तासामेतच्छास्त्राध्यायपादेषु प्रतिपिपादयिषितत्वात् । तथा च 'नारायणं नत्वा गुणैरुदीर्णं नत्वा दोषवर्जितं नत्वा' इत्यादिका तत्त्वप्रदीपिकोक्तयोजना द्रष्टव्या ॥

'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इति वचनाद्गुरोर्नाम नाग्रहीदाचार्यः । न च 'गुरून् नारायणशब्दवाच्यान् नारायणपदेनैव गुरुनाम चोवाच, आसमन्तात् सो विशिष्ट एव हि व्यासः' इति तत्त्वप्रदीपिकाविरोध इति वाच्यम्; गुरुदेवतयोर्वास्तवाभेदविवक्षया तदुपपत्तेः, योगरूढव्यासकृष्णाद्यसाधारणनामविवक्षयैवमुक्तत्वात् । गुरुत्वनिमित्तशास्त्रप्रभवत्व-शास्त्रसंप्रदायप्रवर्तकत्व-साक्षादुपदेशकत्वाख्यप्रकारबाहुल्यात् गौरवाद्वा बहुमानार्थं वा बहुवचनप्रयोगः । यद्यपि गुरुर्व्यासः, इष्टदेवताऽपि स एवेति न तयोर्भेदः, तथाऽपि विशेषानुग्रहार्थं पृथङ्नतिरिति । एवं स्वस्य गुरुदेवतयोः भेदे अरुचिसूचनार्थोऽपिशब्दः । तथा च - 'अपि' तथाऽपि गुरुदेवताभेदाभावेऽपीत्यर्थः । तत्त्वप्रदीपकृत्तु अपिशब्दात्सूत्रकारमपीत्याह । तस्यापि विशेषानुग्रहार्थं पृथङ्नतिरित्येवाभिप्रायः । यद्वा — 'अपिशब्दः विशेषणान्तरसमुच्चयार्थः, तद्विवरणमस्येत्यादि' इति सुधोक्तरीत्या गुणपूर्णत्वोपपादकजगज्जन्मादिकारणत्वादिरूपानुक्तविशेषणान्तरसमुच्चयार्थोऽपिशब्दः ॥

अनेनैव श्लोकेन श्रोतृप्रवृत्त्यङ्गभूताः शास्त्राधिकारिविषयप्रयोजनसंबन्धाश्च शिष्यशिक्षार्थं सूचिता भवन्ति ॥

( २ ) द्वापरे सर्वत्र ज्ञाने आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रे-
न्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावततार ।

( ३ ) अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां

---

( २ ) ननु ब्रह्मसूत्राणां प्रामाण्ये सत्येव प्रेक्षावदुपादेयत्वम्, प्रायोस्य प्रामाण्यप्रयोज्यत्वात् । सत्येव तस्मिन् प्रातीतिकार्थनिरासेन यथावद्व्याख्येयत्वं संभवति । प्रामाण्यमेव कथमित्याशङ्क्य आप्तिमूलत्वादिनैवेति परिहारमभिप्रेत्य वक्तृश्रोतृप्रसङ्गदोषाभावरूपाप्तिमूलत्वोपपादनाय सूत्रागतिक्रममाह — 'द्वापरे' इत्यादिना । द्वावेव धर्मपादौ परावशिष्टौ यस्मिन्युगे, द्वाभ्यां युगाभ्यां परस्मिन्नुत्तरस्मिन् युगे इति वा, वैवस्वतमन्वन्तरे महायुगेषु प्रथमद्वापरापेक्षयाऽष्टाविंशे धर्मपादद्वययुतत्वात् द्वापराख्ये युगे । 'सर्वत्र' 'मनुष्याणां ऋषीणां देवानां च' इति तत्त्वप्रदीपोक्तेः 'लोक इति सज्जनो विवक्षित' इति प्रमेयदीपोक्तेश्च सर्वेषां देवऋष्यादीनां सतां 'ज्ञाने' सम्यज्ज्ञाने 'आकुलीभूते' सम्यज्ज्ञानं सगुणत्वादिज्ञानं उत निर्गुणत्वादिज्ञानमिति विप्रतिपत्तिजन्यसन्देहविषयतां निर्गुणत्वादिज्ञानमेव न त्वन्यदिति मिथ्याज्ञानविषयतां च प्राप्ते सति, तज्ज्ञानविपर्यीभूतं सगुणत्वादिकं तत्त्वमन्यद्वेति सन्देहे तादृग्विपर्यये च सतीति यावत् । 'तन्निर्णयाय' तस्मिन् सगुणत्वादिज्ञाने तस्य सम्यज्ज्ञानत्वस्य निश्चयार्थं, इदमेव तत्त्वं नान्यदिति विषये सम्यक्त्वनिश्चयार्थमिति यावत् । 'ब्रह्मरुद्रेन्द्रादिभि' देवैरिति शेषः 'अर्थितः' उपयाचितः । अन्यपदार्थानां देवानां ब्रह्मरुद्रेन्द्रादिभिरिति यद्विशेषणं तत् प्रसिद्धप्रभावानामपि भगवदितरेषामशक्यमिदं कार्यमिति प्रदर्शनार्थम् । 'भगवान्' समग्रैश्वर्यवैराग्यादिगुणसम्पन्नो 'नारायणः' तन्निर्णयाय 'व्यासत्वेन' व्यासभावे 'शुभमरकतवर्ण' इत्युक्तव्यासरूपेण 'अवततार' आविर्बभूवेति । तन्निर्णयायेत्यस्यावृत्त्या योजना । तन्निर्णयायेन्द्रादिभिरर्थितो रुद्रः ब्रह्मा च ततः तैः सर्वैरुपगम्योत्तमाधिकारिभिः अर्थितो भगवानिति बुद्ध्या विवेकेनान्वयः ॥

( ३ ) ततः किं प्रकृते इत्यत आह — अथेति । 'अथ' तस्मात्तन्निर्णयायावतीर्णत्वात् अवतारानन्तरमेव तत्त्वज्ञानाननुकूलविजातीयव्यापारव्यवधानमकृत्वेति यावत्, न तु परोपदेशमपेक्ष्येति वा ।

तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत्,

'इष्टानिष्टप्राप्तिपरिहारेच्छूनां' इष्टप्राप्तिश्चानिष्टपरिहारश्च ताविच्छूनाम्। तत्त्वप्रदीपरीत्या अप्राप्तसुखप्राप्तिदुःखपरिहारेच्छावतामिति वा। मोक्षस्य पुरुषार्थतासमर्थनार्थं वादिविप्रतिपत्तेः तत्स्वरूपनिरूपणार्थं चैवमुक्तम्। अन्यथा मुमुक्षूणामित्येव ब्रूयात्। नैतावताऽलं 'आत्यन्तिक' इति चोपस्कर्तव्यम्। 'तद्योगं' तयोरुपायविशेषं निवृत्तधर्मं परापरतत्त्वज्ञानरूपं 'अविजानतां' अजानानां सज्जनानां 'तज्ज्ञापनार्थं' इष्टानिष्टप्राप्तिपरिहारोपायज्ञापनार्थं। 'उत्सन्नं' अपपाठादिना तिरोहितं 'वेदं चतुर्धा' — 'व्यभजत्' इत्यावर्तते, 'ततः प्रागेव विभक्तं' इति 'पुनरेकैकं' इति च शेषः। तथा च अवान्तरवेदविभागात्प्रागेव ततः स्वत एव चतुर्धा विभक्तात् ऋगादिरूपात् मूलवेदात् चतुर्धा विभक्तं वेदं ऋङ्निगदादिरूपमुपवेदं व्यञ्जयन् अध्यापनेनाभिव्यज्य ततस्तस्मादेकैकस्मादेकैको भाग इति चतुर्धा व्यभजत्। ऋचो ऋच उद्धृत्याभिव्यज्य ततो ऋग्वेदं, निगदाद्यजुर्वेदम्, साम्नस्सामवेदम्, आथर्वणादथर्वणवेदं कृतवानित्यर्थः। पुनरेकैकं च वेदं ऋग्वेदादिरूपावान्तरभेदं वेदं अध्येतृणामल्पशक्तिं वीक्ष्य चतुर्विंशतिधा एकशतधा एकोत्तरशताख्यप्रकारेण सहस्रधा द्वादशधा च व्यभजदित्यर्थः। तदुक्तं ऋग्भाष्ये —

ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः।
यजूंषि निगदाच्चैव तथा सामानि सामतः॥

इत्यादिना। स्वत एव चतुर्धा विभक्तात् मूलवेदात् ऋगादिरूपोपवेदमुद्धृत्याभिव्यज्य तस्मादवान्तरं ऋग्वेदादि कृतवानित्यर्थः। अत्र पूर्वं द्वापरग्रहणं महावेदादुद्धृतस्योपवेदस्यावान्तरवेदत्वेनावान्तरवेदस्य च चतुर्विंशत्यादित्वेन विभागकथनं च अखिलज्ञानाकुलीभावसमर्थनार्थम्। कालतो विभागात्पूर्वं तत्तच्छाखाऽपरिज्ञानाच्च भवति ह्याकुलीभावः। तदुक्तं - चक्रे वेदतरोरित्यादिना। 'अल्पमेधसः' आकुलीभूतज्ञानात्, तन्निवारणार्थमिति शेषः। यद्यपि

एको वेदः कृते ह्यासीत्त्रेतायां स त्रिधाऽभवत्।

चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च।

( ४ ) तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार।

( ५ ) तच्चोक्तं स्कान्दे—

---

स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम्।

उत्सन्नस्स कलिं प्राप्य वेदः प्रायेण सर्वशः॥

इत्यथर्वणभाष्योदाहृतस्मृतौ कृतयुगे वेदैकत्वस्य त्रेतायां त्रैविध्यमात्रस्य द्वापरे पञ्चविधत्वस्य चोक्तेः, तथा सर्वस्यापि वेदस्य कलावेवोत्सादोक्तेः, अत्र तु 'वेदमुत्सन्नं' इत्यनेन त्रेतायुगे चतुर्धाविभागस्य द्वापर एवोत्सादस्य चोक्तेर्विरोधो भाति। तथाऽपि अव्यक्तमूलराश्यपेक्षया वेदैक्योक्तेः सम्भवात्, त्रेतायुगे प्राचुर्येण भगवदिज्यासाधनत्वविवक्षया त्रैविध्योक्तावपि वस्तुत अथर्वणाख्यप्रकारान्तरसत्त्वस्य अनिषेधेन विधान्तरस्यापि सत्त्वसंभवात्, द्वापरे अपौरुषेयस्य वेदस्य चतुर्विधत्वेऽपि पौरुषेयैरितिहासपुराणादिभिः सह पञ्चविधत्वस्यापि सम्भवात्, बाहुल्येन सर्वैः प्रकारैर्वेदस्य कलावुत्सादेऽपि व्यासावतारात्पूर्वं द्वापरेऽप्यपपाठादिरूपोत्सादस्य सम्भवात् अविरोधः॥

( ४ ) एवमुपोद्घातमुक्त्वा प्रकृतमाह—'तदर्थनिर्णयाय' इति। तेषां सर्वेषां अर्थः तं उपक्रमादियुक्तिभिर्निर्णेतुमित्यर्थः। 'ब्रह्मसूत्राणि' ब्रह्म वेदः, तदर्थः परब्रह्म वा, तस्य सूत्राणि तत्स्वरूपनिर्णायकानीत्यर्थः। गीताभाष्ये तु ब्रह्मसूत्राणि शारीरकसूत्राणीति रूढिरप्युक्ता। अत्र द्वापर इत्यादिना ब्रह्मसूत्राणि चकारेत्यन्तेन वक्तुर्व्यासस्य नारायणावतारत्वोक्त्या प्रमादाज्ञानादिदोषाभावसाधनात्, तत्राप्रयोजकत्वशङ्कायाश्च भगवत्त्वोक्त्या परिहृतत्वात्, ब्रह्मादीनामर्थित्वोक्त्या च श्रोतृदोषाभावस्य वक्तरि तन्निमित्तविप्रलम्भाभावस्य चोक्तत्वात्, 'ज्ञान आकुलीभूते तन्निर्णयाय' इत्यनेन अज्ञाननिर्हरणस्य प्रसक्तत्वेन प्रसङ्गदोषाभावस्य तत एवानपहासस्य चोक्तत्वादाप्तिमूलता दर्शिता भवति। 'ब्रह्मसूत्राणि' इत्यनेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वात् श्रुतिमूलत्वं, न्यायव्युत्पादकत्वाद्युक्तिमूलत्वं च सूचितम्। तथा च सिद्धं ब्रह्मसूत्राणां प्रामाण्यमिति भावः॥

( ५ ) उक्तमेवार्थं प्रमाणेन स्थापयति — 'तच्च' इति। 'च' शब्द

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥

( ६ ) गौतमस्य ऋषेश्शापाज्ज्ञाने त्वज्ञानतां गते ।

---

पवार्थे । तथा च – यदस्माभिः 'द्वापरे' इत्यादिनोक्तं तत् स्कान्दपुराणोक्तमेवेति भावः । न केवलमस्माभिः किन्तु स्कान्दे चोक्तमिति समुच्चये वा 'च' शब्दः । तथोक्तं तत्त्वप्रदीपे — यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणं, सर्वज्ञत्वादविप्रलम्भकत्वात् । तथाऽपि स्कान्दे चोक्तमिति प्रौढवादं करोतीति । 'न केवलमस्माभिः' इति प्रमेयदीपेऽपि । किमुक्तमित्यतस्तत्पठति—'नारायणात्' इति । तदुपदेशादित्यर्थः । 'ब्रह्मादिद्वारा' इति शेषः । यद्वा — उत्पत्त्याद्यष्टके ज्ञानस्य प्रविष्टत्वात् तस्य नारायणजन्यत्वोपपत्तिः । 'निष्पन्नं' उत्पन्नं 'अखिलं' सगुणत्वादिसर्वविषयकमित्यत्रापि सम्बध्यते । 'ज्ञानं' सम्यज्ज्ञानं 'स्थितं' यथोत्पन्नं तथैव संशयाद्यनास्कन्दितमेव स्थितम् । 'सत्सु' इति शेषः । ज्ञानविषये संशयादिकं नाभूदिति फलितार्थः । 'त्रेतायां' युगे 'तत्' ज्ञानं 'किञ्चित्' विषये 'अन्यथाजातं' इदमदो वेति पूर्वोक्तसंशयविषयतां अन्यदेवेति मिथ्याज्ञानविषयतां च प्राप्तमित्यर्थः । अत्र द्वापरवत् त्रेतादिरप्यष्टाविंशो ग्राह्यः । द्वापरे युगे अखिलं सर्वविषयं तदन्यथा जातमित्यन्वयः ॥

( ६ ) ननु कालप्रयुक्तमन्यथात्वं चेत् द्वापरयुगे भागत्रयस्यैवान्यथात्वं युक्तं, न तु सर्वस्येत्यतो विशेषकारणं चाह—'गौतमस्य' इति । 'तु' शब्दश्चार्थः शापे विशेषकारणत्वस्य ज्ञाने वा सम्यक्त्वस्य द्योतकः । तथा च गौतमस्य ऋषेः शापाच्च ज्ञाने गुणपूर्णत्वादिसम्यज्ज्ञाने अज्ञानतां नेदं तत्त्वज्ञानमिति तत्त्वज्ञानभिन्नत्वप्रकारकप्रतीतिविषयतां संदेहविषयतां च गते प्राप्ते सति, ज्ञानविषये सम्यज्ज्ञानविरुद्धसंशयविपर्ययविषयतां गते सतीति यावत् । 'ब्रह्मरुद्रपुरस्सराः' तदादयो 'देवाः' 'सङ्कीर्णबुद्धयः' अज्ञानादिमिश्रज्ञानिनः यद्विषये ज्ञानं जातं पुनस्तद्विषयगतप्रकारेषु अज्ञानसंशयादिमन्तः सन्तः 'शरण्यं' तत्र साधुं शरणेषु रक्षकेषु अग्र्यम् 'अनामयं' प्रमाणलक्षणटीकाकरीत्या अत्र आमयपदं रोगवाचकं दोषान्तरोपलक्षकं तथा च नि

सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः।
शरण्यं शरणं जग्मुः नारायणमनामयम् ॥

दोषं 'नारायणं' "सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा" इत्याद्युक्तप्रकारेण 'शरणं जग्मुः' शरणं गता इत्यर्थः । तं प्रार्थयन् स्वकार्यं च व्यज्ञापयन्निति च द्रष्टव्यम् । अत्र ब्रह्मादिबुद्धीनां सङ्कीर्णत्वं नाम सङ्कीर्णबुद्धिषु सज्जनेषु दयायुक्तत्वमेव, न त्वितरेषां बुद्धीनामिवाज्ञानादिमिश्रत्वम्, अज्ञानसंशयादिविषयविषयकत्वं स्वहृतगोनिर्मातृमात्रविषयकगौतमशाप-कालनिमित्ताभिभवपदोक्ततिरोधानयोर्देवेष्वसम्भवात् । ब्रह्मादिदेवगोनिर्मातृव्यतिरिक्तलोकस्य तु गौतमहतगोनिर्मातृत्वाभावेऽपि संप्रदायप्रवर्तकाभावात् कालतश्चाज्ञानप्राप्तिरिति द्रष्टव्यम् । गौतमशापागमप्रकारस्तु इत्थम्-पूर्वं हि द्वादशवार्षिक्यां अनावृष्टौ सत्यां तया पीडिता ऋषयो गौतमाश्रमं अन्नवन्तं अध्यूषुः । तत्रैव बहुकालं तेनादृताः स्वस्वविहितकर्माणः समवर्तन्त । अथ अनावृष्टौ शान्तायां तेषां स्वस्वाश्रमगमनेच्छा समजनि । तदर्थं गौतममनुज्ञां ययाचिरे । तथाऽपि स्वाश्रमाशून्यतालोभात् न तदनुज्ञामलम्भिषत । तस्मिन्नेवावसरे हरशिरस्स्थसुरसरितं सपत्नीं मत्वा तां निश्चिकासयिषन्त्या पार्वत्या प्रेषितो विनायको ब्रह्मचारिवेषेण प्रच्छन्नस्तानृषीनुपससार, अब्रवीच्च-हे तत्रभवन्तः, किमर्थमिममाश्रममधिवसथ? चिरकालमेकपरान्नाशनेन युष्मत्तपो विनङ्क्ष्यति । तस्मात्स्वं स्वमाश्रमं व्रजत । तत्र च मयोच्यमानमुपायमाकर्णयत । यूयं ज्ञानतपोबलात् कांचन मायामयीं माहेयीं निर्मिमीध्वम् । तां गौतमतपोबलाकृष्टबलाहकावलीविगलितसलिलवर्धितसस्यादौ प्रवेशयत । अथ सस्यग्रासिनीं तां अपक्रामयितुं प्रयतिष्यते गौतमः । ततः सहसा तत्कमण्डलूदकसंस्पर्शमात्रेण सा निपतिष्यति । तदा ब्राह्मणास्तं प्रतिब्रूत यावदिमामशेषमातरं गां नोत्थापयिष्यति भवान् तावन्न भोज्यान्नः । ततो हरशिरस्स्थद्युसरितमवतार्य तद्वारिणा अभिषिच्य तामुज्जीवयतु भवान् इत्येवमनुतापिनं तमभिलप्यापसरतेत्युक्त्वा हेरम्बोऽम्बिकां जगाम । अथ ते विनायकेन प्रणिगदितं प्रयाणोपायमुपसृत्य अन्वतिष्ठन् । तेनैवोपायेन प्रातिष्ठन्त । ततस्तावद्गौतमः तपसा त्र्यम्बकमाराध्य मन्दाकिनीं अनुसमानीय तद्वारिणा सुरभिमभिषिषेच । ततः सो

(७) तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिस्स्वयम् ।
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ।
कृष्णो द्वादशधा चैव
(८) पुनस्तस्यार्थवित्तये ।

स्थौ मुनिस्तद्धत्याऽघात् विमुक्तश्च । अत एव गोदावरीति तस्याः संज्ञा समजनि । अथ विनायकचेष्टितं प्रतिबुध्य ऋषिभ्यश्चुक्रोध, अशपच्च गौतमः यदस्मदन्ननिमित्तज्ञानबलादेते गां निरमंस्त तत् ज्ञानमपैत्विति ॥

(७) देवैः प्रार्थितो भगवान् किमकरोदित्यत आह — 'तैः' इति । 'तुः' अवधारणे । 'महायोगी' मुनिरूपः महाशक्तिर्वा । 'पुरुषोत्तमः' क्षराक्षरचेतनाभ्यां उत्तमो 'भगवान्' नारायणः 'तैः' स्वशरणागतिं प्राप्तैरेव देवैः 'विज्ञापितकार्यः' सन् विज्ञापितं प्रतिपादितं अवतारादिरूपं कार्यं यस्य सः, रूपेण 'महायोगी' नाम्ना कृष्णः 'पराशरात् सत्यवत्यामवतीर्णः' इत्यन्वयः । अवतारानन्तरिकप्रयोजनमाह — 'उत्सन्नान्' इति । 'स्वयं' साक्षात् 'हरिः' 'भगवान्' ज्ञानादिगुणशाली व्यासः 'उत्सन्नान्' अपपाठादिना तिरोहितान् 'वेदान्' 'स्वयमेव' अन्योपदेशमन्तरेण 'उज्जहार' उच्चारणेन व्यक्तीचकार । तांश्च प्रागेव चतुर्धा विभक्तान्वेदान् पुनः 'चतुर्धा व्यभजत्' चतुर्भागानकरोत् । एकैकं च भागं 'पुनः' चतुर्विंशत्यादिशाखारूपेण ऋग्वेदं 'चतुर्विंशतिधा', यजुर्वेदं 'एकशतधा' एकोत्तरशताख्यैकप्रकारेण, सामवेदं 'सहस्रधा' अथर्वणवेदं 'द्वादशधा च' व्यभजदित्यर्थः । भगवत्त्वस्य मुख्यत्वज्ञापनाय 'भगवान्' इति पुनरुक्तिः । 'एव' शब्दाः प्रकाराधिक्यव्यवच्छेदकाः । 'च' शब्दाः प्रकाराणां परस्परसमुच्चायकाः ॥

(८) प्रकृतमाह — 'पुनः' इति । पूर्वेणैवास्यान्वयः । यद्वा - उत्तरेणाप्यन्वयः । वेदविभागानन्तरं इत्यर्थः । 'तस्य' वेदस्य 'अर्थवित्तये' अर्थज्ञानाय । वेदानां बहुत्वेऽपि अर्थस्यैकत्वात्तद्विवक्षया ता

चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
( ९ ) अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।

न्वेदानिति बहुवचननिर्दिष्टानामपि वेदानां तस्येत्येकवचनेन निर्देशो नानुपपन्नः, तस्येत्यस्य समुदायैकवचनत्वात् । नित्यसापेक्षत्वात् 'अर्थवित्तये' इति समासस्साधुः । पुनश्शब्दस्यानन्तर्यार्थत्वं च 'पुनरप्रथमे भेदे' इत्यमरोक्त्या 'पुनरेव समभ्यसेत्' इत्यत्र पुनः निद्रापगमानन्तरमिति सुधोक्त्या 'तृतीये पुनरेव च' इत्यत्र वरत्रयानन्तरमिति विश्वेशतीर्थोक्त्या च सिद्धम् । 'चकार' इत्यत्रापि 'कृष्णो व्यासः' इत्यनुषज्यते । ननु सूत्रान्तरैरेव वेदार्थनिर्णयसम्भवात्किं ब्रह्मसूत्रैरिति गतार्थताशङ्कापरिहाराचाह—'येषां' इति । 'सूत्रत्वं' सूत्रशब्दप्रवृत्तिनिमित्तं 'अञ्जसा' मुख्यतोऽस्तीत्यर्थः । अस्य तानि 'चकार' इति पूर्वेण 'एवंविधानि' इत्युत्तरेण वा अन्वयः ॥

( ९ ) किं तत् सूत्रत्वं यदाञ्जस्यं ब्रह्मसूत्राणामित्यत आह—'अल्प' इति । यावदक्षरतां विना श्रुत्यर्थाभ्यां विवक्षितार्थसिद्धिर्नास्ति तदर्थप्रतिपादनाय तावन्मात्राक्षरमसति नियामके ततोऽधिकाक्षररहितं 'अल्पाक्षरम्' । केचित्तु—अल्पाक्षरबह्वक्षरयुक्तपर्यायपदयोर्मध्ये अल्पाक्षरपदोपेतत्वं अल्पाक्षरत्वमित्याहुः । तट्टीकाननुगुणम् । एवं च भवितुमर्हतीत्यनुच्यमानार्थं 'असन्दिग्धम्' असन्दिग्धार्थं निर्णीतार्थमिति तत्त्वप्रदीपोक्तेः । अनन्यलभ्योत्तमार्थयुक्तं 'सारवत्' । बहुशाखागतपदवाक्यार्थनिर्णायकं 'विश्वतोमुखम्' । तत्त्वप्रदीपे तु एकं प्रयोजनं प्रत्यपेक्षितार्थस्य कृत्स्नस्य प्रतिपादकं 'विश्वतोमुखं' इत्युक्तम् । अर्थज्ञानमन्तरेण गानभागपूरणादिप्रयोजनान्तरार्थाक्षररहितं 'अस्तोभम्' । शब्दार्थदोषविधुरं 'अनवद्यम्' । यदेतावद्विशेषणयुतं तदेव 'सूत्रं' इति 'सूत्रविदः' सूत्रलक्षणज्ञाः 'विदुः' अभ्युपयन्तीत्यर्थः । अत्र भाष्यनिर्णयहेतुशून्यवाक्यं कुशलपुरुषोक्तलौकिकवार्तादिकं भगवन्नाममन्त्रादिकं अर्थाप्रतिपादकत्वेऽपि ऋगक्षराव्याप्तगानभागपरिपूरकसामगतस्तोभाक्षराणि अपशब्दोपेततादृशवाक्यं च व्यावर्तयितुं क्रमेण विशेषणानीति पदप्रयोजनं तत्त्वप्रदीपोक्तमनुसन्धेयम् । अत्र सर्वत्र धर्मिकथनेऽपि तद्वारा सूत्रपदप्रवृत्तिनिमित्तमप्युक्तमिति नासङ्गतिः ॥

(१०) निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ।

(११) सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।

---

(१०) नन्वेतत्सूत्रत्वं कुतो ब्रह्मसूत्राणामाञ्जस्येनेत्यत आह— 'निर्विशेषित' इति । 'ब्रह्मसूत्रस्य' इति समुदायैकवचनम् । चोऽवधारणे यत इत्यर्थे च । 'अपि' शब्दो मुख्यसूत्रत्वसमुच्चये । तथाच यतो ब्रह्मसूत्राणां मुख्यसूत्रत्वमस्ति अत एव हि 'निर्विशेषितसूत्रत्वं' निर्गता विशेषा यस्मात्तन्निर्विशेषं तथाख्यातं निर्विशेषितं तादृशं सूत्रपदं यस्य तस्य भावः । यद्वा — विशेषो विशेषणं, तस्याभावोऽस्य सञ्जातः तादृशः सूत्रशब्दो यस्य तस्य भावो निर्विशेषितसूत्रत्वम् । विशेषणरहितकेवलसूत्रपदवाच्यत्वमस्ति पुराणादावुक्तम् । अन्यथा तन्न स्यात्, व्यापकाभावे व्याप्याभावनियमादित्यर्थः । अत्राद्यपक्षे तथाख्यातमित्यर्थे ण्यन्तात्कर्मणिक्तः, द्वितीये तद्धितः 'इतच्'इति विवेकः । अनेन ब्रह्मसूत्राणां मुख्यसूत्रत्वे निर्विशेषितशब्दवाच्यत्वादिति हेतुरुक्तो भवति । अत्र हेतोरप्रयोजकत्वमाशङ्क्य व्याप्तिवचनेन तां परिहर्तुं तत्र प्रथमं यद्यन्न निर्विशेषितं तत्तन्न मुख्यमित्यन्वयव्याप्तिमभिप्रेत्य तत्र दृष्टान्तमाह — 'यथा' इति । 'एव' इत्यनुवर्तते । तेनैकशब्दार्थस्य मुख्यत्वस्य व्यापकता लभ्यते । तथाच यथा एकस्यैव सतः कृष्णस्य वेदव्यासस्य व्यासत्वं निर्विशेषितव्यासपदवाच्यत्वमस्तीत्यर्थः । तथाच निर्विशेषितत्वान्मुख्यसूत्रत्वं ब्रह्मसूत्राणामिति वाक्यशेषः । इदानीं ये अमुख्याः न ते निर्विशेषपदवाच्याः किन्तु सविशेषपदवाच्याः इति व्यतिरेकव्याप्तिमभिप्रेत्य तत्र दृष्टान्तमाह — 'अन्ये' इति । 'यथा' इत्यनुवर्तते । पूर्वमेकशब्दश्रवणादत्रामुख्या इति लभ्यते । 'व्यासः' इति शेषः । तथाच – यथा कृष्णात् 'अन्ये' द्रौण्यादयो ये ऽमुख्यास्ते 'विशेषणात्' एव विशेषणमपेक्ष्यैव व्यासाः न तन्नैरपेक्ष्येण । तृतीयार्थे वा पञ्चमी, सविशेषणव्यासपदवाच्या एवेति योजना ॥

(११) नन्वस्तु ब्रह्मसूत्राणां मुख्यत्वं, तथाऽपि तदन्येषामप्यस्ति, न तेषामेव, इतरेषाममुख्यत्वे कारणाभावादित्याशङ्क्य, तत्र निर्विशेषितत्वहेतोः समव्याप्तिपरेण तदर्थमेव प्रागुक्तव्यतिरेकव्याप्तिदृष्टान्तव

( १२ ) मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।
( १३ ) इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
( १४ ) सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ।

चनेनोपपादितान्वयव्याप्तिकमनुमानं नियामकत्वेनाह — 'सविशेष ण' इति । 'अतः' इत्यनुवर्तते । अपराणीति चावर्तते । 'हि' शब्दो हेत्वर्थे । तथाच - यतः 'अपराणि' ब्रह्मसूत्रेभ्योऽन्यानि सूत्राणि 'अपराणि' अमुख्यानि अत एव 'विदो' ज्ञानिनः 'अपराणि' 'सवि शेषणसूत्राणि' विशेषणसहितसूत्रपदवाच्यानीति 'विदुः' उपजान न्तीत्यर्थः । तथाच अन्यसूत्राणां सविशेषणसूत्रत्वात् अमुख्यत्वमेव, न मुख्यत्वमिति भावः ॥

( १२ ) निर्विशेषितत्वमुख्यत्वयोः सविशेषणत्वामुख्यत्वयोश्च दृष्टा न्तमुखेनोपपादितां व्याप्तिं दृष्टान्ते मुख्यत्वामुख्यत्वयोः वेदविभागग्र न्थविस्तरकर्तृत्वतत्सादृश्यादिरूपान्यकारणप्रयोज्यत्वसम्भवादसि द्धा व्याप्तिरित्याशङ्कापरिहाराय प्रमाणेन साधयति—'मुख्यस्य' इ ति । सावधारणमेतत् । एवं 'अन्येषां' इत्यपि । तेन मुख्यत्वामुख्य त्वयोर्व्यापकतासिद्धिः । वाचकत्वं षष्ठ्यर्थः । तथाच यतो मुख्यस्यै व 'निर्विशेषेण' विशेषणाभावेन 'वाचकशब्दोऽस्ति' निर्विशेषितशब्दवा च्यत्वमस्तीति यावत् । 'अन्येषां' अमुख्यानामेव 'विशेषतो' विशे षणमपेक्ष्य, विशेषणेनेति वा, 'शब्दो' वाचकः । सविशेषणपदवाच्यत्व मिति यावत् ॥

( १३ ) 'इति' एवंप्रकारेण 'शब्दतत्त्वार्थवेदिनः' शब्दस्य यथाभू तार्थज्ञानिनो 'वेदविदो' वेदार्थज्ञाः वृद्धाः 'प्राहुः' वदन्तीत्यर्थः । अ स्य "अतो 'येषां सूत्रत्वमञ्जसा' 'सविशेषणसूत्राणि अपराणि अ मुख्यानि' इत्युक्तं युक्तं" इति वाक्यशेषेणान्वयः । 'विशेषितः' इ ति क्वचित्पाठः । विशेषणं प्राप्त इति तस्यार्थः । तथाच मुख्यामुख्य योर्निर्विशेषणसविशेषणशब्दवाच्यत्वे वेदो वृद्धव्यवहारश्च प्रमाणमि त्युक्तत्वान्न तयोः कारणान्तरं शङ्क्यमिति भावः ॥

( १४ ) अस्त्वेतत्सूत्रत्वमञ्जसा ब्रह्मसूत्राणाम् । तथाऽपि वेदार्थनि र्णयस्य सूत्रान्तरैरेव सम्भवात् किं ब्रह्मसूत्रैरिति चोद्यस्य कथं 'ये षां' इत्यनेन परिहार उक्तइत्यतस्तद्वाक्योक्तं विवृणोति—'सूत्रेषु'

(१५) शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।

इति। निमित्तसप्तमी इयम्। अपिः अभिव्याप्तौ सङ्कोचनिवर्तकः। निर्णयस्य सर्वत्वं विषयद्वारा तस्य च शब्दद्वारा बोध्यम्। तथाच येभ्यः सूत्रेभ्यः सर्वे निर्णयाः सर्वशाखार्थनिर्णयाः भाव्यतया समुदीरिताः, येषां सर्वशाखानिर्णायकत्वमुक्तं प्रमाण इत्यर्थः। यद्वा— निर्णीयन्त इति निर्णयाः निर्णेतव्यार्थाः। अयं भावः — 'येषां' इति वाक्ये तावत् ब्रह्मसूत्राणामेवाञ्जसा सूत्रत्वमित्युक्तम्। सति चैवं तदन्तर्गतं सूत्रधर्मतयोक्तं विश्वतोमुखत्वमपि तेषामेवाञ्जसा भवति। यदा चैवं तदा तेषामसङ्कुचितसर्वशाखानिर्णायकत्वमुक्तं भवेत्, कतिपयशाखानिर्णायकत्वे आञ्जस्यानुपपत्तेः। यत एवमतः सर्ववेदशाखार्थनिर्णायकानां ब्रह्मसूत्राणां असर्वनिर्णायकेभ्योऽन्यसूत्रेभ्योऽतिशयेन निर्णायकत्वात् युक्तं 'तस्यार्थवित्तये ब्रह्मसूत्राणि चकार' इति। तच्छब्दघटितं तद्वचनं तादर्थ्येन सूत्रकरणवचनमिति भवति तेन शङ्कापरिहार इति॥

(१५) अन्येषामपि द्वित्रशाखानिर्णायकत्वात् कथमेतेषामेव सर्वशाखानिर्णायकत्वमित्युच्यते? अन्यथा तद्वैयर्थ्यप्रसङ्गात्। तथाच अंशे गतार्थतेत्याशङ्कापरिहारायाञ्जस्योक्त्या सूचितमन्यच्चाह — 'शब्दजातस्य' इति। पूर्वमीमांसादिरूपस्येत्यर्थः। अत एवोक्तं सुधायाम् "एतन्मीमांसोपजीविनी खलु सेति पुराणे पठ्यते शब्दजातस्येति" इति। कर्तरि षष्ठीयं न कर्मणि। अत एव टीकायां शब्दसमूहैरिति तृतीया। कर्तृत्वं च करणीभूतवेदेतिकर्तव्यतया। इतिकर्तव्यत्वं च मीमांसाद्वारा उपकारकत्वात् भवति। शब्दजातपदं शब्दप्रमाणमात्रपरमित्याशयेन सम्बन्धषष्ठीयम्, सम्बन्धश्च जन्यजनकभावः इति केचित्। यत्प्रमाणं मूलं यस्य स तथोक्तः। 'च' शब्दस्समुच्चये, 'समुदाहृतः' इत्यस्यानुकर्षकश्च। इतिशब्दोऽध्याहार्यः। तथाच अन्येषां द्वित्रशाखानिर्णायकत्वेऽपि भवत्येव ब्रह्मसूत्राणामेवानन्यापेक्षासङ्कुचितसर्वशाखानिर्णायकत्वम्, अन्यकर्तृकद्वित्रशाखार्थनिर्णयस्य ब्रह्मसूत्रमूलत्वेन तज्जन्यनिर्णयोपजीवित्वेन अन्येषां श्रुतिव्याख्यानरूपत्वात्। यथा श्रुतिमूलकस्मृतेरवैयर्थ्यं तद्वदवैयर्थ्योपपत्तेर्मूलेन मूलिनो वैयर्थ्याभावादिति भावः॥

( १६ ) एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
( १७ ) ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
( १८ ) ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः । इत्यादि ।

( १६ ) 'एवंविधानि' इति । अञ्जसा विश्वतोमुखत्वाद्युपेतानीत्यर्थः । अस्योपसंहाररूपत्वान्न 'तानि चकार' इत्यनेन पुनरुक्तिः ॥

( १७ ) 'देवेषु' इत्यनेन कर्मजाजानजदेवदेवगन्धर्वा अपि सङ्गृहीताः । मनुष्यपदं "निवीतं मनुष्याणां" * इत्यादाविव मननशीलर्षिपरम् । पान्तीति पाः चक्रवर्तिनः । क्षीति क्षयार्थस्य क्षेः रूपं मनुष्योत्तमवाचकम्, तेषामितरापेक्षया अत्यल्पायुष्ट्वात् । मनुष्यगन्धर्वाणामप्युपलक्षकमेतत् । मनुष्याश्च पितरश्च पाश्च क्षयश्चेति विग्रहः । अनेन देवर्षिपितृपनराः इत्युक्ताः पञ्चविधा अपि मुक्तियोग्याः सङ्गृहीता भवन्ति । पक्षीत्यस्याखण्डत्वे पक्षिशब्दो जरितार्यादियोग्यतिर्यक्परः ॥

( १८ ) 'ज्ञानं' सम्यग्ज्ञानं विशेषज्ञानं 'संस्थाप्य' उत्पाद्य दृढीकृत्वेति वा । दृढीकरणं नाम ज्ञानविषये संशयविपर्ययनिरासः । तथा च पुरुषोत्तमो महायशाः उत्तमश्लोको भगवान् व्यासो येषु सूत्रेषु सर्वे निर्णयाः समुदीरिताः, येषां सर्वशाखानिर्णायकत्वमुक्तम्, तथा सर्वैः शब्दसमूहैः जैमिन्यादिसूत्रान्तरात्मकैर्निर्णायकैः स्मृत्यादिभिश्च क्रियमाणो लोककर्तृकवेदैकदेशावान्तरतात्पर्यनिर्णयो यन्मूलको यज्जन्यसर्ववेदमहातात्पर्यनिर्णयमूलकः तदुपजीवी — तं विना अवान्तरतात्पर्यज्ञानमात्रेण मुक्तिफलासिद्धेरिति चोक्तं 'येषां' इति पूर्ववाक्ये प्रमाणे च—एवंविधानि एतादृक्प्रकाराणि सूत्राणि कृत्वा ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ज्ञानं संस्थाप्य क्रीडते इति महावाक्ययोजना । 'क्रीडते परमेश्वरः' इति पाठे ऐश्वर्यं एवंविधसूत्रकरणे असामर्थ्यशङ्कानिरासकतयोक्तमिति ध्येयम् । अत्र ब्रह्मादिषु ज्ञानसंस्थापनं नाम पूर्वं स्थितस्यैव ज्ञानस्य विशेषयुक्त्यादिभिः दृढीकरणं किञ्चिदप्राप्तलाभश्चोच्यते, 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा' इति गीतातात्पर्योदाहृतवचनात् । न च 'एवं ज्ञानं पुनः

* तै. सं. २ - ५ - ११.

( १९ )  सू—ॐ ॥ ॐ अथातो ब्रह्मजिज्ञासा ॥ ॐ ॥ १ ॥

प्रापुर्देवाश्च ऋषयस्तथा ' इति भारततात्पर्यनिर्णयविरोधः , अत्र पुन श्शब्दात्सर्वदेवादीनां अज्ञातविस्मृतार्थज्ञानप्राप्तेरुक्तत्वादिति वाच्य म , तस्याप्युक्तार्थत्वात् । विरिञ्चेतरेषां तिरोहितार्थज्ञानलाभो वा ऽत्रोच्यते , यत आहुर्गीतातात्पर्ये आचार्याः–" ब्रह्मणस्तु प्रायो नाप्रति भासितं " इति । ' इत्यादि ' इत्यस्य ' तच्चोक्तं ' इत्यनेनान्वयः । लुप्त विभक्तिकोऽयं निर्देशः ॥

( १९. ) प्रमाणाभावेन जीवचैतन्यातिरिक्तब्रह्मणोऽभावात् , जीवस्य च स्वप्रकाशत्वेनासन्दिग्धत्वात् , तथाच विषयाभावात् प्रत्यग्रूपे ब्रह्मण्यहमिति प्रतीयमानेऽपि मोक्षानुपलम्भेन प्रयोजनाभावात् तत एव तत्प्रतिबद्धाधिकार्यभावाच्च न ब्रह्मजिज्ञासा कर्तव्येति प्राप्ते सिद्धा न्तितं भगवता सूत्रकारेण ' ॐ अथातो ब्रह्मजिज्ञासा ॐ ' इति ।

इदमेकं सूत्रमेकमधिकरणम् । अधिकरणं नाम विषयसंशयपूर्वप क्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गसमुदायः । यथाऽत्रैव जिज्ञासाधिकर णे " तद्विजिज्ञासस्व " इति जिज्ञासाभिधायकवाक्यविहिता श्रवणा दिरूपा जिज्ञासा विषयः । कर्तव्या न वेति सन्देहः । न कर्तव्येति पूर्वः पक्षः । अस्मिन् पक्षे च शास्त्रस्यानारम्भणीयत्वनिश्चयः फलम् । कर्तव्येति सिद्धान्तः । तत्र चारम्भणीयत्वनिर्णयः फलं, न्यायानुसन्धा नात्मकमीमांसारूपजिज्ञासायाः अकर्तव्यत्वे न्यायग्रथनात्मकमीमां साशास्त्रस्यानारम्भणीयत्वावश्यंभावात् । एवमन्यत्रापि ।

एकस्याधिकरणस्य सङ्गतिपञ्चकम् । तच्च—शास्त्रसङ्गतिः, अ ध्यायसङ्गतिः, पादसङ्गतिः, पूर्वाधिकरणसङ्गतिः, तद्विषयवाक्यसङ्ग तिश्चेत्येवंरूपम् । सङ्गतिरपि सामान्यतो द्विविधा, अन्तर्भावरूपा आ नन्तर्यलक्षणा चेति । तत्र शास्त्राध्यायपादैरन्तर्भावरूपा सङ्गतिः । पू र्वाधिकरणतद्विषयवाक्याभ्यां तु आनन्तर्यरूपा । साऽपि आक्षेपिकी आतिदेशिकी औपोद्घातिकी आपवादिकी प्रासङ्गिकी इत्यादिरूपेण ब हुविधा । तत्र पञ्चाधिकरणीपर्यन्तं शास्त्रसङ्गतिमात्रं, नाध्यायपाद सङ्गती । समन्वयेक्षत्योरध्यायेन सङ्गतिसत्त्वेऽपि पादेनाभावात्सङ्ग त्योरभावः पञ्चाधिकरणीसाधारणः । तथा पूर्वाधिकरणतद्विषयसङ्ग ती अपि नैतदधिकरणस्य भवतः, अस्यैवाद्याधिकरणत्वात् श्रुतिवि

(२०) अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च। अतश्शब्दो हेत्वर्थः।

---

चारस्याद्याप्यनारब्धत्वाच्च; किन्त्वितरेषां चतुर्णामिति ध्येयम्।

अत्र सूत्रे आद्यन्तयोरोङ्कारः उच्चारणीयः। तत्राद्य एक एव दृष्टादृष्टोभयार्थः अत एव सूत्रावयवः सर्वसूत्रेषु अनुवृत्त्यर्थमसंहिततयोच्चार्यते। अथ वा – आदौ ॐकारद्वयं अदृष्टार्थो दृष्टार्थश्चेति। अन्ते तु पक्षद्वयेऽपि अदृष्टार्थ एक एवोङ्कारः। अदृष्टार्थत्वं नाम केवलं श्रवणविशरणरूपदोषपरिहारार्थत्वम्। दृष्टार्थत्वं तु अन्वेतव्यपदार्थप्रतिपादकत्वम्। तत्रादिसूत्रावयवभूतं 'ॐ' इत्येतत् अव्ययं ब्रह्मशब्दविशेषणं गुणपूर्णत्ववाचि। ब्रह्मशब्दोऽपि विद्वद्रूढ्या महायोगेन च विष्णुवाची। 'अथ' शब्द आनन्तर्यार्थः। योग्यतया 'अधिकारात्' इति सम्बध्यते। कर्तव्येति शेषः। तथाच 'अथ' अध्ययनशमदमादिरूपाधिकारानन्तरं 'अतः' स्वजन्यज्ञानजन्यप्रसादजन्यमोक्षाख्यफलयुक्तत्वात् 'ॐ' गुणपूर्णस्य 'ब्रह्मणो' विष्णोः 'जिज्ञासा' श्रवणादिरूपो विचारः कर्तव्य इति सूत्रार्थः। विष्णोः प्रसादादिति 'अतः' शब्दस्यार्थान्तरम्। अस्य जिज्ञासादिकार्यं भवेदिति वाक्यशेषेणान्वयः। ॐब्रह्मशब्दयोरुभयोर्यौगिकत्वेऽपि एकस्य रूढत्वेन विशेष्यवाचित्वं अन्यस्य यौगिकत्वेन विशेषणवाचित्वमाश्रित्यान्वयाङ्गीकारान्नान्यतरवैयर्थ्यम्। "ॐमित्येतदक्षरमुद्गीथमुपासीत" "तद्विजिज्ञासस्व। तद्ब्रह्मेति" इत्याद्यनेकविषयवाक्यसङ्ग्रहाय चोभयोः प्रयोगः॥

(२०) ग्रन्थादौ मङ्गलाचरणस्यावश्यं कर्तव्यत्वेन मङ्गलप्रयोजकतया अथ शब्दं व्याचष्टे — 'अथ' इति। मङ्गलं विघ्नोत्सारणासाधारणकारणानुष्ठेयविष्णुस्मरणाथशब्दोच्चारणरूपमर्थः प्रयोजनं यस्य, तथा प्रशस्तरूपानुष्ठेयमङ्गलात्मको विष्णुः तद्गुणो वाऽभिधेयो यस्य स तथोक्तः। अथशब्दस्य मङ्गलफलकत्वं तु—

ॐङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥

इति मनुस्मृतिसिद्धम्। मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिर

( २१ ) उक्तं च गारुडे—
( २२ ) अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
( २३ ) प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ॥

सनतात्पर्येणापि प्रयुक्तस्याखण्डाथशब्दस्य वाच्यमर्थमाह —'अधिकार' इति । च शब्दोऽनुष्ठेयाननुष्ठेयाक्षरार्थविवक्षया समुच्चये, न केवलं मङ्गलप्रयोजनकः किन्त्वानन्तर्याभिधायकश्चेति विषमसमुच्चये वा ।

यद्वा—अवधारणे चशब्दः । तेनानुष्ठेयमङ्गलारम्भप्रश्नकात्स्न्र्यार्थनिरासः । तत्प्रकारस्तु चन्द्रिकायामुक्तः । तथा चाधिकारानन्तर्यमर्थोऽभिधेयो यस्य स तथोक्तः । अथशब्दस्यानन्तर्यमात्रार्थत्वेऽपि अधिकारेतिपदस्य योग्यतया सम्बन्धात् एवमुक्तिः । अनेनानधिकारिणो मुक्त्यर्थिमात्रस्य ब्रह्मविचारे प्रवृत्तिर्निरस्ता भवति । ब्रह्मजिज्ञासायाः प्रयोजनकारणशून्यताशङ्कानिवर्तकतया अतःशब्दं व्याचष्टे—'अतः' इति । 'हेत्वर्थः' इति । हेतुर्लिङ्गमर्थो यस्य, हेतुः कारणं प्रसादाख्यमर्थो यस्येति वा, स तथोक्तः ।

( २१ ) नन्वथातः शब्दपूर्वकत्वं सूत्राणां किं निमित्तं विघ्ननिवर्त्तकशब्दोच्चारणादेः "मङ्गळं ततः" इति शब्दान्तरोच्चारणेनापि सम्भवादित्याशङ्कां पुराणवचनेनैव निराकरोति—'उक्तञ्च' इति । यदेतत् "अथशब्दः" इत्यादिनोक्तं तद्गारुडपुराणे उक्तमेवेत्यर्थः । न केवलमस्माभिः, किंतु गारुडे चेति समुच्चये वा चशब्दः ।

( २२ )—( २३ ) किमुक्तमित्यतस्तत्पठति —'अथ' इति । यादृच्छिकत्वापरपर्यायानियतत्वशङ्कावारणाय 'नियत्यैव' इति । 'निखिलानि' इत्येतत् 'सूत्राणि' इत्यस्य सङ्कोचवारकं विशेषणम् । अपिरभिव्याप्तौ । एवकारोऽनियमव्यावृत्त्यर्थः । भिन्नक्रमो वा । तथा च —हे 'विद्वन्' आदिकवे 'ब्रह्मन्' चतुर्मुख 'निखिलान्यपि' व्यासजैमिन्यादिकृतानि सर्वाण्यप्यादिसूत्राणि 'नियत्यैव' नियमेनैव कल्पान्तरेपि 'अथातश्शब्दपूर्वाणि' एव, अथातश्शब्दौ पूर्वौ प्रथमप्रयोज्यौ येषु तथाविधान्येव 'प्रारभन्ते' सूत्रकाराः । 'अत्र' प्रथमप्रयोज्यत्वे नियमेन प्रथमप्रयोगे केन चिन्नियामकेन भाव्यं, तन्नियामकं किमिति प्रश्नवाक्ययोजना ।

( २४ ) कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः ।
( २५ ) एतद्व्याख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः ॥
( २६ ) एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।
( २७ ) आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च ॥

( २४ ) नन्ववश्यवक्तव्यार्थत्वं स्वरूपोत्तमत्वं अर्थतआधिक्यं वा नियामकं भविष्यतीत्याशङ्क्याद्यपक्षे पृच्छति — 'कश्च' इति । चः प्रश्नसमुच्चये, अवधारणे वा । द्वितीयस्तुशब्दार्थः अर्थस्यावश्यवक्तव्यत्वरूपविशेषमाह । तुशब्दपाठस्तु स्वरसः । तथा च—'तयोः' अथातःशब्दयोः कोसाववश्यवक्तव्योर्थः येन प्राथम्यमित्यर्थः । द्वितीयमाक्षिपति — 'कथं' इति । 'उत्तमता' स्वरूपतश्चाधिक्यम् । न कथमपीत्यर्थः । एवं कथंशब्दस्य प्रश्नपरत्वमङ्गीकृत्य तृतीयपक्षप्रश्नपरत्वेनापि कथमित्येतद्योजनीयम् । अर्थत इति शेषः । तथा च-तयोरथातःशब्दयोः अर्थतः उत्तमता आधिक्यं कथमित्यर्थः । अत्र आद्यतृतीयपक्षयोरवश्यवक्तव्यार्थतार्थाधिक्ययोस्तदभावयोश्च लोके शब्दान्तरेषु दर्शनात् अथातश्शब्दयोस्तत्सन्देहात् प्रश्न एव न त्वाक्षेपः । द्वितीयपक्षे तु स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनात् आक्षेप एवेति ध्येयम् । अत्रोङ्कारस्य प्रश्नाद्यविषयत्वं सर्वशास्त्रादिसूत्रावयवत्वाभावात्, 'स्रवति' इति श्रुत्या 'सिसृक्षोः' इत्यादिस्मृत्या चैतच्छास्त्रमात्रमुख्यादित्वेन सिद्धत्वाच्चेत्यवधेयम ॥

( २५-२६ ) 'एतत्' प्रश्नाक्षेपविषयीभूतं नियामकं 'अहं तत्त्वतो' याथार्थ्येन 'यथा ज्ञास्यामि' तथा 'मे' मह्यं 'आख्याहि' ब्रूहीति 'एवं नारदेनोक्तः' पृष्टः आक्षिप्तश्च 'सत्तमः' सज्जीवोत्तमः 'ब्रह्मा' प्रत्युवाचेत्यर्थः ।

( २७ ) जिज्ञासाधिकारस्यावश्यवक्तव्यत्वेन तद्धेतुतासाधकानन्तर्यस्य जिज्ञासाहेतोस्तत्कर्तव्यताहेतोश्चावश्यवक्तव्यत्वात्तदर्थकत्वात्तयोः प्रथमप्रयोग इति परिहारमभिप्रेत्यावश्यवक्तव्यार्थत्वं अथातश्शब्दयोर्दर्शयति — 'आनन्तर्ये' इति । परस्परसमुच्चये तथाचशब्दौ । एवकारो भिन्नक्रमः ; तेनाभिधेयान्तरं व्यावर्त्यते । तथा च— सौत्राथशब्दः 'अधिकारस्यानन्तर्ये' अधिकारानिरूपितानन्तर्यरूपार्थे तद्धि

( २८ ) अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ।
( २९ ) परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ॥

षये तन्मात्रवाचकत्वाभिप्रायेणैव सूत्रकारैः ' समुदीरितः ' प्रयुक्तो न मङ्गलादिवाचकत्वेनेत्यर्थः । अवश्यकर्तव्यप्रयोजनकत्वाच्च प्रथममथशब्दप्रयोग इति भावेनाथशब्दो मङ्गळार्थ इति स्वोक्तार्थे प्रमाणं दर्शयति — ' मङ्गळार्थे ' इति । चतुर्थ्यर्थे सप्तमीयं , अव्ययं वा । अर्थशब्दः प्रयोजनवाची । तथा च — मङ्गळरूपप्रयोजनार्थं चाथशब्दः सूत्रकारैस्समुदीरितः प्रयुक्तो भवेदित्यर्थः । विष्णुवाचकाकारघटिताथशब्दोच्चारणरूपमङ्गलस्य तत्साध्यत्वादिति भावः । 'आनन्तर्ये ' इतिवत् ' मङ्गले ' इत्यनुक्त्वा ' अर्थे ' इति वचनं तद्वैषम्यसूचनार्थम् । स्ववाक्ये प्रमाणक्रमातिक्रमस्तु मङ्गलस्य प्रथममनुष्ठेयत्वात् कृतः ॥

( २८ ) एवमथशब्दस्य अवश्यवक्तव्यार्थस्वरूपं प्रथमप्रयोगनियामकं प्रदर्श्य अतःशब्दस्यापि तद्दर्शयति—' अतःशब्दस्तु हेत्वर्थे ' इति । तुशब्दो विशेषार्थः । हेतुर्लिङ्गं कारणं च स चासावर्थोऽभिधेयश्च तस्मिन् तद्विषये तद्वाचकतया सूत्रकृद्भिः ' समुदीरितः ' इत्यर्थः । गुर्वर्थदीपिकायान्तु " हेत्वर्थ इति स्ववाक्ये प्रमाणे च ' तद्धेतुत्वं वदन् ' इत्युत्तरवाक्यानुसारात् भावप्रधानो निर्देशः " इत्युक्तम् । तन्निष्फलम् । तथा च व्याख्यास्यामः । हेतावित्यनुक्त्वा अर्थशब्दग्रहणं शब्दाधिक्यादर्थाधिक्यमिति न्यायेन प्रकृतेर्हेतुरर्थः प्रत्ययस्य तु हेतुत्वमर्थ इति प्रकृतिप्रत्ययोभयार्थकथनार्थम् । यद्वा — अर्थशब्दस्योभयत्र श्रवणात्स पूर्वत्राप्यनुषञ्जनीय इति ज्ञापनाय, तदर्थमात्रं भिन्नमिति ध्येयम् ।

( २९ ) अत्र अतश्शब्दस्यावश्यवक्तव्यमर्थान्तरं चाह—' परस्य ' इति । वाशब्दः समुच्चये । उक्तं हि प्रमेयदीपे "वाशब्दश्चार्थः " इति । उक्तं हि "यदि वा भेदभिन्नयोः" इति विष्णुतत्त्वनिर्णयटीकायां "वाशब्दस्समुच्चयार्थः " इति । तथा तत्त्वप्रदीपेऽपि "सुप्तौ मोक्षे वा" इत्यत्र "वाशब्दस्समुच्चयार्थः" इति । अनेन 'अतः' इत्येतत् 'अ' शब्दप्रकृतिकं तसिलन्तं पदम् , प्रकृत्यर्थो विष्णुः , ' प्रसादात् ' इति तु लब्धार्थकथनं, कारणत्वं प्रत्ययार्थ इत्युक्तं भवति । अपरव्यावृत्त्यर्थं 'परस्य' इति । " अ इति ब्रह्म" (ऐ-आ-२-३-८-७) इति श्रुतिं सूचयति परब्रह्म

( ३० ) स हि सर्वमनोवृत्तिप्रेरकस्समुदाहृतः ॥
( ३१ ) सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिस्सृतौ ।
( ३२ ) ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ॥

---

ग्रहणेन । तत्स्थब्रह्मशब्दव्याख्यानाय परस्य ब्रह्मण इत्यनुवादेन विष्णोरित्युक्तम् । प्रसादादित्यनन्तरं तज्जिज्ञासादिरूपं कार्यमिति शेषः । भवेदित्यस्य इत्यर्थेपि अतःशब्द इत्यन्वयः । अतःशब्दप्रकृत्यर्थस्य फलस्य यथा जिज्ञासाकर्तव्यत्वे लिङ्गत्वं, न तथा तदर्थप्रसादस्य, किन्तु कर्तव्यजिज्ञासायां ज्ञानमोक्षयोरथशब्दार्थाध्ययनादौ च कारणत्वेनान्वय इत्याशयेन पृथगुक्तिः । यद्यपि 'हेत्वर्थे' इत्यनेनैवायमर्थो लभ्येत, हेतुशब्दस्य लिङ्गकारणोभयार्थत्वात्; तथापि असाधारणासर्वनामप्रकृतिकशब्देन बोधनार्थमिदमित्यदोषः ।

( ३० ) ननु जिज्ञासाद्यर्थं किं भगवत्प्रसादेन येनासाववश्यवक्तव्यार्थः स्यादित्यत आह–'स हि' इति । 'हि' यस्मात् 'सः' विष्णुप्रसादः प्रसन्नो विष्णुरिति यावत् 'सर्वमनोवृत्तिप्रेरकः' सर्वेषां अधिकारिणां सर्वस्मिन् पूर्णे विष्णौ मनोवृत्तेः प्रेरकः प्रावण्यहेतुः 'समुदाहृतः' प्रामाणिकैरित्यर्थः । जिज्ञासापि साक्षात्प्रमाणद्वारा वा मनोवृत्तेः प्रावण्यमेव, "जिज्ञासाऽपि सैव" इति सुधोक्तेः । एवं सर्वासां मनोवृत्तीनां तत्प्रभेदानां टीकास्थादिपदगृहीतानां ज्ञानाध्ययनादीनां मनोवृत्तिसाध्यमोक्षादेश्च प्रेरकः सम्पादकः इत्यपि व्याख्येयम् । अस्य तस्मात्तदर्थेप्यतश्शब्दो भवेदिति पूर्वेणान्वयः ।

( ३१-३२ ) ननु मङ्गळाचरणादेः "मङ्गलं ततः" इति शब्दान्तरेणापि सम्भवात्किमेतत्प्रयोगनियत्येति कृतचोद्यस्य कः परिहार इत्यतो न केवलमवश्यवक्तव्यार्थत्वादथातःशब्दयोः प्रथमप्रयोगः, किन्तु स्वरूपाधिक्याच्चेत्याशयेन 'कथमुत्तमता'इत्यस्योत्तरत्वेन तयोः स्वरूपाधिक्यमाह — 'सिसृक्षोः' इति । शब्दयोः समुच्चये आद्यः चशब्दः । निमित्तसमुच्चये द्वितीयः । 'स्वरूपोत्तमौ' इति शेषः । 'तस्मात्' इत्यावर्तते । तथा च—यस्मात् 'सिसृक्षोः' स्रष्टुमिच्छोः 'परमात्' सर्वोत्तमात् 'विष्णोः' तन्मुखात् 'प्रथमं' स्वसमानजातीयशब्दान्तरोत्पत्तेः पूर्वं ओङ्कारोथशब्दश्चेत्येतौ कण्ठं भित्त्वा 'विनिस्सृतौ' विनिर्यो

( ३३ ) तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥

तौ, तस्मात्स्वरूपोत्तमौ, तस्मात्स्वरूपोत्तमत्वादेव 'प्राथमिकौ' प्रथमं प्रयोज्याविति योजना। अत्राक्षेपाविषयस्याप्योङ्कारस्य स्वरूपाधिक्योक्तिर्ब्रह्ममीमांसाशास्त्रमात्रमुख्यामुख्यादित्वविवक्षया 'प्रवृत्त सर्व एते' इति वक्ष्यमाणमनुसृत्येति द्रष्टव्यम्। ननु द्वयोरेकाविधं प्राथमिकत्वं विरुद्धमित्यत उक्तं 'क्रमात्' इति। आदिमध्यक्रमादित्यर्थः। तत्रोङ्कारस्य मुख्यं प्राथमिकत्वं, अथशब्दस्य द्वितीयतया मुख्यत्वमिति ध्येयम्।

( ३३ ) अथशब्दस्य ओङ्कारेण सह स्वरूपाधिक्यमभिधाय अतःशब्दस्यापि तदाह — 'तत्' इति। 'तद्धेतुत्वं वदन्' इति 'हेत्वर्थे' इत्यस्यानुवादः। स चोद्देश्यसमर्पकस्य अत इत्यस्य शब्दपरत्वज्ञापनद्वारा तृतीयतयोक्तत्वादिविधानार्थः। अन्यथा स्वरूपाधिक्यकथनदशाऽसङ्गतिः स्यात्। यद्यपि पुरोवादानुसारात् 'तद्धेतुत्वं वदन्' इति सुवचम्; तथापि हेतुशब्दस्य लिङ्गार्थत्वपक्षे तत्स्वरूपं विवरितुं कारणार्थत्वपक्षे तत्कार्यं तसिप्रत्ययार्थं च प्रदर्शयितुं 'तद्धेतुत्वं वदन्' इत्युक्तम्। अत्रातःशब्दोऽसकृदावर्तते। तत्रैकश्शब्दपरः, अन्यो हेतौ, अपरो विष्णुपरः। अत्र शब्दपरस्यातश्शब्दस्य समुच्चयार्थेन अपिशब्देनान्वयः। चो यत इत्यर्थे। 'तृतीयः उदाहृतः' इत्यनयोरावृत्तिः। 'प्राथमिकौ' इत्यस्य वचनव्यत्ययेनानुषङ्गः। तृतीयशब्दो भावप्रधानः, विभक्तिव्यत्ययश्च। तथा च—न केवलमोङ्काराथशब्दौ, किन्तु 'तद्धेतुत्वं' तस्य प्रसन्नस्याकारवाच्यस्य विष्णोस्तत्र जिज्ञासादौ कारणत्वं तसिप्रत्ययेन वदन्प्रकृत्यैव तस्य जिज्ञासादेर्मोक्षहेतुत्वरूपं लिङ्गं वा वदन्'अतः'सर्वनामासर्वनामप्रकृतिकोऽतश्शब्दोऽपि यतो विष्णोः 'तृतीयः' तृतीयतया 'उदाहृतः' उच्चारितः अतः सोऽपि स्वरूपोत्तमः; यत एवमतोऽतश्शब्दोऽपि तृतीयतया प्राथमिक उदाहृत इति योजना। तथा च—मङ्गलशब्देन मङ्गलोक्तावपि तस्य स्वरूपाधिक्यानुक्तेः अथातःशब्दाभ्यामिवाधिकारप्रयोजनयोरनुक्तेश्च न तेन गतार्थता, अधिकारप्रयोजनसूचनार्थं तयोरवश्यापेक्षितत्वात्। अत एव टीकायां "मङ्गलोक्त्यादेः" इत्यादिशब्दः। ततश्शब्देन हेत्वानन्तर्यप्रतियोग्यधिकारसूचनेऽपि न तस्यादिसूत्रे निवेशो युक्तः, तस्य स्वरूपाधिक्यानुक्तेरेवेति भावः।

( २ ) उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥ इति ।
स्कान्दे ।

( ३ ) "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" ॥ ( तै. उ. ३-१. )

---

ऽचनिष्ठजन्मनाशनियम्यत्वरूपप्रयोज्यव्यापाराः प्रतिपाद्यन्ते । लक्षणाप्रयोजनं ब्रह्मण उपादानत्वाभावप्रदर्शनमिति चन्द्रिकोक्तिः । सृष्ट्यादीनामष्टानां च प्रत्येकं लक्षणत्वं, न तु समुदितवेषेण, अतिव्याप्त्याद्यभावात् । एतच्च लक्षणमनन्तगुणपूर्णत्वस्याप्युपलक्षकम् । एकेनोपलक्षणसम्भवेऽपि मुमुक्षुज्ञेयत्वात्सार्थकमष्टानां वचनम् । यथोक्तं श्रीमन्महाभारततात्पर्यनिर्णये—

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा ॥

इति । यत इत्यनन्तरं 'भूताः' 'भवन्ति' इति वा शेषः । अस्य तद्ब्रह्मेत्युपस्कृतेनान्वयः ॥

( २ ) ननु जगज्जन्मादिकर्तृत्वं यदि विष्ण्वेकनिष्ठं भवेत्तदा ब्रह्मशब्देन जीवग्रहणे बाधकरूपं स्यात्; तस्य विष्ण्वेकनिष्ठत्वमेव कुतो ज्ञायत इत्यत आह—'उत्पत्ति' इति । अस्य जगतो 'यस्मात्' पुरुषात् 'उत्पत्तिस्थितिसंहाराः' भवन्ति 'नियतिः' नियमनं 'आवृतिः ज्ञानं' च यस्माद्भवति 'बन्धमोक्षौ च' यस्माद्भवतः 'सः एकराट्' स्वतन्त्रो 'हरिः' एव इत्यर्थः । विरिञ्चादिषु अतिव्याप्तिपरिहारार्थं 'एकराट्' इति । 'इति स्कान्दे' इत्यनन्तरं 'वचनात् सृष्ट्यादिकर्ता हरिरेव' इति वाक्यशेषः ॥

( ३ ) जिज्ञास्यं ब्रह्म विष्णुरेव भवेत् जन्मादिकर्तृत्वात् इत्यनुमाने हेत्वसिद्धिं जिज्ञास्यब्रह्मलक्षणस्य तत्रानुपलम्भकृतासम्भवं वा निराकर्तुं जगत्कारणत्वलक्षणं जिज्ञास्ये ब्रह्मणि "तद्विजिज्ञासस्व" इत्यतः पूर्ववाक्ये कथितमित्याह—'यतः' इति । वैशब्दः प्रसिद्धौ । भूतशब्दः "अस्तित्वाद्भूतनामानः सर्वजीवेश्य एव यत्" इति गीतातात्पर्यनिर्णयवचनाज्जीववाची तदुपलक्षितसर्वजगत्परः । तथा

(४) य उ त्रिधातु पृथिवीमुत द्यां
एको दाधार भुवनानि विश्वा ॥ ( ऋ. सं. १-१५४-४. )
चतुर्भिस्साकं नवतिं च नामभिः
चक्रं न वृत्तं व्यतींरवीविपत् ॥ ( ऋ. सं. १-१५५-६. )

---

च—'इमानि भूतानि यतो जायन्ते येन जातानि' उत्पन्नानि 'जीवन्ति' प्राणं दधति 'यत्' च प्रलये 'प्रयन्ति' प्रविशन्ति यच्च 'अभि' स्वेच्छया सम्यक् 'विशन्ति' मुक्तौ 'तत्' तदेव 'ब्रह्म' नान्यत्। मुख्यतः तज्ज्ञानाय वेदार्थभूतं 'तद्विजिज्ञासस्व' तद्विषयकविचारं कुर्वित्यर्थः। इतिशब्दः श्रुतिस्थ एव। तस्य 'इति वरुणो भृगुमुवाच' इति क्रियापदेनान्वयः ॥

(४) लक्षणस्यातिव्याप्तिशङ्कां उक्तानुमानस्य व्यभिचारशङ्कां वा परिहर्तुं स्पष्टार्थत्वात्प्रथमं स्मृतिमुपन्यस्य इदानीं सृष्ट्यादिकर्तृत्वं प्रत्येकमपि विष्णवेकानिष्ठं किमु सर्वमिति भावेन स्थितिकर्तृत्वस्य विष्णवेकनिष्ठत्वे श्रुतिमाह—'यः' इति। उशब्द एवार्थः, त्रिधात्वित्येकं पदं, उतशब्दस्समुच्चये। तथा च—'यो' विष्णुः 'एकः' एव 'त्रिधातु' प्रकृतिपुरुषकालधारकः 'पृथिवीं' भूमिं 'द्यां' श्रियं च 'विश्वा' विश्वानि सर्वाणि च 'भुवनानि' 'दाधार' दधारेत्यर्थः। नियमनस्यापि विष्णवेककर्तृत्वे श्रुतिमाह—'चतुर्भिः' इति। स इति शेषः, नशब्द इवार्थः, चशब्दो मात्रार्थः। तथा च—स बृहच्छरीरो मूलरूपी विष्णुः 'नामभिश्च' नाममात्रैः स्वरूपभेदशून्यैः 'चतुर्भिः' वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धैः 'साकं नवतिं' नवतिसङ्ख्याकान् 'व्यतीन्'—देवेषु यौगिकोऽयं शब्दः—विशेषेणाधिकान् देवान् किमुतान्यान् 'वृत्तं चक्रं न' वर्तुलं रथाङ्गमिव युगपत् 'अवीविपत्', विपपरिवर्तन इति धातुः, पर्यवर्तयदित्यर्थः। अष्टौ वसवः एकादश रुद्राः विष्णुव्यतिरिक्तैकादशादित्याः हिरण्यगर्भेण सह दश प्रजेश्वराः प्रधानेन पञ्चाशन्मरुत इति नवतिः। तत्त्वप्रदीपे तु—प्रथमं टीकोक्तार्थमभिधाय—

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि।
बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः।
भृगुश्चैवानिरुद्धश्च धर्मो निर्ऋतिरेव च।
कुबेरसहिता देवाः नवतिस्सम्प्रकीर्तिताः।

( ५ ) परो मात्रया तन्वा वृधान
न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो
देवमहिम्नः परमन्तमाप ॥ ( ऋ. सं. ७-९९-१२. )

अनन्तो गरुडो वायुः चत्वारो ब्रह्मणा सह ॥
इति प्रमाणानुसारेण प्रकारान्तरेण चतुरुत्तरनवतिरुक्ता । तत्रैव नामवद्भिः कीर्तिमद्भिरिति च व्याख्यातम् ।

( ५ ) एतेषां लक्षणानामतिव्याप्तिं विष्ण्वेकनिष्ठत्वोक्त्या स्मृत्या चार्थात् परिहृतामपि साक्षादन्यत्र लक्षणाभावं प्रतिपादयन्त्या श्रुत्या निराह—'परः' इति । विष्णावित्याकृष्यते । तत्वोद्योतटीकोक्तरीत्या मुक्ता अमुक्ताश्चेति शेषः । अत एव टीकायां क इत्युक्तम् । तथा च–'तन्वा' स्वमूर्त्यैव न तु कीर्तिमात्रेण 'वृधान' अपरिच्छिन्न हे विष्णो त्वं यतो 'मात्रया' मितेः 'परः' विलक्षणोऽसि अपरिमितोऽसीति यावत् । अत एवंभूतस्य 'ते महित्वं' जगत्सृष्ट्यादिरूपं महिमानं' 'अनु' अपि केऽपि मुक्ता अमुक्ताश्च 'नाश्नुवन्ति' न प्राप्नुवन्तीत्यर्थः । यद्वा—'नाश्नुवन्ति' नानुभवन्तीत्यर्थः । नाश्नुवन्तीति वर्तमाननिषेधात् स्यादुत्तरत्रेत्यत आह—'न' इति । प्राप्नोतीति शेषः । तथा च—हे 'विष्णो' 'देवमहिम्नः' रमादिमहिम्नः 'परं अन्तं' सीमानं महिमतारतम्यपरावधिभूतं 'ते महित्वं' महिमानं 'जायमानो' न प्राप्नोति, जातो 'नाप' इत्यर्थः । उपलक्षणं चैतत् जनिष्यमाणो न प्राप्स्यतीत्यपि द्रष्टव्यम् । अत एव तत्त्वप्रदीपे—" परो मात्रया तन्वा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वं परमस्य वित्से । न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः " इति ऋग्द्वयमेवमेव व्याख्यातम् । तथा हि—मात्रायाः परः परिमाणातीतः तन्वा वृधानः तन्वा वर्धमानः देहेन पूर्णः—इत्थं भावे तृतीया—देहरूपेण पूर्ण इत्यर्थः । यतश्चिदानन्दाद्यात्मको विष्णोरभिन्नश्च देहः । ते महित्वं महिमानं नानुभवन्ति न प्राप्नुवन्ति च । ते त्वदीयायाः पृथिव्याः प्रकृतेः रजसी रजोगुणकार्ये उभे पुण्यपापे वयं विद्मः । प्रकृतेः रजसा हि पुण्यपापे सृज्येते । पर

( ६ ) यो नः पिता जनिता यो विधाता
धामानि वेद भुवनानि विश्वा ॥ ( ऋ. सं. १०-८२-३. )
इत्यादि च ॥ २ ॥

—:※:—

३. अधिकरणम् ॥

( १ ) अनुमानतोऽन्ये न कल्पनीयाः ।
सू—ॐ ॥ शास्त्रयोनित्वात् ॥ ॐ ॥ ३ ॥

मस्य ते महिमानं त्वमेव वित्से । त्वमेव महिम्नः महिमसमुदायस्या न्तं ब्रह्मणः श्रियो वा महिमानमतिशायितो हि विष्णुमहिमा अन्यम हिम्नां परं अन्तं ते महिमानं न कश्चिदाप । यत्राकं नास्ति तन्नाकम् । ऋष्वं प्रकाशरूपम् । बृहन्तं पूर्णं लोकं उदस्तभ्नाः उदस्तभ्नः उच्चैर स्तम्भयः । पृथिव्याः पृथिव्यात्मकस्य ब्रह्माण्डस्य प्राचीं ककुभं दि शं इन्द्रस्थापनेन दार्ढ्यर्थं धृतवानसि । सर्वधारणोपलक्षणमेतदिति ।

( ६ ) जगत्कारणत्वं च ब्रह्मणो न विकारित्वेन, किन्तु पितृवन्निमि त्तत्वेनैवेति श्रुत्या दर्शयति,—'यः' इति । 'यः' एक एव 'नः' अस्म दादिसर्वेषां 'जनिता' जनयितैव 'पिता' न दत्तपुत्रपितृवत् पालकपि तृमात्रम् । यद्वा—"स एव पितृसंस्थस्तुपातृत्वात्पितृनामकः" इत्यै तरेयभाष्यादिशा "पिता पाता" इति तत्त्वप्रदीपोक्तेः 'जनिता' जन कः 'पिता' पाता चेत्यर्थः । 'यो विधाता' विशेषेण धारकः पोषकः, "मुक्तानां पोषणं च ज्ञानमोक्षदानेन" इति तत्त्वप्रदीपोक्तेः । "विधा ता कर्ता" इति प्रमेयदीपोक्तिः । तस्या धारणपोषणयोरिति भावः । यो 'विश्वा' विश्वानि सर्वाणि भुवनानि तद्गत 'धामानि' गृहाणि जीवादिस्वरूपाणि च 'वेद' जानातीत्यर्थः । 'इत्यादि' इति वाक्यं 'उक्तार्थे प्रमाणं' इति शेषः । आदिशब्देन एतज्जातीयकश्रुत्यन्तरं "द्यावाभूमी जनयन्" इति च गृह्यते ॥ २ ॥

॥ इति जन्माधिकरणम् ॥

——:*※*:——

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे पूर्वोक्तजगज्जन्मादिकारणत्वरूपब्रह्मलक्षणस्य रुद्रादिष्वतिव्याप्तिपरिहाराय जगत्कारणे प्रमाणमुच्यते । सिद्धान्तप्र तिज्ञामुपस्कृत्य दर्शयति—'अनुमानतः' इति । कारणत्वेनेति शेषः

(२) " नावेदविन्मनुते तं बृहन्तं । सर्वानुभुमात्मानᳪ साम्पराये " ( तै. ब्रा. ३-१२-९. )
" औपनिषदः पुरुषः " ( ) इत्यादि श्रुतिभ्यश्च ।

---

तथा च—शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वात् व्यतिरेकेण यन्नदेवं तन्न इत्याद्यनुमानात् विष्णोः 'अन्ये' रुद्रादयोऽपि जगत्कारणत्वेन 'न कल्पनीयाः' न शङ्क्या इत्यर्थः । कुत इत्यतस्तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्यति—'शास्त्रयोनित्वात्' इति । जगत्कारणस्येति शेषः । " तन्निर्धारितयुक्तिर्वा " इत्यनुव्याख्यापदे " तन्निर्धारितेत्यतः परं व्याप्तिशब्दोऽध्याहार्यः " इति सुधोक्तेर्यथा तत्र मध्येऽध्याहारः, यथा वा " सर्वेन्द्रियविवर्जितत्वाद्यर्थ उक्तः " इति गीताभाष्यप्रमेयदीपे आदीत्यतः परं शब्दशब्दोऽध्याहार्य इत्युक्तेस्तत्र यथामध्येऽध्याहारः, यथा वा " पुरुषाद्वधविकारसमूहतेनकृतेषु " इति महाभाष्यवाक्ये समासमध्ये तेनेति पदाध्याहारः, तथाऽत्रापि शास्त्रशब्दात्परमेकशब्दोऽध्याहार्यः योनिशब्दात्प्राक् ज्ञप्तिशब्दश्च । तथा च—ऋगादिरूपं शास्त्रं च तदेकमसहायं च ज्ञप्तियोनिर्ज्ञप्तिकारणं यस्य वस्तुनः तत्तथोक्तं तस्य भावस्तत्त्वं तस्मादितिसूत्रार्थः । अनेन न जगत्कारणमानुमानिकं तस्य शास्त्रैकसमधिगम्यत्वात् धर्मादिवत् इत्यनुमानमुक्तं भवति । न च दृष्टान्ते साध्यवैकल्यम् । न हि धर्मादिनिश्चयोऽनुमानेन भवति । तथा च—अनुमानादन्येषां जगत्कारणतासाधनमयुक्तमिति न तेषु लक्षणस्यातिव्याप्तिरिति भावः ॥

(२) कारणस्य शास्त्रैकवेद्यत्वं कुत इत्यत आह—'न' इति । तैत्तिरीयवाक्यमिदम् । अत्र ह्रस्वोकारपाठः । 'औपनिषदः' इति श्रुत्यन्तरम् । अत्राङः प्रश्लेषः कार्यः । आदिशब्देन " सर्वे वेदा यत्पदं " ( कठ. उ. २ - १५ ) " वेदाश्चैवैनं " ( भाल्लवेयं ) " तं त्वौपनिषदं पुरुषं पृच्छामि " ( बृ. उ. ३ - ९ - २६ ) इति वाक्यं च गृह्यते । 'तं' पूर्वप्रकृतं 'बृहन्तं' पूर्णं 'सर्वानुभुं' सर्वमनुभवतीति सर्वानुभूः तं सर्वज्ञम् । यद्वा—सर्वमनुभावयतीति सर्वानुभुस्तं आत्मानं सर्वजगत्कर्तारं सर्वस्वामिनं वा । 'साम्पराये' सम्यक्परस्याऽयः प्राप्तिः सम्परायः स एव साम्परायः, तादर्थ्ये सप्तमी, तथा च मोक्षाय। 'अवेदवित्'—विष्णुतत्त्वनिर्णयटीकोक्तरीत्या अत्र वेदशब्देन सद्

(३) न चानुमानस्य नियतप्रामाण्यम् ।
श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥

गमा गृह्यन्ते । तथाच सदागमतदर्थाज्ञानी वेदविरुद्धज्ञानी वा न मनुते ' न जानाति, वेदादन्यत् जगत्कर्तारं न प्रमापयतीति यावत् । किन्तु वेदविदेव जानाति वेद एव प्रमापयतीति प्रथमश्रुत्यर्थः । पुरुषो जगत्कर्ता श्री औपनिषदः उपनिषदेकसमधिगम्य इत्यन्यश्रुत्यर्थः । गम्यत्वं ग्राह्यत्वं तद्धितार्थः । आदिशब्दोपात्तश्रुत्यपेक्षया 'श्रुतिभ्यश्च' इति बहुवचनम् । चशब्दोऽध्याहृतसाध्यसमुच्चये, स्वोक्तिसमुच्चये वा । अस्य शास्त्रयोनित्वादित्यनेनान्वयः । कारणस्येति शेषः । तथाचैवमादिश्रुतिभ्यः कारणस्य शास्त्रैकयोनित्वावगमात् नासिद्धिरिति भावः । नञ्द्वयाङ्घटितश्रुत्युदाहरणेन सूत्र एकशब्दोऽध्याहार्य इति सूचितम् ॥

(३) औपनिषदस्यापि कारणस्यानुमानेन सिद्धिः । किं न स्यादित्यत आह—' न च ' इति । चोऽवधारणे । तथा च—' अनुमानस्य ' अनुमानमात्रस्य ' प्रामाण्यं ' अतीन्द्रियार्थप्रमापकत्वं नेत्यर्थः । तथा च—न तेनान्यस्य जगत्कर्तृतासाधनं युक्तमिति भावः । ननु कथमेतत् ' सर्वधर्मोपपत्तेश्च ' ( सू.२-१-३८. ) इत्यधिकरणे स्वातन्त्र्यादिहेतुना विष्णोः पूर्णत्वादिसिद्ध्यङ्गीकारादित्यत उक्तम्—' नियत ' इति। इदं च स्वातन्त्र्यार्थकं प्रमाणरूपप्रकृत्यर्थविशेषणम् । अनुमानस्येति हेतुगर्भम् । तथा च—अनुमानत्वादेव न तस्य स्वातन्त्र्येणादृष्टार्थनिश्चायकत्वं, प्रतिपक्षादिसम्भवात्, किन्त्वस्वातन्त्र्येण । स्वातन्त्र्यं च सहायराहित्यम् । तच्च न स्वातन्त्र्यादिहेतावस्ति श्रुतिसहितत्वात् । पूर्वपक्ष्याशङ्कितसर्वज्ञत्वकार्यत्वाद्यनुमानस्य तु श्रुतिसाहाय्यरहितत्वेन स्वतन्त्रत्वान्न प्रमाणत्वमिति भावः । कुतो नानुमानस्य नियतप्रामाण्यमित्यत आह—'श्रुति' इति । स्मृतेरप्युपलक्षकमेतत् । अत्र सहायशब्दो मूलवाची । तस्मात्स्वार्थे ष्यञ् । श्रुतिश्च तत्साहाय्यं चेति कर्मधारयः, ततस्तेन रहितमिति तत्पुरुषः । श्रुत्यनुग्राह्यत्वरहितमिति यावत् । चः समुच्चये । एवशब्दो भिन्नक्रमः । तथा च—' कुत्रचित् ' अ

( ४ ) श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
प्रमाणपद्वीं गच्छेन्नात्र कार्या विचारणा ॥
( ५ ) पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत् ॥
इत्यादि महाकौर्मे ।

---

स्मदाद्यदृष्टे श्रौतेऽर्थे 'श्रुतिसाहाय्यरहितमनुमानं' ईश्वरो न स्वतन्त्रः चेतनत्वादित्यादि लिङ्गम्, तथा यज्ञहिंसाऽधर्मत्वानुमानं च तथा 'प्रमाणान्तरं' अनुमानादन्यत् रामकृष्णादिदोषग्राहि मानुषत्वग्राहि च प्रत्यक्षं 'निश्चयात्' स्फुटमतीन्द्रियार्थं 'न साधयेत्' इति योजना । यद्वा—अर्थं निश्चयान्न साधयेन्न साधयेदेवेत्यर्थः । उक्तं हि गीताभाष्ये—"स निश्चयेन योक्तव्यः योक्तव्य एव बुभूषुणेत्यर्थः" इति । उक्तं हि प्रमेयदीपिकायाम् "अयोगव्यवच्छेदे निश्चयशब्दः" इति ॥

( ४ ) तर्हि कीदृशस्य प्रत्यक्षादेरदृष्टार्थनिश्चायकत्वमित्यत आह—'श्रुति' इति । बहुव्रीहिरयम् । तथा च—श्रुतिस्मृतिरूपसहकारियुक्तं 'यत्प्रमाणान्तरं' यशोदादिप्रत्यक्षं तत् 'उत्तमम्' । अतः तत् 'प्रमाणपद्वीं' अनुप्रमाणस्य प्रमाकरणत्वरूपां पद्धतिं 'गच्छेत्' प्राप्नुयादित्यन्वयः । तदिति पाठेऽप्येवमेव योजना । एवं श्रुतिस्मृतिसहायो यस्तर्कः विष्णुः स्वतन्त्रः पूर्णत्वादिति समव्याप्तिकानुमानं सोऽपि प्रमाणपद्वीं गच्छेदित्यन्वयः । 'अत्र' अस्मिन् विषये 'विचारणा' संशयो 'न' कार्यइत्यर्थः । नात्रेत्यनेन स्वोक्तार्थेऽप्रामाण्यशङ्का निराकृता ॥

( ५ ) तर्कपदस्य व्याप्यारोपेणेत्याद्यन्यथाप्रतीतिनिरासाय तर्कस्वरूपमाह—'पूर्व' इति । 'अत्र' विप्रतिपन्ने वाक्ये 'कोऽर्थोऽभिमतः' तात्पर्य विषयो 'भवेदित्याद्यं' एवंभूतविमर्शपूर्वकं 'पूर्वोत्तराविरोधेन' उपक्रमोपसंहाराविरोधेन तदैकरूप्येण—लिङ्गान्तरस्याप्युपलक्षणमेतत्—तथा च—उपक्रमादितात्पर्यलिङ्गैः अत्र तात्पर्यविषयार्थोऽयमेव भवेदित्याद्यं यत् 'ऊहनं' यत्प्रमाज्ञानं तत्साधनं लिङ्गं स एव 'तर्कः' अत्राभिमतः । 'शुष्कतर्कं' श्रुतिस्मृतिसहायरहितं तन्निरपेक्षं चेतनत्वादि तर्कं तु वर्जयेत्, तेनातीन्द्रियार्थनिश्चयो न

(६) शक्यत्वाच्चानुमानां सर्वत्र ।
(७) सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा ।
तस्मान्न सा शक्तिमती विनाऽगममुदीक्षितुम् ॥
इति वाराहे ।
(८) रेतो धातुर्वटकणिका घृतधूमाधिवासनम् ।
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ।
प्रेत्य भूताप्ययश्चैव देवताऽभ्युपयाचनम् ।

---

कार्य इत्यर्थः । केचित्तु—कः इत्यस्योभयार्थत्वमाश्रित्य "कश्छन्दसाम्" (ऋ.१०-११५-२.) इति वाक्यं 'अत्र' इत्यनेन परामृश्यते । अतएव 'इत्याद्यं' इत्यपि युक्तमित्याहुः । 'कौर्मे' इत्यनन्तरं पुराणे यत उक्तमिति शेषः । अस्य 'न च' इत्यनेनान्वयः ॥

(६) न केवलं श्रुत्यादिसाहित्यहीनानुमानस्य प्रामाण्याभावे साधकसद्भावः, अपि तु तत्प्रामाण्याभ्युपगमे बाधकं चास्तीत्याह—'शक्यत्वात्' इति ॥ प्रयोक्तुमिति शेषः । 'अनुमानां' इति कर्मणि षष्ठी । चशब्दो न केवलमित्युक्तसमुच्चयार्थः । तथा च—श्रुत्यादिसाहित्यहीनानां 'अनुमानां' चेतनत्ववस्तुत्वादिरूपकेवलहेतूनां 'सर्वत्र' रुद्रादेर्जगत्कारणत्वाभावादौ शशादेः शृङ्गित्वादौ साध्येऽपि प्रयोक्तुं 'शक्यत्वात्' नानुमानस्य नियतप्रामाण्यमिति योजना ॥

(७) अत्रैव प्रमाणमाह—सर्वत्रेति ॥ 'हि' यस्मात् 'आगमं विना' तद्धीना 'अनुमा' 'सर्वत्र' ईश्वरकारणत्वाभावादौ 'कर्तुं' प्रयोक्तुं 'शक्यते' 'तस्मात्' अनुमा 'आगमं विना उदीक्षितुं' उदीक्षयितुं ज्ञापयितुं अर्थमिति शेषः 'शक्तिमती' सामर्थ्ययुता नेत्यर्थः । 'वाराहे' इत्यस्यापि 'कौर्मे' इतिवदन्वयः । तस्मात्केवलानुमानस्यानिर्णायकत्वाच्छास्त्रेणैव कर्तृत्वनिश्चय इति स्थितम् ॥

(८) नन्वतीन्द्रियार्थाभावेन प्रत्यक्षेतरस्याप्रामाण्यात्कथं शास्त्रादीश्वरसिद्धिरिति नास्तिक्यवादं मोक्षधर्मवचनेन निराचष्टे—रेत इति ॥ रेतइत्यादिप्रथमैकवचनान्तानां पदानां प्रत्येकं प्रमाणमिति पदेनान्वयः । 'अत्रार्थे' इति शेषः । तथा च—रेतोधात्वादि 'अत्रार्थे' अतीन्द्रियार्थसत्त्वे अनुमानादिप्रामाण्ये च प्रमाणं प्रमापकं भव

मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः। इति
मोक्षधर्मवचनान्न नास्तिक्यवादो युज्यते ॥

तीत्यर्थ। भाष्यकारीयद्वितीयेतिशब्दस्य एवं मोक्षधर्मवचनात्प्रतीतैर्हेतुभिर्नास्तिक्यवादो न युज्यत इति योजना। नास्तिका एव नास्तिक्यं, नास्तिकसमुदायो वा नास्तिक्यम्। तथा च—नास्ति परलोकः, धर्मो नास्ति, अधर्मो नास्तीति धिया वाद इत्यर्थः। यद्वा—न्यायदीपिकोक्तरीत्या—आस्तिक्यं धर्मादावस्त्यनेन प्रयोजनमिति भावो बुद्धिः, तत्पूर्वको वादः, तदन्यो नास्तिक्यवाद इत्यर्थः। रेतोधात्वादीनामनुमापकत्वप्रकारस्त्वित्थम्—रेतश्शब्दितचरमधातुशरीरयोः कार्यकारणभावो न प्रत्यक्षः, किन्त्वन्वयव्यतिरेकाख्यानुमानगम्य इति तत्प्रामाण्यसिद्धिः। मृतशरीरे सिक्तस्य रेतसः शरीराकारणत्वेन यदधिष्ठिते शरीरे सिक्तं रेतः शरीरात्मना परिणमति तज्जीवसिद्धिः। वन्ध्यादिसर्वशरीरे सिक्तस्य रेतसः कार्याकरत्वेन यत्प्रेरितं रेतः कार्यकरं तदीश्वरादृष्टसिद्धिः। तत एव तत्प्रतिपादकागमप्रामाण्यसिद्धिः। एवं वातपित्तादिधातुरपथ्यादिना जीवच्छरीरे क्वचिदेव विक्रियते, न मृतशरीरे, नापि जीवत्सर्वशरीरेषु। ततो जीवेश्वरतद्बोधकागमप्रामाण्यादिसिद्धिः। वटकणिकापदोक्तवटबीजाद्वट उत्पद्यत इति सुप्रसिद्धम्, न च भर्जितायास्तस्याः, नाप्यभर्जिताभ्यस्सर्वाभ्य इति तत्प्रेरकेश्वरादृष्टसिद्धिः। घृतेन जीवच्छरीर एव पीनता जायते, न मृतशरीरे क्षिप्तेन, नापि जीवत्सर्वशरीरेषु। 'धूमाधिवासनं' नाम पुष्पादिसम्पत्त्यर्थः धूमेन वृक्षस्य संस्कारः। तेनाशुष्कवृक्षेष्वेव पुष्पादिसम्पत्तिः, न शुष्के, नाप्यशुष्केषु सर्वेषु। एताभ्यामपि लिङ्गाभ्यां जीवेश्वरादृष्टादिसिद्धिः। केषांचित्साधनविशेषात् 'जातिस्मृतिः' पूर्वजन्मस्मृतिर्भवति अनेनैव पुण्येन एवं स्वर्गोऽनुभूतः, अनेन पापेनेत्थं नरकमनुभूतमिति। सा च कस्यचिदेव, न सर्वस्य, न चेतनाद्यभावे सा युक्तेत्यतोऽपि चेतनादृष्टादिसिद्धिः। अयस्कान्ताख्यशिलाविशेषेणायो भ्रमति, न चाचेतने चेष्टकत्वं दृष्टं, नापि सर्वचेतनानामित्येतस्मादपि तत्प्रेरकेश्वरादृष्टादिसिद्धिः। सूर्यकान्ताख्यशिलाविशेषेणाग्निर्जायते, न चासौ शक्तिरचेतने युक्ता। अतोऽपि प्रेरकेश्वरादृष्टादिसिद्धिः। अम्बुभक्षणेन जीवच्छरीर एव तृष्णा निवर्तते, न

(९) दर्शनाच्च तपआदिफलस्य ।

(१०) ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

(११) यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥
[इति स्कान्दे ।

च तन्मृतशरीरे पात्रान्तरे वा निहितं पच्यते । नापि जीवत्सर्वशरीरेषु । तस्मादपि जीवेश्वरादिसिद्धिः । प्रेत्येत्यनन्तरं स्थितस्येति शेषः । 'प्रेत्य' जीवं विहाय स्थितस्य देहस्य 'भूताप्ययो' भूतेषु लय इत्यर्थः । तथा च—मरणेन देहस्य पृथिव्यादिपञ्चभूतेषु लयो भवति, न जीवतो, न चेच्छयेत्यतोऽपि तन्नियामकेश्वरादिसिद्धिः । एवं देवताऽभ्युपयाचनेन तत्प्रार्थनेन केषां चिदेव सम्पदादिकं भवति, एवं मृते देहे चेष्टानिवृत्तिर्भवति, न पुरा न स्वेच्छया । अतोऽपि जीवेश्वराहष्टादिसिद्धिरिति ॥

(९) युक्त्यन्तरेणापि नास्तिक्यवादं दूषयति—दर्शनाच्चेति ॥ चो युक्तिसमुच्चये । आदिशब्देन पापं गृह्यते । तथा च—स्वाध्यायब्रह्मचर्यादिरूपात्युत्कटतपआदिफलस्य तेजस्स्वित्वादेः प्रत्यक्षत एव दर्शनाच्च न नास्तिक्यवादो युज्यत इत्यर्थः । पुण्यपापाख्यातीन्द्रियवस्तुनस्तत्साधकानुमानागमप्रामाण्यस्य चाङ्गीकार्यत्वादिति भावः॥

(१०) ननु यद्यनुमानस्यानिश्चायकत्वेन शास्त्रादेव कारणत्वसिद्धिः, तर्हि पाशुपतादिशास्त्रेण रुद्रादेर्जगत्कारणत्वसिद्धिः स्यादित्यत आह—ऋगिति ॥ अकारान्तोऽयमथर्वशब्दः । ऋक्च यजुश्च साम चाथर्वश्चेति तथोक्ताः । एवशब्दस्य ऋगादिकमेवेति सम्बन्धः । 'मूलरामायण एवेत्यवान्तररामायणव्युदासः' इति सुधोक्तिः । चशब्दौ समुच्चये ॥

(११) तर्हि मानवाद्यशास्त्रं स्यादित्यत आह—यच्चेति ॥ चोऽवधारणे, द्वितीयोऽप्यर्थे । तथा च 'एतस्य' ऋगादेः 'यत्' यदेव 'अनुकूलं' अविरुद्धार्थप्रतिपादकं मानवादि पुराणादिकं वा 'तत्' सर्वमपि 'शास्त्रं प्रकीर्तितम्' प्रामाणिकैः 'अतः' एतस्मात् वेदात् तदनुकूलाच्च 'अन्यः' विरुद्धः उदासीनश्च यो 'ग्रन्थविस्तारः' पाशुपता

(१२) साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च।
इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरा

दिरूपग्रन्थविस्तरः 'तन्नैव शास्त्रम्', किन्तु 'कुवर्त्म' कुत्सितमार्गः, मार्ग इव मार्गः, कुत्सितज्ञानोपायोऽमानमित्यर्थः। ऋगादिकमेवेत्येवकारस्तु विरुद्धादिविषय इति भावः। स्कान्दे पुराणे इत्युक्तमित्यन्वयः। पाशुपतादेः कुवर्त्मत्वमितिशब्दार्थः॥

(१२) इतोऽपि पाशुपतादिकं कुवर्त्मेत्याह—साङ्ख्यमिति॥ अत्रैवं योजना—न केवलं स्कान्दे, किन्तु मोक्षधर्मेष्वपि। 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च' 'इत्यारभ्यो' उपक्रम्याधीतेन

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते॥

इत्युत्तरवाक्येन साङ्ख्यादिषु प्रकृतेष्वपि तत्परित्यागेन पञ्चरात्रस्यैव प्रामाण्यरूपमाधिक्यमुक्तं यतोऽतः पाशुपतादिकं कुवर्त्म अमानमेवेति। नन्वनेन पाञ्चरात्रप्रामाण्यमेव भवेन्नान्याप्रामाण्यमित्यत आह—इतरेषामिति। वेदपञ्चरात्रयोरन्येषां साङ्ख्यादीनामित्यर्थः। 'भिन्नमतत्वं' विरुद्धदर्शनत्वं 'प्रदर्श्य' ज्ञापयित्वा प्रतिपाद्येति यावत्।

साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा॥

इति वाक्यशेषेणेति शेषः। प्रदर्श्येत्यस्य पञ्चरात्रस्यैव प्रामाण्यमुक्तमित्यनेनान्वयः। परस्परविरुद्धानामेकप्रामाण्योक्तावन्याप्रामाण्यलाभादिति भावः। तर्हि वेदारण्यकस्याप्यप्रामाण्यं स्यादित्यत आह—वेदेति। 'ऐक्याभिप्रायेण' इति। एकार्थत्वरूपमूलमूलिभावाभिप्रायेणेत्यर्थः। तथा च—पञ्चरात्रस्य वेदसमानार्थत्वेन तत्प्रामाण्योक्तौ वेदप्रामाण्यमेवोक्तं भवतीति न तस्याप्रामाण्यमिति भावः। न चैक्याभिप्रायः कुतः कल्प्यत इति वाच्यम्, यतोऽदृष्टविषयस्य पौरुषेयस्य पञ्चरात्रस्य निर्मूलत्वेऽप्रामाण्यादाधिक्यकथनमसङ्गतं स्यात्। 'साङ्ख्यं' ईश्वरावतारान्यकापिलोक्तं शास्त्रम्।

कपिलो वासुदेवाख्यः तन्त्रं साङ्ख्यं जगाद ह।
सर्वागमाविरुद्धं च कपिलोऽन्यो जगाद ह॥

ग्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि ॥

(१३) शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ॥ ३ ॥

---

इत्युक्तत्वात्। 'योगो' हि हिरण्यगर्भोक्तं पातञ्जलम्। 'पाशुपतं' पशुपतिना प्रोक्तम्। अरण्ये निर्जने देशे अध्येतव्यत्वादारण्यकमित्युपनिषदुच्यते। वेदाश्चारण्यकानि च, तेषां समाहारः वेदारण्यकं, द्वन्द्वैकवद्भावो वा। वर्णाश्रमराजदानधर्मादिप्रतिपाद्यधर्मबहुत्वात् मोक्षधर्माणां भेदाद्वा मोक्षधर्मेष्विति बहुवचनम्। अत एव तत्त्वप्रदीपे—मोक्षधर्मेष्विति बहुवचनं धर्मभेदादित्युक्तम्। मोक्षधर्मे हि-

सांख्यं योगः पाशुपतं वेदारण्यकमेव च।
ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् ॥

इति वैशम्पायनं प्रति जनमेजयप्रश्नः। तस्य-

सांख्यं योगः पाशुपतं वेदारण्यकमेव च।
ज्ञानान्येतानि भिन्नानि नात्रकार्या विचारणा ॥

इति वैशम्पायनोक्तं प्रतिवचनं चास्ति। इमे युधिष्ठिरभीष्मकर्तृके च। भगवतः ज्ञानानि ज्ञानसाधनानि भिन्नानि भिन्नमतानि। विरुद्धानामपि मतानां न सर्वेषां प्रामाण्यं सम्भवति वस्तुनो बहुरूपत्वाभावात्, किन्त्वेकस्यात्र प्रामाण्यमितरेषामप्रामाण्यं वाच्यम्। तत्र कस्य प्रामाण्यं कस्य वाऽप्रामाण्यमिति पुनर्युधिष्ठिरजनमेजयहार्दप्रश्नोत्तरमाह भीष्मो वैशम्पायनश्च। "सांख्यस्यवक्ता कपिलः" इत्यारभ्य "पञ्चरात्रस्य कृत्स्नस्य" इत्यनेन ज्ञानेषु ज्ञानसाधनेषु एतत्पञ्चरात्रम्। अभिप्रायस्तु-परमाप्ततमेन नारायणेन सर्वस्य पञ्चरात्रस्य कृतत्वात्प्रामाण्यं तावत्सिद्धम्, विरुद्धानां चैकप्रामाण्ये अन्याप्रामाण्यं च। एतच्चाद्यवाक्यस्थवेदारण्यकपदेन वेदमूलकपञ्चरात्रस्योत्तरवाक्यस्थपञ्चरात्रपदेन च मूलभूतवेदारण्यकस्योपलक्षणामङ्गीकृत्योभयोरेकवाक्यतायामेव सम्भवति। अन्यथा पञ्चरात्रस्य पूर्वमप्रकृतत्वेन पूर्वोत्तरवाक्ययोरसङ्गतत्वापातः। उपलक्षणामङ्गीकृत्यैकवाक्यतायां च स्वीकृतायां वेदपञ्चरात्रयोरेव प्रामाण्यं सिद्ध्यति। न तद्विरुद्धपाशुपतादीनामिति तेषामप्रामाण्यमेवेति ॥

(१३) एवं सूत्रं व्याख्याय यत्परेणोक्तं शास्त्रस्य योनिरिति तद्यु

४. अधिकरणम् ॥

(१) अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम् ।

कुतः?

सू—ॐ ॥ तत्तु समन्वयात् ॥ ॐ ॥ ४ ॥

(२) अन्वय उपपत्त्यादि लिङ्गम् ।

---

क्तमिति भावेन स्वाभिमतार्थं दर्शयति—शास्त्रमिति । कारणार्थकेन योनिशब्देन योग्यतया ज्ञप्तेस्सम्बन्धे प्रमाणमिति पर्यवस्यतीत्यभिप्रायेण 'योनिः प्रमाणं' इति व्याख्यातम् । 'अस्य' जगत्कारणस्य 'इति शास्त्रयोनि' इत्यनन्तरं तुशब्दोऽध्याहार्यः । अत एव गीताभाष्ये "इति तु शास्त्रयोनित्वं" इत्युक्तम् । तुरेवार्थः । तथा च—शास्त्रं योनिः प्रमाणं यस्य तच्छास्त्रयोनीत्येव शास्त्रयोनिपदार्थो ब्रह्म, न तु शास्त्रस्य योनीत्यर्थः । परव्याख्यानं तूक्तानुपयुक्तमयुक्तं चेति टीकायामेव दूषितम् ॥ ३ ॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥

४. अधिकरणम् ॥

(१) अत्राधिकरणे जगत्कारणस्य शास्त्रयोनित्वान्न लक्षणातिव्याप्तिरिति पूर्वाधिकरणफलाक्षेपपरिहारमुखेन तस्य लक्षणत्वसिद्धये विष्णोरेव जगत्कारणत्वेन शास्त्रगम्यत्वं नेतरेषामपीति समर्थ्यते । पूर्वपक्षसूचनपूर्वकं सिद्धान्तमाह—अज्ञानामिति ॥ कर्तरि षष्ठीयम् । इतरेषां इति सम्बन्धे । समुच्चयार्थस्यापेरुभयत्रान्वयः । प्रतीत्या आगमोपलक्षणा वा । तथा च—न केवलं पाशुपताद्युक्तम्, किन्तु'अज्ञानां' श्रुतितात्पर्यार्थाज्ञानिभिरापाततः ज्ञायमानमपि न केवलं विष्णोः किन्तु 'इतरेषां' रुद्रादीनामपि शास्त्रयोनित्वं, जगत्कारणत्वेन शास्त्रगम्यत्वं नेत्यर्थः । ननु प्रतीत्यादेरज्ञानमूलत्वादिकं परिकल्प्यान्येषां कारणतया शास्त्रयोनित्वाग्रहणे को हेतुरिति पृच्छति—कुत इति । प्रतीयमानमपीत्यनेनास्यान्वयः । तत्र हेतुकथनाय सूत्रमुपन्यस्यति—तत्त्विति । यत इत्यादौ ग्राह्यम् ॥

(२) सूत्राक्षराणि व्याचष्टे—अन्वय इति ॥ अन्वीयते स्वार्थेन सम्बध्यते तत्परतया ज्ञायते शास्त्रं शब्दो वाऽनेनेत्यन्वयः उपपत्त्यादितात्पर्यलिङ्गमित्यर्थः । सूत्रानुसारादेकवचनं समुदायाभिप्रायम् । तेन

( ३ ) उक्तं च बृहत्संहितायाम्—

चोपक्रमादीनां क्वचिदविरोधं सूचयति। आदिपदं श्रुतिलिङ्गवाक्य प्रकरणस्थानसमाख्यानामपि ग्राहकम्। अत्र श्रुत्यादिषट्कं च ग्राह्य मिति टीकोक्तेः। अत्र वाक्ये श्रुत्यादिषट्कमप्यादिपदेन ग्राह्यमिति हि तस्यार्थः। परन्तु श्रुत्यादीनामुपक्रमादिवत्तात्पर्यग्राहकत्वाभावादा गमार्थमात्रनिर्णायकत्वात् नात्र तन्निदर्शकप्रमाणोक्तिः। अत एवो त्तरत्र—

श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा।
स्थानं पूर्वं बलीयः स्यादेवमागमनिर्णये ॥

इति तत्रापि प्रमाणं वक्ष्यति। उक्तं हि प्रमाणलक्षणटीकायाम् "उपक्र मादीनां तात्पर्यलिङ्गत्वमेतेषां पुनरर्थ एवेति विशेषज्ञापनार्थो योगवि भागः" इति। न चैवं "अत्र श्रुत्यादिषट्कं च ग्राह्यं" इति टीकायां तात्पर्यग्राहकेष्वन्तर्भावोक्तिरयुक्तेति वाच्यम्, यतोऽत्रेत्यस्य समन्व यशब्दार्थ इत्येवार्थो न तात्पर्यग्राहकेष्विति, 'आकाशस्तल्लिङ्गात्' 'शब्दादेव प्रमितः' ( ब्र.सू.१-१-२२,७-२४. ) इत्यादौ श्रुतिलिङ्गादि भिरागमार्थनिर्णयदर्शनेन तेषामपि अन्वीयते शक्तिरूपसम्बन्धवत्तया ज्ञायते पदजातमेभिरितिव्युत्पत्त्या अन्वयशब्दार्थत्वौचित्यात्। न चो पक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तयः श्रुतिलिङ्गवाक्यप्रक रणस्थानसमाख्याश्च तात्पर्यलिङ्गानीति ज्ञानपादीयसुधाविरोध इति वाच्यम्, अत्र शक्तेरपिसंयोजनात्। अत एव चन्द्रिकायामुपक्रमादि प्रमाणकः शक्तितात्पर्यलक्षणस्सम्बन्धः समन्वय इत्युक्तम्। अत्रादिप दं श्रुत्यादीनामपि ग्राहकम्। व्युत्क्रमेणान्वयः। अनेनात्र बृहत्संहिता वचनोदाहरणं वक्ष्यमाणस्य श्रुतिर्लिङ्गमिति वचनस्योपलक्षकमिति सूचितम् ॥

( ३ ) कानि तान्युपपत्त्यादीनि कुत्र च लिङ्गानीत्यत आह—उक्तं चेति ॥ उपपत्त्यादीत्यनुषज्यते। न केवलमुपपत्त्याद्युक्तं निर्दिष्टं, किन्तु तज्ज्ञाप्यं चोक्तमिति चार्थः। अस्मदुक्तमुपपत्त्यादि लिङ्गं बृहत्संहिता यामप्युक्तमिति वा। किमुक्तमित्यतस्तत्पठति—उपक्रमेति। प्रकरणा दिरुपक्रमः तदन्त उपसंहारः। उपक्रमोपसंहारश्च तौ तथोक्तौ। अत्रोपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्चेति प्रमाण

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।
(४) उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव
[शास्त्रगम्यम् ।

लक्षणोक्तेः प्रत्येकविवक्षया विशकलितावुपक्रमोपसंहारौ द्वौ समुदायविवक्षया उभयाविरोधलक्षणं एकार्थत्वलक्षणं वा तदैकरूप्यमपि पृथक्तात्पर्यग्राहकमनुसन्धेयम् । अत एव द्विवचनप्रयोगः । एकप्रकारासकृदुक्तिरभ्यासः । प्राचुर्येण प्रमाणान्तरासिद्धार्थबोधकता अपूर्वता । फलवदर्थप्रतिपादकं फलम् । स्तुतिः, निन्दा, एककर्तृकोपाख्यानरूपा परकृतिः, अनेककर्तृकोपाख्यानरूपः पुराकल्पश्च, अर्थवादः । उपपत्तिः युक्तिः । 'तात्पर्यनिर्णये' वाक्यतात्पर्यनिश्चये 'लिङ्गं' साधनमित्यर्थः । यद्वा—निर्णेतव्ये तात्पर्ये साध्ये 'लिङ्गं' हेतुरित्यर्थः । लिङ्गमित्यस्य उपक्रमादिपदैः यथायोग्यं प्रत्येकं संबन्धः । स्मृतेरुपक्रमादित्वेपि विरोधे उत्तरोत्तरप्राबल्यसूचनाय भाष्ये उपपत्त्यादीति व्यत्यस्योक्तिः । सामान्यविशेषभावेन उपपत्तेरुपक्रमादिभ्यः पृथगुक्तिः । यद्वा—एतच्चोपक्रमादि स्वार्थे शब्दात्मकमपि इदमेतत्परं अबाधे सत्येतदुपक्रमत्वात् इत्यादिरूपेण वाक्यतात्पर्ये लिङ्गं च भवति । उपपत्तिस्तु यथाऽग्न्यादिरूपस्वार्थे तथा तात्पर्येऽपि अयमेतत्तात्पर्यविषयः उपपन्नत्वात् इति प्रकारेण लिङ्गरूपेति पृथगुक्तिः ॥

(४) सूत्रं योजयति—उपक्रमादीति ॥ 'शास्त्रे' इति शेषः । समित्यस्यार्थः सम्यगिति । सर्वस्मिन्नित्यपि द्रष्टव्यम् । 'निरूप्यमाणे' इत्यनेन संशब्दार्थस्य अध्याहृतक्रिययाऽन्वयो दर्शितः । तुशब्दस्यार्थ एवेति । 'शास्त्रयोनि' इत्यनुषक्तपदस्यार्थः शास्त्रगम्यमिति । तथा च यतोऽत्रान्वयपदोक्तैः श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्योपक्रमादिभिः शक्तितात्पर्यलिङ्गैः'सम्यक्'बलाबलविमर्शपूर्वकं 'सर्वस्मिन्' शास्त्रे ऋगादिरूपे 'निरूप्यमाणे' विचार्यमाणे एकार्थे शक्तितात्पर्यरूपव्यापकधर्मवत्तया अवगम्यमाने 'तदेव' विष्ण्वाख्यं ब्रह्मैव 'शास्त्रगम्यं' तत्प्रमाणकं प्रतीयते, न रुद्रादि, अतोऽज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वमिति योजना । लिङ्गैरिति तृतीयया निरूप्यमाणे इति सप्तमीप्रयोगे च उपक्रमादिकं तात्पर्यहेतुः । तात्पर्यं च शा

( ५ ) मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।

स्वप्रमाणकत्वे हेतुरिति सूचितं भवति । न केवलमुपपत्त्यादिकं समन्वयशब्दार्थः, किन्तु तद्धेतुकः शास्त्रजन्यप्रमागोचरत्वरूपः शास्त्रयोनित्वे हेतुभूतः । " तत्परत्वसंबन्धोऽपि " इति सुधोक्तेः । अनेन 'समन्वयात्' सावकाशत्वनिरवकाशत्वादिना बलाबलनिश्चयपुरस्सरं अन्यतरबाधया वाक्यार्थविमर्शरूपसम्यग्विचारितत्वलक्षणसम्यक्त्वयुक्तादुपक्रमादिशक्तितात्पर्यलिङ्गसमुदायात्समन्वयात् सर्वशास्त्रस्य भगवत्येव सम्यग्वचनवृत्त्या शक्तितात्पर्याख्यसंबन्धावगमात् तद्विष्णवाख्यं ब्रह्मैव जगत्कारणतया शास्त्रयोनि न रुद्रादीति 'समन्वयात्' इत्यस्यावृत्त्या सूत्रयोजना दर्शिता भवति ॥

( ५ ) ननु कर्मविधानादिरूपशास्त्रस्य कथं ब्रह्मपरतेत्याशङ्कां भगवद्वाक्येन प्रतिषेधति—मामिति ॥ यद्यपि भागवते "इत्यस्या हृदयं लोकः" इति पाठः, तथा पूर्वोत्तरार्धयोर्व्युत्क्रमेण पाठश्च दृश्यते । तथाऽप्यार्योक्तेरन्यकल्पीयोऽयमित्यदोषः । एकादशस्कन्धे उद्धवं प्रति कृष्णवचनमेतत् । अत्रास्मच्छब्देन कृष्ण उच्यते । तथा च " वसन्ते वसन्ते " (               ) इत्यादि कर्मविधात्री श्रुतिः 'मां' उद्दिश्यैव मत्पूजात्वेन कर्म विधत्ते । इन्द्राद्यभिधात्री 'मामभिधत्ते' मद्गुणानैश्वर्यादीनभिधत्ते । 'अहं विकल्प्यः' कल्पनं विधानं तथा च—

'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति '

( ऋ. १ - १६४ - ४५. ) इति श्रुत्या या वाग्वक्तृत्वान्निमित्ताद्वाक्शब्दितो हरिः तस्या यानि स्थानापेक्षया 'परिमितानि' परिच्छिन्नानि 'चत्वारि पदानि' वासुदेवादिरूपाणि तानि ये मनीषिणः ब्राह्मणाः त एव विदुः । तत्र वाचो हृदयगुहायां निहितानि वासुदेवादित्रीणि रूपाणि 'मनुष्याः' साधारणाः 'नेङ्गयन्ति' न जानन्ति । 'तुरीयं' अनिरुद्धाख्यं तु 'वदन्ति' जानन्तीत्येवंरूपेण अहमेव चतुष्टसंख्याविशिष्टवासुदेवादिविविधरूपतया बहुत्वेन विधेय इत्यर्थः । 'अहमपोह्यः' 'न सुरां पिबेत्' ( मनु. ११ - ९४. ) इत्यादिवाक्येनाप्रियादति शेषः । तथा च " निषेधबुद्धिविषयमप्रियं हि हरेः स्मृतम् " इति भागवततात्पर्योक्तेः सुरापानादिकं मद्प्रीतिसाधनत्वात् निषिद्ध्यते

इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन । इति भागवते ॥ ४ ॥

५. अधिकरणम् ॥

( १ ) ननु यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
[ ( तै. उ. २ - ४ - १. )

इत्यप्रियद्वारा 'न सुरां पिबेत्' इत्यादिना अहमेव निषेध्य इत्यर्थः । अथवा—अहमप्रियादपोह्यः ममाप्रीतिकरात्सुरापानशब्दितात् "सुरा हरेर्गुणा मे स्युः" इति चिन्तनात्तदपेक्ष्य अपोह्यो निषेध्य इत्यर्थः । तदुक्तं भागवततात्पर्ये—विधिरूपत्वेन कल्पनं विकल्पः चत्वारि वागित्यादि । तत्र वागित्यनुवादः ।

विधिभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
विकल्पे तद्बहुत्वं चाप्यपोहे तु तदप्रियम् ।
उच्यते सर्ववेदेषु तच्च वेद स एव हि ॥ इति । तथा—
सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तन्न कुर्यात्कथं चन ॥ इति ।

तत्त्वप्रदीपे तु—'द्वे वाव ब्रह्मणो रूपे' इति विकल्प्य विविधं कल्पयित्वा 'तत्र यस्स आत्मा' (तलवकारब्राह्मणम्) इति सदोषादपोह्यो निर्दोषत्वेन विधेयोऽप्यहमेवेत्यर्थः उक्तः । अत्र तत्त्वप्रदीपपक्षे विकल्प्येति ल्यप् । टीकाकृत्पक्षे तु विकल्प्यशब्दस्समासान्तर्गतो व्यस्तो वेति विशेषः । इयं च भगवति वाक्यसमन्वयरीतिः—आद्यस्य इतिशब्दस्य प्रकारार्थस्य हृदयमित्यनेनान्वयः । द्वितीयस्य एवंभूताया इत्यर्थः । तथा च ह्येवंभूताया विधिनिषेधादिरूपाया अन्यपरत्वेन प्रतीताया अस्याश्श्रुतेरिति 'मां विधत्ते' इत्याद्युक्तप्रकारेण 'हृदयं' तात्पर्यं 'अहमेव वेद' जानामि 'मदन्यः कश्चन' कोपि विशेषतः प्रायः न वेद न जानातीत्यर्थः । भागवत इत्यनन्तरं तदेव शास्त्रगम्यमित्युक्तत्वात् न कथमितिशङ्कावकाश इति वाक्यशेषः ॥ ४ ॥

॥ इति समन्वयाधिकरणम् ॥

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे संशब्दोक्तं वाच्यत्वं कार्त्स्न्यें चाक्षिप्य समाधीयते । पूर्वपक्षयति—नन्विति ॥ 'इत्यादिभिश्श्रुतिभिः' इति तृती

( २ ) 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च
[ यत् ' । ( कठ. ३ - १५. )

( ३ ) 'अवचनेनैव प्रोवाच' ( बाष्कलश्रुतिः. )

---

या पञ्चम्यर्थे । नेत्याद्यावर्तते । तथा च 'तत्' पूर्वसूत्रे तच्छब्दोक्तं ब्रह्म शब्दगोचरं शास्त्रोक्तं कारणं न, कुतः? यतो न शब्दगोचरं शास्त्र मुख्यार्थः न, तदपि कुतः? यतो न शब्दगोचरं शब्दावाच्यं, नचेक्षणीयत्वविरोधः तदसिद्धेः। कुतः? यतो न तद्गोचरं ज्ञानविषयः न,अज्ञेयमिति यावत् । न चावाच्यत्वाज्ञेयत्वयोरसिद्धिः । "यतो वाचो निवर्तन्ते" इत्यादि श्रुतेरिति योजना । 'यतो वाचः' इति वाक्ये अवाच्यत्वस्य 'अप्राप्य मनसा सह' इत्यज्ञेयत्वस्य च उक्तत्वादिति भावः । "त्रयी न श्रुतिगोचरा" इत्यत्र गोचरशब्दस्य विशेष्यलिङ्गतया प्रयोगात् 'न तच्छब्दगोचरम्' इति साधु । सुधायां तु शब्दानां गवां ज्ञानानां चरश्चरणं वृत्तिर्यस्मिन् तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहिं चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वं चाश्रित्य शब्दगोचरमित्यस्य साधुत्वमुक्तम् । 'यतः' इति तैत्तिरीयवाक्यम् । यतो 'वाचो' वेदा वागिन्द्रियाणि च 'मनसा' मनोरूपेन्द्रियेण सह 'तमप्राप्य' तद्विषयकवृत्तिज्ञानमजानन्त्य एव निवर्तन्ते । तं ब्रह्मण आनन्दं विद्वान्न बिभेति इत्यर्थः । गुणगुणिनोरभेदाश्रयेणैतदुदाहृतम् ॥

( २ ) 'अशब्दम्' इति काठकवाक्यम् । अत्र सर्वत्र यच्छब्दो योज्यः । न विद्यते शब्दो गुणः प्रमाणं वा यस्मिंस्तत्तथोक्तम् । प्राकृतशब्दगुणशून्यं शब्दप्रमाणाविषयः शब्दभिन्नं चेत्यर्थः । 'अस्पर्शं' स्पर्शगुणशून्यं तत एव स्पर्शलिङ्गाविषयः तद्भिन्नं च, 'अरूपं' स्वरूपरहितं अत एव चाक्षुषप्रत्यक्षाविषयस्तद्भिन्नं च । 'अरसं' रसगुणशून्यं रसभिन्नं च । अगन्धमित्यस्याप्युपलक्षकमेतत् । अनेन पञ्चमात्राविलक्षणत्वमप्युक्तम् । 'अव्ययं नित्यम्' इत्याभ्यां स्वरूपतो देहतश्च नाशशून्यत्वमुच्यते । अगन्धवदित्यनेन गन्धवत्पृथिवीविलक्षणत्वमुक्तम् । अनेनोपलक्षणया पञ्चमहाभूतविलक्षणत्वमप्युक्तं भवति । अस्य 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यनेनान्वयः ॥

( ३ ) 'अवचनेन' इत्यन्यच्छ्रुतिवाक्यम् । 'अवचनेन' वचनव्

( ४ ) 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते . . यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्' ( के. १. ) इत्यादिभिश्श्रुतिभिः न तच्छब्दगोचरम् ।

( ५ ) नेत्याह—

सू—ॐ ॥ ईक्षतेर्नाशब्दम् ॥ ॐ ॥ ५ ॥

'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र.५-५.)

---

त्ति विनैव लक्षणया 'प्रोवाच ब्रह्म गुरुः' शिष्यायोपदिदेशेति परीत्यार्थः ॥

( ४ ) 'यद्वाचा' इत्यन्यत्तलवकारवाक्यम् । 'वाचा' तदुच्चार्येण शब्देन यत् 'अनभ्युदितं' अनुक्तम् । येन वाक् 'अभ्युद्यते' उच्यते । श्रोत्रेन्द्रियेण न शृणोति पुरुषः । येनेदं श्रोत्रं श्रुतं तदेव ब्रह्म त्वं विद्धीत्यर्थः । अत्र पूर्वपक्षरीत्या वचनवृत्तिनिषेधः । आदिपदेनैवंजातीयका श्रुतिर्गृह्यते ॥

( ५ ) सिद्धान्तयत्सूत्रमवतारयति — नेति ॥ इतिशब्द आवर्तते । तथा च अत्र सूत्रकारः इति पूर्वपक्ष्युक्तं श्रुतितात्पर्यापरिज्ञानप्राप्तं ब्रह्मणोऽवाच्यत्वं नेति निषेधतीत्यर्थः । सूत्रं पठति —ईक्षतेरिति ॥ अत्र तदित्यनुवर्तते । तच्च आऽध्यायपरिसमाप्तेः विधेयसमर्पकमपीहोद्देश्यसमर्पकम् । न विद्यते शब्दो वाचको यस्य तदशब्दं । तथा च 'तत्' ब्रह्म 'अशब्दं' शब्दावाच्यं न, किंतु वाच्यमेव । कुतः? ईक्षतेः । धातुनिर्देशोऽयं, तथैव सुधोक्तेः । तथाऽपि शब्दमात्रस्यासाधकतया तेन तदर्थो लक्ष्यते । तेन प्रकृतानुकूलतयेक्षणीयत्वं विवक्ष्यते । तथा च 'ईक्षतेः' ईक्षणीयत्वात् ज्ञानविषयत्वादित्यर्थः इत्याशयेन सूत्रं व्याचष्टे—स इति । इदं च षट्प्रश्नवाक्यम् । अत्र "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्" इति पूर्ववाक्ये प्रकृतो यः अकारोकारमकाराख्यांशत्रययुक्तप्रणवोक्तप्रकारेण परमात्मानमभिध्याय तमपरोक्षीकृत्य च तेजोरूपे सूर्ये सम्पन्नस्त्वङ्निर्मुक्तसर्पवद्विधूतपापस्सामाभिमानिदेवैः सत्याख्यं ब्रह्मलोकं प्राप्तः प्रणवोपासको जीवः सः 'जीवघनात्' जीवसारात्तच्छ्रेष्ठात् 'एतस्मात्' चतुर्मुखात्तदुपदेशे

'आत्मन्येवात्मानं पश्येत्' ( बृ. ६-४-२३. ) 'विज्ञाय प्रज्ञां कुर्वीत' ( बृ. ६-४-२१. ) इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव ।

( ६ ) औपनिषदत्वान्नावचनेनेक्षणम् ।

---

न 'परात्परं' उत्तमादुत्तमं 'पुरिशयं' सकलदेहान्तर्गतं 'पुरुषं' पूर्णं वासुदेवं परमात्मानं 'ईक्षते' जानातीत्यर्थः । यद्यपि पद्मटीकायां "जीवघनाद्विरिञ्चात्तदुपासनयेति यावत्, ईक्षते पुनरभिवृद्धज्ञानो भवति । ईक्षित्वाच तं प्राप्नोति" इत्युक्तेरीक्षतेरपरोक्षज्ञानार्थत्वं प्रतीयते । तथाऽपि मूले ज्ञानसामान्यविषयत्वरूपेक्षणीयत्वहेतोरसिद्धिपरिहाराय अस्याः श्रुतेरुपन्यस्तत्वात् "हिरण्यगर्भोपदेशेन" इति टीकोक्तेश्चेह प्रकृतानुगुण्यादीक्षतिः परोक्षज्ञानार्थो व्याख्येयः । 'आत्मनि' इत्यपरं काण्ववाक्यं जिज्ञासानये व्याकृतम् । 'विज्ञाय' इत्यन्यद्वाजसनेयवाक्यम् । 'ब्राह्मणो' ब्रह्मनिष्ठो धीरः 'तं' परमात्मानमेवं शास्त्रेणाचार्याद्वा 'विज्ञाय' परोक्षतो ज्ञात्वा 'प्रज्ञां' प्रकृष्टमपरोक्षज्ञानं 'कुर्वीत' सम्पादयेदित्यर्थः । इत्यादीति । एवमादिवाक्यैरित्यर्थः । आदिशब्देन "आत्मा वा अरे द्रष्टव्यः" ( बृ. उ. २-४-५. ) "अज आत्मा महान् ध्रुवः" ( बृ. उ. ४-४-२०. ) "तमेव धीरो विज्ञाय" ( बृ. उ. ४-४-२१. ) इत्यादिकं गृह्यते । ईक्षणीयत्वात् । अवगमोपलक्षकमेतत् । अन्यथाऽनन्वयात् । अनेनासिद्धिः परिहृता । तदन्यथाऽनुपपत्तेरिति शेषः । वाच्यमेवेति सौत्रनञ्द्वयलब्धार्थोक्तिः । न त्ववाच्यं नापि लक्ष्यमिति एवशब्दार्थः । तादात्म्येनास्यान्वयः । आनयमसूचनाय सूत्रभाष्ययोः प्रतिज्ञाहेत्वोर्व्युत्क्रमेणोक्तिः ॥

( ६ ) नन्वस्त्वीक्षणीयत्वं ब्रह्मणः, तथाऽपि न तदन्यथाऽनुपपत्त्या तस्य वाच्यत्वं वाच्यं प्रत्यक्षादिनाऽपीक्षणीयत्वोपपत्तेरित्यत आह— औपनिषदत्वादिति ॥ तदित्येतद्विपरिणम्यानुवर्तते । तथा च 'तस्य' ब्रह्मणः 'औपनिषदत्वात्' उपनिषदेकसमधिगम्यत्वात् 'अवचनेन' वचनेतरप्रमाणेन 'ईक्षणं' ज्ञानं नेत्यर्थः । तथा च श्रुतिस्मृतिसाहाय्यरहितप्रत्यक्षाद्यवेद्यत्वविशिष्टेक्षणीयत्वान्यथाऽनुपपत्त्या ब्रह्मणो वाच्यत्वं सिद्ध्यत्येवेति भावः । परिशेषप्रमाणपरतया वा इदमावृत्त्य व्याख्येयम् । योजना तु—ब्रह्मणश्श्रुतिपूर्वं ईक्षणं प्रमाणेनैव हि भवेत् । प्र

( ७ ) 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वद
न्ति '। ( कठ. २-१५. )
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।
( भ. गी. १५-१५. ) इत्यादिश्रुतिस्मृतिभ्यश्च।
( ८ ) अवाच्यत्वादिकं त्वप्रसिद्धत्वात्।

---

सकृत्प्रमाणेषु च 'नावचनेन' वचनेतरप्रमाणेनेक्षणं सम्भवति औप निषदत्वात् वचनेनैव भवदीक्षणं नावचनेन वचनवृत्त्यन्यलक्षणादि ना सम्भवति। कुतः? 'अवचनेन' भावप्रधानो बहुव्रीहिः । अवचन त्वेनावाच्यत्वेन निमित्तेन अतः परिशेषादीक्षणं वाच्यत्वमेव साध यतीति॥

( ७ ) ननु श्रुतिसिद्धमवाच्यत्वं कथमीक्षणीयत्वयुक्तिमात्रेण दू ष्यते ? 'प्राबल्यमागमस्यैव' इति युक्तितः श्रुतेः प्राबल्योक्तेरित्यतः सौत्रो हेतुरागमोपलक्षक इति भावेन वाच्यत्वे श्रुतिस्मृती चाह— सर्व इति॥ कठानामियं श्रुतिः। सर्वे वेदा 'यत्पदं' यस्य ब्रह्मणः स्व रूपं 'आमनन्ति' मुख्यवृत्त्या सतात्पर्यं प्रतिपादयन्ति। सर्वे वेदाः स र्वाणि तपांसि प्रसिद्धानि 'यत्' ब्रह्म प्रति 'वदन्ति' तदुद्देशेन कर्त व्यानीति बोधयन्तीत्यर्थः। तत्त्वप्रदीपरीत्या 'तपांसि' आलोचनरूपा युक्तय इति वा। सर्वैर्वेदैरहमेव 'वेद्यो' मुख्यतः प्रतिपाद्यः । अहं 'वेदान्तकृत्' ब्रह्मसूत्रकृत् 'वेदवित्' वेदार्थज्ञानी चेति गीतास्मृत्य र्थः। आदिपदात् 'अथ कस्मादुच्यते' 'नामानि सर्वाणि' 'वचसां वाच्यमुत्तमम्' इत्यादेस्सङ्ग्रहः। तथाच श्रुतौ 'आमनन्ति' इति सा क्षाद्वाच्यत्वोक्तेः, स्मृतौ च 'अहमेव' इत्यवधारणोपपत्तये मुख्यतया वेद्यत्वस्य विवक्षणीयत्वात् तस्य च वाच्यत्वं विनाऽयोगात्सर्वशब्द लक्षणायाश्चासम्भवाद्वाच्यत्वमेवाभ्यां सिद्ध्यतीति भावः। स्मृतिभ्य श्चेत्यस्य वाच्यमेवेत्यनेनान्वयः। आदिशब्दोपात्त श्रुतिस्मृत्यपेक्षया ब हुवचनम्। न केवलमीक्षणीयत्वहेतोरिति चार्थः॥

( ८ ) नन्वेवं वाच्यत्वस्य युक्त्यादिसिद्धत्वे अवाच्यत्वाज्ञेयत्वा भिधायकोदाहृतश्रुतेः 'यतो वाचः' इत्यादिरूपायाः का गतिरित्यत आह—अवाच्यत्वादिकमिति॥ अज्ञेयत्वमतर्क्यत्वं च आदिशब्दार्थः।

(९) न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः । इतिवत् ॥
(१०) अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम् ॥ इति गारुडे ।
(११) न चाशब्दत्वमितरसिद्धम् ॥

---

तुशब्दः शङ्काव्यावर्तकः । भिन्नक्रमेणावधारणे वा । तथा च 'अप्रसिद्धत्वात्' साकल्येन अगोचरत्वान्निमित्तादेव ब्रह्मणि अवाच्यत्वादिकं' अवाच्यत्वादिव्यपदेशो युज्यत इति न तद्विरोध इति भावः । अनेन सिद्धान्ते 'अशब्दम्' इत्यादेरप्रसिद्धत्वात्साकल्येन वाचकशब्दशून्यमित्यादिरर्थः । 'अवचनेन' इत्यस्य तु साकल्येन वचनमन्तरेणेत्यर्थ इत्युक्तं भवति ॥

(९) नन्वप्रसिद्धिनिमित्तकोऽवाच्यत्वादिव्यपदेशः क्व दृष्ट इत्यत आह—न तदिति॥ यस्मात् 'विपश्चितो' ज्ञानिनो मेरो रूपं पश्यन्तोऽपि 'ईदृगिति' साकल्येन 'न पश्यन्ति' न जानन्ति। अनेनाप्रसिद्धत्वहेतुः सूचितः। तस्मान्मेरो रूपं न ज्ञेयं प्रत्यक्षेण। न वाच्यं शब्देन। 'न तर्क्यते' नानुमीयते च लिङ्गेनेत्युच्यत इत्यर्थः । इतिवदिति । इति वाक्य इवेत्यर्थः । अस्यावाच्यत्वादिकमिति पूर्वेणान्वयः । तथा च यथा मेरुरूपे अप्रसिद्धनिमित्तकावाच्यत्वादिव्यपदेशस्तथा ब्रह्मण्यपीति भावः ।

(१०) न केवलं 'पश्यन्तः' इत्युक्तयन्यथाऽनुपपत्तिमात्रेणैव अप्रसिद्धेरज्ञेयत्वातर्क्यत्वावाच्यत्वव्यपदेश इति व्यवस्था सिद्धा, अपि तु स्मृतिसिद्धा चेति भावेनाह—अप्रसिद्धेरिति ॥ तद्ब्रह्म यतः 'परं' पूर्णं अतस्साकल्येनाप्रसिद्धत्वादवाच्यमुच्यते । सर्वे सदागमोक्तत्वात्तत्प्रसिद्धत्वाद्वाच्यं च भवतीत्यर्थः । एवमप्रसिद्धिप्रसिद्धिभ्यां तत् अतर्क्यं अनुमेयं च अज्ञेयं ज्ञेयं ज्ञानिप्रत्यक्षगम्यं च 'स्मृतं' स्मृतिकारैरुक्तमित्यर्थः । गारुडे इत्यनन्तरं उक्तमिति शेषः । अस्याप्यवाच्यत्वादिकमित्यनेनान्वयः ॥

(११) एवं 'यतो वाचः' इत्यादिश्रुतीनां युक्तयादिबलादर्थान्तरोपपत्तेर्न तद्बलाच्छब्दावाच्यं ब्रह्मेति सूत्रं व्याख्यायापव्याख्यां प्रत्याख्याति—न चेति ॥ चशब्दः स्वसिद्धमपि नेतिसमुच्चये । तथा च जगत्कारणं 'अशब्दं' प्रधानं न, कुतः ? अशब्दं हि तत् । 'अशब्दं' प्रधा

(१२) सू—ॐ ॥ गौणश्चेन्नात्मशब्दात् ॥ ॐ ॥ ६ ॥
(१३) न च गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम् । आत्मशब्दात् ।

नं कारणं नेति वा, कुतः? ईक्षतेः' 'तदैक्षत' इति जगत्कारणस्येक्षणकर्तृत्वश्रवणात्प्राधानस्य चाचेतनत्वेन तदसम्भवादिति साङ्ख्यमतनिराकरणपरतया व्याख्याने प्रथमप्रतिज्ञायां हेतूक्तं 'अशब्दत्वं' अश्रौतत्वं 'इतरसिद्धं' स्वेतरसाङ्ख्यसिद्धं न, न केवलमेतावत्, किन्तु स्वसिद्धमपि न, साङ्ख्येन वैदिकत्वाभ्युपगतेः । सूत्रकारेण 'अजामेकां' (तै. आ. १० - १० - १.) इत्यादिश्रुत्युक्तत्वाङ्गीकारात् ।

यद्वा—तत्त्वप्रदीपरीत्या मायिना साङ्ख्यं प्रति हेतुत्वेनोपन्यस्तमशब्दत्वं मायीतरस्य साङ्ख्यस्य न सिद्धं नापि साङ्ख्येतरमायिसिद्धमुक्तहेतुभ्यामेव । तथा चासिद्धिरिति न तद्व्याख्यानं युक्तमितिभावः । एवमशब्दत्वं श्रौतत्वं ब्रह्मणस्साङ्ख्येतरमायिसिद्धं न, तन्मते अवाच्यत्वात् । चकारादीक्षितृत्वमपि सिद्धं न, तस्येक्षतिस्वरूपत्वादित्यपि व्याख्येयम् । तथा च हेतुद्वयमपि स्वपक्षप्रतिकूलमिति न परव्याख्या युक्तेति भावः । तत्त्वप्रदीपे तु 'नच' इत्यादिभाष्यं 'इतरसिद्धं' मायिसिद्धमशब्दत्वं न श्रुत्यर्थः उक्तन्यायेन ब्रह्मणो वाच्यत्वात् । एवं 'अशब्दत्वं' अवाच्यत्वं ब्रह्मण इतरस्य मायिनोऽपि न सिद्धम् । ब्रह्मणि व्यवहाराभावप्रसङ्गात् इति द्वेधा व्याख्याय परकृतव्याख्याप्रत्याख्यानाय परोक्तहेतोर्ष्टीकारीत्याऽसिद्ध्युक्तिपरतयाऽपि व्याख्यातम् ॥५॥

(१२) ईक्षणीयत्वस्य हेतोर्व्यधिकरणासिद्धिमाक्षिप्य समाधातुं सूत्रम्—'ॐ गौणश्चेन्नात्मशब्दात्' इति ॥ अस्यार्थः—यतः 'आत्मन्येवात्मानं पश्येत्' इत्यादिश्रुत्युक्त आत्मा 'गौणः' स त्वादिगुणबद्धो जीव एवातस्तदन्यथाऽनुपपत्त्या वाच्योऽपि स एव स्यान्न निर्गुणः परमात्मेति चेत्—न कुतः? 'आत्मानं पश्येत्' इतीक्षणीये तस्मिन्नात्मशब्दश्रवणादिति । आत्मपदसामानाधिकरण्याय पुल्लिङ्गनिर्देशः ॥

(१३) सूत्रं व्याचष्टे—न चेति ॥ अत्र यतो 'दृश्यः' ईक्षतिश्रुतौ दृश्यतयोक्तः 'आत्मा' जीवाख्यो गौण एव अतस्तदन्यथानुपपत्त्या वाच्योऽपि स एव स्यात् 'न निर्गुणः' गुणातीतो विष्णुः 'दृश्यः' ईक्षतिश्रुत्युक्तः । गौणग्रहणे बाधकस्येतरज्ञापकस्य चाभावादिति

( १४ ) यो गुणैस्सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते ।
एतदन्यस्वभावो यः सोऽनात्मेति सतां मतम् ।
अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते । इति वामने ।
( १५ ) 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यः

भावः । अतो न स वाच्यः इति चोद्यं न युक्तम् । कुतः ? 'आत्मशब्दात्' 'आत्मन्येव' इति वाक्ये ईक्षणीये तस्मिन् आत्मशब्दश्रवणाद्दृश्यो निर्गुण एव, अत एवेक्षत्या लिङ्गेन वाच्योऽपि स एव भवेदिति योजना । यद्यपि सुधायां गौणपदं मायाशबलितैश्वर्यादिधर्मयुक्तसगुणब्रह्मपरतया व्याख्यातः तथाऽपि पूर्वपक्षिणो मायाशबलितं वा गुणबद्धा जीवा वा दृश्या वाच्याश्च, न सर्वथा निर्गुणं ब्रह्मेत्याशयान्न विरोधः ॥

( १४ ) नन्वात्मशब्दसद्भावे कुतोऽयं निर्गुणो न गौण इत्यत आह—य इति ॥ यः 'सर्वतः' प्रकारेण 'गुणैः' सत्त्वादिभिः शून्यः यश्च दुःखादिदोषरहितः यश्च हेयोपादेयरहितः । भावप्रधानोऽयम् । हेयत्वसहितोपादेयत्वरहित इति । उपादेय एवेत्यर्थः । तत्त्वप्रदीपरीत्या स्वाभाविकदोषरहितो गुणपूर्णत्वेनाप्तकामत्वादुपादेयरहित इति वा । तत्त्वोद्योतटीकारीत्या दोषाभावाद्धातुरभावाद्वा हेयत्वरहितः, लौकिकगुणाभावादुपादातुरन्यस्य स्वतन्त्रस्याभावाद्वा उपादेयत्वरहितः अनिष्टाभावाद्धेयं नास्ति, अपूर्त्यभावादुपादेयमस्य नास्तीति वा तथोक्तः । य एवं भूतस्स आत्मेत्यभिधीयते । य एतद्विरुद्धस्वभाववान् सोऽनात्मेति सतां 'मतं' सम्मतमित्यर्थः । क्वचित् 'हृदि ह्येष आत्मा' इत्यादावेतदन्यस्वभावेऽप्यात्मपदप्रयोगात् कथं सोऽनात्मेत्यत आह—अनात्मनीति । 'अनात्मनि' आत्मशब्दमुख्यार्थभिन्ने जीवे 'आत्मशब्दः' 'सोपचारः' उपचारः परममुख्यवृत्त्यन्यमुख्यवृत्तिः तत्सहितस्तद्वृत्तिक इत्यर्थः । तुशब्दो विशेषार्थः । 'वामने' इत्यनन्तरं 'निर्गुणैकनिष्ठत्वेनोक्तात्' इति शेषः । अस्य नायं दृश्यो वाच्यश्च गौणः, किन्तु निर्गुण एवेत्यनेनान्वयः ॥

( १५ ) अत्रैव प्रमाणान्तरमाह—द्वे वावेति ॥ 'ब्रह्मणः' परब्रह्मणः रूपं च रूपं च रूपे । तत्राद्यो रूपशब्दः स्वरूपपरः द्वितीयो रूप्यते

स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च । अथ ह
योऽनीदृशः सोऽनात्मा ’ इति तलवकारब्राह्मणम् ।

( १६ ) न च मुख्ये सत्यमुख्यं युज्यते ।

( १७ ) सू—ॐ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ॐ ॥ ७ ॥

---

ज्ञायते ब्रह्माख्यामिति व्युत्पत्त्या प्रतिमापरः । वावेति निपातसमुदायः प्रसिद्धिद्योतकः । ते रूपे दर्शयति—आत्मेति । आत्मशब्दमुख्यवाच्य स्तदवाच्यश्चेत्यर्थः । ‘ तत्र ’ आत्मानात्मनोर्मध्ये ‘ स यः ’ इत्यन्वयः । अन्यथा पौनरुक्त्यात् । तथा च ‘ सः ’ प्रसिद्धो ‘ यः ’ आत्मा आत्म शब्दमुख्यार्थो विष्णुः ‘ स नित्यः ’ देहहान्यादिरहितः ‘ शुद्धः ’ कर्म लेपविधुरः ‘ केवलः ’ जडामिश्रः ‘ निर्गुणः ’ सत्त्वादिगुणाबद्ध इत्य र्थः । चो विशेषणसमुच्चये । एवं प्रथमोद्दिष्टात्मशब्दार्थं लक्षणमुखेन प्रदर्श्य अथानात्मानमुक्तलक्षणव्यतिरेकमुखेन दर्शयति —अथेति । यस्मादात्मा एवं भूतः ‘ अथ ’ तस्मात् ‘ योऽनीदृशः ’ नित्यत्वादिर हितः ह प्रसिद्धः । ‘ सोऽनात्मेति ’ सतां सम्मतमित्यर्थः । ‘ ब्राह्मणं ’ इत्यनन्तरं यतो निर्गुणस्य विष्णोरेवात्मत्वं वक्तीति शेषः । अस्यापि ‘ वाग्ने ’ इतिवदन्वयः ॥

( १६ ) ननूपचारेणाप्यात्मशब्दस्य गौणे प्रयोगसद्भावात्स एव श्रु त्युक्तो दृश्य आत्मा किं न स्यादित्यत आह—न चेति ॥ ‘ मुख्ये ’ आ त्मपदमुख्यार्थे निर्गुणे दृश्यतयेक्षतिश्रुतिप्रतिपाद्ये सम्भवति सति अ मुख्यार्थगौणग्रहणं न युज्यत इत्यर्थः । अत्र सतीत्यनेन मुख्यसम्भवा ख्यो हेतुरुक्तः । अमुख्यं न युज्यत इत्यनेन साध्यम् । उभयसमुच्चये शङ्कापरिहारसमुच्चये वा चशब्दः ॥ ६ ॥

( १७ ) ननु आत्मशब्दो मुख्यत एव गौणात्मपरः किं न स्यात् । न चोक्तश्रुतिस्मृतिविरोधः, तत्रात्मशब्दो निर्गुणे विष्णौ मुख्यो जीवे त्वमुख्य इत्युक्तेः आत्मानात्मशब्दयोश्चेतनाचेतनविषयत्वसम्भवात्। किंच—आत्मानात्मशब्दयोः प्रसिद्धचेतनाचेतनपरत्वे श्रुतेराजवं, प्रसिद्धार्थापरित्यागात्, रूपशब्दस्यानेकार्थाकल्पनाच्च । न च जीवे निर्दोषत्वाद्ययोगः, दुःखादिदोषस्यौपाधिकत्वेन जीवस्यापि स्वभा वतो निर्दोषतया श्रुतेः स्वभावविषयत्वोपपत्तेरित्याशङ्कां परिहर्तुं सू त्रं पठति—ओं तन्निष्ठस्य इति ॥ नेति वर्तते । तथा च—‘ तन्निष्ठस्य ’

(१८) न हि गौणात्मनिष्ठस्य मोक्षः ।
(१९) यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् सन्दोहे गहने प्रविष्टः ।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव (बृ. उ. ६-४-१३.)
इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते ।

---

अस्य आत्मज्ञानिनः 'मोक्षोपदेशात्' नात्मशब्दमुख्यवाच्यो गौण इति सूत्रार्थः ॥

(१८) तन्निष्ठस्य मोक्षोपदेशोऽपि कुतोऽयमात्मा न गौण इत्यप्रयोजकत्वमाशङ्क्याह—न हीति ॥ गौणमोक्षपदसमभिव्याहृतो हिशब्दो विरोधाख्यहेतुसूचकः । तथा च—'हि' यस्मात् 'गौणात्मनिष्ठस्य' गुणबद्धजीवज्ञानिनः तज्ज्ञानाद्गुणबन्धनिवृत्तिरूपो 'मोक्षो' न सम्भवति, विरोधात् तस्मात् 'न हि' नाप्रयोजकता शङ्क्येत्यर्थः ॥

(१९) असिद्धिशङ्कां परिहर्तुं कोऽसावात्मनिष्ठस्य मोक्षोपदेश इत्यतस्तं दर्शयति—यस्येति ॥ अत्र श्रुतिः स्वप्रभुत्वमुशब्दं एवेति व्याचष्टे । 'उ' एकः प्रधान इति वा । तच्छब्दो विष्णुतज्ज्ञानिपरः । तथा च —'हि' यस्मात् 'सः' विष्णुः 'सर्वस्य कर्ता' तस्मादेव 'विश्वकृत्' वायुकर्ता 'प्रतिबुद्धः' स्वतस्सर्वज्ञः 'अस्मिन् सन्दोहे' सन्दुह्यते पुरुषार्थो अनेनेति वा कार्यकारणसंघातरूपत्वाद्वा भूतसमुदायरूपत्वाद्वा सन्दोहनामके मध्यदेहे स्थिते 'गहने' गम्भीरे हृदयगुहास्थाने 'प्रविष्टः' सः 'आत्मा' विष्णुः 'यस्य' येनोपासकेन 'अनुवित्तः' सम्यज्ज्ञातः 'तस्य' अधिकारिणः 'उः' प्रधानः तस्य विष्णोर्यो 'लोकः' स एव लोकः स्थानं भवतीत्यर्थः । 'सन्दोघे' इति पाठेऽप्ययमेवार्थः । 'सन्देहे' इति पाठे अनेकार्थसङ्कट इत्यर्थः । तत्त्वप्रदीपे तु—सः विश्वकृत् कृतकृत्यः । कुतः ? यतः स हि परमात्मा प्रसन्नः सर्वशक्तिः सर्वमस्य ज्ञानिनः कार्यं करोतीत्युक्तम् । अस्मिन् पक्षे प्रथमः प्रथमान्ततच्छब्दो विष्णुज्ञानिपरः, विश्वशब्दः कृत्यपरः, सर्वशब्दो ज्ञानिकार्यपरः । टीकाकृत्पक्षे तु—प्रथमः प्रकृतविष्णुपरः, विश्वशब्दो वायुपरः, सर्वशब्दो जगत्पर इति भेदः । पक्षद्वयेऽपि द्वितीयतृतीयौ विष्णुतल्लोकपरौ । 'इति' इत्येवंरूपे बृहदार

( २० ) अयमात्मा ब्रह्म । ( मा. उ. १-२, बृ. उ.२-५-१९. )
( २१ ) ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥
दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् ॥
चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥

ण्यके ' आत्मनिष्ठस्य ' तज्ज्ञानिनो ' मोक्ष उपदिश्यते '। अस्य यत इत्युपदिश्यते अतो ' न गौण आत्मा ' इति वक्ष्यमाणप्रतिज्ञयाऽन्वयः। सूत्रस्य तु न गौण आत्मशब्द इति पूर्वेणान्वयः । आत्मेत्यनेन सौत्रत च्छब्दो नात्मशब्दपरः, किन्त्वर्थतः प्रधानात्मपर इत्युक्तं भवति ॥

( २० ) आत्मशब्दो विष्णावेव मुख्यः न जीवेष्वित्यत्र न केवलं त न्निष्ठस्येत्यादिनोक्तमनुमानं मानम्, किन्तु सूत्रकृदभिप्रेताः स्पष्टश्रुति स्मृतयश्चेति भावेन तां ताश्चाह—अयमिति ॥ ब्रह्मेत्यन्तस्य उपदिश्य त इति पूर्वेणान्वयः । ' अयमात्मा ' रमाब्रह्मादिषु आदानादिकर्तृत्वेन स्थितः आत्मा ' ब्रह्म ' विष्णुरेवेति माण्डूकश्रुत्यर्थः " सोऽयं विष्णु रमाब्रह्मरुद्रानन्तादिगः सदा । आदानादनकर्तृत्वादात्मा " इति मा ण्डूकभाष्योक्तः ॥

( २१ ) " वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्म" इत्यपरं भागवतवाक्यम् । अद्वयं समाधिकशून्यं ज्ञानस्वरूपं यत्तत्त्वं वदन्ति ज्ञानिनः तत् देशकालादिषु बृंहितत्वात् सर्वान्तर्यामित्वाद्यैश्वर्यादिगु णवत्त्वाच्च निमित्तात् ' ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ' अभि धीयत इत्यर्थः । अस्यापि पूर्वेण सम्बन्धः । तत्रैव चतुर्थस्कन्धे "दत्तं" इत्यन्यद्वाक्यम् । एतच्च ' अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ' इति पूर्वार्धेनैवान्वेतव्यम् ।

पत्नी मरीचेस्सुकला सुषुवे कर्दमात्मजा ।
काश्यपं पूर्णिमानं च ययोरापूरितं जगत् ॥

इति प्रकृतेन समुच्चयार्थस्तथाशब्दः । तथा च—अनसूयाख्या अत्रि भार्या अत्रेः सकाशात् ' आत्मेशब्रह्मसम्भवान् ' आत्मा विष्णुरीशो रुद्रः ब्रह्मा चतुर्मुखः आत्मा चेशश्च ब्रह्मा च ते तथोक्ताः तैस्सह भव न्तीत्यात्मेशब्रह्मसम्भवाः तान् 'अकल्मषान्' अपापान् यो दत्तः दुर्वा साः सोमश्चैतान् पुत्रान् 'जज्ञे' जनयामासेत्यर्थः । यद्वा—अनसूया अ त्रेर्दत्तादीन् जनयामास, ते च आत्मेशब्रह्मसम्भवा इति विपरिणामेन

इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ।
तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥
सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।
परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततस्स्मृतः ॥
इति पाद्मे ।

व्याख्येयम् । अत्र ब्रह्मविशेन सहोत्पन्ने चन्द्रे निरुक्तसम्भवशब्दो मुख्यः । साक्षाद्विष्णुरुद्रांशत्वेन तत्सम्भूतयोर्दत्तदुर्वाससोस्तु छत्रिन्यायेनामुख्य इति द्रष्टव्यम् । यद्यपि " अत्रेः पत्न्यनसूया त्रीन् जज्ञेऽतियशसः सुतान् । दत्तं " इति भागवतपाठः, तथाऽप्यनुव्याख्याने एवं पठितत्वात्तथैव सुधायां व्याख्यातत्वात्तदन्यकल्पीयं पाठान्तरं भविष्यतीत्यदोषः । अस्यापीत्युपदिश्यत इत्यनेनान्वयः । चेतनास्त्विति पाद्मवाक्यम् । 'प्रभो' इति कस्य चित्सम्बोधनम् । तत्रेति शेषः । आद्यस्तुशब्दो विशेषार्थः । द्वितीयोऽवधारणे । तथा च—'जीवाः ब्रह्मादयः प्रोक्ताः आत्मा तु' तच्छब्दमुख्यवाच्यस्तु 'जनार्दनो' विष्णुः 'एकः' एव प्रोक्तः प्रमाणेषु । 'इतरेषु' ब्रह्मादिषु 'आत्मशब्दः सोपचारः' परममुख्यवृत्त्यपेक्षया हीनवृत्तियुक्त इति ज्ञानिभिरभिधीयत इत्यर्थः । कुतस्तस्यैवात्मत्वं नान्येषामित्यत आह—तस्येति । यतः 'तस्य' निर्गुणस्य आत्मनो 'ज्ञानान्मोक्षो' भवतीति "यस्यानुवित्तः" (बृ. उ. ४-४-३१. ) इत्यादौ 'उदाहृतः' उक्तः अतोऽयमात्मा निर्गुणो विष्णुरेव नान्यः। कुतः? तस्यैव विष्णोर्निर्गुणस्य मोक्षदातृत्वसम्भवात्, अन्येषां तदसम्भवादित्यर्थः । आत्मज्ञानान्मोक्षोपदेशेऽपि कुतो नेतरेषामात्मत्वं तेषामपि मोक्षदातृत्वसम्भवादित्यत आह—सगुणा इति । तुरवधारणे । तथाच—'अपरे' विष्णोरन्ये ब्रह्मादयो यतः 'सगुणाः' सत्त्वादिगुणबद्धा एव न स्वतस्तद्विधुराः अतः 'तज्ज्ञानान्नैव' सर्वथा 'मुच्यते' अधिकारीत्यर्थः, गुणबद्धात्मविज्ञानात् गुणबन्धनिवृत्तिरूपमोक्षायोगादिति भावः । ननु विष्णावपि निर्गुणत्वेनास्तु मोक्षदातृत्वसम्भावना, तन्निश्चयस्तु कुत इत्यत आह—परो हीति । 'हि' यस्मात् 'विष्णुः परः' स्वतन्त्रः । तत्त्वप्रदीपरीत्या सर्वोत्तम इति वा, 'पुरुषः' पूर्णः 'तस्मान्मोक्षस्ततो' विष्णोर्भवेदेवेति स्मृतः स्मृत्युक्त इत्यर्थः । 'इति पाद्मे' इत्यस्यापि इत्युपादिश्यत इति पूर्वेणान्वयः ॥ ७ ॥

(२२) सू—ॐ ॥ हेयत्वावचनाच्च ॥ ॐ ॥ ८ ॥
'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ ।
अमृतस्यैष सेतुः (मुं.उ. २-२-५.) इत्यन्येषां हेयत्ववच
नादस्याहेयत्ववचनाच्च गौण आत्मा ॥

(२३) सू—ॐ ॥ स्वाप्ययात् ॥ ॐ ॥ ९ ॥
पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ (बृ.उ.५-१-१.)

---

(२२) युक्त्यन्तरेणात्मशब्दादितो न गौण इत्याह सूत्रकृत्—हेय त्वेति ॥ अत्र हेयत्वं नाम मोक्षार्थं प्राधान्येन ज्ञेयत्वेनाविहितत्वम् । त था च—न केवलं तन्निष्ठस्य मोक्षोपदेशात्, किन्तु "तमेवैकम्" इति श्रुतौ आत्मनो हेयत्वावचनात्, प्रत्युत 'जानथ' इत्यहेयत्ववचनात्, जीव स्य च "अन्या वाचो विमुञ्चथ" इति मुमुक्षुभिर्हेयत्ववचनाच्चेति सूत्रवृत्तिमभिप्रेत्य सूत्रं व्याचष्टे—तमिति । हे ऋषयः 'तं' आत्मानं विष्णुं 'एव एकं' प्रधानं 'जानथ' जानीध्वम् । 'अन्याः' जीवादि विषयिणीः 'वाचः विमुञ्चथ' त्यजत, प्राधान्येन विष्णवितरान् न जानीध्वमित्यर्थः । 'जानथ आत्मानं' इति विश्लेषो विष्णोः सर्वतो विलक्षणत्वप्रदर्शनार्थः । विकरणव्यत्ययस्तु छान्दसः । अमृतस्येत्येक वचनं समुदायविवक्षया । तथा च—'अमृतस्य' मुक्तवर्गस्य 'एषः' विष्णुः 'सेतुः' मुख्याश्रय इत्यर्थः । 'इति' इत्येवंरूपायां मुण्डकश्रु तौ 'अन्येषां' जीवानां 'हेयत्ववचनात्' इत्यनेन चशब्दसमुच्चेयं द र्शितम् । सौत्रनञो व्यत्यासेन अन्वयमभिप्रेत्य समुच्चेयान्तरमाह—अ स्य विष्णोरहेयत्वेति । चशब्दः समुच्चये । सूत्रे गौणसूत्रादनुवृत्तस्य "न गौण आत्मशब्दः" इत्यस्यार्थमाह—नेति । गौण आत्मशब्दमुख्य वाच्यो न, किन्तु निर्गुणो विष्णुरेवेत्यर्थः । तथा च—आत्मशब्दादीक्ष तिश्रुतोऽपि निर्गुण एवेति सिद्धम् । तस्येक्षत्यन्यथाऽनुपपत्त्या वा च्यत्वमिति भावः ॥ ८ ॥

(२३) युक्त्यन्तरेणापि निर्गुणस्य विष्णोर्वाच्यत्वमुपपादयत्सूत्रमु पन्यस्यति—स्वाप्ययादिति ॥ सूत्रं व्याचष्टे—पूर्णमिति । 'अदो' मू लरूपं 'पूर्णं' 'इदं' अवताररूपं च 'पूर्णम्' । 'पूर्णं' अवताररूपं सृष्टिकाले 'पूर्णात्' मूलरूपात् 'उदच्यते' उद्गच्छति । तत्त्वप्रदीप

"स आत्मन आत्मानमुद्धृत्यात्मन्येव विलापयत्य
थात्मैव भवति"।
स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः।
एकीभूय पुनश्शेते निर्दोषो हरिरादिकृत्। इति।

(२४) स्वस्यैव स्वस्मिन्नप्ययवचनात्।

रीत्या अमुष्मादिदं सङ्ख्यामात्रेणोदच्यते एकमेव बहुसङ्ख्यं भवति विशेषादेवेति वा। प्रलये मूलरूपं 'पूर्णस्य' स्वस्य 'पूर्णं' अवतार रूपं 'आदाय' स्वीकृत्यैकीभूय 'पूर्णमेव' अन्यत्रालीनं सदेव स्वयं 'अवशिष्यते' इति बृहदारण्यकश्रुत्यर्थः। स' इत्यन्या श्रुतिः। तदर्थ स्तु—'स' विष्णुः 'आत्मनः' स्वस्मात् मूलरूपात् 'आत्मानं' अव तारगतं स्वस्वरूपं 'उद्धृत्य' सृष्टिकाले पृथग्व्यक्तीकृत्य प्रलये 'आ त्मनि' स्वस्विन्नेव 'विलापयति' एकीभावयति। 'अथ' अनन्तरं स विष्णुः 'आत्मैव' मूलरूप्येव 'भवति' अवशिष्यत इति। 'स दे वः' इति स्कान्दस्मृतिः श्रौतत्च्छब्दार्थविवरणरूपा। 'देवो' द्योत नादेः 'निर्गुणः' सत्त्वादिगुणेभ्यो निष्क्रान्तः तत एव गुणकार्यदोष हीनः 'पुरुषोत्तमः' क्षराक्षरचेतनोत्तमः 'आदिकृत्' विश्वस्योत्पत्ति कर्ता प्रथमकर्ता वा 'सः' श्वेतद्वीपगो 'हरिः' आदिसृष्टौ 'बहुधा भूत्वा' वराहादिबहुरूपाणि सृष्ट्वा 'पुनः' अथ प्रलये 'एकीभूय' मूल रूपेण तान्येकतां प्रापयित्वा अहिपतौ 'शेते' योगनिद्रां करोतीत्य र्थः। इतीत्यस्य इति श्रुत्युक्तत्वाच्चेत्यध्याहारेण 'वाच्यमेव तत्' इति परमसाध्येनान्वयः॥

(२४) एतच्छ्रुत्युक्तोऽपि निर्गुणः कुतः? गौण एव किं न स्यादित्य तस्तत्र सौत्रं हेतुं सावधारणस्वशब्दावृत्त्या योजयति—स्वस्यैवेति॥ एवकारो भिन्नक्रमः। इतिशब्द आवृत्तोऽत्रापि योज्यः। वचनादि त्यावर्तते। न गौणं इत्यनुवर्तते। अयमिति शेषः। स्वाप्ययपदं पूर्ण त्वस्याप्युपलक्षकम्। तथा च—पूर्णमिति श्रुतौ स्वाप्ययपदोपलक्षि तपूर्णत्वस्य वचनात् स्वस्य स्वस्मिन्नेवाप्ययवचनाच्च, स इति स्पष्टश्रु तावपि आत्मन्येव विलापयतीति स्वस्य स्वस्मिन्नेवाप्ययवचनात्, तस्य च निर्गुणहरिनिष्ठतायाः स्मृतौ वचनाच्च अयं निर्गुण एव न गौण इति योजना। वाच्यत्वे स्वाप्ययस्य साक्षाद्धेतुत्वाभावात् सूत्रे

न हि गौणात्मनि निर्दोषस्य लयः ॥ ९ ॥
( २५ ) न च कासुचिच्छाखास्वन्यथोच्यते ॥

भाष्ये च चशब्दाभावः । यद्यप्यत्रोपलक्षणाभिप्रायकटीकारीत्या पूर्णत्वहेतुसमुच्चायकश्चशब्दोऽनुवर्तनीयः । तथाऽप्यस्य वाच्यत्वे साक्षादहेतुत्वात्तत्र हेत्वन्तरस्य ज्ञापकचशब्दो नानुवर्तनीयः । न च श्रुत्युक्तत्वाच्चेत्यध्याहृतहेतौ चशब्दावश्यंभावात् कथं तदभाव इति वाच्यम्, सूत्रश्रुतहेतौ चशब्दाभाव इत्यभिप्रायात् । अत एव टीकायां तत्रेत्युक्तम् । तथा चायं सूत्रार्थः—न केवलं निर्गुणविष्ण्वाख्यं ब्रह्म ईक्षणीयत्वाद्वाच्यम्, किन्त्वेतच्छ्रुत्युक्तत्वाच्च । श्रुत्युक्तं निर्गुणमेव न गौणमिति कुतः? पूर्णत्वात्स्वस्य स्वस्मिन्नप्ययाच्च, गौणस्यापूर्णत्वात् अन्यस्मिन् लयेन स्वाप्ययशून्यत्वाच्चेति । श्रुत्युक्तस्वाप्ययपूर्णत्वयोरसिद्धिपरिहाराय हेतौ साध्यसामानाधिकरण्योपपादनाय च श्रुतिस्मृत्योर्वचनादित्युक्तं भाष्ये । नन्वयं स्वाप्ययवान् अन्यत्रालीनश्च गौणस्स्यात्, निर्गुणोऽन्योऽस्तीति चेत्—न, यद्ययं स्वाप्ययवान् गौणः तर्ह्ययं निर्गुणश्चोभौ प्रलयेऽन्यत्र लयहीनौ तिष्ठतः? उत एकस्मिन्नन्यस्य लयो भवति? नाद्यः "इदं वा अग्रे नैव किञ्च नासीत्" (तै.ब्रा.२-२-९-१.) इत्यादिश्रुतिविरोधात्, अत्र प्रलये द्वितीयमात्रनिषेधात् । द्वितीये न तावद्गौणस्य निर्गुणे लयः, तस्य स्वाप्ययवत्तया अवस्थानाभ्युपगमात् । तथा च निर्गुणस्य सगुणे लयो वाच्यः । स च न सम्भवतीत्याह—न हीति । 'गौणात्मनि' जीवे 'निर्दोषस्य' सत्त्वादिगुणबन्धरूपदोषहीनस्य निर्गुणस्य विष्णोर्लयो नोपपद्यत इत्यर्थः । हिशब्देन "यत्प्रयन्ति" (तै.उ.३-१.) इत्यादिश्रुतिविरोधादिति हेतुः सूचितः । तस्मान्निर्गुणस्य स्वस्मिन्नेव लयो वाच्य इत्यतोऽयमनन्यलीनो निर्गुण एवेति तस्यैव श्रुत्युक्तत्वाद्वाच्यत्वं सिद्धमिति भावः । अत्र नये गौणादिव्यपदेशः सत्त्वादिगुणयुक्तत्वतदभावरूपधर्माश्रयजीवपरमात्मविषयक एव, न तु मुख्यासम्भवे गौणाश्रयणादित्यत्रेव निर्गुणोऽयमित्यत्रेव वा मुख्यार्थगुणहीनविषय इति सूचनाय निर्गुणस्येति वक्तव्यत्वेऽपि निर्दोषस्येत्युक्तम् ॥

( २५ ) नन्वस्तु निर्गुणस्य विष्णोर्वाच्यत्वोपपत्तौ सत्यां कारणत्वेन शास्त्रगम्यत्वम् । तच्चोपक्रमादिबलात् प्रसिद्धशाखास्वेव कारणत्वे

सू—ॐ ॥ गतिसामान्यात् ॥ ॐ ॥ १० ॥
सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेक
मेव । प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु
तथेतिहासे ॥
इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥

न प्रतिपाद्यत्वपर्यवसितम् । अप्रसिद्धशाखासु पुनरन्योऽपि कारणत्वे न उच्यताम् । न च ता न सन्ति, तासामानन्त्येनेयत्ताऽनिश्चयादित्यत आह—न चेति ॥ चोऽप्यर्थः । तथा च—'कासुचित्' अप्रसिद्धशाखासु 'अन्यथा' अन्यो निर्गुणात् सगुणोऽपि 'अन्यथा' अकारणत्वादेः कारणत्वेन आत्मशब्दमुख्यवाच्यत्वेन मोक्षजनकज्ञानविषयत्वेन च, निर्गुणो वा 'अन्यथा' अकारणत्वादिना 'उच्यते' उच्यतामिति 'न' इति योजना । 'नान्यथा' इत्यनेन सूत्रे गौणसूत्रान्नेत्यस्यानुवृत्तिः अन्यथेत्यध्याहारश्च सूचितः । 'तत्तु सं' इत्युक्तादन्यथा नेत्यर्थः । कुतो नेत्यतस्तत्र हेतुत्वेन सूत्रमुपन्यस्य व्याचष्टे—गतीति । उत्तरसूत्रपदाकर्षणेन सर्वाधिकारिसाधारणं गतिसामान्यस्य श्रुतत्वादिति योजनामभिप्रेत्य असिद्धिपरिहाराय तत्सूत्रसूचितां श्रुतिमाह—सर्वे इति । वेदा इत्यस्य विवरणं 'सर्वे' इति । तथा च—'सर्वे वेदाः' तथा 'सुप्रमाणाः' सुष्ठु प्रमाणं प्रमाणान्तरं मूलभूतं यासां ताः 'युक्तयः' । 'तथेतिहासे' इति वक्ष्यमाणानुरोधादत्रेतिहासा अप्युपलक्ष्याः । तथा चेतिहासाश्च । 'ब्राह्मं' ब्रह्मैकविषयं 'एकं' एकविधमेव परमार्थविषयकत्वात् 'परमं' उत्तमं 'ज्ञानं' 'प्रकाशयन्ते' उत्पादयन्ति, न पुनरनेकम् । अतः 'सर्वेषु वेदेषु' तथा युक्तिषु 'तथेतिहासे' इतिहासेषु 'कुतश्चित्' कश्चिदपि विषयकृतो वा प्रकारकृतो वा 'विरोधो न' इत्यर्थः ज्ञानरूपमेकमेव ब्रह्मस्वरूपं ज्ञापयन्तीति वा । श्रुतेरिति पञ्चमी तृतीयार्थे । गतेरित्यस्य व्याख्या ज्ञानस्येति । सामान्यादिति सौत्रपदे प्रातिपदिकार्थमाह—साम्यमिति । विषयगुणानामनन्यथोक्तया साम्यमित्यर्थः । "न ह्येकत्र ज्ञानानन्दादिकमुक्त्वाऽन्यत्राज्ञानादिरूपत्वं ब्रह्मण उच्यते" इति तत्त्वप्रदीपोक्तेः कथ्यत इति शेषः । न तु विषमत्वमिति वा स्वयमेव साक्षान्न त्वन्यमुखेनेति वा एवशब्दार्थः । तथा च—'सर्वे वेदा' इति श्रुत्या स्वयमेव

( २६ ) सू—ॐ ॥ श्रुतत्वाच्च ॥ ॐ ॥ ११ ॥

'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूता [न्तरात्मा ।
कर्माध्यक्षस्सर्वभूताधिवासः साक्षी चेता केवलो [निर्गुणश्च ।" ( श्वे. ६-११. ) इति ।

साक्षाद्वृतेः सर्वशाखोत्पाद्यज्ञानस्य सामान्यात् एकविधत्वोक्तेः न कासु चिच्छाखासु अन्यथोच्यत इति सूत्रार्थः । अत्र भिन्नविषयप्रकारकेष्वपि ज्ञानेषु ज्ञानत्वेन साम्यसत्त्वात्साम्यादित्युक्तौ विषयप्रकारैक्यं न सिद्ध्यतीति सामान्यात् समानत्वात् एकविधत्वात् इत्युक्तं सूत्रे । भाष्यपदस्याप्ययमेवार्थ इति ध्येयम् ॥ १० ॥

( २६ ) इतश्च निर्गुणं ब्रह्म वाच्यमित्याह सूत्रकृत्—श्रुतत्वाच्चेति॥ चो हेतुसमुच्चये । तदशब्दं नेति वर्तते । तथा च तद्विष्णवाख्यं निर्गुणं न केवलमीक्षत्यादिभिः नाशब्दं शब्दावाच्यम् । किन्तु "एकः" इति श्वेताश्वतरश्रुतौ 'श्रुतत्वाच्च' स्ववाचकनाम्ना साक्षादुक्तत्वाच्चेत्यर्थ इत्याशयेन सूत्रोपात्तश्रुतिं पठति—एक इति । 'एकः' प्रधानः स्वस्मिन् भेदशून्य इति वा 'देवो' द्योतनादेः 'सर्वभूतेषु गूढः' सर्वप्राणिषु गुप्ततयाऽवस्थितः । न केवलं भूतेषु स्थितः किन्तु 'सर्वव्यापी' च देशतः कालतो गुणतश्च सर्वं व्याप्नोतीत्यर्थः । न केवलं सर्वभूतेषु स्थितिमात्रं, किन्तु 'सर्वभूतान्तरात्मा' सर्वप्राणिनां अन्तःस्थित्वा आ सम्यक् तन्नियन्ता च माता चेति वा । आदानादिकर्तृत्वाद्वा तथोक्तः । 'कर्माध्यक्षः' कर्माधिपतिः, "कर्मोपरि अस्याक्षाणीन्द्रियाणि वर्तन्त इत्यध्यक्षः" इति तत्त्वप्रदीपोक्तेः । 'सर्वभूताधिवासः' सर्वप्राणिनामाश्रयः । सर्वं साक्षादीक्षते पश्यतीति 'साक्षी' । ईक्षणं च न प्राकृतं किन्तु चैतन्यस्वरूपमित्याह—'चेता' ज्ञानरूप इति । 'केवलो' जडामिश्रः, समाभ्यधिकशून्य इति वा "केवलं तादृशाभावात्" इति द्वितीयतात्पर्योक्तेः । केवलं चैतन्येनेक्षणमसंप्रज्ञातसमाधिस्थस्य योगिनोऽपि भवतीति तद्व्यावर्तनायाह 'निर्गुण' इति । सत्त्वादिगुणबन्धहीन इत्यर्थः, प्राकृतगुणहीन इति वा । इतिशब्दस्य 'श्रुतौ निर्गुणस्य' इति पदद्वयाध्याहारेण श्रुतत्वादिति सूत्रेणान्वयः । "अत्र वाच्यत्वं प्रतिपादयत्सूत्रं तदुपात्तश्रुत्युदाहरणपूर्वकं पठ

न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वे
शब्दावाच्यस्य लक्षणाऽयुक्तेः ॥ ५ ॥

६. अधिकरणम् ॥

(१) तमेव समन्वयं प्रकटयति 'आनन्दमयोऽभ्यासात्' इत्यादि

ति—एक इति" इति क्वाचित्कटीकापाठानुसारेण भाष्ये क्वचित् श्रुतिपाठानन्तरं सूत्रपाठो दृश्यते । तत्पक्षे त्वन्वयस्सुलभ एवेति ध्येयम् । श्रुतत्वेऽप्यशब्दः किं न स्यादित्यप्रयोजकत्वशङ्कायामाह—न हीति । 'हि' यतः 'अशब्दः' अवाच्यः पदार्थो 'न श्रूयते' न श्रुतिपदेनोच्यत इत्यर्थः । अतो नाप्रयोजकत्वं हेतोरिति वाक्यशेषः । विरोधादित्यपि हिशब्दार्थः । ननु अशब्दस्यापि ब्रह्मणो लक्षणया श्रुतत्वं किं न स्यादित्यत आह—न चेति । 'अप्रसिद्धं' अवाच्यस्य ब्रह्मणो लक्ष्यत्वं न कल्प्यमित्यर्थः । कुतः? यतोऽवाच्यस्य वस्तुनो लक्ष्यत्वमप्रसिद्धं अत इति व्याप्तिपरत्वेनापीदं योजनीयम् । ननु कथमेतत्? गङ्गापदावाच्यस्यापि तीरस्य तत्पदलक्ष्यत्वप्रसिद्धेरित्यत उक्तं—सर्वेति । 'सर्वशब्दावाच्यस्य' ब्रह्मणो लक्षणायाः वेदपदलक्ष्यत्वस्यायुक्तेः विप्रतिपन्नं न लक्ष्यं, केनापि पदेनावाच्यत्वात् व्यतिरेकेण तीरवदिति युक्तिविरुद्धत्वादित्यर्थः । तथा च—नास्माभिः केवलावाच्यत्वेन लक्ष्यत्वाभावः साध्यते येन तीरादौ व्यभिचारः शङ्क्येत, किन्तु सर्वशब्दावाच्यत्वेन । तच्च न तीरादिगतं, तस्य तीरादिपदवाच्यत्वात् । ब्रह्म तु न तथा, तस्य सर्वशब्दावाच्यतयैव परेणाङ्गीकृतत्वात् । अतो न व्यभिचार इति युक्तिविरोधो दुष्परिहर इति भावः । ननु लक्ष्यत्वाभाववति प्रवाहादौ हेत्वभावादसाधारणमिति चेत्—न, लक्षणायोग्यस्यैव लक्ष्यपदार्थत्वे सर्वपदार्थानामपि किञ्चित्पदलक्षणायोग्यत्वेन तदभावरूपसाध्यस्य कुत्राप्यभावेन सपक्षस्यैवाभावात् ॥ ११ ॥

॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥

६. अधिकरणम् ॥

(१) अथाध्यायपादयोरुपोद्घातत्वेन पीठरूपायामस्यां पञ्चा

ना समस्तेनाध्यायेन प्रायेण ।

धिकरण्यां ब्रह्मस्वरूपनिरूपणे अनवशेषात्किमध्यायात्मकशेषग्रन्थेने त्यत आह—तमेवेति ॥ तथाऽपीत्यादौ योज्यम् । समन्वयशब्दश्च विप रिणामेनावर्तनीयः । तथा च—तथाऽपि प्रकटनं विनाऽध्यायाख्यशेष ग्रन्थस्य कृत्यान्तराभावेऽपि 'तमेव' "तत्तु समन्वयात्" इत्यनेन हेतुतया सामान्यतः सिद्धवदुपन्यस्तमेव समन्वयात् 'समन्वयं' उ पक्रमादिलिङ्गज्ञाप्यं सम्यग्वचनवृत्त्या सर्वशास्त्रीयवचनानां हरौ नि रूपणं तत्परत्वं 'प्रकटयति' प्रतिवाक्यग्रहणेन तद्धेतूपन्यासादिना प्रपञ्चयति "आनन्दमयोऽभ्यासात्" इत्यादिना अनेन प्रथमेनाध्या येन सूत्रकार इत्यर्थः । अन्यथा प्रतिज्ञामात्रस्य "तदेव शास्त्रयोनि, समन्वयात्" इति सिद्धवदुपन्यासमात्रस्य साधकत्वे "विष्णोरन्य देव शास्त्रयोनि, कुतः? समन्वयात् सम्यक्तात्पर्यविषयत्वात्, तथा अन्यदेव तात्पर्यविषयः, कुतः? उपक्रमादिलिङ्गात्" इत्यपि प्रतिवा दी ब्रूयादिति भावः । यथोपक्रमादिकं तज्ज्ञाप्यं तात्पर्यं च समन्वय शब्दार्थः तथा भाष्यं योजितं अधस्तात् । यद्यप्यत्र सूत्रस्य प्रतीकत्वे न उत्तरत्र उदाहरिष्यमाणत्वान्नात्राप्युदाहर्तव्यता । तथाऽपि सूत्रा नुदाहरणे आनन्दमयाख्यविषयापरिज्ञानात्तस्य विष्णुत्वसमर्थने का पूर्वसङ्गतिरित्येवं शङ्काऽनुदयात् तन्मूलप्रश्नानुदयात् आनन्दमयाप रिज्ञाने ब्रह्मणस्तदवयवत्वप्रतीतिमुखेनाक्षेपरूपशङ्काऽनुदयाच्च एतदा क्षेपरूपसङ्गतिप्रदर्शनाय च अधिकरणसङ्गतिविषयकशङ्कोत्थापनाय अत्रापि सूत्रोदाहरणं, उत्तरत्र तु प्रतीकत्वेनेति द्रष्टव्यम् । अध्याया न्तरव्यावृत्त्यर्थमानन्दमयेत्यादि । प्रथमेनेत्यनुक्त्वा एवंवचनेन एतद धिकरणमारभ्याध्यायारम्भः, पञ्चाधिकरण्यास्तु नाध्यायान्तर्भाव इत्यपि सूचितम् । समन्वयाधिकरणमारभ्यैवाध्यायारम्भः तस्यैतत्प्र पञ्चत्वादिति पक्षे 'अध्यायेन' अध्यायशेषेणेत्यर्थः । टीकानुगुण्यं चा त्र भवति । आद्यपक्षे तु अध्यायरूपग्रन्थरूपेणेत्यर्थ इत्यविरोधः । च तुर्थपादे न समन्वयः क्रियत इति परमतनिरासाय 'समस्तेन' सम ग्रेणेत्युक्तम् । देवतापशूद्राधिकरणयोः समन्वयाकरणात् समस्तेने त्यनुपपन्नमित्याशङ्कानिराकरणाय 'प्रायेण' प्राचुर्येणेति । प्राय इति सकारान्ताव्ययपर्यायोऽयमकारान्तः प्रायशब्दः । तस्मात्प्रकृत्यादि त्वात्तृतीयायां प्रायेणेति भवति । अत एव विष्णुतत्त्वनिर्णयटीकायां

( २ ) प्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्व
यः प्रदर्श्यतेऽस्मिन् पादे । नान्यथा तदृष्टेः ।

( ३ ) ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ' ब्रह्म पुच्छं

भूमार्थे ' प्रायः ' इत्यव्ययमप्यस्ति इत्यपिशब्दः प्रायोजि । प्रमेयदीपेऽपि सान्तस्यैवाव्ययत्वमुक्तम् ॥

( २ ) तर्हि अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यतः समन्वेतव्यभेदात् समन्वयेऽप्यवान्तरभेद इति भावेन प्रथमाध्यायप्रथमपादप्रतिपाद्यं दर्शयति—प्रायेणेति ॥ ' अस्मिन् ' प्रथमे पादे 'प्रायेण ' बाहुल्येन ' अन्यत्र ' विष्णोरन्यत्र ' प्रसिद्धानां ' श्रुत्यादितो लोकतो वाऽऽपाततो रूढत्वेन प्रतीयमानानां नामात्मकानां ' शब्दानां ' ' परमात्मनि ' विष्णौ निरुक्तः ' समन्वयः ' ' प्रदर्श्यते ' प्रपञ्च्यत इत्यर्थः । अत्रापि अन्तरधिकरणे अन्तःस्थत्वलिङ्गसमन्वयप्रतिपादनात् अव्याप्तिनिरासाय—प्रायेणेति । तत्त्वप्रदीपे तु—एक एव भाष्ये प्रायेणेति शब्दः । तस्यैवोत्तरत्रापि सम्बन्ध इत्याशयेन " प्रायेणान्यत्र प्रसिद्धानामिति च सम्बन्धः " इत्युक्तम् । तथा -आनन्दमयाधिकरणे लिङ्गविचारात्तदपि प्रायेणेति व्यावर्त्यमिति चोक्तम् । यद्वा—टीकायामप्यावृत्त्यभिप्रायेणैकस्यैव पुनरुत्तरत्रापि अन्वयप्रदर्शनाय प्रतीकग्रहणं कृतमिति न ग्रन्थवैरूप्यं कल्प्यम् । अतएव तत्त्वप्रदीपानुसारेण " आनन्दमयनाम्नः इति टीकायामानन्दमयनामशब्दः आनन्दादिनामपरो वा योज्यः " इत्युक्तं चन्द्रिकायाम् । अथ परोक्तं पादार्थं दूषयति—नेति । ' अन्यथा ' प्रथमे स्पष्टब्रह्मलिङ्गानां शब्दानां द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां समन्वयः प्रतिपाद्यते । तयोस्तु सविशेषनिर्विशेषविषयतया भेदः । चतुर्थपादे तु प्रधानस्याशाब्दत्वोक्तिरित्येवं रूपोऽस्मदुक्तादन्यप्रकारेण पादार्थो न वाच्य इत्यर्थः । कुतो नेत्यत आह–तदिति । 'तस्य' परोक्तपादार्थनियमस्य ' अदृष्टेः ' एतदध्यायगतपादेष्वदर्शनादित्यर्थः । सर्वसाङ्कर्यादिति भावः । तच्च टीकादावुक्तम्॥

( ३ ) नन्वानन्दमयाधिकरणमारभ्य सर्वेषामधिकरणानामवश्यवक्तव्ये सङ्गतिपञ्चके अस्मिन्नधिकरणे लोकतोऽन्यत्रप्रसिद्धानन्दमयशब्दोपलक्षितगुणिवाचिशब्दानामानन्दादिगुणवाचिशब्दानां च ब्रह्मणि समन्वयकरणात् अस्यास्तु शास्त्रेऽध्याये पादे चान्तर्भावरूपा सङ्गतिः । तथाऽपि आनन्दमयस्य विष्णुत्वसमर्थने का अपूर्वसङ्गति

प्रतिष्ठा' (तै. २-५-२.) इत्यानन्दमयावयवरूपं प्र

रित्यतोऽव्यवहितपूर्वाधिकरणेनैव सङ्गतिर्वक्तव्येति नियमाभावात् व्यवहितपूर्वेण जिज्ञासाधिकरणेन तद्विषयेण च अस्यानन्तर्यलक्षण लक्षितामाक्षेपिकीं सङ्गतिं तावद्दर्शयति—ब्रह्मेति ॥ 'उक्तं' जिज्ञासा धिकरणे इति शेषः । 'तच्चेति'। यज्जिज्ञास्यतया प्रतिज्ञातं ब्रह्म तद्दे वेत्यर्थः। यद्वा—प्रकृतानुसन्धानार्थश्चशब्दः । इतीत्यनन्तरं 'श्रुतौ' इति शेषः। 'आनन्दमयावयवरूपमिति' आनन्दमयाख्यस्य कस्य चित्पुच्छाख्यावयवभूतं प्रतीयत इत्यर्थः । ननु ब्रह्मणोऽवयवत्वोक्तावपि किमर्थमानन्दमयस्य विष्णुत्वसमर्थनमित्यत आह—न हीति । हि शब्दो हेतौ । 'अत' इत्यावर्तते । 'तच्च' इत्यादि 'इत्यत आह' इत्य न्तं सङ्गतिप्रयोजनोभयपरतया व्याख्येयम्। न हीत्येतत्तदुपपादकम्। योजना तु—यतो 'ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुतौ जिज्ञास्यतयोक्तं ब्रह्म आनन्दमयाख्यस्य कस्य चिदवयवरूपं 'प्रतीयते' उच्यते यतश्च अन्याङ्गतया जिज्ञास्यत्वेऽपि 'अवयाविनं' आनन्दमयं विना 'अवयवमात्रस्य' अवयवस्यैव केवलस्य ब्रह्मणो न पृथक् 'ज्ञेयता' जिज्ञास्यता सम्भवति । अमुख्यत्वात् । नापि जिज्ञासाया एव त्यागो युज्यते । "तद्विजिज्ञासस्व" (तै.उ.३-१.) इति श्रुतिविहितत्वादित्येवं शङ्का प्राप्ता । अतः शङ्कारूपसङ्गतिसद्भावात् अत्रानन्दमयस्य विष्णवन्यत्वपक्षे ब्रह्मजिज्ञासाक्षेपात् विष्णुत्वपक्षे च तत्समाधानात् एवं च पूर्वपक्षसिद्धान्तयोः फलसद्भावाच्च 'अतो' ब्रह्मजिज्ञासासिद्ध्यर्थं 'आनन्दमयोऽभ्यासात्' इत्यानन्दमयस्य विष्णुत्वं 'आह' समर्थयति सूत्रकार इति ॥

"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः। तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा।" (तै.उ.२-५-२.) इति तैत्तिरीयवाक्यस्यायमर्थः । 'तस्मात्' आत्मपदोदितात् 'एतस्मात्' जीवशरीरगतात् विज्ञानपूर्णत्वात् विज्ञानमयशब्दवाच्यात् विष्णोः अनन्योऽप्यन्यशब्दोक्तः 'आनन्दमयः' आनन्दपूर्णत्वादानन्दमयशब्दवाच्यः 'आत्मा' नारायणः 'अन्तरो' विज्ञानमयस्यान्तःस्थितः

तीयते । न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयते त्यत आह ॥—

'तेन' आनन्दमयेन 'एषः' विज्ञानमयशब्दवाच्यो वासुदेवः 'पूर्णः' निश्छिद्रत्वेन पूरितः । वैशब्दः प्रसिद्धौ । 'स एव' आनन्दमयः 'पुरुषविध एव' पुरुषाकार एव । 'तस्य' आनन्दमयस्य शरीरस्थानीयस्य पुरुषाकारतां 'अनु' अनुसृत्य 'अयं' विज्ञानमयः शरीरस्थानीयः 'पुरुषविधः' तस्मात्प्रादुर्भूतः,

उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।
सर्वेऽपि पुरुषाकारा उत्तरात्पूर्वसम्भवः ॥

इति तैत्तिरीयभाष्योक्तेः । 'तस्य' आनन्दमयस्य विष्णोः अवयवभूतं 'परेयं प्रियनामकम्' इति भाष्योक्तेः । परैरुत्तमैः देवैः प्राप्यत्वात्प्रियशब्दवाच्यं यत्सुखं तत्तस्य 'शिरः' तदेवानन्दमयाख्यस्य जीवशरीरस्य परैरन्यैरुपकर्तृभिः प्राप्यत्वात् प्रियनामकमुपकारजन्यवैषयिकसुखाख्यं यच्छिरः तत्स्थं च । एवमानन्दमयाख्यस्य विष्णोः ये दक्षिणोत्तरबाहुमध्यदेहाः मोदप्रमोदकारित्वानन्तत्वनिमित्तैर्मोदप्रमोदानन्दनामानः ते आनन्दमयाख्यजीवशरीरस्य दक्षिणोत्तरपक्षात्मनामानो दक्षिणसव्यबाहुमध्यदेहाः । "'मोदो' भोगनिमित्तकः 'प्रमोदः' तद्विशेषोत्थः" इत्यैतरेयभाष्योक्तेः ।

मुन्नाम विषयोत्थं यत्प्रकृष्टविषयात्प्रमुत् ।
सुखं स्वरूपभुतं यदानन्द इति कथ्यते ॥

इति बृहद्भाष्योक्तेश्च । अपकृष्टविषयोद्भूतत्वप्रकृष्टविषयोत्थत्वजीवस्वरूपानन्दत्वनिमित्तैर्मोदप्रमोदानन्दनामानस्तेषु स्थिताश्च । एवमानन्दमयाख्यस्य विष्णोः 'पुच्छं' प्रतिष्ठति गच्छति लोक आभ्याभिति व्युत्पत्त्या प्रतिष्ठापदोक्तो यः पादाख्योऽवयवः तद्ब्रह्म 'ब्रह्म सृष्ट्या तु बृंहयेत्' इति तैत्तिरीयभाष्योक्तरीत्या सृष्ट्यादिक्रियया विश्वगुणवृद्धिकरत्वाद्ब्रह्मशब्दवाच्यः स एवानन्दमयाख्यजीवशरीरस्य यत् पुच्छं यः पादाख्योऽवयवः तत्स्थिते ब्रह्माख्ये प्रधानवायौ स्थितः । अनेन कोशावयवस्य ब्रह्मशब्दवाच्यत्वं ब्रह्मशब्दवाच्यप्रधानवाय्वधिष्ठानत्वनिमित्तं, प्रधानवायोर्ब्रह्मशब्दवाच्यत्वं तु परब्रह्माधिष्ठानत्वादित्युक्तं भवति । अनेनानन्दमयादिशब्दवाच्यस्य विष्णोरवयवभूताः ये प्रि

सू—ॐ ॥ आनन्दमयोऽभ्यासात् ॥ ॐ ॥ १२ ॥

( ४ ) आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा ।

यादयः ते विष्णवभिन्नाः ये चानन्दमयादिजीवकोशावयवाः प्रियादय स्ते प्रतिशरीरं भिन्ना इति द्विविधा प्रियादय इत्युक्तं भवति । यथो क्तं चन्द्रिकायाम्—ये जीवाभिमन्यमानानन्दमयादिकोशावयवाः प्रि यादयस्ते प्रतिशरीरं भिन्नाः, न ते आनन्दमयाद्याख्यस्य विष्णोरवय वाः । ये च भगवतोऽवयवाः प्रियादयो न ते प्रतिशरीरं भिन्नाः कि न्त्वभिन्ना इति जीवस्वरूपस्यानन्दस्य हृदयाख्यमध्यगतत्वात्कोशम ध्यदेहत्वं स्वरूपदेहस्य जडावयवत्वं चामुख्यं युज्यते । यद्यपि भाष्ये 'शिरो नारायणः ' इत्युदाहरिष्यमाणवचनपर्यालोचनयाऽऽनन्दमया ख्यो नारायणः पुनर्नारायणादिरूपेण पञ्चधा भिन्नः शिरःप्रभृत्यवय वात्मना तिष्ठतीति प्रतीयते । तैत्तिरीयभाष्ये तु—प्रियादीनामानन्दम यावयवत्वम् । तथापि प्रियादिसुखविशेषदेहस्थितब्रह्माख्यप्रधानवा युगतानां नारायणादिरूपाणामेव आनन्दमयाख्यविष्णवयवत्वसम्भ वात्तेषामेव ।

परेयं प्रियनामकम् ।

मोदप्रमोदनामानौ मोदनाच्च प्रमोदनात् ।

देहस्थवायुसंस्थं च ब्रह्म सृष्टया तु बृंहयेत् ।

इति तैत्तिरीयभाष्योक्तरीत्या प्रियादिशब्दवाच्यत्वस्यापि सम्भवान्न विरोधः । तत्त्वप्रदीपे तु–प्रियशिरस्त्वादिनये "श्रवणोत्थं प्रियं, दर्शनो त्थो मोदः, भोगोत्थः प्रमोदः " इति पदत्रयस्यार्थान्तरमुक्तम् । तथा तत्रैव 'अभावं बादरिः ' इति सूत्रेण 'प्रियाप्रिये ' ( छां. ८-१२-१. ) इति श्रुतिस्थप्रियशब्देन ' परेयं प्रियनामकम् ' इति तैत्तिरीयच्छान्दो ग्यभाष्ययोरुक्तत्वात्परप्राप्यसुखसामान्यवाचकेन प्राकृतं सुखं ग्राह्य मिति सूचितम् " इति चोक्तम् । इदं त्ववधेयं—परिदृश्यमानमन्नम यं शरीरम् । तदन्तः प्राणमयो देहः । तदन्तर्मनोमयो देहः । तदन्त र्विज्ञानमयो देहः । तदन्तरानन्दमयोऽस्ति । एतेषु पञ्चसु देहाख्यको शेषु तत्तच्छब्दवाच्यानि पुरुषाकाराणि अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदे वनारायणरूपाणि देहदेहिभावेन वर्तन्त इति ॥

( ४ ) एवं सङ्गतिं फलं चोक्त्वा विषयसंशयौ दर्शयति—आन न्दमय इति ॥ आनन्दमय इत्युपलक्षकपदेन विषयो दर्शितः । ब्रह्मा

( ५ ) ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः । शतानन्दनाम्ना च ।
( ६ ) अष्टमूर्तित्वात्सूर्ये प्रोक्तत्वाच्च रुद्रस्य ।
( ७ ) एवमन्येषामपि ।
( ८ ) 'मम योनिर्महद्ब्रह्म' ( भ.गी. १४-३. ) इति ब्रह्मश

दिरित्यत्र ब्रह्मा आदिर्यस्य जीवसङ्घस्येति विग्रहः । ब्रह्मा चतुर्मुखः, आदिशब्देन रुद्रेन्द्रबृहस्पतिमुखा देवास्तत्त देहगतजीवाश्च गृह्यन्ते । प्रकृतिशब्देन च चित्प्रकृतिः । 'इति संशय' इति शेषः ॥

( ५ ) अत्र सयुक्तिकं पूर्वपक्षानाह–ब्रह्मशब्दादिति ॥ आनन्दमयमधिकृत्योदाहृते 'अस्ति ब्रह्मेति चेद्वेद' ( तै.उ.२-६-१. ) इत्यादौ श्रुताद्ब्रह्मशब्दादित्यर्थः । ब्रह्मशब्दस्य अन्यत्रापि वृत्तेः कथं तेन चतुर्मुखस्यानन्दमयत्वनिश्चय इत्यतो युक्त्यन्तरमाह—शतेति । चोऽप्यर्थे समुच्चये । "ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः" ( तै.उ. २ - ८ - ४. ) इति वाक्यादर्थात्सूचितेन शतानन्दनाम्नेत्यर्थः । यद्वा—आनन्दमयशब्दसमानार्थकेन हिरण्यगर्भे विद्यमानेन शतानन्दनाम्नेत्यर्थः । 'प्राप्तिः' आनन्दमयत्वस्येति शेषः । तथा च—हिरण्यगर्भस्य आनन्दमयत्वस्य प्राप्तिरित्यन्वयः ॥

( ६ ) एवमेकं पूर्वपक्षमभिधाय अन्यमाह—अष्टमूर्तित्वादिति ॥ चशब्दो रुद्रस्य चेति सम्बध्यते । प्राप्तिरित्यस्यानुकर्षणार्थो वा । तथा च–रुद्रस्य चानन्दमयत्वप्राप्तिः । कुतः ? सूर्ये प्रोक्तत्वात् । 'यश्चासावादित्ये' ( तै.उ.२-८-५. ) इत्यानन्दमयस्य सूर्ये स्थितेः उक्तत्वाद्रुद्रस्य च सूर्याद्यष्टशरीरत्वादित्यर्थः । तथाच–रुद्रलिङ्गस्य आनन्दमये श्रुतत्वात् आनन्दमयो रुद्र एवेति भावः । रुद्रस्य सूर्याद्यष्टप्रातिमत्वं च

सूर्यो जलं मही वह्निर्वायुराकाश एव च ।
दीक्षितो ब्राह्मणस्सोम इत्येतास्तनवः क्रमात् ॥

इति विष्णुपुराणवाक्यात्सिद्धम् ॥

( ७ ) पूर्वपक्षान्तरं दर्शयति–एवमिति ॥ उक्ताभ्यां 'अन्येषां' इन्द्रबृहस्पत्यादीनामपि 'एवं' उक्तप्रकारेण स्वावरसूर्याद्यधिष्ठातृत्वादिना आनन्दमयत्वप्राप्तिरित्यर्थः ॥

( ८ ) सयुक्तिकं पूर्वपक्षान्तरमाह—ममेति ॥ योजना तु चित्प्रकृतेर्वाऽऽनन्दमयत्वप्राप्तिः । कुतः? ब्रह्मशब्दात् । आनन्दमये श्रुतस्य ब्रह्मशब्दस्य 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति गीता

ब्दात्, बहुभावाच्च प्रकृतेः ।
( ९ ) बृह जातिजीवकमलासनशब्दराशिष्विति ब्रह्मशब्दा
देव सर्वजीवानां, अन्नमयत्वादेश्च ।

यां चित्प्रकृतौ प्रयोगादिति । स्मृतौ—महत् ब्रह्मेति भिन्ने पदे । तथा च महत् ब्रह्मशब्दवाच्या लक्ष्मीः मम योनिः गर्भाधानार्थे भार्या । तस्मिन् ब्रह्मणि प्रकृतौ अहं गर्भं दधामि दध इत्यर्थः । अर्जुनं प्रति कृष्णवाक्यमेतत् । कथं सावकाशेन ब्रह्मशब्देन प्रकृतेरानन्दमयत्वनिश्चय इत्यतो हेत्वन्तरमाह—' बहुभावात् ' बहुरूपत्वाच्चेति । चो हेतुसमुच्चये । तथा च ' सोऽकामयत । बहु स्याम् ' ( तै. उ. २-६-२. ) इत्यानन्दमयस्य ' बहुभावात् ' बहुभावश्रवणात् तदभिमानित्वाच्चित्प्रकृतेः स्वाभिमन्यमानविकारिजडद्वारा बहुभावसम्भवादित्यर्थः । एवं प्रकृतेरित्यस्य जडप्रकृतेरित्यर्थाश्रयेण पूर्वपक्षान्तरमपि द्रष्टव्यम् । योजना तु जडप्रकृतेर्वाऽऽनन्दमयत्वप्राप्तिः । कुतः? अभिमानित्वेन विना साक्षाद्बहुभावादेवेति ॥

( ९ ) सयुक्तिकं पूर्वपक्षान्तरमाह—बृह जातीति॥ तत्तद्देहगतसर्वजीवानां वा आनन्दमयत्वप्राप्तिः। कुतः? जीवानां ब्रह्मशब्दात् । जीववाचिब्रह्मशब्दादित्यर्थः । न तत्र पृथग्धेतुर्गवेषणीय इत्येवशब्दार्थः । कुतो ब्रह्मशब्दस्य जीववाचित्वमित्यत उक्तम्—बृह जातीति। बृहधातुः जात्यादिषु वर्तत इत्यर्थः । इतीत्यनन्तरं धातुव्याख्यानादिति शेषः । ब्रह्मशब्दस्य साधारणत्वादनिश्चायकत्वमित्यत आह—अन्नमयत्वादेश्चेति । इदं चावर्तते, तत्र द्वितीयो विपरिणम्यते । आदिशब्दो भिन्नक्रमः । तेन प्राणादिकं गृह्यते । यथाक्रमश्च चशब्द उक्तानुक्तहेतुसमुच्चये । तथा च—न केवलं ब्रह्मशब्दात्, किन्तु, यतो जीवानां ' अन्नरसमयः ' ' प्राणमयः ' इत्युक्तान्नादिमयत्वात् अन्नादिविकारदेहाद्यभिमानित्वादन्नमयत्वादि प्राप्तं अतस्तत्प्रायपठितत्वाच्चानन्दमयत्वप्राप्तिरिति योजना । अत्र हिरण्यगर्भादीनां जीवत्वेऽपि देहत्वविवक्षया पृथगुक्तिः । अत एव तत्त्वप्रदीपे—" ब्रह्मादिर्यस्य देवतासङ्घस्य " इत्यपि ब्रह्मादिरित्यस्य विग्रहो दर्शितः । तत्रापि हिरण्यगर्भरुद्रयोरतिप्रसिद्धत्वाद्वक्ष्यमाणक्रमेण पृथगुक्तिः । अथ इन्द्रादीनां " ब्रह्मा शिवः सुरेशाद्याः " इति वचनोक्तक्रमेण क्षरदेवोक्त्यनन्तरमक्षरायाः प्रकृतेरुक्तिः । अथ अत्यल्पप्रतिभानत्वात् दृश्यमानदेहाभिमानिजीवाना

( १० ) तथाऽपि न त आनन्दमयशब्देनोच्यन्ते । किन्तु, विष्णुरेव । 'तदेव ब्रह्म परमं कवीनाम्' ( महाना. १-६. ) 'एतमेव ब्रह्मेत्याचक्षते' ( ऐ.आ. ३-२-३-१२. )

( ११ ) ब्रह्मशब्दः परे विष्णौ नान्यत्र कचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ॥

---

मिति ध्येयम् ॥

( १० ) सिद्धान्तयति—तथाऽपीति ॥ यद्यप्येवमन्येषां प्राप्तिः, तथाऽपि अत्र ये आनन्दमयशब्देनोच्यन्ते न ते हिरण्यगर्भादय इत्यर्थः । कस्तर्हीत्याशङ्कते-किन्त्विति । उत्तरमाह-विष्णुरेवेति । य उच्यते स विष्णुरेवेत्यन्वयः । अनेनोदाहृतानन्दमय इति सूत्रप्रतिज्ञाभागस्य सङ्गत्यर्थमन्वयार्थं समन्वयसूत्रोदाहृतो विधेयसमर्पकः 'तत्तु' इति प्रतिज्ञाभागो व्याख्यातो भवति । कुत आनन्दमयो विष्णुरेवेत्यतः प्रवृत्तं सौत्रं हेतुं व्याचष्टे—तदेवेति । इत्यादिषु वाक्येषु तस्मिन्विष्णावेव प्रसिद्धस्य मुख्यार्थत्वेनोक्तस्य ब्रह्मशब्दस्य तस्मिन्नानन्दमये आनन्दमयं प्रत्युदाहृते 'असन्नेव' इति श्लोके 'अभ्यासात्' असकृच्छ्रवणादित्यर्थः । अभ्यासादित्यनन्तरं 'विष्णौ तात्पर्यावगमात्' इति शेषः । अप्रयोजकत्वशङ्कावारणाय ब्रह्मशब्दस्यान्यत्र निरवकाशत्वज्ञापनाय तस्मिन् प्रसिद्धेति एवेति चोक्तम् । आदिशब्देन 'परमं यो महद्ब्रह्म' 'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत्' इति वाक्यं गृह्यते । तदेवेति श्रुत्यर्थस्तु जिज्ञासानयेऽभिहितः । 'एतमेव' इति श्रुत्यर्थः सर्वत्राधिकरणे वक्ष्यते ॥

( ११ ) 'ब्रह्मशब्दः' इति स्मृतौ 'परे' पूर्णे इति हेतुगर्भविशेषणम् । वाशब्दोऽवधारणे । तथा च यतो विष्णुः परः, अतः 'परे' विष्णावेव ब्रह्मशब्दो मुख्यतया 'इष्यते' अङ्गीक्रियते प्रामाणिकैः । न तु विष्णोः 'अन्यत्र' हिरण्यगर्भादिष्वपीत्यर्थः । कुत इत्यतस्तेषां ब्रह्मशब्दमुख्यार्थत्वाभावे हेतुमाह—'परे' अन्ये यस्मादसम्पूर्णा इति । तर्हि 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' ( मु. १ - १ - ९. ) 'द्वे ब्रह्मणी वेदितव्ये' ( मैत्रि.उ.६-२२. ) 'ब्रह्माणि जीवाः सर्वेऽपि' इत्यादौ ब्रह्मशब्दस्तेषु कथमिष्यत इत्यत आह—कचिदन्यत्रेष्टोऽपि ब्रह्मशब्दः 'उपचारेण' परममुख्यवृत्त्यन्यमुख्यवृत्त्यैव भवेदिति । 'ब्रह्म' इति भागवतस्मृत्यर्थः । प्रागेवोक्तः । मध्ये आत्मपदोपेतसाधारणस्मृ

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ॥
इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ।

( १२ ) सू—ॐ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ ॐ ॥ १३ ॥

त्युपादाननिमित्तं तु अभ्यासादित्यस्य 'अन्योन्तर आत्मा' ( तै.उ.२-२-१. ) इत्यादौ ब्रह्मवाचकात्मशब्दाभ्यासादित्यप्यर्थो वर्णनीय इति ज्ञापनमित्युक्तं चन्द्रिकायाम् । 'वासुदेवात्मकम्' इति व्यासस्मृतिवाक्यं तु 'बुद्ध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत्' इति पूर्ववाक्येन सह योजनीयम् । अत्र हि वासुदेवात्मकं ब्रह्मेत्यादेर्भगवान् ब्रह्मेति प्रतीयते इति न्यायदीपोक्तेः ।' यतिः ' 'वासुदेवात्मकं' कृष्णाख्यं ब्रह्म 'बुद्ध्या' मनसा समर्चयेदित्यनेन यतीनां मानसपूजोच्यते पुष्पाद्यैर्वा समर्चयेत् इत्यनेन कायिकपूजा । 'अविहिंसन्' कस्याऽपि हिंसां हानिमकुर्वन्निति तेषां सामान्यधर्मोक्तिः। अनेन यतीनां वैष्णवत्वप्रयुक्तात् तुलसीपुष्पाद्याहरणरूपाद्विशेषिकाद्धर्माद् हिंसालक्षणः सामान्यधर्म एव बलवानित्युक्तं भवति । यथोक्तं बृहद्भाष्ये—'सामान्यधर्मो बलवान् धर्माद्विशेषिकाद्यतः' इति । 'प्रणवेन' ओङ्कारेण 'मूलमन्त्रेण' अष्टाक्षरेण वा समर्चयेदित्यनेन वाचकपूजोच्यते इति ज्ञातव्यम् ॥

( १२ ) उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं व्याचष्टे—विकारेति ॥ अत्र चो हेतुसमुच्चये । प्रकृतिशब्देन चिदचित्प्रकृती गृह्येते । आदिशब्देन जीवा गृह्यन्ते । प्रकृत्यादय इति च विपरिणम्यते । नञ् आवर्तते । आनन्दमय इत्यस्ति, किं तु विष्णुरिति च । तुशब्दो विशेषार्थोऽवधारणार्थे च । तथा च—आनन्दमयो न विष्णुः, किन्तु, प्रकृत्यादय एव । कुतः? यतोऽत्र 'विकारशब्दो' विकारार्थकमयट्छब्दो 'युज्यते' प्रयुज्यते । स च यतो विकारतदभिमानित्वाभ्यामेव 'युज्यते' प्रवर्तते। अतः प्रकृत्यादीनामेव युज्यते । कुतः? जडप्रकृतेर्विकारात्मकत्वाच्चेतनप्रकृत्यादीनां च विकाराभिमानित्वात् । न तु परमात्मनः; तस्याविकारित्वादनभिमानित्वाच्चेति योजना । 'इति चेन्न' इत्यंशं व्याचष्टे—इति मा भूदिति । शङ्केति शेषः । कुत इत्यतः प्रवृत्तं सौत्रं हेतुं व्याचष्टे —प्रचुरेति । आनन्दमयः कथ्यत इति शेषः । हिशब्दो हेतौ । तुशब्दोऽवधारणार्थः । तथा च 'हि' यतः 'आनन्द

विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्या
दीनां मयट्छब्दः । न तु परमात्मनः इति मा भूत् ।
प्रचुरानन्दत्वाद्ध्यानन्दमयः । न तु तद्विकारत्वात् ।
( १३ ) अन्नादीनां च प्राचुर्यमेव । 'अद्यतेऽत्ति च' (तै.२-२.)

मयः ' पदार्थः ' प्रचुरानन्दत्वात् ' पूर्णानन्दत्वाच्च निमित्तादेवानन्दमयपदेन कथ्यते ' न तद्विकारत्वात् ' आनन्दविकारत्वादत इति शङ्का मा भूदिति योजना । मयट्छब्दस्य प्राचुर्यरूपार्थान्तरमपेक्ष्य प्रवृत्तत्वेन तद्विरोधाभावादिति भावः । मयडित्याख्यप्रत्ययस्य प्राचुर्यार्थत्वं च ' तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति वचनात्सिद्धमित्यपि हेरर्थः । यद्यपि श्रुतिसूत्रगतानन्दमय इति व्याख्येयपदस्य तद्धितान्तस्यार्थकथनाय तदनुकूलतया आनन्दः प्रचुरो यस्मिन् स आनन्दप्रचुरः इति समासः कार्यो न तद्विपरीतः प्रचुर आनन्दोऽस्मिन् स प्रचुरानन्द इति । तथाऽप्यानन्दमय इति तद्धितवृत्त्यननुगुणानन्दप्रचुर इति समासवाक्याभिधाने ब्राह्मणप्रचुरो ग्राम इतिवत् अनानन्दस्यापि प्राप्तेस्तद्वारणाय प्रचुरानन्द इति विपरीतसमासः कृतः । केचित्तु—सूत्रे प्राचुर्यादित्युक्तत्वादानन्दस्येत्यर्थलब्धं, तथा चेतद्वाक्यानुसारेणानन्दप्रचुरत्वादिति समासवाक्यप्रयोगः कार्यो यद्यपि, तथाऽपि उक्तप्रयोजनाभिप्रायेण प्रचुरानन्दत्वादिति सौत्रव्यासवाक्यविपरीतसमासः कृत इत्याहुः । तन्न, " आनन्दप्रचुर इति यथास्थिताभिधाने " इत्यादिटीकाविरोधात् । यद्यप्यानन्दमय इति श्रुतिसूत्रानुसारेण प्राचुर्यस्य विशेष्यत्वेनोक्तावपि नानानन्दप्राप्तिः, प्रकाशप्रचुरो रविरित्युक्तेऽपि सवितर्यन्धकारलेशाप्रतीतेः । तथाचानन्दप्रचुरत्वादित्येव व्याख्यातुमुचितम् । प्राचुर्यस्य व्यधिकरणसजातीयजैवानन्दाल्पत्वेनापि निरूपयितुं शक्यत्वात् । तथाऽपि प्राचुर्यस्य विशेषणतायामनानन्दाप्राप्तेः परैरपि स्वीकृतत्वात् विशेष्यतायां तु तस्य समानाधिकरणविजातीयाल्पत्वनिरूप्यत्वात् ब्राह्मणप्रचुरो ग्राम इत्यादाविव तत्प्राप्तिरेवेत्यङ्गीकृतत्वादुभयवादिसिद्ध्यनुसारेणैव व्याख्यातव्यत्वात् तदभिप्रायेण प्रचुरानन्दत्वादिति व्याख्यातं भाष्ये इत्युक्तं चन्द्रिकायाम् ॥

( १३ ) ननु नायमानन्दमयशब्दः प्रचुरानन्दतामभिधत्ते । किन्तु

इति व्याख्यानात्तत्प्राचुर्यं च युज्यते ।
( १४ ) उपजीव्यत्वमेवाद्यत्वम् । 'स वा एषः' (तै. २-२.)

विकारार्थत्वमेव । अन्नादिविकारार्थान्नमयादिशब्दैस्सह पठितत्वादित्यत आह—अन्नादीनां चेति ॥ इदं चावर्तते । मयट्छब्द इति चानुवर्तते । तेन समुच्चयार्थचशब्दस्यान्वयः । वाच्यवाचकयोरभेदव्यपदेशः । तथा च न केवलमानन्दस्य मयट्छब्दः, किन्त्वन्नादीनां सम्बन्धिमयट्छब्दोऽपि अन्नादीनां प्राचुर्यमेव वक्तीत्यर्थः । एवशब्दो विकारार्थताव्यावृत्त्यर्थः । आदिशब्देन प्राणादयो गृह्यन्ते । पूर्वं 'अन्नमयत्वादेश्च' इति, अत्र च 'अन्नादीनाम्' इति बहूनां ग्रहणात्, सौत्रानन्दमयशब्दोऽजहत्स्वार्थलक्षणया समानन्यायशब्दान्तरोपलक्षक इति सूचितम् । ननु कथमत्रान्नमयशब्दोऽन्नप्राचुर्यार्थः । औषधिजनितान्नप्राचुर्यस्य अन्नोपजीविषु पार्थिवशरीरेषु सम्भवेऽपि अप्राकृतविग्रहे हरौ असम्भवात् । अन्नप्राचुर्यकथनस्यात्यल्पत्वापादकत्वाच्चेत्यत आह—अद्यत इति । 'वाक्येन अन्नशब्दस्य' इति शेषः । 'युज्यते' इत्यनन्तरं 'अन्नमयशब्दार्थः' इत्यध्याहारः । 'परमात्मनः' इत्यस्ति । न केवलं सहपाठविरोधाभाव इति चार्थः । तथा चेत्थं योजना—'तत्प्राचुर्यं' अन्नप्राचुर्यमन्नमयशब्दार्थो युज्यते । कथं ? यतस्तत्परमात्मनो युज्यते । न चाल्पार्थत्वेन माहात्म्यरूपत्वाभावात्स कथं हरौ युज्यत इति वाच्यम् । यतोऽत्रान्नशब्देन सुधोक्तरीत्या भावप्रधानेन तत्तद्भूताद्यत्वभूतात्तृत्वरूपार्थद्वयमेव युज्यते, उच्यते न प्रसिद्धान्नम् । कुत एतज्ज्ञायते । "अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति" वाक्येनान्नशब्दस्य व्याख्यानात् । प्रसिद्धान्नस्य भूतात्तृत्वायोगेन तद्ग्रहणासम्भवादिति । श्रुत्यर्थस्तु—यतो भूतैः प्राणिभिः 'अद्यते' उपजीव्यते 'भूतान्यत्ति' संहरति च । तस्मात्तद्विष्ण्वाख्यं ब्रह्मान्नमुच्यते वेदेष्विति । एवं प्राणमनश्शब्दयोः प्रकृष्टचेष्टकत्वपूर्णावबोधार्थत्वेन श्वासवाय्वन्तःकरणबुद्धिप्राचुर्यार्थतायामल्पार्थता परिहरणीया ॥

( १४ ) ननु तथाऽपि प्रचुरभूताद्यत्वं कथमभिसंहितं ब्रह्मणः, भक्ष्यत्वरूपाद्यत्वस्य तत्रायोगादित्यतोऽद्यत्वशब्दार्थमाह—उपजीव्यत्वमिति ॥ अत्र 'अतोऽद्यते' इत्यनुव्याख्यानानुसारेणाद्यत्वमिति छेदः । तथा च सुधोक्तरीत्या गौण्या वृत्त्या उपजीव्यत्वमेवाद्यत्वं विवक्षितं,

इत्यन्यप्रारम्भात् ।

( १५ ) 'येऽन्नं ब्रह्मोपासते' ( तै. २-२. ) इत्यादिब्रह्मशब्दा

न तु चर्व्यत्वम् । तच्च ब्रह्मण्यविरुद्धमिति भावः । तत्त्वप्रदीपे तु— "न चान्यान्नं सर्वभूताद्यं, न च तत्कस्यापि मुख्याद्यम् । किन्तु तद्गतो विष्णुरेवादनफलभूततृप्तितुष्टिदातृत्वान्मुख्याद्यः, तस्मादुपजीव्यत्वमेवाद्यत्वम्,

अत्तृत्वात्सर्वलोकानामन्नमित्युच्यते हरिः ।
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः ॥

इति उक्तेः" इति उपजीव्यत्वस्य मुख्यार्थतैवोक्ता । न च विरोधः; कम्पनाधिकरणोक्तरीत्या समन्वयतात्पर्येण तत्त्वप्रदीपप्रवृत्तेः । 'वज्रवत्' इत्यादाविव यथा कथंचिद्ब्रह्मपरत्वाभिप्रायेण सुधाप्रवृत्तेः । ननु कथमन्नमयशब्दः तत्प्राचुर्यार्थो युज्यते । "ओषधीभ्योऽन्नम् । अन्नात्पुरुषः" ( तै. उ. २ - १ - २. ) इति प्रसिद्धान्नविकारदेहमुक्त्वा "स वा एष पुरुषोऽन्नरसमयः" ( तै. उ. २ - १ - ३. ) इति य एव पुरुषः सोऽन्नरसमय इति अन्नविकारपुरुषपरामर्शादनुवादात् । अन्यथा तद्विरोधः स्यादित्यत आह—स इति । 'अविरोधः' इत्याकृष्यते । तथा चेति वाक्येन यस्मादात्मनः आकाशादिकमुत्पन्नं स एष पुरुष इति 'अन्यस्य' देहादन्यस्यात्मनः 'प्रारम्भात्' परामर्शात् 'अविरोधो' न परामर्शविरोधः । किमर्थमसौ परामृश्यते इत्याशङ्कापनोदनाय परामर्शादिति वक्तव्ये प्रारम्भादित्याह । पूर्वमात्मनः आकाशादिकारणत्वमुक्त्वा तस्यैव 'अभ्यार्थे' अन्यकार्याय अन्नमयादिपञ्चरूपत्वप्रदर्शनाय पुनः 'प्रारम्भात्' प्रक्रान्तत्वादित्यर्थः । 'स वा' इति श्रुतौ वैशब्दोऽवधारणे प्रसिद्धौ वा । अन्नशब्दो भावप्रधानः । रसत्वमुत्तमत्वं, तच्चान्नत्वविशेषणम् । तथा च यस्मात्सत्यत्वादिलक्षणोपेतादात्मन आकाशादिकमुत्पन्नं 'सः' आत्मपदोदितो भूतादिस्रष्टा 'एषः' जीवशरीरगः 'पुरुषः' पूर्णषड्गुणः देहाख्यपुरिशयः भगवान् 'अन्नरसमयः' उत्तमान्नत्वपूर्ण इत्यर्थः । तैत्तिरीयभाष्ये तु—" अन्नस्यात्तृत्वादिरूपस्यान्नमयशरीरस्य यतः सारभूतो विष्णुः अतोऽन्नरसमयः" इति अन्नशब्दस्यावृत्त्या रसशब्दस्य क्रमव्यत्यासेन च व्याख्यातम् ॥

( १५ ) नन्वेवं मयट्छब्दस्योभयार्थे प्रयोगादत्राप्युभयपक्षे दोषदर्शि

ब्रह्मरूपत्वाच्च न विकारित्वमविरोधश्च ।

( १६ ) न च पृथक्कल्पना युक्ता । स्वरूपे च युज्यते प्रचुर

नात्पञ्चानां मयटां प्राचुर्यमेवार्थो न विकारित्वमित्यत्र किं नियामकम् ?, किञ्चान्नमयादीनां पञ्चानां ब्रह्मताऽभ्युपगतौ 'एकमेव' ( छां. उ. ६-२-१. ) इत्यादिश्रुतिविरोधः स्यात् इत्यत आह—येऽन्नं ब्रह्मेति ॥ अत्रादिशब्देन 'ये प्राणं ब्रह्मोपासते' ( तै.उ.२-३-१.)।'आनन्दं ब्रह्मणो विद्वान्' ( तै.उ.२-४-१.) 'विज्ञानं ब्रह्म चेद्वेद' (तै.उ.२-५-१.) 'अस्ति ब्रह्मेति चेद्वेद' ( तै.उ.२-६-१. ) इति वाक्यजातं गृह्यते । अस्ति आनन्दरूपं तद्ब्रह्म । 'इत्यादि' इति लुप्तसप्तमीविभक्तिकम् । 'श्लोकेषु' इति शेषः । ब्रह्मशब्दपदं तच्छ्रवणोपलक्षकम् । एवं प्रदर्शिते हेतुद्वये ऽध्याहृतहेतुद्वाराऽन्वययोग्ये क्रमेण साध्ये आह—न विकारित्वमिति । 'मयटामर्थ इति निश्चीयते' इति शेषः । 'अविरोधो' विरोधाभावः । चशब्दोऽप्यर्थः । तथा चेत्थं योजना—'येऽन्नं ब्रह्म' इत्यादिषु अन्नमयादीन्प्रत्युदाहृतश्लोकेषु अन्नमयादिविषयत्वेन 'ब्रह्मशब्दात्' ब्रह्मशब्दश्रवणादनन्यथासिद्धतत्समभिव्याहारात् उभयथाऽपि सम्भवतां मयटां प्राचुर्यमेवार्थः न विकारित्वमिति निश्चीयते । अतो न नियामकाक्षेपो युक्तः । एवमेकस्यैव ब्रह्मणो 'बहुरूपत्वाच्च' शब्दादेकस्यैव बहुरूपत्ववचनोपपत्तेः 'एकमेव' इति श्रुतिविरोधोऽपि नेति । पूर्वं 'तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात्' इत्युक्त्वा अत्र ब्रह्मशब्दादित्येतावन्मात्रोक्तेः प्रयोजनं तु "ब्रह्मशब्दस्यानन्दविज्ञानमययोरिवान्येष्वभ्यासाभावात्तेष्वसिद्धिपरिहारेण ब्रह्मशब्दश्रवणरूपसर्वसाधारणहेत्वर्थकथनमेव" इत्युक्तं चन्द्रिकायाम् ॥

( १६ ) अत्रान्यैः आनन्दमय एव ब्रह्म । तद्गतमयट एव प्राचुर्यार्थता । अन्नमयादयस्तु कोशाः । तद्गतानां मयटां च विकारार्थत्वमित्युक्तम् । तदयुक्तमित्याह—न चेति ॥ प्रायपठितमयटां 'पृथक्कल्पना' अर्थद्वैविध्यकल्पना न युक्ता । ततश्चान्नमयादीनां मध्ये एकस्यैव ब्रह्मत्वकल्पना च न युक्तैव, प्रायपाठविरोधेन क्लिष्टत्वादित्यर्थः । यस्तु वादी अन्नमयादीनां पञ्चानामप्यब्रह्मतां ब्रूते, स तु सूत्रकारेणैव पूर्वपक्षीकृत इति न तत्पक्षं प्रत्याक्षिपद्भाष्यकारः । तत्त्वप्रदीपे तु—न चेति वाक्यं-न च मायिना पृथक्कल्पना 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. उ. २-१-१. ) 'तस्माद्वा एतस्मादात्मनः' ( तै. उ. २ - १ - २. ) इत्यत्र ब्रह्मोच्यते

प्रकाशो रविरितिवत् ॥

( १७ ) सू—ॐ ॥ तद्धेतुव्यपदेशाच्च ॥ ॐ ॥ १४ ॥

'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' ( तै. २-७. ) इति ।

अन्नमयादयः पञ्चकोशा मिथो भिन्नाः तेषां ब्रह्मशब्दोक्तत्वेऽपि अब्रह्मत्वम् । अन्त्यपुच्छस्यैव ब्रह्मत्वम् । अन्नमयाद्यतिक्रमो मोक्षः । वक्ष्यमाणानां चक्षुश्श्रोत्रमनोवाचां नान्नमयादिष्वनुवृत्तिः । 'अन्नं ब्रह्मेति व्यजानात्' ( तै. उ. ३ - २. ) इत्यादौ पञ्चमस्यानन्दस्य ब्रह्मत्वम् । 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' ( तै. उ. ३- १०- ५. ) इत्येतस्माद्ब्रह्मानन्दमयाद्यतिक्रमनिर्गुणवाक्यात्पृथगेव 'इमान् लोकान्' ( तै. उ. ३-१०-५. ) इत्यादिको वाक्यशेषः सगुणवाक्यैकवाक्यतापन्नः तत्फलप्रतिपादक इत्यादिका युक्ता । उक्तहेतुभिरत्यन्तासङ्गतत्वात् इत्यन्त्यपक्षनिराकरणपरतया व्याख्यातम् । न चैवमेतद्विरोधप्टीकाया इति वाच्यम् । भाष्यकारः सविस्तरं विशिष्य न निराचख्याविति टीकाभिप्रायाभ्युपगमात् । ननु 'न ब्रह्मणि प्रचुरानन्दः' इत्यादिप्रयोगो युज्यते । तस्यानन्दादिस्वरूपत्वात् 'घृतप्रचुर ओदनः' इत्यादौ भेदस्थल एव तथा प्रयोगादित्यत आह—स्वरूपे चेति । चशब्दोऽप्यर्थः । इतिशब्दः शब्दपदार्थः । 'रविरितिवत्' इत्यनन्तरं 'व्यवहारः' इति शेषः । 'स्वरूपे च' इत्यस्यावृत्तिः । तथा च प्रकाशस्वरूपेऽपि सूर्यबिम्बे विशेषबलात्'प्रचुरप्रकाशो रविरितिवत्' एवंरूपव्यवहारवत् आनन्दादिस्वरूपेऽपिहरौ विशेषेण तथा व्यवहारो युज्यत एवेति न तदनुपपत्तिरित्यर्थः ॥

( १७ ) आनन्दमयमात्रस्य विष्णुत्वे, हेत्वन्तररूपं प्राचुर्यमेव मयडर्थ इत्यत्र च हेतुं प्रतिपादयत्सूत्रमुपन्यस्यति—तद्धेत्विति ॥ आनन्दमय इति तत्त्विति चानुवर्तते । तदित्यस्यावृत्तिः । स चासौ हेतुश्चेत्यपि विग्रहः । तथा च न केवलं ब्रह्मशब्दाभ्यासात् । किन्तु 'तद्धेतुव्यपदेशात्' तस्मिन्नानन्दमयप्रकरणे तस्य विष्णोः तस्मिन् आनन्दपूर्णत्वेनानन्दमयत्वे प्राचुर्यस्यैव मयडर्थत्वे च तद्धेतुव्यपदेशात् लोकचेष्टकत्वाख्यहेतूक्तेश्चानन्दपूर्णत्वेनैवानन्दमयशब्दवाच्यो विष्णुरेवेति सूत्रवृत्तिमभिप्रेत्य तमेव हेतुव्यपदेशं दर्शयति—को हीति । 'यत्' यदा यदि 'एषः आकाशः' आसमन्तात्प्रकाशमानो

( १८ ) सू—ॐ ॥ मान्त्रवर्णिकमेव च गीयते ॥ ॐ ॥ १५ ॥
'ब्रह्मविदाप्नोति परम्' इति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. २-१. ) इति मन्त्रवर्णेल

विष्णुरानन्दः पूर्णानन्दो न स्यात् तदाऽसौ लोकं न प्रवर्तयेदिति शेषः । आनन्दोद्रेकमन्तरेण प्रवृत्तौ कारणान्तराभावादिति भावः । यद्यसौ न लोकं प्रवर्तयेत् । तदा 'को ह्येवान्यात्' को वा जनः लोकं चेष्टयेत् । 'कश्च प्राण्यात्' धर्मादौ च कः प्रवर्तयेत् । न कोऽपि । अन्यस्यास्वातन्त्र्यादिति तैत्तिरीयभाष्यटीकारीत्या श्रुत्यर्थः । सुधायां तु–ण्यर्थानन्तर्भावेन न कोऽपि लौकिकीं वैदिकीं प्रवृत्तिं कुर्यादिति व्याख्यातम् । इतीत्यस्य इति तद्धेतुव्यपदेशादित्यन्वयः ॥

( १८ ) यदुक्तं ब्रह्मशब्दादानन्दमयादीनां विष्णुत्वमिति न तद्युक्तम् । ब्रह्मशब्दस्य अपरब्रह्मणि जीवेऽप्युपपत्तेः । तस्य परब्रह्मणि मुख्यत्वेऽपि विष्णोः आनन्दमयावयवत्वोक्त्यादिना बाधकेनामुख्यार्थस्यैव ग्रहणोपपत्तेरित्याशङ्कां परिहरन् आनन्दमयादिशब्दवाच्यस्य विष्णुत्वे युक्त्यन्तरं वदन् सूत्रं पठित्वा व्याचष्टे–मान्त्रवर्णिकमिति ॥ यत इत्यादौ योज्यं, 'न ते' इति प्रतिज्ञाऽनुवर्तते । तथा च यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१-१.) इति 'मन्त्रवर्णे' मन्त्राक्षरे तदात्मकवाक्यविशेषे 'लक्षितं' लक्षणवत्तया प्रोक्तमेव परमेव ब्रह्म नालक्षितं, नापरमित्येवार्थः । अन्नमयादिशब्दैः 'गीयते' प्रतिपाद्यते अतोऽप्यानन्दमयादयो नापरे । किन्तु परमेव ब्रह्मेति योजना । कुतोऽन्नमयादिशब्दैर्मन्त्रवर्णलक्षितस्यैव प्रतिपादनं ज्ञायत इत्यत उक्तम्—शब्दानुसन्धानादिति । 'शब्दानां' सत्यं ज्ञानमनन्तं इत्येवंरूपाणां अन्नमयादिशब्दानां च अर्थानुसन्धानात् जातात् 'अनुसन्धानात्' एकार्थत्वज्ञानादित्यर्थः । मन्त्रवर्णेऽपि ब्रह्मत्वेनोक्तत्वात्कथं तदर्थानामप्यन्नमयादिशब्दानां परब्रह्मार्थताज्ञप्तिरित्यत आह—ब्रह्मविदिति । प्रवृत्त इति शेषः । अस्य बुद्ध्या विविक्तेन मन्त्रवर्णपदेनान्वयः । तथा च यतो 'ब्रह्मविदाप्नोति परम्' (तै.उ.२-१-१.) इति । परब्रह्मतद्ज्ञानतत्प्राप्तीः सूचयित्वा संक्षेपेणोक्त्वा तत्र प्राप्तशङ्कापनोदाय प्रवृत्तो मन्त्रवर्णः । ततोऽत्र लक्षितं परं ब्रह्मैवेति ज्ञायत इत्यर्थः । सूत्रे आनन्दमयादिस्तत्रिवति चानुवर्तते । चशब्दो यत इत्यर्थे युक्तिसमुच्चये च । तथा च न केवलं ब्रह्मशब्दादेवानन्द

क्षितं परमेव ब्रह्म शब्दानुसन्धानाद्गीयते ।
( १९ ) न चावयवत्वविरोधः । 'स शिरः, स दक्षिणः पक्षः, स उत्तरः पक्षः, स आत्मा, स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ।

मयादिविष्ण्वाख्यं परब्रह्मैव नापरब्रह्मेत्यवसीयते । किन्तु यतो मान्त्रवर्णिकं 'सत्यं ज्ञानम्' इति वेदवाक्येन लक्षणवत्तया प्रोक्तं परं ब्रह्मैवान्नमयादिशब्दैः 'गीयते' प्रतिपाद्यते च । अतस्तत्समाख्यानादार्थिकादपीति सूत्रार्थः । 'ब्रह्मवित्' परब्रह्मज्ञानी 'परं' परमं ब्रह्माप्नोति । परब्रह्मप्राप्तिकामः परब्रह्म जानीयात् इति श्रुतेः फलितोऽर्थः । किं तद्ब्रह्मेति शङ्कायां सत्यमित्यादि प्रवृत्तम् । तत्र सत्यशब्देनोक्तं यत् गतिजीवननाशप्रापकत्वं तदेवान्नमयप्राणमयशब्दाभ्यामुच्यते । ज्ञानपदोक्तं सकलपदार्थसामान्यविशेषविषयकज्ञानं मनोमयविज्ञानमयशब्दाभ्यामुच्यते । अनन्तशब्देनोक्तं देशतः कालतो वस्तुतश्च अपरिच्छिन्नत्वम् । परमात्माऽनन्तः पूर्णानन्दत्वादित्यानन्दमयशब्देनोपपाद्यत इति सत्यादिशब्दानां अन्नमयादिशब्दानां चैकार्थत्वं अनुसन्धेयम् । अत्र देशानन्त्यं नाम अनवधिकपरिमाणत्वम् । कालानन्त्यं नाम अनवच्छिन्नसत्ताकत्वम् । वस्त्वानन्त्यं नाम अपरिच्छिन्नसङ्ख्यागुणकर्मविग्रहवत्त्वम् ॥

( १९ ) ननु विष्णोरानन्दमयत्वं न युक्तं; तस्य तदवयवत्वात् । न चासिद्धिः; ब्रह्मपुच्छमित्युक्तेः । अवयविनश्चावयवत्वविरोधादित्यत आह—न चेति ॥ तस्येत्याकृष्यते । 'तस्य' विष्णोरानन्दमयत्वे तदवयवत्वोक्तिविरोधो नेत्यर्थः । अवयवत्वे च अवयवित्वस्य विरोधोऽपि नेति चशब्दार्थः । कुत इत्यतोऽवयविन एवावयवत्वस्यावयवित्वस्य च श्रुत्युक्तत्वेनावयव्यादेरवयवाद्यभेदादित्याशयेन तां श्रुतिमुदाहरति—स इति । 'सः' नारायणः 'शिरः' शीर्षं, शिरः स इति वा । एवं उत्तरत्रापि व्याख्येयम् । द्वितीयादितच्छब्दाः स्मृत्यनुसारात्प्रद्युम्नादिपराः । 'पक्षो' बाहुः 'उत्तरः' सव्यः 'आत्मा' मध्यदेहः 'पुच्छं' पादौ इतीत्यस्यैवंरूपायां चतुर्वेदशिखायां तस्यैवावयविभूतस्यैव विष्णोरवयवत्वोक्तेरित्यन्वयः । एवशब्देनावयवावयविभेदो निवारितः । एवं अवयवस्यावयवित्वे न केवलमियं श्रुतिः, किन्तु—भा

( २० ) शिरो नारायणः पक्षो दक्षिणस्सव्य एव च ।
प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ॥
नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा ।
पुच्छं सङ्कर्षणः प्रोक्तः एक एव तु पञ्चधा ॥
अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ॥

ध्ये उपलक्षणया गृहीता 'पदं पुच्छं प्रतिष्ठा वै पुरुषः' इति तत्त्वप्रदीपोदाहृतश्रुतिरपि प्रमाणतया ग्राह्या । अस्मिन् पक्षे भाष्यगतावयवशब्दः अर्शआद्यजन्तोऽवयविपरः ॥

( २० ) अवयविन अवयवत्वं विरुद्धमित्याशङ्कां श्रुत्या परिहृत्यात्र स्मृतिं चाह—शिर इति ॥ अत्र चित्रादौ लिख्यमाननवनारीरूपे अवयविभूतानामनेकस्त्रीणामेकदेहावयवत्वं तथा नारायणादिपञ्चरूपाणां एकावयवत्वमुच्यते । आद्यश्चः पक्षसमुच्चये । रूपयोः परस्परसमुच्चये द्वौ । अवयविभूत एव नारायणः शिर इत्येवशब्दान्वयः । एवमवयविभूतः प्रद्युम्नो दक्षिणः पक्षो बाहुः । अनिरुद्धः सव्यः । वासुदेवः 'सन्दोहो' मध्यदेह इत्यन्वयः । अपिवेति निपातसमुदायः पक्षान्तरे । पूर्वस्मिन् पक्षे नारायणस्य शीर्षत्वम् । वासुदेवस्य मध्यदेहत्वम् । अस्मिन् पक्षे तु—तदंशे वैपरीत्यमित्युपासनाभेदेन पक्षभेदोक्तिः । सङ्कर्षणस्तूभयत्र 'पुच्छं' पादौ प्रोक्त इत्यन्वयः । तुशब्देन द्विरूपत्वं सुपर्णरूपत्वाविशेषो वा ज्ञायते । ततः किमित्यत आह—एक इति । एवं 'पुरुषोत्तमः' क्षराक्षरपुरुषाभ्यां उत्तमो भगवान् कृष्णः 'एक एव' पञ्चधा विभक्तः एक एवावयवैः अभिन्न एव न तु भिन्नः । 'अङ्गत्वेन' अवयवत्वेन 'अङ्गित्वेन' अवयवित्वेन प्रकारेण तद्भावं प्राप्तः क्रीडत इत्यर्थः । इत्थंभूतलक्षणे तृतीया । नन्वस्त्वेवं तावता न विरोधपरिहारो जात इत्यत आह—ऐश्वर्यादिति । 'तस्मिन्' अवयविभावाद्यापन्ने जनार्दने 'तस्मिन्' अवयवत्वादौ तद्विषये 'विरोधः' सहानवस्थानरूपो 'न चिन्त्यः' न केनचित्कल्प्यः । कुतः ? 'ऐश्वर्यात्' ईश्वरसामर्थ्यात् तयोरेकत्रावस्थानरूपाविरोधोपपत्तेः ईश्वरशक्तिश्चाघटितघटकेति भावः । एवं 'तस्मिन्' अवयवे 'तस्मिन्' अवयवित्वे न विरोधः । कुतः ? एकैकस्यावयवस्य सर्वेश्वरत्वादित्यपि व्याख्येयम् । एवं न विरोध इत्येतत् अवयवावयवि

ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने ।
अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा ॥ इति बृहत्सं
हितायाम् ।

( २१ ) रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते ।

---

नोरभेदेऽयमवयवी अयं अवयव इति भेदव्यवहारविरोधोऽपि नेत्य
पि व्याख्येयम् । तत्र हेतुस्तु विशेषबलाच्छक्तिव्यक्तिभावादिति च
शब्देन सूचितः । अत एव चशब्दोऽनुक्तसमुच्चयार्थः ऐश्वर्याच्चेत्यन्वे
ति । किञ्च—किं तर्कान्यप्रमाणेनावयविनोऽवयवत्वमवयवस्यावय
वित्वं च विरुद्धम् ? उत अवयवी नावयवः अवयवित्वात् । अवय
वो वा नावयवी अवयवत्वाल्लोकवदिति तर्कपदोक्तानुमानेन ? । ना
द्योऽसिद्धत्वात् । न द्वितीय इत्याह—अतर्क्ये इति । 'हि' यस्मादत
र्क्यः तस्मात् 'अतर्क्ये' तर्कागोचरे भगवति तद्विषये 'तर्कः' अवय
वी नावयवः अवयवित्वात् इत्यादिरूपो हेतुः 'कुतः' साधको बाध
को वा नेत्यर्थः। किञ्च—लोके परिमितशक्तित्व एव विरोधदर्शनात्
विष्णोर्विरोधोपयोगिपरिमितशक्तिशून्यत्वात् तर्क्यत्वाङ्गीकारेऽपि न
विरोध इत्याह—अप्रमेय इति । 'अप्रमेये' देशकालगुणैरपरिच्छि
न्ने भगवति 'प्रमा' एतावदेव सामर्थ्यं नातोऽधिकमिति शक्तिपरिच्छे
दः 'कुतः' नेत्यर्थः । तथा च परोक्ततर्कस्य सोपाधिकत्वेनाप्रमाण
त्वान्न विरोधित्वमिति भावः । अनेन 'अतर्क्ये' इत्यस्यासत्तर्कागोच
र इत्यर्थ इत्युक्तं भवति । इति बृहत्संहितायामित्यस्य 'तस्यैवावयव
त्वोक्तेः' इत्यनुषक्तेनान्वयः ॥

( २१ ) ननु यदुक्तं 'स वा' इति वाक्येऽस्य परमात्मन एव पराम
र्शः 'न अन्नात्पुरुषः' इत्युक्तदेहस्येति । तदयुक्तं; आत्मनो दूरस्थत्वाद्दे
हस्य च समीपस्थत्वात्समीपोक्तपरित्यागेन दूरस्थपरामर्शाङ्गीकारे
कारणाभावात् । किञ्च—पुरुषपदेन प्रकृतस्यैव पुरुषपदेनोक्तत्वात्
आत्मनश्च तेन अप्रकृतत्वात्पुरुषपदेन परामर्शायोगः । न च—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ॥

इति वाक्यद्वयस्थपुरुषपदेन एकविधेनैव व्यवस्थया परमात्मजीवयो
रुक्तिग्रहणवदिहापि एकविधेनैव द्विरुक्तेन पुरुषपदेन व्यवस्थयाऽर्थद्व
योक्त्यङ्गीकारो ऽस्त्विति वाच्यम् । तत्र दुःखानुभवितृत्वरूपभेदकश्रु

इदमिति च दृश्यमानसन्निहितत्वात् ।

तिवत्प्रकृते भेदकाभावेन 'अन्नात्पुरुषः' इत्यत्र देहः, 'स वा' इत्यत्र च परमात्मैवोच्यत इति व्यवस्थाङ्गीकारायोगादित्यत आह—रसेति ॥ 'स वा एषः' इति वर्तते । तदित्यावर्तते । एवमुच्यत इति च । अन्यद्विहायेति शेषः । तथा च 'स वा' इति वाक्येन चिदेव 'चिन्मात्रं' ब्रह्मचैतन्यमेव 'उच्यते' परामृश्यते न देहः । न च तस्य दूरोक्तिविरोधः, पुरुषपदेनाप्रकृतत्वविरोधश्चेति वाच्यम् । यतस्तत् 'आत्मन आकाशस्सम्भूतः' (तै.उ. २-१-२.) इत्याकाशादिपुरुषान्तशब्दैरुक्तं 'तत्तत्सारभूतं' आकाशादिपदार्थश्रेष्ठभूतं चिन्मात्रं ब्रह्मैव 'स वा' इति परामर्शवाक्येनोच्यते । एवं तर्हि पुरुषपदेन द्वयोरपि प्रकृतत्वादुभयपरामर्शोऽयमस्त्विति न च वाच्यम् । यतः 'तत्सारभूतं' पुरुषसारभूतं चिन्मात्रं ब्रह्मैवान्यदेहादिकं विहाय 'सः' इति परामर्शवाक्येनोच्यते। कुत इत्यत आह—रसेति । रसशब्दघटितान्नरसमयशब्देन 'विशेषणात्' सारान्नमयत्वरूपपुरुषविशेषणाभिधानादित्यर्थः । जडामिश्रजीवविलक्षणब्रह्मबोधार्थं मात्रपदम् । 'रसशब्देन' रसशब्दार्थेन मुख्यत्वेन 'विशेषणात्' विशेषितत्वात् अन्नत्वरूपविशेषणस्येति वा । ततश्चात्र "अन्नरसोऽन्नसारोऽन्नशब्दार्थेषु मुख्यात्तृत्वादिलक्षणस्तत्प्रचुरः" इति सुधोक्तेः । टीकायां चैतन्यमात्रं ब्रह्मैवेत्यन्वयः । नन्वनुवाकान्तरे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' (याज्ञिकी. ६६.) इति प्रार्थितशुद्धीनामन्नमयादीनां कथं ब्रह्मतोच्यत इत्यतो वाऽऽह—रसेति । नात्र प्रार्थितशुद्धीनामन्नमयादिकोशानामभिधानम् । किन्तु, 'तत्तत्सारभूतं' तत्तत्कोशनियामकं तद्गतं ब्रह्मचैतन्यमेव उच्यते । कुतः? अत्र 'स वा एषः' (तै. उ. २-१-३.) इत्यादौ 'रसो वै सः' इत्यन्ते चान्नमयादीनां कोशव्यावृत्त्यर्थं तद्भेदार्थमेव 'रसशब्देन विशेषणात्' विशेषितत्वादित्यर्थः । आदौ विशेषितत्वं घटितत्वम् । तथा च शब्दान्तरन्यायेनान्नमयाद्यपेक्षयाऽन्नरसमयादीनां भेद इति भावः । उपलक्षणमेतत् । व्यवहिताकाशादिकारणात्मपरामर्शिना तच्छब्देन च विशेषणादित्यपि द्रष्टव्यम् । ननु यदि परिदृश्यमानदेह एव नान्नमयः, किन्तु ब्रह्मैव तस्यैव च 'सः' इत्यादौ परामर्शः, तदा 'तस्येदमेव शिरः' (तै. उ. २-१-३.) इति प्रत्यक्षनिर्देशो नोपपद्यते । न च वाच्यं उपनिषद्द्रष्टा मुनिर्ब्र

(२२) अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात् पुरुषोत्तमः ॥ इति
ब्रह्माण्डे पुराणे—
(२३) न चोक्तप्राप्त्या विरिञ्चादिरुच्यते ।

ह्यापरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथा सति तेनापरोक्षीकृतप्राणमयादावपि तथा निर्देशप्रसङ्गात् । किञ्च—स्वस्यापरोक्षतो ज्ञातत्वेन शब्दानपेक्षणात् उपदेश्यपुरुषाणां चापरोक्षायोग्यत्वान्निर्देशवैयर्थ्यमित्यत आह— इदमिति । चोऽप्यर्थः । निर्देशो युज्यते इति शेषः । इदमित्येतदस्येत्यपि व्याख्येयम् । तथा च 'अस्य' अन्नमयभगवच्छिरःपक्षादेः दृश्यमानप्रत्यक्षसिद्धदेहशिरःपक्षादौ वस्त्रवर्मान्तर्वर्तिजानुवीरावयववत् 'सन्निहितत्वात्' सम्यङ्नियामकत्वेन स्थितत्वात् लक्षणया ब्रह्मशिरसि इदमिति निर्देशो युज्यत इति योजना । लक्षणाबीजं शक्यसम्बन्धं दर्शयितुं—दृश्यमानेति । तथा च वस्त्रप्रावृते वर्मान्तर्गते वा जानुनीदं जान्विति व्यवहारवदयमपि व्यवहारो युज्यत एवेति न तद्विरोध इति भावः ॥

(२२) नन्वन्नमयादीनां पञ्चानां ब्रह्मताऽनुपपन्ना 'तस्माद्वा एतस्माद्न्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः' (तै.उ.२-२-२.) इति परस्परं भिन्नत्वेनोक्तत्वात् । एवमेकस्यैव ब्रह्मणो बहुरूपत्वात् न 'एकमेव' इति श्रुतिविरोधः इत्यप्ययुक्तमप्रमितत्वादित्यत आह-अनन्य इति॥ अपिर्यद्यपीत्याद्यर्थे । तथाशब्दः समुच्चये । तथा च 'पुरुषोत्तमो भगवान्विष्णुः' 'अनन्योऽपि' अभिन्नोऽपि अन्यो भिन्न इति शब्देन प्रोच्यते । तथा यद्यप्येकस्तथाऽपि बहुरूपवान् भवतीत्यर्थः । कथमित्यत उभयघटकमाह—ऐश्वर्यादिति । अचिन्त्यशक्तेरित्यर्थः । उपलक्षणमेतत् । अन्नमयादिपञ्चकोशगतान्यत्वान्तरत्वादयो धर्मास्तद्गतभगवद्रूपेषूपचर्यन्त इत्यपि द्रष्टव्यम् । अत एव तृतीये 'स्थानभेदादैश्वर्याच्च' इति भाष्ये स्थानभेदाख्यं हेत्वन्तरमभिहितम् । तैत्तिरीयभाष्ये तु—भेदाभावेऽपि सङ्ख्याविशेषयुक्तत्वादन्यत्वोक्तिरित्युक्तम् । ब्रह्माण्डे पुराणे इत्यनन्तरं उक्तत्वान्न विरोध इत्यन्वयः ॥

(२३) ननु ब्रह्मशब्दस्य साधारणत्वात् तद्धेतुव्यपदेशस्य विष्णुनिष्ठतया स्पष्टमप्रतिभानात् मन्त्रवर्णसमाख्यायाश्च अन्यलिङ्गादिभ्यो दुर्बलत्वेन सावकाशत्वात् अनन्यथासिद्धहेत्वन्तरस्य चाभावादान

सू—ॐ ॥ नेतरोऽनुपपत्तेः ॥ ॐ ॥ १६ ॥
न ह्यन्यज्ञानान्मोक्ष उपपद्यते । 'तमेवं विद्वानमृत इह भवात । नान्यः पन्था अयनाय विद्यते' ( तै. आ. ३-१२-७. ) इति ह्युक्तम् ।

( २४ ) सू—ॐ ॥ भेदव्यपदेशाच्च ॥ ॐ ॥ १७ ॥
'ते ये शतं प्रजापतेरानन्दाः' ( तै. २-८. )

---

न्दमयादयो विरिञ्चादय एव सन्त्विति शङ्कां परिहरत्सूत्रमवतारय ति—न चेति ॥ चोऽवधारणे । विरिञ्चादय इत्यनेनान्वेति । तथा च 'उक्तप्राप्त्या' ब्रह्मशब्दशतानन्दत्वाष्टमूर्तित्वबहुभावादिरूपोक्तप्राप केनान्नमयादिशब्दैर्विरिञ्चादिरेवोच्यते । न विष्णुरिति न, किन्तु, विष्णुरेव तैरुच्यते । न विरिञ्चादिरित्यर्थः । कुतो नेति हेत्वाकांक्षा यां सूत्रमुपन्यस्य प्रतिज्ञांशस्य न चेत्यादिभाष्येणैव व्याख्यातत्वा त्सौत्रमनन्यथासिद्धहेतुमेव व्याचष्टे—नेतर इति । हिशब्दो हेतौ । 'अन्यज्ञानात्' विष्ण्वन्यविरिञ्चादिज्ञानात् । यद्यप्ययं नेतर इत्युक्त साध्ये न हेतुः । तथाऽपि तस्यानन्यथासिद्धत्वोपपादकत्वाद्धेतुत्वो क्तिः । अस्य हेतुवाक्यस्य अध्याहृतहेतुवाक्यद्वारा न चेति प्रतिज्ञयाऽ न्वयः । अनेनानन्दमयादिः विष्णोरितरो विरिञ्चादिर्न, कुतः? 'ब्रह्म विदाप्नोति परम् ( तै. उ. २ - १ - १. ) .. सर्वं वै तेऽन्नमाप्नुवन्ति ( तै. उ. २ - २ - १. ) ..सर्वमेव त आयुर्यन्ति' ( तै. उ. २- ३ - १. ) इत्यादिना आनन्दमयादेर्मुक्तिहेतुज्ञानविषयत्वोक्तेः, तस्य चेतरत्र 'अनुपपत्तेः' अयोगादिति सूत्रार्थ उक्तो भवति । विष्णुज्ञानादेव मो क्षो नेतरज्ञानादित्येतत्कुत इत्यत आह—तमिति । 'हि' यस्मात् 'त मेवम्' इति श्रुत्या मोक्षस्य विष्णुज्ञानादन्य उपायो नास्तीत्युक्तम् । तस्माद्विष्णोरन्यज्ञानान्मोक्षो नोपपद्यत इत्यर्थः । श्रुत्यर्थस्तु प्रागे वोक्तः ॥

( २४ ) हेत्वन्तरेण ब्रह्मादीनामानन्दमयत्वं पराकुर्वत्सूत्रं पठित्वा व्याचष्टे—भेदेति । अत्र पूर्वहेतुसमुच्चायकेन चशब्देनानन्दमयादिर्ने तर इति प्रतिज्ञावाक्यानुवृत्तेरपि सूचनात् । तद्विहाय सूत्रोक्तं भेद व्यपदेशं दर्शयति---ते ये शतमिति ॥ आदिशब्दः 'आनन्दाः' इत्यतः परोऽपि योज्यः । तत्राद्येन 'ते ये शतं' इत्यस्य पूर्वोत्तरतैत्तिरीयवा

'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' ( तै २-७. ) 'स यश्चा यं पुरुषे' ( तै. २-८. ) इत्यादि भेदव्यपदेशात्।

क्यानि गृह्यन्ते। द्वितीयेन 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्', ( तै. उ. २ - ४ - १. ) इत्यादि। यद्वा — सकृच्छ्रुत एव सर्वसङ्ग्राहकः। अनेन नानन्दमय इतरो विरिञ्चः, कुतः? भेदव्यपदेशात्। विरिञ्चस्य 'ते ये शतम्' ( तै. उ. २ - ८ - ४. ) इत्यादिना रुद्राच्छतगुणानन्दत्वोक्तेः, आनन्दमयस्य च 'यतो वाचः' इत्यादिनाऽपरिमितानन्दत्वोक्तेः। एवं न रुद्रः, तस्य हिरण्यगर्भाच्छतांशोनानन्दत्वोक्तेः। नापि बृहस्पत्यादयः, तेषामुत्तरोत्तरापेक्षया शतांशोनानन्दत्वोक्तेः। नापि प्रकृत्यादयः, 'अदृश्येऽनात्म्ये' इत्यादौ प्रकृत्याद्ययोग्यस्वातन्त्र्यादिरूपभेदकधर्मश्रवणात्। नाप्यानन्दमयो ब्रह्मादिजीवसमुदायः, तस्य 'स यश्चायम्' इति अपकृष्टोत्कृष्टसर्वजीवस्थितिरूपभेदकधर्मोक्तेः जीवसमुदायस्य चानेवंविधत्वादिति सूत्रार्थ उक्तो भवति। एते च सर्वे व्यपदेशाः तैत्तिरीयश्रुतिगताः। तत्र 'प्रजापतिः शिश्नः शेपो लिङ्गमित्यभिधीयते' इति शैवपुराणवचनात् 'प्रजापतेः' रुद्रस्य 'ये शतं' शतगुणिता आनन्दाः ते 'ब्रह्मणः' चतुर्मुखस्य एक आनन्द इति प्रथमवाक्यस्यार्थः। 'अदृश्ये' साकल्येनाज्ञेये 'अनात्म्ये' आत्मनः इमे आत्म्याः जीवगुणाः न विद्यन्ते आत्म्याः यस्मिन् सोऽनात्म्यः तस्मिन् जीवगुणविधुरे। अथवा—आत्मनः स्वामिनोऽयमात्म्यः स्वामिसम्बन्धी स नेत्यनात्म्यः तस्मिन्, स्वामिरहित इति यावत्। 'अनिरुक्ते' साकल्येन निर्वचनागोचरे। 'अनिलयने' अनन्याश्रये आनन्दमयशब्दवाच्ये विष्णौ तद्विषये योऽधिकारी 'अभयं' यथा भवति तथा ध्यानरूपां 'प्रतिष्ठां' स्थितिं 'विन्दते' प्राप्नोति, करोतीति यावत्। 'अथ' अनन्तरं 'सः' उपासकः 'अभयं' भयरहितं भगवन्तं 'गतः' प्राप्तो भवतीति द्वितीयभेदव्यपदेशस्यार्थः। 'पुरुषे' पुरुषपदोपलक्षितापकृष्टजीवेषु 'यः' अयमानन्दमयो विष्णुरस्ति। 'यश्चादित्ये' आदित्यपदोपलक्षितोत्कृष्टजीवेष्वस्ति 'सः' उभयत्र स्थितो विष्णुः 'एकः' अभिन्न इति तृतीयभेदव्यपदेशस्यार्थः। 'यतो वाचः' इत्यादिस्तु प्रागेव व्याख्यातः॥

(२५) न च 'तत्त्वमसि' (छा. ६-८.) 'अहं ब्रह्मास्मि' (बृ. ३-४-१०.) इत्यादिश्रुतिविरोधः । 'नामानि सर्वाणि यमाविशन्ति' (भाल्लवेयश्रुतिः) इति तत्त च्छब्दवाच्यत्वोक्तेः ।

(२६) इदं हि विश्वं भगवानिवेतरो

---

(२५) नन्वस्त्वानन्दमयः परं ब्रह्म । तथाऽपि तेन कथं ब्रह्मादीनां भेदः सम्भवति । तद्भेदस्य 'तत्त्वमसि' इत्यादिश्रुतिविरुद्धत्वादित्यत आह—न चेति ॥ भेदव्यपदेशस्येति शेषः । चः समुच्चये । एतद्विरोधशङ्कापरिहारसमुच्चितस्यैव भेदव्यपदेशस्य विवक्षितार्थसाधकत्वात् । एवमन्यत्रापि । त्वं तद्ब्रह्मासीत्यद्वैतरीत्याऽऽद्यश्रुत्यर्थः । द्वितीयस्यास्तु अहं ब्रह्माभिन्नोऽस्मीति । आद्यं उद्दालकेन श्वेतकेतुं प्रत्युपदिष्टं छन्दोगवाक्यम् । द्वितीयं बृहदारण्यके वामदेवोक्तम् । अत्रोभयत्रापि विशिष्टयोरैक्यासम्भवात् तत्त्वमहंब्रह्मपदैर्लक्षितचैतन्ययोरैक्यमुच्यते । आदिशब्देन 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' (ऐ.आ २-२-४.) 'योऽसावसौ पुरुषः सोऽहमस्मि' (ई - १६. ) इत्यादिश्रुतिर्गृह्यते । कुतो नेत्यतस्तत्रैतच्छ्रुतीनां परब्रह्मार्थकत्वेन अद्वैतार्थत्वाभावादिति हेतूपस्कारमभिप्रेत्य तेषां परब्रह्मार्थत्वे प्रमाणमाह—नामानीति । 'नामानि' इति श्रुत्या तस्य ब्रह्मणः 'तत्तच्छब्दैः' तत्त्वमादिपदैर्वाच्यत्वोक्तेरित्यर्थः । तथा च पदसमन्वयेनैतेषां ब्रह्मपरत्वान्नैतद्विरोध इति भावः । तत्प्रकारस्तु—ततत्वात्तत् । त्वंपदबोध्यजीवान्तर्यामित्वादभिमुखत्वाद्वा त्वम् । असनात् जगत्संहरणादसिः । अहेयत्वात् हंनामकजीवभिन्नत्वाद्वा अहम् । पूर्णत्वाद्ब्रह्म । असनान्मिनुतेरस्मि । यद्वा—सुमितत्वात् स्मीत्युक्तो जीवः, तद्भिन्नं पूर्णं ब्रह्म अस्मीत्युच्यत इति । ज्ञानरूपत्वात् नितरां यन्तृत्वाच्च यः । सरणात्सारत्वाच्च सः । अमुष्मिन् अमुष्मिन् स्थितत्वात्परोक्षत्वाच्च असावसौशब्दवाच्यः इत्यैतरेयश्रुत्यर्थः । 'असौ' प्राणे स्थितः 'पुरुषः' पूर्णषड्गुणः इति ईशावास्यश्रुत्यर्थः ॥

(२६) अस्तु वा एतच्छ्रुतीनां ऐक्यपरत्वं वाक्यान्वयरीत्या । तथाऽपि नैक्यश्रुतिविरोधो भेदश्रुतेः शङ्कनीयः; भगवतः सर्वैक्यश्रुतेः सर्वस्वामित्वनिमित्तैक्यपरत्वादित्याशयेन तत्र प्रमाणत्वेन भागवतस्मृतिं

यतो जगत्स्थाननिरोधसम्भवः ।
असर्वः सर्व इत्यपि ( तुरश्रुतिः )।
( २७ ) विद्याऽऽत्मनि भिदाबोधः ।

पठति—इदं हीति ॥ 'भगवान्' स्वयं 'इतरोऽपि' जगतो भिन्नोऽपि सन् 'इदं' प्रमितं विश्वमिवोच्यते 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवचनेषु । यथोक्तं प्रथमतात्पर्ये—'इतरोऽपि भगवान्विश्वमिव' इति । कुतः ? 'यतः' कारणात् 'जगत्स्थाननिरोधसम्भवः' जगतः स्थानं स्थितिः निरोधो नाशः सम्भवः उत्पत्तिः ते यस्माद्भवन्ति स तथोक्तः । यद्वा—स्थापयति निरोधयति सम्भावयतीति स तथोक्तः। अथवा—तिष्ठत्यस्मात् निरुध्यते प्रलीयतेऽस्मिन् सम्भवत्यस्मादिति तथोक्तः । तथा च जगत्सृष्ट्यादिकर्तेत्यर्थः । एवम्भूतस्य जगद्भेदः प्रमाणसिद्ध इति ज्ञापनाय हिशब्दः । तत्त्वप्रदीपे तु—बहुव्रीहिं विना इदं विश्वं भगवानिव ; एतदधीनत्वात् । स त्वितरः । कः ? 'यतो' यस्मात् 'जगत्स्थाननिरोधसम्भवो' जगत्सृष्ट्यादिकमित्युक्तम् । अत्र टीकायां च भगवानिदं विश्वमिवेत्यन्वयः । स्वामित्वेनैक्यव्यपदेश इत्येतदेवाह—असर्व इति । तुरश्रुतिः । भगवान् सर्वभिन्नोऽपि सर्वस्वामित्वात् सर्व इत्यभेदेन वेदादषूच्यते इत्यर्थः । इत्यपीति श्रुतिश्च। अपिः समुच्चये । यत इति शेषः । अस्य अतोऽपि न विरोध इत्यन्वयः ॥

( २७ ) ननु भेदज्ञानस्य मिथ्याज्ञानत्वात्कथं तदनुसारेणैक्यश्रुतयो योज्यन्त इत्याशङ्कां भागवतवाक्येन परिहरति—विद्येति ॥ इदं च का विद्येत्युद्धवप्रश्नस्योत्तरत्वेन कृष्णेनोक्तं वचनमेकादशस्कन्धे । 'आत्मनि' परमात्मनि 'भिदाबोधो' जीवाद्भेदज्ञानं जीवे वा यदीश्वराद्भेदज्ञानम् । सैव विद्येत्यर्थः । न च भिदाया अबोध इति व्याख्येयम्, अज्ञानस्य विद्यात्वाभावात् । ननु भेदज्ञानस्य पुरुषार्थाहेतुत्वात् कथं तस्य विद्यात्वमित्यत आह—भेदेति । इदं च भागवते तृतीयस्कन्धगतं वाक्यं

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥

इति पूर्ववाक्येन

कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।
स सङ्कल्प्य पुनः काले कालेनेश्वरमूर्तिना ॥

भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा।
(२८) 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति धी

जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥

इत्युत्तरवाक्येन च सह योजनीयम् । तत्प्रकारस्तु—यः 'स्थि रचराणां' स्थावरजङ्गमानां 'आद्यो' हिरण्यगर्भः सः 'ऋषिभिः' मनुष्योत्तममारभ्य गरुडशेषान्तैः ज्ञानिभिर्योगसिद्धैः सनत्कुमाराद्यैः सह 'भेददृष्ट्या' जीवेश्वरादिभेदज्ञानेन 'अभिमानेन' अभितो हरे र्मानेन परमेश्वरे बहुमानेन आग्रहेण च 'निःसङ्गेन कर्मणाऽपि' फलाभिसन्धिरहितनिवृत्तकर्मणा च मुक्तस्सन् 'कर्तृत्वात्' जगत्क र्तृत्वान्निमित्तात् 'सगुणं' सार्वज्ञादिगुणसम्पूर्णं 'पुरुषर्षभं' क्षरा क्षरेभ्यो वरं 'पुरुषं' परमपुरुषाख्यं ब्रह्म 'काले' प्रलयकाले 'सङ्गत्य' प्र विश्य पुनः 'कालेन' कालाख्येन 'ईश्वरमूर्तिना' मूर्त्या 'काले' सृष्टिकाले 'जाते' उत्पन्ने सति 'अगुणव्यतिकरे' सत्त्वादिगुणविक्रिया हीने विष्णुलोके 'यथापूर्वं' पूर्ववत् प्रजायते सर्वमुक्ताधिपतिर्जायते इति सुधायामुक्तः । कर्मनिर्णयटीकायां तु—न केवलं सगुणं, किन्तु, 'ब्रह्म' पूर्णं 'पुरुषमिति' भगवतो नामकीर्तनम् । पुरुषत्वोक्त्याऽस्म दादिसालक्षण्यं प्राप्तं, तत्परिहाराय—पुरुषर्षभमिति । तदुपपादनाय कर्तृत्वात्सगुणं ब्रह्मेतीति विशेषार्थ उक्तः । तत्त्वप्रदीपे तु—अभिमा नेनेति पदं अभितो मानेन विशेषज्ञानेनेति व्याख्याय, 'गुणव्यतिकरे' इति पदं छित्वा 'सः' ब्रह्मादिजीवसङ्घः प्रलये ज्ञानैश्वर्याद्यनन्तगुणं ब्र ह्म 'सङ्गत्य' प्राप्य 'पुनः काले' सृष्टिकाले 'कालेन' ज्ञानात्मना 'ईश्वरमूर्तिना' विष्णुरूपेण 'गुणव्यतिकरे' गुणानां सत्त्वादीनां व्य तिकरे वैषम्ये जाते सति यथापूर्वं ज्ञानादिगुणतारतम्यं परस्परभेदं च अविहाय तद्विशिष्ट एव 'प्रजायते' प्रकर्षेण मुक्तावभिव्यज्यते । न तु तदभिन्नो भवतीति व्याख्यातम् । अयं पदच्छेदष्टीकाकृतोऽपि सम्मतः । तत्पक्षे 'गुणव्यतिकरे काले' सृष्टिकाले इत्यर्थः । उभय त्रापि यथापूर्वमित्यस्य संसार इवेत्यर्थः । पूर्वकल्पे इवेति वा ॥

(२८) अत्रैवार्थे अथर्वणवाक्यं प्रमाणयति–जुष्टमिति ॥ 'जुष्टं' सर्वसे व्यं 'ईशं' स्वतन्त्रम् । अत एव 'अन्यं' जीवाद्भिन्नं विष्णुं इति 'तदेत त्सत्यम्' (मु. २ - १ - १.) इत्यादिना प्रागुक्तप्रकारेण अस्य महिमानं

तशोकः ' ( मु.३-१-२. )

( २९ ) ' असर्वः सर्व इवात्मैव सन्ननात्मेव प्रत्यङ्पराङिवै

व यदा पश्यति । 'पश्यो ' जीवः तदा 'वीतशोको' मुक्तो भवतीत्यर्थः । तत्त्वप्रदीपे तु—' जुष्टं ' देवैः ' अस्य ' जीवस्य ईशं अन्यं यदा पश्यति 'महिमानं' महिमगुणात्मकं ' तदा ' तदैव ' वीतशोको भवति ' न दुःखलेशमपि स्पृशति जीवः । न तु महिमगुणविहीनं अनन्यमनीशम सेवितं पश्यन् वीतशोको भवतीति व्याख्यातम् । यद्यपीयं श्रुतिः ' विशेषणभेदव्यपदेशाभ्याम् ' ( ब्र. सू. १-२-२२. ) इत्यत्र अयमन्यो मार्ग इत्युक्ते प्रसिद्धमार्गादन्यत्वबोधवत् अन्यमीशमित्युक्ते ईशशब्दितस्य ब्रह्मणः प्रसिद्धेशाद्रुद्रात् अन्यत्वप्रतीतेर्ब्रह्मणो रुद्रादन्यत्वे प्रमाणत्वेनोक्ता । न तु ब्रह्मणो जीवादन्यत्वे, नापि ईशत्वमन्यत्वे हेतूकृतम् । तथाऽपि तत् व्याख्यानान्तरमभिप्रेत्येति न तद्विरोधः । अत एव द्युभ्वादिनये 'भेदव्यपदेशात्' (ब्र.सू.१-३-५.) इत्यत्र जीवेशभेदेऽपीयं प्रमाणतयोदाहृता ॥

( २९ ) एवं स्वामित्वार्थतया पराभिमताद्वैतश्रुतीर्व्याख्याय वाक्यसमन्वयाश्रयणेन अन्तर्यामितयापि ताः श्रुतिस्मृतिभ्यां व्याचष्टे—असर्व इति ॥ यद्यपि ' असर्वः ' इति वाक्यं आत्मशब्दस्य स्वामित्वार्थत्वमुपेत्य स्वामित्वेन निमित्तेनैक्यश्रुतयः प्रवृत्ता इत्यत्र प्रमाणतयोदाहृतम् । तथाऽपि स्वामित्वेनेवान्तर्यामितयाऽप्यैक्यश्रुतयः प्रवृत्ता इत्युभयत्राप्यस्य प्रमाणत्वसम्भवादुभयत्रापि प्रमाणतयोदाहरणं युक्तम् । तत्त्वप्रदीपकृतामपि स्वामित्वेनेवान्तर्यामितयाप्यैक्यश्रुतयः प्रवृत्ता इत्युभयत्रापि ' असर्वः ' इति श्रुतिः प्रमाणमित्यभिप्रायः । नचैवं "तत्सदन्तर्यामित्वेनापि तत्तच्छब्दवाच्यत्वं विष्णोरस्तीत्याह—सर्वान्तर्यामिकः" इति तत्त्वप्रदीपविरोधः; अत्र पदसमन्वयाभिप्रायप्रतीतेरिति वाच्यम् । अन्तर्यामित्वेनापीत्युक्त्या न केवलं ' नामानि ' इति श्रुतिबलात्तत्तच्छब्दप्रवृत्तिनिमित्तत्वेन तत्तच्छब्दवाच्यत्वं विष्णोः, अपि तु अन्तर्यामित्वेनापीत्येतावन्मात्रप्रतीतेः अत्र पदसमन्वये तात्पर्यानवगमात् । महावाक्यगतस्यैतदादिशब्दस्यैकैकस्य ' सर्वान्तर्यामिकः ' इति स्मृतिबलात् अन्तर्यामित्वनिमित्तेन विष्णुवाचित्वेऽपि पदान्तराणामन्यपरत्वेन वाक्यसमन्वयस्यैव वक्तव्यत्वात् । यद्वा ' नामानि ' इति श्रुतिबलात् क्रियाकारकादिसर्वार्थवाचिसर्वपद

क ईयते बहुधेयते ' ' स पुरुषः ' ' स ईश्वरः स ब्रह्म '

स्य विष्णुवाचित्वाभ्युपगमः तदेव पदसमन्वयः । न त्वेकैकस्य विष्णुवाचित्व इति न विरोधः । तथा चान्तर्यामित्वनिमित्तेन तत्त्वमस्यादिवाक्यगतत्वमहमादिपदानां विष्णुवाचित्वे त्वं त्वदन्तर्यामी तत् ब्रह्म । अहं मदन्तर्यामी ब्रह्मेति वाक्यान्वयो द्रष्टव्यः । न चैवं ' असि अस्मि ' इति क्रियापदान्वयायोगः । जीवविशिष्टान्तर्यामिवाचकस्य त्वमादिशब्दस्य दग्धृशब्दस्यायसीवान्तर्यामिणि मुख्यवृत्तिः । जीवे त्वमुख्यवृत्तिरित्याश्रयणेनामुख्यार्थविवक्षया असि अस्मीत्यादिपदप्रयोगोपपत्तेः । यद्यपि निमित्तकथनप्रकरणे 'विद्याऽऽत्मनि' 'भेददृष्ट्या' 'जुष्टं यदा ' इति वाक्यत्रयस्यान्वयाभावः । तथाऽपि स्वामित्वनिमित्तेनैक्यव्यपदेश इत्यत्र श्रुतिस्मृत्योरुपन्यासे सति तत्र प्राप्तशङ्कापरिहारस्यावश्यकत्वेनावसरसङ्गत्या तद्वाक्यत्रयप्रवृत्तेः । ' इत्यादेः ' इत्यस्यात्राकर्षणेन ' न विरोधः ' इत्यस्यानुकर्षणेन चान्वयो द्रष्टव्यः । श्रुत्यर्थस्तु—विष्णुः ' असर्वोऽपि ' सर्वानात्मकोऽपि ' सर्व इव ' सर्वात्मक इव सर्वात्मकत्वेन ईयते । कुत इत्यतस्तत्रान्तर्यामित्वं हेतुत्वेनाभिप्रेत्य अनन्तर्यामित्वप्रतीत्या तस्यासिद्धिमाशङ्क्याह—आत्मैवेति । ' आत्मैव ' अन्तर्याम्येव सन् ' अनात्मेव ' अनन्तर्यामित्वेन ' ईयते ' ज्ञायते रामकृष्णादिरूपेषु । तथा च अज्ञानमूला अनन्तर्यामित्वप्रतीतिरिति भावः । ननु विष्णोरन्तर्यामित्वे प्रत्यक्त्वं स्यात्, तच्चानुपपन्नं, पराक्त्वेन प्रतीतेरित्यत आह—प्रत्यङ्गिति । भगवान् ' प्रत्यङ् ' देहान्तर्गतोऽपि ' पराङिव ' बहिर्मात्रवृत्तित्वेनेयते । तथा च बहिर्मात्रवृत्तित्वप्रतीतिर्भ्रान्तिरिति भावः । ननु विष्णौ विरुद्धानेकधर्माभ्युपगमे भेदापत्त्या ' एकमेव ' इति श्रुतिविरोध इत्यत आह—एक इति । एक एव ' बहुधा ' बहुरूपेणेयत इत्यर्थः । तथा चैकस्यैव रूपबाहुल्यात् सर्वधर्मोपपत्तिरिति भावः । द्विर्ग्रहणात्सर्वत्र क्रियासम्बन्धः सूचितः । तत्त्वप्रदीपे तु—" प्रत्यङ् पराङिव अभिमुखोऽप्यनभिमुख इव एक एव बहुधेयते ज्ञायते प्राप्यते च " इत्युक्तम् । अन्तर्यामित्वनिमित्तेन सर्वात्मकत्वेन व्यपदिश्यमानः किं सर्वज्ञः? क च व्यपदिश्यत? इत्यत आह—स पुरुष इति । अनेन ' पुरुष एवेदं सर्वम् ' ( तै. आ. ३ - १२. ) इति श्रुतिमुपादत्ते । सम्पूर्णषड्गुणत्वात् देहाख्यपुरे

(३०) सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह । इत्यादेश्च ।

शयनाद्वा पुरुषसंज्ञ इत्यर्थः । स्थलान्तरमाह—स इति । अनेन 'सर्वं खल्विदं ब्रह्म' (छा. ३ - १४ - १.) इति श्रुतिमुपादत्ते । 'सः' सर्वात्मकत्वेन व्यपदिश्यमानो भगवान् 'ब्रह्म' सर्वत्र पूर्णत्वाद्ब्रह्मसंज्ञ इत्यर्थः । नन्वन्यत्राहष्टमन्तर्गतस्य बहिर्गतत्वादिकं कथं घटत इत्यत आह—स ईश्वर इति । 'सः' हरिः यतः 'ईश्वरः' अचिन्त्यशक्त्युपेतः अतस्तस्मिन् अन्यत्राघटितमपि सर्वं घटत इति ॥

(३०) स्मृतौ कप्रत्ययः सर्वदेहगतस्यापि विष्णोरज्ञातत्वमाह । यद्वा—यामो नियमनं तत्र भव इत्यर्थे ठक्, यतो विष्णुः सर्वान्तर्यामिकः सर्वान्तर्नियामकः अतएव 'एष आत्मेति होवाच' (छा.८-३-४.) 'सोऽहमस्मि' (ई. १६. ) 'तत्वमसि' (छा. ६ - ८ - ७.) 'योऽसावसौ पुरुषः' (ई. १६. ) इति वाक्यस्थेन एषोऽहंत्वमसाविति 'सर्वनाम्ना' सर्ववाचकसर्वनामसंज्ञकशब्देन सर्वमिति नाम्ना चाभिधीयते । न तु सर्वस्वरूपत्वादित्यर्थः । श्रेष्ठवस्त्वैक्यार्थतयाऽपि ऐक्यश्रुतीः स्मृत्या व्याख्याति—नैतदिति । मोक्षधर्मे हि वैशंपायनं प्रति हे ब्रह्मन् भेदवाक्यात् बहवः पुरुषाः प्रतिपत्तव्याः । ऐक्यवाक्यं तु प्रधानपुरुषपरमिति वा? उताहो ऐक्यवाक्यात् एक एव पुरुषः, द्वैतवाक्यं तु व्यावहारिकभेदपरमिति? । तथा—पुरुषबाहुल्यमुपेत्यैक्यवाक्यस्य श्रेष्ठपरत्वपक्षेऽपि आत्मसु किं सर्वे समाः? उतैकः श्रेष्ठः? द्वितीये कोऽसावत्र पुरुषेषु श्रेष्ठः? स कथं हि श्रेष्ठः? तं तथा च भवान् वक्तुमर्हतीत्याशयेन कृतस्य जनमेजयप्रश्नस्य वैशम्पायनेनोक्तमुत्तरं

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥

इति । अस्यार्थः — एतन्मतं नेच्छन्ति विद्वांसः । एतदिति किमित्यतस्तद्विवृणोति—पुरुषमेकमिति । तथा च वेदाः एकमेव पुरुषं वदन्तीत्येतन्मतं ज्ञानिनो नेच्छन्तीत्यर्थः । यद्वा—एतस्मिन् जगति एकं पुरुषं नेच्छन्ति, किन्तु बहवः पुरुषाः सन्तीति । तर्ह्यद्वैतश्रुतिविरोध इति न वाच्यम् । यतो बहूनां श्रेष्ठः एक एव, तत्परमैक्यवाक्यम् ।

(३१) उक्ता च प्राप्तिः। 'ब्रह्मैव सन्' (बृ. ६-४.) इत्यपि, जीव एव ब्रह्मशब्दः। उपपद्यते च विरोधे ॥

बहूनां कः श्रेष्ठः, स कथं श्रेष्ठ इत्यस्योत्तरमाह—बहूनामिति। हे कुरुकुलोद्वह एतेषां बहूनां 'पुरुषाणां' आत्मनां मध्ये 'या योनिः' यः कारणभूतः 'एका' श्रेष्ठः यथा च श्रेष्ठ उच्यते श्रुत्यादौ 'तथा' तेन प्रकारेण 'तं' विश्वं पूर्णं गुणाधिकं पुरुषं 'आख्यास्यामि' व्याख्यास्यामीति प्रमेयदीपिकाव्यासतीर्थीयदिशा स्मृत्यर्थः। अनेन पराभिमतैक्यवाक्यमुत्तमवस्त्वैक्यपरम्। तथा च सर्वोत्कृष्टं यदेकं ब्रह्म तत्त्वमसि तस्मादत्यवरोऽसि अत्यवरोऽस्मीति श्रुत्यर्थ उक्तो भवति। 'इत्यादेश्च' इत्यस्य 'न च तत्त्वमसीत्यादिविरोधः' इत्यनेनान्वयः ॥

(३१) नन्वद्वैतश्रुत्यभावे कथमद्वैतं भेदश्रुत्यादिना निषिध्यते। तस्याप्रत्यक्षत्वेन श्रुतिं विना प्राप्त्यभावात्। अप्राप्तस्य च प्रतिषेधायोगात् इत्यत आह—उक्ता चेति॥ चः साध्यसमुच्चये। चो यतो न च 'तत्त्वमसि' इत्यादिना जीवेश्वरैक्यस्य 'प्राप्तिः' श्रुत्यर्थापरिज्ञाननिमित्ता प्रसक्तिरुक्ता। अतो न तन्निषेधानुपपत्तिरित्यर्थः। नन्वेतच्छ्रुतीनामविरोधकत्वेऽपि भेदश्रुतेः 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिविरोधस्तु भविष्यति। अत्र ब्रह्मैवेत्येवकारेण जीवस्याब्रह्मतानिषेधेन तदधीनत्वादिना निमित्तेन अब्रह्मभूते ब्रह्मत्वव्यवहार इत्युक्तगतेरसम्भवादित्यत आह—ब्रह्मैवेति। अपिः समुच्चये। न केवलं तत्त्वमसीत्यादिकमविरुद्धम्। किन्तु—'ब्रह्मैव सन्' इति बृहदारण्यकवाक्यमपीत्यर्थः। कुत इत्यत आह—जीवे एवेति। सप्तमीयं विषयार्थे। तथा च 'यतो ब्रह्मैव सन्' इति वाक्ये श्रुतोऽयमाद्यो ब्रह्मशब्दः 'ब्रह्माणि जीवाः सर्वेऽपि' इति श्रुतेर्जीव एव, न परब्रह्मणि अत इत्यर्थः। यद्वा—जीव इति प्रथमान्तम्। तथा च इति वाक्ये श्रुताद्यब्रह्मशब्दोक्तो जीव एव, न परब्रह्मेत्यर्थः। तथा च सः मुक्तजीवो 'ब्रह्मैव सन्' जीव एव सन् जीवभावमविहायैव प्रलये परब्रह्माप्नोति। अपिहितस्सन् प्रविशतीति श्रुत्यर्थोपपत्तेः नोक्तभेदव्यपदेशस्यैतच्छ्रुतिविरोध इति भावः। यथोक्तं बृहद्भाष्ये—

जीवोऽपि ब्रह्मशब्दोक्तो जडाद्बहुगुणत्वतः। इति ॥
प्राप्नोति परमं ब्रह्म प्रलये प्रलये सदा। इति ॥

( ३२ ) प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते ।
( ३३ ) मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः । इति

यद्यपि मुक्तावभेदे परेणेयं श्रुतिराशङ्किता । तथैव विष्णुतत्त्वनिर्णयटीकोक्तेः । तथा च मुक्ताधिति वाच्यं, न तु प्रलय इति । तथाऽपि सर्वजीवसाधारण्याय प्रलय इत्युक्तिः । ननु ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वान्न जीवेऽसौ युज्यत इत्यत आह—उपपद्यत इति । चोऽप्यर्थः । तथा च ब्रह्मशब्दो यद्यपि परब्रह्मणि मुख्यः, तथाऽपि ' विरोधे ' स्वीयपूर्वोत्तरवाक्यविरोधे प्रमाणान्तरविरोधे वा सति जीवेऽप्युपपद्यते इत्यर्थः । प्रकृते च ' ब्रह्माप्येति ' इत्युत्तरभाविस्वग्रन्थेन 'परमं साम्यम्' इति पूर्ववाक्येन भेदग्राहिप्रत्यक्षादिना च विरोधोऽस्तीति भावः ॥

( ३२ ) ननु तथाऽपि भेदव्यपदेशस्य 'विमुक्तश्च विमुच्यते ' ( कठ. २-५-१.) इति कठश्रुतिविरोधः । अत्र संसारेऽपि जीवस्य मुक्तत्वोक्तया तदन्यथाऽनुपपत्त्या परब्रह्मत्वावगमात् इत्यत आह-प्रमादेति॥ चशब्दोऽप्यर्थे समुच्चये च । तथाच 'च' अपि-जीवस्य परब्रह्माभावेऽपि 'विमुक्तत्वं' विमुक्तत्ववचनं च युज्यते । न केवलं ब्रह्मशब्द उपपद्यते इति चार्थः । कथं ? ' बन्धस्य ' स्वतःकर्तृत्वभोक्तृत्वाभिमानरूपस्य जीवगतसंसारस्य ' प्रमादात्मकत्वात् ' प्रमादपदोक्ताज्ञानमूलत्वेन तन्निमित्तप्रतीतिकत्वेनास्वाभाविकत्वात् । अस्वाभाविके चाविद्यमानतपदप्रयोगदर्शनादित्यर्थः । अतो न तद्विरोध इति भावः । बन्धस्याज्ञानमूलत्वं च

उभे सत्ये क्षत्रियाद्य प्रवृत्ते
मोहो मृत्युः सङ्गतो यं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि
तथाऽप्रमादादमृतत्वं ब्रवीमि ।

इति तत्त्वप्रदीपन्यायामृतोदाहृतभारतवचनासिद्धं धृतराष्ट्रं प्रति सनत्सुजातवाक्यमेतत् । हे क्षत्रियाद्य ' मृत्युः ' संसारः तदभावरूपामृतत्वं चेत्युभे अपि सत्ये एव प्रवृत्ते । तयोर्मध्ये ' मृत्युः ' मोहः अज्ञानाधीनस्तन्मूलः । तर्हि मिथ्या स्यादित्यतो नेत्याह—प्रमादं वा इति । अहं ' मृत्युं ' संसारं ' प्रमादं ' अस्वाभाविकं ब्रवीमि । ' अमृतत्वं ' मुक्तत्वं तु 'अप्रमादात्' प्रमादापायात् ब्रवीमीत्यर्थः ॥

( ३३ ) बन्धस्यास्वाभाविकत्वं कुतः सिद्धमित्यत आह—मुक्तिरिति ॥ 'अन्यथारूपं' अस्वाभाविकं रूपं ' हित्वा' त्यक्त्वा 'स्वरूपेण' नि

हि भागवते ।

( ३४ ) न च तत्तदनुमानविरोधः ।

( ३५ ) सू—ॐ ॥ कामाच्च नानुमा नापेक्षा ॥ ॐ ॥ १८ ॥

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्त्वे पृथ

---

अरूपेणावस्थितिरेव मुक्तिरित्यर्थः । भागवत इत्यस्य प्रमादात्मकत्वोक्ते रित्यनेनान्वयः ॥

( ३४ ) ननु भेदोक्तेः श्रुतिविरोधाभावेऽपि जीवो ब्रह्माभिन्नः चेतनत्वात् ब्रह्मवत् । भेदो मिथ्या भेदत्वात् चन्द्रभेदवत् । विमतानि शरीराणि मद्भोगायतनानि शरीरत्वात् मच्छरीरवत् । इत्यनुमानविरोधस्तु भविष्यतीत्यत आह—न चेति ॥ चोऽविरोधसमुच्चये । तथा च न केवलं श्रुतिविरोधाभावः, किन्तु तस्याः भेदोक्तेः तेनाद्वैतपरिकल्पितानुमानेन विरोधोऽपि नेत्यर्थः । अनेन सौत्रश्चशब्दो व्याख्यातः ॥

( ३५ ) तत्र हेत्वाकांक्षायां सूत्रमुपन्यस्य व्याचष्टे—कामादिति ॥ 'हि' यतोऽभेदसाधनाय परोपन्यस्तं 'अनुमानं' अनुमानत्वेन पराभिमतं 'पृथक्' प्रत्यक्षादिविरुद्धं श्रुतिसाहाय्यरहितं च अतः 'तत्त्वे' विषये ज्ञानोपलक्षकमेतत् । तत्त्वज्ञानार्थे 'नापेक्ष्यते' तत्त्वज्ञानकारणं न भवतीत्यर्थः । न चाप्रयोजकता । 'हि' यतः 'यथाकामं' यथेच्छं ईश्वरो न स्वतन्त्रः चेतनत्वात् देवदत्तवत् । जड आत्मा वस्तुत्वादित्यादिरूपेण न तत्त्वे अतत्त्वेऽपि अनुमातुं शक्यते । अतः अनेन प्रत्यक्षादिविरुद्धस्यापि प्रमाणत्वे चेतनत्ववस्तुत्वादेरपि प्रमाणत्वं स्यात् अविशेषादिति विपक्षे बाधकतर्क उक्तो भवति । सूत्रे 'कामात्' इत्येकदेशोत्कीर्तनेन यथाकामादिति समग्रशब्दो लक्ष्यते ज्योतिश्शब्देन ज्योतिष्टोमशब्दवत् इत्याशयेन यथाकाममित्युक्तम् । हीत्यनेन पञ्चमी व्याख्याता । 'तत्त्वे' इत्यनेनास्मिन्नित्यस्याकर्षोऽध्याहारो वा ज्ञापितः । 'अनुमानम्' इत्यनेन 'नानुमा' इति भिन्नपदत्वं 'पृथक्' इत्यनेन नञो विरुद्धार्थकत्वमाश्रित्य 'नानुमा' इत्यैकपद्यं च सूचितम् । 'नापेक्ष्यते' इत्यनेन नशब्दघटितसमासमङ्गीकृत्य 'नापेक्षा' इत्यंशो व्याख्यातः । स्मृत्यनुसारेण सूत्रे भाष्ये च तत्त्वज्ञानासाधनत्वप्रकटनाय पराभिमतानुमाने साधनगोचरेच्छाविषयत्वनिषेधः । तथा चायं सूत्रार्थः—'अनुमा' अनुमानत्वेन पराभिमतमभेदसाधकमनुमानं 'अस्मिस्तत्त्वे' तत्त्वज्ञानार्थे 'नापेक्षा' न अपेक्षा यस्यां सा तथोक्ता त

गनुमानमपेक्ष्यते ।

( ३६ ) उक्तं च स्कान्दे—

यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः ।
पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित् । इति ।

---

त्त्वज्ञानकारणं न भवति । कुत एतत्? यतः इयमनुमा 'नानुमा' प्रत्यक्षादिविरुद्धानुमा । तद्विरुद्धाऽपि सदनुमा किं न स्यात्? न स्यात् । कुतः? 'यथाकामात्' अस्याः । काम इच्छा तदनुसारिप्रवृत्तिमत्त्वात् । तथा च प्रत्यक्षादिविरुद्धाया अपि प्रामाण्ये उक्तरीत्या अतत्त्वविषये प्रवृत्ताया अनुमाया अपि प्रामाण्यं स्यात्, अविशेषादिति भावः । यत एवमतो न द्वैतश्रुतेरनुमानविरोधोऽपीति ॥

( ३६ ) अत्रैव स्मृतिसम्मतिमाह—उक्तं चेति ॥ चः समुच्चये । न केवलं सूत्रकृता, स्कान्देऽप्युक्तमिति । किमुक्तमित्यतस्तत्पठति—यथेति । पदार्थानतिवृत्त्यर्थोऽयं यथाशब्दः । लिङ्गमार्षम् । यद्वा—नायमव्ययीभावः, किन्त्वनतिक्रान्तः कामो ययेति बहुव्रीहिसमासः । प्रवर्तत इति शेषः । अपवृत्तं विरुद्धं गं गमनं यस्याः सा अपगा, न अपगा अनपगा इति विग्रहः । तथा च यस्मात् 'अनुमा' श्रुत्यादिविरुद्धं पृथगनुमानं 'यथाकामा' काममनतिक्रम्य प्रवर्तते । पुरुषेच्छानुसारेण प्रवृत्तिमतीति यावत् । तस्मात् 'श्रुतेरनपगा' श्रुत्यनुकूला तदविरुद्धैव सा 'पूर्वापराविरोधाय' श्रुतेः पूर्वोत्तरवाक्यविरोधपरिहारार्थं 'इष्यते' अपेक्ष्यते । न केवलमतीन्द्रियार्थतत्त्वनिश्चयायेति चशब्दार्थः । क्वचिदन्यथा चेत् यत्र श्रुत्याद्यानुकूल्यं तदविरोधः, पूर्वोत्तराविरोधश्च नास्ति तत्र सा अनुमा न मानत्वेनेष्यते मूलाभावात् प्रमाणविरोधात् प्रयोजनाभावाच्चेति योजना । यद्वा—श्रुतेरनपगा अनुमा पूर्वोत्तराविरोधाय तत्त्वनिश्चयाय च कारणतयेष्यते । नान्यथा नान्या पृथगनुमा क्वचिद्वाक्येऽपि । कुतः? यत् सा अनुमा केवलानुमा यथाकामा तस्मादिति योज्यम् । यथाकामानुमेत्येकं पदं वा । यथाकामा च सा नुमेति विग्रहः । तथात्वे—यस्मादेषाऽनपगा न तस्मात्सा नोक्तफलार्थमपेक्ष्यते । 'अन्यथा' युक्तिं विना नेत्यावृत्त्याऽन्वयः । अतएव सुधायां—'यथायोग्याखिलज्ञता' इत्येकं पदमित्युक्तम् । इतिशब्दस्य स्कान्द इत्यनेनान्वयः ॥

( ३७ ) 'नैषा तर्केण मतिरापनेया' ( कठ. २-९. ) इति च॥

( ३८ ) सू—ॐ॥ अस्मिन्नस्य च तद्योगं शास्ति॥ ॐ॥ १९॥
अस्य जीवस्य। युक्तिसमुच्चये चशब्दः। 'सोऽश्नु
ते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' ( तै.२-
१. ) 'अनिलयनेऽभयं प्रतिष्ठां विन्दते' (तै.२-७.)

( ३७ ) स्पष्टोक्तित्वात्प्रथमं स्मृतिमुपन्यस्यात्रैव अर्थे श्रुतिसम्मतिं चाह—नैषेति॥ आऽपनेयेत्यत्र आ अपेति विच्छेदः। विरुद्धार्थयोरुपसर्गयोः क्रमेण सम्बन्धः। तथा च 'एषा' परब्रह्मविषया 'मतिः' शुष्कतर्केण 'आनेया' उत्पाद्या 'अपनेया' निराकार्या च न भवतीत्यर्थः। 'प्रोक्ताऽन्येन सुज्ञानाय प्रेष्ठ' इति वाक्यशेषः। प्रेष्ठेति नचिकेतसं प्रति यमस्य सम्बुद्धिः। 'अन्येन' अन्यत्वज्ञानिना जीवेश्वरादिभेदज्ञानिना भगवद्भक्तयादिमतेति यावत्। आचार्येण 'प्रोक्ता' तदुपदेशाज्जाता 'सुज्ञानाय' स्यादित्यर्थः। इति चेति चः समुच्चये। तथा च इति कठश्रुतौ चोक्तमिति सम्बन्धः॥

( ३८ ) नन्वस्त्वानन्दमयेन ब्रह्मणा हिरण्यगर्भादिजीवानां भेदः। तथापि सः व्यावहारिकः संसार एवास्ति, न पारमार्थिको मुक्तावपि। उदाहृतश्रुतीनां सांसारिकभेदपरत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रं पठति—अस्मिन्निति॥ अत्रास्येति नानन्दमयपरामर्शः। किन्तु नेतर इत्युक्तजीवस्येत्याह—अस्येति। अस्यान्यस्य चेति प्रतीतिनिरासाय चशब्दं व्याख्याति युक्तीति। अस्तीति शेषः। किं तद्योगशासनमित्यत आह—सोऽश्नुत इति। क्रियाविशेषणमेतत्। लुप्तविभक्तिको वा निर्देशः। तथा च 'इत्यादि शास्ति' इत्यादिना शास्तीति वाऽन्वयः। अनेन न केवलं भेदव्यपदेशादानन्दमयेन जीवानां भेदः सिद्धः। किं नाम? यतोऽस्मिन् प्रकरणे अस्य जीवस्यानेनानन्दमयेन सह 'अस्मिंश्च' मोक्षेऽपि 'योगं' सम्बन्धं श्रुतिः शास्ति अतोऽपि। अतो न तदैक्यं जीवानां नापि सांसारिक एव भेदः। न चैतावता कथं भेदसिद्धिः। सम्बन्धस्य भेदसापेक्षत्वात्। यद्वा—यस्मात् 'अस्मिन्' प्रकरणद्वयेऽपि 'अस्य' जीवस्य 'तद्योगं' तैरानन्दमयाद्यैर्योगं सम्बन्धं 'शास्ति' प्रतिपादयति फलत्वेन श्रुतिरिति शेषः। तस्मादानन्दमयो न जीवकोशादिरिति सूत्रार्थ उक्तो भवति। 'सः' ब्रह्मज्ञानी

'एतमानन्दमयमात्मानमुपसङ्क्रामति' ( तै. २-८. )

इत्यादि ॥ ६ ॥

---

७. अधिकरणम् ॥

( १ ) 'अदृश्येऽनात्म्ये' इत्युक्तम्। तच्चादृश्यत्वं 'अन्तःप्रविष्टं कर्तारमेतम्। अन्तश्चन्द्रमसि मनसा चरन्तम्। सहैव

---

'विपश्चिता' सर्वज्ञेन ज्ञातेनैव 'परब्रह्मणा' चतुर्मुखेन च सह 'सर्वान्' स्वयोग्यकामान् 'अश्नुते' मुक्तौ प्राप्नोतीति श्रुत्यर्थः। 'अदृश्येऽनात्म्ये' इति वाक्यं तु प्रागेव व्याख्यातम्। देहादुत्क्रान्तो जीवः 'एतं' 'आनन्दमयं' पूर्णानन्दं परमात्मानं 'उपसङ्क्रामति' तत्समीपं प्राप्नोतीत्यनुवाकान्तरगततृतीयवाक्यस्यार्थः ॥

॥ इत्यानन्दमयाधिकरणम् ॥

---

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे अधिदैवगतान्यत्रप्रसिद्धेन्द्रादिनामसमन्वयसिद्ध्यर्थं देहान्तस्थत्वरूपलिङ्गसमन्वयः क्रियत इति शास्त्राध्यायपादसङ्गतयः सिद्धा इत्याशयेन पूर्वाधिकरणतद्विषयवाक्यसङ्गती दर्शयति—अदृश्य इति ॥ पूर्वाधिकरणोदाहृते 'अदृश्ये अनात्म्ये' इति वाक्ये आनन्दमयस्य कात्स्न्र्येनाज्ञेयस्वरूपमदृश्यत्वमुक्तमित्यर्थः। ततः किमित्यत आह—तच्चेति। चशब्द एवार्थे। तथा च यत्पूर्वोक्तमदृश्यत्वं तदेव 'अन्तःप्रविष्टम्' इति वाक्येन विजानन्तीत्यनेन कस्य चिदन्तस्थस्योच्यते। देवाज्ञेयत्वात्कैमुत्येन प्रतिपाद्यत इत्यर्थः। अनेनान्तस्थत्वमुखेनादृश्यत्वानन्दमयत्वयोरन्यनिष्ठत्वाक्षेपात् पूर्वाधिकरणे नास्याक्षेपिकी सङ्गतिरुक्ता भवति। हृदयगुहान्तःप्रविष्टं जगत्कर्तारं चन्द्रमस्यन्तर्मनसा स्वेच्छया चरन्तं सहैव स्थितं एतं देवास्तत्त्वाभिमानिनः कात्स्न्र्येन न विजानन्तीति श्रुत्यर्थः। पूर्वपक्षे त्वियमन्यपरा। तत्र सयुक्तिकं पूर्वपक्षमाह—स चेति। चशब्दोऽवधारणे। अन्य इत्यावर्तते। तथा च सोऽन्तस्स्थो विष्णोः 'अन्यः' अन्य एव भवेत्, कुतः? 'इन्द्रो राजा' इत्यादिवाक्यैर्यतोऽन्योऽन्तःस्थतया प्रतीयते अत इति योजना। आदिशब्देन

अपां नेतारं भुवनस्य गोपाम्।

सन्तं न विजानन्ति देवाः' (तै.आ.३-११.) इत्यन्तःस्थस्य कस्य चिदुच्यते। स च 'इन्द्रो राजा'.. (तै.आ.३-११-६.) 'सप्त युञ्जन्ति' (तै.आ.३-११-८.) इत्यादिभिरन्यः प्रतीयते। तस्मात्स एवानन्दमय इति न मन्तव्यम्॥

---

त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम्।
ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम्।
चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्।

इत्यादि वरुणत्वष्ट्रग्न्यादिप्रापकतत्तच्छ्रुतिलिङ्गघटिततैत्तिरीयवाक्यानि गृह्यन्ते। पूर्वपक्षफलमाह—तस्मादिति। इदं चावर्तते। प्रसज्यत इति शेषः। तथा च 'तस्मात्' अन्तस्स्थस्य विष्णवन्यत्वात् 'सः' अदृश्योऽन्य एव प्रसज्यते। तस्मादन्यस्यादृश्यत्वात् 'सोऽन्य एव' इन्द्राद्यन्यतम आनन्दमयः प्रसज्यते न विष्णुरिति योजना। राजा य इन्द्रो जगतः 'ईशे' ईष्टे जगदीश्वरत्वेन वर्तत इत्यर्थः। यस्मादीशे ईष्टे तस्माज्जगतो राजेति वा। एतदुत्तरस्य 'सप्तहोता' इति पदस्य सप्त बुद्धीन्द्रियाणि विषयेषु जीवेन जुहोतीति सप्तहोता। विषयानिन्द्रियैः जीवेन वेत्त्यर्थः। 'सप्त युञ्जन्ति' इति वाक्ये आद्यार्धस्य 'सप्त' च्छन्दांसि गायत्र्यादीनि अश्वरूपाणि 'एकचक्रं' सूर्यरथं प्रति स्वात्मानं युञ्जन्ति रथे युक्तानि भवन्तीत्यर्थः। सप्तच्छन्दोऽभिमानिना पृथग्वेदाभिमानी सप्तच्छन्दो नामा एकः प्रधानोऽश्वोऽस्ति। 'छन्दोभिमानिना पृथग्वेदाभिमानी सप्तच्छन्दो नामा सप्तस्वेकोऽस्ति' इति तत्त्वप्रदीपोक्तेः। अत एव 'सप्त युञ्जन्ति..एको अश्वो वहति सप्तनामा' इत्यनयोर्न विरोधः। सूर्यरथचक्रस्य स्थितिमाह—त्रिनाभीति। त्रिरावृत्तमासचतुष्टयात्मकनाभित्रयोपेतं 'अजरं' सदा दृढं अर्वशब्दितेभ्यो वाजिभ्यो दूरस्थत्वादनर्वं चक्रं सूर्यरथस्यास्तीत्यर्थः। चक्रस्य मानसोत्तरगिरिशिखरवलयपरिवर्तित्वात् अर्वतां मेरुमानसोत्तरमध्याकाशगामित्वाद्दूरस्थत्वं युक्तम्। येन 'यत्र' चक्रे 'इमा' इमानि विश्वानि सर्वाणि भुवनानि 'तस्थुः' स्थिताः इत्युत्तरार्धस्यार्थः। जगतः 'प्रतिष्ठां' आश्रयं 'चतुर्होतारं' अन्तःकरणचतुष्टये विषयाणां होतारं 'प्रदिशः' प्रतिदिशं 'अनुक्लृप्तं' व्यवस्थितं 'वाचः' वेदस्य 'वीर्यं' सारं मुख्यार्थं 'इन्द्रं अग्निं' 'दिवो' देव्याः 'आत्मानं'

( २ ) सू—ॐ ॥ अन्तस्तद्धर्मोपदेशात् ॥ ॐ ॥ २० ॥
अन्तः श्रूयमाणो विष्णुरेव । 'अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे' ( तै. आ. ३ - ११ - १. ) 'समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति

स्वामिनं वायुं 'सवितारं बृहस्पतिं' 'ब्रह्मा' हिरण्यगर्भः तपसा 'अन्वविन्दत्' लब्धवानित्यर्थः । सिद्धान्तयति—इतीति ॥

( २ ) कुतो न मन्तव्यमित्यतस्तत्र हेतुत्वेन सूत्रमुपन्यस्य व्याचष्टे—अन्तरिति ॥ सूत्रेऽन्तरित्युद्देश्यभागे अपेक्षितं पदमध्याहृत्य दर्शयति—श्रूयमाण इति । अन्तस्स्थत्वेन श्रुत्योच्यमान इत्यर्थः । विधेयसमर्पकस्यानुवृत्तस्य तत्तु, इत्यस्यार्थमाह—विष्णुरेवेति । तैत्तिरीयोपनिषद्गतभिन्नभिन्नवाक्योदाहरणपूर्वकं हेत्वंशं व्याचष्टे—अन्तरिति । इत्यादीति । तस्य धर्मास्तद्धर्माः तेषामुपदेशो वचनं इत्यादिरूपश्चासौ तद्धर्मोपदेशश्च इत्यादितद्धर्मोपदेशः तस्मादित्यर्थः । यद्वा—लुप्तविभक्तिकोऽयं निर्देशः । तथा चेत्यादेरुपदेशादित्यर्थः । समुदायैकवचनमेतत् । अनेन 'अन्तःप्रविष्टम्' इति वाक्ये 'अन्तःश्रूयमाणो' इदयान्तस्स्थत्वेन श्रुत्युक्तो विष्णुरेव, न त्वन्यः । कुतः? तस्य विष्णोर्धर्माणां क्षीरप्रलयाब्धिस्थत्वब्रह्मज्ञेयत्वब्रह्मतपोलभ्यत्वब्रह्माण्डवीर्यत्वादिरूपाणां 'तस्मिन्' अन्तःश्रुते तेनान्तरित्यादिना 'उपदेशात्' उक्तत्वादिति सूत्रार्थ उक्तो भवति । उपदेशादित्यन्तस्य सूत्रस्य तस्मादन्य एवेति न मन्तव्यमित्यनेनान्वयः । 'ब्रह्मा' वर्तमानचतुर्मुखः 'समुद्रे' प्रलयाब्धौ क्षीराब्धौ च 'अन्तरर्णे' जले क्षीरे च 'मनसा' स्वेच्छया सञ्चरन्तं 'दशहोतारं' ज्ञानकर्माख्यदशेन्द्रियेषु विषयहोतारं तत्तद्विषयस्थापकं दशेन्द्रियाणि जीवेन विषयेषु जुह्वतं वा विष्णुं 'अन्वविन्दत्' व्यजानात् । 'कवयो' ज्ञानिनः 'समुद्रे' क्षीरप्रलयाब्ध्योरन्तःस्थितं विचक्षते जानन्ति । 'वेधसो' भूतभविष्यद्ब्रह्माणः 'मरीचिर्मितरुक्त्वतः' इति छान्दोग्यभाष्योक्तेः । प्रमितरुक्त्वनिमित्तात् मरीचिपदोक्तानां जीवानां पदं आश्रयं विष्णुं इच्छन्ति प्रार्थयन्ति । तत्त्वप्रदीपरीत्या 'कवयः' सन्तः 'वेधसो' विचक्षते विचक्षणाय ज्ञानाय मरीचीनां पदं विष्णुं इच्छन्तीत्येकान्वयो वा । कवयः 'अण्डकोशं' ब्रह्माण्डाख्यस्थानं 'यस्य' विष्णोः 'शुष्मं' वीर्यं तदुपादानकमाहुरिति श्रुत्यर्थः । विरिञ्चिवाक्यस्यास्य 'प्राण उल्बं तेन

वेधसः' (तै.आ.३-११-११.) 'यस्याण्डकोशं शुष्ममाहुः' ( तै. आ. ३ - ११-४. ) इत्यादितद्धर्मोपदेशात्। स हि क्षीरसमुद्रशायी।

( ३ ) तस्य च वीर्यमण्डकोशः।
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।

---

क्लृप्तो अमृतेनाहमस्मि' इति वाक्यशेषः। तस्य 'उल्बं' जरायुः 'प्राणः' अन्तःप्रावरणं येन सहैव जायते। 'तेन' अमृतेन 'अहं' क्लृप्तोऽस्मीत्यर्थस्तत्त्वप्रदीपेऽभिहितः। क्षीरसमुद्रस्थत्वस्य विष्णुलिङ्गत्वं कुत इत्यत आह—स हीति। 'सः' विष्णुः हिशब्देन लोकप्रसिद्धत्वादिति हेतुः सूचितः॥

( ३ ) अस्तु विष्णोः क्षीराब्धिस्थत्वं लिङ्गं प्रसिद्धत्वात्, तथाऽपि प्रलयार्णवस्थत्वस्य ब्रह्माण्डवीर्यत्वस्य च कुतो विष्णुधर्मत्वमित्यत स्तयोर्विष्णुधर्मत्वे प्रमाणं वक्तुं प्रतिजानीते—तस्येति ॥ 'अण्डकोशो' ब्रह्माण्डाख्यस्थानं 'तस्य' विष्णोर्वीर्यमित्यर्थः। चशब्दात्सः प्रलयसमुद्रशायीति प्रतिज्ञा सूच्यते। तस्यैवेत्यवधारणे वा चशब्दः। तथात्वे प्रतिज्ञान्तरमुपलक्षणीयम्। अत एव प्रलयाब्धिशायित्वे 'आपो नाराः' इति पश्चात्प्रमाणोपन्यासः। श्रुतावाण्डकोशशब्दश्रवणेऽपि प्रत्ययस्य स्वार्थिकत्वात्तस्यानेनाण्डकोश इत्येवानूदितम्। श्रुतावपि तथैव छेदो वा। 'सः' वासुदेवात् जातो विष्णुः 'स्वात्' स्वकीयाच्छरीरात् विविधाः प्रजाः 'सिसृक्षुः' स्रष्टुमिच्छुः 'अभिध्याय' विचिन्त्य 'आदौ' अण्डसृष्टेः पूर्वमेव 'अपः' तदावरणरूपाः ससर्ज। तास्वप्सु वीर्यं 'अवासृजत्' न्यधात् मायाद्वारेति शेषः। 'हैमं' हिरण्यात्मकं 'सहस्रांशुसमप्रभं' सूर्यसमप्रकाशं 'तत्' वीर्यं ब्रह्माण्डाख्यमभवत्। 'यस्मिन्' अण्डे 'सर्वलोकपितामहो' ब्रह्मा चतुर्मुखः 'स्वयं' स्वतन्त्रात् हरेः साक्षाज्जज्ञे इत्यर्थः। यतः आपो 'नरसूनवः' नरस्य विष्णोस्सूनवः। 'विष्णुर्नरो नाशात्परो यतः' इति भागवततात्पर्योक्तेः। अतो नाराः प्रोक्ताः येन कारणेन 'पूर्वे' प्रलये 'ताः' आपः तस्य विष्णोः अयनं 'तेन सः नारायणः स्मृतः' तच्छब्दवाच्यत्वेन स्मृत्युक्त इत्यर्थः। यद्यपि—

यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।
इति व्यासस्मृतेः ।

( ४ ) 'अहं तत्तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषा त्प्रकृतिर्जगदण्डम्' इति चतुर्वेदशिखायाम् ॥ २० ॥

---

पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः ।
आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥

इति भागवते ।

अण्डं प्रविष्टो यो विष्णुः सोऽण्डं भित्त्वा प्रकाशितः ।
सोऽपोऽसृजत्ततो नारा . . ।

इति भागवततात्पर्ये चाण्डसृष्ट्यनन्तरं अप्सृष्टिरुच्यते । तथाऽपि सा बहिःसृष्टेरन्याऽऽन्तरेति न विरोधः । इतीत्यस्य 'तस्य च वीर्यमण्डकोशः, स हि प्रलयसमुद्रशायी यतः' इति पूर्वेणान्वयः ॥

( ४ ) इतश्च ब्रह्माण्डजनकवीर्यत्वं प्रलयस्थत्वं च तस्यैव ज्ञायत इत्याह—अहमिति ॥ 'त्रिपुरुषं मायाबीजमजायत' इति वाक्यशेषः । तदिति व्याप्तिवचनोऽसर्वनामशब्दः । अथवा सर्वनामशब्दः, अत एव टीकायां तद्हेयमिति व्युत्क्रमः कृतः । तथा च तत्प्रसिद्धं व्याप्तं वा 'अहं' अहेयं रतिः शं च मितमस्येति रश्मिर्जीवः तमिन्दयति प्रेरयतीति रश्मीत् जीवप्रेरकं, इन्द् प्रेरणे इति धातोः अयं दकारान्तः शब्दः । अनुकृत्यधिकरणे तु—इन्धी दीप्ताविति धातुव्याख्यानात् रश्मीत् भगवदपेक्षया रश्मिरूपाणां अल्पानां सूर्यादितेजसां प्रकाशकमिति व्याख्यातम्, तत्र धकारान्तोऽग्निच्छब्दवदयं शब्दो ज्ञातव्यः । 'तेजः' जगत्प्रकाशकं 'पुरुषं' पूर्णषड्गुणं नारायणं तदाख्यं ब्रह्म तेज इति वा । 'अग्रतः' प्रलये 'जातं' स्थितं तस्मान्नारायणाख्यपुरुषात् 'अग्रतः' प्रथमं 'प्रकृतिः' चेतना जायते गच्छतीति जगत् जीवसमुदायः, जातमित्यस्योभयत्र यथायोग्यं सम्बन्धः । जनिश्च यथायोग्या ग्राह्या । पश्चात् 'अण्डं च' 'त्रिपुरुषं' ब्रह्मवायुरुद्राख्यपुरुषत्रययुक्तं 'मायाबीजं' प्रकृत्युपादानकं अजायतेति तत्त्वप्रदीपादिशा श्रुत्यर्थः । चतुर्वेदशिखायां इत्यस्य वचनादित्यध्याहारेण तस्येत्यनेनान्वयः ॥

( ५ ) सू—ॐ ॥ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥

'इन्द्रस्यात्मा निहितः पञ्च होता' ..'वायोरा त्मानं कवयो निचिक्युः' ..'अन्तरादित्ये मनसा चरन्तम्, देवानाꣳहृदयं ब्रह्मान्वविन्दत्' (तै.आ. ३-११.) इत्यादिभेदव्यपदेशात् ॥ २१ ॥

---

( ५ ) यद्येवं समुद्रस्थत्वादिलिङ्गादन्तस्स्थो विष्णुः, तर्हि तेनान्तस्स्थेन विष्णुना इन्द्रादीनामभेदोऽत्र विवक्षितोऽस्तु । इन्द्रादिप्रापकश्रुत्यादेरपि सद्भावात् । श्रुत्यादेश्च स्वभावतो लिङ्गस्य निरवकाशतया बलवत्त्वेनान्यतरबाधेनान्यतरपक्षनिर्णयायोगात् । एवं च पूर्वोत्तरपक्षद्वये अन्योन्यं बाध्यबाधकभावशून्ये सति तदन्यथानुपपत्त्या अन्तःस्थेन विष्णुनेन्द्रादीनामभेदः प्राप्त इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—भेदेति ॥ तैत्तिरीये—'इन्द्रस्य' इत्येको भेदव्यपदेशः । 'वायोः' इत्यन्यः । 'अन्तः' इत्यपरः । 'देवानाम्' इति चेतरः । आदिशब्देन 'अमृतं देवानामायुः प्रजानामिन्द्रं राजानं सवितारम्' इत्यादिकं गृह्यते । व्यपदेशादित्यस्यान्य इति सौत्रप्रतिज्ञयाऽन्वयः ॥ अनेन सूत्रे विधेयसमुच्चयार्थकचशब्दस्य भिन्नक्रमेण अन्वयेन न केवलमन्तश्श्रूयमाणो विष्णुः, किन्त्विन्द्रादिभ्योऽन्यश्च । कुतः ? तस्येन्द्राद्यन्तर्यामित्वतदन्तस्स्थत्वकथनेन तेभ्यो भेदोक्तेरिति सूत्रार्थ उक्तो भवति । अत्र श्रुताविन्द्रशब्दोऽन्यपरः ; षष्ठीश्रवणात् । 'इन्द्रो राजा' इत्यादौ तु इन्द्रादिशब्दाः परममुख्यवृत्त्या विष्णुपरा एव, बाधकाभावात् । तथा च मनो विहाय पञ्चसु ज्ञानेन्द्रियेषु शब्दादिविषयहोता तैर्विषयानुभावकः । इन्द्रस्यात्मा अन्तर्यामी आदानादिकर्ता वा । सर्वहृदयेषु 'निहितः' सन्निहितः 'कवयो' ज्ञानिनः 'वायोरात्मानं निचिक्युः' ददृशुः आदित्येऽन्तः 'मनसा' स्वेच्छया संचरन्तं विष्णुं कवयः अन्वविन्दन् । 'ब्रह्मा' चतुर्मुखः देवानां हृदयनात् स्थितेः प्रवर्तनाद्वा हृदयं विष्णुं 'अन्वविन्दत्' अपश्यदिति श्रुत्यर्थः ॥

॥ इत्यन्तस्स्थत्वाधिकरणम् ॥ ७ ॥

८. अधिकरणम् ॥

( १ ) 'को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आन
न्दो न स्यात्' ( तै-२-७. ) इति आकाशस्यानन्द
मयत्वे हेतुरुक्तः न तु विष्णोः।

( २ ) इति न मन्तव्यम्। यतः—

सू—ॐ॥ आकाशस्तल्लिङ्गात् ॐ॥ २२॥

८. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवति लोकतोऽन्यत्रप्रसिद्धाकाशपदोपलक्षिताधिभौतिकाशेषशब्दसमन्वयः क्रियते। फलकथनेन पुर्वपक्षः सूचितो भवतीत्याशयेन पुर्वपक्षफलमाह—को हीति॥ इतीति। इत्यानन्दमयाधिकरणोदाहृतवाक्येनेत्यर्थः। तुशब्दस्याकाशस्य त्विति सम्बन्धः। तथा च छन्दोगश्रुत्युक्ताकाशाभिन्नाकाशस्यैवेत्यर्थः। 'आनन्दमयत्वे' पूर्णानन्दत्वेन निमित्तेन आनन्दमयशब्दवाच्यत्वे 'हेतुः' लोकचेष्टकत्वरूपः। तुशब्दार्थैवकारव्यावर्त्यमाह—नेति। अनेन विष्णुभिन्नभूताकाशस्यैव छन्दोगश्रुत्युक्ताकाशशब्दवाच्यत्वमिति पुर्वपक्षे 'को हि' इति तैत्तिरीयश्रुत्युक्तोऽपि स एवेति तदुक्तहेतुना तस्यैवानन्दमयत्वं सिध्यति, न विष्णोरिति फलमुक्तं भवति। पूर्वसङ्गतिस्त्वधिकाशङ्कां कृत्वाऽत्र पूर्वन्याय एवातिदिश्यत इत्यातिदेशिकी द्रष्टव्या॥

( २ ) सिद्धान्तयति—इतीति॥ कुतो न मन्तव्यमित्याशङ्कायां तत्र हेतुतया सूत्रमुपादत्ते। यत इति। इदं चावर्तते। तत्राद्यस्य 'यत ओदेति' इतिवत् कुत इत्यर्थः। 'यच्छब्दस्तु परामर्शे प्रश्नार्थेऽपि च भण्यते' इति भागवततात्पर्योक्तेः। द्वितीयस्तु न मन्तव्यमिति प्रतिज्ञायां सूत्रार्थस्य हेतुत्वद्योतकः। विषयादेः पूर्वपक्षफलकथनेन सूचनेऽपि मुखतोऽनुक्तेः तदनुवादपूर्वकं सूत्रं व्याचष्टे—अस्येति। 'इत्यत्र' वाक्ये प्रतिपाद्यत्वस्येति शेषः। चोऽप्यर्थः। यद्यपि तथापीत्यर्थे। 'असौ' आकाशोऽत्र वाच्य इति शेषः। सूत्रेऽनुवृत्तस्य 'तत्तु' इत्यस्यार्थो विष्णुरेवेति। इत्यादीति। लुप्तविभक्तिको निर्देशः आदिशब्दात् 'सर्वाणि भूतानि' इत्यादिजगत्कारणत्वप्रतिपादकं वाक्यं गृह्यते। यथोक्तं तत्त्वप्रदीपे—"'सर्वाणि भूतानि' इत्यादिना उदीर्यमाणं जगदुत्पादकत्वादिकमादिशब्दादुपाददीत" इति। लिङ्गपदं श्रुत्युप

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छा- १-९. ) इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु, विष्णुरेव । 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा.१-९. ) इत्यादितल्लिङ्गात् ।

लक्षकम् । तथा चेत्थं योजना–यद्यपि 'अस्य लोकस्य' इति छन्दोग वाक्ये भूताकाशस्य श्रुत्यादिबलादस्ति प्रतिपाद्यत्वस्य प्राप्तिः । तथाऽपि नासावत्र वाक्ये आकाशपदेन वाच्यो युज्यते, किन्तु—विष्णुरेव । कुतः? 'स एषः' इत्यादिवाक्ये 'तल्लिङ्गात्' तस्य विष्णोर्लिङ्गम साधारणधर्मः परोवरीयस्त्वादिः । तस्य तस्मिन्नाकाशे श्रवणादुक्तत्वात् । यत एवं तल्लिङ्गात् असौ छन्दोगश्रुत्युक्ताकाशो विष्णुरेव, तत एव 'को हि' इति तैत्तिरीयवाक्येऽप्यसावेव प्रतिपाद्यत इति तस्यैवानन्दमयत्वे हेतुरुक्तो न तु भूतस्य । अतो भूताकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यमिति । अनेन सूत्रयोजना दर्शिता । अस्येत्यादेरयमर्थः—'अस्य' प्रत्यक्षसिद्धस्य पृथिवीलोकस्य तदभिमानिनश्चतुर्मुखस्य 'का गतिः' आश्रय इति शिलकेन पृष्टः प्रवाहणो राजा आदीप्तत्वादाकाशनामको विष्णुरिति प्रत्युवाच । कथमित्याकांक्षायां तदुपपादनाय तस्याकाशस्य महिमानमाह—'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परो वरीयानुद्गीथः स एषोऽनन्तः' इति । अत्र वैशब्दस्य प्रसिद्धिद्योतकस्य सन्निहितसर्वभूतान्वयो वा, 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः' इत्यभिधानादवधारणार्थत्वं वा द्रष्टव्यम् । भूतशब्दो भूताकाश एवात्रोच्यते इति पूर्वपक्षे आकाशव्यतिरिक्तभूतपरः । सिद्धान्ते तु सर्वभूतपरः । ब्रह्मादिसर्वजगत्परो वा । तथा च 'सर्वाणीमानि' प्रमितानि आकाशादिभूतानि ब्रह्मादिजगद्वा आकाशादेव समुत्पद्यन्ते । 'हवै' प्रसिद्धं हि । आकाशं 'प्रत्यस्तं' अदर्शनं 'यन्ति' तत्रैव प्रलये मुक्तौ च लीनाः भवन्ति । कुतः? 'हि' यस्मादाकाश एव 'एभ्यो' ब्रह्मादिभ्यो 'ज्यायान्' अधिकोत्तमः । कुत एतत्? यत आकाशः 'परायणं' उत्तमाश्रयः नैतस्मादुत्तमं वस्त्वाशङ्क्यमिति भावेनाह—स इति । 'स एषः' आकाशनामा भगवान् 'परोवरीयान्' अत्र—

( ३ ) 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' ( ऋ.१-१५४-१. ) 'परो मात्रया तन्वा वृधान' ( ऋ.७-९८-१. ) इत्यादिना तस्यैव हि त लिङ्गम् ।

---

परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परो वरं परं तस्मात्प्रोक्तं पारोवरीयकम् ।

इति सामसंहितावचनानुसारेणादौ पर इति शब्दान्तरस्य मध्ये वर शब्दान्तरस्य च आवापेन वृत्तिवाक्ये सुबादेशस्य सोरलोपेन रुत्वोत्वगुणेषु समाने परे ओपशब्दद्वयस्य लोपे चोत्तमोत्तमोत्तम इत्यर्थो ज्ञातव्यः । 'उद्गीथः' उच्चत्वेन गीत उक्तो वेदेन । तकारस्य थकारो व्यत्ययात् । 'स एषः' आकाशः 'अनन्तो' देशकालगुणैरपरिच्छिन्न इति । छान्दोग्यभाष्ये तु 'उच्चत्वाद्गीतत्वात्सर्वस्थानस्थत्वादुद्गीथो भगवान्' इति व्याख्यातम् ॥

( ३ ) 'स एषोऽनन्तः' इत्युक्तानन्तत्वस्यापरिमितत्वस्य विष्णुनिष्ठत्वं कुतो ज्ञायत इत्यत आह—विष्णोरिति ॥ विष्णोर्वीर्याणि 'कं' कोऽनु को वा 'प्रवोचम्' प्रावोचत् । साकल्येन प्रवक्ति न कोऽपि । 'यः' कः कविर्ब्रह्मा 'पार्थिवानि रजांसि' पार्थिवपरमाणून् 'विममे' गणयति । सोऽपि न प्रवक्तीति श्रुत्यर्थः । 'परोवरीयान्' इत्युक्तसर्वोत्तमत्वस्य विष्णुधर्मत्वं कुत इत्यत आह—पर इति । अत्र 'न ते महित्वमन्वश्नुवन्ति' इति उत्तरवाक्यादुक्तार्थो ज्ञायते । अत एवादिशब्द उभयान्वयी । तत्राद्यो 'विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि' इति स्मृतिग्राही । व्याख्यातेयं श्रुतिर्जन्मनये । इत्यादिना वाक्येनेति शेषः । यद्यपि श्रुत्यनुसारात्सर्वोत्तमत्वे प्रथमं प्रमाणं वक्तव्यं न तु अनन्तत्वे । अत एव टीकायामादौ सर्वोत्तमत्वं गृहीतम् । तथाऽपि अनन्तत्वस्य सावकाशत्वशङ्काविषयत्वात्प्रथमं तत्र प्रमाणोपन्यासः । अत एव तत्रैवोत्तरत्र स्मृत्या सावकाशत्वशङ्कापरिहारः । 'तस्य' विष्णोः हिशब्दो यत इत्यर्थे । 'तत्' अनन्तत्वादि 'लिङ्गं' धर्म इत्यवगतम् । अतो न हेतुविशेषणासिद्धिरिति वाक्यशेषः । एवकारपाठे नानैकान्त्यमिति शेषः । उत्तरत्रान्वयो वा । यद्यपि 'अनन्तः' इति श्रुतिः ; वाचकशब्दत्वात् । तथाऽपि तत्पदप्रवृत्तिनिमित्तस्य लिङ्गत्वमप्यविरुद्धम् ॥

(४) अनन्तो भगवान् ब्रह्मा आनन्देत्यादिभिः पदैः ।
प्रोच्यते विष्णुरेवैकः परेषामुपचारतः ।
इति ब्राह्मे ।

(५) 'नामानि सर्वाणि यमाविशन्ति' (भाल्लवेय) इति चोक्तम् ॥ २२ ॥

——*✲*——

९. अधिकरणम् ॥

(१) सू—ॐ ॥ अत एव प्राणः ॥ ॐ ॥ २३ ॥

(२) तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः ।

---

(४) नन्वनन्तत्वं 'अनन्ताकाशवत्पश्यन्' इत्याकाशस्यापि स्मर्यते, अतः सावकाशत्वात्कथं विष्णोरेव तल्लिङ्गमित्यतः स्मृतिमाह—अनन्त इति ॥ आनन्देति लुप्तविभक्तिको निर्देशः । विष्णुरेवैको मुख्यतया प्रोच्यत इति सम्बन्धः । 'परेषां' विष्णोरन्येषां 'उपचारतः' स्वस्वसमीपगतपरमात्मसम्बन्धादेव वाच्यतेति शेषः । इति ब्राह्म इत्यस्य तस्यैव तल्लिङ्गमित्युक्तमिति पूर्वेणान्वयः । अनेनैवकारो लिङ्गस्य निरवकाशत्वज्ञापक इति सूचितम् ॥

(५) ननु श्रुत्या पूर्वपक्षिते कथं लिङ्गेन निर्णयः । लिङ्गस्य श्रुतितो दुर्बलत्वादित्यतः आकाशश्रुतिर्विष्णौ सावकाशेति श्रुत्या दर्शयति—नामानीति ॥ 'चो' यतो 'नामानि सर्वाणि' इति वाक्येन विष्णोराकाशादिसर्वशब्दवाच्यत्वमुक्तम्, अतो लिङ्गेन श्रुतेर्बाधया निर्णयो युक्त इति योजना ॥

॥ इत्याकाशाधिकरणम् ॥ ८ ॥

——:✲:——

९. अधिकरणम् ॥

(१) अत्राधिकरणे लोकतोऽन्यत्र प्रसिद्धाध्यात्मिकाशेषशब्दोपलक्षकप्राणशब्दस्य ब्रह्मणि समन्वयः क्रियते । सर्वत्रादौ सूत्रं पाठ्यम् । पश्चात्सङ्गत्यादिकं वक्तव्यमिति सूचयितुमत्र सूत्रमादावेव पठति—अत एवेति ॥

(२) विषयवाक्योदाहरणपूर्वकं पूर्वाधिकरणेन सङ्गतिं विषयसंशयौ च सूचयति-तदिति ॥ अत्र यत्तदोरावृत्तिः । भुज्यत इति भोगः आनन्दः । तेन तद्वानुपलक्ष्यते, धर्मधर्मिणोरभेदविवक्षा वा । तथा च हे

भुजः करिष्यमाणः यद्देवान् प्राणयो नव ( तै.आ. ३-१४. ) इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ॥

( ३ ) स च प्राणः प्रसिद्धेर्वायुः इत्यापतति ।

( ४ ) न चैवम् । यतो विष्णुरेव प्राणः, अत एव ' श्रीश्च ते

---

विष्णो 'यत्' यस्मात् 'प्रजापतेः' हिरण्यगर्भस्य तदुपलक्षितानां सकलजीवानां 'भुजः' भोगान् योग्यानन्दान् 'करिष्यमाणः' उपलक्षणमेतत्-कुर्वाणोऽकार्षीश्च । 'तस्मात्त्वं ' 'महान् भोगः ' पूर्णानन्दवानभवः । स्वस्य महाभोगाभावे परस्मै तद्दानानुपपत्तेः । यस्माच्च पायुगुह्यैक्येन नवेन्द्रियाभिमानिनो देवान् त्वं 'प्राणयः ' अचेष्टयः । इदमप्युपलक्षणं-चेष्टयसि चेष्टयिष्यसि च । तस्मात्त्वं प्राणः प्राणशब्दवाच्योऽभव इति सिद्धान्तरीत्या श्रुत्यर्थः । पूर्वपक्षे त्वेतत्सर्वं मुख्यप्राणे योज्यम् । इतीति । 'इति' तैत्तिरीयशाखागतवाक्ये 'परमानन्दत्वं' पूर्णानन्दत्वमुक्तमित्यावर्तते । तथा च यदानन्दमयत्वं विष्णोरुक्तं तत्परमानन्दत्वपर्यवसितं ' तद्वै त्वम्' इति वाक्ये ' महाभोगशब्देन ' ' महान् भोगः ' इति पदद्वयात्मकवाक्येन च प्राणस्योक्तमिति योजना । अनेन प्राणाख्यो विषयः । तस्य विष्णवन्यत्वाक्षेपमुखेनानन्दमयत्वस्याप्यन्यनिष्ठत्वाक्षेपादानन्दमयाधिकरणेनास्याक्षेपिकी सङ्गतिः । सः वायुरुत विष्णुरिति संशयश्च सूचितो भवति ॥

( ३ ) सयुक्तिकं पूर्वपक्षं दर्शयति—स चेति ॥ तच्छब्द आवर्तते । चशब्दोऽवधारणे । वायुरित्यनेन सम्बध्यते । आनन्दमयश्चेति समुच्चये वा । तथा च परमानन्दत्वं यस्य प्राणस्योक्तं सः ' प्राणः ' तच्छब्दवाच्यो मुख्यवायुरेवेति ' आपतति ' प्राप्नोति । अतएवानन्दमयोऽपि स एवेत्यापतति । कुतः? प्रसिद्धेः प्राणश्रुतेः तस्याश्च तस्मिन्वायौ प्रसिद्धे रूढत्वात् । प्राणपदप्रवृत्तिनिमित्तस्य जीवनादिहेतुत्वस्य च शरीरे सति मुख्ये जीवनादिकं सम्भवति नासतीत्यन्वयव्यतिरेकाभ्यां स्वशरीरगतवायुविकारद्वारा मुख्यवायावेव प्रसिद्धेर्दर्शनादिति योजना ॥

( ४ ) सिद्धान्तयति—न चेति ॥ एवं प्राणस्य वायुत्वं आनन्दमयत्वं च न युक्तमित्यर्थः । कुतो नैवमित्याशङ्कायां तत्र हेतुतया सूत्रं व्याचष्टे—यत इति । सूत्रार्थस्य हेतुत्वद्योतकोऽयं यतश्शब्दः । सूत्रेऽनुवृत्तस्य तत्त्वित्यस्यार्थो विष्णुरेवेति । तथा च यतोऽयं प्राणो विष्णुरे

लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे ' ( तै.आ.३-१३. )
इत्यादितल्लिङ्गादेव ॥

—*-:*:-*—

१०. अधिकरणम् ॥

( १ ) ' यो वेद निहितं गुहायाम् ' ( तै. उ. २-१. ) इत्यु

---

च अतो नैवमित्यन्वयः । कुतोऽयं प्राणो विष्णुरेवेत्यतः सौत्रं हेतुमनूद्य व्याचष्टे—अत एवेति । इत्यादीति । इत्यादिनोक्तं यद्विष्णुलिङ्गं तस्मादेवेत्यर्थः । कथं श्रुत्या पूर्वपक्षिते लिङ्गेन निर्णय इत्यतो लिङ्गस्य निरवकाशत्वज्ञापनार्थश्चकारः । तथा च सावकाशश्रुतेर्निरवकाशलिङ्गेन बाध इति भावः । हे विष्णो ' ते ' तव श्रीश्च लक्ष्मीश्चेति द्वे पत्न्यौ स्तः । वक्षस्स्थलाश्रिता श्रीः अङ्कस्थिता लक्ष्मीरिति सम्प्रदायविदः । तत्त्वप्रदीपे तु—अङ्कस्थिता श्रीः वक्षसि लक्ष्मभूता लक्ष्मीरित्युक्तम् । ' अहोरात्रे ' तदभिमानिसूर्यचन्द्रौ ' पार्श्वे ' पार्श्वस्थितावित्यर्थः । दिवारात्रमेते पार्श्वगते इति वा । यद्यपीदं ' अद्भ्यः ' इति पूर्वानुवाकगतम् । ' तद्वै त्वं प्राणः ' इत्येतच्च ' भर्ता सन् भ्रियमाणः ' इत्युत्तरानुवाकगतम् । तथा च नानयोर्लिङ्गलिङ्गिभावो युज्यते । तथाऽपि 'श्रीश्च ते ' इति युष्मच्छब्देनोक्तस्य ' तद्वै त्वं प्राणः ' इत्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानात्तदुपपत्तिः । निरवकाशत्वाद्भिन्नानुवाकस्थस्यापि मुखतो ग्रहणं युक्तम् । आदिशब्देन ' हरिं हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनां ' ( तै. आ. ३-१५. ) इति तत्त्वप्रदीपोदाहृतमनुवाकान्तरस्थं गृह्यते । सर्वबुद्धिनियन्तारं जगत्पतिं सर्वसंहर्तारं हरिं देवाः अनुगच्छन्तीत्यर्थः । चन्द्रिकायां तु—' भर्ता सन् ' इत्युत्तरानुवाकगतं ' तमेवमृत्युममृतन्तमाहुस्तं भर्तारं तमुगोप्तारमाहुः' (तै.आ. ३ - १४. ) इत्यादिकमादिपदेन ग्राह्यमित्युक्तम् । यद्यपि तैत्तिरीयशाखायां ' ह्रीश्च ते ' इति पाठः । तथाऽपि वाजसनेयशाखाभिप्रायेण एवमुदाहृतमिति ध्येयम् । सूत्रार्थस्तु स्पष्टः ॥

॥ इति प्राणाधिकरणम् ॥ ९ ॥

———:-*-:———

१०. अधिकरणम् ॥

( १ ) अत्राधिकरणे तत्तत्सूत्रगताशेषशब्दोपलक्षकस्य लोकतोऽ

क्तम्। तच्च गुहानिहितम्। 'वि मे कर्णा पतयतो वि
चक्षुर्वीऽइदं ज्योतिर्हृदय आहितं यत्।
वि मे मनश्चरति दूर आधीः किं स्विद्वक्ष्यामि किमु नू
मनिष्ये' (ऋ. ६-९-६.) इति ज्योतिरुक्तम्।

न्यत्रप्रसिद्धस्य ज्योतिर्नाम्नो ब्रह्मणि समन्वयः क्रियते। पूर्वाधिकरण तद्विषयसङ्गती विषयवाक्योदाहरणपूर्वकं विषयसंशयौ च दर्शयति—यो वेदेति॥ ततः किमित्यत आह—तच्चेति। चोऽवधारणे। तथा च यत्पूर्वं मान्त्रवर्णिकपदोपात्तमन्त्रवर्णगतेन 'यो वेद' इति वाक्येन गुहानिहितं वस्तूक्तं तदेवानन्दमयाद्याख्यमित्युक्तम्। तदेव 'वि मे कर्णा' इति वाक्ये 'ज्योतिरुक्तं' ज्योतिश्शब्देनोक्तमित्यर्थः। अनेन वक्ष्यमाणपूर्वपक्षपर्यालोचनया ज्योतिषो विष्णवन्यत्वसाधनमुखेनानन्दमयत्वस्यान्यनिष्ठत्वाक्षेपादानन्दमयाधिकरणेनास्याक्षेपिकी सङ्गतिः सूचिता भवति। ज्योतिर्विषयः किमग्निरुत विष्णुरिति सन्देहश्च सूचितो भवति। 'वि मे' इति ऋङ्मन्त्रे वीत्युपसर्गाणां क्रियापदेनान्वयः। तत्र धातोरेव विचरणाभिधायकत्वम्। उपसर्गास्तु द्योतकाः न वाचकाः। अतएव सूत्रे 'चरणाभिधानात्' इत्येवोक्तम्। भाष्ये तु 'विचरणाभिधानात्' इति स्पष्टार्थमुक्तम्। अतएव तत्त्वप्रदीपे 'स्पष्टत्वाय विचरणाभिधानात् इत्युक्तम्' इत्युक्तम्। 'मे' इत्यस्मच्छब्देन मन्त्रद्रष्टा ऋषिरुच्यते। 'दूर आधीः' इत्यस्य एकपदत्वेऽपि अवग्रहदर्शनेन द्विखण्डत्वाद्विभज्यान्वयः। आङ् ईषदभिव्याप्त्युभयार्थकः। वर्तत इति शेषः। तथा च यतो मे कर्णौ ज्योतिषो विरुद्धं पतयतः पततः। स्वार्थे णिच्। चक्षुश्च विरुद्धं पततीति विपरिणामेनान्वयः। यथा कर्णादेर्ज्योतिर्विदूरत्वं एवं ज्योतिषोऽपि कर्णादिविदूरत्वमित्याह—वीदमिति। कम्पोऽत्यन्तमित्यर्थे। तथा च यदिदं हृदये 'आहितं' आ समन्तात् स्थितं ज्योतिस्तदत्यन्तं कर्णादिविरुद्धं वर्तते। एवं मे मनः ज्योतिषो दूरे विचरति अतीव तद्दर्शनविरुद्धं वर्तते। मनश्चरणस्य तत्त्वनिष्ठाविरोधित्वं 'चञ्चलं हि मनः कृष्ण' इति गीतायामुक्तम्। अतः कारणात् 'आधीः' ईषद्बुद्धिरहं व्याप्तबुद्धिरपीति वा 'किं स्वित्' किं नु वक्ष्यामि। किमु किं वा नु इदानीं 'मनिष्ये' चिन्तयामीति मन्त्रार्थः। तत्त्वप्रदीपे तु—आ समन्ताद्दूरस्थबुद्धि

( २ ) तच्च ज्योतिरग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् ।

( ३ ) अत आह—

सू—ॐ ॥ ज्योतिश्चरणाभिधानात् ॥ ॐ ॥ २४ ॥

विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् ।

( ४ ) स हि 'परो मात्रया तन्वा वृधान' ( ऋ.७-९८-१. )

---

रहमित्येकान्वयेन व्याख्यातम् ॥

( २ ) अथ सयुक्तिकं पूर्वपक्षयति —तच्चेति ॥ चस्समुच्चये । त दिति चावर्तते । अग्निशब्दो भूततद्देवतापरः । द्वितीयचशब्दो भिन्नक्रमः । तथा च तज्ज्योतिर्गुहानिहितं चाग्निरेव भवेदिति प्राप्तं, कुतः? 'प्रसिद्धेः' ज्योतिश्श्रुतेस्तस्याश्च तस्मिन्नग्नावेव प्रसिद्धेः रूढत्वात् । न केवलं श्रुतेरेवेदं ज्योतिरग्निः, किन्तु तस्य ज्योतिषः 'अग्निसूक्तत्वात्' अग्निप्रकरणगतत्वाच्चेति योजना । अतएव पूर्वपक्षोपसंहारटीकायां श्रुतिप्रकरणयोर्बलवत्त्वादिति प्रसिद्धपदलक्षितायाः श्रुतेः प्रथममुक्तिः । अत एव चन्द्रिकायां भाष्ये अग्निसूक्तस्थत्वाच्चेति चशब्दप्रयोगादित्युक्तम् । तथाच श्रुतिप्रकरणाभ्यां गुहानिहितत्वलिङ्गमात्रस्य बाधात् अग्निरेवेदं ज्योतिर्गुहानिहितं चेति भावः ॥

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ यतः पूर्वपक्षः प्राप्तोऽतः उत्तरं सूत्रमाह भगवान्बादरायण इत्यर्थः । तदेव सूत्रं पठति— ज्योतिरिति । सूत्रे तच्चेत्यस्य अनुवृत्तिं विपरिणामं चाभिप्रेत्य प्रतिज्ञांशं व्याचष्टे—विष्णुरेवेति । 'ज्योतिः' तच्छब्दवाच्यो विष्णुरेव भवेदिति योजना । कुत इत्यतः प्राप्तं 'चरणाभिधानात्' इति हेत्वंशं चरणशब्दस्य विचरणार्थत्वं कर्णादीनामित्यस्य अध्याहारं चाभिप्रेत्य व्याचष्टे—कर्णादीनामिति । अत्र वाक्ये कर्णादीनामेतज्ज्योतिःप्रतिविरुद्धचरणोक्तेः कर्णादिविदूरत्वलिङ्गश्रवणादित्यर्थः । अत्र कर्णादिविदूरत्वं नाम तैरियदिति परिच्छेदायोग्यवैभवत्वं, न तु कर्णादिविदूरत्वमात्रम् । तद्विषये तस्यासम्भवात् । अभिधानपर्यन्तधावनं हेत्वसिद्धिपरिहारायेति द्रष्टव्यम् ॥

( ४ ) नन्वस्तु ज्योतिषः कर्णादिविदूरत्वोक्तिः, तावता तस्य विष्णुत्वं कुत इत्यतः कर्णादिविदूरत्वस्य विष्ण्वेकलिङ्गत्वे श्रुतिमुदाहरन् तत्प्रतिजानीते—स हीति ॥ एवेत्यनुषज्यते । आदिशब्देन 'न ते विष्णो' इत्यादिकं गृह्यते । तथा च 'हि' यस्मात् 'सः' विष्णुरेव 'प

इत्यादिना कर्णादिविदूरः ॥ १० ॥

११. अधिकरणम् ॥

( १ ) सू—ॐ ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पण निगदात्तथा हि दर्शनम् ॥ ॐ ॥ २५ ॥

रो मात्रया ' इत्यादिवाक्येन कर्णादिविदूर इति प्रमितः तस्मान्नाप्रयोजकता, न वा हेतुविशेषणासिद्धिरित्यध्याहारेण योजना । अनेन ' ज्योतिः ' तच्छब्दवाच्यं ब्रह्मैव । कुतः ? अत्र कर्णादीनामेतज्ज्योतिः प्रति साकल्येन तदविषयीकरणरूपाविरुद्ध ' चरणाभिधानात् ' कर्णादिविदूरत्वलिङ्गश्रवणात् इत्यावृत्त्यध्याहाराभ्यां सूत्रार्थ उक्तो भवति । मापयति ज्ञापयति विषयानिति वा मीयन्ते विषया अनेनेति वा मात्रा इन्द्रियगणः तया ततस्त्वं ' परो ' दूरोऽसीति हे विष्णो अन्यमहिम्नः परमन्तं सीमानं ते महिमानं कोऽपि श्रोत्रादिना नाप्नोति च प्रकृतानुगुण्येन श्रुतिर्व्याख्येया । अत्र तत्त्वप्रदीपसन्न्यायरत्नावलीकारयोः ज्योतिरित्यादिचतुस्सूत्री एकमेवान्तर्भेदाधिकरणमित्यभिप्रेतम् । अग्निसूक्तच्छान्दोग्यगतविषयवाक्यभेदादनयोर्भेदः । टीकाकृतस्तु—ज्योतिस्सूत्रमेकमधिकरणं ' छन्दः ' इत्यादित्रिसूत्री अधिकरणान्तरमिति ज्ञातव्यम् ॥ १० ॥

॥ इति ज्योतिरधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे अधिवेदगत गायत्र्याद्यशेषशब्दसमन्वयः क्रियते । सङ्गत्यादिजिज्ञासाजननाय सूत्रमेवादौ पठति—छन्द इति ॥ अत्र छन्दइत्यावर्तते । तच्च व्यस्तं समस्तं च । तथा च ' छन्दोभिधानात् ' ' गायत्री वा इदम् ' इति वाक्यस्थगायत्रीशब्देन चतुर्विंशत्यक्षरमन्त्रविशेषात्मकछन्दसः प्रतिपादनात्, तच्छब्दस्य तत्र रूढत्वात्, गायत्रीशब्दवाच्यो न विष्णुः, किन्तु छन्द एव । यतो गायत्री न विष्णुः, अपि तु छन्दः, अतो ज्योतिरपि न विष्णुः, किन्तु छन्दः । कुतः? 'छन्दोभिधानात् ' छन्दसा गायत्र्या तदैक्याभिप्रायेण ज्योतिषोऽभिधानात् उपक्रमादिति चेत्—न, विष्णुरेव ज्योतिः । कुतः? ' निग

( २ ) 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा. ३-१३-७.)

दात्' गायत्रीपदेन विष्णोरेवाभिधानात्। गायत्र्यादिपदैर्विष्णोरेवा भिधानं च न तद्भेदविधानार्थः, किन्तु तथोपासनार्थमेवेत्याह—तथे ति। 'तथा' गायत्र्यादिशब्दार्थगुणस्वरूपत्वेन 'चेतसो' मनसः 'अर्पणाय' ब्रह्मण्याधानायोपासनार्थमेव विष्णोर्निगदादित्यर्थः। उपा सनेत्यनुक्त्वा चेतोर्पणेत्युक्तिरुपासनास्वरूपकथनार्था। अनेन प्रसिद्ध गायत्र्यादिपदेन विष्णोरभिधानं व्यर्थमिति शङ्का परिहृता। ननु भ वेद्गायत्रीशब्दवाच्यत्वेन विष्णोर्ज्योतिश्शब्दवाच्यत्वसाधनम्, यदि गायत्रीशब्दवाच्यत्वं विष्णोः प्रमितं स्यात्। तदेव कुत इत्यत आह— तथा हीति। 'हि' यस्मात् 'तथा' गानत्राणकर्तृत्वनिमित्तेन विष्णोर्गा यत्रीशब्दवाच्यत्वसाधकं 'दर्शनं' दृश्यते ज्ञायतेऽर्थो ययेति व्युत्प त्त्या 'गायति च त्रायति च' ( शाखान्तरं ) इत्यादिरूपा श्रुतिरस्ति तस्मादिति सूत्रार्थः॥

( २ ) श्रुत्यादिसङ्गतिविषयवाक्यविषयसंशयपूर्वपक्षतत्फलानि सूचयन् सूत्रे पूर्वपक्षांशं व्याचष्टे—अथेति॥ उक्तस्येत्यावर्त्यते। त थाच 'हृदय आहितं यत्' इति गुहानिहितत्वेन यदुक्तं तस्यैव 'ज्यो तिषः' पुनः 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु स र्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु। इदं वाव तद्यदिदमस्मिन्नन्तःपु रुषे ज्योतिः' इति छान्दोग्येऽप्युक्तस्य 'गायत्र्या' इत्थंभूतलक्षणे तृतीया। गायत्रीत्वेन तद्रूपतया 'समारम्भः' पाठः कृतः। कुतोऽयं विज्ञायते? यतो 'गायत्री वा इदं सर्वं वाग्वै गायत्री वाग्वा इदं सर्व म्' इति वाक्ये 'गायत्र्या' गायत्रीशब्देन तदैक्यतात्पर्येण 'समार म्भः' उपक्रमः कृतः अत इति योजना। ततः किमित्यत आह-तस्मा दिति। इदं चावर्तते। ज्योतिर्गायत्रीति च शेषः। छन्द इति चानुष ज्यते। तथा च यस्माद्गायत्र्या समारम्भः कृतः, स च यस्मादनुपस ञ्जातविरोधित्वेन बलवान्, तस्मादिदं ज्योतिर्गायत्र्येव भवेत्। सा च गायत्री वर्णसमावेशलक्षणमन्त्रात्मकच्छन्द एव भवेत्, न विष्णुः। कुतः? तस्मात् गायत्रीशब्दस्य छन्दस्येव रूढत्वाद्वाक्त्वाभिधानाच्चे ति योजना। अनेन 'गायत्री वा इदं सर्वम्' इति पूर्ववाक्यस्थगाय त्रीशब्दस्य विष्णवन्यपरत्वे तत एवोत्तरवाक्यस्थज्योतिषो विष्णवन्य

इत्युक्तस्य ज्योतिषो 'गायत्री वा इदꣳ सर्वम्'
( छा॰ ३-१२-१. ) इति गायत्र्या समारम्भः कृतः ॥

त्वापत्त्या ततएव अग्निसूक्तगतज्योतिषोऽपि तदन्यत्वमेव भवेत् । अतएवानन्दमयत्वमपि अन्यस्यैव भवेन्न विष्णोरिति पूर्वोक्ताक्षेपेण एतदधिकरणोत्थानात्पूर्वेणास्याक्षेपिकी सङ्गतिः । एवं गायत्री विषयः । किं छन्दोविशेषः उत विष्णुरिति सन्देहः । तथा गायत्री छन्दोविशेष एव भवेत्; तच्छब्दस्य तत्र रूढत्वादिति सयुक्तिकः पूर्वपक्षः । तथा तस्मात् ज्योतिरपि छन्द एवेति तस्यैव गुहानिहितत्वमानन्दमयत्वं चेति पूर्वपक्षफलं च सूचितं भवति । अत्र पूर्वपक्षे गायत्र्यादिशब्दाः मन्त्रपराः, सर्वमपि वाक्यं तन्माहात्म्यपरतया योजनीयम् । सिद्धान्ते तु 'अथ' इत्यादेरयमर्थः—भगवन्माहात्म्यान्तरारम्भेऽथशब्दः । 'यत्' श्वेतद्वीपानन्तासनवैकुण्ठगतं नारायणवासुदेववैकुण्ठाख्यं रूपत्रयं तत् 'अतः' एतस्माद्विवक्षिताद्बुद्धिस्थात् 'दिवः परः' परं तदपेक्षयोच्चस्थानस्थितमित्यर्थः । 'ज्योतिः' तेजोमयं एवंभूतं तत् 'विश्वतः पृष्ठेषु'

पृथिव्यां ब्रह्मणो मेरौ वैजयन्तेऽन्तरिक्षगम् ।
तृतीयं सत्यलोके च सदनं त्रिविधं मतम् ॥

इति वचनादन्तरिक्षगवैजयन्तमेरुसत्यलोकगतेभ्यो ब्रह्मसदनेभ्यः क्रमेणोच्चेषु 'सर्वतः पृष्ठेषु' अन्तरिक्षपृथिवीस्वरात्मकलोकेभ्यः क्रमेणोच्चेषु 'अनुत्तमेषु' न विद्यते उत्तमो लोको येभ्यस्तेषु प्रत्यवरेष्विति वा । 'उत्तमेषु' स्वयमेवोत्तमेषु 'लोकेषु' श्वेतद्वीपानन्तासनवैकुण्ठेषु 'दीप्यते' प्रकाशते 'तत्' दीप्यमानं तेजः 'इदं वाव' इदं खलु । इदं च किम्? 'यदिदमस्मिन् पुरुषे' हृदये 'अन्तर्ज्योतिः' तच्छब्दितं ब्रह्मास्ति तत्तेनैकीभूतमित्यर्थः । यो गायत्रीनामा गायत्रीसंस्थः स्त्रीरूपो हयशीर्षाख्यो भगवान् तदिदं प्रथमं रूपमित्याशयेन तस्य द्वितीयं रूपं वक्तुं गायत्रीत्यादिवाक्यं प्रवृत्तम् । 'यदिदं किञ्च भूतं' पूर्णं मत्स्याद्यवताररूपं यच्च 'सर्वं' सर्वान्तःस्थितं रूपं तत्सर्वं 'गायत्री' गायत्रीनामा भगवानेव । वै प्रसिद्धम् । तस्यैव तृतीयं रूपमाह—वागिति । गायत्रीनामा भगवान् 'वाग्वै' वाङ्नामको विष्णुरेव । कुतोऽस्य विष्णुत्वमित्यतस्तल्लक्षणयोगादित्याह—वाग्वा इति । 'इदं

तस्मान्न विष्णुरिति चेत्–न, तथा चेतोर्पणार्थं हि निगद्यते। अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोर्पणार्थं हि निगद्यते।

सर्वं भूतं' प्राणिजातं 'वाग्वै' वाङ्मात्मकभगवदधीनमेव। अतः सर्वस्वामित्वाद्गाद्यो विष्णुत्वमिति। सिद्धान्तसूत्रांशमनुकरोति—नेति। निगद्यत इत्यत्रापि सम्बध्यते। तथा च ज्योतिःशब्दवाच्यो विष्णुर्नेति न, किन्तु ज्योतिःशब्देन विष्णुरेव निगद्यत इत्यर्थः। कुत इत्यतो निगदादिति हेतुं योजयति—हि निगद्यत इति। गायत्रीशब्देनेति शेषः। तथा च 'हि' यस्माद्गायत्रीशब्देनापि विष्णुरेव 'निगद्यते' अभिधीयते तस्मादित्यर्थः। विष्णोर्गायत्र्यादिशब्दैरभिधानं च न तदभेदविधानार्थं, किन्तु तथोपासनार्थमेवेत्याह—तथेति। चेतोर्पणेत्युक्तिप्रयोजनं पूर्ववत्। भाष्यत्वज्ञापनाय तथेत्यादिस्वपदानि तथा शब्दार्थकथनेन विवृणोति—अग्नीति। अत्र ज्योतिश्शब्दोपलक्षकाग्निपदं ज्योतिस्सूत्रस्य भिन्नाधिकरणत्वपक्षे अन्यत्र प्रसिद्धस्य गायत्रीपदस्य विष्णौ प्रयोगे प्रयोजनमत्र वदता सूत्रकृता पूर्वत्रोत्तरत्र चाग्न्यादिपदस्य विष्णौ प्रयोगे प्रयोजनं सूचितमिति दर्शयितुम्। न च गायत्र्यादिपदाभ्यामेव गायत्रीपदसमन्वयफलस्य पूर्वत्रोत्तरत्र चोक्तसमन्वयफलस्य च सूचनसम्भवादग्निपदं व्यर्थमिति वाच्यम्। फलीभूतसमन्वयविषयत्वेनास्यापि अवश्योपादेयत्वात्। समानप्रकरणस्थवागादिग्राहकत्वेन आदिशब्दस्याप्यावश्यकत्वात्। अवश्यापेक्षिताभ्यामुभाभ्यामप्यानन्दमयाद्यधिकरणेषु उत्तरत्र चोक्तप्रयोजनस्यापि सूचनसम्भवादुभयमप्यावश्यकम्। ज्योतिरित्यादिचतुःसूत्र्या एकाधिकरणत्वपक्षे तु साक्षात्समन्वेतव्यशब्दत्वेनैव शब्दद्वयोपादानं, न तु फलत्वेनाग्निशब्दस्याधिकरणान्तरेऽप्येतन्न्यायसूचनं तु आदिशब्देनैव, न तूभाभ्याम्। भिन्नजातीयानेकशब्दग्रहणार्थं शब्दद्वयोत्तरादिपदम्। अत एव तत्त्वप्रदीपे—आदिशब्दस्योभयत्रान्वयं प्रथमादिशब्देन तेजःशब्दानां द्वितीयेन छन्दश्शब्दानां च ग्रहणमभिप्रेत्य 'अग्न्यादितेजःशब्दानां गायत्र्यादिच्छन्दश्शब्दानां च' इत्युक्तम्। केचित्तु–भाष्यगतहिशब्दो ज्ञानार्थमथ ध्यानार्थमिति प्रमाणप्रसिद्धिद्योतकः, अधिकरणान्तरेऽप्यस्य न्यायस्यानुसन्धेयत्वज्ञापकश्चेत्याहुः। चेतोर्पणार्थमिति सावधारणम्। तथा च 'असौ' भगवानग्निगायत्र्यादिश

( ३ ) तथा हि दर्शनं 'गायति त्रायति च' ( छा. ६-१२-
१. ) इत्यादि ।

( ४ ) सर्वच्छन्दोऽभिधो ह्येष सर्वदेवाभिधो ह्यसौ ।
सर्वलोकाभिधो ह्येष तेषां तदुपचारतः ॥
इति वामने ॥

द्वेरग्निगायत्र्यादिशब्दार्थगुणस्वरूप इति । तत्र 'चेतोर्पणार्थं' बुध्य वतारणार्थं उपासनार्थमेव निगद्यते, न तद्भेदविधानार्थमित्यर्थः। इती त्यन्तेन तथाशब्दार्थ उक्तः । अनेनाप्रसिद्धगायत्र्यादिपदेन विष्णोर भिधानस्य वैयर्थ्यशङ्का परिहृता ॥

( ३ ) ननु भवेद्गायत्र्यादिशब्दवाच्यत्वेन विष्णोर्ज्योतिश्शब्दवा च्यतासाधनं यदीयं गायत्री विष्णुः स्यात्तदेव कुत इत्यतो गानत्राण कर्तृत्वलिङ्गादित्याशयेन तस्यासिद्धिपरिहाराय प्रवृत्तं तथाहीति सूत्र शेषं अनुकृत्य दर्शनपदोक्तां श्रुतिं दर्शयति—तथेति ॥ 'हि' यस्मात् 'इत्यादि दर्शनं' श्रुतिरस्तीत्यन्वयः । यद्यपि 'गायति त्रायतेच'इति पा ठः छन्दोगानाम्, तथाऽपि शाखान्तरमेवेदमित्यदोषः। आदिपदेन 'या वै सा गायत्री इयं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठित मेतामेव नातिशीयते' ( छा.३-१२-२. ) इत्यादिकं गृह्यते। श्रुत्यर्थस्तु- यतो गायत्रीवाच्यो भगवान् वेदान् 'गायति' मुखान्निरसारयति प्रथ मो वक्तीति यावत्। यस्माच्च 'त्रायते' अखिलमिति शेषः। अतो गायत्री शब्देनोच्यते । 'या' प्रसिद्धा गायत्री तन्नामा विष्णुः 'सा इयं वै' इयं खलु। किमियं ? 'येयं पृथिवी' तन्नामा भगवान्। कथं पृथिवी विष्णु रित्यतः तल्लक्षणयोगादित्याह—अस्यां हीदमिति । 'अस्यां' पृथिव्यां 'भूतं' प्राणिजातमाश्रितमिति । सुधायां तु पूर्वपक्षानुगुणतया गाय त्री 'गायति' अर्थं प्रतिपादयति, अध्येतॄन् 'त्रायते' पालयति पापा त् रक्षतीत्यर्थ उक्तः ॥

( ४ ) ननु गायत्र्यादिशब्दस्य अन्यत्र रूढत्वात्कथं लिङ्गमात्रेण विष्णुत्वनिश्चय इत्यतो गायत्र्यादिश्रुतेः सावकाशत्वादिति भावेन गायत्र्यग्निपृथिव्यादिशब्दाः न केवलं श्रुत्युक्तयोगेन विष्णौ सावका शाः, अपि तु पौराणिकरूढ्या गायत्र्याः भगवदधीनत्वादपीत्याशये न तत्र स्मृतिमाह—सर्वेति ॥ 'एषः' विष्णुः 'सर्वच्छन्दोऽभिधः' सर्वच्छन्दसां अभिधेयाभिधा यस्येति बहुव्रीहिः। छन्दोवाचकगाय

(५) सू—ॐ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ ॐ ॥ २६ ॥

त्रयादिसर्वशब्दवाच्यः। 'एवमसौ' विष्णुः सर्वदेवतावाचकाग्न्या दिशब्दवाच्यः। तथा 'एषः' विष्णुः सर्वलोकवाचकपृथिव्यादिशब्द वाच्य इत्यर्थः। कुत इत्यतः छन्दआदीनां भगवदधीनत्वादिति प्रत्ये कं हेतुत्रयसूचनाय हिशब्दत्रयं, वेदप्रसिद्धिज्ञापनाय वा। छन्दसां लोकानां च प्रत्यक्षत्वात् देवानां च परोक्षत्वादेषोऽसाविति विचित्रो क्तिः। कथं तर्ह्यन्यत्र व्यवहार इत्यत आह—तेषामिति। छन्दोदेव लोकानामित्यर्थः। 'तत्' तच्छब्दबोध्यत्वं 'उपचारतो' विष्णुसमी पे चरणात्तदधीनत्वादमुख्यत एवेत्यर्थः। वामन इत्यस्य 'हि' यतो वामने इति 'दर्शनं' प्रतिपादनमस्यतः श्रुतेर्मुख्यवृत्त्या विष्णावेव सा वकाशत्वात् लिङ्गस्यामुख्यतोऽप्यन्यत्रानवकाशत्वात्तेन तद्धर्मोपपत्ते र्भवत्येव गानत्राणकर्तृत्वलिङ्गमात्रेणायं निर्णय इत्युपस्करेणान्वयः॥

(५) हेत्वन्तरेणापि गायत्र्याः विष्णुत्वं साधयत्सूत्रमुपन्यस्य त द्गृहीतां श्रुतिमुदाहरति—भूतादीति॥ इतिशब्दस्य भूतादीत्यनेनान्व यः। सूत्रे भूतं विश्वमादिः प्रथमोद्दिष्टं येषु ते भूतादयः, ते पादाः य स्य गायत्रीपदार्थस्य स भूतादिपादः, तस्य व्यपदेशः तत्प्रतिपादकं वाक्यं तस्योपपत्तेः युक्तत्वादिति विग्रहः। पादशब्दो भावप्रधानः। अतएव भूतादिपादत्वस्येत्युक्तं टीकायाम्। एवमित्यस्य चोभयत्रान्व यः। तथा च 'पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' इत्ये वं गायत्र्याः भूतादिशब्दगृहीतामृताख्यांशचतुष्टयवत्त्वोपदेशात् त स्य च विष्णावेवोपपत्तेरन्यत्रानुपपत्तेरेव गायत्रीशब्दवाच्यो विष्णुरे व भवेदित्यर्थः। चशब्दस्य व्यपदेशपदेनान्वये गायत्र्या विष्णुत्वे साध्ये पूर्वसूत्रे दर्शनपदोक्तहेतोः एतत्सूत्रोक्तहेतुद्वयस्य च समुच्चये सः। यथाश्रुतान्वये तु भूतादिपादत्वस्य विष्णुलिङ्गत्वं न केवलं वि ष्णोरेवोपपत्तेः सिद्धम्, किन्तु पुरुषसूक्तोक्तत्वाच्चेति हेतुसमुच्चये स इति ज्ञेयम्। छान्दोग्ये हि 'सैषा चतुष्पदा षड्विधा गायत्री' (छां.३-१२-५.) इति वाक्येन यैषा षड्विधा गायत्री सा चतुष्पदेत्येवं गायत्री नामकस्य भगवतः प्रागुक्तगायत्रीभूतवाक्पृथिवीशरीरहृदयलक्षणष ड्विधत्वमनूद्य अंशचतुष्टयवत्त्वरूपं चतुष्पादत्वं विधाय स्वोक्तार्थ एव पुरुषसूक्तमन्त्रः समाख्यारूपत्वेनोदाहृतो ब्राह्मणेन 'तदेतदृचाऽभ्यनू

( ६ ) ' तावानस्य महिमा ततो ज्यायांश्च पुरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ' ( छा. ३ - १२ - ६. ) इति ।

( ७ ) सुवर्णं कोशं रजसा परीवृतम् । देवानां वसुधानीं

क्तम् ' ( छां.३-१२-५. ) इति ' तदेतत् ' भगवतश्चतुष्पादत्वं ' ऋचा ' ऋङ्मन्त्रेण ' अभि ' निश्शङ्कं स्पष्टं ' अनु ' आनुकूल्येनोक्तमित्यर्थः ॥

( ६ ) किमुक्तमित्यतस्तन्मन्त्रं पठति—तावानिति ॥ यद्यपि ऋचि 'एतावान्' इति 'विश्वा' इति च पाठः । तथाऽपि शाखान्तरपाठोऽयमित्यदोषः । 'अस्य' पुरुषस्य 'पुरुष एवेदं सर्वम्' (तै.आ.३-१२.) इत्यृचा यस्सर्वेशानत्वादिरूपः तावान्महिमोक्तः, न केवलमेतावान्, किन्तु, पुरुषः ' ततः ' पूर्वोक्तादपि महिम्नो ' ज्यायान् ' अधिकमाहात्म्योपेत इत्यर्थः । ज्यायस्त्वमेव दर्शयति—पादोऽस्येत्यादिना । 'सर्वा भूतानि' सर्वं विश्वं ' अस्य ' विष्णोरेकः ' पादः ' पादवत्पादो भिन्नांशः । यद्यपि तत्त्वप्रदीपे—विश्वभूतविधिर्भाति । तथापि टीकायां–सर्वाणि भूतान्यस्यैकः पाद इति पादविधानदर्शनात्, चन्द्रिकायां–' पश्वैकत्ववत् विधेयगतत्वात्पादैकत्वं विवक्षितम् ' इत्युक्तत्वाच्च, तत्त्वप्रदीपोऽप्येवमेव व्याख्येयः । अस्य ' अमृतं ' नाशरहितं अतएव स्वरूपभूतं ' त्रिपात् ' त्रयाणां पादानां अंशानां समुदायो नारायणवासुदेववैकुण्ठसंज्ञं त्रिषु रूढ्या द्योतमानत्वाच्च द्युशब्दवाच्येषु श्वेतद्वीपानन्तासनवैकुण्ठेषु तिष्ठतीति ऋचोक्तमित्यर्थः । यद्यपि भूतशब्दो ' भिन्नपादस्सर्वजीवाः ' इति छान्दोग्यभाष्ये जीवपरतया व्याख्यातः । तथाऽपि ' सुवर्णम् ' इति श्रुत्यनुसारेण अत्र विश्वार्थतया व्याख्यातव्यः ॥

( ७ ) ननु गायत्र्यामिव विष्णावपि भूतादिपादत्वोक्तिरनुपपन्ना । तस्य भूतभिन्नत्वादित्यत आह—सुवर्णमित्यादि ॥ ' सुवर्णम् ' इत्यारभ्य ' भिन्नं च ' इत्यन्तमेकवाक्यतयाऽर्थक्रमेण व्याख्येयम् । यज्ञदत्तस्य, देवदत्तः, इत्युच्यते, विश्वमिति च शेषः । पाद इति चावर्तते । चशब्द एवार्थे हेतौ च । एकदेशपरिमितमिति हेतुगर्भमावर्तनीयम् । तथा च ' चो ' यतः श्रुतिस्थेन पाद इति शब्देन न भूतानामित्यमृतपादत्रयवत्स्वरूपांशत्वमुच्यते । येनानुपपत्तिः स्यात् । किन्तु, यज्ञदत्तस्य चतुर्भागबलो देवदत्त इतिवद्भिन्नमेव विश्वम् । यतः ' परि

विराजम् । अमृतस्य पूर्णां तामु कलां विचक्षते । पादं षड्ढोतुर्न किला विवित्से ( तै. आ. ३-११. ) इति श्रुतेः । पाद इति एकदेशपरिमितं चतुर्भागबल इति वद्भिन्नं च ।

---

मितम् ' विष्णुपादपरिमितसामर्थ्यं अतः पाद इति विष्णुपादत्वेनो च्यते इत्यर्थः । अस्यातो विष्णौ भूतादिपादव्यपदेशोपपत्तेश्चैवमिति पूर्वेणान्वयः । तर्हि विश्वचतुष्टयसमो हरिरित्यागतमित्यतोऽप्याह— पाद इतीति । तथा च यतः श्रोतपाद इति पदेन चतुर्भागबल इतिव त् न विश्वं विष्णुसामर्थ्यस्य चतुर्थांशपरिमितमित्युच्यते । किन्तु, ' एकदेशपरिमितं ' विष्णुसामर्थ्यैकदेशपरिमितमिति अतो नोक्तदोष इत्यर्थः । कुत एतत् ज्ञायत इत्यत आह—सुवर्णं कोशमिति । ' श्रुतेः ' तैत्तिरीयश्रुतेः । श्रुतौ तृतीयार्थे षष्ठी, समुदायैकवचनं चैतत् । अत एव ' मुक्तैः पूर्णाम् ' इत्युक्तं टीकायाम् । एवं च तत्त्वप्रदीपटीकयोरे कवाक्यता । पादमित्यावर्तते । तत्रैकं भावसाधनम् । न किलेति दी र्घः सांहितिकः । तथा च एकस्मिन् कपाले ' सुवर्णं ' तन्मयं ' रज सा परीवृतं ' रजोगुणोपलक्षितावग्नीरानभोऽहंकृन्महत्तत्त्वगुणत्रयैः परिवृतं ' विराजं ' ब्रह्मणः शरीरं, तत्त्वप्रदीपरीत्या विशेषेण राज न्तमिव ' कोशं ' लिङ्गव्यत्ययः, ब्रह्माण्डाख्यं यदस्ति । देवानां ' वसु धानीं ' द्रव्यनिधानमञ्जूषां ' अमृतैः ' मुक्तैः पूर्णां तां ' षड्ढोतुः ' षडि न्द्रियेषु विषयान् जुह्वतः, षडिन्द्रियाणि विषयेषु जीवेन जुह्वतो वा, षडिन्द्रियैः सारादनकर्तुर्वा, विष्णोः ' कलामु ' एकदेशपरिमितामेव ' पादं विचक्षते ' पादशब्देनाचक्षते वदन्ति पुरुषसूक्ताद्यागमा इति शेषः । न किल अत्र पादशब्देनाङ्घ्रिं वदन्ति, नापि चतुर्थांशमित्येवा र्थः । कुतः ? यतः सा मञ्जूषा ' पादं ' पादत्वं चतुर्थभागसाम्यं 'न वि वित्से ' न लेभे किलेति श्रुत्यर्थः । सत्तर्कदीपावल्याम्—पादं न विवि त्से इति । पादसाम्यं न लेभे इत्युक्तम् । अत्र पक्षद्वयेऽपि पुरुषव्यत्य यस्तुल्यः । टीकाकृत्पक्षे लकारव्यत्ययश्च । यद्वा—लिङ्गव्यत्ययस्य छा न्दसत्वं कोशमित्यस्य द्वितीयान्तत्वं चोपेत्य स्त्रीलिङ्गपदानामपि को शविशेषणत्वेनैक एवान्वयः ॥

(८) स हि पुरुषसूक्ताभिधेयः । 'यज्ञेन यज्ञमयजन्त' (तै. आ. ३-१२.) इति यज्ञशब्दात् । 'यज्ञो विष्णु र्देवता' (श्रुत्यन्तरम्.) इति हि श्रुतिः ।

(९) तस्मिन् काले महाराज राम एवाभिधीयते ।

(८) स्यादेतदेवं यदि 'तावान्' इत्यस्यामृचि विष्णुरभिधीयते इत्यत्र प्रमाणं स्यात्, तदेव नास्ति, अतो लिङ्गमन्यनिष्ठं भविष्यतीत्यतः सौत्रचशब्देन भूतादिपादत्वस्य विष्णुलिङ्गत्वे साध्ये पुरुषसूक्तोक्तत्वादिति यदनुमानं सूचितं तस्याप्रयोजकत्वमाशङ्क्य परिहरति—स हीति ॥ 'हि' यस्मात् 'सः' विष्णुरेव 'पुरुषसूक्ताभिधेयः' तत्प्रतिपाद्यः तस्मात्स एव पुरुषसूक्तोक्तभूतादिपादोऽपीति योजना । अन्यथा भूतादिपादत्वस्य विष्णुधर्मत्वाभावे पुरुषसूक्तप्रतिपाद्यत्वं न स्यादिति भावः । यद्वा—गायत्र्या विष्णुत्वे साध्ये सूत्रे भिन्नक्रमेणान्वितचशब्दसूचितयुक्त्यन्तरमाह-स हीति । अस्य तस्माद्गायत्री विष्णुरेवेति प्रधानप्रतिज्ञावाक्येनान्वयः । चतुष्पदेत्युक्तगायत्रीचतुष्पादत्वस्य पुरुषसूक्तमन्त्रेणोपपादनात् तत्प्रतिपाद्यत्वे तदुपपाद्यगायत्रीशब्दार्थताऽपि तस्यैव प्राप्नोतीति भावः। पुरुषसूक्तोक्तस्य विष्णुत्वं कुत इत्यत आह—यज्ञेनेति । देवाः 'यज्ञेन' ज्ञानकर्मात्मकेन रुद्राख्यपशुना वा 'यज्ञं' विष्णुं 'अयजन्त' अपूजयन्निति श्रुत्यर्थः । इति यज्ञशब्दादिति । इति वाक्ये यज्ञशब्दश्रवणादित्यर्थः । यज्ञशब्दः कथं विष्णुत्वनिश्चायक इत्यतो विवृद्भूयेत्याह—यज्ञ इति । 'हि' यतः यज्ञ इति पदेन विष्णवाख्या देवतोच्यत इत्यर्थः । यद्यपि 'यज्ञो वै विष्णुः' इत्यध्वर्यूणां श्रुतिः । तथाऽपि श्रुत्यन्तरमिदमित्यदोषः ॥

(९) ननु पुरुषसूक्तं न विष्णुप्रकरणं, किन्त्वन्यप्रकरणमेव । न च यज्ञश्रुतिविरोधः । पशुरूपान्यप्रकरणे तदन्यविष्णुश्रुतेः अयोगादिति वाच्यम् । तस्याः प्रासङ्गिकत्वसम्भवात् । न च तत एव भूतादिपादत्वस्य विष्णुलिङ्गत्वनिश्चयः । तथाऽप्यसिद्धिः । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेर्भूतादिपादे यज्ञश्रुतेरभावादित्यतः पुरुषसूक्तोक्तस्य विष्णुत्वे स्मृतिञ्चाह—तस्मिन्निति ॥ माहाराजेति कस्यचित्सम्बोधनं रामविशेषणं वा । तथात्वे दीर्घस्स्यात् । तथा च हे महाराज 'तस्मिन्' त्रेतायुगे सर्वैः पुरुषनामभी राम एवाभिधीयते इत्यर्थः । अतएवांशाधिकरणे—

यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते ।
इति च स्कान्दे ॥

( १० ) सू—ॐ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ ॐ ॥ २७ ॥

'त्रिपादस्यामृतं दिवि' ( छा.३-१२-६. ) इति पूर्वोपदेशः । 'परो दिवः' (छां.३-१३-७.) इति पञ्चम्यन्तः पश्चिमः ।

---

नक्षत्रमानगणितं त्रयोदशसहस्रकम् ।
ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम् ॥
रामोराम इति ह्याख्या सर्वेषामभवत्तदा ।
सर्वो राममयो लोको यदा रामस्त्वपालयत् ॥

इति स्कान्दे इत्युक्तं तत्त्वप्रदीपे । अत्र दृष्टान्तमाह—यथेति । यथा कृत्स्ने पौरुषे सूक्ते विष्णुरेव न त्वन्यः । पशुः नरः प्रासाङ्गिकतयाऽभिधीयते इत्यर्थः । अनेन सिद्धस्यैव दृष्टान्तत्वात्पुरुषसूक्तस्य विष्णुपरत्वं सिद्धमिति भावः । स्कान्द इत्यनन्तरं एतदुक्तमिति शेषः । अस्य स हीति पूर्ववाक्येनान्वयः ॥

( १० ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्यति—उपदेशेति ॥ 'उपदेशयोः' सप्तमीपञ्चमीयुतवाक्ययोः 'उपदेशेन' गायत्रीज्योतिषोः द्युस्थत्वदिवःपरत्वरूपविरुद्धधर्मोक्त्या 'भेदात्' विरोधात् न द्वयोर्विष्ण्वाख्यं एकं वस्तु प्रतिपाद्यं, किन्तु भिन्नमेवेति चेत्—न, किन्तु 'उभयस्मिन्' उभयत्राप्युपदेशे एकमेव प्रतिपाद्यं, कथं? अविरोधात् । त्रिसप्तलोकापेक्षया सप्तमीपञ्चम्योः एकार्थत्वेन विरोधाभावादिति सूत्रयोजनामभिप्रयन्नाक्षेपांशं तावद्व्याचष्टे—त्रिपादिति । 'पूर्वोपदेशः' पूर्वोक्तिः । 'पश्चिमः' पश्चात्तनः उत्तर उपदेशस्तद्भिन्नोऽस्तीति शेषः । विरोधस्फोरणाय पञ्चम्यन्त इत्याद्युक्तिः । उपक्रमगतस्य प्राबल्योपपादनाय पूर्व इत्युक्तिः । ततः किमित्यत आह—तस्मादिति । यस्मादेवं भिन्नोपदेशद्वयमस्ति तस्मादत्रोपदेशद्वये गायत्रीज्योतिश्शब्दाभ्यां नैकं वस्तु विष्ण्वाख्यमुच्यते । कुतः ? यतोऽत्र 'नैकं' अनेकं वस्तु द्युस्थत्वदिवःपरत्वरूपं धर्मद्वयमुच्यते । किन्त्वत्र 'नैकं' अनेकं वस्तुद्वयमुच्यते इति योजना । सिद्धान्तयत्सूत्रांशं व्याचष्टे—नेति । नात्र वस्तुद्वयमुच्यते इत्यर्थः । किं त्विति शेषः, एकं वस्तूच्यते इति अनुषज्यते । उभयस्मिन्निति साध्यान्तर्गतम् । अपिशब्दो

तस्मान्नैकं वस्त्वत्रोच्यते इति चेत्—न, त्रिसप्तलो

न केवलमेकत्र, किन्तूभयत्रापीति समुच्चये। तथाच किन्तूभयस्मिन् अप्युपदेशे एकमेव विष्ण्वाख्यं वस्तूच्यते इति योजना। विरोधात्क थमेतद्युज्यते इत्यत आह—त्रिसप्तलोकापेक्षयेति। त्रिलोकविवक्षया सप्तलोकविवक्षया च 'अविरोधात्' उभयत्राप्येकवस्त्वभिधाने वि रोधाभावादित्यर्थः। अयं भावः—यदा भूर्भुवस्स्वरिति लोकत्रयविव क्षा, तदा लक्षयोजनोच्छ्रितान्तरिक्षाख्यभुव उपरितनस्य सर्वस्यापि द्युत्वात् श्वेतद्वीपानन्तासनवैकुण्ठानां चान्तरिक्षादुपरितनत्वात्तत्रत्यं नारायणवासुदेववैकुण्ठाख्यं त्रिपाच्छब्दोक्तं रूपत्रयं दिवि तिष्ठतीत्यु च्यते इति न सप्तम्यन्तोपदेशविरोधः। न च

पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपस्थितो हरिः॥

इत्युक्तेरनन्तासनस्य नान्तरिक्षादुपरितनतेति शङ्क्यम्। तस्य पृथि वीस्थत्वेऽपि बहुलक्षयोजनोच्छ्रितत्वेनैकलक्षयोजनोच्छ्रितान्तरिक्षादु परितनत्वोपपत्तेः। सर्वपृथिवीस्थोच्चत्वोक्त्या तु न पृथिवीस्थान्यो च्चत्वयोगो व्यावर्त्यते। किन्तु पृथिवीस्थोच्चत्वायोगः। यदा तु भूर्भुव स्स्वर्महर्जनस्तपस्सत्यमिति सप्तलोकविवक्षा। तदेन्द्रसदनस्य द्युत्वात् तदुच्चस्याप्युपरिस्थितत्वेन तत्सजातीयस्य वैकुण्ठस्य दिवः परत्वम्।

पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम्।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परे॥

इति स्मृतेर्मेरोरपि द्युत्वात्तदुच्चस्य भूस्पृष्टत्वेन तत्सजातीयस्यानन्ता सनस्यापि दिवः परता। एवं सूर्यमण्डलस्यापि द्युत्वात्तदुच्चस्यो परिस्थत्वेन तत्सजातीयस्य भूमेः किञ्चिदन्तरितस्य स्वर्गसमोन्नत स्य श्वेतद्वीपस्यापि दिवः परत्वमस्तीति न पञ्चम्यन्तोपदेशविरोधो पीति। द्युपरत्वं च सम्भावितसजातीयद्युपरत्वमिति न यावत्स्वयत्कि ञ्चित्त्वमुखेन दूषणावकाशः। वैकुण्ठस्य स्वर्गलोकात्परत्वेनैव दिवः परत्वसिद्धावपि तस्य 'सर्वतः पृष्ठेषु' इत्यनेनैव उक्तत्वात् स्वर्गत्या गेनेन्द्रसदनस्य द्युत्वोक्तिः। न च लोकत्रयविवक्षयैवानन्तासनादीनाम पि मेर्वादिपरत्वेन दिवः परत्वस्यापि सिद्धेः सप्तलोकविवक्षा व्यर्थेति वाच्यम्। तथा सति वैकुण्ठस्यापि द्युशब्दार्थनिविष्टत्वेन तस्य सर्वद्यु परत्वासिद्ध्यापत्त्या 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते'

कापेक्षया उभयस्मिन्नप्यविरोधात् ॥

१२. अधिकरणम् ॥

(१) प्राणो विष्णुरित्युक्तम् । तत्र 'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः' (ऐ. आ. २-१-४.) इत्यत्र प्राणस्य विष्णुत्वं न युज्यते । इन्द्रियैस्सहाभिधानादिति । अत आह—

इति प्रमाणविरोधापातात् । छान्दोग्यभाष्ये तु—

अनन्तशायनं चैव तथाऽनन्तासनं हरेः ।
बहुलक्षोच्छ्रिते नित्ये विमाने संस्थितं यतः ॥
चित्प्रकृत्यात्मनि ततो द्विर्वीति कथितं श्रुतौ ।

इति प्रमाणबलेन चित्प्रकृत्यात्मकानन्तासनश्वेतद्वीपवैकुण्ठाख्यस्थानत्रये सप्तम्यन्तो द्युशब्दो द्योतमानत्वनिमित्तेन यौगिकः, स्वर्गादौ तु रूढ इति उपदेशयोरविरोध इति प्रकारान्तरेण विरोधपरिहारः कृतः ॥ ११ ॥

॥ इति छन्दोभिधानाधिकरणम् ॥

१२. अधिकरणम् ॥

(१) अत्राधिकरणे लोकतोऽन्यत्र प्रसिद्धप्राणनाम्नो विष्णौ समन्वयः प्रतिपाद्यते । श्रुत्यादिसङ्गतिविषयवाक्याविषयसंशयसयुक्तिकपूर्वपक्षान् दर्शयति–प्राण इति॥ आद्यप्राणाधिकरणे 'तद्वै त्वम्' (तै.आ.३-१४.) इति वाक्योक्तप्राणो विष्णुरित्युक्तमित्यर्थः । ततः किमित्यत आह–तत्रेति । उक्तमित्यनुषज्यते। तस्यावृत्तिविपरिणामौ । एवं तत्रेत्यप्यावर्तनीयम् । तथा च 'तत्र' तद्वै त्वमिति वाक्ये उक्तस्य प्राणस्य विष्णुत्वं न विद्यते न युज्यते । कुतः ? यतस्तत्र 'तद्वै त्वम्' इति वाक्योक्तप्राणविषये 'उक्ते' श्रुते 'ता वा एताः' इत्यैतरेयवाक्ये उक्तस्य श्रुतस्य प्राणस्य विष्णुत्वं न विद्यत इति योजना । कुतो न विद्यते इत्यत आह–इन्द्रियैस्सहाभिधानादिति । इन्द्रियैस्सह पठितत्वात् इन्द्रियगणे गणितत्वात् इत्यर्थः । अनेनैतरेयप्राणस्य विष्ण्वन्यत्वाक्षेपमुखेन प्राचीनतैत्तिरीयोक्तप्राणस्याप्यन्यत्वाक्षेपात्तेनास्याक्षेपिकी सङ्गतिरुक्ता भवति । ऐतरेयप्राणाख्यो विषयः । प्राणोऽन्य उत विष्णुरिति संशयश्च

(२) सू—ॐ ॥ प्राणस्तथाऽनुगमात् ॥ ॐ ॥ २८ ॥
'तं देवाः प्राणयन्त' ( ऐ. आ. २-१-५. ) 'स एषोऽसुः स एष प्राणः' ( ऐ. आ. २-१-८. ) 'प्राण ऋच इत्येव विद्यात्' ( ऐ. आ. २-२-२. ) 'तदयं प्राणोऽधितिष्ठति' ( ऐ. आ. २-३-८. ) इत्याद्यनुगमात् ।

(३) अत्रापि प्राणो विष्णुरेव ।

---

सूचितः । तथा वाय्वादिरन्य एवेति पूर्वपक्षः । इन्द्रियगणे गणितत्वाख्यतत्साधकलिङ्गं च सूचितम् । 'ता वा एताः' इत्येतच्च चतुर्मुखशिरसि शिरश्शब्दप्रवृत्तिनिमित्तकथनाय प्रवृत्तम् । वैशब्दः प्रसिद्धौ । तथा च यतः 'ता एताः' चक्षुः श्रोत्रं मनोवाक्प्राण इत्येतच्छब्दवाच्यास्तदभिमानिन्यो देवताः । 'शीर्षन्' शीर्ष्णि शिरःसंज्ञिकमूर्ध्नि श्रिताः । अत एव श्रयणाच्छ्रिय इति सिद्धान्ते श्रुत्यर्थः । अनेन चक्षुरादिभिः श्रितत्वं शिरःपदप्रवृत्तिनिमित्तमित्युक्तं भवति । पूर्वपक्षी तु प्राणशब्दमन्यमात्रपरं मन्यते । सिद्धान्तयत्सूत्रमवतारयति–अत इति । यतः पूर्वपक्षः प्राप्तः अत उत्तरं सूत्रमाह भगवान् बादरायण इत्यर्थः॥

(२) सूत्रं पठित्वा तत्रानुगमादिति हेत्वंशं श्रुत्युदाहरणेन व्याचष्टे—प्राण इति ॥ इत्यादीति । एवमादिवाक्योक्तानां देवतोपदेश्यत्वादिलिङ्गानामत्रास्मिन् प्रकरणे बहुषु स्थलेषु 'अनुगमात्' अनुवृत्तेरभ्यासादित्यर्थः । आदिपदेन 'प्राणो ह्येवैष य एष तपति' इति सूर्यमण्डलस्थत्वप्रतिपादकवाक्यं गृह्यते । तथा 'सर्वाणि भूतान्यापिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानि' इत्यादि वाक्यं च गृह्यते ॥

(३) सौत्रं तथाशब्दं व्याचष्टे—अत्रापीति ॥ श्रुत इति शेषः । न केवलं 'तद्वै त्वम्' इत्यत्र, किन्त्वैतरेयेऽपीति समुच्चयेऽपिशब्दः । सूत्रे अनुवृत्तस्य तत्त्वित्यस्यार्थमाह—विष्णुरेवेति । अनेन यथा 'तद्वै त्वम्' इति श्रुत्युक्तप्राणो विष्णुः तथैतरेयोक्तोऽपि विष्णुरेव, न त्वन्यः । कुतः? विष्णुलिङ्गानां देवतोपदेश्यत्वादीनामस्मिन् प्रकरणे 'अनुगमात्' अनुवृत्तेरभ्यासादिति सूत्रार्थ उक्तो भवति ॥

ऐतरेये 'तं देवाः प्राणयन्त' इति एकखण्डस्थवाक्यम् । 'तं' नारायणं वायुं च देवाः 'प्राणयन्त' प्रकर्षेण शिष्यप्रशिष्यादिषु नीतवन्तः उपदिदिशुरित्यर्थः । अनेन विष्णोः सर्वदेवोपास्यत्वमुक्तं भवति ॥

'स एषोऽसुः स एष प्राणः स एष भूतिः' इत्याद्यन्यखण्डगतं वाक्यम् । अनेन भूतित्वादिना देवाद्युपास्यत्वमुच्यते । 'स एषः' भगवान् दुष्टनिरसनादसुः प्रकृष्टानन्दरूपत्वात्प्राणः देवानां भूतिशब्दित ज्ञानाद्यैश्वर्यप्रदत्वादसुराणां अज्ञानाद्यनैश्वर्यहेतुत्वाच्च भूत्यभूतिशब्द वाच्य इत्यर्थः ॥

तत्रैव 'ता वा एताः सर्वा ऋचः सर्वे देवाः सर्वे घोषा एकैव व्याहृतिः । प्राण एव प्राण ऋच इत्येव विद्यात्' इति अन्यद्वाक्यम् । अत्र प्राणस्य सर्ववेदोक्तत्वमुच्यते । यास्ता एताः सर्वा ऋचस्तासां 'एकैव व्याहृतिः' एकमेव व्याहर्तव्यं प्रतिपाद्यम् । तच्च किं? प्राणो विष्णुरेव । किञ्च ये सर्वे वेदाः तेषामपि प्राण एव प्रतिपाद्यः । अपि च ये समुद्रादिघोषाः तेषामपि, किमु वेदानाम् । तत्र ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणान् अल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायणे तद्विषया एव 'विद्यात्' तत्प्रतिपादिका एवेति जानीयादित्यर्थः । ऐतरेयभाष्ये तु—प्रथमप्राणपदमपि विषयसप्तम्यन्ततया व्याहृतिशब्दं च व्याहरणपरतया व्याख्याय एकमेव व्याहरणं निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारमेव नामेत्यर्थ उक्तः । तत्त्वप्रदीपेऽप्ययमेवोक्तः ॥

अथ देवरथः तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्गृहीता तदयं प्राणोऽधितिष्ठति' इति वाक्यान्तरं अत्र प्राणस्य देहरथत्वमुच्यते । प्रमेयान्तरकथनारम्भार्थोऽथशब्दः । उच्यत इति शेषः । तथा च देवस्य विष्णोः वायोः अध्यात्ममधिदैवतं च रथ उच्यते इत्यर्थः । तस्याध्यात्मं देहाख्यरथस्य 'वाक्' वागाख्या उमा उद्धिः धारणरज्जुरूपा अधिदैवं विष्णुरथस्य प्रसिद्धस्यन्दनस्य च नागाकारोमा उद्धिः 'श्रोत्रे' दक्षवामपार्श्वगतचन्द्रतद्भार्ये 'पक्षसी' पार्श्वयुक्ताश्वौ अन्यत्राश्वरूपौ पार्श्वयोर्युक्तौ 'चक्षुषी' उभयपार्श्वगतसूर्यतद्भार्ये च 'युक्ते' अग्रतो नियुक्ताश्वौ 'मनो' मनोऽभिमानी रुद्रः 'सङ्गृहीता' सारथिः एवं अधिदैवं प्रसिद्धस्यन्दनस्यापि रुद्रः सारथिः । स चासावयं च तदयमित्येकं पदम् । तत्त्वप्रदीपरीत्या भिन्नपदत्वेऽपि तदिति रथतयोक्तं शरीरं परामृश्यते । लिङ्गव्यत्ययेन तं रथमिति वा । अयं प्राणो विष्णुः वायुश्चाधितिष्ठतीत्यर्थः । लिङ्गेन पूर्वपक्षिते कथं तेनैव सिद्धान्त इत्याशङ्कानुदयाय लिङ्गबाहुळ्योक्तिः ॥

( ४ ) विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।
स एव सर्ववेदोक्तस्तद्रथो देह उच्यते ॥
इति स्कान्दे ।

( ५ ) ब्रह्मशब्दानुगमाच्च ॥

---

( ४ ) ननु बाहुल्येन बलवतः सैद्धान्तिकलिङ्गादपि पूर्ववाद्युक्त लिङ्गमेव बलवत् । निरवकाशत्वेन स्वभावतो बलवत्त्वात् । न चावि शेषेणानिर्णयः, बाहुल्येन बलवतोऽपि स्वभावबलिनः प्राबल्यात् । यदाहुः—

द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।
तयोस्स्वभावो बलवान् उपजीव्यादिकश्च सः ॥

इति । अतः कथं तैर्विष्णुत्वनिश्चय इत्यतो देवतोपदेश्यत्वादिलिङ्गा नां निरवकाशत्वमपि स्मृत्या साधयति—विष्णुमिति ॥ देवाः विष्णु मेव प्राधान्येन शिष्यादिषु ज्ञानसम्प्रदायप्रवर्तनेन 'आनयन्' उपादि शन् । भूतिमुद्दिश्य विष्णुमेवोपासते । भूतिमिति विधेयविशेषणं वा । तथा च विष्णुं भूतिं भूतिर्ज्ञानाद्यैश्वर्यरूप इत्युपासते इत्यर्थः । 'सः' विष्णुर्मुख्यवाच्यतयेति शेषः, तेनैवकारोपपत्तिः । 'तद्रथो' विष्णोरे व रथः । अत्रैवकारस्य द्विर्ग्रहणात्सर्वत्रानुषङ्गः सूचितः । तेन सर्व लिङ्गानामपि निरवकाशत्वमुक्तं भवति । स्कान्दे इत्यनन्तरं लिङ्गाना मनन्यथासिद्धत्वमुक्तमिति वाक्यशेषः । तथाचैकप्रकारेण प्रबलात्पू र्वपक्षिलिङ्गात्प्रकारद्वयेनापि प्रबलस्य सैद्धान्तिकलिङ्गस्याधिक्येन निर्णयोपपत्तिरिति भावः । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु पूर्वपक्षि लिङ्गस्य न निरवकाशत्वेनापि प्राबल्यमस्ति, प्राणैः सहगणितत्वस्या न्तर्यामिनिष्ठतासम्भवात् ॥

( ५ ) यदा बहुत्वनिरवकाशत्वाख्यप्रकारद्वयेनापि दुर्बललिङ्गस्यो भयथाप्रबललिङ्गतो बाधसम्भवेन तेनैव प्राणस्य विष्णुत्वसिद्धिः, त दा किमु वाच्यं निरवकाशब्रह्मशब्दाभ्यासादिति भावेनानुगमपदं प्र कारान्तरेण व्याचष्टे—ब्रह्मेति ॥ अस्मिन् प्रकरणे 'एतद्ब्रह्म' (ऐ.आ.२-१-१.) 'ब्रह्मणो लोकः' (ऐ.आ.२-१-३.) 'ब्रह्मेमं पुरुषम्' (ऐ.आ२-१-४.) 'उदरं ब्रह्मेत्याचक्षते' (ऐ.आ.२-१-४.) 'अ इति ब्रह्म' (ऐ.आ.२-३-८.) इ त्यादिनिरवकाशब्रह्मशब्दाभ्यासाच्चेत्यर्थः । एतद्विष्णुस्वरूपं ब्रह्म गुण पूर्णम् । अयं जीवो ब्रह्मणः परस्याश्रयः । इमं पुरुषं चतुर्मुखं परब्रह्म

(६) सू—ॐ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्ब
न्धभूमा ह्यस्मिन् ॥ ॐ ॥ २९. ॥
'प्राणो वा अहमस्म्यृषे' (ऐ. आ. २-२-३.) इति व
क्तुरात्मोपदेशादिन्द्र एवेति चेत्—न, 'प्राणस्त्वं प्रा

---

प्रापद्यत । वायुर्यत्र स्थित एवैव गरणं स्तवनं चक्रे तत्स्थानमुदरं त
द्गतमित्यर्थः ॥

(६) उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे–नेति ॥ प्राण इत्यनुवर्तते । तथा च प्राणो विष्णुरिति न युक्तम् । कुतः? 'प्राणो वा अहमस्म्यृषे' इति वाक्येन बृहतीसहस्रवक्तुर्विश्वामित्रस्येन्द्रेण प्राणतया आत्मनः स्वस्यैवोपदेशादित्यर्थः । प्राण इन्द्र एवेति फलोक्तिः । न सूक्तहेतोः साध्योक्तिः । 'प्राणो वाऽहमस्म्यृषे' इति वाक्यं तु 'तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः वरं ते ददामीति । स होवाच त्वामेव जानीयामिति । तमिन्द्र उवाच' इति पूर्ववाक्येन सह व्याख्येयम् । तत्प्रकारस्तु—'तं' विश्वामित्रं 'इन्द्रः' तदन्तःस्थो भगवानुवाच । किमिति? हे ऋषे मे प्रियं धामोपागाः प्राप्नुहि । ते वरं ददामीति । वैशब्दोऽवधारणे प्रसिद्धौ वा । एवं त्रिवारं शंसनेन धामशब्दितसालोक्यप्राप्तिभगवत्पुरप्राप्तिसाधनभगवत्प्रसादं प्राप्तः 'सः' विश्वामित्रः इन्द्राविष्टेन हरिणा वरं ते ददामीति पुनरुक्तस्सन् उवाच । किमिति? त्वां सामान्यतः पूर्वं अहं जाने । अधुना कीदृशस्त्वमिति विशेषतो जानीयामिति । एवमुक्तः 'इन्द्रः' तदन्तर्गतो हरिः ऋषिं प्रत्युवाच । किमिति? हे ऋषे अहं प्रकृष्टानन्दरूपत्वात्प्राणशब्दवाच्योऽस्मीति । अत्र वाक्यसमन्वयपक्षेऽस्मदादिषूपपदेषु विहितानामस्मीत्यादितिङन्तपदानां तद्वृत्तेः सुलभत्वादिति तत्त्वनिर्णयटीकारीत्या अहमितीन्द्रान्तःस्थेन हरिणा स्वात्मनो निर्देशादस्मीति उत्तमपुरुषोपपत्तिः। पूर्वपक्षिरीत्या अहं प्राणोऽस्मीति पदानां अहेयत्वप्रकृष्टानन्दत्वसंहर्तृत्वज्ञातृत्वनिमित्तैः भगवति समन्वयपक्षे तु न तदनुपपत्तिरिति ध्येयम् । श्रुत्यर्थस्तु स्पष्टः । नञध्याहारेण सिद्धान्तांशं व्याचष्टे—नेति । अनुगमादित्यनुवर्तते । नेत्यावर्तते । हिशब्दो यत इत्यर्थे । अस्योक्तमिति शेषः । तथा चेत्थं तत्त्वप्रदीपटीकोक्तयोजना—नायं प्राण इन्द्रः, किन्तु विष्णुरेव । कुतः? 'अनुगमात्'

णः सर्वाणि भूतानि ' ( ऐ. आ. २ २-३. ) इति बह्व ध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ २९ ॥

प्रागुक्तप्रबलतमलिङ्गादेः । तथा सत्युपदेशविरोध इति चेत्—न, कुतः ? यतोऽत्र प्रकरणे स्वस्थितस्यैव प्रथमं 'प्राणो वा अहमस्म्यृषे' इति वाक्येन परमात्मत्वमुक्तमिन्द्रेण । तर्ह्यैक्योक्तिविरोध इत्यपि न । यतोऽत्र तस्यैव प्राणाख्यपरमात्मनः 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इत्येवमादिवाक्येन 'बह्वध्यात्मसम्बन्धः' इन्द्रादिजीवरूपबहुदेहसम्बन्धः सर्वगतत्वमेव ऋषिं प्रति इन्द्रेणोक्तं 'विद्यते' अस्ति न त्वैक्यमत इति । सूत्रोक्तसम्बन्धबाहुल्यं सम्बन्धिनि पर्यवस्यतीत्याशयेन बह्वित्युक्तम् । भूमशब्दस्य भाववाचित्वेऽपि भावभवित्रोरभेदात् भवितरि प्रयोगः । सूत्रे तु परनिपात आर्षः । अथवा—अधिकश्चासावात्मा चाध्यात्मा तस्य सम्बन्धः बहुश्चासावध्यात्मसम्बन्धः चेति विग्रहः । तथा च 'हि' यतः 'अत्र' इन्द्रे 'बहुः' बहुलः परमात्मसम्बन्धः सन्निधिविशेषो विद्यत इत्यर्थः । विद्यत इत्यनन्तरं तदपेक्षयाऽयं उपदेशो न स्वापेक्षयेति शेषः । तथाचेन्द्रे तात्कालिकेश्वरसन्निधानविशेषाभिप्राया 'प्राणो वा अहम्' इत्युक्तिः, न स्वापेक्षयेति नोपदेशविरोध इति भावः । कुतो न स्वापेक्षयेत्यतः-प्राणस्त्वमित्याद्याह । योजना तु-हि यस्मात् 'प्राणस्त्वम्' इत्यादि वाक्येनास्य प्राणस्य 'बह्वध्यात्मसम्बन्धः' अध्यात्मत्वेनान्तर्यामित्वेन इन्द्रादिरूपबहुदेहसम्बन्धः सर्वगतत्वमुक्तं विद्यते न चैतदत्र जीवविशेषेन्द्रे विद्यते युज्यते तस्मादिति । प्रथमपक्षे 'यस्यात्मा शरीरम्' (माध्यन्दिन) इति श्रुतेरिन्द्रादीनां विष्णुदेहत्वादैक्यव्यपदेशः शरीरशरीरिभावनिबन्धन इति ज्ञापनायाध्यात्मेत्युक्तिः । अनेन बृहतीसहस्रवक्तुर्विश्वामित्रस्य तं प्रतीन्द्रेण प्राणतयाऽऽत्मोपदेशादयं प्राणो न विष्णुः, किन्तु इन्द्र एवेति चेत्—नेन्द्रोऽयं प्राणः, किन्तु विष्णुरेव । कुतः ? अनुगमात् प्रागुक्तबलतमालिङ्गादेः । न चोपदेशविरोधः । यतोऽयमिन्द्रगताध्यात्मविषय एव । कुतः? हि यस्मादस्मिन् प्रकरणेऽध्यात्मसम्बन्धभूमा । अत्राध्यात्मसम्बन्धशब्देनात्माधिकारे वर्तमानमिति । अधिश्चासौ आत्मा चेति देहः परमात्मा चोच्यते । तथा च यस्मादध्यात्मनो विष्णोरिन्द्रविश्वामित्रादिदेहसम्बन्ध उक्तोऽस्ति तस्मात् । अथवा—हि यस्मात् अस्मिन्निन्द्रे अध्यात्मसम्बन्धभूमा—अधिरीश्वरे—अधिकस्यात्मनः

( ७ ) सू—ॐ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ॐ ॥ ३० ॥
शास्त्रमन्तर्यामी ।

परमात्मनः सम्बन्धस्यावेशस्य भूमा बाहुल्यं विद्यते तस्मादुपदेशस्य सन्निहितपरमात्मविषयत्वोपपत्तेरिति भावः । तदपि कुतः ? हि य स्मात् अस्मिन् प्रकरणेऽध्यात्मसम्बन्धभूमोक्तः तस्मादिति सूत्रार्थ उक्तो भवति ॥

( ७ ) ननु यदि प्राणशब्देनेन्द्रेणापि विष्णुरेव स्वात्मादिसर्वगत तयोच्यते तर्हि मयि प्राण इति निर्देशः स्यात् । न त्वहमिति । विष्णावहमित्यादिरूपोपदेशायोगादित्याशङ्कां परिहरत्सूत्रं पठति—शास्त्रेति ॥ तुरेवार्थोऽप्यर्थः, यत इत्यर्थे स्मृतिसूचकश्च । युज्यत इति शेषः । तथा च यतोऽपि प्राणस्य विष्णुत्वेऽप्युपदेशः 'प्राणो वाऽहम्' इत्येवंरूपो युज्यते, अतो न तदनुपपत्तिः । कथमयं युज्यते ? यतोऽयमुपदेशः 'शास्त्रदृष्ट्या' शास्ति सर्वमिति शास्त्रं अन्तर्यामी भगवान्, तद्दृष्ट्या तदपेक्षयैव प्रवृत्तो न त्वैक्येन । न चान्तर्यामिणि अहमादिप्रयोगादर्शनात् तदयोगः । यतो 'वामदेववत्' तत्कर्तृकप्रयोगवत् । यथा वामदेवो नाम ऋषिः अन्तर्यामिविवक्षया 'अहं मनुरभवम्' इति स्वस्मिन् अहंमन्वादिशब्दान् प्रयुयुजे । तथा अयमप्युपदेशो युज्यते अत इति सूत्रयोजनामभिप्रयन् सौत्रशास्त्रपदं व्याचष्टे—शास्त्रमिति । विष्णुरिति शेषः । तथाचान्तर्यामी विष्णुरिह शास्त्रपदेनोक्त इत्यर्थः । अन्तर्यामीति प्रकृताभिप्रायेण । यद्वा—शास्ति प्रेरयति सर्वानिति व्युत्पत्त्या अन्तर्यामीत्येतदेव शास्त्रमित्यस्य व्याख्यानं भवतीति नापद्मार्थत्वशङ्कावकाशः । अतएव भागवते ध्येयेऽन्तर्यामिण्येव शास्त्रशब्दप्रयोगः । ऐतरेयभाष्ये 'शास्तुरन्तर्यामिणः' इति शास्तृशब्दं मूलीकृत्य व्याख्यानेऽपि, तदनुसारेण च तत्त्वप्रदीपे शास्तुरन्तर्यामिणो विष्णोरिति व्याख्यानेऽपि नास्य तद्विरोधः शङ्क्यः, यतस्तत्पर्यायशब्दव्याख्यानेनैव शास्त्रशब्दो व्याख्यातो भवतीत्याशयेन शास्त्रशब्दपर्यायशास्तृशब्दो व्याख्यायते । यद्वा—शास्त्रशब्दे शास्तृ अ इत्यवयवविभागमभिप्रेत्य शास्त्रित्यंशस्यान्तर्यामिण इत्यनेन अशब्दस्य विष्णोरित्यनेन च व्याख्यातत्वात्, अत्र तु अवयवविभागमविवक्षित्वा शास्त्रमित्यखण्डपदस्यान्तर्यामीति व्याख्यानात्तदनुकूलतया 'संविच्छास्त्रम्' इति वचनोपन्यासाच्च न विरोधः ॥

(८) 'संविच्छास्त्रं परं पदम्' इति हि भागवते ।
(९) तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः ।
न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम् ॥
इति पाद्मे ।

---

(८) अन्तर्यामिणो विष्णोः शास्त्रपदवाच्यत्वे प्रमाणमाह—संविदिति ॥ प्रथमस्कन्धे व्यासं प्रति नारदवाक्यमिदम् ।

स्वप्नो मायाऽग्रहः शय्या जाग्रदाभास आत्मनः ।
नामरूपक्रियावृत्तिः संविच्छास्त्रं परं पदम् ॥

इति । अस्यार्थः—आत्मनो जीवस्य मायावासनाख्यसंस्कारोपादानकवस्तुज्ञानरूपः स्वप्नः । अग्रहः जाग्रत्स्वप्नविषयज्ञानरहिता शय्या सुषुप्तिः नामरूपक्रियासु शब्दार्थकर्मसु वृत्तिर्व्यावृत्तिर्यस्याः सा । आभासः प्रत्ययः संज्ञादिविषयज्ञानरूपा जाग्रच्च । आहत्यैतदवस्थात्रयं यस्मादात्मनः परब्रह्मणो भवति, तत्संवित् सर्वविषयकयथार्थज्ञानरूपं सर्वज्ञं वा । शास्त्रं सर्वनियन्तृ, परं उत्तमं पदं सद्भिः प्राप्यं ब्रह्म अहं अचिन्तयमिति । भागवत इत्यनन्तरं 'प्रयोगात्' इति शेषः । अस्यान्तर्यामीत्यनेनान्वयः ॥

(९) ननु अन्तर्यामिणि अहमादिप्रयोगः कथं सम्भवतीत्याशङ्कायां तत्र तुशब्दसूचितां स्मृतिमेवाह—तत्तदिति ॥ विष्णुः 'तत्तन्नाम्ना' अन्यपरत्वेन प्रसिद्धाहमादिनाम्नोच्यते इति । अनेन तस्यान्तर्यामिणि विष्णौ विद्वद्रूढिर्दर्शिता । 'सर्वशास्तृत्वहेतुतः' सर्वनियन्तृत्वनिमित्तेनेति । अनेन महायोगो दर्शितः । तत्र तस्य स्वातन्त्र्यनिमित्तोक्तेः । अनेन परमत इवास्मन्मतेऽपि लाक्षणिकत्वं परिहृतम् 'पुरुषोत्तमं' अन्तर्यामिणं विष्णुं 'ऋते' विना, अन्यत्र 'क्वापि' जीवादौ 'किं चित्' अहमादिरूपं 'नाम' वाचकतया नास्तीति । अनेन हरौ परममुख्यता अन्यत्र केवलमुख्यता चोक्ता । अन्यथा न क्वापीति सामान्यनिषेधायोगात् । अत्राहमादिशब्दाः प्रत्यगादिवाचित्वेन प्रसिद्धाः, प्रत्यगादयश्च सर्वदा पिण्डीभूताः, तानविवेकेनाज्ञाः केवलजीवादौ प्रयुञ्जते दहति शब्दमिव काष्ठे । प्राज्ञास्तु मुख्यामुख्यविवेकवन्तो ह्यमुख्यमर्थमनादृत्य मुख्यार्थे हरौ प्रयुञ्जत इति तत्त्वनिर्णयटीकोक्तमनुसन्धेयम् । 'पाद्मे' इत्यनन्तरं 'अन्तर्यामिण्यहमादिपदानां मुख्यत्वोक्तेः शास्त्रदृष्ट्या अहमाद्युपदेशो युक्त एव' इति वाक्यशेषः ॥

( १० ) 'अहं मनुरभवं सूर्यश्च' ( ऋ. ४-२६-१. ) इत्यादिवत् ॥ ३० ॥

( ११ ) सू—ॐ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ॐ ॥ ३१ ॥

'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' ( ऐ. आ.२-२-४. ) इति जीवलिङ्गं प्राणसंवादादिमुख्यप्राणलिङ्गं तस्मात् नेति चेत्—

---

( १० ) नन्वन्तर्यामिणि अहमादिप्रयोगादर्शनात् तदयोग इत्याशङ्कां सूत्रोक्तदृष्टान्तविवरणेन परिहरति—अहमिति ॥ 'अहं' वामदेवसंज्ञकऋष्यन्तर्यामी तत्तदन्तर्यामितया मनुः सूर्यश्चाभवमिति ऋगुक्तार्थः। आदिपदेन 'अहं कक्षीवानृषिरस्मि विप्रोऽहं कुत्सम्' (ऋ.४-२६-१. ) इत्यादिकं गृह्यते । 'इत्यादिवत्' एवमादिप्रयोगवदित्यस्य 'शास्त्रदृष्ट्योपदेशः' इत्यनेनान्वयः ॥

( ११ ) पुनरुक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य आक्षेपांशं तावद्व्याचष्टे—जीवेति ॥ अनुसन्धीयते उक्तमिति च शेषः । संवादो विवादः कलहः प्राणस्य प्राणैस्सह संवाद इति विग्रहः । तथा च यस्मादत्र प्रकरणे 'तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' ( ऐ. आ. २-२-१. ) इत्यनेन यच्छतसंवत्सरपर्यन्तं प्राणस्य जीवद्देहेऽवस्थानहेतुकं शतायुष्ट्वरूपं जीवलिङ्गमुक्तं तत् 'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' इत्यादिना बहुषु स्थलेषु अनुसन्धीयते । यस्माच्च 'ता अहिंसन्ताहमुक्थमहमुक्थमस्मि' ( ऐ. आ.२-१-४.) इति वाक्येन प्राणस्य प्राणैरिन्द्रियैः सह संवादरूपमुख्यप्राणलिङ्गमुक्तम् । यस्माच्चादिपदगृहीतं 'प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहितास्स्युः एवमस्मिन् प्राणे चक्षुश्श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः' ( ऐ. आ. ५-२-१. ) इति वाक्येन सर्वजीवेन्द्रियदेहधारकत्वरूपलिङ्गं चोक्तमस्ति तस्मादयं प्राणो न विष्णुः, किन्तु जीवमुख्यप्राणावेवेति योजना । यद्यपि 'तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' ( ऐ.आ.२-२-१. ) इति शतायुष्ट्वलिङ्गप्रतिपादकवाक्यमेवोदाहरणीयं, न तु 'तावन्ति' इति वाक्यम् । तथाऽपि लिङ्गस्य बहुषु स्थलेषु अनुगमोऽस्तीति

( १२ ) न, अन्तर्बहिस्सर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च ।

( १३ ) 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' ( ऐ.आ. २-४-३. ) 'स एतमेव पुरुषं ब्रह्म ततमम

ज्ञापनायोपनिषदो जीवलिङ्गे तात्पर्यमस्तीति ज्ञापयितुं अनुसन्धिवाक्यमेवोदाहृतम् । सिद्धान्ते श्रुत्यर्थस्तु—पुरुषायुषः शतसंवत्सरस्याह्नां सहस्राणि शतसंवत्सरान्तःप्रविष्टाहर्नियामकसूर्यगतभगवत्पुरुषरूपाणि तावन्ति सहस्राणि । कियन्ति ? बृहतीसहस्रगताक्षराणां वाच्यानि पुंरूपाणि यावन्ति सहस्राणि तावन्ति । तथा च तानि षट्त्रिंशत्सहस्राणि सम्पन्नानि भवन्ति । 'ताः' चक्षुरादिदेवताः 'अहिंसन्त' विवादमकुर्वन् । किन्विति ? अहमस्य चतुर्मुखदेहस्योक्थोऽस्मि उत्थापकोऽस्मीति ॥

( १२ ) परिहारांशं व्याचष्टे—नेति ॥ प्राणो विष्णुर्नेति न, किन्तु विष्णुरेवायं, न जीवादिरित्यर्थः । कुतो नेत्यतस्तत्र प्रागुक्तानुगमहेत्वनुषङ्गं, न चोक्तजीवमुख्यप्राणलिङ्गविरोध इत्यतस्तत्रहेतुत्वेन यतः शास्त्रदृष्ट्या त्वयमुपदेश इत्यस्यानुषङ्गं, किमर्थमन्तर्यामीति प्रश्नस्यान्तरुपास्त्यर्थमिति परिहारं चाभिप्रेत्य न चोपासनेऽवान्तरभेदाभाव इति चोद्योत्तरत्वेन प्रवृत्तं 'उपासा' इति सूत्रांशं व्याचष्टे—अन्तरिति । गतत्वेनेत्यस्यान्तर्बहिस्सर्वशब्दैः प्रत्येकं सम्बन्धः । इतिशब्दः प्रकारार्थः । तथा च देहान्तर्गतत्वेन तद्बहिर्गतत्वेन सर्वगतत्वेनेति प्रकारेण 'उपासात्रैविद्ध्यात्' भगवदुपासनस्य त्रिविधत्वादित्यर्थः । ननु तथापि कथनं व्यर्थं वस्तुत उपासनात्रैविध्यस्येहानुक्तस्यान्तर्यामिकथनाप्रयोजकत्वादित्यतः प्रवृत्तं 'आश्रितत्वात्' इत्यंशं चशब्दाध्याहारेण व्याचष्टे—इहेति । एतत्प्रकरणे उक्तत्वादित्यर्थः । उपासात्रैविध्यस्येति विपरिणामेनात्रान्वीयते । चो हेतूपादकहेतुसमुच्चये । तथा च अत्रोक्तत्रैविध्यान्तर्गतान्तरोपासनार्थमन्तर्यामिकथनं युक्तमिति भावः ॥

( १३ ) अत्रोपासनात्रैविध्यमुच्यत इत्यत्रापि किं लिङ्गमित्यत आह—स इति ॥ 'सः' वासुदेवो भगवान् 'एतमेव सीमानं' शिरोमध्यं विदार्यैव 'एतया द्वारा' सुषुम्ना नाड्या 'प्रापद्यत' प्राप्तः । चतुर्मुखहृदयामिति शेषः । अनेन भगवतो देहान्तःप्रवेशोक्तेः उक्तेश्चोपासनार्थत्वात् अन्तरुपास्तिरुक्ता भवति । 'सः' चतुर्मुखदेहे प्राक्प्रप

पश्यत्' ( ऐ.आ.२-४-३. ) 'एतद्ध स्म वै तद्विद्वाना
ह महिदास ऐतरेयः' ( ऐ.आ.२-१-८. ) इत्यादिना ।
( १४ ) महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
साक्षात्स भगवान्विष्णुर्यस्तन्त्रं वैष्णवं व्यधात् ॥
इति ब्रह्माण्डे ।

---

दाभ्यामन्तः प्रविष्टो नारायणः 'एतमेव पुरुषं' व्यासकृष्णकपिलादि रूपमात्मानं आततगुणं स्वस्वरूपभूतमादानादिकर्तारं वा । ततमं 'लोपः समाने' इति सूत्रात्तलोपः । तमबर्थे मप्रत्ययो वा । तथा च त तमं अतिशयेन व्याप्तं निरवधिकव्याप्तिमन्तं 'ब्रह्म' गुणपूर्णं 'अपश्य त्' तद्गुणकतया तद्रूपं ददर्शेत्यर्थः । केचित्तु—तकार एव व्याप्त्य भिधायक इत्याहुः । अनेन सर्वगतत्वं तथोपासनार्थमुक्तम् । 'तदेत त्' प्रकृतं सर्वं 'विद्वान्' जानन्नैतरेयः इतराया अपत्यं पुमान् विशा लसंज्ञात् ऋषेः उत्पन्नः ऐतरेयः । 'महिदासो' महिनो महात्मानो दे वाः दासभूताः यस्यासौ भगवानाहेत्यर्थः । हस्मवैशब्दाः प्रसिद्धिद्यो तकाः । अत्र बहिरुपास्त्यर्थं महिदास आहेति बहिरुपास्तिरुक्ता भव ति । न च वाच्यमत्र स्वरूपमात्रमुच्यते, नोपासनार्थमिति । उपास नां विनोक्तिप्रयोजनाभावात् । इत्यादिनेत्यस्येत्यादिना वाक्येनोपा सनात्रैविध्यस्याश्रितत्वादर्थादुक्तत्वादित्यन्वयः । आदिशब्देन 'तं प्रप दाभ्यां प्रापद्यत ब्रह्मेमं पुरुषमेतस्यामेतम्' (ऐ.आ.२-१-४.) इत्यादिकं गृह्यते । ननु 'एतद्धस्मवै तद्विद्वानाह हिरण्यदन्वैदः' (ऐ.आ.२-१-५.) इति वन्महिदासोऽपि ऋषित्वेनाऽव्यतामिति चेन्न । अस्याः उपनिषदः ऐतरेयसंज्ञयैवेतरापुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तेर्व्यर्थ त्वात् ॥

( १४ ) तथाऽपि महिदासस्य विष्णुत्वं कुतो ज्ञायत इत्यत आह— महिदासेति ॥ 'जज्ञे' व्यक्तो बभूव । 'स च' महिदासः—

महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः ।
साक्षात्स भगवान्विष्णुस्तन्नामैको मुनिर्न्वभूत् ॥

इति छान्दोग्यभाष्ये अनन्तरोक्तभगवदन्यः तत्संज्ञकेतरापुत्रः ऋषिर त्र न विवक्षितः, किन्तु । यो 'वैष्णवं' विष्णुविषयं 'तन्त्रं' ग्रन्थं 'व्यधात्' निर्ममे । यद्वा—'तन्त्रं' पञ्चरात्रं व्यधात् नारदादिभ्यो व्याचख्यौ । यश्च 'साक्षात्' स्वयं 'भगवान्' पूर्णज्ञानादिमान् 'वि

( १५ ) तत्तदुपासनायोग्यतया च पुरुषाणाम् ।
( १६ ) केषां चित्सर्वगत्वेन केषां चिद्धृदये हरिः ।
केषां चिद्बहिरेवासौ उपास्यः पुरुषोत्तमः ॥
इति ब्राह्मे ।
( १७ ) अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः ।

ष्णुः' तदवतारभूतः पूर्वोक्तः स एवात्र विवक्षित इत्याह—साक्षादिति। ब्रह्माण्डे पुराण इत्यस्याश्रितत्वादित्यनेनान्वयः। महिदासस्य विष्णुत्वोक्तिरिति तदर्थः। तेन चशब्दान्वयः ॥

( १५ ) नन्वेकविधोपासनया सर्वेषां ब्रह्मापरोक्षसम्भवात्किमुपासात्रैविध्येन इत्यतः प्रवृत्तं 'तद्योगात्' इति सूत्रशेषं व्याचष्टे—तत्तदिति ॥ उपासनेत्यनेन पुरुषाणामित्यनेन च तदित्यस्यावृत्तिः सूचिता। चः समुच्चये। तथा च तेषां पुरुषाणां मनुष्यर्षिगन्धर्वदेवाख्याधिकारिणां तेषु त्रिविधोपासनेषु मध्ये तत्तदुपासने यथाक्रमं बहिरन्तर्व्याप्तिरूपैकैकोपासन एव योग्यतया योग्यत्वेन हेतुनेत्यर्थः। अस्योपासात्रैविध्यादित्यनेनान्वयः। तथाचानेकविधोपास्तियोग्यतावतामधिकारिणां नैकविधोपासनया ब्रह्मज्ञानमिति तत्त्रैविध्यमावश्यकमिति भावः ॥

( १६ ) पुरुषाणामुक्तानेकविधोपासनयोग्यता कुतो ज्ञायत इत्यतः कर्तृविशेषाननुपादाय सामान्यतः उपासकत्रैविध्यप्रतिपादिकां स्मृतिं पठति—केषां चिदिति ॥ 'पुरुषोत्तमो' हरिः 'केषां चित्' देवानां देवैः सर्वगतत्वेन प्रकारेणोपास्यः। 'केषां चित्' ऋषिगन्धर्वादीनां 'हृदये' स्वस्वहृदयाकाशे उपास्यः। 'केषां चित्' मनुष्योत्तमानां तु बहिरेवोपास्य इत्यर्थः। प्राचुर्यादेवमुक्तिः। इति ब्राह्म इत्यस्य तत्तदुपासनयोग्यतया तद्विशिष्टत्वेन पुरुषाणामाश्रितत्वादुक्तत्वादिति पूर्वेणान्वयः ॥

( १७ ) अत्रैवाधिकरणे कर्तृविशेषप्रतिपादकं विशेषप्रमाणमाह—अग्नाविति ॥ विष्णुः 'क्रियावतां' यज्ञादिक्रियानुष्ठातॄणां 'अग्नौ' गार्हपत्यादौ उपास्यः हरिः। 'योगिनां' ऋषीणां हृदये उपास्यः। 'अप्रबुद्धानां' मन्दमतीनां अत्यल्पप्रतिभानां मनुष्योत्तमानां 'प्रतिमासु' कृष्णरामादिविग्रहेषु उपास्यः। 'विदितात्मनां' विशेषतो ज्ञातभगवद्रूपाणां अद्भुतप्रतिभानां देवानां तु 'सर्वत्र' सर्वस्थानेषूपास्य इत्य

प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम् ॥

र्थः । अत्राग्नौ प्रतिमास्विति वाक्यद्वयेन बहिर्मात्रोपासनोपलक्ष्यते । अतएव स्थानद्वयोक्तिः। यथाश्रुते सूर्यादौ विष्णूपास्तेर्बहिरुपास्तित्वं न स्यात् । योगिनामित्यनेनान्तरुपास्तिरुक्ता । 'ऋषयोऽन्तःप्रकाशाः' ( ) इति श्रुतेः । सर्वत्रेति सर्वगतोपास्तिरिति ज्ञातव्यम् । न चात्र "येषां बहिरुपासनेन मोक्षस्तेषामपि हृदुपासनं किञ्चित्कार्यमेव" इति बृहद्भाष्येण " भगवान् बिम्बदर्शनेनैनं मोचयति " इति न्यायविवरणेन च विरोधश्शङ्क्यः । अग्नाविति वाक्येऽन्यनिषेधाभावेन बिम्बशब्दितस्वस्वयोग्यात्मापरोक्षार्थे हृद्युपासनस्यापि सर्वैः कार्यत्वाभ्युपगमात् । मोचकयोग्यापरोक्षद्वारभूतावताराद्यपरोक्षसाधनोपासनाया एव तैस्तैः प्राचुर्येण प्रकरणस्याग्नाविति वाक्येन व्यवस्थया प्रतिपादनाच्च । इति चेति । चः समुच्चये । वचनद्वयस्याप्येकार्थसाधकत्वादस्यापि ब्राह्मे आश्रितत्वादिति पूर्वेणान्वयः। तत्तदुपासनयोग्यतावत्त्वेन पुरुषविशेषाणामुक्तत्वादिति तदर्थः। अतो न तद्योगादिति हेत्वसिद्धिः शङ्क्येति भावः ॥

अनेन नात्रोक्तप्राणो विष्णुः, किन्तुजीवमुख्यप्राणावेव । कुतः? 'जीवमुख्यप्राणलिङ्गात्' शतायुष्ट्वरूपजीवलिङ्गस्य प्राणसंवादादिरूपमुख्यप्राणलिङ्गस्य चेह श्रवणादिति चेत्—न, विष्णुरेवायं प्राणः, न जीवादिः । कुतः? 'अनुगमात्' हेतोरेव, न चान्यश्रुतिलिङ्गविरोधः । उक्तरीत्या 'तद्योगात्' तेषामन्तर्यामिविषयत्वोपपत्तेः । यत्तश्शास्त्रदृष्ट्याऽयं उपदेश इति वा । किमर्थमत्रान्तर्यामिकथनमिति चेत्, अन्तरुपास्त्यर्थमिति ब्रूमः । न चोपासनेऽवान्तरभेदाभावः । 'उपासात्रैविध्यात्' अन्तरादिभेदेन भगवदुपासनस्य त्रिविधत्वात्। न च तथापि कथनमयुक्तम् । वास्तवत्रैविध्यस्येहानुक्तस्य कथनाप्रयोजकत्वादिति वाच्यम्। 'इह' प्रकरणे तत्त्रैविध्यस्याश्रितत्वादुक्तत्वात्। न चैकविधोपासनया सर्वेषां ब्रह्मापरोक्षसम्भवात् किमुपासात्रैविध्येनेति वाच्यम् । 'तद्योगात्' तेषां पुरुषाणां तस्मिन् तदुपासन एव योग्यत्वात् । अनेकविधोपास्तियोग्यतावतां च पुरुषाणां एकविधोपासनयाऽपरोक्षासम्भवेन योग्यताभेदादुपासात्रैविध्यस्यावश्यकत्वादिति सूत्रार्थ उक्तो भवति । न च विवादकर्तृत्वलिङ्गस्यान्तर्यामिविषयत्वे 'उदासीनौ च तावास्तां केशवश्चाब्जसम्भवः' इति वचनविरो

इति च ॥ ३१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये प्रथमस्याध्यायस्य
प्रथमः पादः.

॥ ॐ ॥

---

धः शङ्क्यः । तस्यान्तर्यामिविषयभिन्नबाह्यरूपविषयत्वात् । अतोऽन्य लिङ्गानां तत्तदन्तर्यामिविषयत्वोपपत्तेः तद्विरोधाभावात् । विष्णुरेवायं प्राणः आनन्दमयश्चेति युक्ता तज्जिज्ञासेति सिद्धम् ॥

॥ इति पादान्त्यप्राणाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां प्रथमाध्यायस्य
प्रथमः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे प्राधान्येन ।

( २ ) 'ब्रह्म ततमम्' इति सर्वगतत्वमुक्तं विष्णोः । तच्च 'त

---

१. अधिकरणम् ॥

( १ ) पूर्वोत्तरपादभेदस्य स्वस्मिन्नेकवाक्यतायाश्च सिद्धये एतत्पादप्रतिपाद्यं दर्शयति—लिङ्गेति ॥ लिङ्गमनुमापको धर्मः । सः आत्मेवात्मा प्रवृत्तिनिमित्तं येषां ते तथोक्ताः । 'निमित्तनिमित्तिनोरभेदोपचारात्' इति सुधोक्तेः । स्वरूपार्थो वा आत्मशब्दः । पूर्वयोजनायामात्मप्रतिपादके गौणी वृत्तिः । द्वितीयायां तु सामानाधिकरण्य इति भेदः । स्वार्थे कः । तथा च व्याप्यधर्मद्वारा धर्मिबोधकानामापाततो यौगिकानामित्यर्थः । विष्णोरन्यत्र प्रसिद्धानामिति च संयोज्यम् । 'शब्दानामिति' एकप्रातिपदिकरूपाणामनेकपदसमभिव्याहाररूपाणां चेत्यर्थः । 'विष्णौ प्रवृत्तिं' प्रकर्षेण वृत्तिं महायोगविद्वद्रूढिभ्यां विष्णुपरत्वमिति यावत् । 'प्रदर्शयति' प्रकर्षेण साधयति सूत्रकार इत्यर्थः । वैश्वानराधिकरणे नामसमन्वयकरणाद्व्याप्तिनिरासाय प्राधान्येन इत्युक्तम् । तथा च तत्रापि नामसमन्वयमुखेन प्राधान्येन फलतो बहुलिङ्गसमन्वयस्यैव करणाच्चाव्याप्तिरिति भावः ॥

( २ ) यद्यपि पूर्वपादान्त्याधिकरणेनैतत्पादाद्यस्य नावान्तरसङ्गत्यपेक्षेति न सा प्रदर्शनीया । तथापि इह तस्याः सम्भवात्फलस्यावश्यवक्तव्यत्वाच्च सा प्रदर्श्यत इत्याशयेन पूर्वाधिकरणसङ्गतिं विषयादिकं च दर्शयति ब्रह्मेति ॥ इति वाक्ये विष्णोः निरवधिकसर्वगतत्वमुक्तमित्यर्थः । ततः किमित्यत आह—तच्चेति । तदित्यावर्तते, उक्तमिति च वर्तते । तथाच 'ब्रह्म ततमम्' इति यत्ततमत्वमुक्तं प्राणाख्यविष्णोस्तत्तदेकदेशभूतं सर्वगतत्वान्तर्गतं सर्वप्राणिहृदयस्थत्वं तत्रैवैतरेयके 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः तमेतं दिव्येतं वायावेतमाकाश एतमप्सु एतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इत्यादौ एतमित्युत्तरवाक्येन उक्तमित्यर्थः । ततोऽपि किमित्यतः सयुक्तिकं पूर्वपक्षमाह—तच्चेति । चोऽवधारणे । आदिशब्देन 'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदि

स्यैतस्यासावादित्यो रसः' ( ऐ. आ. ३-२-३. ) इत्यादिनाऽऽदित्यस्य प्रतीयते ।

ति विद्यात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति . . सूर्य आत्मा जगतस्तस्थुषश्च . . एतं सर्वेषु भूतेषु' (ऐ.३-२-३.) इत्यादिवाक्यं गृह्यते। अत्र तस्येत्यादिरुपन्यासः एतमिति परामर्शनीयसमर्पकतयाऽऽवश्यकत्वात्पूर्वपक्षयुक्तिप्रदर्शनार्थं च कृतः । तथाच यत एतमित्युत्तरवाक्ये नोक्तं सर्वप्राणिहृदयस्थत्वं तस्येत्यादिना पूर्ववाक्येन प्रकृतत्वात्तस्यादित्यस्यैव प्रतीयते, अतस्तस्यैव तत्पूर्वोक्तं ततमत्वमपि भवेत् । न विष्णोरिति योजना । अत्र पूर्वपक्षे ततमत्वं सङ्कुचितं सर्वभूतगतत्वरूपं विवक्षितम् । न चैवं सिद्धान्त्यभिमतनिरवधिकसर्वगतत्वाक्षेपाप्राप्तिरिति वाच्यम् । पूर्वपक्षे 'एतमेव' इति अवधारणेन विष्णोरन्यस्यैव सर्वभूतगतत्वाद्विष्णोः भूतादन्यत्र सत्वेऽपि सर्वभूतगतत्वाप्राप्त्याऽऽक्षेपोपपत्तेः । अनेन पूर्वोक्तततमत्वान्तर्गतसर्वभूतगतत्वस्य विष्णोरन्यत्राक्षेपात् तेनास्याक्षेपिकी सङ्गतिः, विषयसंशयौ, विष्णोरन्यस्यैव सर्वप्राणिगतत्वमिति सयुक्तिकपूर्वपक्षश्च दर्शितो भवति । सिद्धान्ते श्रुत्यर्थस्तु — 'तस्य' प्रकृतस्य 'एतस्य' संवत्सरनामकस्य चतुर्मुखस्य सर्वादित्वततमत्वानियामकत्वनिमित्तैरादित्यनामा प्रद्युम्नो रसः सारभूतः । स यश्चायं पुरुषदेहगतः प्राक्तद्देहवर्जनादशरीरः 'प्रज्ञात्मा' ज्ञानरूपोऽनिरुद्धः । यश्चासावादित्ये स्थितः प्रद्युम्न एतत्स्थानद्वयगतं रूपमेकमिति विद्यात् । तस्मात्पुरुषादित्यगतानिरुद्धप्रद्युम्नयोरैक्यादादित्यः 'पुरुषं पुरुषं प्रति' प्रतिपुरुषं 'भवति' अभिमुखो भवति । प्रतिगृहं कूप इतिवत्सर्वपुरुषगतो भवतीति चेति । 'जगतो' जङ्गमस्य 'तस्थुषः' स्थावरस्य 'आत्मा' आदानादिकर्ता 'सूर्यः' सूरिप्राप्यो विष्णुर्दिवं पृथिवीमन्तरिक्षं च 'आऽप्राः' आसमन्तादपूरयदित्यर्थः । एतमित्यादीनां सप्तम्यन्तपदैः प्रत्येकं सम्बन्धः । तथा च 'बह्वृचाः' ऋग्वेदिनः 'एतं ह्येव' एतमेव पुरुषादित्यगतमेव हि विष्णुं 'महत्युक्थे' महदुक्थनामकबृहतीसहस्रे तद्देवताविषये तद्देवतामिति यावत् 'मीमांसन्ते' जानन्ति । 'अध्वर्यवो' यजुर्वेदिनः 'अग्नौ' चयनसाधनेष्टकादेवताविषये तद्देवतां मीमांसन्ते । 'छन्दोगाः' सामवेदिनो 'महाव्रते' तदाख्यस्तोत्रस्य देव

( ३ ) अतोऽब्रवीत्—

सू—ॐ ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ ॐ ॥ १ ॥

( ४ ) 'स यश्चायमशरीरः प्रज्ञात्मा' ( ऐ. आ. ३-२-४. ) इत्यादिना सर्वत्रोच्यमानो नारायण एव ।

---

तां स्तोत्रे मीमांसन्ते । 'अस्यां' पृथिव्यां एतं 'दिवि' अन्तरिक्षे वा ख्वादौ चैवं एतमेव 'सर्वेषु भूतेषु' सर्वप्राणिषु अन्तः व्याप्तमाचक्षते विद्वांस इत्यर्थः । सर्वेष्वित्येव पूर्तेः पुनर्भूतेष्वित्युक्तिरत्र भूतवृत्तित्व मात्रं प्रतिपाद्यतयाऽभिप्रेतमिति ज्ञापयितुम् । एतं सर्वभूतगतमेव विष्णुं गुणपूर्णत्वाद्व्याप्तत्वाच्च एतं मुख्यतो ब्रह्मेत्याचक्षते इति वाक्यशेषार्थः । न स्थानाधिकरणटीकायां तु—सर्वेषु भूतेषु चक्षुरादिस्थानेषु एतमेकमेव ब्रह्म गुणपूर्णमाचक्षते इति व्याख्यातम् । पूर्वपक्षी तु तस्यैतस्य प्रकृतप्रसिद्धसंवत्सरस्यासौ प्रसिद्ध आदित्यः सूर्यो रसः सारभूतोऽधिपतिरित्यर्थं मन्यते ॥

( ३ ) अथ सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ इति सङ्गतिसम्भवादाक्षेपसद्भावाच्च अतस्तत्परिहारायोत्तरमब्रवीद्बादरायण इत्यर्थः । तदेव सूत्रं पठति—सर्वेति ॥

( ४ ) अत्र समन्वयसूत्रात्तत्त्वित्यस्यानुवृत्तिं लिङ्गव्यत्ययं 'उच्यमानं' इत्यध्याहारं चाभिप्रेत्य प्रतिज्ञांशं व्याचष्टे—स यश्चेति ॥ वाक्येनेति शेषः । यद्यपि 'तस्यैतस्यासौ' इत्यादिनेति वक्तव्यम् । पूर्ववाक्यत्वात् । तथाऽपि तस्य पूर्वपक्षयुक्तिप्रदर्शनार्थत्वेनोपन्यस्तत्वात्तद्विहाय सिद्धान्तयुक्तिप्रदर्शकवाक्यज्ञापनाय 'स यश्चायमशरीरः प्रज्ञात्मा' इत्यादिनेत्येवोक्तम् । वस्तुतस्तु—न 'तस्यैतस्यासौ' इत्यस्येव 'स यश्च' इत्यस्य युक्तिप्रदर्शनमात्रतात्पर्येणोपन्यासः, नापि विषयमात्रप्रदर्शनतात्पर्येण । अपि तु पूर्वं विषयवाक्यस्य अनुदाहृतत्वात्तदर्थतया तद्गतैतच्छब्दपरामर्शनीयसमर्पणार्थमनन्यसाधारणस्वतोऽशरीरत्वयुक्तिप्रदर्शनार्थं चेति ध्येयम् । 'सर्वत्र' सर्वप्राणिहृदयेष्वन्तर्गततयोच्यमानो नारायण एवेति । नारायणशब्दप्रयोगेन

यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥

इति वाक्यमपि सङ्गृहीतं भवति । तेन च सूत्रे सङ्कुचितवृत्तिना सर्व

(५) 'तदेव ब्रह्म परमं कवीनाम्' (महाना. १-६.)
'परमं यो महद्ब्रह्म'
(६) वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत् ।
स हि सर्वगुणैः पूर्णः तदन्ये तूपचारतः ॥
इति । तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥
(७) सू—ॐ ॥ विवक्षितगुणोपपत्तेश्च ॥ ॐ ॥ २ ॥

श्चेत्यनेन सर्वभूतहृद्गतत्वस्यैवाभिप्रेतत्वेनान्यत्र बहिर्नेति प्राप्तशङ्का निरस्ता भवति ॥

(५) हेत्वंशं व्याचष्टे—तदेवेति ॥ व्याख्यातमेतज्जिज्ञासानये । ईश्वरब्रह्मणोरभेदबोधनार्थं प्रवृत्तस्य 'परमं यो महद्ब्रह्म परमं यः परायणम्' इति भारतवाक्यस्य यः परमं महद्ब्रह्म यः परमं परायणं तस्य लोकप्रधानस्य जगन्नाथस्य नाम्नामित्युत्तरवाक्येनान्वयः ॥

(६) वासुदेवादित्यपरा स्मृतिः ॥ 'वासुदेवात्' कृष्णादन्यः को वा ब्रह्मशब्दमुख्यवाच्यो भवेत्, न कोपि । किन्तु, स एव मुख्य वाच्यः । कुतः ? 'हि' यस्मात् 'सः' वासुदेवः सर्वगुणैः पूर्णस्तदन्ये त्वपूर्णाः तस्मात् । तर्हि 'ब्रह्माणि जीवाः सर्वेऽपि' इत्यादि कथमित्यत आह—तदन्य इति । वासुदेवादन्ये जीवाः 'उपचारतः' अमुख्यत एव ब्रह्मशब्दोदिताः, न तु मुख्यत इत्यर्थः । इतीति । वाक्योक्तिरिति शेषः । अनेन सर्वत्रेत्यस्य हेतावप्यन्वयो दर्शितः । तथा च सर्वत्रोदाहृतवाक्येषु 'तस्मिन्नेव' विष्णावेव 'प्रसिद्धस्य' रूढत्वेनावगतस्य 'ब्रह्मशब्दस्योपदेशात्' सर्वगते वस्तुनि श्रवणादित्यर्थः । तस्मिन्नेवेत्यनेन श्रुतेर्निरवकाशत्वमुक्तं भवति । अनेन 'स यश्चायमशरीरः प्रज्ञात्मा' (ऐ.आ.३-२-३.) इत्यादिना 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐ.आ.३-२-३.) इति शाखाशेषेण सर्वत्र सर्वेषु भूतेषु अन्तर्गततयोच्यमानो नारायण एव न त्वादित्यादिः । कुतः ? 'एतमेव ब्रह्मेत्याचक्षते' इति सर्वभूतगते वस्तुनि नारायणैकनिष्ठत्वेन श्रुत्यादिप्रसिद्धब्रह्मशब्दोपदेशाच्छ्रुतेरिति सूत्रार्थ उक्तो भवति ॥

(७) युक्त्यन्तरेण विष्णोरेवात्रोक्तसर्वगतत्वं प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—विवक्षितेति ॥ आदिपदेन 'अगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः । श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्या

'स योऽतोऽश्रुतः' ( ऐ. आ. ३-२-४. ) इत्यादि ।

( ८ ) स हि 'न ते विष्णो जायमानो न जातो देवः' ( ऋ.

---

त्' ( ऐ.आ.३-२-४. ) इति वाक्यशेषो गृह्यते । इत्यादीति लुप्ततृतीया विभक्तिकं पदम् । अस्य विवक्षितेति सूत्रपदेनान्वयः । अत एव सूत्र भाष्ययोरेकीभाव इति तत्त्वप्रदीपोक्तिः । अनेन सूत्रे श्रुत्येति शेषः सूचितः । चः पूर्वोक्तहेतुसमुच्चयेऽवधारणे च । यतो वक्तुं योग्ये विवक्षा भवति । अतो विवक्षिताः वक्तुं योग्याः वक्ष्यमाणा इति वा । ये तु श्रुतीनां ब्रह्मगुणेषु तात्पर्याभावं वदन्ति, तन्निरासाय विवक्षितपदमुपनिबबन्ध सूत्रकृदिति तत्त्वप्रदीपोक्तेः श्रुतितात्पर्यविषयभूता इति वा । सर्वत्रेत्यनुवर्तते । गते इति शेषः । तथा च सर्वत्र गते विवक्षितानां श्रुत्या सर्वत्र गतनिष्ठतया वक्तुं योग्यानां इतःपरं श्रुत्या सर्वगतनिष्ठतया वक्ष्यमाणानां श्रुतितात्पर्यविषयीभूतानां वा गुणानामुपसंहारगताश्रुतत्वादीनां विष्णोरेव योग्यत्वेन तस्मिन्नेवोपपत्तेः अन्यत्रानुपपत्तेश्च सर्वत्रोच्यमानो नारायण एव इति सूत्रार्थ उक्तो भवति । यः प्रकृतो विष्णुः सः 'अतः' देशकालगुणैर्व्याप्तः । अत सातत्यगमने इति धातुव्याख्यानात् 'सन्ततो ह्यत उच्यते' इति वचनाच्च । यद्वा-अतो तिस्तृतीयेतिशये अधिक इत्यर्थः । 'अश्रुतः' सर्वात्मना श्रोतुमशक्यः । स्वयमेव स्वात्मानं स्वातन्त्र्येण शृणोति । 'नर्ते त्वत्' (ऋ.१०-११२-९.) इति श्रुतेः । 'अगतः' अप्राप्तः पूर्णत्वात्सर्वात्मनाऽज्ञात इति वा । सर्वात्मना मननविषयो न भवतीत्यमतः । 'अनतो' नेतृरहितः स्वतन्त्र इति यावत् । 'अदृष्टः' प्रत्यक्षेण केन चित्, सर्वात्मना पूर्णत्वात् । अत एव सर्वात्मना 'अविज्ञातः' विशेषतो न ज्ञातः । 'अनादिष्टः' नियोजकशून्योऽन्यैरनाज्ञप्त इति वा । यथाऽन्यैः स्वयमश्रुतादिर्न तथान्ये, सर्वात्मना श्रुताद्या इत्याह—श्रोतेति । 'श्रोता' युगपत्स्वातन्त्र्येण श्रवणकर्ता । 'मन्ता' स्वातन्त्र्येण सर्वमननकर्ता । स्वातन्त्र्येण सर्वद्रष्टा । 'आदेष्टा' नियोजनकर्ता । 'आघोष्टा' सम्यग्वक्ता । 'विज्ञाता' विशेषेण ज्ञाता । प्रकर्षेण ज्ञाता । 'सर्वेषां भूतानां' जीवानां 'अन्तरः' अन्तस्थः 'पुरुषः' पूर्णः 'समः' समानः, सर्वरूपेण 'आत्मा' आदानादिकर्तेति विद्यादित्यैतरेयभाष्यतत्त्वप्रदीपविश्वेश्वरतीर्थीयदिशा श्रुत्यर्थः ॥

( ८ ) नन्वेतच्छ्रुत्युक्तानां अश्रुतत्वादिगुणानां कुतो विष्णुनिष्ठत्व

७-९९-२. ) इत्यादिनाऽश्रुतत्वादिगुणकः ।

(९) 'स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्तः' इत्यादि चतुर्वेद शिखायाम् ॥ २ ॥

(१०) न चादित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम् ।

---

मित्यत आह—स हीति ॥ हिशब्दः प्रसिद्धौ । 'सः' विष्णुः 'न ते' इत्यादिना वाक्येनाश्रुतत्वादिगुणः तद्वत्तया प्रसिद्ध इत्यर्थः ।श्रुतौ 'श्रोत्रादिना' इति पदाध्याहारेणेति भावः । यद्यपि श्रुतावतत्वस्य प्रथमोक्तत्वादतत्वादिगुण इति वक्तव्यम् । तथाऽपि तस्य सर्वगतत्वरूपत्वेन विष्णुनिष्ठतया साध्यत्वात् असिद्धत्वात् स विष्णुरतत्वादिगुणकः प्रसिद्ध इति सिद्धनिर्देशायोगात् अश्रुतत्वादीत्युक्तम् । यद्वा— विष्णुरतत्वादिगुणकः 'न ते विष्णो' ( ऋ.७-९९-२. ) इत्यादिश्रुतेरिति प्रयोगे सर्वगतत्वरूपस्यातत्वस्य साध्यत्वात्तस्य च 'न ते विष्णो' इत्यादावनुक्तेर्हेत्वनन्वयादश्रुतत्वादीत्युक्तम् ॥

(९) 'न ते' इत्यादिश्रुतौ मुखतोऽश्रुतत्वादिकं विष्णोर्न प्रतीयते इत्यतोऽत्रैवार्थे स्पष्टश्रुतिं चाह—स इति ॥ यः 'सविता' जगदुत्पादकः स हरिरेव । यो 'वायुः' बलज्ञानरूपो देवः स परमः परमात्मैव । यः 'इन्द्रः' परमैश्वर्यवान् स विष्णुरेव, न प्रसिद्धादिः । योऽश्रुतोऽदृष्टः सोऽनन्तोऽपरिमितो हरिरेव नान्य इत्यर्थः । यद्वा—यो हर्यादिशब्दवाच्यः प्रसिद्धः, स एव सवितृत्वादिगुणवाचिशब्दवाच्य इत्यर्थः । इत्यादीति । यतः चतुर्वेदशिखायामित्याद्युक्तमतोऽपि स एवाश्रुतत्वादिगुण इत्यन्वयः ॥

(१०) ननु यथा ब्रह्मशब्दादश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इत्युच्यते । तथाऽऽदित्यादिशब्दात्सर्वजीवलिङ्गाच्चादित्यः सर्वजीवा वा सर्वगताः किं न स्युरित्यत आह—न चेति ॥ 'आदित्यो रसः' इत्यादित्यशब्दात् सर्वगतत्वप्रकरणे 'चक्षुर्मयः श्रोत्रमयः छन्दोमयो मनोमयो वाङ्मय आत्मा' ( ऐ. आ. ३-२-१. ) इति श्रुतौ ज्ञानकरणचक्षुराद्यात्मकदेहाभिमानित्वेन जीवे प्रसिद्धाच्चक्षुर्मयत्वादेश्चेत्यर्थः । हेतुसमुच्चये चशब्दः । 'जीवः' इत्यनेन सूत्रगतं शारीरपदं व्याख्यातम् । 'शारीरौ तावुभौप्रोक्तौ जीवश्च परमस्तथा' इति स्मृतेः । शारीराभिमानित्वाच्च जीवस्य शारीरत्वं युक्तम् । जीव इत्येकवचनं समुदाया

(११) सू—ॐ ॥ अनुपपत्तेस्तु न शारीरः ॥ ॐ ॥ ३ ॥
एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥
(१२) सू—ॐ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ॐ ॥ ४ ॥
'आत्मानं परस्मै शंसति' (ऐ. आ. ३ - २ - ३.)
इत्यादि ॥ ४ ॥

---

भिप्रायम् । जीवश्चेत्यपि चशब्दान्वयः । तेनादित्यप्रतिज्ञा समुच्ची यते । सर्वत्र गत इति शेषः । इति न वाच्यमिति सम्बन्धः ॥

(११) कुतो न वाच्यमित्यत्र हेत्वाकांक्षायां सूत्रमुपन्यस्य प्रतिज्ञा भागस्यावतारिकाभाष्येणैव व्याख्यातत्वाद्धेत्वंशमेव व्याचष्टे—अनुप पत्तेरिति ॥ एकस्यैकैकस्य जीवस्येति विपरिणामेनानुवर्तते । सर्वश रीरेति । सर्वशरीरस्थत्वस्यानुपपत्तेः सर्वजीवस्य समानभोगप्राप्तिरू पोपपत्तिविरुद्धत्वादेवेत्यर्थः । न त्वन्यप्रापकाभावादिति हेत्वन्तरम न्वेषणीयमित्येवशब्दार्थः । एवेत्यनेन सौत्रतुशब्दो व्याख्यातः । अनुप पत्तिस्तु टीकायामेव सहेतुकमुपपादिता ॥

(१२) युक्त्यन्तरेण शारीरस्य सर्वगतत्वं निराकुर्वत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—कर्मेति ॥ भावप्रधानोऽयं, चः समुच्चये । 'सर्वत्रोक्तः शारीरः' इति पदत्रयं विपरिणामेनानुवर्तते । तथा च सर्व त्रोक्तस्य सर्वगतस्य प्रकृतस्य 'एतमात्मानं परस्मै शंसति' इत्यैतरे यश्रुतौ शंसनक्रियायां स एतमात्मानमिति कर्मत्वेन शारीरस्य जीव स्य च तस्यामेव कर्तृत्वेन व्यपदेशात् एकस्यां क्रियायां तयोरुत्सर्ग तो भिन्नत्वनियमात् अपवादकारणाभावाच्च न सर्वत्रोच्यमानः शारी र इत्यर्थः । तत्त्वप्रदीपे तु—चकारात् 'परस्मै' इति सम्प्रदानव्यपदे शाच्चेत्यभिप्राय इत्युक्तम् । यः 'एतमात्मानं' चक्षुर्मयत्वादिगुणकं प रमात्मानं 'अन्यस्मै' अयोग्याय 'शंसति' उपदिशति तस्य वेदाः 'दुग्धदोहाः' फलविधुरा भवन्तीत्यर्थः । इत्यादीत्यस्य पूर्ववत्सूत्रेणा न्वयः । आदिपदेन 'आत्मानं वेद' इति टीकोक्तं 'यस्तित्याज सचिवि दं सखायं न तस्य वाच्यपि भागो अस्ति' (ऐ.आ.३-२-४.) इति तत्त्व प्रदीपोदाहृतवाक्यं च गृह्यते । 'सचिविदं' कर्मसञ्चयवेत्तारं प्रीत्या एकदेशस्थत्वात् सखायं हरिं 'यस्तित्याज' तत्याज अन्यथा वेद, तस्य 'वाचि' वेदाध्ययनादौ तस्मात् 'भागः' फलं नास्ति नरकं च स्यादित्यर्थः ॥

( १३ ) सू—ॐ ॥ शब्दविशेषात् ॥ ॐ ॥ ५ ॥

'एतमेव ब्रह्मेत्याचक्षते' ( ऐ. आ. ३-२-३. ) इति ।

( १४ ) न हि जीवमेव ब्रह्मेत्याचक्षते ।

( १३ ) यदुक्तंब्रह्मशब्दात् विष्णुरेव सर्वगत इति । तदयुक्तम्, ब्रह्मशब्दस्य जीवेऽपि वृत्तेः । न चासौ जीवेऽमुख्य इति तद्ग्रहः । चक्षुर्मयत्वादिबाधकबलेनामुख्यार्थस्यापि ग्रहणोपपत्तेः । न च द्वितीयसूत्रोक्तबाधकान्न जीवः 'श्रुत्वाप्येनं वेद न चैव कश्चित्' इति गीतायां जीवस्याश्रुतत्वादिश्रवणात्, तृतीयोक्तस्य च विष्णावपि साम्यात् । नापि तुरीयोक्तचक्षुर्मयत्वादिबाधकेन, एकस्यैव कर्मत्वकर्तृत्वयोः उपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—शब्देति ॥ भाष्यस्य सूत्रेणान्वयः । तथा च 'एतमेव ब्रह्मेत्याचक्षते' इति वाक्ये हेतुत्वेन प्रकृतब्रह्मशब्दस्य 'विशेषात्' सावधारणत्वरूपविशेषवत्त्वादित्यर्थः । अस्य नानेन ब्रह्मशब्देन शारीर उच्यते इति लब्धसाध्येनान्वयः । अनेनैवकारो विधेयपदसङ्गतः, तच्छिरस्कब्रह्मशब्दश्च मुख्यब्रह्मत्वार्थकः । स च जीवे न युक्त इत्युक्तं भवति । यद्वा—एवकार एतमित्युद्देश्यवाचिपदेनैव सङ्गतोऽन्ययोगव्यवच्छेदार्थकः । न चैवं ब्रह्मशब्दस्य सावधारणत्वाप्राप्तिरिति वाच्यम् । एवकारार्थावधारणस्यान्ययोगव्यवच्छेदस्यान्यस्मिन् ब्रह्मत्वयोगव्यवच्छेद इति विवरणे ब्रह्मशब्दार्थब्रह्मत्वसम्बन्धात् ब्रह्मशब्दस्य सावधारणत्वप्राप्तेः । यद्यपि न शारीर एतच्छब्दार्थः । कुतः? तस्य एवकारार्थप्रतियोगिवाचकब्रह्मशब्देनैव विशेषितत्वादिति सूत्रवृत्तिस्सम्भवति । तथाऽपि न सा टीकोक्तेति न कैरपि प्रदर्शिता ॥

( १४ ) सावधारणत्वेपि ब्रह्मशब्दस्य कुतो न जीवे वृत्तिरित्यत आह—न हीति ॥ हिशब्दः प्रसिद्धौ हेतौ च । कवय इति शेषः । कुत इति चेत् एवकारशिरस्कब्रह्मशब्दवाच्यत्वे जीवस्य मुख्यब्रह्मत्वं स्यात्, तच्च नोपपद्यते । तस्यामुख्यब्रह्मत्वेन प्रसिद्धत्वादिति भावः । एवमेवकारस्योद्देश्यसम्बन्धेनान्ययोगव्यवच्छेदकत्वेऽपि पुर्वपक्षे एतच्छब्दार्थत्वेन अभिमतजीवादन्यस्य ब्रह्मत्वं निषिद्धं स्यात् । तच्च नोपपद्यते । जीवादन्यस्य परमात्मनो मुख्यब्रह्मणो जात्यादेरमुख्यब्रह्मणश्च सत्त्वेनान्यस्य ब्रह्मत्वसम्बन्धनिषेधायोगादित्यपि द्रष्टव्यम् । तत्त्वप्रदीपे तु—जीवस्य ब्रह्मत्वे तस्य भूतत्वेन भूतेष्वित्युक्तं भूतस्थत्वं न

(१५) 'एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्दः' इति चेन्द्रद्युम्नशाखायाम् ॥ ५ ॥

(१६) सू—ॐ ॥ स्मृतेश्च ॥ ॐ ॥ ६ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।

(भ. गी. १०-२०.)

गामाविश्य च भूतानि धारयाम्यहमोजसा ।

(भ. गी. १५-१३.)

इत्यादि ।

---

युज्यत इत्युक्तम् ॥

(१५) विष्णावपि सावधारणब्रह्मशब्दस्य वृत्तिः कुत इत्यत आह—एष इति ॥ उ एव । यद्वा—उशब्दो विष्णुपरः । तथा चैष विष्णुरेव ब्रह्मेत्यर्थः । 'आत्मानम्' इत्युक्तमात्मत्वं 'स सविता' इत्युक्तसवितृत्वादिकमपि विष्णोरेवेत्याह—एष उ एवात्मेत्यादिना । य उ यो विष्णुरेव हरिः । तत्र निमित्तमाह—हरतीति । यज्ञगृहेष्विडोपहूतं भागं स्वीकरोतीत्यर्थः । यद्वा—सतां पापं हरतीत्यर्थः । एवमेष एव पर उत्तमः पूर्णानन्दश्चेति योजना । इन्द्रद्युम्नशाखायामित्यस्य 'य एतं सर्वभूतस्थं विष्णुमेव ब्रह्मेत्याचक्षते इन्द्रद्युम्नाः' इत्युपस्कृतेनान्वयः । अस्य च हेतोरवतारिकागतसाध्येनान्वयः ॥

(१६) स्मृतिसमाख्ययाऽपि विष्णोरत्रोक्तसर्वगतत्वं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—स्मृतेश्चेति ॥ इत्यादिस्मृतेश्च सर्वगो ध्यमानो नारायण एवेत्यन्वयः । न केवलमुक्तहेतुभ्य इति चकारार्थः । स्मृतेः स्ववचनत्वेऽपि परोक्तानुवादरूपत्वात् तदुक्तिर्युक्ता । एवमग्रेपि । हे 'गुडाकेश' गुडाका निद्रा तदीशस्तद्रहित इति यावत् । गुडवदासमन्तात्केशा यस्य सः श्लक्ष्णकेशेति वा । अहमन्तर्यामितया सर्वहृदयस्थित इत्यर्थः 'गां' भूमिं 'आविश्य' तत्रावतीर्य 'भूतानि' जीवान् 'ओजसा' सामर्थ्येन धारयामीत्यन्यवाक्यस्यार्थः । इमे च गीतायामर्जुनं प्रति कृष्णवाक्ये । पूर्ववाक्ये सर्वभूताशयस्थो य आत्मा जीवः सोऽहमित्यभेदप्रतीतिनिरासाय द्वितीयवाक्योदाहरणम् । तद्गतत्वेनैव तद्धारकत्वमभिप्रेतम् । अतो नासङ्गतिः । आदिपदात् स्मृत्यन्तरसङ्ग्रहः ॥

( १७ ) न चाप्रामाणिकं कल्प्यम् ॥ ६ ॥

( १८ ) सू—ॐ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ॐ ॥ ७ ॥

सर्वेषु भूतेष्वित्यल्पौकस्त्वात् चक्षुर्मयत्वादिना जीव व्यपदेशाच्च नेति चेत्—न,

( १९ ) अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव वि

---

( १७ ) अन्ये तु 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः' इति वाक्ये मनोमयत्वादिगुण ईश्वर एव, न जीव इति सिद्धान्तिते जीवेशयोरैक्यात् कथमेतदित्याशङ्क्य अस्ति भेदः । न चापसिद्धान्तः, यतोऽयं न पारमार्थिकः, किन्तु, मिथ्याभूतएव सूत्रकृता विवक्षित इति समाधाय भेदमिथ्यात्वे सूत्रतात्पर्यं वर्णयन्ति । तेषां मतमाशङ्क्य दूषयति—न चेति ॥ चस्त्वर्थे । नञ् च तद्विरुद्धतदभावार्थः । तथा च 'अप्रामाणिकं' भेदमिथ्यात्वं 'न कल्प्यं' सूत्रकृद्विवक्षाविषयत्वेन न कल्पनीयम् । कुतः? यतस्तदप्रामाणिकं प्रमाणशून्यं 'द्वा सुपर्णा' इत्यादिप्रमाणविरुद्धं च अत इति योजना ॥

( १८ ) उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वाक्षेपांशं तावद्व्याचष्टे—अर्भकेति ॥ वाक्य इति शेषः । अर्भकेत्यस्य व्याख्याऽल्पेति । अल्पमोकः स्थानं यस्य तस्य भावस्तत्त्वं तस्मात् । तथाचाल्पस्थानस्थितत्वोक्तेरित्यर्थः । सर्वजीवहृदयसुषिराणामल्पत्वादिति भावः । सूत्रगततच्छब्दस्य प्रकारप्रकार्युभयार्थत्वं मत्वाऽऽह–चक्षुरिति, जीव इति च । आदिपदेन श्रोत्रमयत्वादि गृह्यते । चकारादादिशब्दाद्वा आदित्यश्रुतिरपि गृह्यते । अत एव जीवपदमादित्यसाधारणं प्रायोजि । जीवस्य व्यपदेशो वचनं जीवव्यपदेशः 'चक्षुर्मयश्श्रोत्रमयः' इति श्रुताविति शेषः । चो हेतुसमुच्चये । नेति । सर्वत्रोच्यमानो नारायण एवेति यदुक्तं तन्नेत्यर्थः । परमात्मपक्षेऽपि जीवपक्ष इव बाधकसद्भावादिति भावः ॥ परिहारांशं व्याचष्टे—नेति । उक्तबाधकाद्विष्णोः सर्वत्रोच्यमानत्वाभावो नेत्यर्थः ॥

( १९ ) कुतो नेत्यतोऽत्र बाधकाभावादिति हेतुं अर्भकौकस्त्वादीनां च विष्णावेवोपपन्नत्वेनाबाधकात्वादिति तदुपपादकहेतुं चोपरकृत्य तर्हि विष्णावर्भकौकस्त्वादिकथनवैयर्थ्यमित्याशङ्क्य तत्परिहारत्वेनो

ष्णोर्निचाय्यत्वात् ।
( २० ) सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत् ।
( २१ ) सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।

क्तमेवंनिचाय्यत्वादित्यंशं व्याख्याति—अर्भकौकस्त्वेनेति ॥ आदिश ब्दान्मनोमयत्वेन इत्याह । अनेन सौत्रैवंशब्दः प्रकारार्थतया व्याख्या तः । सिद्धान्तांशेऽपि विष्णवर्थकस्य व्यत्यस्ततच्छब्दस्य सावधारण स्यान्वयमभिप्रेत्याह—तस्यैवेति । यद्वा—प्रधानसूत्रेऽनुवृत्तस्य तदि त्यस्येह विपरिणतस्यावृत्तिं मत्वाऽऽह–तस्यैव विष्णोरिति । एवकारोऽ प्यर्थः । तथा च सर्वगतस्यापि जीवविलक्षणस्यापीत्यर्थः । न तु जीव स्य, इत्यन्यनिषेधार्थो वा एवकारः । 'निचाय्यत्वात्' उपास्यत्वात् । अनेनापरिच्छिन्ने अल्पौकस्त्वोक्तिः जीवविलक्षणे चक्षुर्मयत्वाद्युक्ति र्व्यर्थेति शङ्का निरस्ता भवति ॥

( २० ) इदानीं सर्वगतस्याल्पौकस्त्वमयुक्तमिति शङ्कानिरासाय सूत्रगृहीतं दृष्टान्तांशं एवमित्यस्य चशब्देनाप्यन्वयं व्यत्यस्ततत्पद स्य आवृत्तस्य 'युज्यते' इति अध्याहृतेनापि सम्बन्धमभिप्रेत्य व्या ख्याति—सर्वगतत्व इति ॥ अपीति द्वितीयचशब्दव्याख्यानम् ॥

( २१ ) यदपि जीवविलक्षणस्य नित्यज्ञानवतो ज्ञानकरणचक्षुरादि प्राचुर्यरूपचक्षुर्मयत्वादिकथनमयुक्तमिति चोद्यं, तत् चशब्दसूचित स्मृत्या निराह—सर्वेन्द्रियमय इति ॥ विष्णुर्यतः सर्वप्राणिषु संस्थि तः । प्राणा इन्द्रियाणि तद्वन्तः प्राणिनः तेष्विन्द्रियनियामकत्वेन स्थि तः । सर्वेन्द्रियस्वामीति यावत् । अतः सर्वेन्द्रियमय इत्युक्त इत्यर्थः। स्वामित्वं मयडर्थ इति भावः । चशब्दः प्रथमपादार्थे द्वितीयपादार्थे हेतुमाह । एवं द्वितीयतृतीयपादद्वयमपि आदित्यादिसर्वप्राणिस्थित त्वादादित्यादिसर्वनामाभिधेय इति हेतुहेतुमद्भावेन व्याख्येयम् । अ त एव चशब्दः द्वितीयतृतीयचशब्दवत् विशेषेणान्तरसमुच्चयेऽप्यन्वे यः । अनेन प्रथमपादेन 'चक्षुर्मयः श्रोत्रमयो मनोमयो वाङ्मयः' इत्या दिकं ब्रह्माणि तत्स्वामित्वेन निमित्तेन प्रयुक्तमिति व्याख्यातं भवति । एवं द्वितीयतृतीयपादाभ्यां तत्तद्गतत्वेनादित्यादितत्तन्नामवाच्यत्वक थनमुखेनादित्यश्रुतेरीश्वरवाचित्वमुक्तं भवति । अनेनैवादित्येऽनुक्तियु क्तिविरोधश्च परिहृतः । चतुर्थपादेन छन्दःपदोक्तवेदमुख्यार्थत्वा

सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः ॥
इति स्कान्दे ॥ ७ ॥

च्छन्दोमयत्वं च विष्णोर्युक्तमित्युक्तं भवति । ऐतरेयभाष्ये—'संपूर्णदर्शनशक्तेः चक्षुर्मयः संपूर्णश्रवणशक्तेः श्रोत्रमयः सत्यकामत्वात् छन्दोमयः सर्वमन्तृत्वान्मनोमयः सर्ववक्तृत्वाद्वाङ्मयः पूर्णफलरूपत्वादात्मा' इति । तथा बृहद्भाष्ये—'मयट् प्राचुर्यार्थः स्वरूपे च' इति प्रतिज्ञाय—

सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मय इतीर्यते ।
सर्वश्रोतृस्वरूपत्वात्स श्रोत्रमय ईरितः ॥

इति । तथा भागवततात्पर्ये—

सर्वे विष्णौ स्थिता यस्मात्तस्सर्वमयो ह्यसौ ।

इति प्रकारान्तरेण भगवति चक्षुर्मयत्वादिकं व्याख्यातम् । स्कान्दे इत्यनन्तरं उक्तत्वादिति शेषः । अस्य जीवविलक्षणस्यापि इन्द्रियस्वामित्वादिना चक्षुर्मयत्वादि युज्यते इति न तदयोग इत्युपस्कृतसाध्येनान्वयः ॥

अनेन 'सर्वेषु भूतेषु' इत्यत्रार्भकौकस्त्वोक्तेः 'चक्षुर्मयः' इत्यादौ च तस्य जीवस्य तेन चक्षुर्मयत्वादिना प्रकारेणोक्तत्वात् आदित्यव्यपदेशाच्च अस्मादेव बाधकान्न सर्वत्रोक्तो नारायण इति चेत्—न, कुतः? अत्र बाधकाभावात्, अर्भकौकस्त्वादेश्च विष्णावेवोपपत्तेः । न चापरिच्छिन्नस्यार्भकौकस्त्वोक्तिः जीवविलक्षणस्य चक्षुर्मयत्वाद्युक्तिश्च व्यर्थेति वाच्यम् । एवं निचाय्यत्वात् । चायृ पूजानिशामनयोः । तस्यैव तस्यापरिच्छिन्नस्यापि विष्णोः अल्पौकस्त्वचक्षुर्मयत्वादिना प्रकारेणोपास्यत्वेन उपासनार्थं तदुक्तिसार्थक्यात् । न चापरिच्छिन्ने जीवविलक्षणे च ब्रह्मणि अर्भकौकस्त्वाद्युक्तिर्न युज्यते इति वाच्यम् । यतः 'एवं च' एवमपि सर्वगतत्वेऽपि 'व्योमवत्' तदल्पौकस्त्वं चक्षुर्मयत्वादि युज्यते । यथा व्याप्तस्यापि व्योम्नोऽव्याकृताकाशस्य मठाद्येकदेशावस्थितिः तथा ब्रह्मणो भूताशयादौ स्थितिर्युक्ता । यतश्चैवं विष्णोर्जीवविलक्षणत्वेऽपि इन्द्रियस्वामित्वादिना चक्षुर्मयत्वाद्युक्तिर्युक्ताऽत इति सूत्रार्थ उक्तो भवति ॥

( २२ ) सू—ॐ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ॐ ॥ ८ ॥
जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति
चेत्—न,
( २३ ) सामर्थ्यवैशेष्यात् ।
( २४ ) उक्तं च गारुडे—
सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।

( २२ ) पुनरुक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्यति—सम्भोगेति ॥ अत्र पूर्वसूत्रादेवंशब्दमनुवर्त्य तद्बोधितमापादकं दर्शयन् पूर्वपक्षांशं तावद्व्याचष्टे—जीवेति । जीवपरमात्मनोरित्यर्थः । एकेति । विष्णोः सर्वशरीरस्थत्वे जीवेन सहैकशरीरस्थत्वप्राप्तेरिति भावः । संशब्दस्य 'व्यवहृपणोस्समर्थयोः' इत्यत्रेव समानार्थत्वमाश्रित्याह—समानेति । परस्य जीवसमानभोगप्राप्तिर्बाधिकाऽस्तीति शेषः । अतो जीवपक्ष इवेश्वरपक्षेऽपि बाधकसाम्यान्नायं सर्वगत इति वाक्यशेषः । परिहारांशं व्याचष्टे—नेति । नेश्वरस्य समानभोगप्राप्तिरित्यर्थः ॥

( २३ ) कुतो नेत्यतस्तत्र हेतुत्वेन वैशेष्यादित्यंशं योजयति—सामर्थ्येति ॥ स्वार्थे ष्यञ् । विशेषिणो भाव इति वा । तथा च परस्य समानभोगाप्राप्तौ जीवादपि सामर्थ्यवैशेष्यादित्यर्थः ॥

( २४ ) किं तत्सामर्थ्यवैशेष्यं, येन समानभोगाप्राप्तिरित्यत आह—उक्तमिति ॥ न केवलं सूत्रे जीवेशयोर्भोगसाम्याभावः, तत्र हेतुत्वेन सामर्थ्यवैशेष्यं चोक्तम्, किन्तु गारुडे चेति समुच्चयार्थश्चः । किमुक्तमित्यतस्तत्पठति—सर्वज्ञेति । सर्वज्ञत्वाल्पज्ञत्वरूपभेदकधर्माभ्यामित्यर्थः । प्राप्तस्य बाधकस्य परिहाराय विष्णोः सामर्थ्ये सत्यपि प्रथमं प्राप्तिस्तावत्स्यादेव अग्निस्तम्भवतो दाहप्राप्तिवत् । साऽपि भगवति न सम्भवति । तस्य सार्वज्ञ्येनैष्यद्बाधकपरिहर्तृत्वसम्भवादिति भावेनेह सार्वज्ञोक्तिः, न हेतुत्वेन, हेतुस्तु सर्वशक्तित्वम् । तलः तसिलश्च प्रत्येकमन्वयः । ईश्वरस्य जीवेन सहैकशरीरस्थत्वेऽपि दुःखपरित्यागेन सुखमात्रभोगे स्वातन्त्र्यं हेतुः । जीवस्य चोभयानुभवे पारतन्त्र्यं हेतुरिति विवेक्तव्यम् । 'सम्भोगः' समानभोगः । गारुड इत्यन्वयः । 'इति च' इति चशब्दपाठे तत्र पूर्वोक्तेन समुच्चयार्थश्चकारः । अनेन यतो यथा एकस्य जीवस्य सर्वशरीरस्थत्वे सर्वसमानभोगप्राप्तिः बाधिकाऽनुपपत्तिः सूत्रोक्ताऽस्ति । तथा एवमीशस्य

स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः ॥
इति च ॥ ८ ॥

२. अधिकरणम् ॥

( १ ) 'जन्माद्यस्य यतः' इत्युक्तम् । तत्रात्तृत्वं 'स यद्यदे

सर्वभूतगतत्वमङ्गीकृत्य जीवेश्वरयोरेकशरीरस्थत्वे परस्य जीवसमानभोगप्राप्तिर्बाधिकाऽस्ति । अतो नेश्वरः सर्वभूतगत इति चेत्–न, कुतः? तस्य तदप्राप्तौ जीवादपि सामर्थ्यवैशेष्यात् अग्निस्तम्भवतो दाहाभाववदिति सूत्रार्थ उक्तो भवति ॥ १ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे लोकतोऽन्यत्र प्रसिद्धादितिशब्देन सहोक्तात्तृत्वलिङ्गस्य हरौ समन्वयः क्रियते । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयौ सयुक्तिकपूर्वपक्षं च सूचयति—जन्मेति ॥ जन्मादिसूत्रे जन्मादिकर्तृत्वं विष्णोरुक्तमित्यर्थः । तत्रेति । उक्तलक्षणेषु मध्य इत्यर्थः । प्रविष्टमिति शेषः । अत्तृत्वमिति ।

स सर्गकाले च करोति सर्वं
संहारकाले तु तदत्ति भूयः ।
स्रष्टा पाता तथैवात्ता ( स्कान्दे )

इत्यादावदिधातुप्रकृतिकानेकशब्दवाच्यं संहर्तृत्वापरपर्यायशब्दबोध्यं ऊर्णनाभ्यादिवदत्तृत्वं तदित्यर्थः । अनेन अदेर्भक्षणार्थत्वाददितेरत्तृत्वेऽपि न संहर्तृत्वलक्षणस्यातिव्याप्तिरिति शङ्का निरस्ता । प्रथमेतिशब्दः श्रुतिगतः । द्वितीयस्तु भाष्यकारीयः । अदितेरित्यावर्तते । तत्रैकं भावप्रधानम् । तथा च इति बृहदारण्यकवाक्ये यदत्तृत्वं प्रतीयते तत् 'अदितेः' देवमातुरेव भवेत् । कुतः? 'अदितेः' अदितिश्रुतेः । तथा अदितित्वलिङ्गाच्चेति योजना । अदितित्वं च गोत्वादिवददितिमात्रधर्मो, न विष्णौ सावकाशम् । अनेन जन्मादिसूत्रोक्तलक्षणस्यातिव्याप्त्यसम्भवाक्षेपात्तेनास्याक्षेपिकी सङ्गतिः । श्रुत्युक्तमत्तृत्वं विषयः । विष्णोरन्यस्य वेति सन्देहः । देवमातुरदितेरेवेति

वासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वम् ' ( बृ. ३-२-५. ) इत्यदितेः प्रतीयते ।

( २ ) ' स यद्यदेवासृजत ' इति पुल्लिङ्गं च ' कूटस्थोक्षर उच्यते ' ( भ. १५-१६. ) इत्यादिवत् ॥

---

पूर्वः पक्षः । अदितिश्रुतिरदितित्वयुक्तिश्च सूचिता भवति । पूर्वपक्षे श्रुत्यर्थस्तु—' सः ' अदितिर्देवमाता संवत्सरनाम्ना चतुर्मुखेन ' यद्यदसृजत तत्तदत्तुमध्रियत ' मनः । आदश्चेति शेषः । कुतः सर्वात्तृत्वमदितेः ? यस्मात्सर्वात्री सा सर्वमत्तीति यत् तदेव ह्यदितेर्देवमातुः ' अदितित्वं ' अदितिशब्दवाच्यत्वे निमित्तं, अन्यथा तन्न स्यादिति । अस्मिन् पक्षेऽपि स्थलान्तरस्थादितिशब्दस्य निर्वचनमिदम् । अत्र सर्वशब्दः सुधारीत्या अदित्यदनयोग्यसर्वपरः । टीकारीत्या सङ्कुचितसर्वपरो वा । सिद्धान्ते श्रुत्यर्थस्तु—' सः ' संवत्सरनामकः चतुर्मुखो ' यद्यदेवासृजत तत्तत्सर्वमत्तुं ' स मृत्युनामा जनार्दनोऽध्रियत । आदश्च । कुतः सर्वसंहर्तृत्वं विष्णोः ? ' अदितेः ' अदितिशब्दात् । अदितिर्हि ' इदं सर्वं..यदिदं किञ्च ' ( तै. २ - ६. ) 'अदितिर्देवतामयी ' ( कठ. ४ - ७. ) इति श्रुत्यन्तरे ब्रह्मण्यदितिशब्दप्रयोगादिति यावत् । तावताऽपि कुतः सर्वात्तृत्वं विष्णोः ? सर्वमत्तीति यत्तदेव हि ' अदितेः ' स्त्रीलिङ्गादितिशब्दवाच्यस्य ' अदितित्वं ' अदितिशब्दवाच्यत्वं अन्यथा स निर्निमित्तकः स्यादिति भावः । अनेन विष्णोः सर्वात्तृतायां तन्निमित्तकश्रुत्यन्तरगतादितिशब्दो हेतुरित्युक्तं भवति । उक्तं हि चन्द्रिकायाम् । ' तत्तदत्तुमिति पूर्वप्रतिज्ञातसर्वात्तृतायां श्रुत्यन्तरे ब्रह्मणि प्रयुक्तस्य सर्वात्तृत्वनिमित्तकस्यादितिशब्दहेतूकरणे सम्भवति ' इति । अतएव ऋग्भाष्ये ' अत्ति विश्वं तेन चैवादितिरिति विष्णुः ' इत्युक्तम् । तत्रैव ' गुणतः कालतश्चानन्त्यरूपमखण्डितत्वं चादितिशब्दप्रवृत्तिनिमित्तम् ' इति चोक्तम् ॥

( २ ) नन्वेतदत्तृत्वमदितेश्चेत्कथं तर्हि तस्यां स इति पुल्लिङ्गं युक्तं स्यात् । अतस्तेन श्रुत्यादिबाध इत्यत आह—स इति ॥ इति वाक्ये श्रुतमित्यर्थः । इत्यादिवदित्यनन्तरं अदित्यां युज्यत इति शेषः । चस्त्वर्थः । आदिपदेन ' सोऽहं वायुं दिशां वत्सं वेद ' इति छन्दोगवाक्यं गृह्यते । कूटमाकाशं तद्वन्निर्विकारतया तिष्ठतीति कूटस्थः ।

( ३ ) अत्रोच्यते—

सू—ॐ ॥ अत्ता चराचरग्रहणात् ॥ ॐ ॥ ९ ॥

( ४ ) न हि चराचरस्य सर्वस्यात्तृत्वमदितेः ।

( ५ ) स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा ॥
इति स्कान्दे ।

( ६ ) एकः पुरस्ताद्य इदं बभूव
यतो बभूव भुवनस्य गोपाः ।
यमप्येति भुवनं साम्पराये

---

प्रकृतिः 'अक्षरो' देहतोऽविनाशित्वादुच्यते इति गीतावाक्यस्यार्थः । दिक्शब्दितानां पूर्वादिचतुर्दिगवस्थितभगवद्बाहूनां 'वत्सं' ततो जातं 'वायुं' मुख्यप्राणमहं 'वेद' जानामीत्यर्थः । लक्ष्मीवाक्यमेतत् ॥

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत्रेति ॥ इति चोद्ये समाधानमुच्यते सूत्रकृता इति शेषः । अनेन सूत्रेऽत्रोच्यते इति शेषो दर्शितः । तत्सूत्रं पठति—अत्तेति । तत्त्वित्यनुवर्तते, विपरिणम्यते च । तथा चात्र वाक्ये यः 'अत्ता' संहर्तोच्यते स विष्णुरेव । कुतः? 'सर्वं वा अत्ति' इति 'चराचरस्य' चेतनाचेतनरूपस्य विश्वस्याद्यतया संहार्यतया 'ग्रहणा' चराचरात्तृत्वलिङ्गादिति यावदिति सूत्रार्थः ॥

( ४ ) चराचरस्याद्यतया ग्रहणेऽपि कुतो नादितेस्तदत्तृत्वमिति लिङ्गस्य सावकाशत्वशङ्कां निराह—न हीति ॥ हिशब्दः प्रसिद्धौ । चराचरस्येति सूत्राक्षराण्यनूद्य श्रुत्यनुसारेण सर्वस्येति व्याख्यानम् । न च सामान्यपदेन व्याख्यानं व्यर्थमिति वाच्यम् । सूत्रस्य श्रुतिविसंवादप्रतीतिनिरासार्थत्वात् । 'अदितेः' देवमातुः ॥

( ५ ) चराचरात्तृत्वं विष्णोरपि कुतः सिद्धमित्यत आह—स्रष्टेति ॥ 'पुंसां परः' तेभ्य उत्तमो 'वासुदेवः' कृष्णः 'एक एव' निखिलजगतः एकः स्वतन्त्रः 'स्रष्टा' सृष्टिकर्ता तथा 'पाता' रक्षिता तुश्चार्थः । अत्ता च । 'वासुदेवेतरे' ब्रह्माद्यास्तु 'अल्पस्य' जगदेकदेशस्यास्वातन्त्र्येण सृष्ट्यादिकर्तारो भवन्ति । स्वातन्त्र्यापेक्षया नेत्यर्थः । इति स्कान्दे इत्यनन्तरं उक्तत्वादिति वाक्यशेषः ॥

( ६ ) स्पष्टार्थत्वात्प्रथमं स्मृतिमुदाहृत्यात्रैवार्थे श्रुतिमप्याह—एक इति ॥ एक इत्यस्यावृत्तिः, इदमित्यस्याप्यावृत्तिपरिणामौ । तथा

स नो हरिर्घृतमिहायुषेऽत्तुदेवः । ( घृतसू. )
इति श्रुतिः ॥ ९ ॥

( ७ ) सू—ॐ ॥ प्रकरणाच्च ॥ ॐ ॥ १० ॥

( ८ ) अप्संवत्सरसृष्ट्यादिना तत्प्रकरणत्वाच्च ।

---

च य एकः 'इदं' अस्य जगतः 'पुरस्तात्' प्रलये बभूव । यतश्च सृष्टौ 'इदं' जगत् 'बभूव' जातम् । अथ यश्चैको भुवनस्य 'गोपाः' गोप्ता बभूव । यं च 'साम्पराये' मुक्तिप्रलययोः भुवनं प्रविशति निर्गीर्णोदनवत् । 'सः देवो' हरिः नः 'आयुषे' आयुरर्थे 'इह' यज्ञस्थाने आगत्य 'घृतं' आहुतिरूपं 'अत्तु' स्वीकरोत्विति तैत्तिरीयश्रुत्यर्थः । मन्त्रद्रष्टृऋषिवाक्यमेतत् । इति श्रुत्यनन्तरं यत इति शेषः । अस्यातोऽपि विष्णोश्चराचरात्तृत्वं सिद्धमित्यन्वयः ॥

( ७ ) यदा निरवकाशसर्वात्तृत्वलिङ्गमात्रात्सावकाशादितिश्रुत्यादितित्वलिङ्गयोर्बाधेन अत्ता विष्णुरेवेति सिध्यति । तदा किमु वाच्यं निरवकाशप्रकरणसमुच्चितालिङ्गादित्यर्थं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे—प्रकरणाच्चेति ॥ 'नैवेह किञ्चन' ( बृ. ३ - २. ) इति निरवकाशविष्णुप्रकरणबलाच्चात्ता विष्णुरेवेति सूत्रार्थः ॥

( ८ ) प्रकरणस्य वैष्णवत्वासिद्धिमाशङ्क्याह–अप्संवत्सरसृष्ट्यादिनेति ॥ अप्सृष्टिः संवत्सरनामकचतुर्मुखसृष्टिश्च ते आदी यस्य तत् तथोक्तम् । आदिपदेन संवत्सरादनोद्यमादिलिङ्गं गृह्यते । 'तत्प्रकरणत्वात्' विष्णुप्रकरणत्वादित्यर्थः । एतत्प्रकरणस्येति शेषः । अवगमोपलक्षकमेतत् । अस्यातः प्रकरणाद्विष्णुरेव अत्रोच्यते इति प्रकृतसाध्येनान्वयः । चो हेतुसमुच्चये । प्रकरणं नामैकप्रमेयप्रतिपादकानेकवाक्यानि । बृहदारण्यके हि—'नैवेह किञ्चनाग्र आसीत् । मृत्युनैवेदमावृतमासीत् । अशनाययाऽशनाया हि मृत्युस्तन्मनो कुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपो जायन्त . . तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत् तस्यामश्राम्यत् . . सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचा मिथुनं समभवदशनाया हि मृत्युस्तद्यद्रेत आसीत्तत्संवत्सरोऽभवत् . . तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत्स ऐक्षत यदि द्वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मना इदं सर्वमसृजत' (बृ.३-२.) इति विष्णुविषयाण्यनेकवाक्यानि श्रूयन्ते । 'अग्रे' प्रलये 'इह' अस्त्रत

( ९ ) ने हासीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ।

स्वर्गे, गगन इति वा । 'किञ्चन' जीवजडरूपं वस्तु नैवासीदिति । ननु—

सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ।
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ॥

इति बृहद्भाष्योदाहृतवचनान्नित्यानां जीवानामपि सत्त्वात्कथमियमुक्तिरित्यत उक्तं—मृत्युनैवेति । 'इदं' जीवादिकं 'मृत्युना' तन्नामकेन जनार्दनेन 'आवृतं' आच्छादितमासीत् । मृत्योरावरकत्वे हेतुः—अशनाययेति । अशं जगत्तन्नेत्रथेत्यर्थः । मृत्योरशनायात्वं श्रुतिप्रसिद्धमित्याह—अशनाया हीति । 'तत्' तस्मादेकाकित्वान्मृत्युः 'आत्मन्वी' जगद्रूपशरीरवान् स्यामित्यैच्छत् । एवं स मृत्युः 'अर्चन्' स्वात्मानं पूजयन् सं चचार तस्यार्चत आपोऽजायन्त । ता एव तासामर्चनसाधनमिति भावः । तत्राप्सु योऽपां 'शरः' फेनरूपो मण्ड आसीत्तच्छरः । स शरो मृत्युना स्वरेतसा 'समहन्यत' सङ्घातत्वं प्रापितः । थस्सङ्घातः सा 'पृथिवी' ब्रह्माण्डरूपाऽभवत् 'तस्यां' पृथिव्यां श्वेतद्वीपे 'अश्राम्यत्' शिश्ये मृत्युः । स मृत्युः 'मे' मम 'आत्मा' ब्रह्मा द्वितीयो वाग्व्यपेक्षया जायेतेति अकामयत । अथ 'अशनाया' स मृत्युः 'मनसा' स्वेच्छया 'वाचा' वेदाभिमानिन्श्रिया 'मिथुनं' द्वन्द्वीभावं 'समभवत्' प्रापत् । तेन मिथुनीभावेन यद्रेत आसीत् 'तत्संवत्सरः' तदुपादानकदेहवान् संवत्सरनामकश्चतुर्मुखोऽभवत् । अथ जातं संवत्सरमभिलक्ष्य अत्तुं 'व्याददात्' विददार स्वमुखं मृत्युः । स संवत्सरो भयात् विष्णुदीप्त्याऽऽनन्दबोधकभाणिति शब्दमकरोत् । यद्भाणिति वचस्तदभिमानिनी सैव वाङ्नाम्नी सरस्वत्यभवत् । स मृत्युः 'ऐक्षत' आलोचितवान् । किमिति ? 'यदीमं' संवत्सरं 'अभिमंस्ये' लीनं करिष्ये तत्तदा मे 'कनीयः' अल्पमन्नं करिष्ये । ततो बह्वन्नं भवत्वित्यालोच्य स मृत्युः 'तया वाचा' सरस्वत्या 'तेनात्मना' चतुर्मुखेनेदं सर्वमसृजत । जनयामासेति श्रुत्यर्थः ॥

( ९ ) नन्वप्संवत्सरसृष्ट्यादिनाऽत्रोच्यमानेनापि कथमस्य विष्णु

सोत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥
शयानस्तासु भगवान्निर्ममेण्डं महत्तरम् ।
तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुः ॥
तमत्तुं व्यादादास्यं तदाऽसौ विरुराव ह ।
अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ॥
सोऽसृजद्भुवनं विश्वमद्यार्थं हरये विभुः ॥
इति ब्रह्मवैवर्ते ॥ १० ॥

---

प्रकरणत्वनिश्चय इत्यतोऽप्संवत्सरसृष्ट्यादेर्विष्णुलिङ्गत्वादिति भावेन तस्य तल्लिङ्गत्वे स्मृतिमाह—नेहासीदिति ॥ 'आदौ' प्रलये 'इह' अस्वतन्त्रवर्गे 'किञ्चनापि' जीवो जडं वा नासीत् । नन्विदमयुक्तं, जीवादेः नित्यस्य सत्त्वादित्यत आह—मृत्युरिति । प्रलये मृत्युनामा हरिः जीवाद्यावरकत्वेनासीत् । अत आवृतत्वान्नासीदित्युक्तमिति नानुपपत्तिरिति भावः । 'सः आत्मनः' इति पदच्छेदः । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याल्लोपः । तथा च 'सः' प्रभुर्विष्णुरात्मनो 'मनसा' स्वेच्छयैवापोऽस्राक्षीत् । 'तासु' अप्सु 'महत्तरं' स्वार्थे तरप् । महत् स्थूलं 'अण्डं' ब्रह्माण्डं निर्ममे । 'तत्र' अण्डे संवत्सराख्यं ब्रह्माणमसृजदित्यन्वयः । नामेत्यनेन सम्यग्वत्सभूतान् रमयतीति व्युत्पत्त्या संवत्सरशब्दश्चतुर्मुखे प्रसिद्ध इत्युच्यते । अत्रासामर्थ्यपरिहाराय—प्रभुरिति । 'तं' चतुर्मुखं 'अत्तुं' भक्षयितुं 'व्याददात्' व्यावृतम् विष्णुः । तदा ब्रह्मा 'विरुराव' भाणिति शब्दमकरोदित्यर्थः । हेति अस्यार्थस्य श्रुतिप्रसिद्धतां सूचयति । अथ आरावकरणानन्तरं 'तत्कृपया' तस्मिन् चतुर्मुखे कृपया विष्णुस्तमजग्ध्वा सृष्टिक्रियायामयोजयत् । 'स विभुः' चतुर्मुखो हरये हरेरद्यार्थं भुवनमसृजत् । यद्वा—भुवनमसृजत्, सृष्टं तद्धरयेऽर्पितवानिति शेषेण योजना । ब्रह्मवैवर्त इत्यनन्तरं यत उक्तमिति शेषः । अस्यातोऽप्संवत्सरसृष्ट्यादेर्विष्णुलिङ्गत्वसिद्धिरित्यध्याहृतसाध्येनान्वयः ॥

॥ इति अत्तृत्वाधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) सर्वात्तैकः पर उक्तः ।

ऋतंपिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे [ परार्धे ।

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे लोकतोऽन्यत्र प्रसिद्धकर्मफलभोक्तृत्वलिङ्गस्य विष्णौ समन्वयः प्रतिपाद्यते । पूर्वाधिकरणश्रुतिसङ्गतिं विषयवाक्योदाहरणपूर्वकं विषयं सूचयति—सर्वेति ॥ यस्मात् 'परः' परमात्मा 'एकः' एकत्वसङ्ख्यायुक्तः 'सर्वात्ता' सर्वसंहर्ता च, तस्मात्प्रकृतिप्रत्ययार्थयोस्तत्र योगात् सर्वात्तेत्यादिक्रियालिङ्गबोधकशब्दवाच्यत्वेनोक्त इत्यर्थः । सर्वात्तेत्युक्त्यैव अर्थात्पातेत्यप्युक्त इति भावः । ततः किमित्यत आह—ऋतमिति । तत्रेत्यादौ संयोज्यम् । तथा च 'तत्र' सर्वात्तृत्वमध्ये प्रविष्टं तद्विशेषभूतं पातृत्वं यत्रोक्तं तत्र काठके 'ऋतं पिबन्तौ' इत्यत्र 'पिबन्तौ' कर्मफलसारभोक्तारौ द्वौ प्रतीयेते इति योजना । द्विवचनेन द्वित्वबोधादिति भावः । अनेन युक्तमत्तृत्वं भगवतस्तत्र प्रकृतिप्रत्ययार्थयोरुपपत्तेः । इह तु कर्मबन्धविधुरे परमात्मनि प्रकृत्यर्थस्य निर्भेदे प्रत्ययार्थस्य चायोगान्न तस्य द्विवचनान्तपिबच्छब्दवाच्यतेति पूर्ववैषम्येन प्रत्यवस्थानाद्वा पूर्वमर्थादुक्तस्य पातृत्वस्यान्यमात्रनिष्ठत्वे ऽसम्भवस्यान्यस्मिन्नपि सत्त्वेऽतिव्याप्तेर्वा आक्षेपाद्वा पूर्वाधिकरणेनास्य सङ्गतिः, पातृत्वाख्यविषयश्च सूचितो भवति । विषयवाक्ये जन्यजनकभावः षष्ठ्यर्थः तथा च 'सुकृतस्य लोके' सुकृतनिर्मिते पुण्यकार्ये तत्त्वप्रदीपरीत्या सुकृतनिमित्ते शरीरे हृदयगुहां प्रविष्टौ गुहायामपि 'परमे' सर्वजीवोत्तमे आ ऋज्व आर्धः परेभ्यो रुद्रादिभ्य आर्धः परार्धः । तस्मिन्नतिपूर्णे वायाविति शेषः । तथा च तत्र प्रविष्टौ हृदयगुहाश्रितवाय्वधिष्ठानाविति यावत् । 'स हायस्तः पितुरर्धमेयाय' (छा.५-३-४.) इति तत्त्वप्रदीपोदाहृतश्रुतेः परब्रह्मावासत्वात्तदन्यजीवाभिमन्यमानत्वात्परार्धं शरीरमिति वा ।

ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते ।

ऋतं तु मानसो धर्मः..

इति गीताभाष्योदाहृतस्मृतेः शास्त्रविहितकर्मभिरागतं फलमुपलक्षणया ऋतमित्युच्यते । तथा च 'ऋतं पिबन्तौ' भुञ्जानौ यावात्मा

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रि
[ नाचिकेताः । ( कठ. १-३-१. )
इति पिबन्तौ प्रतीयेते तौ काविति ॥

(२.) उच्यते—

सू—ॐ ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ॐ ॥ ११ ॥

गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव ।

(३) 'घर्मो समन्तान्निवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा

---

न्तरात्माख्यभगवद्रूपविशेषौ वर्तते तौ 'ब्रह्मविदो' ब्रह्मज्ञानिनः 'प ञ्चाग्नयो' देवपितृभूतमनुष्यब्रह्मयज्ञाख्यपञ्चमहायज्ञवन्तः । 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' ( ) इत्यैतरेयोक्तपञ्चमहायज्ञा वा । द्युपर्जन्यधरापुंस्त्र्याख्यपञ्चाग्निविद्यानिष्ठा वा । नचिकेता नाम ऋषिः नचिकेतस इदं नाचिकेतमग्निचयनाविशेषः । त्रिनाचिकेतास्त्रिवारमनुष्ठितनाचिकेतेष्टकाचयनवन्तो ये वर्तन्ते विदुषां पापिनां च क्रमेण 'छायातपौ' सुखदुःखकारणभूतौ वदन्तीत्यर्थः । सुखदुःखहेतुत्वरूपं गौणं छायातपत्वं च प्रतियोगिभेदादविरुद्धम् । यथोक्तं तत्त्वप्रदीपे–अमराणामाह्लादकावसुराणां तापकावित्यर्थ इति । प्रश्नरूपकार्यद्वारा तन्मूलसन्देहप्रकारं दर्शयति–'तौ' श्रुत्युक्तपिबन्ताविति । इति वाक्ये पिबन्तौ यौ प्रतीयेते तौ कावित्यन्वयः । अनेन पिबन्तौ किं जीवपरौ उत पररूपे एवेति संशयः सूचितो भवति । इतीत्यनन्तरं इति संशये जीवसहित ईश्वरः पातेति पूर्वपक्षे च सतीति वाक्यशेषः ॥

(२) अथ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—उच्यते इति ॥ सूत्रात्परत इतिशब्दोऽध्याहार्यः । गुहां प्रविष्टाविति हेतुगर्भं विशेषणम् । पिबन्तावित्यात्मपदव्याख्यानम् । ऋतमित्यादावध्याहार्यम् । विष्णुरूपे इत्यात्मानावित्यस्य व्याख्यानान्तरम् । तथा च—यावात्मानौ ऋतं पिबन्तौ तावात्मानौ विष्णुरूपे एव । कुतः ? यतो गुहां प्रविष्टाविति योजना । एवेत्यनेनानुवृत्ततुशब्दार्थ उक्तः । विष्णू इति वक्तव्ये विष्णुरूपे एवेत्युक्तिः द्विवचनस्य रूपद्वयविवक्षया सावकाशतोक्त्यर्थो॥

(३) ननु विष्णोस्सर्वशरीरेष्वेकैकरूपेणैव प्रवेशात्कथं रूपद्वयाभिप्रायेणापि द्विवचनोपपत्तिरित्यतः तद्दर्शनादिति सूत्रांशसूचितश्रु

जगाम' (ऋ.१०-११४-१.) इत्यादिना तद्दर्शनात् ॥

तिमुदाहरति—घर्मेति ॥ भगवन्ताविति, कर्तुमिति च शेषः। त्रिवृतमि त्यावर्तते। तथा च 'घर्मा' घर्मौ दीप्तौ घर्षकौ सङ्कोचकाविति वा। 'घर्षणात्सर्वलोकस्य नृसिंहो घर्म उच्यते' इत्यैतरेयभाष्योक्तेः, घृष्ट त्वेन घर्षकत्वेन च मिताविति तत्त्वप्रदीपोक्तेश्च। 'समन्ता' समन्तौ व्याप्तौ प्रकृतिपुरुषकालव्यापिनौ। देशतः कालतः शक्तितश्च सम्पू र्णौ यौ भगवन्तौ त्रिवृतं तेजोबन्नात्मके शरीरं 'व्यापतुः' विशेषेणा पतुः देहहृदयगुहास्थानं प्राप्तौ। तयोः 'जुष्टिं' सेवां कर्तुं 'मातरिश्वा' मुख्यवायुरपि त्रिवृतं जगाम। 'दिवो' देव्या वायुपत्न्याः स्तन्यं 'प यो'' दिधिषाणाः' पिपासन्तो देवाः द्विरूपं तमेकं 'अवेषन्' अन्वै च्छन्। तं 'अर्कं' अरं अलं कं सुखरूपं 'सहसामानं' सहवायुं वि दुरिति श्रुत्यर्थः। गुर्वर्थदीपिकायां तु—समन्तादिति पदच्छेदं कृत्वा विद्यमानाविति चाध्याहृत्य समन्ताद्विद्यमानौ व्याप्ताविति व्याख्यात म्। तच्चिन्त्यम्। इत्यादिनेति। वाक्येनेति शेषः। आदिपदेन 'दिव स्पयः' इत्युत्तरार्धं, तथा—

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे।
तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेल्हि स उ रेल्हि मातरम्॥
सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति। (ऋ. १०-११४-४.,५.)

इत्यादिकं च गृह्यते। 'एकः सुपर्णः' सुष्ठु परमानन्दरूपो भग वान् समुद्रमाविवेश। स इदं सर्वं जगत् 'विचष्टे' पश्यति। 'तं' परमात्मानं पक्वेन मनसा अहमपश्यम्। 'तं माता' व्यञ्जकत्वाद्वा क् सरस्वती 'रेल्हि' लिह्यत इव। स परमात्मा मातरं रेल्हि। ताव न्योन्यं सम्बद्धौ भवतः। तथा च—भगवद्व्यञ्जकवाचोऽपि तद्व्यञ्जक त्वमिति भावः। तमेव सुपर्णमेकं सन्तं 'विप्राः' विशेषेण प्रकृष्टाः कवयो 'वचोभिः' शब्दैः 'बहुधा' केशवादिद्वादशधा स्थितं कल्प यन्ति चिन्तयन्ति इत्यर्थः। तद्दर्शनादिति। तस्य विष्णोः द्विरूपतया सर्वशरीरप्रवेशस्य उक्तत्वादित्यर्थः। तथा च—एकस्मिन्नपि विष्णौ युक्तं रूपद्वयाभिप्रायेण द्विवचनमिति भावः। एवं तद्दर्शनात् इत्येतत् तत्त्वप्रदीपरीत्या उक्तविशेषणे निर्णीते विष्णौ द्विवचनदर्शनात् 'एकः सुपर्णः' इत्यादिना तच्छब्देनैकवचनेन परामर्शदर्शनात् तस्यैव समु

(४) आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।
निविष्टो हृदये नित्यं रसं पिबति कर्मजम् ॥
इति बृहत्संहितायाम् ।
(५) शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।

द्गनिवेशिनो निखिलभुवनदर्शिनः 'अपश्यमन्तितः' इति गुहाप्रविष्टत्वदर्शनादेकस्यैव बहुनामरूपदर्शनात् इत्यपि व्याख्येयम् ॥

(४) ननु विष्णौ रूपद्वयविवक्षया प्रत्ययार्थोपपत्तावपि प्रातिपदिकार्थकर्मफलभोक्तृत्वायोगात् न 'ऋतम्' इति वाक्यप्रतिपाद्यत्वं तस्येत्यत आह—आत्मेति ॥ एक एव हरिः देहजीवरूपोपाधिभेदात् आत्मान्तरात्मेति रूपभेदेन 'द्विधास्थितो' द्विधाभूतः । देहजीवयोर्हृदये निविष्टः । यद्वा—टीकारीत्या उपाधिभेदविवक्षामन्तरेणैव द्विरूपतया देहनिविष्टः 'कर्मजं रसं' फलं 'नित्यं' नियमेन 'पिबति' भुङ्क्ते इत्यर्थः । स्मृत इति पाठे कीर्तित इत्यर्थः । रसशब्देन जीवाभोग्यगुणभोक्तैवेश्वरः, न तु तद्भोग्यद्रव्यभोक्तेति प्रमेयं सूचितम् । बृहत्संहितायामित्यस्य तद्दर्शनादित्यनुवृत्तवाक्येनान्वयः । कर्मफलभोगस्योक्तत्वादिति तदर्थः । तथा च—न तदनुपपत्तिरिति भावः । न केवलं बृहत्संहितायाम् । किन्तु—

चक्षुश्श्रोत्रं स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ (भ.गी.१५-९.)

इति गीतास्वपीति चार्थः ॥

(५) ननु किमीश्वरो दुःखं पापकर्मफलं भुङ्क्ते? पुण्यजं सुखं वा? । नाद्यद्वितीयौ, पूर्णानन्दत्वादित्यत आह—शुभमिति ॥ 'असौ' सर्वशरीरगतप्राणे स्थितो 'हरिः' यज्ञे हविस्स्वीकर्ता पापहर्ता भगवान् 'नित्यं' नियमेन शुभकर्मफलमेव 'पिबति' भुङ्क्ते । हरिः अशुभकर्मफलं 'न पिबेत्' न भुङ्क्ते इत्यर्थः । 'पुण्यमेवामुं गच्छति (बृ. ३-५-२०.) परमे परार्धे' (कठ. ३-१.) इति श्रुतेः । पिबतीति ऋतपानकर्तरि अद्वितीयत्वमभ्युपैति । अनेनार्थेन द्वितीयपक्षमङ्गीकृत्य आद्यपक्षोऽनभ्युपगमेन परिहृतः । पूर्णानन्दस्य सुखभोगायोग इति द्वितीयं दूषणं परिहरति—पूर्णानन्दमयस्येति । तादात्म्यार्थे मयट् । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति गीताभाष्यो

पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥
इति पाद्मे ॥

( ६ ) ‘ यो वेद निहितं गुहायाम् ’ ( तै. २-१. ) इत्यादिना

---

क्तेः । तथा च—पूर्णानन्दरूपस्यास्य विष्णोः ‘ चेष्टा ’ ऐश्वर्यं क्वचित्काले देशे केनापि साकल्येन ‘ न ज्ञायते ’ न चिन्त्यते इत्यर्थः । तथा च—ऐश्वर्यबलेन पूर्णानन्दस्यापि सुखभोगो युक्त इति भावः ॥

यद्वा—विष्णोर्भोक्तृत्वाभ्युपगमे ‘ अनश्नन्नन्यः ’ ( मु.३-१-१. ) इति श्रुतिविरोध इत्यत आह—शुभमिति ॥ पराधीनभोगाभावविषयं अशुभभोगाभावविषयं वा तद्वाक्यमिति भावः । न च ‘ नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते । नासौ नीचोच्चतां याति ’ इति वाक्यविरोधः, सुखभोगस्योच्चतारूपत्वादिति वाच्यम् । विष्णौ जीवसमवेते भोगे स्वीकारमात्राभ्युपगमेन उच्चतासम्पादकविक्रियाविशेषानभ्युपगमात् । उक्तं हि तत्त्वप्रदीपे—न च ‘अनश्नन्नन्यः’ इति श्रुतिविरोधः । न हि पराधीनतया भोगो, नाप्यप्रियभोगो, न च तन्निमित्तोच्चनीचता विष्णोः, किन्तु—जीवसमवेते भोगे स्वीकारमात्रमुच्यत इति । यद्वा—नीचोच्चतासम्पादको भोगः स्वीयतया साक्षात्कारः, स चाभिमानयुतो विवक्षितः, न चासावीश्वरे इति न विरोधः । पाद्म इत्यनन्तरं उक्तत्वादिति शेषः । तथा च—न श्रुतियुक्तिविरोध इति भावः ॥

( ६ ) ननु कथं गुहानिविष्टत्वलिङ्गात्पिबतो विष्णुत्वनिश्चयः, तस्य जीवेऽपि योगादित्यत आह—यो वेदेति ॥ विष्णोरेव गुहानिहितत्वमत्र ग्राह्यमिति चोपस्कर्तव्यम् । आदिशब्देन ‘ आत्माऽन्तरात्मा ’ इति ‘ श्रोत्रं चक्षुः ’ इति ‘ अहं वैश्वानरो भूत्वा ’ इत्यादिस्मृतिर्गृह्यते । तथा च–इत्यादिना विष्णोरेव प्रसिद्धं गुहानिहितत्वमत्र ग्राह्यमिति इममर्थं सूत्रकारो हिशब्देन दर्शयतीत्यर्थः । तथा च—हृदयगुहास्थत्वमात्रस्य जीवे सम्भवेऽपि न तदिह हेतुत्वेन गृह्यते । किन्तु—श्रुत्यादिप्रसिद्धं मोक्षजनकज्ञानप्रकारीभूतं प्राधान्येन गुहानिहितत्वमेव । तच्च जीवे निरवकाशमिति भावः ॥

सूत्रे समन्वयसूत्रात्तुशब्दमात्रमनुवर्तते । आत्मानावित्यावर्तते । तथा च ‘आत्मानौ ’ आदेयं सुखं मात्यनुभवतीति व्युत्पत्त्या आत्मशब्दोक्तशुभकर्मफलभोक्तारौ ‘आत्मानावेव’ आत्मान्तरात्माख्ये विष्णुरूपे एव, न तु जीवेश्वरौ । कुतः? हि यस्मात्तौ हृदयगुहां प्रविष्टौ तस्मात् ।

प्रसिद्धं हिशब्देन दर्शयति ॥ ११ ॥

( ७ ) सू—ॐ ॥ विशेषणाच्च ॥ ॐ ॥ १२ ॥

न हि जीवेऽपि गुहानिविष्टत्वलिङ्गं सम्भवतीति वाच्यम् । तस्य श्रुत्याद्यप्रसिद्धत्वात् । तत्र प्रसिद्धस्यैव ग्राह्यत्वात् । विष्णोस्तु 'यो वेद' इति श्रुत्यादिप्रसिद्धत्वादिति हिशब्दार्थः । ननु विष्णौ पिबन्ताविति द्विवचनानुपपत्तिः । न च रूपद्वयाभिप्रायेण तदुपपत्तिरिति वाच्यम् । विष्णोस्सर्वशरीरेष्वेकरूपेण प्रवेशेन द्विरूपेण प्रवेशस्यासिद्धत्वादित्याशङ्क्याह—तद्दर्शनादिति । तस्य हरेर्द्विरूपतया शरीरहृदयगुहास्थत्वस्य लिङ्गस्य दर्शनात् 'घर्मो' इति श्रुत्युक्तत्वादिति सूत्रार्थः । अत्र तत्त्वित्यस्यानुवृत्त्या श्रौतपदानुवृत्त्या च आनन्दमयस्तद्ब्रह्मेत्यादिवदिहापि प्रतिज्ञा सिद्धेः आत्मानावित्युक्तिः । श्रौतद्विवचनस्य गतिमाह—आत्मेति । स्मृतिसमाख्यां श्रौतपदानुवृत्तिं विना आदेयं मातीति व्युत्पत्त्या शुभकर्मफलभोक्तृत्वरूपलिङ्गं च वक्तुम् । उक्तं हि चन्द्रिकायाम्—आदेयं मातीति व्युत्पत्त्या आत्मशब्दोक्तं शुभभोक्तृत्वं मूलयुक्तिरिति । न चैवमृतपातृत्वसमानाधिकरणगुहाप्रविष्टत्वोक्तिद्वारा तदुक्तिरिति तद्वाक्यान्तरविरोधः शङ्क्यः । तस्य सूत्रे अवश्यवक्तव्यगुहाप्रविष्टत्वलिङ्गापेक्षद्विवचनान्तपदान्वययोग्यतादशाविशेष्योक्तिमुखेनेत्यर्थाभ्युपगमात् । तथा-यद्यपि समन्वेतव्यमृतपातृत्वं साक्षादेव वक्तव्यमिति तद्वाक्यान्तरस्याप्यादेयं मातीति व्युत्पत्तिमन्तरेणान्तर्यामीतिवत् ऋतं पिबन्ताविति स्पष्टशब्देनैव वक्तव्यम् । न त्वात्मशब्देनेत्यर्थाश्रयणान्न विरोधः । अन्यथा उक्तवाक्यविरोधापातात् । एवं चात्र केषांचिदन्यथा चन्द्रिकाभिप्रायकथनम्, तथा तेषामेव समन्वयसूत्रात्तदित्यत्राप्यनुवर्तते इति चन्द्रिकाविरोधोक्तिरपि चिन्त्या । सौत्रद्विवचनोपपत्त्यर्थं उद्देश्यसमर्पणार्थं चावश्यवक्तव्यात्मानाविति पदेनैव विधेयस्यापि बोधनसम्भवेनेतरव्यावर्तकावधारणार्थकतुशब्दमात्रस्यैव ईक्षतिसूत्र इवात्रानुवृत्त्यौचित्यात् । न च तदित्यनुक्तौ तुशब्दस्यान्वयः प्रत्येतुं शक्यते इति समन्वयाधिकरणीयसुधाविरोधः । उद्देश्यविधेयपदान्तराभाव इत्याशयात् ॥

( ७ ) एवं यदा निरवकाशगुहानिहितत्वलिङ्गस्य सावकाशाद्द्विवचनश्रुतितोऽपि प्राबल्याद्विष्णोः प्रकृत्यर्थभोक्तृत्वसम्भवाच्च स एव पातेति सिद्ध्यति । किमु पुनर्निरवकाशश्रुत्याऽपीत्यर्थं प्रतिपादयत्सूत्रं

'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' ( कठ. १-३-२. ) इति ॥

(८) पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः ।
यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् ॥
एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् ।
अमिता हिं गुणा यस्मान्नान्येषां तमृते प्रभुम् ॥
इति ब्राह्मे ।

(९) न च जीवे समन्वयोऽभिधीयते ।

---

पठित्वा तदभिप्रेतश्रुतिमेवोदाहरति—विशेषणाच्चेति ॥ इति विशेषणादित्यन्वयः । सूत्रे पिबतोरिति विपरिणामेनानुवर्तते । चो युक्तिसमुच्चये । तथा च 'यः सेतुः' इति श्रुतौ पिबतोरेकवचनबोध्येनैकत्वेन विशेषणादेक एव पाता । स च यजमानसेतुत्वब्रह्मत्वाक्षरत्वादिना विशेषणात् ब्रह्मणश्च परत्वेन विशेषणाद्विष्णुरेव, न जीव इति सूत्रार्थः । न केवलं लिङ्गात्, किन्तु—सेत्वादिश्रुतितोऽपीति चार्थः । 'यः' आत्मान्तरात्माख्यद्विरूपो भगवान् 'ईजानानां' विष्णुमुद्दिश्य यागं कुर्वाणानां 'सेतुः' आश्रयः यदक्षरं परं ब्रह्म, तं ध्यातुं नचिकेतसं प्रति साधनं वक्तुं 'शकेमहि' शक्तास्स्म इति काठकश्रुत्यर्थः ॥

(८) ब्रह्मशब्दस्य भगवदेकवाचित्वं स्मारयति-पृथगिति ॥ अत्र यत इत्यावर्तते । तथा च यतः 'तस्य' विष्णोर्गुणाः 'अमितत्वतः' असङ्ख्यातत्वतो निमित्तात् 'पृथक्' विविच्य वक्तुं न शक्यन्ते । ज्ञातव्याश्च सर्वैरधिकारिभिः सर्वे गुणा इति शेषः । यतो ब्रह्मशब्देन सर्वेषां गुणानां 'ग्रहणं' ज्ञानं भवेत् अतः सर्वगुणज्ञानार्थं तस्मिन् विष्णौ ब्रह्मशब्दः प्रयुज्यते इति शेषः । यतो ब्रह्मशब्देन सर्वेषां गुणानां ग्रहणं भवेत् । एवं च सर्वगुणवाची ब्रह्मशब्दो भवति, तत्र वृत्तिमन्तरेण तज्ज्ञानजनकत्वायोगादिति भावः । यस्माद्विभुं तं विष्णुमृते अन्येषां जीवानां नामिता गुणाः, किन्तु—विष्णोरेव प्रमाणसिद्धं, एतस्मात्कारणादयं ब्रह्मशब्दो विष्णोरेव 'विशेषणं' मुख्यवाचको नान्येषामित्यर्थः । ब्राह्म इत्यनन्तरं ब्रह्मशब्दस्य भगवदेकवाचित्वमुक्तमिति शेषः ॥

(९) अत्र परैः पिबन्तौ बुद्धिजीवाविति पूर्वपक्षे प्राप्ते जीवेश्वरावेवेति व्याख्यातं, तन्निराकरोति—न चेति ॥ अत्रेति शेषः । अस्मिन्न

(१०) 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः' ॥ इति पैङ्गिश्रुतेः ।

(११) 'आत्मा हि परमस्स्वतन्त्रोऽधिगुणो जीवोऽल्पश

---

ध्याये इति तदर्थः । हेतौ, स्वव्याख्यानेन सह परव्याख्याननिराकरणस्य समुच्चये वा चशब्दः । तथा चासङ्गतिरिति भावः ॥

(१०) ननु नात्र जीवे समन्वयकथनमसङ्गतम् । जीवेश्वरभेदस्यासत्यत्वेन तयोरैक्यात् । जीवसमन्वयस्यैव ब्रह्मसमन्वयरूपत्वादित्यत आह—सत्य इति ॥ 'सत्यं' सत्या 'भिदा' भेदः । यद्यप्यत्रात्मजीवयोः सत्यत्ववचनेनैव तत्स्वरूपभेदस्यापि सत्यत्वमुक्तं भवति । तथाऽपि पुनः 'सत्यं भिदा' इत्युक्तिर्दर्शनप्रतीताभेदप्रतीतिनिरासतात्पर्यार्था शपथावृत्तिः । केचिद्भेदमसत्यमाहुः तत्कथमेतदित्यतस्तेषां पक्षे श्रुतिरभीक्ष्णं दूषणमभिधत्ते—मैवेति । 'आरुवण्यः' अरा दोषास्तद्वन्तः, आसमन्तादरशीला वा आरवः तैरसत्यभेदज्ञानिभिः विष्णुः सर्वधा वन्यो भजनीयो नेत्यर्थः । इति पैङ्गिश्रुतिरित्यनन्तरं यत इति शेषः । अस्य नासत्यो भेद इत्युत्तरेणान्वयः । एवं भाल्लवेयश्रुतिरित्यस्यापि । अत्र यद्यपि भागवततात्पर्ये—'सत्यत्वं च भेदस्योक्तं भाल्लवेयश्रुतौ । स्थाणुर्होच्चक्राम स प्रजापतिमुवाच कोऽसि के स्मः कः सः इति । स होवाच योऽस्मि ये स्थ यः स इति । अथैनमुपाक्रोशत् सत्यं भिदा सत्यं भिदा सत्यं भिदा' इत्यादिना 'सत्यम्' इति वाक्यं भाल्लवेयश्रुत्यन्तर्गततया पठ्यते । भाष्यपुस्तकेऽपि क्वचित् 'सत्यम्' इति वाक्यं 'आत्मा हि' इति वाक्यं च भाल्लवेयश्रुतित्वेनैव पठ्यते । न तु श्रुतिद्वयस्थत्वेन । तथाऽपि अनयोस्तात्पर्यानुसारेणैकश्रुतिस्थत्वं, बहुतरपाठबलात् 'सत्य आत्मा' इति पैङ्गिश्रुतिः । 'आत्मा हि' इति भाल्लवेयश्रुतिः । तात्पर्योदाहृता तु अन्या तत्समाख्या रूपा चेत्यदोषः । 'स्थाणुः' रुद्रः 'उच्चक्राम' ऊर्ध्वं जगाम । 'सः' रुद्रः 'प्रजापतिं' ब्रह्माणं उपाक्रोशदुवाच । किमिति? त्वं 'कः' कीदृशः । वयं 'के' कीदृशाः । सः विष्णुः 'कः' कीदृशः । किं भिन्न उताऽभिन्न इत्याशयः । क्रमेणोत्तरमाह—अहं 'यो' यादृशोऽग्रे सर्वदा तादृशोऽस्मि । यूयं 'ये' यादृशाः तादृशाः स्थ । 'सः' विष्णुर्यादृशो मया भवद्भिश्च भिन्नस्तादृश एवेति श्रुत्यर्थः ॥

(११) अत्रोक्तभेदसाधकप्रमाणत्वेन विरुद्धगुणोपन्यासाय 'आ

क्रिरस्वतन्त्रोऽवरः' इति च भाल्लवेयश्रुतिः ।
( १२ ) यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात् ।
एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥

त्मा' इति द्वितीयवाक्यं प्रवृत्तम् । 'आत्मा' परमात्मा 'परमः' स्वतन्त्रः । 'अधिगुणः' पूर्णशक्तिः । अतएवोत्तरत्र परमत्वस्वतन्त्रत्वपूर्णशक्तित्वविरुद्धानां धर्माणां अल्पशक्तिरित्यादिपदैर्व्युत्क्रमेणाभिधानं कृतम् ॥

( १२ ) अत्रैवार्थे पुराणवाक्ये पठति—यथेति ॥ अत्र षष्ठ्यन्तं वाक्यं पाद्मस्थं, प्रथमान्तं स्कान्दगतमिति तत्त्वप्रदीपोक्तेः । 'मे माम्' इत्याभ्यां तत्प्रकृतौ ग्राह्यः । 'विनिश्चयात्' एवार्थोऽयं शब्दः । सत्यभेदाविति बहुव्रीहिः । यथा सत्यभेदौ तथैव विद्यमानानतिक्रमेण ज्ञातेन 'सत्येन' सत्यभेदेन भेदसत्यत्वज्ञानाख्यकारणेनेति यावत् । सहकेशवा इत्येकं पदं, केशवसहिता देवाः 'त्रायन्तु' अस्मान् रक्षन्त्वित्यर्थः । इत्यादेर्वाक्यान्नासत्यो भेदः, किन्तु—सत्य एवेति ज्ञायत इत्यर्थः । अत्र पूर्ववाक्ये जीवेशभेदस्य दृष्टान्तत्वेनोपादानात्प्रामाणिकत्वं ज्ञायते, तादृशस्यैव दृष्टान्तत्वात् । द्वितीये तु विषयानतिक्रमेण भेदसत्यत्वज्ञानस्य त्राणकारणत्वोक्त्या भेदसत्यत्वमपि ज्ञायत इति प्रकृतसङ्गतिः । आदिपदेन ग्राह्यवचनानि तत्त्वप्रदीपे उदाहृतानि । तथाहि—

द्वौ भूतसर्गौ लोकेस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्तः आसुरं पार्थ मे शृणु
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥

इत्यारभ्य—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

इति भगवद्वचनम् । ( भ. गी. १६-६..१९. )

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
त आसुराः स्वयं नष्टाः जगतः क्षुद्रकारिणः ॥

इति व्यासस्मृतिः ।

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।

यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।
तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ॥
इत्यादेर्नासत्यो भेदः ॥ १२ ॥

---

पराशृणीतमचितो न्योषतं हतं नुदेथां निशिशीतमत्रिणः ।
( ऋ.७-१०४-१. )

इन्द्रा सोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।
तपुर्वधेभिरजरेभिरत्रिणः ; ( ऋ.७-१०४-५. )

इत्यादिका श्रुतिः ।

एषां भिन्नजगदीश्वरजीवानां नास्ति तेऽत्रिणः ।
स्वाज्ञानकल्पितजगत्परमेश्वरस्य
जीवस्य भेदकलुषीकृतभूमभावे ।

इति हि मायिनो वदन्ति ।

आच्छाद्य विक्षिपति संस्फुरदात्मतत्वं ।
जीवेश्वरस्य जगदाकृति तन्मृषैव ।

इत्यादि च ।

त्रिर्यातुधानः प्रसितिं तयेत्वृतं यो अग्ने अनृतेन हन्ति ।
( ऋ.१०-८६-११. )

वाचा स्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रासितिं
यातुधानः । ( ऋ.१०-८७-१५. )

'अथ ज्ञानोपसर्गः' इत्यारभ्य 'येचान्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकैन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् । प्रकाश्या ह्येते तस्करा अस्वर्ग्याः' (मैत्री. ७ - ८. ) इत्यादिश्रुतिशतैरन्धं तम एव मायिनां गतिरिति निर्धार्यते । तथा च स्कान्दे—

सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः ।
अन्यसाम्यविदो विष्णोः विष्णुद्वेष्टार एव च ।
सर्वे यान्ति तमो घोरं न तेषां उत्थितिः क्वचित् ॥ इति ॥

॥ इति गुहाधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) आदित्ये विष्णुरित्युक्तम् । 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' ( छा. ४-११. ) इत्या दावग्नीनामेवादित्यादिस्थत्वमुच्यते ।

( २ ) अतोऽक्ष्यादित्ययोरैक्यात् 'य एषोऽन्तरक्षिणि पुरुषो

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे चक्षुरन्तःस्थत्वलिङ्गं ब्रह्मणि समन्वीयते । श्रु त्यादिसङ्गतिं विषयवाक्यं विषयसंशयौ सयुक्तिकं पूर्वपक्षं च दर्शय ति—आदित्य इति ॥ 'यश्चासावादित्ये' इत्यानन्दमयाधिकरणोदाहृ तायां तथा 'अन्तरादित्ये' इत्यन्तर्नयोदाहृतायां च श्रुतावानन्दमयोऽ न्तस्स्थो विष्णुरादित्येऽस्तीत्युक्तमित्यर्थः । ततः किमित्यत आह—य इति । तदित्यादौ संयोज्यम् । 'सोहं स एवाहम्' इत्यभ्यासोपन्यासः पूर्वपक्षयुक्तिप्रदर्शनार्थः । प्रथमादिपदेन 'अथैनमन्वाहार्यपचनोऽनु शशास । य एष चन्द्रमसि पुरुषो दृश्यते । सोऽहमस्मि स एवाहम स्मि । अथैनमाहवनीयोऽनुशशास । य एष विद्युति पुरुषो दृश्यते सो ऽहमस्मि स एवाहमस्मीति च वाक्यद्वयं गृह्यते । द्वितीयादिपदेन च न्द्रविद्युत्स्थत्वम् । यद्यपि आदित्यस्थत्वस्येव चन्द्रविद्युत्स्थत्वयोर ग्नेरक्षिस्थत्वसाधकत्वाभावात्तदुपादानं न प्रकृतोपयुक्तम् । तथा अ ग्नीनामिति बहुवचनं चानुपयुक्तम्, पूर्वपक्षे गार्हपत्यस्यैव अक्षिस्थत्व साधनेन गार्हपत्यादीनां त्रयाणां तस्यासाधनात् । चन्द्रविद्युतोरक्ष्ये कविधत्वाभावेन तत्स्थत्वस्याक्षिस्थत्वासाधकत्वाच्च । तथाऽपि आ दिशब्दद्वयं बहुवचनं च पूर्वपक्षे गार्हपत्यादिबह्वग्निश्रुतिरूपयुक्तिसूच नार्थम् । यथा अन्वाहार्यपचनाख्यदक्षिणाग्न्याहवनीययोः चन्द्रविद्यु त्स्थत्वमुच्यते, एवं गार्हपत्यस्यापि आदित्यस्थत्वमुच्यते इति दृष्टा न्तार्थं गार्हपत्यादीनां त्रयाणां क्रमेणादित्यादित्रितयस्थत्वे प्रसिद्धे गा र्हपत्यस्यैवादित्यस्थत्वमुखेनाक्षिस्थत्वमागच्छतीति युक्तिप्रदर्शनार्थं वा तदुपादानमिति न वैयर्थ्यमिति ध्येयम् ॥

( २ ) ततोऽपि किमित्यत आह—अत इति ॥ अस्य न सन्निहिते न 'ऐक्यात्' इत्यनेनान्वयः । प्रकृतस्य अत इत्यनेन परामृष्टस्यादित्यान्तः स्थत्वस्य ऐक्ये हेतुत्वायोगात् । किन्तु व्यवहितेन 'अत्राप्यग्निरेषो

दृश्यते' ( छा. ४-१५. ) इत्यत्राप्यग्निरेवोच्यते ।

च्यते' इत्यनेनान्वयः । न केवलमादित्यवाक्य इत्यपेरर्थः । तथा च— यदानन्दमयाख्यविष्णुनिष्ठतयोक्तमादित्यस्थत्वं तच्छान्दोग्ये 'य एष आदित्ये पुरुषः सोऽहमस्मि' इत्यादावग्नीनां गार्हपत्याख्याग्नेरेव 'उच्यते' प्रतीयते, न विष्णोः । कुतः ? यतोऽत्र 'अग्नीनां' गार्हपत्यदाक्षिणाग्न्याहवनीयानां त्रयाणां क्रमेण आदित्यादिस्थत्वमुच्यते, अतः । ततः किम् ? यतोऽत्र गार्हपत्याख्याग्नेरेवादित्यस्थत्वमुच्यतेऽतो 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति वाक्येऽप्यक्षिस्थत्वेन गार्हपत्याग्निरेवोच्यते, न स विष्णुः । श्रुतिगताहंशब्देनापि स एवोच्यते इति योजना । तथा च पूर्वपक्षश्रुतिगताहंशब्दो अग्नावेव मुख्य इति तस्यैव ग्रहणमिति भावः । नन्वग्नेरादित्यस्थत्वेऽपि कुतोऽक्षिस्थत्वप्राप्तिरित्यत आह—अक्ष्यादित्ययोरिति । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यैतरेयश्रुतेरचेतनाक्ष्यादित्यमण्डलयोरादित्यचक्षुःपदोदितैकचेतनाधिष्ठितत्वरूपैकधर्मेणैकाविधत्वादित्यर्थः । यद्वा—'अशनयोदाहृतादित्यस्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका' (          ) इति श्रुत्यनुसारेण तयोस्त्रिवृत्त्वधर्मेणैकविधत्वादित्यर्थः । तथा च—आदित्यस्थत्वोक्त्या अर्थादक्षिस्थत्वमपि प्राप्तमेवेति भावः । यद्यपि 'सयश्चायम्' इति पूर्वोदाहृततैत्तिरीयश्रुतिस्थादित्यशब्दः उत्कृष्टचेतनमात्रोपलक्षकतया व्याख्यातः । तथाऽपि अत्राधिकरणे सूर्याभिमन्यमानादित्यमण्डलपरत्वमप्यस्याङ्गीकृत्य आक्षेपपरिहारौ कृतौ । अत एव टीकायामक्ष्यादित्ययोरेकविधत्वादित्युक्तम् । तत्त्वप्रदीपे तु-अक्षीन्द्रियप्रेरकादित्ययोरेकत्वादिति यथाश्रुतमेव व्याख्यातम् । चन्द्रिकायामपि तत्त्वप्रदीपानुसारेण देवतापरमेवाक्षिपदम् । अत एव भाष्ये सन्न्यायरत्नावल्यां च अक्ष्यादित्ययोरैक्यादित्येवोक्तम्, न त्वेकविधत्वादिति । अक्ष्यादित्ययोरेकविधत्वादिति टीकापि भाष्यानुसारेण प्रकारभेदनिषेधमुखेन प्रकारैक्यपरा नेयेति पक्षान्तरमप्युक्तम् । तथा च-देवतापरत्वे 'आदित्ये विष्णुरित्युक्तम्' इति भाष्यश्रुतिस्थाक्ष्यादित्यपदयोश्च यथाश्रुत एवार्थः । मण्डलपरत्वे तद्भाष्यस्थादित्यपदं पूर्वोदाहृततैत्तिरीयश्रुतिस्थादित्यपदं च मण्डलपरतया व्याख्येयमिति विवेकः । अनेन छन्दोगश्रुत्युक्ताक्षिस्थत्वस्यान्यनिष्ठत्वाक्षेपमुखेनानन्दमयनयोदाहृतायां तैत्तिरीयश्रुतावर्थादुक्तस्यापि तस्यान्यनिष्ठत्वाक्षेपादा

( ३ ) अतः ' तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमे

नन्दमयाधिकरणेनास्याक्षेपिकी सङ्गतिरुक्ता भवति । अक्षिस्थत्वं विषयः । किमग्नेर्विष्णोर्वेति सन्देहः । अग्नीनामेव अक्षिस्थत्वमिति पूर्वः पक्षः । अत्र आदित्यस्थत्वरूपयुक्तिश्चोक्ता भवति । अत्र ' य एष आदित्ये पुरुषः ' ' य एषोऽन्तरक्षिणि पुरुषः ' इत्यनयोर्वाक्ययोः ' आदित्यश्चक्षुर्भूत्वा ' इति वाक्यद्वारा एकार्थत्वमुपपाद्य तन्मुखेन ' य एष आदित्ये ' इति वाक्येन ' यश्चासावादित्ये ' इति वाक्यस्य सङ्गतिं सम्पाद्य तद्द्वाराऽर्थाक्षिप्ततदर्थार्थक 'य एषोऽन्तरक्षिणि' इति वाक्यस्यापि तेन सङ्गतिरित्येवं वक्रसङ्गत्यैतदधिकरणारम्भः आदित्यस्थत्वलिङ्गस्यापि समन्वयसिद्ध्यर्थे । अन्यथा ' नेतरोऽनुपपत्तेः ' इत्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तम्, स मोक्षः ' तद्यथा ' इति वाक्येन ' य एषोन्तरक्षिणि ' इत्युक्ताक्षिस्थज्ञानात्प्रतीयत इति वक्ष्यमाणऋजुसङ्गत्यैव अधिकरणमारम्भणीयं स्यादिति ध्येयम् ॥

( ३ ) न केवलमक्षिस्थत्वसिद्धावग्नेरानन्दमयत्वप्राप्तिः । किन्तु-यत्पूर्वं ' नेतरः ' इत्यादौ विष्णुज्ञानान्मोक्ष इत्युक्तं, तदपि बाधितं स्यादित्यत आह—अत इति ॥ ' अग्निज्ञानादित्येतत् ' ' सर्वपापाश्लेषात् ' इत्यनेनेव ' मोक्षः ' इत्यनेनापि सम्बध्यते । तथा च यतोऽग्निरक्षिस्थोऽतस्तज्ज्ञानादेव मोक्षोऽपि भवेत् न विष्णुज्ञानात् । कुत एतत्? अक्षिस्थाग्निज्ञानात्सर्वपापाश्लेषात् । न च तस्यासिद्धिः । ' तद्यथा ' इति तदर्थवादेऽग्निज्ञानादेव सर्वपापाश्लेषोक्तेः । न च तज्ज्ञानात्सर्वपापाश्लेषमात्रेण कथं मोक्ष इति वाच्यम् । यतस्तज्ज्ञानान्मोक्षं विना सर्वपापाश्लेषासम्भवेन तदन्यथाऽनुपपत्त्यैव मोक्षस्याप्युपपत्तिरिति योजना । एवं च पूर्वपक्षे अग्नेरक्षिस्थत्वेन ' तद्यथा ' इत्यक्षिस्थस्योक्तं मुक्तिहेतुज्ञानविषयत्वमपि तस्यैव प्राप्नोतीति ' नेतरः ' इत्युक्तमयुक्तमिति भावः । अनेन ऋजुसङ्गतिरप्यस्य दर्शिता भवति। छान्दोग्ये हीत्थमाख्यायिका—( छा. ४-१०-५. ) कमलायनस्यापत्यं कामलायनः नामतः उपकोसलः सत्यकामाख्ये गुरौ ब्रह्मचर्यमुद्दिश्योवास । स आचार्यस्याग्नीन् गार्हपत्यादीन् द्वादशवर्षपर्यन्तं पर्यचारीत् । सत्यकामस्त्वन्तेवासिनः स्वाध्यायं ग्राहयन् एनमेकमेव नाध्यापयत् । पुनः पुनः स्वजाययोक्तोऽपि अनुक्त्वैव विद्यां प्रवासाय प्रातिष्ठत । तदोपकोसलो व्याधिपीडितो विद्याप्राप्तिचिन्तया स्वाचार्यभार्यया अशाने

वंविदि पापं कर्म न श्लिष्यते ' ( छा.४-१४. ) इत्यपि ज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति ।

त्युक्तोऽपि नाश्नात् । एवं ब्रह्मचारिण्यनश्नति तूष्णींभूते सति तदा गार्हपत्याद्यग्नयः कारुण्याविष्टाः त्रयोऽपि वयमस्मै ब्रह्मचारिणे विद्यां प्रब्रवामेति प्रतिज्ञाय मिलितास्सन्तो विद्यामूचुः । ' प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म ' इत्यादि । एवं सम्भूयोपदेशानन्तरमेनं प्रत्येकं अग्नय उपादिशुः इत्युच्यते वेद पुरुषेण ' अथ हैनं गार्हपत्योनुशशास. . य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि ' इत्यादिना । एवं त्रिभिरग्निभिः प्रत्येकमुपदिष्ट उपकोसलः अथास्माभिरुक्तं ज्ञेयमेव, नोपास्यम्, तत्तु तदाचार्य आगत्य वक्ष्यतीति तैरुक्तोऽभूत् । एवं स्थिते अथाचार्यः सत्यकाम आजगाम । आगत्य चोपकोसलोक्तं श्रुत्वा प्रत्युवाच । किमिति? यदग्निभिस्तुभ्यमुपदिष्टं तत्त्वया ज्ञेयमेव न तूपास्यं, तत्त्वहमुपदेक्ष्ये इत्येवं प्रतिज्ञायादरजननाय वक्ष्यमाणमस्तौत् ' यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापकर्म न श्लिष्यत इति । एवं स्तुत्वोपकोसलाय विद्यामुपादिशत्सत्यकामः । किमिति? ' य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच । एतदमृतमेतदभयमेतद्ब्रह्मेति ' । अथ सम्भूयोपदेशानन्तरं एनमुपकोसलं गार्हपत्योऽनुशशास । किमिति? पृथिव्यग्निरन्नमादित्य इति । एवं व्याप्तविद्यामुक्त्वाऽन्तर्यामिविद्यामाह—य इति । अस्य सोऽहमस्मीत्यस्य ह्रिकर्तृकत्वाद्गार्हपत्याद्यन्तर्यामी भगवान् स्वस्यादित्याद्यन्तर्यामिणा गार्हपत्यादिः स्वान्तर्यामिणः आदित्याद्यन्तर्यामिणा ऐक्यमाहेत्युच्यते । तथा च—अहेयत्वात् प्रत्यक्त्वाच्चाहं मदन्तर्यामी । आदित्ये च एष पुरुषः पूर्णषड्गुणो भगवान् दृश्यते दिव्यदृष्ट्या सोऽस्मीत्यर्थः । आदित्यस्थस्य विष्णोर्मदन्तर्यामिणश्च विदुरधर्मादिवन्मेदमात्रं न, किन्तु विशेषाभावश्चेत्याह—स एवेति । एवमुपासकस्य फलमाह—' स एतदेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवतीति ' । ' पापकृत्यां ' पापकार्यं ' लोकी ' भगवल्लोकी भवति । ' सर्वं ' सम्पूर्णं चायुः प्राप्नोति । ' ज्योक् ' सर्वज्ञस्सन् जीवतीति । एवं ' य एष चन्द्रमसि ' ' य एष विद्युति ' इत्यनयोः अर्थोऽवगन्तव्यः । ' तत् ' तत्रार्थे वक्ष्यमाणदृष्टान्तो यथा ' पुष्करपलाशे ' पद्मपत्रे आपो यथा ' न श्लिष्यन्ते ' न सज्जन्ते ' तथैवंविदि ' वक्ष्यमाणाक्षिस्थत्वेन ब्रह्म

( ४ ) अतो ब्रवीति—

सू—ॐ ॥ अन्तर उपपत्तेः ॥ ॐ ॥ १३ ॥

चक्षुरन्तस्स्थो विष्णुरेव ।

( ५ ) 'त्रिपादस्यामृतं दिवि' ( ऋ. १०-९०-३. ) इत्यादिना तस्यैव अमृतत्वाद्युपपत्तेः

---

परोक्षज्ञानिनि ज्ञानोत्तरं पापं कर्म न श्लिष्यते इत्यर्थः । य एषोऽक्षिण्यन्तःपुरुषो दृश्यते दिव्यदृष्ट्या एष आत्मा वामनाख्य इति होवाच उपकोसलं प्रति सत्यकामः । 'एतदमृतं' स्वतो मृतिशून्यं नित्यमुक्तं, 'एतदभयं' स्वतो भयशून्यं 'एतद्ब्रह्म' गुणपूर्णमिति सिद्धान्तरीत्या श्रुत्यर्थः । पूर्वपक्षी त्वेतत्प्रकरणमग्निपरं मन्यते ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इति सङ्गतिसम्भवात् शङ्कासद्भावाच्च । अतः तत्परिहाराय उत्तरमब्रवीत् सूत्रकार इत्यर्थः । चक्षुरन्तःस्थ इत्यनेन अन्तर इत्यंशो विष्णुरेवेत्यनेन अनुवृत्तस्तत्त्वित्यंशश्च व्याख्यातः । यद्यपि अनुव्याख्याने शब्दवैयर्थ्यपरिहाराय अन्तास्स्थत्वा रमणकृदिति व्याख्यानात् अत्रापि तदनुसारेण रमणकृच्चेति वक्तव्यम् । तथाऽप्यत्र रमणक्रियाबोधकात्मशब्दस्य हेतुकरणाच्च तदर्थस्य प्रतिज्ञायामन्वयः सम्भवतीति अन्तस्थ इत्येवोक्तम् । तत्रत्वात्मशब्दार्थस्य हेतुत्वाविवक्षणात्साध्यान्वयो न युज्यते इति रमणकृदित्यप्युक्तम् । वस्तुतस्तु—सूत्रे अन्तरित्यनुक्त्या अन्तर इत्यधिकोक्तेः सार्थक्याय अत्रापि रमणकृच्चेत्यपि उपलक्षणया वाच्यम् । अवयवार्थविवक्षाऽविवक्षाभ्यां आत्मशब्दस्य साध्यसमर्पकताहेतुत्वं च युज्यते इति ध्येयम् ॥

( ५ ) उपपत्तेरित्येतदनेकलिङ्गपरतया लिङ्गानां निरवकाशत्वोक्तिपरतया च व्याचष्टे—त्रिपादिति ॥ इत्यादिना वाक्येन उक्तस्येति शेषः । तस्येति विपरिणतं पदमावर्तते । अमृतत्वादित्येतदिहापि षष्ठ्यन्ततया बुद्ध्या विविक्तं सम्बध्यते । प्रथमेनादिपदेन 'अभयं तितीर्षतां पारम्' ( क.उ.३-२. ) 'अमृतैवैषा देवता' (

) 'आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृ.६-४-२५. ) इत्यादिवाक्यं द्वितीयेन अभयत्वादिकं गृह्यते । तथा च—त्रिपादित्यादिना श्रुत्यन्तरवाक्येन तस्य विष्णोरेव उक्तस्य 'एतदमृतम्' इति वाक्येऽन्तःस्थनिष्ठत्वेनोक्तस्यामृतत्वाद्युपपत्तेर्लिङ्गस्य तस्मिन् विष्णावेव उ

(६) ब्रह्मशब्दाद्युपपत्तेश्च ।
(७) 'सोऽहमस्मि' इत्यादि त्वन्तर्याम्यपेक्षया ।
(८) अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।
सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ॥

पपत्तेर्युक्तत्वादन्यत्रायुक्तत्वादिति योजना । अनेन लिङ्गस्य निरवकाशत्वानेकत्वाभ्यां प्राबल्यमुक्तं भवति । 'अमृतं' मृतिरहितं 'यदभयं' भयरहितं यच्च 'तितीर्षतां' संसारतरणेच्छूनां 'पारं' संसारस्य पारस्थं तदुत्तरावधिभूते श्वेतद्वीपादौ स्थितं मुक्तप्राप्यं परं ब्रह्म तत् ध्यातुं साधनं वक्तुं वयं 'शकेमहि' शक्ताः स्म इति कठश्रुत्यर्थः ॥

(६) यद्येवं निरवकाशत्वानेकत्वाभ्यां बलवल्लिङ्गबलाच्चक्षुरन्तःस्थस्य विष्णुत्वनिश्चयः, किमु तदोभयथा स्वभावानिरवकाशत्वाभ्यां अनेकत्वाच्च बलवच्छ्रुतितोऽपीति भावेन सौत्रमुपपत्तेरित्यंशं ब्रह्मादिश्रुतिरूपहेत्वन्तरपरतया तस्य प्राबल्योपयोगिनिरवकाशत्वोपपादनपरतया च प्रकारान्तरेण व्याचष्टे—ब्रह्मेति ॥ आदिपदेनात्मशब्दो गृह्यते । ब्रह्मात्मादीति पाठे आदिशब्देन पुरुषशब्दो ग्राह्यः । अत्र श्रुतेत्यादौ संयोज्यम् । तस्यैवेत्यनुषज्यते । तथा च—अत्रान्तस्थप्रकरणे श्रुतब्रह्मशब्दादेस्तस्य विष्णोरेवोपपत्तेरन्यस्यानुपपत्तेरित्यर्थः । गुणपूर्तिवाचिब्रह्मशब्दस्य विष्णावेव मुख्यत्वादात्मशब्दस्यापिआदेयमुपादेयं सुखं मात्यनुभवतीति व्युत्पत्त्या तत्रैव मुख्यत्वादिति भावः ॥

अनेन 'य एषोऽन्तराक्षिणि' इति श्रुत्युक्तोऽन्तरः तत्तु तत्तज्जीवप्रेरकत्वेन तत्तच्चक्षुरन्तस्स्थितो विष्णुरेव, न त्वग्निः । कुतः? उपपत्तेः । अत्र 'एतदमृतमभयमेतद्ब्रह्मैष आत्मा' इत्यमृतत्वाभयत्वादिलिङ्गश्रवणाद्ब्रह्मादिशब्दश्रुतेश्च तेषां विष्णावेवोपपत्तेः, अन्यत्रानुपपत्तेरिति सूत्रार्थ उक्तो भवति ॥

(७) ननु निरवकाशश्रुतिलिङ्गबलाद्यदि विष्णुरेव अक्षिस्थस्तदाऽऽदित्यस्थोऽपि स एव स्यात् । तर्हि 'सोऽहमस्मि स एवाहमस्मि' इत्यहमादिश्रुतेः का गतिरित्यत आह—सोऽहमस्मीत्यादीति ॥ आदिपदेन गार्हपत्यादिशब्दानां ग्रहणम् । तथा च इत्यादिवाक्यस्थमहमादिपदजातमित्यर्थः । अपक्षयेत्यनन्तरं प्रवृत्तमिति शेषः ॥

(८) अन्तर्यामिणि अहमादिशब्दप्रवृत्तिं स्मारयति—अन्तर्यामिणमिति ॥ आद्योऽपिः समुच्चये । द्वितीयो यद्यपि तथाऽपीत्यर्थे । ईशानां ब्र

इति महाकौर्मे ॥

( ९ ) सू—ॐ ॥ स्थानादिव्यपदेशाच्च ॥ ॐ ॥ १४ ॥

'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' ( छा. ४-१५. ) इत्यादिस्थानशक्तिः । वामनि

---

त्वादीनां ईशमित्यन्तर्यामित्वोपपादकम् । तथा च—'वस्तुषु' अन्यथादिजीवेषु ईशाद्भेदे सत्यपि तद्भेदबोधकोऽहमितिशब्दः त्वमितिशब्दः । किं बहुनाऽभेदसाधकाः सर्वे तत्तच्छब्दाः प्रयुज्यन्ते । कथम्? यतोऽन्तर्यामिणमपेक्ष्यैवैते शब्दाः प्रयुज्यन्ते नैतावता अन्यथादिर्जीवानां ईशाभेदः शङ्क्यः । यतः सोऽन्तर्यामी ईशेशो ब्रह्माद्युत्तम इत्यर्थः । महाकौर्मे इत्यस्य उक्तत्वादित्यध्याहारेण सोऽहमिति पूर्ववाक्येनान्वयः ॥

( ९ ) युक्त्यन्तरेण विष्णोश्चक्षुरन्तःस्थत्वं साधयत्सूत्रमुपन्यस्य व्याचष्टे—स्थानादीति ॥ सर्पिरित्यतः पूर्वं 'तद्यदस्मिन्' इति श्रुतिवाक्यपाठः । तत्त्वप्रदीपे तु—'यदिदं चक्षुषि' इति पाठभेदेन पूर्ववाक्यमुदाहृतम् । इत्यादीति लुप्तविभक्तिकम् । इत्यादावित्यर्थः । एवमुत्तरत्रापि । आदिपदेन 'वर्त्मनी एव गच्छति' इत्यादेर्ग्रहणम् । स्थानशक्तिरिति । ब्रह्मस्थानभूतयोरक्ष्णोरक्षिस्थपरमपुरुषसम्बन्धाद् सङ्गत्वाख्यशक्तिरित्यर्थः उच्यत इत्यत्रापि सम्बध्यते । अनेन सौत्रं स्थानपदं परमात्मस्थानशक्त्युपलक्षकतया व्याख्यातम् । उच्यते इत्यनेन असिद्धिपरिहारकव्यपदेशशब्दार्थो दर्शितः । आदिपदेन 'एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति . . एष उ एव वामनिरेष हि सर्वाणि वामानि नयति । एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति' इति समग्रवाक्यं गृह्यते । आत्मशक्तिरिति । संयद्वामत्वरूपात्मसामर्थ्यमित्यर्थः । अनेन सौत्रादिशब्दो ह्यधिष्ठातृपरमात्मपरस्सन् तच्छक्त्युपलक्षक इति व्याख्यातो भवति । चो हेतुसमुच्चये शक्तिसमुच्चये चाद्यो भिन्नक्रमः । उच्यते यत इति शेषः । अस्यातोऽपि चक्षुरन्तःस्थो विष्णुरेव इति पूर्वप्रतिज्ञावाक्येनान्वयः । यस्मादसङ्गोयं पुरुषोऽक्षिणि विद्यते नियामकतया तत्तस्माद्यदि 'अस्मिन्' चक्षुषि 'सर्पिः' घृतमुदकं वा 'सिञ्चति' सिञ्चेत्कश्चिदपि तर्हि तद्वर्त्मनी उभयमार्गौ प्रत्येव गच्छति न चक्षुः स्पृशतीत्यर्थः । एवं चाक्षुषं वामनाख्यं विष्णुं संयद्वाम इत्याचक्षते विद्वांसः । कुतः? हि यस्मात्

भामनिरित्याद्यात्मशक्तिश्चोच्यते। तस्य ह्येतल्लिङ्गम्।
( १० ) 'स ईशः सोऽसपत्नः स हरिः स परः स परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युतः' इति चतुर्वेदशिखायाम्॥

एवं 'सर्वाणि वामानि' स्त्रीरूपाणि अभिसंयन्ति प्राप्नुवन्ति। अनेन संयन्ति वामानि एनमिति विग्रहो दर्शितः। 'एष उ' चक्षुर्गत एव मुख्यतो वामनिरित्युच्यते। कुतः? हि यस्मादेषः 'सर्वाणि वामानि' सुन्दररमादिस्त्रीरूपाणि 'नयति' प्रेरयति। एष उ एव चाक्षुषः पुरुषो 'भामनिः' मुख्यतः तच्छब्दवाच्यः। कुतः? हि यस्मादेष 'सर्वेषु लोकेषु' पुरुषेषु भाति तदीयतेजःप्रकाशकतया तत्र दीप्यते इत्यर्थः। यथोक्तं तत्त्वप्रदीपे—वामं सौन्दर्यं भामं तेजः तत्प्रधानत्वात् स्त्रीपुरुषा वामभामशब्दितास्तन्नेता वामनिर्भामनिश्चेति। एतल्लिङ्गद्वयसद्भावेऽपि कुतोऽक्षिस्थस्य विष्णुत्वनिश्चय इत्यत आह—तस्येति। 'हि' यस्मात् 'तस्य' विष्णोः 'एतत्' स्वसम्बन्धेन अक्ष्णोरसङ्गत्वापादकत्वं सर्वसौन्दर्याधिष्ठानस्त्रीरूपनेतृत्वं च 'लिङ्गं' असाधारणो धर्मः तस्मान्नाप्रयोजकत्वमिति तेन विष्णुत्वनिश्चयोपपत्तिरिति वाक्यशेषः॥

( १० ) कुत एतस्य तल्लिङ्गमिति ज्ञायते इत्यत आह—स इति॥ लिङ्गस्य विष्णुनिष्ठताज्ञापनाय 'स हरिः' इत्यादेः 'सोऽच्युतः' इत्यंशस्य चोक्तिः। इदंचक्षुषीति समस्तं पदम्। अन्यथा सर्पिरादिविशेषणत्वं प्रतीयते, ततश्च प्रत्यक्षसिद्धगोळकविशेषणत्वं न ज्ञायेत। अस्मिन् चक्षुषीत्येतत्प्रकरणगतश्रुतिविसंवादश्च स्यात्। चेत्तर्ह्योरध्याहारः। तथा च—यद्यस्मात्सन्निहिताधिष्ठातुः यस्य सामर्थ्यादिति यावत्। 'इदंचक्षुषि' अस्मिंश्चक्षुषि सर्पिरुदकं वा सिञ्चति चेत्कश्चित् तर्हि तद्वर्त्मनी प्रत्येव गच्छति स ईशः 'सोऽसपत्नः' शत्रुरहितः। 'स परः' लोकविलक्षणः। 'परोवरीयान्'। इदमेकं पदम्। रुद्रादेः परतो वाण्याः पराच्चतुर्मुखात्परतः श्रितत्वाद्वर उत्तमः। स एव वामनभामनानन्दाच्युतशब्दवाच्य इत्यर्थः। विधेयानेकत्वात्स इत्यसकृदावृत्तिः। परोवरीयानित्यत्रापि तच्छब्दोऽनुषञ्जनीयः। एकदेशविकृतस्यानन्यत्वाद्वामनिभामनिशब्दार्थ एव वामनभामनशब्दयोरर्थः। चतुर्वेदशि

(११) यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः ।
स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत् ॥
इति वामने ॥ १४ ॥

(१२) सू—ॐ ॥ सुखविशिष्टाभिधानादेव च ॥ ॐ ॥ १५ ॥
'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति' ( छा. ४-१०. )

---

खायामित्यनन्तरं उक्तत्वादिति शेषः । अस्य तस्यैतल्लिङ्गमिति ज्ञायते इति पूर्वेणान्वयः ॥

(११) लिङ्गस्वरूपस्य तस्य विष्णुरूपव्यक्तिविशेषनिष्ठतायाश्च श्रुतावस्फुटत्वात्तदर्थमत्रार्थे स्मृतिं चाह—यदिति ॥ यस्य स्थानत्वादित्यर्थे । अस्य यच्छब्दस्य स इति तच्छब्देनान्वयः । 'सर्ववस्तुभिः' सर्पिरादिभिः । 'वामनः' सुन्दरस्त्रीनेतेति वामनाख्यो विष्णुरेव 'अस्माकं' भक्तानां 'परः' परा 'गतिः' प्राप्य इति चिन्तयेदित्यर्थः । यद्वा—वामन इत्यनेन प्राप्तालपत्वशङ्कावारणाय 'परः' पूर्ण इत्युक्तम् । वामन इति । वामनाख्यपुराण इत्यर्थः । अस्य चतुर्वेदशिखायामिति वदन्वयः । स्पष्टः सूत्रार्थः ॥

(१२) प्रकरणबलाच्चक्षुरन्तःस्थत्वं विष्णोः प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—सुखेति ॥ 'खं ब्रह्मेति' इत्यन्तस्य सूत्रेणान्वयः । उपक्रमे प्राणस्य श्रुतत्वेऽपि नैतत्प्रकरणस्य तत्परत्वम्, पूर्वसूत्रोक्त विष्णुश्रुतिलिङ्गादिबाधकसद्भावादिति प्रतिपादयितुं उत्तरत्र श्रौतकर्मशब्देन प्राणब्रह्मणोस्तन्त्रेणोपादानात्सूचनार्थं च 'प्राणो ब्रह्म' इत्यंशोदाहरणम् । सूत्रे चशब्दः पूर्वोक्तहेतोरिह प्रकरणबलाच्चेत्यध्याहृतहेतोश्च समुच्चये । सूत्रोदाहृतहेतोस्त्वध्याहृतसाध्येनान्वयः । विशिष्टं च तत्सुखं च सुखविशिष्टम् । विशेषणस्य परनिपातः । सुखेन विशिष्ट इति वा, सुखेषु विशिष्ट इति वा विग्रहः । तत्र द्वितीये श्रैष्ठ्यरूपं वैशिष्ट्यमर्थात्सुखेऽप्यन्वेति । अत्र प्रकरणे हि मुख्यप्राणो ब्रह्माखिलजीवेभ्यः पूर्ण इति मुख्यप्राणस्य पूर्णत्वमुक्त्वा 'कं ब्रह्म खं ब्रह्म' इत्यनेन 'कं' सुखं 'ब्रह्म' पूर्णं 'खं' ज्ञानं पूर्णमिति सुखसंविदोरपि पूर्णत्वमुच्यते । तथा च न केवलमुक्तहेतुबलाच्चक्षुरन्तःस्थो विष्णुः, किन्तु—प्रकरणबलाच्च । न च प्रकरणस्य वैष्णवत्वासिद्धिः । अस्योपक्रमे 'सुखविशिष्टाभिधानात्' पूर्णसुखोक्तेरिति सूत्रार्थः । यदेवमुपक्रमे 'कं ब्रह्म' इति पूर्णसुखाभिधानादेवास्य प्रकरणस्य वैष्णव

( १३ ) 'विज्ञानमानन्दं ब्रह्म' ( बृ. ५-९-२८. ) 'आनन्दो ब्रह्मेति व्यजानात्' ( तै. ३-६. ) इत्यादेस्तस्यैव हि तल्लक्षणम ।

( १४ ) लक्षणं परमानन्दो विष्णोरेव न संशयः ।
अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः ॥
इति ब्रह्मवैवर्ते ।

---

त्वं सिद्ध्यति किमुत तदा 'खं ब्रह्म' इति पूर्णज्ञानादपीति कैमुत्यन्यायसूचनाय सूत्रे एवकारः । यद्यपि छान्दोग्यभाष्ये 'प्राणो ब्रह्म' बलरूपं ब्रह्म । 'कं' पूर्णानन्दरूपं ब्रह्म । 'खं' पूर्णज्ञानरूपं 'ब्रह्म' परं ब्रह्मेति व्याख्यातम् । तथापि तद्ब्रह्मशब्दस्य परापरयो रूढ्या वृत्त्या व्याख्यानान्तरमित्यदोषः ॥

( १३ ) ननु उपक्रमे पूर्णसुखसंविदोरभिधानेऽपि कुतोऽस्य प्रकरणस्य वैष्णवत्वमित्याशङ्क्य तयोस्तल्लक्षणत्वात् तद्रूपत्वात् उपक्रमे तदभिधाने ब्रह्मैवोपक्रान्तं स्यादिति भावेन पूर्णसुखज्ञानयोर्ब्रह्मलक्षणत्वं श्रुत्या दर्शयति—विज्ञानमिति ॥ विज्ञानादिरूपं ब्रह्मेत्यर्थः । अत्र विज्ञानादिपदं पूर्णज्ञानादिवाचि, सङ्कोचे कारणाभावादिति प्रकृतसङ्गतिः । इदं वाजसनेये श्रुतम् । 'आनन्दो ब्रह्म' इति । तैत्तिरीयवाक्यादिति शेषः । आदिशब्देन 'अथैष एव परम आनन्दः' 'सत्यं ज्ञानम्' इत्यादिकं गृह्यते । तथा च इत्यादेर्वाक्यात् 'तस्य' ब्रह्मणः 'तत्' पूर्णानन्दादिकं 'लक्षणं' स्वलक्षणं ज्ञायत इत्यर्थः । तथा च-श्रुत्यन्तरे ब्रह्मलक्षणत्वेनावगतयोः पूर्णज्ञानसुखयोरत्र प्रकरणेऽभिधानात् अस्य वैष्णवत्वसिद्धिरिति भावः ॥

( १४ ) ननु सकलचेतनानामपि पूर्णानन्दत्वात्कथमेतद्विष्णुलक्षणमित्यत आह—लक्षणमिति ॥ स्वरूपधर्मोभयार्थकोऽयम । 'परमानन्दः' निरवधिकपूर्णानन्द एव लक्षणम् । इह लक्षणत्वेनाभिप्रेतः न पूर्णानन्दमात्रम् । स च विष्णोरेव नान्येषाम् । अन्येषां त्वापेक्षिकमेव पूर्णं सुखं, न विष्णुवन्निरवधिकं पूर्णमित्यर्थः । कुत इत्यत आह—यतः अव्यक्तादीति । अव्यक्ता श्रीः सैवादिर्येषां ते तथोक्ताः । तृणजीवा मनुष्योत्तमा एवान्ते एषां ते तथोक्ताः । अव्यक्तादयश्च ते तृणान्ताश्चेति कर्मधारयः । तुशब्दो विशेषार्थः । 'विप्रुडानन्दभागिनः' तारतम्येन ब्रह्मानन्दप्रतिबिम्बत्वापेक्षिकानन्दयुक्ता इत्यर्थः । चेतना इति शे

( १५ ) न च मुख्ये सत्यमुख्यं युज्यते ॥ १५ ॥

( १६ ) सू — ॐ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ ॐ ॥ १६ ॥

---

यः । 'न संशय' इत्यस्यार्थस्य सावधारणत्वमाह । ब्रह्मवैवर्त इत्यस्योक्तत्वादित्यध्याहारेण 'तस्यैव तल्लक्षणम्' इतिसावधारणपूर्ववाक्येनान्वयः ॥

( १५ ) नन्वग्न्यादिसुखस्यापेक्षिकतयाऽपि पूर्णत्वसद्भावात्तेषां पूर्णसुखमिदं किं न स्यात् । तथा तेषां तल्लक्षणं किं न स्यात् । तथा तेषामेवेदं प्रकरणं किं न स्यात् इत्यत आह—न चेति ॥ 'मुख्ये' निरवधिकपूर्णत्वे 'कं ब्रह्म' इति श्रुत्यर्थतया तल्लक्षणे सम्भवति सति 'अमुख्यं' आपेक्षिकमन्याधीनं पूर्णत्वं न युज्यते इत्यर्थः ॥

( १६ ) नन्वेतदुपक्रमे सुखज्ञानयोरभिधानेऽपि नाक्षिस्थप्रकरणस्य वैष्णवत्वं युक्तम् । छान्दोग्ये 'प्राणो ब्रह्म कम्' इति विद्यां 'य एष आदित्ये पुरुषः' इति विद्यां चोक्त्वाऽग्निभिरुपकोसलं प्रति 'उपकोसलैषा सौम्य तेऽस्मद्विद्या चात्मविद्या चोक्ता' इत्युक्तत्वेन 'कम्' इत्याद्यविद्याया विष्णुविषयत्वस्य 'य एषः' इति द्वितीयायाश्चाग्निविषयत्वस्यैव युक्तत्वात् । न च 'अस्मद्विद्या' इत्युक्ताऽऽदित्यविद्याया अग्निविषयत्वेऽपि नाक्षिस्थविद्यायास्तद्युक्तमिति वाच्यम् । 'य एषोन्तरक्षिणि' इत्यक्षिस्थविद्याया आदित्यविद्यैकार्थत्वात् । न चोपक्रमविरोधः । यथा 'ह्वयाम्यग्निं प्रथमं स्वस्तये' इत्यत्राग्नेरुपक्रमेपि 'सवितारमूतये' 'हिरण्ययेन सविता रथेन' इत्यादिसवितृश्रुतिलिङ्गादिना तत्प्रकरणं सावित्रमिति प्रकरणविच्छेदः,तत्रापि ब्रह्मण उपक्रमेऽपि 'अस्मद्विद्या' इत्यग्नेरस्मच्छब्देनोक्तत्वादग्नीनामेवेदं प्रकरणं न विष्णोः । न च 'अस्मद्विद्या' इत्येतदन्तर्यामिपरतया योज्यम् । तथा सति 'आत्मविद्या' इति पृथगुक्त्ययोगात् । तस्मादग्निविषयत्वमेव चक्षुरन्तःस्थविद्याया इत्याशङ्कां परिहरत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति–श्रुतेति ॥ इतीत्यस्य सूत्रेणान्वयः । अत्र सूत्रे श्रुतेत्युपलक्षणं, मतध्यातेत्यपि द्रष्टव्यम् । केति वायुरुच्यते । 'को वायुरिति शब्दितः' इति अभिधानात् । कशब्दस्यावृत्त्या गतिरित्यनेनापि सम्बन्धे क.गतिरिति परब्रह्मगतिरुच्यते । 'कं ब्रह्म' इति वाक्यबोधितपरब्रह्मप्रकरणादेतदर्थनिश्चयात् । तथा च—श्रुतोपनिषदां श्रुतमतध्यातेत

'स एनान् ब्रह्म गमयति' ( छा. ४-१५. ) इति।

द्विद्यानां पुंसां केन वायुना कगतेः 'कं ब्रह्म' इति वाक्यबोधितब्रह्मप्राप्तेः 'स एनान् ब्रह्म गमयति' इत्युपसंहारेऽभिधानात् विष्णुविषयैवाक्षिस्थविद्या, न त्वग्निविषयेति सूत्रार्थः। यद्वा—श्रुतोपनिषदमुपकोसलं प्रत्यग्निभिरेतद्विद्याफलत्वेन ब्रह्मगत्यभिधानाद्वैष्णवमेवेदं प्रकरणं, न त्वग्निविषयमित्यर्थः। तत्त्वप्रदीपे तु—'स एनान् ब्रह्म गमयति' इति श्रुतोपनिषत्कानां श्रुतोपानिषद्गतोपासनानां ब्रह्मगत्यभिधानाच्च आन्तरो विष्णुरेव। अस्यामुपनिषीदति ब्रह्मेत्युपनिषत् उपासना। अनया ब्रह्म उपनिषीदतीति वेत्युक्तम्। श्रुतावियषिणी या उपनिषत् मति ध्यानरूपोपासना तत्कानां तद्गतं तद्विषयकं ध्यानरूपोपासनं तद्गता मित्यर्थः। अनेन उपनिषच्छब्दो मतिध्यानरूपोपासनापरः। ब्रह्मेत्यनेन बहुव्रीहिसमासावयवभूतः कशब्द आवृत्तो ब्रह्मवाचक इत्युक्तं भवति। अत एवाह टीकाकृत्—श्रुतपदं मनननिदिध्यासनयोरुपलक्षकमित्यादिना। तत्त्वप्रदीपपक्षे—उपनिषच्छब्द उपासनापरः। टीकाकृत्पक्षे विद्यापरः। टीकायां वाशब्दश्चार्थः। यद्यप्यस्य सूत्रस्य प्रकरणविच्छेदशङ्कापरिहारायोपसंहारस्थलिङ्गोक्तिपरत्वेन परमसाध्ये युक्त्यन्तरप्रतिपादकत्वाभावादत्र चशब्दो न प्रयोज्यः। तथाऽपि 'स एनान् ब्रह्म' इत्युपसंहारस्थस्यैतद्विद्यावेत्तॄणां ब्रह्मप्राप्तिरूपलिङ्गस्य चक्षुरन्तरो विष्णुरेवेति परमसाध्येऽपि साक्षादन्वयादस्य च लिङ्गस्य आद्यसूत्रोक्तामृतत्वलिङ्गापेक्षयोत्तरवाक्यस्थद्वितीयसूत्रोक्तलिङ्गापेक्षया तृतीयसूत्रोक्तप्रकरणापेक्षया युक्त्यन्तरत्वात्तद्विवक्षया सूत्रे चशब्दप्रयोगोपपत्तिरिति केचिदाहुः। वस्तुतस्तु--अत्र प्रकरणविच्छेदशङ्कापरिहारेऽपि पूर्वसूत्रेऽत्र चैतत्प्रकरणस्य वैष्णवत्वरूपाध्याहृतावान्तरसाध्यस्यैकत्वेन तत्रानेन युक्त्यन्तराभिधानाच्चशब्दोपपत्तिः। अथ 'यदु चैवास्मिञ्छव्यं कर्म कुर्वन्ति यदि चनार्चिषमेवाभिसम्भवन्ति। अर्चिषोऽहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' इति छन्दोगश्रुतेरयमर्थः—अथेत्यर्थान्तरे। 'अथ' अवासितकर्मणि 'अस्मिन्' ज्ञानिविषये पुत्रादयो यदि 'शव्यं' शवयोग्यं दहनादिकर्म कुर्वन्ति। 'यदि च न' यदि वा न कुर्वन्ति 'तदार्चिषं' अर्चिर्नामकदेवलोकं

( १७ ) न ह्यन्यविद्ययाऽन्यगतिर्युक्ता ॥

( १८ ) सू—ॐ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ ॐ ॥ १७ ॥

'सम्भवन्ति' प्राप्नुवन्त्येवेमे ज्ञानिन इति विपरिणामेनान्वयः। संविशतीत्येकवचनान्तविशिधातुपाठः 'ते' इति पाठश्च प्रमेयदीपच्छन्दोगपाठविरुद्धः। ततोऽहर्लोकं, तत 'आपूर्यमाणपक्षं' शुक्लपक्षलोकं, ततः सूर्यो 'यान्' षण्मासान् उदङ्केति तन्मासदेवलोकं उत्तरायणलोकं च, ततः संवत्सरादादित्यचन्द्रविद्युदभिमानिलोकान् क्रमेण प्राप्नुवन्ति। ततः 'तस्याः' विद्युन्नाम्न्या भारत्याः 'पुरुषो' भर्ता 'मानवो' मनुसंज्ञस्य विष्णोः प्रियो मुख्यवायुस्तं गच्छन्ति। 'सः' वायुः 'एनान्' स्वमाप्तान् प्रतीकालम्बनान् चतुर्मुखाख्यं कार्यं ब्रह्मा प्रतीकालम्बनांस्तु परं ब्रह्म गमयतीति ॥

( १७ ) अस्त्वेतद्विद्यायाः फलत्वेन ब्रह्मप्राप्त्यभिधानं, तथापि कुतो नाग्निविषयत्वमस्या इत्यत आह—न हीति ॥ 'हि' यस्मादन्यस्याग्नेर्विद्ययाऽन्यगतिरन्यस्य ब्रह्मणः प्राप्तिर्न युक्ता। यस्माच्चात्र परब्रह्मप्राप्तिः फलत्वेनोच्यते इत्यर्थः। तस्मान्नान्यविद्येयं ब्रह्मविद्यैवेति वाक्यशेषः। हिशब्देन विपक्षे—'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इति स्मृतिविरोधं सूचयति। 'अस्मद्विद्याऽऽत्मविद्या' इति वचनविरोधस्तु तयोरन्तर्यामिसर्वगतरूपद्वयविषयकत्वेन परिहरणीयः। सावकाशश्रुतेरपि निरवकाशश्रुतेः प्राबल्यादिति भावः ॥

( १८ ) एवमुपपत्त्यादिभिर्विष्णोरक्षिस्थत्वं प्रतिपाद्य विपक्षबाधकेनापि तत्समर्थयत्सूत्रं पठति—अनवस्थितेरिति ॥ अत्राऽऽन्तरस्तत्तज्जीवप्रेरकतया तत्तच्चक्षुस्स्थितः 'इतरः' पूर्वप्रकृतात् कशब्दोदितात् ब्रह्मणोऽन्योऽग्निजीवो न। कुतः? यतः स इतरो जीव इति हेतुसाध्ययोजनामभिप्रेत्य अत्र विपक्षेऽनिष्टप्रसङ्गाभिधायकतयाऽनवस्थितेरित्यंशं योजयति—जीवस्येति। 'साम्यात्' इति सूत्रेऽध्याहृतं पदम्, इदं च तत्त्वप्रदीपरीत्या देहलीदीपन्यायेनोभयत्र सम्बध्यते। जीवस्य जीवान्तरनियामकत्वे इत्येतद्विपरिणतमसम्भवादित्यनेनापि सम्बध्यते। चो हेतुसमुच्चये। इतर इत्यस्याग्निरित्यर्थे वाच्ये जीव इति सामान्येनोक्तिः साध्यहेत्वोस्तन्त्रेणाभिधानार्थम्। न जीव इत्यस्य आन्तर इत्युद्देश्यसमर्पकानुवृत्तपदेनान्वयः। अनेन तत्तज्जीवप्रेरकतया तत्तच्चक्षुरन्तरो नेतरः नाग्निः। कुतः? यतः स इतरो जीवः जीवत्वादिति

जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, सा
स्यादसम्भवाच्च न जीवः ।
( १९ ) नियमप्रमाणाभावात् । अनीश्वरापेक्षत्वाच्च ॥ १७ ॥

—:*:—

यावत् । न च विपक्षे बाधकाभावः, जीवस्य जीवान्तरनियामकत्वे प्रेरकत्वे आन्तरजीवस्यापि जीवत्वसाम्यात्तस्यापि नियामकं जीवान्तरं वाच्यमित्यनवस्थितेरसिद्धपरम्पराकल्पनरूपानवस्थाख्यानिष्टापत्तेः । अभ्युपगम्य चेदमुदितम् । वस्तुतस्तु—जीवस्य जीवान्तरनियामकत्वासम्भवाच्च नेतरोऽग्निरन्तरः । कुतोऽसम्भवः ? अग्नेर्जीवस्य प्रेर्यजीवान्तरेण सह परतन्त्रत्वरूपजीवत्वसाम्यादिति सूत्रवृत्तिर्दर्शिता भवति ॥

( १९ ) ननु जीवप्रेरकाग्नेः स्वातन्त्र्याभ्युपगमान्नानवस्था । न चैवं जीवान्तरस्यापि स्वातन्त्र्यं स्यात् जीवत्वसाम्यादित्युक्तमिति वाच्यम् । जीवत्वसाम्येऽप्यग्नेरेव स्वातन्त्र्यं नान्येषामिति नियमाभ्युपगमादित्यत आह—नियमेति ॥ जीवत्वसाम्येऽप्यग्नेरेव स्वातन्त्र्यं नान्येषामिति नियमे प्रमाणाभावादित्यर्थः । अतोऽग्नेः स्वातन्त्र्यायोगात्तु स्थैवानवस्थितिरिति भावः । नन्वस्त्वग्नेरस्वातन्त्र्यं, तथापि तत्प्रेरकस्येश्वरस्य स्वातन्त्र्यसम्भवान्नानवस्थेत्यत आह—अनीश्वरेति । ईश्वरं जगत्प्रेरकत्वेन योऽपेक्षतेऽभ्युपैति स ईश्वरापेक्षः, स न भवतीत्यनीश्वरापेक्षः, तस्य भावस्तत्त्व तस्मादित्यर्थः । पूर्ववादिन इति शेषः । हेतुसमुच्चये चशब्दः । एवं वा—ननु परतन्त्रत्वसाम्येऽपि जीवानां जीवान्तरनियामकत्वात्कथं तदसम्भव इत्यत आह—अनीश्वरेति । व्याख्यानं पूर्ववत् । तथा च—यथाऽस्मत्पक्षे सति राज्ञि मण्डलेशो प्रजानां राजशक्त्या नियम्यनियामकभाववत् ईश्वरशक्त्या जीवानां जीवान्तरनियामकत्वसंभवः, न तथा परपक्षे सम्भवति, परेण ईश्वरानभ्युपगमादिति भावः । इदं च वाक्यद्वयस्य योजनाद्वयम् । टीकायां तत्त्वप्रदीपोक्तमेवोक्तम् । उक्तं हि तत्त्वप्रदीपे—नियमप्रमाणाभावोऽनीश्वरापेक्षत्वं चेत्युभौ उभयत्र हेतुरिति । 'उभयत्र' अनवस्थित्यसम्भवयोरित्यर्थः ॥

॥ इति अन्तराधिकरणम् ॥

५. अधिकरणम् ॥

( १ ) 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ( बृ.५-७-३. ) इत्यादि अन्तर्याम्युच्यते ।

५. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽन्तःस्थत्वरूपभावसहितं नियमनक्रियात्मकं लिङ्गं ब्रह्मणि समन्वीयते । विषयवाक्योदाहरणपूर्वकं विषयं दर्शयति—य इति ॥ इत्यादीति प्रथमा सप्तम्यर्थे । तृतीयार्थे वा । 'सप्तसु प्रथमा' इति सूत्रात् । 'क्रियाविशेषणं वा' इति तत्त्वप्रदीपोक्तेः 'इत्यादिना' इति पाठस्तद्विरुद्धः । वाक्ये, वाक्येनेति वा शेषः । 'योऽप्सु तिष्ठन्' 'यो भूतेषु तिष्ठन्' इत्यादिकमादिशब्देन गृह्यते । अन्तर्यामीत्यनेन विषयो दर्शितः । बृहदारण्यके उद्दालकं प्रति याज्ञवल्क्येनोक्तं इदं वाक्यम् । 'यः पृथिव्यां' पृथुं विष्णुमूढ्वा याति गच्छतीति पृथिवी गरुडः तस्मिन् तिष्ठन् 'पृथिव्याः' तदभिमानिचेतनात् 'अन्तरो' विविक्तः । 'यं च पृथिवी' तदभिमानी चेतनो न वेद साकल्येन । 'यस्य च पृथिवी' तद्वशत्वनिमित्तात् शरीरभूता । न केवलं तत्र स्थितिमात्रं, किन्तु 'योन्तरः' अन्तःस्थित्वा बाह्यविषयापेक्षां विना रममाणः ।

स्वतो नित्यतृप्तः सोऽन्तरः स्ववशत्वतः ।
बाह्यापेक्षां विना यस्तु रमते सोऽन्तरस्स्मृतः ॥

इति बृहद्भाष्योक्तेः । यद्वा—

अतिप्रियत्वात्तु हरेरन्तरत्वमुदाहृतम् ॥

इति तत्रैवोक्तेः । 'प्रेयः पुत्रात्' इत्यादिश्रुत्या परमप्रेयोरूपत्वात् 'अन्तरः' अतिप्रियः सन् 'पृथिवीं' गरुडं 'यमयति' नियमयति । एषः 'ते' तव 'अन्तर्याम्यात्मा' नियामकः पुरुषः 'अमृतः' नित्य इति श्रुत्यर्थः । एतेन अन्तरो विविक्त इति टीकाया बृहद्भाष्यविरोधो निरस्तः । बृहद्भाष्यस्य 'य आत्मानम्' इत्यत्रत्यान्तरशब्दविषयत्वात् । अत एव न श्रुतौ पौनरुक्त्यम् । द्वयोर्भिन्नार्थत्वात् । पूर्वपक्षी त्विदं वाक्यमन्यपरं मन्यते ॥

(२) तत्र च 'एतदमृतम्' (छा. ४-१५-१.) इत्युक्तममृत त्वमुच्यते। स च 'यस्य पृथिवी शरीरम्' इत्यादिना सर्वात्मकत्वात् प्रकृतिस्तत्तज्जीवो वा युक्तः।

(३) न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियते इति।

(४) अत आह—

---

(२) पूर्वाधिकरणतद्विषयवाक्यसङ्गतिं दर्शयति—तत्रेति॥ इयमत्र तत्त्वप्रदीपोक्ता योजना—'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्येष्वन्तर्याम्युच्यते। तत्र तद्वाक्येष्वेव तस्मिन्नेवान्तर्यामिणि 'एतदमृतमेतदभयम्' इति पूर्वनयोदाहृतच्छान्दोग्यवाक्येऽक्षिपुरुषस्योक्तममृतत्वं 'एष त आत्माऽन्तर्याम्यमृतः' इत्यनेन उच्यते इति। अनेन बृहदारण्यकोक्तान्तर्यामिणि विष्ण्वन्यत्वाक्षेपमुखेन तदुक्तामृतत्वस्याप्यन्यनिष्ठत्वं सम्पाद्य तस्य पूर्वाधिकरणोक्ताक्षिस्थत्वस्य विष्णुत्वसाधकत्वाक्षेपात्पूर्वेणाक्षेपिकी सङ्गतिरुक्ता भवति। ततः किमित्यतः सयुक्तिकं पूर्वपक्षयति—स चेति। चशब्दो हेतुसमुच्चये। आदिपदेन 'यस्यापः शरीरम्' इत्यादेः सङ्ग्रहः। तच्छब्दस्य विपरिणामेन हेतुवाक्येन सम्बन्धः। आत्मशब्दः स्वरूपशरीरोभयार्थः। तथा च सोऽन्तर्यामी जडचेतनोभयरूपा प्रकृतिः पृथिव्यादितत्तज्जीवो वा युक्तः। कुतः? श्रौतशरीरशब्दस्य इदं पूर्वपक्षशरीरामित्यादाविव स्वरूपार्थत्वात्। जडप्रकृतेश्च सर्वोपादानत्वेन सर्वात्मकत्वात्। चित्प्रकृतेश्च सर्वाभिमानित्वेन सर्वात्मकत्वात् पृथिव्यादिजीवस्य पृथिव्यादिसर्वशरीरत्वादिति योजना॥

(३) ननु यथा प्रकृत्यादिलिङ्गेन तेषामन्तर्यामित्वं तथा अमृतत्वलिङ्गेन विष्णोस्तत्किं न स्यादित्यत आह—न हीति॥ पृथिव्यादि शरीरं यस्य स तथोक्तः, तस्य भावस्तत्त्व त्वप्रत्ययापाठे त्वन्वयः ऋजुः। अङ्गीक्रियते। सिद्धान्तिनेति शेषः। तस्य पृथिव्यादिजडाभिन्नचिच्छरीरत्वादिति हिशब्दाभिप्रायः। तथा च—सैद्धान्तिकलिङ्गापेक्षया पूर्वपक्षलिङ्गस्य निरवकाशतया बलवत्त्वादनेन तस्य बाधान्नान्तर्यामी विष्णुरिति भावः॥

(४) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति॥ इत्यादिना वाक्येन इति शेषः। तत्र यद्यपि सौत्रव्यपदेशपदेन अभिप्रेतं 'य पृथिवी न वेद यः पृथिवीमन्तरो यमयति' इति वाक्यमेवोदाहर्तव्यम्।

सू —ॐ ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ ॐ ॥ १८ ॥
'यं पृथिवी न वेद, यः पृथिव्या अन्तरः' ( बृ. ५-७-३. ) इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशात् विष्णुरेवान्तर्यामी ।

( ५ ) स हि 'न ते विष्णो जायमानो न जातः' ( ऋ. ७-९९-२. ) 'स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽवि

म्, अत्रोक्तान्तरत्वस्यैव सौत्रधर्मशब्दार्थत्वात्, न तु 'पृथिव्यामन्तरः' इति वाक्यम् । अत्रत्यान्तरशब्दस्य विविक्तार्थत्वेन तदुक्तार्थस्याहेतुत्वात् । तथा च तदुदाहरणं न प्रकृतोपयुक्तम् । तथापि तत्प्रतीकत्वे नोदाहृतमित्यदोषः । आदिशब्देन प्रकरणत्रयवाक्यं गृह्यते । अधिदैवादिषु । प्रकरणेष्विति शेषः । प्रकरणं नाम एकप्रमेयप्रतिपादकानेकवाक्यानि । तत्र 'यः पृथिव्यां तिष्ठन्' इत्यधिदैवतप्रकरणम् । 'यस्सर्वेषु भूतेषु तिष्ठन्' इत्यधिभूतप्रकरणम् । 'यः प्राणे तिष्ठन्' इत्यध्यात्मप्रकरणम् । सूत्रे भाष्ये चाधिदैवेत्युक्तथा पृथिव्यादीनां जडत्वेन तदविदि तत्वं सर्वस्यापि सम्भवतीति शङ्का वारिता । अत्रोक्तानां पृथिव्यादीनां अधिदैवत्वेन चेतनत्वात् 'प्राणे' इति श्रुतौ प्राणशब्दः प्राणवायुदेवतापरः, सैव प्रमेयदीपरीत्या प्राणेन्द्रियदेवता । अधिदैवादिष्वित्यनेकप्रकरणग्रहणेन न केवलमेकत्र तद्धर्मोक्तिः, किन्तु—बहुषु स्थलेष्विति सूचितम् । अनुवृत्तस्य तत्त्विल्यस्यार्थमाह—विष्णुरेवेति । तदित्यस्य नपुंसकत्वेऽपि अन्तर्यामीत्युद्देश्यसमर्पकसौत्रपदानुसारेण विष्णुरेवेति व्याख्यातम् । अनेन 'एष त आत्मा' ( बृ.५-७-३. ) इत्युक्तान्तर्यामी स विष्णुरेव । कुतः? अधिदैवादिषु प्रकरणेषु 'तद्धर्मव्यपदेशात्' तस्य विष्णोः धर्मस्य अविदितत्वान्तरत्वादेः 'यं पृथिवी न वेद' इत्यादिनोक्तत्वादिति सूत्रार्थ उक्तो भवति ॥

( ५ ) अविदितत्वादेः कुतो विष्णुधर्मत्वमित्यत आह—स हीति ॥ 'सः' विष्णुः । 'इत्यादिना' वाक्येनेति शेषः । आदिपदेन 'दिव्यो देव एको नारायणः' ( सुबाल.७. ) इत्युपक्रम्य 'यस्य पृथिवीशरीरं यः पृथिवीमन्तरः सञ्चरन् यं पृथिवी न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्युपसंहृत्याधीतं श्रुत्यन्तरं गृह्यते । 'अविदितः' साकल्येनाज्ञातः 'अन्तरः' अन्तःस्स्थित्वा रमणकृत्प्रसिद्ध इति शेषः । चः समुच्चये । 'न ते' इति वाक्यं च ते देव

ज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुषः ' ( ऐ. आ. ३-२-४. ) इत्यादिनाऽविदितोऽन्तरश्च ॥ १८ ॥

( ६ ) सू—ॐ ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ ॐ ॥ १९ ॥

त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामी ॥ १९ ॥

महिम्नः परमन्तं महिमानं श्रोत्रादिना नाप इति प्रकृतानुगुण्येन सर्वत्राधिकरणे व्याख्यातम् । 'सः' इति वाक्यमपि तत्रैव व्याकृतम् ॥

( ६ ) एवं निरवकाशलिङ्गेन विष्णोरन्तर्यामित्वं समर्थ्य यदुक्तं पूर्वपक्षिणा प्रकृत्यादेरन्तर्यामित्वं तत्प्रकृतिजीवसाधारणं युक्त्या निराकुर्वत्सूत्रमुपन्यस्यति—न चेति ॥ अत्र 'अतद्धर्माभिलापात्' इत्येतत् 'अतच्छब्दात्' इतिवदव्ययीभावसमासरूपम् । अत एव अव्ययमित्याशयेनानियमाभिप्रायेणादौ हेतुवाक्यं व्याख्याति—त्रिगुणत्वादीति । सत्त्वादिरूपास्त्रयो गुणा यस्य कार्यभूतास्तत्त्रिगुणं, तस्य भावस्त्रिगुणत्वं तदादिर्येषां ते तथोक्ताः प्रधानस्य प्रकृतेर्धर्माः, त्रिगुणत्वादयश्च ते प्रधानधर्माश्च ते तथोक्ताः, तेषामनुक्तिरुक्त्यभावः तस्या इत्यर्थः । आदिपदेनोपादानत्वजडत्वसंसारित्वादीनां ग्रहणम् । प्रधानपदं जीवस्याप्युपलक्षकम् । आदिशब्दो वाऽत्र संयोज्यः । साध्यधर्मप्रतियोगिनिर्देशाय पूर्वपक्षे युक्तिसूचनाय च प्रयुक्तं स्मार्तमित्येतद्व्याचष्टे-स्मृत्युक्तमिति । पृथिव्याद्यात्मकतया कापिलस्मृतिप्रतिपादितमित्यर्थः । स्मृत्युक्तमेवैतन्न श्रुत्युक्तमिति ज्ञापनायेदम् । पर्यवसितार्थमाह—प्रधानमिति । जीवस्याप्युपलक्षकमिदम् । शारीरश्चेति वक्ष्यमाणस्यात्राप्यन्वयो दर्शितः । अन्तर्यामिणोऽन्यरूपत्वनिषेधाय प्रवृत्ते सूत्रेऽपेक्षितं साध्यधर्मिणं दर्शयति—अन्तर्यामीति । अन्तर्यामी न प्रधानमिति योजना । न प्रधानमन्तर्यामीत्यनेन सौत्रचशब्दः अन्तर्यामी विष्णुरेव न तु प्रधानमिति तुशब्दार्थः । स च न शारीर इत्यादाविव परपक्षनिषेधमात्रं न क्रियते , किन्तु, स्वपक्षविधिरपीति परपक्षनिषेधस्य स्वपक्षविधिपूर्वकत्वरूपविशेषार्थ इति सूचितं भवति । अनेनान्तर्यामी विष्णुरेव, न तु स्मार्तं पृथिव्याद्यात्मकतया स्मृतौ प्रतिपादितं प्रधानम् । शारीरो जीवः । कुतः ? अत्र ' अतद्धर्माभिलापात् ' त्रिगुणत्वसंसारित्वादिरूपप्रधानजीवधर्मोक्त्यभावादिति सूत्रवृत्तिर्दर्शिता भवति । तत्त्वप्रदीपे तु—नञस्ताद्विरुद्धार्थत्वमाश्रित्यात्मत्वामृतत्वाद

( ७ ) सू—ॐ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ ॐ ॥ २० ॥

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ( बृ. माध्यन्दिनपाठः. ) 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्' ( बृ. ५-७-२२. ) इत्युभयेऽपि हि शाखिनो भेदेनैनं जीवमधीयते ।

---

ष्टत्वद्रष्टृत्वाद्यतद्धर्माभिलापाच्च इति हेतुवाक्यस्य वृत्त्यन्तरमपि दर्शितम् ॥

( ७ ) यज्जीवोऽन्तर्यामीत्युक्तम् । तत्साधकाभावेन निरस्तमपि पुनर्बाधकाख्यविशेषयुक्त्या निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—शारीर इति ॥ इत्यभिधीयते इत्यन्वयः । उभये इत्यस्य विशेष्यपदं दर्शयति—शाखिन इति । काण्वा माध्यन्दिनाश्चेत्यर्थः । आत्मनोऽन्तर इति माध्यन्दिनाः विज्ञानादन्तर इति काण्वाः । अपिशब्दः शाखासमुच्चये । अन्तर्यामिणः इति विपरिणतमत्रानुवर्तते । एनमित्यनूद्य जीवमिति व्याख्यातम् । अतो न शारीरश्चान्तर्यामीति शेषः । तेन सौत्रचशब्दो नञः समाकर्षकः । न केवलं न स्मार्तं, किन्तु शारीरश्चेति समुच्चयेऽपीत्युक्तं भवति । तत्त्वप्रदीपे तु—चित्प्रकृतेरप्यत्र पूर्वपक्षविषयतामाश्रित्य श्रीभूदुर्गारूपायाः तस्या 'यस्तेजसि तिष्ठन्' (बृ.५-७-१४.) 'यस्तमसितिष्ठन्' ( बृ. ५-७-१३. ) इत्याद्यन्तर्यामिणः सकाशाद्भेदेनाध्ययनान्न साप्यन्तर्यामीति समुच्चयार्थश्चशब्द इत्युक्तम् । अनेन 'हि' यस्मात् 'उभयेऽपि' शाखिन 'एनं' जीवमन्तर्यामिणः सकाशाद्भेदेन 'अधीयते' आमनन्ति । तस्माद्बाधकान्नान्तर्यामी 'शारीरः' शरीराभिमानी जीव इति सूत्रार्थ उक्तो भवति । श्रुतौ 'यः पृथिव्याः' इति वाक्यस्यादित्वेऽपि तद्विहायात्मविज्ञानवाक्ययोश्चेतनपरत्वेनोभयपरत्वादैकार्थ्याच्च ते एवात्रोभय कर्तृकभेदाध्ययनतयोदाहृते । 'आत्मनो' जीवात् 'अन्तरो' विविक्तः । एवं विज्ञानशब्दोऽपि 'य आत्मनि' इति श्रुतिसमाख्यानाज्जीवसामान्यपरः । यद्यपि बृहद्भाष्ये आत्मादिशब्दश्चतुर्मुखाख्यजीवपरतया व्याख्यातत्वादिदं सूत्रं जीवविशेषस्य योगिनोऽन्तर्यामित्वनिरासकमिति । अतएव तत्त्वप्रदीपे योगिनोन्तर्यामित्वं निराकरोतीत्युक्तम् । तथापि यदा सर्वजीवाभिमानिच

(८) शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।
रमते च परोऽप्यस्मिन् शरीरं तस्य तज्जगत् ।
इति वचनान्न शरीरत्वविरोधः ॥ २० ॥

६. अधिकरणम् ॥

(१) अदृश्यत्वादिगुणा विष्णोरुक्ताः ।

---

तुर्मुखादपि तन्नियामकत्वादिना भिन्नोऽन्तर्यामी तदा किमु तदभिम न्यमानसर्वजीवादिति कैमुत्यद्योतनाय तत्र तथोक्तिरिति चन्द्रिकाया मुक्तत्वाज्जीवसामान्यान्तर्यामित्वनिषेधपरतया प्रवृत्ताया एतत्सूत्र टीकायाः न बृहद्भाष्यतत्त्वप्रदीपविरोधः ॥

(८) ननु न विष्णोरन्तर्यामित्वं युक्तम् । पृथिव्यादिशरीरत्वस्य प्रधानधर्मस्यात्रोक्तेः तस्य विष्णावसम्भवात् । कथं प्रधानधर्मानु क्तिः पृथिव्यादिशरीरत्वस्यैव तद्धर्मत्वादित्यत आह—शीर्यत इति ॥ तुशब्दोऽवधारणे । तथा च 'हि' यस्मात् 'ईदृशं' वर्तमानजगत्सदृ शं कालत्रयाबाध्यं वा 'जगत्' पृथिव्यादि अस्मात् विष्णोरेव 'नित्यं' नियतं प्रतिकल्पं 'शीर्यते' नश्यति । आत्मादिचेतनानामपि देहद्वारा शीर्यता सत्यैव । यस्माद्ध 'परः' परमात्मा 'अस्मिन्' जगति स्थि तस्सन् रमते 'तत्' तस्मादेव 'तस्य' विष्णोः 'जगत्' पृथिव्यादि कं शरीरमुच्यते, न रूढ्येत्यर्थः । 'न शरीरत्वविरोधः' इति । न पृथि व्यादिशरीरत्वविरोध इत्यर्थः । विष्णवन्तर्यामिताया अतद्धर्माभिला पोक्तेवैति शेषः । विष्णोः पृथिव्याद्यात्मकत्वतच्छरीरत्वाभ्यां पृथि व्यादिशरीरत्वानुपपत्तावपि शरीरशब्दस्य पृथिव्यादिषु योगवृत्तिमा श्रित्य तस्मिन् पृथिव्यादिशरीरत्वव्यपदेशोपपत्तेरितरत्र तदनुपपत्ते रिति भावः । यत्तु बृहदारण्यभाष्ये—

पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोः महात्मनः ॥

इति प्रमाणानुसारेण पृथिव्यादेर्ब्रह्मशरीरत्वं गौणमित्युक्तम् । तत्पुरा णादिषु प्रपञ्चे ब्रह्मकायत्वाद्युक्तिसमर्थनायेति न तद्विरोधः ॥ ५

इति अन्तर्याम्यधिकरणम्.

६ अधिकरणम् ॥

(१ अत्राधिकरणे दृश्यत्वाद्यभावाख्यलिङ्गं ब्रह्मणि समन्वीयते ।

(२) तत्र 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण
मचक्षुःश्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं
यद्भूतयोनिं परिपश्यन्ति धीराः' ॥ (मु. १-१-६.)
इत्युक्त्वा—

---

पूर्वाधिकरणतद्विषयसङ्गतिविषयवाक्योदाहरणपूर्वकं विषयसंशयौ सयुक्तिकं पूर्वपक्षं च सूचयति—अदृश्यत्वादीति ॥ 'गुणाः' शुभधर्माः। आदिपदेनानात्म्यादिग्रहणम्। उक्ता इति। आनन्दमयस्य 'अदृश्ये' इति वाक्येनेति शेषः। उपलक्षणमेतत्। अन्तःस्थस्य 'न विजानन्ति' (तै.आ.३-११.) इत्यनेन सर्वगतस्य 'स योऽतोऽश्रुतः' (ऐ. आ. ३-२-४.) इत्यनेन अन्तर्यामिणो 'यं पृथिवी न वेद' (बृ.५-७-३.) इत्य व्यवहितपूर्वाधिकरणोदाहृतवाक्येन चेत्यपि द्रष्टव्यम् ॥

(२) उक्ता इत्यावर्तते। 'उक्त्वा' इत्यनन्तरं आम्नात इति शेषः। तेन क्त्वाप्रत्ययोपपत्तिः। चन्द्रिकायां तु—इत्युक्त्वा प्रतीयत इति भाष्ये क्रिययोः समानकर्तृकत्वाभावेऽपि क्त्वाप्रत्ययो 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते' इतिवद्द्रष्टव्यमित्युक्तेरप्ययमेवाभिप्रायः। पर इतीत्यनन्तरं वाक्य इति शेषः। 'तस्माच्च' इति पदद्वयं भाष्यकारीयम्। तथाचेत्थं योजना—पूर्वं ये अदृश्यत्वादिगुणा विष्णोरुक्तास्ते यत्र कस्य चिदक्षरस्योक्तास्तत्राथर्वणेऽदृश्यत्वादिगुणकाक्षरविषये 'यत्तदद्रेश्यमग्राह्यम्' इत्याद्युक्त्वा तथा तत्रैव 'यथोर्णनाभिः' इत्यादि 'विश्वम्' इत्यन्तं वाक्यं चोक्त्वा पठित्वा अनन्तरमाम्नाते

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रो अक्षरात्परतः परः ॥

इति उत्तरवाक्ये 'तस्मादक्षरात्' प्रकृतादक्षरादपि 'परः' उत्तमः 'प्रतीयते' प्रतिपाद्यतया ज्ञायत इति। अनेन पूर्वोक्तादृश्यत्वस्य विष्णवन्यनिष्ठत्वाक्षेपात्पूर्वेणानन्दमयाद्यधिकरणेन अस्याक्षेपिकी सङ्गतिः। अदृश्यत्वादिरूपो विषयः। किं विष्णोरन्यस्य वेति सन्देहः। न विष्णोरदृश्यत्वादीति पूर्वः पक्षः। अदृश्यत्वादिविशिष्टे 'अक्षरात्सम्भवति' इत्यक्षरशब्दश्रवणात्तस्य च तत्परत्वोक्त्या विष्णोः निरवकाशत्वादिति पूर्वपक्षयुक्तिश्च सूचिता भवतीति। श्रुत्यर्थस्तु—'यत्'

(३) यथोर्णनाभिस्सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि
तथाऽक्षरात्सम्भवतीह विश्वम् । (मु. १-१-७.)
इत्युक्त्वा तस्माच्च 'अक्षरात्परतः परः' (मु. २-१-२.) इति परः प्रतीयते—

परविद्यागम्यमक्षरं 'तदद्रेश्यं' दृश्यशब्दितचक्षुरादिज्ञेयभिन्नम् । 'अग्राह्यं' मनोग्राह्यभिन्नम् । 'अगोत्रं' न विद्यते गोत्रादिकं यस्य तद्धि तथोच्यते इति सुधोक्तेर्वैशिष्टादिगोत्रहीनम् । 'अवर्णं' प्राकृतशुक्लादिवर्णहीनम् । अदृश्यत्वादिशब्दैर्दृश्याद्यन्योन्याभावोऽभिधीयते इति सुधोक्तेः गोत्रवर्णभिन्नत्वं चार्थः । यत् 'अचक्षुःश्रोत्रं' प्राकृतज्ञानेन्द्रियादिशून्यम् । तत् 'अपाणिपादं' प्राकृतकर्मेन्द्रियशून्यं 'नित्यं' स्वरूपनाशरहितं 'विभुं' समर्थं 'सर्वगतं' व्याप्तं 'सुसूक्ष्मं' अत्यन्ताव्यक्तं 'यद्भूतयोनिं' 'धीराः' ज्ञानिनः परिपश्यन्ति 'तदक्षरं' अव्ययं देहतो नाशशून्यमिति । अत्र तच्छब्दस्य सर्वत्रान्वयाय त्रिर्ग्रहणम् । भूतयोनिपदं च सत्तर्कदीपावल्यां भूतानां आकाशादीनां ब्रह्मादिचेतनानां वा केषां चित् स्त्रीव्यवधानेन विना स्वस्वदेहादेवोत्पादकमिति व्याख्यातम् । धीरा इत्यनेनादृश्यत्वदृश्यत्वयोर्विरोधः परिहृतः ॥

(३) एतदेव दृष्टान्तोक्त्या स्पष्टयति—यथेति ॥ 'यथोर्णनाभिः' तन्तुवायः 'सृजते' स्वोपभुक्तवस्तूनि तन्त्वात्मना परिणतानि स्वदेहान्निष्कासयति । 'गृह्णते' चक्राद्याकारतया बहिर्निष्कासितं वस्तु पुनरन्तः स्वोदरे गृह्णाति । तथा विश्वं प्रलये निगीर्णं सृष्टौ अक्षरात्सम्भवति । दृष्टान्तान्तरमाह—यथेति । 'ओषधयः' अङ्कुरादयः । दृष्टान्तान्तरमाह—यथेति । 'सतो' जीववतः पुरुषाच्छरीरात् शिरस्थाः केशाः, अन्यानि लोमानि तानि । 'इह' लोके 'विश्वं' नानाविधकार्यं 'सम्भवति' जायते इत्यर्थः । अत्र ब्रह्मणो भूतकारणत्वं तत्कर्तृत्वरूपं न तूपादानत्वमिति वक्तुमाद्यो दृष्टान्तः । अङ्कुरादिजनने पृथिवी बीजमिव विश्वसृष्टौ ब्रह्म तत्कर्मापेक्षत इति वक्तुं द्वितीयः । अनायासेन सृष्टिरिति वक्तुं तृतीयः । दिव्य इत्यादिवाक्यं तु 'दिव्यः' अद्भुतः 'अमूर्तो' नियतपरिच्छिन्नपरिमाणरहितः । किन्तु बाह्य आ

( ४ ) अतो ब्रवीति—

सू—ॐ ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ॐ ॥ २१ ॥

( ५ ) पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्सम्भवतीह विश्वम' ( मु. १-१-७. ) इत्यतः परं तत्परतः पराभिधानात् 'कूटस्थोऽक्षर उच्यते' ( भ॰ गी॰ १५-१६. ) इति स्मृतेश्च प्रकृतेः प्राप्तिः ।

( ६ ) ब्रह्मशब्दात्तत्परतः पराभिधानादेव च हिरण्यगर्भस्य ।

---

भ्यन्तरश्च । अप्राणो ह्यमना इति पदाभ्यां षोडशकलाराहित्यमुच्यते । 'शुभ्रः' शुद्धः जडात् 'परतः अक्षरात्' चित्प्रकृतेः पर इति कर्मनिर्णयटीकायां व्याख्यातम् ॥

( ४ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ इतिसङ्गतिसम्भवात् इतिशङ्कासद्भावाच्च तदुत्तररूपं सूत्रमब्रवीद्बादरायणः इत्यर्थः । तत्सूत्रं पठति—अदृश्यत्वादीति ॥

( ५ ) नन्वदृश्यत्वादिकं विष्णोर्न चेत्—तर्हि वाक्यस्य निर्विषयतया अप्रामाण्यं स्यात् इत्यतः पूर्वपक्षं विशदयति—पृथिव्यादीति ॥ श्रुतावूर्णनाभिदृष्टान्तस्य प्राथम्येऽपि तत्र सृजत इत्यनेन कर्तृत्वमात्रप्रतीतेः पूर्वपक्षानुकूलस्योपादानतया जगत्कारणत्वस्याप्रतीतेः तं परित्यज्य पृथिव्यादीत्युक्तम् । चः समुच्चये । तथाचेत्थं योजना—पृथिव्यादिदृष्टान्तमुक्त्वा अनन्तरमुक्तात् 'अक्षरात्सं भवतीह विश्वम्' इत्यतो वाक्यात् 'परं' अनन्तरमधीतेन 'अक्षरात्परतः परः' इति वाक्येन 'तत्परतः' तस्मात्कारणीभूतादक्षरात्परतः परस्योत्तमस्योक्तत्वात्, तथा 'कूटस्थोऽक्षर उच्यते' इति स्मृतेश्च जडप्रकृतेश्चित्प्रकृतेश्चादृश्यत्वादिप्राप्तिरिति । अत्रायं विवेकः—यदा जडप्रकृतेः पूर्वपक्षविषयता तदाऽक्षरशब्दस्तत्परो हेतुः तत्परतः पराभिधानं च । तस्य निरवकाशत्वे अक्षरात्परत इति च व्यधिकरणे पञ्चम्यौ । यदा च चित्प्रकृतेस्तदाऽक्षरशब्दस्तत्परो हेतुः । समानाधिकरणे पञ्चम्यौ । स्मृतेश्चेत्यपि हेतुरिति । स्मृतिश्चात्राधिकरणे व्याख्याता ॥

( ६ ) पूर्वपक्षान्तरं वक्ति —ब्रह्मशब्दादिति ॥ 'स ब्रह्मविद्याम्' इत्यादौ श्रुतब्रह्मशब्दादित्यर्थः । ब्रह्मशब्दो विष्णावेव मुख्य इति तस्यैव साधको नेतरस्येत्यतो हेत्वन्तरमाह—परत इति । व्यधिकरणे प

(७) 'तमेवं विद्वानमृत इह भवति' (तै. आ. ३-१२-७)
तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।
अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च ।

ञ्चम्यौ । तथाच—हिरण्यगर्भाख्यादक्षरात् 'परतः' श्रीतत्त्वात्परस्य विष्णोरभिधानादित्यर्थः। एवशब्दे न हेतोर्निरवकाशत्वं नात्र हेत्वन्तरं गवेषणीयमिति सूचयति । हिरण्यगर्भस्य प्राप्तिरित्यन्वयः । उपलक्षणमेतत् । 'कर्तारमीशम्' इतीशशब्दश्रवणात् रुद्रस्य वा अदृश्यत्वादिप्राप्तिरिति वक्ष्यमाणमत्रापि द्रष्टव्यम् । अस्मिन् पक्षे ईशशब्दस्य विष्णौ सावकाशत्वशङ्कायामनन्तरं तत्परतः पराभिधानादित्यपि योज्यम् । अत्रापि व्यधिकरणे पञ्चम्यौ ॥

(७) एवं प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं सूत्रं व्याचष्टे—तमेवमिति ॥ 'तमेवम्' इत्येकं श्रुतिवाक्यम् । 'तत्' इत्यपरं स्मृतिवाक्यम् । 'अथ' इत्यन्यच्छ्रुतिवाक्यम् । आदिपदेन 'तदेतद्ब्रह्म' (बृ. ४-५-१९.) 'त्रिपादस्यामृतम्' (ऋ. १०-९०-३.) इत्यादिकं गृह्यते । तस्य विष्णोर्धर्मस्तद्धर्मः तस्य भावस्तत्त्वं तेनेति विग्रहः । प्रकारे तृतीया । अवगतत्वं प्रसिद्धत्वं विषयत्वविशेषणम् । अमृतत्वादेरुपलक्षकमेतत् । अत्रेति शेषः। सूत्रेऽनुवृत्तस्य तत्त्वित्यस्यार्थो विष्णुरेवेति । अत्रादृश्यत्वं दृश्यभिन्नत्वम् । तच्च स्वरूपम्, न तु गोत्राद्यत्यन्ताभाववद्ब्रह्मभिन्नम् । तत्र तद्धत्त्वं ब्रह्मस्वरूपमिति विशेषं वक्तुं अदृश्यत्वादयो गुणा यस्येति बहुव्रीहित्वं च सूचयितुं शुभधर्मार्थकगुणशब्दप्रयोगः कप्रत्ययश्च । तथाचेत्थं सूत्रभाष्ययोजना—अदृश्यत्वादिगुणकस्तत्तु विष्णुरेव । कुतः ? अत्र प्रकरणे 'अथ परा यया तदक्षरमधिगम्यते' (मुं.१-१-५.) 'तदेतदक्षरं ब्रह्म' (मुं.२-२-२.) 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' (मुं.२-१-१०.) इति वाक्येषु तस्यादृश्यत्वादिगुणकस्य परविद्याविषयत्वरूपधर्मोक्तेः । न च तस्य परविद्याविषयत्वोक्तावपि कुतो विष्णुत्वमिति वाच्यम् । यतस्तत् 'तमेवम्' इत्यादिना तद्धर्मत्वे नावगतमिति । अत्र 'तमेवम्' इति श्रुतौ मोक्षसाधनज्ञानविषयत्वोक्त्या विष्णोः परविद्याविषयत्वमुक्तं भवति । मोक्षसाधनविद्याया एव परविद्यात्वात् । तत्कर्मेति स्मृतावपि यद्धरितुष्टिकरं तदेव कर्म । यया 'तन्मतिः' हरेः ज्ञानं भवति, सैव विद्येत्युक्तत्वेन तस्य परवि

तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा ' (          ) इत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥ २१ ॥

( ८ ) सू—ॐ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ ॐ ॥२२॥

द्याविषयत्वमुच्यते । ' द्वे विद्ये वेदितव्ये ' ( मुं. १-१-४. ) इत्यत्रापि विष्णोः परविद्याविषयत्वमुच्यते इति न हेतुविशेषणासिद्धिः । अथेति प्रकरणारम्भे । वावेत्यवधारणे । चौ परस्परसमुच्चये । तथा च परा चापरा च द्वे विद्ये ज्ञातव्ये । ' तत्र ' परापरयोर्मध्ये ' ये वेदाः ' ऋगाद्याः यानि शिक्षादिषडङ्गानि ' यान्युपाङ्गानि ' आयुर्वेदधनुर्वेदगान्धर्वादीनि । ' यानि प्रत्यङ्गानि ' शिष्टाः कला विद्याः साऽपरा । अथेत्यर्थान्तरे । योऽसौ ' अदृश्यो ' दृश्यादन्यो ' निर्गुणः ' सत्त्वादिहीनः ' परो ' विलक्षणः ' परमात्मा ' सर्वोत्तमो व्याप्तः स हरिर्यया वेदितव्यः सा ऋगादिरूपैव परेति श्रुत्यर्थः । यथैकस्य कर्मणः सकामत्व निष्कामत्वरूपोपाधिभेदात् प्रवृत्तिनिवृत्तपदोदितत्वं तथा विष्णुविषयकत्वकर्मादिविषयकत्वरूपोपाधिभेदादृगादीनां एव परापरविद्यात्वोपपत्तिरिति भावः । न चानुव्याख्याने ब्रह्मसूत्रस्य परविद्यात्वोक्तिविरोधः । अनुग्राह्यतया ऋगादीनामनुग्राहकतया ब्रह्मसूत्रस्य च परविद्यात्वोपपत्तेः ॥

( ८ ) यदुक्तं प्रकृतिविरिञ्चयोरदृश्यत्वादिगुणकत्वमिति तत्सिद्धान्तहेतोः परपक्षनिरासेऽपि व्यापारात् तद्धर्मोक्तेरित्यनेनोक्तस्य परविद्याविषयत्वस्य विष्णोरन्यत्र निरवकाशत्वान्यथानुपपत्त्या निराकृतमपि विशेषयुक्त्या निराकुर्वत्सूत्रं पठित्वा व्याचष्टे–विशेषणेति ॥ व्यपदेशशब्द उभयान्वयीत्याशयेनोभयश्रुतिमाह—य इति । ' भेदः ' अन्यत्वम् । चशब्दस्य न केवलं धर्मोक्तेः, अर्थात् किन्तु विशेषणभेदव्यपदेशाभ्यां इति समुच्चयार्थत्वस्य स्पष्टत्वान्न तस्यार्थ उक्तः । प्रकृतिः विरिञ्च इत्यनेन इतरा इतरश्चेति विग्रहाश्रयेणेतरशब्दार्थोऽभिहितः । उभयत्रादृश्यत्वादिगुणक इत्यनुषज्यते । प्रकृतिपक्षे लिङ्गविपरिणामः । तथा च ' यस्सर्वज्ञः ' इति वाक्ये तस्यादृश्यत्वादिगुणकस्य 'बिशेषणात्' सार्वज्ञ्यादिविशेषणोक्तेर्न दृश्यत्वादिगुणा जड

( ९ ) 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः' (मु.१-१-१०.)
इति विशेषणान्न प्रकृतिः ।
'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मु.१-१-१०.)
इति भेदव्यपदेशान्न विरिञ्चः ।
( १० ) अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥

प्रकृतिः । एवं 'तस्मात्' इति वाक्ये विरिञ्चस्य तस्मादक्षराज्जन्य त्वरूपभेदकधर्मोक्त्या भेदव्यपदेशान्नादृश्यत्वादिगुणो विरिञ्च इति योजना ॥

( ९ ) आथर्वणे 'यः सर्वज्ञः सर्ववित्' इत्यतः पूर्ववाक्ये 'तपसा चीयते ब्रह्म' ( मु.१-१-९. ) इत्यत्र परब्रह्म तपसा सम्बध्यत इत्युक्तम् । तत्र तपश्शब्दस्यालोचनार्थतयाऽज्ञानप्रतीतौ तन्निरासाय 'यस्य ज्ञानमयं तपः' इति वाक्यान्तरं प्रवृत्तम् । तस्य यस्य 'तपः' आलोचनक्रिया 'ज्ञानमयं' तदात्मकमेव न संशयाद्यात्मकमित्यर्थः । कुतस्तपसः सन्तापान्यपूर्णयथार्थज्ञानात्मकत्वमित्याकांक्षायां तस्य सर्वज्ञत्वादाप्तकामत्वादिति हेतुप्रदर्शनाय 'यस्सर्वज्ञः' इति पूर्ववाक्योपन्यासः । तदर्थस्तु—'यस्सर्वज्ञः' सर्वविषयकसामान्यज्ञानवान् 'सर्ववित्' सर्वविषयकविशेषज्ञानवांश्च । सर्वस्य लब्धा सर्वकामः सर्वोत्पादको वेति । तत्त्वप्रदीपे तु—विद सत्तायामिति धातुव्याख्यानात् सर्वत्र विद्यते इति सर्वविदित्युक्तम् । 'यस्य यः' इति यच्छब्दद्वयस्य 'तस्मात्' अक्षरात् 'एतद्ब्रह्म' चतुर्मुखाख्यं 'नाम रूपमन्नं' तदभिमानि दैवतं चोत्पद्यत इति उत्तरवाक्यगततच्छब्देनान्वयः ॥

( १० ) ननु न विष्णोरदृश्यत्वादिगुणकत्वं, परतः पराभिधानेनाक्षरश्रुतेः तत्र निरवकाशत्वादित्यतो विशेषणभेदव्यपदेशादिति सूत्रखण्डस्यार्थान्तरमाह—अपरमिति ॥ तुशब्दोऽवधारणे । 'अक्षरत्रयं' अक्षरस्य त्रयं 'ईरितम्' अक्षरं त्रिविधं प्रोक्तं इति यावत् । तिस्रो विधाः व्यक्तिनिर्देशपूर्वकं दर्शयति—अपरमिति । या यदपरमक्षरं सा जडरूपिका प्रकृतिरेव । या यत्परमक्षरं 'प्रोक्ता' प्रोक्तं वृद्धैस्तां तत्र या विष्णुसंश्रया परा उत्तमा चेतना प्रकृतिः श्रीः लक्ष्मीः तां प्राहुः । यत्परतः परमक्षरमीरितं तज्जडप्रकृतेः पराच्छ्रीतश्चादखिलगुणं हरिमेव प्राहुरिति स्मृत्यर्थः । इति स्कान्दे इत्यस्य 'त्र्यक्षराभिधानात्'

सामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥
इति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्य
पि विशेषणमेव ।

( ११ ) ' जुष्टं यद [redacted]श्यत्यन्यमीशमस्य महिमानमिति वीत
शोकः ' ( मु. ३-१-२. )
इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः ॥ २२ ॥

---

अक्षरवैविध्यस्योक्तत्वादित्यनेनान्वयः । अक्षरात्परतः पर इत्यपीति । इतिवाक्योक्तमक्षरात्परतः परत्वमपीत्यर्थः । अपिः समुच्चये । तस्येति शेषः । तेनैवकारस्यान्वयः । तथा च न केवलं सार्वज्ञ्यं विशेषणम्, किन्त्वक्षरात्परतः परत्वमपि तस्य विष्ण्वाख्यप्रकृताक्षरस्यैव विशेषणं, न तु प्रकृताक्षरमवधीकृत्यान्यस्य कस्य चिद्विशेषणम् । येनाक्षरश्रुतेर्विष्णावनवकाशाभावः । न चाक्षरस्याक्षरात्परतः परत्वं विरुद्धमिति वाच्यम् । ' अपरम् ' इति स्कान्दे त्र्यक्षराभिधानात् अक्षरान्तरात्परादस्याक्षरस्य परत्वोपपत्तेरिति योजना । अक्षरत्रयाभिधानेन अक्षरात्परतः पर इत्यत्र सामानाधिकरण्येन वैय्यधिकरण्येन वा अन्वयो दर्शितः । प्रमेयदीपे तु—अक्षराच्छ्रीतत्वात्परतः परोऽस्तुत्तम इति तद्भाष्यदिशा श्रुत्यर्थ उक्तः । अनेनाक्षरात्परतः पर इत्यपि तस्यैव विशेषणं, न तु अन्यस्य । न चाक्षरात्परतः परत्वं विरुद्धमिति वाच्यम् । भेदव्यपदेशात् । ' अक्षरत्रयमीरितम् ' इत्यक्षराणामवान्तरभेदोक्तेः पाण्डवस्यार्जुनस्य स्वाधमकार्तवीर्यार्जुनादिव अक्षरात्परादक्षरान्तरादस्याक्षरस्य परत्वोपपत्तिरिति सूत्रखण्डस्यार्थान्तरमुक्तं भवति ॥

( ११ ) ननु ' अन्यं ' इतिशब्दश्रवणाददृश्यत्वादिगुणको रुद्रः किं न स्यादिति शङ्कोत्तरतयाऽपि भेदव्यपदेशाच्चेतर इति सूत्रांशं व्याचष्टे—जुष्टमिति ॥ यद्यपि तथाऽपीत्यर्थेऽपिशब्दः । रुद्रोऽपीति समुच्चये वा । न केवलं पूर्वहेतोः, किन्तु भेदव्यपदेशादपीति समुच्चये वा । रुद्र इतीतरशब्दस्यार्थान्तरोक्तिः । न चेतरशब्दस्य जडप्रकृतिविरिञ्चरुद्रपरत्वे द्विवचनानुपपत्तिरिति वाच्यम् । विरिञ्चिरुद्रयोश्चेतनत्वेनैकीकृतत्वात् । तथा च यद्यपीशशब्दाद्रुद्रोऽन्यदृश्यत्वादिगुणक

( १२ ) सू—ॐ ॥ रूपोपन्यासाच्च ॥ ॐ ॥ २३ ॥
'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' ( मु. ३-१-३. ) इति ।

( १३ ) 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः। स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य हैत

त्वेन 'प्राप्तः' प्रतीतस्तथाऽपि 'जुष्टम्' इति वाक्ये प्रवृत्तविष्ण्वाख्याक्षरस्येशशब्दितरुद्रादन्यत्वव्यपदेशादपि नादृश्यत्वादिगुणको रुद्र इति योजना । श्रुतिस्तु—आनन्दमयाधिकरणे व्याख्याता ॥

( १२ ) युक्त्यन्तरेण विष्णोरेवादृश्यत्वादिगुणकत्वं साधयत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति—रूपोपन्यासेति ॥ इति रूपोपन्यासादित्यन्वयः । सूत्रे चशब्दो युक्तिसमुच्चये । तथा च—न केवलं धर्मोक्तेः, किन्त्वदृश्यत्वादिगुणकस्य 'यदा' इति श्रुतौ शुद्धरुक्मरूपोक्तेश्चादृश्यत्वादिगुणको विष्णुरेवेति योजना । अत्र यदेति वाक्यस्य 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ( मु.३-१-३. ) इतिवाक्यशेषेणान्वयः । पश्यतीति पश्यो द्रष्टा जीवः। 'रुक्मवर्णं' शुद्धहेमवर्णं 'ब्रह्मयोनिं' हिरण्यगर्भकारणं, अत एव जगतः कर्तारं 'पुरुषं' पूर्णषड्गुणं । 'स्वस्येशं' विष्णुं 'पश्यते' पश्यति तदाऽसौ 'विद्वान्' जीवन्मुक्तः 'पुण्यपापे' अप्रारब्धे अनिष्टपुण्यं च विधूय 'निरञ्जनः' ज्ञानोत्तरविकर्मकृताशुचित्वादिदोषरहितः अञ्जनाख्याविद्यारहित इति सुधोक्तेरज्ञानरहितो वा 'परमं साम्यं' पूर्णानन्दत्वादिसाम्यं निर्दुःखत्वादिसाम्यं वा 'उपैति' प्राप्नोतीति श्रुत्यर्थः । तत्त्वोद्योतटीकायां तु इयं श्रुतिः मुक्तपरतया व्याख्याता। परमामित्येतदभिव्यक्तमिति च व्याख्यातम् ॥

( १३ ) ननु ब्रह्मादीनामपि रूपसद्भावात्कुतो रूपोपन्यासेनास्य विष्णुत्वनिश्चय इत्यत आह—एक इति ॥ 'इदमग्रे' इत्युपस्क्रियते। अत एव न्यायदीपिकायां जगदादावित्युक्तम् । हेत्यास्वादने । एतेभ्य इति तादर्थ्ये चतुर्थी । तथा च इदमस्य जगतोऽग्रे प्रलये नारायणः 'एकः' स्वतन्त्र आसीत् । न तदा चतुर्मुखशङ्करौ, न स्वस्वव्यापारावास्ताम् । 'सः' विष्णुस्तदा 'मुनिः' मननशीलो मौनी वा भूत्वा

स्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं र
क्तं रौक्मं कृष्णमिति। स एतान्येतेभ्योऽभ्यचीक्ल
पत्। विमिश्राणि व्यमिश्रयत् '
( १४ ) अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधी
यन्ते ॥ २३ ॥

'समचिन्तयत्' एते जायन्तामिति ध्यानरूपां चिन्तामकरोत्। 'ततः' तस्य चिन्तनादेते व्यजायन्त। के ते? यो 'विश्वो' वायुः, यश्च हिरण्यगर्भः, येऽग्न्यादय एत इत्यर्थः। ततः किमित्यत आह—'तस्य' श्रुत्यादिप्रसिद्धस्य 'एतस्य' सर्वजीवशरीरगस्य 'परमस्य' सर्वोत्तमस्य नारायणस्य 'रूपाणि' वर्णाश्चत्वारि भवन्ति। कानि तानि? शुक्लादीनि। किञ्चातः? 'सः' नारायणः पूर्वमेव 'विमिश्राणि' स्वेन मिश्रीकृतानि रूपाणि 'एतेभ्यो' वायुप्रभृत्युक्तदेवानामर्थे 'अभ्यचीक्लृपत्' क्लृप्तान्यकरोत्। तानि विमिश्राणि पुनरपि 'व्यमिश्रयत्' मानुषादौ विशेषेण मिश्रीचकार। यद्वा—स एतानि रूपाणि व्यमिश्रयत्, विमिश्राणि चैतेभ्योऽभ्यचीक्लृपदित्यर्थः। शुद्धानि रूपाणि तु स्वस्यैवाकरोदिति भावः। अत्राद्ययोजना तत्त्वप्रदीपटीकयोरुक्ता। द्वितीया तु टीकायामिति ध्येयम् ॥

( १४ ) ततः किमित्यत आह—अत इति ॥ 'अतो' मिश्रीकरणात् 'तद्रूपं' तस्य विष्णो रूपं 'एतादृगेव' शुद्धं शुक्लादिस्वरूपमेव। न तु वाय्वादिरूपमिव मिश्रमित्यर्थः। यद्यप्यत्र 'तस्य हैतस्य' इत्यादिकमेवोदाहरणीयम्, प्रकृतोपयुक्तत्वात्, न तु 'एको नारायणः' इत्यादिकम्। तथापि 'एतेभ्यः' इत्यस्यार्थस्य प्रत्ययार्थं तदंशोदाहरणं कृतम्। इतीति। 'हि' यस्मादित्युदाहृतवाक्येन 'रूपाणि' शुद्धरौक्मादिरूपाणि तस्य विष्णोरेव अभिधीयन्ते, नेतरेषां, तस्मान्नाप्रयोजकता शङ्क्येत्यर्थः। अनेन सूत्रे सामान्येनोक्तत्वेऽपि रूपशब्दः शुद्धरूपपरः। तच्चान्यत्र नास्ति। 'ध्येयः सदा' इति सूर्ये प्रतीतमपि मिश्रमेवेति लिङ्गस्यान्यत्र निरवकाशत्वमुक्तं भवति ॥ ६ ॥

॥ इति अदृश्यत्वाधिकरणम् ॥

७. अधिकरणम् ॥

( १ ) अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेश मात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' ( छा. ५-१८-१. ) इति वैश्वानरस्योक्तमिति ॥

( २ ) अत आह—

सू—ॐ ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ ॐ ॥ २४ ॥

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्ध्यर्थं ब्रह्मणि वैश्वानरनामसमन्वयः क्रियते। पूर्वाधिकरणसङ्गतिं विषयवाक्योदाहरणपूर्वकं विषयादिकं सूचयति—अदृश्यत्वादीति ॥ उक्तमित्यस्यावृत्तिः श्रुताविति शेषः। तथा च—गताधिकरणोदाहृतमुण्डकश्रुत्युक्तादृश्यत्वादिगुणेषु मध्ये 'नित्यं विभुं सर्वगतम्' ( मु.१-१-७. ) इत्यनेन यत्सर्वगतत्वमुक्तं तच्छन्दोगश्रुतौ 'यस्त्वेतम्' इत्यनेन वैश्वानरस्योक्तमिति योजना। अनेन छन्दोगश्रुतिस्थवैश्वानरशब्दस्यान्यनिष्ठत्वाक्षेपमुखेन पूर्वोक्तसर्वगतत्वादेरन्यनिष्ठत्वाक्षेपात्पूर्वेणास्याक्षेपिकी सङ्गतिरुक्ता भवति। वैश्वानरो विषयः, विष्णुरन्यो वेति सन्देहश्च सूचितः। श्रुत्यर्थस्तु—'यस्तु' अधिकारी 'प्रादेशमात्रं' देहहृदये तावत्परिमाणकम्। तत्त्वप्रदीपरीत्याऽधिकार्यपेक्षया प्रादेशमात्रमिति वा। 'अभिविमानं' अभितो विगतं मानं मर्यादा यस्य तं, सर्वगतं इति यावत्। 'आत्मानं' आततगुणं 'एतं' शरीरस्थं 'वैश्वानरं' तदाख्यविष्णुं 'एवं' वक्ष्यमाणरीत्या उपास्ते 'सोऽन्नमत्ति' ( छा.५-१८-१. ) स्वयोग्यभोग्यमनुभवतीति ॥

( २ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ साधारणस्येत्यनन्तरमपीति शेषः। साधारण्यं साम्यम्। तत्र श्रुतेर्नोभयत्र प्रसिद्धत्वरूपं, वैश्वानरशब्दस्यान्यत्रैव प्रसिद्धत्वात्। किन्तु श्रुतेः प्रसिद्धतो लिङ्गेन साम्यरूपं, तदपि निरवकाशत्वेन प्रकारेण, वैश्वानरश्रुतेः विष्णौ प्रसिद्ध्यभावेन तत्र निरवकाशत्वात्पूर्वोक्तसर्वगतत्वस्यापि विष्णोरन्यत्र निरवकाशत्वात्। तथा च—यद्यपि अग्नाविष्णवोः प्रतिज्ञाविषययोः सतोः पूर्वपक्षसाधकवैश्वानरशब्दो निरवकाशत्वेन प्रकारेणोत्तरपक्षसाधकलिङ्गसाधारणः। श्रुतिलिङ्गयोर्निरवकाशत्वेन साम्येपि लिङ्गाच्छ्रुतिः प्रबला तस्मादग्निरेवेति प्राप्तम्। तथाऽपि साधार

अग्नाविष्णवोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥

( ३ ) सू—ॐ ॥ स्मर्यमाणमनुमानं स्यादिति ॥ ॐ ॥ २५ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

( भ. गी. १५-१४. )

इति स्मर्यमाणमत्रापि स एवोच्यते इत्यस्यानुमापकम् ।

( ४ ) समाख्यानात् । इतिशब्दः समाख्याप्रदर्शकः ॥ २५ ॥

---

णस्यापि वैश्वानरशब्दस्य विष्ण्वेकनिष्ठतया श्रुत्यादिसिद्धेन 'आत्मानं वैश्वानरम्' इत्यात्मशब्देन 'विशेषणात्' विशेषितत्वाद्विष्णुपरत्वसम्भवात् । प्रसिद्ध्यादेरन्यथोपपन्नत्वेन निर्णयकारणाभावाच्छब्दविशेषादात्मशब्दाद्वैश्वानरो विष्णुरेव, 'न देवताभूतं च' इत्यावृत्त्या सूत्रभाष्ययोर्योजना । अनेन निर्णयेनैव पूर्वपक्षः सूचितः । अत्र पक्षे लिङ्गप्राबल्यनिरासाय साधारण्योक्तिः । सिद्धान्तश्रुतेः सावकाशत्वज्ञापनाय साधारण्योक्तिरिति केचित् । यद्वा-भाष्यटीकास्वारस्यादनिर्णयेनैव पूर्वपक्षः । अत्र पक्षे साधारण्यं प्रति धर्मित्वं शब्दस्यैव, न लिङ्गस्यापि । अग्नाविष्णवोरिति विषयसप्तमी । तथा च—यतोऽग्नाविष्णवोर्यद्यपि वैश्वानरशब्दः साधारणः सम्भवद्वृत्तिकः । तथाऽपि प्रसिद्धमुखेन निरवकाशत्वेन लिङ्गस्य साधारणश्च । अतः पूर्वोत्तरपक्षसाधकयोः समबलत्वादनिर्णयः । तथाऽप्युभयत्र साधारणस्यापि वैश्वानरशब्दस्येत्यादिका योजना द्रष्टव्या ॥

( ३ ) नन्वात्मशब्दस्याग्न्यादिष्वमुख्यत्वाभ्युपगमेन सामानाधिकरण्याविरोधात्तेषामेव वैश्वानरत्वं किं न स्यादित्याशङ्कां परिहर्तुं समाख्यारूपहेत्वन्तरेण वैश्वानरस्य विष्णुत्वं निश्चाययत्सूत्रं पठित्वा व्याचष्टे—स्मर्यमाणमिति ॥ सूत्रभाष्ययोः 'स्मर्यमाणं' 'अहं वैश्वानरो भूत्वा' इति गीतास्मृत्युक्तं विष्णोर्वैश्वानरत्वं 'अत्र' वैश्वानरविद्यायामपि 'सः' गीतोक्तो भगवानेव वैश्वानरपदेन उच्यते 'इत्यस्य' एवंरूपस्यार्थस्य 'अनुमानं' अनुमापकं 'स्यात्' भवेदिति योजना ॥

( ४ ) नन्वहमिति विष्णुना कृष्णेनोक्तेः स्मृत्युक्तवैश्वानरस्य विष्णुत्वेऽपि अत्रोक्तवैश्वानरस्य कुतो विष्णुत्वमित्यत आह—समाख्यानादिति ॥ अस्याः स्मृतेरिति शेषः । तथा च—गीतास्मृतेः वैश्वानर

( ५ ) सू—ॐ ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैन मधीयते ॥ ॐ ॥ २६ ॥

विद्यासमानोक्तिरूपत्वादस्यास्तत्समाख्यानान्निश्चयो भवतीत्यर्थः । समाख्यायुक्तिर्न सूत्रोक्तेत्यत आह—इति शब्द इति । 'प्रदर्शकः' सूचकः । तथा च-इतिस्मर्यमाणमित्यस्य इतिसमाख्यायमानमित्यर्थोभ्युपगमादितिशब्दः समानोक्तिरूपसमाख्यालक्षणलिङ्गज्ञापक इति भावः । अत्र सूत्रे समाख्यारूपहेत्वन्तरोक्तावपि तस्यात्मशब्दाख्यपूर्वहेतोरनिश्चायकत्वशङ्कामुखेन तन्निरासाय प्रवृत्तत्वाच्चशब्दाभावः ॥

( ५ ) वैश्वानरस्य विष्णुत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्य आक्षेपांशं तावद्व्याचष्टे—शब्दादिभ्य इति ॥ 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे' ( बृ. ७-९. ) इति बृहदारण्यकवाक्यम्

'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ।
कविं संराजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः'

( ऋ. ६ - ७ - १. )

इति ऋग्वेदवाक्यम् । इत्यादीति कर्मधारयः । तथा च इत्यादिरूपः शब्दः सौत्रशब्दपदेनोक्त इत्यर्थः । यद्वा-'इत्यादि' एवमादिवाक्यजातं 'शब्दः' सौत्रशब्दपदेन गृहीत इत्यर्थः । आदिशब्देनैतज्जातीयकं श्रुत्यन्तरवाक्यं गृह्यते । 'वैश्वानरे' इति श्रुत्यन्तरवाक्यम् । हृदयमित्यादिच्छन्दोगश्रुतिः । इत्याद्यग्निलिङ्गमिति । एवमादिवाक्योक्ताग्निलिङ्गमित्यर्थः। आदिशब्देन 'नाभिं यज्ञानां सदनं रयीणाम्' (ऋ.६-७-२.) इत्यादिवाक्योक्तानि गृह्यन्ते । 'आदिशब्दोक्तं' सौत्रादिशब्दोक्तमित्यर्थः । 'येनेदमन्नं पच्यते यदिदमद्यते' इत्येतदपि 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे' ( बृ. ७ - ९. ) इत्यतः परं बृहदारण्यकश्रुतम् । 'तद्यद्भक्तम्' इति छान्दोग्यवाक्यम् । इत्यादिनेति । वाक्येनेति शेषः । कुरुपाण्डवन्यायेन 'सर्वकर्मा सर्वलिङ्गः' इति श्रुत्यनुसारादादिपदोक्तलिङ्गात्पार्थक्येन कर्म बोधयितुं सूत्रेऽन्तःप्रतिष्ठानादित्युक्तम् । यद्वा — 'पाचकत्वेनान्तःप्रतिष्ठानं प्रधानलिङ्गत्वेनाभिमतत्वात्पृथगुक्तम्' इति तत्त्वप्रदीपोक्तेः प्रधानलिङ्गत्वादिदं पृथगुक्तमित्यभिप्रेत्य तल्लिङ्गं तत्कर्मोक्त्या दर्शयति—पाचकत्वेनेति । इत्थंभूतलक्षणे तृतीया । अनेन सूत्रेऽन्तःप्रतिष्ठान

'अयमग्निर्वैश्वानरः' ( बृ. ७-९-१. ) 'वैश्वानरमृत आजातमग्निम' ( ऋ. ६-७-१. ) इत्यादिशब्दः ।
'वैश्वानरे तद्धुतं भवति' ( छा. ५-२४-४. )
'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' ( छा. ५-१८-२. ) इत्याद्यग्निलिङ्गमादिशब्दोक्त

पदेन न केवलं तत्तद्धृदयान्तरवस्थानमात्रं विवक्षितं, किन्तु सव्यापारमित्युक्तं भवति । अत एव 'येनेदमन्नं पच्यते' 'तद्यद्भक्तम' इत्युभयबोधकश्रुत्युदाहरणम् । चः समुच्चये । ततः किमित्यत आह—तस्मादिति । यस्मादेवमग्निपक्षेऽपि श्रुतिलिङ्गाद्यस्ति, विष्णुपक्षे तु त्वयैवात्मशब्दः समाख्याने चोक्तम्, तस्मादुभयत्र श्रुत्यादिसाम्याद्वैश्वानरो विष्णुरेवेति निश्चयो न युज्यते इत्यर्थः । ननु 'यस्त्वेतम' इति विचार्यवाक्ये वैश्वानरशब्दसमानाधिकृताग्निशब्दाभावाद्वाक्यान्तरगताग्निशब्दस्य कथं शङ्काहेतुत्वमिति चेत्—न, अत्र सर्ववैश्वानरविद्यानां विचार्यत्वात्, अतएवानेकवाक्योद्धारः । यद्वा—पूर्वपक्षेऽपि सिद्धान्त इव समाख्यां प्रदर्शयितुं समाख्यारूपेण तत्तद्वाक्योद्धारो युक्तः ॥ अयमिति वाक्येऽयमित्युक्तः क इत्यत आह—योयमिति । तथा च—'योऽयमन्तःपुरुषे' पुरुषस्यान्तःस्थितो भगवान् 'अयमग्निः' अङ्गशब्दितशरीरनेतृत्वात्तच्छब्दवाच्यः । विश्वगुणसम्बन्धी नरीयते चेति वैश्वानरश्चेति योजना । तद्व्यापारमाह—येनेति । इदं किमित्यत आह—यदिदमिति । अद्यते भक्ष्यते प्राणिभिः ॥

'मूर्धानम' इति मन्त्रे षष्ठ्यर्थः कार्यकारणभावसम्बन्धः । 'मूर्धत्वे विष्णोरङ्गाङ्ग्यभेदात्' इति तत्त्वप्रदीपोक्तेः मूर्धानमरतिमित्यभेदोक्तिः । ऋतायेति वेदान्तरे पाठाद्दाचि ऋत इति सप्तमी तादर्थ्ये । तथा च दिवः कारणभूतमूर्धानं लोके गमनेनारतिदर्शनात् रतिविरुद्धगतिसाधनत्वाद्गौण्या वृत्त्या 'अरमलमतति गच्छति येन पुरुषः सोऽरतिः पादः' इति तत्त्वप्रदीपोक्तेः मुख्यया वृत्त्या अरतिः पादः । ऋ गतावित्यस्मात्करणे अतिप्रत्यये निष्पन्नोऽरतिशब्दः पादे मुख्य एवेत्यपि केचित् । तत्तु तत्त्वप्रदीपचन्द्रिकानुक्तम् । तत्त्वप्रदीपे अरशब्दोपपदादततेः, चन्द्रिकायां नञुपपदाद्रमेरस्य निष्पत्तेरुक्तत्वात् । तथा च—पृथिव्याः अरतिं कारणीभूतपादं जनानां आऋते सम्यग्ज्ञानाय 'जातं'

म् । 'येनेदमन्नं पच्यते' ( बृ. ७-९-१. ) 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' ( छां. ५-१९-१. ) इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेत्—

अभिव्यक्तं 'काविं' सर्वज्ञं 'सम्राजं' अखण्डैश्वर्यं 'अन्नं थम्' ( ) इति श्रुतेः थशब्दोऽन्नवाची । तृतीयोऽतिशये । तथा च 'अतिथिं' अत्यन्नम् । पात्रमित्यनेनापि जनानामित्येतत्सम्बध्यते । तथा च जनानां 'पातारं' रक्षकं 'वैश्वानरं' विश्वजीवान्तरत्वयोगेन तच्छब्दवाच्यं 'अग्निं' अङ्गनेतारं विष्णुं प्रसिद्धं च देवा आसन् । अविभक्तिकोऽयं निर्देशः । आस्यशब्दस्यासन्नादेशः । तथा च आसन् स्वास्यतया आजनयन्त । अडभावश्छान्दसः । आसमन्तात्सर्वकर्मस्वकुर्वन्निति सिद्धान्तरीत्या श्रुत्यर्थः । तत्त्वप्रदीपे तु—विश्वनरस्थं ऋते वेदे 'आ समन्ताज्ज्ञातं' व्यक्तं 'अग्निं' अङ्गनेतारं 'संराजं' सम्यग्राजन्तं 'अतिथिं' सर्वानतिशय्य स्थितं पातारं अग्निं जनानां 'आसन्' आश्रयं आजनयन्त आसमन्ताज्जनयांचक्रुः । अग्रथादिदेवा इति विशेषार्थ उक्तः । केचित्तु—जनिबाधकाङ्योगादाजनयन्त अकुर्वन्नित्युक्तमित्याहुः । तत्तूदाहृततत्त्वप्रदीपविरुद्धम् । अतोऽनेकार्थत्वाद्धातूनां विष्णुजन्येऽग्नौ देवजन्यत्वायोगात् जनेरुत्पत्त्यर्थायोगाच्च अकुर्वन्नित्युक्तमिति आङ्ग्विश्लेषेणैव टीका व्याख्येया । पूर्वपक्षी तु श्रुतिगताग्रथादिशब्दान्प्रसिद्धाग्निपरानेव मन्यते ॥

'वैश्वानरे तद्धुतम्' इति वाक्यार्थस्तु—'तस्मादु हैवं विद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य वैश्वानरे हुतं स्यात्' (छा.५-२४-४. ) इति छन्दोगसमाख्यावाक्यादवगन्तव्यः । तदर्थस्तु—यदि 'एवंवित्' उक्तरीत्या वैश्वानरज्ञानी उच्छिष्टाद्यनर्हायापि चण्डालायोच्छिष्टं 'प्रयच्छेत्' दद्यात् । तदा तद्दत्तमुच्छिष्टं चण्डालान्तर्यामिणि वैश्वानरे हुतं स्यान्न पापकरं भवति । प्रत्युत महाफलमेवेति । अनेनाहुतिस्थानत्वलिङ्गमुच्यते ॥

'हृदयं' हृदयस्थो विष्णुर्गार्हपत्यपदवाच्य इत्यर्थः । एवमुत्तरत्रापि । 'अन्वाहार्यपचनो' दक्षिणाग्निरन्वाहार्य ओदनोऽत्र पच्यत इति व्युत्पत्तिसम्भवात् । पूर्वपक्षे तु गार्हपत्यं वैश्वानरस्य प्रसिद्धाग्नेर्हृदयस्थानीयमित्यादिरर्थः ॥

( ६ ) न, 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति '।

---

'तद्यद्भक्तम्' इति वाक्यार्थस्तु—'तत्' तदा भोजनवेळायां 'यद्यद्भक्तं' अन्नं 'प्रथममागच्छेत्' आस्यं प्रतिप्राणाहुतिरूपेण । 'तद्धोमीयं' पाचकत्वेनान्तःस्थितस्याग्नेर्होमद्रव्यमिति । अनेनाग्नौ हूयमानद्रव्यस्याग्निः पाचक इति सिद्धमिति पाचकत्वाख्यलिङ्गमुक्तं भवति । यद्यपि 'येनेदम्' इति पूर्ववाक्ये 'अयमग्निः' इति तत्पूर्ववाक्यसाहित्यात् पाचकत्वेनान्तःप्रतिष्ठानोक्तावपि न 'यद्यद्भक्तम्' इति वाक्ये तत्प्रतीयते । तथापि 'तद्धोमीयम्' इत्यनेनान्तस्स्थितस्य होम्यमित्युक्तत्वात्तत्प्रत्यायकत्वोपपत्तिः ॥

( ६ ) परिहारसूत्रांशं व्याचष्टे—नेति ॥ तस्मान्न विष्णुरिति पूर्ववाक्येनास्य नञर्थस्यान्वयः । कुतो नेत्यतस्तत्र भाष्ये 'तस्मादित्युक्तम्' इत्यावृत्त्या हेतुत्वेन संयोज्यम् । सूत्रे तु अत इत्याकर्षणीयम् । आत्मशब्दादिपूर्वहेतोरेवेति तदर्थः । न चेतरत्राप्यस्ति श्रुत्यादिकमित्यनिर्णयः । तेषामन्यत्र मुख्यतो योगेन विष्णावेव सावकाशत्वोपपत्तेरित्यध्याहारः । कुतोऽग्न्यादिनामकर्मणां विष्णावेव सावकाशत्वं ज्ञायत इत्यतस्तत्र हेतुसमर्पकं 'तथादृष्ट्युपदेशात्' इत्यंशं उपदेशपदोक्तश्रुत्युदाहरणपूर्वकं व्याचष्टे—अथेति । प्रकरणान्तरारम्भार्थोऽयमथशब्दः । प्रथमेतिशब्दो विधिसमाप्तौ । द्वितीयस्य इत्युपासीतेत्यन्वयः । तथा च 'एतमात्मानं' आदानादिकर्तारं 'अणोरणीयांसं' सूक्ष्मादपि सूक्ष्मं 'परतो' महतः परं 'विश्वं' पूर्णं हरिमुपासीतेत्यर्थः । किमितीत्यतः उपासनाप्रकारमाह—सर्वेति । इतिशब्दः प्रत्येकं सम्बध्यते । तथा च मुख्यतः इन्द्रादिसर्वनामवानित्युपासीत । 'सर्वकर्मा' 'न ते त्वत्क्रियते' इत्यादेः स्वातन्त्र्येण सर्वक्रियाकर्तेत्युपासीत । लिङ्गं लक्षणं, वज्रधरत्वादिसर्वलिङ्ग इत्युपासीत । ज्ञानानन्दादिसर्वगुणपूर्ण इत्युपासीत । एतदिच्छयैव सर्वं भवतीति सर्वकामः पूर्णकाम इत्युपासीत । भेदसंयोगविभागादिसर्वधर्मास्तदधीना इति वा, सर्वज्ञत्वादिसर्वधर्मवत्त्वाद्वा सर्वधर्मेत्युपासीत । सर्वत्र रूपमस्य इति वा सर्वं जगदस्य रूपं प्रतिमेति वा सर्वरूप इत्युपासीत ॥

(७) 'स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते त
स्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वे
देषु कामचारो भवति' इति तत्तन्नामलिङ्गादिना त
स्यैव इष्ट्युपदेशान्महोपनिषदि ॥

(८) अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः।
अब्रह्मणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि।
इत्यादिना, 'को न आत्मा किं ब्रह्म' (छा.५-११-१.)

---

(७) एवमुपासकस्य फलमाह—स इति ॥ 'सः' प्रसिद्धः योऽधिकारी एतमात्मानं अणोरणीयांसं परतःपरमेव विश्वं हरिमेव, नान्यं, 'आरात्' समीपे स्वहृदये 'अरं' अलं सम्यगुपास्ते तस्यैवमव्याप्ते व्याप्तरूपोपासकस्य सर्वेषु लोकेषु सर्वेषु 'भूतेषु' प्राणिषु, सर्वेषु लोकेषु स्थितेषु भूतेष्विति वा। वेदेषु सर्वेषु, वेदेषु यथेष्टसञ्चारः कामसञ्चरणसर्वपूज्यत्वसर्वज्ञत्वादिः स्यात् इत्यर्थः तत्त्वप्रदीपेऽभिहितः। 'इति' महोपनिषदीत्यन्वयः। सौत्रतथाशब्दार्थमाह—तत्तदिति। अग्न्यादिनामलिङ्गादिमत्त्वेनेत्यर्थः। आदिपदेन तत्तत्कर्मादेर्ग्रहणम्। प्रधानसूत्रेऽभिहितं तत्त्विर्त्येतदत्रापि विपरिणामेन संयोज्यमित्याशयेनाह—तस्यैवेति। विष्णोरेवेत्यर्थः। न त्वग्न्यादेरित्येवार्थः। 'इष्ट्युपदेशात्' उपासनोपदेशात्। श्रुतौ हरिमेव उपास्त इत्यवधारणेनान्यव्यावृत्त्यवगमादिति भावः॥

(८) एवमन्यश्रुतिलिङ्गादीनां विष्णौ सावकाशत्वोपपादकतया तथेत्यंशं व्याख्याय आत्मशब्दादेरन्यत्र निरवकाशोक्तिपरतयाऽसम्भवादित्यंशं प्रमाणोदाहरणपूर्वकं व्याख्याति—अनात्तत्वादिति ॥ योजना तु—इत्यादिना प्रमाणेन विष्णोरन्येषां आत्मत्वब्रह्मत्वासम्भवोक्तेः अत एव आत्मशब्दादेरन्यत्रासम्भवादिति। यद्वा—न केवलमात्मशब्दश्रुतिसमाख्याभ्यां, किन्तु प्रकरणबलाच्च वैश्वानरस्य विष्णुत्वनिश्चयो भवतीत्याह—अनात्तत्वादिति। आदिशब्देन 'ब्रह्मशब्दः परे विष्णौ' इत्यादिकं गृह्यते। तथाचेत्थं योजना—'को न आत्मा किं ब्रह्म' 'इत्यारभ्याच' इत्यारभ्याधीतात्प्रकरणाच्च विष्णुरेव वैश्वानरः। ब्रह्मात्मशब्दयोरेतदुपक्रमे श्रवणेऽपि कुतोऽस्याः वैश्वानरविद्यायाः विष्णुप्रकरणत्वम्? 'अनात्तत्वात्' इत्यादिना प्रमाणेन विष्णोरन्येषा

इत्यारम्भाच्च अन्येषामसम्भवात् विष्णुरेव वैश्वानरः ।

(९) 'चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत' (तै. आ. ३-१२.) इत्यादिना यः पुरुषाख्यो विष्णुरभिहित स्तद्विधमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' (छा. ५-१८-२.) इत्यादिना एनं वैश्वानरमधीयते ॥

---

मात्मशब्दार्थव्याप्तत्वगुणपूर्णत्वयोरसम्भवावगमादिति । अनेन सूत्रे आरम्भादिति पदमध्याहृत्य तेनापिशब्दः संयोज्यः । असम्भवादिति हेतुस्तु आत्मशब्दादेरन्यत्रानवकाशत्वसाधकतयोभयत्र संयोज्य इत्युक्तं भवति । अत एव भाष्ये अग्निश्रुत्यादीनां विष्णौ सावकाशत्वसाधकतयेत्यादिव्याख्यानन्तरं विष्णुपक्षसाधकात्मशब्दादेरन्यत्रानवकाशत्वसाधकासम्भवादिति हेतौ व्याख्यातव्येऽपि तद्विहायारम्भादित्यध्याहृतहेतूपन्यासानन्तरं असम्भवादित्युपन्यस्तम् । टीकायामपि —न चात्मशब्दादेरन्यत्रास्त्यवकाश इति प्रतिज्ञाय प्रकरणबलाच्चेत्यध्याहार्यहेतुं च प्रदर्श्य, अनन्तरमात्मशब्दप्रकरणयोर्निरवकाशत्वसाधकासंम्भवादित्यंशो व्याख्यातः । तथाहृष्ट्युपदेशादसम्भवादितिवत् नाध्याहृतहेतोरवान्तरसाध्येनान्वयः, किन्तु प्रधानेनैवेति ज्ञापनाय विष्णुरेव वैश्वानर इति पुनरुक्तिः । उद्देश्यविधेयनिर्देशस्यैच्छिकत्वाद्व्यत्यासः । 'हि' यस्माद्विष्णोः 'परे' अन्ये गुणैः 'अनाप्तत्वात्' अव्याप्तत्वात् सर्वोत्कृष्टत्वेन वैदिकैरस्वीकृतत्वाद्वा 'अनात्मानः' अनात्मशब्दमुख्यार्थाः । यस्माच्च गुणराशित ऊनत्वादब्रह्माणश्च । तस्मात् 'ब्रह्मात्मा' तच्छब्दमुख्यवाच्यो विष्णुरेव सिद्ध इत्यर्थः । छान्दोग्ये हि 'को न आत्मा किं ब्रह्म' इति मिलित्वा मीमांसमानैः प्रत्यब्दयज्ञकृत्त्वनिमित्तान्महाशालसंज्ञैः पञ्चभिर्महामुनिभिः उद्दालकोद्दिष्टैस्तद्युक्तैः परिपृष्टो राजाऽश्वपतिर्वैश्वानरमुपदिदेश । 'नः' अस्माकं उपास्य आत्मा 'कः' किंलक्षणः । ब्रह्म च 'किं' किंलक्षणमित्यर्थः ॥

(९) श्रुतिसमाख्यया च वैश्वानरस्य विष्णुत्वमुपपादयितुं प्रवृत्तं 'पुरुषविधमप्येनमधीयते' इत्यंशं व्याचष्टे—चन्द्रमा इति ॥ अत्र 'चन्द्रमाः' इति वाक्यं प्रतीकत्वेन गृहीतम् । उदाहरणवाक्यं तु च

(१०) चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति ।

(११) तथा च ब्राह्मे—

यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।
तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम् ॥ इति ।

(१२) चतुर्वेदशिखायां च—

---

क्षोस्सूर्यो अजायत ' इतीति ध्येयम् । प्रथमादिपदेन ' शीर्ष्णोद्यौस्समवर्तत , प्राणाद्वायुरजायत, . . पद्भ्यां भूमिः , ( तै.आ.३-१२. ) इत्यादिकं द्वितीयादिपदेन ' संन्देहो बहुळो वस्तिरेव रयिः पृथिव्यंव पादौ ' ( छां.५-१८-२.) इत्यादिकं गृह्यते । एतमित्यस्य व्याख्यानं—वैश्वानरमिति । तथाच—यस्मात्पुरुषसूक्ते 'शीर्ष्णोद्यौस्समवर्तत , चक्षोस्सूर्यो अजायत ' इत्यादिना शब्देन यः पुरुषाख्यो विष्णुः यद्विधो द्युभ्वादिजनकशीर्षादिमानभिहितः, तद्विधमेव द्युभ्वादिजनकशीर्षादिमत्त्वप्रकारोपेतमेवात्र छान्दोग्ये ' मूर्धैव सुतेजाः ' इत्यादिना वाक्येनैनं वैश्वानरमधीयते छन्दोगाः तस्मात्पुरुषसूक्तसमाख्ययाऽपि वैश्वानरो विष्णुरेवेति योजना ॥

(१०) ननु पुरुषसूक्तस्य विष्णुपरत्वे भवेत्तत्समाख्यया एतद्विद्याया विष्णुपरत्वम्, तदेव कुत इत्यत आह—चशब्देनेति ॥ श्रुतेराधिक्यात्प्रथमं प्रतिज्ञा । ' पुरुषसूक्तस्य ' इत्यनन्तरं ' प्रसिद्धमिति ' इति शेषः । ' दर्शयति ' सूचयति सूत्रकार इत्यर्थः । आत्मशब्दस्मृतिसमाख्याप्रकरणसमुच्चयस्येव प्रकरणश्रुतिसमुच्चयस्यापि अपिपदेनैव सिद्धत्वान्न तत्रोपक्षीणश्चशब्द इति भावः ॥

(११) किं तद्वेदादीत्यतश्श्रुतेः साक्षात्प्रतिज्ञातार्थासाधकत्वात्प्रतिज्ञाक्रममतिक्रम्य साक्षात्प्रतिज्ञातार्थसाधकत्वादादौ पुराणवाक्यं पठति—तथा चेति ॥ सूत्रे पुरुषसूक्तस्य विष्णुपरत्वं सिद्धमिति यथोक्तं तथा ब्राह्मे चोक्तमित्यर्थः । चः समुच्चये । एवं उत्तरत्रापि ' उक्तम् ' इति पदाध्याहारेण सप्तम्यन्तपदानामन्वयो द्रष्टव्यः । ' नित्यं ' नियमेन ' विष्णुपरायणं ' विष्णौ महातात्पर्यवत् । द्वितीयस्य नित्यमित्यस्य सदेत्यर्थः । ' इति ब्राह्म इति ' इति शब्दान्वयः । सिद्धार्थस्यैव दृष्टान्तत्वादनेन ब्राह्मवचनेन विवक्षितार्थो ज्ञायते ॥

(१२) प्रतिज्ञातां श्रुतिं दर्शयितुं प्रथममेव तत्स्थानमाह—चतुर्वेद

सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् ।
इति । एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादि-
रनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽन
न्तरूप इति ।

( १३ ) बृहत्संहितायां च—
यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद ॥ इत्यादि ।

( १४ ) यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।

---

शिखायां चेति ॥ अत्र चतुर्वेदशिखाश्रुतिः ‘ सहस्र ’ इत्यारभ्य ‘ सह स्रपात् ’ इत्यन्तेन पुरुषसूक्तमुपन्यस्य ‘ एषह्येव ’ इत्यनेन ‘ सहस्रशी र्षा पुरुषः ’ इत्युक्तो हरिरेव नान्य इत्येतत्सूक्तं विष्णुपरतया व्याख्या तीति प्रकृतसङ्गतिः । सुप आकारो वैदिकः । एष क इत्यतो यः ‘ प रो ’ विलक्षणः अत एव ‘ अचिन्त्यो ’ मनसा ‘ परमः ’ उत्तमः ‘ आ दिः ’ कारणभूतः ‘ अनादिः ’ उत्पत्तिशून्यः ‘ अनन्तः ’ नाशशून्यः, स्व रूपतोऽपरिच्छिन्नो वा हरिः स इत्याह । कुतः अयं पुरुषः सहस्रशीर्षा ? ‘ हि ’ यस्मादनन्तशीर्षा । कुतः सहस्राक्षः ? यस्मादयमनन्ताक्षः । कु तःअयं सहस्रपात् ? यस्मादनन्तबाहुः । अनन्तपादित्यस्याप्युपलक्षक मेतत् । एवं पूर्ववाक्येऽपि ‘ सभूमिम् ’ इत्युत्तरवाक्येप्युपपादकमाह— अनन्तगुणोऽनन्तरूपोऽनन्ताकार इति । चतुर्वेदशिखायामित्यन्वयः ॥

( १३ ) ब्राह्मवाक्यस्य पुरुषसूक्तस्य लक्षणया विष्णुपरत्वेऽन्यपर त्वेऽपि वा सावकाशत्वान्नतत्प्रतिज्ञातार्थनिश्चायकमित्यतो व्याख्यान व्याख्येयभावाख्यद्वारमन्तरेण पुरुषसूक्तं मुख्यतो विष्णोरेवाभिधाय कमिति साक्षात्प्रतिज्ञातार्थसाधकं स्मृतिवाक्यं तत्स्थाननिर्देशपूर्वकं पठति—बृहत्संहितायां चेति ॥ चकारः पूर्वसमुच्चयार्थः । ‘ वेदाङ्गा नि ’ शिक्षादीनि ब्रह्मवाक्यमेतत् । इत्यादि । बृहत्संहितायामुक्तमित्य न्वयः । आदिपदेन ‘सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ’ इति ब्रह्मतर्कादिग्रहणम् । ‘ सर्वतः ’ सर्वे गुणाः । सामान्येनेति शेषः । स र्वस्मिन्, सर्वस्मात् वेदतदङ्गेभ्योऽतिशयेनेति वा ॥

( १४ ) ननु पुरुषसूक्ते द्युभ्वादिजनकशीर्षादिमत्त्वं पुरुषस्योच्यते। वैश्वानरविद्यायां तु वैश्वानरस्य तदभेद उच्यते । तदुभयोर्विरुद्धार्थ त्वान्नेयं समाख्येत्यत आह—यस्मादिति ॥ ‘ लोकः ’ स्वर्गादिः ‘वेदः’

तन्नामवाच्यमङ्गं तद्यथो ब्राह्मणादिकं मुखम् ॥
इति नारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥

ऋगादिः । यद्यपि नात्र छान्दोग्ये वेदाभेद उच्यते इति न तन्नातिर्वक्तव्या । तथापि श्रुत्यन्तरगताभेदवाक्यार्थनिर्णयायायमंशः प्रवृत्तः । यद्वा—वेदशब्देन 'उर एव वेदिः' इत्युक्ता वेदिर्गृह्यते । 'तृतीयोऽतिशये' इत्युक्तत्वात् । 'वेद्यादिकम्' इति पाठः स्वरसः । तथा च—यस्माद्यस्मात् हरेरङ्गात् यद्यत् लोकवेदादिकं जायते, यदाश्रित्य तिष्ठति, यत्र लीयते च तज्जनकमङ्गं तस्मात् 'तन्नामवाच्यं' तस्य लोकादेर्यन्नाम वाचकशब्दः तेन मुख्यवाच्यं भवति । अत एव तदभिन्नत्वेन प्रतीयते च । न तावता तयोरभेदो मन्तव्य इत्यर्थः । अत्र दृष्टान्तमाह—यथेति । मुखमित्युपलक्षणम् । तथा च—भगवन्मुखादिर्ब्राह्मणादिजातिजनकत्वात् ब्राह्मणादिनाम्नोच्यते 'ब्राह्मणोऽस्य मुखमासीत्' (तै.आ.३-१२.) इत्यादौ । अत एव तदभिन्नत्वेन प्रतीयते च सामानाधिकरण्यात् । तद्वदत्रापीत्यर्थः । न ह्यत्र पुरुषोत्तममुखादिभिरभेदो ब्राह्मणादीनामुच्यते, 'पद्भ्यां शूद्रो अजायत' (तै.आ.३-१२.) इत्युत्तरवाक्यविरोधात् । इति वचनादित्युक्तत्वाद्वैश्वानराङ्गानां 'मूर्धैव' इति लोकाद्यभेदोक्तिनिमित्तो विरोधो नेत्यर्थः । अभेदप्रत्यायकोक्तेस्तज्जन्यजनकभावविवक्षापूर्वकत्वादिति भावः । अनेन भगवतो मूर्धा सुतेजस्त्वादिगुणयोगात्सुतेजःशब्दितस्वर्गजनकत्वात् सुतेजा इत्युच्यते । एवं 'चक्षुर्विश्वरूपः' सर्वप्रकाशकत्वगुणयोगात् विश्वरूपशब्दितसूर्यजनकत्वात्तच्छब्देनोच्यते । 'प्राणः पृथग्वर्त्मात्मा' ( छां. ५ - १८-२. ) वायुजनकत्वात्तच्छब्दित इति श्रुत्यर्थस्सूचितः । आत्मशब्दः स्वरूपार्थो मध्यदेहार्थो वा । छान्दोग्यभाष्ये तु—'मूर्धा विष्णोश्शिरः स्वर्गाधारं द्युनामकं' अतितेजसा सुतेजोनामकं च । विश्वानि रूपाणि विषयत्वेन यस्येति विग्रहाश्रयेण सर्वरूपातिदर्शनात् चक्षुर्विश्वरूपाख्यम् । एवं विष्णोः प्राणो नृसिंहाख्यो वाय्वादिप्राणशक्यं यत्र भवति तस्य पृथग्वर्त्मात्मा पृथग्विलक्षणो मार्गो यस्य स चासावात्मा चेति, इति निमित्तान्तरेण श्रुतिर्व्याख्याता । एवं बहुलरयिपृथिवीशब्दिताकाशवारिवसुन्धरादेवताजनकत्वात् सन्दोहवस्तिपादपदोक्तानि मध्यदेहकटिप्रपदरूपाणि भगवतो वैश्वानरस्याङ्गानि तत्तच्छब्दवाच्यानीत्यपि ज्ञातव्यम् ॥

( १५ ) सू—ॐ ॥ अतएव न देवताभूतं च ॥ ॐ ॥ २७ ॥
अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तत्राभिधीयते ॥ २७ ॥

---

अनेन 'शब्दादिभ्यः' अग्न्यादिश्रुतेः गार्हपत्याद्यङ्गवत्त्वादिलिङ्गाच्च पाचकत्वेनान्तःप्रतिष्ठानाच्च वैश्वानरो विष्णुरेवेति निश्चयो न युज्यत इति चेत् — न, अन्यश्रुतिलिङ्गादीनां विष्णौ सावकाशत्वेन आत्मशब्दादेरेव निश्चयोपपत्तेः । कुतः सावकाशत्वं ? 'तथादृष्ट्युपदेशात्' अग्न्यादिनामलिङ्गकर्मवत्त्वेन विष्णोरुपासनोपदेशात् । न चात्मशब्दादेरन्यत्रास्त्यवकाशः, अन्यत्रात्मत्वादेरसम्भवात् । न केवलमात्मशब्दस्मृतिसमाख्यानाद्वैश्वानरो विष्णुरेवेति निश्चयः, अपि तु आरम्भाच्च प्रकरणबलाच्च । न च वैश्वानरविद्याया विष्णुप्रकरणत्वसिद्धिः, 'को न आत्मा किं ब्रह्म' इति विचारपूर्वकमस्यारभ्याधीतत्वात् । न चात्मत्वब्रह्मत्वोपक्रमेऽपि कुतोऽस्य विष्णुपरता, आत्मत्वब्रह्मत्वादीनामग्न्यादावसंभवात् । न केवलं स्मृतिसमाख्याप्रकरणबलाद्वैश्वानरो विष्णुरेवेति निर्धार्यते, किन्तु यतः पुरुषसूक्ते पुरुषो यद्विधोऽभिहितः तद्विधमेवैनं विष्णुं 'मूर्धैव' इत्यादिनाऽधीयते छन्दोगाः । अतः श्रुतिसमाख्यानादपि चशब्दः पुरुषसूक्तस्य विष्णुपरत्वं बहुप्रमाणसिद्धमिति द्योतयतीति सूत्रवृत्तिर्दर्शिता भवति ॥

( १५ ) ननु वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वादत्राप्यसौ तत्परः किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—अतएवेति ॥ अत्र चशब्दस्य समुच्चयार्थत्वं यद्यपि तथापीत्यर्थत्वं चाश्रित्य सूत्रं व्याचष्टे—अग्नीति । समुदायैकवचनमेतत् । आदिशब्देन जातवेदआदिशब्दो गृह्यते । विद्यान्तरोपलक्षणयाग्निशब्दादिशब्दयोर्ग्रहणम् । न चाग्न्यादीत्यनेनैवोपलक्षणसम्भवात्किंशब्दद्वयग्रहणेनेति वाच्यम् । वैश्वानरशब्दस्येह विचार्यत्वेन अतिप्रसिद्धत्वादग्निशब्दस्य च ग्रहणोपपत्तेः । यद्वा—आदिशब्दस्योभयत्रान्वयेन अग्न्यादीति आधिभौतिकविद्यान्तरस्य वैश्वानरादीत्याध्यात्मिकविद्यान्तरस्योपलक्षणार्थमग्न्यादिवैश्वानरादिग्रहणम् । 'तेजसि भूते' इति सामानाधिकरण्यम् । चः समुच्चये 'प्रसिद्धः' इत्यनेन पूर्वपक्षे प्रसिद्धत्वादिति युक्तिः सूचिता । सौत्रमतःशब्दमनूद्य व्याख्याति—अत इति । पूर्वोक्तेति ।

(१६) सू—ॐ ॥ साक्षादप्यविरोधं जैमिनिः ॥ ॐ ॥ २८ ॥
नाग्न्याद्यर्थः शब्दा अग्न्यादिवाचकास्तथाऽपि सा
क्षादेवानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थम
नभिज्ञानाच्च अन्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं
जैमिनिर्वक्ति ।

---

आत्मशब्दादितिहेतुत इत्यर्थः । न तत्र हेत्वन्तरं गवेषणीयमित्येवा
र्थः । 'अत्र' वैश्वानरविद्यायां विद्यान्तरे च 'सा' अग्निदेवता 'तत्'
तेजोभूतं, प्रसिद्धिप्राधान्याभ्यां निर्देशव्यत्यासः । चशब्दः समुच्चये ।
अभिधीयते 'तेन' इति शेषः । वैश्वानरादिशब्देनेति तदर्थः । 'तत्र'
इति पाठाभावे तदप्यध्याहार्यम् ॥

(१६) ननु लोके वेदे च अग्न्यादिपदानां ईशादन्यत्र व्यवहारप्रसि
द्धिदर्शनात् तस्य च कारणान्तराभावात्तदन्यथाऽनुपपत्त्याऽन्येषां वा
च्यत्वमङ्गीकार्यम् । अन्यथा तद्विरोधः स्यादित्याशङ्कां परिहरत्सू
त्रमुपन्यस्य व्याचष्टे—साक्षादिति ॥ अत्र तथापीत्यपिशब्दव्याख्याना
द्यद्यपीति लभ्यते । अग्निशब्दः स्वपरः । अग्निशब्द एव आदिर्येषां तेऽ
ग्न्यादय इति विग्रहः । अपिरवधारणेऽपीत्याशयेन साक्षादेवेत्युक्तम् ।
अर्थान्तराव्यवधानेनेत्यर्थः । फलितार्थमाह—अनन्येति । शक्यरूपा
न्यसम्बन्धमन्तरेण मुख्यवृत्त्येत्यर्थः । यद्वा—तत्त्वप्रदीपरीत्याऽन्यत्र यो
गवृत्त्यभावेन ब्रह्मणि सम्यग्योगेनेत्यर्थः । ब्रह्मवाचकैरपीत्यपिशब्दान्व
यः । 'तैरग्न्यादिशब्दैः' इति शेषः । 'व्यवहारार्थं' ज्ञानादिव्यवहार
सिद्ध्यर्थं 'अनभिज्ञानात्' मुख्यवाच्यज्ञानाभावात् । चशब्दो न केव
लं व्यवहारार्थं किन्त्वनभिज्ञानाच्चेति समुच्चये । 'अन्यत्र' अग्न्यादि
षु तान् तत्र व्यवहरन्ति ज्ञानिनोऽज्ञानिनश्चेति क्रमेण शेषः । 'इत्यभ्यु
पगमे' इति निमित्तसप्तमी । एवमङ्गीकारात् 'अविरोधं' ज्ञान्यज्ञानि
व्यवहारविरोधाभावं जैमिनिराचार्यो वक्तीत्यर्थः । 'यत्रानवसरः'
इत्युक्तेर्वक्तीत्युक्तम् । अनेनाग्न्यादिशब्दाः नाग्न्यादिवाचकाः, किन्तु
ब्रह्मवाचका एव । तथापि नान्यत्र प्रसिद्धिविरोधः । न वाऽन्यथाऽनुपप
त्त्याऽन्येषां वाच्यत्वं कल्प्यम् । कुतः? यतो वाच्यार्थधीव्यवहितं लक्ष
णादिकं विना साक्षान्मुख्यवृत्त्याऽपि ब्रह्मवाचकानग्न्यादिशब्दान् मु
ख्यार्थज्ञानिनः अजामिलचरमतनये नारायणशब्दमिव ज्ञानादिसिद्ध्य
र्थं तदज्ञानिनस्त्वनभिज्ञानादेव तान् ज्वलनादिषु व्यवहरन्तीत्यभ्युप

(१७) व्यासचित्तस्थिताकाशादवच्छिन्नानि कानि चित् ।
अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥
इति स्कान्दवचनान्नमतानां परस्परविरोधः ॥ २८ ॥

(१८) सू—ॐ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ ॐ ॥ २९ ॥
तत्र तत्र प्रसिद्धावप्यग्नयादिषु ब्रह्मणोऽभिव्यक्तेर
ग्नयादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

---

गमेनान्यत्राविरोधं व्यवहाराविरोधाभावं प्रसिद्धिविलोपाभावं वक्ष्यत इति सूत्रार्थ उक्तो भवति ॥

(१७) ननु जैमिन्यादिमतानां भगवन्मताविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्यात् तद्विरोधित्वे वा कथं विरुद्धराद्धान्तेन परिहार इत्यत आह—व्यासेति ॥ व्यासचित्तस्थितं मतापरपर्यायं ज्ञानाख्यमहाकाशमपेक्ष्य गृहाद्यवच्छिन्नाकाशवत् 'अवच्छिन्नानि' विविक्तानि परिमितविषयाणि कानि चिदेतानि मतान्यूरीकृत्य 'अन्ये' केचन जैमिन्याद्याः व्यवहरन्तीत्यर्थः । यथोक्तं सत्तर्कदीपावल्याम्—आकाशवद्व्याप्तत्वात्प्रकाशमानत्वाच्च व्यासचित्तस्थितमताख्याकाशात् 'अवच्छिन्नानि' स्वस्वमत्या विविक्तानि तानि मतानि इदं मदीयं इदं मदीयं इत्यूरीकृत्यान्ये व्यवहरन्ति । यथा गृहनगरादिभिराकाशप्रदेशानवच्छिद्यायं मदीयः प्रदेशोऽयं मदीयः प्रदेश इति जनाः व्यवहरन्तीति । मतानामिति बहुवचनं वक्ष्यमाणमतविवक्षया । तथा च जैमिन्यादिमतानां व्यासमतेन परस्परं चाविरोध इत्यर्थः ॥

(१८) ननु लौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि वैदिकाग्नयादिसूक्तमन्त्रादिप्रसिद्ध्यन्यथाऽनुपपत्त्याऽग्नयादीनां सूक्तादिगताग्नयादिशब्दवाच्यत्वं स्यात्, तत्राज्ञानादिमूलकत्वकल्पनाऽयोगेनान्यथोपपत्त्यभावात् । नापि व्यवहारार्थत्वेन अन्यथोपपत्तिः, अनादित्वादित्याशङ्कां परिहरत्सूत्रं पठति—अभिव्यक्तेरिति ॥ अत्र पूर्वस्मादपिरनुवर्तनीयः । तच्छब्दश्चानुवृत्तोऽनेकधा विपरिणेतव्य इत्याशयेन तद्व्याचष्टे—तत्रेति । 'तत्र तत्र' सूक्तादौ तस्य ब्रह्मण एव 'प्रसिद्धावपि' प्रतिपाद्यत्वेपि अग्नयादीनामप्रतिपाद्यत्वेऽपीत्यर्थः। अग्नयादिष्विति सावधारणम्। सूत्रे अविरोधमिति अनुषक्तपदतात्पर्यमाह—अग्नयादीति । आदिशब्द उभयत्र योज्यः । युज्यत इति वक्तीति शे

( १९ ) सू—ॐ ॥ अनुस्मृतेर्बादरिः ॥ ॐ ॥ ३० ॥
तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्त
न्नियम इति बादरिः ॥ ३० ॥

( २० ) सू—ॐ ॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ॐ॥३१॥
साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियमम
ग्न्यादिसम्प्राप्त्या मन्यते ।

षः । अनेनापि—तत्तत्सूक्तादौ ब्रह्मण एव प्रतिपाद्यत्वेऽपि अग्निवा
य्वादीनामप्रतिपाद्यत्वेऽपि अविरोधः । अग्न्यादिसूक्तनियमः इदम
ग्निसूक्तं इदं वायुसूक्तं इति सूक्तनियमः, इयमग्निविद्या इयं वायुवि
द्येति विद्यानियमश्च युज्यते । कथं ? तैरग्न्यादिसूक्तादिभिस्तस्य ब्र
ह्मणस्तस्यामुपास्तौ कृतायां तत्राग्न्यादिष्वेव तस्य ब्रह्मणः 'अभि'
स्वेच्छयाऽभिव्यक्तिनियमात्तदभिप्रायेण तत्प्रसिद्धेरुपपत्तेरित्येवं वै
दिकाग्न्यादिसूक्तादिप्रसिद्ध्यविरोधमाश्मरथ्याचार्यो वक्तीति सूत्रा
र्थ उक्तो भवति ॥

( १९ ) प्रकारान्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं कथयत्सूत्र
मुपन्यस्य व्याचष्टे—अनुस्मृतेरिति ॥ अत्र पूर्ववदध्याहारादिः । 'त
त्र तत्र' अग्न्यादिविद्यासु । सूत्रेऽविरोधमित्यनुषक्तपदतात्पर्यमाह—
तन्नियम इति । अनेनापि-विष्णोरेव अग्न्यादिविद्याप्रतिपाद्यत्वेऽपि य
तस्तस्याग्न्यादिविद्यासु उक्तस्य विष्णोस्तैस्तत्तत्सूक्ताद्युपासकैस्त
त्राग्न्यादिष्वेव 'अनुस्मृतेः' अनुस्मर्तव्यत्वात् प्रतिपत्तव्यत्वात् अवि
रोधस्तन्नियमः अग्न्यादिसूक्तादिव्यवस्था युज्यते । अतो नैतदन्यथा
ऽनुपपत्त्याऽन्येषां वाच्यत्वं कल्प्यमिति सूक्तादिप्रसिद्ध्यविरोधं 'बाद
रिः' बादरात्मजः शुकाचार्यो वक्तीति सूत्रवृत्तिर्दर्शिता भवति ॥

( २० ) रीत्यन्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं कथयत्सूत्रमुप
न्यस्यति—सम्पत्तेरिति ॥ जैमिनिमतस्य पूर्वमुपन्यस्तत्वात्किमर्थं पु
नर्वचनमिति मन्दाशङ्कानिरासाय उभयान्वयीतिशब्दपरामृष्टपूर्वो
क्तानुवादेन विषयभेदं दर्शयन् सूत्रं व्याचष्टे—साक्षादिति ॥ अग्न्या
दिशब्दानां मुख्यतो ब्रह्मवाचकत्वेऽपि 'अविरोधं' लौकिकव्यवहार
विरोधाभावं वदन्नित्यर्थः । अत्राप्यनुवृत्तस्य अविरोधमित्यस्यार्थमा
ह—सूक्तादीति । नियमो व्यवस्था । संप्राप्त्या निमित्तभूतयेति शेषः ॥

( २१ ) 'तं यथा यथोपासते तदेव भवति' इति दर्शयति॥३१॥

( २१ ) नन्वग्न्यादिषु भगवदुपास्तौ अग्न्यादिप्राप्तिर्भवतीत्येतत्कुत इत्यतः सूत्रसूचितां श्रुतिमुदाहरति–तमिति॥ 'तं' परमात्मानं येन येन प्रकारेण उपासते अधिकारिणः तेन प्रकारेण तदेव रूपं 'भवति' प्राप्नुवन्तीत्यर्थः। तत्त्वप्रदीपेऽपि 'यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' इति तृतीयतात्पर्योक्तेः 'तदेव भवति' तथैव भवति । यत्प्रकारेणोपास्ते तत्प्रकारेण भवतीत्ययमेवार्थ उक्तः। तत्त्वप्रदीपकारपक्षे उपासते इत्येकवचनं धात्वन्तरमेतत्। अनेन–यतोऽग्न्यादिसूक्तादिषु मुख्यतः परब्रह्मण एव प्रतिपाद्यत्वेऽप्यविरोधः, सूक्तादिनियमो युज्यते। अतः न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं मन्तव्यम्। कथमिदं युज्यते? तैरग्न्यादिषु भगवदुपासकानां अग्न्यादिसम्पत्तेः प्राप्तेः। न च तदसिद्धिः। 'हि' यस्मात्तमिति प्रसिद्धा श्रुतिः। 'तथा' अग्न्याद्यधिकरणकोपास्त्या अग्न्यादिप्राप्तिर्भवतीति 'दर्शयति' प्रतिपादयति। साक्षादिति लौकिकव्यवहारेऽविरोधं वदन् जैमिनिः सूत्रेषु 'अविरोधं' अनियमाख्यविरोधाभावं नियमं 'मन्यते' वर्णयतीति सूत्रार्थ उक्तो भवति। यद्यप्युत्तरसूत्रद्वये साधकव्यापारोक्तेरल्पाक्षरत्वाच्च दृष्टेरिति वाच्यम्, न त्वभिव्यक्तेरिति, तस्या ईश्वरव्यापारत्वात्। तथाप्यभिव्यक्तिं विना दृष्टेरयोगात्तद्ग्रहणेनोभयलाभात्प्राधान्यादीश्वरव्यापार एवोक्तः। यद्यप्यनुस्मृतिशब्दितोपास्त्यनन्तरमभिव्यक्तेः तदनन्तरं तत्सम्पत्तेः प्रथममनुस्मृतेरिति वक्तव्यम्। तथाप्यभिव्यक्तिसम्पत्त्युभयानन्तरमप्युपास्तिः कार्येति दर्शयितुमनुस्मृतेर्मध्ये निवेश इति द्रष्टव्यम्। यद्यपि ऋग्भाष्ये—

पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि तु।

अग्न्यादिशब्दवाच्यानि नाम्ना सूक्तभिदा भवेत्॥

इत्यग्न्याद्यन्तर्गतविष्णुवाचकाग्न्यादिशब्दयोगः सूक्तस्य व्यवस्थापक उक्तः। तथा चाग्न्यादिशब्दास्तत्तत्सूक्तानि च अग्न्यादिगतब्रह्मरूपेष्वेव मुख्यानि। एवं बहिर्गतरूपेषु च अतीतानागतवर्तमानाग्न्यादिष्वमुख्यानीति व्यवस्था सिध्यति। तथापि इहाभिव्यक्तिर्वाऽग्न्यादिसूक्तोपासकैरग्न्यादिगतत्वेन अनुस्मर्तव्यत्वं वा संप्राप्तिर्वा तत्तत्सूक्तव्यवस्थापकमित्यनुष्ठानविशेषोपयोगितया सौरसावित्रवामनविष्णवादिसूक्तादिव्यवस्थार्थं च व्यवस्थापकान्तरमुक्तमित्यविरोधः।

(२२) न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

सू—ॐ ॥ आमनन्ति चैनमस्मिन् ॥ ॐ ॥ ३२ ॥

एनं विष्णुमस्मिन्नग्न्यथादावामनन्ति ।

(२३) 'योऽग्नौ तिष्ठन्' (बृ. ५-७-५.) 'य एष एतस्मि

---

लौकिकवैदिकव्यवहारयोरग्न्यथादावुपचरितत्वबीजं तु तयोस्तत्र मुख्यत्वाङ्गीकारे 'तथा दृष्ट्युपदेशात्' इत्यनेन सूचित 'सर्वनाम' इत्यादिश्रुतिविरोधादिरूपप्रागुक्तानुपपत्तिरिति टीकायामेवोक्तम् ॥

(२२) यदुक्तमग्न्यथादिसूक्तादिभिः ब्रह्मोपासकस्याग्न्यथादिप्राप्तिर्भवतीति तच्छ्रुत्युक्तमपि न युक्तम् । 'मद्भक्ता यान्ति मामपि' इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगात् । 'श्रुतोपनिषत्कगत्यभिधानात्' इत्यादौ तदनभ्युपगमाच्चेति भावेनाशङ्क्य तत्परिहारतया सूत्रमवतार्य व्याचष्टे—न हीति ॥ टीकायामाशङ्क्यावतार्येत्यन्वयः । शङ्कारूपसूत्रावतारिकां प्रदर्शयेत्यर्थः । 'हि' यस्मादन्योपासकोऽन्यं प्राप्नुत इत्येतत्प्रमाणविरोधान्न युज्यते । तस्मादुक्तमयुक्तमित्यर्थः । एनमित्यनुवादेन विष्णुमिति व्याकृतम् । अस्मिन्नित्यस्य व्याख्यानमग्न्यथादाविति । 'आमनन्ति' प्रतिपादयन्ति श्रुतय इति शेषः । चशब्दः विष्णूपासकस्याग्न्यथादिप्राप्तिरयुक्तेति पूर्वपक्षिशङ्काव्यावर्तकः । तेन सिद्धान्तिप्रतिज्ञा, अग्न्यथादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेरेव विवक्षितत्वादिति साक्षाद्धेतुश्च सूचितः । तत्त्वप्रदीपे तु—न केवलमेकत्रैवामनन्ति पठन्ति वाजसनेयाः, किन्त्वन्यत्र 'स यश्चायमस्मिन्' इत्यादौ, एवमन्ये आमनन्ति 'य एष एतस्मिन्' इत्यादौ, अन्ये चामनन्ति 'एतस्याम्' इत्यादौ, अन्ये च 'तत्सृष्ट्वा । तदेवानुप्राविशत्' इत्यादौ । स्मरन्ति च स्मृतिकर्तारः 'यश्चन्द्रमसि यश्चाग्नौ' इत्यादीनि । समुच्चयार्थश्चशब्द इत्युक्तम् ॥

(२३) ताः श्रुतीः दर्शयति—य इति ॥ 'योऽग्नौ तिष्ठन्' इत्येकं वाजसनेयं वाक्यम् । 'य एषः' इत्यपरं छान्दोग्यवाक्यम् । उभयत्र यच्छब्दस्य तत्रत्यतच्छब्देनान्वयः । 'तेजोमयः' तेजोरूपः 'अमृतमयः' नित्यात्मा । आदिशब्देन 'एतमग्नावध्वर्यवः' इत्यादिर्क गृह्यते । इत्यादिना आमनन्तीत्यन्वयः । अनेन—न विष्णूपासकस्याग्न्यथादिप्राप्त्युक्तिरयुक्ता । कुतः ? अग्न्यथादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेर्विवक्षितत्वात् । न

अग्नौ तेजोमयोऽमृतमयः पुरुषः' ( बृ. ४ - ५ - ३. )
इत्यादिना ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये प्रथमस्याध्यायस्य
द्वितीयः पादः.

॥ ॐ ॥

---

च विष्णोरग्न्याद्यन्तर्गतत्वासिद्धिः। यत 'एनं' विष्णुं 'अस्मिन्' अग्न्यादौ आमनन्ति श्रुतयोऽत इति सूत्रार्थ उक्तो भवति ॥

इति वैश्वानराधिकरणम्

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वत
न्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपा
दानां शिष्येण श्रीमज्जगन्नाथयतिना
कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदी
पिकायां प्रथमाध्यायस्य
द्वितीयः पादः

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन् पादे दर्शयति । विष्णोः परविद्याविषयत्वमुक्तम् ।

( २ ) तत्र 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानम्' (मु.२-२-५.) इत्यत्र ।

१. अधिकरणम् ॥

( १ ) एतत्पादप्रतिपाद्यं दर्शयति—तत्रेति ॥ अन्योन्यसमुच्चये चशब्दौ । देवताधिकरणापशूद्राधिकरणयोः समन्वयाकरणात्तद्व्यावृत्त्यर्थे—'प्रायेण' प्राचुर्येणेति । तथा च प्रायेणास्मिन् तृतीये पादे 'तत्र' हरौ तस्मात् 'अन्यत्र' रुद्रप्रकृत्यादौ च श्रुतिलिङ्गादिभिः प्रसिद्धानां नामलिङ्गात्मकशब्दानां विष्णौ 'समन्वयं' परममुख्यया वृत्त्या तात्पर्यप्रबलहेतुभिः 'दर्शयति' प्रतिपादयति सूत्रकृदित्यर्थः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयसंशयसयुक्तिकपूर्वपक्षान् दर्शयति—विष्णोरिति ॥

( २ ) उक्तमित्यावर्तते । तत्रेत्यव्ययं तदित्यर्थेऽपि । अत्रेत्यप्यावर्तते । आदिशब्द उभयान्वयी । रुद्रस्येति शेषे षष्ठी । तयोरित्येतत् प्रधानवाय्वोरप्युपलक्षकं । तथा च अदृश्यत्वादिगुणकाक्षरस्य विष्णोः परविद्याविषयत्वं यत्रोक्तं तत्रैवाथर्वणे तत्परविद्याविषयत्वं

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ ( मु.२-२-५.) ॥

'अमृतस्यैष सेतुः' इत्यत्र इति वाक्ये तत्र द्युभ्वाद्याश्रये उक्तमित्येकायोजना । तत्र द्युभ्वाद्यायतनत्वे 'तयोः' रुद्रजीवयोः प्राप्तिः । कुतः ? अत्रवाक्ये द्युभ्वाद्यायतने प्राणाधारत्वप्रतीतेः श्रवणात् । तथा स एष इति जीवलिङ्गश्रवणाच्च । न च प्राणाधारत्वश्रवणेऽपि कुतोऽत्र रुद्रस्य प्राप्तिरिति वाच्यम् । 'प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकस्तेनान्नेनाप्यायस्व' ( महाना.३५. ) इति तैत्तिरीयवाक्येन, तथा—

यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी ।
ईशानो देवस्स न आयुर्दधातु ( घृतसूक्तम्. )

'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः' (महाना-३५.)
'प्राणेश्वरः कृत्तिवासाः पिनाकी' ( घृतसू ) इत्यादि
ना रुद्रस्य प्राणाधारत्वप्रतीतेः ।
'स एषोऽन्तश्चरते बहुधा जायमानः' ( मु. २-२-६. )
इति जीवलिङ्गाच्च तयोः प्राप्तिरिति ॥

---

इत्यादिखिलसंहितावाक्येन च रुद्रस्य प्राणाधारत्वप्रतीतेः इत्यपरा योजना। यद्वा—अस्मिन्नेव पक्षे तयोरित्येतत्सप्तम्यन्तमाश्रित्य लिङ्गलिङ्गिरूपधर्मद्वयपरतया व्याख्येयम्। तथात्वे आदिशब्दो 'रुद्रो वाव लोकाधारः'इति वाक्यग्राही। एवं तत्र तयोः प्राप्तिरिति दूरान्वयेन 'तत्र' परविद्याविषयत्वे तयो रुद्रजीवयोः प्राप्तिरित्यन्या योजना । तत्र आद्ययोजनायां द्युभ्वाद्यायतनत्वस्य विष्ण्वन्यत्वाक्षेपमुखेन 'तमेवम्' इत्यादिना 'अमृतस्यैष सेतुः' ( मु. २- २- ५. ) इति वाक्यशेषबलात्प्रतीतस्य मोक्षजनकज्ञानजनकविद्याविषयत्वरूपस्य तत्वप्रदीपरीत्याऽनन्ययोगेन प्राधान्येन ज्ञेयत्वरूपस्य वा परविद्याविषयत्वस्य पूर्वोक्तस्य विष्णोरितरत्वाक्षेपात् अदृश्यत्वाधिकरणेनास्याक्षेपिकी सङ्गतिरुक्ता भवति । तथा द्युभ्वाद्यायतनत्वरूपो विषयः दर्शितः । द्विविधद्वितीययोजनायां सयुक्तिकपूर्वपक्षो दर्शितः। तृतीयायां तु पूर्वपक्षफलं दर्शितमिति द्रष्टव्यम्। 'यस्मिन्' परमात्मनि द्व्यादिलोकाः 'मनः' तदभिमानी 'सर्वैः प्राणैः' इन्द्रियैस्तदभिमानिभिश्च सह 'तं' प्रविष्टं परमात्मानं 'एकं' प्रधानं 'जानथ' जानीध्वं इति श्रुत्यर्थः॥

रुद्र उ मा आविश इति पदच्छेदः । उ इत्यव्ययं सम्बुद्धिद्योतको निपातः । मेत्यव्ययं, नास्मदादेशः माशब्दः । यद्वा—मेत्यनेनास्मदादेशो माशब्दश्चेत्युभौ तन्त्रेणोपात्तौ । स च निषेधार्थः । तथा च—हे रुद्र त्वं 'प्राणानां' इन्द्रियाणां ग्रथ्यतेस्मिन्निति 'ग्रन्थिः' आश्रयः 'अन्तकः' संहर्ता चासि । स त्वं 'मा' मां 'आविश' प्रविश मयि सन्निधिं कुर्वित्यर्थः । यद्वा-हे रुद्र अन्तकस्त्वं मां मा प्रविशेत्यर्थः। 'तेन' आहुतिरूपेण दत्तेन 'अन्नेन' मां 'आप्यायस्व' सुखय ॥

यो 'ब्रह्मणे' चतुर्मुखाय 'ब्रह्म' वेदान् 'उज्जभार' उज्जहार, स 'प्राणेश्वरः' इन्द्रियेशः 'कृत्तिवासाः' कृत्तिश्चर्म वसनं यस्यासौ, 'पिनाकी' ईशानो न आयुः 'दधातु' पुष्णात्विति श्रु

( ३ ) अत उच्यते—

सू—ॐ ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ ॐ ॥ १ ॥

'तमेवैकं जानथ आत्मानम्' ( मु. २-२-५. ) इत्यात्म
शब्दात् द्युभ्वाश्रयो विष्णुरेव ।
आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता ॥
इति ब्रह्मवैवर्ते ॥ १ ॥

( ४ ) सू—ॐ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ ॐ ॥ २ ॥

---

त्यन्तरार्थः । सिद्धान्ते तु रुद्रादिशब्दा विष्णुपराः । य एष जीवो 'बहुधा' बहुशरीरेणोत्पद्यमानः शरीरान्तःसञ्चारीत्याथर्वण श्रुत्यथः ॥

( ३ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ सौत्रस्वशब्दस्य स्वशब्दपर्यायात्मशब्दादिति विष्णुतत्त्वनिर्णयोक्तेः, स्वेतिशब्दः स्वशब्द इति व्युत्पत्त्या स्वशब्दपर्यायात्मशब्दग्राहित्वं विष्णोः स्वरूपस्यैव साक्षाद्वाचको ह्ययमात्मशब्द इति तत्त्वप्रदीपोक्तेः, स्वस्य विष्णोरेव वाचकः शब्दः स्वशब्द इति विग्रहाश्रयेण च आत्मशब्दपरामर्शित्वमाश्रित्य स्वशब्दादित्येतदात्मशब्दादिति व्याख्यातम् । तथा च 'इत्यात्मशब्दात्' इत्यत्रात्मशब्दश्रवणादित्यर्थः । द्युभ्वाद्याश्रय इत्यनेनायतनशब्दो व्याख्यातः । क्वचिदायतनशब्दस्यैव पाठः । विष्णुरेवेत्यनेन समन्वयसूत्रानुवृत्तं तत्त्वित्येतत् श्रुत्यनुसाराल्लिङ्गविपरिणामेन व्याख्यातम् । अनेन-'स्वशब्दात्' विष्णुवाचिस्वशब्दपर्यायात्मशब्दात् स्वशब्दात् 'द्युभ्वाद्यायतनं' स्वर्गभूम्यादिसर्वाश्रयः 'तत्तु' विष्णुरेवेति सूत्रार्थ उक्तो भवति ॥

आत्मशब्दादपि कुतोऽयं विष्णुरित्यत आह—आत्मेति ॥ यस्मात् 'तैः' विष्णोरितरैश्चतुर्मुखादिजीवैः गुणपूर्णता 'नैवाप्ता' न सर्वथा प्राप्ता । तस्मादात्मब्रह्मादयः शब्दाः 'अव्ययं' नित्यनिरतिशयप्रवृत्तिनिमित्तवन्तं विष्णुं 'ऋते' विना तदन्यं 'न सम्भवन्ति' न मुख्यतो वाचकत्वेन प्राप्नुवन्तीत्यर्थः । अनेनात्मशब्दस्यापि गुणपूर्तिरर्थ इत्युक्तं भवति । ब्रह्मवैवर्त इत्यनन्तरमन्यत्र निरवकाशतयोक्तादिति शेषः । तस्यात्मशब्दादित्यनेनान्वयः ॥

( ४ ) ननु विष्णौ मुख्योऽप्यात्मशब्दो जायमानत्वरूपजीवलिङ्ग

'अमृतस्यैष सेतुः' (मु.२-२-५.) इति ।

(५) ब्रह्मविदाप्नोति परम् । ( तै. २-१. ) 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' ( महाना. ११. ) 'मुक्तानां परमा गतिः' 'एतमानन्दमयमात्मानमुपसङ्क्रामति' ( तै. २-८. ) इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।

बलादमुख्यार्थः किं न स्यात् । तथा च न ततो विष्णोर्द्युभ्वाद्यायतनत्वानिर्णय इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—मुक्तेति ॥ इति मुक्तप्राप्यत्वव्यपदेशादित्यन्वयः । सूत्रे द्युभ्वाद्यायतनस्येति विपरिणामेन अनुवर्तनीयम् । मुक्तोपसृप्येति भावनिर्देशः । उपसृप्यत्वं चेह श्रौतसेतुशब्दबलात्प्राप्यान्तररहितत्वे सति प्राप्यत्वं विवक्षितम् । नत्वर्चिरादिवत्प्राप्यत्वमात्रम् । तथा च—द्युभ्वाद्यायतनस्य 'अमृतस्य' इति मुक्तोपसृप्यत्वोक्तेर्विष्णुत्वनिश्चयादात्मशब्दस्यामुख्यार्थत्वमाश्रित्य विष्णोरन्यत् द्युभ्वाद्यायतनं कल्प्यमिति । 'मुक्तानाम्' इति स्मरणादमृतस्येति जातावेकवचनम् । तथा च 'अमृतस्य' मुक्तजातस्य 'एषः' परमात्मा 'सेतुः' सेतुरिव सेतुर्मुख्याश्रय इत्यर्थः ॥

(५) ननु द्युभ्वाद्यायतनस्य मुक्तप्राप्यत्वं कुतः विष्णुत्वनिश्चायकमित्याशङ्कापरिहारकतयाऽपि सूत्रं व्याचष्टे—ब्रह्मविदिति ॥ 'इत्यादिना' वाक्येन 'तस्य' विष्णोः । एवेत्यनेन प्राप्यत्वं प्राप्यान्तररहितत्वे सति प्राप्यत्वम् । अनेन द्युभ्वाद्यायतनस्य मुक्तोपसृप्यव्यपदेशात्तस्य विष्णोरेव मुक्तोपसृप्यत्वव्यपदेशादित्यावृत्त्या सूत्रं व्याख्यातम् । प्रधानसूत्रेऽनुवृत्तं तस्त्विवत्येतदिह विपरिणामेन अनुवर्तनीयमिति सूचितम् । उपसृप्यपदं भावप्रधानं कृत्वा व्याख्यातम् । एवकारो लिङ्गस्यान्यनिष्ठत्वव्यवच्छेदकः । 'ब्रह्मवित्' विष्णुज्ञानी मुक्तस्सन् 'परं' विष्णुमाप्नोतीति तैत्तिरीयश्रुत्यर्थः । 'नारायणम्' इति तैत्तिरीयोपनिषदि महोपनिषदि च श्रुतम् । अत्र 'तद्विश्वमुपजीवति' इत्यनुवर्तते । तथा च 'तद्विश्वं' जगत् महनीयं ज्ञेयं, पूज्यज्ञेयं वा । विश्वस्वामिनं 'परायणं' मुक्तानामाश्रयमुपजीवतीति श्रुत्यर्थः । 'मुक्तानां परमा गतिः' इति सहस्रनामगतमेकं नाम । परमा मुख्या गम्यत इति गतिराश्रयः । 'एतम्' इति तत्तिरीयवाक्यमानन्दमयन

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णयः ॥
इत्यादित्यपुराणे ॥ २ ॥

( ६ ) सू—ॐ ॥ नानुमानमतच्छब्दात् ॥ ॐ ॥ ३ ॥

ये व्याकृतम् । आदिपदेन 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' 'परमं यः परायणम्' इत्यादिकं गृह्यते ॥

ननूदाहृतवाक्यैरस्तु विष्णोः मुक्तप्राप्यत्वं, तथाप्यत्रान्यव्यवच्छेदाभावाद्विष्णुवदन्यस्य मुक्तप्राप्यत्वं किं न स्यादिति लिङ्गस्य सावकाशत्वमाशङ्क्य अन्यत्र प्राप्यत्वमात्रसम्भवेऽपि निरुक्तोपसृप्यत्वं सौत्रमुक्तशब्दितविवक्षितमुक्त्युपेतजीवप्राप्यत्वं वाऽन्यत्र निरवकाशमिति प्रमाणेनाह—बहुनेति ॥ 'अत्र' प्राप्यमोक्षतत्साधनविषये 'बहुनोक्तेन' इदमिदं चेति प्रत्येकं बहुना वचनेन 'किं प्रयोजनं' न किमपि, प्रत्युतोक्तिगौरवमेवेति भावः । तर्हि कथं निर्णय इत्यत आह—यावच्छ्वेतमिति । 'श्वेतं' श्वेतद्वीपाख्यं विष्णुस्थानं 'यावन्न गच्छति' न प्राप्नोति, तत्रत्यं विष्णुं च न पश्यति 'तावद्योगी' अपरोक्षज्ञानाख्योपायवान् मुक्तो न स्यात् । भगवदिच्छारूपावरणान्मुक्तः सम्यगाविर्भूतज्ञानानन्दादिमान् न भवेदिति 'एषः' उपदेशः 'शास्त्रविनिर्णयः' शास्त्रतत्त्वविषयकनिर्णयसाधनमित्यर्थः । एषोऽर्थः 'शास्त्रविनिर्णयः' तज्जन्यनिर्णयविषय इति वा । भावबोधे तु—सूत्रे पुराणे च मुक्तपदेन लिङ्गभङ्गवान् विवक्षित इत्युक्तम् । अत्र श्वेतद्वीपागन्तुरमुक्तत्वोक्त्या श्वेतद्वीपं प्राप्तस्यैव मुक्तत्वं ज्ञायते । तथा च तत्स्थितस्य विष्णोरेवेतरव्यवच्छेदेन मुक्तप्राप्यत्वं सिद्धमिति भावः । इत्यादित्यपुराणे इत्यस्य तस्यैव मुक्तप्राप्यत्वव्यपदेशादित्यनेनान्वयः । अनेन तस्यैवेत्येवकारस्योपयोगो ज्ञापितो भवति । अस्य हेतोर्न लिङ्गस्य सावकाशत्वं शङ्क्यमित्यध्याहृतसाध्येनान्वयः ॥

( ६ ) ननु प्रागुक्तरीत्या रुद्रप्रकृत्योर्द्युभ्वाद्यायतनत्वं किं न स्यादित्यतस्तत्साधकाभावान्न तयोस्तदित्याह सूत्रकृत्—नानुमानमिति ॥ अत्र नानुमानमिति साध्यांशं व्याचष्टे—नानुमानात्मकेति । 'अनुमानप्राप्तप्रामाण्यासदागमोऽनुमात्मकः' इति तत्त्वप्रदीपोक्तेः अनुमानात्मके अनुमानसिद्धप्रामाण्यके पाशुपताद्यागमे सर्वाश्रयत्वेन कल्पितो

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः ।
( ७ ) भस्मधरोग्रत्वादितच्छब्दाभावात् ।

बोधित इत्यर्थः । केचित्तु—प्रमाणत्वेन अनुमीयत इत्यनुमानमिति व्याचिख्युः। एतत्पक्षे आत्मकशब्दवैयर्थ्यं, तत्त्वप्रदीपटीके विरुद्धे । रुद्रपदं प्रधानादेरुपलक्षकम् । प्रधानसूत्रादनुवृत्तेन द्युभ्वाद्यायतनपदेनोपस्थापितं नञर्थप्रतियोगिनं दर्शयति—अत्रेति । द्युभ्वाद्यायतनप्रकरण इत्यर्थः । 'वाच्यः' प्रतिपाद्यः । सर्वाश्रयत्वेनेति शेषः ॥

( ७ ) एवं सूत्रे प्रतिज्ञांशं व्याख्याय हेत्वंशं व्याचष्टे—भस्मधरेति ॥ तस्य रुद्रस्य शब्दस्तच्छब्दः । तच्छ्रुतिलिङ्गात्मकः । तथा च भस्मधरोग्रत्वादिधर्मविशिष्टधर्मिबोधकभस्मधरोग्रादिशब्दाभावादित्यर्थः । अथ वा—'किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम्' इत्युत्तरटीकाबलाद्भावभावित्रोरभेदविवक्षया स्वार्थे त्वप्रत्ययः । तत्प्रयोगस्तु लिङ्गात्मकशब्दस्यापि सङ्ग्रहाय । भावबोधे तु—भस्मधरेत्यनेन रुद्रवाचकनामात्मकशब्दो गृह्यते । उग्रत्वपदेन उग्रत्वरूपलिङ्गात्मकशब्दो गृह्यते । आदिपदेन नामलिङ्गात्मकशब्दान्तराणि गृह्यन्ते । समाख्यादेरुपलक्षकमेतत् । तथा च—भस्मधरादिरुद्रश्रुतीनां उग्रत्वादिरूपताल्लिङ्गानां रुद्रप्रापकसमाख्यादीनां चाभावादित्यर्थ इत्युक्तम् । अत्र रुद्रशिवादितच्छब्दाभावादित्यनुक्त्वा भस्मधरोग्रादीति वचनं 'रुद्रो भस्मधरो नग्नः' इति वचनाद्विशेषनामाभिप्रायेण । अत एवैतद्वचनोक्ताः नग्नादिशब्दा एवादिपदेन ग्राह्या इति ध्येयम् । भस्मधरेत्येतत्प्रधानत्रिगुणत्वादिरूपप्रकृतिप्रापकश्रुतिलिङ्गाद्यभावादित्यर्थान्तरोपलक्षकतयाऽपि व्याख्येयम् । यद्यपि अतच्छब्दादित्यस्य तच्छब्दाभावादिति व्याख्याने नञः क्रियासापेक्षत्वेनासमर्थत्वात्समासानुपपत्तिः । तथापि निर्मक्षिकमित्यादाविव 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावसमासाश्रयणान्नानुपपत्तिः । पञ्चमीत्वात् नात्राङ् भवति । अनेन सूत्रे जगत्कर्तृत्वेनानुमीयते इत्यनुमानशब्देन वा 'आनुमानमनुमासम्बन्धि' इति सत्तर्कदीपावल्युक्तेरानुमानमिति पदच्छेदेनानुमानशब्देन वा अनुमानसिद्धप्रामाण्यकपाशुपताद्यागमसिद्धं रुद्रप्रधानादिकं गृह्यते । यद्वा—प्रमाणत्वेनानुमीयत इत्यनुमानं पाशुपताद्यागमः । ततो मत्वर्थे अर्श आदिभ्योऽच्, तेन तत्प्रतिपा

(८) सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ई
शो यो हरिर्योऽनन्तो यो विष्णुर्यः परोवरीयान्' इ
त्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्।

(९) ब्रह्माण्डे च—

---

द्यमुच्यते। एवमानुमानमिति पदच्छेदेऽप्यणन्तात्पुनरण् कार्यः। तत्र प्रथमाणन्तपदेनागम उच्यते। द्वितीयेन प्रतिपाद्यत्वम्। तथा च अनुमानात्मकपाशुपताद्यागमप्रतिपाद्यं रुद्रादिकं न द्युभ्वाद्यायतनं न 'यस्मिन्' इत्यादिप्रकरणे सर्वाश्रयत्वेन प्रतिपाद्यं, कुतः? 'अतच्छब्दात्' रुद्रप्रधानादिसाधकश्रुतिलिङ्गाद्यभावादिति सूत्रार्थ उक्तो भवति॥

(८) नन्वाथर्वणे रुद्रादिज्ञापकाभावेऽपि अत्रोक्तप्राणाधारत्वप्रतिपादिकायां 'प्राणानां ग्रन्थिरसि रुद्र' (महाना-३५.) इत्यादिसमाख्याश्रुतौ रुद्रादिशब्दानां अन्तकत्वादिलिङ्गानां चोक्तत्वात्तद्बलात्तत्रोक्तं द्युभ्वाद्यायतनत्वं रुद्रादेः किं न स्यादित्यत आह–स इति॥ योन्तकस्संहर्ता स एव तच्छब्दवाच्यः श्रुतः स विष्णुरेव। यो रुद्रः श्रुतः सोपि विष्णुरेव। यः 'प्राणभृत्' प्राणाधारत्वबोधकप्राणग्रन्थिशब्दवाच्यः, सोऽपि विष्णुरेव। यः 'प्राणनायकः' तत्स्वामी ततएव प्राणेशशब्दितः सोऽपि विष्णुरेव। य ईशः श्रुतः सोऽपि विष्णुरेव। योऽनन्तस्तच्छब्दवाच्यः सोऽपि त्रिविधपरिच्छेदशून्यत्वाद्विष्णुरेव, न शेषः। यः परोवरीयान् सोऽपि रुद्रादेः परतो वाण्यादेः पराद्विरिञ्चात् परतः प्रकृतेः परत्वाद्धरिरेव नान्य इति श्रुत्यर्थः। अत्रान्तराधिकरणोदाहृतचतुर्वेदशिखावाक्ये च 'परस्मादुत्तमं प्रोक्तम्' इति वचनानुसारेण परपरतरवरवरतमानां चतसृणां प्रत्यायनाय वृत्तिवाक्ये सुबादेशस्य सोरुत्वोत्वगुणसमानशब्दा ज्ञातव्याः। प्रत्युद्देश्यं विधेयान्वयज्ञापनाय बहूनां यत्तदां प्रयोगः। 'इत्यादिना' श्रुत्यन्तरवाक्येन 'प्राणग्रन्थिरुद्रत्वादेः' प्राणग्रन्थित्वलिङ्गस्य रुद्रशब्दवाच्यत्वस्य च तस्यैव विष्णोरेवोक्तत्वादित्यर्थः। प्राणेश्वरादिशब्दवाच्यत्वमन्तकत्वादिलिङ्गं चादिशब्दार्थः। प्रकृतिश्रुतिलिङ्गादेरप्युपलक्षकमेतत्। न तु रुद्रादेरित्येवकारार्थः। एवकारेणान्यत्रामुख्यतस्सत्त्वमनुमन्यते। उक्तत्वादित्यस्य 'न रुद्रादिश्रुतिलिङ्गविरोधः' इत्यध्याहृतसाध्येनान्वयः॥

(९) ननु तथाऽपि न प्राणाधारत्वद्युभ्वाद्यायतनत्वबोधकसमाख्याश्रु

रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।
ईशनादेव चेशानो महादेवो महत्त्वतः ॥
पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।
कृत्यात्मकमिमं देहं यतो वस्ते प्रवर्तयन् ॥
कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते ॥
(१०) एवं नानाविधैश्शब्दैः एक एव त्रिविक्रमः ।

तौ विष्णोः प्रतिपाद्यत्वनिश्चयः । तत्रत्यानां रुद्रादिशब्दानां पशुपत्यादा वेव रूढत्वेन विष्णौ तदभावात्, भावे वा पुनरनिश्चयात् । विष्णौ योगवृत्तिसम्भवेऽपि तस्या रूढितो दुर्बलत्वेनानिश्चायकत्वात् । न हि श्रुत्यन्तरे विष्णुलिङ्गाद्यस्तीत्यत आह—ब्रह्माण्डे चेति ॥ चोप्यर्थः समुच्चये । उक्तत्वादित्यनुवर्तते । तेनास्यान्वयः । किमुक्तमित्यतो रुद्रादिशब्दानां महायोगविद्धरूढिप्रतिपादकं वाक्यं पठति–रुजमिति । 'रुजं' रोगं उत्पत्त्यादिकं 'द्रावयते' निर्वापयति निवर्तयति यस्मात्तस्माद्रुद्र इत्युच्यते । क इत्यतस्तद्रूपविशेषमाह—जनार्दन इति । जननमर्दयतीति व्युत्पत्तिः । 'ईशनात् ईशानां' ब्रह्मादीनां चेष्टकत्वादीशानोऽपि स एवेत्यर्थः । महत्त्वत इत्युपलक्षणम् । द्योतनादेश्चेत्यपि द्रष्टव्यम् । ये 'नराः' जनाः संसारसागरान्मुक्ताः सन्तो 'नाकं' परमसुखं 'पिबन्ति' भुञ्जते ते पिनाकाः । विष्णुर्यतः 'तदाधारः' तेषामाधारस्ततः पिनाकीति 'स्मृतः' अभिहितः श्रुताविति शेषः । श्रुत इति पाठः स्वरसः । 'शंरोधनात्' मुक्तिपर्यन्तं स्वरूपभूतमपि सुखं रुध्वा वर्तनात् आसुरसुखं निरुध्य वर्तनाद्वा शर्व इत्यर्थः । यतः 'कृत्यात्मकं' चर्ममयमिमं देहं 'प्रवर्तयन्' सृजन् नियमयन् वा तेन स्वात्मानं जीवं वा 'वस्ते' आच्छादयति तदन्तर्वर्तते । यद्वा—देहं वस्ते अधिवसतीत्यतः कृत्तिवासा इत्युच्यत इत्यर्थः । 'विरेचनात्' जगत्सर्जनादसौ विष्णुः बृंहणाद्वर्धनाद्वा ब्रह्मनामा । असौ परमैश्वर्यादिन्द्र इत्युच्यते ॥

(१०) एवं विष्णौ रुद्रादिशब्दानां महायोगमुक्त्वा विद्धरूढिं चा

वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ॥ इति ।

( ११ ) वामने च—

न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।
अन्यनाम्नां गतिर्विष्णुः एक एव प्रकीर्तितः ॥
इति ।

( १२ ) स्कान्दे च—

ऋते नारायणादीनि नामानि पुरुषोत्तम ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम् ॥ इति ।

---

ह—एवमिति ॥ निमित्तैरित्यध्याहार्यम् । तथा च 'एवं ' उक्तरीत्याना नाविधैर्निमित्तैः सपुराणेषु वेदेषु गतैः एतैर्नानाविधैः शब्दैर्विष्णुरेक एव 'गीयते ' मुख्यतोऽभिधीयत इत्यर्थः । कथमन्यत्राहष्टं सर्वशब्दमुख्य वाच्यत्वमस्येत्यतः 'पुरुषोत्तमस्त्रिविक्रमः' इत्याभ्यां तत्रोपपादकमु क्तम् । त्रिभुवनार्थशब्दव्यापी हि त्रिविक्रमः । सर्वपुरुषशब्दनिमित्त कस्वामी हि पुरुषोत्तमः। तथा चानेन विष्णौ रुद्रादिशब्दानां महायो गविद्वद्रूढिकथनात् तयोश्च रूढिमात्रात्प्राबल्याद्युक्तः समाख्याश्रुत्यन्त रेऽपि विष्णोः प्रतिपाद्यत्वनिश्चय इति भावः । 'पुरुषोत्तम इति ' इत्य स्तस्य 'ब्रह्माण्डे ' इति पूर्वेणान्वयः ॥

( ११ ) ननु यदि रुद्रादिशब्दानां विष्णुपरत्वमुक्त्वा 'रुद्रो माऽऽविशान्त कः' इत्यादिश्रुतीनामनिर्णायकत्वमुच्यते, तर्हि नारायणादिनाम्नां रुद्रा दिपरत्वेन 'नारायणं महाज्ञेयम् ' ( महाना-११. ) इत्यादिश्रुतीनामनि र्णायकत्वं च स्यादित्यत आह—वामने चेति ॥ चोऽप्यर्थे । अस्याप्युक्तत्वा दविरोध इति पूर्वेणान्वयः । किमुक्तमित्यतस्तद्वाक्यं पठति—न त्विति । तुरवधारणे । 'नारायणादीनां' नारायणइत्यादीनामन्यत्र रुद्रादौ सम्भवो मुख्यवृत्तिः अस्तीति शेषः । 'अन्यनाम्नां' रुद्रादिशब्दानां 'विष्णुरेक एव गतिः ' मुख्यवाच्यः प्रकीर्तित इत्यर्थः । इतिशब्दस्य वामन इत्यनेनान्वयः । तस्य नारायणादिनाम्नां अन्यत्र निरवकाशत्वोक्तेः न तच्छ्रुतीनामनिर्णायकत्वमिति विवक्षितसाध्येनान्वयः ॥

( १२ ) भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपि रुद्रादौ वृत्तिः किं न स्यादित्यत आह—स्कान्दे चेति ॥ चोऽप्यर्थः समुच्चये । अस्याप्युक्तत्वादिति पूर्वेणान्वयः । किमुक्तमित्यतस्तद्वाक्यं प

( १३ ) चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
विशेषनामानि ददौ स्वकीयान्यपि केशवः ॥
इति च ब्राह्मे ॥ ३ ॥

( १४ ) सू—ॐ ॥ प्राणभृच्च ॥ ॐ ॥ ४ ॥
एतैरेव हेतुभिर्न जीवो वायुश्च ।

---

र्ऋते—ऋत इति । विनेत्यर्थः । 'अन्यत्र' अन्येभ्यो रुद्रादिभ्यः अन्यानि रुद्रादिनामानीतिशेषः । आदिशब्देन विष्णुरित्यादिकं गृह्यते । अत्र दृष्टान्तमाह—राजेति । यथा राजा स्वकं पुरमृतेन्यदमात्यादिभ्यो ददाति तद्वदित्यर्थः । इतीत्यन्तस्य स्कान्दे इत्यनेनान्वयः । तस्य च नारायणादिनाम्नामन्यत्र वृत्त्यभावस्योक्तत्वान्न साम्यमित्युपस्कृतेनान्वयः । अनेन स्कान्दे नारायणादिनाम्नां विष्णोरेवोक्तत्वान्न साम्यमित्यन्वयेन पूर्वप्रयुक्तैवकारस्य कृत्यान्तरं सूचितं भवति ॥

( १३ ) यद्येवं रुद्रादिशब्दाः विष्ण्वेकपराः तर्हि किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम् । विष्णुदत्तत्वाभिप्रायेण चेत्—तर्हि रुद्रादिशब्दा अपि तादृशा इति कथं तैर्निर्णयाभाव इत्यत आह—चतुर्मुख इति ॥ यद्यपि स्वकीयानि, तथापि 'केशवः' ब्रह्मरुद्रप्रवर्तको विष्णुः 'स्वकीयानि' मुख्यतः स्ववाचकान्येव चतुर्मुखः शतानन्दः पद्मभूरिति 'विशेषनामानि' नामविशेषानेव 'ब्रह्मणो' ब्रह्मणे ददावित्यर्थः । 'नग्नः' दिगम्बरः । 'शिवस्य' शिवाय । चस्त्वर्थः । ब्राह्म इत्यस्याप्युक्तत्वादिति पूर्वेणान्वयः । रुद्रादौ भस्मधरोग्रत्वादेरेव विष्णोस्सकाशात्प्राप्तत्वेनेति तदर्थः । तस्य च पूर्वोक्तं युक्तमिति साध्येनान्वयः॥

( १४ ) ननु 'स एषोन्तश्चरते बहुधा जायमानः' ( मु. २-२-६. ) इति जीवलिङ्गश्रवणात्प्राणित्वप्रसिद्धेश्च जीवसामान्यस्य वा, विषयभूतलोकाधारत्वस्य 'वायुना वै गौतम सूत्रेणायं लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानि भवन्ति' ( बृ. ५-७- २. ) इति श्रुत्यन्तरे वायुनिष्ठत्वेन प्रसिद्धत्वाद्वायोर्वात्र प्रकरणे द्युभ्वाद्याश्रयत्वेन प्रतिपाद्यता किं न स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—प्राणभृच्चेति ॥ एतैरिति । आत्मशब्दः मुक्तोपसृप्यत्वमतच्छब्दो रुद्रादिप्रापकश्रुतीनां विष्णुपरत्वमित्येवंरूपैः पूर्वोक्तहेतुभिरित्यर्थः । नात्र हेत्वन्तरं वाच्यमित्येवशब्दार्थः । जीवो वायुरित्यनेन प्राणभृच्छब्दो व्याख्यातः । अत्र वाच्य इत्यनुषज्यते । चः समुच्चये । अनेन सूत्रे चशब्दः प्रागुक्तहे

( १५ ) 'अजायमानो बहुधा विजायते' ( तै. आ. ३-१२. )
इति तस्यैव बहुधाजन्मोक्तेः ॥ ४ ॥
( १६ ) सू—ॐ ॥ भेदव्यपदेशात् ॥ ॐ ॥ ५ ॥
न चैक्यं वाच्यम् । 'जुष्टं यदा पश्यत्यन्यमीशमस्य
महिमानम्' ( मु. ३-१-२. ) इति भेदव्यपदेशात् ॥ ५ ॥
( १७ ) सू—ॐ ॥ प्रकरणात् ॥ ॐ ॥ ६ ॥

तूनां नानुमानमित्यतो नञश्च समाकर्षकः । न केवलं रुद्रोऽत्र न वाच्यः, किन्तु जीवो वायुश्चेति समुच्चयार्थश्चेत्युक्तं भवति ॥

( १५ ) ननु 'वायुना वै गौतम' इत्यादिश्रुतेर्विष्णुपरत्वेन वायुसाधकत्वाभावेऽपि बहुधाजन्माख्यलिङ्गेन जीवोऽत्र वाच्यः किं न स्यादित्यत आह—अजायमान इति ॥ देहतः 'अजायमानः' अविकुर्वाणो 'बहुधा' रामकृष्णादिरूपेण 'विजायते' तत्र तत्र प्रादुर्भवतीत्यर्थः । इतीति । इति पुरुषसूक्तगतवाक्येनेत्यर्थः । यस्य जन्मासम्भवोऽभिहितः पूर्ववादिना तस्यैव विष्णोर्न जीवस्येत्येवशब्दार्थः । तथाच लिङ्गं सावकाशमिति न तद्विरोध इति वाक्यशेषः ॥

( १६ ) ननु किं जीवलिङ्गस्य विष्णुगतत्वप्रतिपादनायासेन, लिङ्गबलाज्जीवस्यैव द्युभ्वाद्यायतनत्वं स्यात् । न चोक्तात्मशब्दादिहेतुविरोधः । जीवेशाभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे–भेदेति ॥ नैक्यं वाच्यमिति । जीवेश्वरयोरत्राभिप्रेतमिति च शेषः । अनेन सूत्रे नानुमानमित्यतो नञनुवर्तनीयः । स च हेतुगतभेदप्रतियोगिना संयोज्य इत्युक्तं भवति । चशब्दो जीवेशैक्यप्रयुक्तात्मशब्दवाच्यतैतत्प्रकरणबोध्यताऽपि नेति समुच्चयार्थः । कोऽसौ व्यपदेश इत्यत आह—जुष्टमिति । इति भेदव्यपदेशादिति । इति भेदश्रुतेरित्यर्थः । अनेन–'जुष्टम्' इति वाक्ये 'पश्यति' इति दर्शनकर्तृत्वेन प्रकृतजीवस्य ईशपदोक्तेश्च ईश्वरादेदोक्तेः न तयोरैक्यमत्राभिप्रेतमिति वाच्यमिति सूत्रार्थ उक्तो भवति । श्रुतिस्त्वानन्दमयनये व्याकृता ॥

( १७ ) नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते, न परमात्मनः, अतो न तयोर्भेद इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—प्रकरणादिति ॥ इतीत्यनन्तरं 'इत्युपक्रम्याधीतं' इति शेषः । 'हि' यतः 'एतत्' जुष्टमित्यादिवाक्यजातं यतः 'तस्यैव' परविद्याविष

'द्वे विद्ये वेदितव्ये' ( मु. १-१-४. ) इति तस्य द्वे तत्प्रकरणम् ॥ ६ ॥

( १८ ) सू—ॐ ॥ स्थित्यदनाभ्यां च ॥ ॐ ॥ ७ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
( मु. ३-१-१. )

इति ईशजीवयोः स्थित्यदनोक्तेः ॥ ७ ॥

---

यस्य परमात्मन एव 'प्रकरणं' नान्यस्येत्येवशब्दार्थः । अनेन—स्वप्रकरणात् 'द्वे विद्ये वेदितव्ये' इति परविद्याविषयवस्तुनोऽत्राधीतत्वेन विष्णुप्रकरणत्वात्परमात्मन एव भेदव्यपदेशावगतेः न जीवपरमात्मनोरभेदोऽत्राभिप्रेत इति वाच्यमिति सूत्रयोजना दर्शिता भवति ॥

( १८ ) न केवलं 'जुष्टम्' इति भेदश्रुतेर्न जीवेशाभेदोऽत्र प्रकरणे विवक्षित इति ज्ञायते, किन्तु लिङ्गादपीत्याह सूत्रकृत्—स्थितीति ॥ तदसिद्धिवारणाय श्रुत्युदाहरणेन व्याचष्टे—द्वा सुपर्णेति । अनेन—'द्वा सुपर्णा' इत्यत्र श्रुताभ्यां कर्मफलानुपजीवनावस्थितितदुपजीवनाभ्यां हेतुभ्यां च नैवात्र जीवेशयोरैक्यं वाच्यमिति सूत्रार्थ उक्तो भवति । चशब्दस्तु हेतुसमुच्चायक इति स्पष्टत्वान्न व्याख्यातः । श्रुतादनस्य प्राथम्येऽपि स्थितेरीशसम्बन्धित्वेनाभ्यर्हितत्वादल्पाक्षरत्वाच्च सूत्रे तदनुसारेण भाष्ये च श्रौतक्रममुल्लङ्घ्य स्थितेः प्रथममुक्तिः । 'सयुजा' सयुजौ संयुक्तौ उपकार्योपकारकभाववत्तया परस्परापरिहारेण वर्तमानौ 'सखाया' सखायौ प्रीत्या एकदेशस्थौ 'द्वा' द्वौ 'सुपर्णा' सुपर्णौ । सुपर्णसरूपौ । 'सुपर्णा सखाया' इति विशेषणस्वारस्यादस्य समजीवमात्रविषयत्वे सुष्ठुपरमानन्दरूपौ जीवेश्वरौ 'समानं' एकं 'वृक्षं' देहाख्यं अश्वत्थं 'परिषस्वजाते' आलिलिङ्गतुः । 'तयोः' सुपर्णयोर्मध्ये ईश्वरात् 'अन्यो' जीवः 'पिप्पलं' अश्वत्थफलरूपं देहजनितकर्मफलं 'अत्ति' अस्वाद्वेव स्वादुत्वेनैव अश्नाति । जीवात् 'अन्यः' ईश्वरस्तु 'अनश्नन्' जीवाद्यमेवाभुञ्जानः 'अभि' अभितः 'चाकशीति' प्रकाशते । न तु स्वस्थित्यै जीववत्कर्मफलमपेक्षत इति मुण्डकश्रुत्यर्थः ॥ १ ॥

॥ इति द्युभ्वाधिकरणम् ॥

२. अधिकरणम् ॥

(१) 'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखम्' (छा. ७-२३.) इत्युक्तेस्तस्यैव भूमत्वप्राप्तिः ।

२. अधिकरणम् ॥

(१) अत्राधिकरणे भूमनाम्नो विष्णौ समन्वयः प्रतिपाद्यते । भूमशब्दश्च 'भूम्नः क्रतुवत्' इत्यादौ कचिद्धर्मवाचकोऽप्यत्र पूर्णरूपधर्मिवचनः । पूर्णत्वं च गुणत उत्तमत्वमिति ध्येयम् । श्रुत्यादिसङ्गतिविषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं दर्शयति—प्राण इति ॥ 'छान्दोग्ये' इत्यादौ उपस्कार्यम् । 'इत्युक्त्वा' इत्युपक्रम्येत्युपलक्षणम् । तदुत्तममनुक्त्वेत्यपि द्रष्टव्यम् । अत एव तस्यैव प्राणस्यैवेत्येवकारोऽन्यव्यवच्छेदकः प्रायोजि । श्रुतौ पूर्वपक्षे प्राणशब्दो वायुमात्रपरः । सिद्धान्ते तु भाष्यरीत्या वायुविष्णूभयपरः । न्यायविवरणछान्दोग्यभाष्यरीत्या तु वायुमात्रपरः । न च वायुविष्णूभयवाचित्वं वायुमात्रवाचित्वमित्यर्थद्वयं विरुद्धम् । अन्तर्यामिविवक्षया भाष्यस्य तदविवक्षया विवरणादेः प्रवृत्तत्वात् । यथा 'आत्मन आकाशः' (तै. २-१.) इत्यत्र सम्भूतशब्दस्यानेकार्थत्वेऽन्तर्यामिविष्णुरप्याकाशपदेनोच्यते । तस्य जनिमात्रार्थत्वे तु न तेन स उच्यते । तथा तत्त्वप्रदीपे तु 'अभ्युपगमवादत्वात्' इत्यादिना अयं प्राणो विष्णुरित्यभ्युपेत्यवादेन भाष्यं प्रवृत्तम्, इत्युक्तम् । तथा चाद्यपक्षे प्राणः 'आशायाः' भारत्याः 'भूयान्' गुणतो ज्येष्ठः । एवं 'प्राणः' तदन्तर्यामी विष्णुरन्तर्यामित्वादेव तत आशायाश्च भूयानित्यर्थः । अनेन पूर्वमानन्दमयशब्दोक्तसजातीयोत्कृष्टत्वरूपपूर्णत्वस्येह वायावाक्षेपादानन्दमयाधिकरणेनास्याक्षेपकी सङ्गतिः सूचिता । छन्दोगश्रुत्युक्तो भूमाख्यो विषयः, किं वायुरुत विष्णुरिति सन्देहश्च सूचितः । तथा तस्यैव भूमत्वप्राप्तिरिति पूर्वपक्षः । तत्र प्राणोपक्रमतदुत्तमानुक्तिरूपयुक्तिश्च दर्शिता भवति । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति वाक्ये सुखशब्दः पूर्णसुखार्थः । 'यत्सुखं स भूमा' इति व्यासतीर्थीयोक्तेः, सर्वनामानि पर्यायेण तत्तल्लिङ्गभाञ्जीत्युक्तेश्च निरुपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वात् । यदनन्याधीनपूर्णानन्दसुखं स भूमा गुणतः पूर्णो नारायण इत्युद्देश्यविधेययोर्व्यत्ययः । अत एव स्वातन्त्र्येण सुखस्य विशेषणात् न मुक्तजीवेष्वनैकान्त्यमित्याशयेन तदु

( २ ) 'उत्क्रान्तप्राणान्' ( छा. ७-१५-३. ) इत्यादि तल्लि
ङ्गात्प्राणशब्दश्च वायुवाचीति ।
( ३ ) अतो वक्ति—
सू—ॐ ॥ भूमा सम्प्रसादादध्युपदेशात् ॥ ॐ ॥ ८ ॥
'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्'
सर्वेषा मुपर्युपदेशाच्च विष्णुरेव भूमा॥

पपादयति—नाल्प इति । 'अल्पे' अपूर्णे मुक्तजीवे तत्प्रसादं विना यतः सुखं नास्तीत्यर्थः । निगमयति—भूमैव सुखमिति । अत्रापि व्यत्ययः ॥

( २ ) ननु 'प्राणो वा आशाया भूयान्' इत्युक्तप्राणशब्दस्य 'अत एव प्राणः' इत्युक्तरीत्या विष्णुपरत्वाद्विष्णोरेव भूमत्वप्राप्तेः कथं प्राणशब्दबलाद्वायोर्भूमत्वप्राप्तिरित्यत आह—उत्क्रान्तेति ॥ इत्यादीति । लुप्तविभक्तिको निर्देशः । आदिशब्देन 'उत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत् नैनं ब्रूयुः पितृहासीति' समग्रवाक्यं गृह्यते । तच्च तत् लिङ्गं च, तस्य लिङ्गमिति च विग्रहः । अयमिति शेषः । चशब्दोऽवधारणे । वायुवाची चेति भिन्नक्रमः । तथा च 'अयं' प्राणशब्दो 'वायुवाच्येव' न विष्णुवाची । कुतः ? 'उत्क्रान्तप्राणान्' इत्यादौ 'तल्लिङ्गात्' तस्य प्राणस्योत्क्रमणादिरूपलिङ्गश्रवणादिति योजना । उत्क्रान्तः प्राणो येभ्यस्ते. तथोक्ताः । तान्मातृपित्राचार्यादीन् 'समासं' साकल्येन 'व्यतिषं' एकदेशेन च शूलेन विलुण्ठ्य यदि दहेत्पुत्रः शिष्यो वा तथा नैनं ब्रूयुः जनाः । किमिति ?—पितृहासीति मातृहासीति । मुख्यप्राणसन्निधानाभावादिति भावः । इति श्रुत्यर्थः ॥

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे प्रसीदत्यनेन जन इति प्रसादः सुखम्, सम्यक्प्रसादः सम्प्रसादः, तस्मादिति विग्रहः । ईश्वरे सुखमिव दुःखमपि स्यादिति नाशङ्क्यं, पूर्णसुखकार्येण सम्यक्प्रसादेन दुःखाभावनिश्चयादित्याशयेन प्रयुक्तं सम्प्रसादादिति हेतुमनूद्य व्याचष्टे—सम्प्रसादादिति । उत्तरसूत्रस्थचशब्दोऽत्राकर्षणीय इत्याशयेन 'अध्युपदेशात्' इत्येतद्धेत्वन्तरपरतयाऽनूद्य व्याख्याति—अध्युपदेशादिति । नामादीनां सर्वेषां 'उपरि' तदुत्तमत्वेन 'उपदेशात्' उक्तेरित्यर्थः । चो हेतुसमुच्चये । अत्राधीत्येव हे

(४) सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥
विश्वतः परमां नित्यम्' इति हि श्रुतिः (महाना. ११.) ।
(५) 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ. ६-४-२.) इ
त्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥ ८ ॥

---

तुः, न तु समग्र एको हेतुः । स चेश्वरवचनो भावप्रधानः, विशेषा नुक्तेः अखिलेश्वरत्वादिति हेत्वर्थः अखिलेशत्वादित्यनुव्याख्यानसुधो क्तो ज्ञातव्यः । असिद्धिपरिहारायोपदेशपर्यन्तं धावनम् । प्रायपाठा द्भूम्नोऽखिलाधिपप्राणाधिपत्ये अखिलाधिपत्यं सिध्यतीति भावः । स मन्वयसूत्रादनुवृत्तस्य तत्त्वितिविधेयसमर्पकस्यार्थमाह—विष्णुरेवे ति । भूमा विष्णुरेवेत्यन्वयः ॥

(४) पूर्णसुखत्वादिकं कुतो विष्णुत्वनिश्चायकमित्यत आह— सहस्रेति ॥ इति हीति । 'हि' यस्मात् 'इति' नारायणानुवाकगता श्रुतिरस्ति, तस्मात्सम्प्रसादात् विष्णुत्वनिश्चयो भवत्येवेत्यर्थः । 'स हस्रशीर्षं' सहस्रपदोपलक्षितामितमूर्धानं 'देवं' प्रकाशरूपं विश्व तो दर्शनादक्ष्यस्येति विश्वाक्षं 'विश्वशम्भुवं' पूर्णसुखाश्रयं 'विश्वं' जगत्प्रविष्टत्वेन वर्तमानं 'नारायणं' मुक्तसङ्घे व्यक्तं 'अक्षरं' स्व रूपतो नाशरहितं अक्षेषु रममाणं वा । परेभ्यो ब्रह्मादिभ्योऽधिकत्वेन मीयत इति परा मा यस्येति वा परमस्तं परमं 'पदं' प्राप्यं विश्वतः परमश्चासावश्चेति विग्रहः, सवर्णदीर्घः । सोमपाशब्दवदयं शब्दः । सुधारीत्या आबन्तत्वाश्रयेण लिङ्गव्यत्ययो वा । तथा च 'विश्वतःप रमां' सर्वस्मादुत्तमं अकारवाच्यं सर्वोत्तमं वा 'नित्यं' देहतो नाश रहितं 'विश्वं' गुणैः पूर्णं यज्ञेषु हविःस्वीकरणात् हरिवर्णत्वाच्च 'ह रिं' 'देवं' क्रीडादिगुणकं 'नारायणं' तदाख्यं देवं तद्विश्वमुपजीव तीति श्रुत्यर्थः । यद्यपि 'विश्वतः परमं' इति द्राविडपाठः । तथाऽप्या न्ध्रपाठमनुसृत्य परमामित्युक्तम् ॥

(५) अत्र प्राणशब्देन विष्णोर्वाच्यत्वाङ्गीकारे प्रागुक्तोत्क्रमणा दिलिङ्गविरोध इत्यतो नेत्याह—तमिति ॥ प्रथमादिशब्देन तदुत्तरवा क्यानि द्वितीयेन तल्लिङ्गान्तराणि च गृह्यन्ते । अपिशब्दः समुच्चये, य द्यपि तथाऽपीत्यर्थे च । तथा च—न केवलं प्राणशब्दोपक्रमविरोधः, तस्य विष्णुपरत्वात्, किंतु 'अपि' अत्र प्राणशब्दे न विष्णोर्वाच्य

( ६ ) सू—ॐ ॥ धर्मोपपत्तेश्च ॥ ॐ ॥ ९ ॥

स्वाङ्गीकारे उत्क्रमणादिलिङ्गविरोधो नास्ति। कुतः ? 'अपि' तथाऽपि सर्वगतेऽपि विष्णावुत्क्रमणादिलिङ्गस्य 'तमुत्क्रामन्तम्' इत्यादिना वाजसनेयवाक्येन सिद्धत्वादिति योजना। श्रुतिसिद्धेऽर्थे लोकदृष्टिविरोधोऽकिञ्चित्कर इति भावः। 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतेनैष आत्मा निष्क्रामति' ( बृ. ६-४-२. ) इति पूर्ववाक्ये प्रकृतः परमात्मा तच्छब्देन परामृश्यते। तथा च प्रद्योतितहृदयाग्रेण परोक्षज्ञानिदेहात् 'उत्क्रामन्तं' निर्गच्छन्तं परमात्मानमनुसृत्य 'प्राणो' मुख्यवायुः 'उत्क्रामति' देहान्निर्गच्छतीति श्रुत्यर्थः ॥

( ६ ) युक्त्यन्तरेण विष्णोर्भूमत्वप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे- धर्मेति ॥ आदिपदेन स्वातन्त्र्यस्वप्रतिष्ठितत्वादिकं गृह्यते। अस्य हेतोर्विष्णुरेव भूमेति प्रधानसाध्येनान्वयः। यद्यपि च्छान्दोग्ये 'यत्र नान्यत्' (छा.७-२४-१.) इति स्वातन्त्र्यबोधकवाक्यानन्तरं 'स एवाधस्तात्' (छा.७-२५.) इति सर्वगतत्वाभिधायकवाक्यश्रवणात् प्रथमश्रुतस्वातन्त्र्यधर्मं स्वशब्देन गृहीत्वा सर्वगतत्वमादिशब्देन ग्राह्यम्। तथाऽपि तद्वाक्ये भूमत्वनियतसर्वगतत्वस्य स्पष्टं प्रतीतेस्तदेव वाचकशब्देन गृहीतमिति द्रष्टव्यम्। अनेन-सूत्रे चो युक्तिसमुच्चये धर्मशब्दात्परमन्वेति। लिङ्गस्य निरवकाशत्वज्ञापनायोपपत्तिपर्यन्तं धावनम्। तथा च न केवलं सम्प्रसादादेः, किन्तु 'स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्' ( छा. ७-२५-१. ) इति वाक्ये, तथा—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा.७-२४-१.) इति वाक्ये, तथा- 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' ( छा. ७-२४-१. ) इत्यादि वाक्ये च सर्वगतत्वादिधर्मश्रवणाच्च भूमा विष्णुरेव, तेषां च धर्माणां विष्णावेवोपपत्तेरिति सूत्रार्थ उक्तो भवति। 'सः' भूमशब्दितो नारायणः अधः उपरि पश्चात्पुरस्ताद्दक्षिणत उत्तरतः सर्वत्रास्ति। तत्प्रयोजनमाह—स एवेदं सर्वमिति। तेनैवेदं जगद्व्याप्तं स एव सर्वसत्ताप्रदस्तदर्थमेव सर्वत्र तिष्ठतीत्यर्थः। 'यत्र' यद्विना यदधीनं विना अन्यन्नपश्यत्यधिकारी सर्वमेव तदधीनं पश्यति, तथैव शृणोति, विजानाति च स भूमेत्यर्थः। 'यत्र' यस्मिन् दृष्टेऽन्यत्स्वतन्त्रं न पश्यतीति वा। हे 'भगवो' भगवन् स भूमा कस्मिन् प्रतिष्ठित इ

सर्वगतत्वादि धर्मोपपत्तेश्च ॥ ९ ॥

३. अधिकरणम् ॥

( १ ) अदृश्यत्वादिगुणा विष्णोरुक्ताः । 'अदृष्टं द्रष्टृश्रुतं श्रो

ति नारदप्रश्ने महिमगुणात्मके 'स्वे' स्वस्मिन् स्वकीये महिम्नि वा स्वयं 'प्रतिष्ठितः' आश्रित इति सनत्कुमारः प्रत्याहेति श्रुत्यर्थः ॥ २ ॥

॥ इति भूमाधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽक्षरनामसमन्वयः क्रियते । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति—अदृश्यत्वादीति ॥ उक्ता इत्यस्यावृत्तिः । ते इति शेषः । आद्यादिशब्देनाग्राह्यत्वादि गृह्यते । गुणा इत्यनेन चन्द्रादित्याद्याधार त्वगुणोऽपि गृह्यते । द्वितीयादिशब्देन 'अश्रुतं श्रोत्रमतं मन्तृविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रो तश्च' ( बृ. ५-८-११. ) इति शिष्टवाक्यम्, तथा—'एतस्य वा अक्ष रस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ( बृ. ५-८-९. ) इति वाक्यं च गृह्यते । तृतीयादिशब्देन 'अहं त्वष्टारमुत पूषणं भग म्' ( ऋ.१०-१२५-२. ) इति वाक्यम्, तथा—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ( गी. १२-३. )

इति गीतावाक्यम्,

आसीदिदं तमोऽभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

इति तद्भाष्योदाहृतवाक्यं च गृह्यते । चशब्देनाक्षरशब्दस्य श्रौतत्वे प्रसिद्धेश्चेति अक्षरपदसूचितो हेतुः समुच्चीयते । तस्येतिपदमावर्त्यते, विपरिणम्यते च । न केवलं विष्णोरेव, किन्तु 'तस्य' अक्षरस्यापीत्यपेरर्थः । विष्णुजडव्यावृत्त्यर्थं—मध्यमेति । 'भूमत्वप्राप्तिः' इति

तृ' ( बृ. ५-८-११. ) इत्यादिना । 'अहं सोममाहन सं बिभर्मि' ( ऋ. १०-१२५-२. ) इत्यादेस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इति ।

---

पूर्ववाक्याद्बुद्ध्या विवेकेन प्राप्तिरितिपदमत्रानुवर्तते । तथा च—पूर्व मदृश्यत्वाधिकरणे ये अदृश्यत्वादिगुणा अक्षरस्य विष्णोरुक्ताः । ते वाजसनेयके 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ' इत्यादिना वाक्येन 'मध्यमाक्षरस्य' श्रीतत्त्वस्य 'उक्ताः' उच्यन्ते इत्येका योजना । अपरा तु—'तस्य' तेषामदृश्यत्वादिगुणानां 'तस्य' तस्मिन् मध्य माक्षरेऽपि सम्भवाद्युक्तत्वात् 'तस्य' चन्द्राद्याधारत्वलिङ्गस्यापि 'अहं सोममाहनसम्' इत्यादिवाक्यात्तस्मिन्नक्षरे उपपत्तेः 'तस्य' अक्षरशब्दस्य तस्मिन् मध्यमाक्षरे प्रसिद्धेश्च 'तस्य' मध्यमाक्षरस्या पि 'तस्य' अक्षरनामवाच्यत्वस्य प्राप्तिरिति । तत्राद्ययोजनायां अदृश्यत्वाधिकरणोक्तादृश्यत्वादिगुणकाक्षरस्य विष्णुत्वाक्षेपात्ते नास्याक्षेपकी सङ्गतिरुक्ता भवति । तथाऽक्षरात्मा विषयः, द्रष्टृत्वा भिधायकोत्तरवाक्यपर्यालोचनया जडत्वात् किं चेतनप्रकृतिरुत विष्णुरिति संशयश्च सूचितः । द्वितीययोजनायां सयुक्तिकः पूर्वपक्षः प्रदर्शित इति ज्ञातव्यम् । 'तद्वा' इत्यादेः सिद्धान्तरीत्याऽयमर्थः— 'तत्' आकाशाश्रयत्वेन वक्ष्यमाणं 'अक्षरं' न क्षरतीत्यक्षरशब्दवा च्यब्रह्म 'एतत्' एतल्लक्षणकं च प्रसिद्धम् । तदेवाह—अदृष्टमित्या दिना । अन्यैः साकल्येन अदृष्टत्वात्स्वयं द्रष्टृत्वाददृष्टं द्रष्टृत्युच्यते । एवमुत्तरवाक्यमपि व्याख्येयम् । द्रष्टृत्वादौ विशेषमाह—नेति । 'अ तः' अक्षरादन्यत् स्वातन्त्र्येण द्रष्टृ श्रोतृ मन्तृ ज्ञातृ च नास्तीत्यर्थः । 'एतस्मिन्' एवंभूतेऽक्षरशब्दिते ब्रह्मणि दीप्तिनिमित्ताकाशपदोक्तं श्रीतत्त्वं 'ओतश्च प्रोतश्च' अत्रोतं च प्रोतं च । तथा च सर्वाकारेण तदाश्रितं खल्वित्यर्थः ॥

गार्गीति याज्ञवल्क्यकर्तृकपत्नीसम्बोधनम् । 'एतस्य वा अक्ष रस्य' विष्णोः 'प्रशासने' आज्ञायामिति निमित्तसप्तमी । तथा च आ ज्ञामात्रात् 'सूर्याचन्द्रमसौ' 'केशौ सूर्यविधू मतौ' इति बृहद्भाष्यो क्तेर्ब्रह्मरुद्रौ, भाष्यटीकारीत्या प्रसिद्धरविचन्द्रौ च 'विधृतौ' विशेषे ण धृतौ भवत इति । पूर्वपक्षी तु अक्षरशब्दं श्रीतत्त्वपरं मन्यते । त

(२) अतो ब्रूते—

सू—ॐ ॥ अक्षरमम्बरान्तधृतेः ॥ ॐ ॥ १० ॥

'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. ५-८-११.) इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवा क्षरम् ।

---

त्पक्षे आकाशशब्दः प्रकृत्यन्यतत्पोष्यपरः ॥

अहं 'आहनसं' स्वाभिमन्यमानलताद्वारा यज्ञेष्वभिषूयमाणं 'सोमं' सोमलताभिमानिनं चन्द्रं त्वष्टारं च 'उत पूषणं' पूषणं च भगं च 'बिभर्मि' दधामीत्यंभ्रणीवाक्यस्यार्थः । त्वष्ट्रादयस्तु सूर्यप्रभेदाः । तत्त्वप्रदीपसत्तर्कदीपावल्योस्तु बृहद्भाष्यानुसारेण 'सोमं' उमया सहितं 'आहनसं' आसमन्तात् हन्तारं संहर्तारं रुद्रं बिभर्मीति व्याख्यातम् ॥

'अक्षरं' देहतोऽप्यविनाशि, 'अनिर्देश्यं' शब्दागोचरं, 'सर्वत्रगं' देशतो व्याप्तं, 'अचिन्त्यं' मनसाऽग्राह्यं, गुणबाहुल्यात्, कूटे आकाशेऽभिमानित्वेन तिष्ठतीति 'कूटस्थं', 'अचलं' कदापि स्वपदादभ्रष्टं, 'ध्रुवं' उत्पत्तिविनाशशून्य, 'अव्यक्तं' श्रीतत्त्वं ये पर्युपासते इति गीतार्थः ॥

प्रलये 'अभूतं' अजातं 'अप्रज्ञातं' प्रत्यक्षावेद्यं अवेद्यलक्षणत्वादलक्षणं अत एव 'अतर्क्यं' अनुमानावेद्यं 'अविज्ञेयं' आगमावेद्यं अनाद्यविद्याभिमानित्वात्,तमःशब्दवाच्यमिदं लक्ष्म्याख्यं तत्त्वं 'प्रसुप्तमिव' निर्व्यापारं 'सर्वतः' सर्वत्रासीदिति स्मृत्यर्थः ॥

(२) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे गहनार्थत्वात्प्रथमं हेतुभागं व्याकरिष्यमाणोऽसिद्धिपरिहाराय श्रुतिमुदाहरति—एतस्मिन्निति । इतीत्यनन्तरं 'वाक्ये' इति शेषः । अन्यपदार्थं दर्शयन्विग्रहं दर्शयति—अम्बरेति । अम्बरमाकाशः अन्तो यस्य सर्वस्य पृथिव्यादेर्धारकत्वोक्तेरित्यर्थः । यद्यपि 'एतस्मिन्' इति वाक्येऽम्बरधृतिरेवोच्यते । न तु तदन्तसर्वधृतिः । तथाऽपि 'यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्यायदन्तरा द्यावापृथिवी...आकाश एव तदोतं च प्रोतं च' (बृ.५-८-७.) इत्यनेनाकाशस्य चित्प्रकृतेः सर्वाधारत्वमुक्त्वाऽनन्तरं 'एतस्मिन्' इति वाक्येऽक्षरस्य तादृशप्रकृत्याधारत्वोक्तेः प्रकृतिद्वाराऽक्षरस्याम्बरान्तसर्वाधारत्वमत्रोक्तमेवेति न दोषः । एतच्च सूत्रेऽम्बरान्तेत्यन्तपद

(३) य उ त्रिधातु पृथिवीमुत द्या
मेको दाधार भुवनानि विश्वा। ( ऋ. १-१५४-४. )
(४) भर्ता सन्भ्रियमाणो बिभर्ति।
एको देवो बहुधा निविष्टः।
यदा भारं तन्द्रयते स भर्तुं।
परास्य भारं पुनरस्तमेति। ( तै. आ. ३-१४. )
(५) यस्मिन्निदं संचविचैधि सर्वं
यस्मिन् देवा अधि विश्वे निषेदुः। ( महाना. १-२. )

---

प्रयोगात्सूचितम्। सूत्रे तत्त्वित्यनुवृत्तपदद्वयोपेतप्रतिज्ञाभागं व्याख्याति-ब्रह्मैवेति। अक्षरं ब्रह्मैवेत्यन्वयः। अनेन-अक्षरस्य 'एतस्मिन्' इति प्रकृतिद्वाराऽऽकाशान्तसर्वाधारत्वश्रुतेरक्षरं ब्रह्मैवेति सूत्रार्थ उक्तो भवति॥

(३) सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यतः तस्य विष्णुलिङ्गत्वेन श्रुतिसिद्धत्वादित्याह-य इति॥ व्याख्यातेयं श्रुतिर्जन्मनये॥

(४) 'भर्ता सन्' इति तैत्तिरीयाणां श्रुतिः। 'देवः' प्राणाख्यो भगवान् स्वयं जगता जीवेन वा हृदि भ्रियमाणः तत् 'बिभर्ति' धत्ते पुष्णाति च। तर्हि जगदीशयोः साम्यापत्तिरित्यत आह—भर्ता सन्निति। जगतो मूलभर्ता सन्नेव भ्रियमाणः, न स्वकीयस्थित्येत्यर्थः। नन्वेकस्यैव भगवतः भर्ता भ्रियमाणो बिभर्तीत्यनेकविधव्यवहारविषयत्वं कथमित्यत आह—एको बहुधेति। एकोऽपि भर्तृत्वादिना 'बहुधा' बहुरूपेण च 'निविष्टो' व्याप्त इत्यर्थः। तत्र प्रविष्ट इति वा। 'यदा भारं तन्द्रयते स भर्तुं परास्य भारं पुनरस्तमेति' इति वाक्यशेषः। 'स' विष्णुर्यदा तं जगद्भारं 'परास्य' अधो निधाय पुनर्भर्तुं 'तन्द्रयते' नेच्छति तदा असौ भारः 'अस्तमेति' नश्यतीत्यर्थः॥

(५) 'यस्मिन्' इत्यपि तैत्तिरीयेऽन्यद्वाक्यम्। अत्र यच्छब्दस्य 'तदेव ब्रह्म परमम्' (महाना. १-६.) इत्युत्तरवाक्यस्थतच्छब्देनान्वयः। चौ प्रकारसमुच्चये। तथा च-'यस्मिन्निदं' सर्वं जगत् 'सं' सम्यक् 'वि' विविधं 'चैधि' अवर्धत। एधतेर्लिङि छान्दसं रूपमेतत्। यद्वा—एधि वर्धते। अस्तीति वाऽर्थः। अस्मिन् पक्षे अस्तेर्लिटि मध्यमपुरुषैकवचने छान्दसं रूपम्। वस्तुतो लोटि मध्यमपुरुषैकवचने रूपमेतत्। यस्मिंश्च 'विश्वे' सर्वे देवाः 'अधिनिषेदुः' यमध्यगुस्तदेव ब्रह्मेत्य

इत्यादिश्रुतेः ।

( ६ ) पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ ॥
इति च स्कान्दे ।

( ७ ) सू—ॐ ॥ सा च प्रशासनात् ॥ ॐ ॥ ११ ॥
सा च धृतिः प्रशासनादुच्यते । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ. ५-८-९. ) इत्यादिना ।

( ८ ) तच्च प्रशासनं विष्णोरेव ।

---

र्थः । इत्यादिश्रुतेरित्यस्य अम्बरान्तधृतेरित्यनेनान्वयः । ब्रह्मण्यवगता या इति शेषः । तृतीयार्थे पञ्चमी । आदिशब्देन 'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च' (महाना.१-३.) इत्यादिकम्, 'तमेव मृत्युममृतं तमाहुस्तं भर्तारं तमु गोप्तारमाहुः' ( तै. आ.३-१४.) इत्यादि च गृह्यते । तथाच विष्णुलिङ्गत्वेन श्रुतिसिद्धात् सर्वाधारणात् विष्णुत्वनिश्चयो भवत्येवेति भावः ॥

( ६ ) विष्णुवदन्यस्यापि सर्वाधारत्वं किं न स्यादित्यत आह— पृथिव्यादीति ॥ प्रकृत्यन्तपदेन सौत्रान्तपदं व्याख्यातम् । 'भूतं' अतीतं 'भव्यं' भविष्यत् 'भवत्' वर्तमानं 'यत्' इदं विश्वं तद्विष्णुः 'एक एव' असहायो बिभर्ति । तस्य धृतौ तस्माद्विष्णोरन्यः 'क्षमः' समर्थो नेत्यर्थः । इति स्कान्द इत्यस्य 'उक्तत्वात्' इत्यध्याहारेण न सावकाशत्वं लिङ्गस्येति वाक्यशेषेणान्वयः ॥

( ७ ) युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—सा चेति ॥ 'सा च' सर्वधृतिरपि इत्यादिना प्रशासनादुच्यते यतोऽतोऽपि ब्रह्माक्षरमित्यन्वयः । आदिशब्देनैवंरूपाण्येकप्रकरणगतानेकवाक्यानि गृह्यन्ते । अनेन—यदा 'सा' पूर्वोक्ता सर्वधृतिरेव साक्षरस्य विष्णुत्वसाधिका, तदा सुतरां, या तु 'एतस्य' इति श्रुतिवाक्येऽक्षरस्य प्रशासनादेव असङ्कुचितविषयाऽनन्यायत्तप्रकृष्टाज्ञामात्रादेव सर्वधृतिरुच्यते सेति सूत्रार्थ उक्तो भवति ॥

( ८ ) ननु सर्वधृतिहेतुप्रशासनेन कुतोऽक्षरस्य विष्णुत्वनिश्चय इत्यतस्तस्य विष्णुकर्तृकत्वादित्याह—तच्चेति ॥ सर्वधृतिकारणं प्रशासनं त्वित्यर्थः । न केवलं सर्वधृतिः, किन्तु तद्धेतुप्रशासनं चेति समु

( ९ ) सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि। ( ऋ. १-१६४-३६. )
( १० ) चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीरवी विपत्। ( ऋ.१-१५५-६. ) इत्यादिश्रुतेः।
( ११ ) एकश्शास्ता न द्वितीयोऽस्ति शास्ता।
यो हृच्छयस्तमहमिह ब्रवीमि।
( १२ ) न केवलं मे भवतश्च राजन्

चये वा चशब्दः। 'विष्णोरेव' विष्णुकर्तृकमेव। न त्वन्यकर्तृकमिति एवार्थः। एवकारस्योत्तरत्रोपयोगः॥

( ९ ) कुत एतज्ज्ञायत इत्यतस्तच्चेत्यनेन प्रतिज्ञातार्थे श्रुतिं प्रमाणयति—सप्तेति॥ आ ऋद्धगर्भाः आर्धगर्भाः। ब्रह्माण्डाख्यातिसमृद्धगर्भाः। निगरणेन भ्रियन्त इति गर्भास्तदावरणभूता इति यावत्। रेत इति लिङ्गव्यत्ययेनैकवचनं प्रथमाबहुवचनार्थे। तथा च—'भुवनस्य' लोकस्य 'रेतसो' रतिप्रदाः सारभूता वा। यद्वा—भूमत्वात्पूर्णत्वाद्वननीयत्वाद्भजनीयत्वाद्भुवनस्य विष्णो रेतोरूपाः 'सप्त' महदहङ्कारपञ्चमहाभूताख्याः ब्रह्मादयो देवाः। भुवनस्य 'रेतो' रेतसो जगद्रतिप्रदस्य विष्णोः 'प्रदिशा' आदेशेनाज्ञया 'विधर्मिणि' विविधविश्वधारणे तिष्ठन्तीति ऋङ्मन्त्रार्थः। विश्वेश्वरतीर्थीये तु 'अर्धस्य' विष्णोः 'गर्भाः' सप्त देवाः भुवनस्य 'रेतः' कारणम्। एते च विष्णोः प्रदिशा विधर्मिणि तिष्ठन्तीत्यर्थ उक्तः॥

( १० ) 'चतुर्भिः' इति वाक्यन्तु जन्मनये व्याख्यातम्। एवंजातीयकश्रुतिरादिशब्दार्थः। श्रुतेरित्यस्य ज्ञायत इत्यध्याहारेण तच्चेति पूर्ववाक्येनान्वयः॥

( ११ ) सर्वधृतिहेतुप्रशासनं विष्णोरिवान्यस्यापि किं न स्यादित्यत आह—एक इति॥ इदं च भारतवाक्यं सभापर्वगम्। 'शास्ता' सर्वधृतिहेत्वाज्ञाकर्ता। 'एकः' न तु द्वितीयोस्ति, स च विष्णुरेवेत्यर्थः। 'गर्भे शयानं पुरुषं कोऽस्ति शास्ता' इति शिष्टवाक्यम्। 'यो हृच्छयः' इत्यन्यद्वाक्यमुत्तरवाक्यपर्यालोचनया प्रकृतसङ्गतम्। 'यः' सर्वधृतिहेतुप्रशासनाय 'हृच्छयः' सर्वहृदयनिवासी तमहमिह स्थाने ब्रवीमीत्यर्थः॥

( १२ ) 'न केवलम्' इत्यादि हिरण्यकशिपुं प्रति प्रह्लादवाक्यम्।

स वै बलं बलिनां चापरेषाम्।
इत्यादेश्च ॥ ११ ॥
( १३ ) सू—ॐ ॥ अन्यभावव्यावृत्तेश्च ॥ ॐ ॥ १२ ॥

हे राजन् न केवलं मे भवतश्च 'सः' भगवान् 'बलं' बलप्रदो धृति हेतुः, किन्त्वन्येषां बलिनां च बलमित्यर्थः । इत्यादेश्चेत्यस्य 'तच्च प्र शासनं विष्णोरेवेति ज्ञायते' इत्यनेनान्वयः । अनेन विष्णोरेवेत्येवका रस्य कृत्यं सूचितम् ॥

( १३ ) हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रं पठित्वा व्या चष्टे—अन्येति ॥ आदिशब्देन 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवद न्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वना काशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममु खममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन' (बृ. ५-८-८.) इति समग्रवाक्यं गृह्यते । 'स्थूलाण्वादीनाम्' इति भाव प्रधानो निर्देशः । व्यावृत्तेरित्यनन्तरं 'कथनात्' इति शेषः । चो हेतु समुच्चये । अस्यापि ब्रह्मैवाक्षरमिति पूर्वेणान्वयः ॥

अनेन—न केवलं पूर्वोक्तहेतुभ्यां, किन्त्वन्येषां सकलवस्तूनां भावानां स्वरूपाणां स्थौल्यादिधर्माणां व्यावृत्तेः अनन्यापेक्षाराहि त्यस्य 'अस्थूलम्' इत्यादिनाऽक्षरे कथनादप्यक्षरं ब्रह्मैवेति सूत्रार्थ उक्तो भवति ॥

श्रुत्यर्थस्तु—'तत्' आकाशाश्रयत्वेन वक्ष्यमाणं 'अक्षरं' न क्ष रतीत्यक्षरशब्दवाच्यं ब्रह्म एतल्लक्षणकं 'ब्राह्मणाः' ज्ञानिनोऽभिवद न्ति वै प्रसिद्धम् । तत्किलक्षणमित्यत आह—अस्थूलमिति । स्थूलं म हत् । स्वप्नबुद्धार्थान्तरं तु—'एतत्' अक्षरं ब्राह्मणाः 'तत्' चित्प्रकृ त्याख्यमिति वदन्ति पूर्वपक्षयन्ति तद्ब्रह्मेत्यभिवदन्ति सिद्धान्तयन्ति। सिद्धान्तसाधकं हेतुमेवाह—अस्थूलमित्यादिनेति । अनेन 'प्रसिद्ध स्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः' इति बृहद्भाष्योक्तरीत्या प्रसिद्ध स्थूलादिवैलक्षण्यमुच्यते । स्थूलाण्वादिपदस्य भावप्रधानत्वे तु लौ किकस्थौल्यादिराहित्यमनेनोक्तं भवति । 'अलोहितं' लोहितशब्दित रक्ताद्युपलक्षितप्राकृतरूपसामान्यरहितम् । 'अस्नेहं' प्राकृतस्नेहरहि तम् । 'अच्छायं' 'छायात्वविद्या सम्प्रोक्ता' इति वचनादज्ञानरहित म् । जीवदेहस्येव छायारहितं च । 'अतमः' आवरणरहितम् । 'अ

'अस्थूलमनणु' ( बृ. ५-८-८. ) इत्यादिना स्थूला
णवादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च ।
( १४ ) 'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको यो

वायु' पीडारूपश्वासोच्छ्वासरहितम् । यद्वा—व्यासतीर्थीयोक्तरीत्या अवाय्वनाकाशमतेजस्कमित्येतैस्तदारब्धशरीररहितमित्युच्यते । अत एव 'अच्छायमतमोऽवाय्वनाकाशम्' इत्यत्र सर्वात्मना निषेध इत्युक्तं सुधाटीकयोः । 'असङ्गं' सर्वगतमपि तत्कृतलेपरहितम् । अरसमगन्धमित्याभ्यामुपलक्षणया प्राकृतरसगन्धादिराहित्यमुच्यते । अचक्षुष्कमित्यादिना प्राकृतस्वभिन्नचक्षुरादिराहित्यम् । 'अतेजस्कं' प्राकृतवर्चोरहितम् । 'अप्राणं' उक्तचक्षुरादिव्यतिरिक्तप्राकृतज्ञानेन्द्रियकर्मेन्द्रियरहितम् । व्यासतीर्थीयोक्तरीत्या प्राणवायुरहितमिति वा । 'अमुखं' प्राकृतविग्रहरहितं तादृशमुखादिरहितं वा । 'अमात्रं' परिमितिशून्यम् । मीयन्ते एभिरिति मात्रा इन्द्रियाणीति टीकोक्तेः अमात्रं चक्षुरादीन्द्रियरहितमिति व्यासतीर्थीयोक्तिः । सर्वात्मना शरीरारम्भकपञ्चमात्राशून्यं वा । न विद्यतेऽन्तरं बाह्यं च यस्मात्तदनन्तरमबाह्यं, इदमेव सर्वस्मादन्तरं बाह्यं चेत्यर्थः । 'तत्' ब्रह्म 'किं च न' अन्नादिकं शुभमशुभं वा

साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्ति विनाप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुजिः ॥

इति स्मृतेरुपजीवनार्थं 'नाश्नाति' नात्ति । 'कश्चन' कोऽपि समर्थः 'तत्' ब्रह्म 'नाश्नाति' न संहरतीति ॥

( १४ ) लौकिकस्थौल्यादिराहित्यं कथं विष्णुतत्त्वनिश्चायकं, तद्धर्मत्वेनानिश्चितत्वादित्यत आह—अस्थूल इति ॥ 'अस्थूलः' लौकिकमहत्त्वरहितः, 'अनणुः' लौकिकाणुत्वरहितः, 'अमध्यमः' लौकिकमध्यमपरिमाणरहितः । न च परिमाणादिराहित्ये विष्णोरस्वभावत्वापत्तिरिति वाच्यम् । लौकिकस्थौल्यादिराहित्येऽप्यलौकिकपरिमाणादिसद्भावादित्याह—मध्यम इत्यादिना । न चानेन स्थूलत्वादेरनुक्तेर्न चोद्यपरिहार इति वाच्यम् । 'मध्यमो व्यापकः' इत्यानुक्तेः स्थूलोणुश्चेत्युपलक्षकत्वात् । न च मध्यमपरिमाणवत्त्वे विष्णोरनित्यत्वापत्तिरिति वाच्यम् । अनित्यत्वानापादकमध्यमपरिमाणाभ्युपगमात् । तत्त्वप्रदीपे तु 'अमध्यमो' मध्यमपरिमाणनियतिवर्जितः 'व्याप्तोऽणु

ऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः'
इत्यादेर्विष्णोरेव ते धर्माः ।
( १५ ) अस्थूलोऽनणुरूपोऽसावविश्वो विश्व एव च ।
विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तमः ॥
इति च ब्राह्मे ॥ १२ ॥

---

मध्यमस्तथा' इत्युक्तेः मध्ये मीयमानत्वान्मध्यम इति व्याख्यातम् । अस्मिन् पक्षे नियतमध्यमपरिमाणशून्यत्वान्नानित्यत्वमिति परिहारोऽभिप्रेतः । न विद्यतेऽन्यो व्यापको यस्यासावव्यापकः । लोकविलक्षणव्यापक इति वा । 'व्यापकः' सर्वदेशकालव्यापी । आदिः कारणमनादिस्तच्छून्य उत्पत्तिशून्य इति वा । न विद्यते विश्वः पूर्णो यस्मादविश्वः । पूर्णत्वाद्विश्वः । यद्वा—'अविश्वो' लौकिकेष्वप्रविष्टः । 'विश्वः' जगद्धृदयं वा प्रविष्टः । 'सगुणो' ज्ञानानन्दादिगुणवान् । 'निर्गुणः' सत्त्वादिगुणहीन इत्यर्थः । 'इत्यादेः' इतिवाक्यात् । आदिशब्देन 'अणोरणीयान्महतोमहीयान्' ( कठ॰ २-२०॰ ) इति कठश्रुतिर्गृह्यते । 'ते' अस्थूलत्वादयः । यत इति निश्चिता इति शेषः । अस्य अतस्ते अक्षरस्य विष्णुत्वनिश्चायका भवन्तीत्युपस्कृतवाक्येनान्वयः । ननु तथाऽपि ते विष्णोरेवेति कथं, यस्मात्तेऽप्राकृतविग्रहे मध्यमाक्षरेऽपि सन्ति । नैष दोषः—यतस्ते तत्र भगवदपेक्षयैव सन्ति । अन्यानपेक्षा एव धर्मा ह्यत्र हेतुत्वेन विवक्षिताः ॥

( १५ ) ननु लौकिकपरिमाणादिराहित्यं कथं विष्णोर्युक्तं, लोके सर्वपदार्थानां प्राकृतपरिमाणस्यैव दर्शनादित्यत आह—अस्थूलेति ॥ 'असौ पुरुषोत्तमः' भगवान् 'अस्थूलोऽनणुरूपो भवति' प्राकृतलौकिकस्थूलाणुत्वरूपधर्मरहितवपुर्भवति । एवं 'अविश्वो विश्वश्च' लोकबाहर्भूतो लोकान्तर्गतश्च भवति । तथा विरुद्धधर्मरूपश्च भवति । लोके परस्परं विरुद्धाः स्थूलत्वाणुत्वादयो धर्माः स्वरूपभूता यस्य स तथोक्तः । कथमित्यतो घटकमाह—ऐश्वर्यादिति । अचिन्त्यैश्वर्यसामर्थ्यादित्यर्थः । ऐश्वर्यादेवेत्यनेन नात्रोपपादकान्तरमन्वेषणीयमित्युक्तं भवति । इति ब्रह्माण्डे इत्यस्य उक्तत्वात् युक्ता इत्यध्याहारेण ते धर्माः विष्णोर्युक्ता एवेति पूर्ववाक्येनान्वयः ॥ ३ ॥

॥ इति अक्षराधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) 'सदेव सोम्येदमग्र आसीत्' ( छा. ६-२. ) इत्यादिना सतः स्रष्टृत्वमुच्यते ।

( २ ) तच्च सत् 'बहु स्यां प्रजायेय' (छा. ६-२. ) इति परिणामप्रतीतेर्न विष्णुः ।

४. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽनेकप्रकरणात्मकं 'सदेव' इत्यादिस्थानं समन्वीयते । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयति—सदिति ॥ 'इत्यादिना' छान्दोग्यवाक्येन । आदिशब्देन 'एकमेवाद्वितीयं, ( छा.६-२-१. ) तत्तेजोऽसृजत, ( छा.६-२-३. ) सन्मूलाः सोम्येमाः, ( छा.६-८-६. ) सता सोम्य तदा सम्पन्नो भवति' ( छा.६-८-१. ) इत्यादिकं गृह्यते । तच्चेत्यतः तदित्याकृष्यते । तथा च इत्यादिना सतः 'तत्' जन्मनयोक्तं 'स्रष्टृत्वं' अनन्याधीनकारणत्वम् । उपलक्षणमेतत् । सर्वोत्तमत्वसर्वाधारत्वसुतिगम्यत्वादिकं च 'उच्यते' प्रतिपाद्यते इति योजना । अनेन जन्माधिकरणोक्तकारणत्वस्य विष्णवन्यस्मिन् प्रधाने आक्षेपात्तेनास्य आक्षेपिकी सङ्गतिरुक्ता भवति । तथा विषयवाक्यम्, सदाख्यो विषयश्चोक्तः । 'सदेव' इत्युद्दालकवाक्यम् । हे 'सोम्य' भक्तिज्ञानलक्षणसोमार्ह श्वेतकेतो 'इदं' अस्य जगतः 'अग्रे' तत्सृष्टेः पूर्वं प्रलये सच्छब्दोक्तं ब्रह्मैवासीत् स्वातन्त्र्येणेति शेषः । तत्सत् 'एकमेवाद्वितीयं' स्वगतस्वावयवभेदाभेदशून्यं सर्वोत्तमम् । प्रजाः 'सन्मूलाः' सद्ब्रह्मैव मूलं यासां तास्तथोक्ताः । 'तदा' सुप्तौ सता सम्पन्नो भवति सुप्त इति सिद्धान्ते श्रुत्यर्थः । ब्रह्मलक्षणाभिधायकानेकवाक्यसङ्ग्राहकादिशब्दप्रयोगेन सिद्धान्तेऽप्यत्र प्रधानस्य प्रतिपाद्यत्वाभ्युपगमेनानिष्टाभावादधिकरणवैयर्थ्यमिति शङ्का निरस्ता भवति । अत्र प्रकरणे श्रुतानां ब्रह्मलक्षणानां प्रधानेऽसम्भवेन ब्रह्मणोऽपि प्रतिपाद्यत्वेन प्रधानमात्रस्य प्रतिपाद्यत्वानभ्युपगमात् ॥

( २ ) सयुक्तिकं पूर्वपक्षयति—तच्चेति ॥ चशब्दः प्रधानमिति पदाकर्षकोऽवधारणे च । तदित्यावृत्तं विपरिणम्यते । तथा च 'तत्' छान्दोग्ये श्रुतं सत्प्रधानमेव भवेत्, न तु विष्णुः । कुतः ? 'तस्य' स

( ३ ) स हि 'अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यादिनाऽविकारः प्रसिद्ध इति ।

( ४ ) अतो ब्रवीति—

सू—ॐ ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ ॐ ॥ १३ ॥

'तदैक्षत' इतीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते ।

तो 'बहु स्याम्' इत्युत्तरवाक्येन बहुभावाख्यपरिणामस्य विकारस्य प्रतीतेरिति योजना । 'प्रजायेय' प्रजनयेयं जगत्सृजानि । तदर्थं 'बहु स्याम्' नियामकबहुरूपी भवेयमिति । 'बहु स्याम्' तदर्थं प्रजायेयेति वा श्रुत्यर्थः ॥

( ३ ) विकारित्वप्रतीतावपि कुतोऽयं न विष्णुरित्यत आह—स हीति ॥ 'हि' यस्मात् 'सः' विष्णुः 'अविकारः सदा' इत्यादिप्रमाणैरविकारः 'प्रसिद्धः' तत्वेन निश्चितस्तस्मात् तदसम्भवात् प्रधाने च तत्सम्भवात् अत्र च विकारप्रतीतेः तत्सत् न विष्णुः, किं तु प्रधानमेवेति योजना । श्रुतौ द्वितीयस्य सदाशब्दस्य सदाऽविकार इत्यन्वयः । आद्यस्य तु सदा 'शुद्धो' निर्मल इति ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ सूत्रोक्तं व्यपदेशं दर्शयति—तदिति । ईक्षतीति धातुनिर्देशेन तदर्थेक्षणक्रिया लक्ष्यते । ईक्षतिकर्मेति सामानाधिकरण्यं तत्कर्तृत्वपरम् । तथा च 'तदैक्षत' इति श्रुतावीक्षणाख्यव्यापारे कर्तृत्वोक्तेरित्यर्थः । यद्वा-कर्मशब्देन सृष्ट्यादिक्रियोच्यते । तथात्वे वैयधिकरण्यम् । ईक्षतिपूर्वकसृष्ट्यादिव्यपदेशादित्यर्थः । समन्वयसूत्रात्तदित्यस्य अनुषङ्गसम्भवेऽपि 'एको नारायण आसीत्स मुनिर्भूत्वा' ( ) इत्यादिसमाख्यामपि प्रमाणीकर्तुं स इत्युक्तम् । तदनूद्य विष्णुरिति व्याख्यातम् । विष्णुरेवेत्यन्वयः । एवेति तुशब्दार्थः । अनेन समन्वयसूत्रात्तुशब्दमात्रमनुवर्तनीयमिति सूचितम् । सूत्रे समन्वेतव्यानुक्तेराह–अत्रेति । 'सदेव' इत्यादिस्थान इत्यर्थः । सच्छब्देनेति शेषः । तथा चात्र प्रकरणजाते सच्छब्देन य उच्यते, स विष्णुरेव, न तु प्रधानमिति साध्यवाक्यार्थः । अनेन अत्र सदेवेत्यादिस्थाने सच्छब्देनोच्यमानः स विष्णुरेव, न प्रधानम् । कुतः ? 'ईक्षतिकर्मव्यपदेशात् सः' ततः 'तदैक्षत' इतीक्षणाख्यक्रियाकर्तृत्वश्रवणादीक्षितृत्वसृष्ट्यादिक्रिययोर्वा श्रवणाज्जडप्रकृतौ च

( ५ ) 'नान्योऽतोऽस्ति द्रष्टा' ( बृ.५-७-२३. ) 'नान्यदतोऽस्ति द्रष्टृ' ( बृ.५-८-११. ) इत्यादिना तस्यैव हि तल्लक्षणम् ।

( ६ ) बहुत्वं चाविकारेणैवोक्तम् 'अजायमानो बहुधा वि

तदसम्भवादिति सूत्रार्थ उक्तो भवति । सूत्रे सच्छब्देनेति शेषं विना स इत्यस्यावृत्तिः, तत्रैकस्य प्रतीकग्रहणार्थत्वमिति पक्षे ईक्षतिकर्मव्यपदेशात् 'सः' 'सोऽकामयत' ( तै. २- ६. ) इत्यादिप्रकरणप्रतिपाद्यः स विष्णुरेव भवेत्, न प्रधानमित्यर्थोऽवसेयः ॥

( ५ ) नन्वीक्षणकर्तृत्वं विष्णुवत्प्रधानस्य किं न स्यादित्यतश्चेतनस्यापि इह हेतुत्वेनाभिमतं मुख्येक्षणं न सम्भवति, किमु जडस्येत्याशयेन तत्र प्रमाणमाह—नेति ॥ 'अतो' ब्रह्मणः सकाशात् 'अन्यः' स्वातन्त्र्येण द्रष्टा द्रष्टृ च नास्तीति वाजसनेयप्रकरणद्वयगतवाक्यद्वयस्यार्थः । आदिशब्देनैवंजातीयकं वाक्यं गृह्यते । 'तस्य' विष्णोरेव। हिशब्दः प्रसिद्धौ । स्वातन्त्र्येणेक्षणकर्तृत्वलक्षणं लिङ्गं उक्तमिति शेषः । अस्य तस्मान्न लिङ्गस्य अन्यगामित्वं मन्तव्यमित्युपरकृतवाक्येनान्वयः ॥

( ६ ) ननु विष्णोरविकारितया सिद्धत्वेन तत्र बहुभावाख्यविकारान्वयायोगान्निरवकाशविकारित्वलिङ्गेनात्रेक्षतिर्गौणो व्याख्येयः । 'सत्त्वात्सञ्जायते ज्ञानम्' इति स्मरणात् ज्ञानोपादानतया सिद्धे प्रधाने तत्कर्तृत्वासम्भवेन तत्र तस्यामुख्यत्वादित्यत आह–बहुत्वं चेति ॥ चस्त्वर्थः । 'अविकारेण' विकारित्वं विनैव स्वरूपबहुत्वेनैवेत्यर्थः । इत्यादिनोक्तमित्यन्वयः । तथा च बहुत्वस्य सावकाशत्वात् न तद्बलेन ईक्षतेर्गौणत्वं कल्पनीयमिति भावः । यद्वा—'बहुत्वं' 'बहु स्याम्' इति बहुभाववचनं च 'उक्तं' व्याख्यातम् । तथा च इत्येवमादिप्रमाणवाक्येन 'बहु स्याम्' इति बहुभाववचनं 'अविकारेण' विकारं विनैव नियामकस्वरूपबहुत्वेनैव मुख्यप्रतिपाद्येनैव युक्तमित्युक्तं इति योजना। तथा च—सिद्धान्ते 'बहु स्याम्' इत्यस्य तत्तन्नियामकस्वरूप बहुभावसङ्कल्पोऽर्थ इत्युक्तं भवति । न चैवं नियामकस्वरूपबहुभावसङ्कल्पानन्तरं नियम्यसृष्टिरयुक्तेति वाच्यम् । गुरुत्वराजत्वादेः शिष्यभृत्यसापेक्षत्वेन तत्सङ्कल्पानन्तरं शिष्यादिसम्पादनवत् नियामकताया नियम्यसापेक्षत्वेन नियामकबहुभावसङ्कल्पानन्तरं तत्सापेक्षनियम्य

जायते' (तै. आ. ३ - १४.) इति ॥

—*-:*:-*—

५. अधिकरणम् ॥

(१) चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तत्र 'अथ य

---

सृष्टेर्युक्तत्वात् 'अजायमानः' अविकुर्वाणः इति श्रुत्यर्थस्तु द्युभ्वादि नयेऽभिहितः ॥ ४ ॥

॥ इति सदधिकरणम् ॥

५. अधिकरणम् ॥

(१) अत्राधिकरणे सर्वाधारतयाऽन्वेष्टव्यतया च साक्षाद्वा व्यवधानेन वा सामान्यतो हृत्पद्मस्थत्वलिङ्गस्य ब्रह्मणि समन्वयः क्रियते । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षयति–चन्द्रेति ॥ 'एतस्य वा अक्षरस्य' ( बृ.५-८-९. ) इत्यादिनेति वर्तते । आदिपदेन द्यावापृथिव्यादिकं गृह्यते । ततः किमित्यत आह–तत्रेति । तदित्यावर्तते । चः समुच्चयेऽवधारणे च । तथा च 'तत्र' छन्दोगश्रुतौ यदक्षरनयोदाहृतवाक्योक्तं चन्द्रादित्याधारत्वं तदेव तथा तत्समानाधिकरणं हृत्पद्मस्थत्वं च आकाशस्य 'अथ' इत्यादिना वाक्येन प्रतीयत इति योजना । यद्यपि बृहद्भाष्ये अक्षरनयोदाहृत बृहदारण्यकश्रुतिगतसूर्यचन्द्रपदयोर्ब्रह्मरुद्रपरतया व्याकृतत्वादेवमनुवादोऽनुपपन्नः। तथाऽपि तयोः प्रसिद्धचन्द्रसूर्यपरत्वस्याप्यनुमतत्वादेव मुक्तिः। यद्वा–अत्र भाष्येऽपि चन्द्रादित्यपदे रुद्रब्रह्मपरे । अत एव तत्त्वप्रदीपे अक्षरनये 'अहं सोमम्' (ऋ.१०-१२५-२.) इति वचने सोमशब्दो रुद्रपरतया व्याकृतः । तथा च न कोऽपि विरोधः । अनेनाक्षरनयोक्तचन्द्रादित्याद्याधारत्वस्य साक्षात् हृत्पद्मस्थाकाशनिष्ठताक्षेपात्तेन अस्याक्षेपिकी सङ्गतिरुक्ता भवति । एवं सर्वाधारत्वान्वेष्टव्यत्वसमानाधिकरणः साक्षाद्व्यवधानेन वा सामान्यतो हृत्पद्मस्थत्वरूपो विषयश्च दर्शितः । न चैवं 'चन्द्रादित्य' इतिभाष्येण स चन्द्रादित्याद्याधारः किं दहराकाशः स्यात्? आहोस्वित्तत्स्थः कश्चित्? इति तत्त्वप्रदीपेन च विरोध इति वाच्यम् । तयोरक्षराधिकरणाक्षेपेण अत्र पूर्वपक्ष इति दर्शयितुं प्रवृत्तत्वेन विषयप्रदर्शनायाप्रवृत्तत्वात् । 'आकाशस्य' इत्यनेन प्रसिद्धभूतस्याकाशस्यैव सर्वाधारतया साक्षात् हृत्प

दिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः . . किं तदत्र विद्यते . . ' (छा.८-१.)

ध्यस्थत्वमिति पूर्वः पक्षः प्रदर्शितः । तथा प्रश्नप्रतिवचनपूर्वकं साक्षादाकाशस्यैवात्र सर्वाधारतया हृत्पद्मस्थत्वकथनादिति पूर्वपक्षयुक्तिश्च प्रदर्शिता भवति । अत्र यद्यपि ' अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेद्ब्रूयुः . . किं तदत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्यमिति । स ब्रूयाद्यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणि ' इत्यादि समग्रवाक्यमुदाहर्तव्यम्, न तु विच्छिद्य विच्छिद्य । तथाऽपि अपेक्षितांशोदाहरणेनैव पूर्तेः, विषयपूर्वपक्षयुक्त्यादेरेतावतैव ज्ञातुं शक्यत्वादुपयुक्तमात्रमुदाहृतम् । यद्यपि ' यदिदमस्मिन् ' इति श्रुतिपाठः । तथाऽपि समानजातीयश्रुत्यन्तरोपसङ्ग्रहार्थैवमुदाहृतमिति ध्येयम् । श्रुतावथशब्दः प्रमेयान्तरारम्भार्थः । ' ब्रह्मपुरं ' इत्येतत् ब्रह्मणः पुरं निवासस्थानमिति ब्रह्मैव पूर्णत्वात्पुरमिति च द्वेधा व्याख्येयम् । ' अन्तर्हृदये ' इति सप्तम्यन्तम् । ' आकाशः ' इति प्र थमान्तम् । तथा च—एतस्मिन् ब्रह्मपुरे शरीरे यत्पुरं ब्रह्मास्ति ' अस्मिन् ' तस्मिन्ब्रह्मणि ' दहरं ' दभ्रमल्पं ' पुण्डरीकं ' अब्जं ' वेश्म ' तस्य सद्मरूपमस्ति अस्मिन् ' अन्तर्दहरः ' अल्पो भूताकाशोऽस्ति । किं चातः ? ' तस्मिन् ' आकाशेऽन्तर्यद्वर्तते ' तदन्वेष्टव्यं ' ज्ञातव्यं मार्गितव्यं वा । ननु न घटादिवदन्वेषणं युक्तम्, अप्रत्यक्षत्वादित्यतस्तदेव विवृणोति—तद्वावेति । वावेत्यवधारणे । तथा च तदेव ' विजिज्ञासितव्यं ' विचारितव्यम् । इति गुरुणोक्ते ' तं ' गुरुं प्रति ' चेत् ' यदि शिष्याः ' ब्रूयुः ' पृच्छेयुः । किमिति ? ' अत्र ' भूताकाशे यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्युक्तं ' तत् ' आधेयस्वरूपं ' किं ' किमहिमं चेति । न च ब्रह्मपुरे ब्रह्मणो वेश्मेत्युक्त्यैवाकाशस्य ब्रह्मत्वनिश्चयात्प्रश्नायोग इति वाच्यम् । अन्यपुरेऽप्यन्यस्य वेश्मसम्भवादन्यवेश्मन्यप्यन्यस्यावस्थानसम्भवाच्चदुक्तेरनिश्चायकत्वात् । एवं शिष्यैः पृष्टे ' सः ' गुरुर्ब्रूयात् । किमिति? हृदोऽन्तः अन्तर्हृत् तस्मिन्नयतेऽस्तीति व्युत्पत्त्या ' अन्तर्हृदये ' तच्छब्दबोध्ये हृत्पद्मगतभूताकाशे द्यावापृथिव्याद्याश्र

'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि ' ( छा. ८-१. ) इत्यादिनाऽऽकाशस्य प्रतीयते ।

( २ ) स चाकाशो न विष्णुः । ' तस्यान्ते सुषिरं सूक्ष्मं त

यः ' आकाशः ' तदाख्यः परमात्माऽस्तीति । नन्वणौ तस्मिन् कथं द्यावापृथिव्याद्यवस्थितिरित्यतस्तस्य व्याप्तत्वमाह—यावानिति । 'अयं ' बहिःस्थितः ' आकाशः ' तदाख्यो भगवान् गुणतः परिमाणतश्च यावान् एष आन्तरोऽपि तावानेव । तथा चाणावपि रूपे ईशशक्त्या महत्तत्त्वस्यापि सत्त्वाद्व्याप्तस्य तस्यानेकाधारत्वं युज्यत एवेति भावः ॥

अन्यपरित्यागेनास्यैव जिज्ञास्यत्वे को हेतुरित्यतोऽस्य सर्वाधारत्वाख्यं महिमानमाह—उभ इत्यादिना ॥ अस्मिन्नन्तरे ये उभे मुक्तामुक्ते द्यावापृथिव्यौ देव्यौ ' समाहिते ' समवस्थिते । एवमुभयविधौ अग्निश्च वायुश्चेत्येतौ देवौ समाश्रितौ । तथा उभौ मुक्तामुक्तौ सूर्याचन्द्रमसौ विद्युत् नक्षत्राणि च समाश्रितानीति छान्दोग्यभाष्यरीत्या श्रुत्यर्थः । न्यायविवरणे तद्विवरणरूपटीकायां—' तस्मिन् यदन्तः ' इत्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युक्तम् । न च पद्मस्थस्य ब्रह्मत्वासिद्धिः । शरीरपुण्डरीकयोर्ब्रह्म प्रति पुरत्ववेश्मत्वोक्त्यैव अन्वेष्टव्यस्य ब्रह्मत्वसिद्धेः । तथा च पद्मे ब्रह्मास्तीत्युक्तेऽपि तद्ब्रह्म किंप्रकारमिति भावेन पुनः ' किं तदत्र विद्यते ' इति पृष्टे तत्प्रकारज्ञापनाय 'यावान्' इत्याद्याह गुरुः । अनेन च यद्ब्रह्मान्वेष्टव्यतयोक्तं तद्ब्रह्मान्तर्हृदये यावानेषः प्रसिद्धाकाशस्तावान् सर्वोऽप्याकाशो वर्तते । तस्मिंश्चाकाशे पृथिव्यादिकं सर्वं समाश्रितम् । अपहतपाप्मत्वादिगुणकं च तदित्येवमाकाशादिसर्वाश्रयत्वादपहतपाप्मत्वादिप्रकार उक्तो भवतीति प्रकारान्तरेण व्याख्यातम् । पूर्वपक्षी तु—' हृदय आकाशे ' इति पदं सप्तम्यन्तं कृत्वा दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इति वा ' आकाशः ' इति प्रथमान्तं कृत्वा प्रागुक्तदहरभूताकाशमनूद्य यावानित्यनेन बाह्याकाशतुल्यतया तं विशिष्य जिज्ञास्यत्वेन तत्र द्यावापृथिव्यादिकमुच्यत इत्याह ॥

( २ ) नन्वस्त्वाकाशस्य सर्वाधारतया हृत्पद्मस्थत्वं तस्य चाकाशस्य ' आकाशस्तल्लिङ्गात् ' इति न्यायेन विष्णुत्वेन विष्णोरेव हृत्पद्मस्थ

स्मिन् सर्वं प्रतिष्ठितम्' ( महाना. ११. ) इति श्रुतेरिति।

( ३ ) अत आह--

सू—ॐ ॥ दहर उत्तरेभ्यः ॥ ॐ ॥ १४ ॥

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः

---

त्वं सिध्यतीत्यत आह—स चेति ॥ चस्त्वर्थः, प्रतिज्ञासमुच्चये वा। तथा च यस्सर्वाधारतया हृत्पद्मस्थत्वेन च श्रुत्युक्तः 'स चाकाशो न विष्णुः' भूतमेव न तु विष्णुरित्यर्थः। कुतो वा न विष्णुरित्यत आह—तस्यान्त इति। स चेत्यनुषक्तश्चशब्दोऽत्र बुद्ध्या विविक्तसुषिरपदेनान्वीयतेऽवधारणे चायम्। श्रुतिसमानोक्त्युपलक्षकं चैतत्। तथा च 'तस्यान्ते' इति वाक्ये 'सुषिरपदश्रुतेः' सुषिरशब्दश्रवणात् सुषिरस्य छिद्रात्मकप्रसिद्धाकाशस्यैव श्रुतेः सर्वाधारतया हृत्पद्मस्थत्वोक्तेः तत्समाख्यानादित्यर्थः। 'तस्य' 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्' इतिपूर्ववाक्ये प्रकृतस्य हृत्पद्मकोशस्य 'अन्ते' अन्तरे तन्मध्ये सूक्ष्मं 'सुषिरं' छिद्रमस्ति, तस्मिन् 'सर्वं' जगत्प्रतिष्ठितमिति तैत्तिरीयश्रुत्यर्थः ॥

( ३ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'इत्यादिभ्यः' इत्यादिरूपेभ्यः 'उत्तरेभ्यः' विषयवाक्यानन्तरभाविभ्यः 'शब्देभ्य उक्तेभ्यः' इति शेषः। इत्याद्युत्तरवाक्येभ्य इति पर्यवसितार्थः। यद्वा—'गुणेभ्यो' गुणवचनेभ्य इत्यर्थः। हेत्वसिद्धिपरिहाराय श्रुत्युदाहरणम्। आदिपदेन 'विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यादिकं गृह्यते। गुणेभ्य इत्यनेनोत्तरपदमुत्तरत्रश्रुतानेकशब्दवाच्यगुणोपलक्षकमित्युक्तं भवति। 'दहरे' हृत्पद्मगताल्पाकाशे इत्यनेन सूत्रे 'दहरे' इति सप्तम्यन्तं पदं, न परमत इव प्रथमान्तमित्युक्तं भवति। स्थितोऽन्वेष्टव्यतयोक्त इति शेषः। समन्वयसूत्रादनुवृत्तस्य विधेयपरस्य तत्त्वित्यस्यार्थो विष्णुरेवेति। अनेन-'यः' इति दहरवाक्यादुत्तरवाक्ये श्रुतेभ्यो गुणेभ्यो 'दहरे' विजिज्ञास्यतयोक्तो 'तत्तु' विष्णुरेव न भूताकाशादिरिति सूत्रार्थ उक्तो भवति। यो हृत्पद्माकाशगतः परमात्मा 'न वधेनास्य हन्यते' ( छा.८-१-५. ) इति प्राक् शरीरस्य नाशेनावध्यत्वेनोक्तः सः 'अपहतपाप्मा' नित्यमेव स्वतोऽपहतपाप्मा पापात्यन्ताभाववा

स विजिज्ञासितव्यः ' ( छा. ८-७. ) इत्यादिभ्य उत्त
रेभ्यो गुणेभ्यो दहरे विष्णुरेव ।

( ४ ) ' योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति '
( बृ. ५-५. ) ' स एष सर्वेभ्यः पाप्मभ्य उदितः '
( छा. १-६-७. ) इत्यादिना विष्णोरेव हि ते गुणाः ।

( ५ ) नित्यतीर्णाशनायादिरेक एव हरिस्स्वतः ।
अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि ॥
इति पाद्मे ॥

---

निति यावत् । अत एव न तत्कार्यं जरादिकमस्येत्युच्यते–विजर इत्यादिना । ' अविजिघत्सः ' बुभुक्षारहितः । ' अपिपासः ' पानेच्छारहित इति । ' बुभुक्षादिना पीडाभाव उच्यते ' इति ज्ञानपादीयटीकोक्तेर्नादनपानेच्छाभावोऽभिधीयते, प्रमाणबाधितत्वात् । किन्तु तत्पीडाभावः । अत्र हेतुः—सत्यकाम इति । तस्य यदिष्टं तत्स्वत एव भवेदिति सत्यकामः । तत्रापि हेतुः—' सत्यसङ्कल्पः ' अप्रतिहतसङ्कल्प इति । य एवं भूतः सोऽन्वेष्टव्य इति श्रुत्यर्थः ॥

( ४ ) अपहतपाप्मत्वादिकं कथं विष्णुत्वनिश्चायकं, तद्गतत्वेनासिद्धत्वादित्यत आह—य इति ॥ बृहदारण्यकश्रुतिरियम् । ' अशनाया ' अशनेच्छा । ' पिपासा ' पानेच्छा । ते ' अत्येति ' अतिक्रम्य वर्तते । यश्च ' शोकं ' दुःखं ' मोहं ' मूर्छां ' जरां ' मरणं चात्येतीत्यर्थः । अत्रत्यस्य यच्छब्दस्य ' तमात्मानं विदित्वा ' इति तच्छ्रुतिस्थतच्छब्देनान्वयः । ' स एषः ' इति छन्दोगश्रुतिः । ' स एषः ' परमात्मा ' पाप्मभ्यः ' पापेभ्यः ' उदितः ' नित्यं स्वत एवोद्गतः पापरहित इत्यर्थः । ' इत्यादिना ' वाक्येन । आदिशब्देन सत्यकामत्वादिगुणान्तरबोधकवाक्यानि गृह्यन्ते । हिशब्दो यत इत्यर्थे । ते अपहतपाप्मत्वादिरूपोत्तरवाक्योक्ताः सिद्धा इति शेषः । तस्माच्च तेषां विष्णुलिङ्गत्वानिश्चयः इति वाक्यशेषेणास्यान्वयः । अन्यत्र पापाद्यभावस्य कथंचिद्योगेऽपि सर्वथा सत्यकामत्वादिकं न युज्यत इति ज्ञापनायादिशब्दबहुवचनयोः प्रयोगः ॥

( ५ ) तथाऽपि नैते गुणा विष्णोरेव, रमादिष्वपि सम्भवादित्यत आह—नित्येति ॥ ' स्वतः ' अन्यानपेक्षया नित्यं तीर्णा अशनायाद्यो येन स हरिरेक एव, नान्योऽस्ति । हरेरन्ये रमाब्रह्माद्यस्तु ' अशना

( ६ ) सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ।
( ७ ) सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता ॥
इति स्कान्दे ॥ १४ ॥
( ८ ) सू—ॐ ॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ ॐ ॥ १५ ॥

यादिकान्' अशनपानेच्छाशोकादिदोषान् 'तत्प्रसादात्' तस्य हरेरनुग्रहादेव 'तरन्ति' अतियन्ति, न स्वत इत्यर्थः। हिशब्दः प्रसिद्धौ। 'पाद्मे' उक्तमिति शेषः। अतो निरपेक्षगुणानामन्यत्राभावात् विष्णोरेवेत्युक्तमिति भावः॥

( ६ ) ननु रमादिष्वपहतपाप्मत्वादीनामन्यानधीनामामभावेऽपि यथा कथंचित्सत्त्वादन्यगतैस्तैः कथं विष्णुत्वनिश्चय इत्यत आह—सापेक्षेति ॥ 'सापेक्षं' अन्याधीनं 'निरपेक्षं' अन्यानधीनं तयोर्मध्ये इत्यर्थः। चोऽवधारणे , निरपेक्षमेवेति सम्बध्यते । अपहतपाप्मत्वादिकमिति विशेष्यं प्रकृतत्वाल्लभ्यते । 'स्वीकर्तव्यं' लिङ्गत्वेनेति शेषः। तथा च विवक्षितलिङ्गस्यान्यत्राभावात्तेन विष्णुत्वनिश्चयो भवत्येवेति भावः॥

( ७ ) किं च सापेक्षत्वनिरपेक्षत्वादिविशेषितानामपहतपाप्मत्वादीनामभावरूपाणामन्यत्राकाशादौ साक्षाद्वाऽभिमानिद्वारा वा यथा कथं चिद्वृत्तावपि न कथं चिदन्यत्र सत्यकामत्वाद्यस्तीति युक्तस्तेन विष्णुत्वनिश्चय इत्याह—सत्यकाम इति ॥ 'अव्ययं' अक्षीणकामममोघकामं सत्यकामं विष्णुं 'ऋते' विना 'परोऽन्यः' विष्णोरन्यः सत्यकामः सत्यसङ्कल्पश्च नास्ति। विष्णौ तद्भावस्य तदन्यस्मिन् तदभावस्य च प्रतिपादनाय वक्रोक्तिः। विष्णोरन्येषां रमादीनां क्वचिदागमे प्रतीयमानमपि सत्यकामत्वं 'तत्काम्यकामिता' विष्णुकामनाविषयविषयककामनावत्त्वरूपमेव भवेन्न मुख्यमित्यर्थः। तथा चापहतपाप्मत्वं स्वतः पराधीनं चेति यथा द्विविधं, न तथा सत्यकामत्वं किं त्वेकविधं, तच्च मुख्यं विष्णावेव, अन्यत्र तु पारिभाषिकमिति भावः। 'स्कान्दे' उक्तमिति शेषः। अतः सत्यकामत्वादिविवक्षया विष्णोरेव हि ते गुणा इत्युक्तं युक्तमिति भावः॥

( ८ ) युक्त्यन्तरेण विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयत्सूत्रमुपन्यस्यासिद्धिपरिहाराय श्रुत्युदाहरणपूर्वकं व्याचष्टे—गतीति ॥ 'इमाः' सु

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा. ८-३-२.) इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते।
(९) 'सता सोम्य तदा सम्पन्नो भवति' (छा. ६-८.) इति श्रुतेस्तं हि सुप्तो गच्छति।
(१०) 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' (छा.८-५-३.) इति लिङ्गं च तथा दृष्टम्।

माः प्रजाः 'अहरहः' प्रतिदिनमेतं 'गच्छन्त्यः' प्राप्यमाणाः 'एतं' ब्रह्मलोकं ब्रह्मणो विष्णोरावासस्थानभूतं हृत्पद्मं तद्‌द्वारा तत्रस्थं ब्रह्म साक्षाल्लोकपदोक्तं ब्रह्माख्यमाश्रयं वा 'न विन्दन्ति' न विजानन्ति, स एष आत्मा हृदीति श्रुत्यर्थः। इतीति। इति छन्दोगवाक्ये 'सुप्तस्य' चेतनस्य 'तद्गतिः' अहरहो हृद्गतं ब्रह्मलोकं प्रति गतिः प्राप्तिः 'उच्यते' व्यपदिश्यत इत्यर्थः। 'ब्रह्मशब्दः' इत्यत्रापि तदिति पदं बुद्ध्या विविच्य विपरिणामेन सम्बध्यते। तथा च तस्मिन् प्राप्यमाणे हृद्गते ब्रह्मलोके 'ब्रह्मशब्दः' 'उच्यते' श्रूयते इत्यर्थः। उच्यते च इत्यपि सम्बन्धः। चः समुच्चये। यत इति शेषः। अस्यातोऽपि दहरे विष्णुरेवेति प्रधानसाध्येनान्वयः॥

(९) सुप्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह–सतेति॥ हे 'सोम्य' भक्तिज्ञानार्ह श्वेतकेतो 'तदा' सुप्तिकाले 'सता' ब्रह्मणा 'सम्पन्नः' सङ्गतो भवतीत्यर्थः। उद्दालकवाक्यमेतत्। श्रुतेरिति पञ्चमी। 'तं' विष्णुम्। हिशब्दः प्रसिद्धौ। 'गच्छति' प्राप्नोति। इति ज्ञायते इति शेषः। तथा च सुप्तप्राप्यत्वस्य विष्णुलिङ्गत्वेन श्रुतिप्रसिद्धत्वात् तेन विष्णुत्वनिश्चयो भवतीति भावः॥

(१०) 'लिङ्गं च तथा हि दृष्टम्' इति सूत्रशेषं हेत्वन्तरपरतया व्याचष्टे—अरश्चेति॥ चशब्दो हेतुसमुच्चये। यथा सुप्तगम्यत्वं 'अहरहः' इति श्रुतौ हृत्पद्मस्थे दृष्टम्, तथा अरण्यनामामृतसमुद्रद्वयाश्रयलोकवत्त्वरूपं लिङ्गमपि 'अरश्च' इति श्रुतौ हृत्पद्मस्थे दृष्टं श्रुतमिति। उपमायां तथाशब्दः। अनेनासिद्धिः परिहृता। न च गतिशब्दयोरिवास्य सन्निधौ हृत्पद्मस्थस्यानुक्तेरसिद्ध्यनिवृत्तिरिति वाच्यम्। हृत्पद्मस्थस्य ब्रह्मण आवासत्वेन निमित्तेन तल्लोकभूते हृत्पद्मे 'एतं ब्रह्मलोकम्' इतिप्रयुक्तस्य ब्रह्मलोकशब्दस्यारण्याश्रयलोकेऽपि प्रयोगात्तन्मुखेन तादृशलोकवत्त्वरूपलिङ्गस्य हृत्पद्मस्थब्रह्मनिष्ठतायाः प्रा

( ११ ) अरश्च वै ण्यश्च सुधासमुद्रौ
तत्रैव सर्वाभिमतप्रदौ द्वौ ।

मत्वात् । दृष्टमित्यनन्तरं यत इति शेषः । अस्यातोऽपि दहरे विष्णुरेवेति प्रतिज्ञावाक्येनान्वयः । श्रुतौ हवा इति निपातौ प्रसिद्धिद्योतकौ। समुद्रयोरन्योन्यसमुच्चये च शब्दौ । तथा च ब्रह्मणो विष्णोर्लोके श्वेतद्वीपे अरण्याख्यार्णवौ सुधासमुद्रौ अर्णवोपमे सुधासरसी वा स्त इति श्रुत्यर्थः ॥

( ११ ) ननु हृत्पद्मस्थस्यारण्याश्रयलोकवत्त्वलिङ्गश्रवणेऽपि कुतोऽयं विष्णुरित्यतोऽरण्याश्रयत्वस्य विष्णुलोकैकालिङ्गत्वेन स्मृतिसिद्धत्वादित्याशयेन सौत्रहिशब्दाभिप्रेतां स्मृतिं दर्शयति—अरश्चेति ॥ वै शब्दः प्रसिद्धौ । चशब्दौ परस्परसमुच्चये । 'तत्रैव' क्षीराब्धिमध्यस्थितविष्णुलोक एव 'सर्वाभिमतप्रदौ' सर्वेष्टकरौ स्त इत्यर्थः । एवकारोऽन्यत्र सत्त्वव्यावर्तकः । तेनारण्याश्रयलोकवत्त्वलिङ्गस्य विष्णुत्वेनाव्यभिचारः सिद्ध्यति । अत एव भाष्ये तस्यैवेत्येवकारः। 'इत्यादिना' पुरुषोत्तमध्यानचक्रवाक्येन 'तस्यैव' विष्णोरेव 'तत्' सुधार्णवद्वयाश्रयलोकवत्त्वं 'लक्षणत्वेन' लिङ्गत्वेन 'उच्यते' प्रतिपाद्यते इत्यर्थः । 'हि' यस्मादित्यर्थे । तस्मादेतल्लिङ्गबलात् विष्णुत्वनिश्चयो युक्त इति वाक्यशेषः । यद्वा—ब्रह्मलोकमिति हृत्पद्मस्य विष्णुलोकत्वोक्तेः तदन्तर्गतो विष्णुरित्युक्तं, ब्रह्मलोकपदं कुतो विष्णुलोकवाचीत्यत आह—अरश्चेति । ब्रह्मलोकपदस्य विष्णुलोके 'अरश्च' इतिवाक्ये प्रयोगादत्र हृत्पद्मे प्रयुक्त 'एतं ब्रह्मलोकम्' इतिपदमपि विष्णुलोकपरमेव । न च 'अरश्च' इतिश्रुतावपि ब्रह्मलोकपदं कुतो विष्णुलोकपरमिति वाच्यम् । यतस्तत्रारण्याश्रयत्वलिङ्गं श्रुतमित्यर्थः । अथाप्यरण्याश्रयत्वस्य भगवल्लोकलिङ्गत्वं कुत इत्यत आह—अरश्चेति । अस्मिन् पक्षे सौत्रं लिङ्गपदं हृत्पद्मस्थस्य ब्रह्मत्वसाधकब्रह्मलोकपदाख्यहेतोर्विष्णुलोकपरत्वसाधकारण्याश्रयत्वाख्यहेतुपरम् । अतएवास्य लिङ्गस्य हेतुगतविशेषसाधकत्वेन हृत्पद्मस्थस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतुत्वाभावात्सूत्रे लिङ्गशब्देन पृथगुक्तिः । पूर्वव्याख्यानेऽपि गतिशब्दयोरिवास्य लिङ्गस्य विष्णुनिष्ठताया उपपादनसापेक्षत्वेन स्पष्टत्वाभावाद्गतिशब्दलिङ्गैरित्यनुक्त्वा लिङ्गं चेति पृथगुक्तिर्युक्ता । अनेन-न केवलमुत्तरेभ्यो गुणेभ्यः, किन्तु गतिशब्दा

इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥

( १२ ) सू—ॐ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ ॐ ॥ १६ ॥

'एष सेतुर्विधृतिः' (छा.८-४.) इति धृतेः,

( १३ ) 'एष भूताधिपतिरेष भूतपालः' (बृ. ६-४-२२.) इ

भ्यां च 'अहरहः' इतिवाक्ये हृत्पद्मस्थनिष्ठतया श्रुताभ्यां सुप्तप्राप्यत्वब्रह्मशब्दाभ्यां च दहरे विष्णुरेवेति ज्ञायते। न केवलमेताभ्यामेव, किन्तु यतः 'अरश्च' इति श्रुतौ 'तथा' गतिशब्दयोरिव 'हि' विष्णुलिङ्गत्वेन स्मृतिसिद्धमरण्याश्रयलोकवत्त्वरूपं लिङ्गं हृत्पद्मस्थे विष्णुलोके प्रयुक्तब्रह्मलोकपदस्य हृत्पद्मे प्रयोगात् 'दृष्टं' श्रुतमतोऽपि दहरे विष्णुरेव। यद्वा—कुतोऽत्र प्रयुक्तस्य ब्रह्मलोकपदस्य विष्णुलोकपरत्वं? 'अरश्च' इति वाक्ये विष्णुलोके ब्रह्मलोकपदप्रयोगात्। अत्रापि 'एतं ब्रह्मलोकम्' इति तस्यैव प्रयोगात्। न च तत्रापि विष्णुलोकपरत्वं कुतः? यतोऽरण्याश्रयत्वं लिङ्गं 'दृष्टं' श्रुतमत इति सूत्रार्थ उक्तो भवति ॥

( १२ ) हेत्वन्तरेण विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—धृतेरिति ॥ 'इति धृतेः' इत्यस्य 'अस्मिन्नस्य' इतिपदानुवर्तनेनेत्यस्मिन्वाक्येऽस्य हृत्पद्मस्थस्य धृतिपदोक्तसर्वाधारत्वश्रुतेरित्यर्थः। अस्य दहरे विष्णुरेवेति प्रतिज्ञावाक्येनान्वयः। श्रुतौ विधृतिः सेतुरित्यन्वयः। तत्र विधृतिरित्येतत्सेतुत्वे हेतुः। तथा च य आत्मा हृत्पद्मस्थत्वेनोक्तः स एष 'एषां' भूरादिलोकानां 'असम्भेदाय' असाङ्कर्याय अविदारणायेति, व्यासतीर्थीयोक्तरीत्या वर्णाश्रमसाङ्कर्याभावायेति वा 'विधृतिः' धारणपोषणसमर्थोऽत एव सेतुरिव 'सेतुः' आश्रय इत्यर्थः। धारकत्वं च न धार्याद्बहिष्ठतया, किन्त्वन्तःकृतजगत्त्वेन, 'श्रितमस्मिन् जगत्सर्वमिति सेतुरितीरितः' इत्युक्तेः मुख्यार्थ एव वा सेतुशब्दः। यद्यपि 'स सेतुर्विधृतिः' इति छन्दोगश्रुतिपाठः। तथाऽपि शाखान्तराणामप्यत्रोपसंग्रहायैवमुक्तिः। एवमन्यत्रापीति सम्प्रदायविदः ॥

( १३ ) एवं सेतुसमुच्चायकसौत्रचशब्दस्य यथाश्रुतान्वयेन लिङ्गोक्तिपरतया धृतेश्चेत्यंशं व्याख्यायेदानीं समग्रं सूत्रं समानोक्तिरूपसमाख्यापरतया व्याचष्टे—एष इति ॥ धृतेरितिपदमत्रानुषज्यते। अस्मिन् पक्षे सौत्रचशब्द उपलब्धेश्चेत्यन्वेति। तथा च न केवलं धृते

स्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः।

लिङ्गात्, किन्तु 'धृतेः' धृतियुक्तायास्तद्बोधिकाया उपलब्धेः वाजसनेयके 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी' ( बृ. ६-४-२२. ) इत्याद्युक्त्वा आम्नातायाः 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' इत्युक्तेः समानोक्तेश्च दहरे विष्णुरेवेति योजना। समाख्यायाः कुतो विष्णुपरत्वमित्यत आह—एष इति। इत्यादीति लुप्ततृतीयाविभक्तिको निर्देशः। आदिशब्देन 'एष सर्वस्य वशी एष सर्वस्याधिपतिरेष सर्वेश्वरः' ( बृ. ६-४-२२. ) इति पूर्ववाक्यं 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' इत्युत्तरवाक्यं च गृह्यते। अत एव मध्यस्थवाक्यग्रहणं कृतम्। अस्य महिम्न इति व्यधिकरणषष्ठ्यौ। उपलब्धेरित्यावृत्तमत्रान्वेति। तथा च 'अस्मिन्' वाजसनेयके 'एष भूताधिपतिः' इत्यादिना वाक्येन 'अस्य' विष्णोर्भूताधिपतित्वादिमहिम्नः 'अस्मिन्' दहराकाशगते वस्तुनि 'उपलब्धेः' उक्तत्वादिति योजना। य एष सर्वस्याधिपतिः,यश्चैष सर्वेश्वरो,यश्चैष प्रसिद्धो 'भूताधिपतिः' भूत एवाधिपतिर्नास्याधिपत्यमादिमत् , यश्चैष भूत एव पालको, यश्च 'एषां' भूरादिलोकानां 'असम्भेदाय' अमेलनाय एषां 'विधरणः' विधारणसमर्थः, न केवलं सामर्थ्यमात्रं, किन्तु य एषां लोकानां 'सेतुः'आश्रयश्च, तमेतं भगवन्तं ब्राह्मणा विविदिषन्तीति श्रुत्यर्थः। अनेन—न केवलं पूर्वोक्तहेतुभ्यः, किन्तु विधृतेश्चास्मिन् प्रकरणे 'स सेतुर्विधृतिः' इतिसर्वाधारत्वलिङ्गश्रवणादपि दहरपद्मस्थो विष्णुरेव। न चास्य हृत्पद्मस्थत्वं कुत इति वाच्यम्। 'अस्य' हृत्पद्मस्थस्य 'महिम्नः' अपहतपाप्मत्वादेर्लक्षणस्य 'अस्मिन्' सर्वाधारे 'सर्वे पाप्मानोऽतो निवर्तन्ते' ( छां.८-४-१. ) इत्यनेन 'उपलब्धेः' उक्तत्वात्। न केवलं धृतेर्लिङ्गात्, किं तु धृतेर्धृतियुक्ताया उपलब्धेरुक्तेः। 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते . . एष सेतुर्विधरणः' इति वाजसनेयसमाख्यायाश्च दहरे विष्णुरेव। समाख्याया अपि कुतो विष्णुविषयत्वम्? 'अस्मिन्' वाजसनेयके 'अस्य' विष्णोः 'महिम्नो' भूताधिपतित्वादेरुक्तत्वादिति सूत्रार्थ उक्तो भवति। यद्यपि 'अस्य महिम्नः' इत्यादंशो भाष्ये धृतेश्चेत्यस्य लिङ्गपरतया योजनायां नान्वितः। तथाऽपि टीकायां 'सर्वे पाप्मानोऽतः' इति तल्लक्षणोक्तेश्चेत्युक्तत्वात् लिङ्गस्य

( १४ ) ' एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ' ( बृ.५-८-११. ) ' एतस्य वा अक्षरस्य प्रशासने गार्गि ' ( बृ. ५-८-९. )

( १५ ) ' स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः ' ' पतिं विश्वस्यात्मेश्वरम् ' ( महाना.११. ) इत्यादिश्रुतिभ्यस्तस्य ह्येष महिमा ।

( १६ ) सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः । इति च स्कान्दे ॥ १६ ॥

---

हृत्पद्मस्थत्वरूपपक्षधर्मोपपादकतयाऽपि योजनीयः ॥

( १४ ) यदुक्तं सर्वाधारत्वलिङ्गश्रवणात् हृत्पद्मस्थो विष्णुरिति, तत्र सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकं, तत्समानाधिकरणत्वेनासिद्धित्वादित्यत आह—एतस्मिन्निति ॥ 'एतस्य वा अक्षरस्य प्रशासने' इति प्रतीकग्रहणेन ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ ' इत्यादिबहुवाक्यानि सूचयति । इमान्यक्षरनये व्याकृतानि ॥

( १५ ) ननु समाख्याश्रुत्युक्तः सर्वेश्वरत्वादिमहिमा कुतो विष्णोरवगत इत्यत आह—स हीति ॥ ' स हि ' इत्यारभ्य ' स विष्णुः ' इत्यन्तमेकं वाक्यं श्रुत्यन्तरगतम् । ' सः ' प्रकृतः । ' हिः ' प्रसिद्धौ । ' पतिं विश्वस्य ' इति नारायणानुवाकस्थं वाक्यम् । ' विश्वस्य ' अचेतनप्रपञ्चस्य पतिं ' आत्मेश्वरं ' चेतनेश्वरं नारायणं तद्विश्वमुपजीवतीत्यर्थः । इत्यादीति । एवमादिश्रुतिवाक्येभ्य इत्यर्थः । आदिशब्देनै तज्जातीयं गृह्यते । तृतीयार्थे पञ्चमी । ' तस्य ' विष्णोः ' हिः ' प्रसिद्धौ हेतौ वा । ' एष सर्वेश्वरः ' ( बृ. ६-४- २२. ) इत्यादिमहिमा । अवगत इति शेषः । तस्मान्नैतेषां विष्णुस्वरूपसाध्यसामानाधिकरण्यासिद्धिरिति वाक्यशेषः ॥

( १६ ) ननु सर्वेश्वरत्वादिकं विष्णुवदन्यस्यापि किं न स्यादित्यत आह—सर्वेश इति ॥ अत्र सर्वजगच्छब्दौ चेतनाचेतनप्रपञ्चपरौ । यद्वा—जगतः पतिरिति प्रतियोगित्वेनैवोक्तस्यानुवादः । अथवा— ' पतिः ' पालकः । तथा च सर्वेश्वरः सर्वपालकश्च विष्णुरेक एव नान्योऽस्तीत्यर्थः । इति स्कान्द इत्यस्य एवकारोक्तपदाध्याहारेण तस्य ह्येष महिमेति पूर्वेणान्वयः । तस्मान्नैतल्लिङ्गानामन्यत्र सावकाशत्वं

(१७) सू—ॐ ॥ प्रसिद्धेश्च ॥ ॐ ॥ १७ ॥
'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदु
पासितव्यम्' ( महाना. १०. )
इति प्रसिद्धेश्च ॥

(१८) तदन्तस्स्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥

शंक्यमिति वाक्यशेषः ॥

(१७) समाख्यान्तररूपयुक्त्यन्तरेण विष्णोर्हृत्पद्मगताकाशस्थत्वं साधयत्सूत्रं पठित्वा व्याचष्टे—प्रसिद्धेश्चेति ॥ इतीत्यनन्तरं श्रुताविति शेषः । तस्येत्यनुवर्तते । 'तस्य' विष्णोः 'तस्य' हृत्पद्मस्थस्येति तदर्थः । अनेन—सूत्रेऽस्यास्मिन्निति पदद्वयं पूर्वसूत्रादनुवर्तनीयम् । तथा च न केवलं वाजसनेयसमाख्यानात्, किन्तु 'अस्मिन्' तत्रापि ति तैत्तिरीयश्रुतिवाक्ये 'अस्य' हृत्पद्मस्थस्य विष्णुत्वप्रसिद्धेश्च तत्समाख्यानादपि दहरपद्मस्थो विष्णुरेवेति सूत्रार्थ उक्तो भवति । 'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः' ( मुं.२-२-७. ) इत्याथर्वणे प्रसिद्धेश्च । 'य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः' ( तै.१-६-१. ) इति तैत्तिरीयवाक्यान्तरे प्रसिद्धेश्चेति सूत्रस्य यदुवृत्त्यन्तरं टीकायां सूचितं, तद्भाष्यस्थेतिशब्दस्याद्यर्थत्वमाश्रित्येति द्रष्टव्यम् । श्रुतौ 'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्' (महाना. १०-७.) इतिवाक्ये यत् 'दहरं' अल्पं परस्य ब्रह्मणः सद्मभूतं, अत एव विगतपापं देहाख्यब्रह्मपुरमध्ये संस्थं हृदयकमलं प्रकृतं तत्तत्रेति परामृश्यते । तथा च 'तत्रापि' पुण्डरीकेऽपि यत् 'दहरं' अल्पं गगनमस्ति तस्मिन् 'अन्तः' अन्तरे 'विशोको' विशोकं विशोकपदोपलक्षितं जरादिशून्यं यद्ब्रह्म तदुपासितव्यमित्यर्थः। विशोकः इति लिङ्गव्यत्ययः छान्दसः । तत्त्वप्रदीपे तु—लिङ्गव्यत्ययस्तस्य पुरुषत्वज्ञापनार्थः । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादावुदितगुणानामधिकरणैक्यबलेन सन्निधीयमानानामनुकर्षणार्थश्चेति प्रयोजनमुक्तम् ॥

(१८) ननु साक्षात् पद्मगतस्य विष्णुत्वाभ्युपगमे सुषिरश्रुतिविरोधः। एवं पद्मगताकाशस्यैव विष्णुत्वाभ्युपगमेऽपि सुषिरश्रुतिविरोधः, सुषिरशब्दस्याकाशवाचित्वात्। एतद्विहाय दहरपद्मस्याकाशत्वं, विष्णोस्त्वाकाशगतत्वं, तस्यैव सर्वाधारत्वमित्युपगमेऽपि सुषिरश्रु

( १९ ) सू—ॐ ॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ॐ॥१८॥
'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते,'
( छा. ८-१२-३. ) 'एष आत्मेति होवाच' ( छा.४-
१५-१. ) इति जीवपरामर्शात्स इति चेत्—
( २० ) न, तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

तिविरोधः। तत्र साक्षात्सुषिरस्य सर्वाधारत्वोक्तेरित्यत आह—तद न्तस्थेति ॥ बुद्ध्या विविक्तसुषिरश्रुतिपदं षष्ठ्यन्तमत्रान्वीयते। तथा च 'सुषिरश्रुतेः' सुषिरस्याकाशस्यैव साक्षात्सर्वाधारत्वप्रतिपादिकायाः 'तस्यान्ते' इति सुषिरपदघटितश्रुतेः 'तदन्तस्स्थापेक्षत्वात्' पद्मगत सुषिरान्तस्स्थपरमात्मानमपेक्ष्य प्रवृत्तत्वात्तस्य च सर्वाधारत्वान्न सुषिरश्रुतिविरोधोऽस्मदभ्युपगमस्येत्यर्थः। यथा मन्दिरस्थमञ्जूषान्तर्गतमपि वस्तु मन्दिरस्थमिति सञ्ज्ञायते, एवमिहापीति भावः। तदन्तस्स्थत्वेति पाठे परमात्मनः सुषिरान्तस्स्थत्वमपेक्ष्य श्रुतेः प्रवृत्तत्वादित्यर्थः॥

( १९ ) भगवतो हृत्पद्मस्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—इतरेति ॥ 'निष्पद्यते' इत्यनन्तरमित्युक्तस्येति शेषः। अस्य च समासप्रविष्टजीवपदेनान्वयः। अनेन सूत्रे अस्मिन्नस्येत्यस्यानुवृत्तिः। इतरपदं सिद्धान्त्यभिमतब्रह्मप्रतियोगिजीवपरम्। अत एव श्रुतावेष इति जीवपरामर्शः। सिद्धान्ते श्रुत्यर्थस्तु वक्ष्यते॥
( २० ) धृतिसूत्रात् 'अस्यास्मिन् उपलब्धेः' इत्यस्यानुवृत्तिमभिप्रेत्य परिहारांशं व्याचष्टे—नेति ॥ हृत्पद्मस्थो न जीव इत्यर्थः। कुतो नेत्यतस्तत्रानुवृत्तवाक्येन 'अस्मिन्' प्रकरणे 'अस्य' अपहतपाप्मत्वादेरुपलब्धेरित्यस्य हेतोर्लोभात्तमनुपन्यस्योक्तहेतोर्जीवे निरवकाशत्वोक्तिपरतयाऽसम्भवादित्यंशं व्याचष्टे—तस्येति। जीवस्येत्यर्थः। मुक्तभावमादाय जीवे सम्भवात् असिद्धिवारणाय—स्वत इति। स्वातन्त्र्येणेत्यर्थः। सत्यकामत्वादिकमादिशब्दार्थः। अनेन—'अस्मिन्' 'परं ज्योतिः' इतिवाक्येऽभिव्यक्तिकर्तृत्वेनोक्तस्य प्रकृतस्योपसम्पत्तिकर्मीभूताद्ब्रह्मण इतरस्यास्य जीवस्यात्मेति 'य आत्मा' इत्युक्तहृत्पद्मस्थात्मत्वविधानाय 'एषः' इत्येतच्छब्देन 'परामर्शात्' उपस्थापनात्। जीवपरामर्शकैतच्छब्दश्रवणादिति यावत्। दहरे स जीव एव, न विष्णुरिति चेत्—न, हृत्पद्मस्थो जीवः। कुतः? अ

( २१. ) सू—ॐ ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ ॐ ॥ १९ ॥
'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' ( छा.८-१२-३. ) इत्याद्युत्तरवचनाज्जीव एवेति चेत्—

( २२ ) न, तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते ।

---

स्मिन्प्रकरणेऽस्यापहतपाप्मत्वादेरुपलब्धेः श्रवणात् । अस्य चास्मिन् जीवे स्वतोऽसम्भवादिति सूत्रार्थ उक्तो भवति ॥

( २१ ) जीवस्यापहतपाप्मत्वाद्यसम्भवमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—उत्तरादिति ॥ 'इत्याद्युत्तरवचनात्' एवंरूपाद्दहरवाक्यापेक्षया परामर्शवाक्यापेक्षया वाऽनन्तराद्वचनादित्यर्थः । वचनादित्यनन्तरं अस्यास्मिन्नुपलब्धेरित्यनुषज्यते । सम्भवादिति शेषः । 'अस्य' सत्यकामत्वस्य 'अस्मिन्' जीवे प्रतीते स्तत एव विशोकत्वादेः 'उपलब्धेः' सिद्धेरुक्तगुणानां सम्भवादिति तदर्थः । जीव इत्यनेन पूर्वसूत्रात्स इत्यस्यानुवृत्तिः सूचिता । नेश्वर इति एवशब्दार्थः । हृत्पद्मस्थ इति वर्तते ॥

( २२ ) नञनुवृत्त्या परिहारांशं व्याचष्टे—नेति ॥ नैतद्वाक्यबलेन जीवस्य सत्यकामत्वादिगुणान् सम्भाव्य हृत्पद्मस्थत्वं वाच्यमित्यर्थः । कुतो नेत्यतोऽभिहितं 'आविर्भूतस्वरूपस्तु' इत्यंशं तत्रेति पदाध्याहारेण व्याचष्टे—तत्रेति । 'स तत्र' इत्युत्तरवाक्य इत्यर्थः । तत्र आविर्भूतस्वरूप उच्यते इति संबन्धः । 'आविर्भूतस्वरूपः' इत्यस्य व्याख्यानं मुक्त इति । हिशब्दो यत इत्यर्थे । उत्तरवचनादित्यत्रापि संबध्यते । तथाच 'उत्तरवचनात्' 'स्वेनरूपेण' इति जडदेहत्यागोत्तरकालीनस्वरूपाभिव्यक्तिश्रुतेः अत्र मुक्तस्योक्तेः हृत्पद्मस्य च देहान्तरवृत्तितया मुक्तत्वायोगात् नायं जीव इति भावः । नन्वस्य मुक्तविषयत्वेऽपि मुक्तस्यापि जीवत्वे नास्त्येव जीवेऽपहतपाप्मत्वादिसम्भवः । न च तस्य हृत्पद्मस्थत्वायोगः, यतो जीवो भाविभावेनापहतपाप्मत्वादिगुणः इदानीं हृत्पद्मगततयोच्यत इत्यत आह—परमेश्वरप्रसादादिति । एवेत्यनुवर्तते । अनेन तुशब्दो व्याख्यातः । परमेश्वरप्रसादादित्यनेन उत्तरादित्येतदुत्तमादित्यपि व्याख्यातम् । अत्र मुक्त इति न सौत्रपदव्याख्यानमात्रम् । किन्तूद्देश्यसमर्पकं च । अनेन आवृत्तिस्तुशब्दस्य यथाश्रुतान्वयश्च सूचितः । तथा च योऽत्र मुक्त उ

(२३) यत्प्रसादात्स मुक्तो भवति स भगवान् पूर्वोक्तः ॥ १९ ॥

च्यते स तु परमेश्वरप्रसादादेव 'आविर्भूतस्वरूपः' आविर्भूतो व्यक्तः स्वरूपः अपहतपाप्मत्वादिः स्वधर्मो यस्य स तथोक्तः । अतो न स्वतोऽपहतपाप्मत्वादिगुणकः, अतो न दहरस्थः जीव इति योजना ।

(२३) ननु 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां. ८-३-४.) इत्यत्र मुक्तस्याभिव्यक्तापहतपाप्मत्वादिगुणकत्वमेवोच्यते, न तु तद्गुणानां परमेश्वराधीनत्वम्। अतस्तत्स्वत एवेत्यत आह—यदिति ॥

अस्य यच्छब्दस्य द्वितीयतच्छब्देनान्वयः । प्रसादो नाम इच्छाविशेषः । 'सः' जीवः । पुनः स इत्युक्त्या सूत्रेऽनुवृत्तस्य स इत्यस्यावृत्तिः सूचिता । पूर्वोक्त इत्यनेन सूत्रे उत्तरत्रेत्यस्य प्रतियोगितया पूर्वत्रेत्युपस्कार्यमित्युक्तं भवति । तथेति शेषः । तथा च 'यत्प्रसादात्' यस्यानुग्रहात् 'सः' जीवो 'मुक्तः' अपहतपाप्मत्वादिगुणो भवति 'सः' गुणप्रदाता भगवान् 'पूर्वोक्तः' 'परंज्योतिरुपसम्पद्य' इति पूर्ववाक्ये 'तथा' गुणप्रदातृतया उक्त इति योजना । अन्यथा ल्यबन्तपदं व्यर्थं स्यादिति भावः । उक्त इत्यनन्तरं यत इति शेषः । अस्यातो नात्र मुक्तगुणप्राप्तेः परमेश्वराधीनत्वोक्त्यभाव इत्युपस्कृतवाक्येनान्वयः । अथ वा—ननु जीवेऽन्याधीनस्य तद्गुणजातस्य सत्त्वात्स एवापहतपाप्मत्वादिनोक्तो हृत्पद्मस्थश्चास्त्वित्यत आह—यदिति । योजना तु—यत्प्रसादात्स जीवो जडदेहान्मुक्तो भवति, मुक्तो भूत्वा च सोऽपहतपाप्मत्वादिगुणो भवति, स भगवानेव 'पूर्वोक्तः' 'य आत्माऽपहतपाप्मा' (छां. ८-१-५.) इत्यादिपूर्ववाक्ये तथाऽपहतपाप्मत्वादिनोक्तो न जीवः । दातृप्रतिगृहीत्रोर्मध्ये दातुरेव मुख्यत्वान्मुख्यामुख्ययोश्च मुख्यस्यैव ग्राह्यत्वादिति ॥

अनेन—अस्य 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय' (छां. ८-३-४.) इत्युक्तस्य जीवस्य 'उत्तरात्' दहरवाक्यापेक्षया परामर्शवाक्यापेक्षया वाऽनन्तरात् 'स तत्र पर्येति' इत्यादिवचनात् 'अस्मिन्' पूर्वप्रकृते जीवे 'अस्य' सत्यकामत्वस्य 'उपलब्धेः' प्रतीतेः, तत एवास्य विशोकत्वादेः सिद्धेश्च । अत एवास्योक्तगुणासम्भवाभावात्स हृत्पद्मस्थो जीव एव नेश्वर इति चेत्—न, यतस्तत्र 'स्वेन' इत्युत्तरवाक्यबलादाविर्भूतस्वरूपो मुक्त उच्यते । स च देहानन्तर्गततया न हृत्पद्मस्थो भवतीति भावः । न च मुक्तस्यापि

( २४ ) सू—ॐ ॥ अन्यार्थश्च परामर्शः ॥ ॐ ॥ २० ॥

जीवत्वेन तत्रापहतपाप्मत्वहृत्पद्मस्थत्वयोर्भिन्नकालीनत्वेऽपि सामा नाधिकरण्योपपत्तेरस्ति पुनस्तस्य प्राप्तिरिति वाच्यम्। यतोऽत्र वाक्ये यो मुक्त उच्यते स उत्तरादुत्तमात्परमेश्वरप्रसादादेवाविर्भूतस्व रूपो न स्वतः। न चात्र मुक्तस्य तद्गुणत्वमेवोच्यते, न परमेश्वराधी नत्वं तद्गुणजातस्येति वाच्यम्। यतः पूर्वत्र 'परं ज्योतिः' इति पूर्वे वाक्ये यत्प्रसादात्स मुक्तो भवति स परमात्मा तथा गुणप्रदातृतयो च्यते। न च यथाकथं चित् जीवस्यापहतपाप्मत्वादिगुणकत्वात्पुनस्त स्प्राप्तिरिति वाच्यम्। यतो यस्मादुत्तरादुत्तमाद्भगवतस्तत्प्रसादात्स मुक्तः 'आविर्भूतस्वरूपः' अभिव्यक्तापहतपाप्मत्वादिगुणकः स तु भ गवानेव पूर्वत्र 'य आत्माऽपहतपाप्मा' (छां.८-१-५.) इति पूर्ववाक्ये उ क्तो,न मुक्तजीव इति सूत्रार्थ उक्तो भवति। श्रुत्यर्थस्तु 'एषः' जीवो य तः 'सम्प्रसादः' सम्यग्विष्णुप्रसादवान् अतो 'अस्मात् चरमशरीरा त्' 'समुत्थाय' मुक्तः 'यत्परं ज्योतिः' ब्रह्म 'उपसम्पद्य' प्राप्य स्वेन रूपेण 'अभिनिष्पद्यते' अभिव्यज्यते 'स उत्तमः पुरुषः' परं ज्योतिराख्यः। मुक्तस्य विषयैश्वरणप्रकारमाह—स इति। 'सः' प्राप्तनिजानन्दाविर्भावो मुक्तः 'तत्र' मुक्तिस्थाने परमात्मानुग्रहेणै व 'जक्षन्' स्वापेक्षितं भक्षयन् हसन्वा ज्ञातिभिस्सह मुक्तैः अज्ञाति भिः पूर्वकल्पमुक्तैः 'क्रीडन्' स्त्रीभिः 'रममाणः' रतिं प्राप्नुवन् प्राकृत स्त्र्यादिविषयसौख्यमनुभवन् 'पर्येति' परितः सञ्चरतीति ॥

( २४ ) ननु 'एषः' इति जीवं परामृश्य 'आत्मा' इति तस्य हृत्प द्मस्थात्मत्वाभिधानादमुख्यापहतपाप्मत्वादिगुणोऽपि जीवः एतच्छ ब्दपरामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्याशङ्कां परिहरत्सूत्रमु पन्यस्य 'इतरपरामर्शात्स इति चेन्न' इत्यनुवृत्तपूर्ववाक्येनापेक्षित स्य सिद्धान्तप्रतिज्ञायाश्च लाभान्नेत्युक्तसाध्ये हेतुतया सूत्रं व्याच ष्टे—अन्येति ॥ श्रुतौ 'परंज्योतिः' इति नपुंसकपदनिर्दिष्टस्य यमि ति पुल्लिङ्गेन निर्देशो लिङ्गस्याविवक्षितत्वाद्वा विशेष्यशब्दविवक्षया वा युक्तः। अनेन श्रुतौ परंज्योतिरिति एकं पदम्। यद्वक्ष्यति 'परं ज्योतिःशब्देन परमात्मैवोच्यते' इति, तच्च 'परंज्योतिः परंब्रह्म' इति पौराणिकरूढ्या विष्णुवाचीत्युक्तं भवति। ज्योतिः प्रकाशरूपं

यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ २० ॥

( २५ ) सू—ॐ ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ ॐ ॥ २१ ॥

परं ब्रह्मेति भिन्ने पदे इत्यपि केचित् । अस्मिन् पक्षे उक्तभाष्यविरोधः । किं च 'यं परंज्योतिराख्यं भगवन्तम्' इति यच्छब्दव्याख्यानपरटीकाविरोधः । 'परंज्योतिः परमात्मानम्' इति विष्णुतत्त्वनिर्णयटीकाविरोधश्च । श्रुतावुपसम्पद्येत्यस्यार्थः प्राप्येति । सौत्रान्यपदं पूर्वपक्ष्यभिमतजीवप्रतियोगितया व्याख्याति—परमात्मेति । परमात्मैवार्थोऽभिधेयो यस्य स तथोक्तः । 'परामर्शः' एतच्छब्दः । यद्वा—परमात्मन एवात्मत्वविधानमर्थः प्रयोजनं यस्य स तथोक्तः । तथात्वे 'परामर्शः' एतच्छब्देन परिग्रहणमित्यर्थः । सूत्रभाष्ययोश्चशब्दस्तु न केवलं जीवपक्षेऽपहतपाप्मत्वासम्भवाख्यबाधकसद्भावः, किन्तु परामर्शाख्यसाधकाभावश्चेति समुच्चयार्थस्तुशब्दार्थो वा । चन्द्रिकायां तु—न केवलं परामर्शस्य ईश्वरपक्षे बाधकत्वाभावः, किन्तु जीवपक्षसाधकत्वाभावश्चेत्युक्तत्वात्परामर्शो जीवान्येश्वरार्थ एव जीवार्थ इत्यवधारणार्थतया व्याख्यातः । अनेन—'इतरपरामर्शात्' इतरं जीवं 'एषः' इति परामृश्य तस्य हृत्पद्मस्थत्वविधानात्स हृत्पद्मस्थ आत्मा जीव एव नेश्वर इति चेत्—न, कुतः? यतः 'एषः' इति परामर्शः 'अन्यार्थः' जीवान्येश्वरार्थ एव, न जीवार्थः, अतः । अथवा—न केवलमसम्भवात्, किन्तु यतः परामर्शोऽन्यार्थोऽपि । यद्वा—असम्भवान्न हृत्पद्मस्थो जीवः, किन्त्वीश्वर एव । न चैवं परामर्शायोगः । यतः 'परामर्शः' एतच्छब्दस्तु अन्यार्थ इति त्रेधा सूत्रार्थ उक्तो भवति । 'यं प्राप्य' यत्समीपं प्राप्येति । अनेन जीवः परंज्योतिराख्यं परमात्मानमुपसम्पद्यापरोक्षतो ज्ञात्वा अथ समीपं प्राप्याविद्याविधूननेनानन्दादिस्वेन रूपेणाभिनिष्पद्यते आविर्भूतस्वगुणो भवतीति यावत् । यं प्राप्य स्वरूपेणाभिनिष्पद्यते जीवः, स एष आत्मा य आत्मेति प्रागुक्तः परमात्मेति होवाच ब्रह्मादीन् प्रति रमेति सिद्धान्ते श्रुत्यर्थः ॥

( २५ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य श्रुत्युदाहरणेनाक्षेपांशं तावद्व्याचष्टे—अल्पेति ॥ 'दहरः' इति प्रतीकग्रहणेन 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः' इति वाक्यं गृह्यते । अल्पपदं

'दहरः' ( छा. ८-१-१. ) इत्यल्पश्रुतेर्नेति चेत्—
( २६ ) न, 'निचाय्यत्वादेवं व्योमवच्च' इत्युक्तत्वात् ।
( २७ ) 'एष म आत्माऽन्तर्हृदये ज्यायान्' (छा. ३-१४-३. )

चाल्पस्थानस्थितिपरम् । श्रुतेरित्यनन्तरमसम्भवादित्यनुवर्तते । अस्मिन्निति चास्ति । तथा च 'दहरः' इति वाक्ये 'अस्मिन्' दहरगते वस्तुन्यल्पस्थानस्थितिरूपलिङ्गश्रुतेस्तस्याश्चास्मिन्परमात्मनि 'असम्भवात्' अनुपपत्तेरित्यन्वयः । अस्माद्धेतोर्न दहरे विष्णुः, किन्तु स जीव एवेतीतरसूत्रानुवृत्तप्रतिज्ञयाऽन्वयः ॥

( २६ ) सूत्रेऽनुवृत्तनञ आवृत्तिमभिप्रेत्य परिहारांशं व्याख्याति—नेति ॥ नाल्पस्थानस्थितिश्रवणं विष्णावनुपपन्नमित्यर्थः । कुतो नेत्यतः प्रवृत्तं तदुक्तमित्यंशं यत इत्यध्याहाराभिप्रायेण हेतुतया व्याख्याति—निचाय्यत्वादिति । अत्रापीति शेषः । तथा च 'निचाय्यत्वात्' इत्यत्र सर्वगतस्यापि विष्णोर्व्योमवदल्पस्थानस्थितेरुक्तत्वादित्यर्थः ॥

( २७ ) ननु युक्तं व्योम्नोऽशतोऽल्पौकस्त्वं, अंशस्यापूर्णत्वात् । ब्रह्मणि तु अंशोऽपि पूर्ण इति कथं तस्यांशतोऽल्पौकस्त्वमित्यतः सूत्रशेषं प्रकारान्तरेण व्याचष्टे—एष म इति ॥ चशब्दो युक्तिसमुच्चये । सूत्रकृच्छ्रुत्युक्तिसमुच्चये वा । 'गुणाः श्रुताः' इति श्रुतिसमुच्चये वा । 'यस्मिन्' इति स्मृतिसमुच्चये वा । अनेन 'अल्पश्रुतेः' 'दहरः' इति वाक्ये सर्वगते वस्तुन्यल्पस्थानस्थितिश्रवणात्, तस्याश्च विष्णावसम्भवादनुपपत्तेर्न दहरे विष्णुः, किन्तु स जीव एवेति चेत्—न, यतः 'तदुक्तं' तत्र निचाय्यत्वादिति पूर्वत्र तस्य सर्वगतस्यापि विष्णोर्व्योमवत्तदल्पस्थानस्थितत्वम्, तस्मादुपासनार्थं युक्तमित्युक्तम् । न चांशतोपिसर्वगततया तत्र तदनुपपत्तिः । यतस्तस्यां 'एष म आत्मा' (छा. ३-१४-३. ) इति छन्दोगश्रुतौ तेन सर्वज्यायस्त्वेन वृद्धतमत्वेन व्याप्तत्वे नैव प्रकारेण तस्य विष्णोस्तद्धृदयस्थत्वमुक्तं स्मृत्युक्तं चात इति सूत्रार्थ उक्तोभवति । न च श्रुतिस्मृत्युक्तमपि कथमेतदङ्गीकारार्हं, युक्तिविरोधादिति वाच्यम् । ब्रह्मणोऽचिन्त्यशक्तित्वादुपपत्तेः । 'गुणाः श्रुताः' ( सौपर्णश्रुतिः ) 'यस्मिन्विरुद्धगतयः' इत्यादिवचनाच्च । मम हृदये य 'आत्मा' परमात्माऽस्ति । उपलक्षणमेतत् । सर्वहृदये च य आस्ते 'एषः' हृदयस्थांशरूपो भगवान् 'ज्यायान्' वृद्धतमः देशकालगुणैः पूर्ण इति

इति श्रुत्युक्तत्वाच्च ॥ २१ ॥

—:*:—

६. अधिकरणम् ॥

( १ ) अदृश्यत्वादयः परमेश्वरगुणा उक्ताः । 'तेषां सुखं शाश्वतं नेतरेषाम् । तदेतदिति मन्यन्तेऽनिर्देश्यं प

श्रुत्यर्थः। उपनिषद्द्रष्टृऋषिवाक्यमेतत् । ('विरुद्धगतयोऽपि' अन्यत्र भिन्नाश्रया अप्यणुत्वमहत्त्वादयो धर्माः यस्मिन् 'पतन्ति' वर्तन्ते च। न कालभेदेनेत्याह–अनिशमिति। मुक्तसाधारण्यमाशङ्क्याह–विद्यादय इति। यस्माद्विष्णोरन्यत्राणुत्वमहत्वादिविविधशक्तयो धर्माः। विद्या आदिः ज्ञप्तिकारणं येषां ते तथोक्ताः। ज्ञानज्ञेया इति यावत्। हरौ विरुद्धधर्मसत्त्वे प्रमाणमाह—आनुपूर्व्येति। 'आनुपूर्वी श्रुतिर्वेदस्त्रयी चाम्नाय उच्यते' इत्यभिधानाच्छ्रुत्या सिद्धा इत्यर्थः। यच्छब्दस्य 'तद्ब्रह्माहं प्रपद्ये' इति उत्तरवाक्यगततच्छब्देनान्वयः) ॥ ५ ॥

॥ इति दहराधिकरणम् ॥

—:o:—

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे 'कथं नु तद्विजानीयाम्' इति वाक्योक्तं ज्ञानार्थं ज्ञेयप्रार्थनाविषयत्वं वा 'कथं नु तद्विजानीयां किमु भाति' इति ब्रह्मज्ञानानुकूलाभिव्यक्त्याख्यभानप्रार्थनाविषयत्वरूपं वा आनुकूल्येन गृह्यमाणत्वं लिङ्गं ब्रह्मणि समन्वीयते। श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं दर्शयति—अदृश्यत्वादीति ॥ 'उक्ताः' आनन्दमयाधिकरणे उदाहृतादृश्य इति वाक्ये इति भावः। उक्ता इत्यनन्तरं तत्र प्रविष्टमिति शेषः। प्रथमादिपदेनानिरुक्तत्वादेः, द्वितीयेन 'कथं नु तद्विजानीयां किमु भाति न भाति वा' (कठ.५-१४.) इति समन्वेतव्यलिङ्गबोधकोत्तरार्धस्य च ग्रहणम्। न केवलं विष्णोः, किन्तु ज्ञानिसुखस्यापीत्यपेरर्थः। एवार्थो वाऽपिशब्दः आनुमानिकसूत्रगतापिपदवत्। 'अज्ञेयत्वं' साकल्येनाज्ञेयत्वं दुर्ज्ञेयत्वमिति यावत्। चशब्दः परस्परसमुच्चये, आनुकूल्येन गृह्यमाणत्वरूपसमन्वेतव्यलिङ्गसमुच्चये वा। पूर्वश्रुत्यनुसारादृश्यत्वादय इति, एतच्छ्रुत्यनुसारादनिर्देश्यत्वमिति व्युत्क्रमः। यद्यपि 'तदेतदिति' एतदेवोदाहर्तव्यम्। तथाऽपि पूर्वपक्षे तच्छब्दार्थप्रदर्शनाय 'तेषाम्' इति पूर्ववाक्यैकदे

रमं सुखम्' ( कठ. ५-१३, १४. ) इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इति ॥

( २ ) अतो वक्ति—

शोपन्यासः। अतएव तत्त्वप्रदीपे तेषामिति प्रस्तुतिः पूर्वपक्षोत्थापिकेत्युक्तम्। तथाचेत्थं योजना—पूर्वमानन्दमयाधिकरणे येऽदृश्यत्वादयो गुणाः परमेश्वरस्योक्ताः। तत्र तेषु प्रविष्टमनिर्देश्यत्वमज्ञेयत्वं च 'तेषां सुखम्' इति प्रकृत्याम्नातेन 'तदेतत्' इत्यादिना काठकवाक्येन पूर्वपक्षिरीत्या समीपस्थात्तच्छब्दात् परामृष्टस्य 'ज्ञानिसुखस्यापि' ज्ञानिसुखस्यैवोच्यत इति। पूर्वार्धेनानिर्देश्यत्वस्योत्तरार्धे च 'किमु भाति न भाति' इत्यनेन दुर्ज्ञेयत्वपर्यवसिताज्ञेयत्वस्य चार्थादुक्तत्वादिति भावः। टीकायामदृश्यत्वपदस्यानिर्देश्यत्वपरत्वाद् निर्देश्यत्वामिति पाठाभ्युपगमाद्वा न तद्विरोधः। अत्रानिर्देश्यत्वमज्ञेयत्वं चोच्यत इति फलोक्तिः, आनुकूल्येन गृह्यमाणत्वस्यैवात्र विचार्यत्वात्। तत्तु द्वितीयादिशब्दोपात्तवाक्येन चशब्देन वा सूचितमिति द्रष्टव्यम्। यत एवमतः पूर्वोक्तमयुक्तमिति भावः। अनेनानन्दमयाधिकरणोक्तादृश्यत्वाज्ञेयत्वरूपस्यानिर्देश्यत्वानिरुक्तत्वरूपस्य च तत्रान्यत्र च सत्त्वे ज्ञानिसुखेऽतिव्याप्त्याक्षेपात् इतरमात्रनिष्ठत्वे त्वसम्भवाक्षेपात्फलतस्तेनास्याक्षेपिकी सङ्गतिरुक्ता भवति। तथा चशब्दसूचितमानुकूल्येन गृह्यमाणत्वं विषयः। विष्णोरन्यस्य वेति सन्देहः। ज्ञानिसुखस्यैवेति पूर्वः पक्षः। अनिर्देश्यत्वाज्ञेयत्वे च तस्यैवेति फलं, सुखश्रुतिः, प्रकृतत्वादिरूपयुक्तिश्च सूचिता भवति॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति॥ 'इत्यनुकृतेः' इत्यनुभानश्रुतेरित्यर्थः। अनुभानं नाम तदिच्छानुरोधेन भानं क्रियाविशेषः। सूत्रे तस्येत्यस्यानुकृतेरित्यनेनापि सम्बन्धे तेनैवानुकरणप्रतिसम्बन्धिन आनुकूल्येन गृह्यमाणस्य तत्कर्तुः सूर्यादितेजसश्च लाभो भवतीति स्पष्टत्वात्तदुभयानुक्तिः। यद्वा—पूर्वसूत्रात्तदित्यस्य विपरिणतस्येहानुवर्तनादुभयलाभो भवतीत्याशयेन तदुभयानुक्तिः। न केवलं तस्येत्येतत् समन्वेतव्यानुकूल्येन गृह्यमाणत्वाख्यलिङ्गधर्मिणः, सूर्यादितेजसश्च परामर्शकं, किन्तु श्रुतिप्रतीकरूपमपि सर्वजगत्प्रकाशकत्वपरं चेत्याशयेन तद्धेत्वन्तरपरतया व्याचष्टे—तस्येति। 'इति वचनात्' इत्यनेन सूत्रे इत्युक्तेरिति शेषो दर्शितः। यद्यपि सूत्रभा

सू—ॐ ॥ अनुकृतेस्तस्य च ॥ ॐ ॥ २२ ॥
'तमेव भान्तमनुभाति सर्वम्' इत्यनुकृतेः , 'तस्य

भयोः 'अनुभाति' इतिश्रुत्यनुसारादनुभानादिति वाच्यम्। तथाऽपि
तापिनी पाचिनी चैव शोषिणी च प्रकाशिनी।
नैव राजन् रवेश्शक्तिः शक्तिर्नारायणस्य सा ॥
इति ऐतरेयभाष्योदाहृतपाद्मवचनात्सूर्यादिकर्तृकप्रतपनादिकमपि परमात्माधीनमिति दर्शयितुमनुकृतेरित्युक्तम्। सूत्रे तदनुसारिभाष्ये च चशब्दो द्वितीयसूत्रस्य वक्ष्यमाणव्याख्यानभेदेन सर्वजगत्प्रकाशकत्वरूपोक्तहेतुसमुच्चये वा, सूर्याद्यप्रकाश्यत्वरूपानुक्तहेतुसमुच्चये वा द्रष्टव्यः। सूत्रे समन्वयसूत्रादनुवृत्तस्य विधेयपरस्य तत्त्वित्यस्यार्थमाह—परमात्मैवेति। न तु ज्ञानिसुखमित्येवशब्दार्थः। लिङ्गसमन्वयेन भवत्फलं दर्शयति—अनिर्देश्येति। अनिर्देश्यश्चासौ सुखरूप इति वा, अनिर्देश्यं यत्सुखं तद्रूप इति वा विग्रहः। अत्र रूपशब्दो भिन्नक्रमः। तथा चानिर्देश्यं परमं सुखं परमात्मरूपमित्यन्वयः। एक इत्यादौ पुल्लिङ्गेन प्रकृतस्यैतदिति नपुंसकलिङ्गेन ग्रहणाय रूपशब्दप्रयोगः। उपलक्षणमेतत्। अनुग्राह्यश्चेत्यपि द्रष्टव्यम्। वस्तुतस्तु—वचनाच्चेतिशब्दस्य सुखरूपश्चेत्यपि सम्बन्धे तेनैवानुकूल्येन गृह्यमाणाख्यः साध्यधर्मी सूचित इति ध्येयम्। यद्यप्यनिर्देश्यत्वमज्ञेयत्वं चेत्युपक्रमादुभयं ग्राह्यं, न त्वेकम्, सुखरूपमिति चाधिकम्। तथाऽपि पूर्वपक्ष्युक्तसुखश्रुतेः सुखरूपे ब्रह्मणि सावकाशत्वज्ञापनाय 'तदेतत्' इतिवाक्योक्तमनिर्देश्यसुखरूपत्वमेव गृहीतम्। अज्ञेयत्वमपि द्रष्टव्यम्। यद्यप्यत्र भाष्ये लिङ्गद्वयस्यानुकूल्येन गृह्यमाणस्य वा अनिर्देश्यसुखरूपस्य वा विष्णुत्वे साध्ये साक्षाद्धेतुत्वं भाति। टीकायां तु—'तदेतत्' इतिश्रुतिस्थतच्छब्देन समीपोक्तज्ञानिसुखपरित्यागेन 'चेतनश्चेतनानाम्' (कठ. ५-१३.) इति व्यवधानेन प्रकृतपरमात्मग्रहणे लिङ्गद्वयं हेतुत्वेन योजितम्। तथाऽपि हेतुद्वयेन तच्छब्देन ज्ञानिसुखपरित्यागेन परमात्मन एव ग्रहणसिद्धौ तत एव तच्छब्दगृहीतस्य परमात्मन एवानिर्देश्यसुखरूपत्वं पर्यवस्यतीत्याशयेन भाष्ये लिङ्गद्वयस्य प्रकृतसाध्यहेतुत्वेनोक्तिरित्यविरोधः। केचित्तु—'परमात्मैवानिर्देश्यसुखरूपः' इति भाष्यमेवानुकृतिसूत्रे 'आनन्दमयोऽभ्यासात्' इत्यादाविव समन्वेतव्यशब्दादेर्विष्णुपरत्व एव हेतुर्नोच्यते,

भासा सर्वमिदं विभाति ' ( कठ. ५-१५. ) इति वच
नाच्च परमात्मैव अनिर्देश्यसुखरूपः ।

किन्त्वनिर्देश्यं सुखमित्यत्र समीपोक्तज्ञानिसुखपरित्यागे हेतुरुच्यते इत्यत्र ज्ञापकम्, टीकाऽपि तदनुसारिणीत्याहुः। तथा चायं सिद्धान्ते श्रुत्यर्थः—

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीराः ॥ ( कठ. ५-१२. ) ॥

इति पूर्ववाक्ये ' य एको ' ज्ञानानन्दाद्यभिन्नः समाभ्यधिकशून्यो वा यः सर्वमस्य वशोऽस्तीति 'सर्ववशी ' यः ' सर्वभूतान्तरात्मा ' सर्वप्राणिनामन्तर्नियामकः ' य एकं ' स्वस्वरूपं बहुधा करोति नियम्यानन्त्यात् । ' तं ' प्रकृतं ' आत्मस्थं ' जीवहृदयस्थितं ये ' धीराः ' ज्ञानिनः अनुपश्यन्तीति प्रकृता ये ज्ञानिनस्तेषामेव ' शाश्वतं सुखं ' नित्याभिव्यक्तसौख्यं नेतरेषाम्। अनेन ब्रह्मसामर्थ्यमुक्तं भवति। एवं 'नित्यो नित्यानाम्'इति वाक्यमपि ब्रह्ममाहात्म्यपरतया व्याख्येयम्।'तदेतत्' इत्यादिनाऽपि प्रकृतभगवत्स्वरूपमेव विशेषतः प्रतिपाद्यते इति। मन्यन्ते इत्यस्योत्तरत्रान्वयः। तथा च ' यतो वाचो निवर्तन्ते' ( तै.२-४-१. ) ' एषोऽस्य परम आनन्दः ' ( बृ. ६ - ३ - ३२. ) इत्यादौ प्रसिद्धं अनिर्देश्यं परमं सुखं कथं नु तद्विजानीयामिति मन्यन्ते इत्यानुकूल्येन गृह्णन्ति। ज्ञानार्थं तद्वा–तज्ज्ञानं वा प्रार्थयन्ते। 'किमु भाति न भाति वा ' इति तस्य दुर्ज्ञेयत्वं च वदन्ति ज्ञानिनः । तत् ब्रह्मणो रूपं स्वरूपभूतं सुखमेतदेकं रूपं बहुधा यः करोतीतिप्रकृतेश्वररूपाभिन्नमिति मन्यन्ते ज्ञानिन इति। एतच्छब्दस्येश्वरपरत्वेऽपि रूपशब्दसामानाधिकरण्यात् नपुंसकलिङ्गोपपत्तिः । तदुक्तं न्यायविवरणे—' यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्त इति '। काठकभाष्ये तु—' तद्गुह्यं ब्रह्म सनातनम् ' इत्युपक्रान्तं ' रूपं रूपं प्रतिरूपो बभूव ' ( कठ. ५ - ९. ) इति जीवस्य प्रतिबिम्बभूतं रूपशब्देन प्रकृतमेतत् ' एकं रूपम् ' इत्यत्र प्रकृतं च भगवद्रूपं ' अनिर्देश्यं ' इत्थमिति साकल्येन निर्वक्तुमशक्यं परमं सुखमिति मन्यन्ते ज्ञानिन इति सुखरूपत्वविधिपरतया व्याख्यातम् । भाष्येऽप्यनिर्देश्यसुखरूप इत्येतावन्मात्रग्रहणेन श्रुतौ सुखरूपत्वे विधेयमिति सूचित

( ३ ) न हि ज्ञानिसुखमनुभाति सर्वं, न च तद्भासा ।
( ४ ) 'अहं तत्तेजो रश्मीत्' इति नारायणभासा हि सर्वं भाति ॥ २२ ॥

---

म् । तदनिर्देश्यपरमसुखात्मकं भगवद्रूपं तत्प्रसादमृते किमु भाति न भाति वेति सम्यग्भाति न भातीति कथं न्वहं जानीयामिति शिष्टवाक्यार्थस्तत्रैवोक्तः । विवृतं चैतद्व्यासतीर्थीये—'तत्' अनिर्देश्यपरमसुखात्मकं भगवद्रूपं तत्प्रसादमृते किमु सम्यग्भाति ? न भाति वा? इति प्रश्नस्योत्तरभूतं एकं निश्चितार्थं 'कथमहं विजानीयां' न केनापि प्रकारेणेति । अत्रेतिशब्द उभयान्वयी । तथा च किमु भातीति प्रश्नस्योत्तरभूतं न भातीतिवाक्योक्तमेकमज्ञेयत्वरूपमर्थमिति योजना । केचित्तु—यदेवं ब्रह्म तत्प्रसादमृते 'नु' इदानीं 'कथमहं विजानीयाम्' प्रार्थनायां लिङ् । न कथमपीत्यर्थः । ज्ञानिवाक्यानुकरणमेतत् । भगवत्प्रसादादपि किं साकल्येन तज्ज्ञानं भवतीति नचिकेता यमं पृच्छति-किमु भातीति । उशब्दः सम्यगित्यर्थे । किम्वित्येकं वा । तथात्वे सम्यगिति शेषः । उत्तरमाह यमः—न भातीति । वाशब्दोऽवधारणे । न भात्येवेति व्याख्याति ॥

( ३ ) ननु 'तमेव भान्तम्' इतिवाक्ये सूर्यादितेजसां परमात्माधीनप्रकाशकर्तृत्वस्य 'तस्य भासा' इतिवाक्ये च सर्वस्य जगतस्तत्प्रभाप्रकाश्यत्वस्य च श्रवणेन असिद्धिपरिहारे कुतस्तयोर्विष्णुत्वसाध्येनाव्यभिचरितत्वम्, येन तल्लिङ्गद्वयबलात्समीपोक्तज्ञानिसुखपरामर्शपरित्यागः स्यादित्यत आह—न हीति ॥ सर्वमित्युभयान्वयी । भातीति शेषः । तथा च 'हि' यस्मात् 'सर्वं' सूर्यादितेजः ज्ञानिसुखमनुसृत्य 'न भाति' न प्रकाशते । तथा 'तद्भासा' तस्य ज्ञानिसुखस्य प्रकाशेन 'सर्वं' जगत् 'न भाति' न प्रकाशते चेत्यर्थः । वक्ष्यमाणप्रमाणविरोधादिति भावः । चशब्दः समुच्चये । अतो न लिङ्गद्वयमन्यत्रावकाशवदिति वाक्यशेषः ॥

( ४ ) अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नम् । तथाप्यनेन कुतः परमात्मनो ग्रहणं, अस्य परमात्मत्वसाध्यसामानाधिकरण्यानिश्चयादित्यतस्तत्र द्वितीयसूत्रस्थापिपदेन सूचितां श्रुतिमाह-अहमिति ॥ अहमितीत्यनन्तरं श्रुतेरिति शेषः । इतिशब्द आद्यर्थे । तेन 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (कठ.५-१५.) इत्याथर्वणश्रुतिर

(५) सू—ॐ ॥ अपि स्मर्यते ॥ ॐ ॥ २३ ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥(गी.१५-१२.)
इति ।

पि गृह्यते। नारायणेति। नारायणाधीनभासेत्यर्थः। हिशब्दो यत इत्यर्थे, प्रसिद्धौ च। 'सर्वं' सूर्यादितेजः 'भाति' प्रकाशते। यद्वा—'नारायणभासा' नारायणीयभासा 'सर्वं' जगत् 'भाति' प्रकाश्यत इत्यर्थः। 'इति ज्ञायते' इति शेषः। श्रुतौ 'रश्मीत्' इत्यनेन सूर्यादितेजसां नारायणाधीनप्रकाशकर्तृत्वस्य, 'तेजः' इत्यनेन सर्वस्य जगतो नारायणीयप्रकाशप्रकाश्यत्वस्य चोक्तत्वादिति भावः। 'अहम्' इति श्रुतिस्त्वन्तर्नये व्याख्याता। अनेन—तदुक्तमित्यतः सूत्रे तादित्यनुवर्तते। तस्येत्यावर्तते विपरिणम्यते च। असम्भवादिति चानुवर्तते। तथा च—

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयाम् ॥ ( कठ. ५ - १४. ) ॥

इत्यानुकूल्येन गृह्यमाणं तदेतच्छब्दपरामृश्यं सुखं अनिर्देश्यं सुखं तत्तु विष्णुरूपमेव, न समीपोक्तज्ञानिसुखम्। कुतः? 'तस्य' सूर्यादितेजसः 'तस्य' आनुकूल्येन गृह्यमाणस्य सुखस्य तस्मिन् 'तमेव भान्तम्' इति 'अनुकृतेः' अनुभानश्रवणात्तस्यैतदधीनप्रकाशकर्तृत्वश्रवणादस्यान्यतेजोनियन्तृत्वश्रवणादिति यावत्। तथा तस्य सर्वस्य जगतस्तस्य तत्प्रकाशप्रकाश्यत्वस्य 'तस्य भासा' ( कठ. ५-१५. ) इति श्रुतावुक्तत्वात्तस्य सर्वजगत्प्रकाशकत्वोक्तिरिति यावत्। तस्य च लिङ्गद्वयस्य 'अहं तत्तेजः' ( चतुर्वेदशिखा. ) इत्यादिश्रुत्या स्मृत्या च तस्मिन्विष्णावेव निश्चयेनोपपत्तेर्ज्ञानिसुखे च 'असम्भवात्' अनुपपत्तेः। तथा तस्मिन्नुपसंहारे तस्यानुकूल्येन गृह्यमाणस्य 'न तत्र सूर्यो भाति' इति वाक्ये तस्य सूर्याद्यप्रकाश्यत्वस्य चोक्तेश्चेति सूत्रार्थ उक्तो भवति ॥

(५) यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वं 'अहम्' इति श्रुत्योपपादितम्। तत्स्मृत्याऽप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—अपीति ॥ इति स्मर्यत इत्यन्वयः। 'यत्' आदित्यादिषु स्थितं तेजस्तत् 'मामकं' मदधीनं मदीयं च, मत्तेज एवादित्यादिषु प्रेरकत्वेना

( ६ ) न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ( गीं.१५-६. )

स्ति । तदेवाखिलं जगत् ' भासयते ' प्रकाशयतीति गीतास्मृत्यर्थः ॥

( ६ ) किं च काठके ' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ' इत्याद्यानुकूल्येन गृह्यमाणस्य सुखस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते, अतो विष्णुरेव ' तदेतत् ' इत्यत्र प्रतिपाद्यः, न ज्ञानिसुखमिति सूत्रस्यार्थान्तरमपिपदस्य युक्तिसमुच्चयार्थं चाभिप्रेत्य तां स्मृतिमुदाहरति—न तदिति ॥ अत्रापीतिशब्दस्य स्मर्यत इत्यन्वयः । ज्ञानिनो ' यद्गत्वा ' यत्प्राप्य पुनस्तस्मान्ननिवर्तन्ते, तन्मम परमं ' धाम ' स्वरूपं, तदेतद्धाम सूर्यो ' न भासयते ' न प्रकाशयते, एवं ' शशाङ्कः ' चन्द्रः । यदा चैवं तदा कुतोऽयमवमोऽग्निरिति गीतास्मृत्यर्थः । अनेन—पूर्वव्याख्याने न केवलमनुकृत्यादिः ' अहं तत्तेजः ' इति श्रुत्यन्तरे ' तमेवभान्तमनुभाति ' इत्याथर्वणादौ विष्णुधर्मत्वेन श्रूयते, किन्तु यदादित्येति स्मर्यतेपीति श्रुतिसमुच्चयार्थेऽपिशब्दः । द्वितीयव्याख्याने तु ' तमेव भान्तमनुभाति ' इत्युत्तरवाक्योक्तानुकृत्यादिहेतोः ' न तत्र सूर्यो भाति ' इति पूर्ववाक्योक्तसूर्याद्यप्रकाश्यत्वहेतोश्च समुच्चयेऽपिशब्दः । तथा च न केवलं ' तदेतत् ' इत्यत्रोक्तानुकूल्येन गृह्यमाणस्य विष्णुत्वरूपप्रधानसाध्ये हेतूकृतमनुकृत्यादिकं ' अहं तत्तेजो रश्मीत् ' इत्यादौ श्रूयते, किन्तु यदादित्येति स्मर्यतेऽपीति वा अपिः । किञ्च—यतो न केवलं प्रथमसूत्रोक्तलिङ्गद्वयं, किन्तु ततोऽन्यदपि ' न तत्र ' इति काठकवाक्ये तस्यानुकूल्येन गृह्यमाणस्योक्तं सूर्याद्यप्रकाश्यत्वरूपं लिङ्गं तस्य विष्णोः सम्बन्धित्वेनैव ' न तत् ' इति स्मर्यते । अतस्तदेतत् ' कथं नु तद्विजानीयाम ' इत्यत्र विष्णुरेव प्रतिपाद्य इति वा सूत्रस्यार्थद्वयमुक्तं भवति । ' न तत्र ' इत्यादेरयमर्थः । पूर्वं ब्रह्म न सम्यग्भातीति तस्य दुर्ज्ञेयत्वमुक्तं, तत्कुत इत्यतः इदमुच्यते—यस्यैवं विधं सुखं रूपं ' तत्र ' ब्रह्मणि सूर्यो ' न भाति ' तन्न प्रकाशयतीति यावत् । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । एवं तत्र विद्युतोऽपि ' न भान्ति ' न भासयन्तीति । ' तमेव भान्तम ' इत्युत्तरवाक्यं तु यद्यपि व्यासतीर्थकृताथर्वणटीकायां—' एतत्समाख्यारूपमाथर्वणवाक्यं ' भान्तं ' भासयन्तं परमात्मानमनुसृत्यैव सूर्यादयो ' भान्ति ' घटादिकं भासयन्ति ।

इति च ॥ २३ ॥

७. अधिकरणम् ॥

( १ ) विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र
ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ (कठ.५-३.)
इति सर्वदेवोपास्यः कश्चित्प्रतीयते ।

---

तस्य परमात्मनो भासा 'सर्वमिदं' जगत् 'भाति' प्रकाश्यते' इति व्याख्यातम् । तथापि टीकानुसारात् 'सर्वं' सूर्यादि तेजः 'भान्तं' प्रकाशमानं भगवन्तमनुसृत्यैव 'भाति' प्रकाशते । 'तस्य' भगवतो 'भासा' प्रकाशेन 'इदं सर्वं' जगत् 'भाति' प्रकाश्यत इति व्याख्येयम् । व्यासतीर्थीयं तु व्याख्यानान्तरं टीकाकृदभिप्रेतं भविष्यतीति न तद्विरोधः ॥ ६ ॥

॥ इति अनुकृत्यधिकरणम् ॥

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे ईशाननामसमन्वयः क्रियते । श्रुत्यादिसङ्गतिं विषयसंशयौ च सूचयति—विष्णुरेवेति ॥ जिज्ञासासूत्रे विष्णुरेव सर्वैर्मुमुक्षुभिर्मोक्षार्थं जिज्ञास्य इत्युक्तमित्यर्थः । न च तत्र जिज्ञास्यत्वायोगव्यवच्छेद एव कृतः, न त्वन्ययोगव्यवच्छेद इति वाच्यम् । अन्यस्यापि जिज्ञास्यत्वे तस्यापि मोक्षदातृत्वापत्त्या 'यतो नारायणप्रसादमृते' इत्यादिविवरणानुपपत्तेरन्ययोगव्यवच्छेदस्यापि तत्राभिप्रेतत्वात् । अतोऽत्रैवकार उभयान्वयितया व्याख्येयः । ततः किमित्यत आह—तत्रेति । इदं चावर्तते । तत्रेत्यव्ययं तदित्यर्थेऽपि । तथा च 'अथातो ब्रह्मजिज्ञासा' इति यत्पूर्वं विष्णोर्जिज्ञास्यत्वमुक्तं 'तत्र' जिज्ञास्यत्वे 'तत्र' 'ईशानो भूतभव्यस्य' इत्युक्त्वा आम्नाते 'ऊर्ध्वम्' इति काठकवाक्ये 'कश्चित्' ईशानो धर्मित्वेन प्रतीयते । कथं? यतोऽयं 'सर्वदेवोपास्यः' तैर्जिज्ञास्यः प्रतीयते अत इति वाक्ययोजना । न च वायोः सर्वदेवोपास्यत्वेऽपि न विष्णोस्सर्वदेवोपास्यत्वहानिरिति वाच्यम् । तावताऽपि सर्वैर्मुमुक्षुभिर्विष्णुरेव जिज्ञास्य इति नियमस्यासिद्धेः । न च श्रुतिगतविश्वेदेवशब्दस्य गणविशेषवा

(२) स च 'एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेवसन्नि धत्ते' (प्रश्न.३-४.) 'योऽयं मध्यमः प्राणः' (बृ.३-५-२१.)

चित्वात् सर्वदेवोपास्य इत्युक्तिरनुपपन्नेति वाच्यम्। गणविशेषपरत्वे तस्य गुणाधिक्यासिद्ध्या सर्वदेवपरत्वावश्यंभावात्। अनेन—ईशानशब्दस्यान्यनिष्ठत्वाक्षेपमुखेन फलतो मुमुक्षुकर्तृकजिज्ञास्यत्वस्यान्यनिष्ठत्वाक्षेपात् जिज्ञासाधिकरणेनास्याक्षेपिकी सङ्गतिरुक्ता भवति। तथेशानाख्यो विषयश्च सूचितः॥

(२) सयुक्तिकं पूर्वपक्षयति—स चेति॥ अत्रेत्थं योजना—'स च' सर्वदेवोपास्यश्चेशानो वायुरेव भवेत्, न विष्णुः। कुतः? अत्र प्राणव्यवस्थापकत्वश्रवणात्। तथा मध्यमत्वोक्तेः सर्वदेवतोपास्यत्वोक्तेश्च। न चैषां वाय्वेकनिष्ठत्वासिद्धिः। यतोऽयं वायुः 'एवमेवैष प्राणः' (प्रश्न.३-४.) 'योऽयं मध्यमः' 'कुविदङ्ग' (ऋ.७-९१-१.) इत्यादिना वाक्येन स प्राणव्यवस्थापकत्वादिमान् प्रतीयते, अत इति। काठके हि—

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य॥ (कठ. ४-१२.)

इत्यनेन भगवतोऽङ्गुष्ठमात्रत्वं पूर्णषड्गुणत्वं देहमध्यस्थत्वं भूतभविष्यद्वर्तमानेशानत्वमित्यादिमाहात्म्यमभिधायेशानपदोक्तस्य तस्यैव 'ऊर्ध्वम्' इत्यादिना महिमान्तरमुच्यते। तत्र मध्यशब्दः सिद्धान्ते ऊर्ध्वप्रत्यक्छब्दसमभिव्याहारात् देशविशेषवचनः, न त्ववान्तरेश्वरत्वादिरूपमध्यमत्वार्थकः। तथा च यः प्राणाख्यरूपेण 'प्राणं' प्राणाख्यवायुमूर्ध्वं 'उन्नयति' उद्गमयति ऊर्ध्वगतिमत्तया प्रेरयति। अपानरूपी चापानाख्यं वायुं 'प्रत्यक्' अधस्ताद्विण्मूत्रादिनिष्कासनहेतुतया 'अस्यति' निरस्यति प्रेरयतीति यावत्। तं 'देहमध्ये' हृदये 'आसीनं' उपविष्टं 'वामनं' सौन्दर्यप्रधानाः स्त्रियो वामाः ताः नेतारं विष्णुं 'विश्वे देवाः' सर्वे देवाः 'उपासते' जिज्ञासन्त इति सिद्धान्तरीत्या श्रुत्यर्थः। पूर्वपक्षी त्विदं वायुपरं मत्वा मध्यशब्दो 'योऽयं मध्यमः' इति श्रुत्यन्तरसमाख्यानान्मध्यमेश्वरत्ववचनो न देशविशेषवचन इत्याह। 'एवम्' इति षट्प्रश्नवाक्यं च 'यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रामानधितिष्ठस्वेति' इति दृष्टान्तवाक्येन सह व्याख्येयम्। तत्प्रकारस्तु-यथा 'सम्राट्' सार्वभौमः 'अधिकृता

'कुविदङ्ग' ( ऋ. ७-९१-१. ) इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते ।

अतोऽब्रवीत्—

सू—ॐ ॥ शब्दादेव प्रमितः ॥ ॐ ॥ २४ ॥

---

न्' नियोगिनोऽधिकृत्य विनियुङ्क्ते । कथं ? त्वं 'एतान्' पाटलीपुत्रादीन् ग्रामान् 'अधितिष्ठस्व' तदाधिपत्येन तिष्ठस्वेति । 'एवमेवैषः' 'आत्मत एष प्राणो जायते' ( प्रश्न. ३-३. ) इत्यात्मजातत्वेनोक्तो मुख्यप्राणः 'इतरान्' भिन्नान् स्वजन्यत्वेनोपचारेणात्मप्रविभागान् 'प्राणान्' वायून् पृथगास्थानेषु हृदयादिषु स्थापयतीति । 'योऽयम्' इत्यादिबृहदारण्यकवाक्यम् । तत्र हि पूर्वं वागादीनां मृत्युग्रस्तत्वमुक्त्वा 'अथैनमेव नाप्नोत्' इत्यनेन मुख्यप्राणस्य तदनाप्तत्वेन तेभ्यः श्रैष्ठ्यमभिधाय 'योऽयम्' इत्यनेन प्राणशब्दवाच्येषु विष्णुवायुतदितरेषु चेतनेषु त्रिषु विष्णोरुत्तमत्वादन्येषामधमत्वाद्वायोर्मध्यमत्वादस्मान्निमित्ताद्वा अवान्तरेश्वरत्वाद्वा मुख्यप्राणस्य सर्वोत्तमत्वरूपकाष्ठात्वविरोधिमध्यस्थत्वमेवोच्यते, न तु मध्यदेशस्थत्वम् । तथा तत्रैव चतुर्थाध्याये 'अयं वाव शिशुः योयं मध्यमः प्राणः' (बृ.४-२-१.) इति चन्द्रिकोदाहृते वाक्ये स्थूलदेहाख्यविस्तृतप्रदेशगतलिङ्गशरीररूपगृहे विष्णुरूपायां स्थूणायां अन्नाख्येन श्रीरूपेण दाम्ना बद्धो गोवत्सरूपो वायुर्मध्यमत्वेनोच्यते ।

कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥

इति ऋङ्मन्त्रे 'अङ्ग' इति प्रियसम्बोधनम् । तथा च ये देवाः वायोः 'नमसा' नमस्कारोपलक्षितसेवादिना 'वृधासः' वृद्धाः ज्ञानादिगुणपूर्णाः 'अनवद्यासः' अनवद्याः अज्ञानरागाद्यवद्यविधुराश्च पुरा ससूर्या आसन् । ते 'कुवित्' क्वचिद्रहस्यस्थाने सूरेण सार्कं 'मनवे' ज्ञानिने 'बाधिताय' संसारक्लेशवद्भिः शरणं प्राप्ताय 'वायवे' वायुमुद्दिश्य 'उषसं' उष प्रकाशे, असुन्, बुद्धिं 'अवासयन्' तद्विषयामकुर्वन्निति श्रुत्यर्थः ॥

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'वामनशब्दात्' वामनश्रुतेः । एवकारो वायुलिङ्गसद्भावात् वायुरेवेशानः किं न स्या

वामनशब्दादेव विष्णुरिति प्रमितः।
(३) न हि श्रुतेर्लिङ्गं बलवत्।
(४) श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा।

---

दिति चोद्यपरिहाराय लिङ्गेभ्यः श्रुतेः प्राबल्यमाह। यथोक्तं सुधायाम्—एवशब्दव्याख्याने बलवदिति 'शब्दादेव प्रमितः' इति यथेति। समन्वयसूत्रादनुवृत्तस्य तदित्यस्यार्थो विष्णुरिति। विधेयभूतविष्णुत्वस्यान्वययोग्योद्देश्यद्योतनायेतिशब्दप्रयोगः। आवर्तते चायम्। इतिशब्दात्परमपि एवशब्दो योज्यः। तेनानुवृत्तस्तुशब्दो व्याख्यातः। तथा च 'ईशानो भूतभव्यस्य' (कठ. ४ - १२.) इतिश्रुत ईशानो विष्णुरेव भवेत्। कुतः? यस्तत्र प्रमितो विष्णावेव महायोगविद्वद्रूढिभ्यां प्रसिद्धो 'मध्ये वामनम्' इतिश्रुतो वामनशब्दस्तस्मादेवेति योजना। प्रमितपदं श्रुतेर्निरवकाशत्वसूचकम्। अनेन सूत्रे इतिशब्दोऽध्याहार्य इति सूचितम्। तथा च 'ईशानो भूतभव्यस्य' इतिश्रुत ईशानः 'तत्तु' विष्णुरेव भवेत्। कुतः? यस्तत्र विष्णावेव प्रमितो महायोगविद्वद्रूढिभ्यां प्रसिद्धोऽन्यत्रनिरवकाशो 'मध्ये वामनमासीनम्' (कठ. ५ - ३.) इतिश्रुतो लिङ्गात्प्रबलो वामनशब्दस्तच्छ्रुतिस्तस्मादिति सूत्रार्थः॥

(३) सूत्रे एवकारप्रयोगेन सूचितं श्रुतेः प्राबल्यं लिङ्गस्य प्राबल्यनिषेधमुखेन दर्शयति—न हीति॥ श्रुतेरिति पञ्चमी। हिशब्दो वक्ष्यमाणप्रमाणविरोधादिति हेतुसूचकः। तथा च 'हि' यस्मात् न श्रुतेर्लिङ्गं बलवत्, किन्तु दुर्बलमेव। तस्माल्लिङ्गात् प्रबलात् वामनशब्दादेवेशानो विष्णुरेवेत्यर्थः॥

(४) कुतो न श्रुतेर्लिङ्गं बलवदित्यतस्तथासति श्रुतेर्लिङ्गात्प्राबल्यवचनविरोधापत्तेरित्याशयेन तद्वाक्यं पठति—श्रुतिरिति॥ इति स्कान्द इत्यनन्तरं वचनादिति शेषः। अस्य न हीत्यनेनान्वयः। बाधकशब्दश्श्रुतिः। असाधारणधर्मो वा, तद्बोधकशब्दो वा लिङ्गम्। निर्णीतस्यान्यत्र समानोक्तिः समाख्या। सा द्विविधा—अर्थतश्शब्दतोऽपीति। समभिव्याहृतपदैरेवाकांक्षापूर्तौ तच्छान्त्यर्थं पदान्तरानिरपेक्षाणि पदानि वाक्यम्। एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम्। अनुक्तस्थानसमुच्चये तथेतिशब्दः। अनेकप्रमेयप्रतिपादकमेकार्थता

पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः।
इति स्कान्दे ।

त्पर्ययुक्तं वचनं स्थानम् । अत्र 'वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इत्यनुव्याख्यानुसारेण समाख्यायाः स्थानानन्तर्यमेव ग्राह्यम्, न त्वत्रोक्तक्रमानुसारेण वाक्याद्यपेक्षया प्राथम्यम् । अत्रोक्तक्रमस्याविवक्षितत्वात् । उक्तं हि प्रमाणलक्षणटीकायां—समाख्यादित्वेन ग्रहणं 'श्रुतिर्लिङ्गं समाख्या च' इत्यविवक्षितक्रमं वाक्यमनुसृत्येति । अत एव जैमिनिः—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति स्मृत्युक्तादन्यथाक्रममाह—पूर्वपूर्वमिति । पूर्वोद्दिष्टमित्यर्थः । एकत्र समवेतं विरुद्धमिति च शेषः । 'बलीयः' अतिशयेन स्वभावतो बलवत् यथाऽत्रैवाधिकरणे अनन्तरोद्दिष्टलिङ्गापेक्षया पूर्वोद्दिष्टा वामनश्रुतिः स्वतः प्रबला। वाक्यापेक्षया प्रबलं लिङ्गम् । यथा—दहराधिकरणे दहराकाशस्य साक्षात्सर्वाधारत्वप्रापकात् 'किं तदत्र विद्यते . . उभे अस्मिन् द्यावापृथिवी' (छां.८-१-२,३.) इति वाक्यात्प्रबलं विष्णोस्तत्प्रापकापहतपाप्मत्वादिकं लिङ्गम् । प्रकरणापेक्षया प्रबलं वाक्यम् । यथा—'ज्योतिर्दर्शनात्' इत्यधिकरणे जीवस्य 'हृद्यन्तर्ज्योतिः' (बृ.६-३-७.) इतिवाक्यबोध्यज्योतिष्ट्वसाधकाज्जीवप्रकरणात्प्रबलं विष्णोर्ज्योतिष्ट्वप्रापकं 'कतम आत्मा' (बृ.६-३-७.) इति प्रश्नवाक्यम् । स्थानापेक्षया प्रबलं प्रकरणम् । यथा–समग्रोपनिषद् ईश्वरपरत्वसाधकात् षट्प्रश्नरूपस्थानात् प्रबलं 'आत्मन एष प्राणो जायते' (प्रश्न.३-३.) इत्येतत्खण्डरूपं मुख्यप्राणप्रकरणम् । अत एवात्राधिकरणे षट्प्रश्नोक्तप्राणव्यवस्थापकत्वादीनां मुख्यप्राणलिङ्गत्वमुपेत्य श्रुत्या बाध उक्तः। समाख्यापेक्षया प्रबलं स्थानम् । यथा–अन्नमयादिशब्दानां कोशपरत्वसाधकात् 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' ( याज्ञिकी. ६६. ) इति नारायणानुवाकसमाख्यायाः प्रबलं तेषां विष्णुत्वसाधकं ब्रह्मपरानेकप्रकरणसन्दर्भरूपं स्थानम् । एतान्येव श्रुत्यादिनाऽर्थनिर्णयस्थलानि। आद्यया समाख्यया निर्णेतव्यं यथा—पुरुषसूक्तसमाख्यया वैश्वानरस्य विष्णुत्वम् । द्वितीयया यथा—अंभ्रणीसूक्तसमाख्यया विश्वकर्मसूक्तोक्तस्याजस्य विष्णुत्वम् । अस्त्वेवं ततः किमित्यत आह—एवमिति । विरुद्धै तेषां समवाये सति प्रबलेन पूर्वेणोत्तरबाधे च सति

( ५ ) तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभवः' इति ॥ २४ ॥

'आगमनिर्णयः' आगमार्थस्य विप्रतिपन्नस्यैतैः निर्णयो भवतीत्यर्थः॥

( ५ ) नन्वस्तु श्रुतेः स्वभावतः प्राबल्यम् । तथापि बाहुल्येन पूर्वपक्ष्युक्तलिङ्गानामपि प्राबल्यात्साम्येनानिर्णय एवेत्यत आह—तच्चेति॥ चस्त्वर्थः । लिङ्गमिति समुदायैकवचनम् । तथा च 'तत्' पूर्ववाद्युक्तं लिङ्गजातं तु विष्णोरेव युक्तम्, न वायोरित्यर्थः । तथा च बाहुल्येऽपि लिङ्गानां सावकाशत्वात्तेभ्यः श्रुतेरेकस्या अपि निरवकाशायाः प्राबल्यान्नानिर्णय इति भावः । ननु न लिङ्गं विष्णौ सावकाशं, पूर्वपक्ष्युदाहृतसमाख्यारूपश्रुत्यन्तरेण तस्य प्राणनिष्ठतयैवोक्तत्वादित्यत आह—तस्यैवेति । 'तद्वै त्वम्' इति श्रुतौ 'तस्य' विष्णोः प्राणत्वस्य प्राणशब्दवाच्यत्वस्योक्तेरुक्तत्वादित्यर्थः । एवं 'अत एव' इत्याध्यात्मिकाशेषशब्दस्य समन्वयं ब्रुवता तथा— 'शास्त्रदृष्ट्या' इत्यत्रान्तर्यामिपरत्वं ब्रुवता सूत्रकारेणेतरव्यावृत्त्या तस्यैव प्राणत्वोक्तेः साधितत्वादित्यपि व्याख्येयमेतत् । तथा च श्रुत्यन्तरे प्राणनिष्ठतया लिङ्गस्योक्तावपि न तद्विरोधः । तस्य प्राणस्य विष्णुत्वाभ्युपगमादिति भावः । ननु तथापि 'कुविदङ्ग' इति ऋचि वायुनिष्ठतया लिङ्गोक्तेस्तद्विरोध इत्यस्यापीदमेवोत्तरम् । अस्मिन् पक्षे प्राणत्वमिति वायुत्वमुपलक्ष्यते । तथा चान्तर्नये आधिदैविकाशेषशब्दसमन्वयं ब्रुवता सूत्रकारेण 'तस्यैव' विष्णोरेव 'प्राणत्वोक्तेः' वायुशब्दवाच्यत्वरूपवायुत्वस्योक्तत्वादित्यर्थः । तथा च न तद्विरोधोऽपीति भावः । न च सिद्धान्तेऽपि स्थानापेक्षया प्रबलात्प्रकरणात् 'एवमेवैषः' इतिश्रुत्यन्तरगतप्राणशब्दस्य, तथा 'योयं मध्यमः' ( बृ. ३-५-२१. ) इत्यत्रत्यस्य, तथा 'कुविदङ्ग' इति मन्त्रस्थवायुशब्दस्य मुख्यवायुपरत्वं, तत्रोक्तलिङ्गानामपि तत्परत्वमुपेत्य तेषां श्रुत्या बाधस्योक्तत्वात् कथं श्रुत्यन्तरस्थप्राणवायुशब्दयोः विष्णुपरत्वाङ्गीकारेण समाधानम् । अत एव चन्द्रिकायाम्—मध्यशब्दोऽपि 'ऊर्ध्वं प्राणम्' ( कठ. ५-३. ) इति प्राणस्य स्थानान्तरनिर्देशात्तत्यागेन मध्यमस्थानस्थब्रह्मपरः, न तु श्रुत्यन्तरे मध्यमशब्दोक्तप्राणपर इत्युक्तम् । अतः 'एवमेवैषः' ( प्रश्न. ३ - ४. ) इति वाक्यं स्थानात्प्रकरणस्य प्राबल्ये उदाहृतमिति वाच्यम् । उक्तरीत्या मुख्यतः श्रुत्यन्तरगतप्रा

( ६ ) सू—ॐ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ ॐ ॥ २५ ॥

णशब्दादेर्ब्रह्मपरत्वेन लिङ्गानां तत्तदन्तर्यामिनिष्ठत्वेऽपि समाकर्षन्याये नान्यपरत्वस्याप्यङ्गीकारात् । श्रुत्यन्तरोक्तलिङ्गानामन्यनिष्ठत्वेऽपि वा नानुपपत्तिः । न चैवं काठकोक्तलिङ्गानामप्यन्यनिष्ठत्वापत्त्या अन्येषामीशानत्वाद्यापत्तिः । निरवकाशश्रुत्या काठकोक्तलिङ्गानां विष्णुनिष्ठतानिर्णयोपपत्तेः । ननु तथापि कथमीशानो विष्णुर्भवेच्छ्रुतावीशानस्याङ्गुष्ठपरिमितत्वोक्तेः । सर्वगते च हरौ तदयोगात् । न च व्योमवत्सर्वगतस्याप्यणुत्वं युज्यत इति प्रतिपादितमिति वाच्यम् । तथाऽपि 'अङ्गुष्ठमात्रः' इति तन्मात्रपरिमाणत्वोक्तेरयोगात् । न च 'अङ्गुष्ठमात्रः' इत्यत्र श्रुतः परिमाणार्थको मात्रच्प्रत्यय एव, न त्ववधारणार्थको मात्रशब्दः । 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि' इति स्मृतौ मित इत्यनेन परिमाणस्यैवोक्तेः । तथा च नानुपपत्तिरिति वाच्यम् । तथात्वेऽङ्गुष्ठमात्रत्वाभिधात्र्यां 'अङ्गुष्ठमात्रः' (कठ. ४-१२.) इति श्रुतौ 'मध्य आत्मनि' इत्यस्य स्मृतौ हृदीत्यस्य च वैयर्थ्यापातात् । तन्मात्रपरिमितत्वोक्त्यर्थं हि तत्र हृदयरूपसूक्ष्मस्थानोक्तिः । तस्मादवधारणार्थकमात्रशब्द एवायमङ्गीकार्यः । उक्तं हि चन्द्रिकायाम्—मात्रशब्दस्यावधारणार्थकत्वादिति ॥

( ६ ) तथा च सर्वगते हरावङ्गुष्ठमात्रत्वोक्तिरनुपपन्नेति नात्रेशानो विष्णुरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदक्षराणि व्याचष्टे—हृदीति ॥ सर्वगतस्यापीत्यनेन तुशब्दो यद्यपितथापीत्यर्थतया व्याख्यातः । हृद्यपेक्षयेत्यनेन सूचितहेतोरन्वययोग्यं साध्यं दर्शयति—तस्येति । योजना तु—यद्यपि विष्णुः सर्वगतस्तथापि 'तस्याङ्गुष्ठमात्रत्वं' अङ्गुष्ठमात्रत्वोक्तिर्युज्यते । कथम् ? यतो 'हृद्यवकाशापेक्षया' हृदि विद्यमानो योऽयमवकाशोऽङ्गुष्ठपरिमितदेशस्तदपेक्षया तत्राभिव्यक्ततावत्परिमितभगवन्मूर्तिविशेषमपेक्ष्य तस्य विष्णोरङ्गुष्ठमात्रत्वं अस्त्यत इति । यद्वा—'हृद्यवकाशापेक्षया' हृदि विद्यमानावकाशमपेक्ष्य तत्सम्बन्धात्तस्याङ्गुष्ठमात्रत्ववचनं युज्यत इत्यावृत्तिं विना योजना । प्रथमपक्षे शक्त्याऽपरिमितेऽपि भगवति मूर्तिविशेषे व्यक्त्यात्मनाऽङ्गुष्ठमात्रत्वं मुख्यमिति भावः । द्वितीयपक्षे तु स्थानहृदयाकाशगतस्याङ्गुष्ठमात्रत्वस्य स्थानिनि ब्रह्मणि तत्सम्बन्धादुपचारेणोक्तिरि

सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते ।

ति भेदः । अत्र टीकायां हृद्यवकाशापेक्षयेति भाष्यं सावधारणं कृत्वा सौत्रतुशब्दोऽवधारणतया व्याख्यातः । तेन विष्णोरङ्गुष्ठमात्रत्वं हृद्यपेक्षयैव, न तु लोकवत्परिच्छिन्नत्वादित्युक्तं भवति । तत्तत्स्थानेषु व्यक्तमूर्तिविशेषापेक्षया वा उपचारेण वा तत्तत्परिमाणत्वोक्त्या 'यस्त्वेतमेव प्रादेशमात्रम्' ( छां.५-१८-१. ) इति छान्दोग्ये 'प्रादेशमात्रं पुरुषम्' इत्यन्यत्र 'प्रादेशः पुरुषोत्तमः' इत्यपरत्र च हृद्गतस्य विष्णोः प्रादेशपरिमितत्वोक्तेः । 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' (महाना.१६-३.) इति श्रुत्यन्तरे 'अङ्गुष्ठमात्रः पुरुषः' इति कठवल्ल्यां च 'अङ्गुष्ठमात्रः पुरुषः' इत्यपरत्र चाङ्गुष्ठपरिमितत्वोक्तेः 'अङ्गुष्ठाग्रप्रमाणकः' इति क्वचिदङ्गुष्ठाग्रप्रमाणकत्वोक्तेर्विरोध इति चोद्यं परिहृतं भवति । देहे हृदयाकाशे प्रादेशपरिमितरूपविशेषस्य हृदयगतकमलकर्णिकामूलगताकाशेऽङ्गुष्ठाग्रप्रमाणकरूपान्तरस्य कर्णिकाग्रगताकाशे चाङ्गुष्ठपरिमितरूपान्तरस्य च व्यक्तिसम्भवात्, तत्तत्स्थानधर्मस्य स्थानिन्युपचरितत्वसम्भवाच्च । यथोक्तं बृहदारण्यकभाष्ये—

हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः ।
जीवानां स्थानमुद्दिष्टः सर्वदेवसनातनः ॥
हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः ।
मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः ॥
अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा ॥

इति । अस्मिन् मूलेशव्यापिनोर्मध्येऽङ्गुष्ठमात्रत्वं च देहे देहाङ्गुष्ठमितत्वं जीवहृदि जीवाङ्गुष्ठमितत्वमिति विवेक्तव्यम् । अत्र 'अङ्गुष्ठं च समाश्रितः' इत्यनेन कर्मेन्द्रियाधिष्ठितत्वमुच्यत इति प्रमेयदीपोक्तमपि ज्ञातव्यम् । ननु 'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः' इत्यादिवचनाज्जाग्रदाद्यवस्थाप्रेरकविश्वतैजसप्राज्ञानां दक्षिणाक्ष्यादिषु सत्त्वं तावत्सिद्धम् । यदि चैवं तदा जीवोऽपि जाग्रदवस्थायां दक्षिणाक्षिस्थः स्वप्ने कण्ठदेशस्थः सुप्तौ हृदयस्थो भवति, 'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति' इत्युक्तेः । दूरस्थोऽक्षिस्थो जाग्रज्जाग्रत्वमिति तस्यार्थः । तथा च कथं हृदयव्याप्तप्रादेशपरिमित

( ७ ) इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वात्

भगवद्रूपस्य सर्वदा जीवस्थानत्वम् ? कथं च हृत्कर्णिकामूलगतभगवद्रूपे सदा प्रतिष्ठितो जीवः? सुप्तौ हृत्कर्णिकाग्रगते हरौ प्रविशतीत्युक्तिरिति चेत्—न, यतस्सर्वदा हृदि स्थितमेव जीवस्वरूपं जागरितादावस्थादिष्वपि विशेषसन्निहितं दीपप्रकाशवदित्यङ्गीकृतम् । यथोक्तमैतरेयभाष्ये-हृदि स्थितमेव तस्य रूपं जागरितेऽप्यवस्थादिषु विशेषसन्निहितं भवतीति । एकस्यैव जीवस्य स्थापनधृत्याख्यप्रतिष्ठापनसुप्तिप्रापणाख्यप्रयोजनभेदादेकदेहे अनेकधा स्थितानां भगवन्मूर्तीनां शक्त्या सर्वगानामपि तत्र तत्र व्यक्त्यात्मना अनेकाल्पपरिमाणवत्त्वं च युज्यत इति न काचिदनुपपत्तिः ॥

( ७ ) ननु तथाऽपि नाङ्गुष्ठपरिमाणवत्त्वं विष्णोर्युक्तम् । तथा हि किं तत्तदङ्गुष्ठमात्रत्वं वा यत्किंचिदङ्गुष्ठमात्रत्वं वा । नाद्यः, पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतस्य विष्णोरङ्गुष्ठपरिमितत्वायोगात् । न द्वितीयः, अङ्गुष्ठमात्रत्वोक्तेस्तैस्तैस्तथोपासनार्थत्वेन तस्य चाङ्गुष्ठव्यक्तिविशेषनिर्धारणं विनाऽयोगेन यत्किंचिदङ्गुष्ठमात्रत्वोक्तेर्व्यर्थत्वात् । पिपीलिकादिहृदयस्थेऽङ्गुष्ठमात्रत्वसामान्यस्याप्यसम्भवाच्चेत्याशङ्कां परिहरन् 'मनुष्याधिकारत्वात्' इतिसूत्रशेषं तुशब्दस्य काकाक्षिन्यायेन अत्राप्यन्वयं तस्याप्यर्थत्वं च अभिप्रेत्य तत्सम्बन्धिप्रदर्शनपूर्वकं व्याचष्टे—इतरेति ॥ पश्वादीनामित्यर्थः । अपिरावर्तते । अङ्गुष्ठमात्रत्वमित्येतत् विपरिणामेनानुवर्तते । 'न विरोधः' इति विरोधसूत्रादाकृष्टे पदे । तथा च 'अपि' तत्तदङ्गुष्ठपरिमितत्वाङ्गीकारेपीतरप्राणिनामङ्गुष्ठाभावेऽपि न विष्णोरङ्गुष्ठमात्रत्वस्य विरोधेनाङ्गुष्ठमात्रत्वोक्तेरसम्भवः । कुतः? अङ्गुष्ठमात्रत्वोक्तेरेतद्विद्याया 'मनुष्याधिकारत्वात्' मनुष्यानधिकृत्य प्रवृत्तत्वात् । तदपि कुतः ? वेदविद्योपासनस्य 'मनुष्याधिकारत्वात्' मनुष्यमात्राधिकारत्वादिति योजना । सूत्रे भाष्ये च मनुष्याणामधिकारो यस्मिन् अथवा—अधिक्रियतेऽत्रेत्यधिकार उपासनं शास्त्रं वा, मनुष्याणामेव अधिकारो मनुष्याधिकारस्तस्य भावस्तस्मादिति विग्रहः । 'मनुष्याधिकारित्वात्' इतिपाठे मनुष्या अधिकारिणो यस्मिन् तत्तथोक्तम् । तथा च मनुष्याधिकारिकत्वादित्यर्थः । मनुष्यपदं च वक्ष्यमाणन्यायेन मननादिशीलचेतनपरम् । तेन देवानां जरितार्यादीनां वक्ष्यमाणन्यायेन वेदविद्याधिकारिणामेत

विरोधः ॥ २५ ॥

८. अधिकरणम् ॥

( १ ) मनुष्याणामेव वेदविद्याधिकार इत्युक्तम् ।

द्विद्याधिकारसिद्धिः । तत्र जरितार्यादीनां स्वस्वाङ्गुष्ठपरिमितत्वेन भगवदुपासनाऽसम्भवात्, तेषामेतद्विद्योत्पन्नवाक्यार्थज्ञान एवाधिकारो, नोपास्तावपि । अत एव टीकायां मनुष्याणामेव वेदविद्योपासनाधिकारित्वेनेति मनुष्यत्वं व्यापकत्वेनोक्तम् । न चानधिकारिणां पश्वादीनां देहस्थितस्य भगवतोऽङ्गुष्ठपरिमितत्वाभावे परिमाणान्तरानुक्तेरद्रव्यत्वापत्तिरिति वाच्यम् । पश्वादिदेहगतस्य परमात्मनः तत्तदाकारयुक्तत्वेन तदनुसारिपरिमाणवत्त्वात् । यथोक्तमैतरेयभाष्ये—

सङ्कर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ ।
नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ ॥ इति ॥

अनेन—सूत्रे तुशब्दोऽप्यर्थेऽवधारणे च । तत्राप्यर्थस्योभयत्रान्वयः । अङ्गुष्ठमात्रत्वं युज्यत इति शेषः । तदिति प्रधानसूत्रादनुवृत्तस्येह विपरिणामेनान्वयः । न विरोध इत्यस्याकर्षः । 'तस्य मनुष्याधिकारित्वात्' इत्यावर्तते । तथा च 'तु' अपि सर्वगतस्यापि 'तस्य विष्णोरङ्गुष्ठमात्रत्वं' तदुक्तिर्युज्यते । न च विरोधः । यतोऽत्र 'हृद्यपेक्षया तु' हृद्यवकाशापेक्षयैव अङ्गुष्ठमात्रत्वमुच्यते, न तु परिच्छिन्नत्वात् । तत्र मूर्तिविशेषे तन्मात्रत्वस्य सत्त्वादुपचारेण वा युज्यते । न च नाङ्गुष्ठमात्रत्वं विष्णोर्युक्तम्, यत्किञ्चिदङ्गुष्ठमात्रत्वोक्तेर्व्यर्थत्वेनासम्भवेन च तत्तदङ्गुष्ठमात्रत्वे वाच्ये तस्य च पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णावयोगादिति वाच्यम् । यतः 'तु' अपीतरप्राणिनामङ्गुष्ठाभावेऽपि न विष्णोस्तत्तदङ्गुष्ठमात्रत्वस्य 'विरोधः' असम्भवः । कुतः ? अङ्गुष्ठमात्रत्ववचनस्य तद्बोधकविद्यायाः 'मनुष्याधिकारत्वात्' मनुष्यानेवाधिकृत्य प्रवृत्तत्वात् । तदपि कुतः? 'तस्य' वेदविद्योपासनस्य 'मनुष्याधिकारत्वात्' मनुष्यमात्रेऽधिकारत्वादिति सूत्रार्थ उक्तो भवति ॥ ७ ॥

इति वामनाधिकरणम् ॥

८. अधिकरणम् ॥

( १ ) अस्मिन्नधिकरणे देवानां ब्रह्मविद्याधिकारः समर्थ्यते । प्रा

( २ ) तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह—

( ३ ) सू—ॐ ॥ तदुपर्यपि बादरायणः सम्भवात् ॥ ॐ ॥ २६ ॥

साङ्गकत्वान्नाध्यायपादसङ्गती मार्गणीये । श्रुत्यादिसङ्गतिविषयसंशयतद्बीजानि दर्शयति—मनुष्याणामिति ॥ 'उक्तं' पूर्वसूत्रे । तुशब्दार्थावधारणस्य समासप्रविष्टमनुष्यपदेनापि सम्बन्धोऽस्तीति भावेन मनुष्याणामेवेत्यनुवादः । नेतरेषामित्येवशब्दार्थः । 'वेदविद्याधिकारो' वेदविद्योपासनाधिकारः । अनेन—देवाधिकाराभावमुखेन 'विश्वे देवा उपासते' इत्यादिपूर्वोदाहृतश्रुत्युपलक्षिताशेषश्रुतिप्रामाण्यस्याक्षेपात्पूर्वाधिकरणेनास्याक्षेपिकी सङ्गतिः वेदविद्याधिकाराख्यो विषयश्चोक्तो भवति । 'अङ्गुष्ठमात्रः' इति श्रुतिमूलायाः 'मनुष्याणामेव' इत्युक्तेः 'विश्वे देवा उपासते' ( कठ. ५ - ३. ) इति श्रुतेश्च कोटिद्वयोपस्थापकत्वेन सन्देहबीजत्वात्तदुक्त्यैव देवानामधिकारोऽस्ति उत नास्तीति संशयो, नास्तीति पूर्वपक्षश्च सूचितः ॥

( २ ) ततः किमित्यतस्संशयबीजं विघटयन् सिद्धान्तयितुं सूत्रमवतारयति—तिर्यगादीति ॥ विशिष्टबुद्ध्यादिरहिततिर्यगादिव्यावृत्त्यर्थमित्यर्थः । मनुष्यत्वविशेषणं सावधारणत्वेनाभिप्रेतम् । मनुष्यपदं 'उक्तं' प्रयुक्तं, तत्रेति शेषः । पूर्वसूत्र इति तदर्थः । स्वप्रयुक्तैवकारव्यावर्त्यं दर्शयति—न त्विति । 'देवाद्यपेक्षया' देवादिव्यावृत्त्यर्थम् । तुशब्दो विशेषार्थः । न तु देवाद्यर्थमपीत्यपिशब्दार्थो वा । 'इत्याह' इत्यभिप्रेत्य सूत्रकारो देवानामधिकारभावमाहेत्यर्थः ॥

( ३ ) तत्सूत्रं पठति—तदुपरीति ॥ अत्र तदुपरीति साध्यधर्मिसूचकं पदमनूद्य तेषां तस्मात्तस्या इति विग्रहाश्रयेण व्याचष्टे—तदुपरीति । वेदविद्याधिकार इत्यनुषज्यते । न केवलं मनुष्याणां सतां, किन्तु तदुपर्यपीत्यपेरर्थः । तथा च 'तेषां' मनुष्याणां सतां देवतापदयोग्यानां जीवानां पदप्राप्तेः पूर्वं मनुष्यशरीरं प्राप्तानां सतां 'तस्मात्' मनुष्यत्वात् 'उपरि' मनुष्यशरीरापगमेन 'तस्या उपरि' देवोपदेवादिपदप्राप्तेरुपरितनकालेऽपि देवभावमापन्नानामपि वेदविद्याधिकारोऽस्त्येवेति योजना । कुत इत्यतस्तद्धेतुतया सम्भवादिति हेतुं व्याचष्टे । 'हि' यतः । 'वेदविद्याधिकारः' इत्यत्रापि संबध्यते । 'तेषां' देवानाम् । अधिकारसम्भवोऽपि कुत इत्यतोऽत्रापि सम्भवादि

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि। सम्भ
वति हि तेषां विशिष्टबुद्ध्यादिभावात्।
(४) तिर्यगादीनां तदभावादभावः। तेषामपि यत्र विशि

ष्येतदेवावृत्त्य हेतुतया योजयति—विशिष्टेति। तेषामित्यत्राप्यन्वीयते। तथा च 'तेषां' योग्यमनुष्याणां विद्याकर्मभ्यां देवादित्वप्राप्तिमतां 'सम्भवात्' विशिष्टबुद्ध्यादिभावादर्थग्रहणानुष्ठानोपयुक्तबुद्धिविशेषादिसद्भावादित्यर्थः। अर्थित्वसामर्थ्ये आदिपदेन ग्राह्ये। न चार्थित्वाभावः इत्यत्रापि तेषां सम्भवति हीत्येव हेतुः। विद्याभिस्तेषां मोक्षसिद्धिः सम्भवति हीति तदर्थः। अनेन—सूत्रे तदित्यावर्तते। मनुष्यपरामर्शि चेदं बुद्धिस्थपरामर्शि च। अपिः समुच्चये। अधिकार इति बुद्ध्या विविच्यात्रान्वेति। अनधिकाराधिकाराभिधायकजैमिनिबादरायणोक्तिरूपाविप्रतिपत्तिसूचनाय बादरायणपदम्। तत्त्वप्रदीपरीत्या तात्पर्यज्ञापनार्थमधिकाराधिक्यज्ञप्तिदार्ढ्यार्थं च बादरायणः स्वयमेव वक्तीत्याहेति वा। सम्भवादिति चावर्तते। तथा च यतो न केवलं देवादिपदयोग्यजीवानां पदप्राप्तेः पूर्वं भूमौ किञ्चित्कालं मनुष्याणां सतां तस्यां दशायामेव अधिकारः, किन्तु 'तदुपर्यपि' तस्मान्मनुष्यत्वादुपरि तदत्ययेन ताभ्यां विद्याकर्मभ्यां तस्याः देवादित्वप्राप्तेरुपरितनकालेऽपि देवभावमापन्नानामपि वेदविद्यायामधिकारोऽस्त्येव। न च तत्कारणाभावः। 'सम्भवात्' अधिकारोपयोगिनो विशिष्टबुद्ध्यादेस्तेषु सम्भवात्। न च देवादीनां विशिष्टबुद्धिसामर्थ्यसद्भावेऽप्यर्थित्वाभावादधिकाराभाव इति वाच्यम्। कुतः? 'सम्भवात्' विद्यासाध्यज्ञानमोक्षयोरर्थित्वसम्भवादिति भगवान् बादरायणो मन्यत इति सूत्रार्थ उक्तो भवति॥

(४) ननु न देवा वेदविद्याधिकारिणः, तथा सति सूत्रेऽमनुष्यमात्रव्यावर्तकमनुष्यपदप्रयोगेन तिर्यगादिवदमनुष्यत्वान्न देवा वेदविद्याधिकारिण इत्यनुमानसूचनात्तद्विरोधापत्तेरित्यत आह—तिर्यगादीनामिति॥ आदिपदेन स्थावराणि मूढमनुष्या वा गृह्यन्ते। 'तदभावात्' विशिष्टबुद्ध्यादेरभावात् 'अभावः' तस्य वेदविद्याधिकारस्य। अनेनाधिकाराभावे विशिष्टबुद्ध्यादिराहित्यस्य प्रयोजकत्वोक्त्या परोक्तामनुष्यत्वहेतोः सोपाधिकत्वं साध्यव्यतिरेकसाधकोपाधिव्यतिरेकाख्यप्रतिपक्षग्रस्तत्वं चोक्तं भवति। सौत्रमनुष्यपदं च मननादिशी

ष्टबुद्ध्यादिभावस्तत्राविरोधः ।

( ५ ) निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ॥ २६ ॥

लपरं सत् विशिष्टबुद्ध्यादिरहितमेव चेतनं व्यावर्तयति, न तु मर्त्य भिन्नमात्रमिति न तद्विरोध इति भावः । ननु न विशिष्टबुद्ध्यादिराहित्यमुपाधिः । तिर्यक्षु अधिकाराभावरूपसाध्याव्यापकत्वात् । अत एव न तदभावोऽपि साध्यव्यतिरेकहेतुरित्यत आह–तेषामपीति । अपि रुभयत्रान्वेति । तत्राद्यस्समुच्चये । अधिकार इति शेषः । तथा च न केवलं देवानां, किन्तु 'तेषां' तिरश्चामप्यधिकारेऽपि न विरोधः । ननु कथमविरोधस्तिर्यक्षु सर्वत्र वेदाधिकारे मानविरोधपातादित्यत आह—तेषामपीति । 'तिरश्चां मध्येऽपीत्यर्थः । 'यत्र' येषु विशिष्टबुद्ध्यर्थित्वाख्यरागादिभावः तत्सर्वं तत्रैवाधिकारे 'अविरोधो' मानाविरोधः । बाधो न सर्वत्रेत्यर्थः । अनेनापिना सौत्रोऽपिशब्दो जरितार्यादिसमुच्चायकश्चेति सूचितम् । यदाह तत्त्वप्रदीपिकाकारः–तेषामपीत्यादिरपिपदव्याख्येति । आनन्दमालाकारोऽपि-तिर्यञ्चोऽपि केचिदपिशब्दगृहीता इत्याह । तथा च मनुष्यभिन्नेष्वपि तिर्यक्ष्वधिकारसद्भावाद्व्यभिचारादधिकाराभावे नामनुष्यत्वं हेतुः, किन्तु विशिष्टबुद्ध्यादिराहित्यमेवाव्यभिचारात् । अतो भवत्येव स उपाधिः । अत एव सौत्रमनुष्यपदस्य व्यावर्त्यसंकोचोऽपि युक्त इति भावः ॥

( ५ ) ननु कथं तिरश्चामप्यधिकारेऽप्यविरोधः । तेषामधिकारनिषेधस्य तद्दर्शनस्य वा विरोधित्वादित्याशङ्क्य नाद्य इत्याह—निषेधेति ॥ तेषामित्यत्रापि सम्बध्यते । अधिकारे इत्यादौ संयोज्यम् । तेन निषेधराहित्ये सति विशिष्टबुद्ध्यादिमत्त्वमेवाधिकारे प्रयोजकम्, न केवलं येन शूद्रादौ व्यभिचारः स्यादिति सूचितम् । न द्वितीय इत्याह–दृश्यन्ते हीति । वेदाधिकारितयेति शेषः । हिशब्दो भारतादिप्रसिद्धिसूचकः । अत एव भारते—

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यत्तच्छृणु नराधिप ॥

इत्यादिना जरितारिसारसृक्कस्तम्बमित्रद्रोणाख्येषु पक्षिषु मध्ये जरितारिरग्रजः स्वभ्रातृभिरस्मान्मोचयेति प्रार्थितः 'अयमग्ने जरिता' (ऋ. १०-१४२-१. ) इत्याग्नेयसूक्तेनाग्निं स्तुत्वा खाण्डववनदहने स्वभ्रातॄन् भिदाहादमोचयदिति प्रतिपादितम् । यत इत्यर्थे वा हिशब्दः । अत्र जरि

( ६ ) सू—ॐ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ ॐ ॥ २७ ॥

मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेत्—

---

तार्यादय इत्येव पाठो युक्तः, न तु जरितर्यादय इति ह्रस्वयुक्तपाठः, भारतविरोधात्, तत्त्वप्रदीपविरोधाच्चेति ध्येयम् । दृश्यन्ते हीत्यनेन—देवा वेदविद्याधिकारिणः निषेधराहित्ये सति विशिष्टबुद्ध्यादिमत्त्वात्, तादृशमर्त्यवदिति सिद्धान्त्यभिमतानुमाने मनुष्यत्वोपाधिर्निरस्तो भवति । जरितारि आदिशब्दगृहीतसारसृक्कादौ च साध्याव्यापकत्वात् ॥

( ६ ) देवानां वेदविद्याधिकारसिद्ध्यर्थं तदुपरीत्यनेनोक्तं सादित्वमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे-विरोध इति ॥ मनुष्या एवेति । देवादिपदयोग्या जीवाः पूर्वं भूमौ किंचित्कालं मनुष्याः सन्त एव अथ देवादयो भवन्तीत्यर्थः । न तु मनुष्यभावं विनेत्येवशब्दार्थः । इत्युक्तमिति । अत्रोक्तमिति । उक्तमित्यनन्तरं तदयुक्तमिति शेषः । कुत इत्यतस्तत्पक्षे बाधकोक्तिपरं विरोध इत्यंशं सहेतुकं व्याचष्टे—तत्र यदीति । यदीत्यारभ्य भवन्तीत्यन्तं पूर्ववाक्यार्थानुवादस्तस्यापादकत्वप्रदर्शनार्थः । तत्रेत्यव्ययं तर्हीत्यर्थकं भवन्तीत्यतः परं योज्यम् । यद्वा—मनुष्या एव देवादयो भवन्तीत्युक्त्या प्राप्ताभेदशङ्कां वारयितुं मनुष्या एवेत्यादिस्वपदानि वर्णयति—तत्रेति । यद्वा—तत्र देवतोद्दिष्टकर्मणीति समानाधिकरण्यम् । अत्र पक्षे यदीति श्रवणात्तर्हीति लभ्यते । भवन्तीत्यनन्तरमित्युक्तमित्यस्ति । उभयत्रादिपदेनोपदेवादयो गृह्यन्ते । कर्मपदं शब्दस्याप्युपलक्षकम् । तथा च यदि पूर्वं मनुष्याः सन्तोऽप्यथ देवादयो भवन्तीत्युक्तमित्युच्यते, तर्हि ‘ तत्पूर्वं ’ तेभ्यः पूर्वं तेषां देवादिपदप्राप्तेः पूर्वं साधकत्वावस्थायां ‘ देवताभावात् ’ देवताया असत्त्वात् येन कर्मणा देवादित्वं साध्यमित्युक्तम्, ‘ तत्र ’ तस्मिन्नेव ‘ देवतोद्दिष्टकर्मणि ’ पूर्वकल्पे देवतोद्देशेन प्रवृत्तकर्मणि देवतावाचकशब्दे च ‘ विरोधः ’ तयोर्वैयर्थ्यमिति योजना । उद्देश्याभावाद्वाच्याभावाच्चेति भावः ॥

(७) न, अनेकेषां देवतापदप्राप्तेर्दर्शनात् । 'ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः' इति ॥२७॥

(७) परिहारांशं व्याचष्टे—नेति ॥ इदं चावर्तते । योजना तु— न कर्मणि विरोधः, कुतः? यतो न पूर्वं देवताभाव इति । तेषां प्रवाहतोऽनादित्वेनैतद्देवानां पूर्वमभावेऽपि देवतान्तरसद्भावादिति भावः । न च तत्र प्रमाणाभाव इत्यतः प्राप्तमनेकेत्यंशं प्रतिपत्तिशब्दस्य ज्ञानार्थत्वभ्रमं वारयन् तत्सम्बन्धिप्रदर्शनपूर्वकं व्याचष्टे-अनेकेषामिति । 'ते हनाकम्' (तै.आ.३-१२.) इति श्रुतौ 'अनेकेशाम्' एकैकगणशोऽनन्तानां देवत्वादियोग्यमनुष्याणां विद्याकर्मभ्यां पूर्वपूर्वदेवतापदप्राप्तेर्दर्शनादित्यर्थः।अनेन-तदुपरीत्यत्रोक्तं देवानां सादित्वमयुक्तं, तथा सति येन कर्मणा देवादित्वं साध्यमित्युक्तम्, तत्र कर्मणि शब्दे च विरोधस्तस्य वैयर्थ्यं स्यात् तत्पूर्वं देवताभावादिति चेत्—न, यतो न पूर्वं देवताऽभावः । तत्कथम्? एतद्देवानां पूर्वमभावेऽपि देवान्तरसद्भावात् । न च तत्र मानाभावः । 'अनेकप्रतिपत्तेर्दर्शनात्' अनेकेषां योग्यमनुष्याणां पूर्वपूर्वपदप्राप्तेः 'तेह नाकम्' इत्यत्रोक्तत्वादिति सूत्रार्थ उक्तो भवति । श्रुतौ 'यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन्' इति पूर्ववाक्ये प्रकृताः देवास्तच्छब्देन गृह्यन्ते । हशब्दः पुनरर्थे प्रसिद्धौ वा । तथा च ये 'देवाः' देवत्वयोग्याः मनुष्या ज्ञानकर्मात्मकेन 'यज्ञेन' 'यज्ञं' विष्णुं 'अयजन्त' अपूजयन् । ततस्तेन ज्ञानपूर्वककर्मणा देवपदं प्राप्य 'प्रथमानि' प्रथमाः मुख्याः 'धर्माणि' धर्माः लोकधारका आसन् । 'महिमानः' महात्मानः महिमगुणात्मका वा । 'ते' देवाः 'ह' पुनः अनन्तरं स्वाधिकारावसाने 'नाकं' कं सुखं तदन्यत् दुःखमकं, तन्नेति नाकं, नञ्द्वयेन पूर्णसुखात्मकमिति लभ्यते । एवंभूतं मोक्षं 'सचन्ते' आप्नुवन् । लङर्थे लट् । लङ्वा, एत्वाडभावौ छान्दसौ । 'यत्र' मोक्षे 'पूर्वे' पूर्वकल्पे मुक्ताः 'साध्याः' बहुवचनमाद्यर्थे ।

ऋजवो ब्रह्ममुख्या हि सुपर्णश्शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ॥

इत्युक्ताः साध्यादयो देवाः सन्तीति श्रुत्यर्थः । न च वसुरुद्रादित्यमरुत्साध्येषु वसूनामादित्वात् टीकायां वस्वादिदेवा इति वक्तव्यम्, न तु साध्यादीति । अत एव तत्त्वप्रदीपे 'पूर्वे साध्याः वस्वादयो दे

( ८ ) सू—ॐ ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमा नाभ्याम् ॥ ॐ ॥ २८ ॥

'वाचा विरूप नित्यया' ( ऋ.८-६४-६.) इत्यादिश्रुते राप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य ।

वाः पूर्वसिद्धा मुक्ता वा' इत्युक्तमिति वाच्यम् । साध्यशब्दितानां प्राधान्येन क्रमोल्लङ्घनात् । छन्दोगश्रुतिक्रमानुसारेण तत्त्वप्रदीपप्रवृत्तेः । न चैवं व्याख्याने पुरुषार्थाधिकरणेऽस्याः प्राप्तपददेवतापरत्वे नोदाहरणानुपपत्तिरिति वाच्यम् । ये पदं प्राप्य जगद्धारका अभूवन् ते देवा यज्ञेन यज्ञमयजन्त ते ह नाकं मोक्षगतातिशयं सचन्ते इति श्रुतेरर्थान्तरविवक्षया तदुपपत्तेस्तदनुसारेण तट्टीकायां व्याकरणस्याप्युपपत्तेश्च ॥

( ८ ) यद्देवानामधिकारसिद्ध्यर्थं आद्यन्तवत्त्वमुक्तं तदुपर्यनेकेत्याभ्यां, तदाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे—शब्द इति ॥ अनेकप्रतिपत्तेर्दर्शनान्न विरोध इत्याद्यनुषज्यते । यदितह्यौरप्यनुषङ्गः । तथा चेत्थं योजना—यद्यनेकेषां पूर्वपूर्वमुक्त्या देवतापदप्राप्तेर्दर्शनान्न कर्मणि विरोध इति उच्यते, तर्हि तत्रैव शब्दे दर्शनपदोक्ते वेदेऽप्रामाण्याख्यो विरोधः स्यात् । कुतः? देवानामनित्यत्वात् । अनेकेत्यादिना देवानामनित्यत्वस्यान्तवत्त्वस्योक्तत्वात् । ननु देवानामनित्यत्वेऽपि वेदानामप्रामाण्यं कुत इत्यतः—तदुदितानामित्याह । हेतुगर्भविशेषणमेतत् । अनेनानित्यदेववाचकत्वादिति हेतुः सूचितः । ननु देवानामनित्यत्वेऽपि न तद्वाचकवेदस्य वाच्यहीनत्वरूपाप्रामाण्यं प्रसज्यते, देववद्वाचकवेदस्याप्यनित्यत्वेन कदाऽपि वाच्यहीनत्वाभावादित्यत उक्तं-वेदस्य नित्यत्वादिति । वेदस्य नित्यत्वमेव कुत इत्यत उक्तं-वाचेति । श्रुतेरित्यस्य वेदस्य नित्यत्वादित्यनेनान्वयः । ज्ञानोपलक्षकं चैतत् । आदिशब्देन 'नित्यया नित्यया' (पौष्यायणश्रुतिः) 'नित्या वाव श्रुतिः' (            ) इत्यादिकं गृह्यते । ननु न नित्यो वेदः । न च श्रुतिविरोधः, श्रुतेर्बहुकालीनत्वरूपानित्यत्वार्थकत्वेनोपचरितार्थत्वादित्यतोऽप्याह । तथा सति वेदस्यानित्यत्वादप्रामाण्याख्यविरोधः स्यादिति । ननु वेदस्यानित्यत्वेऽप्याप्तिमूलत्वेन प्रामाण्यं सम्भवतीत्यत आह-आप्त्यनिश्चयादिति । वेदकर्तुरिति शेषः । तथा च कर्तुः सर्वज्ञादौ मानाभावेन वेदकर्तुः सार्वज्ञादिरूपाप्त्यनिश्चयादित्यर्थः । यद्वा-अस्तु वा कर्तर्या

(९) स्वतः प्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात् ।

(१०) पुनरन्यभावनियमाभावाच्च शब्दे विरोध इति चेत्—

प्ति निश्चयः, तथापि न वेदे तन्मूलत्वनिश्चय इत्याह-आप्त्यनिश्चयादिति । वेदस्येत्याकृष्यते । तथा च वेदस्याप्तप्रणीतत्वरूपाप्तिमूलत्वानिश्चयादित्यर्थः । तस्मान्मानाभावेनाप्तितन्मूलत्वानिश्चयाद्वेदानित्यत्वे तत्प्रामाण्याभावापत्तेर्न नित्यत्वश्रुतेरुपचरितार्थत्वं वाच्यमिति भावः। न केवलं श्रुतेर्वेदनित्यत्वसिद्धिः, किन्तु परिशेषादनुमानादपीत्याह—नित्यत्वेति । मूलप्रमाणस्य नित्यत्वापेक्षत्वाद्वेदस्य नित्यत्वावगमादित्यन्वयः । अयं भावः—प्रामाण्यसिद्ध्यर्थं वेदस्याप्तप्रणीतत्वे मूलप्रमाणेन भाव्यम्, पौरुषेयस्य मूलप्रमाणसापेक्षत्वनियमात् । अन्यथाऽनाश्वासाद्यज्ञादेः पुण्यसाधनतादिबोधकवेदमूलं च भवत्प्रत्यक्षानुमानयोरसम्भवात्परिशेषाद्वाक्यमेवेति वाच्यम्, तस्य चानित्यतामुपेत्य मूलान्वेषणेऽनवस्थापत्त्या नित्यत्वमेव वाच्यम्, ततो वरं वेदस्यैव नित्यत्वाङ्गीकरणम्, श्रुतिसिद्धत्वादिति ॥

(९) न तु यथा वेदानित्यत्वे आप्त्यनिश्चयात्प्रामाण्याभावापत्तिर्बाधिका, तथा तस्य नित्यत्वेऽप्याप्तोक्तत्वरूपगुणजन्यत्वाभावेन प्रामाण्याभावापत्तिरिति समं बाधकमित्यत आह—स्वत इति ॥ वेदस्येत्यनुवर्तते । तथा च 'वेदस्य' वेदजन्यज्ञानगतयाथार्थ्यरूपप्रामाण्यस्य 'स्वत एव' ज्ञानसामान्यकारणादेव 'प्रसिद्धेः' उपपत्तेः प्रमितत्वादित्यर्थः । यद्वा—वेदगतयथार्थज्ञानकरणत्वरूपकरणप्रामाण्यस्य 'स्वत एव' ज्ञानकरणत्वसहजशक्त्यभिन्नयथार्थज्ञानजनकत्वशक्तिरूपत्वेनैव प्रमितत्वादित्यर्थः । अस्यापि वेदस्य नित्यत्वसम्भवादित्यनेनान्वयः । तथा च वेदस्य नित्यत्वस्य सिद्धत्वात्तद्वाच्यदेवानामानित्यत्वे वाच्यहीनत्वरूपाप्रामाण्यापत्तिरिति भावः ॥

(१०) नन्वतीतकल्पे एकदेवताऽभावे देवतान्तरसद्भावाद्यथाऽकर्मण्युद्देश्याभावनिमित्तो विरोधो नास्ति, तथाऽत्राप्येकदेवतानाशेऽपि पुनरन्यदेवतोत्पत्तिसम्भवान्न वाच्यहीनत्वाख्यो विरोध इत्यत आह—पुनरन्यभावनियमाभावाच्चेति ॥ पूर्वकल्पीयनाशानन्तरमित्यानन्तर्यार्थे पुनश्शब्दः । उत्तरकल्प इत्यर्थे वा । अन्यभावः अन्योत्पत्तिः । तस्य नियमे प्रमाणाभावादित्यर्थः । अतीतदेवताप्रवाहे तु प्रमाणमस्ती

ति वैषम्यमिति भावः। अनेनोत्तरकाले देवताभावविरोधः कर्मण्यपि समान इति सौत्रशब्देन कर्माप्युपलक्षणीयमित्युक्तं भवति। न चैव मत्रापि विरोधपदाकर्षणमिति टीकाविरोधः। 'तदुपरि' इतिसूत्रा दपेरनुकर्षोक्तेः तस्य च न केवलं शब्दे उत्तरकाले देवताभावविरोधः, कर्मण्यपीत्येतदर्थकत्वादिति वाच्यम्। आकर्षणशब्दस्यान्वयार्थत्व माश्रित्य न केवलं पूर्वसूत्रे विरोधपदान्वयः, किन्त्वेतत्सूत्रेऽपीति टी कार्थाङ्गीकारेणापि विरोधपदयोराकर्षणमित्यर्थानभ्युपगमात्। अस्तु वा द्वन्द्वः, तथापि नानुपपत्तिः, अपेः स्वरूपनित्यत्वाभावेऽपीत्यर्थाभ्यु पगमेन कर्मसमुच्चयार्थत्वानभ्युपगमात्। अत एव टीकायां देवानां स्वरूपनित्यत्वाभावेऽपीत्युक्तिः। अत्र नित्यत्वसाधकयोः श्रुत्यनुमान योः समुच्चये एकश्चशब्दः। अनित्यत्वबाधकस्य नित्यत्वे तदभावस्य च समुच्चयेऽन्यः। अनित्यत्वान्यभावनियमाभावयोः समुच्चयेऽपर इति विवेकः।

'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया।
वृष्णे चोदस्व सुष्टुतिम्' ( ऋ. ८-७५-६. )

इति ऋग्यजुर्मन्त्रार्थस्तु न विलक्षणत्वाधिकरणटीकायामुक्तः। तत्र य द्यपि विरूपेति स्वात्मानं प्रति सम्बोधनमित्युक्तेः विष्णुतत्त्वनिर्णयटी कायां विरूपाख्यऋषेस्सम्बोधनमित्युक्तेश्च विरोधो भाति। तथापि विरूपर्षिकर्तृकं स्वान्तर्यामिसम्बोधनमिति तदर्थाभ्युपगमान्न विरो धः। उक्तं हि तत्त्वप्रदीपे—प्रेरयेति प्रार्थनं विरूपस्य ऋषेरन्तर्यामि विषयमिति। विरूपकर्तृकं तदुद्देश्यकं संबोधनमिति पक्षेऽपि स्वात्म शब्दितस्वजीवं प्रति सम्बोधनमिति टीकार्थाभ्युपगमान्न विरोधः। अस्मिन् पक्षे तत्त्वप्रदीपोक्तं व्याख्यानान्तरं भविष्यति। न च पद्मना भतीर्थकृतविष्णुतत्त्वनिर्णयटीकायां न्यायरत्नावल्यां धर्मेण विरूपर्षिं प्रत्येतदुच्यत इत्युक्तत्वात्तद्विरोध इति वाच्यम्। प्रथमं यमदृष्टस्य म न्त्रस्यानन्तरं विरूपेणापि दृष्टत्वसम्भवेन तदा स्वसम्बोधनसम्भवेना विरोधात्। तथा च हे विरूप अभितो द्यौः प्रकाशो यस्यासावभिद्युः, तस्मै 'वृष्णे' वर्षिणे अतिसमर्थायेति वा। तत्त्वप्रदीपरीत्या वृषा श्रेष्ठ स्तस्य चतुर्थी वृष्णे इति वा। तस्मै भगवते एनमुद्दिश्य 'नूनं' नि श्चितं 'नित्यया' अनादिनिधनया वेदलक्षणवाचा 'सुष्टुतिं' शोभनां स्तुतिं 'चोदस्व' प्रेरय कुर्वित्यर्थः॥

( ११ ) न,

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( महाना. १-३८. )

यथैव नियमः काले सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति ॥

इत्यादेः, अत एव शब्दात्तेषां प्रभवनियमात् महतां प्रत्यक्षात् ।

( ११ ) परिहारांशं व्याख्याति—नेति ॥ विरोध इत्यस्ति । तथा च वेदस्य वाच्यहीनत्वप्रयुक्ताप्रामाण्याख्यविरोधो नेत्यर्थः । कुत इत्यतः प्राप्तं प्रभवादिति हेतुं तत्सम्बन्धिप्रदर्शनपूर्वकं प्रवाहतःप्रभवनियमपरतया च व्याचष्टे—तेषां प्रभवनियमादिति । 'तेषां' वेदवाच्यदेवानां 'प्रभवस्य' प्रवाहतउत्पत्तेः 'नियमात्' प्रतिकल्पं नियमेनोत्पत्तेरिति यावत् । तथा च देवानां स्वरूपेण नित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वान्न तद्वाचकवेदाप्रामाण्यमिति भावः । ननु प्रमाणाभावादसिद्धो हेतुरित्यतः प्राप्तमतःशब्दमनूद्य सावधारणत्वेन व्याचष्टे—अतएव शब्दादिति । कोऽसौ शब्द इत्यतो यस्मिन्विरोधः शङ्कितस्तस्मादेव, नान्यस्मादप्रकृतादित्याशयेन तदुदाहरति—सूर्येत्यादिना । श्रुतोऽस्मिन् कल्पेपीति शेषः । ननूत्पादकाभाव इत्यतोऽप्याह—अतएवेति ।अकारवाच्यात् श्रुत्युक्ताद्धातुर्विष्णोरेव, नान्यस्मादित्यर्थः । अस्मिन् पक्षे अतश्शब्दादिति व्याख्यानान्तरम् । नन्वकल्पयदिति लङ्योगादियं श्रुतिरतीतविषयैव, अतो न देवप्रभवनियमं प्रमापयतीत्यतोऽप्याह—अत एवेति । तथा च धाता यथा पूर्वकल्पे सूर्याचन्द्रमसावकल्पयत्, तथाऽस्मिन्कल्पेऽपीति प्रतिकल्पं श्रुत्या कथने देवानां सर्वकल्पेषु प्रजननाख्यसद्भावासिद्धेरध्याहारं विना अतएवशब्दात् बुद्धिस्थात् यथैवेति स्पष्टश्रुत्यन्तराच्च तेषां सर्वकल्पेषु प्रभवसिद्धेर्नोक्तचोद्यावकाश इति भावः । ननु श्रुतावुपचारेणाप्युक्तिः सम्भवतीति न तया देवप्रभवनियमनिश्चय इत्यतः प्राप्तं प्रत्यक्षेत्यंशं व्याचष्टे—महतामिति । अतीतानागतविदामित्यर्थः । अस्यापि तेषां प्रभवनियमादित्यनेनान्वयः । ननु परप्रत्यक्षस्याप्रत्यक्षत्वात्तदनिश्चय इत्यतोप्याह—महतां प्रत्यक्षादिति ॥

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।

( १२ ) यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनु
मानाच्च ॥ २८ ॥

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥

इत्यादिरूपात् 'महतां' भारताचार्याणां 'प्रत्यक्षात्' प्रत्यक्षव चनादित्यर्थः। अस्मिन् पक्षे 'प्रत्यक्षात्' निश्चितात्प्रत्यक्षादित्य न्वयः ॥

( १२ ) नन्वयोगिनां श्रुतिप्रत्यक्षयोरविश्वासेन तेषां देवप्रभवनिश्च याभाव इत्यतः प्राप्तमनुमानेत्यंशं व्याचष्टे–यथेति। इदानीन्तनकाले यथा देवास्सन्ति तथोपरिभाविकालेऽपि देवा भविष्यन्तीतीतरेषां म हद्भ्योऽन्येषामयोगिनामनुमानादित्यर्थः। अस्यापि प्रभवनियमादित्यने नान्वयः। चशब्दः प्रभवनियमे, शब्दप्रत्यक्षानुमानाख्यप्रमाणत्रयसमु च्चये वक्ष्यमाणयुक्त्यन्तरसमुच्चये च । अनुमानाकारस्तु—उपरितन कालो देववान् अप्रलयकालत्वात् इदानीन्तनकालवदिति । अनेन— देवानामधिकारसिद्ध्यर्थं यद्याद्यन्तवत्त्वमभ्युपगम्यते, तर्हि पूर्वसूत्रे यद्बलात्पूर्वपूर्वदेवताप्रवाहस्यानादित्वमुक्तं, तस्मिन् 'शब्दे' 'वाचा विरूप नित्यया' इत्यादिश्रुतौ नित्यतया सिद्धे वेदे कर्मणि चोत्तरकल्पे वाच्योद्देश्यहीनत्वरूपाप्रामाण्याख्यो विरोधः स्यादिति चेत्–न, कुतः? 'प्रभवात्' देवानां सर्वकल्पेषु प्रभवनियमान्नियमेनोपपत्तेः। तेषां प्रवाह तो नित्यत्वादिति यावत्। न चोत्पादकाभावः। 'अतो' विष्णोरेव प्रभ वात्। न चासिद्धिः। 'अतो' 'धाता यथापूर्वम्' (महाना.१-३८.) इतिप्र कृताच्छब्दाच्छ्रुतेः 'यथा' इति स्पष्टश्रुतेश्च। तथा महतामतीतानागत कालविदां योगिनां 'प्रत्यक्षात्' 'यथर्तुषु' इति प्रत्यक्षवचनात् ज्ञापि तात् महतामतीतानागतकालयोर्देवप्रभवनियमग्राहिप्रत्यक्षात्। तथा महद्भ्यः इतरेषामयोगिनामनुमानाच्च तत्सिद्धेरिति सूत्रार्थ उक्तो भ वति। 'यथैव' इति स्मृत्यर्थस्तु—यथा पूर्वयुगात्यये कल्पात्यये वा पुनर्युगकल्पान्तरोत्पत्तिरिति काले प्रभवनियमः, तथा सुरादेर्देवोपदे वादेः पूर्वपूर्वकल्पात्यये पुनरन्यभावनियमोऽस्ति। यथोक्तम्—

स हि विश्वसृजो विभुशम्भुपुरन्दरसूर्यमुखानपरानपरान्।
सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतान्सुधिया ॥

इति। प्रतिकल्पमिति शेषः। तस्मात्पूर्वकल्प इवोत्तरकल्पेऽपि पूर्वक ल्पसदृशसर्वोत्पत्तिनियमादेव 'तस्मात्' विष्णोस्सकाशादेतद्विश्वं

( १३ ) सू—ॐ ॥ अत एव च नित्यत्वम् ॥ ॐ ॥ २९. ॥
अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ॥ २९ ॥
( १४ ) सू—ॐ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ॐ ॥ ३० ॥

---

'क्वापि' कदाऽपि 'अनीदृशं' पूर्वपूर्वैर्विसदृशं देवताप्रभवशून्यं न भविष्यति, किन्तु तत्सद्भावोपेतमेव भविष्यतीति । यद्वा—'एतत्' चेतनाचेतनात्मकं विश्वमनीदृशं न भविष्यति, किन्तु नामरूपाभ्यामीदृशमेव भविष्यतीत्यर्थः । तत्त्वप्रदीपे त्वियं श्रुतिः 'यथैव कालनियमः' इति व्यत्यासेन पठिता ॥

( १३ ) युक्त्यन्तरेण देवप्रवाहस्य नित्यतां साधयत्सूत्रं पठित्वा व्याचष्टे—अतएवेति ॥ अतएवेत्यनुवादः । तस्य व्याख्यानं—'शब्दस्य' वेदस्य नित्यत्वादेवेति । एवकारेण न देवप्रवाहनित्यत्वे युक्त्यन्तरं गवेषणीयम्, किन्तु यत्पूर्वपक्षिणा वेदनित्यत्वं सप्रमाणकमुक्तं, तत एव तदन्यथाऽनुपपत्त्यैतत्सिध्यतीति सूचयति। नित्यत्वादेवेत्युपलक्षणं, प्रामाण्यस्य साधितत्वेनाप्रामाण्याभावादेवेत्यपि अतःशब्दव्याख्यानं द्रष्टव्यम् । अन्यथा पूर्वपक्षी अप्रामाण्येनान्यथोपपत्तिं ब्रूयात् देवप्रवाहस्य । युक्तमिति च सूत्रशेषोक्तिः । 'युक्तं' वेदनित्यत्वान्यथाऽनुपपत्त्याख्ययुक्तिसिद्धम् । चशब्दस्तु समुच्चेतव्ययुक्तीनां शब्दात्प्रत्यक्षादनुमानादित्यनेन दर्शितत्वात्तत्समुच्चयार्थकतयाऽर्थाद्व्याख्यातः । अतएव पूर्वसूत्रभाष्ये चशब्दः संयोजितः । अत्रापि भाष्ये चशब्देन च तद्वाच्यदेवतास्वरूपस्यैव नित्यत्वेन अन्यथोपपत्तिः । अतएव 'सूर्याचन्द्रमसौ' (महाना.१-३८.) 'यथैव' इत्याद्युदाहृतश्रुतेरेव 'यमप्येति भुवनं साम्पराये' ( नृपू. २ - ४. ) 'यत्प्रयन्त्यभिसंविशन्ति' ( तै. ३ - १. ) इत्यादि बहुलं प्रलयश्रुतेश्च सूर्यादिदेवानामुत्पत्तिनाशावगमात् , अतएव स्वरूपनित्यत्वायोगेन प्रवाहरूपेणैव तेषां नित्यत्वावश्यंभावादित्यादिटीकोक्तार्थः सर्वोऽपि सङ्गृहीतः ॥

( १४ ) ननु न देवानां प्रवाहनित्यत्वेनापि वेदप्रामाण्योपपत्तिः । तथा हि—किं पूर्वकल्पे मुक्ता एव देवा उत्तरकल्पे पुनरावर्तन्ते, तदन्ये वा । नाद्यः । मुक्तेरपुनरावृत्तित्वात् । न द्वितीयः । तथात्वे धर्मिं

अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तप
दानां मुक्त्याऽवृत्तावप्यविरोधः ।
( १५ ) 'यथा पूर्वम्' (महाना.१-३८.) इति दर्शनात् ।
( १६ ) अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।

भूतदेवानित्यत्वहेतुकविरोधाभावेऽपि नामरूपादिधर्मवैचित्र्यकृतवि रोधप्राप्तेः, वाचकवेदस्य प्रतिकल्पं पाठभेदाभावेनैकविधत्वात्, अन्य था नित्यत्वव्याघातात् । वाच्यदेवानां च नानाविधनामरूपवत्त्वादित्या शङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—समानेति ॥ अत्रातीतपदं प्रा चीनपरम् । अनागतपदं च तदन्यभविष्यद्वर्तमानपरम् । धर्मिप्रतियो ग्युभयसमर्पकमेतत् । नाम इन्द्रादि, रूपं आकृतिः । सूत्रानुसारादत्रा पि चशब्दः संयोज्यः । समानधर्मकर्मवत्त्वाच्चेति तदर्थः । स्वपदेष्वि ति शेषः । मुक्त्याऽवृत्तावपीत्युक्तिः पूर्वपक्ष्याशङ्कितविरोधे हेतुसूचना र्था । यद्यपितथाऽपीत्यर्थेऽपिशब्दः आवर्तते । शब्द इत्यस्ति । तथा चे त्थं योजना—' प्राप्तपदानां ' प्राचीनानां देवानां ' मुक्त्या ' प्राप्तमुक्ति त्वेन कारणेन पुनस्तेषामेव स्वपदेषु ' अवृत्तावपि ' असत्त्वेऽपि तद न्येषां तत्र सत्त्वेऽपि च ' अविरोधः ' न तद्वाचके एकविधेऽपि शब्दे वेदेऽप्रामाण्याख्यो विरोधः । कुतः ? वाच्यानामप्यतीतानागतानां दे वानां परस्परं ' समाननामरूपत्वात् ' समाने एकविधे नामरूपे येषां ते तथोक्ताः, तेषां भावस्तत्त्वं तस्मादिति । चन्द्रिकायां तु—सूत्रे भा ष्ये च तत्त्वप्रदीपानुसारादावृत्ताविति विच्छेदं भाष्ये मुक्त्यावृत्तावि त्यस्यैकपद्यं चाश्रित्य एकस्य पदप्राप्तावन्यस्य मुक्तिः, पुनस्तस्य मु क्तौ पुनरन्यस्य पदप्राप्तिरिति क्रमेण मुक्तेरावृत्तावपीति वा, स्वस्व पदस्यावृत्तावपीति वेति टीकानुक्तप्रकारद्वयेनाप्यावृत्तावित्यंशो व्या ख्यातः ॥

( १५ ) ननु सर्वदेवानां समाननामरूपत्वे प्रमाणाभावादसिद्धो हे तुरित्यतः प्राप्तं दर्शनादित्यंशं व्याख्याति—यथेति ॥ ' धाता यथापूर्व म् ' इति श्रुतेरित्यर्थः ॥

( १६ ) नन्वेतच्छ्रुतेस्तत्तत्स्वरूपकल्पनानियमपरत्वमपि सम्भवती ति नानया समाननामरूपत्वनिश्चयो भवति । किं च देवप्रवाहस्य नि त्यत्वे तेषां समाननामरूपत्वे वा न तद्वाचित्वेन नित्यवेदप्रामाण्योपप त्तिः, तद्वाचित्वस्यैवासम्भवात् । न ह्यपौरुषेयस्य वेदस्यैतावत्कालमयं

ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ॥
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥

देवो मयोक्तः, अतः परमेनं वक्ष्यामीति विमृश्य वृत्तिः सम्भवतीत्य तः प्राप्तः स्मृतेरित्यंश इत्याशयेन तां दर्शयति—अनादीति ॥ नित्य त्वोक्तेरुपचरितत्ववारणाय—अनादिनिधनेत्युक्तम् । अतो न पौनरु क्त्यम् । अत एव तत्त्वप्रदीपे अनादिनिधनत्वेन नित्या, न त्वनिधन त्वमात्रेणेत्युक्तम् । बहुकालीनत्वेन वेत्यपि द्रष्टव्यम् । वेदेष्वित्यनन्तर मुक्ता इति शेषः । निर्ममे इत्यस्यावृत्तिः । तथेति शेषः । तेनाप्येवशब्द स्यान्वयः । तथा च 'आदौ' सृष्टिकाले 'स्वयम्भुवा' स्वतन्त्रेण म हेश्वरेण विष्णुना 'अनादिनिधना नित्या' आद्यन्तशून्यतयैव नित्या, न तूपचारेण बहुकालीनतामात्रेणानिधनत्वमात्रेण नित्या । या 'वा क्' वेदरूपा 'उत्सृष्टा' उच्चारिता । 'तद्वेदशब्देभ्यः' वेदगतेभ्यः ते भ्यः शब्देभ्य एव, नान्येभ्यः, 'सः' महेश्वरो विष्णुः 'ऋषीणां' ब्र ह्मादिविबुधानां 'नामधेयानि निर्ममे' तानेव शब्दान् तेषु सङ्केतितवा न् प्रतिकल्पमयं शब्दोऽत्र शक्त इति ज्ञापितवान् । 'याश्च' ऋषीणां देवानां वेदेषूक्ताः दृश्यन्ते इति दृष्टयो रूपाणि, ताश्च तानि च तथैव पूर्वकल्पीयरूपसादृश्येनैव निर्ममे इति स्मृत्यर्थः । चः समुच्चये । दर्श न स्मृतेरित्यनयोः समानरूपत्वादित्यनेनान्वयः । आगमोपलक्षकं चैतत् । तथा च नासिद्धिरिति भावः । अनेन—प्राचीनानां देवानां मुक्त्या पुनः स्वपदेष्ववृत्तावपि तदन्येषां तत्र वृत्तावपि न तद्वाचके एकविधेऽपि शब्देऽप्रामाण्याख्यो विरोधः । कुतः? प्राचीनानां तदन्ये षां चान्योन्यं 'समाननामरूपत्वात्' तद्योग्यकर्मधर्मवत्त्वाच्च । न च हे त्वसिद्धिः । 'दर्शनात्' 'यथा पूर्वम्' इति श्रुतेः 'अनादिनिधना' इति स्मृतेश्चेति सूत्रार्थ उक्तो भवति । अत्र तत्त्वप्रदीपे प्रलये कस्या पि देवस्याभावेन तदा वेदस्य वाच्यहीनत्वरूपाप्रामाण्यमाशङ्क्य भ गवन्मात्रविषयत्वेन तदुपपत्तिरिति समाधानमभिप्रेत्य 'शब्दे' इत्या दिसूत्राणि भगवत्परतया व्याख्यातानि । तथा हि—न शब्दे कदाऽपि वाच्यहीनत्वकृतो विरोधः अप्रामाण्यम् । कुतः? मुख्यवाच्यस्य वि ष्णोः सर्वदा विद्यमानत्वात् । कुत एतत्? 'अत एव' शब्दात्तेषां देवानां प्रभवनियमादिकर्तुरपीशस्य सदा सत्त्वावगमात् । प्रत्यक्षश्चासौ महता म् । कुतः? 'अत एव' 'पुरुषमीहते' 'कवयो वयन्ति' (महाना. १-३.) इत्या

इति स्मृतेश्च ॥ ३० ॥

( १७ ) सू—ॐ ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ॐ॥३१॥

दिश्रुतेरेव इतरेषामनुमानाच्च । यथा येन प्रकारेणेदानीं देवा भवन्ति तथाऽन्यदाऽपीत्यनुमानाच्च तदवगमः । एवं 'अतएव' शब्दनित्यत्वादेव प्रवोढुर्नित्यत्वम् । तथा विष्णोस्समाननामरूपत्वादन्येषां तदभावाच्च 'अविरोधः' न तस्य सर्वशब्दवाच्यत्वविरोधः । समानानि सदृशानि नामानि येषां रूपाणां तानि तथोक्तानि, तादृशानि रूपाणि यस्य स तथोक्तः तस्य भावस्तस्मात् । न हि विष्ण्वन्यरूपाणां सदृशनामरूपत्वम् , शब्दप्रवृत्तिहेतुवैकल्यात् । न चात्र मानाभावः, 'यथा पूर्वम्' इति दर्शनात् । यथा पूर्वं पूर्णज्ञानः सर्वस्वतन्त्रः सर्वनामरूपस्थितस्तथैव स धाता सूर्यादीनकल्पयदिति श्रुतेः । अतः सूर्यादिक्लृप्तेः प्रागपि प्रलये शब्दप्रामाण्याविरोध इति सिद्धमिति । इदमेवाभिप्रेत्य टीकायां 'न च' इत्यादिना शङ्कोत्तरे दर्शिते । 'अतीतविषयत्वस्य च' इति परिहारानन्तरं चाभिहितम् ॥

( १७ ) ननु न देवानां वेदविद्याधिकारो युक्तः । तथा हि द्विविधा वेदविद्याः—मुक्तिफलार्थास्तदितरफलार्था इति । मोक्षेतरफला अपि द्विविधाः । ब्रह्मकर्मविद्याभेदात् । तत्राद्या यथा—मधुविद्या । द्वितीया यथा-अग्निष्टोमविद्या । तत्र न तावद्देवानां मोक्षेतरफलकद्विविधाविद्यास्वधिकारो युज्यते, तत्साध्यानां मोक्षेतरफलानां मध्ये केषांचिद्योग्यानां प्राप्तत्वेन अयोग्यानां च प्राप्तुमशक्यत्वेन अर्थित्वाभावादिति जैमिनिमतावलम्बेनाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे—मध्वादिष्विति ॥ प्रथमादिपदेन शिष्टवाक्यं, तथा 'देवो भूत्वा देवानप्येति' ( बृ. ६-१-२. ) इति वाजसनेयवाक्यम् , तथा 'स ऊर्जमुपगच्छति' (      ) इति श्रुत्यन्तरवाक्यं, द्वितीयमधुविद्यान्तर्गतं 'रुद्राणामेवैको भूत्वा' ( छां. ३-७-३. ) इत्यादिकं च गृह्यते । प्राप्यफलत्वात्, अप्राप्यफलत्वादित्युभयथा विच्छेदः । अस्योभयत्रान्वयः । वस्वादिपदानामिति शेषः । तत्रादिपदेन देवरुद्रादिपदानां ग्रहणम् । यद्वा—प्राप्तपदानामित्यत्रत्यं पदानामित्येतद्बुद्ध्या विविच्यात्र धर्मित्वेन सम्बध्यते । प्राप्तपदानामिति बहुव्रीहिः, कर्मधारयश्च । तत्राद्यो हेतुगर्भविशेषणरूपः । द्वितीयस्योभयत्रान्वयः । देवानामिति सूत्रे अध्याहृतं प

'वसूनामेवैको भूत्वा' ( छां. ३-६-३. ) इत्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥

दं, प्रकरणलब्धं वा । मधुशब्दो 'मधु' इत्युपक्रम्याम्नातप्रथमद्वितीयाद्यमृतविद्यापरः । अत्रादिशब्देन वस्वादिपदफलककर्मविद्या वाजसनेयोक्तयागादिविद्याश्च गृह्यन्ते । एतच्चावर्तनीयम् । असम्भवादिति सौत्रो हेतुरत्रापि संयोज्यः । तदुपपादकोक्त्यैव तदुक्तिर्भवतीति तस्य साक्षादनुक्तिः । यद्वा—प्राप्तपदानामप्राप्यफलत्वादित्युक्त्यैव तस्योक्तत्वादसम्भवादिति न संयोज्यम् । तथा चेत्थं भाष्ययोजना—मध्वादिविद्यासु 'असौ वा आदित्यो देवमधु' इति प्रस्तुत्याम्नातेन 'स एतदेवामृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिवाक्ये 'पदानां' वस्वादिपदानां 'प्राप्यफलत्वात्' मध्वादिविद्यासूक्तोपासनाप्राप्यफलत्वश्रवणात् 'प्राप्तपदानां च' वस्वादिदेवानां प्राप्तस्वस्वपदत्वेन 'असम्भवात्' तदर्थित्वासम्भवात् 'देवानां' देवैः प्राप्तपदानां पुनस्तैः 'अप्राप्यफलत्वात्' अप्रार्थ्यफलत्वादिति वा । द्वितीयविद्याद्यमृतविद्याफलानां रुद्रादिपदानां च वस्वादिदेवानां 'अप्राप्यफलत्वात्' प्राप्तुमयोग्यफलत्वात् तत्राप्यर्थित्वासम्भवात्तेषां मध्वादिविद्यासु 'अनधिकारं' अधिकाराभावं जैमिनिर्मन्यत इति । जैमिनिग्रहणेन आप्ततमेन जैमिनिनैवं मतत्वाच्च न तेषामधिकार इति युक्त्यन्तरं सूच्यते । अनेन—'मध्वादिषु' 'असौ वा आदित्यो देवमधु' इत्यादिमधुविद्यासु देवानां 'अनधिकारं' अधिकाराभावं जैमिनिर्मन्यते तस्माद्धेतोः 'असम्भवात्' तैस्तद्विद्यासूक्तफलानां मध्ये केषांचिद्योग्यानां प्राप्तत्वेन केषांचित्प्राप्तुमयोग्यत्वेन तेषां तत्रार्थित्वासम्भवादिति आप्ततमो जैमिनिर्मन्यत इति सूत्रार्थ उक्तो भवति ॥

छान्दोग्ये हि—'असौ वा आदित्यः' इत्यनेन आदित्यस्य विष्णोः परमानन्दत्वेन मधुत्वमुक्त्वा 'स एतत्' इत्यादिना मधुशब्दितस्य भगवत आदित्यमण्डलस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वरश्मिषु स्थितानां प्रथमामृतादिशब्दपञ्चकवाच्यवासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणाख्यपञ्चरूपाणां मध्ये प्राच्यादितत्तद्दिक्स्थितैः तत्तत्पदयोग्यैर्वसुरुद्रादित्यमरुत्साध्यपदोक्तऋजुरूपपञ्चगणस्थैर्देवैः क्रमेण

( १८ ) सू—ॐ ॥ ज्योतिषि भावाच्च ॥ ॐ ॥ ३२ ॥
ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भा

अग्निवाय्विन्द्रसोमविरिञ्चप्रधानकैः अग्नयादिमुखेनैकैकोपास्तौ कृतायां तदपरोक्षज्ञानजनिततत्प्रसादद्वारा वस्वादिपदप्राप्तिस्तत्तद्गणस्थानां भवतीत्युच्यते। तथा च 'यः' अधिकारी 'एतत् अमृतं' वासुदेवाख्यं रूपं 'एवं' उक्तप्रकारेण 'वेद' 'स च वसूनामप्येको भूत्वा' वसुभोग्यदेशकालाधिपो भूत्वा 'अग्निना मुखेन' तत्प्राधान्येन तदुपदेशेनेति यावत् । 'एतदेवामृतं' वासुदेवाख्यं 'दृष्ट्वा' साक्षात्कृत्य 'तृप्यति' मुक्तो भवतीत्यर्थः । एवं 'यो' देवत्वयोग्यो अधिकारी वाक्प्राणचक्षुश्श्रोत्रमनोहृदयनामकं ब्रह्मोपास्ते स देवत्वमप्येति ततो 'देवो भूत्वा' स्वोत्तमदेवेषु सायुज्यं प्राप्य देवान् श्वेतद्वीपगत भगवद्रूपविशेषान् चतुर्मुखब्रह्मणा सहाप्येति । सोऽधिकारी 'ऊर्जं' अन्नं 'उपगच्छति' यथेष्टं प्राप्नोति इति श्रुत्यन्तरार्थः ॥

( १८ ) ननु मास्तु मोक्षेतरफलविद्यासु अधिकारो देवानां, तथापि'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. २-१-१. ) इत्यादिमोक्षार्थविद्यास्वधिकारो भविष्यति, तत्रार्थित्वसम्भवात् इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे–ज्योतिषीति ॥ ज्योतिषीति सूत्रपदानुवादः । तस्य व्याख्यानं–सर्वज्ञत्व इति । यद्यपि ज्ञाने इति व्याख्येयं, तथाऽपि विषयाविशेषितज्ञानस्यानिरूप्यत्वात्, यत्किंचिद्विषयके ज्ञाने विषयतया सर्वभावस्यासिद्धत्वात् तज्ज्ञापनाय—सर्वज्ञत्व इति व्याख्यातम् । तेन सूत्रे वस्तूनामित्यन्तर्भावसम्बन्धिज्ञापकं पदमध्याहार्यमिति सूचितं भवति । चः समुच्चये । अस्य हेतोरसम्भवादित्यनुवृत्तहेतुद्वारा मध्वादिषु अनधिकारं मन्यत इति पूर्वेणान्वयः । अनेन मध्वादिष्वित्यादिशब्देन मोक्षार्थविद्या अपि ग्राह्याः । ज्योतिश्शब्दश्च आवर्तनीयः ज्योतिषीव ज्योतिषीति । सप्तमी च चैत्ररथस्य बुद्धौ शास्त्रार्थे इति वत् युज्यते इति सूचितम् । कथं वस्तूनां ज्ञाने अन्तर्भाव इत्यतः सर्वज्ञत्वे भावादिति स्वपदं वर्णयति—आदित्य इति । सर्ववस्तूनामादित्यप्रकाशे अन्तर्भाववत् तद्गृहीतत्ववत् तज्ज्ञाने तदुपरीति प्रस्तुतदेवताकर्तृकज्ञाने सर्ववस्तूनां 'अन्तर्भावात्' विषयीभूतत्वादित्यर्थः । अभिप्रायं व्यनक्ति–नित्येति । देवानां सार्वज्ञ्येन 'विद्यानां' सर्वब्रह्मकर्मविद्यासाध्य

ववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यसिद्ध
त्वाच्च विद्यानम् ॥ ३२ ॥

ज्ञानानां 'नित्यसिद्धत्वात्' नियमेन प्राप्तत्वादित्यर्थः। यद्वा— विद्यानां' ज्ञानसाधनविद्यानां नित्यं नियमेन 'सिद्धत्वात्' उपलब्धत्वादित्यर्थः। देवानां वेदद्रष्टृत्वादिति भावः। यद्वा—'विद्यानां' मोक्षतदितरफलसाधनज्ञानसाधनविद्योक्तार्थानां 'नित्यसिद्धत्वात्' नियमेन तैर्ज्ञातत्वादित्यर्थः। तथा च न देवानामुभयविद्यासाध्यज्ञानेऽर्थिता सम्भवतीति भावः। अनयोरपि पञ्चम्यन्तयोः पूर्ववदन्वयः। न चास्य हेतोः पूर्वसूत्रोक्तासम्भवहेतूपपादकत्वात् कथमत्र चशब्द इति वाच्यम्। पूर्वं फलमुखेन अत्र च साधनमुखेन अर्थित्वासम्भवस्य अभिप्रेतत्वेन अस्य हेतोर्द्वितीयासम्भवोपपादकत्वेऽपि असम्भवसामान्ये उपपादकत्वेन चशब्दोपपत्तेः। यद्यपि भाष्ये 'ज्योतिषि' इति सूत्रं किं देवानां मोक्षेतरफलार्थायां? उत मोक्षफलार्थायां विद्यायां अधिकार इति पक्षद्वयेऽपि साधनमुखेन दोषोक्तिपरतया प्रतीयते। टीकायां तु मोक्षार्थविद्यायामपि न देवानामधिकारः, तत्र फलेऽर्थितासत्त्वेऽपि तत्साधनविद्योपासनात्मकज्ञानेऽर्थित्वाभावात्, विद्यायाश्च ज्ञानार्थत्वात्, ज्ञानस्य च प्राप्तत्वादिति द्वितीयपक्षमात्रदोषोक्तिपरतया व्याख्यातम्। तथा च विसंवादो भवति। तथापि मोक्षेतरफलकविद्यास्वनधिकार इति प्राचीनपक्षे न केवलं मधुविद्याफले वसुत्वादौ प्राप्तत्वात् देवानामर्थित्वाभावात् तद्विद्यायामधिकाराभावो दोषः। किन्तु वसुत्वादिफलसाधनज्ञानेऽप्यर्थित्वाभावात् अधिकाराभाव इत्यसम्भवदोषे उपपादकान्तरमुक्तं भवतीति टीकायामुक्तत्वान्न विसंवादः। अत एव न चशब्दानुपपत्तिः। प्राचीनपक्षविवक्षया तदुपपत्तेः। हेत्वन्तरेण एतत्साधयतीति सत्तर्कदीपावली च आद्यपक्षविवक्षया प्रवृत्ता। द्विविधविद्यासमुच्चये वा चशब्दः। अनेन—न केवलं मोक्षेतरफलार्थं मध्वादिष्वनधिकारं मन्यते जैमिनिः। किन्तु आदिशब्देन वा आवृत्तज्योतिश्शब्देन वा गृहीतायां 'सत्यं ज्ञानम्' इति मोक्षार्थविद्यायामपि। कुतः? 'ज्योतिषीव' आदित्यप्रकाशे इव 'ज्योतिषि' सर्वविषयकदेवताज्ञाने सर्ववस्तूनां विषयतया 'भावात्' मोक्षसाधनज्ञानस्य सिद्धत्वात्। अत एव न मोक्षे, तस्यापि सिद्धप्रायत्वादर्थित्वासम्भवात्। न केवलं वस्वादिदेवानां फलेऽर्थित्वाभावात् मध्वा

( १९ ) सू—ॐ ॥ भावं तु बादरायणोऽस्ति हि ॥ ॐ ॥ ३३ ॥
फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादि
ष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रका
शविशेषः ।

दिष्वनधिकारं जैमिनिर्मन्यते, किन्तु 'ज्योतिषि' वसुत्वादिफलसा धनज्ञानेऽप्यर्थित्वासम्भवात् । सोऽपि कुतः ? 'ज्योतिषि' देवानां ज्ञाने 'भावात्' सर्वेषां वस्तूनां विषयतया अन्तर्भावात्फलसाधनज्ञानस्य सिद्धत्वादिति यावदिति वा सूत्रार्थ उक्तो भवति ॥

( १९ ) एवं देवैर्मोक्षेतरयोग्यफलानां प्राप्तत्वात् अयोग्यानां प्राप्तुमशक्यत्वात् मोक्षस्यापि ब्रह्मज्ञानित्वेन अर्थतो लब्धत्वादर्थित्वाभावेन तेषां कास्वपि विद्यासु अधिकाराभावे जैमिनिमतावलम्बिना समर्थिते पुनरधिकारं समर्थयत्सूत्रं पठित्वा व्याचष्टे—भावमिति ॥ फलविशेषभावादित्यनेन सूत्रे पूर्वस्माद्भावादित्यस्य अनुवृत्तिः सूचिता । प्राप्तपदानामिति । पद्यत इति पदं प्राप्यफलमात्रम् । अपीत्यनेन विशेषार्थोऽपि तुशब्दोऽप्यर्थः । अपिश्च यद्यपितथाऽपीत्यर्थे इत्युक्तं भवति । देवानामिति सूत्रे शेषोक्तिः । मध्वादिष्वित्यनुवृत्तपदानुवादः । अत्र आदिशब्देन मोक्षतदितरफलार्थाशेषब्रह्मकर्मविद्या गृह्यन्ते । 'अधिकारं' अधिकारभावमिति । अनेन 'भावं' इत्यस्यार्थ उक्तः । मन्यत इति शेषोक्तिः । अस्तीत्यस्य कर्तृसापेक्षत्वात् तं दर्शयति—प्रकाशविशेष इति । ज्ञानातिशय इत्यर्थः । हिशब्दो यत इत्यर्थे । तथा चेत्थं योजना—बादरायणस्तु भगवान् देवानां मध्वाद्यशेषविद्यासु अधिकारभावं मन्यते । न च प्राप्तफलत्वात्तत्र अर्थित्वाभावो दोषः । यद्यपि देवाः प्राप्तपदाः ब्रह्मज्ञानित्वात्सिद्धमोक्षतदितरफलाः प्राप्तुमशक्यायोग्यफलाश्च । तथाऽपि प्राप्तपदानामपि देवानां मध्वादिविद्यासूक्तोपासनाकर्मकरणाभ्यां फलविशेषभावात्स्वस्वयोग्यस्य ज्ञानमात्रेण असाध्यस्य मोक्षफले अतिशयस्य भावात् सिद्धेरर्थित्वसंभवात् । न च फलेऽतिशयस्य सिद्धत्वेन तत्रार्थित्वसंभवेऽपि तत्साधनविद्यानां नित्यसिद्धत्वात् विद्याविचारस्य ज्ञानार्थत्वात् तत्रार्थित्वासम्भव इति वाच्यम् । 'हि' यतो भगवदितरेषां निरुपचरितसार्वज्ञ्याभावात् विद्याविचारेण 'प्रकाशविशेषः' ज्ञानविशेषः 'अस्ति' सम्भवतीति । अनेन सूत्रवृत्तिर्दर्शिता । अत्र बादरायणपदं पूजार्थम् ॥

(२०) यावत्सेवापरे तत्त्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥
तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ॥
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ।
इति स्कान्दे ।

(२१) उक्तफलाधिकारमात्रं जैमिनिमतमतो न तन्मत विरोधः ।

---

(२०) ननु तत्तद्विद्योक्तोपासनकर्मकरणाभ्यां तत्तद्विद्योक्तफलादन्यदपि फलं प्रकाशविशेषश्च देवानां भवतीत्येतत् कुतो ज्ञायते इत्याशङ्कां परिहर्तुमुक्तार्थे हिशब्दसूचितां स्मृतिं दर्शयति—यावदिति ॥ क्रियत इति शेषः । स्वार्थे तल् । भावभवित्रोरभेदविवक्षया वा । सिद्ध्यत्यस्येति शेषः । चो हेतुसमुच्चये । यद्वा—आद्यश्चः प्रकाशस्य चेति सम्बध्यते । फलसमुच्चायकश्चायम्, असम्भवसमुच्चये च । सम्भवादित्यावर्तते । तथा च 'परे तत्त्वे' परमात्मस्वरूपे 'असौ वा आदित्यः' ( छां. ३-१-१. ) इत्यादिनोक्ते तद्विषये 'देवानां' देवैर्वस्वादिभिः 'यावत्' यावदधिकं 'सेवा' 'एषा सेवा' इत्युक्ता श्रवणादिरूपोपासना क्रियते 'तावत्' तावदधिकं तेषां 'सुखविशेषता' स्वर्गापवर्गादिसुखेऽतिशयः स्वस्व योग्यो ज्ञानमात्रेण साध्यः सिद्ध्यति । यतोऽतः 'परं' स्वतन्त्रं हरिमेकमृतेऽन्येषां 'प्रकाशस्यासम्भवात्' निरुपचरितसार्वज्ञ्याभावात् । अत एव विद्याविचारेण साध्यस्य प्रकाशस्य ज्ञानविशेषस्य सम्भवात्, अत एवार्थित्वस्य सम्भवात्तेषां देवानां 'सामर्थ्ययोगात्' सामर्थ्यसम्भवाच्च विद्वत्तासम्भवाच्चापि प्राप्तपदानामपि 'देवानां' देवैः 'सर्वमुपासनं' सर्वविद्योक्तोपासनं सर्वयज्ञादिकर्म च 'नित्यं' नियमेन 'विधीयते' श्रुतिषु कर्तव्यत्वेन बोध्यत इति योजना । चः समुच्चये । अप्रकाशस्येति पाठे निरुपचरितसार्वज्ञ्याभावस्येत्यर्थः । तदा प्रकाशस्य चशब्देन ग्रहणम् । सम्भवादित्यस्य सिद्धत्वात् सत्त्वादित्यर्थद्वयम् । पाठद्वयेऽप्यन्येषामिति शेषः । एकशब्दो अवधारणार्थो विरिञ्चस्यापि वर्ज्यत्वनिवारकः स्कान्दे उक्तमिति शेषः । अतः फलविशेषभावादस्ति हि प्रकाशविशेष इत्यनयोर्नासिद्धिरिति वाक्यशेषः ॥

(२१) नन्वस्त्वेवमसम्भवादित्युक्तयुक्तिपराभवः । तथापि देवा

(२२) सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुद्ध्यते ।
इति ब्राह्मे ॥ ३३ ॥

८. अधिकरणम् ॥

(१) मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि 'अह

नामधिकाराभ्युपगतावाप्ततमजैमिनिमतविरोध इत्यत आह—उक्ते ति ॥ उक्तं च तत् फलं च उक्तं फलं यस्येति च विग्रहः । तथा च तत्तद्विद्योक्तफलार्थं तत्फलकप्रागाप्तज्ञानार्थं च योऽयमधिकारस्तदभा वमात्रं 'जैमिनिमतम्' जैमिन्यभिमतमित्यर्थः । मात्रशब्देन फलान्त रार्थाधिकाराभावो व्यावर्त्यते । किमतो यद्येवमित्यत आह—अत इ ति जैमिन्युक्तस्य सूत्रकारेणाप्यङ्गीकृतत्वात्, सूत्रकृदुक्तस्य च जैमि निना अनिरस्तत्वान्न तयोर्विरोध इत्यर्थः ॥

(२२) ननु किमनयोर्मतयोर्विषयवैलक्षण्यकल्पनेन? विरोध एव किं न स्यादित्यत आह—सर्वज्ञस्येति ॥ तुशब्दो विशेषार्थः । एवका रो भिन्नक्रमः । तथा च यस्मात् 'मुनयो' जैमिन्याद्याः निरुपचरित सर्वज्ञस्य 'कृष्णस्य' द्वैपायनस्य 'एकदेशविचिन्तितं' विचिन्तिता र्थैकदेशं तन्मतैकदेशमेव स्वीकृत्य तदेव ब्रूयुः, नान्यत् । तस्मात् 'त न्मतं' तेषां कृष्णमुनीनां मतं परस्परं न विरुद्ध्यत इत्यर्थः । ब्राह्म इ त्यनन्तरं उक्तमिति शेषः । अतो विषयवैलक्षण्यमेव कल्प्यं न मतविरो ध इति भावः ॥ ८ ॥

इति देवताधिकरणम् ॥

९. अधिकरणम् ॥

(१) अत्राधिकरणे त्रिवर्णेतरस्य शूद्रस्य वेदोक्तब्रह्मविद्याधिका रो निराक्रियते । प्रासङ्गिकत्वात् नाध्यायादिसङ्गतिरन्वेषणीया । श्रुत्या दिसङ्गतिं विषयादिकं च सूचयति—मनुष्येति ॥ निमित्तसप्तमी यम् । अधिकारोपयोगितयोक्ते मनुष्यत्वे अविशेषादिति वा । न केव लं द्विजातीनां, किन्तु शूद्रस्यापीत्यपेरर्थः । तथा च शूद्रस्यापि वेद विद्याधिकारः प्राप्नोति । कुतः? 'मनुष्याधिकारत्वात्' इत्यनेन मनु ष्याणामधिकारस्योक्तत्वात् । अधिकारोपयोगितयोक्ते मनुष्यत्वे च

हारित्वा शूद्र ' ( छा. ४-२-३. ) इति पौत्रायणोक्तेर धिकार इति ।

शूद्रस्य द्विजातिभ्यः ' अविशेषात् ' विशेषाभावात् । ननु न मनुष्य त्वं वेदविद्याधिकारोपयोगि, किन्तु विशिष्टबुध्यादिमत्त्वमेवेत्यतोऽप्याह—अविशेषादिति । शूद्रस्य विशिष्टबुद्ध्यादिमत्त्वेऽपि अन्येभ्यः ' अविशेषात् ' विशेषाभावादित्यर्थः । एवमविशेषाख्ययुक्तिमभिधाय शूद्रस्य वेदविद्याधिकारादर्शनात्, अनधिकार इत्यतो लिङ्गदर्शनमाह—पौत्रायणोक्तेरिति ॥ छान्दोग्ये पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनोक्तेर्दर्शनादित्यर्थः । ननु पौत्रायणाख्य पुरुषस्य शूद्रत्वमेव कुत इत्यतः तद्ज्ञापकमाह—अहहारे त्वा शूद्रेति । पौत्रायणोक्तेरिति । पौत्रायणं प्रति रैक्कोक्तेस्तत्कर्तृकसम्बोधनादेवेत्यर्थः । नन्वधिकाराभावेऽपि पौत्रायणो वेदविद्यां विचारयामासेति किं न स्यादित्यतोऽप्याह—पौत्रायणोक्तेरिति । पौत्रायणं प्रति रैक्केण निस्पृहेण मुनिना संवर्गविद्योपदेशादित्यर्थः । अनधिकारिणं प्रति मुनेरुपदेशासम्भवात् । पौत्रायणस्य अर्थाच्छ्रुतावधिकारोक्तेश्चेति वा योजना । अधिकार इत्यनन्तरमतो विरोध इत्यनुकृष्यते । तस्योक्त इत्यनेनान्वयः । अनेनोक्तन्यायेन उक्तार्थे श्रुत्यादिप्रमाणविरोधाक्षेपात् पूर्वेणास्याक्षेपिकी सङ्गतिः, वेदविद्याधिकाराख्यो विषयः, सयुक्तिकपूर्वपक्षश्च दर्शितो भवति ॥

छान्दोग्ये चतुर्थाध्याये संवर्गप्रकरणे हीत्थमाख्यायिका—पौत्रायणो नाम राजा प्रासादाग्रे निशायां शयानोऽभूत् । तदा प्रासादोपरि हंसपक्षिणोऽगमन् । उपरिपततां परस्परं वार्तां कुर्वतां तेषां मध्ये द्वावग्रगामिनावास्ताम् । तत्रैक एकमुवाच । किमिति ? अरे पौत्रायणीयं तेजस्त्वं मागमः । तत्सम्बन्धे तदीयं तेजस्त्वां दहेदिति । एवमुक्तो परो हंसः कमित्याक्षेपवचनेन राजानमनादृत्य रैक्वमुनिमेव प्रशशंस । तच्छ्रुत्वा परितप्तमना राजा तल्पादुत्थितस्त्वरया स्वसारथिमाहूय रैक्वगवेषणायादिदेश । स तत्र तत्र रैक्वमन्विष्यन् नाविदमिति प्रथममागतः । पुनस्तल्लक्षणोक्तिपूर्वकं राज्ञा तन्मार्गणायादिष्टः पुनरन्विष्य क्वचित्प्रदेशे रैक्वमवलोक्य पुना राजानं प्रत्येत्याह—रैक्वमविदमिति यथावृत्तमवदत् । तदा राजा स्वसारथिवचनेन रैक्वमुनिस्थानं निश्चित्य तस्मात्तत्त्वं विवदिषुर्गुरुदक्षिणां गृही

( २ ) अत आह—

सू—ॐ ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ॐ॥३४॥

नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम् ।

---

त्वा तत्समीपं जगाम । अथ द्वारि शकटस्याधस्थात् स्थितं रैक्वं दृष्ट्वा सम्बोध्य दक्षिणां निवेद्य मह्यं विद्यां ब्रूहीत्युवाच । तदा तं पौत्रायणं परो लोकविलक्षणो रैक्वः प्रत्याचख्यौ । किमिति ? अहहारेत्वा शूद्रेत्यादि । अत्र अहेतिसम्बोधनं, हार इत्वेति भिन्नपदत्वे विसर्गलोपे गुणे हारेत्वेति भवति । तथा च हेशूद्र हारः कण्ठमालाख्यं भूषणं इत्वा रथः । तत्त्वप्रदीपरीत्या शकटो वा । गोभिस्सह तवास्त्वित्यर्थः हारेत्वानावित्येकपदत्वपक्षे द्विवचनस्य एकवचनादेशो वा आकारादेशो वा कर्तव्यः । प्रत्येकं च अस्तु इति क्रियासम्बन्धः ॥

( २ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ अविशेषाख्ययुक्तेः श्रवणसूत्रेनिराकरिष्यमाणत्वात्, पूर्वपक्ष्युक्तलिङ्गदर्शनस्य अन्यथोपपत्तिप्रदर्शनाय प्रवृत्तस्य तदाद्रवणादित्यस्य अन्वययोग्यार्थाकांक्षोत्थापकं सूत्रस्य फलितार्थं दर्शयति—नेति । 'असौ' रैक्वेण सम्बोधितः पौत्रायणो 'न शूद्रः' जात्या शूद्रो न, किन्तु क्षत्रिय इत्यर्थः । तर्हि कथमस्य शूद्रेति सम्भोधितत्वं युज्यते रूढ्यभावादित्यतो योगादेवेत्याशयेन तच्छब्दप्रवृत्तिनिमित्तप्रदर्शकं तदाद्रवणादिति सूत्रांशं सावधारणंमत्वा व्याचष्टे-शुचेति । 'शुचा' शोकेन रैक्वं क्षत्तारं वा प्रत्याशुगमनमेव 'शूद्रत्वम्' शूद्रेतिसम्बोधने निमित्तं, नतु जातिरित्यर्थः । अनेन तदा द्रवणादित्यस्य सूत्रे शूद्रत्वमित्यध्याहृतेन शूद्रेति सम्बोधितत्वरूपार्थबोधकेन पदेनान्वयःसूचितः । तथाच न सम्बोधनानुपपत्तिरिति नेदं शूद्रस्य वेदविद्याधिकारे लिङ्गमित्यतो न शूद्रस्य वेदविद्याधिकार इति नञावृत्त्या अन्वयः । एवेत्यनेन अयं शूद्रशब्दः शुचाद्रवणाच्छूद्र इति नैरुक्त एव,न तु 'शुचेर्दश्च' इत्युणादिसूत्रेण रप्रत्यये धातोश्चदीर्घे चकारस्य दकारादेशे च निष्पन्नो रूढ इत्युक्तं भवति । पौत्रायण इत्यनेन बुद्धिस्थपरामर्शकेदंशब्दार्थः शुचेत्यनेन प्रागुक्तवाचिसौत्रद्वितीयतच्छब्दार्थः, त्वप्रत्ययेन निमित्तार्थकपञ्चम्यर्थश्च दर्शितः । सूत्रकारस्य सदा सर्वज्ञत्वेन शुगस्येत्युक्तिः । भाष्ये 'सः' इति श्रुत्यनुसारेण असाविति परोक्षेणोक्तिश्च युक्ता ॥

(३) 'कम्वर एनमेतत्सन्तम्' (छा. ४-१-३.) इत्यनादर श्रवणात् ।

(४) 'स ह संजिहान एव क्षत्तारमुवाच' (छा.४-१-५.)

(३) कस्मान्निमित्तादस्य शोक इत्यस्योत्तरतया प्रवृत्तंशुगस्य त दनादरश्रवणादितिसूत्रखण्डं व्याचष्टे—कम्वरइति ॥ कं उ अरे इति प दच्छेदः । 'अरे' हंसएतद्वचनंकमेनमुद्दिश्यात्थ 'सन्तं' निर्दुष्टं 'स युग्वानं' सशकटं रैक्कमित्येवेत्यर्थः । उ इतिनिपातः, अस्यनिन्दार्थः। अस्मिन् राज्ञि वक्तुमननुरूपमिदं, एवं वक्तुं रैक्क एव योग्य इत्यर्थः। 'एतत्सन्तं' निन्द्यं सन्तमात्थेत्यर्थः तत्त्वप्रदीपे अभिहितः। 'एतत्सन्तं' अत्र सन्तमिति वा। इत्यनादर श्रवणादिति। अनादरो निन्दा। तथा च इत्येवंरूपस्य हंसकृतानादरबोधकवाक्यस्य हंसात् स्वानादरवाक्य स्य वा श्रवणादित्यर्थः; श्रवणादित्यनन्तरं प्राप्तयेतिशेषः।अस्य शुचे त्यनेनान्वयः ॥

(४) ननु श्रुतानादरस्यापि राज्ञः कुतः शोकोत्पत्तिः ज्ञायते। न च प्रत्यक्षात्तन्निश्चयः। अनादरश्रवणरूपपरबुद्धेरप्रत्यक्षत्वेन ततः शो कोत्पत्तेरप्रत्यक्षत्वात्। न च कारणानुमानात् कार्यानुमितिः। कारण स्य कार्याविनाभावाभावादित्यतः प्रवृत्तं 'सूच्यते हि' इतिसूत्रशेषं व्याचष्टे—सहेति ॥ हेत्याश्चर्ये। 'सः' श्रुतानादरः पौत्रायणः 'सञ्जि हान एव' शयनीयादुत्तिष्ठन्नेव 'क्षत्तारं' सारथिं प्रति रैक्कगवेषणा योवाचेति श्रुत्यर्थः। इति सूच्यते हीति। इत्येतद्वाक्यार्थान्यथाऽनुपप त्त्या ज्ञातेन रैक्के व्यासक्तमनस्कत्वेन कार्येण तत्कारणं शुगस्य 'सूच्य ते' ज्ञायत इत्यर्थः। कारणस्य कार्याविनाभावाभावेऽपि कार्यस्य का रणाविनाभावस्यावश्यं भावादिति भावः। अस्य तदनादरस्य श्रव णात् प्राप्तया शुचाऽऽद्रवणमेवेति पूर्वेणान्वयः। शोकेनाद्रवणाख्यनि मित्तपरिज्ञानं च रैक्वमुनेः सार्वज्ञ्यादुपपद्यते। तदुक्तं छान्दोग्य भाष्ये—

राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।
प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान् ॥ इति ॥

'शोकात्' शोकेनाऽऽद्रवणादित्यर्थः। अथवा—शोकशब्दोपप दात् आङ्पूर्वकात् 'अतसातत्यगमने' इत्यस्मात् क्विपि रूपमेतत् तथात्वे यतइति शेषः। ननु सूत्रे तद्द्रवणादित्येतावता पूर्तौ आङ्प्रश्ले

इति सूच्यते हि ॥ ३४ ॥

( ५ ) सू—ॐ ॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्॥ॐ॥३५॥

षः किमर्थ इति चेत्–न, श्रुतौ शुद्रेतिवक्तव्यत्वेऽपि शोकाधिक्यज्ञापनार्थे शूद्रेति ऊकाररूपो यो दीर्घस्वरः श्रुतः तदर्थव्यक्त्यर्थत्वात्। न च शूद्रेतिवक्तव्ये श्रुतौ शूद्रेत्युक्तिः कथमिति वाच्यम्। 'तस्माद्रुग्द्रावणात् रुद्रः' ( ) इति श्रुतौ गकारस्य दकारादेशेन यथाप्रयोगस्तथोपपत्तेः। अतएव तत्त्वप्रदीपे तृतीयस्य तृतीयोऽतिशयार्थत्वादित्युक्तम्। 'रुजं द्रावयते' इति श्रुताविवोपपत्तेश्च। अनेन—शुचा 'आद्रवणात्' रैक्कं प्रति शीघ्रगमनादेव निमित्तादस्य पौत्रायणस्य शूद्रत्वं शूद्रेति सम्बोधितत्वम्, न तु वर्णावरत्वात्। शुक्र शोकश्चास्य तदनादरश्रवणादासीत्। तदिति श्रुत्युक्तपरामर्शः। क्रियाकर्तृभावषष्ठ्यर्थः। तथा च 'तस्य अनादरश्रवणात्' हंसकृतानादरश्रवणात् इत्यर्थः। तत्त्वप्रदीपरीत्या तस्माद्धंसात् स्वानादरश्रवणादित्यर्थः। मध्यमपदलोपी समास इति केचित्। ननु श्रुतानादरस्यापि कुतः शोकोत्पत्तिर्ज्ञायते, परबुद्धेः शोकपदोक्तदुःखानुभवस्य अप्रत्यक्षत्वादित्यत उक्तं—सूच्यते हीति। 'हि' यस्मात् 'सह' इति वाक्यार्थानुपपत्त्या ज्ञातेन तद्व्यग्रमनस्कत्वाख्य कार्येण तत्कारणं शुगस्य 'सूच्यते' ज्ञायते। तस्मात् अतो न शूद्रेति सम्बोधनं शूद्रस्य वेदाधिकारे लिङ्गमिति नैतद्बलाच्छूद्रस्य वेदविद्याधिकार इति भावः इति सूत्रार्थ उक्तो भवति॥

( ५ ) ननु शूद्रशब्दोऽयं कुतो यौगिकोऽङ्गीक्रियते, रूढार्थ एव किं न स्यात्। योगरूढ्योर्मध्ये रूढेरेव प्राबल्यात्। तथा च पौत्रायणनिदर्शनेनैव शूद्रस्य वेदविद्याधिकारसिद्धिरित्याशङ्कां परिहरन्सूत्रमुपन्यस्य व्याचष्टे—क्षत्रियत्वेति॥ अत्र 'अयम्' इत्यतः प्राक् 'उत्तरत्र' इति सौत्रपदं सम्बन्धनीयम्। श्रुतेनेति शेषः। तथा च उत्तरत्र रैक्कं प्रति पौत्रायणस्य आद्रवणात्, उत्तरत्र तत्प्रतिपादनानन्तरम्। यद्वा—शूद्रशब्देन सम्बोधनात् उत्तरत्र 'अयमश्वतरी रथः' इति श्रुतेनेत्यर्थः। पौत्रायणेन दीयमानस्य रथस्य अन्यदीयत्वशङ्कानिरासाय सूत्रे चैत्ररथेनेति भावप्रधानपदं प्रयुक्तम्। अन्यथा चित्ररथेनेत्येवावक्ष्यत्। तत्र चित्रश्चासौ रथश्च चित्ररथः तस्यायं चैत्ररथ इति विग्रहमभिप्रेत्य प्रत्ययार्थं प्रदर्शयन् तद्व्याचष्टे—चित्ररथसम्बन्धित्वेनेति। स्वाभाविकचित्ररथसम्बन्धित्वेनेत्यर्थः। अत्र रथमात्रमेव लिङ्गं,

'अयमश्वतरी रथः' इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

(६) रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते ।
इति ब्राह्मे ।

चित्रपदं तु स्वरूपकथनार्थम् । यद्वा—अपूर्वरथयोगेन क्षत्रियत्वसम्भावनार्थं तत्पदम् । अथवा यदा रथित्वेनैव क्षत्रियत्वस्य निश्चयः, तदा सुतरां चित्ररथित्वेनेति सूचनार्थं तत्पदम् । यद्यपि 'अयमश्वतरिरथः' इत्यत्र चित्ररथमात्रश्रवणेऽपि न तत्सम्बन्धोऽस्य श्रूयते। तथापि तत्पूर्ववाक्ये 'हारेत्वा तवैव' इति षष्ठ्या इत्वाशब्दार्थरथसम्बन्धो गम्यत इति तस्याश्च रथसम्बन्धे श्रुतिरूपत्वात् युक्तमुक्तम्। चित्रो रथो यस्येति चित्ररथस्तस्य भावः चैत्ररथस्तेनेति व्याख्यानं तु भावेऽण् प्रत्ययस्य कल्प्यत्वात् श्रुतिभाष्यविरुद्धत्वाच्च अयुक्तम्। न च चैत्ररथेनेति सम्बन्धोक्तिमात्रेण कथमन्यदीयत्वशङ्कानिरास इति वाच्यम् । स्वतः प्राप्ततदीयत्वे बाधकाभावे तदीयत्वस्यैव स्वाभाविकत्वसम्भवे नैमित्तिकग्रहणायोगात् । 'स्वत्वाभावे धनायोगात्' इत्यादिन्यायप्राप्तत्वात् । रथेन लिङ्गादित्यनयोस्सामानाधिकरण्याय लिङ्गादिति पञ्चमीं व्यत्ययेन व्याचष्टे—लिङ्गेनेति । पौत्रायणस्येत्येतत् अस्येत्यनुवृत्तपदस्य अर्थकथनम् । क्षत्रियत्वावगतेरित्यस्य शुचाऽऽद्रवणादेवास्य शूद्रत्वं न तु रूढ्येति पूर्वेणान्वयः । चशब्दो लिङ्गेनचेति सम्बध्यते । तेन 'बहुदायी' इत्यादिवाक्यशेषोक्तं लिङ्गं समुच्चीयते । लिङ्गस्य श्रुतितश्चरमत्वेन अनेकत्वेन च प्राबल्य सूचनाय वा चशब्दः । एवं सूत्रेऽपि चशब्दो भिन्नक्रमः उक्तप्रयोजनकश्च । एवं च रूढेरेव प्राबल्येऽप्यत्र श्रुतानेकलिङ्गरूपबाधकात् शूद्रशब्दस्य योगवृत्त्यङ्गीकार एव युक्त इति भावः । 'गर्दभादश्वायां जाता अश्वतर्यः' इति तत्त्वप्रदीपे । 'गर्दभीषु अश्वैर्जाता अश्वतर्यः' इति व्यासतीर्थीये । तद्युक्तो रथः अश्वतरीरथः तवदक्षिणात्वेन वर्तते इत्यर्थः । रैक्वं प्रति पौत्रायणवाक्यमेतत् ॥

(६) ननु श्रुतावश्वतरीरथशब्दप्रयोगात् सूत्रेऽपि तथैव प्रयोक्तव्ये कथं सूत्रकृत् चित्ररथशब्दं प्रायुङ्क्तेत्याशङ्क्य उभयोरर्थैक्यान्न विसंवाद इत्याशयेन तत्राभिधानमाह—रथ इति ॥ तुशब्दो विशेषार्थोऽवधारणे वा । अश्वतरीयुक्त एवेति सम्बध्यते । अत्र रथ इति वा

( ७ ) यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः ।
इति ब्रह्मवैवर्ते ॥ ३५ ॥

स्तवविशेषोक्तिरेव, न तु रथत्वस्यापि शक्यकोटिप्रवेशः । तथा च सूत्रे रथत्वप्रकारकबोधाय रथशब्दप्रयोग इति न तद्वैयर्थ्यमिति ध्येयम् । इति ब्राह्मे उक्तत्वात् न श्रुतिसूत्रयोर्वैरूप्यमित्युपस्कारेणान्वयः॥ ( ७ )एवं साक्षादेव स्वाभाविकरथेन पौत्रायणस्य क्षत्रियत्वं प्रसाधितम् । स्वाभाविकरथित्वेऽप्यस्य वर्णावरत्वं किं न स्यादित्यप्रयोजकत्वमाशङ्क्य मैवं–आगन्तुकस्यापि रथस्य वेदं विनाऽयोगात् 'वेदस्य च संस्कारेति वक्ष्यमाणन्यायेन शूद्रेऽयोगात्' रथमात्रेण वेदानुमानद्वारा पौत्रायणस्य शूद्रत्वाभावसिद्धेरित्याशयेन रथेन वेदानुमाने व्यभिचार शङ्कापरिहाराय आगमेनोभयव्याप्तिं दर्शयति—यत्रेति ॥ 'तत्र' तत्रैवेत्यर्थः । तेन यत्र वह्निः तत्रैवधूम इत्यादाविव वेदस्य व्यापकतालाभः । अतएव व्यतिरेकप्रदर्शकांशे न वेद इति वेदाभावस्य प्रथममुक्तिः । स्मृतौ रथशब्देन आगन्तुकस्वाभाविकसाधारणरथमात्रस्य विवक्षितत्वात् ,समव्याप्त्यभिप्रायेण वा यत्र वेद इत्युक्तिः । अतएव टीकायां 'रथस्य वेदाविनाभावात्' इति रथस्य व्याप्यत्वमुक्त्वा 'वैदिकत्वमात्रे विद्यमानंरथित्वम्' इत्यनेन तस्य व्यापकत्वमुक्तम् । वस्तुतस्तु—यत्ररथस्तत्रवेद इति योजनायां नानुपपत्तिः । तथा च अनेन व्याप्तिनिश्चयात् न व्यभिचारशङ्केति यादृशतादृशरथमात्रेण वेदानुमानद्वारा शूद्रत्वाभावनिश्चयान्न पौत्रायणस्य वेदबाह्यवर्णावरत्वं शङ्क्यमिति भावः । एतेन पूर्वपक्षिणा शूद्रेऽपि वेदाङ्गीकारान्न तेन शूद्रत्वाभावसाधनं युक्तमितिनिरस्तम्, तस्योत्तरसूत्रे निराकरिष्यमाणत्वात् । न च ब्राह्मणादिसाधारणरथित्वेनास्य वैदिकत्वनिश्चयेऽपि तद्द्वारा अशूद्रत्वसिद्धावपि कथं क्षत्रियत्वनिश्चय इति वाच्यम् । रथित्वमात्रस्य वैदिकत्वव्याप्तत्वोक्त्या स्वाभाविकरथित्वस्य वैदिकविशेषक्षत्रियत्वव्याप्तत्वेनापि स्मृत्यभिप्रेतत्वात् । तस्य च कादाचित्करथवति ब्राह्मणादावभावात्तेन साक्षादेव क्षत्रियत्वनिश्चयोपपत्तिः । न च 'अपलायनं च शूद्रस्य' इत्यनेन प्राप्तयोद्धृत्वान्यथानुपपत्त्या शूद्रस्य रथित्वप्रतीतेस्तत्र व्यभिचार इति वाच्यम् । अपलायनेन योद्धृत्वस्य पदातितयोपपत्त्या रथित्वानाक्षेपकत्वात् । ब्रह्मवैवर्त इत्यस्य उक्तत्वादित्यध्याहारेण नासौ शूद्र इत्यनेनान्वय इति ज्ञायत इति

( ८ ) सू—ॐ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ॐ॥३६॥
'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' (
) इत्यध्यापनार्थं संस्कारपरामर्शात् ।

शेषः अनेन—'आद्रवणात्' सम्बोधनाद्वा 'उत्तरत्र' 'अयमश्वतरी रथः' ( छां॰ ४-२-२. ) इतिश्रुतेन 'चैत्ररथेन लिङ्गात्' लिङ्गेन स्वाभाविकरथेन लिङ्गेन बहुदायित्वादिलिङ्गेन चास्य पौत्रायणस्य क्षत्रियत्वावगतेः । अस्मात् बाधकात्तदाद्रवणान्निमित्तादेवास्य शूद्रत्वम्, न तु जात्याऽसौ शूद्रः । तथा रथेन वेदनिश्चयाच्च नासौ शूद्र इति सूत्रार्थ उक्तो भवति ॥

( ८ ) यदुक्तं रथित्वलिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमात्, न तल्लिङ्गेन शूद्रस्य वेदाधिकारसिद्धिरिति । न तद्युक्तं—शूद्रस्यापि रथित्वसम्भवात् । न च रथस्य वेदव्याप्यत्वाच्छूद्रे च तदभावाद्रथस्याप्यभाव इति वाच्यम् । शूद्रेऽपि वेदाधिकाराङ्गीकारादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—संस्कारेति ॥ अत्र 'अष्टवर्षं ब्राह्मणमुपनयीत । तमध्यापयीत' इति श्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा, नान्येषामित्याशङ्कापरिहाराय प्रवृत्तं संस्कारपरामर्शादित्यंशं व्याचष्टे—अष्टवर्षमिति । उपनयीतेत्यनन्तरं इत्युपनयनमुक्त्वेति शेषः । 'तं' उपनीतं माणवकमात्मन आचार्यकरणकामोऽध्यापयीतेत्यर्थः । इतिशब्दानन्तरं श्रुताविति शेषः । 'अन्यार्थवचनं परामर्शः' इत्याशयेन परामर्शपदं व्याचष्टे—अध्ययनार्थमिति । अध्ययनाङ्गतयेत्यर्थः । अध्यापनवाक्यस्यापि 'स्वाध्यायोऽध्येतव्यः' (तै.आ.२-१५-१.) इति श्रुत्यनुरोधेन जीविकार्थाध्ययनविधिपरत्वादिति भावः । 'संस्कारपरामर्शात्' उपनयनाख्यसंस्कारमात्रवचनादित्यर्थः । तच्छब्देनेति शेषः । न तु ब्राह्मणपरामर्श इतिमात्रशब्दार्थः । तथा च नोक्तशङ्कावकाश इति भावः । केचित्तु—श्रुतिगतब्राह्मणशब्दोऽत्र ब्रह्माणन योग्यत्रैवर्णिकपर इत्याहुः । तच्चिन्त्यम्, शङ्कासमाधानाननुगुणत्वात् । कुत एवं कल्प्यत इत्यतः स्मृतावप्युपनयनाख्यद्वितीयजन्मवत एव सारण्यकवेदाध्ययनविधानादित्याशयेन सूत्रे भाष्ये च 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृतिसमुच्चयार्थकश्चशब्दः प्रायोजि । सः परामर्शादित्यनेनान्वेति । परामर्शाच्चेत्यनन्तरं अध्ययनस्य संस्कारसापेक्षत्वावगमादिति शेषः ॥

( ९ ) 'नाग्निर्न यज्ञो न क्रिया संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च ।
( १० ) उत्तमस्त्रीणां तु न शूद्रवत् । 'स पत्नीं मे पराधम' इत्यादिष्वधिकारदर्शनात् ।
( ११ ) संस्काराभावेनाभावस्तु सामान्येन ॥

( ९ ) नन्वस्त्वध्ययनस्य उपनयनसंस्कारसापेक्षत्वं, तथापि न शूद्रस्य वेदाध्ययनाभावसिद्धिः । शूद्रस्यापि संस्कारसम्भवादित्यतः प्रवृत्तं 'तदभावाभिलापात्' इति सूत्रखण्डं व्याचष्टे—नाग्निरिति । 'अभिलापात्' अभिधानादिति । अस्य सूत्रे अध्याहृतेन 'न शूद्रस्य वेदाधिकारो, न वा तदविनाभूतं रथित्वम्' इति साध्येनान्वयः । 'अग्निः' श्रौतःस्मार्तश्च । 'यज्ञः' अग्निहोत्रादिः, दैवपित्र्यादियज्ञो वा । 'क्रिया' सन्ध्यावन्दनादिरूपा, उत्तरक्रिया वा । संस्कार उपनयनादिः । 'व्रतानि' कृच्छ्रचान्द्रायणादीनि ॥

( १० ) नन्वेवं संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्रीणामपि तत्प्रसङ्गः । संस्काराभावेऽपि तासामधिकारे शूद्रस्यापि तत्प्राप्तिरित्यत आह—उत्तमेति ॥ तुशब्दो वेदद्रष्टृत्वाख्यविशेषद्योतकः। 'संस्काराभावेनाभावः' इत्याकृष्यते। अधिकारस्येति शेषः। उत्तमानां स्त्रिय इति विग्रहः, कर्मधारयो वा । तथा च शची यमी-ऊर्वश्याद्युत्तमस्त्रीणां शूद्रवन्न संस्काराभावेन वेदविद्याधिकारस्याभावो वक्तव्यः। कुतः? 'सपत्नीं मे पराधम' (मंत्रप्रश्न.१-१६.) इत्यादिविद्यासु तासां तद्द्रष्टृत्वेन अधिकारदर्शनादिति योजना । अत्र 'सपत्नीम्' इति प्रतीकग्रहणेन 'सपत्नी मे पराधम' 'पतिं मे केवलं कुरु, उत्तराऽहमुत्तरेवुत्तर उत्तराभ्यः' इति समग्रवाक्या गृह्यते। शचीवाक्यमिदम् । हे भगवन् 'मे सपत्नीं' मदन्यां मत्पतिपाणिगृहीतीं 'पराधम' पराणुद । मम पतिं 'केवलं' मय्येवासक्तं कुरु । 'अहमुत्तराभ्यः' सौन्दर्येणोत्कृष्टाभ्यः मदन्तराभ्यो वा स्त्रीभ्यः 'उत्तरा' उत्कृष्टा सती 'उत्तरेत्' प्रियोक्तमैव 'उत्तरे' सपत्नीक्लेशादुत्तरेयमिति श्रुत्यर्थः । आदिपदेन 'उदसौ पश्यवः सोम एकेभ्यः पवते, ( ) उदसौ सूर्यो अगात्' (ऋ.१०-१५९-१.) इत्यादि देवमातृयमीपौलोम्यादिदृष्टानां ग्रहणम् ॥

( ११ ) तर्हि संस्काराभावहेतोरुत्तमस्त्रीषु व्यभिचारस्स्यादित्यत आह—संस्कारेति ॥ अभावो वेदाधिकारस्य । तुशब्दः पूर्वोक्तन्याय

(१२) अस्ति च तासां संस्कारः—
स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा।
इति स्मृतेः॥ ३६॥

स्य सामान्यत्वाख्यविशेषद्योतकः। उक्त इति शेषः। तथा च संस्काराभावेन हेतुना यत्सूत्रे वेदाधिकारस्य अभाव उक्तः स 'सामान्येन' सामान्यन्यायेन सापवादनियमाभिप्रायेणैव, न तु निरपवादनियमेन। अतो नापवादविषये व्यभिचार इत्यर्थः। सामान्यत्ववचनेन शूद्रप्रतिबन्दी मोचिता। तथा च संस्काराभावे वेदाधिकाराभाव इति सामान्यव्याप्तेः शच्यादिषु विद्याधिकारदर्शनाख्यापवादकेन भङ्गेऽपि न शूद्रादावपि तस्य भङ्गः कल्प्यः, तत्र वेदविद्याधिकारे विशेषप्रमाणाख्यापवादकाभावादिति भावः॥

(१२) एवं स्त्रीणां उपनयनाभावेऽपि पूर्वोक्तव्याप्तेः सामान्यत्वेन अपवादसम्भवादस्ति वेदाधिकार इत्युक्तम्। अथोपनयनाख्यविद्याभावेऽपि तत्प्रतिनिधिसद्भावाच्च अस्त्यधिकार इत्याह—अस्तिचेति॥ चः अधिकारसमुच्चये। 'तासां' स्त्रीणाम् कुत एतदित्यत आह—स्त्रीणामिति। पुंसामिति शेषः। तथा च पुंसां यथा उपनयनं संस्कारः, तथा स्त्रीणां 'प्रदानकर्मैव' विवाहक्रियैव संस्कार इति व्यासस्मृत्यर्थः। स्मृतेरित्यस्य तासामित्यनेनान्वयः। इति ज्ञायत इति शेषः। तथा च उत्तमस्त्रीष्विह हेतूकृतस्य निधिप्रतिनिधिसाधारणसंस्कारसामान्याभावस्याभावात् न व्यभिचार इति भावः। न च संस्कारमात्रस्य वेदाधिकारप्रयोजकत्वे अधमस्त्रीणामपि तदापत्तिरिति वाच्यम्। निषेधाभाव सहितस्यैव तस्य प्रयोजकत्वाभ्युपगमात्। नन्वेवमुत्तमस्त्रीणां संस्कारयुक्तत्वादेव अधिकारित्वमिति नोक्तन्यायभङ्ग इति वक्तुं शक्यत्वात्, किमर्थं तासु संस्काराभावमङ्गीकृत्य उक्तन्यायस्य सापवादत्ववचनमिति चेत्—न, प्रदानादिशून्य तिर्यगादीनामपि सङ्ग्रहार्थत्वात्। तेषामपि 'अयमग्ने जरिता' (ऋ.१०-१४२-१.) इत्यादिविद्याधिकारदर्शनेन अपवादविषयत्वात्। अनेन—'तमध्यापयीत' इति तच्छब्देन पूर्वप्रकृतोपनयनाख्यसंस्कारमात्रस्य परामर्शाच्छूद्रः कृत्स्न इति स्मृतेश्चास्य शूद्रस्य तदभावाभिलापान्नाग्निरिति श्रुतौ संस्काराभावाभिधानात् न तस्य वेदाधिकार इति सूत्रार्थ उक्तो भवति॥

( १३ ) सू—ॐ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ॐ ॥ ३७ ॥
'नाहमेतद्वेद भो यद्गोत्रोयमस्मि' ( छा. ४-४. ) इतिसत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तुमर्हति' (छा.४-४.)

( १३ ) ननु शूद्रे संस्काराभावेन वेदविद्याधिकाराभावोक्तिरनुपपन्ना । 'शूद्रं नोपनीयेत' इति निषेधाभावेन तस्यापि संस्कारसम्भवात् । 'नाग्निर्न यज्ञः' इति श्रुतौ तु शूद्रस्य संस्काराभाव एवोच्यते न तु असौ न कार्य इति निषिध्यते । अतो न तद्विरोधोपीत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—तदभावेति ॥ 'इति सत्यवचनेन' वाङ्मनसयोरेकरूपयथार्थवचनेन तज्ज्ञापितेनार्जवेनेति यावत् । 'सत्यकामस्य' तदाख्यस्य ऋषेः एतच्च पूर्वत्रोत्तरत्र च सम्बध्यते । 'सत्यवचनेन सत्यकामस्य' इत्यादिना सूत्रे तच्छब्दो व्यस्तः अनेकविभक्तिकः बुद्ध्या विविच्यावर्तते इत्युक्तं भवति । शूद्रत्वाभावनिर्धारणे चेत्यस्य नैतदब्राह्मण इत्यनेन सम्बन्धः । चोऽवधारणे । श्रुतावब्राह्मणमात्रस्य अनुपनयनाभिप्रायप्रतीतेस्तदनुसारेण ब्राह्मणत्वाभावेत्यनुक्त्वा शूद्रत्वाभावेति तदभावपदव्याख्यानेन श्रुतौ ब्राह्मणशब्दो ब्रह्माणन योग्यत्रैवर्णिकपर इत्युक्तं भवति । एतद्वाक्यस्य यद्ययमब्राह्मणः शूद्रः स्यात्तर्ह्येतत्सत्यवचनं आर्जववचनं वाङ्मनसयोरवैरूप्येण वचनं विवक्तुं नार्हेदिति विपक्षे तर्कोक्तिरूपतया, योऽब्राह्मणः स एवं वक्तुं नार्हति सत्यवचनहीन इति व्यतिरेकव्याप्त्युक्तिरूपतया वा शूद्रत्वाभावनिर्णायकत्वम् । हरिद्रुमतोऽपत्यं हारिद्रुमतः गौतमः । तस्य प्रवृत्तेरिति । अस्य न तदभाव इति अध्याहृतपदेनान्वयः । तथा चेत्थं महावाक्ययोजना—सत्यकामस्य नाहमेतद्वेदेति सत्यवचनेन नैतदब्राह्मणो विवक्तुमर्हतीति व्यतिरेकव्याप्तिज्ञानेन बाधकतर्केण च शूद्रत्वाभावनिर्धारणे सत्येव तमनुमायैव तस्य सत्यकामस्योपनयन संस्कारे 'हारिद्रुमतस्य' गौतमस्य 'प्रवृत्तेः' प्रवृत्तत्वात् न शूद्रस्य तदभावः संस्कारनिषेधाभाव इति । चो हेतुसमुच्चये । अनेन—सूत्रे तदिति व्यस्तं लुप्तविभक्तिकं पदं समस्तं च तन्त्रेणोपात्तम् । चशब्दोऽवधारणे भिन्न क्रमेण, न केवलं शूद्रस्य संस्काराभावः श्रुतिमात्रात्, किन्तु संस्कारनिषेधज्ञापकलिङ्गाच्चेति समुच्चये च । नेत्यस्ति ।

इति तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥

( १४ ) सू—ॐ ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ॐ ॥३८॥

तदभाव इत्यनुषज्यते । तथा च 'तस्य' सत्यकामस्य 'तेन' सत्यवचनेन मनोवाक्कायकर्मणां अवैपरीत्यमार्जवं तदेव सत्यत्वं तादृशवचनेन तेन ज्ञापितेन ऋजुत्वेनेति यावत् । नैतदब्राह्मणो विवक्तुमर्हतीति व्यतिरेकव्याप्तिं बाधकतर्कं चोपन्यस्य 'तदभावनिर्धारणे च' तस्य शूद्रत्वाभावनिर्णये सत्येव तदभावमनुमायैव 'समिधं सोम्योपहर उप त्वानेष्ये' ( छां. ४-४-५. ) इति तस्य तस्मिन्नुपनयनसंस्कारे तस्य गौतमस्य प्रवृत्तेर्दर्शनाच्च न शूद्रस्य तदभावः संस्कारनिषेधाभावः। शूद्रस्य उपनयननिषेधाभावे कथमयं तदभावनिर्धारणे सत्येव प्रवर्तेत, तेन ज्ञायते निषेधोऽस्तीति भाव इति सूत्रार्थ उक्तो भवति॥

छान्दोग्ये हीत्थमाख्यायिका—सत्यकामोनामऋषिः जबलाख्यां मातरमुपेत्योवाच । किमिति ? अहं वेदाध्ययनार्थं आचार्यमुपगच्छेयं तत्राध्ययनस्योपनयन संस्कारसापेक्षत्वात् उपनयनं विना ते मां नाध्यापयेयुः, उपनयनं च गोत्राद्यवचने न कुर्युः अतोऽहं किंगोत्रोऽस्मि तद्वदेति । एवमुक्ता जबला स्वपुत्रं सत्यकाममब्रवित् —हे तात त्वं यद्गोत्रोऽसीत्येतत् नाहं वेदेति । एवमुक्तःसत्यकामो गौतममुपेत्योवाच । किमिति ? हेभगवन् ब्रह्मचर्यार्थं त्वामुपेयमिति । एवमुक्तो गौतमः हे सोम्य त्वं किंगोत्रोऽसि? तद्वदेत्युवाच । एवमुक्तस्सत्यकामः पुनर्गौतमं प्रत्याह—नाहमेतद्वेद भो इति । हे भो भगवन् पूज्य गौतम अहं यद्गोत्रोऽस्मीत्येतत् वेद्यं 'न वेद' न जानामीत्यर्थः। एवं सत्यकामस्य सत्यवचनेनार्जवं ज्ञात्वा पुनस्तं प्रत्युवाच। नैतदित्यादि । अत्र ब्राह्मणशब्दो ब्रह्माणनयोग्यत्रैवर्णिकपरः। 'आर्जवं ब्राह्मणे साक्षात् शूद्रोऽनार्जवलक्षणः' इतिश्रुतिव्याख्यानरूपायां स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानात् । तथा च 'एतत्' आर्जवसंयुक्तवचनं 'अब्राह्मणः' त्रैवर्णिकेतरःशूद्रो 'विवक्तुं' सर्वथा वक्तुं 'नार्हति' न योग्यः । अतस्त्वमेवं वदन् ब्राह्मण एवासि, अतो हे सोम्य समिधमुपहर त्वामुपनेष्य इति ॥

( १४ ) नन्वविशेषादित्युक्तरीत्याशूद्रस्यापि विशिष्टबुद्ध्यादिमत्त्वेन अधिकारः सिद्ध्येत् । अन्यथा तेन देवताद्यधिकारसिद्धिरपि न स्यादिति शङ्कां परिहरत्सूत्रमुपन्यस्यव्याचष्टे— श्रवणेति ॥ सूत्रे 'अर्थो

'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम्' ( गौतमधर्म. १२-४..७. ) इति प्रतिषेधात् ।

( १५ ) नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥
इति स्मृतेश्च ।

( १६ ) विदुरादीनां तु उत्पन्नज्ञानत्वात्कार्श्च

वधारणे । ' इति श्रुत्यनुसारादर्थशब्दः तदवधारणपरः । तथा च 'श्रवणे त्रपुजतुभ्याम्' इति श्रुतौ शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां प्रतिषिद्धत्वादित्यर्थः । अस्य न तदभाव इत्यनुपक्तसाध्येनान्वयः । अध्ययननिषेधाभाव इति तदर्थः । तथाचानिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्यैव वेदाधिकार प्रयोजकत्वेनाङ्गीकृतत्वात् तस्य च शूद्रे अभावान्न तस्य देवप्रतिबन्धा वेदाधिकारो वाच्य इतिभावः । शूद्रेण वेदश्रवणे कृते सति द्रुताभ्यां त्रपुजतुभ्यां वङ्गलाक्षाभ्यां तत्कर्णविवरपरिपूरणं राजभटै कार्यमिति श्रुत्यर्थः । शिष्टः सुगमः ॥

( १५ ) श्रुतौ शूद्रेण श्रवणे कृते इत्यनुक्तेर्वर्णबाह्यविषयेयं श्रुतिः किं न स्यादित्याशङ्कानिवृत्यर्थं सूत्रेस्मृतेश्चेत्युक्तं, तां स्मृतिमुदाहरति-नेति ॥ यथा 'शूद्रस्य' शूद्रेण नाग्निस्सर्वथाआधातव्यः । पञ्चविधो यज्ञोऽपि नानुष्ठेयः । तथाऽध्ययनं कुतः भवेत् न कुतोऽपि । तर्हि तेनानुष्ठेयं परलोकसाधनं किमिति पृच्छति—तु किन्त्विति । उत्तरमाह—केवलैवेति । भृतिरहितेत्यर्थः । त्रयश्च ते वर्णाश्च त्रिवर्णाः, तेषां ब्रह्मक्षत्रियवैश्यानामित्यर्थः । 'शुश्रूषा' परिचर्यैवेति सम्बन्धः । विधीयते । कार्यत्वेनेति शेषः । इति स्मृतेरित्यस्य शूद्रस्यैवाध्ययननिषेधावगमात् न तदभाव इत्यध्याहृतेनान्वयः । तथा च स्पष्टस्मृतिबलात् श्रुतेरपि शूद्रविषयत्वमेवेति भावः ॥

( १६ ) ननु शूद्रस्य वेदार्थावधारणादेर्निषिद्धत्वे कथं विदुरादीनां वैदिकाऽर्थावधारणमस्ति । एवं संस्काररहितानां वेदानधिकारे कथं क्षत्रियः संस्काररहितः कर्णः निखिलाः श्रुतीरधिजगौ । न च वाच्यमसावपवादविषय इति । अविहितोपनयनत्वे सति निषिद्धाध्ययनानां उत्तमस्त्रीतिर्यगादीनामेवापवादविषयत्वेन निषिद्धाध्ययनानां शूद्राणां अतद्विषयत्वादित्यत आह—विदुरादीनामिति ॥ आदिपदेन ध

द्विशेषः ॥ ३८ ॥

१०. अधिकरणम् ॥

( १ ) यदिदं किं जगत्सर्वं प्राण एजति निस्सृतम् ।

मेव्याधादयो गृह्यन्ते । तुशब्दो विशेषार्थः । तमेवाह—उत्पन्नज्ञानत्वा दिति । जन्मान्तर एव वेदात्परम्परयोत्पन्नमपरोक्षज्ञानं येषां ते तथो कास्तेषां भावस्तत्त्वम् । तस्मात् 'कश्चित्' असाधारणः इतरशूद्रा दिभ्यो व्यावृत्तो विशेषः तेष्वस्तीत्यर्थः । यत इति शेषः । अतो न 'नाग्निः' इत्यादि निषेधविषयत्वं तेषां, किंतु अपवादविषयत्वमेवेति न तत्प्रतिबन्धेतर शूद्राणां वेदाधिकारः शङ्क्य इति भावः । सूत्रार्थ स्तु—शूद्रस्य श्रवणे 'त्रपुजतुभ्याम' इति वेदश्रवणाध्ययनार्थावधा रणप्रतिषेधकश्रुतेः 'नाग्निर्न यज्ञः' इति स्पष्टं शूद्रस्यैव वेदाध्ययन निषेधकस्मृतेश्च न तस्य तदभावो वेदाध्ययननिषेधाभाव इति ॥ ९॥

॥ इति अपशूद्राधिकरणम् ॥

१०. अधिकरणम् ॥

( १ ) अत्राधिकरणे वज्रनाम समन्वीयते । श्रुत्यादिसङ्गतिं विषया दिकं सूचयति–यदिदमिति ॥ अत्र त्रैवर्णिकानां वेदात् ब्रह्मज्ञानंमोक्ष दमिति पूर्वोक्तमयुक्तम् । यतो 'यदिदम्' इति श्रुतौ उद्यत वज्रज्ञानात् मोक्षः श्रूयत इति वाक्योपस्कारेण योजना । अनेन पूर्वाधिकरणे त्रैव र्णिकानां वेदात् ब्रह्मज्ञानं मोक्षदमिति यदभिप्रेतं तस्य चानन्दमयाधि करणे 'नेतरः' इत्यनेनोक्तस्य मोक्षजनकज्ञानविषयत्वस्य विष्णोरन्यत्रा क्षेपात् तेनास्य आक्षेपिकी सङ्गतिरुक्ता भवति । वज्रशब्दो विषय इति सूचितम् । वज्रश्रुतेः कुलिशे रूढिबलात् तथा 'उद्यतायुधदोर्दण्डाः' इत्यादिस्मृतौ 'तेनेन्द्रो वज्रमुदयच्छत्' (                ) इति श्रुतौ च आयुधे प्रसिद्धोद्यतत्वलिङ्गबलाच्चेन्द्रायुधमेवेदं वज्रमिति सयुक्ति कपूर्वपक्षः सूचितः । श्रुतौ प्राण इति सप्तम्यन्तं पदम् । स्थितमिति शेषः । प्राण इत्यस्य निमित्तसप्तमीत्वं वा विभक्तिविपरिणामं वा आ श्रित्य आवृत्त्या निस्सृतमित्यनेनापि सम्बन्धः । यदित्यस्यावृत्तिरध्याहा रो वा । यदितिश्रवणात् तदिति लभ्यते । तथा चायं सिद्धान्ते श्रुत्य

महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ।
( कठ. ६-२. )

इत्युद्यतवज्रज्ञानान्मोक्षः श्रूयते इति ।

( २ ) अतोऽब्रवीत्—

सू—ॐ ॥ कम्पनात् ॥ ॐ ॥ ३९ ॥

'एजति' इति कम्पनवचनादुद्यतवज्रो भगवानेव ।

---

र्थः—'यत्किञ्च' यत्किञ्चित् दृष्टं श्रुतं यत्सर्वं जगत् 'प्राणे' प्राणाना न्निमित्तात् प्राणशब्दवाच्ये हरौ स्थितं प्राणान्निस्सृतं ततो जातं च तदिदं सर्वजगत् 'यस्मादेजति' यत्प्रेरणया चेष्टते तन्महनीयत्वात् पूज्यत्वात् 'महत्' भीषयतीति भयं दुष्टानां भयङ्करं 'उद्यतं' सर्वप्र यत्नवत् 'उद्यतत्वं च प्रयत्नवत्त्वं' उत्पूर्वस्य यमेस्तदर्थत्वात्, इति चन्द्रिकोक्तेः । यतप्रियत्न इत्यस्येदं रूपं, उच्छब्द उत्कर्षवाचीत्यपि केचित् । 'वज्रं' दोषवर्जनात् अप्रियवर्जनाद्वा तच्छब्दवाच्यम् । एत द्ये 'विदुः' अपरोक्षतो जानन्ति ते 'अमृताः' मुक्ताः भवन्तीति । य द्वा—प्राण इति प्रथमान्तं पदं तथा च प्राणो मुख्यप्राणः । इदं दृष्टं किञ्चान्यच्छ्रुतं सर्वं जगच्च यस्मान्निस्सृतं यस्मादेजति च तदेतद्वज्रं ये विदुरित्यर्थः । अथवा—यदित्यस्यावृत्तिस्तत्र प्रथमस्य जगद्विशेष णत्वं, द्वितीयस्य मुख्यप्राणपरत्वम्, तृतीयस्य वज्रपरत्वम् । स इति लभ्यते । तस्य प्रथमान्तप्राणपदेनान्वयः । तथा च यत्किञ्चिज्जगत्स र्वं यद्यस्मान्निस्सृतं स मुख्यप्राणः । यस्मादेजति तद्वज्रं ये विदुरित्य र्थः । अत्र प्रथमव्याख्याने मुख्यप्राणस्य जगदन्तर्गतत्वेन भगवत्प्रेर्य त्वं द्वितीये जगत्साम्येन, तृतीये तु मुख्यप्राणस्यैव साक्षाद्भगवत्प्रेर्य त्वं जगतस्तु मुख्यप्राणप्रेर्यत्वमिति भेदः । पूर्वपक्षी तु इन्द्रायुधमेव वज्रपदेनोक्तम्, उद्यतत्वमुद्यमनकर्मत्वं तस्यैव लिङ्गमिति मन्यते ॥

(२) सिद्धान्तयत्सूत्रमवतार्यव्याचष्टे—अत इति ॥ 'कम्पनवचनात्' इत्येतद्रूपात् सर्वजगच्चेष्टकत्ववचनादित्यर्थः । यद्वा—कम्पनस्य मु ख्यप्राणस्य एजतीतिकम्पनवचनाच्चेष्टकत्वोक्तेरित्यर्थः । वचनादिति त्यनेन कम्पनपदं तद्वचनपरमित्युक्तं भवति । न च श्रुतौ वाक्यभेदाङ्गी कारे कम्पकत्वं वज्रे नोच्यत इति वाच्यं । कम्पकत्वनिमित्तभयङ्करत्व स्य वज्रे अभिधानाद्वाक्यभेदायोगात् । उद्यतवज्र इति सूत्रे शेषोक्तिः

(३) 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' ( तै. २-७. ) इति हि श्रुतिः ।
(४) 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' ( बृ. ६-४-१८. ) इति च।
(५) नभस्वतोऽपि सर्वास्स्युः चेष्टा भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः ॥
इति च स्कान्दे ।

---

समन्वयसूत्रादनुवृत्तस्य तदित्यस्योद्देश्यवज्रपदानुसारात्प्राणपदानुसाराद्वाभगवानिति व्याख्यानं कृतम् । सावधारणं चैतत् । तेन तुशब्दार्थोदर्शितः । यद्यपिवज्रो भगवानेवेत्येतावदेव वक्तव्यं, न तूद्यत इति वज्रविशेषणमपि । तथापि पूर्वपक्ष्युक्तो धतत्वलिङ्गस्य प्रयत्नवत्स्वरूपोद्यतत्वार्थतया सावकाशत्वज्ञापनाय उद्यतेत्युक्तम् ॥

(३) ननु श्रुतिलिङ्गाभ्यां पूर्वपक्षिते कथं लिङ्गमात्रेण निर्णय इत्यतो लिङ्गस्य निरवकाशत्वादेवेत्याशयेन श्रुतेः प्रथमद्वितीयव्याख्यानानुसारेण वज्रे श्रुतस्य प्राणतदितरसाधारण्येन सामान्यतो जगच्चेष्टकत्वलिङ्गस्य विष्णोरन्यत्र निरवकाशत्वं श्रुत्यादर्शयति—कोहीति हिशब्दो हेतौ यत इत्यर्थे प्रसिद्धौ वा । अस्तीति शेषः । अतो लिङ्गस्य नान्यत्र सावकाशत्वं शङ्क्यमिति वाक्यशेषः ॥

(४) यदा सामान्यतः सर्वजगच्चेष्टकत्वमेव विष्ण्वेकनिष्ठं तदा किमु वक्तव्यं श्रुतेः तृतीयव्याख्यानरीत्या वज्रे श्रुतस्य सर्वजगत्प्रवर्तकप्राणचेष्टकत्वलिङ्गस्य विष्ण्वेकनिष्ठत्वं जगच्चेष्टकत्वस्य सर्वथाऽन्यत्रायोगादिति भावेन तत्र श्रुतिं दर्शयति—प्राणस्येति । चोयस्मादित्यर्थे । पूर्वश्रुतिसमुच्चये वा । श्रुतिरित्यनुषज्यते । उक्तलिङ्गस्य अन्यत्र निरवकाशत्वं ज्ञापयतीति वाक्यशेषः । यद्वा—यत् जगत्प्रवर्तकप्राणचेष्टकत्वादिलिङ्गं कम्पनादित्यनेन अभिसंहितं, तस्य विष्णुनिष्ठत्वासिद्धिपरिहाराय तत्र श्रुतिं प्रमाणयति—प्राणस्येति । 'प्राणस्य' सर्वचेष्टकमुख्यप्राणस्य 'प्राणं' प्रकृष्टचेष्टकत्वरूपप्राणत्वप्रदं 'उत' तथा 'चक्षुषश्चक्षुः' दर्शनकरणत्वरूपचक्षुष्ट्वप्रदं परमात्मानं ये विदुस्ते ब्रह्म 'निचिक्युः' प्राप्नुयुरिति वाजसनेय श्रुत्यर्थः ॥

(५) श्रुतेः प्रथमव्याख्यायामपि कैमुत्यव्यक्तीकरणाय श्रुत्युक्तप्राणचेष्टकत्वं हेतूकृत्य प्रवृत्तां स्मृतिमाह—नभस्वत इति ॥ 'अपि' जगत्प्रेरकस्यापि 'नभस्वतो' वायोर्यदा सर्वाः चेष्टाः 'भगवतो' ज्ञा

(६) चक्रं चङ्क्रमणादेष वर्जनाद्वज्रमुच्यते।
खण्डनात्खड्ग एवष हेतिनामा स्वयं हरिः।
इति ब्रह्मवैवर्ते ॥ ३९ ॥

नादिगुणपूर्णाद्धरेर्भवन्ति। तदा किमुतान्यस्य प्रेर्यस्य वायुभिन्नस्य जगच्चेष्टा हरेर्भवन्तीति वक्तव्यम्। कुत एतत्? यतो यस्य जगतः चेष्टा नभस्वतो न भवन्त्यत इति वचनार्थः। स्कान्द इत्यनन्तरमुक्तमिति शेषः। अतोऽपि लिङ्गस्य नान्यत्रावकाश इति भावः ॥

(६) ननूक्तत्वलिङ्गस्य विष्णौ सावकाशत्वेऽपि वज्रश्रुतेर्निरवकाशत्वात्स्वभावतः प्रबलत्वाच्च कथं निरवकाशेनापि सर्वचेष्टकत्वलिङ्गेन वज्रो विष्णुरेवेति निर्णय इत्यतः श्रुतेर्निरवकाशत्वस्यैव असिद्धेरित्याशयेन पूर्वपक्ष्यभिमतवज्रश्रुतेरपि विष्णाववकाशं स्मृत्या दर्शयति—चक्रमिति। 'एषः' भगवान् 'चङ्क्रमणात्' संसारे जीवपरिभ्रामकत्वात् चक्रम्। यथोक्तं तत्त्वप्रदीपे—चङ्क्रामयतीति चक्रमिति। एवं 'वर्जनात्' दैत्यैर्दूरादेव वर्ज्यते, न सन्मुखीक्रियते इति, सत्तर्कदीपावलीरीत्या दुष्टैर्वर्ज्यत्वात्, सर्वदोषवर्जनाद्वा वज्रमित्युच्यते। 'खण्डनात्' दुष्टाङ्गच्छेदनात् दमनाच्च खड्ग एष इत्यर्थः। वैशब्देन तद्भेदो व्यावर्त्यते। ततः किम्, एष इति च कः इत्यत आह—हेतीति। एवं हरिः 'स्वयं' साक्षात् अन्यसम्बन्धमन्तरेण 'हेतिनामा' हेतीनां चक्रादिसर्वायुधानां यानि नामानि मुख्यवाच्यतया तद्वानित्यर्थः। हेतीति सामान्यग्रहणेन भाष्ये वज्रपदमन्यस्याप्युपलक्षकमित्युक्तं भवति। ब्रह्मवैवर्त इत्यनन्तरं उक्तमिति शेषः। अतो न श्रुतिविरोधोऽपीति भावः। 'उच्यते हेतिनाम' इत्यनेन वज्रादिशब्दानां विष्णौ विद्वद्रूढिरप्यस्तीति सूचितम्। तेन वर्जनादित्युक्तयोगस्य रूढेर्दौर्बल्यात् अयोग इति निरस्तम्। न चैवं काठकभाष्ये—वज्रवद्भयदं चेति वज्रशब्दस्य विष्णौ गौणत्वोक्तिविरोध इति वाच्यम्। तत्र तद्वाक्यस्य यथाकथञ्चित् ब्रह्मपरत्वसिद्धिरित्यत्रैव तात्पर्यात्। ब्रह्मपरत्वस्य गौण्यापि सिद्धेः गौणत्वे तात्पर्याभावात्। अत्र तु समन्वयसूत्रप्रतिज्ञातमुख्यार्थत्वाय तात्पर्यतो योगरूढ्योरेवोक्तत्वात्। सूत्रार्थस्तु स्पष्टः ॥ १० ॥

॥ इति कम्पनाधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) हृदय आहितं ज्योतिः परमात्मेत्युक्तम् । तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृ. ६-३-७. ) इति । अत्र ' उभौ लोकावनु सञ्चरति ' ( बृ. ६-३-७. ) इति वचनाज्जीव इति प्रतीयते इति ।

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे उभयत्रप्रसिद्धज्योतिर्नाम समन्वीयते । श्रुत्यादि सङ्गतिं विषयादिकं च दर्शयति—हृदय इति ॥ यद्धृदये ' आहितं ' निहितं ' ज्योतिः ' तच्छब्दवाच्यं स परमात्मेति ज्योतिर्नये अभिहित मित्यर्थः । ततः किमित्यत आह—तत्रेति । ज्योतिर्विषय इत्यर्थः । इ तिशब्दात्परं श्रूयत इति शेषः । ततोऽपि किमित्यत आह—अत्रेति । एतद्वाक्य इत्यर्थः । श्रुतं ज्योतिरित्यनुषज्यते । तथा चात्र श्रुतं ज्यो तिः तच्छब्दवाच्यो ज्ञानात्मको जीव एवेति प्रतीयते । कुतः ? ' सस मानस्सन्नुभौ लोकावनुसञ्चरति ' इतिवचनात् इत्यादिजीवलिङ्गा भिधायकवाक्यशेषादिति योजना । अनेन ' हृद्यन्तर्ज्योतिः ' इति वा जसनेयवाक्योक्तज्योतिषो विष्णुत्वाक्षेपमुखेन पूर्वोक्तस्यापि तदाक्षे पात्तेनास्याक्षेपिकी सङ्गतिः उक्ता भवति । वाजसनेयोक्तं ज्योतिर्विष यः, जीव एवेदं ज्योतिरिति पूर्वपक्षश्च सूचितः । वाजसनेयके हि अयं पुरुषः ' किंज्योतिः ' किंज्ञानसाधनः जीवस्य ज्ञानसाधनं किमिति जनकेन पृष्टो याज्ञवल्क्यः ' आदित्यज्योतिस्संराडिति हो वाच ' ( बृ. ६ - ३ - २. ) इत्यनेन हे 'सम्राट्' सार्वभौम जनकराज आदित्याख्यज्ञानसाधनकोऽयं पुरुष इत्युवाच । एवंक्रमेण प्रश्नोत्तराभ्यां जाग्रद्दशायामादित्यचन्द्राग्निवाचां मध्ये पूर्वपूर्वास्तमये उत्तरोत्तरज्यो तिष्ट्वं जीवस्याभिधाय पुनः सुप्तिस्वप्नयोरादित्यादिषु चतुर्ष्वस्तमितेषु ' किंज्योतिरयं पुरुषः ' (बृ.६-३-२.) इति जनके न पृष्टो याज्ञवल्क्यः ' आत्मैवास्य ज्योतिर्भवति ' इति तयोर्जीवस्यस्वप्रकाशपरमात्मज्यो तिष्ट्वमुक्त्वा पुनः ' कतम आत्मा ' ( बृ. ६ - ३ - ७. ) इति ज्योति ष्ट्वेनोक्त आत्मा कतमः कीदृश इति पृष्टो ' योयम् ' इत्यनेन जीव देहे न्द्रियादिविविक्तः परमात्मेत्युत्तरमाहेत्युक्तम् । यो ' विज्ञानमयो ' वि ज्ञानपूर्णः ' प्राणेषु ' इन्द्रियेषु अन्तः हृद्यन्तश्च नियन्तृत्वेन वर्तमानो ' ज्योतिः ' जीवस्य बुद्ध्यादिद्योतकः ' पुरुषः ' पूर्णषड्गुणोऽस्ति ।

( २ ) अत उच्यते—

सू—ॐ ॥ ज्योतिर्दर्शनात् ॥ ॐ ॥ ४० ॥

'विष्णुरेव ज्योतिर्विष्णुरेवात्मा विष्णुरेव ब्रह्म विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्दः' इति दर्शनाच्चतुर्वेदशिखायाम् । ज्योतिर्विष्णुरेव ।

( ३ ) 'प्राज्ञेनात्मना अन्वारूढ उत्सर्जद्याति' (बृ.६-३-३५.)

---

सोऽयमात्मेत्यर्थः । तस्य महिमानमाह—स इति ॥ 'सः' आत्मा परमात्मा 'समानः' अविकारः सदैकरूपः सन् 'उभौ लोकौ' भूलोकद्युलोकौ जाग्रत्सुषुप्ती वा प्रतिजीवमादाय तमनुसञ्चरतीत्यर्थः । पूर्वपक्षी तु आत्मपदं स इति पदं च जीवपरं उभयलोकसञ्चरणमपि कर्माधीनं विवक्षितं, तच्च लिङ्गं कर्मवशात्तस्यैवेति मन्यते ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य दर्शनपदोक्तश्रुत्युदाहरणपूर्वकं व्याचष्टे—अत इति ॥ 'विष्णुरेव ज्योतिः. . . .विष्णुरेवानन्दः' इति चतुर्वेदशिखायामिति 'दर्शनात्' विष्णुरेव मुख्यतो ज्योतिश्शब्दित इति उक्तत्वात् 'ज्योतिः' तच्छब्दवाच्यो विष्णुरेव, न जीव इत्यर्थः । विष्णुरेवेत्यनेन तत्त्वित्यनुवृत्तस्य अर्थः उक्तः । श्रुत्यर्थस्तु स्पष्टः । विशेषस्तु—बलं बलप्रदः । 'स वै बलं बलिनां चापरेषाम' इति च भागवते । 'विष्णुरेव यशः' 'तस्य नाम महद्यशः' (महाना.१-१०.) इति श्रुतिरिति तत्त्वप्रदीपे अभिहितम् । ब्रह्मादिशब्दवज्ज्योतिश्शब्दोऽपि विष्ण्वेकनिष्ठ इति ज्ञापनाय समग्रवाक्योदाहरणम् । अतएव श्रुतावेवकारः ॥

( ३ ) ज्योतिर्विष्णुश्चेत्तर्ह्युभयलोकसञ्चरण लिङ्गविरोध इति शङ्कामपि सौत्रदर्शनपदोक्तश्रुत्या परिहरति-प्राज्ञेनेति ॥ 'इति वचनात्' इति वाजसनेयश्रुतिवाक्यात् 'तस्यापि' परमात्मनोऽपि लोकसञ्चरणमस्त्येवेत्यर्थः । न केवलं जीवस्येत्यपेरर्थः । न तदभाव इत्येवशब्दार्थः । तथा च लिङ्गं सावकाशमिति न तद्विरोध इति भावः । शारीर आत्मा जीवो मरणकाले 'प्राज्ञेन' प्रकर्षेण आसमन्तात् ज्ञेन प्रज्ञएव प्राज्ञः, तेन वा परमात्मना 'अन्वारूढः' अधिष्ठितो जीवमारूह्य गच्छति भगवानिति बृहद्भाष्योक्तेः तद्वाहनभूतः 'उत्सर्जत्' प्राक्तनदेहमुत्सृजन् देहान्तरं लोकान्तरं च 'याति' गच्छतीति वाजसनेयश्रुत्यर्थः । सूत्रार्थ

इति वचनात् ...स्यापि लोकसञ्चरणमस्त्वेव ॥ ४० ॥

——:*✡*:——

१२. अधिकरणम् ॥

( १ ) सर्वाधारत्वं विष्णोरुक्तम् । तच्च 'आकाशो वै नाम नामरूपयोर्निर्वहिता' ( छा. ८-१४-१. ) इत्यत्राकाशस्य प्रतीयते । वैनामेति प्रसिद्धोपदेशात् । प्रसिद्धाकाशश्चाङ्गीकर्तव्य इति ।

स्तु स्पष्टः ॥ ११ ॥

॥ इति ज्योतिरधिकरणम् ॥

——✡——

१२. अधिकरणम् ॥

( १ ) अत्र उभयत्रप्रसिद्धमाकाशनाम ब्रह्मणि समन्वीयते । श्रुत्यादिसङ्गतिं विषयादिकं च दर्शयति—सर्वाधारत्वमिति ॥ द्युभ्वाद्यधिकरण इति शेषः । ततः किमित्यत आह—तच्चेति । चोऽवधारणे । 'इत्यत्र' इत्येवंरूपे छन्दोगवाक्य इत्यर्थः । अनेनात्रत्याकाशशब्दस्य विष्णवन्यत्वपरत्वोक्तिमुखेन पूर्वोक्तसर्वाधारत्वस्यापि अन्यनिष्ठत्वाक्षेपात्तेनास्याक्षेपिकी सङ्गतिरुक्ता भवति । छन्दोगश्रुत्युक्त आकाशाख्यो विषयश्च सूचितः । सयुक्तिकं पूर्वपक्षं दर्शयति—वैनामेति । स इति शेषः । चोऽवधारणे । तथा च छान्दोग्यश्रुत्युक्तः आकाशः प्रसिद्धः साक्षिसिद्धः अव्याकृताकाश एवाङ्गीकार्यः । कुतः ? आकाशपदेन वैनामेति निपातद्वयद्योतितप्रसिद्धिमदर्थस्योपदेशात् उक्तत्वादित्यर्थः ॥ केचित्तु—सत्तर्कदीपावल्यां 'प्रसिद्धो भूताकाश एवाङ्गीकार्यः' इति वचनात् अवकाशस्यापि नामरूपवत्त्वादिति चन्द्रिकाकृदभिप्रेतं टीकापाठमाश्रित्य आकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वं भूते निरवधिकमिति सुधोक्तेरत्रावकाशशब्दितं भूतमेव पूर्वपक्षविषय इत्याहुः । श्रुतौ वै नामेति निपातद्वयं प्रसिद्धौ । 'नाम' वाचकशब्दप्रपञ्चः रूपपदेन प्राकृतरूपान्तर्भावितार्थ प्रपञ्चमात्रमुच्यते । तथा च आकाशो 'नामरूपयोः' शब्दार्थप्रपञ्चयोः 'निर्वहिता' निर्वोढा आश्रयः कर्ता चेत्यर्थः । 'ते' निर्वाह्यतया प्रकृते नामरूपे 'अन्तरा' भेदेन । यदिति नामरूपप्रपञ्चाद्भिन्नं यदस्तीति यावत् । यद्वा—तच्छब्देन वाच्यप्रपञ्चान्तर्भूतं नीलादिरूपं वाचकं नाम च गृह्यते । तथा च

( २ ) अत उच्यते—

सू—ॐ ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ॐ ॥ ४१ ॥

'ते यदन्तरा तद्ब्रह्म' ( छा. ८-१४-१. ) इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव ।

( ३ ) 'अवर्णम्' 'यतो वाचो निवर्तन्ते' ( तै. २-४. ) इ

'ते' नामरूपे 'अन्तरा' विना तद्रहितमिति यावत् । साकल्येन नामवाच्यं प्राकृतरूपरहितं च यद्वर्तते तद्ब्रह्मेत्यर्थः । यद्वा—'ते' नामिरूपिणां 'अन्तरा' भेदेन यदस्तीत्यर्थः । यथोक्तं तत्त्वप्रदीपे—नामि च रूपि च यन्नभवति तद्ब्रह्मेति ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इत्यर्थान्तरत्वादिव्यपदेशादिति । सूत्रे भाष्ये च पदार्थत्वबोधायार्थशब्दः । श्रुत्यनुसारादन्तरशब्दः । ताभ्यामिति शेषः । ताभ्यां नामरूपाभ्यां अन्यः अर्थः अर्थान्तरं यद्वा ताभ्यां विलक्षणः अर्थः अर्थान्तरः तस्य भावस्तत्त्वम् । नामरूपप्रपञ्चभिन्नत्वं वा प्राकृतनामरूपराहित्यं वा । नामरूपराहित्याख्यार्थान्तरव्यपदेशादित्यर्थः । आदिपदेन ब्रह्मत्वं गृह्यते। यद्वा—निरपेक्षयोरेव नामरूपराहित्ययोराकाशस्य ब्रह्मत्वसाधकत्वात् अर्थान्तरपदेन रूपराहित्यं आदिपदेन नामराहित्यं च गृह्यते । तथा च एवंरूपार्थान्तरत्वाद्युक्तेरित्यर्थः 'आकाशः' छान्दोग्ये श्रुतोऽयमाकाशस्तच्छब्दवाच्यः । समन्वयसूत्रादनुवृत्तस्य तत्त्विवत्यस्यार्थमाह—हरिरेवेति । अनेन—अयमाकाशो हरिरेव । कुतः ? अस्य अर्थान्तरत्वादिव्यपदेशात् 'ते यदन्तरा' इति नामरूपराहित्याख्य विलक्षणार्थत्वोक्तेः, ब्रह्मत्वोक्तेश्चेति सूत्रार्थ उक्तो भवति ॥

( ३ ) आकाशे श्रुतेन नामरूपत्वादिलिङ्गेन कुतो विष्णुत्वनिश्चय इत्यतस्तस्य तन्निष्ठत्वादितिभावेन तत्र प्रमाणतया आथर्वणीं श्रुतिमाह—अवर्णमिति ॥ प्राकृतशुक्लादिवर्णरहितं तद्भिन्नं वेत्यर्थः । यद्वा अवर्णं न वर्ण्यं 'नापिवर्णात्मकम्' इत्यर्थः 'यतः' इति श्रुतिः । 'यतो' ब्रह्मणो 'वाचो' नामानि 'निवर्तन्ते' इत्यनामत्वोक्तिपरतया व्याख्येया । आदिशब्दात् 'अशब्दमस्पर्शमरूपम्' ( कठ. ३-१५. ) इत्यादिश्रुतिर्गृह्यते । इत्यादिश्रुतेरित्यस्य तस्य विष्णोरेतद्रूपत्वादिकं लक्षणमसाधारणधर्म इति ज्ञायते इत्यध्याहारेणान्वयः । हि यस्मात्तस्मात् न लिङ्गस्य व्यधिकरणासिद्धिरिति भावः । तस्यैवेत्येवकारेण व्यभिचा

त्यादिश्रुतेस्तस्यैव हि तल्लक्षणम् ।
( ४ ) अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात् ।
इति ब्राह्मे ॥ ४१ ॥

—*-:*:-*—

१३. अधिकरणम् ॥

( १ ) असङ्गत्वं परमात्मन उक्तम् । तच्च 'स यत्तत्र किञ्चि त्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' ( बृ. ६-३-१५. ) इति स्वप्नादिद्रष्टुः प्रतीयते ।

---

रशङ्कापि निरस्ता । यद्यपि 'यतः' इत्यनामत्वश्रुतिरेव प्रथममुदाहर्तव्या, 'ते यदन्तरा' इति नामराहित्यस्यैव प्रथममुक्तत्वात् । न तु 'अवर्णम्' इत्यरूपश्रुतिः । तथाऽपि वाचकस्य नाम्नो वाच्यापेक्षयाऽप्राधान्यात् वाच्यस्यैव प्रधानत्वाद्वाच्य प्रपञ्चान्तर्गतरूपराहित्यश्रुतिरेव प्रथममुदाहृतेत्यदोषः ॥

( ४ ) ननु हरेर्नामरूपराहित्यं नोपपद्यते, सर्वशब्दवाच्यत्वात् रुक्मवर्णादिरूपवत्त्वाच्च । अन्यथा ईक्षतेः रूपोपन्यासाच्चेत्युक्तविरोधापातादित्यत आह—अनामेति ॥ 'सः' हरिः 'अप्रसिद्धत्वात्' साकल्येन स्वात्मनोऽन्येन शब्दादिनाऽप्रमितत्वान्निमित्तादनामेत्युच्यत इत्यर्थः । न चैवमाकाशशब्दवाच्यस्य प्रसिद्धिबोधकनिपातद्वयविरोध इति वाच्यम् । निपातबोध्यप्रसिद्धेः विधेयभूतनिर्वोढृत्वान्वयित्वेन पूर्वपक्षिरीत्या उद्देश्याकाशान्वयित्वाभावात् । निर्वोढृत्वस्य च लोकप्रसिद्धत्वाभावेऽपि 'एकोदाधार' इत्यादिश्रुतिप्रसिद्धत्वात् । तस्य चाप्रसिद्धत्वादित्यनेनानिषिद्धत्वात् । 'भूतवर्जनात्' भौतिकदेहशून्यत्वात्तादृशरूपराहित्याद्वा अरूप इत्यर्थः । इति ब्राह्मे इत्यस्योक्तत्वात् नोक्तविरोध इत्यध्याहृतेनान्वयः ॥ १२ ॥

॥ इति आकाशाधिकरणम् ॥

१३. अधिकरणम् ॥

( १ ) अत्राधिकरणे स्वप्नादिद्रष्टृत्वलिङ्गं ब्रह्मणि समन्वीयते । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति—असङ्गत्वमिति ॥ अक्षरनयोदाहृते 'अगन्धमरसम्' इति वाजसनेयवाक्ये परमात्मनो असङ्गत्व

( २ ) स च जीवः प्रसिद्धेरिति ।

( ३ ) अतो वक्ति—

सू—ॐ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ॐ ॥ ४२ ॥

' प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद ना

---

भुक्तमित्यर्थः । ततः किमित्यत आह—तच्चेति । चोऽवधारणे । इतीति एवंरूपे वाजसनेयवाक्य इत्यर्थः । अनेन स्वप्नादि द्रष्टृत्वस्य अन्यनिष्ठ त्वाक्षेपमुखेन पूर्वोक्तासङ्गत्वस्याप्यन्यनिष्ठत्वाक्षेपात्, अक्षरनयेना स्य आक्षेपिकी सङ्गतिस्सूचिता । स्वप्नादिद्रष्टृत्वाख्यो विषयश्च सूचि तः ॥

( २ ) ततः किमित्यतः सयुक्तिकं पूर्वपक्षयति—सचेति ॥ चोऽत्र धारणे । ' सः ' स्वप्नादिद्रष्टा । जीव एव भवेत् । कुतः ? तद्द्रष्टृत्वस्य लोके जीव एव प्रसिद्धत्वादित्यर्थः । सिद्धान्ते श्रुतौ ' सः ' इति त च्छब्देन ' स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रति योन्याद्रवति स्वप्नायैव ' ( बृ. ६- ३- १५.) इति पूर्ववाक्ये प्रकृतः परमात्मा परामृश्यते । वैशब्दः प्रसिद्धौ । सम्यक्प्रसीदतिजीवोऽस्यामिति सम्प्रसादः सुप्तिः । तथा च स परमा त्मा ' सम्प्रसादे ' सुप्तौ 'रत्वा' रमणं कृत्वा जीवगतं पुण्यं च पापं च दृष्ट्वैव न त्वनुभूय ' चरित्वा ' सञ्चरित्वा ' प्रतिन्यायं ' अवस्थान्तरं प्रवर्तनीयमिति न्यायमनुसृत्य यद्वा तत्तत्कर्मानुसृत्य 'प्रतियोनि' प्रति देहं सर्वदेहेषु यद्वा प्रतियोनिरत्तन्मार्गमनुसृत्य ' पुनः ' ' स्वप्नायैव ' जीवस्य स्वप्नप्राप्तये एव ' आद्रवति ' कण्ठदेशमागच्छति । ' सः ' प रमात्मा 'तत्र' स्वप्नावस्थायां यत्किञ्चिदनिष्टं पश्यति ' तेन ' तत्कृत पापफलेन दुःखेन ' अनन्वागतः ' असंस्पृष्टो भवति । तत्र हेतुः— असङ्ग इति । हि यस्मादयं पुरुषः ' असङ्गः ' तत्कृतपापफलसंसर्ग शू न्यः प्रमितः, तस्मादित्यर्थः । पूर्वपक्षी तु श्रौततच्छब्देन जीवं गृहीत्वा सर्वं वाक्यं जीवपरतया व्याख्याति ॥

( ३ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ ' वक्ति' स माधत्ते । स्वप्नादिद्रष्टृत्वं तस्यैवेत्यत्रापि सम्बध्यते । तेन सूत्रे उद्देश्य विधेयप्रतिपत्त्यर्थं अनुवृत्तावृत्तस्य तच्छब्दस्य विपरिणामस्सूचितः तच्छब्देन गृहीतस्यापि समन्वेतव्यलिङ्गस्य स्पष्टप्रतिपत्त्यर्थं स्वशब्देन

न्तरम्' ( बृ.६-३-२१. ) 'प्राज्ञेनात्मना अन्वारूढ उत्सर्जयाति' ( बृ.६-३-३५. ) इति भेदव्यपदेशान्न जीवः पर एवासङ्गः ॥

( ४ ) स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव

---

निर्देशः । इतिशब्दानन्तरं सुषुप्तीति सौत्रपदं संयोज्यम् । व्यपदेशादिति बुद्ध्या विविच्य पूर्वस्मादनुषक्तं पदम् । असङ्ग इत्यपि हेतुसूचनाय सूत्रे अध्याहृतं पदम् । जीवः पर इत्यनेन सुषुप्त्युत्क्रान्तिपदं तत्प्रकरणलक्षकमपि जीवपरमात्मपरमपीत्युक्तं भवति । तथात्वे सुषुप्तिशब्दः कर्तरि क्तिन्नन्तः । उत्क्रान्तिशब्दः देहादुत्क्रामयितृपरः । तथा चेत्थं योजना—स्वप्नादिद्रष्टृत्वं तस्य परमात्मन एव भवेत् न जीवस्य । कुतः? यतोऽसावसङ्गः श्रुतः । न च स्वप्नादिद्रष्टुः असङ्गत्वश्रवणेपि कुतोऽयं विष्णुरिति वाच्यम् । यतोऽयमसङ्गः कर्माबद्धत्वात् परः परमात्मैव न जीवः । तथा च लिङ्गस्य निरवकाशत्वात् नाप्रयोजकत्वं शङ्क्यमिति भावः । न च जीवेऽपि ईश्वराभेदेन असङ्गत्वोक्तिः सम्भवतीति वाच्यम् । प्राज्ञेनेत्यादिसुषुप्त्युत्क्रान्तिप्रकरणद्वयगतवाक्ययोरसङ्गात्स्वप्नादिद्रष्टुः ईश्वराज्जीवस्य भेदव्यपदेशादिति । प्राज्ञेनेति श्रुत्युदाहरणेन सूत्रे सुषुप्ति पदं मोक्षस्यापि ग्राहकं, तेनायं भेदो व्यावहारिक इति शङ्कानिरासोऽपि भवति । सुषुप्त्युत्क्रान्तिपदेन च तत्प्रकरणं लक्ष्यत इत्युक्तं भवति । उत्क्रान्तिपदं च जीवस्य देहादुत्क्रमणरूपमरणवाचि । श्रुतौ प्राज्ञशब्दः स्वार्थिकाणन्तः । तथा च 'प्राज्ञेन' सर्वज्ञेन परमात्मना 'सम्परिष्वक्तः' समाश्लिष्टः सुप्तो मुक्तश्च देहाद्बाह्यमान्तरं च किञ्चन विषयादिकं न वेदेति प्रथमवाक्यार्थः । द्वितीयार्थस्तु—प्राक्तनाधिकरणेऽभिहितः ॥

( ४ ) ननु कथमशरीरस्य स्वाप्नादिदर्शनं युक्तं स्यादित्यत आह—स्वप्नादीति ॥ चशब्दः समुच्चये । अप्यर्थे वा । आदिपदेन जीवगतावस्था गृह्यते । तथा च न केवलमसङ्गत्वं कर्माबद्धत्वात् परस्यैव युज्यते, किन्तु स्वप्नादिद्रष्टृत्वं च 'तस्यैव' परमात्मन एव जीवादपि मुख्यतो युज्यते । अतः तस्यैव तद्वचनं युज्यते न जीवस्य । कुतः? तस्यैव 'सर्वज्ञत्वात्' सत्याशेषार्थज्ञत्वात् स्वप्नपदार्थानां जीवगतावस्थायाश्च सत्यताया वक्ष्यमाणत्वादिति भावः । न चाशरीरत्वलिङ्गं बाधकं, यतोऽत्र तस्यैव चिच्छरीरकस्यैव स्वप्नादिद्रष्टृत्वमुच्यते । न च ' द्रष्टैव पु

युज्यते ॥ ४२ ॥

१४. अधिकरणम् ॥

( १ ) 'एष नित्यो महिमा ब्राह्मणस्य' ( बृ.६-४-२३. ) इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मा' (बृ.६-४-२४) इत्यजशब्दा

---

ण्यं च पापं च ' ( बृ.६.३-१५. ) इत्याद्ययोग इति वाच्यम् । यतोऽत्र आदिपदगृहीतं पुण्यपापादिद्रष्टृत्वं लिङ्गान्तरं च तस्यैव युज्यते अत इति योजना । तत्रोपपत्तिस्तु बृहद्भाष्यादवगन्तव्या । अनेन–' सुषुप्त्यु त्क्रान्त्योः' ' प्राज्ञेन ' इति सुषुप्त्युत्क्रान्तिप्रकरणयोः सुषुप्त्युत्क्रान्त्योः सुषुप्तियुतत्वात् सुषुप्तिर्जीवः , उत्क्रामयितृत्वात् उत्क्रान्तिरीश्वरः , तथा च जीवेश्वरयोः 'भेदेन' भिन्नत्वेनैव 'व्यपदेशात्' उक्तत्वात् न तयोरभेदः । अतो नेश्वराभेदेनापि जीवे असङ्गत्वोक्तिर्युज्यते । कि न्तु तत्तु तस्यैव ईश्वरस्यैव युज्यते । अत एव स्वप्नादिद्रष्टृत्वं च त स्यैव वक्तुं युज्यते न जीवस्येति सूत्रार्थः उक्तो भवति ॥ १३ ॥

इति सुषुप्त्यधिकरणम् ॥

१४. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्राह्मणनाम समन्वीयते । श्रुत्यादिसङ्गतिं विषया दिकं च सूचयति—एष इति । इतीति । वाजसनेयकोदाहृतमन्त्र इत्यर्थः । न केवलं विष्णोः अपि तु कस्यचित् ब्राह्मणस्यापीत्यपेरर्थः । इदं च यो जन्माद्यधिकरणेषु विष्णोरनन्यापेक्षया जगत्स्रष्टृत्वोक्त्या अभिसंहितो नित्यमहिमा सः ' एषः ' इति वाक्ये ब्राह्मणस्यापि प्रती यत इति यत्तच्छब्दाध्याहारेण योज्यम् । अनेन पूर्वाभिसंहितनित्यम हिमत्वस्य विष्णोरन्यस्याप्याक्षेपात् जन्माद्यधिकरणैः फलमुखेन अ स्याक्षेपिकी सङ्गतिरुक्ता भवति । तथा ब्राह्मणाख्यविषयोऽपि सूचितः । यद्वा—देवानामिति वाक्यं देवताधिकरणप्रतिपाद्यानुवादपरत्वेनापि व्याख्याय तेनास्याक्षेपिकी सङ्गतिरुक्ता द्रष्टव्या । तथा हि ' तदुप रि ' इति सूत्रेण देवानां विरिञ्चाद्यमराणां विद्याकर्मणोस्सकाशात् साध्या या नित्यपदप्राप्तिरुक्ता, सा न युक्ता । कुतः? यतः 'एषः' इति वाक्ये ब्राह्मणपदोदितस्य विरिञ्चस्य नित्यमहिमा 'प्रतीयते' प्रतिपाद्यत

ह्विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पद प्राप्तिः सूचिता तदुपर्यपीति ॥

(२) अतो ब्रवीति—

सू—ॐ ॥ पत्यादिशब्देभ्यः ॥ ॐ ॥ ४३ ॥

इति वाक्ययोजना । श्रुतौ ब्रह्मणा वेदेनाण्यतेऽवगम्यते इति व्युत्पत्तिः । दीर्घव्यत्यासो विष्णोर्वेदगम्यत्वे जीवादाधिक्यज्ञापकः । तथा च ब्राह्म णस्य विष्णोरेषः पूर्वोक्तमहिमा नित्यः । कुतो? यतोऽयं 'न कर्मणा वर्धे ते नो कनीयान्' (बृ.६-४-२३.) शुभकर्मणा तत्फलेन सुखेन न वर्धे ते । पापकर्मणा तत्फलेन दुःखेन न ह्रसते इति श्रुत्यर्थः । सयुक्तिकं पूर्वपक्षयति—स इति । वाजसनेयश्रुत इत्यर्थः । चशब्दोऽवधारणे । विरिञ्च एवेति सम्बध्यते । इत्यजशब्दादिति । इत्येवं रूपेषु पूर्वोत्तर वाक्येषु श्रुताजशब्दादित्यर्थः । 'स एषः' परमात्मा 'महान्' अपरि मितः 'अजो' जन्मरहितश्चेति श्रुत्यर्थः । पूर्वपक्षी तु ब्राह्मणाजशब्द वाच्यं विरिञ्चिं मन्यते । ननु कथं ब्राह्मणो विरिञ्चो भवेत् । तदुप रीति सूत्रे देवानां विद्याकर्मभ्यां पदप्राप्तेः समर्थितत्वेन ब्राह्मणे श्रुत नित्यमहिमत्वस्य विरिञ्चे असम्भवात् । सादिपदस्यानित्यत्वनियमा त् इत्यत आह—देवानां चेति । चोऽवधारणे । इतीत्यनन्तरं सूत्र इ ति शेषः । तथा च तदुपरीति सूत्रे विरिञ्चेतरदेवानामेव विद्याकर्म णोः सकाशात् पदप्राप्तिः 'सूचिता' समर्थिता । न तु विरिञ्चस्या पि । तस्येश्वररूपत्वेन देवकोट्यप्रविष्टत्वादतो विरिञ्चस्य नित्यमहि मत्त्वं युक्तमेवेति योजना ॥

(२) सिद्धान्तयत्सूत्रमवतारयति—अतइति ॥ वाजसनेयके सर्वेव शित्ववाचिशब्दस्यैवादित्वात्सूत्रस्य तद्विसंवादमाशङ्क्य तत्परिहा राय सूत्रानुकूलतया सदृशशाखान्तरगतवाक्योदाहरणपूर्वकं सूत्रं व्या चष्टे—सर्वस्येति । 'सर्वस्य' ब्रह्मरुद्रादेः सकाशात् गुणैरधिकश्चा सौ सर्वस्य पतिः पालकश्चेति सर्वाधिपतिः । 'सर्वस्य' जगतः 'ईशा नां' ब्रह्मादीनां अनः प्रेरक इति सर्वस्येशान इति श्रुत्यन्तरार्थः । स र्ववशिशब्दार्थस्तु सर्वमस्य वशे यस्माद्धरिः सर्ववशी तत इति बृह द्भाष्यादवगन्तव्यः । 'सवा एषः' इति वाजसनेयश्रुतिः । 'सः' प्रा णशब्दोक्तः 'एषः' समानशब्दाभिधेयः 'आत्मा' परमात्मा 'इतिन' दृष्टवन्न 'इति न' श्रुतवन्न, किन्तु दृष्टश्रुतविलक्षण इत्यर्थः । वैशब्दः प्र

'सर्वस्याधिपतिः सर्वस्येशानः..स वा एष नेति नेति' ( बृ.६-४-२२. ) इत्यादिशब्देभ्यो नित्यमहिमा विष्णुरेव ॥

( ३ ) 'उतामृतत्वस्येशानः। यदन्नेनातिरोहति' (तै-आ.३-१२.)

सिद्धौ। कुत इत्यतः 'आत्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्यति ............स एष आत्माऽजरोऽमरोऽमृतोऽभयः' ( बृ. ६-४-२५? ) इति वाक्यशेषः प्रवृत्तः। अत्रागृह्य इत्यादिरात्मन इति नेत्युक्तार्थे साकल्येन अग्राह्यत्वादिरूपहेतुसमर्पकः। न हीत्यादिस्तु तत्र प्रमाणाभावादिति हेतुसूचकः। यद्यपि बृहद्भाष्ये 'इतिन' रमावन्न 'इतिन' ब्रह्मादिवन्न, बद्धवन्न, मुक्तवन्नेत्यन्यथा व्याख्यातम्। तथाप्यत्र 'सयोऽतोऽश्रुतः' ( ऐ.आ. ३-२-४. ) इति समाख्याश्रुत्यनुसारादेवं व्याख्यातमित्यदोषः। इत्यादीति। इत्यादौ श्रुता ये सर्वाधिपत्यादिवाचकाः शब्दाः तेभ्य इत्यर्थः। आदिपदात्सर्ववशित्वादिवाचिशब्दसङ्ग्रहः। अनेन सौत्रादिशब्दो न केवलं शाखान्तरोक्तसर्वेशानादिशब्दग्राहकः, किन्तु वाजसनेयोक्तसर्वविलक्षणत्वसर्ववशित्वादिशब्दग्राहकोऽपीति उक्तं भवति। एवं हेतुं व्याख्याय सूत्रे समन्वयसूत्रात् तत्त्वित्यनुवर्त्य विपरिणम्यमानेन तदित्यनेनान्वययोग्यमुद्देश्यसमर्पकं नित्यमहिमेति पदं चाध्याहृत्याहृत्य निष्कृष्टां प्रतिज्ञां दर्शयति–नित्यमहिमेति। इदं च फलकथनरूपम्। शब्देभ्य इति हेत्वन्वययोग्यं साध्यं तु ब्राह्मण इत्यध्याहृतं द्रष्टव्यम्। अनेन—अयं ब्राह्मणः तत्तु विष्णुरेव, न विरिञ्चः। कुतः? 'पत्यादिशब्देभ्यः' सर्वाधिपत्यादिवाचिसर्वाधिपत्यादिशब्देभ्योऽत्र श्रुतेभ्यः। तथा च नित्यमहिमाऽपि स एवेति सूत्रार्थ उक्तो भवति ॥

( ३ ) ननु सर्वाधिपत्यादिवाचिशब्दसद्भावेऽपि कुतो ब्राह्मणस्य विष्णुत्वनिश्चय इत्यप्रयोजकत्वशङ्कावारणाय तत्र सर्वाधिपतित्वस्य विष्ण्वेकनिष्ठत्वे तावच्छ्रुतिमाह–उतेति ॥ इदं च 'पुरुष एवेदं सर्वम्। यद्भूतं यच्च भव्यम्' इति पूर्ववाक्येन सह व्याख्येयम्। तत्प्रकारस्तु–'यद्भूतं' अतीतं 'भव्यं' भविष्यत् वर्तमानं च तत्सर्वं 'पुरुष एव' परमपुरुषाधीनमेव। कुतः? यतो यस्मात् न केवलममुक्तसर्वाधिपतिः पुरुषः, किन्तु 'अमृतत्वस्योत' मुक्तसमुदायस्यापि 'ईशानः' अ

( ४ ) 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मिणि' (ऋ.१-१६४-३६.) 'स योऽतोऽश्रुतः' (ऐ.आ-३-२-४.) इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥ ४३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये प्रथमस्याध्यायस्य
तृतीयः पादः.
॥ ॐ ॥

धिपतिः । 'विचित्रा हि तद्धितगतिः' इति वचनात्समुदायार्थे त्वप्रत्ययः । तत्त्वप्रदीपे तु—भावभवित्रोरभेदव्यपदेशात् भावे त्वप्रत्ययः। 'अमृतत्वस्य' मोक्षस्य ईशान इति चेति अर्थान्तरं चोक्तम्। अत्र हेतुमाह—यदिति । तृतीया द्वितीयार्थे। तथा च 'यत्' यस्मात् 'अन्नेन' अन्नं मर्त्यं संसारिसमूहं 'अतिरोहति' अतिशेते, तस्मादित्यर्थः । मुक्तावनधीनत्वे सर्वज्ञस्य बुद्धिमतः स्वाधीनसंसारिभ्यो मोक्षप्रदानायोगादिति भावः ॥

( ४ ) इदानीं सर्वशब्दसम्बन्धिकेशानपदोक्तसर्वप्रेरकत्वे श्रुतिमाह—सप्तेति ॥ अक्षरनये व्याख्यातेयं श्रुतिः। नेति नेतीत्युक्तदृष्टश्रुतसर्वविलक्षणत्वेऽपि श्रुतिमुदाहरति—स इति । इयमपि सर्वत्राधिकरणे व्याख्याता । इत्यादीत्यादिपदेन सर्ववशित्वादावप्येवमेव श्रुत्यन्तराण्युदाहर्तव्यानीति सूचयति । 'तस्यैव' विष्णोरेव नान्यस्येत्येवार्थः । 'हि' यस्मात्ते सर्वाधिपत्यादिशब्दाः इत्यवगताः तस्मात् नाप्रयोजकत्वं शङ्क्यमिति वाक्यशेषः ॥ १४ ॥

——:*:——

इति ब्राह्मणाधिकरणम् ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिनाकृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां प्रथमाध्यायस्य
तृतीयः पादः
॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन् पादे—

१. अधिकरणम् ॥

( १ ) एतत्पादप्रतिपाद्यं दर्शयति—श्रुतीति ॥ अन्यत्रैवेत्येवकारोऽत्रापि सम्बध्यते । श्रुतिलिङ्गादिभिरेव, न लोकप्रसिद्ध्येति । अनेन प्रथमद्वितीयपादप्रतिपाद्यादस्य भेदो दर्शितः । क्वचिदानन्दमयाद्यधिकरणेषु श्रुत्यादिभिरेवान्यत्रप्रसिद्धानां समन्वयकरणात्तद्व्यावर्तनाय बलवदित्यादावुपस्कार्यम् । एवकारो वा बलवत्त्वद्योतकः । तथा च पूर्वपादीयप्रतिपक्षश्रुत्याद्यपेक्षया एतत्पादीयश्रुत्यादीनां प्राबल्यान्न तेनास्य गतार्थतेति भावः । अन्यत्र विष्णोरितरत्र प्रकृतिजीवादावेवेत्येवकारशिरस्कत्वोक्त्योभयत्र प्रसिद्धानां व्यावर्तनेन तृतीयपादप्रतिपाद्यादस्य भेदो दर्शितः । प्रसिद्धानामिति । रूढ्यादिनाऽन्यवाचकत्वेन प्रमितानामित्यर्थः । न केवलं लोकप्रसिद्ध्या श्रुत्यादितो वाऽन्यत्र प्रसिद्धानामुभयत्रप्रसिद्धानां च विष्णौ समन्वयम्, किन्तु श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपीत्यपेरर्थः । शब्दानामिति । नामलिङ्गात्मकानामित्यर्थः । प्रकारान्तरेणास्य प्रथमपादप्रतिपाद्याद्भेदं दर्शयति—सामस्त्येनेति । इत्थंभूतलक्षणे तृतीया । समन्वेतव्यत्वप्रकारं प्राप्तानां शब्दानां इदं विशेषणम् । यद्वा-सामस्त्येनैव समन्वयं प्रतिपादयति, न त्वेकदेशेनेत्यर्थः । प्रकारे तृतीया । प्रकारप्रकारिणोरभेदविवक्षया इयमुक्तिः । तथा च त्रिपाद्यां स्रष्टृत्वादिगुणाभिधायकानां 'आत्मन आकाशस्सम्भूतः' इत्यादिसृष्ट्यादिप्रकरणव्याख्येयानां सत्यज्ञानादिगुणवाचिशब्दानां तथा तत्सङ्गतानामन्नमयादिगुणिवाचकानां शब्दानां सृष्ट्यादिकर्तृत्वाभिधायिप्रकरणगताकाशेन्द्राग्निवज्रादिशब्दानां 'सदेव सौम्येदम्' (छां.६-२-१.) इत्यादिसृष्टिप्रकरणगतशब्दानां च समन्वयोऽभिहितः । अत्र पुनः स्वरवर्णपदात्मनां समस्तशब्दानामित्यतोऽपि पूर्वपादेभ्योऽस्य भेद इति भावः । ननु बलवच्छ्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानां कथं समन्वयः, असम्भवादित्यत आह—विशेषेति । पूर्वपक्ष्युक्तलिङ्गादिभ्योऽपि प्रबलैर्हेतुभिरित्यर्थः । तथा च नासम्भव इति भावः । ननु समस्तशब्दनिरूपणाद्वैयर्थ्यमिति परिहारो न युक्तः अं

( २ ) सू—ॐ ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ ॐ ॥ १ ॥

'तत्तु समन्वयात्' इति सर्वशब्दानां परमेश्वरे समन्वय उक्तः। तन्न युज्यते। यतः 'अव्यक्तात्पुरुषः प

शे वैय्यर्थ्यापातादित्यतोऽप्याह—विशेषेति। प्रागनुक्तहेतुभिरित्यर्थः। विष्णावेवेत्येवकारोऽन्यत्रप्रवृत्तिनिरासार्थः। 'प्रवृत्तिं' समन्वयं 'दर्शयति' वक्ति सूत्रकार इत्यर्थः॥

( २ ) सङ्गत्यादिकमादावेव वाच्यमिति नियमाभावात्पश्चात्तद्दर्शयिष्यन् अन्यत्राप्येवमेवेत्यतिदेशायात्र प्रथमं सूत्रमेव पठति—आनुमानिकमिति॥ श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सौत्रपूर्वपक्षांशं तावद्व्याचष्टे—तत्त्विति। इतीत्यनन्तरं सूत्र इति शेषः। 'समन्वयः' मुख्यतः परमात्मपरत्वम्। 'तत्' परमात्मपरत्वम्। एवमध्याहार्यप्रतिज्ञांशं प्रदर्श्य कुतो न युज्यत इत्यतस्तत्र हेतुतया आनुमानिकमित्यादि योजयति—यत इति। हेतुत्वद्योतकोऽयं शब्दः। अव्यक्तशब्दघटितवाक्योदाहरणमुपलक्षणम्। अतएव सुधायामव्यक्तग्रहणमुपलक्षणमित्युक्तम्। तेन

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥ (कठ.५.७.)

इति कठानां वाक्यान्तरम्, 'जीवा एव तु दुःखिनः' इति श्रुत्यन्तरवाक्यम, 'कार्यकारणबद्धौ तौ सोऽवरः' (    ) इत्यादिकं च गृह्यते। 'इति' श्रुतैः शब्दैरिति शेषः। इतिशब्दः आद्यार्थकः। तथा च एवमादिश्रुतैः शब्दैरित्यर्थः। आनुमानिकमित्यस्य व्याख्या-साङ्ख्येत्यादि। महदादिकं स्वसदृशकारणजन्यं कार्यत्वाद्घटवत् इत्यादिसाङ्ख्योपन्यस्तानुमानसिद्धमित्यर्थः। 'प्रधानं' प्रधानादि। अपीति सौत्रपदानुवादः एकेषामपीत्यन्वयनिवारणार्थोऽवधारणार्थोऽयं, जीवादिसमुच्चये वा। 'एकेषां' अन्येषामिति। अस्य विशेष्यपदं शाखिनामिति। शाखा एषां सन्तीति शाखिनः, तेषां शाखासूच्यत इति सूत्रशेषोक्तिः। तथा च यत् 'तत्तु समन्वयात्' इत्युक्तं तन्न युज्यते। कुतः? यतः साङ्ख्यानुमानादिपरिकल्पितं प्रधानाद्येव एकेषां शाखिनां कठादीनां शाखासु 'अव्यक्तात्पुरुषः' ( कठ. ३ - ११. ) इति श्रुतैरव्यक्तादिशब्दैरुच्यते, न

रः' ( कठ. ३-११. ) इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यते इति चेत्—

( ३ ) न,

तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य

---

विष्णुः। अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेरिति भाव इति योजना। अनेन समन्वयसूत्रोक्तस्य विष्णौ सर्वशब्दसमन्वयस्येहाक्षेपातेनास्याक्षेपिकी सङ्गतिः अव्यक्तजीवादिरूपो विषयः प्रधानाद्येवेति पूर्वपक्षश्च दर्शितः। सिद्धान्ते श्रुत्यर्थस्तु—'महतः' महत्तत्त्वाभिमानिचतुर्मुखात् 'अव्यक्तम्' अव्यक्तशब्दितं ब्रह्म श्रीतत्त्वं च 'परं' उत्तमम्। तस्मादव्यक्ताच्छ्रियः पूर्णषड्गुणत्वात्पुरुषशब्दवाच्यो भगवान् परः। तस्माच्च 'परं' उत्तमं न किञ्चिदस्ति। 'अन्ये' केचिद्देहिनः मृताः सन्तः 'शरीरत्वाय' शरीरावयवत्वाय मनुष्यादियोनिं प्रपद्यन्ते। अन्ये केचित् 'स्थाणुं' वृक्षादिशरीरं 'अनुसंयन्ति' प्राप्नुवन्तीति। कुत एतेषामेतदुभयप्राप्तिरित्यत उक्तं—यथेति। 'श्रुतं' श्रवणं तत्तज्ज्ञानकर्मानुसारेण तत्तद्भावप्राप्तिस्तेषां तेषां भवतीति। इदं च वाक्यं योनिस्थाणुप्राप्तिप्रतिपादनद्वारा बद्धत्वप्रतिपादकम्॥

( ३ ) सिद्धान्तांशं व्याचष्टे—नेति। यत्सर्वशब्दानां परमात्मपरत्वं न युज्यते इत्युक्तम्, तन्नेत्यर्थः। कुतो नेत्यतस्तत्र हेतुतया गृहीतेरिति पदं तत्सम्बन्धिद्वयोक्तिपूर्वकं योजयति—तस्यैवेति। यस्मिन् समन्वयः प्रतिज्ञातस्तस्यैवेत्यर्थः। सूत्रेऽनुवृत्तस्य तदित्यस्य विपरिणामाभिप्रायेण प्रयुक्तं तस्यैवेति स्वपदं व्याख्याति—परमात्मन इति। न तु प्रधानादेरित्येवार्थः। अव्यक्तशब्देनेत्युपलक्षणम्। अव्यक्तादिशब्दैः 'गृहीतेः' ग्रहणाद्वाच्यत्वोपगमादित्यर्थः। परमात्मन एवाव्यक्तादिशब्दैर्वाच्यत्वेन ग्रहणे को हेतुरित्यतस्तत्र हेतुत्वेन पूर्वपक्ष्युक्तहेतुविरुद्धपरनसूचितार्थबोधकं परमात्मन एवाव्यक्तशब्द इति भावि वाक्यं यतो वाचक इत्यनेकपदाध्याहारेण परमात्मन एवाव्यक्तशब्देन गृहीतेरित्यनेनापि संयोज्यम्। तत्प्रकारस्तु—यतः 'परमात्मन एव अव्यक्तशब्दो वाचकः' परमात्मैवाव्यक्तादिशब्दमुख्यवाच्यो न प्रधानादिरिति यावत्। अतः परमात्मन एव अव्यक्तादिशब्दैर्वाच्यत्वेन ग्रहणादिति। अनेन सूत्रे उक्तेरित्यनुक्त्वा गृहीतेरिति पुरुषव्यापारोक्तेः प्र

परमात्मन एवाव्यक्तशब्देन गृहीतिः।

( ४ ) कप्रत्ययः कुत्सने।

योजमिमुक्तं भवति। परमात्मन एवाव्यक्तादिशब्दवाच्यत्वे कथं तर्हि प्रधानादावव्यक्तादिशब्दव्यवहारः। न च वाच्यं अवाचकत्वेऽप्यन भिज्ञानादिना तद्व्यवहार इति 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रोक्तरीत्या साक्षादित्यनेनोक्तमिति। तथा सति अवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवहारप्रसङ्गादित्याशङ्कापरिहारायोक्तम्—सूत्रे शरीररूपकविन्यस्तेति। तद्रथरूपकविन्यस्तशरीरगृहीतेरित्यप व्याख्यानिरासाय यथावद्व्याचष्टे—'शरीररूपके अव्यक्ते' प्रधाना दौ 'विन्यस्तस्य' स्थितस्येति। तथा च परमात्मन एवाव्यक्तादिश ब्दमुख्यवाच्यत्वेऽपि नाव्यक्तादौ तद्व्यवहारायोगः। कुतः? अव्यक्ता दौ परमात्मनो विन्यस्तत्वेन तत्सम्बन्धादेवाव्यक्तादावपि तच्छब्दप्र वृत्तेरिति सूत्रकाराभिप्राय इति भावः। नन्वेतदयुक्तम्, ब्रह्मवत्प्रधा नादेरपि मुख्यवाच्यत्वस्य वा प्रधानादिसम्बन्धादेव ब्रह्मणो वाच्य त्वमिति वैपरीत्यस्य वा वक्तुं शक्यत्वादित्यत उक्तम—सूत्रे शरीर रूपेति। तत्र तत्त्वप्रदीपरीत्या शरीरमेव रूपमस्येति वा, तद्विवरणा त्मकचन्द्रिकारीत्या शरीरस्य रूपमिव रूपं धर्मो यस्येति वा विग्रहः। तथा च प्रसिद्धशरीरसम इत्यर्थः। साम्ये निमित्तमाह—पारतन्त्र्या दिति। पराधीनत्वादित्यर्थः। तथा च यथा लोके शरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वेन धर्मेण प्रसिद्धशरीरादिसदृशं प्रधानादिकं भ वति शरीररूपमिति भावः॥

( ४ ) नन्वत्र सूत्रकारः पारतन्त्र्याभिप्रायेण प्रधानादेः परमात्म नः शरीररूपत्वमसूत्रयदिति कुतो ज्ञायते। मुख्यशरीरत्वाभिप्रायेणैव रूपशब्दं प्रयुक्तवानिति किं न स्यादित्याशङ्कावारणाय सूत्रकृत्प्रयुक्तं कप्रत्ययं रूपशब्दोक्तमुख्यशरीरत्वाभावे हेतुसमर्पकतया व्याचष्टे—कप्रत्यय इति॥ 'कुत्सने' निन्दने। वाचकतयाऽस्तीति शेषः। अत एव पाणिनिरपि 'कुत्सने कः' इत्याह। तथा च प्रधानादेर्जडत्वादि ना कुत्सितत्वान्नेश्वरमुख्यशरीरत्वम्, तस्य चिच्छरीरकत्वात्, किन्तु शरीरतुल्यत्वमेव। तदेव सूत्रकृतोऽभिप्रेतमिति ज्ञायते। किञ्च—प्र धानादेः परमात्मशरीरत्वमेव सूत्रकृदभिप्रेतं चेत् शरीरविन्यस्तेत्ये

(५) परमात्मन एवाव्यक्तशब्दस्तत्तन्त्रत्वेन तच्छरीररूप
त्वादितरस्याप्यव्यक्तशब्दः ।

तावता पूर्तौ रूपपदवैयर्थ्यम् । जडाव्यक्तस्येश्वरतादात्म्यायोगेन तस्य स्वरूपार्थत्वायोगात् । अतोऽप्युक्त एवाभिप्राय इति भावः । अनेन–रूपशब्दस्योक्तशङ्कापरिहारकत्वं उक्ताभिप्रायज्ञापकत्वं चेति प्रयोजनद्वयमुक्तं भवति ॥

(५) एवं शरीररूपकविन्यस्तपदं व्याख्याय कथमनेनोक्तशङ्कापरिहार इत्यतः

एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी ।
वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात् ॥

इति गारुडवचनोक्तं सौत्रापिशब्दसूचितं तदभिप्रायमाह — परमात्मन एवेति ॥ परमात्मन इत्यनेन स्मृतिगतप्रधानशब्दो मुख्यार्थपरमात्मपर इत्युक्तं भवति । अव्यक्तशब्दो जीवादिशब्दोपलक्षकः । वाचक इति शेषः । इतरस्य तदन्वयादित्यनेनोक्ताभिप्रायमाह—तत्तन्त्रत्वेनेति । परमात्माधीनत्वेन तदधीनविकृतित्वेनेति वाऽर्थः । हेतौ तृतीया । तच्छरीररूपत्वादिति । तस्य परमात्मनः प्रसिद्धशरीररूपत्वेन शरीरत्वादित्यर्थः । 'इतरस्य' परमात्मान्यस्य प्रधानादेः 'अव्यक्तशब्दः' अव्यक्तादिशब्दः । अत्रापि पूर्ववच्छेषः । यद्वा—पूर्वत्र च वाचकत्वं षष्ठ्यर्थः । तथात्वे शेषं विनैवान्वयः । न केवलं परमात्मनः, किन्त्वितरस्यापीत्यपेरर्थः । यद्यपि परमात्मन एव अव्यक्तशब्दो मुख्यवाचकः । तथापि तत्तन्त्रत्वेन तच्छरीररूपत्वात्तत्सम्बन्धादमुख्यत इतरस्याप्यव्यक्तशब्दो वाचको भवतीत्यर्थद्वयेऽपिशब्दः । अनेन सौत्रापिशब्दस्यानुमानिकमप्युच्यते इति समुच्चयार्थत्वं यद्यपितथापीत्यर्थकत्वं चेत्यर्थान्तरं चोक्तं भवति । तत्तन्त्रत्वेनेत्यनेन अव्यक्तशब्द इति पुनरुक्त्या च सूत्रे शरीररूपकस्येति वाच्ये विन्यस्तेत्यधिकोक्तिः ब्रह्मणो न केवलं तत्र सत्त्वमात्रम्, किन्तु नियामकतया सत्त्वमिति दर्शयितुम् । तेन स्वातन्त्र्यनिमित्तात्तस्यैव परममुख्यवाच्यतेत्युक्तं भवति । तथा च इतरस्याप्यव्यक्तशब्द इति पुनर्वचनेन परमात्मन इवेतरस्य परममुख्योऽव्यक्तशब्दः, किन्तु ततः समाकृष्य सङ्केतित एव । अतो नोभयोः साम्यं वैपरीत्यं वा शङ्क्यमिति सूचितम् । तदुभयोर्मुख्यवाच्यत्वे वाक्यभेद इति शङ्का तु शरीररू

( ६ ) 'तुच्छयेनाभ्वपिहितं यदासीत्' ( ऋ १०-१२९-३. ) इति दर्शयति च ।

( ७ ) अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यते ॥

पकेन प्रधानेन विन्यस्तस्य विशेषितस्य विशिष्टस्य परमात्मनोऽव्यक्तादिशब्दैः गृहीतैर्वाच्यत्वाभ्युपगमादिति सौत्रपदस्यार्थान्तराभिप्रायकेण सूत्रे शरीररूपकविन्यस्तोक्तेरित्यनुक्त्वा गृहीतेरिति पुंव्यापारोक्तेः प्रयोजनोक्तिपरेण प्रधानविशिष्टस्यैव परमात्मनः शब्दवाच्यत्वाभ्युपगमादिति टीकावाक्येनैव परिहृता ॥

( ६ ) ननु परमात्मन एवाव्यक्तादिशब्दाभिधेयत्वं, प्रधानादेस्तु तत्सम्बन्धादित्येतत्तदा युज्यते । यदि प्रधानादेः पारतन्त्र्यं परमात्मनस्तु स्वातन्त्र्यं, प्रधानादिविन्यस्तत्वं च भवेत्, तदेव कुतः सिद्धमित्यतस्तत्र प्रमाणकथनपरतया दर्शयतीति सूत्रांशं व्याचष्टे–तुच्छयेनेति॥ इति श्रुतिश्च दर्शयतीत्यन्वयः । चशब्दोऽयं 'आत्मनि तिष्ठन्नात्मनोऽन्तरः' (बृ.माध्यन्दिनशाखा.) इत्यादिवाजसनेयश्रुतिग्राही, यत इत्यर्थो वा । अस्यातः परमात्मनः एवेत्यादिना उक्तं युक्तमिति अध्याहारेणान्वयः । 'तुच्छयेन' परमात्मापेक्षया गुणतोऽल्पेनास्वतन्त्रेण प्रधानेन आ समन्ताद्भूमत्वात्पूर्णत्वात् आभु विभु यत्परमं ब्रह्म 'अपिहितं' आच्छादितमासीत् । तदेव 'तपसो' ज्ञानस्य 'महिना' महत्तया 'एकं' प्रधानं 'अजायत' आसीदित्यर्थः । अनेन प्रधानस्याल्पत्वरूपं पारतन्त्र्यम्, हरेस्तु नियामकत्वे सति तदाश्रयत्वप्रयुक्तनीचत्वायोग्यत्वरूपं स्वातन्त्र्यं प्रधाने स्थितत्वं चोक्तं भवति । यः 'आत्मनि' जीवे तिष्ठन्निति । अनेन तु जीवस्यास्वातन्त्र्यं हरेस्तु स्वातन्त्र्यं जीवविन्यस्तत्वं चोक्तम् ॥

( ७ ) ननु परमात्मनोऽव्यक्तादिशब्दवाच्यत्वे सिद्धे भवेत् 'परमात्मन एवाव्यक्तादिशब्दवाच्यत्वे कथं प्रधानादौ तद्व्यवहारः, प्रधानादौ परमात्मनो विन्यस्तत्वेनाऽव्यक्तादिशब्दवाच्यपरमात्मसम्बन्धात्तत्रापि तच्छब्दप्रवृत्तिः' इति शङ्कासमाधानात्मकप्राचीनचिन्ता । तदेव कुत इत्यतः प्रवृत्ताभ्यां दर्शयतिचेतिशब्दाभ्यां सूचिते श्रुतिस्मृती पठति—अव्यक्तमिति ॥ 'यः' अधिकारी ज्ञातुमशक्यत्वान्निमित्तादव्यक्तशब्दवाच्यं, ईश्वरभावादचलं, अचलेश्वरताकमिति याव

इति पिप्पलादशाखायाम् । 'अक्षरं ब्रह्म परमम्' इत्युक्त्वा 'अव्यक्तोऽक्षर उच्यते' (गीता.८-३..२१.) इति वचनाच्च ॥ १ ॥

---

त् । अचाल्यं वा । 'शान्तं' निर्विकारं, । शस्य सुखस्य अन्तं सुखोत्कर्षसीमाभूमिं पूर्णसुखमिति वा, 'निष्कलम्' निर्गताः कलाः यस्मात्तं षोडशकलारहितं, 'निष्क्रियं' अक्लिष्टकारिणम्, प्राकृतक्रियारहितं वा, प्रलये प्रचुरव्यापारहीनं वा, निष्क्रियते निर्णीयते इति निष्क्रियमिति वा, 'परं' उत्तमम्, 'आत्मानं' आदानादिकर्तारं हरिं 'वेद' जानाति । सः अनु ज्ञानानन्तरं 'भयात्' संसारभयात् 'मुच्यते' मुक्तो भवेदिति पिप्पलादर्षिदृष्टश्रुत्यर्थः । शाखायामित्यस्य पिप्पलाद उक्तार्थं दर्शयतीत्यध्याहृतानुवृत्ताभ्यां वचनादित्यागामिनाऽन्वयः । गीतायां 'इत्युक्त्वा वचनात्' इत्यस्य 'अक्षरं ब्रह्म' इति पूर्ववाक्येन यदक्षरं तत्परमं ब्रह्मेति यस्याक्षरस्य परब्रह्मत्वमुक्तम्, तस्यैवाक्षरस्य 'अव्यक्तोऽक्षर उच्यते' इत्युत्तरवाक्येनाव्यक्तत्वोक्तेरित्यर्थः । अस्य परमात्मन एवाव्यक्तशब्द इति सिद्धमिति पूर्ववाक्येनान्वयः । 'अनेन जीवेन' इतिच्छान्दोग्यवाक्यस्य 'जीवो विनयिता साक्षी' इति सहस्रनामवाक्यस्य चोपलक्षकमेतत् । तयोरपि दर्शयतिचेतिशब्दाभ्यां सूचितत्वात्, 'अहं' प्राणधारकत्वान्निमित्ताज्जीवाख्येनानिरुद्धरूपेण 'इमाः' तेजोबन्नाख्यास्तिस्रो देवता अनुप्रविश्य 'नामरूपे' शब्दार्थप्रपञ्चौ 'व्याकरवाणि' सम्यक्सृजानीत्यर्थः । विष्णुवाक्यमेतत् ॥

अनेन–यतः 'आनुमानिकमपि' प्रधानाद्येव 'एकेषां' शाखिनां कठादीनां शाखासु 'अव्यक्तात्पुरुषः' (कठ.३-११.) इति श्रुतैरव्यक्तादि शब्दैरुच्यते, न तु विष्णुः, अतो न तत्तु समन्वयादित्युक्तं युक्तमिति चेत्–न कुतः ? 'गृहीतेः' परमात्मन एवाव्यक्तादिशब्दवाच्यत्वाङ्गीकारात्। परमात्मन एवाव्यक्तादिशब्दवाच्यत्वे कथं तर्हि प्रधानादौ तद्व्यवहारः । तदवाचकेन तद्व्यवहारे अतिप्रसङ्गादित्यत उक्तं—शरीररूपकविन्यस्तेति । यथा प्रसिद्धशरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वेन निमित्तेन प्रसिद्धशरीरसमे प्रधानादौ विन्यस्तस्य स्थितस्य परमात्मनोऽव्यक्तादि शब्दैर्वाच्यत्वेनोपगमादित्यर्थः । न चाव्यक्तस्य मुख्यशरीरत्वमेव किं न स्यादिति वाच्यम् । यतोऽव्यक्तं कप्रत्ययोक्तं कुत्सना

( ८ ) सू—ॐ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ ॐ ॥ २ ॥
सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति ।
( ९ ) सूक्ष्मत्वं च मुख्यं तस्यैव ।

र्हम्, न हि कुत्सनार्हं जडं चिच्छरीरिणो हरेर्मुख्यशरीरं भवति। प्रसिद्धदेहरूपत्वाच्चास्यामुख्यशरीरत्वम् । तथाच यद्यप्यव्यक्तादिशब्दाः परमात्मन्येव मुख्याः, तथापि तैरानुमानिकमप्युच्यतेऽमुख्यतः परमात्मसम्बन्धात् । न च साम्यं वैपरीत्यं वा शङ्क्यम् । परमात्मनोऽव्यक्तादौ विन्यस्तत्वेन नियामकतया वर्तमानत्वेन तस्य तत्तन्त्रत्वेनोभयोर्मुख्यवाच्यत्वस्य विपर्ययस्य वा अयोगात् । न च परमात्मनः शरीररूपकविन्यस्तत्वादौ मानाभावः । यतः 'तुच्छ्येन' इति श्रुतिः 'य आत्मनि तिष्ठन्' (माध्यन्दिनश्रुतिः) इत्यादि च तथा ' दर्शयति ' प्रतिपादयति अतः । न च परमात्मनोऽव्यक्तादिशब्दवाच्यत्वे सिद्धे भवेत्कथमन्यत्र व्यवहार इति चिन्ता । तदेव कुतः सिद्धमिति वाच्यम् । यतः 'अव्यक्तमचलम्' (पिप्पलादशाखा.) 'अव्यक्तोऽक्षरः' इति श्रुतिस्मृती तथा दर्शयतः, अतः । न चोभयोर्मुख्यवाच्यत्वे वाक्यभेद इति वाच्यम् । शरीररूपके विन्यस्तस्य विशिष्टस्य परमात्मनो वाच्यत्वेन गृहीतेरभ्युपगमात् । तथा चान्वयभेदाभावान्न वाक्यभेद इति सूत्रार्थ उक्तो भवति ॥

( ८ ) नन्वस्त्वेवं श्रौतस्मार्तप्रयोगबलेनाव्यक्तादिशब्दानां भगवद्वाचित्वम् । तथाऽपि तत्र तेषां परममुख्यत्वं कुतः? श्रुतिस्मृतिषु तत्र तत्प्रयोगस्यामुख्यवाच्येऽपि केवलमुख्येऽपि सम्भवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—सूक्ष्ममिति ॥ अत्र तुशब्दोऽवधारणार्थः । तदिति व्यस्तं समासान्तर्गतं च । तत्र व्यस्तमव्यक्तरूपोद्देश्यसमर्पकम्। सूक्ष्ममिति च विधेयाभिधायीत्याशयेन सौत्रं प्रतिज्ञांशं व्याचष्टे—सूक्ष्ममेवेति । न तु रूढ्या प्रधानमित्येवार्थः । नन्वव्यक्तत्वस्यैव अव्यक्तशब्दप्रवृत्तिनिमित्तत्वादव्यक्तमेवाव्यक्तशब्देनोच्यत इति वाच्ये कथमव्यक्तशब्देन सूक्ष्ममेवेत्युक्तिरित्यतः प्रवृत्तं तदर्हत्वादिति हेत्वंशं व्याचष्टे—तद्धीति । यस्मात्तत्सूक्ष्मं परमाण्वाकाशादिरूपं वस्तु अव्यक्ततां न व्यज्यत इति व्युत्पत्त्याऽव्यक्तशब्दप्रवृत्तिनिमित्तमव्यक्तत्वं प्राप्तुं ' अर्हति ' योग्यं भवति । तस्माद्यदव्यक्तशब्देनोच्यते, तत्सूक्ष्ममेवेति युक्तमुक्तमित्यर्थः ॥

( ९ ) अस्तु सूक्ष्ममेवाव्यक्ततार्हत्वादव्यक्तशब्दवाच्यम् । तथाऽ

( १० ) यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति।
यत्तल्लोका नविदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठाः॥
इति च पिप्पलादशाखायाम्।
( ११ ) मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥ २ ॥

---

पि प्रकृते किमायातमित्यतः सूक्ष्मपदं भावप्रधानं कृत्वा समग्रं सूत्रं प्रकारान्तरेण व्याचष्टे—सूक्ष्मत्वं चेति ॥ चस्त्वर्थः, अव्यक्तत्वसमुच्चये च, जीवादिपदप्रवृत्तिनिमित्तप्राणधारकत्वादिसमुच्चये च । तथा च यतस्तदव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तत्वोपयोगिसूक्ष्मत्वं तु 'तस्य' विष्णोरेवार्हं मुख्यमतिशयितमस्ति। अतस्तदव्यक्तत्वमपि तस्यैव मुख्यम्। अतोऽतिमुख्यनिमित्तत्वात्स एव परममुख्यतः तदव्यक्तं 'तत्पदेनोच्यते' जीवादिशब्देनोच्यते इति सूत्रभाष्ययोस्सम्बन्धः ॥

( १० ) कुतो विष्णोर्मुख्यसूक्ष्मत्वं, येन तस्य मुख्याव्यक्तत्वं स्यादित्यतस्तस्य विष्णोर्मुख्यसूक्ष्मत्वस्य प्रमाणविषयतार्हत्वादेवेत्यपि सूत्रवृत्तिमभिप्रेत्य तत्सूचितां श्रुतिमाह—यदिति॥ यत् 'लोकसारं' लोकोत्तमं 'वैष्णवं पदं' विष्णुस्वरूपं 'तत्परमं सूक्ष्मं' मुख्यं सूक्ष्मं 'वेदितव्यम्' ज्ञातव्यमिति 'आमनन्ति' 'एषोणुरात्मा चेतसा वेदितव्यः' (मुं. ३-१-९.) इत्याद्याथर्वणिकाः पठन्ति। यच्च 'लोकाः' पामराः न विदुः, 'तदेतत्' विष्णुस्वरूपं 'योगनिष्ठाः' ब्रह्मणि मनोयोगनिष्ठाः उपायसिद्धाः 'कवयो' ज्ञानिनो 'विन्दन्ति' साक्षात्कुर्वन्ति इति 'हि' प्रसिद्धमिति श्रुत्यर्थः। शाखायामित्यस्य यत उक्तमित्यध्याहारेण सूक्ष्मत्वं चेत्यनेनान्वयः। एवं जीवादिशब्दप्रवृत्तिनिमित्तप्राणधारणादीनां भगवति मुख्यत्वे—

स जीवनामा भगवान् प्राणधारणहेतुतः।
उपचारेण जीवाख्या संसारिणि निगद्यते ॥

इति गीतातात्पर्योदाहृतप्रमाणमन्यच्चोदाहर्तव्यम् ॥

( ११ ) नन्वस्तु विष्णौ मुख्यमव्यक्तादिशब्दप्रवृत्तिनिमित्तं, तथाऽपि 'अव्यक्तात्पुरुषः' इत्यादौ न तस्य वाच्यता, किन्त्वमुख्याव्यक्तत्वादिमत्प्रधानादेरेवेत्यतस्तत्र पूर्वसूत्रे उक्तेरित्यानुक्त्वा गृहीतेरित्युक्त्या सूचितां युक्तिमाह—मुख्ये चेति ॥ चोऽवधारणे। मुख्यासम्भवे तु गौणग्रहणं युक्तमिति व्यतिरेकसूचको वा। तथा च 'मुख्ये'

( १२ ) सू—ॐ ॥ तदधीनत्वादर्थवत् ॥ ॐ ॥ ३ ॥

विष्णौ मुख्यप्रवृत्तिनिमित्तवति विद्यमानेऽव्यक्तादिशब्दवाच्यतया सम्भवति सति तत्परित्यागेन 'अमुख्यं' अमुख्यप्रवृत्तिनिमित्तवत्प्रधानाद्येव वाच्यतया गृहीतुं न युक्तमित्यर्थः ॥

( १२ ) नन्वस्त्वेवं विष्णावेवाव्यक्तादिप्रातिपदिकानां मुख्यता । तथाऽपि 'अव्यक्तात्पुरुषः परः' इत्यादावव्यक्तादिशब्दैर्न तस्य वाच्यत्वेन गृहीतिर्युक्ता । तथा सति 'महतः परमव्यक्तम्' (कठ.३-११.) इति महत्परत्वश्रुतेः तथा 'अव्यक्तात्' इत्यवरत्वाक्षेपकावधित्ववाचिपञ्चमीश्रुतेः, तथा 'सोऽवरः' इति साक्षादवरत्वश्रुतेः, तथा 'जीवा एव तु दुःखिनः' 'कार्यकारणबद्धौ' (मां. २ - ११.) इति दुःखित्वबद्धत्वादिश्रुतीनां च 'निरनिष्टो निरवद्यः' इत्यादिप्रमाणविरोधेन परमात्मन्यसम्भवदर्थकत्वात् तासां नैरर्थ्यापातात् । अतो बाधकादव्यक्तादिशब्दैरमुख्यमपि प्रधानाद्येवावश्यं वाच्यतया ग्राह्यमित्याशङ्कां परिहरत्सूत्रं पठति–तदधीनत्वादिति ॥ 'दर्शयति च' इत्यतश्चशब्दानुवृत्ति तत्त्वित्यस्य विपरिणतस्यानुवृत्ति तदित्यस्यावृत्ति तस्मिन्नधीनं तदधीनं तत्स्वामिकं तस्याधीनमिति वा तस्य भावस्तत्त्वं तस्मादिति विग्रहं च अभिप्रेत्य व्याचष्टे–तदधीनत्वादिति ॥ चो निमित्तसमुच्चये । आदिशब्देन परत्वपुरुषत्वावरत्वादीनां ग्रहणम् । सप्तम्यर्थे षष्ठी । एवकारोऽर्थवदित्यनेनापि सम्बध्यते । अव्यक्तत्वादिकं परावरत्वादिकमिति द्वितीयादिशब्दस्य प्रत्येकमन्वयः । अत्र प्रथमादिशब्देन गुणवाचिसर्वशब्दो गृह्यते । द्वितीयादिशब्देन दोषवाच्यशेषशब्दः । यद्यपि दोषवाचकशब्देन एकस्यैव ग्रहणात् गुणवाचकशब्देनाप्यव्यक्तशब्द एव ग्राह्यो, न परशब्दोऽपि गुणान्तरस्य दोषान्तरवदादिशब्देनैव ग्रहणसम्भवात् । तथाऽपि निरूपकत्वेनैव परशब्दग्रहणादविरोधः । अव्यक्तत्वादिकमित्यावर्तते । तत्रचैकं वाचकशब्दोपलक्षकम् । नान्यस्येत्येव शब्दार्थः । तथा च न केवलं तेषामव्यक्तत्वपरत्वपुरुषत्वजीवत्वादीनां प्रकृतिजीवादिनिष्ठगुणापेक्षया निरवधिकानां तस्मिन्नतिसूक्ष्मत्वसर्वोत्तमत्वपुरुषत्वादिगुणोपेते परमात्मनि सत्त्वादेव 'तदव्यक्तत्वादिकं' अव्यक्तत्वादिगुणवाचिशब्दजातं 'अर्थवत्' गुणिनि किञ्चिद्गुणाभिधायकत्वेन अभिधेययुक्तम्, किं नामाव्यक्तस्थं तद्रूपम् । अ

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैव भैव्यक्तत्वं

व्यक्तस्याव्यक्तत्वं महतः परमत्वं चापादयतीति 'महतः परमव्यक्तम्' इत्युच्यते। तदेव तस्याव्यक्तस्य पुरुषादवरत्वमापादयतीत्यवरशब्दार्थः। न तु स्वयमवरत्वादिति। तत्त्वप्रदीपरीत्या तेषां प्रधानादिगतधर्माणां तदधीनत्वादीशाधीनत्वाच्च न केवलं गुणवाचिशब्दजातमर्थवत्, किन्तु तत्प्रातिपदिकादिरूपं वा पञ्चमीविभक्त्यादिरूपं वा अवरदुःखिबद्धत्वादिदोषवाच्येऽपि तस्मिन्नीश्वरे वाच्यतया गृहीते सत्येवार्थवदेव न निरर्थकम्। न च प्रवृत्तिनिमित्ताभावः। तदधीनत्वात्तेषां अन्यगतावरत्वादिधर्माणां परमात्माधीनत्वात्। स्वामितासम्बन्धेन तेषां तस्मिन् सत्त्वादस्यैव मुख्यनिमित्तत्वादेकेनापि शब्दप्रवृत्तिनिमित्तेन शब्दस्यार्थवत्त्वोपपत्तेरिति योजना। अत्राव्यक्तत्वग्रहणेन अव्यक्तत्वपरावरत्वादिरूपगुणवाचिशब्देषु अन्यगतप्रवृत्तिनिमित्तनियन्तृत्वं तदधिकरणत्वं चेति निमित्तद्वयम्, अवरदुःखिबद्धादिदोषवाचिशब्देषु तु प्रवृत्तिनिमित्तनियन्तृत्वरूपमेकमेव निमित्तमित्युक्तं भवति। यद्यपि टीकायामत्राव्यक्तत्वग्रहणेनाव्यक्तशब्दस्य परमात्मनि द्वेधा वृत्तिरिति दर्शयति। अत एव भाष्ये तदधीनत्वाच्चेति चशब्द इति अव्यक्तशब्दमात्रे निमित्तद्वयमुक्तमिति भाति। तथाऽपि सत्तर्कदीपावल्यां अव्यक्तत्वपरत्वपुरुषत्वादीनामित्युक्तत्वात् चन्द्रिकायामपि दुःखादिशब्दानां स्वातन्त्र्यादेवेशे प्रवृत्तिः, अव्यक्तादिशब्दानां तु आश्रयत्वादपीत्युक्तत्वादव्यक्तशब्दो गुणशब्दमात्रपरो व्याख्येयः। केचित्तु—अवरयतीत्यादि व्युत्पत्त्युपपत्तेश्च इति टीकानुसारादवरादिशब्देऽप्यवरयतीति कर्तृव्युत्पत्तिः तदधीनत्वेन निमित्तेन समुच्चितेति गुणदोषोभयवाचिष्वपि शब्देषु निमित्तद्वयमुक्तमित्याहुः। तन्न—अन्यगतशब्दप्रवृत्तिनिमित्तनियन्तर्यवरादिशब्दानां मुख्यत्वे बहुळप्रयोगाख्यमेकं हेतुमभिधाय व्युत्पत्त्यनुपपत्तिशङ्कापरिहाराय हेत्वन्तराभिधानार्थं प्रवृत्तटीकावाक्यस्यावरादिशब्देषु निमित्तान्तरप्रदर्शकत्वाभावेन अन्योक्तव्याख्यासाधकत्वात्। कर्तृव्युत्पत्तिपक्षे पचाद्यजन्तानामवरादिशब्दानामवरयितृत्वादिनिमित्तकत्वेन तस्यान्यगतप्रवृत्तिनिमित्तप्रेरकत्वानतिरिक्ततया दोषाभिधायकशब्देषु एकस्यैव निमित्तस्य लाभाद्भगवत्यवरत्वादीनामव्यक्तत्वादिवत्कथमप्यवृत्तेर्दोषवाचिशब्देषूक्तनिमित्तद्वयासम्भवात्। अनेन प्रधानादे

परावरत्वादिकमर्थवत् ।
( १३ ) यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।

---

रतिसूक्ष्मत्वाभावेऽपि नाव्यक्तादिशब्दामुख्यार्थत्वं, अल्पपङ्कजेऽपि पद्मे पङ्कजशब्दस्यामुख्यत्वादर्शनादिति शङ्का च निरस्ता भवति। अव्यक्तादिगुणशब्दस्य परमात्मनि तदधीनप्रवृत्तिनिमित्तप्रदर्शनेन प्रधानादीनाममुख्यतायां अन्याधीनप्रवृत्तिनिमित्तवत्त्वस्य हेतुत्वाभ्युपगमेनाल्पप्रवृत्तिनिमित्तवत्त्वमात्रस्य तत्र हेतुत्वानभ्युपगमात्। एतेन प्रवृत्तिनिमित्ताधिक्यस्य मुख्यताहेतुत्वेऽतिसहनवति पुंसि सिंहशब्दस्य सहनार्थात् सिचेः सहेर्वा कनि निष्पन्नस्य मुख्यता स्यादित्येतदपि चोद्यं निरस्तम्। प्रवृत्तिनिमित्तस्य अनन्याधीनत्वस्यापि मुख्यताहेतुत्वेन तदतिशयमात्रस्य तत्राहेतुत्वात्। वस्तुतस्तु—पद्मत्वजातेः पङ्कजशब्दनिमित्तत्वेन विवक्षितत्वात्तस्याश्चाल्पपङ्कजादधिकपङ्कजेऽतिशयाभावात्। एवं सिंहत्वजातेः सिंहशब्दप्रवृत्तिनिमित्तभूताया अतिशयस्य पुंस्यभावाच्च नोक्तातिप्रसङ्ग इति परिहारान्तरं चन्द्रिकोक्तं द्रष्टव्यम्। 'मथनान्मिथिलो जातः सहनात्सिंह उच्यते' इति बृहदैतरेयभाष्यवचनं तु अमुख्यार्थाभिधायकम् ॥

( १३ ) ननु भवेदेतत्प्रधानादिगतशब्दप्रवृत्तिनिमित्तप्रेरकत्वेन ईश्वरस्यावरादिशब्दवाच्यत्वम्, यद्यन्यगतशब्दप्रवृत्तिनिमित्तप्रेरकेऽसाववरादिशब्दो वर्तेत इति सिद्ध्येत्। तदेव कुतः सिद्धमित्यतस्तत्र व्याप्तिवचनमुखेन अनुमानमाह—यदधीन इति। 'यस्य' धर्मिणो वाचकस्य शब्दस्य प्रवृत्तिनिमित्ताख्यो 'गुणो' 'यदधीनः' पूर्ववद्विग्रहः। 'सः तद्गुणी' तद्गुणवानित्युच्यते। तन्निमित्तकशब्देनाभिधीयते इति व्याप्तिवचनस्यार्थः। तत्र वैदिकलौकिकोभयविधं दृष्टान्तमाह—यथेति। 'यथा परमात्मा' विष्णुः 'अनेन जीवेन' इत्यादौ जीवगतप्राणधारणाख्यजीवशब्दप्रवृत्तिनिमित्तस्वातन्त्र्याज्जीवशब्देनोच्यते । यथा च भृत्यगतजयस्य जयिशब्दप्रयोगनिमित्तस्य राजाधीनत्वाद्राजा जयीत्युच्यते इत्यर्थः। अभिधीयत इत्यनेन अभिधाख्यमुख्यवृत्त्यैवायं प्रयोगः, न त्वमुख्यवृत्त्येत्युक्तं भवति। दृष्टान्तद्वयसमुच्चयेऽपिशब्दः। 'तमेव मृत्युममृतं तात दैवतं सर्वात्मनाऽवेहि परं परायणम्' इति न्यायविवरणोदाहृतभागवतवचने 'यथाऽमृतत्वापादकत्वाद्ब्रह्मामृतं

यथा जीवः परात्मेति यथा राजा जयीत्यपि ।
इति च स्कान्दे ॥ ३ ॥
(१४) सू—ॐ ॥ ज्ञेयत्वावचनाच्च ॥ ॐ ॥ ४ ॥
अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥

मित्युच्यते, मृतिशीलत्वापादकत्वाच्च मृत्युः' इति तत्त्वप्रदीपोक्तरीत्या दृष्टान्तसमुच्चये वा । 'यथा मृत्युशब्दोऽयमादौ मृत्युप्रेरके बहुलप्रयोगवान्, अत एवात्र मुख्यः' इति टीकोक्तोदाहरणान्तरसमुच्चये वाऽपिशब्दः । चशब्दस्तु न केवलं स्कान्दवचनेऽभिहितत्वात्तन्नियामके तच्छब्दोऽस्तीति सिद्ध्यति, किन्तु 'स बभ्रुः' ( ) इत्यादिश्रुतिसिद्धायाः अवरयतीत्यादिव्युत्पत्तेश्चेति समुच्चये । अनेन—न केवलं अव्यक्तत्वादिनिमित्ताधिक्यादेवाव्यक्तत्वादिगुणवाचिशब्दजातं परमात्मन्यर्थवत्, किं नाम अव्यक्तत्वादीनां 'तदधीनत्वात्' ईशाधीनत्वाच्च तदव्यक्तत्वादिकं तस्यैव । अतस्तस्मिन्नेव तदव्यक्तत्वादिगुणदोषोभयवाचिशब्दजातमपि 'अर्थवत्' प्रवृत्तिनिमित्ताख्यार्थयुक्तम् । न निरर्थकमिति सूत्रार्थ उक्तो भवति ॥

(१४) एवं श्रौतस्मार्तप्रयोगप्रवृत्तिनिमित्तातिशयाभ्यां प्रथमद्वितीयोक्ताभ्यां परमात्मन्येवाव्यक्तादिशब्दानां मुख्यत्वात्, बाधकाभावे च मुख्यार्थस्यैव ग्राह्यत्वात्, अवरत्वादिश्रुतिनैरर्थ्यबाधकस्य च तृतीये उद्धृतत्वान्मुख्यार्थः परमात्मैव 'अव्यक्तात्पुरुषः' इत्यादावव्यक्तादिशब्दैरुच्यते, न प्रधानादीत्युक्तम् । तदेव युक्त्यन्तरेणोपपादयत्सूत्रमुपन्यस्य चशब्दस्यानेकहेतुसमुच्चयार्थत्वमभिप्रेत्य तच्छेषं प्रतिज्ञारूपं पूरयति–ज्ञेयत्वेति ॥ 'अन्यस्य' प्रधानादेरव्यक्तादिशब्दवाच्यत्वं न युज्यते, किन्तु विष्णोरेवेति योजना । सूत्रार्थस्तु–विष्णोरेव मुमुक्षुज्ञेयत्वे

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ ।
अमृतस्यैष सेतुः' ॥ (मुं.२-२-५.)

इति वचनात्प्रधानादेस्तदभावान्मोक्षफलकवेदानां तद्धेतुज्ञानविषयब्रह्मज्ञापन एव प्रवृत्तत्वात्प्रतिवाक्यं तत्परत्वस्य च 'आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते' इत्यादिवचनसिद्धत्वात् स्वतः प्राप्तमुख्यवृत्तित्यागे कारणाभावाच्च विष्णुरेवाव्यक्तादिशब्दवाच्यो, न प्रधानादिरिति ॥

( १५ ) सू—ॐ ॥ वदतीति चेन्न प्राज्ञो हि ॥ ॐ ॥ ५ ॥
'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते'
( कठ. ३-१५. ) इति ज्ञेयत्वं वदतीति चेत्—
( १६ ) न, प्राज्ञः परमात्मा हि तत्रोच्यते । 'अणोरणीयान्म

( १५ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—वदतीति ॥ नान्यस्येत्यनुवर्तते । तथा च 'अन्यस्य' प्रधानस्य 'न ज्ञेयत्वावचनं' मोक्षार्थं ज्ञेयत्ववचनाभावः । कुतः? यतः 'अनाद्यनन्तं महतः परं ध्रुवम्' (कठ. ३-१५.) इति वचनं लिङ्गव्यत्ययेन 'तं' 'महतः परमव्यक्तम्' इति पूर्ववाक्ये महत्तत्त्वात्परत्वेनोक्तं अव्यक्तमिति योजनायां अन्यस्य मोक्षार्थं ज्ञेयत्वं वदत्यत इति वाक्ययोजना। ननु वदतेः शाब्दप्रतीतिवाचित्वात्तत्र चशब्दस्य करणत्वात्कथं वदतीति व्यपदेशः? इत्थम्—अवान्तरव्यापारवतो हि करणस्य कारकत्वं, अन्यथातिप्रसङ्गात् । तत्र स्वस्वक्रियां प्रति सर्वस्य प्राधान्येन कर्तृत्वात् करणेऽपिशब्दे तद्विवक्षया वदतीति व्यपदेशो युज्यते ॥

( १६ ) परिहारांशं व्याचष्टे—नेति ॥ नैतद्वाक्यबलेन अन्यस्य मोक्षार्थं ज्ञेयत्वं मन्तव्यमित्यर्थः । कुत इत्यत आह—प्राज्ञ इति । प्रज्ञ एव प्राज्ञः तस्य व्याख्या परमात्मेति । 'हि' यतः 'तत्र' वाक्ये परमात्मैवोच्यते, न प्रधानं अतो नेति योजना । ननु महतः परत्वलिङ्गात्प्रधानमत्रोच्यते इत्यत आह—अणोरिति । 'हि' यतः 'अणोः' इति कठश्रुतौ 'तस्यैव' प्रकृतपरमात्मन एव 'महतो' महत्तत्त्वात् 'महत्त्वं' परत्वमुच्यते, न त्वन्यस्य । अतो न लिङ्गादन्यदत्रोच्यत इत्यध्याहारेण योजना । लिङ्गस्यान्यथासिद्धत्वादिति भावः । नन्वस्यां श्रुतौ भगवानणोः सूक्ष्मादपि सूक्ष्मः, महतोऽणुप्रतियोगिस्थूलात्स्थूल इति प्रतिपादनेन भगवतः सर्वस्थूलात्परत्वोक्तावपि न महत्तत्त्वपरत्वमुच्यते, अतो न महत्परत्वलिङ्गं विष्णौ सावकाशमित्यत आह—सर्वस्मादिति । इदं च हेतुगर्भं विशेषणम् । तस्येत्यनुषज्यते । अपिर्भिन्नक्रमो यद्यपीत्याद्यर्थेऽपि भवति कैमुत्ये च । 'सिद्ध्यति यतः' इति शेषः । तथा चात्र तस्य विष्णोः सर्वस्मात्परत्वोक्तावपि 'महतो' महत्तत्त्वात्परत्वमपि सिद्ध्यति । न केवलं सर्वस्थूलत्वमित्यपेरर्थः । कस्मात्? यतस्सर्वस्मात्स्थूलात्परस्य महतः परत्वं कैमुत्येन युज्यते अत इति योजना । तथा चायं सिद्धान्ते कठवाक्यार्थस्सम्पद्यते—अनाद्यनन्तमिति

हतो महीयान्' (कठ. २-२०.) इति तस्यैव हि म हतो महत्त्वम्। सर्वस्मात्परस्य महतोऽपि परत्वं यु ज्यते ॥ ५ ॥

(१७) सू—ॐ ॥ प्रकरणात् ॥ ॐ ॥ ६ ॥

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क ठ. ३-९.) इति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥

(१८) सू—ॐ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ॐ ॥ ७॥

---

समस्तम्। अनादिरुत्पत्तिशून्यश्चासावनन्तो गुणदेशतोऽपरिच्छिन्न श्चेति विग्रहः। तं 'महतः परं' सर्वस्मात्स्थूलात्परम्। अत एव मह त्त्वादपि परं 'ध्रुवं' नित्यं निर्विकारं वा। 'तं' अव्यक्तवत्त्वात्परत्वे न पूर्वप्रकृतं पुरुषाख्यं विष्णुं 'निचाय्य' सम्पूज्य निशाम्य वा संसा राख्यमृत्युमुखात्प्रमुच्यतेऽधिकारीति ॥

(१७) ननु विशेषतो महत्परत्वस्य प्रधानलिङ्गस्य सर्वस्थूलपरत्व रूपामुख्यार्थतां स्वीकृत्यानाद्यनन्तादिवाक्यस्य विष्णुपरत्वग्रहणे का रणाभावात्प्रधानमेवात्रोच्यते इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य नञनु वृत्त्यभिप्रायेण व्याचष्टे—प्रकरणादिति ॥ इतीत्यनन्तरं श्रुतेरिति शे षः। हिशब्दो हेतौ। एतत् 'अनाद्यनन्तम्' इत्यादिवाक्यं 'तस्य' वि ष्णोः 'प्रकरणं' प्रकरणरूपमित्यवगतमिति शेषः। तथा च नात्र वि ष्णुग्रहणे कारणाभावः। कुतः? हि यस्मात्तस्य प्रकरणमस्ति। न चै तत्प्रकरणस्य वैष्णवत्वासिद्धिः। 'हि' यस्मादेतत् 'सोऽध्वनः' इ ति कठश्रुतेस्तस्य प्रकरणमित्यवगतं तस्मादिति योजना। सूत्रयोज ना तु—अस्य प्राज्ञप्रकरणत्वात्प्रकरणात्प्राज्ञ एवात्रोच्यते, नान्यदिति। सकलमिदमहं चेशायत्तमिति यो विजानाति स संसाराख्यस्य वर्त्म नो विश्रान्त्यवधिभूतं पारमाप्नोति, तत्पारं विष्णोः परमं पदं स्थानं क्षीराब्ध्यादौ मुक्तप्राप्यमिति श्रुत्यर्थः सत्तर्कदीपावल्यामुक्तः ॥

(१८) हेत्वन्तरेणानाद्यनन्तादिवाक्येऽन्यस्यापि प्रतिपाद्यतां परा कुर्वत्सूत्रमुपन्यस्य व्याचष्टे—त्रयाणामेवेति ॥ त्रयाणामेवेत्यनुवादः सौत्रैवंशब्दार्थप्रकारधर्मिप्रदर्शनार्थः। त्रयाणां मध्ये प्रधानमेकमस्त्वि ति शङ्कां निरसितुं सूत्रे प्रयुक्तेन एवंशब्देन ज्ञापितं श्रुत्युक्तप्रकारत्रयं दर्शयति—पितृसौमनस्येति। पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां त्र याणामेवेत्यन्वयः, नान्यस्येत्येवशब्दार्थः। प्रश्न इति प्रथमान्तं निमित्त

त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्र
श्न उपन्यासश्च ।

(१९) 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' इति वच

सतम्यन्थं च । तेन प्रश्ननिमित्तकतोपन्यासश्च सिद्ध्यति । चः प्रश्नोत्त
रसमुच्चये, हेतुसमुच्चये वा । अनेन सौत्रं चशब्दद्वयं तन्त्रेणानूदितं
भवति । यत इति शेषः । अस्यातोऽप्यत्र प्राज्ञ एवोच्यते, नान्यदिति
प्रकृतसाध्येनान्वयः । केचित्तु—सौत्राद्यचशब्दस्य यत इति हेत्वर्थ
त्वं द्वितीयस्य प्रकरणरूपहेतुसमुच्चयार्थत्वमाश्रित्य यत इति शेषो न
कार्य इत्याहुः । अनेन—न केवलमेतत्प्रकरणस्य वैष्णवत्वेनात्र प्रधान
स्याप्रतिपाद्यता सिद्धा, किन्त्वेतत्प्रकरणघटितानेकप्रकरणात्मकस्था
नरूपायामस्यामुपनिषद्यपि 'च' यतः 'एवं त्रयाणां' पितृसौमन
स्यस्वर्ग्याग्निपरमात्मरूपाणां धर्मिणामेव 'उपन्यासः' प्रतिवचनम
स्ति, न त्वन्यस्य । 'अतश्च' अतोऽपि । कुतः त्रयाणामेवोपन्यासः ?
यतस्त्रयाणामेव प्रश्नोऽत इति सूत्रार्थ उक्तो भवति ॥

(१९) नन्वेवं हि काठकोक्ता आख्यायिका—गौतमगोत्रोत्पन्नस्यौ
द्दालिकेः नचिकेता नाम पुत्र आसीत् । तत्र पितरि निरर्थकगोदानपरे
सति तन्निराचिकीर्षुर्नचिकेता नाम मम पिता मां वा दत्त्वाप्येवंविधाः
गा न प्रयच्छत्विति भावेन मां कस्मै दास्यसीति पितरमप्राक्षीत् । त
च्छ्रुत्वा क्रुद्धः पिता त्वां यमाय दास्यामि त्वं यमगृहं गच्छेत्यशपत् ।
एवं शप्तो नचिकेताः मृतो यमप्रवासकाले यमगृहं प्राप, तत्र त्रिरात्रं
तत्पत्न्या पूजित उपवसन्नेवावसत् । अथ यम आगतस्तं नमस्कृत्या
तिथिस्त्वं यस्मान्मे गृहे तिस्रो रात्रीरनश्नन्नवात्सीः । तस्मादस्य प्र
तीकाराय मत्तः त्रीन् वरान् वृणीष्वेत्यब्रवीत् । एवमुक्तः ऋषिपुत्रः
आह—इदानीं मम पिता मह्यं क्रुद्ध आस्ते, तत्सौमनस्यं सौहार्दमपे
क्षितं तद्देहीति भावेन 'शान्तसंकल्पः सुमनाः यथा स्यात्' इति पितृ
सौमनस्यं वरं प्रथमं प्रार्थयित्वा अथाहं 'स्वर्ग्यं' स्वर्गादनपेतं स्वर्ग
साधनभूतं 'अग्निं' अग्निष्टोमादिकर्माङ्गभूताग्निशब्दितेष्टकचितिस्थं
तत्स्थितं विष्णुं वाऽध्येमि तत्त्वं कथयेति भावेन 'स त्वमग्निं स्वर्ग्यम
ध्येषि मृत्यो प्रब्रूहि' (कठ. १ - १३.) इति स्वर्ग्याग्निविषये द्वितीयं
वरमवृणोत् । तथा मोक्षसाधनज्ञानविषयीभूतमृतमुक्तजीवनियामक
परमात्मस्वरूपं मया ऽवश्यं ज्ञेयं, तत्कथयेति भावेन 'येयं प्रेते विचि

नाम्न विरोधः ॥ ७ ॥

( २० ) सू—ॐ ॥ महद्वच्च ॥ ॐ ॥ ८ ॥

यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वा त्परमात्मन एव मुख्यः एवमितरेऽपि ॥ ८ ॥

---

कित्सा मनुष्ये ' ( कठ. १-२०. ) इति परमात्मविषये तृतीयं वरमवृणोत् । एवं नचिकेतसा प्रार्थितो यमो वरत्रयं ददानीति भावेन ' वीतमन्युस्त्वां दहशिवान्' इति पितृसौमनस्यविषये प्रथमं प्रत्यवोचत् । 'स्वर्ग्यमग्निं नचिकेतः प्रजानन्' ( कठ. १-१४. ) इति स्वर्ग्याग्निविषये द्वितीयं प्रत्यवोचत् । ' देवैरत्रापि विचिकित्सितं किल ' ( कठ. १-२२.) इति परमात्मविषये तृतीयं प्रत्यवोचादिति । एवं चेत्पितृस्सौमनस्यं वरत्वेन प्रार्थ्यत एव न पृच्छ्यते । अतः प्रार्थनं कथं प्रश्न इत्यत आह—अविज्ञातेति ॥ यत्प्राप्स्यते न वेति अविज्ञातं संदिग्धं तस्य प्रार्थनमपि तस्य प्रश्न इति प्रामाणिकैरभिधीयते इत्यर्थः । ' इति वचनात् ' इत्यभिधानात् त्रयाणां प्रश्न इति प्रार्थनस्यापि प्रश्नत्वोक्तेः ' न विरोधः ' नानुपपत्तिरित्यर्थः ॥

( २० ) यदुक्तमव्यक्तादिशब्दानां विष्णुरेव मुख्यवाच्य इति, तदयुक्तम , तेषां प्रधानादावेव प्रसिद्धत्वात् । न चाव्यक्तादिशब्दप्रवृत्तिनिमित्तस्य भगवति मुख्यत्वेन तच्छब्दानां तत्रैव मुख्यत्वमुक्तमिति वाच्यम्। यत्र शब्दस्य प्रसिद्धिस्तत्र तस्य मुख्यता, यत्र च यस्य मुख्यं प्रवृत्तिनिमित्तमस्ति तस्य मुख्यत्वमित्यस्यार्थस्यादृष्टचरत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—महद्वच्चेति ॥ अत्र महच्छब्दस्य शब्दपरत्वं महत्तत्त्वपरत्वं प्रथमान्तात्सप्तम्यन्ताच्च भवति। चशब्दस्य यद्यपि तथापीत्यर्थत्वं दार्ष्टान्तिकसमुच्चयार्थत्वं चाश्रित्य सूत्रं व्याचष्टे—यथेति ॥ न विरोध इत्यनुवर्तते । महत्त्वादित्युपलक्षणमव्यक्तत्वादेः । योजना तु—यथा 'महान्तं विभुमात्मानम्' ( कठ. २-२२. ) इति कठवल्लीश्रुतिस्थो महच्छब्दः यद्यपि महत्तत्वे प्रसिद्धः, तथाऽपि न प्रसिद्धिविरोधः । कुतः ? यतः परमात्मन एव परमहत्त्वाख्यमुख्यप्रवृत्तिनिमित्तवत्त्वात्तस्मिन् ' मुख्यः ' मुख्यवाचक इत्येवोपेयते । 'एवं ' तथा ' इतरे ' अव्यक्तादिशब्दाः यद्यप्यन्यत्र प्रसिद्धाः । तथाऽपि परमात्मन एव परमाव्यक्तत्वादिप्रवृत्तिनिमित्तवत्त्वात्तस्मिन् परममुख्य इति । स्पष्टः सूत्रार्थः ॥

(२१) सू—ॐ ॥ चमसवदविशेषात् ॥ ॐ ॥ ९ ॥

यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ. ४-२-३.) इति श्रुतेः शिरोवाचकः, एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि 'नामानि सर्वाणि यमाविश

(२१) ननु भवेदियमव्यक्तादिशब्दानां परमात्मनि परममुख्यत्वचिन्ता। यदि तेषां तत्र मुख्यत्वमेव सिद्धं भवेत्। न च तद्युक्तं, तेषामन्यत्रैव प्रसिद्धत्वात्। न च 'अव्यक्तमचलम्' इत्यादिश्रौतस्मार्तप्रयोगबलात्तेषां तत्र शक्त्यवगमः। वृत्त्यन्तरेणापि प्रयोगोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—चमसवदिति ॥ अत्रापि पूर्ववच्छब्दपरत्वं प्रथमान्तात्सप्तम्यन्ताच्च वति चशब्दानुवृत्तिं तस्य पूर्ववदर्थद्वयं श्रुतेरित्यध्याहारं चाभिप्रेत्य सूत्रं व्याचष्टे–यथेति। 'अन्यत्र' चतुष्कोणयज्ञपात्रे पुनः 'अन्यत्र' प्रधानादौ अव्यक्तादिशब्दा इत्यनेन प्राचीनं 'इतरे' इति स्वपदं व्याख्यातम्। दृष्टान्तीभूतमहच्छब्दस्यापि सङ्ग्रहाय सर्व इत्युक्तिः। आदिशब्देन पुरुषादिशब्दानां ग्रहणम्। 'यो देवानाम्' इत्यादि द्वितीयादिपदार्थः। तथा च यथा चमसशब्दो यद्यपि अन्यत्र प्रसिद्धः, तथाऽपि 'इदं तच्छिरः' इत्यनुशासनरूपश्रुतेः शिरोवाचकोऽवगत एव। तथा सर्वेऽव्यक्तपुरुषादिशब्दा यद्यप्यन्यत्र प्रसिद्धाः, तथापि 'नामानि' इत्यादिश्रुतेः 'परमात्माभिधायकाः' वाचका एव, न लाक्षणिकाः इत्यवगम्यत इति योजना। नन्विदमित्यस्याभिधानरूपत्वेऽपि न 'नामानि' (भाल्लवेय.) इत्यस्याभिधानरूपता। वृत्त्यन्तरेणापि पर्यवचनसम्भवादित्याशङ्कोत्तरत्वेन प्रवृत्तमविशेषादिति सूत्रखण्डं व्याचष्टे–अविशेषादिति। श्रुतेरित्यावर्तते। तथा च 'नामानि' इति श्रुतेः 'इदम्' इति श्रुतेः सकाशाद्विशेषाभावादित्यर्थः। अतस्तद्वदस्या अप्यनुशासनरूपत्वादनया परमात्मवाचित्वनिश्चयो भवत्येवेति भावः। बृहदारण्यके हि 'तदेष श्लोको भवति' इति प्रतिज्ञाय 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्' इति मन्त्रमुदाहृत्य 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति' इतिवाक्येन मन्त्रगतैकपादं प्रतीकं गृहीत्वा 'इदं तच्छिरः' इति वाक्येन स मन्त्रो व्याख्यातः। तत्प्रकारस्तु—'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति व्याख्येयमन्त्रे यद्वस्तूक्तम्, तदिदं प्रतीयमानं शिरः। कथं? 'हि' यस्मात् 'एषः' शिरश्चमसस्त

न्ति तं वै विष्णुं परममुदाहरन्ति ' इत्यादि श्रुतेः प
रमात्माभिधायका एव । अविशेषाच्छ्रुतेः ॥ ९ ॥

——:०:——

२. अधिकरणम् ॥

( १ ) ' वसन्ते वसन्ते ज्योतिषा यजेत ' इत्यादिकर्माभिधा

---

द्रूपः । ननु कथं शिरश्चमसं इत्यतस्तल्लक्षणयोगादित्याह—अर्वाग्बिल इति । ' बिलं ' मुखादि । तथा चाधोभागस्थितमुखादिमानित्यर्थः । ' ऊर्ध्वबुध्नः ' बुध्नो वर्तुलकठिनाकारः, तथाचोपरिभागस्थितबुध्नाकारवानित्यर्थः । 'दक्षिणाऽन्नं वनुते यो न आत्मा' (ऋ.१०-१०७-७.) इत्यत्र यथा आत्मशब्दापेक्षयाऽन्ने पुल्लिङ्गयच्छब्दनिर्देशः, तद्वत् शिरस्यपि चमसशब्दविवक्षया एष इति पुल्लिङ्गनिर्देशो युक्त इति । 'दक्षिणा' लक्ष्मीः 'वनु ते' भजति । किमन्नमित्यत आह—य इति । 'नः' अस्माकं ' आत्मा ' अन्तर्यामीत्यर्थः । सूत्रार्थस्तु स्पष्टः ॥ १ ॥

॥ इति आनुमानिकाधिकरणम् ॥

——:*:——

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिशब्दानां भगवति समन्वयः प्रतिपाद्यते । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति—वसन्त इति ॥ ' तत्तु समन्वयात् ' इत्युक्तः सर्वशब्दानां परमेश्वरे समन्वय इति पूर्वाधिकरणवाक्यमत्रापि सम्बध्यते । आदिशब्दः उभयान्वयी । कर्मेत्यादौ ग्राह्यम् । कर्माभिधायकस्येति हेतुगर्भम् । तथा च ' तत्तु समन्वयात् ' इत्युक्तः परमेश्वरे सर्वशब्दानां समन्वयो न युज्यते । यतः ' वसन्ते वसन्ते ' ( ) इत्याद्यभिधायकवाक्यगतशब्दजातस्य समन्वयो न युज्यते । सोऽपि कुतः ? तस्य कर्माद्यभिधायकत्वेन प्रसिद्धत्वात् । तदतिक्रमेण समन्वये च कर्मतत्क्रमादेरभावाख्यविरोधप्रसङ्गात् । सोऽपि कुतः ? कर्माद्यभिधायकाभावाख्यविरोधात् । तथा च विहितानुष्ठानलोपाख्यविरोधापातादिति योजना । प्रथमादिशब्देन ' ज्योतिष्टोमेन ' इत्यादिफलवाक्यम्, ' वाजपेयेनेष्ट्वा बृहस्पतिसवने यजेत ' ( ) ' वेदं कृत्वा वेदिं कुर्यात् ' ( ) इत्यादिक्रमवाक्यं च

थकस्य कर्मक्रमादिविरोधान्न युज्यत इति ।

( २ ) अत आह—

सू—ॐ ॥ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ॐ ॥ १० ॥

षेणां तारतम्यबोधकम्, यद्वा—कर्मक्रमवाक्यं दीक्षणीयोपसदाद्य ङ्गवाक्यं च गृह्यते । द्वितीयादिशब्देन कालाधिकारिफलादि प्राधान्यादादौ कर्मग्रहः । तत्र च वसन्तशब्दः कालविशेषवाची । सु धारीत्या तत्रैव विधेस्तात्पर्यम् । ज्योतिश्शब्दो ज्योतिष्टोमशब्दश्च क मेवाचौ । तत्राद्यः समस्तशब्दोपलक्षकः । तद्द्वारा ज्योतिर्नामकस्तो त्रसमूहवतो यागस्य लक्षितलक्षणया बोधकः । स्वयं तु शक्यार्थः । वसन्तवाक्यस्य ज्योतिष्टोमानुवादेन गुणविधायकत्वं तु गीताभाष्य प्रमेयदीपकृद्भ्यां नाङ्गीकृतम् । कर्मान्तरविधित्वरीति तयोराशयः । अत एव प्रथमं तदेवोदाहृतम् । सूत्रे ज्योतिरित्येकदेशकीर्तनात् भा ष्येऽपि तादृशस्यैवोदाहरणम् । स्वर्गकामशब्दोऽधिकारिवाची, स्वर्ग शब्दः फलवाची । अनेन समन्वयसूत्रोक्तसर्वशब्दसमन्वयाक्षेपात्तेना स्याक्षेपिकी सङ्गतिरुक्ता । ज्योतिष्टोमादिशब्दाख्यो विषयः, अन्यवा चीति पूर्वः पक्षः, अन्यत्र प्रसिद्धेर्विष्णुवाचित्वे कालकर्मादिविरोधा च्चेति युक्तिश्च सूचिता भवति ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ वसन्तादि रादिपदार्थः । यद्यप्युदाहृतवाक्ये वसन्तशब्दस्य प्रथमं श्रुतत्वाद्वस न्त इति वक्तव्यम् । तथाऽपि ज्योतिश्शब्दस्य कर्मान्तरप्रकृतित्वफल करणत्वादिना प्रधानभूतज्योतिष्टोमाख्यकर्मवाचित्वाज्ज्योतिरित्युक्तं सू त्रे, तदनुसारात् अत्रापि। एतच्चान्येषामप्युपलक्षकमिति भावेन ज्योति रादीत्याह। ज्योतिरादीत्युभयान्वयी । ज्योतिरिति शब्दार्थयोर्ग्रहणम् । तथा च ज्योतिष्टोमादिकर्मादिवाचित्वेन प्रसिद्धज्योतिरादिशब्दाभिधे योऽपि 'स एव' हरिरेवेति प्रतिज्ञार्थः। प्रसिद्धेत्यनेन पूर्वपक्षयुक्तिस्सूचि ता। न केवलं सिद्धरूपदेवतातत्क्रमवाचकैः 'इन्द्रियेभ्यः पराः' (कठ. ३ - १०. ) इत्यादिशब्दैः वाच्यो हरिः, किन्तु साध्यभूतकर्मतत्क्रमा दिशब्दवाच्यश्चेत्यपिशब्दार्थः। अनेन ज्योतिस्त्वित्यन्वितसौत्रतुशब्दो ऽप्यर्थतया व्याख्यातः। समन्वयसूत्रादनुवृत्तं विधेयसमर्पकं तदिति पदं 'एषः' इति श्रुत्यनुसाराल्लिङ्गविपरिणामेन स इति पठितं, तत एवानुवृत्तस्य तुशब्दस्यार्थ एवेति। इति शब्दात्परं तथाशब्दो योज्यः।

ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोकमभ्यार्चत्' इत्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' ( ऐ. आ. २-२-२. ) इति ह्यधीयत एके ॥ १० ॥

( ३ ) सू—ॐ ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ॐ॥११॥

हिर्हेतौ । तथा च 'हि' यस्मात् 'एके' शाखिनः श्रीमन्महैतरेयिनः'ता वा एताः' (ऐ.आ.२-२-२-११.) इति 'तथा' सर्वशब्दाभिधेयत्वेन 'तत्तु' हरिमेवाधीयते तस्मादिति हेत्वर्थः । ननु शब्दानां विष्णुपरत्वे तत्र वृत्त्यभाव इत्यतः प्रवृत्तमुपक्रमादित्येतत् ल्यब्लोपनिमित्तपञ्चमीं मत्वा व्याचष्टे—एष इति । उपक्रम्येति सावधारणम् । तेन सौत्रतुशब्द एवार्थतयापि व्याख्यातः । अत एवाह टीकाकृत् 'तुशब्द एवार्थः' इति । तत्त्वप्रदीपकृच्चाह—प्रघट्टकोपक्रमादेवेति आरभ्येति च । एतच्च परमेश्वरे शब्दानामञ्जरूढिमात्रापहारकविद्वद्रूढिसहितमहायोगं दर्शयितुमभिहितम् । अतएव उपक्रम्येत्युपलक्षणम्—'तं यच्छतम्' (ऐ.आ.२-२-१.) इत्यादिना नामानि निरुच्य इत्यपि द्रष्टव्यम् । अस्य ह्यधीयत इत्यनेनान्वयः । तस्मान्न परमेश्वरे वृत्त्यभावदोष इति भावः । 'एषः' नारायणो देवः 'इमं लोकं' ब्रह्मादिशरीरं पुरुषरूपेणान्तर्यामितया 'अभ्यार्चत्' प्राविशदिति श्रुत्यर्थः । अन्यत्सर्वं पादान्त्यप्राणनये व्याकृतम् । सूत्रार्थस्तु—न केवलमव्यक्तादिशब्दवाच्यं, किन्तु 'ज्योतिस्तु' ज्योतिरादिशब्दवाच्यं तत्तु ब्रह्मैव, न त्वन्यज्ज्योतिष्टोमादि । कुतः? 'हि' यस्मात् 'एके' शाखिनः 'ता वा एताः' इति 'तथा' सर्वशब्दवाच्यत्वेन 'तत्तु' ब्रह्मैव 'अधीयते' वदन्ति, तस्मात् । न च ब्रह्मणि वृत्त्यभाव इति वाच्यम् । 'हि' यस्मात् 'उपक्रमात्' 'एष इमम्' इत्युपक्रम्याधीतेन 'तं यच्छतम्' इत्यादिना नामानि निरुच्य पुनः सर्ववेदप्रभृतयः समुद्रघोषान्ताः शब्दा नारायण एव विद्यादिति सतात्पर्यमैतरेयिनोऽधीयते, तस्मात् । तथा च परब्रह्मणि सर्वशब्दानां च विद्वद्रूढिसहितमहायोगस्य उक्तत्वान्नोक्तदोष इति भाव इति ॥

( ३ ) ननु कथं ज्योतिरादिशब्दवाच्यत्वं परमात्मनः सम्भवति । तथासति कर्मक्रमादिविरोधापातात् । ज्योतिष्टोमादिशब्दानां अन्यपरत्वानभ्युपगमे परमात्मनि तेषां व्युत्पत्त्यसम्भवाच्चेत्याशङ्कामपनुदत्सू

मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशा

त्रमुपन्यस्य व्याचष्टे कल्पनेति॥ मधुविद्यादिवदिति। मधुविद्यायां मध्वादिशब्दवदित्यर्थः। मधुविद्या तु-'असौ वा आदित्यो देवमधु' (छां.३-१-१.) इत्याद्या। अस्यां हि द्युवाख्यरमातिरोवंशाश्रितान्तरिक्षाख्यवायुमध्वपूपस्थादित्यमण्डलान्तर्गतस्य भगवतो वासुदेवादिपञ्चमूर्तेरग्न्यादिप्रधानवस्वादिसुरमधुकरमुखसंस्पर्शेन पञ्चधाविभिन्नऋगादिसर्ववेदाख्यपुष्पोत्थयशस्तेजइन्द्रियवीर्यान्नाद्यात्मकमधुरसत्वमुच्यते। आदिशब्देन 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमसः' (बृ.४-२-३.) इति शिरसश्चमसशब्दार्थत्वानुशासकश्रुतिर्गृह्यते । सर्वशब्दार्थत्वेनेत्यनेन सूत्रे पूर्वस्मात्तथाशब्दः संयोज्य इति सूचितम् । परस्येत्यनेन तदित्यस्य विपरिणतस्यात्रानुषङ्गः सूचितः। चः समुच्चयेऽवधारणे च, स चोभयत्रान्वेतव्यः । तत्रावधारणार्थस्याबाधितत्वेत्यध्याहृतपदेन सह हेतावन्वयः। समुच्चयार्थस्य तु साध्येन। अविरोध इत्यस्य विरोधाभाव इत्यर्थमुपेत्य कर्मादीत्यनेन विरोधिप्रतियोगी दर्शितः। आदिशब्दार्थस्तु प्रागेवोक्तः। अनेन—न केवलं परमात्मनः सर्वशब्दवाच्यत्वे तथा ह्यधीयत इत्युक्तं साधकसद्भावमात्रम्, किन्तु वाचकशब्दाभावप्रयुक्तो यः कर्मक्रमादिविरोधः पूर्ववादिना बाधकत्वेनाभिहितः, सोऽपि न। कुतः? तस्य परस्य 'कल्पनोपदेशाच्च' कल्पना क्लृप्तिः । तथा च लोकतः क्लृप्तं तत्तद्वाचकत्वमबाधितत्वैव लोकाक्लृप्तमहायोगवृत्तेः कल्पनया व्युत्पादनेन च परस्य विष्णोः तथा 'सर्वशब्दार्थत्वेन' सर्वशब्दवाच्यत्वेन 'उपदेशात्' 'ता वा एताः' इत्यादावुपदिष्टत्वात्। न चैवं सर्वाभेदापत्तिर्वैयर्थ्यं चेति वाच्यम् । कल्पनोपदेशात्परस्य विष्णोः सर्वशब्दार्थत्वेन कल्पनाया उपासनाया एव 'प्राण ऋचः' इत्यादावुक्तत्वात् अभेदस्यानभिधानात्। यद्वा—'कल्पनायैव' तदर्थमेवोपदेशान्नाभेदो न च वैयर्थ्यं प्रसज्यते। अस्मिन् पक्षद्वये बुद्ध्या विविक्तेन कल्पनाशब्देन चशब्दार्थैवकारान्वयः । अथ वा—कल्पनोपदेशादेवेश्वरे शब्दानां महायोगवृत्तिः सिध्यति, न तु तदर्थं हेत्वन्तरमन्वेषणीयमित्यध्याहारं विना यथाश्रुत एवार्थः । चशब्दस्य हेतावन्वयः। अनेनेश्वरे शब्दानां सङ्केतमात्रं, न महायोग इति चोद्यं निरस्तम्। उपासना हि सर्वशब्दार्थगुणवत्त्वप्रकारिका। सा च शा

न कर्मक्रमादिविरोधः ॥ ११ ॥

३. अधिकरणम् ॥

(१)सू—ॐ॥ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥ॐ॥१२॥

ब्दानां सङ्केतमात्रे न युज्यते, अतो महायोगवृत्तिसिद्धिः । ननु अन्य त्रादृष्टमेतत्कथं कल्प्यते इत्यत उक्तं—मध्वादिवदिति । यथा खलु म धुविद्यायां 'असौ वा आदित्यो देवमधु' इत्याद्यायां तु मधुयशस्ते जआदिपदार्थतया परमात्मन उपासनोपदेशेऽपि तदर्थे मध्वादिशब्दा नां परमात्मवाचित्वेऽपि न लौकिकक्षौद्रादेर्वाचकशब्दाभावेन अभा वाख्यो विरोधः, यथा च 'इदं तच्छिरः' इति श्रुतौ चमसशब्दवा च्यत्वेन शिरस उपदेशेऽपि न यज्ञपात्राभावाख्यो विरोधः तथात्रापि विरोधाभावः । कुतः ? अन्यत्र क्षौद्रादौ रूढिमानिवार्यैव मध्वादिश ब्दानां परमात्मतद्गुणवाचिताऽभ्युपगमात् । एवं सर्वशब्दवाच्यत्वे पर मात्मनोऽभ्युपगतेऽपि न कर्मक्रमादिविरोधः । कुतः ? ज्योतिरादिश ब्दानामन्यत्र केवलरूढ्यादिवृत्तिमभ्युपेत्य महायोगवृत्त्या ईश्वरवाचि त्वाभ्युपगमादिति सूत्रार्थ उक्तो भवति ॥ २ ॥

इति ज्योतिरुपक्रमाधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे प्रातिपदिकेन प्रत्ययमुखेन बहुत्वसङ्ख्यावि शिष्टवस्तुवाचिनामाधाराधेयवाचिनां च शब्दानां समन्वयः क्रियते । अत्र 'तत्तु समन्वयात्' इत्युक्तः सर्वशब्दसमन्वयो न युज्यते । कु तः ? विरोधात्—बहुत्वाधारत्वादिवाचिशब्दवाच्यत्वाभावात् । सोऽ पि कुतः ? विरोधात्—बहुत्वसङ्ख्योपसङ्ग्रहविरोधात् । एकस्यैवाधा राधेयत्वविरोधाच्चेति पूर्वाधिकरणीयवाक्यसंयोजनेन शिष्याः सङ्ग तिविषयादिकं ज्ञास्यन्तीति भावेन सिद्धान्तयत्सूत्रमुपन्यस्य व्याच ष्टे—नेति ॥ 'इत्यादिषु' वाक्येषु 'बहुसङ्ख्योपसङ्ग्रहेऽपि' बहुसङ्ख्या कानां वस्तूनां 'पञ्च' इति प्रातिपदिकेन वा 'पञ्चजनाः' इति बहु वचनान्तेन वा एकेन पदेनोपसङ्ग्रहेऽपि संक्षिप्य वचनेऽपीत्यर्थः । निमि त्तसप्तमीयम् । अनेन सङ्ख्योपसङ्ग्रहादिति विरोधनिमित्तसमर्पकं पदं

'यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः' (बृ. ६-४-१७.) इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः।
(२) तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूप

व्याख्यातं भवति। न केवलं सङ्ख्योपसङ्ग्रहात्, किन्तु एकस्मिन्ननुपपद्यमानस्य 'यस्मिन्' इत्याद्याधाराधेयभावस्य वचनादपीति समुच्चयार्थोऽपिशब्दः पूर्वसूत्राद्बुद्ध्या विवेकेन विरोधपदाकर्षकोऽपि भवतीत्याशयेन—विरोध इत्याह। अनेन तस्येत्याकृष्यते। नेति शेषः। तथा च 'यस्मिन्' इत्यादौ बहुत्वाधारत्वादेः श्रवणात् यः तेन तस्य भगवतः पञ्चजनाकाशशब्दवाच्यत्वस्य 'विरोधः' अनुपपत्तिः स नेति योजना। अनेनापि पूर्वपक्षे युक्तिद्वयानुवादात्पञ्चजनादिशब्दवाच्या अन्ये षष्ठीनिर्दिष्टा एव, न द्वितीयानिर्दिष्टो विष्णुरिति सयुक्तिकपूर्वपक्षो दर्शितः। तस्य पञ्चजनादिशब्दवाच्यस्य 'न विरोधो' नानुपपत्तिरित्यनेन सिद्धान्तप्रतिज्ञा च सूचिता॥

(२) कुतो न विरोध इत्यतः प्रवृत्तं सौत्रं नानाभावादिति हेतुं व्याचष्टे—तस्यैवेति॥ एकस्यैवेत्यर्थः। परस्येति वर्तते। एवकारोऽप्यर्थकः। अनेन अपिः यद्यपीत्याद्यर्थतयाऽपि व्याख्येय इति सूचितम्। तथा च तस्यैकस्य स्वगतभेदशून्यस्यापि परस्य भगवतो 'नानाभावात्' प्रतिशरीरं नानारूपत्वादित्यर्थः। तथा च रूपबाहुल्याद्बहुवचनोपपत्तिरिति भावः। न च प्रतिशरीरं परमात्मनो बहुरूपत्वमप्रामाणिकमित्याह—आकाशादिष्विति। नियामकत्वेनेति शेषः। नानाभावादित्यत्रापि सम्बध्यते। तथा च तत्तच्छरीरान्तर्गतेषु आकाशप्राणादिपञ्चजनेषु नियम्येषु नियामकत्वेन स्थितस्य भगवतो नानाभावस्य न्यायप्राप्तत्वादित्यर्थः। अनेनैकस्मिन् बहुत्वसङ्ख्यानुपपत्तिः परिहृता। अथ 'यस्मिन्' इत्याधारस्य विष्णुत्वात्पञ्चजनानां आधेयानामविष्णुत्वमित्याशङ्कां परिहर्तुं प्रवृत्तं अतिरेकाद्येत्यंशं व्याख्याति—तदिति। 'तस्य' आधारभूतस्य शरीरनियामकभगवद्रूपस्य 'तेभ्यः' आधेयभूताकाशादिगतषड्रूपेभ्यः 'अतिरिक्तत्वात्' अधिकत्वात् पृथक्त्वाच्चेत्यर्थः। तच्छब्दासाहित्येन अतिरिक्तस्वरूपत्वाच्चेति पाठे तस्येत्यनुषङ्गेन तस्य तादृशस्वरूपत्वादित्यर्थः। तथाच विष्णोरेकत्वेप्याधेयसङ्ख्याधिकशरीरनियामकेश्वररूपाश्रिताकाशप्राणादौ भगवतोऽवस्थिति

त्वाच्च ॥ १२ ॥

मात्रेण तस्याधाराधेयभावो युज्यते इति न तदनुपपत्तिरिति भावः। स त्तर्कदीपावल्यां तु स्वाधेयत्वं लीलयेति भाव इत्युक्तम्। हेत्वोस्समुच्चये चशब्दः। वाजसनेयक उदाहृतोऽयं मन्त्रः—

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥

इति। अत्र पञ्चपञ्चेति वीप्सा पञ्चानां जनानां सर्वशरीरेष्वनुवृत्ति ज्ञापनार्था। तथा च 'यस्मिन्' सर्वशरीरगते परमात्मनि 'पञ्चजनाः' प्रतिपुरुषं स्थितानां पञ्चानां प्राणादिजनानां जनयितृत्वान्निमित्तात्तत्त च्छब्दवाच्याः तदाधाराः पञ्च भगवद्रूपविशेषाः 'प्रतिष्ठिताः' तदा श्रिताः, तथा—आकाशाख्यो भगवांस्तदाख्या प्रकृतिश्च यस्मिन्नाश्रि ता, 'तं' परमात्मानमहं 'मन्ये' जानीयामित्यर्थः। मन्त्रद्रष्टृवाक्यमे तत्। किं तज्ज्ञानेनेत्यत उक्तं—विद्वानिति। 'एवं' उक्तप्रकारेण स र्वशब्दवाच्यं 'तं अमृतं' परं ब्रह्म 'विद्वान्' तत्त्वेनोपासीनः स्वयं चा न्यैः 'अमृतो भवति' मुक्तो भवतीत्यर्थः। तमेवेति सावधारणपाठ स्तु सत्तर्कदीपावलीविरुद्धः। यद्यपि बृहदारण्यकभाष्ये—

प्राणश्चक्षुस्तथैवान्नं मनश्श्रोत्रं च पञ्चमम्।
मूलप्रकृतिसंयुक्तं तद्वत् प्रतिपूरुषम् ॥

इत्यनेन पञ्चधन्तनिर्दिष्टानां नियम्यप्राणादीनामेव पञ्चजनशब्दवा च्यत्वम्, तथा तेषामाकाशाख्यमूलप्रकृतेश्च भगवदाश्रितत्वमुक्तम्, न तु भगवद्रूपाणां पञ्चजनशब्दवाच्यत्वम्, न वा स्वाश्रितत्वं भगवतः। तथाऽपि तत्र सर्वशब्दसमन्वयोक्तौ तात्पर्याभावात् यथाकथं चिद्वा क्ययोजने तात्पर्यादमुख्यवाच्याभिप्रायेण तत्र तथोक्तावपि अत्र बहु सङ्ख्यावाचिनां आधारादिवाचिनां च सर्वेषां शब्दानां समन्वये तात्प र्यात्तस्य च तच्छब्दमुख्यवाच्यतामन्तरेणायोगात्तदर्थं तेषामपि परम मुख्यवृत्त्या भगवत्परत्वोक्तिरिति न विरोध इति ज्ञातव्यम्। अनेन— 'सङ्ख्योपसङ्ग्रहात्' 'यस्मिन्' इत्यादौ बहुत्वसङ्ख्यानां उपसङ्ग्रहा त् संक्षेपेण बहुत्वसङ्ख्याविशिष्टवस्तुवचनात्, तथा 'यस्मिन्' इत्या द्याधाराधेयभावश्रवणादपि प्राप्तो यो 'विरोधो' भगवतस्तच्छब्दवा च्यत्वायोगाख्यः सः न। कुतः? 'अपि' एकस्यापि स्वगतभेदश्

(३) पञ्च जनानाह—

सू—ॐ ॥ प्राणादयो वाक्यशेषात् ॥ ॐ ॥ १३ ॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्न स्यान्नं मनसो मनः' इति वाक्यशेषात् ॥ १३ ॥

न्यस्यापि परमात्मनः 'नानाभावात्' अनेकरूपत्वात्, तथा 'अतिरेकात्' आधाररूपस्याधेयरूपेभ्यः षड्भ्यः सङ्ख्येयेभ्योऽतिरिक्तत्वाच्चेति सूत्रार्थ उक्तो भवति ॥

(३) ननु भवेदियं विष्णौ बहुत्वादिसम्भवविषयचिन्ता, यदि पञ्चजनादिशब्दवाच्यानां विष्णुत्वे भवेद्विशेषहेतुः। न चासावस्ति। 'सर्वे वेदाः' (कठ.२-१५.) इत्यादिश्रुत्यन्तराणां च साधारणत्वादतो बहुत्वादिसम्भवेऽपि न पञ्चजनादिशब्दवाच्यो हरिरित्याशङ्कां परिहरत्सूत्रमवतारयति—पञ्चेति ॥ के ते पञ्चत्वाश्रयभगवद्रूपविशेषा इत्याशङ्कां मुखतो द्वितीयान्तनिर्दिष्टप्राणादिपञ्चजनोक्त्या परिहर्तुं, वाक्यशेषग्रहणेन पञ्चजनलिङ्गोक्त्याऽर्थात्पञ्चजनशब्दवाच्यानां द्वितीयानिर्दिष्टविष्णवन्यत्वशङ्कां च परिहर्तुं पञ्चजनस्वरूपमाह सूत्रकार इत्यर्थः। श्रुत्यनुसारात्पञ्च पञ्चेति द्विरुक्तिः। अथ सूत्रं पठित्वा तत्र प्राणादय इति विरोधपदान्वययोग्योद्देश्यपदस्य सम्बन्धभाष्येण प्रदर्शितत्वात्, तत एव प्रतिज्ञासिद्धेः, तत्र हेतुतयोक्तं वाक्यशेषमेव दर्शयति—प्राणस्येति। माध्यन्दिनानामयं वाक्यशेषः। व्याख्यातेयं कम्पनाधिकरणे। अनेन-सूत्रे पञ्चजना इति श्रौतपदद्वयस्य तस्वित्यस्य वाऽनुषङ्गेण प्राणादय इत्यस्यावृत्त्या विपरिणामेन च एते पञ्चजनास्तावत्प्राणादीनां 'प्राणादयः' प्राणादिषु स्थित्वा प्राणादीनां प्राणत्वादिप्रदाः तत्प्रेरकास्तन्नामकाश्च। कुतः? 'प्राणस्य' इति वाक्यशेषात्। 'ते च' प्राणादीनां प्राणादयः 'त एव' भगवद्रूपविशेषा एव, न त्वन्ये। न च विशेषहेत्वभावः। 'वाक्यशेषात्' 'स उ प्राणस्य प्राणः' (केन.२.) इति तलवकारवाक्यशेषात्। अतोऽत्र विष्णुलिङ्गत्वेन श्रुत्यन्तरसिद्धनिरवकाशप्राणादिप्राणत्वादिप्रदत्वरूपलिङ्गस्य श्रवणात्स एव पञ्चजनशब्दवाच्यः, न षष्ठीनिर्दिष्टप्राणादय इति नोक्तसर्वशब्दसमन्वयविरोध इति सूत्रार्थ उक्तो भवति। मुखतः प्रतीतः सूत्रार्थस्तु—एते पञ्चजनशब्दवाच्या भगवद्रूपविशेषास्तु प्राणादीनां प्राणादयः। द्वितीयान्तनिर्दिष्टप्राणादिप्राणत्वादिप्रदाः प्राणचक्षुश्श्रोत्रान्नमनोभिधा ज्ञेया इति ॥

(४) सू—ॐ ॥ ज्योतिषैकेषामसत्यन्ने ॥ ॐ ॥ १४ ॥
'तद्देवा ज्योतिषां ज्योतिः' (बृ. ६-४-१६.) इत्यनेन काण्वानां पञ्चकम् ॥ १४ ॥

(४) ननु माध्यन्दिनवाक्यशेषोक्तानां प्राणादिप्राणत्वादिप्रदानां विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वम् । कुतः? काण्वानां वाक्यशेषे चतुर्णामेवोक्तत्वेन तस्य तद्गत 'यस्मिन्' इति पूर्ववाक्यतो भिन्नार्थ त्वात् । अत्रापि वाक्यशेषस्य 'यस्मिन्' इत्यतो भिन्नार्थत्वावश्यंभावादित्याशङ्कां परिहरत्सूत्रं पठित्वा श्रुत्युदाहरणपूर्वकमपेक्षितपदाध्याहारेण व्याचष्टे—ज्योतिषेति ॥ इत्यनेनेति । इति वाक्येनेत्यर्थः । एकेषामित्यस्य व्याख्यानं काण्वानामिति । शाखायामित्युक्तमिति शेषः । तथा च काण्वानां शाखायामपि तदित्यनेनोक्तेन ज्योतिषा सह पञ्चकमुक्तमिति योजना । अस्यातो न विरोध इति प्रथमसूत्रोक्तसाध्येनान्वयः ।

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते ।
तद्देवा ज्योतिषां ज्योतिर्हायुर्होपासतेऽमृतम् ॥ (बृ.६-४-१६.)

इति काण्ववाक्यस्यायमर्थः—अहोभिः संवत्सरो यस्मादर्वाक्परिवर्तते । यस्मिन् स्वव्यापारमायुर्ह्रासादिकं कर्तुं न समर्थ इति यावत् । 'तज्ज्योतिषां' आदित्यादीनां ज्योतिष्ट्वप्रदं 'आयुः' आयुःप्रदं अचलं 'अमृतं' नित्यमुक्तं ब्रह्मस्वरूपं देवा उपासते । 'ह' प्रसिद्धमिति । सूत्रार्थस्तु—नैकेषां वाक्यशेषे चतुर्णामेवोक्त्या तस्य पूर्वतो भिन्नार्थत्वात् 'विरोधः' एकवाक्यत्वाभावः । कुतः? एकेषां माध्यन्दिनानां शाखायां पञ्चानामप्युक्तेः । न च काण्वशाखायां अनुक्तेस्तत्र वाक्यभेदोऽवश्यंभावीति वाच्यम् । यतः 'एकेषां' काण्वानां शाखायां 'अन्ने' अन्नस्यान्नत्वप्रदातृरूपे तत्रैव 'असति' अकथिते सत्यपि 'तद्देवाः' इति किञ्चिद्दूरोक्तेन वाक्येन ज्योतिषां आदित्यादीनां ज्योतिष्ट्वप्रदेन ज्योतिराख्येन रूपेण सह पञ्चकमुक्तमिति । अत्र शाखाद्वयेऽप्येकविधपञ्चकपरत्वाय ज्योतिरन्नशब्दयोरेकार्थत्वम्, तयोर्भिन्नार्थत्वाय शाखाभेदेन पञ्चकद्वयं वेत्युक्तमुपपन्नमिति टीकोक्तप्रमेयमनुसन्धेयम् ॥ ३ ॥

इति नसंख्योपसंग्रहाधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति—

सू—ॐ ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ ॐ ॥१५॥

( २ ) आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः ।

---

४. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽवान्तरकारणवाच्याकाशादिशब्दसमन्वयः क्रियत इति शास्त्रादिसङ्गतिः । अत्रापि 'तत्तु समन्वयात्' इत्युक्तः सर्वशब्दसमन्वयो न युज्यते । यतोऽवान्तरकारणवाच्याकाशादिशब्दैरन्यदेवोच्यते, न विष्णुः, तस्मिन् कार्यत्वस्य विरोधात् स्वकार्यत्वस्य सुतरां विरुद्धत्वादिति पूर्वाधिकरणवाक्यसंयोजनेन श्रुत्यादिसङ्गतिं विषयपूर्वपक्षादीन् शिष्या एव ज्ञास्यन्तीत्याशयेन सिद्धान्तयत्सूत्रमवतारयति–अवान्तरेति ॥ कार्यत्वे सति कारणत्वं अवान्तरकारणत्वं, अपिस्समुच्चये । तच्छब्दैरिति शेषः । 'सः' विष्णुः । न भूतादीनीत्येवशब्दार्थः । 'उच्यते' मुख्यतः । तथा च न केवलं स एव मूलकारणवाचकात्मशब्देनोच्यते, किन्त्ववान्तरकारणत्वेन 'तच्छब्दैः' अवान्तरकारणवाचकाकाशादिशब्दैरपि स एवोच्यते इति सूत्रकारो वक्तीति योजना । अवान्तरकारणत्वेनेत्यनेन सौत्रश्चशब्दः कार्यत्वसमुच्चयार्थतया अपीत्यनेन मूलकारणत्वसमुच्चयार्थतया च व्याख्यातः । न चाकाशादिशब्दैः कारणत्वादिप्रकारकबोधाभावादनुपपन्नमेतदिति वाच्यम् । सम्भूतशब्दसमानाधिकृताकाशादिशब्दैस्तथाऽवगमात्, तत्र पञ्चम्या कारणत्वस्य सम्भूतप्रातिपदिकेन च कार्यत्वस्य चोपस्थितेः । यद्वा—'अवान्तरकारणत्वेन' तन्नियामकत्वेन स्वयं अवान्तरकारणीभूत एव तच्छब्दैरुच्यते इत्यर्थः ॥

( २ ) सूत्रं व्याचष्टे—आकाशादिष्विति ॥ सूत्रे न केवलं कारणत्वेन, किन्तु कार्यत्वेन चेति चशब्दव्याख्यानमभिप्रेत्य तल्लब्धार्थमाह—अवान्तरकारणत्वेनेति । 'सः' विष्णुरिति । समन्वयसूत्रादनुवृत्ततच्छब्दस्य श्रुत्यनुसाराल्लिङ्गविपरिणामः कृतः । न त्वन्यदित्येवकारार्थः । टीकायां सम्बन्धभाष्ये 'तच्छब्दैरुच्यते' इति अत्र च 'स्थितः' इति शेषोक्त्या सूत्रे स्थितः, तच्छब्दैः, उच्यते, इति पदत्रयमध्याहार्यमिति सूचितम् । यद्यपि प्रतिज्ञासूचके सम्बन्धभाष्ये 'अवान्तरकारणत्वेन सः' इति पदद्वयस्य प्रयुक्तत्वात्तयोरेव 'आकाशादिषु स्थि

यथा व्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्' (बृ.

तः' इति हेतुवाक्येऽन्वेतुं शक्यत्वादाकाशादिषु स्थित इत्येव वक्तव्यम्। अतएव टीकायां सम्बन्धभाष्योक्तां प्रतिज्ञां 'न केवलम्' इत्यादिना विवृत्य न च कार्यकारणभावविरोध इत्यध्याहृतसाध्ये आकाशादिषु स्थितत्वादित्येव हेतुवाक्यं प्रदर्शितम्। तथाऽपि अवान्तरकारणत्वेनेत्यस्य हेतुसाध्ययोरुभयत्राप्यन्वयसूचनार्थं, स्थित इत्यस्यान्यविशेषणत्वशंकापरिहारार्थं च तत्पदयोः पुनरनुवादः कृतः। तथा च न केवलं मूलकारणवाचिनाऽऽत्मपदेनैव विष्णुरुच्यते, किन्तु अवान्तरकारणत्वेन रूपेण तच्छब्दैरवान्तरकारणवाच्याकाशादिशब्दैरपि स एव वोच्यते। न च तस्यावान्तरकारणत्वेन रूपेणोक्तौ कार्यत्वकारणत्वयोरापत्तिः, ते च विरुद्धे इति वाच्यम्। यत आकाशादिष्ववान्तरकारणत्वेन रूपेण स एव स्थितः। आकाशाद्युत्पत्तावाकाशाद्यन्तर्गतस्य भगवतोऽभिव्यक्त्या वाय्वादिस्वरूपाभिव्यक्तिहेतुत्वेन च तस्य कार्यत्वकारणत्वयोरुपपत्तेर्न विरोध इति भावः। येन रूपेण आकाशादिषु स्थितो विष्णुः स्थितः, तेन रूपेण तस्य तच्छब्दवाच्यतेति ज्ञापनायोभयत्रावान्तरकारणत्वेनेत्युक्तिः। अत्रापिपदपाठः प्रामादिकः। नन्वाकाशादिषु विष्णोः स्थितत्वमसिद्धमित्यतस्तत्राकाशादिष्वित्यस्य बुद्ध्या विविक्तेनोक्तेरित्यनेनाप्यन्वयेन लब्धहेतुमाह–परस्येति। 'इत्यादिना' वाजसनेयवाक्येन आकाशादिषु 'परस्य' परमात्मन 'उक्तेः' सत्त्वोक्तेरित्यर्थः। परस्येत्यनेन अनुवृत्ततच्छब्दस्य विभक्तिविपरिणामावृत्ती सूचिते। आदिशब्देन 'यो वायौ तिष्ठन्' (बृ.५-७-७.) इत्यादि, 'यमाकाशो न वेद' (बृ.५-७-१२.) इत्यादि च गृह्यते। ननु श्रुतावप्याकाशस्थो विष्णुरिति कुत इत्यतस्तत्र 'यथाव्यपदिष्ट' इत्यंशस्य 'आकाशादिषूक्तेः' इत्याभ्यां संयोजनेन लब्धं हेतुमाह—यथाव्यपदिष्टस्येति। व्यपदिष्टप्रकारमनतिक्रान्तो यथाव्यपदिष्ट इति विग्रहः। ततषष्ठीतत्पुरुष इत्याशयेन षष्ठीप्रयोगः। यद्वा—श्रुत्यन्तरव्यपदिष्टानुरूपं यथाव्यपदिष्टमिति निपातनात्सादृश्येऽव्ययीभावः। तथा चैतरेये 'स योऽतोऽश्रुतः' इत्यादौ परमात्मा 'यथा' येन प्रकारेण 'व्यपदिष्टः' श्रुतः तादृशस्यैव तस्य परस्य 'यमाकाशो न वेद' इत्यादिना वाक्येनाकाशादिषूक्तत्वादित्यर्थः। अनेन आकाशादिष्विति सौत्रो हेतुराकांक्षाक्रमेण यथायोग्यमपेक्षितपदावृत्त्या योजनीय इत्युक्तं भवति। सू

५-७-१२, ) इत्यादिना आकाशादिषूक्तेः ॥ १५ ॥

—*✡*—

५, अधिकरणम् ॥

( १ ) सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इति ।

अतो ब्रवीति—

सू—ॐ ॥ समाकर्षात् ॥ ॐ ॥ १६ ॥

---

न्नार्थस्तु—न केवलं मूलकारणवाचकात्मशब्देनैव, किन्तु 'कारणत्वेन च' अवान्तरकारणत्वेनेति यावत् । तेन रूपेण सम्भूतशब्दसमानाधिकृतैस्तच्छब्दैराकाशादिशब्दैरपि स विष्णुरेव उच्यते, न भूतादीनि । कुतः ? 'उक्तेः' 'नामानि' इत्यादिश्रुतेरेव । न च कार्यकारणभावविरोधः । यत आकाशादिषु अवान्तरकारणत्वेन स एव स्थितः, आकाशाद्युत्पत्तौ तत्स्थितस्य भगवतोप्यभिव्यक्तिरूपोत्पत्त्यवश्यंभावात् कार्यत्वस्य पूर्वस्या उत्तराभिव्यक्तिहेतुत्वेन कारणत्वस्य चोपपन्नत्वादिति भावः । न चाकाशादिगतत्वासिद्धिः । 'यः' इति श्रुतौ आकाशादिषु तस्य परस्योक्तत्वात् । न च तत्रापि विष्णुः कुत इति वाच्यम् । 'यथाव्यपदिष्टोऽक्तेः' 'स योऽतः' (ऐ-आ, ३-२-४,) इत्यादिश्रुत्यन्तरे विष्णुः यथा येन प्रकारेण 'व्यपदिष्टः' अभिहितः तेनैवाविदितत्वादिना प्रकारेणोपेतस्य तस्येहाकाशादिषु 'यमाकाशो न वेद' इत्यादिनोक्तेरिति ॥ ४ ॥

॥ इति आकाशाधिकरणम् ॥

—*-:*:-*—

५, अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णौ प्रकारान्तरेण पूर्वोक्तसर्वशब्दसमन्वयासम्भवमाशङ्क्य परिह्रियते । यद्यपीदं सूत्राष्टकं पूर्वाधिकरणशेषतया व्याख्यातुं युक्तम्, तत्त्वप्रदीपे तथा व्याख्यानात्, भाष्येऽपि पृथक्समन्वेतव्यशब्दान्तरानुक्तेश्च । तथाऽप्यस्य पृथङ्न्यायसूचकत्वेन टीकायामधिकरणान्तरत्वेनैव तद्व्याख्यातम् । अतएव पूर्वतन्त्रे 'हेतुदर्शनाच्च' ( पू, मी, १-३-४, ) इति सूत्रं विरोधाधिकरणशेषभूतमपि पृथङ्न्यायसूचकत्वादधिकरणान्तरत्वेनापि व्याख्यातम् । श्रुत्यादिसङ्गतिप्रदर्शनाय सूत्रमवतारयति—सर्वेति ॥ 'तत्तु समन्वयात्' इत्यु

( २ ) परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ।
( ३ ) परस्य वाचकाश्शब्दाः समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥
इति पाद्मे ॥ १६ ॥

क्तरीत्या सर्वशब्दानां मुख्यतः परमात्मैकवाचित्वे कथं ततोऽन्यत्र जगति शब्दप्रयोगरूपो वा हानादिरूपो वा व्यवहारो युज्यते, न कथमपीत्यर्थः । तथा च तल्लोपप्रसङ्गात्, तस्य चानिष्टत्वात, परमात्मैव मुख्यतः सर्वशब्दवाच्य इत्यवधारणाऽनुपपत्तिरिति भावः ॥

( २ ) जगद्वाचित्वाय समाकर्षाज्जगद्वाचित्वादित्यागामिपदान्वयाभिप्रायेण सूत्रं व्याचष्टे—परमात्मेति । 'अन्यत्र' जगति । समाकृष्येत्यनेन सूत्रे पञ्चमी ल्यब्लोपनिमित्तेति सूचितम् । व्यवह्रियन्त इत्यनन्तरं यत इति शेषः । अस्यातो न विरोध इति अनुवृत्तसाध्येनान्वयः । व्यवह्रियन्त इत्यनेनान्यत्र समाकर्षे प्रयोजनमुक्तं भवति । अनेन—न सर्वशब्दानां परमात्मवाचित्वेऽपि अन्यत्र व्यवहारविरोधः । कुतः ? तत्रापि रूढ्यादेः अङ्गीकारादिति शेषः । तथा सति उभयोर्मुख्यवाच्यत्वेन साम्यलक्षणविरोधः प्राप्त इति न वाच्यम् । उभयत्रान्योन्यनिरपेक्षवृत्त्यभावात् । सोऽपि कुतः ? जगद्वाचित्वाय 'समाकर्षात्' जगद्वाचित्वात् । यतः स्वतो मुख्यवृत्त्या परमात्मैकवाचिनः शब्दाः अन्यत्र व्यवह्रियन्ते, अतः तदर्थं परमात्मसम्बन्धात्समाकृष्य ततस्तान् सङ्गृह्य तेषां अन्यत्र रूढत्वेन सङ्केतितत्वात् परममुख्यवृत्तिभिन्नकेवलमुख्यवृत्तियुक्तत्वेन अङ्गीकृतत्वात् इति सूत्रयोजना सूचिता भवति ॥

( ३ ) कुत एतत् मुख्यवृत्तौ द्वैविध्यं कल्प्यते, उभयत्राक्षादिशब्दवदन्योन्यनिरपेक्षतयैव कुतो न शब्दवृत्तिरङ्गीक्रियत इत्यतः स्मृतेरेवेत्याह—परस्येति ॥ सततं वाचका इति सम्बन्धः । अपिः समुच्चये । परमात्मशब्दत्वाविशेषादप्रथादिशब्दानां उदकादौ प्रयोगापत्तिरित्यत आह—लोकेति । हानादिसूक्तादिरूपलौकिकवैदिकव्यवहारसिद्ध्यनुसारत इत्यर्थः । तथा च 'सततं' अनादिकालतोऽविच्छेदेन स्वभावतः 'परस्य' परमात्मनो 'वाचकाः' वाचकतया स्थिताः सर्वे शब्दाः 'समाकृष्य' परमात्मसम्बन्धात्ततः सङ्गृह्य लौकिकवैदिकव्यवहारसिद्धिमनुसृत्य तदर्थं 'इतरेषु' पदार्थेष्वपि वैदिकैः

(४) तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः—

(५) सू—ॐ ॥ जगद्वाचित्वात् ॥ ॐ ॥ १७ ॥
जगति व्यवहारो लोकस्य न तु परमात्मनि तथा, अतो जगति प्रसिद्धिः शब्दानाम् ॥ १७ ॥

(६) सू—ॐ ॥ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ ॐ ॥ १८ ॥

---

'व्यवह्रियन्ते' केवलरूढत्वेन अङ्गीक्रियन्त इति स्मृत्यर्थः। पाद्म इत्यनन्तरं उक्तत्वादिति शेषः। अस्योभयत्र नान्योन्यनिरपेक्षैव शब्दवृत्तिरित्यवतारिकालब्धसाध्येनान्वयः ॥

(४) शङ्कते—तर्हीति ॥ परमात्मवाचिन इत्याद्यत्रापि सम्बध्यते। यदीति लभ्यते। तथा च यदि मुख्यतः परमात्मवाचिनः शब्दाः ततोऽन्यत्र समाकृष्य प्रयुज्यन्ते, तर्हि तेषां मुख्यार्थे परमात्मन्येव वाचकत्वप्रसिद्धिस्स्यात्। तथा च तेषां शब्दानां कथममुख्यार्थे जगति वाचकत्वप्रसिद्धिः स्यात्। न कथमपीत्यर्थः। तथा च प्रसिद्ध्यन्यथाऽनुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वं कल्प्यमिति भावः। प्रसिद्धिरित्यनन्तरं 'स्यादित्यत आह' इति शेषः ॥

(५) एतच्छङ्कापरिहारत्वेन सूत्रं पठित्वा व्याचष्टे—जगदिति ॥ व्यवहारपदं शब्दप्रयोगस्य करणव्युत्पत्त्या शब्दशक्तिग्रहस्य च वाचकम्। अनेन जगद्वाचित्वादित्यस्य आवृत्तिस्सूचिता। तुशब्दोऽवधारणे। तथाशब्द उपमायाम्। अत इत्युक्तेर्यत इति लभ्यते। जगति प्रसिद्धिरिति शेषोक्त्या साध्यं सूचितम्। जगद्वाचित्वमित्यस्यार्थान्तरं चैतत्। तथा च यतो बालानां चित्रलिखितसिंहादाविव 'लोकस्य' लोकानामनवगतमुख्यार्थानां जनानां जगति व्यवहारो बहुलश्शब्दप्रयोगोऽस्ति न तथा परमात्मनि। अतो 'जगद्वाचित्वं' जगत्येव व्यवहारः व्युत्पत्तिः न परमात्मनि। यत एवमतः शब्दानां 'जगद्वाचित्वं' जगति वाचकत्वप्रसिद्धिः जगद्वाचित्वव्यवहारो युज्यते इति योजना। अनेन—यतो 'जगद्वाचित्वात्' जगति लोकस्य व्यवहारात् 'जगद्वाचित्वात्' जगद्वाचित्वज्ञानात् 'जगद्वाचित्वं' जगति प्रसिद्धिः शब्दानां युज्यते। अतो न सिद्धान्ते तद्विरोध इति सूत्रयोजना दर्शिता ॥

(६) विष्णोरेव मुख्यतः शब्दार्थत्वमाक्षिप्य समादधत्सूत्रमुपन्य

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तं तज्जीवमुख्यप्राणयोर्लिङ्गम् । ' अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति ' ( छा. ६-११-२. ) ' वायुना हिं सर्वे लोका नेनीयन्ते ' इत्यादिश्रुतिभ्य इति चेत्—

( ७ ) न, उपासात्रैविध्यादिति व्याख्यातत्वात् ॥ १८ ॥

स्याक्षेपांशं तावद्व्याचष्टे–जीवेति ॥ सर्वेषामित्यनुवर्तते । तच्छब्दवाच्यत्वमित्यावर्तते । तत् लिङ्गमित्यन्वयः । जीवमुख्यप्राणयोरिति षष्ठीसप्तम्यौ तन्त्रेणोपात्ते । आदिशब्देन ' वायुना वै गौतम सूत्रेण प्रबद्धः ' (बृ.५-७-२. ) इत्यादिकं गृह्यते । तथा च सर्वेषां 'तदधीनत्वात्' परमात्माधीनत्वात्तस्यैव मुख्यतस्तच्छब्दवाच्यत्वमिति 'तदधीनत्वात्' इति सूत्रे विष्णोरव्यक्तादिशब्दवाच्यत्वे यत्सर्वस्य तदधीनत्वाख्यं निमित्तमुक्तम्, 'तल्लिङ्गं' तन्निमित्तं यतो जीवमुख्यप्राणयोरास्ति, अतो जीवमुख्यप्राणयोरपि मुख्यतस्तच्छब्दवाच्यत्वं स्यात् । न च तयोस्तस्यासिद्धिः। यतः ' अस्य ' इत्यादिश्रुतिभ्यो जीवमुख्यप्राणयोस्तल्लिङ्गमवगम्यतेऽत इति योजना । 'जीवः' अनिरुद्धाख्यः परमात्मा ' अस्य ' जीववृक्षस्य यदैकां शाखां ' जहाति ' त्यजति । ' अथ' तदा ' सा ' शाखा शुष्यतीति छन्दोगश्रुत्यर्थः । ' वायुना ' मुख्यप्राणेन ' सर्वे लोकाः ' जनाः ' नेनीयन्ते ' स्वस्वकर्मसु भृशं अतिशयेन प्रेर्यन्ते । ऊर्ध्वे लोकं वा भृशं नीयन्ते इति श्रुत्यन्तरस्यार्थः । पूर्वपक्षी त्वाद्या श्रुतिः पृथिव्याद्यभिमानिजीवपरा । द्वितीया तु मुख्यप्राणपरेत्याह । आदिशब्दोपात्तश्रुत्यपेक्षया बहुवचनम् ॥

( ७ ) नञोऽध्याहारेण परिहारांशं व्याख्याति—नेति ॥ नोक्तलिङ्गेन तयोर्मुख्यतस्तच्छब्दवाच्यत्वं कल्प्यमित्यर्थः । कुतो नेत्यतस्तत्र हेतुतया यतस्तदुक्तमित्येतद्व्याचष्टे—उपासेति । इतीति त्रिवारोक्त्या सूत्रे इतिशब्द आवर्तनीय इति सूचितम् । अत एव टीकायां ' यद्यत् ' इति गीतास्मृतिग्राहकतयाऽपीति शब्दो योजितः। विपरिणतं ' इत्यादि ' इत्येतदत्रापि संयोज्यम् । तथा च ' उपासात्रैविध्यात ' इत्यनेन सूत्रखण्डेनान्यलिङ्गाभिधायकत्वेन प्रतीयमानानामित्यादिश्रुतीनां तदन्तर्यामिभगवत्सम्बन्धितया व्याख्यातत्वादित्यर्थः । यद्वा–नेत्येतदपि पूर्वसूत्रान्तर्गतमेव, न त्वध्याहृतम् । तथात्वेऽस्येति शेषः । तथा च ' नोपासा त्रैविध्यात् ' इत्यनेन ' अस्य ' चोद्यस्य सहेतुकं प्र

(८) सू—ॐ ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम
पि चैवमेके ॥ ॐ ॥ १९ ॥

परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः ।

(९) 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ।

त्याख्यातत्वादित्यर्थः । अस्य 'नेदं चोद्यं युक्तम्' इत्यावृत्तसाध्येनान्वयः । तथा च तन्न्यायेन तल्लिङ्गवतोऽन्तर्यामिण एव मुख्यवाच्यत्वं भवेदिति भावः । अनेन—'अस्य' इत्यादिश्रुतिभ्योऽवगतात् 'जीवमुख्यप्राणलिङ्गात्' सर्वस्य तदधीनत्वाख्यान्निमित्ताज्जीवमुख्यप्राणयोरपि तत्तच्छब्दमुख्यवाच्यत्वं स्यादिति चेत्—न, कुतः? यतः 'उपासात्रैविध्यात्' इत्यनेन तत्तल्लिङ्गाभिधायि श्रुतिजातं 'व्याख्यातम्' अन्तर्यामिभगवद्विषयतया व्याकृतम्,

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥

इति स्मृत्या च 'व्याख्यातम्' तत् लिङ्गजातं भगवत्सम्बन्धितया स्पष्टमभिहितम्, अत इति सूत्रार्थ उक्तो भवति ॥

(८) यदुक्तं सर्वशब्दाः अन्यत्र समाकृष्य व्यवह्रियन्ते इति, न तद्युक्तम् । लौकिकानां शब्दानां अन्यत्र व्यवहारार्थं समाकर्षेऽपि वैदिकानां कर्मादौ समाकर्षे वाचकतया सङ्ग्रहे प्रयोजनाभावात् । न च कर्मदेवतादिसिद्धिरेव प्रयोजनम् । वेदानां जीवमोक्षार्थमेव प्रवृत्तत्वेन काम्यफलार्थमप्रवृत्तेः । मोक्षस्य च वेदानुक्तानन्तगुणवद्भगवत्सर्वोत्कर्षज्ञानादेव सिद्धेः, अन्यज्ञानस्य व्यर्थत्वात् । अतो वैदिकानां शब्दानां मुमुक्षुं प्रत्यन्यत्र समाकर्षस्य निष्फलत्वान्मुख्यत एवान्यवाचकत्वं तेषामौत्पत्तिकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अन्यार्थमिति ॥ परमात्मेत्यनेनान्यपदं जगदन्येश्वरपरम् । तेन तज्ज्ञानं ग्राह्यमिति सूचितम् । सूत्रे जगद्वाचित्वमिति विपरिणतपदानुवृत्तिमभिप्रेत्य तत्तात्पर्यतो व्याचष्टे—कर्मादिकमिति । 'कर्म' ज्योतिष्टोमादि । रमाजशङ्करादिकमादिपदार्थः । वदति वेद इति जैमिनिर्मन्यते इति शेषः । न केवलं परमात्मानम्, किन्तु कर्मादिकमपीति समुच्चयेऽपिशब्दः । अनेन तुशब्दः अप्यर्थतया व्याख्यातः ॥

(९) ननु वेदोदितकर्मादिज्ञानस्य परमात्मज्ञानार्थत्वं कुतो ज्ञायत इत्यतः प्रवृत्तं प्रश्नेति सूत्रपदं द्विवचनगर्भद्वन्द्वसमासरूपमनेकप्र

तस्मै स होवाच द्वे विद्ये वेदितव्ये ' ( मु. १-१. )
( १० ) ' कथं नु भगवस्स आदेशो भवतीति । यथा सोम्यै

अप्रतिवचनसूचकमित्याशयेन तान्युदाहरति—कस्मिन्निति ॥ ' कस्मिन् ' इति चाथर्वणे श्रुतम् । अस्यार्थः—हे ' भगवः ' भगवन् ' नु ' इदानीं ' सर्वमिदं ' कर्मादिकं कस्मिन् विज्ञाते विज्ञातं भवति । कर्मादिज्ञानमात्रस्य निष्फलत्वात् विज्ञातस्य कर्मादेः फलं कस्मिन् ज्ञाते सति भवतीति प्रश्नाशयः । श्रुतिगतेतिशब्दस्य इति प्रकारेण शौनकेनाङ्गिरसं प्रति प्रश्ने कृत इत्यर्थः । एवंपृष्टोऽङ्गिराः अपरविद्यया सर्वं कर्मादि विज्ञातं भवति । विज्ञातं च परविद्याविषयपरमात्मज्ञानेन सफलं भवति इत्युत्तरं ' तदेतत ' इत्यादिनाऽभिधास्यन् तदुपोद्धातत्वेन द्विविधा विद्या प्रथमं सर्वैर्ज्ञातव्येत्याशयेन प्रत्यवोचदित्याह-- तस्मा इति । शौनकायेत्यर्थः । 'सः ' अङ्गिराः । हेति हर्षे । प्रमाणप्रसिद्धौ वा ॥

( १० ) छान्दोग्ये हि ' येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति ' इति वाक्येन ' येन ' परमात्मना ज्ञातेन यस्मिन् परमात्मनि ज्ञाते सति ' अविज्ञातं ' कर्मादिकमपि विज्ञातं भवति, तज्ज्ञानफलावाप्तेः । एवं येन परेण यस्मिन् परमात्मन्यविज्ञाते सति ज्ञातमपि कर्मादिकमविज्ञातं भवति, तत्फलानवाप्तेः । तस्माद्यस्मिन् ज्ञात एव ज्ञातं तत्सफलं भवति । परमात्मज्ञानादौ सति अन्यदज्ञाताद्यपि ज्ञातादिवद्भवतीति वा । ' तमादेशं ' भगवन्तमप्राक्ष्यः? ' उत ' किं प्रायो नाप्राक्ष्यः? इत्युद्दालकेनोक्तः श्वेतकेतुर्गूढाभिसन्धिस्तं पृच्छति—कथमिति ॥ हे ' भगवो ' भगवन् पूज्योद्दालक यस्मिन् परमात्मनि ज्ञात एव सर्वं कर्मादिकं ज्ञातमपि सफलं स्यान्नान्यथा, 'स आदेशः' तद्विषय उपदेशः ' कथं ' केन प्रकारेणोपपन्नो ' भवति ' स्यात् । तं प्रकारं अहं 'नु ' इदानीं कथं विजानीयामित्यर्थः । अत्रापीतिशब्दः श्रुतिस्थ एव प्रश्नसमाप्तिद्योतकः । इति पृष्टः पितोद्दालकः पुत्राशयं जानमानः स्वाशयोद्धाटनेन तं प्रतिवक्ति—यथेति । हे 'सोम्य ' भक्तिज्ञानादिलक्षणसोमार्ह 'यथैकेन मृत्पिण्डेन' ज्ञातेन तत्सादृश्यनिमित्तादज्ञातमपि 'सर्वं मृण्मयं' घटादिकं 'विज्ञातं स्यात्' ज्ञातफलं भवति । विशेषज्ञानाख्यफलवद्भवतीति यावत् । कथम्? मृत्त्वगन्धवद्द्रव्यत्वादिना मृत्पिण्डसादृश्याख्यप्रकारविशेषज्ञानात् । एवं परमात्मनि ज्ञाते सर्वं

केन मृत्पिण्डेन ' ( छा. ६-१. ) इत्यादिप्रश्नव्याख्या

कर्मादि ज्ञातफलं भवति तत्सदृशत्वेन विशेषज्ञानादित्यर्थः । अस्या भिप्रायस्तु—यथा घटादिव्युत्पन्नमृदादिशब्दैः पुंभिः मृत्पिण्डादौ मृदादिशब्दार्थत्वेन विज्ञाते पुनर्घटादिसर्वमृण्मयादि मृत्पिण्डादिसदृशत्वेन विशेषेण ज्ञातं स्यात्, एवं जडजीवादिव्युत्पन्नसच्चिदादिशब्दैः पुंभिर्ब्रह्मणि सच्चिदादिशब्दमुख्यार्थत्वेन विज्ञाते पुनः जडजीवात्मकं जगद्ब्रह्मात्यल्पसदृशत्वेन विशेषेण ज्ञायते , न त्वतिसदृशत्वेनेति सत्तर्कदीपावलीवाक्यादवगन्तव्यः । अनेनैकविज्ञानेन सर्वविज्ञानं सादृश्याख्यप्रकारेणोपपन्नमित्युक्तं भवति । यद्यपि

यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृण्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ॥
अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
विज्ञायते . . . .

इति छान्दोग्यभाष्ये, तथा 'येनाश्रुतं श्रुतं भवति' इत्येतत्प्राधान्यसादृश्याभ्यामित्येतत्कुत इति चेत् एवं सादृश्यादेकगोज्ञानाद्गवान्तरज्ञानमुदाहर्तव्यमिति तत्त्वोद्योतटीकायाम्, यथैकस्यां स्त्रीव्यक्तौ स्त्रीशब्दवाच्यत्वेन रूपेण ज्ञातायां स्तनकेशवती स्त्री स्यादित्युक्तसादृश्यादन्याऽपि स्त्रीव्यक्तिर्विनैवोपदेशेन यथा ज्ञायते, तथा भगवति सत्यत्वेन ज्ञाते प्रामाणिकत्वसादृश्याज्जगदपि तथा ज्ञायते , ज्ञानानन्दरूपेण ज्ञाते चेतनत्वसादृश्याज्जीवा अपि तथा ज्ञायन्त इति विष्णुतत्त्वनिर्णयटीकायां च सादृश्यस्यैकविज्ञानेन सर्वविज्ञाने निमित्तता प्रतीयते , न तु प्रकारता । तथा गन्धवद्द्रव्यत्वादिनैकमृत्पिण्डविज्ञानाद्गन्धवद्द्रव्यत्वादिना सादृश्यात्सर्वे मृण्मया ज्ञायन्ते तथेति व्यासतीर्थीयेऽपि निमित्ततैव प्रतीयते । तथाऽपि तं प्रकारं कथमहं जानीयामिति टीकायां मृत्पिण्डादिदृष्टान्तत्रयं सादृश्यविषयमिति, सुधायां चोक्तरीत्या प्रकारभूतस्यापि निमित्तत्वसम्भवान्न तेषां विरोधशङ्कयः । अतएव

यथा चैकैकमृत्पिण्डज्ञानादेः सदृशत्वतः ।
मृण्मयं तदकार्यं च ज्ञातं मृदिति वै भवेत् ॥

इति गीतातात्पर्यनिर्णये निमित्तता प्रकारता चोक्ता । न चानेनान्यज्ञानस्य परमात्मज्ञानार्थत्वं कथमुक्तमिति वाच्यम् । यतस्तत्प्रकारश्चन्द्रिकायां—एकविज्ञाने सर्वविज्ञाने श्रुत्युक्तो मृत्पिण्डमृण्मयादिदृष्टा

नाभ्याम् ।

न्तस्तु यथाऽनेकमृण्मयज्ञानं तत्कारणत्वेन मृत्पिण्डस्य ज्ञानार्थं चेत्स फलम् । कुतः? एतावता मृत्पिण्डेन एतावन्मृन्मयं भवतीति विशेष ज्ञानात् अपेक्षितमृण्मयसम्पादनसम्भवात् , न तु स्वरूपेण । एवं कर्म देवतादिविज्ञानमपि तदाश्रयत्वतत्कारणत्वतन्नियन्तृत्वादिप्रकारैर्भगव ज्ज्ञानार्थं चेत्सफलम्, नान्यथेत्यभिप्रायेणेत्यनेनोक्तः । तथा मुमुक्षुणा भगवत्सृष्टमेवैतत्कर्मादीत्यादिरूपेणैव ज्ञातव्यमिति विष्णुतत्त्वनिर्णयटीकायां चोक्तः । अत्र यद्यपि सत्तर्कदीपावल्यां तत्त्वप्रदीपे च आदिश्यत इत्यादेशः परमात्मेति व्युत्पत्तिमाश्रित्य 'कथं नु भगवः स आदेशो भवति' (छां.६-१-४.) इति प्रश्नेऽपि 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इति प्राधान्येनोक्त आदेशस्तच्छब्देन परामृश्यत इत्युक्त्वा सर्वान् वेदानधीतवानेव केवलं, न त्वादेशं तन्मुख्यादेशं सकलकल्याणगुणाकरं तं पृष्टवान् प्रायो यतः स्तब्धोऽसि । यस्मिन् श्रुते मते ज्ञाते विज्ञातेऽन्यदश्रुतममतमविज्ञातमपि तदधीनत्वेन श्रुतं मतं विज्ञातं दृश्यमानमतिनीचत्वेन विज्ञायमानं त्वदादिकं तमित्युक्तः श्वेतकेतुः पितरं पृच्छति—कथं न्विति । इत्यवतार्य कर्मादिषु वेदैकैकदेशैरुच्यमानेषु आसमन्तात्स एव सर्ववेदादेश्यो भवतीति कथं केन प्रकारेण जानीयामिति श्रुत्यर्थोक्तेः, तथा 'प्रायो नारायणं देवं नैव त्वं पृष्टवानसि' इति गीतातात्पर्योदाहृतश्रुतौ, आदिश्यत इत्यादेशो नारायण इति न्यायदीपिकायां च क्रियाकर्मपरत्वोक्तेः, टीकायां चादेशशब्दस्योपदेशार्थत्वमाश्रित्य यस्मिन् परमात्मनीत्यादिना येनाश्रुतमित्यन्वयव्यतिरेकोक्त्या लब्धार्थमनूद्य अत्र यच्छब्देन उक्तप्रधानपरमात्मपरामर्शिप्रश्नवाक्यस्थतच्छब्दस्य तद्वाक्यस्थादेशशब्दसामानाधिकरण्याय तद्विषयकतया अर्थाभिधानाद्विरोधो भाति । तथाऽपि उभयोः तात्पर्यत एकार्थत्वादविरोधः। इत्यादीत्यादिशब्देन 'सर्वं मृण्मयं विज्ञातं स्याद्यथा सोम्यैकेन लोहमणिना' इत्यादिवाक्यं गृह्यते । इत्यादिप्रश्नव्याख्यानाभ्यामित्यस्य 'द्वे विद्ये वेदितव्ये' (मुं.१-१-४.) इत्यादिप्रश्नव्याख्यानाभ्यां 'यथा सोम्यैकेन' इत्यादिप्रश्नव्याख्यानाभ्यामित्युभयत्रान्वयः । तत्र पूर्वान्विता।दिशब्देन 'इति ह स्म यद्ब्रह्मविदो वदन्ति' (मुं.१-१-४.) इत्यादिकं गृह्यते । अनेन सौत्रप्रश्नव्याख्यानशब्दौ अनेकप्रश्नप्रतिवचनपराविति सूचितं भवति ॥

( ११ ) एवमपि चैके पठन्ति 'यस्तन्न वेद किमृचा करिष्यति' ( ऋ. १-१६४-३९. ) इति ॥ १९ ॥

( ११ ) अपि च न केवलमर्थान्यकात्प्रश्नव्याख्यानरूपात् लिङ्गादेवमन्यज्ञानस्य परमात्मज्ञानार्थत्वसिद्धिः, किन्तु स्पष्टं मुखतोऽप्येवमेके ऋग्यजुश्शाखिनः पठन्तीति प्रतिपादयन्तं 'अपि चैवमेके' इति सूत्रखण्डं व्याचष्टे—एवमिति । अपीति निपातः साधकान्तरसमुच्चये अन्यज्ञानस्य परमात्मज्ञानार्थत्वप्रकारस्य अव्यवहितप्रकृतस्यैवंशब्देन परामर्श इति सूचनाय सूत्रापेक्षया व्यत्यासेनानुवादः कृतः । पठन्तीति शेषोक्तिः । तथा च न केवलमर्थादेव सिद्ध्यति, किन्तु 'अपि' मुखतोऽप्येवमेके शाखिनः पठन्तीत्यर्थः । चशब्दोऽन्यसमुच्चायकः । उक्तं हि तत्त्वप्रदीपे—चकारादेतदुपसंहर्तव्यम् । एतदर्थं सृष्ट्यादिकमप्यधीयते 'सप्तार्धगर्भाः' (ऋ.१-१६४-३६.) इत्यादीति । 'एतदर्थं' अन्यज्ञानस्य परमात्मज्ञानार्थत्वोपपादकप्राधान्यज्ञानार्थमित्यर्थः । केचित्तु अपि चेति टीकानुसारात्सूत्रभाष्ययोरपि चेत्यखण्डो निपात इत्याहुः । कासावेकैः पठिता श्रुतिरित्यतस्तामुदाहरति–य इति । इति पठन्तीति सम्बन्धः । अतोऽप्युक्तं युक्तमिति वाक्यशेषेणास्यान्वयः । ब्रह्मयज्ञफलं महदुक्त्वेदमुच्यते—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

इति । अक्षर इति तादर्थ्ये सप्तमी । सर्वे वदन्तीति शेषः । ऋच इत्यशेषवेदोपलक्षकम् । अक्षर इति विषयेण विषयि ज्ञानमुपलक्ष्यते । तथा च तदक्षरं विष्ण्वाख्यं ब्रह्म यः सर्ववेदमुख्यार्थत्वेन न वेद, किन्तु इतरामरसाधारणमेव वेद, सः 'ऋचा' कर्मादिपरैर्वेदैर्ब्रह्मयज्ञादिरूपेणाधीतैः किं करिष्यति न किमपीति भावः । अधीतैरित्युपलक्षणम् । अध्यापितैरधिगतार्थैर्नियमितार्थैरनुष्ठितार्थैरनुष्ठापितार्थैर्वेति तत्त्वप्रदीपोक्तमपि ग्राह्यम् । कुतः ? केवलमितरविषयैरधीतैर्वेदैः प्रयोजनाभावो यतः । सर्वा 'ऋचो' ब्राह्मणेतिहासादिसहिताः सर्वे वेदाः 'परमे' सर्वोत्तमे 'व्योमन्' व्योम्नि व्याप्ते अच्छेद्यत्वादिनाव्योमनिभे वा चतुर्विधनाशराहित्यात् 'अक्षरे' विष्णौ तज्ज्ञानार्थमेव सर्वं कर्मदेवतादिकं वदन्ति । तद्वेदनमेव हि तत्प्रयोजनमुत्कृष्टफलत्वादिति भावः । एतदपि कुतः ? यस्मात् 'यस्मिन्' ब्रह्मणि 'विश्वे' सर्वे दे

( १२ ) सू—ॐ ॥ वाक्यान्वयात् ॥ ॐ ॥ २० ॥

वा 'अधिनिषेदुः' तदाधारा वर्तन्ते । एवं व्यतिरेकं सहेतुकमुक्त्वाऽन्वयमाह—य इति । इत् एवमित्यें। च पुनरेवमुक्तप्रकारेण 'तत्' अक्षरं 'विदुः' जानन्ति 'त इमे' प्रकृता देवाः 'समासते' सम्यगासते सङ्कल्पमात्रसिद्धयथेष्टभोगाः सन्तः परमात्मानं प्रविशन्तीत्यर्थः । सूत्रे तु शब्दोऽप्यर्थः । जगद्वाचित्वमिति समाकर्षादिति चानुवर्तते । शब्दानामिति शेषः । तथा च वैदिकशब्दानां न केवलं परमात्मवाचित्वं, अपि तु जगद्वाचित्वमपि । न च तेन मुमुक्षोः प्रयोजनाभावः । यतः समाकर्षेण वेदानां कर्मादिजगद्वाचित्वं तज्ज्ञानद्वाराऽन्यार्थं परमात्मज्ञानार्थं भवतीति जैमिनिराचार्यो मन्यते। न च कर्मादिज्ञानस्य परमात्मज्ञानार्थत्वासिद्धिः । 'कस्मिन् भगवो. .द्वे विद्ये' (मुं.१-१-३,४.) 'कथं नु भगवो. .यथा सोम्य' इत्यादिप्रश्नव्याख्यानरूपलिङ्गाभ्यां तत्सिद्धेः। अपि चैवमन्यज्ञानस्य परमात्मज्ञानार्थत्वमेके शाखिनः स्पष्टं मुखतः पठन्ति 'यस्तं न वेद' इत्यतोऽपीति सूत्रार्थः॥

( १२ ) न परमात्मज्ञानार्थं कर्मादिकं वेदेन वक्तव्यम् । अन्यदनुक्त्वा वेदेन परमात्ममात्रकथनेऽपि तज्ज्ञानसम्भवात् । न च व्युत्पत्त्यनुपपत्तिः। ज्योतिष्टोमादिशब्दानां विष्णौ रूढेरभावात् । योगस्य च ज्योतिष्टोमेनेति पदावयवानामप्यन्यपरत्वानभ्युपगमेऽयोगादिति वाच्यम् । खण्डपदमात्रस्य अन्यवाचकत्वाभ्युपगमात् । तथा चान्यकथने प्रयोजनाभावान्न तत्र समाकर्षो युक्त इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—वाक्यान्वयादिति ॥ अप्येवमिति पूर्वसूत्रादनुवृत्ते पदे । न केवलं पदानामित्यपेरर्थः । अन्यस्यापि वाच्यत्वाभ्युपगम एवेत्येवंशब्दार्थः । 'अन्वयः' संसर्गः । युज्यत इत्यनेन अन्वयपदं तद्योगोपलक्षकमित्युक्तं भवति । अन्यावचने कुतो न वाक्यान्वयो युज्यत इत्यतः वाक्यान्वयस्वरूपं विशदयति–पृथक्पृथगिति। स्वार्थेषु वाचकतया स्थितस्येत्यर्थः वाक्यस्येत्यस्य विशेषणमेतत्। अपिः यद्यपितथापीत्यर्थे । परमात्मनेत्यस्यान्वयपदेनान्वयः । अन्यपरवाक्यस्येश्वरान्वयं विना मुमुक्षुं प्रति नैराकांक्ष्यलक्षणपर्यवसानस्य असम्भवेन सोऽप्यावश्यक इति भावः। यत इति विशेषणस्य हेतुवाक्यस्य शब्दानां अन्यार्थं समाकर्षाज्जगद्वाचित्वं युक्तमेवेति प्रकृतसाध्येनान्वयः। अनेन—वैदिकशब्दानामन्यार्थं जगद्वाचित्वं युक्तमेव । कुतः? एवं सत्यन्य

वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थित

स्यापि वाच्यत्वाभ्युपगमे न केवलं स्वरवर्णपदानां ब्रह्मकाण्डस्य च, किन्तु पृथक्पृथगर्थेषु स्वस्वार्थेषु वाचकतया स्थितस्य अन्यपरत्वेन सिद्धस्यापि कर्मदेवतादिवेदभागरूपवाक्यस्यापि परमात्मनाऽन्वयात्। प्रयाजादिवाक्यस्य अवान्तरवाक्यस्यैव सतो दर्शपूर्णमासवाक्यैकवाक्यतावत्कर्मादौ अवान्तरवाक्यस्यैव सतः परमात्मपरवाक्यैकवाक्यतारूपान्वययोगादन्ततस्तत्परत्वोपपत्तेः। अन्यथा तदयोगात्। अतो वाक्यान्वयात्तमपेक्ष्य तत्सिद्ध्यर्थं शब्दानामन्यवाचित्वं युक्तमेवेति सूत्रार्थ उक्तो भवति। विस्तृतश्चायं पृथक्स्थितस्यापि वेदस्य परमात्मनाऽन्वयप्रकारो विष्णुतत्त्वनिर्णयटीकायां सुधायां च। अथानेनैषां वेदवाक्यानां योजनां सूचयति। यो हि सात्विकप्रकृतिर्लोकप्रवादात्कार्यत्वादि लिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशान्नान्यदगणयन् प्रवर्तते। तं प्रत्याप्तो बन्धुरिवायं वेदस्तत्स्वरूपं स्वप्रधानमेव प्रतिपादयति 'विज्ञानमानन्दं ब्रह्म' (बृ.उ.३-९-२८.) इत्यादिः। ततो वाक्यार्थज्ञानात् अवाप्तपरमानन्दः तत्साक्षात्कारं कामयते। तं प्रति तदुपासना विधीयते। सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः प्रवर्तन्ते। इत्येवं समस्तो वेदः परमेश्वरस्वरूपज्ञापन एव पर्यवसितः। अथ वा—शरीरेन्द्रियान्तःकरणादि सन्निधानेन स्वात्मनो विविधदुःखं पश्यन्निष्कण्टकं च सुखमलभमानोऽयं संशेते किमिदं दुःखादिकं शरीरादिसम्बन्धनिमित्तमेव, उत स्वाभाविकमिति। तं प्रति वेदः प्रवर्तते 'अतत्त्वमसि' इत्यादिः। निर्दुःखानन्दस्वभावः स एव, न त्वमसि, किन्त्वीश्वराधीनाविद्याद्युपस्थापितशरीरादिनिमित्तेनान्यथारूपेणोपेत इति। अथ पुनरसौ जिज्ञासते केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितस्स्यामिति। तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते वेदेन। कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदर्थं श्रवणादिकं तदङ्गतया कर्मादिकं च विधीयते इत्येवं समस्तस्यापि वेदस्य परमेश्वरस्वरूप एव पर्यवसानमिति। सत्तर्कदीपावलीरीत्या भाष्यस्य योजनान्तरं तु—एवमपि ईळे आयाहीत्यादीनामर्थान्तरपरत्वेऽपि अग्नि-इन्द्रादिशब्दानां यदा भगवद्वाचित्वं तदा पृथक्स्थितस्यैव

स्यापि परमात्मना ॥ २० ॥

( १३ ) सू—ॐ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ ॐ ॥ २१ ॥

'नान्यः पन्था अयनाय विद्यते' ( तै.आ. ३-१३. )

इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यते इत्या

---

'अग्निमीळे' 'वायवायाहि' इत्यादिवाक्यस्यापि परमात्मनाऽन्वयो युज्यते, न केवलं पदाक्षरादेः । यदा तु तेषां अग्निवाय्वादिवाचित्वं तदा पृथक्स्थितस्यैव वाक्यस्यापि परमात्मनाऽन्वयो युज्यत इति। अस्मिन् पक्षे अपृथक्पृथगिति भाष्ये पदच्छेदः। तत्त्वप्रदीपरीत्या योजनान्तरम्—एवमन्यस्यापि वाक्यत्वाङ्गीकारे यद्यपि पदानामेकैकशो नान्वयः परमात्मना। तथाऽपि वाक्यस्यान्वयो युज्यते। पृथक्पृथक्स्थितस्यापि स्वं स्वमवान्तरार्थमुक्त्वा स्थितस्य परिपूर्णस्यापि अपूर्णफलत्वान्मिश्रफलत्वाच्च अपरकर्मोत्पत्त्यादिना पारतन्त्र्याद्देवादिप्रपञ्चोऽप्यप्रधानः। तस्मात्सर्वतः परत्वेनात्मविज्ञानं कर्तव्यमिति वाक्यान्वय इति। अस्मिन् पक्षे अपिशब्दौ यद्यपितथापीत्यर्थौ। न च परमात्मज्ञानस्यैव प्रयोजनत्वात्तस्य च पदवृत्त्यैव सम्भवात्किं वाक्यान्वये नापीति वाच्यम्। तस्योत्तमाधिकारिव्यतिरिक्ताधिकारिणः प्रति सार्थकत्वात्। अन्यथा अन्यत्र समाकर्षेण वाक्यान्वयं विना प्रतिपदं प्रत्यक्षरं च वेदानां ब्रह्ममात्रपरत्वे 'कश्छन्दसाम्' (ऋ. १०-११४-९.) इति श्रुतेः पदसमन्वयेऽनधिकारिणामुत्तमेतराधिकारिणां वेदाद्ब्रह्मज्ञानस्यैव असम्भवेन तज्जिज्ञासायां विमुखत्वप्रसङ्गात् ॥

( १३ ) यदन्यवचनस्यापि परमात्मज्ञानार्थत्वमुक्तं तत्केन प्रकारेणेत्याकांक्षायां तत्प्रदर्शनाय सूत्रमुपन्यस्य व्याचष्टे—प्रतिज्ञेति ॥ सिद्धेरिति पञ्चमी। वेदेन मन्यते इति शेषः। इतिशब्दोऽध्याहार्य इति सूचनाय इतीत्युक्तिः। तथा च 'नान्यः पन्थाः' इत्यनेन प्रतिज्ञातस्य ज्ञानमेव मोक्षसाधनं नान्यदित्यर्थस्य 'सिद्धेः' सिद्धिमपेक्ष्य तदर्थं 'लिङ्गत्वेन' कुतो ज्ञानमेव मोक्षसाधनं नान्यदित्याकांक्षायां हेतुत्वेन सविस्तरं सपरिकरं कर्मादिकमुच्यते वेदेनेत्याश्मरथ्याचार्यो मन्यत इति योजना। कर्मादिकमुच्यते इत्यनेन अत्रापि जगद्वाचित्वमनुषञ्जनीयमिति सूचितम्। कथमुक्तप्रतिज्ञायां कर्मादिवचनं हेतुरित्यत आह—यस्मादिति। एवमित्यनेन सूत्रे 'अपिचैवम्' इत्यतः श्रुत्युक्तप्रकारपरामर्शकं एवमिति पदमनुवर्तनीयमिति सूचितम्। तथा च यस्मा

द्ध्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः प
न्था इति ॥ २१ ॥

( १४ ) सू—ॐ ॥ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ ॐ ॥२२॥

उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसा

---

देवं 'अमृता वाव सोमपा भवति यावदिन्द्रो यावन्मनुः' इत्याद्युक्त प्रकारेण अन्यत्कर्माद्यनित्यफलं विनाशि दुःखसम्भिन्नफलकं तस्मान्न तन्मोक्षसाधनम्, मोक्षस्य दुःखासम्भिन्ननित्यसुखरूपत्वात् । यत एवमतोऽपरोक्षज्ञानान्नान्यः पन्थाः मोक्षायेति प्रतिज्ञासिद्धेर्लिङ्गत्वेन वेदेन कर्मादिकमुच्यत इति एवंशब्दावृत्त्या योजना । न चानेन न प्रकारो दर्शित इति वाच्यम् । क्षुद्रफलार्थिनं प्रति तत्तत्फलाय तत्तत्कर्म विदधतोऽपि कर्मादिवाक्यस्य मुमुक्षुं प्रति कर्मणां क्षुद्रफलकत्वात्तद्धानेनाक्षुद्रफलकं ज्ञानमेवोपादेयमिति । वैराग्यजनकत्वेन प्रकारेण परमात्मज्ञानार्थत्वमित्युक्तयो प्रकारस्य दर्शितत्वात् । अनेन—यस्मादेवं श्रुत्युक्तप्रकारेण अन्यत्कर्माद्येवमनित्यफलमिति सिद्धम्, तस्मान्न तन्मोक्षसाधनम्, तस्य नित्यपुमर्थरूपत्वात् । यत एवमतो मोक्षस्य ज्ञानान्नान्यः पन्था इत्येवं रूपेण कर्मादिवचनं मुमुक्षुं प्रति वैराग्यजननद्वारा नान्यः पन्था इति प्रतिज्ञातार्थसिद्धेर्लिङ्गं हेतुरित्येवं प्रकारेण वेदानां कर्मादिजगद्वाचित्वमित्याश्मरथ्याचार्यो मन्यते इति सूत्रार्थ उक्तो भवति । 'नान्यः पन्थाः' ( तै. आ. ३-१३-१. ) इति श्रुतिस्तु जिज्ञासानये व्याख्याता ॥

( १४ ) प्रकारान्तरेण कर्मादिवचनस्य भगवज्ज्ञानोपयोगं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे—उत्क्रमिष्यत इति ॥ कर्तरि षष्ठ्यन्तपदमनूद्य तस्य तत्त्वप्रदीपरीत्या एष्यदुत्क्रमणस्य तदिच्छादशायां अभावात् लक्षणया संसारादुत्क्रमणेच्छोरित्यर्थ इत्यभिप्रायेण मुमुक्षोरित्याह । ज्ञानाद्बन्धमोक्षमिच्छत इति तदर्थः । यद्वा—मुमुक्षोरिति विशेष्यपदेनाध्याहृतेन संसारादुत्क्रमिष्यत इति विशेषणपदस्य तात्पर्यार्थमाह । सूत्रे कर्मादेरित्यध्याहाराभिप्रायेण भावादित्येतद्व्याचष्टे—कर्मादिनेति । भाव्यमित्यनन्तरं यत इति शेषः । सौत्रैवंशब्दार्थमाह—साधनसाधनत्वेनेति । मोक्षस्य साधनं ज्ञानं, तत्साधनत्वेनान्तःकरणशुद्धिद्वारा तदुत्पत्तौ उपयोगित्वेनेत्यर्थः । अस्य भाव्यमित्यनेन सम्बन्धः । सूत्रे जगद्वाचित्वमित्यस्यानुषङ्गमभिप्रेत्याह—अत इति ॥ मुमु

धनत्वेन अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥

( १५ ) सू—ॐ ॥ अवस्थितेरिति काशकृत्स्नः ॥ ॐ ॥ २३ ॥
सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।

( १६ ) कृष्णद्वैपायनमतादेकदेशमतः परे ।

क्षुणा ज्ञानसाधनत्वेन कर्मादेरप्यवश्यं सम्पाद्यत्वादित्यर्थः । तत्कर्मादिकं वक्ति वेदः परमात्मज्ञानार्थमिति वर्तते । अनेन सूत्रे अन्यार्थमित्यस्यानुवृत्तिः सूचिता । न च कर्मादेः फलश्रुतिविरोधः, तस्याः कर्मणि रुचिजननार्थत्वात् । 'रोचनार्थं फलश्रुतिः' इत्यादेरिति भावः । अनेन—'उत्क्रमिष्यतो' मुमुक्षोः 'एवं' ज्ञानस्येव कर्मादेरप्यन्तःकरणशुद्धिद्वारा मोक्षसाधनभगवज्ज्ञानसाधनत्वेन निमित्तेन 'भावात्' सम्पाद्यत्वाद्वेदानां कर्मादिवाचित्वम् । एवं मोक्षसाधनसाधनत्वेन प्रकारेणान्यार्थं परमात्मज्ञानार्थमिति औडुलोमिराचार्यो मन्यते इति सूत्रार्थ उक्तो भवति ॥

( १५ ) प्रकारान्तरेण कर्मादिवचनस्य ब्रह्मज्ञानोपयोगित्वं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे—अवस्थितेरिति ॥ सर्वं परमात्मनीत्यनेन सूत्रे सर्वस्य जगतः परमात्मनीति पदद्वयाध्याहारः सूचितः । इति वक्तुमित्यनेन अन्यार्थमित्यस्यानुवृत्तिः सूचिता । 'एष सेतुर्विधरणः' (बृ.६-४-२२.) इत्यादावित्ति शेषः । 'तद्वचनं' कर्मादेर्वचनमित्यनेन सूत्रे जगद्वाचित्वमित्यस्यानुषङ्गः सूचितः । इति शब्दस्य द्विर्ग्रहणमावृत्तिं सूचयति । काशकृत्स्न इत्यनन्तरं मन्यत इति शेषः । अनेन—'एष सेतुर्विधरणः' इत्यादौ सर्वस्य परमात्मनि 'अवस्थितेः' अवस्थित्युक्तेः तस्याश्च सर्वाधारत्वेन ज्ञातव्यमिति ज्ञानार्थत्वात् अस्य चाधेयज्ञानं विनाऽयोगात् तदर्थं वेदेन कर्मादिकमुच्यत इति साक्षादेव कथं ब्रह्म ज्ञातव्यमिति ज्ञान्यपेक्षितस्वेतरसर्वाधारत्वरूपप्रकारसमर्पकत्वेन वेदानां कर्मादिजगद्वाचित्वमन्यार्थं परमात्मज्ञानार्थमिति काशकृत्स्नाचार्यो मन्यते इति सूत्रार्थ उक्तो भवति ॥

( १६ ) एवं जैमिन्यादिमतान्युपन्यस्य स्वमतं किं नोच्यते सूत्रकारेण । एतेषामेव स्वमतत्वे जैमिन्यादिग्रहणवैयर्थ्यम् । विरुद्धानां च नैकमतत्वम् । एकस्यैव वेदस्यानेकाभिप्रायताऽयोगात् । अविरोधे च मतभेदायोग इत्यत आह—कृष्णेति ॥ ल्यब्लोऽपनिमित्ता पञ्चमी ।

वदन्ति ते यथाप्रज्ञं न विरोधः कथंचन ॥
इति पाद्मे ॥ २३ ॥

——:*:——

( १ ) स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—

---

व्यासमतमपेक्ष्येति । यद्वा—सप्तम्यर्थे पञ्चमी । तथा च व्यासाभिमतार्थैकदेशज्ञानिन इत्यर्थः । योजना तु—ये परेऽन्ये जैमिन्याद्यो यस्मात् 'यथाप्रज्ञं' यथामति कृष्णद्वैपायनमतैकदेशविद एव, न तदनभिमतार्थविदः । यन्मतानां भगवन्मतत्वमेवेति यावत् । तस्माद्व्यासशिष्या इति यान्वदन्ति, तेषां कथं च न परस्परं कृष्णद्वैपायनज्ञातार्थैर्वा तात्पर्यतो वा विरोधो नास्तीति । न चैतेषां भगवन्मतत्वे जैमिन्यादिग्रहणवैयर्थ्यमिति वाच्यम् । शिष्यप्रसिद्ध्यर्थत्वात् । कथं चन न विरोध इत्यनेन अनेकेषां एकाधिकारिकत्वं विरुद्धमिति शङ्का निरस्ता । 'विज्ञातं तैर्जगाद्यात्र तारतम्यं नृणां वदन्' इत्यनुव्याख्याने, नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्निति सुधायां चोक्तरीत्या जैमिनिमतस्य वाक्यसमन्वयार्थत्वात् तन्मात्रयोग्यपदसमन्वयायोग्यमन्दाधिकारिविषयत्वम्, तत्राप्याश्मरथ्यमतस्य वैराग्यसम्पत्तिप्राक्कालीनस्वर्गाद्यर्थित्वावस्थाविशिष्टाधिकारिविषयत्वं, औडुलोमिमतस्य तु ज्ञानसम्पत्तिप्राक्कालीनजिज्ञासुत्वावस्थाविशिष्टाधिकारिविषयत्वं, काशकृत्स्नमतस्य तु ज्ञानसम्पत्त्यवस्थाविशिष्टाधिकारिविषयत्वमिति मतानामनेकाधिकारिकत्वात् ॥ ५ ॥

इति समाकर्षाधिकरणम् ॥

——*:*:*——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे स्त्रीशब्दानां समन्वयः क्रियते । सिद्धान्तयत्सूत्रमवतारयति—स्त्रीशब्दा इति ॥ न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः । कुतः? तत्र स्त्रीलिङ्गायोगादिति पूर्वपक्षं प्रतिक्षेप्तुं स्त्रीशब्दा अपि तस्मिन् परमात्मन्येव वर्तन्त इति साधयति सूत्रकार इत्यर्थः । स्त्रीशब्दा इति सामान्योक्त्या सौत्रप्रकृतिशब्दोऽन्यस्याप्युपलक्षक इति सूचितम् । तत्तु समन्वयादिति सर्वशब्दानामित्यानुमानिकाधिकरणवाक्यमत्रापि सम्बध्यते । तथा च तत्तु समन्वयात् इत्यत्र समन्वेतव्यत्वेनोक्तानां सर्वशब्दानां मध्ये ये कामादितरत्रेत्यत्रापरममुख्यवृत्त्या

सू—ॐ ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ ॐ ॥ २४ ॥

( २ ) 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा न द्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमे वैतानि नामानि सर्वाणि पुरुषमभिविशन्ति ' इति प्र

---

श्रीतत्वपरत्वमाश्रित्य तद्विषये भाष्योदाहृतवत्सश्रुतौ ' या प्राणेन सं विशत्यदितिर्देवतामयी' (कठ.२-४-७.) इति काठके, अन्यत्र च श्रुताः स्त्रीलिङ्गशब्दास्तेऽपि तस्मिन्नेव परममुख्यवृत्त्या वाचकतया सन्तीति योजना । न केवलमानन्दमयेन्द्रवरुणसूर्यप्रथाकाशप्राणादिपुल्लिङ्गशब्दाः नापि ब्रह्माक्षरज्योतिरादिनपुंसकशब्दा इत्यपिशब्दार्थः । अनेन सङ्गतिविषयादिकं दर्शितम् । 'तस्मिन्नेव' न प्रकृत्यादावित्यवधारणान्वयेन न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः तत्र स्त्रीलिङ्गायोगात्, किन्तु प्रकृत्यादय एवेति सयुक्तिकपूर्वपक्षोऽपि सूचितः । सर्वमिच्छाधीनं यस्याः सा सर्वेच्छा । जडप्रकृतिव्यावर्तनायाविकृतिरिति श्रुत्यक्षरार्थस्तु तृतीये कामाधिकरणटीकायामभिहितः । ' एषा ह्येव ' (वत्सश्रुतिः.) इति श्रुतेः पाठान्तरम् । अतएव गीताभाष्ये 'एषा ह्येव प्रकृतिः ' इति वाक्यमुदाहृतम् । 'या देवतामयी ' देवतोत्तमा 'अदितिः ' तच्छब्दवाच्या भगवत्तनुः ' प्राणेन' मुख्यवायुना 'सं ' सह ' विशति' तिष्ठति ' एतद्वैतत् ' यत्त्वया पृष्टमित्यर्थः । नचिकेतसं प्रति यमवाक्यमेतत् ॥

( २ ) सूत्रे तदनुकूलप्रतिज्ञादृष्टान्तयोरभिधानादित्यभिप्रेतहेतोरप्रयोजकत्वशङ्कावारणाय विपक्षे हेतूच्छित्तिरूपबाधकोपन्यासाय प्रवृत्तं प्रतिज्ञेत्याद्यंशं क्रमनियमाभावसूचनाय प्रथमं व्याचष्टे–हन्तेति॥हन्तेत्यास्वादने। ' पुरुषं ' पूर्णप्रवृत्तिनिमित्तकं 'इमं ' प्रकृतमेव परमात्मानं 'सर्वाणि नामानि ' सर्वशब्दाः ' अभि ' परममुख्यतो वदन्तीति प्रतिज्ञातार्थः । अत्र दृष्टान्तमाह—यथेति । ' स्यन्दमानाः ' प्रस्रवन्त्यः समुद्रः अयनं यासां तास्तथोक्ताः ' समुद्रमभिविशन्ति ' तदाभिमुख्येन गतास्तं प्रविशन्तीत्यर्थः । उक्तप्रकारं दार्ष्टान्तिकेऽप्यतिदिशति—एवमेवेति । ' एतानि' प्रमितानि सर्वाणि नामानि ' एवं ' नदीवत्स्यन्दमानानि मध्ये स्थिरचरव्यवहारान् घटयन्त्यपि पुरुषैकायतनस्वप्रवृत्तिनिमित्तधर्माण्यन्ततस्तमेव ' पुरुषं ' परमात्मानं ' अभि ' सर्वतोऽभिमुखतो विशन्ति वाचकतयेत्यर्थः । इतीति । एवंरूपयोः प्रतिज्ञादृष्टा

तिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥२४॥
( ३ ) सू—ॐ ॥ अभिध्योपदेशाच्च ॥ ॐ ॥ २५ ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । (श्वे.४-१०.)
महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ।

न्तयोः'अनुपरोधात्'अनुपहतेरित्यर्थः । एवंसतीत्यादावुपस्कार्यम् । प्रकृत्यादिस्त्रीशब्दवाच्यत्वाङ्गीकार इति तदर्थः । श्रुतितात्पर्यविषयीभूत सर्वशब्दवाच्यत्वस्य प्रकृत्यादिकतिपयशब्दवाच्यत्वाभावेऽप्ययोगेनान्यथा तदुपरोधः स्यादिति भावः। इदानीं प्रकृतिश्चेति प्रतिज्ञाभागं व्याचष्टे—प्रकृतीति । अत्रापि प्रकृतिपदमन्योपलक्षकम् । प्रकृतेः लक्ष्म्याः स्त्रीषु प्रधानत्वात्तन्नामग्रहणम् । तथा च प्रकृत्यादिस्त्रीशब्दवाच्योऽपीत्यर्थः । अपिः न केवलं पुल्लिङ्गपुरुषात्मादिशब्दवाच्यो हरिः, किन्तु प्रकृत्युपलक्षितस्त्रीलिङ्गशब्दवाच्योऽपीति समुच्चये । अनेन सौत्रच शब्दो व्याकृतः । न केवलं प्रकृतिशब्देनैव वाच्य इत्युच्यते, किन्तु स्त्रीशब्दानां सर्वेषामपि वाच्य एवेति तत्त्वप्रदीपरीत्या स्त्रीलिङ्गशब्दान्तर समुच्चये वा अपिशब्दः । अपिना एकत्र स्त्रीत्वपुंस्त्वयोर्विरोध इत्यपि न, प्रमाणद्वयोरप्युपपत्तेरिति चशब्दस्य शङ्कानिरासनाख्यप्रयोजनमपि सूचितम् । स हरिरेवेत्यनेन समन्वयसूत्रात् तत्त्वित्येतत् श्रौत पुरुषपदानुसारात् लिङ्गविपरिणामेनेहानुवर्तनीयमिति सूचितम् । एवकारस्तु यदाऽपिः टीकाकाररीत्या पुल्लिङ्गशब्दसमुच्चायकः, तदा विशेष्यसङ्गतोऽन्यव्यावर्तकः । यदा तु तत्त्वप्रदीपरीत्या न केवलं प्रकृतिशब्दवाच्य एव सः, किन्तु सर्वेषां स्त्रीशब्दानामिति स्त्रीलिङ्गान्तर समुच्चायकः , तदा विशेषणसङ्गतो वाच्यत्वायोगव्यवच्छेदकः । वस्तुतस्तु स्त्रीशब्दवाच्यश्चेति टीकागतचशब्दादपि तत्त्वप्रदीपानुसारादेवार्थो व्याख्येयः । अत एव टीकायां न प्रकृत्यादिशब्दवाच्यो हरिरिति पूर्वपक्षप्रतिज्ञोक्तिः । स्पष्टस्सूत्रार्थः ॥

( ३ ) एवं सामान्यप्रमाणेन प्रकृत्यादिशब्दवाच्यतां हरेः प्रतिपाद्य इदानीं अशेषस्त्रीशब्दोपलक्षकप्रकृतिशब्दवाच्यत्व एव विशिष्य प्रमाणं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—अभिध्येति ॥ विशिष्यप्रमाणाख्ययुक्तिसमुच्चये चशब्दः । सूत्रस्याभिध्यायाः प्रकृतित्वोपदेशात्परमेश्वरत्वोपदेशाच्चेति वृत्तिमाश्रित्योपदेशपदोक्तप्रमाणमाह—मायामि

इति वचनात्तदभिध्यैव प्रकृतिशब्देनोच्यते ।
( ४ ) 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः'
इति श्रुतेरभिध्या च स्वरूपमेव ।

ति । वचनादित्युभयान्वयि । तथा च 'महेश्वरम्' इति श्रुतिवचनात् 'कथ्यते' इति स्मृतिवचनाच्चेत्यर्थः । सूत्रे प्रकृतिश्चेत्यनुवृत्तिं अभिध्येति बुद्ध्या विवेकं चशब्दस्यावधारणार्थत्वं चाश्रित्य आहत्य लब्धां प्रतिज्ञां दर्शयति—तदभिध्यैवेति । तस्येश्वरस्याभिध्यैव इच्छैव प्रकृतिपदेनोच्यते नान्यत् । एवं या प्रकृतिपदेनात्रोच्यते सा तदभिध्यैव नान्यस्येत्यर्थः । 'प्रकृतिं' प्रकृतिपदवाच्यम् । तुशब्दौ मायामायिनोरुद्देश्यत्वरूपविशेषद्योतकौ । तेन या प्रकृतिः सा माया मिथ्येति परव्याख्या निरस्ता । ननु श्रुतौ मायाया एव प्रकृतिशब्दवाच्यत्वं ज्ञायते नेच्छाया इत्यतो—महामायेति पूर्वार्धोदाहरणम् । चशब्दस्समुच्चये । उच्यत इत्यनेनोपचारनिवृत्तिः । श्रुतिस्मृत्योरनुशासनरूपत्वात् । अत एव तयोर्विद्यात्कथ्यते इतिचोक्तिः । हे अनन्त तव इच्छैव महामायेत्यादिशब्दैरुच्यते इत्यर्थः । नियतिः प्रकृतिरित्यत्रापि इतिशब्दोऽन्वेतव्यः । अत एवानेकवारोक्तिः ॥

( ४ ) ननु इच्छायाः प्रकृतिशब्दवाच्यत्वोक्तावपि कथं परमात्मनस्तत्प्राप्तिरित्यत आह—स इति ॥ 'सः' परमात्मा 'जूतिः' प्रेरणा 'सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते' इत्यैतरेयभाष्योक्तेः । चशब्दो हेत्वर्थे । तुशब्दार्थो वा । तथा च इतिश्रुतेरभिध्या ब्रह्मस्वरूपमेव न भिन्नेति ज्ञायते । अतो नोक्तशङ्काऽवकाश इत्यध्याहारेण वाक्ययोजना । अभिध्या च स्वरूपमेवेत्यनेनाभिध्यायाः स्वरूपत्वोपदेशादित्यपि सूत्रवृत्तिर्दर्शिता । न च श्रुतौ ब्रह्मण एवाभिध्यादिरूपत्वमुच्यते, नाभिध्यायास्तत्स्वरूपत्वमिति वाच्यम् । समानवित्तिवेद्यतया श्रुतौ व्यतिरेकेणान्वयेन वा तस्याप्युक्तप्रायत्वात् । अनेन—अभिध्यायाः प्रकृतित्वोपदेशात्सा प्रकृतिस्तच्छब्दवाच्या । एवं तस्याः पारमेश्वरत्वोपदेशात्सा तस्यैव । एवं ब्रह्मणोऽभिध्यात्वोपदेशात्सिद्धादभिध्याया ब्रह्मत्वोपदेशादभिध्या तत्तु ब्रह्मैव । तथा च न केवलं पूर्वोक्तसामान्यहेतोः, किन्तु प्रकृतिशब्दवाच्येच्छात्मकत्वोक्तेश्च प्रकृतिः ब्रह्मैवेति सूत्रार्थ उक्तो भवति ॥

(५) ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।
परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते ॥
इति ब्रह्माण्डे ॥ २५ ॥

(६) सू—ॐ ॥ साक्षाच्चोभयाम्नानात् ॥ ॐ ॥ २६ ॥
' एष ह्येवैष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक
एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः प

(५) ननु नेच्छा भगवत्स्वरूपं, मायिनमितीनिप्रत्ययेन तवेति ष ष्ठ्या च भेदसाधकसम्बन्धोक्तेरित्यत आह—ध्यायतीति ॥ चः समुच्चये ऽवधारणे च । अतीवेति निपातसमुदायः । तथा च ध्यानरूपोऽपि भग वान् ध्यायतीति ध्यानकर्तृतयोच्यते। एवं 'असौ' हरिः 'अतीव' अत्यन्तं सुखरूप एव 'स आनन्दः' इति श्रुतौ सुखरूपत्वेनोक्त एव सुखीत्युच्यते श्रुतिस्मृतिष्वित्यर्थः । अनेन भेदाभेदः कदाचि द्दुःखस्वरूपत्वं वा निरस्तम् । चशब्देन सोऽभिध्येति मायारूपत्वेनो क्तो मायिनमित्यादौ मायीत्युच्यते इति प्रकृतं समुच्चिनोति । न चैतद त्र विरुद्धं, ऐश्वर्ययोगादित्याह—परमेति । योगः उपायः । 'विरुद्धा र्थतया' विरुद्धधर्मोपेततया एकस्मिन् ब्रह्मणि विरुद्धत्वेन प्रतीतसुख त्वसुखित्वाद्यर्थप्रत्यायकशब्दवाच्यतयेति यावत् । 'इष्यते' प्रामाणि कैरित्यर्थः । ब्रह्माण्डपुराणे इत्यस्य उक्तत्वान्न विरोध इत्यध्याहृतवा क्येनान्वयः ॥

(६) ननूक्तप्रमाणैः सामान्येनेच्छाद्वारा वा प्रकृतिशब्दवाच्यत्व प्राप्तावपि न साक्षादीश्वरस्य तद्वाच्यत्वप्राप्तिरित्याशङ्क्य विशेषप्रमा णोक्त्या परिहरत्सूत्रमुपन्यस्य व्याचष्टे—साक्षादिति ॥ साधारण्येन विना इच्छाद्वारमन्तरेण चेत्यर्थः । एवशब्देन सौत्रचशब्दोऽवधारणा र्थतया व्याख्यातः । 'प्रकृतिपुरुषत्वाम्नानात्' स्त्रीपुल्लिङ्गशब्दवाच्य त्वाभिधानात् । तस्येति विपरिणामेनान्वयः । अनेनोभयशब्दो व्याकृ तः । यद्यपि प्रकृतित्वाम्नानादित्येव वाच्यम्, न तूभयेति । पुरुषत्वे विवादाभावात् । तथाऽपि आद्यसूत्रे चशब्देन तस्य समुच्चितत्वादेव मुक्तम् । आम्नानादित्यस्य प्रकृतिः स एवेति प्रधानसाध्येनान्वयः । 'एषः' परमात्मा सततं रमणात् स्त्रीशब्दवाच्यः । यथोक्तं तत्त्वप्रदी पे सततं रमणात् स्त्रीति । 'एवमेव पुरुषः' आत्मा तच्छब्दवाच्यः । 'एष प्रकृतिः' तच्छब्दवाच्यः । सूत्रे साक्षादित्युक्तासाधारण्यज्ञापना

रमः परान्त्विश्वरूपः' इति पैङ्गिश्रुतौ साक्षादेव प्रकृति पुरुषत्वाम्नानात् ॥ २६ ॥

( ७ ) सू—ॐ ॥ आत्मकृतेः परिणामात् ॥ ॐ ॥ २७ ॥

यैव प्रकृतिरिति विशिष्योदाहरणम् । 'एष ब्रह्म' स्त्रीपुंदोषराहित्या त्तदुपलक्षिताशेषनपुंसकशब्दवाच्यः । श्रुतावात्मा पुरुष इति स्त्रीप्रकृतिरिति शब्दद्वयोपादानमशेषस्त्रीपुलिङ्गशब्दसङ्ग्रहार्थः । हरेः विरुद्धानेकशब्दवाच्यत्वे निमित्तमाह—लोक इत्यादिना । 'लोकः' आधारः । प्रकृत्यादेरिति शेषः । 'आलोकः' प्रकाशरूपः । एष क इत्यपेक्षायां आह—योसौ हरिरिति । 'आदिः' कारणं जगज्जन्मादेरिति शेषः । त्रयादौ विश्वस्मिन् रूपाण्यस्य त्रयादिविश्वस्य रूपमिव रूपमस्येति वा विश्वरूपः । अनेन हरेस्तच्छब्दवाच्यत्वे सामान्यतस्तत्तदाधारत्वतत्तत्स्थितत्वतत्तत्प्रकाशकत्वतत्तत्कारणत्वतत्तदाकारत्वतत्तन्नियामकत्वादीनि निमित्तानि, रूपबाहुल्याच्च विरुद्धानेकशब्दवाच्यत्वोपपत्तिरित्युक्तं भवति । तर्ह्याधारभूतवस्तूत्पत्तिनाशाभ्यां अस्याप्युत्पत्तिनाशौ स्यातामित्यत आह—अनादिरित्यादि । अनाद्यनन्तपदाभ्यामुत्पत्तिनाशराहित्यमुच्यते । अत्र हेतुः—परात् । प्रकृत्यादेः परम इति । 'अन्तः' अन्तकः । यद्वा—प्रकृत्यादेरन्तस्स्थित इत्यर्थः । यद्वा—स्त्रीपुरुषपदयोः प्रकृत्यात्मपदयोर्लोकालोकपदयोराद्यनादिपदयोरनन्तान्तपदयोस्स्त्रीपुरुषजडचेतनज्ञानाज्ञानरूपत्वोत्पत्त्यनुत्पत्ति नाशानाशरूपविरुद्धार्थकयोरपि हरिरेव वाच्यः । अत एव ब्रह्मेति श्रुत्यर्थः । सूत्रार्थस्तु—साक्षाच्चाद्यसूत्रोक्तं सामान्यरूपं द्वितीयसूत्रोक्तं प्रकृतिशब्दवाच्येच्छात्मकत्वरूपं वा द्वारमनपेक्ष्य साक्षादेवोभयस्य प्रकृत्यादिस्त्रीशब्दवाच्यत्वस्य पुरुषादिपुलिङ्गवाच्यत्वस्य चाम्नानात् 'एषः' इति श्रुतावुक्तत्वात्प्रकृतिश्च स एवेति नेश्वरस्य प्रकृत्यादिशब्दवाच्यत्वाभावः शङ्क्य इति ॥

( ७ ) नन्वेवं स्त्रीशब्दवाच्यत्वोपलक्षकप्रकृतिशब्दवाच्यत्वस्य हरेः श्रुत्युक्तत्वेऽपि कथं तद्युज्यते, तत्र तस्य प्रवृत्तौ निमित्ताभावात् । न हि सङ्केतमात्रं सिद्धान्तिभिरभ्युपगत इत्याशङ्कां परिहरत्सूत्रं पठित्वा तत्फलितं तावदाह—आत्मेति ॥ प्रकर्षेण करोतीति प्रकृतिरिति 'योगात्' महायोगान्निरतिशयप्रवृत्तिनिमित्तवत्त्वाच्च प्रकृतिस्स विष्णु

प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च ।

(८) प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामक तया तत्र स्थित्वा आत्मनो बहुधा करणात् ।

(९) 'अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षते' इति भाल्लवेयश्रुतिः ।

---

रित्यर्थः । न केवलं श्रुतावाम्नानाद्बहुलप्रयोगाख्यरूढिमात्रादिति चशब्दार्थः । यद्वा—योगस्यैव भावान्न विष्णोः प्रकृतिशब्दवाच्यत्वे निमित्ताभाव इत्यवधारणार्थश्चकारः । यद्यपि प्रकृष्टा कृतिर्यस्येत्येव विग्रहः प्रदर्शनीयो न प्रकर्षेण करोतीति । तथात्वे प्रकर्तेति वा प्रकृदिति वा प्रकारुरिति वा वृत्तिस्स्यात् । तथा करणविषय एव प्रकृष्टत्वान्वयः स्यात्, न तु कृतौ । अत एव टीकायां प्रकृष्टा कृतिः यस्येत्येव विग्रहः प्रदर्शितः । तथाऽपि तस्यैव फलितोक्तिरित्यदोषः । अत्र प्रकर्षेण करोतीति विग्रहे प्रकृतिरिति वृत्तिवाक्यं प्रदर्शितम्, न तूद्देश्यार्पकं तत्, तस्य प्रकृतिश्चेत्यनेनैव प्राप्तेः ॥

(८) एवं फलितार्थमभिधाय कथं प्रकृष्टेश्वरस्य कृतिरित्यतः सूत्रं व्याचष्टे—प्रकृताविति ॥ अनेन परिणामकत्वोपयुक्तं तत्पूर्वभाविव्यापारमाह । अनुप्रविश्येति । 'अनु' अनुकूलतया 'तां' प्रकृतिं परिणाम्येति । अनेन सूत्रे परिणामादिति ल्यब्लोपनिमित्ता पञ्चमी । परिणाम्यात्मकृतेरित्यन्वयः । ल्यपा च परिणामस्यात्मकरणात्पूर्वभावितोच्यते इत्युक्तं भवति । तथाचेत्थं योजना—प्रकृतेस्स्वतः परिणामासामर्थ्यात्तत्परिणामानुकूलतया प्रकृतौ प्रविश्य तां 'परिणाम्य' स्वयमविकार एव तस्यां महदादिरूपेण विकारं विधाय अथ तत्परिणामकत्वेन प्रकृतिपरिणाममहदादिप्रेरकत्वेन 'तत्र' तत्परिणामेषु महदादिषु 'स्थित्वा' स्थित्यर्थमिति यावत् । 'आत्मनः' स्वस्य रूपेण 'बहुधाकरणात्' व्यक्तीकरणात् भवतीश्वरकृतिः प्रकृष्टा । अतः प्रकर्षेण करोतीति योगाच्च प्रकृतिर्विष्णुरिति । अनेन प्रधानस्य स्वस्य च बहुधाकरणमेव प्रकृष्टकरणमिति प्रकृतिशब्दनिमित्तं प्रदर्शितं भवति ॥

(९) अनाश्वासपरिहाराय स्वोक्तसूत्रार्थे श्रुतिस्मृती चाह—अथेति ॥ प्रमेयान्तरारम्भार्थोऽथशब्दः । हिशब्दः प्रमाणप्रसिद्धौ । तथा चैष परमात्मा यस्मात्प्रकृतेः स्वतःपरिणामासामर्थ्यात्परिणामानुकू

(१०) अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ॥
इति नारदीये ।
(११) न चान्यत्कल्प्यम्, अप्रामाणिकत्वात् ॥ २७ ॥
(१२) सू—ॐ ॥ योनिश्च हि गीयते ॥ ॐ ॥ २८ ॥

लतया प्रकृतिं प्रविश्य तां परिणाम्य तत्परिणामप्रेरकत्वेन तत्र स्थित्यर्थमात्मानं रूपेण बहुधा चकार । तस्माद्बहुधाकरणात् 'प्रकृतिः' तच्छब्दवाच्यः । 'तस्मात्' प्रकृतिवाच्यत्वादेनं प्रकृतिरित्याचक्षते ज्ञानिनः इति श्रुत्यर्थः । श्रुतिरित्यनन्तरमुक्तार्थे प्रमाणमिति शेषः ॥

(१०) स्मृतौ यद्यपितथापीत्यर्थेऽपिः । तुशब्दो विशेषार्थः । 'अनु' अनुकूलतया आत्मानं बहुधा चकारेति शेषः । तथा च यद्यपि गोविन्दः 'परमोऽविकारः' अत्यन्तं निर्विकारो, मायायाःप्रकृतेः पर इति वा । तथाऽपि 'चो' यतः विकारानुकूलतयोपचयाख्यविकारयुक्तां 'प्रकृतिं' प्रधानं प्रविश्य तां परिणाम्य तत्परिणाममहदादिप्रेरकत्वेन तत्र स्थित्यर्थमात्मानमपि बहुधा चकार । अतः प्रकृतिस्तच्छब्दवाच्यः । यत एवमतोऽयं कविभिः प्रकृतिरित्यभिधीयते इति स्मृत्यर्थः । न केवलं पुरुष इति वा चशब्दार्थः । गोविन्द इत्यनेनाविकारत्वे 'निर्विकारोऽक्षरश्शुद्धः' (        ) इति वेदप्रतिपाद्यत्वाख्यहेतुरुच्यते । नारदीय इत्यनन्तरं उक्तमिति शेषः । स्पष्टस्सूत्रार्थः ॥

(११) अपव्याख्यां दूषयति—न चेति ॥ चस्त्वर्थः । 'अन्यत्' ब्रह्मणो जगदुपादानत्वं न कल्प्यम्, प्रकृतिश्चेत्यादिसूत्रार्थतयेति शेषः । कुत इत्यत आह—अप्रामाणिकत्वादिति । तस्येति शेषः । नञ्स्तद्विरुद्धतदभावार्थत्वं, प्रमाणेन सिद्धं तद्विरुद्धं च प्रामाणिकम्, तद्भिन्नमप्रामाणिकं, तस्य भावस्तत्त्वं तस्मात् । तथा च तस्य ब्रह्मणो जगदुपादानत्वस्य प्रमाणशून्यत्वात्, 'अविकारः' इत्यादिप्रमाणविरुद्धत्वात् समन्वयप्रतिपादकप्रमाणाध्यायासङ्गतत्वाच्चेत्यर्थः ॥

(१२) ननु तथाऽपि न प्रकृतिशब्दवाच्यत्वं परमात्मनो युज्यते, तच्छब्दस्य स्त्रीलिङ्गत्वात्परमात्मनश्च पुंस्त्वेन तत्र स्त्रीलिङ्गाभावात् । न केवलं लिङ्गानुपपत्तिमात्रम्, किन्तु श्रौतप्रकृतिशब्दोपलक्षितस्त्रीशब्दमात्रे प्रकृत्यर्थानुपपत्तिरपि, तच्छब्दप्रवृत्तौ निमित्ताभावादिति शङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—योनिश्चेति ॥ 'अव्यवधानेन' स्वया

अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम् । तच्चास्यै
व हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु.
१-१-६. ) इति ।

( १३ ) व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥

दिव्यवधानमन्तरेणापत्योत्पत्तिद्वारत्वं तद्वत्त्वम् । स्वदेहादेवापत्योत्पादकत्वमिति यावत् । यद्यपि 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इति गीतातात्पर्यनिर्णयोदाहृताभिधानाद्योनिशब्दो गुह्यस्थानेऽव्यवधानेन अपत्योत्पादनद्वारे रूढः । यथा 'योनेश्शरीरम्' इत्यत्र तद्वत्यां भार्यायां निरूढलाक्षणिकः । यथा 'मम योनिर्महद्ब्रह्म' इत्यत्र । तथा च नैवं निर्वक्तुं शक्यम् । तथाऽप्युदाहृतस्थलेऽप्युक्तनिरुक्तिसम्भवात्, प्रकृतानुगुण्याय श्रुतिसूत्रप्रयोगानुसारेण च महायोगविद्वद्रूढिभ्यां ब्रह्मणि प्रवृत्तिं दर्शयितुमेवं निरुक्तम् । मार्गप्रतीहारपर्यायद्वारशब्दप्रयोगे विष्णोरपत्यनिर्गमनावधित्वरूपापादनत्वमेव न तूपादानत्वमिति सूचितम् । प्रकृतित्वं प्रकृत्यादिस्त्रीशब्दप्रवृत्तिनिमित्तम् । न केवलमात्मकृतेरित्यत्रोक्तं प्रकृष्टकरणमेव प्रकृतिशब्दप्रवृत्तिनिमित्तम्, किन्तु निरुक्तयोनित्वमपीति समुच्चये चशब्दः । ततः किमित्यत आह—तच्चेति । चस्त्वर्थः । यद्वा—चशब्दः प्रमाणान्तरोक्तस्त्रीरूपत्वाख्यनिमित्तसमुच्चायकः । 'तस्य' परमात्मन इत्यनुवृत्ततच्छब्दार्थोक्तिः । न त्वन्यस्येत्येवार्थः । 'हि' यतः 'गीयते' प्रतिपाद्यते मुख्यतः अतः प्रकृतिश्च स एवेत्यन्वयः । 'भूतयोनिं' प्रलये स्वोदरे निवेशितस्य ब्रह्मादिप्राणिजातस्य 'योनिं' स्वदेहादेवोत्पादकं सूक्ष्मदेहकर्तारं यं 'धीराः' ज्ञानिनः परिपश्यन्ति, तदद्रश्यत्वादिगुणकमिति मुण्डकश्रुत्यर्थः । भूतानामाकाशादीनां ब्रह्मादीनां वा केषांचित् स्त्रीव्यवधानेन विनोत्पादनाद्भूतयोनिरित्यर्थ इति प्राञ्चः ॥

( १३ ) अव्यवधानेनोत्पत्तिद्वारत्वं प्रकृत्यादिस्त्रीलिङ्गशब्दप्रयोगे निमित्तमिति कुतः ? कुतश्च तन्निमित्तं स्त्रीलिङ्गशब्दवाच्यत्वं विष्णोर्ज्ञायत इत्याशङ्कां परिहर्तुं सूत्रार्थे स्मृतिं चाह—व्यवधानेनेति ॥ 'सूतिः' सूतिकर्तृत्वम् । तुशब्दः प्रकृतित्वं त्वित्यन्वेति । तथा च स्त्र्यादिव्यवधानेन अपत्योत्पादकत्वं 'पुंस्त्वं' पुल्लिङ्गशब्दप्रवृत्तिनिमित्तं 'प्रकृ

उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते ॥

तित्वं' तच्छब्दोपलक्षिताशेषस्त्रीलिङ्गशब्दप्रवृत्तिनिमित्तं तु अव्यवधानेन सूतिकर्तृत्वमिति प्रवृत्तिनिमित्तस्थितिर्विद्वद्भिरुच्यत इत्यर्थः । 'स्त्रीत्वमाहुर्मनीषिणः' इति पाठे वाक्यभेदेनान्वयः । उभयत्रेतिशब्दाध्याहारश्च कर्तव्यः । ततः किं प्रकृत इत्यत आह—उभयेति । उभयविधप्रसूतिकर्तृत्वादित्यर्थः । शब्दसमुच्चये चः इति चावर्तते । तत्रैक आद्यर्थे । ननु सूतिकर्तृत्वमेवासिद्धम् । सुतरामुभयात्मकसूतित्वमित्यतो—वासुदेव इत्याह । अनेन—

वानात्सूतेर्देवनाद्वासुदेवः
वासात् द्युतेः छादनात् क्रीडया च ।
बलादसुत्वाद्दातृतो वर्तनाच्च
तं वासुदेवं प्रवदन्ति वेदाः ॥

इति निरुक्तिसूचनात्सूतिकर्तृत्वसिद्धिः । ननु कथमेक एव हरिः प्रकृतिः पुरुष इत्यादिभिरनेकैर्विरुद्धशब्दैरभिधीयते, लोके क्वाप्यदर्शनादित्यत आह—पर इति । 'परो' लोकविलक्षणः पुमान् यत इति । यद्वा—एक एवाभिधीयते इत्युक्ते हरेर्मुख्यतः सर्वशब्दवाच्यत्वे परः पुमानिति हेतुरुच्यते, यतः पूर्णपुरुषः । इति ब्रह्माण्ड इत्यस्य तत्रत्यस्यानुषङ्गेणोक्तमित्यध्याहृतेनान्वयः । न च भगवतः स्त्रीरूपत्वादपि तच्छब्दवाच्यत्वमित्ययुक्तम्, 'नैनं वाचा स्त्रियं ब्रुवन्' ( ) इति निषेधविरोधादिति वाच्यम् । तस्य केवलस्य लौकिकस्य वा स्त्रीत्वस्य ज्ञेयतानिषेधपरत्वात् । अन्यथा 'नैनमस्त्रीपुमान्' इत्युत्तरवाक्यविरोधात् । अनेन—'हि' यतो 'यद्भूतयोनिम्' (मुं.१-१-६.) इति श्रुतौ स्मृतौ च स विष्णुर्योनिः स्वदेहादेवोत्पादको गीयते । योनिशब्दस्याव्यवधानेनोत्पत्तिस्थानार्थत्वाद्योनित्वस्यैव स्त्रीशब्दप्रवृत्तिनिमित्तत्वात् । यतश्च प्रमाणान्तरे स्त्रीरूपश्च 'गीयते' प्रतिपाद्यतेऽतः । न केवलं प्रकृष्टकरणनिमित्तात्प्रकृतिप्रातिपदिकवाच्य एव सः, किन्तु अव्यवधानेनोत्पत्तिद्वारत्वरूपयोनित्वनिमित्तात् स्त्रीरूपत्वाच्च स्त्रीलिङ्गशब्दाभिधेयोऽपीति न तस्मिन् स्त्रीलिङ्गप्रयोगायोगः । न वा प्रकृतिशब्दोपलक्षितस्त्र्यादिशब्दान्तरे प्रकृत्यर्थानुपपत्तिरिति सूत्रार्थे उक्तो

इति ब्रह्माण्डे ॥ २८ ॥

———:*:———

### ७. अधिकरणम् ॥

( १ ) सू—ॐ ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ ॐ ॥ २९ ॥

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः । 'एष ह्येव शून्य एषह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च' इति महोपनिषदि ।

---

भवति ॥ ६ ॥

इति प्रकृत्यधिकरणम् ॥

———

### ७. अधिकरणम् ॥

( १ ) अत्राधिकरणे निषेध्यनिषेधार्थाः शब्दाः समन्वीयन्ते । यद्यपि भाष्ये विषयवाक्यं नोदाहृतम् । तथाऽपि असदादिशब्दघटितवाक्यान्तरमुदाहर्तव्यमिति चन्द्रिकोक्तेः, टीकारीत्या 'असदेव' इत्यादिवाक्यं विषयः । अस्य सिद्धान्ते सर्वथाऽन्यपरत्वाभावेऽपि शङ्काविषयत्वमात्रेणोदाहरणं युक्तम् । अत्रापि तत्तु समन्वयादिति सर्वशब्दानां परमात्मनि समन्वय उक्तः । तन्न युज्यते । कुतः? यतस्तदसदादिशब्दवाच्यत्वं न युज्यते इत्यत आह, इत्याद्याधिकरणवाक्यसंयोजनेन सङ्गतिविषयपूर्वपक्षान् शिष्याः ज्ञास्यन्तीत्यभिप्रेत्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—एतेनेति ॥ सर्वसमन्वयस्यात्र अकरणात्सर्वपदं सङ्कुचद्वृत्तितया व्याख्याति—सर्वे इति । पूर्वस्मादत्र चोऽनुवर्तनीय इत्याशयेनापीति प्रयुक्तवान् । न केवलं पूर्वसमन्विताः, किन्त्ववशिष्टाः शून्यादिशब्दा अपीत्यर्थः । नन्वसदादिशब्दानां निषेधमुखवेद्यवस्तुवाचित्वात्कथं परमात्मनस्तद्वाच्यत्वमित्यत आह—एष ह्येवेति । अत्र 'एष ह्येवासन्' इत्यप्यादावुपस्कार्यम् । अदृश्य इति छ इत्यस्यार्थः । तुदित्यपि ग्राह्यम् । 'अचिन्त्यः' अभाव्यो 'निर्गुणः' उपादानशून्योऽप्राकृतो विनाशशून्यश्चेत्यभावशब्दार्थकथनम् । हिशब्दः प्रसिद्धौ । चस्त्वर्थौ यत इत्यर्थे । तथा च 'हि' यतः 'एषः' भगवान् दुर्जनैरव्यक्तोऽदृश्यश्च तुच्छाचिन्त्यश्च निर्गुणोऽतः स एव मुख्यतोऽसन् तुच्छोऽभावश्चेत्युच्यत इत्यर्थः । यद्वा—शून्यशब्दस्य शून्यादीत्यादिपदोपात्तानां च शब्दानां इह हरौ रूढिप्रदर्शनपरेयं समग्रा श्रुतिः । म

(२) शमूनं कुरुते विष्णुरदृश्यस्सन् परस्स्वयम् ।
तस्माच्छून्य इति प्रोक्तस्तोदना त्तुच्छ उच्यते ॥
नैष भावयितुं योग्यः केन चित्पुरुषोत्तमः ।
अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥
(३) सर्वस्य तदधीनत्वात्तच्छब्दाभिधेयता ।

होपनिषदीत्यस्यासदादिशब्दाः दुर्जनाव्यक्तत्वादिना निमित्तेन रूढ्या वा ब्रह्मवाचितया व्याख्याता इत्यन्वयः ॥

(२) 'एष ह्येव' (महोपनिषत्) इत्यनेनैव शून्यादिशब्दानां रूढेर्दर्शितत्वादिदानीं योगवृत्तिमपि स्मृत्या दर्शयति–शमूनमिति ॥ यस्माद्विष्णुः 'परः सन्नेव' सर्वोत्तमत्वेन पूर्णसुखत्वेन च सन्नेव 'शं' अन्यसुखं स्वयं 'ऊनं' स्वसुखादल्पं करोति, तस्माच्छून्य इति प्रोक्त इत्यर्थः। सन्नेवेत्यनेन असत्त्वाच्छून्यशब्दार्थ इत्याशङ्का परिहृता। सन्नेवादृश्य इत्यस्योत्तरत्रान्वयः । तुच्छ इत्यावर्तते । तत्रैकं द्विखण्डम्। अन्यदखण्डम्। तथा च यतस्तोदनाद्दुःखकर्तृत्वात् तुत्, छः छन्नः सन्नेव दुर्जनरदृश्यो न त्वसत्त्वादतस्तुच्छ उच्यते इत्यर्थः। सत्तर्कदीपावल्यां तु–लोकेऽभीष्टं वस्तु नष्टमदृश्यं वा तद्वतः शमूनं कुरुते, तुदते च तं शमनुभवन्तम्। न च तद्भावयितुं योग्यं सुखाय नापि तेनोपभोग्यम्। विष्णुस्तु न नष्टः, किन्तु स्वयं परः सन्नेव सर्वदा सर्वत्र सर्वोत्तमत्वेन सन्नेव दुर्जनादृश्य एव तच्छमूनं करोति, तुदते च तम् । भावयितुमयोग्यस्तेनानुपभोग्यश्च । यथा रमाजशङ्करादिभिरित्युक्तम् । अस्मिन् पक्षे यतः छः नित्यमदृश्य एव तुत् दुःखयति अन्यान् दुर्जनान्, अतोऽदृश्यत्वे सति तोदनात् तुच्छ उच्यते इति । छशब्दार्थस्यादृश्यत्वस्य विशेषणतया पूर्वमन्वयः। पक्षद्वयेऽप्येकानेकपदत्वं समानम् । ऐकपद्ये तुच्चासौ छश्चेति विग्रहः। यतः 'एषः' विष्णुः कारणतयाऽऽनन्त्येन च पुरुषोत्तमः, अतो न केन चित् 'भावयितुं' उत्पादयितुं साकल्येन चिन्तयितुं वा न योग्यः । यत एवं अत एनमभावं वदन्ति कवय इत्यर्थः। अशभोजन इत्यतः अश्यमिति रूपं, तस्य भाव अश्यत्वं, तस्य नञा सम्बन्धे नाश्यत्वादित्यस्याभक्ष्यत्वादित्यर्थः। सत्तर्कदीपावलीरीत्या तु—नाकमिति वन्नाशं परमसुखं यापयतीति नाश इत्यर्थः। उच्यते इत्यनुषज्यते । न केवलमभाव इत्यादिरूपेणेत्यपेरर्थः ॥

(३) निषेधमुखवेद्यवस्तुवाचिशब्दानां निषेध्यानिषेधवाचित्वेन

अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥
इति महाकौर्मे ॥

( ४ ) एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन ।

---

द्विरूपत्वात् तत्र स्मृतौ निषेध्यासद्वाचिशून्यादिशब्दानामेव योगवृत्ति कथनात्, तदन्येष्वव्यक्तादिषु निषेधरूपाभाववाचिनिर्गुणादिशब्देषु च तदकथनान्न तेषां हरौ वृत्तिः स्यादित्याशङ्कयोभयसाधारणं निमित्तमाह—सर्वस्येति ॥ एतच्चासद्वाचिशब्देष्वभाववाचिशब्देषु च सम्बध्यते । अत एव टीकायामुभयत्रेत्युक्तिः । सुधायां च निषेधनं निषेधोऽभावः । निषिध्यत इति निषेधोऽसन् तदुभयार्थाः शब्दा इत्युक्तम् । तथा च 'सर्वस्य' असच्छून्यादिशब्दप्रवृत्तिनिमित्तस्य स्वगतस्य परगतस्य वा 'तदधीनत्वात्' भगवत्स्वामिकत्वात्तत्तच्छब्दवाच्यता तस्यैव हरेः सर्वशब्दाभिधेयता। अतएव असच्छून्यतुच्छाभावनाशादिशब्दपरममुख्यार्थता भगवतः । अन्येषां तु तदधीनेनैव तत्तत्प्रवृत्तिनिमित्तेन हानादिव्यवहारार्थं 'व्यवहर्तृभिः' तत्तच्छब्दप्रयोक्तृभिस्तन्मुख्यवाच्याभिज्ञैस्तत्तच्छब्दार्थता 'इष्यते' अभ्युपगम्यत इत्यर्थः । यद्वा—सर्वस्येत्येतत् 'शमूनं कुरुते' इत्याद्युक्तहेतूपपादकत्वेन पूर्वत्र तत्तच्छब्दाभिधेयतेत्युक्तसाध्यसाधकत्वेनोत्तरत्र च सम्बध्यते। अत एव सत्तर्कदीपावल्यां स्वगतस्य परगतस्य वा शब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वादित्युक्तम् । द्रष्टुर्भावयितुर्भक्षकस्य चेश्वराधीनत्वेन स्वगतानामदृश्यत्वाभावत्वनाशत्वादीनां तदधीनत्वं सिद्धम् । परगतनिषेध्यत्वशून्यत्वाभावत्वादीनां त्वीशायत्तत्वं सुप्रसिद्धमेवेत्याशयः । महाकौर्मे इत्यस्य श्रूयमाणा इत्यध्याहारेण महोपनिषदि अन्यत्र च श्रूयमाणाः शून्यादिशब्दाः 'शमूनं कुरुते' इत्यादि योगेन स्वातन्त्र्यनिमित्तेन च विष्णुपरतया महाकौर्मे व्याख्याता इत्यन्वयः॥

( ४ ) सूत्रेऽवयवप्रयोगानियमाभिप्रायेण प्रथमं प्रयुक्तस्य हेतुपदस्यानुवादमात्रस्याप्रकृतत्वादेकवचनार्थस्याविवक्षितत्वाच्चैतेनेत्यनूदितपदपरामृष्टमेव हेतुं दर्शयति—एतेनेति ॥ तस्मिन्नधीनं तदधीनं तत्स्वामिकं, यद्वा—तस्याधीनं तदधीनं तस्य भावस्तदधीनत्वं तदधीनत्वादिरूपा या युक्तयस्तत्समुदायेनेत्यर्थः । आदिपदेन महद्वच्च । चमसवदविशेषात् । ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके । प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिकं गृह्यते ॥

(५) अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये ॥
इति वाराहसंहितायाम् ॥ २९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः.

॥ प्रथमाध्यायस्समाप्तः ॥

॥ ॐ ॥

---

(५) ननु सूत्रेऽल्पाक्षरत्वविरोधिनी द्विरुक्तिः किमर्थेत्यत आह—अवधारणार्थमिति ॥ 'अध्यायमूलतः' अध्यायादिमारभ्यान्तपर्यन्तमुक्तस्य सर्वस्यार्थस्यावधारणार्थमेवेति निर्णयायान्ते द्विरुक्तिं कुर्वते ज्ञानिन इत्यर्थः । भारतादिषु द्विरुक्तेरकरणादाह–विनिर्णय इति । विशिष्टो निर्णयो यस्मात्तस्मिन् विनिर्णायकग्रन्थ इत्यर्थः । तथा च तेषां निर्णेतव्यत्वेन निर्णायकत्वाभावान्नोक्तनियमभङ्ग इति भावः । संहितायां इत्यस्योक्तत्वादिस्यध्याहारेण न द्विरुक्तिवैय्यर्थ्यम्, न चान्यरीत्या अध्यायसमाप्तिद्योतनार्थ इत्युपस्कृतसाध्येनान्वयः । अनेन—'एतेन' पूर्वोक्ततदधीनत्वादिहेतुनैव 'सर्वे' शून्यादिशब्दाः 'तत्तु' तस्मिन् ब्रह्मण्येव तद्विषया एवेति 'व्याख्याताः' प्रतिपादिता इति सूत्रार्थ उक्तो भवति ॥ ७ ॥ ॐ ॥

॥ इति एतेनसर्वेव्याख्याताधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां प्रथमाध्यायस्य चतुर्थः पादः.

॥ प्रथमाध्यायस्समाप्तः ॥

॥ ॐ ॥

॥ श्रीः ॥

——:*:——

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

——:*:——

## ॥ अथ द्वितीयाध्यायः ॥

### १. अधिकरणम् ॥

(१) उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन प्रथमपादे युक्त्य विरोधम् । प्रथमतः स्मृत्यविरोधं दर्शयति—

(२) सू—ॐ ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ ॐ ॥ १ ॥

---

## ॥ अथ द्वितीयाध्यायः ॥

### १. अधिकरणम् ॥

(१) पूर्वाध्यायसङ्गतत्वेनैतदध्यायार्थं दर्शयति—उक्त इति ॥ नारायणे निखिलवेदसमन्वयेन यो जगत्कारणत्वरूपार्थो गताध्याये निरूपितस्तस्मिन्नित्यर्थः । 'अविरोधं' न विरोधोऽविरोधस्तं युक्त्यादिविरोधाभावं 'दर्शयति' प्रतिपादयति 'अनेन' द्वितीयाध्यायेन सूत्रकार इत्यर्थः । अनेन पूर्वाध्यायस्यास्य च हेतुहेतुमद्भावलक्षणा सङ्गतिरुक्ता भवति । पूर्वस्याशेषशब्दसमन्वयमुखेन जगत्कर्तृत्वरूपधर्मिज्ञापकत्वेनास्य च विरोधनिरासेनोक्तजगत्कर्तृत्वस्थैर्यसाधकत्वेन हेतुत्वसम्भवात् । एतत्पादप्रतिपाद्यं दर्शयति–प्रथमेति । उक्तेऽर्थे दर्शयतीत्यनुवर्तते। अस्येति विपरिणामेनास्ति । युक्तिरनुमानम्। सङ्गतिप्रदर्शनायैतत्पादीयाद्याधिकरणप्रतिपाद्यं दर्शयति–प्रथमत इति । प्रथमाधिकरण इत्यर्थः । अनुवृत्त्यादि पूर्ववत् । स्मृतिरलौकिकार्थविषयाप्तवाक्यरूपा पाशुपतादिलक्षणा । स्मृतीत्यनेन पाशुपतादिस्मृतीनां युक्तिग्रथनात्मकत्वेन तद्विरोधाभावप्रतिपादकस्यास्य अधिकरणस्य युक्त्यविरोधप्रतिपादकत्वादत्र पादे निवेशः सङ्गत इति सूचितम् । स्मृतीनां समन्वयादिरूपत्वेऽपि न प्रथमातिक्रमो युक्तः, कारणाभावात् । अनेनास्याधिकरणस्य शास्त्रादिसङ्गतिरुक्ता भवति ॥

(२) पूर्वपक्षादिप्रदर्शनाय सूत्रमुपन्यस्यति—स्मृतीति ॥ अत्र पूर्वपक्षांशं व्याख्यास्यन् विशेषणस्य परनिपातेनाभिप्रेतेनानवकाशस्मृतीत्यन्वये सति तत्रानवकाशपदेन लब्धान् हेतून् दर्शयति—सर्वज्ञा हीति । हि हेतौ प्रसिद्धौ च । सार्वज्ञ्यं जगद्धितोपदेष्टृत्वस्याप्युपलक्षकम् । आदिशब्देन कपिलकमलासनादयो गृह्यन्ते । अनेनाप्तमूलत्व

सर्वज्ञा हि रुद्रादयः। अतस्तेषां वचनविरोधेऽप्रामा
ण्यमेव स्यादिति चेत्—

(३) न, अन्यस्मृतीनां विष्ण्वादिभिर्नितरां सर्वज्ञैरेव कृत
त्वाच्छ्रुतेराधिक्यं च सिध्यति ॥ १ ॥

प्राबल्यार्थान्तरपरत्वासम्भवरूपानवकाशत्वाख्यहेतवो दर्शिताः। ततः किमित्यत आह—अत इति। 'तेषां' रुद्रादीनां विरोधे सति विष्णुजगत्कर्तृतापरत्वरूपविरुद्धार्थकल्पनेनेति भावः। 'अप्रामाण्यं' श्रुतेरित्याकृष्यते। एवशब्देनाविरोधो देशान्तरे प्रामाण्यं च व्यवच्छिद्यते। स्यादित्यनेन सौत्रः प्रसङ्गशब्दो विवृतः। तथा च यतो रुद्रादयः सार्वज्ञ्यादिमत्त्वेनागमसिद्धाः, अतस्तेषां वचनानां तत्स्मृतीनामाप्तिमूलत्वं सिद्धं, अत एव प्राबल्यं च, अत एव निरवकाशत्वं च; अतः श्रुतेः 'यतो वा' (तै.उ-३-१-१.) इत्यादिरूपायाः विष्णुजगत्कर्तृतापरत्वकल्पने तद्विरोध एव स्यात्, न त्वविरोधः। तद्विरोधे च तन्निमित्ताप्रामाण्यमेव स्यात्, न तु भागविशेषे प्रामाण्यमपि, न वा देशकालभेदेन अविरोधोऽपि। तथा सति वस्तुनि विकल्पप्रसङ्गः, ततस्तत्परिहारार्थं श्रुतेर्विष्णुजगत्कर्तृतापरत्वत्यागेनार्थान्तरपरता वक्तव्या। अतः प्रमाणाभावान्न सा सिध्यति। अतो न तस्य जिज्ञास्यतेति योजना। वचनविरोधेऽप्रामाण्यमित्यनेन सौत्रस्मृतिपदं तद्विरोधोपलक्षकं, दोषपदं चाप्रामाण्याख्यदोषपरमित्युक्तं भवति। एवेत्यनेन प्रोपसर्गार्थ उक्तो भवति॥

(३) सिद्धान्तांशं व्याचष्टे—नेति॥ स्मृतीनामिति कृतत्वादिति श्रुतेरिति चावर्तते। विरोध इत्यनुवर्तते। अत्रापि सार्वज्ञ्यमुपलक्षकम्। एवशब्दोऽसार्वज्ञ्यव्यवच्छेदकः। यदा सर्वज्ञकृतानामाप्तिमूलत्वं तदा सुतरां निरतिशयसर्वज्ञकृतानामिति कैमुत्ये वैवशब्दः। स्मृतेरप्रामाण्यं चशब्दार्थः। तथा च न विष्णुजगत्कर्तृत्वं प्रमाणशून्यत्वादयुक्तम्, किन्तु युक्तमेव। कुतः? 'श्रुतेः' 'यतो वा' इत्यादिश्रुतिसिद्धत्वात्। न च श्रुतेर्विष्णुजगत्कर्तृतापरत्वे अन्यस्मृतिविरोधेनाप्रामाण्यदोषप्रसङ्गात् तस्याः अर्थान्तरपरत्वमिति वाच्यम्। कुतो? यतोऽन्यस्मृतीनां पाशुपतादिरूपाणामेवाप्रामाण्यम्। कुत एतत्? श्रुतेः 'विरोधेन' विरोधनिमित्तात्। न च श्रुतिविरोधेऽपि नान्यस्मृतीनामप्रामाण्यं सिध्यति, स्मृत्यपेक्षया श्रुतेराधिक्यासिद्धेरधिक

( ४ ) सू—ॐ ॥ इतरेषां चानुपलब्धेः ॥ ॐ ॥ २ ॥
इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुप

बलविरोधस्यैव अप्रामाण्यहेतुत्वादिति वाच्यम् । यतोऽन्यस्मृतीनां पाशुपतादिभ्योऽन्यासां व्याख्यानरूपाणां पञ्चरात्रादिस्मृतीनां सहायीकृतत्वात् श्रुतेराधिक्यं सिध्यति । न च वाच्यं पञ्चरात्रादिस्मृत्यानुकूल्येऽपि कथं श्रुतेराधिक्यं सिद्ध्यतीति । पञ्चरात्रादिरूपान्यस्मृतीनां रुद्राद्यपेक्षया 'नितरां' निरतिशयं निस्संशयं वा 'सर्वज्ञैरेव' विष्ण्वादिभिः विष्णुमनुप्रभृतिभिः 'कृतत्वात्' प्रणीतत्वादिति योजना । अनेन पाशुपतादिस्मृतेः श्रुतिबाधः पञ्चरात्रादिस्मृतिसहितश्रुत्यादिबाधश्चोक्तो भवति । सर्वज्ञैरेव कृतत्वादित्यनेन निरवकाशत्वं चोक्तम् । तेनानवकाशपदं स्मृतिविशेषणं विवृतम् । अत्रापि परनिपातः । श्रुतेरित्यनेन सूत्रे स्मृतिपदं तत्सहितश्रुतिपरम् । तथा च तद्विरोधो लक्ष्यते, श्रुतिसमन्वयस्य स्मृतिविरोधे शङ्किते श्रुतिं त्यक्त्वा केवलस्मृतिविरोधोक्तेरयुक्तत्वात् । स्मृत्युपन्यासस्तु श्रुतेः प्राबल्यार्थ इति सूचितं भवति । आधिक्यमिति प्रोपसर्गतात्पर्यकथनम् । अनेन—यतोऽनवकाशान्यस्मृतिविरोधनिमित्तात् श्रुतेरप्रामाण्याख्यदोषप्रसङ्गो भवति । अतो न तस्याः विष्णुजगत्कर्तृतापरत्वं युक्तं, अतो न तया तत्सिद्धिरिति मानाभावान्न युक्तं विष्णोर्जगत्कर्तृत्वमिति चेत्—न, कुतः ? 'अन्यस्मृत्यनवकाशदोषप्रसङ्गात्' अन्यासां पाशुपतादिस्मृतीनां निरवकाशपञ्चरात्रादिस्मृतिसहितश्रुतिविरोधेन नितरामप्रामाण्यदोषेण प्रकृष्टसम्बन्धाभ्युपगमात्, तथा च तद्विरोधोऽकिञ्चित्कर इति न तन्निमित्तं श्रुतेरर्थान्तरपरत्वं कल्प्यमिति सूत्रार्थ उक्तो भवति ॥

( ४ ) यदुक्तं वैष्णवस्मृतीनां परमाप्तप्रणीतत्वेन तत्साहाय्ययुक्तश्रुत्या प्रबलया विष्णोर्जगत्कारणत्वसिद्धिरिति, न तद्युक्तम् । तथा सति पाशुपतादिस्मृतीनामप्रामाण्यप्रसङ्गात्, न चाप्तोक्तानां तासां अप्रामाण्यं युज्यत इत्याशङ्क्य परिहरत्सूत्रं पठित्वा व्याचष्टे—इतरेषां चेति ॥ अनुपलब्धेरित्येतत्काकाक्षिन्यायेनोभयत्रान्वेति । भाष्येऽप्यावृत्त्योभयत्रान्वयः । न विद्यते उपलब्धिर्यस्यासावनुपलब्धिः प्रत्यक्षायोग्यः पदार्थः तस्मादितरेषां फलादीनां प्रत्यक्षतोऽनुपलब्धेरित्यर्थः । यद्वा—अनुपलब्धेरित्यस्य नोभयत्रान्वयः, किं तु पूर्वसूत्रे यस्मिन् जगत्कारण

लब्धेरप्रामाण्यं तासां युक्तम् ।
( ५ ) चशब्देन भागोपलब्धिरङ्गीकृता ॥ २ ॥
( ६ ) सू—ॐ ॥ एतेन योगः प्रत्युक्तः ॥ ॐ ॥ ३ ॥
योगफलं प्रत्यक्षत उपलभ्यत इति न मन्तव्यम् । उ

---

त्वादौ स्मृतिविरोधश्शङ्कितः, तदितरेषां प्रत्यक्षयोग्यानामित्येकत्रैवा न्वयः । इतरेषामित्यस्योत्तरस्मृत्युक्तानां इत्यर्थान्तरमभिप्रेत्याह—तास्विति । अत एवइतरेषां इत्यनुवादेन तास्विति व्याख्यानम् । चशब्दोऽनुपलब्धेश्चेत्यन्वेति । 'तासु' पाशुपतादिरूपासु फलं पुम र्थः । आदिपदेनानर्थो गृह्यते । अनुष्ठानपरित्यागयोः कृतयोरपीति शे षः । तथा च 'इतरेषां' वैष्णवेतरपशुपत्यादिप्रणीतस्मृत्युक्तानां 'अनु पलब्धेः' इतरेषां प्रत्यक्षयोग्यानां फलानामनर्थानां च मध्ये केषां चि दफलत्वात्तदितरेषां च तासूक्तानुष्ठानपरित्यागयोः कृतयोरपि प्रत्य क्षतोऽनुपलब्धेरनुपलम्भाच्चेति योजना । आनुमानिकोपलब्धिमादाया सिद्धिवारणाय—प्रत्यक्षत इति । अनुपलब्धेश्चेत्यन्वितश्चशब्दः आ प्तोक्तत्वानिश्चयादिति हेत्वन्तरसूचकोऽप्ययमेवानुपलब्धिहेतोः सा ध्यतया अन्वेतीत्याशयेन अस्य हेतोरन्वययोग्यं प्राग्दोषप्रसङ्गादित्य नेनोक्तं परमसाध्यं दर्शयति—अप्रामाण्यमिति । 'तासां' पाशुपता दिस्मृतीनाम् । एवंति चशब्दस्यार्थः युक्तमेवेत्यन्वेति ॥

( ५ ) ननु पाशुपतादिस्मृतिविहिताचरणे फलस्य तन्निषिद्धाचर णेऽनर्थस्य चोपलम्भात्कथं तदनुपलब्धिमसूत्रयत्सूत्रकार इत्यत आ ह—चशब्देनेति ॥ इति सूचितं सूत्रकृतेति शेषः । अनेनेतरेषां मध्ये केषां चिदुपलम्भात्तदितरेषां अनुपलम्भाच्चेति समुच्चयार्थश्चशब्द इ त्युक्तं भवति । तथा चेतरस्मृतिषु भागविशेषे उक्तानां फलादीनां उ पलम्भेऽपि न तत्राप्तोक्तत्वनिश्चयो युज्यते, अदृष्टफलकभागान्तरवद नाप्तोक्तत्वस्यापि सम्भवादिति भावः ॥

( ६ ) ननु तथाऽपि न सर्वासामवैष्णवस्मृतीनां उक्तनिमित्तादप्रा माण्यम्, योगस्मृत्युक्तफलादीनां नियमेनोपलम्भात्तासामाप्तप्रणीतत्व निश्चयोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—एतेनेति ॥ एतेनेत्यतिदेशोपयुक्ताभ्यधिकाशङ्कां दर्शयति—योगफलमिति । योग शब्दस्य व्याख्यानान्तरमेतत् । स्वेदकम्पादिरूपं योगस्मृत्युक्तं योगा भ्यासफलमित्यर्थः । सूत्रेऽपेक्षितं पूरयति—प्रत्यक्षोपलभ्यमिति । इ

क्ताभ्यासे तत्काल एव फलादृष्टेः ॥ ३ ॥

२. अधिकरणम्

( १ ) सू—ॐ ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ॐ॥ ४ ॥

न्द्रियग्राह्यं भवतीत्यर्थः । नियमेन यत इति शेषः । अस्यात आप्तप्रणीतत्वनिश्चयोपपत्तेर्न योगस्मृतीनामप्रामाण्यमिति प्रकृतसाध्येनान्वयः । प्रत्युक्तपदतात्पर्यमाह—इति न मन्तव्यमिति । अत्राभ्यधिकाशङ्कानिरासायैतेनेत्यतिदिष्टहेतुं व्यनक्ति—उक्तेति । प्रथमं फलं स्वेदनं, द्वितीयं गात्रभञ्जनमित्येवंरूपक्रमविशिष्टफलकतया योगशास्त्रोक्तानां स्वेदनगात्रभञ्जनादिरूपफलोपायानां ' अभ्यासे ' अनुष्ठाने सति ' तत्काल एव ' अभ्यासावस्थोत्कर्षसम्पत्तिकाल एव 'फलादृष्टेः' स्वेदनादिफलादर्शनादित्यर्थः । तथा चनियमेन फलोपलम्भहेतोरसिद्धेस्तेनाप्तोक्तत्वनिश्चयासम्भवाद्योगस्मृतेरप्रामाण्यमेवेति सर्वासामवैष्णवस्मृतीनामप्रामाण्यं युक्तमेवेति भावः । अनेन—' एतेन ' उक्तक्रमेण तत्तत्फलोपायाभ्यासे तत्काल एव तदुक्तक्रमविशिष्टफलादर्शनेन 'योगः ' योगशास्त्रोदितं योगाभ्यासफलं नियमेन प्रत्यक्षोपलभ्यमिति मतं निरस्तम् । अत एव योगस्याप्तोक्तत्वनिश्चयो निरस्तः । अतएव योगोऽप्यप्रमाणत्वेन निरस्त इति सूत्रार्थ उक्तो भवति ॥ १ ॥

॥ इति स्मृत्यधिकरणम् ॥

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोर्जगत्कारणत्वे प्रमाणत्वेनोक्तवेदादिप्रामाण्ये युक्तिविरोधः परिह्रियते । विषयपूर्वपक्षादेः सूत्र एवोक्तत्वात्तमनुपन्यस्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—नेति ॥ एवमित्यनेन तथात्वमित्येतन्नेत्यनेनापि संयोज्यमिति दर्शितम् । अस्येत्यस्यार्थः श्रुतेस्स्मृतेश्चेति । चः समुच्चये । पाशुपतादिव्यावर्तनाय-तदनुसारीति । श्रुत्यनुसारीत्यर्थः । न च श्रुत्यादेरित्यादिशब्दविवक्षया सूत्रेऽस्येति प्रयोगात्तद्विवरणरूपे भाष्ये श्रुतेः स्मृतेरिति कथं प्रयोग इति वाच्यम् । तत्रापि श्रुतेः स्मृतेरित्यस्य श्रुतिवाक्यस्य स्मृतिवाक्यस्येत्यर्थाश्रयणात् । यद्देवमित्यनेन तथात्वमिति व्याख्यातम्, तस्य तथात्वं पाशुपतादिस्मृतिवत् भावस्तदुक्तानुपलभ्यप्रामाण्ये इत्यर्थाश्रयणेनै

नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यं वाच्यम् । विलक्षणत्वात् नित्यत्वात् तदनुसारित्वाच्च ।

( २ ) न हि नित्ये दोषाः कल्प्याः । स्वतश्च प्रामाण्यम् । अन्यथाऽनवस्थितेः ।

वमित्युक्तं विवृणोति—तदुक्तेति ॥ श्रुतितदनुसारिस्मृत्युक्तवृष्ट्यादिफलानुपलम्भादित्यर्थः । तदुक्तकारीर्यादिसाधनानुष्ठानेऽपीति शेषः । अनेन सूत्रे प्रतिज्ञान्वितं तथात्वमित्येतदप्रामाण्यस्य तद्धेतोः फलानुपलम्भस्य तत्र दृष्टान्तस्य ज्ञापकमित्युक्तं भवति । कुतो नेत्यतस्तत्र हेतुत्वेन प्रवृत्तं विलक्षणत्वादित्येतदनूद्य द्वेधा व्याख्याति—विलक्षणत्वादिति । श्रुतेस्स्मृतेरित्यस्ति । तथा च श्रुतेः 'नित्यत्वात्' नित्यत्वाख्यवैलक्षण्यवत्त्वात् स्मृतेः 'तदनुसारित्वात्' श्रुत्यनुसारित्वाख्यवैलक्षण्यवत्त्वादित्यर्थः । क्रमिकहेतुसमुच्चये चशब्दः ॥

( २ ) ननु नित्यत्वादिसद्भावेऽपि कुतोऽप्रामाण्याभावः, तद्धेतोर्दोषाभावस्यानिश्चयात् । तथाचाप्रयोजकं हेतुद्वयमित्यतस्तत्रास्य तथात्वं पाशुपतादिवत्सदोषत्वमपि नेति योजनाश्रयेण लब्धं नित्यत्वादेः साक्षात्साध्यभूतं प्रामाण्ये साक्षाद्धेतुं दर्शयति—न हीति ॥ 'हि' यतः 'नित्ये' वेदे । उपलक्षणमेतत् । तदनुसारिस्मृतौ चेत्यपि द्रष्टव्यम् । अत एव प्राक् तदनुसारीत्युक्तम् । नित्य इति हेतुगर्भम् । 'दोषाः' वक्तृदोषाः 'कल्प्याः' अप्रामाण्यनिमित्ततयेति शेषः । अस्यातो नाप्रामाण्यमिति पूर्वेणान्वयः । तथा च नित्यत्वादेः प्राग्व्यवधानेन हेतुत्वस्याभिप्रेतत्वान्नोक्तदोष इतिभावः । ननु क्वचित्फलव्यभिचारात्पाशुपतादिस्मृतिवद्वेदादेरप्रामाण्यमित्याशङ्कापरिहारायाप्युक्तं वैलक्षण्याख्यहेतुं स्वतःप्रामाण्याख्यवैलक्षण्योपेतत्वादिति प्रकारान्तरेण व्याचष्टे—स्वतश्चेति । चशब्दोऽप्यर्थेऽवधारणे हेतौ च । श्रुतेः स्मृतेरित्यस्ति । तथा च यतः 'अस्य' श्रुत्यादेः 'प्रामाण्यं' यथार्थज्ञानजनकत्वरूपं स्वतः फलोपलब्ध्यादिरूपसंवादनिरपेक्षश्रुत्यादिस्वरूपग्राहकेणैव गृह्यतेऽतोऽपि फलव्यभिचारेऽपि नैवमवैष्णवस्मृतिवदप्रामाण्यं शङ्कनीयमित्यर्थः । न चैवं करणप्रामाण्यज्ञप्तिस्तु परत एवेति पद्धतिवाक्येन करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियते इति सुधावाक्येन च विरोध इति वाच्यम् । इहापि निर्दोषत्वतदनुसारित्वाभ्यामेव यथार्थज्ञानजनकत्वरूपक

( ३ ) ' न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति ' इति भाल्लवेयश्रुतेश्च ।

( ४ ) नित्यत्वं च शब्दादेव प्रतीयते ' वाचा विरूप नित्यया'

---

रणप्रामाण्योपलब्धौ न तत्र संवादापेक्षेत्यत्रैव तात्पर्येण करणस्वरूपग्राहकेणैव तत्प्रामाण्यग्रह इत्यत्र तात्पर्याभावात् । यद्वा—अन्यत्र शक्तिशक्तिमतोर्भेदमभ्युपेत्य स्वरूपग्राहकाग्राह्यत्वरूपपरतस्त्वोक्तावपि इहाभेदमभ्युपेत्य स्वरूपग्राहकस्यैव ज्ञानजनकशक्तिग्राहकत्वं तस्यैव च प्रमाजनकशक्तिरूपप्रामाण्यग्राहकत्वमिति भावेन संवादनिरपेक्षस्वरूपग्राहकग्राह्यत्वरूपस्वतस्त्वस्योक्तत्वान्न विरोधः। प्रामाण्यं संवादाधीनज्ञानविषय एव किं न स्यादित्यतः तत्रास्य तथात्वं प्रामाण्यस्य स्वतस्त्वं चान्यथाऽनवस्थानात्सिद्ध्यतीति योजनाश्रयेण विपक्षे बाधकतर्करूपां शब्दाच्चेत्यप्यन्वितचशब्देन सूचितां युक्तिमाह—अन्यथेति । प्रामाण्यस्य स्वतस्त्वानङ्गीकारे संवादसापेक्षेणैव स्वरूपग्राहकेण ग्राह्यत्वाङ्गीकार इत्यर्थः । अनवस्थितेरिति । फलोपलब्धिरूपसंवादजनकनिष्ठप्रामाण्यमपि स्वत एव चेत् परम्पराकल्पनावैयर्थ्यात्, संवादान्तरेणैव ग्राह्यं चेदनवस्थाप्रसङ्गादित्यर्थः ॥

( ३ ) अस्य वेदस्य स्वतः प्रामाण्यं च शब्दादित्यन्वयेन वेदस्य स्वतः प्रामाण्ये सूत्रसूचितां श्रुतिं चाह—नेति ॥ 'चक्षुः' अज्ञचक्षुः। एवमज्ञश्रोत्रं 'तर्कः' शुष्कानुमानं 'स्मृतिः' वेदाननुकूला । एनमिति सर्वत्र सम्बध्यते । 'वेदयन्ति' ज्ञापयन्तीत्येतदेष्वपि विपरिणामेनान्वेति । तर्हि किमेतं ज्ञापयतीत्यत आह—वेदा इति ॥ ऋग्यजुस्सामाथर्वाश्चेत्यादिनोक्ता वेदा एवैनं परमात्मानं स्वतो वेदयन्ति । हि यतः वेदयन्त्यतो वेदा इत्युच्यन्ते इत्यर्थः । प्रसिद्धौ हिशब्दः। नेत्यादिना एवशब्दो विवृतः। श्रुतेरित्यस्य स्वतः प्रामाण्यं चेति पूर्वेणान्वयः। साधकबाधकसमुच्चये चशब्दः। अत्र चक्षुरादीनां परमात्मप्रमापकत्वमुक्त्वा वेदस्यैव तत्प्रमापकत्वोक्तेः संवादानपेक्षतया स्वत एव प्रामाण्यमित्युक्तं भवति संवादरूपज्ञानस्य चक्षुरादिनैवोत्पाद्यत्वात् ॥

( ४ ) यद्वेदस्य नित्यत्वाख्यं वैलक्षण्यमुक्तं तस्यासिद्धिमाशङ्क्य तदुत्तरत्वेनापि शब्दादित्यंशं योजयति—नित्यत्वं चेति ॥ अनेन हेतावप्यन्वितस्य तथात्वमित्यस्य नित्यत्वमित्यर्थान्तरमुक्तं भवति। अस्य श्रुतिवाक्यस्येति वर्तते । चस्त्वर्थः। कोऽसौ शब्द इत्यतस्तमाह—

( ऋ. ८-६४-६. ) इत्यादेः । 'अनादिनिधना नित्या'
इति च स्मृतिः ॥ ४ ॥

( ५ ) सू—ॐ ॥ दृश्यते तु ॥ ॐ ॥ ५ ॥

अधिकारिणां फलम् । भविष्यत्पुराणे च—
ऋग्यजुस्सामाथर्वाश्च मूलरामायणं तथा ।

---

वाचेति ॥ इत्यादेः शब्दादेवेत्यन्वयः । न प्रकृताद्वेदादन्यत्प्रमाणं गवेषणीयमित्येवशब्दार्थः । परेणापि प्रमाणत्वेनाङ्गीकृतादेवेति वा । 'ऋचस्सामानि जज्ञिरे'(तै.आ.३-१२-४.)इत्युत्पत्तिश्रुतेर्बहुकालीनतामात्रेण नित्यत्वोपचारः किं न स्यादित्यतः तदुत्तरत्वेन शब्दादित्येतत्स्मृतिपरतयाऽपि व्याख्याति—अनादीति ॥ श्रुतिस्मृत्योस्समुच्चये चशब्दः । स्मृतिरिति । यतोऽस्तीति शेषः । अस्यातो न वेदनित्यत्वमुपचरितं, उत्पत्तिश्रुतिस्तु व्यक्त्यभिप्रायेत्युपस्कृतसाध्येनान्वयः । अत एव इत्यादेरित्यनेन न स्मृतेस्सङ्ग्रहः, किन्तु श्रुतिशेषस्य वा श्रुत्यन्तरस्य वा ग्रहणमित्याशयेन स्मृतेः पृथगुपादानमिति ध्येयम् । श्रुतिस्मृती तु देवताधिकरणे व्याख्याते । अनेन— 'अस्य' श्रुत्यादेः 'तथात्वं' पाशुपतादिस्मृतिवदुक्तानुपलब्धेरप्रामाण्यं न, कुतः ? यतोऽस्य 'न तथात्वं' न दोषत्वम् । कुतो ? विलक्षणत्वात् श्रुतेर्नित्यत्वाख्यवैलक्षण्येन स्मृतेस्तादृग्वेदानुसारित्वरूपवैलक्षण्येन युक्तत्वात् । एवं फलव्यभिचारेऽपि नावैष्णवस्मृतिवदप्रामाण्यम् । अस्य 'विलक्षणत्वात्' स्वतःप्रामाण्योपेतत्वात् । अस्य 'तथात्वं' नित्यत्वं तु 'वाचा विरूपनित्यया' इत्यादेः शब्दादेव प्रतीयते । न चायमुपचारः । 'अनादिनिधना'इति स्मृतेः । न चास्य स्वतः प्रामाण्यासिद्धिः । 'न चक्षुः' इत्यादेः शब्दात्तत्सिद्धेः, विपक्षेऽनवस्थाबाधकाच्च । 'अस्य' पाशुपतादेस्तु 'न तथात्वं' फलव्यभिचारेऽपि प्रामाण्यादिकं कल्प्यं, कुतः ? यतोऽस्य 'न तथात्वं' निर्दोषत्वं स्वतः प्रामाण्यादिकं च निश्चितमिति सूत्रार्थ उक्तो भवति ॥

( ५ ) ननु श्रुत्यादेः स्वतः प्रामाण्यवादिनाऽपि दोषदर्शनेऽप्रामाण्यस्यावश्यं ग्राह्यत्वात् , वेदेऽपि स्वोक्तफलादर्शनात् दोषादप्रामाण्यमेव वक्तव्यमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तुशब्दार्थप्रदर्शनपूर्वकं तच्छेषं पूरयति—दृश्यते त्विति ॥ अधिकारिणामिति सम्बन्धे षष्ठी । कर्मवैगुण्यप्रतिबन्धादिशून्यत्वरूपयोग्यत्वशालिनामित्यर्थः । न

भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ।
पुराणानि च यानीह वैष्णवानि विदो विदुः ॥
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ॥
( ६ ) यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।

---

चैवं टीकायां वाशब्दानुपपत्तिः । कर्मवैगुण्यशून्यत्वं वा प्रतिबन्धककर्मशून्यत्वं वा तत्फलयोग्यत्वमिति योजनोपपत्तेः । अनेन तुशब्दार्थो दर्शितः । केचित्तु—योग्यत्वमन्यत् । कर्मवैगुण्यप्रतिबन्धादिशून्यत्वं चान्यत् । अतएव टीकायां वाशब्दः । तथाचाधिकारिणामित्यस्य योग्यानां कर्मवैगुण्यप्रतिबन्धादिशून्यानां चेति द्वेधाऽर्थ इत्याहुः । 'फलं' वेदोक्तं कारीर्यादिसाध्यं वृष्ट्यादि । अस्य दृश्यत इत्यनेनान्वयः । द्रष्टृभिर्यत इति शेषः । अस्य न फलादर्शनेन श्रुत्यादेरप्रामाण्यं वक्तव्यमित्युपस्कृतसाध्येनान्वयः । फलादर्शनस्य कर्तुरयोग्यतयोपपत्तेरिति भावः । अधिकरणार्थे स्मृतिं चाह—भविष्यत्पुराणे चेति । एतदधिकरणार्थे उक्त इति शेषः । न केवलं सूत्रे, किन्तु भविष्यत्पुराणे चेति वा, न केवलं 'न चक्षुः' इत्यादिश्रुतिस्मृतिषु, किन्तु पुराणे चेति वा चशब्दार्थः । तद्वाक्यं पठति । ऋगिति । तथाचशब्दस्समुच्चये । ऋक् यजुश्च साम च अथर्वश्चेत्येवमाख्या येषां ते तथोक्ताः ग्रन्था इति शेषः । अवान्तररामायणव्युदासाय मूलरामायणमिति । एते सर्वे वेदा इत्येव शब्दिता इत्यर्थः । तथा च ये ऋगादिरूपाः वेदशब्दवाच्याः, 'विदः' ज्ञानिनो यानीह पुराणेषु मध्ये वैष्णवानि विदुः एतेषां 'स्वतः' फलसंवादादिरहितमिर्दोषतयैव 'प्रामाण्यं' यथार्थज्ञानकरणत्वरूपं सिद्ध्यतीति शेषः। ये ऋगादयो वैष्णवपुराणान्ताः वेदा इत्येव शब्दिताः एतेषां स्वत एव प्रामाण्यमिति वा । 'अत्र' स्वतः प्रामाण्यविषये 'न किंचित् निमित्तं विचार्यते' न केनापि निमित्तेन संशयोऽस्तीत्यर्थः। यद्वा—अत्र तेषां प्रामाण्यग्रहे 'किञ्चित्' संवादादिकं 'न विचार्यते' न मृग्यत इत्यर्थः । अनेन यत्स्मृतीनां वेदानुसारित्वमुक्तं यच्च श्रुत्यादेः स्वतः प्रामाण्यमाद्यसूत्रे तत्प्रमापितं भवति ॥

( ६ ) ननु फलविसंवाददर्शनेन तेषामप्रामाण्यमेव किं नोच्यते इत्यत आह—यदीति ॥ यदि 'एषु' वेदवेदानुसारिषु 'उक्तं' फलं न दृश्येत तदुक्तसाधनानुष्ठानेऽपीति शेषः । तर्हि 'पूर्वकर्म' जन्मान्तरीयं फलप्रतिबन्धकादृष्टं कर्मवैगुण्यं, प्रतिबन्धादिरूपायोग्यत्वस्याप्युप

नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ॥
( ७ ) इतः प्रामाण्यमन्येषां न स्वतस्तु कथं च न ।
अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः ॥ इति ॥ ५ ॥

३. अधिकरणम् ॥
( १ ) 'मृदब्रवीत्' ( श.ब्रा. ६-१-३. ) 'आपोऽब्रुवन्' (श.

लक्षणमेतत् । 'अत्र' फलानुपलम्भे कारणमित्यर्थः । ततः किमित्य तः फलविसंवादस्यान्यथा सिद्धत्वात् न तेनाप्रामाण्यमेषां सिध्यती त्याह—नेति । ननु फलादर्शनस्यान्यथोपपत्तिः तदा वाच्या, यदि केषां चित्फलदर्शनं स्यात् तदेवासिद्धमित्यतो नेत्याह—दृश्यते हीति । हिशब्दो यतइत्यर्थे । 'अधिकारतः' कर्मवैगुण्यप्रतिबन्धादिशून्यत्वरूपफलयोग्यतानिमित्तात्, तद्वताभिति यावत् । अतो न फलादर्शनाद प्रामाण्यमेषां भवेदिति पूर्वेणान्वयः ॥

( ७ ) नन्ववैष्णवस्मृतीनामप्येवं स्वतः प्रामाण्यं किमर्थं नाङ्गीक्रियते इत्यतो नेत्याह—इत इति ॥ 'अन्येषां' पाशुपतादीनां तु 'इतः' फलदर्शनत एव प्रामाण्यं बुद्धिदोषनिरसनद्वारा सिध्यति, न तु स्वतः फलसंवादं विना केन चिदुपायेन उत्पत्तिमुखेन वा ज्ञप्तिमुखेन वा फलमुखेन वेत्यर्थः । ततः किमित्यत आह—अदृश्येति । यतोन्येषां प्रामाण्यं फलसंवादाधीनं अतः 'अदृश्योक्तौ' अनुपलभ्यमानफलसाधनस्य तेषूक्तौ तेषामप्रामाण्यमेव निश्चितं भवति, न तत्र संशय इत्यर्थः । इति भविष्यत्पुराण इत्यन्वयः ॥ २ ॥

॥ इति न विलक्षणत्वाधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोर्जगत्कर्तृत्वप्रतिपादकवेदप्रामाण्यरूपोऽर्थे दृढयुक्त्यविरोध उच्यते । पूर्वपक्षयति—मृदिति ॥ 'मृदब्रवीत्' इत्येकं श्रुतिवाक्यम् । 'ता आपोऽब्रुवन्' इत्यपरं तैत्तिरीयवाक्यम् । इत्यादीत्यादिपदेन 'ता आप ऐक्षन्त' (छां.६-२-४.) 'तत्तेज ऐक्षत' (छां.६-२-३.) 'ओषधयः संवदन्ते सोमेन सह राज्ञा' (ऋ.१०-९७-२२.) 'प्र वो ग्रावाणः सविता देवस्सुवतु धर्मेण' (ऋ.१०-१७६-१.) इत्यादीनां ग्रहणम् । इत्यादीति वेद इति चावर्तते । तथेति प्रकृतमप्रमाणमि

ब्रा. ६-१-३.) इत्यादिवचनात् युक्तिविरुद्धो वेद इति।

(२) अतोऽब्रवीत्—

सू—ॐ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ॐ ॥ ६ ॥

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते।

---

चास्ति। तथा च 'मृदब्रवीत्' इत्यादिवेदस्तदेकदेशोऽप्रमाणं, कुतः? 'मृदब्रवीत्' 'इत्यादि वचनात्' इत्यादिरूपेण मृदादेर्वचनादिकर्तृत्वाभिधायकत्वात्। वेदस्य मृदादिकर्तृकवचनादिकर्तृताभिधायकत्वं कुत इत्यतोऽप्युक्तं—मृदित्यादि। वचनादित्यनन्तरं मृदादीनां वचनादिकर्तृत्वाऽवगमादिति शेषः। मृदादेर्वचनदर्शनाभिधायकत्वेऽपि कुतो वेदस्याप्रामाण्यमित्यत उक्तं—युक्तिविरुद्ध इति। तथा च यतो 'मृदब्रवीत्' इत्यादिवेदो 'युक्तिविरुद्धो' मृन्न वक्ति जडत्वादित्याद्यनुमानविरुद्धमृदादिवक्तृत्वाभिधायकः अतः। युक्तिविरुद्धार्थस्य चासत्त्वनियमात् असदर्थाभिधायकत्वस्यैव अप्रामाण्यादिति भावः। ननु वेदैकदेशस्याप्रामाण्येऽपि 'यतो वा' इत्यादेस्तत्कुत इत्यतोऽप्युक्तम्—वेद इति। यतो मृदब्रवीदित्यादिवेदोऽप्रमाणमतस्तदन्यवेदोऽपि तथा। तथा च सर्वो वेदोऽप्रामाण्यं प्राप्नोति, तत्सामान्यादिति न्यायात्। तथा च न तेन विष्णोः जगत्कर्तृता सिद्ध्यतीति योजना। अत्र श्रुतौ मृदादिशब्दैः सर्गाद्यकालीनपृथिव्यादिकमुच्यते। तस्य च वचनाद्यभावो नास्मदादिप्रत्यक्षसिद्ध इति प्रत्यक्षविरुद्ध इत्यनुक्त्वा युक्तिविरुद्ध इत्युक्तम्। अनेन पादसङ्गतिरपि प्रदर्शिता भवति। 'राज्ञा' सोमेन लतारूपेण सहौषधयः संवादं कुर्वन्ति। हे ग्रावाणः 'वो' युष्मान् सविता देवो धर्मेण प्रसुवत्विति श्रुत्यर्थः॥

(२) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति॥ अब्रवीत् सूत्रकृदिति शेषः। मृदिति। मृदादेरभिमानिनी धरादिरूपा देवता 'तत्र' 'मृदब्रवीत्' इत्यादिश्रुतौ मृदादिशब्दैः 'व्यपदिश्यते' मुख्यवृत्त्या प्रतिपाद्यते इत्यर्थः। एवशब्देन जडव्यावर्तकेन योग्यतयाऽभिमानिपदेनान्वितः सौत्रस्तुशब्दोऽवधारणमुखेन विशेषार्थतया व्याख्यातः। जडापेक्षया चेतने मृदादिशब्दो मुख्य इति विशेषार्थो वा तुशब्दः। देवतेत्येकवचनेन अभिमानिनो व्यपदेशोऽभिमानिव्यपदेश इत्येकवचनान्तो विग्रहः सूचितः। अस्य मूलं तु 'दृश्यते च' इत्युत्तरसूत्रम्। एकवचनं च समुदायाभिप्रायम्। अत एव तासामित्यादिवचनम्।

( ३ ) तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र ।
अतस्तासां सर्वमुक्तं युज्यते ॥ ६ ॥
( ४ ) सू—ॐ ॥ दृश्यते च ॥ ॐ ॥ ७ ॥
तासां सामर्थ्यं महद्भिः ।

व्यपदिश्यत इत्यनन्तरं यत इति शेषः, अस्यात इति वक्ष्यमाणेनान्वयः ॥

( ३ ) ननु तथाऽपि नाभिमानिदेवता नाम सन्ति, तासामदेहत्वे वचनकर्तृत्वायोगात् । सदेहत्वेऽभिमन्यमानव्यापित्वे च दर्शनप्रसङ्गात् । अभिमन्यमानैकदेशवृत्तित्वे चाभिमानिरहितप्रदेशवदन्यदेशस्यापि विनैव ता अवस्थानोपपत्तेर्वैयर्थ्यापातादिति युक्तिविरुद्धत्वादित्याशङ्क्य तदुत्तरत्वेन विशेषेत्यादिसूत्रखण्डं व्याचष्टे—तासामिति ॥ देवतेत्येकवचनान्ते प्रकृतेऽपि 'दृश्यन्ते मुनिभिः' इति स्मृतौ बहुवचनप्रयोगात्तासामित्युक्तम् । आद्यश्चशब्दस्तुशब्दार्थो यत इत्यर्थे च। द्वितीयो विग्रहसमुच्चये, नासत्त्वमिति साध्यसमुच्चये च । तथा च यतः 'तासां' देवतानां 'सर्वत्र' स्वस्वाभिमन्यमाने 'अनुगतिः' व्याप्तिर्विग्रहश्चास्ति । अतः नोक्तयुक्तिविरोधेनासत्त्वं वाच्यम् । न चोपलम्भप्रसङ्गः । यतस्तासां 'इतरेभ्यः' चेतनेभ्यो 'विशिष्टं सामर्थ्यं' अदर्शनानुकूलोऽन्तर्धानशक्तिविशेषोऽत इति योजना । विशिष्टमित्यनेन विशिष्यते अतिशीयतेऽनेनेति व्युत्पत्तिमाश्रित्य विशेषपदार्थ उक्तो भवति । सामर्थ्यमिति सूत्रे शेषोक्तिः । सन्तु देवताः, प्रकृते किमायातमित्यत 'अभिमानिव्यपदेशः' इत्यनेनोक्तहेतोर्योग्यसाध्यमध्याहृत्य दर्शयति—अत इति । यतोऽत्र श्रुतौ मृदादिशब्दैस्तदभिमानिदेवता व्यपदिश्यन्ते, अतस्तासां चेतनत्वेन श्रुतावुक्तं 'सर्वं' वचनकर्तृत्वादिकं युज्यतेऽतो न युक्तिविरुद्धो वेदोऽतो नाप्रमाणमतस्तत्रोक्तं जगत्कर्तृत्वं विष्णौ युक्तमेवेति योजना ॥

( ४ ) नन्वप्रामाणिकदेवतातत्सामर्थ्यकल्पनापेक्षया वेदाप्रामाण्यकल्पनमेव वरं लाघवात् । न च 'मृदब्रवीत्' इत्यादिवेदेन तत्सिद्धिस्तत्प्रामाण्ये विवादादित्याशङ्कां परिहरत्सूत्रं पठित्वा तच्छेषं पूरयति—दृश्यते चेति ॥ 'तासां' पृथिव्याद्यभिमानिदेवतानाम् । अत्रापि बहुवचनं स्मृत्यनुसारेणेति ध्येयम् । 'सामर्थ्यं' शक्तिः । सामर्थ्यमित्यनेन विशेष इति प्रथमान्तपदस्य बुद्ध्या विविक्तस्येहानुवृत्तिस्सूचि

( ५ ) भविष्यत्पुराणे च—
पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याश्शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।

ता। महद्भिरिति सूत्रे शेषोक्तिः। यद्वा—सामर्थ्यमित्यनन्तरं अन्वितः सौत्रश्चशब्दो न केवलं देवतातत्सामर्थ्यसमुच्चयार्थः, किन्तु त्वर्थस्सन् महद्भिरित्यर्थद्योतकश्च। यथोक्तं पूर्वाधिकरणटीकायां तुशब्दः कर्तृ विशेषद्योतक इति। महद्भिरित्यनन्तरं यत इति शेषः। अस्यातो ना भिमानिदेवतानां तत्सामर्थ्यस्य चाप्रामाणिकत्वमित्यध्याहृतसाध्ये नान्वयः॥

( ५ ) ननु महद्भिः दृश्यमानत्वादिति हेतुरासिद्धः। परबुद्धेरप्रत्य क्षत्वादित्यतश्चशब्दसूचितं वाक्यं पठति—भविष्यदिति॥ न केवलं महद्भिर्दृश्यते, किन्तु पुराणेऽप्युक्तमिति समुच्चये वा, न केवलं देवता तच्छक्तयोः प्रत्यक्षसिद्धत्वं सूत्रकृदुक्तमेव, किन्तु पुराणेऽप्युक्तमिति समुच्चये वा, चशब्दः। अतो न हेत्वासिद्धिरिति भावः। पुराण इत्य नन्तरं उक्तमिति शेषः। किमुक्तमित्यतः तद्वाक्यं पठति—पृथिवीति। आदिपदेन अबादिग्रहणम्। 'प्रथितौजसः' प्रसिद्धसामर्थ्याः। न के वलं प्रथितौजसः, किन्तु तासां शक्तयोऽचिन्त्याश्च। अचिन्त्याः शक्त यश्च। न केवलमेतावत्, किन्तु 'सर्वगताः' स्वांशैर्यावदभिमन्यमान व्यापिन्यश्चेत्येकस्य चशब्दस्यार्थः। न केवलं ताः देवताः दृश्यन्ते, किन्तु तासामचिन्त्याः शक्तयश्च मुनिभिर्दृश्यन्त इत्यन्यचशब्दस्या र्थः। यद्वा—एकेनैव प्रथमान्ततच्छब्देन देवतातच्छक्त्योः परामर्श सम्भवादन्यः प्रथमान्ततच्छब्दो देवतामात्रपरामर्शकः, तत्प्रयोजनं तु देवतामात्रे सर्वगतत्वविधानम्। एवमेकेनैव अनेकविशेषणसमुच्चयस म्भवात् अन्यश्चशब्दो न विशेषणसमुच्चयार्थः, किन्तु तुशब्दार्थो वि शेषद्योतकः। तासां शक्तयोऽचिन्त्या इत्यनेन देवतानामचिन्त्यशक्ति त्वमुक्तं, तत्कथमित्यत आह—वासुदेवेति। वासुदेव एव एको मुख्यः संश्रयोऽस्माकं शरणमिति ज्ञानं येषां ते तथोक्ताः। अनेनोत्तमाधिका रित्वोक्त्या परमात्मप्रसादादेव तेषाममुख्यमचिन्त्यशक्तित्वमित्युक्तं भवति। इति भविष्यत्पुराणे इत्यन्वयः। अथवा-विग्रहवतीनां सर्वगता नां तासां दर्शनप्रसङ्ग इत्युक्ते प्रष्टव्यं, किमज्ञानां दृश्येरन् महतां वा। आद्यस्योत्तरं विशेषपदं सूत्रे, तासां विशिष्टं सामर्थ्यमिति भाष्यं च

ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः ॥ इति ॥७॥

—*-:*:-*—

४. अधिकरणम् ॥

( १ ) 'असदेवेदमग्र आसीत्' ( छा. ६-२-१. ) 'असतः सदजायत' ( ऋ. १०-७२-३. ) इत्यादिनाऽसतः का

तद्व्याख्यानरूपम् । द्वितीयस्याभ्युपगमेनोत्तरमुक्तम्-दृश्यन्ते चेति । अस्मिन् पक्षे न केवलमभिमानिदेवता अन्तर्धानशक्त्याख्यविशेषसामर्थ्येनाज्ञैः न दृश्यते, किन्तु महद्भिर्योगिभिः दृश्यते चेति दर्शनादर्शनसमुच्चये पूर्ववद्देवतातत्सामर्थ्यसमुच्चये वा चशब्दः । यद्वा—वस्त्वन्तरमधिष्ठाय तासां वचनादिकं कथमिति चोद्यस्योत्तरं—तासां चेतरेभ्यो विशिष्टं सामर्थ्यमिति । परिच्छिन्नानामभिमानिनीनां कथमनेकाभिमन्यमानाधिष्ठातृत्वमपीत्यस्योत्तरं—अनुगतिरिति । चोऽप्यर्थः । योगिभिरप्यनुपलभ्यमानत्वान्नास्त्यभिमानिदेवतेति शङ्कानिरासाय—दृश्यते च इति सूत्रम् । अत्र पक्षे चोऽवधारणे । योगिभिरभिमानिदेवता दृश्यते एवेति । तथा च नानुपलब्धिबाधोऽभिमानिदेवताया इति भावः । अस्मिन् पक्षे विशेषानुगतिभ्यां दृश्यते चेत्युक्तहेतूनां नाकांक्षाक्रमेण तत्तद्देवतारिकागतयोग्यसाध्येनान्वयः, अपि तु यथाश्रुतक्रमेणान्वयः इत्ययं पक्षो विशिष्ट इति ध्येयम् ॥ ३ ॥

इति अभिमान्यधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) अत्र ब्रह्मणो जगत्कर्तृत्वे श्रुत्युपसर्जनप्रागभावकर्तृकत्वसाधकयुक्तिविरोधो निरस्यते। तत्र असदिति चेदित्यनेन सूचितं पूर्वपक्षं दर्शयति—असदेवेति ॥ 'असदेवेदमग्र आसीत्' इति छन्दोगवाक्यम् । 'देवानां पूर्व्येऽयुगे असतः सदजायत' इति ऋग्वेदवाक्यम् । 'इत्यादिना' वाक्येन । आदिशब्देन 'असद्वा इदमग्र आसीत्' (तै.उ.२-७-१.) इति तैत्तिरीयादिवाक्यं गृह्यते । विरोध इति । अत्र वेदस्येति विपरिणामे नानुवर्तते । तथा च 'यतो वा' इत्यादिवेदस्य 'असदेव' इत्यादिना विरोधः । कुतः ? 'इत्यादिना' वाक्येन 'असतः' विश्वप्रागभावस्य 'कारणत्वोक्तेः' विश्वकर्तृत्वोक्तेः वेदेन च विष्णुकर्तृत्वोक्तेरिति योजना । यद्वा—तत्त्वप्रदीपोक्तरीत्याऽनुवृत्तिं विनैव सत इति पदच्छेदे

रणत्वोक्तेर्विरोध इति ।

( २ ) अतो वक्ति—

सू—ॐ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ॐ ॥ ८ ॥

न 'सतो' ब्रह्मणः कारणत्वोक्तेः 'यतो वा' इत्यादिश्रुतेः 'असद्वा' इत्यादिना विरोध इति योजना । अथ वा—तत्त्वप्रदीपरीत्या 'असदेव' इत्यनेन असतः कारणत्वोक्तेरादिशब्दगृहीतेन 'यतो वा' इत्यादिना सतः कारणत्वोक्तेः परस्परविरोध इत्यन्वयः । न च अनेन श्रुतिविगानेन सन्देह एव भवति, नान्यतरपक्षावधारणमिति वाच्यम् । पूर्वपक्षीयश्रुतेः प्रागुत्पत्तेर्विनाशादूर्ध्वं चासदात्मकत्वात्कार्यस्य तत्कारणमपि प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवदित्यादियुक्तियुक्तत्वेन प्रबलत्वात्तया सैद्धान्तिकश्रुतेर्बाधोपपत्तेः । तथा चायं विरोधशब्दो युक्तिविरोधस्याप्युपलक्षको बाधार्थश्च द्रष्टव्यः । विरोध इत्यनन्तरं यत इति शेषः । अस्यातो न वेदो विष्णुजगत्कर्तृत्वे प्रमाणं, अतः प्रमाणाभावान्न तद्युक्तमित्युपस्कृतवाक्येनान्वयः । अनेन—सूत्रे असदित्युक्तिर्न केवलं प्रागभावरूपधर्म्युपस्थापिका, किन्तु श्रुतिप्रतीकग्रहणरूपाऽपि । जगत्कर्त्रिति शेषः । तथा च 'असत्' विश्वप्रागभाव एव जगत्कर्तृ, न ब्रह्म । कुतः ? 'असत्' इति श्रुतेरिति सूत्रखण्डार्थ उक्तो भवति । सिद्धान्तरीत्या श्रुत्यर्थस्तु—'इदमग्रे' अस्याग्रे जगत्सृष्टेः पूर्वं प्रलये न विद्यते सदुत्तमं यस्मात्तत् 'असत्' सर्वोत्तमं ब्रह्मैवासीत् तत्तस्मात्सन्नामको मुख्यवायुः 'अजायत' अभूत् । 'पूर्वे युगे' आदिसृष्टिकाले 'असतो' ब्रह्मणो देवानां प्रथमः सन्नामको वायुरजायतेति । तैत्तिरीयभाष्ये तु—असन्नामा नारायणो मूलरूपी आसीत् । तस्मात्सन्नामा वासुदेवः प्रादुरभूदित्यर्थ उक्तः । प्रमेयदीपे तु 'असतः' इति श्रुतेरनेकार्थत्वादित्यादिनाऽसच्छब्दः प्रकृतिपरतया व्याख्यातः । पूर्वपक्षी तु शतुः छान्दसं भावसाधनत्वमाश्रित्य असद्भाव इति व्युत्पत्त्या वा असदसत्त्वमिति भावप्रधानत्वेन वाऽसच्छब्दो विश्वप्रागभावपरः, सच्छब्दस्तु भावकार्यवाचीति मन्यते ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य आक्षेपांशस्य पूर्वमेव विवृतत्वात् परिहारांशं व्याचष्टे—अत इति ॥ प्रतिषेधेति । अभावरूपधर्मद्वारमन्तरेण धर्मिस्वरूपेणैव प्रतिषेधबुद्धिविषयत्वादित्यर्थः । घटप्रागभावादिवदिति दृष्टान्तवाक्यस्याप्युपलक्षकमेतत् । भावेषु कुलालादिषु अ

प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् ।
( ३ ) असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र नि
षिध्यते ।

न्योन्याभावरूपधर्मस्वरूपेण प्रतिषेधरूपत्वमस्तीति व्यभिचारवारणा य मात्रपदं सूत्रे भाष्ये च । अभावधर्मात्मतामन्तरेण स्वरूपत एवे ति तदर्थः । अभावस्याप्यभिधेयत्वादिधर्मात्मनाऽप्रतिषेधरूपत्वाद् सिद्धिपरिहाराय—स्वरूपत एवेति । प्राधान्येनेत्यर्थः । तथा च ध र्मधर्म्यभेदपक्षे सर्वस्य वस्तुनो धर्मधर्मिरूपेण द्विरूपत्वेऽपि धर्मोद्ध र्मी प्रधान इति तेनाकारेण निषेधरूपत्वस्य विवक्षितत्वान्नोक्तदोष इ ति भावः । सूत्रे हेत्वंशस्य स्पष्टत्वात्तदन्यत्र व्याकृतत्वाच्च तद्व्याख्या मकृत्वा नेति साध्यान्वयाय तदनुकृत्य प्रतिषेध्यप्रदर्शनेन साध्यांशं व्याचष्टे—प्रतिषेधमात्रत्वादिति । 'असतः' अभावस्य 'कारणत्वं' जगत्कर्तृत्वं न युक्तमित्यर्थः ॥

( ३ ) नन्वत्राधिकरणेऽसतो जगत्कारणत्वं वदतां शून्यवादिनां समयो निराक्रियते, न तु श्रुतिप्राप्ताभावकर्तृत्वम्, अतः 'एतेन सर्वे' इत्यत्रासदादिशब्दानां ब्रह्मपरत्वस्योक्तत्वेन अत्र श्रुत्याऽसतः प्राप्त्य भावादपव्याख्यानमेतदित्यत आह—असत इति । आदिशब्देन प्रलय स्थितत्वमनःपूर्वकत्वादेर्ग्रहणम् । कारणत्वादेरुक्तिः कारणत्वाद्युक्तिस्त या विरुद्धमिति विग्रहः । तथा च विष्णुकर्तृत्वपरं 'यतो वा' इत्यादिवे दवाक्यं 'असतो' विश्वप्रागभावस्य या कारणत्वाद्युक्तिः 'असदेव' इत्यादिरूपा, तद्विरुद्धमित्येवंश्रुतिप्राप्तं 'एतत्' असन्मतं 'अत्र' ए तस्मिन्नधिकरणे 'निषिध्यते' निराक्रियते इत्यर्थः । तत्त्वप्रदीपे तु अ सतः कारणत्वाद्युक्तिरूपाद्धेतोर्विरुद्धं 'असदेवेदम्' इत्यादिवाक्यमुक्त समन्वयविरुद्धमप्रामाण्यमेतीत्येतदत्र निषिध्यते । अथ वा—क्वचिद सतः कारणत्वोक्तेरादिशब्दगृहीतायाः क्वचित्सतः कारणत्वोक्तेश्च परस्परविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । अथ वा—वस्तुत्वादि युक्त्या च असतः कारणत्वावगमाद्युक्तिविरुद्धं ब्रह्मकारणतावाक्य मित्येतदत्र निषिध्यते, न शून्यसमय इति 'असतः कारणत्वात्' इति वाक्यं बहुधा व्याख्यातम् । अत्राद्यपक्षेऽसतः कारणत्वाद्युक्तेः हेतोर्वि रुद्धमिति पञ्चमीगर्भो विग्रहः । द्वितीयेऽप्ययमेव विग्रहः, आदिशब्दा र्थो भिन्नः । तृतीये कारणत्वादिति भिन्नं पञ्चम्यन्तं पदमिति विवेको

(४) सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' इत्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकाराद सतः प्राप्तिः। तथा श्रुतिप्राप्तमेवासन्मतमत्र निषिध्य ते। समयस्योपरि निषेधात्।

(५) अर्थाद्युक्तिविरोधो निराक्रियते ॥ ८॥

---

द्रष्टव्यः ॥

(४) ननूक्तं श्रुत्यादिना नासतः प्राप्तिरिति तत्राह—सर्वशब्दाना मिति ॥ आदिशब्देन 'तथा ह्यधीयते' इत्यादिकं गृह्यते। अपिः शङ्का द्योतकः। न केवलं ब्रह्मण इति समुच्चये द्वितीयः। तथा च सर्वेषां श ब्दानां ब्रह्मणि 'समन्वये' परममुख्यत्वे 'एतेन' इत्यादिनोक्तेऽपि 'त दधीनत्वादर्थवत्' इत्यादिना सूत्रकृता 'अन्यस्य' असदादेरपि 'अ मुख्यत्वेन' परममुख्यान्यवृत्त्या 'वाच्यत्वाङ्गीकारात्' असदादिशब्द बोध्यत्वाङ्गीकारादसतः कर्तृत्वेन श्रुत्या प्राप्तिरस्तीत्यर्थः। नन्वस्त्येव मसतः प्राप्तिस्तथाऽप्यसत्कर्तृत्वसमयोऽत्र निराक्रियत इति किं न स्या दित्यत आह—तथेति। तस्मादित्यादावुपस्कार्यम्। श्रुतिप्राप्तमेवासन्म तमित्यनेन एतदिति स्ववाक्यमेतच्छब्दार्थप्रदर्शनेन सावधारणतया विवृतं भवति। न समयप्राप्तमित्येवशब्दार्थः। तथा च यस्मादसतो मुख्यत्वेन श्रुत्या प्राप्तिरस्ति तस्मात् 'तथा' मुख्यतया श्रुतिप्राप्तमेव 'असन्मतं' अभावकर्तृत्वदर्शनं 'अत्र' अधिकरणे निषिध्यते, न स मय इत्यर्थः। निषिध्यत इत्यनन्तरं इत्येवाङ्गीकार्यमिति शेषः। कुत इ त्यत आह—समयस्येति। शून्यकारणत्वसिद्धान्तस्य 'उपरि' उपरि तनपादे 'नासतः' इत्यनेन 'निषेधात्' निराकरिष्यमाणत्वादित्यर्थः। अन्यथाऽत्रापि समयप्राप्तस्यैव निषेधे प्रागभावकर्तृत्वप्रापकसमयाभा वेन शून्यसमयनिषेधस्यैव प्राप्तया पौनरुक्त्यापातादिति भावः॥

(५) यद्यत्र ब्रह्मणो जगत्कारणत्ववाचिश्रुतेः श्रुतिप्राप्तासन्मतवि रोधो निराक्रियते, तर्ह्येतदधिकरणं तृतीयपादे निबन्धनीयं, न तु यु क्तिविरोधपरिहारेऽस्मिन् पादे इत्यत आह—अर्थादिति ॥ विरोधश ब्दात्परमपिशब्दोऽनुषञ्जनीयः। तथा च यतोऽत्राधिकरणे न केवलं श्रु तिविरोधः, किं नाम? युक्तिविरोधोऽपि निराक्रियते अतो नासङ्गति रित्यध्याहारेण योजना। तथाऽपि युक्तिविरोधमात्रपरिहारात्मकेऽस्मि न् पादे श्रुतियुक्तिविरोधपरिहारोऽसङ्गत इत्यत उक्तं—अर्थादिति। फ

( ६ ) सू—ॐ ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ॐ ॥ ९ ॥
असत उत्पत्तौ प्रलये सर्वासत्त्वमेव स्यात् ॥ ९ ॥

लत इत्यर्थः । अत्रापिशब्दस्यादावेवान्वयः । तथा च पूर्वपक्षिणा नि र्मूलयुक्तेरसाधकत्वेन युक्तिप्राबल्याय श्रुत्युपन्यासात्तदनुसारेण मुख्य तः श्रुतिविरोधपरिहारेऽपि फलतः प्राधान्येन युक्तिविरोधस्यैव परिहा रात्स्वातन्त्र्येण युक्तिविरोधमात्रपरिहारात्मकेऽस्मिन् पादे उभयवि रोधपरिहारो नासङ्गत इति भावः ॥

( ६ ) यदुक्तं प्रतिषेधमात्रत्वादिति युक्तिविरोधान्नासतः कारण त्वमिति, न तद्युक्तम् । युक्तिविरुद्धस्यापि श्रुतिबलात्कस्य चिदभाव स्य कर्तृत्वाभ्युपगमे बाधकाभावात् । न चैवं घटप्रागभावादीनामपि क र्तृत्वप्रसङ्ग इति वाच्यम् । भावेषु कस्य चित्कर्तृत्वं कस्य चिदकर्तृ त्वमिति वैलक्षण्यवदभावेष्वपि घटप्रागभावादेरकर्तृत्वं विश्वप्रागभाव स्य च 'असदेव' इत्यादिश्रुतिबलात्कर्तृत्वमिति वैलक्षण्योपपत्तेरित्या शङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अपीताविति ॥ सूत्रेऽनिष्टप्रस ङ्गोक्त्या लभ्यमापादकं दर्शयति—असत इति । पञ्चमीयं, विश्वप्राग भावात्सर्वकार्योत्पत्तौ अभ्युपेतायामित्यर्थः । प्रलये भावमात्रस्य अस त्त्वे कालोऽपि न स्यादिति प्रसङ्गसूचनायापीतावित्युक्तम् । तस्यार्थमा ह—प्रलय इति । यद्यपि 'अप्ययोऽयं समुद्दिष्टस्तदन्येषामदर्शनम्' इ ति वचनान्न प्रलयोऽपीतिशब्दार्थः । तथाऽपि तस्य पर्यवसितार्थोक्ति रियमित्यदोषः । तद्वदित्यत्र तच्छब्दः प्रकृतासत्परोऽवधारणमात्रशब्द शिरस्कश्च । वदिति मतुप्प्रत्ययः, न तु पररीत्या वतिः । तद्वदिति च भावप्रधानमित्यभिप्रेत्य तद्वत्प्रसङ्गादित्यस्य तात्पर्यार्थमाह—सर्वेति । न तु कस्य चिदसत्त्वमित्येवशब्दार्थः । तथा च प्रळये सर्वस्य भावमात्र स्यासत्त्वे असन्मात्रावशेषः स्यात्, कार्यनाशे कारणमात्रावशेषनिय मादिति भावः । यद्वा—तद्वदिति वतिरेव । तथा च कार्यवत्सर्वस्या पि भावस्यासत्त्वं स्यादित्यर्थः । तत्राद्यः टीकारीत्या, द्वितीयोऽर्थः त त्त्वप्रदीपरीत्या उक्त इति ज्ञातव्यम् । स्यादित्यनन्तरं यत इति शेषः । अस्यातः 'असमञ्जसं' अयुक्तमसन्मतमिति साध्यभागेनान्वयः । स्प ष्टत्वादस्यार्थो नोक्तः । अनेन—असतः सकाशाज्जगदुत्पत्तावभ्युपेता यां 'अपीतौ' प्रलये 'तद्वत्प्रसङ्गात्' असन्मात्रवत्त्वप्रसङ्गात्तन्मात्राव शेषप्रसङ्गात् 'असमञ्जसं' अयुक्तमसत्कर्तृत्वमतमिति सूत्रार्थ उक्तो

(७) सू—ॐ ॥ न तु दृष्टान्तभावात् ॥ ॐ ॥ १० ॥
प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते । स
त उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ॥ १० ॥
(८) सू—ॐ ॥ स्वपक्षदोषाच्च ॥ ॐ ॥ ११ ॥

भवति ॥

(७) नन्वस्माभिरपि प्रलयेऽसन्मात्रावशेषस्याभिलषितत्वान्नानिष्टापादनमेतदित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—न त्विति ॥ प्रलय इत्यनेन पूर्वसूत्रादनुवृत्तस्यापीताविंत्यस्य सर्वासत्त्वमित्यनेन तत एवानुवृत्तस्य तद्धत्त्वमित्यस्य भाव एव, न त्वभाव इति । अनेन तु शब्दस्यार्थ उक्तो भवति । दृष्टान्तसत्त्वं कुत्रेत्याकांक्षायां तद्योग्यविषयं दर्शयति—भाव इति । पदार्थसत्त्वे इत्यर्थः । तथा च प्रळये भावे पदार्थसत्त्वविषय एव 'दृष्टान्तभावात्' दृष्टान्तगृहीतव्याप्तिकानुमानसद्भावान्न तदा सर्वपदार्थानामसत्त्वमभ्युपगन्तुं युज्यत इति भाष्ययोजना । दृष्टान्तभावादेवेति यथाश्रुतान्वयो वा अस्मिन् पक्षे अनुमानप्राबल्यप्रदर्शनमुखेन नेतरत्र प्रमाणान्तरविरोधो मृग्य इत्यर्थक एवशब्दः । कोऽसौ प्रलये पदार्थसत्त्वसाधने दृष्टान्त इत्यत आह—सत इति । भावपदार्थादित्यर्थः । 'सशेषः' सावशेषः । चः समुच्चये । 'हि' यतः 'लोके' पटादौ । दृष्ट इत्यस्य यथायोग्यमुभयत्राप्यन्वयः । अस्यातो न युज्यते इति पूर्वेण सम्बन्धः । अनेनेमौ प्रयोगौ सूचितौ—विप्रतिपन्ना महदादिकार्योत्पत्तिः भावपदार्थाद्भवितुमर्हति, उत्पत्तित्वात्, पटोत्पत्तिवत् । एवं विमतो विनाशः सशेषः, विनाशत्वात् पटनाशवदिति । पटनाशेऽपि तन्त्वाद्यवशेषदर्शनाद्दृष्टान्तत्वोपपत्तिः । तथा च प्रलये सर्वासत्त्वमनुमानप्रमाणसिद्धार्थपरित्यागरूपत्वाद्भवत्येव तदापादनमनिष्टापादनरूपमिति भावः ॥

(८) न केवलं प्रामाणिकपरित्यागप्राप्तया प्रलये सर्वासत्त्वमनिष्टं अपि तु अप्रामाणिकत्वाच्चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे—स्वपक्षेति ॥ दृष्टान्ताभावादित्यावर्तते । अनेन दोषादित्यस्य एवेत्यनेन चशब्दस्यार्थ उक्तो भवति । तथा च दृष्टान्तसापेक्षानुमानप्रमाणाभावान्न सर्वासत्त्वं युज्यते । कुतस्तदभावः? दृष्टान्ताभावादेव, नन्वनुमानाभावमात्रेण कथं सर्वासत्त्वमप्रामाणिकं? प्रत्यक्षागमयोः सम्भवा

दृष्टान्ताभावादेव ॥ ११ ॥

(९) सू—ॐ ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदे वमप्यनिर्मोक्षप्रसङ्गः ॥ ॐ ॥ १२ ॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावात् उक्ता दन्यथाऽप्यनुमेयमिति चेत्—

(१०) न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथानुमेयत्वा

---

दित्यत आह—दृष्टान्तेति । दृष्टं प्रत्यक्षं अन्तो निर्णयस्तज्जनक आगम स्तयोरभावादित्यर्थः । अनेन सूत्रे दोषपदमनेकार्थं प्रत्यक्षागमयोरभा वमनुमानस्य दुष्टत्वं तत्प्रयोजकं दृष्टान्ताभावं च वक्तीति सूचितम् । एवशब्देन न दुष्टत्वनिमित्तान्तरं वक्तव्यमिति सूचयति । तथा च प्र लये सर्वासत्त्वपक्षस्याप्रामाणिकत्वात्तदभ्युपगमोऽनिष्ट इति भावः । य द्यपि टीकारीत्या न केवलं भावे दृष्टान्तभावात्, किन्तु स्वपक्षे प्रलये सर्वाभावपक्षे दृष्टान्ताभावात्प्रमाणसामान्याभावादिति समुच्चयार्थत या सौत्रश्चशब्दो भाति । तथाऽपि भाष्येऽर्थान्तरं चोक्तमिति न वि रोधः ॥

(९) तर्केण सदसतोः कारणत्वसाधनबाधने आक्षिप्य समादध त्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—तर्केति ॥ एवशब्दोऽनेवंभाव व्यावर्तकः । अन्यथा वैपरीत्येनापीत्यनेनावृत्तोपि भिन्नक्रमः समुच्च यार्थ इत्युक्तं भवति ॥ अनुमेयमित्यनन्तरं यत इति शेषः । तथा च 'तर्कः' प्रत्यनुमानं 'एतावानेव' एतादृशस्थापनानुमानं प्रति विरो धितया वर्तते, नैतादृशं प्रतीत्येवंभावोपेत एवेत्यत्र 'प्रतिष्ठापकप्रमा णाभावात्' नियामकप्रमाणाभावात् सर्वानुमानेष्वप्युक्तादन्यथाऽप्य नुमेयमनुमातुं शक्यं यतोऽतः तर्कः सूत्रद्वयोक्तं स्थापनानुमानमपि 'अन्यथा' अप्रमाणम् । कुतः ? यतोऽत्रापि 'न तु दृष्टान्तभावात्' स्वपक्षदोषाच्च, इत्युक्तात्सत्कारणत्वासत्कारणत्वाभावादन्यथाऽभाव कारणत्वभावाकारणत्वरूपमप्यनुमेयमत इति योजना ॥

(१०) नञध्याहारेण परिहारांशं व्याचष्टे—नेति ॥ एवं सतीत्यने न एवमित्यस्य प्रमाणसिद्धेऽपीत्यनेन अपीत्यस्यार्थ उक्तो भवति । मो क्षपदं तत्त्वप्रदीपरीत्या प्रामाणिकमात्रोपलक्षकम् । यद्यपितथापीत्यर्थे न केवलं अप्रामाणिक इति समुच्चये कैमुत्ये वाऽपिशब्दः । उक्तादित्य स्ति । अन्यथानुमेयत्वादित्यनेन अत्राप्येवमपीत्यनन्तरं यतश्शब्दशिर

दनिर्मोक्षप्रसङ्गः ।
( ११ ) अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यं नातोऽन्यच्छङ्क्यम् ।

स्कमन्यथानुमेयमिति पदद्वयं च संयोज्यमिति सूचितम् । तथा च प्रतितर्कपराहतत्वेन सर्वतर्कस्याप्यप्रमाणत्वात् न तेन साधनं बाधनं वा युक्तमिति यत्पूर्वपक्षिणोक्तं, तन्न, कुतः ? एवं सत्यागमाप्रामाण्यवादिनं प्रत्यवश्यमुपन्यसनीयेन अनुमानप्रमाणेन सत्त्वेन नित्यत्वेन च सिद्धे 'मोक्षे' तद्विषये प्रामाणिकातीन्द्रियार्थमात्रेऽपि चार्वाकादिभिरास्तिकोक्तान्मोक्षास्तित्वनित्यत्वादिरूपार्थान् 'अन्यथाऽनुमेयत्वात्' अनुमातुं शक्यत्वात्, अतएव मोक्षाद्यलौकिकार्थविषयानुमानस्य अन्यथाऽप्रमाणत्वेन अनुमेयत्वात् 'अनिर्मोक्षप्रसङ्गो' निरयमतिशयार्थो न निषेधार्थः नञ्च प्रतिषेधार्थस्तथाचात्यन्तिकदुःखनिवृत्तिरूपस्य त्वयापि शास्त्रमहाफलत्वेनाङ्गीकृतस्य मोक्षस्याप्यभावः प्रसज्येतेति योजना । अनेन—'तर्काप्रतिष्ठानात्' एतावानेव प्रतितर्क इत्यत्र नियामकप्रमाणाभावात्सर्वत्राप्युक्तात् 'अन्यथाप्यनुमेयं' यतोऽतः 'तर्काप्रतिष्ठानात्' सर्वानुमानेषु तर्कस्य प्रत्यनुमानस्य विरोधितया अनिवारणीयत्वात् अत एव 'तर्काप्रतिष्ठानात्' स्थापनानुमानानां प्रामाण्याभावात्तर्कोऽन्यथैव अर्थसाधनबाधनाक्षम एव भवतीति चेत्—न, एवं सत्युक्ताद्धेतोस्तर्कमात्रस्याप्रामाण्याभ्युपगमे सत्यपि प्रमाणसिद्धेऽपि मोक्षे यतोऽन्यथाऽनुमेयं प्रतितर्केण मोक्षवाद्युक्तादन्यथाप्यनुमातुं शक्यमतोऽनिर्मोक्षप्रसङ्गः, अतो न तर्कसिद्धं सर्वं प्रतितर्केण दूषयितुं शक्यमिति सूत्रार्थ उक्तो भवति ॥

( ११ ) एवं सर्वतर्केषु विरोधितया प्रतितर्कः प्रसरतीत्यङ्गीकारेऽतिप्रसङ्गमभिदधत्सूत्रांशं विवृत्य तदभिप्रेतं विपर्यये पर्यवसानं दर्शयति—अत इति ॥ यावत्तावच्छब्दौ यत्तदित्यर्थौ । वस्तुतर्केणेति शेषः । तथा च यत एवं प्रामाणिकतर्कस्यापि प्रतितर्केण बाधाभ्युपगमेऽतिप्रसङ्गो भवति, अतो यद्वस्तु प्रमाणेन सिद्धं तदेव तर्केण पक्षे साध्यतयाङ्गीकार्यमित्यर्थः । एवकारव्यावर्त्यं दर्शयति—नेति । तर्केण निषेद्धुं साधयितुं वेति शेषः । तथा च 'अतः' प्रमाणसिद्धात् 'अन्यत्' अप्रामाणिकं न तर्केण साधयितुं शक्यम्, एवं 'अतः' प्रमाणासिद्धात् 'अन्यत्' प्रमाणसिद्धं न तर्केण निषेद्धुं शक्यमित्यर्थः । तथा

( १२ ) यावदेव प्रमाणेन सिद्धं तावदहापयन् ।
स्वीकुर्यान्नैव चान्यत्र शक्यं मानमृते क्वचित् ॥
इति वामने ॥ १२ ॥

( १३ ) सू—ॐ ॥ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॥ॐ॥१३॥

च यः प्रमाणसाहाय्ययुक्तः प्रतितर्कः स एवाप्रामाणिकतर्कं बाधते, न त्वप्रामाणिकः प्रामाणिकम । सद्कारणत्वासत्कारणत्वसाधकत र्कौ त्वप्रामाणिकौ । सत्कारणत्वमोक्षादिसाधकः प्रकृततर्कश्च प्रामा णिकः । अतो न ताभ्यां निषेद्धुं शक्यत इति भावः ॥

( १२ ) अत्रार्थेऽपिशब्दसूचितां स्मृतिं सम्मतित्वेनाह—यावदिति॥ अत्रापि यावत्तावच्छब्दौ यत्तदित्यर्थौ । अतएव पूर्वं तथैवोक्तम् । व स्त्विति तर्केणेति च शेषः । चस्त्वर्थः । तथा च यत्प्रमाणेन सिद्धं व स्तु तद्देवाहापयन् तर्केण 'स्वीकुर्यात' तर्केण साधयेत, न तु प्रामा णिकादन्यत्रान्यदप्रामाणिकम । कुतः ? यतो 'मानं' अनुग्राह्यप्रमा णं 'ऋते' विना तर्केण तर्कमात्रेण 'क्वचित' किञ्चिद्वस्तु साधयितुं निषेद्धुं वा न शक्यमत इत्यर्थः । शङ्क्यमिति पाठे शङ्काहमपि नेत्य र्थः । इति वामने इत्यस्योक्तत्वात् 'यावत' इत्यादिश्लोक्तं युक्तमित्युप स्कृतेनान्वयः ॥

( १३ ) ननु मास्त्वसच्छब्दिताभावतत्त्वं जगतः कारणं, तथाऽपि न विष्णोर्जगत्कारणत्वं सम्भवति, विप्रतिपन्नं जगन्निष्कारणकं, अचेतन कारणकं, जीवकारणकं वा, कार्यत्वात्कूलपतनवत दध्यादिवदिति निष्कारणत्वादिसाधकयुक्तिविरोधात् । न च निर्मूलयुक्तेरसाधकत्व मिति वाच्यम । 'अकस्मात' इत्यादिश्रुतिमूलत्वादित्याशङ्कां परिहर त्सूत्रमुपन्यस्य व्याचष्टे—एतेनेति । एतेनेति पदमनूद्य तेनातिदिष्टौ हेतु विवृतो—दृष्टान्तभावेनाभावेन चेति । तत्रासत्कारणत्वादौ नि ष्कारणत्वादाविति पदद्वयमादावुपस्कार्यं यथाक्रममस्यान्वयः । चः समुच्चये । दृष्टान्तभावेनेत्यनेन तन्मूलकानुमानसद्भावः, तदभावेनेत्यने न तन्निमित्तानुमानाभावश्चोक्तः । कूलपतनादीनामपि ईश्वरकारणक त्वेन निष्कारणत्वादि न सम्मतमिति न दृष्टान्तत्वमिति भावः । शि ष्टा इत्यस्य व्याख्यानमवशिष्टा इति । प्राङ्गिराकृतादवशिष्टास्तथा प्र तीता इत्यर्थः । इदं च प्राङ्गिरस्तासत्कर्तृत्वसिद्धान्तव्युदासायोक्तम।

एतेन दृष्टान्तभावेनभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि ।

( १४ ) अकस्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति ।

अपरिग्रहा इत्येतदनूद्य नञो विरुद्धार्थत्वं परिग्रहशब्दस्याभिधानार्थत्वं परिगृह्यते इति परिग्रहः इति कर्मव्युत्पत्तिं चाश्रित्य व्याचष्टे-विरुद्धेति । वेदोक्तपक्षविरुद्धपक्षा इत्यर्थः । यद्वा-'वेदापरिगृहीताः' इति सुधोक्तेः पर्युदासार्थो नञ्, तस्य फलितार्थकथनं विरुद्धेति । इदं त्र विशेषणं ब्रह्मकर्तृत्वसिद्धान्तव्युदासायोक्तम् । अकर्तृकत्वमकारणकत्वम् । अतएव सुधायां 'अत्र कर्तृशब्दः कारणमात्रपरो द्रष्टव्यः' इत्युक्तम् । अत्रापि टीकायां 'विप्रतिपन्नं निष्कारणम्' इत्युक्तम् । अन्यथा निष्कारणत्वपक्षानुवादत्वानुपपत्तेरिति द्रष्टव्यम् । अचेतनकर्तृकत्वमित्येतत् अचेतनमात्रकारणकत्वमिति व्याख्येयम्, अन्यथा सिद्धान्ते प्रधानकारणकत्वस्य संमतत्वेन तन्निराकरणानुपपत्तेः । एवं जीवकर्तृत्वमित्येतदपि तन्मात्रपरतया व्याख्येयम् । आदिशब्देन तत्त्वप्रदीपरीत्या 'यतो वा' इत्यादिश्रुतिप्रापितं मायिब्रह्मकर्तृकत्वं गृह्यते । यद्वा—'कालस्वभावादिवादाः' इति सुधोक्तेः कालस्वभावकारणत्वादि गृह्यते । तस्यापि 'कालाद्भवन्ति भूतानि' इत्यादिभाष्यस्थद्वितीयादिशब्दगृहीतश्रुतिप्रापितत्वात् । 'अवशिष्टा अपि आदयोऽपि' इत्यपेरुभयत्र संयोगः सूत्रे परेषामिव शिष्टापरिग्रहा इत्येकं पदमिति भ्रमं वारयितुम् । अयं चापिः सर्वेऽप्यपरिग्रहा इत्यभिव्याप्त्यर्थकः । यद्वा—बहुकोशेषु समासपाठदर्शनादैकपद्यमेव । तथापि न परेषामिव तत्पुरुषः, किन्तु कर्मधारयसमासः प्राबल्यादिति । समासस्य स्पष्टप्रतीत्यर्थः भिन्नक्रमेणापिशब्दसंयोगः । अस्मिन् पक्षे शिष्टाश्च तेऽपरिग्रहाश्चेति विग्रहः । अत्र बुद्ध्या विवेकेनाभिव्याप्त्यर्थकापेः सम्बन्धः आवृत्त्यभिप्रायेणापेः द्विः प्रयोगः । द्वितीयस्यापेः यद्यपितथापीत्यर्थकस्य श्रुतिप्राप्ता अपीत्यध्याहृतेनान्वयः ॥

( १४ ) श्रुतिप्राप्ता इत्युक्ते कास्ताश्श्रुतय इत्याकांक्षायां तत्र प्रथमं निष्कारणत्वप्रापिकां श्रुतिमाह—अकस्मादिति ॥ 'इदं' जगत् 'अकस्मात्' अकारणकमेव 'आविरासीत्' उत्पन्नमभूत् अकस्मादेव स्थिति

(१५) प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति ।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम् ॥
(१६) जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परम् ।
इत्यादिश्रुतिप्राप्ता निराकृताः ।
(१७) यथा दुःखादिषु जीवस्यास्वातन्त्र्यमेवमन्येष्वपीति
दृष्टान्तः ।

---

मद्भवति लयं च प्राप्नोतीत्यर्थः ॥

(१५) अचेतनकारणत्वे श्रुतिमाह—प्रधानेति ॥ 'इदं' जगत् 'प्रधानात्' अचेतनप्रकृतेरुत्पन्नम् प्रधानमधितिष्ठति, तत्र प्रधाने लयं च प्राप्नोतीत्यर्थः । पुनः पुनः प्रधानशब्दप्रयोगस्तात्पर्यार्थः । एवं पूर्वोत्तरत्र च द्रष्टव्यम् । ननु कार्यस्य कारण एव लयौचित्या प्रधानादन्यस्यैव कारणत्वात्कथं जगतः प्रधाने लयः । न चोत्पत्त्यादिकर्तृत्वात्कारणत्वमिति वाच्यम् । उत्पत्त्यादिकर्तुरन्यस्यैव कारणत्वोपपत्तेरित्यत आह—न हीति । 'हि' यस्मात्प्रधानादन्यत्कारणं न प्रमाणप्रमितमेवं यस्मादुत्पत्त्यादिकर्तुरन्यत्कारणं न मतं, तस्मात्तस्यैवोत्पत्त्यादि कर्तृत्वात्कारणत्वं लयाधिकरणत्वं च युक्तमित्यर्थः । प्रसिद्ध्यर्थे हिशब्दः ॥

(१६) जीवकारणत्वे श्रुतिमाह—जीवादिति ॥ 'भूतानि' पृथिव्याद्युपलक्षितकार्याणि भवन्ति जायन्ते 'अचञ्चलाः' अचञ्चलानि 'तिष्ठन्ति' जीवेन धार्यन्ते इति यावत् । 'ऋच्छन्ति' प्राप्नुवन्ति । न जीवादित्येतत् पूर्ववदवतार्य व्याख्येयम् । 'परं' अन्यत् । अवधारणार्थस्य तुशब्दस्य न त्विति सम्बन्धः । नन्वत्रैव पादे निष्कारणत्वादिनिरासे समयपादे वक्ष्यमाणचार्वाकसाङ्ख्यपक्षनिषेधस्य पौनरुक्त्यं प्रसज्यत इत्यत उक्तं—इत्यादिश्रुतिप्राप्ता इति । श्रुतिमुख्यार्थ परिज्ञानमूलक कार्यत्वादियुक्ति प्रापिता इत्यर्थः । तथा च तत्र समयप्राप्तस्यैव निराकरणान्न पौनरुक्त्यमिति भावः । न चैवमस्य तृतीयपादनिवेशापत्तिरिति शङ्का तु 'अर्थाद्युक्तिविरोधो निराक्रियते' इत्युक्तरीत्या परिहरणीया । निराकृता इत्यनेन व्याख्याता इत्यस्य प्रत्याख्याता इत्यर्थ इति सूचितम् ॥

(१७) नन्वस्तु सत्कारणत्वादौ घटादिदृष्टान्तभावः, निष्कारणत्वादौ दृष्टान्ताभावश्च । तथाऽपि जीवकर्तृत्वपक्षनिरासाय कथमजीवकर्तृत्वे पतेनेत्यतिदिष्टो दृष्टान्तभावाख्यो हेतुस्सिद्धः, दृष्टान्तस्यादर्शना

( १८ ) श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता ।
( १९ ) यत्रान्यवाचकत्वेप्यविरोधस्तत्र अप्यदृश्यमुख्यतया

त । नापि जीवकर्तृत्वे दृष्टान्ताभावाख्यो हेतुस्सिद्धः, घटादीनां कुलालादिकर्तृकत्वदर्शनेन तेषामेव तत्र दृष्टान्तत्वसम्भवादित्यत आह—यथेति । कार्येषु साध्यमिति च शेषः । इतिशब्दो हेतौ । दृष्टान्त इत्युपलक्षणं, तदभावश्चेत्यपि द्रष्टव्यम् । तथा च यथा दुःखादिषु कार्येषु जीवस्य 'अस्वातन्त्र्यं' कर्तृत्वाभावः किं त्वीश्वरस्यैव एवं दुःखादिभ्य आन्तरेभ्योऽन्येषु घटादिबाह्यकार्येष्वप्यकर्तृत्वं जीवस्याकर्तृत्वं जीवस्य साध्यमनुमेयमिति हेतोरसिद्धिरतो जगतोऽजीवकर्तृकत्वे दुःखादिरूपो दृष्टान्तः । एवं जीवकर्तृकत्वे दृष्टान्ताभावश्चेत्यर्थः । तथा चाजीवकर्तृकत्वपक्षे दृष्टान्तभावाख्यो हेतुः तथा जीवकर्तृत्वपक्षे तदभावाख्यो हेतुश्च नासिद्ध इति भावः । ननु दुःखादिदृष्टान्तेन घटादिष्वपि जीवकर्तृकत्वाभावसाधने महदादिकमचेतनकर्तृकं न, किन्तु चेतनकर्तृकं कार्यत्वादिति सिद्धान्त्युपन्यस्तानुमाने घटादेः दृष्टान्तत्वोक्त्यनुपपत्तिरित्याशङ्कानिरासायाकर्तृत्वमित्यनुक्त्वाऽस्वातन्त्र्यमित्युक्तम् । तथाचोक्तसामान्यप्रतिज्ञायां घटादेर्दृष्टान्तत्वोक्तावपि न महदादिकं स्वातन्त्र्येण जीवकर्तृकमित्यत्र तेषां दृष्टान्तत्वप्रत्याशा कार्या । चेतनकर्तृकत्वे घटादीनां दृष्टान्तत्वोक्तेरचेतनकर्तृकत्वनिषेधमात्राभिप्रायकत्वेन घटादिषु स्वातन्त्र्येण जीवकर्तृकत्वास्तित्वेऽपि तात्पर्याभावात्, परस्य तु स्वातन्त्र्येण जीवकर्तृकत्वस्यैव साध्यतयाऽभिमतत्वात् तत्र च घटादेर्दृष्टान्तत्वासम्मतेः नोक्तानुपपत्तिरिति भावः ॥

( १८ ) नन्वसतः कारणत्वाभावे 'असदेव' इत्यादिश्रुतीनां का गतिरित्यत आह—श्रुतिगतिरिति । गम्यत इति गतिर्विषयः । तुशब्दः उक्ताशङ्काव्यवच्छेदकः । 'ब्रह्मवाचकत्वेन' असदादिशब्दानां ब्रह्मवाचित्ववचनेन 'प्रदर्शिता' 'एतेन सर्वे' इत्यत्र सूत्रकृतेति शेषः ॥

( १९ ) ननु श्रुतीनां परममुख्यवृत्त्या ब्रह्मवाचित्वेऽपि मुख्यवृत्त्याऽसदादेरपि तद्वाच्यत्वाद्विष्णुकारणता श्रुतेस्तद्विरोधः स्यादित्यत आह—यत्रेति ॥अपिः समुच्चये । तथा च न केवलं ब्रह्मवाचकत्वे किन्तु यस्यां श्रुतौ ब्रह्मान्यप्रकृत्यादिवाचकत्वे अङ्गीकृतेऽपि 'अविरोधः' अबाधः । विष्णुकारणताया इति शेषः । यद्वा—मानान्तरविरोध उपक्रमोपसंहारादिविरोधो वा पूर्वोत्तरवाक्यविरोधो वा नास्ति, 'त

उच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यते इति नियमः ॥ १३ ॥

---

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ ॐ ॥१४॥

---

त्र ' ब्रह्मणोन्यत् ' अमुख्यतया ' परममुख्यान्यमुख्यवृत्त्योच्यत इत्यर्थः। न केवलं ब्रह्मत्यपेरर्थः । यथाऽत्रैव ' प्रधानादिदमुत्पन्नम् ' इत्यादौ सिद्धान्ते ब्रह्मवाचकेनापि प्रधानशब्देनोपादानत्वेन प्रकृतिरुच्यते, यथा ' वायुर्भूतानामधिपतिः ' (                ) इत्यादौ वायुः, ' वसन्ते वसन्ते ज्योतिषा ' (                ) इत्यादौ कालकर्मादि, 'सोरोदीत्' ( तै.सं-१-५-१. ) इत्यादौ रुद्रादि । अत्र 'सः' रुद्रोऽरोदीदिति यत् तदेव रुद्रशब्दस्य प्रवृत्तिनिमित्तमित्यर्थाश्रयणेन रुद्रमात्रस्य वाच्यत्वप्रतीतावपि ण्यर्थाश्रयणे ब्रह्मणोऽप्येतद्वाच्यत्वात् । ' ब्रह्मैव ' विष्णुरेवेत्येवकारोऽन्यव्यवच्छेदार्थः । यथा ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. २-१ - १.) ' विश्वस्मादिन्द्र उत्तरः ' (                ) ' न किरिन्द्र त्वदुत्तरः ' (ऋ.४-३०-१.) ' निषुसीद गणपते ' (ऋ.१०-११२-९.) इत्यादौ । ' विश्वस्मात् ' सर्वस्मात्। हे इन्द्र त्वदुत्तरः त्वत्तः परो 'न किः' न कोपीति तत्त्वप्रदीपविश्वेश्वरतीर्थीयचन्द्रिकादिशास्त्रर्थः। यद्यपि ' न किर्माकिस्मसीत्यादिप्रोक्ताधिक्य विवक्षया ' इति ऋग्भाष्येऽभिहितम् । तथापि व्याख्यानान्तरमेतत् । यथा अहंशब्दस्यानेकविधव्युत्पत्तिमाश्रित्य अनेकधा व्याख्यानमित्यविरोधः । निषुसीद, इत्येतदृचा ख्यास्यते । नियम इत्यनन्तरं 'अस्तियतः' इति शेषः । अस्यातो विरोध इति पूर्वेणान्वयः । तथा चात्रापि जगत्कारणतापरे 'असदेव ' 'प्रधानादिदम् ' ' जीवाद्भवन्ति भूतानि ' (                ) इत्यादावन्यस्यापि वाच्यत्वे बहुमानविरोधाद्विष्णुरेवोच्यते, न प्रागभावादिकमिति न विष्णुजगत्कारणत्वश्रुतेस्तद्विरोध इति भावः ॥ ४ ॥

इति असदधिकरणम् ॥

---

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे बहुश्रुतिसिद्धत्वेन प्रबलया दृढयुक्त्या विरो

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' ( मु. ३-२-७. ) इति मुक्तजीवस्य परापत्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव।

धः परिह्रियते। पूर्वपक्षस्य सूत्र एवोक्तत्वात् तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे—भोक्त्रापत्तेरिति॥ भोक्त्रापत्तेरिति हेतोरसिद्धिपरिहाराय तत्र श्रुतिमाह—कर्माणीति। इतीति एवं रूपाथर्वणश्रुतावित्यर्थः। भोक्त्रापत्तेरित्यस्य सुखदुःखभोक्तुः जीवस्य आपत्तेःपरमात्मत्वप्राप्तेः श्रुतत्वादित्यर्थमभिप्रेत्याह—मुक्तजीवस्येति। यद्यपि जीवस्येत्येव वक्तुमुचितम्। तथाऽपि सूत्रे मुक्तावित्यध्याहर्तव्यपदलब्धार्थकथनमेतदित्यदोषः। 'उच्यते' श्रूयते। किञ्चात इत्यत आह—अत इति। मुक्तजीवस्य परमात्मत्वप्राप्तिश्रवणादित्यर्थः। 'तयोः' मुक्तजीवेश्वरयोः 'अविभागः' अभेदः सिद्ध इति शेषः। यो यथा श्रूयते स तथेति व्याप्तेरिति भावः। नन्वस्तु ब्रह्मणो मुक्तजीवाभेदः, तथाऽपि नास्माकमनिष्टं संसारिण इव मुक्तस्य सर्वकर्तृत्वे प्रत्यक्षविरोधाभावेन पूर्वमसतोऽपि जीवे कर्तृत्वस्य ज्ञानान्मुक्तेरिव मुक्तावुदयसम्भवेन मुक्ताभिन्नस्यापि ब्रह्मणः कारणत्वसम्भवादित्यतः तदुत्तरत्वेनापि अविभाग इत्यंशं योजयति—अत इति। यतो मुक्तावीशाभिन्नो जीवः अतः 'पूर्वं' संसारेऽपि 'स एव' ईश्वराभिन्न एव, न तु भिन्न इत्यर्थः। न केवलं मुक्तौ, किन्तु पूर्वमपीति समुच्चयेऽपिशब्दः। ननु मुक्तावभेदेऽपि संसारे भेद एवास्तु च्विप्रत्ययस्वारस्यात्। तथा च मुक्तावभिन्नत्वादिति हेतुरप्रयोजक इत्यत आह—न हीति। पूर्वमिति वर्तते। तथा च 'हि' यतः 'पूर्वं' संसारे ब्रह्मभिन्नस्य मुक्तौ 'अन्यत्वं' तद्भेदो न युज्यते। अन्यथा पूर्वमन्यत्वादिति युक्तिविरोधस्स्यादिति भावः। अतः पूर्वमपि स एवेत्यनेनास्यान्वयः। एवं 'अन्यस्य' घटादिभिन्नस्य पटादेः 'अन्यत्वं' अन्यभावो घटादित्वं 'न युज्यते' न दृश्यते हि खलु इति व्याप्तिप्रदर्शनपरत्वेनापि इदं भाष्यं व्याख्येयम्। पूर्वमप्यभेदे च्विप्रत्ययानुपपत्तिशङ्का तु मुक्तावेव भेदभ्रमनिवर्तकाभेदप्रतीत्यपेक्षया तदुपपत्तेरिति सुधायामेव परिहृता। न च कदाचिदन्यत्वस्य पूर्वपक्षयुक्तित्वाभिधाने 'नान्यदन्यत्वमापन्नम्' इत्यनुव्याख्यानविरोधः, तत्रास्य सिद्धान्तयुक्तित्वाभिधानादिति वाच्यम्। मुक्तौ संसारे च अभेदो, न मुक्तिमात्रे। कुतो? न हीत्युक्तयुक्तेरित्युभयत्राभेदपूर्वप

न ह्यन्यस्यान्यत्वं युज्यत इति चेत्—

(२) न, स्याल्लोकवत् यथा लोके उदके उदकान्तरस्यैकी

---

क्षविवक्षया भाष्यस्य प्रवृत्तत्वात्, अत एवात्र पूर्वमपीत्युक्तम्। च्वि प्रत्ययस्वारस्यात्पूर्वं भेदो मुक्तौ त्वभेद इति पूर्वपक्षविवक्षया अनुव्याख्यानस्य प्रवृत्तत्वेन विरोधाभावात्। इतीति सूत्रे पूर्वपक्षांशे शेषोक्तिः। श्रुतिस्तु 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' (मुं.३-२-७.) इति पूर्ववाक्येन सह व्याख्येया। तत्प्रकारस्तु- 'गताः' मुक्ताः 'कलाः' प्राणादिपञ्चदशकलारूपाः देवताः अन्ये च 'प्रतिदेवतासु' देवताप्रतिबिम्बभूतासु प्रजासु 'प्रतिष्ठाः' स्थितिहेतवः सर्वे देवाः मुक्ताः। 'कर्माणि' पुष्कराख्या कर्माभिमानिनी देवता मुक्ता। तथा मुक्तो 'विज्ञानमय आत्मा' जीवश्चेत्येते सर्वे 'अव्यये' देहतोऽपि नाशशून्ये 'परे' परमात्मनि एकीभवन्ति। लक्षितलक्षणेऽयमुपचारो वा। तथा च परमात्मानं प्राप्य तस्मिन्नेव स्थिताः 'एकीभवन्ति' प्राग्भिन्नमतयोऽधुनेश्वरेणैकमत्यं भवन्ति प्राप्नुवन्ति। एकविषयमतिमन्तो भवन्तीति यावत्। अथ वा—'प्रागीश्वरव्यक्तिस्थानापेक्षयाऽन्यत्रेतस्ततः स्थितास्तत्र श्वेतद्वीपादौ मिलिता भवन्ति' इति तत्त्वनिर्णयटीकायामुक्तः। तत्त्वप्रदीपे तु-'न ह्यस्य कर्म क्षीयते' (बृ.३-४-१५.) इति ज्ञानोत्तरकालीनकर्मणां फलतोऽक्षयत्वोक्तेर्ज्ञानोत्तरकृतकर्मभिः सह मुक्तजीवस्य परब्रह्मणि स्थितिस्तद्बुद्धिसारूप्यं चेह विवक्षितमित्युक्तम्। पूर्वपक्षी ह्येकीभवन्तीत्यस्य परब्रह्मीभवन्तीत्यैक्यमुच्यत इति मन्यते॥

(२) अथ सिद्धान्तांशं नञध्याहारेणाविभाग इति पदानुषङ्गाभिप्रायेण च व्याचष्टे—नेति॥ नेश्वरस्य जगत्कारणत्वादिविरुद्धमित्यर्थः। कुत इत्यतो यतो 'नाविभागः' अभेदाभावः इति नञावृत्त्यविभागपदानुषङ्गाभ्यां लब्धो हेतुर्योज्य इत्याशयेन परेण अभेदसाधकतयोक्तस्य भोक्त्रापत्तेरिति हेतोः व्यभिचारान्यथासिद्ध्युक्तिपरतया स्याल्लोकवदित्यंशमनूद्य व्याचष्टे—स्यादिति। आद्योऽपिर्यद्यपितथाऽपीत्यर्थे। द्वितीयोऽपिशब्दो दृष्टान्तदार्ष्टान्तिकसमुच्चये। लोक इत्युदक इति चाधिकरणसप्तम्यौ, लोकशब्दोक्तस्य जनस्य वचनाधिकरणत्वात्, उदकस्य चैक्याधिकरणत्वात्। लोकपदोक्तस्य जनस्य व्यवहार

भाववव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि ।
( ३ ) तथा च श्रुतिः—
'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' (कठ. ४-१५. ) इति ॥

विषयत्वादुदक इति विषयसप्तमी वा । तथा च 'उदके' एकपात्रस्थितोदके 'उदकान्तरस्य' पात्रान्तरस्थितोदकस्य 'एकीभावव्यवहारेऽपि' तेनेदमैक्यमापन्नमिति लोककर्तृकाभेदोक्तिसत्त्वेऽपि यथा जलयोः 'अन्तर्भेदः' अन्योन्यं भेदोऽस्त्येव 'एवं' तथाऽत्रापि जीवस्येश्वरैक्योक्तावप्यन्तः परस्परं भेदः स्यात् । न चैक्योक्तिविरोधः । यतश्चोदके उदकान्तरस्यैकीभावोक्तिवदुपचरिता स्यादिति योजना । अनेन सूत्रे लोकवदिति लोकसिद्धजनैकीभावोक्तिवदिति प्रथमान्तात्प्रातिपदिकात् लोके जलादाविति सप्तम्यन्ताद्वा वतिरित्युक्तं भवति । एवं भोक्त्रापत्तेरिति विपरिणामेन पूर्वपदानुवृत्तिश्च सूचिता ॥ तथा चायं सूत्रार्थः—भोक्तुः जीवस्य आपत्तेः मुक्तौ परब्रह्मत्वप्राप्तेरुक्तत्वात्तयोः 'अविभागः' अभेदस्सिद्धः । यतो भोक्तुर्मुक्तौ परमात्माभेदोऽतो संसारेऽपि तस्य तदभेदः प्राप्नोति, अतः असर्वकर्तृसंसारिजीवाभिन्नत्वाद्ब्रह्मणो न जगत्कर्तृत्वं युक्तमिति चेत्-न, ईश्वरस्य जगत्कारणत्वादि विरुद्धम् । कुतः? यतो 'नाविभागो' जीवेशयोरभेदाभावः । न च भोक्त्रापत्तिश्रुतिविरोधः, यतः 'स्याल्लोकवत्' स्याज्जले जलान्तरस्यैकीभावोक्तिवद्भेदेऽपि स्याद्युज्यते। न च भेदेऽप्यैक्योक्तौ निमित्ताभावः । यतः 'स्याल्लोकवत' लोके जले जलान्तरस्यैकीभावोक्तिवत्स्थानैक्याद्यालम्बनत्वेनोपचरिता स्यादत इति ॥

( ३ ) न श्रुतेः स्वातन्त्र्येणोपचरितार्थत्वकल्पनं क्रियते, किन्तुश्रुत्याऽपि तदुक्तमित्याह-तथाचेति ॥ यथा सूत्रकृदाह, तथा श्रुतिश्चाहेत्यर्थः। 'निरञ्जनः परमं साम्यम्' ( मुं. ३-१-३. ) इत्याद्यैक्यविरोधश्रुतिरपि चशब्देन गृहीता । 'एवं मुनेर्विजानत आत्मा भवति गौतम' (कठ.४-१५. ) इति श्रुतिवाक्यशेषः । कठवल्ल्यां नचिकेतसं प्रति यमवचनमेतत्-'हे गौतम तद्गोत्रोद्भव नचिकेत' यथा 'शुद्धे' एकपात्रस्थितोदके यथेष्टं प्रक्षिप्तशुद्धोदकं तादृगेव भवति, न तु तदेव, एवं ब्रह्म विजानतो 'मुनेः' मुनिवर्गस्य 'आत्मा' स्वामी मुख्यवायुरपि मुक्तः सन् 'तादृगेव भवति' परमात्मसदृश एव भवति, न तु स एव, किन्तु अन्ये जीवा

(४) स्कान्दे च—उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते।
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात्॥ इति।

---

इति काठकभाष्यदिशाथुत्यर्थः। विष्णुतत्त्वनिर्णयटीकायां तु—'विजानतो मुनेः' विजानतां मुनीनां 'आत्मा' अधिपतिः हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति, किमुतान्ये इत्ययमेवार्थो विवृतः। छान्दोग्यभाष्यव्यासतीर्थीये तु—'एवं मुनेः' मननादिमतो 'विजानतः' अपरोक्षज्ञानिन 'आत्मा' परमात्मनि प्रविष्टस्वरूपं भवतीति व्याख्यातम्। अयमेवार्थोऽत्र विवक्षितः 'एवमेव हि जीवोऽपि' इति हि स्मृतौ जीवसामान्योक्तेः, ब्रह्मार्थग्रहणेऽल्पमुक्तानामिति टीका, ब्रह्मेति भाष्योक्तिश्चायुक्तास्यात्॥

(४) ननु जलयोरप्यैक्यान्न व्यभिचारो नवोपचरितार्थत्वेन अन्यथासिद्धिकल्पनेत्यत उक्तार्थे स्मृतिं चाह—स्कान्दे चेति॥ अयमर्थ उक्त इति शेषः। किमुक्तमित्यतस्तत्पठति—उदकमिति। तुशब्दः पात्रान्तरस्थत्वशुद्धत्वरूपविशेषार्थः। यथेत्यादौ संयोज्यम्। एवशब्दव्यावर्त्यं दर्शयति—न चेति। चस्त्वर्थः। 'एतत्' एतत्स्वरूपम्। कुत इत्यतो युक्तिमाह—यत इति। अवृद्धिरित्यपि छेदः। तथाच मिश्रणात्पूर्वं अवृद्धिस्तदनन्तरं वृद्धिश्च यतः प्रदृश्यते अत इत्यर्थः। दार्ष्टान्तिकमाह—एवमिति। हिशब्दः प्रसिद्धौ 'जीवो' ज्ञानिजीवो मुक्तश्च। दृष्टान्तसमुच्चयेऽपिः। परमात्मना तादात्म्यं प्राप्तोऽपीति परमात्मना निरूपकेन तादात्म्यं तत्स्वरूपत्वेनैक्यं प्राप्त इत्युक्तोऽपीत्यर्थः। वस्तुतस्तदैक्याभावात्। 'परमात्मना' तत्प्रसादेन 'तादात्म्यं' नियततन्मनस्कत्वादिरूपं मोक्षं 'प्राप्तो' मुक्तोऽपीति वा,

हरौ नियतचित्तत्वाद्गृहवत्तत्प्रवेशनात्।
मोक्षं तादात्म्यमित्याहुः न तु तद्रूपतः क्वचित्॥

इति वचनात्। यद्यपितथाऽपीत्यर्थेऽपिशब्दः। 'असौ' परमात्मा। कुतो नेत्यतस्तत्र हेतुमाह—स्वातन्त्र्यादीति। परमात्मनः स्वातन्त्र्यादिभिः जीवभेदकधर्मैर्विशेषितत्वादित्यर्थः। सार्वज्ञ्यादिरादिपदार्थः। उपलक्षणमेतत्। जीवस्य च अनेवंभूतत्वादित्यपि द्रष्टव्यम्। अत्र पू

( ५ ) ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥ इति च ।
( ६ ) 'न ते महित्वमन्वश्नुवन्ति' ( ऋ. ७-९९-१. ) 'न ते विष्णोजायमानो न जातः' (ऋ.७-९९-२.) इति च ।
( ७ ) फलत्वेऽपि युक्तिविरोधे

---

र्वश्लोके विपक्षे सयुक्तिकं साध्याभावोपपादनेन व्यभिचारो दर्शितः । उत्तरश्लोके तु पूर्वपक्ष्युक्तहेतोरन्यथासिद्ध्युपपादनायैक्यविरोधिविरुद्धधर्मोपन्यास इति विवेकः । इति स्कान्द इत्यन्वयः ॥

( ५ ) ननु 'नासौ भवति' इति वचनमल्पानसायुज्यभाजोऽपेक्ष्यैव प्रवृत्तम्, न तु ब्रह्मादीन् सायुज्यभाजोऽतो न तद्विरोधीत्यत आह—ब्रह्मेति ॥ मुक्तामुक्तैरित्यर्थः । उभयत्राप्यभेदाभावस्येह साधनीयत्वात् । अतएव तत्त्वोद्योतटीकायां ब्रह्मेशानशब्देन मुक्तामुक्ता गृह्यन्ते, सङ्कोचे कारणाभावादित्युक्तम् । यद्वा—अल्पमुक्तानामिति टीकाबलादत्र मुक्तमात्रपरो ब्रह्मेशानशब्दः । हे हरे ब्रह्मादिमुक्तामुक्तैः 'यत्कैवल्यं' सर्वोत्तमत्वं प्राप्तुं नैव शक्यते 'तद्यस्य स्वभावो' नैसर्गिकः 'स केवलः' सर्वोत्तमो भवानित्यर्थः । यद्वा—भवान् सः । कुतः यतः 'केवलः' जडामिश्र इत्यर्थः । इतीति । स्कान्दे उक्तमित्यन्वयः । यद्वा—इति स्मृतिरपि सूत्रकारोक्तं वदतीत्यर्थः ॥

( ६ ) नासौ भवतीत्युक्तप्रमेये श्रुतिं चाह—न त इति ॥ नान्वश्नुवन्तीति वर्तमाननिषेधात्स्यादुत्तरत्र जीवस्येश्वरभाव इत्यत आह—न त इति । श्रुतिद्वयमपि जन्माधिकरणे व्याख्यातम् । इत्यादि चेति । एवमादिरूपा श्रुतिः उक्तार्थे प्रमाणमित्यर्थः । चः पूर्वप्रमाणसमुच्चये । आदिशब्देनैवंजातीयका श्रुतिर्गृह्यते । अत्र प्रथमान्तानामतो लोकवदित्युक्तं युक्तमित्युपस्कृतेनान्वयः ॥

( ७ ) ननु मुक्तेश्वरयोर्भेदसमर्थनं फलाध्याये सङ्गतमतो नैतत्सूत्रार्थः । न च मुक्तामुक्तयोरुभयोरत्रेश्वरभेदसाधनात्सङ्गतिः । एवमपि मुक्तभेदस्यापि साध्यत्वेन तस्य चोत्तरत्रैव सङ्गतत्वेनेहासङ्गतत्वादतोऽन्यथैव सूत्रार्थो वर्णनीय इत्यद्वैतिशङ्कां परिहरति—फलत्वेऽपीति ॥ अपिरुभयत्रान्वेतव्यः । तत्राद्यो यद्यपितथाऽपीत्यर्थे । द्वितीयोऽत्रापीत्यन्वितस्समुच्चये । अस्येति शेषः । अत्रेत्यावर्तते । तथा चा

ऽन्तर्भावादत्रोक्तम् ॥ १४ ॥

——:*:——

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ ॐ ॥ १५ ॥

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः ।

---

स्याधिकरणस्य फलाध्यायसङ्गतत्वेऽपि 'युक्तिविरोधे' न ह्यन्यस्येत्यु क्तयुक्तिविरोधपरिहारात्मके 'अत्रापि' पादेऽन्तर्भूतत्वादत्रेदमधि करणं 'उक्तं' विशेषितमित्यर्थः । अन्यथोभयान्तर्गतस्य एकत्राप्यनु क्तिप्रसङ्गः । तस्मादुक्तरीत्या सङ्गतिसद्भावादस्मदीयव्याख्यानमेव युक्तमिति भावः ॥ ५ ॥

॥ इति भोक्त्रधिकरणम् ॥

——:*:——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोर्जगत्कर्तृत्वे बहुयुक्तिविरोधः परिह्रिय ते । पूर्वपक्षसिद्धान्तादिप्रदर्शनाय सूत्रमेव आदौ पठति—तदिति ॥ स्वतन्त्रबहुसाधनेति । कर्तृव्यतिरिक्तस्वतन्त्रसत्ताशक्तिप्रवृत्तिमद धिष्ठानकरणादिरूपबहुसाधनसापेक्षेत्यर्थः । स्वातन्त्र्यं च कर्त्रनधी नत्वं 'सृष्टिः' घटादेः । स्थित्यादेरप्युपलक्षकमेतत् । एवमित्युक्तेर्यथे ति लभ्यते । नेत्यावर्तते । तथा च यतो लोके यथा घटादेः सृष्टिः स्व तन्त्रबहुसाधना दृष्टा, एवं ब्रह्मणः सकाशाज्जगत्सृष्टिरपि स्वव्यतिरि क्तबहुसाधना स्यात् । तथाऽनुमेया स्यात् । अत एव तद्युक्तिविरोधान्न ब्रह्मणो जगत्कर्तृत्वं युक्तमिति योजना । अनेन ब्रह्मणः न जगत्कर्तृत्वं यु ज्यते । कुतः? महदादिसृष्ट्यादिकं प्रत्येकं कर्तृव्यतिरिक्तबहुसाधनसा पेक्षं, सृष्टित्वात्, स्थितित्वात्, संहृतित्वाद्घटादिसृष्ट्यादिवदिति बहु युक्तिविरोधादिति सयुक्तिकः पूर्वपक्षः प्रदर्शितो भवति । ईश्वरसृष्टेः साधनसापेक्षत्वमात्रसाधने कर्तारं कर्तृत्वान्तर्गतं ज्ञानेच्छादिकं परत न्त्रसाधनमेकं साधनं चादाय सिद्धसाधनता स्यादिति कर्तृभिन्नेत्या द्युक्तम् । एवं यथा घटादिसृष्टिः केवलकुलालादेरशक्या तद्व्यतिरिक्तस्व तन्त्रमृत्पिण्डदण्डादिसाधनसापेक्षा, एवं ब्रह्मणो जगत्सृष्टिरपीति न क ल्प्यमिति योजनायां सिद्धान्तप्रतिज्ञा च दर्शिता भवति । तर्हि कीदृशी

स्वरूपसामर्थ्यादेव तस्य सृष्टिः ।
( २ ) किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथाऽऽसी

तस्य सृष्टिरित्यतस्तदुत्तरत्वेन प्रवृत्तस्य तदनन्यत्वमित्यस्याभिप्रायमाह—स्वरूपेति। किन्त्वित्यादावुपस्कार्यम्। सामर्थ्यं प्रयत्नादि सामर्थ्यापरपर्यायप्रयत्नादिरूपमिति सुधोक्तेः। तथा च किन्तु 'तस्य' ब्रह्मणः जगत्सृष्टिः 'स्वरूपसामर्थ्यात्' अनन्यप्रयत्नादेरेव भवतीत्यर्थः, न तु साधनान्तरसामर्थ्यसहकृतादित्येवकारार्थः। यद्वा—यद्यपि लोके घटादिसृष्टिः स्वतन्त्रबहुसाधना दृष्टा। तथाऽपि 'नैवं ब्रह्मणः' न तद्दृष्टान्तेन ब्रह्मणो जगत्सृष्टिस्तथा कल्प्या। किन्तु स्वतन्त्रसाधनस्य तदनन्यत्वं, कोऽर्थः? स्वरूपसामर्थ्यादेव तस्य सृष्टिरिति एकैव योजना। अस्मिन् पक्षे यद्यपितथाऽपीत्यनयोः किं त्वित्यस्य शेषः। स्ववाक्यगतस्य स्वतन्त्रसाधनेत्यस्य विपरिणतस्य सौत्रतदनन्यत्वमित्यनेनान्वयः। अनेन सूत्रे तदिति तन्त्रेणावर्तते। तथा च महदादिसृष्टौ यत्स्वतन्त्रकारणं तस्य 'तदनन्यत्वं' ब्रह्माभिन्नत्वमिति सौत्रप्रतिज्ञाभागस्यार्थ उक्तो भवति। चन्द्रिकायां तु—'सत्त्वाच्चावरस्य' इत्युत्तरसूत्रानुसारादत्र स्वतन्त्रसाधनस्येत्यध्याहार्यमित्युक्तम्॥

( २ ) कुत इत्यतस्तत्र हेतुत्वेनारम्भणेत्याद्यंशं व्याचष्टे—किं स्विदासीदिति॥ इतिश्रुतौ 'हि' यतोऽधिष्ठानादेराक्षेपः क्रियते अत इत्यर्थः। अस्योक्तप्रतिज्ञया अन्वयः। आक्षेप इत्यनेन सूत्रे आरम्भणशब्दोऽधिष्ठानाद्युपलक्षकः, तेन च तदाक्षेपो लक्ष्यते। लक्षितलक्षणयैवार्थः प्रतिपाद्यत इति सुधोक्तेः। तस्य शब्दः किंशब्दः, तद्ग्रहणेन च तद्घटितं वाक्यं गृह्यते। 'प्रतीकतया किं स्विदासीदधिष्ठानमित्याद्याक्षेपवाक्यं गृह्यते' इति चन्द्रिकोक्तेरित्युक्तं भवति। तथा चाक्षेपस्य नास्त्यधिष्ठानादिकं किमपि, अतः स्वरूपसामर्थ्यादेव तस्य सृष्टिरिति विपर्ययपर्यवसाने सति वक्ष्यमाणपर्यालोचनयाऽर्थादीश्वरस्य जगत्सृष्टौ स्वतन्त्रसाधनान्तरानपेक्षा सिद्ध्यति। पूर्ववाद्युक्तानुमानं तु 'प्राबल्यमागमस्य' इति वचनात् श्रुतिविरोधादप्रमाणमेवेति भावः। श्रुतावधिष्ठानशब्दस्य प्राथम्येऽपि साधनेषु कारणस्य प्राधान्यात्तद्विवक्षया साधनमात्रपरस्यारम्भणशब्दस्य अधिष्ठानरूपसाधनपरत्वस्यापि सम्भवाद्वा सूत्रे करणवाचकारम्भणशब्दः प्रथमं प्रयुक्त इति ध्येय

त्, इति (ऋ. १०-८१-२.) ह्याक्षेपः ।
(३) अधिष्ठानाद्यनुक्तेः, आदिशब्दाद्युक्तिभिश्च ।
(४) परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।

म । श्रुतौ किंशब्दावाक्षेपे । स्विच्छब्दावाक्षेपाणां भिन्नविषयत्वद्योत कौ । 'यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः' (ऋ१०-८१-२.) इति वाक्यशेषः । अत्र बभूवेत्यध्याहारः । तथा च 'वि श्वकर्मा' जगत्कर्ता हरिः सृष्टिकाले 'यतो' येनाधिष्ठानादिना भूमिं द्यां च जनयन् विशेषेण बभूव । येन चाधिष्ठानादिना 'महिना' स्वमहिम्ना विश्वचक्षाः सर्वावयवैः सर्वेन्द्रियैर्वा दर्शनशक्तिमान् हरिः भूमिं द्यां च 'और्णोत्' प्रलये आवृणोत् । 'तदधिष्ठानं' अधिकरणं 'किं स्विदा सीत्' किमासीत् न किमपि । आरभ्यते अनेनेत्यारम्भणं करणं वा 'कतमत्स्वित्' कतमदासीत् । 'कथा' कथंरूपमासीत्, न किञ्चि न्न कथमपीत्यर्थः । सत्तर्कदीपावल्यां तु—येन करणादिना भूमिं जन यन् विश्वकर्मा 'विश्वचक्षाः' विश्वद्रष्टा 'महिना' माहात्म्येन द्यां 'और्णोत्' निर्मितवान् तदधिष्ठानादिकं प्रलये 'किमासीत्' न किम पि, पार्थिवाप्यतैजसवायवीयानां वस्तूनां प्रलयेऽभावादिति श्रुत्यर्थ उक्तः ॥

(३) किं शब्दस्य प्रश्नाक्षेपयोः समत्वात्प्रश्नोऽयं किं न स्यादित्यत आह—अधिष्ठानाद्यनुक्तेरिति॥ परिहारायेति नायं प्रश्न इति च शेषः। आदिपदेनारम्भणादिकं गृह्यते । तथा च परिहारायाधिष्ठानाद्यनुक्ते नायं प्रश्नः, किं त्वाक्षेप इति योजना । प्रश्नस्य तैत्तिरीये 'किं स्विद्धि मस्य भेषजम्' (तै.सं.७-४-१८.) इति प्रश्नस्य 'अग्निर्हिमस्य भेषजम्' (तै.सं.७-४-१८.) इति परिहारवदत्रापि परिहारो वक्तव्यः स्यादिति भा वः । न केवलं पूर्ववाद्युक्तमनुमानमागमविरुद्धं, अपि तु युक्तिभिश्चेति प्रतिपादयितुं प्रवृत्तस्यादिशब्दस्य तात्पर्यमाह—आदिशब्दादिति । गृ हीताभिरिति शेषः । युक्तिभिरिति । अपरतन्त्रत्वात्स्वतन्त्रत्वात्साध नसत्ताप्रदत्वादिति व्यतिरेकहेतुभिरित्यर्थः । युक्तिभिश्चेत्यस्य स्वरू पसामर्थ्यादेव तस्य सृष्टिरिति ज्ञायत इत्यनेनान्वयः ॥

(४) युक्तीनामाभासत्वशङ्कानिरासाय तासां स्मृतिसिद्धतामा ह—परतन्त्र इति ॥ हिशब्दः प्रसिद्धौ । अपेक्षेत साधनादिकमिति शे

साधनानां साधनत्वं यतः किं तस्य साधनैः ॥
इत्यादिभिः ॥ १५ ॥
( ५ ) सू—ॐ ॥ भावे चोपलब्धेः ॥ ॐ ॥ १६ ॥
स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत ।
( ६ ) अनुक्तं पञ्चभिर्वेदैर्न चास्त्यस्ति कुतश्चन ।
अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः ॥

षः । अनेनापरतन्त्रत्वयुक्तिः सूचिता । 'अपेक्षते किं' नापेक्षत इत्यर्थः । अनेन स्वतन्त्रत्वयुक्तिः सूचिता । कुतो नापेक्षत इत्यत आह—साधनानामिति । 'साधनत्वं' साधनशक्तिः यतो भवतीति शेषः 'तस्य' विष्णोः 'साधनैः' अधिष्ठानादिभिः 'किं' कृत्यमित्यर्थः ॥ अनेन तृतीययुक्तिरुक्ता । इत्यादिभिरिति । आदीयन्ते उपादीयन्ते इत्यादयः । तथा च इतिश्रुतिज्ञापिताभिरित्यर्थः । यद्वा—युक्त्यन्तरसूचकस्मृत्यन्तरसङ्ग्राहक आदिशब्दः । इत्यादिभिरित्यस्य युक्तिभिरित्यनेनान्वयः ॥

( ५ ) युक्त्यन्तरेण स्वतन्त्रसाधनं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे—भावे चेति ॥ स्वतन्त्रेति । स्वतन्त्रसाधनान्तरसत्त्व इत्यर्थः । तदङ्गीकारोपलक्षकमेतत् । उपलब्धेः कारणसापेक्षत्वात्तदाह—प्रमाणैरिति । वेदादिप्रमाणैरित्यर्थः । उपलभ्येत प्रतीयेत इति लिङ्प्रयोगेन सूत्रे प्रसङ्गादिति शेषः । उपलब्धेरिति षष्ठी, न परमत इव पञ्चमी । चशब्दः प्रसङ्गाचेत्यन्वितो बाधकतर्करूपयुक्त्यन्तरसमुच्चायक इति सूचितं । तथा चास्य तर्कत्वात् न चोपलभ्यते तस्मान्नास्तीति विपर्ययपर्यवसाने सृष्टौ स्वतन्त्रसाधनान्तराभावः सिद्ध्यतीति भावः ॥

( ६ ) ननु प्रमाणानुपलब्धमपि वस्तु किं न स्यादित्यत आह—अनुक्तमिति ॥ इतिहासपुराणयोः पञ्चमवेदत्वं प्रसिद्धमिति पञ्चभिरित्युक्तम् । 'च न' अपि । तथा च पञ्चभिरपि वेदैरनुक्तमपि वस्तु नास्ति, कुतः प्रमाणमात्रासिद्धमस्तीति कैमुत्यपरतयेदं योज्यम् । अन्यथा प्रमाणानुपलब्धमपीति टीका प्रमाणैरिति भाष्यं च अनुपपन्नं स्यात् । 'कुतश्चन' किञ्चिदपीति वा । 'एतेषां' पञ्चानाम् । अत इत्युक्तं विवृणोति—यत इति । 'ते' पञ्च वेदाः 'सर्ववेदकाः' सर्ववस्तुप्रतिपादकाः । न च वेदानुक्तानां भगवद्गुणानां सत्त्वात् कथं तदनुक्तवस्तुमात्रनिषेध इति वाच्यम् । कुतश्चनेत्यस्य केनापि प्रकारेण

इति स्कान्दे ॥ १६ ॥

( ७ ) 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' ( तै.आ-३-१३. ) इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—

सू—ॐ ॥ सत्त्वाच्चावरस्य ॥ ॐ ॥ १७ ॥

त्यर्थाश्रयणात् सामान्यतस्तेषामपि वेदोक्तत्वेन तदनुक्तत्वाभावात्। अत एव न 'सन्त्यश्रुताः' (सौपर्णश्रुतिः.) इति श्रुतिविरोधः। विशेषतोऽश्रुता इत्यर्थाश्रयणात्। स्कान्द इत्यनन्तरं उक्तत्वात्सूत्रकृदुक्तं युक्तमिति वाक्यशेषः। सूत्रयोजना तु-तस्य स्वतन्त्रसाधनान्तरस्य भावे वेदादिप्रमाणैरुपलब्धेः प्रसङ्गाच्च तदनन्यत्वमिति। न केवलमारम्भणशब्दादिभ्य इति चार्थः॥

( ७ ) ननु अद्भ्यः सम्भूत इति श्रुतौ प्रकृतिं स्वामवष्टभ्य विसृजामि युगेयुगे इति गीतास्मृतौ च भगवदितरप्रकृत्यबादिस्वतन्त्रसाधनसत्त्वप्रतीतेर्न तदनुपलब्धिरित्याशङ्क्य तत्परिहारत्वेन सूत्रमवतार्य व्याचष्टे—अद्भ्य इति॥ आदिशब्देन 'अद्भ्यः सम्भूतो हिरण्यगर्भः' (महाना.१-११.) इति श्रुतिः। 'प्रकृतिं स्वाम्' इति स्मृतिश्च गृह्यते। वाक्येनेति शेषः। साधनान्तरेति। भगवदितरस्वतन्त्रसाधनसत्त्वप्रतीतेरित्यर्थः। पारतन्त्र्यानुक्त्यैवात्रोक्तसाधनस्यापि स्वातन्त्र्यं सिद्ध्यतीति भावः। कथमित्याक्षेपे। 'अनुपलब्धिः' उपलब्ध्यभावः। अवरस्येत्यनुवादेन तदधीनस्येति तात्पर्यार्थोक्तिः। आरम्भणस्येत्यनुवृत्तपदस्यार्थमाह—साधनस्येति। 'सत्त्वात्' सत्त्वाभ्युपगमात्। अनेन सूत्रे वरस्य चासत्त्वात् अवरस्य च सत्त्वादिति च नञोरुभयत्रान्वयः। चोऽवधारणे। नञाकर्षकश्च। तथा च 'वरस्य' स्वतन्त्रस्यैव साधनस्यासत्त्वाभ्युपगमात् 'अवरस्य' अस्वतन्त्रस्य तु सत्त्वाभ्युपगमात् 'अद्भ्यः' इति वाक्यं तद्विषयं इति नोक्तस्य तद्विरोध इति सूत्रार्थ उक्तो भवति। 'अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च। विश्वकर्मणस्समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे' ( तै.आ. ३-१३. ) इति तैत्तिरीयश्रुतौ तृतीयार्थे पञ्चमीचतुर्थ्यौ। आङेवार्थे। तथा च यस्तत्पुरुषाख्यो हिरण्यगर्भो 'विश्वकर्मणो' विश्वकर्तुः हरेस्सकाशात् 'अद्भ्यः पृथिव्यै' अबाद्युपलक्षितपञ्चमहाभूतैः 'रसात्' तदुपलक्षिततन्मात्राभिश्च 'सम्भूतः' उत्पन्नः

अपरस्य तदधीनस्य साधनस्य सत्त्वात् ॥

(८) 'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासीत्तदावृतमासीत्तदधीनमासीदथह्येक एव परम आसीद्यस्यैतदासीन्न ह्येतदासीत्' इति हि काषायणश्रुतिः ॥ १७ ॥

(९) सू—ॐ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वा

---

सन् 'अधि' सर्वस्मादधिकत्वेन समवर्तत । 'तस्य' तत्पुरुषस्य 'अग्रे' तदुत्पत्तेः पूर्वमेव 'जानं' जातं 'विश्वं' ब्रह्माण्डाख्यं 'रूपं' चतुर्मुखविग्रहं 'त्वष्टा' महादीप्तिर्भगवान् 'विदधत' धारयन् 'एति' वर्तत इत्यर्थः । तत्त्वप्रदीपे तु—आपीयन्ते अनुभूयन्ते इत्यापः कर्माणि, पृथुत्वात्पृथिवी प्रकृतिः, रसो रक्तिरिति पदत्रयमन्यथा व्याख्यातम् । 'स्वां' स्वाधीनां प्रकृतिमवष्टभ्य 'अवलम्ब्य' उपादानीकृत्य विविधं जगत्सृजामीति गीतायां भगवद्वचनस्यार्थः ॥

(८) नन्वस्यां श्रुतौ साधनमात्रं प्रतीयते, न तु तस्य भगवदधीनत्वम् । तच्च लोकानुसारात् स्वतन्त्रमेव किं न स्यादित्यतश्चशब्दसूचितां श्रुतिमुदाहरति—काल इति ॥ यत्तदोरावृत्तिः । तदिति व्यस्तं समस्तं च । तथा चास्य जगतोऽग्रे प्रलये कालः 'पुरुषो' जीवः 'परमः' परमात्माऽप्यासीत् । यद्यप्येवं तथाऽपि 'यत्' यस्मात् 'तत्' तदा प्रलये यद्वस्त्वासीत् 'तत्' तेन भगवता 'आवृतम्' तदधीनमासीत् । अथ तस्मादेक एव परमः आसीदित्युच्यते । अस्वतन्त्रेऽभावशब्दः । प्रसिद्ध इति हिशब्दार्थः । कीदृशोऽसौ परमः इत्यतो जगत्कर्तेत्याह—यस्येति । 'यस्य' एतस्य परमस्य सकाशात् 'एतत्' जगदासीदित्यर्थः । परमस्य सकाशाज्जगदुत्पत्तिः कुत इत्यत आह—न हीति । 'हि' यस्मात् जगत् सृष्टेः पूर्वं नासीत्तस्मादित्यर्थः । प्रागभावेनोत्पत्तौ सिद्धायां सत्यां तदुत्पादकस्यान्यस्य अभावाद्धरिरेव जगत्कर्तेति सिद्ध्यतीति भावः । तत्त्वप्रदीपे तु—'स एकः परम एवासीत्' यदधीनमेतदासीन्न स्वतन्त्रं न ह्येतदासीदिति वक्तुं शक्यते । परतन्त्रत्वादेव । अथ वा—अथेति विशेषद्योतकः । एको भगवानेव 'परमः' प्रधान आसीन्न ह्यन्यत्परम आसीत्, किन्तु तदधीनमेवेत्यर्थ उक्तः । श्रुतिरित्यनन्तरं यत इति शेषः । अस्यातोऽवरस्येत्युक्तंयुक्तमित्युपस्कृतेनान्वयः ॥

(९) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे-

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ ॐ ॥ १८ ॥

'नासदासीत्' (ऋ.१०-१२९-१.) इति सर्वस्यासत्त्वव्यपदेशान्नेति चेत्—

असादिति ॥ इतीत्यनन्तरं श्रुताविति शेषः । 'सर्वस्य' साधनान्तरस्येति सूत्रे शेषोक्तिः । 'असत्त्वव्यपदेशात्' असत्त्वस्योक्तत्वादिति । अनेन सूत्रेऽसदिति भावनिर्देश इति सूचितम् । नेति । 'सत्त्वाद्यवरस्य' इत्यनेनोक्तं साधनान्तरस्य सत्त्वं तस्येश्वराधीनत्वं च नेत्यर्थः ।

'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास' ॥
(ऋ. १० - १२९ - २.)

इति ऋङ्मन्त्रस्यायमर्थः—'तदानीं' प्रलये 'असत्' वाय्वन्तरिक्षरूपं भूतं नासीत् । 'सत्' पृथिव्यप्तेजोरूपं भूतं नो आसीत् । कार्यं सर्वात्मना नासीत् । कारणं चेष्टमानं नासीदिति वा । एवं तदा 'रजः' तदुपलक्षितं गुणत्रयं नो आसीत् । यच्च 'परः' परं सर्वगतं व्योम जडप्रकृतिस्तदपि मूर्तसम्बन्धाभावान्नो आसीत् । 'परं व्योम' अव्याकृताकाशमित्यन्यत्र व्याख्यानेऽपीह साधनसत्त्वाक्षेपप्रकरणादेवं व्याख्यातम् । एवं 'मृत्युः' मरणं तत्साधनं वा नासीत् । 'अमृतं' गौणमोक्षः स्वर्गादिर्नासीत् । प्रलये अह्नो रात्र्याश्च 'प्रकेतः' सामर्थ्यं नासीत् । तथा च किमित्यत आह—किमिति । एतेषां अभावात् 'कुह' कुत्र कस्य 'शर्मन्' शर्मणि । तादर्थ्ये सप्तमी । सुखार्थं 'किमावरीवः' किमवर्तत, न किमपि । यद्वा—किमावृणोत्, न किमपि । आद्यपक्षे वृतु वर्तन इत्यस्येदं रूपं, द्वितीये वृणोतेः यङ्लुकि रूपम् । नन्वस्तु—जडरूपाणामेतेषां अभावः, तथाऽपि चेतनरूपं किञ्चिदासीत्किमित्यतो नेत्याह—अम्भ इति । यत् 'गहनं' अतिगम्भीरं चेतनप्रकृतिरूपं 'अम्भो' जलं तदप्यासीत्किं, नैवासीत् । तर्हि किमासीदित्यत आह—आनीदिति । 'तर्हि' तदा 'तत्' ब्रह्मैकमेव 'अवातं' वायुप्रेरणारहितं यथा भवति तथा 'स्वधया' स्वसामर्थ्येनैव 'आनीत्' अचेष्टत । कालादिकं प्रेरयति स्मेति न्यायदीपिकायामुक्तः । 'तस्मात्' परब्रह्मणः 'अन्यत्' परः परमुत्तमं वस्तु 'किञ्चन' स्वातन्त्र्यादिध

( १० ) न, अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते ।
( ११ ) 'तम आसीत' ( ऋ. १० - १२९ - ३. ) इति वाक्य शेषात् ।

---

र्मोपेतमिति यावत् । 'नास' न बभूव । अपि तु तदेवोद्रिक्तमास । ह प्रसिद्धमिति । तत्त्वोद्योतटीकायां तु—'स्वधया' सुखेनैव । न तु सुखप्राप्त्याद्यर्थमिति व्याख्यातम् ॥

( १० ) परिहारांशं व्याचष्टे—नेति ॥ नात्र स्वरूपासत्त्वाभिप्रायेण साधनानाम सत्त्वोक्तिरित्यर्थः । कुत इत्यतस्तत्र धर्मान्तरेणेत्यंशमात्रस्या असद्व्यपदेशादित्यनेनान्वितं हेतुत्वेन योजयति-अव्यक्तत्वेति । अवरत्वावृतत्वकार्यानभिमुखत्वादिकमादिपदार्थः । अन्यो धर्मो धर्मान्तरम् । तथा च स्वरूपासत्त्वादन्येन धर्मजातेन तदपेक्षयेत्यर्थः । यद्वा—अन्तरशब्दो विशेषपरः । तथा च धर्मविशेषाभिप्रायेणेत्यर्थः । 'हि' यतः 'तत्' असत्त्वं उच्यते श्रुतावतो नेति सम्बन्धः ॥

( ११ ) ननु धर्मान्तरेणासत्वोक्तिः कुतः? स्वरूपासत्त्वाभिप्रायेणैव असत्त्वोक्तिः किं न स्यादित्यतस्तत्रोत्तरत्वेन वाक्यशेषादित्यंशं योजयति—तम आसीदिति ॥ आदिशब्देन परशब्दघटितानीदवातमिति वाक्यशेषो गृह्यते । तथा च 'नासदासीत्' इति निषेधवचनस्य साधनस्वरूपासत्त्वाभिप्रायकत्वे 'तम आसीत्' इति वाक्यशेषविरोधस्तावदेकः, 'तस्माद्धान्यत्' इति वाक्यशेषे परशब्देन प्रलये सतोऽपि ब्रह्मान्यस्य प्रकृत्यादेः स्वातन्त्र्यनिषेधान्यथानुपपत्तिश्चापरो दोषः स्यादिति तस्य 'सविशेषणे हि' इति न्यायेन व्यक्तत्वस्वातन्त्र्यादिरूपधर्मान्तरनिषेधपरत्वमेवाङ्गीकार्यम् । अव्यक्तादावसत्त्वव्यपदेशस्य लोके पिशाचादौ दृष्टत्वात् न तु स्वरूपसत्त्वनिषेधपरत्वमिति न तद्बलात्प्रलये साधनान्तरस्याभावस्तन्निमित्तं तस्येश्वराधीनत्वाभावश्च वाच्य इति भावः । 'तम आसीत् तमसा गूळ्हमग्रे प्रकेतं सलिलं सर्वमा इदं' ( ऋ. १०-१२९-३. ) इति ऋङ्मन्त्रे भूत्वेति शेषः । आ इतिपदच्छेदः, अस्तेर्लिङि रूपमिदम् । तथा च 'अग्रे' प्रलये 'यत्तमः' चित्प्रकृत्याख्यमपरतत्त्वं, अपरं तमः प्रकृतिरिति न्यायदीपिकोक्तेः, 'जीवानां ग्लपनाद्दुर्गा तम इत्येव कीर्त्यते' इति गीतातात्पर्ये दुर्गाख्यायां चित्प्रकृतौ तमःशब्दस्य निरुक्तत्वाच्च, सर्वाधिकत्वेन तमो हि दुर्गेत्यन्यत्रोक्तेश्च । 'अप्रकेतं' अपरिमितं अत एव अस्मिन् सर्वस्मिन् देशे

( १२ ) न चान्यत्र प्रमाणमस्ति ।
( १३ ) अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगा मजोऽन्यः । ( महाना. १०-५. )

अविज्ञातं सलिलं भूत्वा आसीत् । तेन 'तमसा' सलिलेन 'इदं' जगत् गूळ्हं 'गूढं' गूहितमासीदिति श्रुत्यर्थः । भावबोधे तु—टीकायामपरिमितमित्येतत् आङोऽर्थकथनं, अप्रकेतं प्रभावरहितमिति व्याख्यातम् । तन्मूलं चिन्त्यम् । प्रलये जडचेतनप्रकृतिभावमभिधाय अगाधत्वेनाप्रकेतेऽविज्ञाते सलिले इति व्यासतीर्थीयविरोधश्च ॥

( १२ ) अथ परकृतापव्याख्यां निराचष्टे—न चेति ॥ अस्मिन्नधिकरणे चेतनाचेतनप्रपञ्चस्य परमार्थतो ब्रह्मानन्यत्वमुच्यते । कुतो? वाचारम्भणमित्यादिश्रुतेरिति यत् परेषां व्याख्यानं तन्न युक्तम् । कुतः? यतः 'अन्यत्र' चेतनाचेतन प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणं नास्त्यत इति नञावृत्त्या योजना । न केवलं प्रमाणाभावोऽन्यत्र, किन्तु प्रमाणविरोधः चेत्याशयेन चशब्दः प्रायोजि ॥

( १३ ) तदुपपादनाय विरोधिप्रमाणान्याह—अजो हीति ॥ श्रुतिस्मृतिभ्य इत्यनन्तरं ब्रह्मान्यत्वाद्यवगमादिति वाक्यशेषः । 'अजो हि' इति नारायणानुवाके श्रुतम् । 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' (महाना.१०-५.) इति पूर्वार्धे श्रुतां 'लोहितशुक्लकृष्णां' रजःसत्त्वतमोगुणात्मिकां 'बह्वीः प्रजाः सृजमानां सरूपां' इति सुधागृहीतवाक्यान्तरे बहुवचनश्रवणात् सरूपां स्वसदृशानि बह्वीं प्रजां महदादिबहुकार्याणि जनयन्तीमेकां न जायत इत्यजां प्रकृतिं एको न जायत इति 'अजः' संसारिजीवो 'जुषमाणः' सेवमानः 'अनुशेते' अनुवर्तते । 'अन्यः' कश्चिन्मुच्यमानोऽस्यां प्रकृतौ भोगान् भुक्त्वा अथ भुक्तो भोगो यस्यां सा तां 'भुक्तभोगां' एनां प्रकृतिं 'जहाति' प्रलये परित्यजतीत्यर्थः । अत्र मुक्तामुक्तयोर्भेदोक्त्या परमात्मनोऽपि संसारिभ्यो भेदोऽभिहितः, अद्वैतिमते मुक्तपरमात्मनोरभेदात् अस्मन्मतेऽपि 'एनां जहाति' इत्यनेन परमात्मनोऽप्युक्तत्वात् । न च तस्य प्रकृतिभोगत्यागयोरयोग इति वाच्यम् । 'ऋतं पिबन्तौ' (कठ.१-३-१.) 'श्रोत्रं चक्षुः स्पर्शनं च' इत्याद्युक्तरीत्या प्रकृतिभोगस्य क्रियाप्रबन्धे लटं स्वीकृत्य सर्वदा प्रकृत्यबद्धत्वरूपप्रकृतित्यागस्य च वक्तुं शक्यत्वात् ॥

( १४ ) अनाद्यनन्तं जगदेतदीदृक्प्रवर्तते नात्र विचार्यमस्ति।
न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत्॥

( १५ ) असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। ( गी.१६-८. )

---

( १४ ) एवं परोक्ते चेतनस्य ब्रह्मानन्यत्वे विरोधिप्रमाणमभिधाय इदानीमचेतनप्रपञ्चस्यापि पराभिसंहिते बाध्यत्वरूपब्रह्मानन्यत्वे तदाह—अनादीति ॥ स्मृतिवाक्यमेतत्। 'अनाद्यनन्तं' प्रवाहत उत्पत्तिनाशशून्यं 'ईदृक्' नानाविधं व्रीह्यादिवत् प्रवाहरूपेण वर्तमानं जगत्प्रवर्तते प्रतिकल्पमिति शेषः। 'अत्र' अनादित्वानन्तत्वेदृक्त्वरूपार्थेषु विचार्यं निर्णेतव्यम् न किमप्यस्ति। सर्वं निर्णीतमेवेति भावः। विचार्यं संशेतव्यमिति वा। ननु रज्जौ सर्पवद्विश्वस्यापि कचित्कस्य चिद्बाधोऽस्ति किमित्यतो नेत्याह—न चेति। 'इदं' विश्वं 'क्वापि' देशे काले च 'कस्यापि' पुरुषस्य 'अन्यथा' बाधितं 'पुरा' पूर्वं नाभूत्, उत्तरत्रापि 'तथा' बाध्यं नाभविष्यदित्यर्थः। भविष्यच्च नेति सुबन्तपदं वा ॥

( १५ ) विश्वमिथ्यात्वमतमासुरत्वाद युक्तमिति गीतास्मृत्या दर्शयति—असत्यमिति ॥

अपरस्परसम्भूतं किमन्यत्कामहेतुकम्।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः॥
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥ इति वाक्यशेषः
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः॥

इति पूर्ववाक्ये प्रकृता आसुराः जगत् असत्यत्वादप्रतिष्ठं ज्ञानबाध्यं तत एवानीश्वरमित्याहुः। ननु यतो यतो जातमसावसावीश्वरोऽस्तु इत्यत उक्तं—अपरस्परसंभूतमिति। परमेश्वराधिष्ठितायाः प्रकृतेः महान्, महतोऽहंकार इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यर्थः। ननु सत्यं न चेत् किमसत्? एवं परस्परसंभूतं न चेत् किं नित्यं? स्वतो वा जातं? आद्यस्योत्तरं—अन्यदिति। सदसद्भ्यामिति शेषः। द्वितीयस्योत्तरं—कामहेतुकमिति। काम इति तत्कारणमविद्या मिथ्याज्ञानं चोपलक्ष्यते। तथा चाविद्यादि कल्पितमित्यर्थः। 'एतां दृष्टिं' बुद्धिमवष्टभ्य 'नष्टात्मानो' दुष्टचित्ताः, अतएव 'अल्पबुद्धयः' अल्पज्ञानाः 'जगतोऽहिताः' विरोधिनोऽहितकरा वा। जगतः 'क्षयाय'

(१६) असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि ।
यस्सत्यरूपं जगदेतदीदृक्सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा ।
(१७) अथैनमाहुस्सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते ।
अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते ।
(१८) 'यच्चिकेत सत्यमित्तन्न मोघम्' (ऋ. १०-५५-६.)

अनिष्टप्राप्तये विनाशाय वा 'उग्रकर्माणः' क्रूरकर्माणस्सन्तः 'प्रभवन्ति' कलियुगादावुत्पद्यन्त इत्यर्थः । अत्र जगदसत्यतावादिनामासुरत्वाद्युक्त्या तत्सत्यताऽवगम्यत इति प्रकृतसङ्गतिः । गीताभाष्ये तु— न केवलं जगतो मिथ्यात्वादि वदतामासुरत्वं 'असत्यमप्रतिष्ठन्ते' इत्यनेनोच्यते, किन्तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेन न विद्यते सत्यमस्येत्यसत्यं विष्णवाख्योत्पादकरहितं, एवं न विद्यते प्रतिष्ठा प्रतिष्ठापक ईश्वरश्च विष्णुर्यस्य तदप्रतिष्ठमनीश्वरमिति चोक्तम् । 'अन्नाद्भवन्ति भूतानि' इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यपरस्परसम्भूतमेतादृशं जगद्ये आहुः, ते आसुरा इति व्याख्यातम् ॥

(१६) विश्वमिथ्यात्वमतस्यासुरत्वं युक्तं, विष्णुमाहात्म्यविरुद्धत्वादित्येतदुच्यते—असत्यमाहुरिति ॥ स्मृतिवाक्यमिदम् । यतः एतज्जगदसत्यमाहुस्तेऽज्ञाः । कुतो? 'हि' यतो हरेः 'परां' सर्वोत्कृष्टां शक्तिं 'न विदुः' न जानन्त्यतः । तामेव शक्तिं दर्शयति—यस्सत्यरूपमिति । तुशब्दोऽवधारणे । तथा च यो महात्मा सत्यरूपमेवेदं नानाविधमेतज्जगत्सृष्ट्वा सत्यकर्मनामाऽभूत् तस्य हरेरिति सम्बन्धः । विषयसत्यतामन्तरेण सृष्ट्यादिक्रियायाः सत्यत्वानुपपत्त्या सत्यकर्मसंज्ञकत्वानुपपत्तेरित्यभिप्रायः । अनेनापि जगतः सत्यत्वं सिद्ध्यतीति प्रकृतसङ्गतिः ॥

(१७) अथेति च श्रुतिः ॥ 'अथ' तस्मात् 'एनं' विष्णुं, तत्र हेतुः—सत्यं हीति । 'हि' यस्मात् 'इदं' प्रमितं 'असौ' हरिः, अत्राप्युक्त एवाभिप्रायः । अथैनमाहुर्नित्यकर्मेत्यपि श्रुतिवाक्यम् । 'नित्यकर्मा' अबाधितकर्मा नित्यमबाध्यम् ॥

(१८) पुनरपि विश्वसत्यत्वं श्रुत्या दृढीकरोति—यदिति ॥ उतशब्दोऽप्यर्थे । तथा च 'स्पार्हं' स्पृहणीयं हविरादिकं वसु भक्तेभ्यो

इत्यादिश्रुतिस्मृतिभ्यः ।

( १९ ) परस्परविरुद्धे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते ॥
इति बृहत्संहितायाम् ॥

---

'जेता' प्राप्ता, तथाऽपि तेभ्यः स्पार्हं वसु यज्ञादिफलं दाताऽपि परमेश्वरः इन्द्रादिनामा 'यत्' 'विश्वं' 'चिकेत' चकार । कित करणे । तत् 'सत्यमित्' सत्यमेव, न मिथ्या । कुतो ? यतः तत् 'न मोघं' अर्थक्रियाद्यनुपयुक्तं न भवतीत्यर्थः । यद्वा–'स्पार्हं' स्पृहणीयं 'वसु' स्वर्गभूम्यादिकं बल्यादिभ्यो जेता इन्द्रादिभ्यो दाताऽपीत्यर्थः । आदिपदेन

'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः' ( ईशा.८. ) ।

इतीशावास्यवाक्यम्, ।

विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम् ।
प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचम् ॥
( ऋ. २ - २४ - १२. )

इति ऋग्वेदवाक्यं च गृह्यते, अन्यानि च । 'कविः' सर्वज्ञः 'मनीषी' ब्रह्मादिसर्वमनसामीशिता प्रेरकः णिनिप्रत्ययान्तोऽयं शब्दः । परिभवति सर्वानिति 'परिभूः' सर्वोत्तमः परमनपेक्ष्य स्वयमेव भवतीति 'स्वयम्भूः' अनन्याश्रयः स्वतन्त्रः परमेश्वरः 'अर्थान्' महदादीन् 'शाश्वतीभ्यः समाभ्यः' सप्तम्यर्थे पञ्चमी सर्वेष्वपि कालेषु 'याथातथ्यतः' तथाभावमनतिक्रान्तं यथातथं तस्य भावो याथातथ्यं ततो याथातथ्येनैव अबाधिततयैव सत्यानेव 'व्यदधात्' निर्मितवानित्यर्थः । निर्माणशक्तिप्रदर्शनाय कविरित्यादि । हे मघवानौ यशस्विनौ धनवन्तौ चेन्द्राबृहस्पती 'युवोः' युवयोरधीनं विश्वं 'सत्यमित्' सत्यमेव । कुतः ? 'वां' युवयोः सत्यजगत्सर्जनादिरूपं 'व्रतं' कर्म 'आपश्चन' सर्वदेवता अपि 'प्रमिनन्ति' जानन्ति यतः, न केवलमहमेव प्रतिपन्न इति मन्त्रद्रष्टा द्विरूपमिन्द्रबृहस्पतिशब्दवाच्यं परमेश्वरं प्रत्याह ॥

( १९ ) ननु न जीवो ब्रह्मणो भिद्यते चेतनत्वात्, ब्रह्मवत्, प्रपञ्चो वा बाध्यो दृश्यत्वाच्छुक्तिरजतवदित्यादियुक्तिसद्भावात्कथमन्यत्र प्रमाणाभाव इत्यत आह—परस्परेति ॥ तुरेवार्थोऽप्यर्थः । तथा च वाक्यानां परस्परं विरोधे सत्येव 'यत्र' यस्मिन्नर्थे 'तथैव युक्तता' ए

(२०) विरुद्धवत्प्रतीयन्ते आगमा यत्र वै मिथः।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते ॥ इति च।
(२१) ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥

कवाक्यानुसारेणैव युक्तिसिद्धताऽस्ति सोऽर्थो विज्ञेयस्स्यात्। एतावता 'अन्यथा' श्रुतिस्मृत्यानुकूल्यहीना केवला युक्तिरपि न प्रमाणं 'इष्यते' अङ्गीक्रियते प्रामाणिकैः। शुष्कयुक्तिसिद्धार्थोऽपि न विज्ञेय इत्यर्थः। बृहत्संहितायामित्यनन्तरं न केवल युक्तिः प्रमाणमित्युक्तमिति शेषः ॥

(२०) ननु यथोदाहृतश्रुत्यादिकं सत्यत्वे प्रमाणम्, तथाऽचेतनप्रपञ्चस्य बाध्यत्वरूपे ब्रह्मानन्यत्वेऽपि 'वाचारम्भणम्' इत्यादिश्रुतिस्मृतयः प्रमाणं सन्त्वित्यत आह—विरुद्धवदिति ॥ पारमार्थिकविरोधे त्याज्यत्वमेव स्यात्, न तु व्याख्येयत्वमित्यतो विरुद्धवदित्युक्तम्। यदि तर्हीत्यर्थे यत्र तत्रेति निपातौ। वैशब्दः प्रसिद्धौ। दृष्टं प्रत्यक्षं अतिबलबहुप्रमाणदर्शनं वा। तथा च ये मिथ्यात्वसत्यत्वादिरूपार्थद्वयबोधका आगमा यदि 'मिथः' परस्परं विरुद्धवत्प्रतीयन्ते। तर्हि दृष्टानुसारेण तेषामापाततः प्रतीतादन्योऽर्थः 'अन्ववेक्ष्यते' मुख्यवृत्त्याऽवगम्यत इत्यर्थः। इति चेति। ब्रह्मतर्के उक्तमिति शेषः। चः पूर्वप्रमाणसमुच्चये। तथा च प्रकृते साक्षिप्रत्यक्षानुसारेण अनन्यत्वश्रुत्यादीनामन्यथा व्याख्येयत्वान्न तेऽन्यत्र प्रमाणमिति भावः ॥

(२१) स्मर्यते च प्रपञ्चमिथ्यात्ववादिश्रुत्यादेरन्यार्थवर्णनं इति भावेनाह—ईश इति ॥ इतिशब्दः प्रत्येकमभिसम्बध्यते। एवमपिशब्दोऽपि। अत एव द्विर्ग्रहणमिति तत्त्वोद्योतटीकोक्तिः। इत्यादिवदितिवत्। इत्याद्यर्थसाधकवचनयुक्तिवदित्यर्थः अत्रेशोऽप्यनीश इत्येकं मतं, जगन्मिथ्येत्यपरं, गुरुरपूज्य इत्यन्यत्। आदिशब्देनैकः चेतनः परब्रह्मभावो मोक्ष इत्यादिमतं गृह्यते। तथा चेशोऽप्यनीश इत्यादिवचनवत् 'प्रमाणानि' तथा प्रतीतानि वचनानि यतो बहुभिर्वैदिकैः प्रमाणैर्विरुद्धान्यत आभासाः आभासानीति 'वैदिकैः' वेदार्थज्ञैर्ज्ञेयानीत्यर्थः। अथेति समुच्चये। एवमादयो युक्तयोऽपि यस्माद्वैदिकैर्बहुभिः प्रमाणैः विरुद्धास्तस्मादाभासा इति ज्ञेया इत्यर्थः। वचनापेक्षया विरोधिप्रमाणानां

( २२ ) वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रमः ॥
इति च भागवततन्त्रे ।
( २३ ) शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् ।

प्राबल्यसमर्थनाय बहुभिरित्युक्तम् । निरवकाशत्वादेरप्युपलक्षकमेतत् । अवैदिकवचनापेक्षया युक्त्यपेक्षया च प्राबल्यसूचनाय बहुभिरिति वैदिकैरिति चोक्तम् ॥

( २२ ) यथा प्रमाणविरुद्धानां दृश्यत्वादियुक्तीनामविषयवृत्तित्वेन व्याप्तिशून्यत्वेन च आभासत्वात् सर्वथा हेयत्वम्, किं तथा वचनानामपीत्यपेक्षायामाभासत्वमेव विभज्याह—वेदेति ॥ वेदमनुसरन्तीति वेदानुसाराणि, वेदश्च वेदानुसाराणि च वेदवेदानुसाराणीति विग्रहः । वचनेषु कार्यैवेति च शेषः । तुशब्दः पूर्वविशेषार्थः । प्रयोजनमित्यध्याहारः । अथवेति निपातसमुदायः । तथा च वेदवेदानुसारेषु वचनेषु 'विरोधे' प्रबलप्रमाणविरोधे सति तेषां विरुद्धमर्थं परित्यज्यान्यार्थकल्पना 'अविरुद्धार्थकल्पना' कार्यैवेत्यर्थः । आभासत्वं तु विरुद्धार्थ एवेति भावः । 'अन्येषां' वेदवेदानुसारेभ्यः इतरेषां तु प्रमाणविरुद्धानां वचनानां विप्रलम्भः वञ्चनं प्रयोजनम्, अथ वा भ्रमः कारणं कल्प्यमित्यर्थः। विप्रलम्भः प्रयोजनमथ वा भ्रमः कारणं कल्प्यमिति तत्त्वप्रदीपोक्तेः । तत्त्वोद्योतटीकायामिवेह टीकायां च 'इतराणि विरुद्धानि विप्रलम्भभ्रमजान्यपि' इति व्यासस्मृतिवाक्यानुसारेण विप्रलम्भभ्रमयोरुभयोः कारणत्वोक्तिः एकस्य प्रयोजनाभिप्राया । न तु सर्वथा तानि प्रमाणानीति ज्ञातव्यानीति भावः । अनेन विप्रलम्भादिमूलत्वे विरोधः कारणमित्युक्तं भवति । यद्यपि न प्रमाणानीत्येव वक्तव्यम्, न तु विप्रलम्भादिमूलानीति । तथाऽप्यप्रामाण्यकारणदोषोपन्यासाय तथोक्तमिति ज्ञेयम् । इति भागवततन्त्रे आभासत्वं विभज्योक्तमिति शेषः ॥

( २३ ) ननु प्रमाणत्वाविशेषात् कुतो न युक्तेरसाधकत्वमित्यत आह—शास्त्रेति ॥ आद्यस्तुरवधारणे । द्वितीयो विशेषे । तृतीयः पूर्ववत् । तथा च 'शास्त्रार्थयुक्तः' शास्त्रार्थविषयतया शास्त्रानुकूलः 'अनुभवो' यथार्थज्ञानरूपं केवलमेवोत्तमं प्रमाणं 'मतं' प्रमितमित्यर्थः। साक्षात् ज्ञेयविषयीकारित्वादिति भावः । मध्यमं प्रमाणं त्वागमः,

मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ॥
(२४) प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रमाणपदवीं ययुः ॥
इति पुरुषोत्तमतन्त्रे ॥ १८ ॥
(२५) सू—ॐ ॥ युक्तेः शब्दान्तराच्च ॥ ॐ ॥ १९ ॥
साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते ।
तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत् ॥

केवलप्रमाणसाधनत्वेन ततोऽस्थावरत्वात् । दृष्टादृष्टसर्वविषयकत्वेन दृष्टमात्रविषयकप्रत्यक्षात्पूर्वभावित्वाच्च मध्यमत्वमिति भावः । अधमं प्रमाणं त्वसर्वविषयत्वात्प्रत्यक्षरूपानुप्रमाणं स्मृतमित्यर्थः ॥
(२४) ततः किमित्यतो 'नावाक्या युक्तिरिष्यते' इत्युक्तं प्रपञ्चयति—प्रत्यक्षयोरिति ॥ अपेक्ष्यन्ते इति शेषः । आद्यशब्देनानुमानविशेषार्थापत्त्यादिकं गृह्यते । तथा चानुप्रमाणरूपानुमाद्यास्तु यतः प्रत्यक्षयोरागमयोर्विरोधे सति तत्रैकार्थनिश्चयाय सहायत्वेनापेक्ष्यन्ते अतः 'स्वतन्त्राः' केवलाः 'प्रमाणपदवीं' प्रमाणभावं न ययुरतः सर्वावरा इत्यध्याहारेण योजना । अतो न केवलाया दृश्यत्वादियुक्तेरसाधकत्वमिति भावः । पुरुषोत्तमतन्त्र इत्यनन्तरं केवलयुक्तेरसाधकत्वं उक्तमिति शेषः । अतो न चान्यत्र प्रमाणमस्तीत्युक्तं युक्तमिति भावः ॥
(२५) ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनापेक्षया साधनाभावकथनमेव वरं, साधनादिशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—युक्तेरिति ॥ अत्र नेत्यस्यानुवृत्त्या न महिमाधिक्यलाभाय भगवतः साधनान्तरविधुरत्वमुररीकर्तव्यमिति साध्यलाभात् तत्रोपपत्तित्वेन युक्तेरिति या घटनालक्षणा साधनान्तरेण सृष्टेरपि महिमाविरोधितोक्ता तस्याः सिद्धिपरिहारायागमसिद्धतामाह-साधनानामिति । 'साधनत्वं' कार्यजननसामर्थ्यं यदाऽऽत्माधीनं स्वाधीनं 'इष्यते' अङ्गीक्रियते तदा 'साधनसम्पत्तिः' ईशितव्यसिद्धये साधनसम्पादनं आत्मनः 'ऐश्वर्यद्योतिका' तज्ज्ञापिका तदविरोधिनीत्यर्थः । इत्यादिवाक्यात्साधनान्तरेण सृष्टिरपीश्वरस्य 'युक्ता' महिमाविरोधिनीत्यर्थः । इति ज्ञायत इति शेषः । आदिशब्देनैवंजातीयकानि वचनानि ग्राह्याणि । लोकप्रसिद्धेरपि ग्राहकमेतत् । इत्यादीति लुप्तविभक्तिकं शक्तोऽपि इति विलक्षणशब्दादि

इत्यादेस्साधनान्तरेण सृष्टिर्युक्ता । 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ' (महाना.१-११.) इत्यादिशब्दान्तराच्च ॥ १९ ॥

( २६ ) सू—ॐ ॥ पटवच्च ॥ ॐ ॥ २० ॥

साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ॥ २० ॥

( २७ ) सू—ॐ ॥ यथा प्राणादिः ॐ ॥ २१ ॥

---

ति सुधायामुक्तिः । यद्वा—अन्यश्शब्दः शब्दान्तरं 'अद्भ्यः सम्भूतः पृथिव्यै' (तै.आ.३-१३.) इति प्रागुदाहृतश्रुत्यपेक्षया अस्या अन्यत्वात्। अत एव सूत्रे भाष्ये च प्राचीनश्रुतिसङ्ग्रहार्थं शब्दान्तरशब्दः । न केवलं युक्तेर्युक्तत्वेनागमसिद्धत्वात्, किन्तु 'अद्भ्यस्सम्भूतो हिरण्यगर्भः' इत्यादिशब्दान्तरादपीति चशब्दार्थः । शब्दान्तरबोध्यश्रुत्योः समुच्चय एव चशब्दः । आदिशब्देनैवंजातीयकवाक्यं गृह्यते । नारायणानुवाके श्रुतमिदं—हिरण्यगर्भः 'अद्भ्यः' अद्भिः अबाद्युपलक्षितपञ्चमहाभूतैः 'सम्भूतः' उत्पन्नः 'इति' एवं 'अष्टौ' इन्द्रादिलोकपालाश्च सम्भूता इति तत्त्वप्रदीपदिशाश्रुत्यर्थः । तैत्तिरीये 'अष्टौ पुत्रासोऽदितेः' (तै.आ.१-१३.) इत्युक्त्वा 'मित्रश्च वरुणश्च धाता चार्यमा चांशुश्च भगश्चेन्द्रश्च विवस्वांश्च' (तै.आ.१-१३.)इति ये अष्टावन्ये गृहीतास्ते वाऽत्र ग्राह्याः । अनेन—न विष्णोर्महिमाधिक्यलाभाय प्रलये अवरसाधनासत्त्वमुपेयम्, किन्तु तत्सत्त्वमेव । कुतः ? साधनासत्त्वमन्तरा लीलया दण्डमवष्टभ्य गमनवत्साधनान्तरेण सृष्टेरपि युक्तेर्युक्तत्वाद्भगवन्महिमाविरोधित्वेनागमसिद्धत्वात् 'अद्भ्यः' इत्यादिशब्दात् शब्दान्तराच्च तत्सत्त्वपक्षाग्रह इति सूत्रार्थ उक्तो भवति ॥

( २६ ) न केवलं श्रुतिसिद्धत्वात्, किन्तु साधनसत्त्वस्य युक्तिसिद्धत्वाच्च तत्राग्रह इत्याह सूत्रकृत्—पटवच्चेति ॥ अत्र पटपदं सम्प्रतिपन्नकार्यपरं सत्तत्सृष्टिलक्षकमित्याशयेन सूत्रं व्याचष्टे-साधनान्तरेणेति । कर्तृव्यतिरिक्तसाधनेनेत्यर्थः । दृष्टेत्यनेन दृष्टान्ते हेतुसाध्यसम्प्रतिपत्तिरुक्ता । अनेन-न केवलं श्रुतेः, किन्तु विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात्पटादिसृष्टिवदित्यनुमानाच्चावरस्य सत्त्वं सिद्ध्यतीति सूत्रार्थ उक्तो भवति ॥

( २७ ) ननु तर्हि साध्ये स्वतन्त्रपदप्रवेशेन कर्तृव्यतिरिक्तस्वतन्त्रसाधनसिद्धिरपि स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—य

तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः।
( २८ ) प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतः प्रभुः॥
इति कौर्मे ॥ २१ ॥

——:*:——

७. अधिकरणम् ॥

( १ ) जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते—

थेति ॥ तच्चेति । प्रलये सदपीत्यर्थः । यत इत्यर्थे वा चशब्दः । 'साधन जातं' साधनसमूहः 'तेन' भगवता । न त्वननुप्रविष्टम् 'यः प्राणे तिष्ठ न्' (बृ.५-७-१६.) इत्यादिश्रुतेरित्येवकारार्थः । अतो न स्वतन्त्रमिति वा क्यशेषः । अन्यथाऽनुप्रवेशवैयर्थ्यादिति भावः । प्राणपदस्य वाय्वर्थ तया प्रसिद्धत्वादादिपदार्थमाह—शरीरेति । आदिशब्देन प्राणो गृ ह्यते । सूत्रे प्राणस्य स्वशब्देन ग्रहणेऽपि तस्य ज्ञानादिकार्यसाधनत्वे नासिद्धत्वात्, सम्प्रतिपन्नसाधनस्यैवेह दृष्टान्तत्वेन ग्राह्यत्वात्, शरीरे न्द्रिययोश्च तथात्वेन सिद्धत्वात् इन्द्रियाणां करणत्वेन तद्विवक्षया भाष्ये शरीरेन्द्रिययोः स्वशब्देन ग्रहणं कृतमिति ध्येयम् । अनेन— विप्रतिपन्नं साधनजातं न स्वतन्त्रं, प्रेरणार्थमीश्वरेणानुप्रविष्टत्वात्, यथा शरीरेन्द्रियप्राणादिरिति सूत्रार्थ उक्तो भवति । पूर्ववाद्युपन्यस्ता नुमानं तु प्रबलैतदनुमानविरुद्धत्वान्न साधकमिति भावः ॥

( २७ ) साधनानां भगवदनुप्रविष्टत्वमेव कुत इत्यत आह—प्रकृति मिति ॥ चः समुच्चये । 'प्रभुः' समर्थः । 'पुरुषोत्तमः' भगवान् 'प्र कृतिं' प्रकृत्यवान्तराभिमानिनीं सरस्वतीं 'पुरुषं' चतुर्मुखं, यद्वा— 'प्रकृतिं' जडात्मिकां 'पुरुषं' जीवम् । अथ वा—स्त्रीपुरुषाख्यमिथु नं प्रविश्यैव जगतः सृष्ट्यर्थं तौ 'क्षोभयामास' सृष्टावुन्मुखीचकारे त्यर्थः । इति कौर्मे उक्तत्वादिति शेषः । अस्य साधनजातमिति पूर्व वाक्येनान्वयः ॥ ६ ॥

इति आरम्भणाधिकरणम् ॥

——:*:——

७. अधिकरणम् ॥

( १ ) एतदधिकरणार्थमाह—जीवेति ॥ ननु समयपादे 'अन्य थाऽनुमितौ च' इत्यत्र जीवानामेव जगत्कर्तृत्वमिति सिद्धान्तस्य नि

(२)सू—ॐ ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥ॐ॥२२॥
जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ॥ २२ ॥

राकरिष्यमाणत्वात्तेन गतार्थमेतदित्यत उक्तम्—श्रुतिप्राप्त इति। 'जीवाद्भवन्ति' इति श्रुत्याऽऽपाततः प्राप्त इत्यर्थः। तथा चात्र श्रुतिमूलयुक्तिसिद्धो जीवकर्तृत्वपक्षो निराक्रियते, उत्तरत्र तु समयप्राप्त इति भेद इति न गतार्थतेति भावः। श्रुतिप्राप्त इत्युपलक्षणं—साक्ष्यनुभवप्राप्तश्चेत्यपि द्रष्टव्यम्। तथाऽपि 'एतेन शिष्टा' इत्यत्रास्य पक्षस्य निराकृतत्वात्तेन गतार्थतेत्यत आह—विस्तरादिति। तथा च पूर्वत्र संक्षेपतो निरस्तोऽपि अत्र विस्तरान्निराक्रियत इति न गतार्थतेति भावः॥

(२) लोके घटादिकार्येषु जीवस्यैव कर्तृत्वेन अनुभवसिद्धत्वाल्लाघवात्तस्यैव समस्तजगत्कर्तृत्वौचित्यात् 'जीवाद्भवन्ति' इति श्रुत्यानुकूल्याच्च जीवस्यैव स्वतन्त्रकर्तृत्वान्न विष्णोर्जगत्कर्तृत्वमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—इतरेति ॥ जीवेति। ईश्वर एव नास्ति सर्वत्र जीवः स्वतन्त्रकर्तेति जीवस्य स्वतन्त्रकर्तृत्वपक्ष इत्यर्थः। समस्तकार्येष्विति शेषः। अनेन 'इतरव्यपदेशात्' इत्यस्य तात्पर्यतो व्याख्यानं कृतं भवति। न चैवं न हि अत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितम्, किन्तु घटादिकर्तृत्वं तावदनुभवसिद्धत्वात् कुलालादीनां वक्तुं शक्यम्, तत्रेश्वरस्यापि कर्तृत्वाङ्गीकारे कल्पनागौरवं स्यादित्यतो नेश्वरस्य सर्वकर्तृत्वमिति सुधाविरोधः। घटादिकार्येष्विव महदादिकार्येष्वप्यदृष्टद्वारा जीव एव कर्ता नेश्वरः, तस्याप्रामाणिकत्वात्तादृशस्य कल्पने च कल्पनागौरवप्रसङ्गादित्याशयेनात्र पूर्वपक्षप्रवृत्तेः। सुधायां तु अस्तु वा ईश्वरः प्रामाणिकः। तथाऽपि न तस्य सकलकार्यकर्तृत्वं, किं तु महदादिकार्यकर्तृत्वमेव, न घटादिकर्तृत्वमपि, उभयत्रापि कर्तृत्वाङ्गीकारे कल्पनागौरवप्रसङ्गादित्यभ्युपगमवादेन पूर्वपक्षस्य प्रवृत्तत्वेन विरोधाभावात्। हिताकरणादीत्यनेन नञ्शिरस्केनावृत्तेन भिन्नपदेन ज्ञापितं साक्षादापाद्यं दर्शयति—हितेति। आदिशब्दार्थमाह—अहितेति। चः समुच्चये। हिताकरणादयो दोषाः प्रसज्ज्येरन्निति तत्त्वप्रदीपोक्तेर्दोषान्तरोपलक्षणमेतत्। यद्वा—चशब्देनैव दुःखप्राप्तिसुखाप्राप्त्यादयो दोषाः गृह्यन्ते। केचित्तु—दोषपदमभावाख्यदोषपरं, प्रसङ्गत्वज्ञापनाय स्यादित्युक्तं भाष्ये इत्यङ्गीकृत्य साक्षादापाद्यवाक्यानुवृत्ति

( ३ ) सू—ॐ ॥ अधिकं तु भेदनिर्देशात् ॥ ॐ ॥ २३ ॥

न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः, अधिकशक्तित्वात्, 'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः' (ऐ. आ. ३-२-४.) 'एष त आत्मा

विनेव हिताकरणादेरभावाख्यदोषप्रसङ्ग इति व्याचख्युः । अत्र पक्षे यद्यपि भाष्यटीकयोरानुगुण्यमस्ति, प्रामाणिकपरित्यागरूपत्वादानिष्टता च । तथाऽपि अन्यथा हिताकरणादयो दोषाः प्रसज्येरन्निति तत्त्वप्रदीपो विरुद्ध्यत इति ध्येयम् । अनेन—सूत्रे 'असद्व्यपदेशात्' इति सूत्राच्चेदित्यनुवर्तते । स च यद्यर्थे । तत एव तर्हीति लभ्यते । तथोच्यत इति तस्येति शेषः । इतरशब्दश्च प्रस्तुतब्रह्मकर्तृत्वान्यजीवकर्तृत्वार्थकः । अनुषक्तनञ्शिरस्केन हितेत्यादिना भिन्नपदेनोक्तस्य हिताकरणमहितकरणं च न स्यादित्यापाद्यस्य विपक्षे बाधकापाद्यान्तरसमर्पणाय हितेत्यादिसमस्तम् । तत्रापाद्यस्यानिष्टत्वज्ञापनाय दोषपदम् । हिताकरणादयश्च ते दोषाश्च तेषां प्रसक्तिरिति विग्रहः । हितशब्देनात्मनः सौमनस्यकरं गृह्यते । अहितशब्देन जन्ममरणाद्यनर्थजालं गृह्यते । तथा च 'इतरव्यपदेशात्' इतरस्य जीवकर्तृत्वस्य 'जीवाद्भवन्ति' इत्यादिश्रुतावुक्तत्वात्साक्ष्यनुभवसिद्धत्वाच्चेद्यदि 'तथोच्यते' जीवः स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य न हिताकरणादिस्स्यात् हिताकरणमहितकरणं च न स्यादन्यथाऽपरिहार्यत्वात्तस्मिन् हिताकरणादिदोषाः प्रसज्येरन् स्वतन्त्रकर्तरि तेषामयोगादिति भावः, विद्यन्ते च ते जीवे अतो न जीवः स्वतन्त्रकर्ता, किन्तु परमेश्वर एवेति सूत्रार्थ उक्तो भवति ॥

( ३ ) यदि यत्किञ्चिद्दोषमात्रेण जीवकर्तृता निराक्रियते, तर्हि ब्रह्मणोऽपि कर्तृत्वं न प्राप्नोति, तस्यापि श्रमादिदोषनियमात् । एवं च पक्षयोः साम्ये सत्यनुभवश्रुतिसिद्धजीवकर्तृत्वमेवाश्रयणीयमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अधिकमिति ॥ न चेत्यनेन सूत्रे नेत्यस्य तस्येत्यस्य दोषप्रसक्तिरित्यस्य चानुषङ्गः सूचितः । श्रमचिन्तादीत्यादिपदेन साधनास्मरणदुःखादिदोषाः गृह्यन्ते । हिताक्रियादेः ब्रह्मण्यनुभवसिद्धत्वाभावादग्रहणम् । यद्वा—ब्रह्मणो जीवसाम्यव्यावर्तकेन तुशब्देनायमर्थः सूचित इति नानुषङ्गादि । कुतो न दोषप्राप्तिरित्यतस्तत्र हेतुत्वेन अधिकमित्येतद्व्याचष्टे—अधिकेति । अस्य

सर्वान्तरः' (बृ. ५-५-१.) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ.५-५-१.) इत्यादिविशेष निर्देशात् ॥ २३ ॥

(४) सू—ॐ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ ॐ ॥ २४ ॥
चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात् स्वतः कर्तृत्वानु पपत्तिर्जीवस्य ।

---

तात्पर्यार्थो निर्दोषगुणपरिपूर्णहेयोपादेयरहितत्वादिति तत्त्वप्रदीपे अभि हितः। न च हेत्वसिद्धिरित्यत्र हेतुः-भेदनिर्देशादिति, तद्व्याचष्टे-श्रो तेति । इत्यादीत्यविभक्तिको निर्देशः । इत्यादिष्वित्यर्थः। आदिशब्देन 'य आत्माऽपहतपाप्मा' (छां.८-१-५.) इत्यादि गृह्यते। विशेषोऽतिशय इति भेदशब्दार्थोक्तिः । स च विशेषोऽखिलश्रोतृत्वान्तर्यामित्वाशना याद्यतीतत्वादिरूपः। 'श्रोता' इत्यैतरेयश्रुतिः सर्वत्राधिकरणे व्या ख्याता । 'एष त आत्मा सर्वान्तरः' इत्येतद्बृहदारण्यके कहोलं प्रति याज्ञवल्क्यवचनम् । यः 'ते' तवान्तर्यामी 'एष एव' सर्वान्तर्यामीत्य र्थः। 'योऽशनाया' इत्यपि बृहदारण्यकस्थं, 'य आत्मा' इति छन्दोगस्थं। द्वयमपि वाक्यं दहरनये व्याकृतम् । अनेन-तस्य ब्रह्मण स्तु न दोषप्रसक्तिर्न श्रमचिन्तादिदोषप्राप्तिः । कुतो? यतस्तत्साम र्थ्येन जीवात् 'अधिकं' अधिकशक्ति । आधिक्यमपि कुतः? 'श्रो ता' इत्यादिषु भेदनिर्देशात्, न ह्येवंविधस्य ते दोषाः शङ्कितुमपि श क्यन्त इति सूत्रवृत्तिर्दर्शिता भवति ॥

(४) ननु चेतनत्वात्परसिद्धेश्वरवज्जीवोऽप्यन्यनिरपेक्ष एव कर्ता किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अश्मादिवच्चे ति॥ चेतनत्वेऽपीत्यनेन चशब्दोऽप्यर्थतया व्याख्यातः। यद्यपितथाऽपी त्यर्थेऽपिः। 'अश्मादिवत्' पाषाणादिवत् । स्तम्भादिकमादिपदार्थः दृष्टान्तोक्तया लब्धं हेतुं दर्शयति—अस्वतन्त्रत्वादिति । तदनुपपत्ति रिति प्रतिज्ञांशस्यार्थमाह—स्वत इति। अन्यानपेक्षयैवेत्यर्थः। जीवस्ये त्यनेन तस्य तदनुपपत्तिरिति तत्पदावृत्तिर्वा जीवपरामर्शकस्येतरस्ये त्यस्यानुषङ्गो वा सूचितः। तथा च जीवे चेतनत्वास्वातन्त्र्ययोरुभयोः सत्त्वेऽपि न चेतनत्वेन जीवस्य स्वतःकर्तृतासाधनमुपपद्यते तत्र त स्याप्रयोजकत्वादस्वातन्त्र्येण प्रतिपक्षितत्वाच्च । अस्वातन्त्र्यं तु भ वत्येव स्वतःकर्तृत्वाभावसाधकं, तत्र तस्य प्रयोजकत्वेन लोकसिद्धत

( ५ ) यथा दारुमयीं योषां नरः स्थिरसमाहितः।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥
इति च भारते ॥ २४ ॥

( ६ ) सू—ॐ ॥ उपसंहारदर्शनान्नेति चेन्नक्षीरवद्धि ॥ ॐ ॥ २५ ॥
जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेत्—
न, यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते।

या वैपरीत्यानुपपत्तेरिति भावः ॥

( ५ ) अस्वातन्त्र्यहेतोरसिद्धिमाशङ्क्याह—यथेति ॥ यद्वा—सूत्रार्थे स्मृतिसम्मतिमाह—यथेति। स्थिरसमाहित इति बहुव्रीहिः, भावे क्तः। स्थिरशब्देनाचाञ्चल्यमुच्यते। समाधानं मनःप्रणिधानम्। इङ्गनसाधनविषयकयथार्थज्ञानं कर्तरि क्तः कर्मधारयो वा। तथा च यथा 'स्थिरसमाहितो' मनश्चाञ्चल्यं विना स्वकार्यसमाधानवान् नरो 'दारुमयीं योषां' दार्वात्मकस्त्रीप्रतिमां 'इङ्गयति' चेष्टयति। यथा च नरः 'अङ्गं' हस्तादि 'अङ्गानि' अङ्गुल्यादीनि चेङ्गयति, तथेमाः प्रजाः भगवानिङ्गयतीत्यर्थः। राजन्निति जनमेजयस्य सम्बुद्धिः। भारते प्रजाशब्दितानां जीवानामस्वातन्त्र्यमुक्तमात सूत्रोक्तमिति वा शेषः। तथा च न हेत्वसिद्धिरिति भावः ॥

( ६ ) जीवस्य स्वतःकर्तृत्वाभावमाक्षिप्य आक्षेपांशं तावद्व्याचष्टे—उपसंहारेति ॥ जीवेनेत्यनेन इतरेणेति पदानुवृत्तिस्सूचिता। कार्येति योग्यपदाध्याहारोक्तिः। उपसंहारो नामावसानं तस्य दर्शनाज्जीवेनेदं कार्यमुपसंहरिष्यामीति बुद्ध्या निरूप्यमाणत्वात् तथा जीवकर्तृककार्योपसंहारस्य तत्समापनस्यान्यैर्दर्शनादित्यर्थः। पूर्वसूत्रादनुवृत्तस्य तदनुपपत्तिरिति पदस्य नञाऽन्वितस्य साध्यसमर्पकस्य पर्यवसितार्थमाह—तस्य जीवस्य कर्तृत्वमिति। स्वत इत्यस्ति। यद्वा—नञाऽन्वयं विनैव पूर्वस्मादनुवृत्तस्य तदित्यस्यार्थमाह—कर्तृत्वमिति। अत्र जीवस्येति प्रकरणलब्धं पदम्। परिहारांशं व्याचष्टे—नेति। न जीवस्याकर्तृत्वाभावो वक्तव्य इत्यर्थः। प्रथमव्याख्याने न आवृत्तिः। द्वितीये तु नावृत्तिः। किन्तु परिहारांशमात्रे अन्वय इति ध्येयम्। कुतो नेत्यतः प्रवृत्तेन क्षीरवदुपपद्यते हि यत इत्यनेनोक्तं हेतुं विवृणोति—यथेति। अपिशब्दो यद्यपितथाऽपीत्यर्थे। एवमुत्तरत्रापि। क्षीरमित्यस्यापीत्यनन्तरमन्वयः। 'प्राणात्' मुख्यप्राणात्, न तु गोरि

(७) अन्नं रसादिरूपेण प्राणः परिणयत्यसौ ।
इति वचनात् । एवं जीवे दृश्यमानोऽपि कार्योपसंहा
रोऽस्वातन्त्र्यात्परकृत एव ।
(८) य आत्मानमन्तरोऽयमयति ।
नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः । इत्यादेः॥२५॥
(९) सू—ॐ ॥ देवादिवदपि लोके ॥ ॐ ॥ २६ ॥
न च कर्तुरीश्वरस्यादृष्टिविरोधः । देवादिवददृश्य

स्येवकारार्थः ॥

(७) कुतः प्राणाधारत्वं क्षीरस्येत्यतो हीति सूचितां स्मृतिं दर्श यति—अन्नमिति ॥ भुक्तं वस्त्वित्यर्थः । 'असौ' सर्वशरीरप्रेरकत्वेन प्रसिद्धः । क्षीरवदित्यनेन लब्धं दार्ष्टान्तिकं दर्शयति—एवमिति । दृश्यमान इति । स्वेनानुभूयमानोऽन्यैर्दृश्यमानश्च कार्योपसंहारः 'परमेश्वरकृतः' तन्निमित्त एव, न जीवकृतः । कुतः ? तत्र तस्यास्वातन्त्र्यादित्यर्थः ॥

(८) ननु जीवस्यास्वातन्त्र्यात्कार्योपसंहारकर्तृत्वाभावेऽपि कुतोऽसावीश्वरकृत इति ज्ञायते इत्यतोऽत्रापि हीतिसूचितां श्रुतिमाह—य इति ॥ व्याख्यातेयमन्तर्यामिनये । स्मृतावहंत्वमिति शब्दौ तत्र प्रकृतिजीवपरौ । तुरेव । तथा च 'यस्सदा प्रभुः' नित्यस्वतन्त्र ईश्वरः स एव जगत्कर्ता, न त्वहं त्वं चेत्यर्थः । इत्यादेरित्यनन्तरं वचनादित्यनुषज्यते । आदिशब्देनैवंजातीयकं गृह्यते ॥

(९) न जीवस्येश्वराधीनकर्तृत्वं वाच्यम्, तस्यैवाभावात् । न च 'स हि सर्वस्य' 'द्यावाभूमी जनयन्' (श्वेत.३-३.) इत्यादिश्रुत्येश्वरसिद्धिः । तस्यानुपलब्धिलिङ्गबाधितत्वात् । अथापि तत्कल्पने गौरवं स्यात्, अतो लाघवात् क्लृप्तो जीव एव कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—देवेति ॥ अत्र सूत्रनिरसनीयशङ्कां दर्शयन् देवादिवदित्यनेन सूचितहेतोरन्वययोग्यप्रतिज्ञां दर्शयति—न चेति । 'कर्तुः' जीवेन क्रियमाणकार्यकर्तुः जीवनियन्तुरिति यावत् । 'ईश्वरस्य' ईश्वरास्तित्ववचनस्येश्वरस्य अदृष्ट्याऽनुपलब्ध्या विरोधस्तु नेत्यर्थः । यद्वा—ईश्वरस्य तत्प्रत्यक्षतोऽनुपलब्ध्या 'विरोधः' अभावस्तन्निश्चयस्तु नेत्यर्थः । कुतो नेतिचेत् देवादिवद्योगात् । अदृष्टदेवोपदेवादिवत्सत्त्वोपपत्तेरनुपलब्धेरप्रयोजकत्वात् । देवादीनामदृश्यत्वशक्तियोगाद्युक्तानुप

त्वशक्तियोगात् । लोकेऽपि पिशाचादीनां तादृशी श
क्तिर्दृष्टा किम्वीशरस्य

(१०) न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित् ।
विरोध एव वाक्यानां युक्तयो न तु युक्तयः ॥

इति बृहत्संहितायाम् ॥ २६ ॥

(११) सू—ॐ ॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ ॐ ॥२७॥

लब्धिरितिचेन्न । ईश्वरस्यापि देवादिवददृश्यत्वशक्तियोगात् । अदर्शनानुकूलान्तर्धानशक्तियुक्तत्वात्सतोऽप्यदृष्टियोगादित्यावृत्त्या योजना । ईश्वरस्यादृश्यत्वशक्तिमत्त्वमेव कुत इत्यतः प्रवृत्तेन अपिलोक इत्यनेन सूचितं कैमुत्तिकन्यायं दर्शयति—लोकेऽपीति । अपिशब्दः पिशाचादीनामपीति भिन्नक्रमः कैमुत्यार्थो विशेषणान्तरसमुच्चयार्थश्च । तथा च 'लोके' जगत्यनीश्वराणां लौकिकानामपि पिशाचादीनां 'ए तादृशी' अदृश्यत्वानुकूला 'शक्तिः' अन्तर्धानसामर्थ्यं दृष्टं, ईश्वरस्य तादृशी शक्तिरस्तीति किमु वक्तव्यमित्यर्थः । तथा च नोक्तहेत्वसिद्धिरिति भावः ॥

(१०) यदभिप्रेतं श्रुतिसिद्धः परमेश्वरो नानुपलब्ध्या निराकार्य इति, तत्रार्थे स्मार्तं चाह—नेति ॥ ॥ 'वाक्यानि' श्रुतिस्मृतिरूपाणि 'युक्तियोगात्' युक्तिलक्षणोपायात् 'क्वचिदपि' विषये न प्रमाणतयाऽसाधकतया वा निराकार्याणीत्यर्थः । विरोधे सति कथं निर्णय इत्यत आह—विरोध इति । युक्तीनां जात इति शेषः । तथा च 'वाक्यानां विरोधे' तन्निरूपितविरोधे युक्तीनां 'जाते' प्रतीते सति ता युक्तय एव 'न युक्तयो' न सद्युक्तयः किं त्वाभासा एवेत्यर्थः । यद्वा—वाक्यानां परस्परविरोधे सति ता युक्तयः एकवाक्यानुसारिन्याया एवार्थसाधकाः, न तु शुष्कयुक्तय इत्यध्याहारेणान्वयः । बृहत्संहितायामित्यस्योक्तत्वाच्च न विरोध इति शेषेण पूर्वेणान्वयः ॥

(११) युक्त्यन्तरेण जीवस्य स्वतः कर्तृत्वं निराकुर्वत्सूत्रमुपन्यस्यति–कृत्स्नेति ॥ अत्र कस्मिन् पक्षेऽयं दोष उच्यते इति न ज्ञायते, गुणसूत्रत्वात् जीवकर्तृत्वपक्ष इति सिद्धेऽपि तत्र हिताक्रियादिदोषस्योक्तत्वाद्दोषान्तरत्वज्ञापकचशब्दाभावाच्च अनुपपत्तिरेवेत्याशङ्कां परिहरत्सूत्रं व्याचष्टे—अयं चेति । न केवलं हिताक्रियादिदोषो जीवस्य स्वतःकर्तृत्वपक्षे, किन्त्वयं वक्ष्यमाणश्च प्रसज्यत इति समुच्चये च

अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात्। न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात् ।

( १२ ) न चैकदेशेन, निरवयवत्वात् । 'अथ यस्स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' इति भाल्लवेयश्रुतिः ।

---

शब्दः । अनेन सूत्रे इतरव्यपदेशादिति चेत्तर्हि न केवलं हिताकरणादिदोषप्रसक्तिः, किन्तु कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति दोषस्य च प्रसक्तिरिति प्रधानसूत्रगतापादकानुवृत्त्या चशब्दानुषङ्गेण च सूत्रयोजना कार्येति सूचितम् । यद्यपि जीवकर्तृत्वपक्षे इति प्रागुक्तत्वादत्र न वाच्यम्। तथाऽपि बहुव्यवहितत्वात्तत्स्मारणाय पुनरुक्तिः। सूत्रे वाशब्देन किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते, उतांशेनेति विकल्पमुखेन दोषापादनस्य सूचितत्वात्तदनुसारेणाद्यपक्षे कृत्स्नप्रसक्तिरित्यनेनोक्तं दोषं विवृणोति—एकेनेति । सजातीयाङ्गुल्यन्तरव्यावृत्त्यर्थमेतत् । विजातीयहस्तादिव्यावर्तनाय मात्रपदम् । प्रवर्तमानस्तृणादानादाविति शेषः । तेनापेरन्वयः । अल्पकार्येऽपीति वा न केवलं सर्वाकारेण प्रवर्तमान इति वा अपेरर्थः । जीव इति बुद्ध्या विवेकेनात्र सम्बध्यते । 'पूर्णप्रवृत्तिः' पूर्णशक्त्या प्रवृत्तिमान् स्यादित्यर्थः । प्रसङ्गत्वद्योतनाय स्यादिति । न च स्यादेवमित्याह —न चेति । तत् पूर्णशक्त्याऽप्रवर्तनं कुत इत्यत आह—सामर्थ्येति । जीवस्य कार्येषु स्वरूपसामर्थ्यांशेन प्रवृत्त्यनुभवादित्यर्थः । तथा चापाद्याभ्युपगमेऽनुभवविरोधः स्यादिति भावः ॥

( १२ ) अथ द्वितीयपक्षमनूद्य दूषयति—न चेति ॥ नापि जीवः स्वसामर्थ्यैकदेशेन तत्तत्कार्येषु प्रवर्तेत इत्यर्थः । कुतो नेत्यतस्तत्र निरवयवत्वादिति हेतुमध्याहृत्य योजयति—निरवयवत्वादिति । निरंशत्वादित्यर्थः । जीवस्येति शेषः। निरवयवत्वानङ्गीकारे बाधकोपन्यासाय प्राप्तं निरवयवत्वशब्दकोप इत्यंशं तच्छ्रुत्युदाहरणेन विवृणोति—अथेति । अथेत्यतः प्राक् तदनङ्गीकार इति ग्राह्यम् । श्रुतिरित्यनन्तरं व्याकुप्यत इति शेषः । श्रुतावथेत्यर्थान्तरे । य एवंभूतः स जीव इत्युच्यते । 'सः' जीवो नित्यो निरवयव इत्यादिका योजना, तच्छब्दद्वय

(१३) न चोपाधिकृतांशः स एवांश उपहित इति, छित्वापेक्षत्वात् ॥

श्रवणात्। यो जीवः स नित्यः सः निरवयव इति सर्वत्र तच्छब्दान्वयेन वा योजना। 'शरीरेन्द्रियस्थः' तदधिष्ठाता ॥

(१३) ननु एकदेशेनेति द्वितीयपक्ष एवाश्रीयते। न च निरवयवत्वोक्तिविरोधः। अंशानामौपाधिकत्वाभ्युपगमात्, श्रुतेश्च स्वाभाविकांशनिषेधविषयत्वादित्याशङ्कयासम्बद्धोपाधेरंशकारकत्वे अतिप्रसङ्गात् सम्बद्धस्यैव तत्त्वे वाच्ये उपाधिसम्बद्धत्वं किं समग्रजीवस्योत तदंशस्येति विकल्प्य नाद्य इत्याह—न चेति ॥ उपाधिकृतांश इति बहुव्रीहिः। उपाधिकृतोऽंशो यस्येति। उपहित इत्यावर्तते नेति च। तथा च यः श्रुत्युक्तः समग्र एव जीवः 'उपहितः' उपाधिना ग्रस्तः न त्वंश इति न। कुतो? यतस्तर्हि स उपाधिकृतांशो न भवेदिति योजना। सर्वस्य जीवस्योपाधिना ग्रस्तत्वेन पुनस्तस्य तत्कृतांशत्वासम्भवादिति भावः। द्वितीयं निराकरोति—अंश इति। न चेत्यनुवर्तते। 'अंश उपहितः' उपाधिना ग्रस्त इत्यपि पक्षो नेत्यर्थः। कुत इत्यत आह—छित्वेति। उपाधिसम्बन्धार्थं स्वाभाविकांशछित्वस्यापेक्षितत्वादिति भावः। सर्वत्रोपहितानुपहितद्विरूपमपेक्ष्यैवोपाधेः प्रवृत्तेस्तदर्थं स्वाभाविकांशद्वयाभ्युपगमे निरंशत्वश्रुतिविरोधः। तस्याप्यौपाधिकत्वेऽनवस्था स्यादिति भावः। अनेन—किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते? उतांशेन? नाद्यः, यतः 'कृत्स्नप्रसक्तिः' तथा सति जीवस्य सर्वत्रापि पूर्णशक्त्या प्रवृत्तिप्रसङ्गः। न द्वितीयः निरवयवत्वात्। अंशाङ्गीकारे च निरवयवत्वशब्दकोपो वेति निरंशत्वश्रुतिविरोधः स्यात्। तथा च कर्तृत्वस्य कृत्स्नैकदेशाभ्यां व्याप्तता व्यापकयोस्तयोर्निवृत्त्या व्याप्यं कर्तृत्वमपि जीवाद्व्यावर्तत इति न जीवः स्वतन्त्रकर्तेति भावः। न च सामर्थ्यस्य विचित्रत्वेऽपि न जीवस्य निरवयवत्वोक्तिर्विरुध्यते। तस्य तद्भिन्नत्वादिति वाच्यम्। तत्सामर्थ्यस्य तदभिन्नत्वात्। उक्तं हि सुधायाम्—न हि सामर्थ्यापरपर्यायं कर्तृत्वं जीवाद्भिन्नमिति। एवं जीवस्योपाधिकृतांशाभ्युपगमे 'कृत्स्नप्रसक्तिः' उपाधेः सर्वजीवसम्बन्धः स्यात्। तथा चोपाधिना ग्रस्तस्योपाधिकृतांशस्य च भेदो न स्यात्। अंशसम्बन्धेऽपि निरवयवत्वश्रुतिविरोध इति द्वेधा सूत्रवृत्तिर्दर्शिता भवति। यद्यपि कृत्स्न

( १४ ) न चान्यत्कल्प्यम् । 'यद्धि युक्त्या विरुद्ध्येत तदीशाकृतमेव हि' इति गत्यन्तरोक्तेः ॥ २७ ॥

———:*:———

८. अधिकरणम् ॥

( १ ) सू—ॐ ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ ॐ ॥ २८ ॥

प्रसक्त्यादिदोषोऽप्यादिशब्देन ग्रहीतुं शक्यत इति नेदं सूत्रं पृथक्कर्तव्यम् । तथाऽपि हिताक्रियादिदोषापेक्षया बहूपपत्त्या निराकार्यत्वात् पृथक्करणं युक्तम् । अत एव भाष्ये न चेत्यादिग्रन्थः प्रवृत्तः ॥

( १४ ) तर्हि एतज्जीवस्य कर्तृत्वं युक्तिविरुद्धत्वादविचारितरमणीयाविद्यानिमित्तमस्तु इत्यत आह—न चेति ॥ 'अन्यत्' अनिर्वाच्याविद्यानिमित्तं जीवकर्तृत्वं न कल्प्यमेवेत्यर्थः अप्रामाणिकत्वात्तेन निर्वाहाभावाच्चेति भावः । तर्हि युक्तिविरोधपरिहारोपायाभावान्न जीवकर्तृत्वमित्यत आह—यद्धीति । आद्यो हिशब्दो वस्तुनः प्रतीतत्वमाह । द्वितीयोऽस्यार्थस्य न्यायसिद्धतां वक्ति । तथा च यत्प्रतीतमपि गुणादिकं वस्तु युक्त्या 'विरुद्ध्येत' विरुद्ध्यते । 'तदीशाकृतं' ईशाधीनमेव कल्प्यम्, न त्वप्रामाणिकाविद्यानिमित्तमित्यर्थः । इतीति । इति न्यायसूचकवचनेनेत्यर्थः । गत्यन्तरोक्तेरिति । अन्या गतिर्गत्यन्तरम् । तथा च जीवकर्तृत्वे प्रमिते तत्र युक्तिविरोधपरिहारस्य ईश्वराधीनत्वाख्योपायान्तरोक्तेरित्यर्थः । उक्तेरित्यस्य न चेत्यनेनान्वयः । न चेश्वराधीनत्वमात्रेण कथं जीवकर्तृत्वस्य युक्तिविरुद्धतापरिहार इति वाच्यम् । तस्माद्भगवानेव स्वरूपस्वभावविशेषाणां नियामकः चैतन्यमवच्छेदकं विधाय विशेषान्निमित्तीकृत्य विरुद्धेऽप्यभेदबहुत्वे एकत्र समावेश्याभेदेन निरवयवत्वशब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य जीवस्य कार्यानुरूपसामर्थ्यविशेषं योजयन् जीवेन कार्यं करोतीति सुधारीत्येति गृहाण ॥ ७ ॥

इति इतरव्यपदेशाधिकरणम् ॥

———:*:———

८. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोः सर्वकर्तृत्वे प्रबलयुक्तिविरोधः परिह्रियते । जीवकर्तृत्वपक्षे ये कृत्स्नप्रसक्त्यादयो दोषाः उक्ताः ते ईश्वरपक्षेऽपि समाः तत्र विशेषादर्शनादतो न तस्य जगत्कर्तृत्वं युक्तमि

न चेश्वरपक्षेऽयं विरोधः । 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा ' इति पैङ्ग्यादिश्रुतेरेव ।

( २ ) शब्दमूलत्वाच्च न युक्तिविरोधः ।

ति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति—श्रुतेस्त्विति ॥ अत्र सूत्रे निरसनीयशङ्कां प्रदर्शयन् श्रुतेरिति सौत्रहेतोः प्रतिज्ञां दर्शयति–न चेति । चस्त्वर्थो जीवसाम्यव्यावर्तकः । 'ईश्वरपक्षे' ईश्वरकर्तृत्वपक्षे 'अयं' बुद्धिसन्निहितो जीवकर्तृत्वपक्षोक्तो 'विरोधो' कृत्स्नप्रसक्त्यादिरूपो दोषः नेत्यर्थः । कुतो नेत्यतस्तत्र हेतुत्वेन श्रुतेस्त्विति सूत्रांशं योजयति—योऽसाविति । इति पैङ्ग्यादिश्रुतेरेवेति । श्रुतावेवोक्तेरिति यावत् । तथा चादिशब्देन शाखान्तरवाक्यं गृह्यत इति तत्त्वप्रदीपोक्तेः एवमादिरूपायां पैङ्गिनामन्येषां च शाखिनां निर्दोषतयाऽवगतश्रुतावेवेत्यादिना मनुत्वामनुत्वादिरूपाणां लोकविरुद्धधर्माणामित्येवमीश्वरे अविरुद्धतयाऽवस्थानोक्तेरित्यर्थः । न पुनर्जीव इव प्रत्यक्षादिसिद्धत्वादित्येवशब्दार्थः । एवेत्यनेन तुशब्दार्थ उक्तो भवति । श्रुत्यर्थस्तु–यो लोकदृष्ट्या 'विरुद्धः' लौकिककर्तृविरुद्धलक्षण इति यावत् । 'अविरुद्धः' प्रमाणैः वस्तुतो अविरुद्ध इति वा । तथात्वे प्रमाणैरितिटीकापदस्य उत्तरत्रान्वयः । अत एव प्रमाणतोऽस्यान्यो मन्ता नास्तीति तत्त्वप्रदीपोक्तिः । 'मनुः' सर्वमन्ता । स्वतन्त्रवक्त्रन्तररहितः 'अवाक्' । 'वाक्' वक्ता । 'इन्द्रः' परमेश्वरः । न विद्यते अन्य इन्द्र ईश्वरः स्वामी यस्य सः 'अनिन्द्रः' । 'प्रवृत्तिः' प्रवर्तकः । 'अप्रवृत्तिः' प्रवर्तकशून्यः परा लक्ष्मीः तया सहितः सपरः असौ परमात्मेति । यद्वा—परो लोकविलक्षणः । तथा च योऽसावेवंभूतः स परमात्मेति योजना ॥

( २ ) ननु श्रुत्युक्तमपि निरवयवस्यैकदेशेन प्रवृत्त्यादिधर्मजातं युक्तिविरुद्धत्वात्कथमीशेऽङ्गीकर्तुं शक्यम् । अन्यथा जीवेऽपि प्रत्यक्षबलादभ्युपगन्तव्यं स्यात्, अविशेषादित्याशङ्क्याविशेषोऽसिद्धः, शब्दमूलत्वाख्यविशेषसत्त्वादित्याह—शब्दमूलत्वादिति ॥ परमेश्वरस्येति वा परमेश्वरधर्मजातस्येति वा प्रकृतमस्ति । शब्द आगम एव मूलं प्रापकं यस्य स तथोक्तः, तस्य भावस्तत्त्वं तस्मादित्यर्थः । चशब्दो वक्ष्यमाणविचित्रशक्तिरूपहेतुसमुच्चयेऽवधारणेऽपि । तेन सूत्रे तुश्चार्थे

(३) यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित् ।
विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणम् ॥

ऽपीत्युक्तं भवति । ईश्वरे जीववच्छब्दमूलत्वाख्यो विशेषोऽसिद्ध इत्यतोऽप्याह—शब्दमूलत्वादिति । शब्दमूलत्वस्य 'नावेदवित्' इत्यादिशब्दमूलत्वादित्यर्थः । यद्वा—श्रुतेरित्यस्यावृत्त्याऽत्र सम्बन्धः । तथा च शब्दमूलत्वस्य श्रुतेरित्यर्थः । अस्त्वीश्वरेऽयं विशेषः, ततः किमित्यतस्तथा च नेश्वरे युक्तिविरोधोऽवतरतीत्याह—नेति । तत्रेति शेषः । तथा च 'तत्र' परमेश्वरे न जीव इव कृत्स्नप्रसक्त्यादिकेवलयुक्तिविरोधोऽवतरतीत्यर्थः । युक्त्यविषयत्वात्, यथा प्रत्यक्षाविषये प्रत्यक्षविरोध इति भावः । यद्यपि न विरोध इति प्रागुक्तत्वादिह पुनर्न वाच्यम्, तेनैवास्याप्यन्वयसम्भवात् । तथाऽपि तत्र लोके विरुद्धानां परमेश्वरे विरोधो नास्ति, तथा श्रुतेरित्युक्तम् । अत्र तु युक्तिविरोधो नास्ति, तत्परिहारोपायस्य शब्दमूलत्वाख्यस्य विशेषस्य सत्त्वादित्युच्यते, अतो नावक्तव्यता । अतएव तत्र विरोध इत्येवोक्तम्, अत्र तु युक्तिविरोध इति ज्ञातव्यम् । अनेन—ईश्वरकर्तृत्वपक्षे कृत्स्नप्रसक्त्यादियुक्तिविरोधः न, कुतो ? 'योऽसौ' इति निर्दोषश्रुतावेव परमेश्वरे लोकविरुद्धस्यापि भिन्नांशरहितस्याप्येकदेशेन प्रवृत्तिरूपस्य स्वरूपांशस्य बाहुल्येऽपि भेदाभावस्यांशतः कार्यकरणेऽपि निरवयवत्वस्य प्राकृतदेहादिरहितत्वेऽपि कर्तृत्वस्याविरुद्धतयाऽवस्थानोक्तेर्न जीवपक्ष इव सम्भावितदोषः प्रत्यक्षासिद्धत्वात् । श्रुत्युक्तमपि विरुद्धधर्मजातं युक्तिविरुद्धत्वात्कथमीशेऽङ्गीकर्तुं शक्यम्, अन्यथा जीवेऽपि प्रत्यक्षबलादङ्गीकार्यं स्यादविशेषादिति चेत्—न अत्र 'शब्दमूलत्वात्' युक्तिविरोधपरिहारोपयोगिनः शब्दमूलत्वस्य शब्दैकसमधिगम्यत्वस्यात्र परमेश्वरे सत्त्वादविशेषासिद्धेः । न च तदसिद्धिः तस्य शब्दमूलत्वस्य 'शब्दमूलत्वात्' 'नावेदवित्' इत्यादिशब्दसिद्धत्वादिति सूत्रार्थ उक्तो भवति ॥

(३) न केवलं शब्दैकसमधिगम्यत्वेन युक्त्यविषयत्वादीश्वरे युक्तिविरोधाप्रसक्तिः किन्तु शब्दैकसमधिगम्ये युक्तिविरोधो नास्तीति स्मृत्युक्तत्वाच्चेत्याह—यदिति ॥ 'युक्तिः' शुष्कानुमा 'वाक्योक्तं' आगमेनोक्तं 'यत्' प्रमेयं न तत् 'विरोद्धुं' निषेद्धुं शक्नुयादित्यर्थः किं तर्ह्यस्याः कृत्यमित्यत आह—विरोध इति । 'क्वापि' क्वचिद्विष

इति पुरुषोत्तमतन्त्रे ॥ २८ ॥

( ४ ) सू—ॐ ॥ आत्मनि चैवं विचित्राश्च हि ॥ ॐ ॥ २९ ॥

परमात्मनो विचित्राश्च शक्तयस्सन्ति नान्येषाम् ।

( ५ ) विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्ताह [ शस्स्युः ।

एको वशी सर्वभूतान्तरात्मा सर्वान् देवानेक एवानु [ विष्टः ॥ ( )

---

ये वाक्ययोः परस्परविरोधे प्रतीते सति एकवाक्यानुकूला युक्तिः 'किञ्चित्साहाय्यकारणं' आगमेनार्थसाधने तस्य विरोधपरिहारमुखेन किञ्चित्साहाय्यकृत् तदनुग्राहिका तद्विषयव्यवस्थापिकेत्यर्थः । इतीत्यनन्तरमुक्तमिति तन्त्र इत्यनन्तरं ग्रन्थ इति च शेषः । अतः शब्दमूलत्वादित्यादिनाऽन्वयः ॥

( ४ ) जीवपक्ष एव युक्तिविरोधो, नेश्वरपक्ष इत्येतमर्थं युक्त्यन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे—आत्मनीति ॥ आत्मनीति सप्तमीबोधिताधिकरणत्वस्येहानुपयुक्तत्वात्तां विपरिणम्य योजयति—परमात्मन इति । चशब्दस्य परमात्मन इत्यनेन शक्तय इत्यनेन च सम्बन्धः । तत्राद्यस्सौत्राद्यचशब्दानुवादरूपोऽवधारणे । अत एव तद्व्यावर्त्यमाह—नान्येषामिति । द्वितीयो न केवलं शब्दमूलत्वादविरोधः, किन्त्वीश्वरे यतो विचित्रशक्तयश्च सन्तीति समुच्चयार्थकद्वितीयचशब्दानुवादः । शक्तय इत्यध्याहृतं पदम् । अस्यातोऽपि न युक्तिविरोध इति पूर्वेणान्वयः ॥

( ५ ) ईश्वरस्यैव विचित्रशक्तित्वं नान्येषामित्येतत्कुत इत्यतो हीति सूचितां श्रुतिं दर्शयति—विचित्रशक्तिरिति ॥ चोऽवधारणे । तथा च 'पुराणः' पुरातनः 'पुरुषो' भगवानेव । विचित्रशक्तिरेवेत्यस्य व्यावर्त्यमाह—न चेति । 'अन्येषां' जीवानां 'तादृशः' तादृश्यः परमात्मशक्तिसमाः अनेन सौत्रैवंशब्दस्य एवंविधा अन्यनिरपेक्षा एवमेवानुक्तविषयाश्चेत्यर्थ उक्तो भवति तथैव तत्त्वप्रदीपोक्तेः । अर्थान्तरं तु शब्दमूलत्वाच्च न युक्तिविरोध इति भाष्येण एवं एवंविधा युक्तिविरोधनिरासका इति टीकायां च सूचितम् । 'एकः' प्रधानः सर्वे वशे यस्यासौ वशी 'सर्वभूतान्तरात्मा' ब्रह्मादिसर्वचेतनानां भूम्यादिसर्वजडानामन्तर्नियामकः सर्वान् देवान् 'एक एव' अभिन्नरूपेण

इति श्वेताश्वतरश्रुतिः ॥ २९ ॥

( ६ ) सू—ॐ ॥ स्वपक्षदोषाच्च ॥ ॐ ३० ॥

ये दोषा इतरत्रापि ते गुणाः परमे मताः ।

व 'अनुप्रविष्टः' प्रेरणायेत्यर्थः । अन्यादृष्टविचित्रशक्तिसम्भावनाय वाक्यशेषोपन्यासः । श्रुतिर्यत इति शेषः । अस्य परमात्मन इति पूर्वेणान्वयः । शक्तेः विचित्रत्वं तु भिन्नावयवशून्यानां जीवानामीश्वरस्य चैकदेशेन प्रवृत्त्यादिरूपाघटितविचित्रकार्यकरत्वम् । तथा श्वेताश्वतरेऽन्यत्र वाऽनुक्तकार्यविषयकत्वमित्यादि तत्त्वप्रदीपोक्तं द्रष्टव्यम् । सूत्रार्थस्तु—स्पष्टः ॥

( ६ ) ननु यथा विष्णोः शब्दमूलत्वात् विचित्रशक्तित्वाच्च न तत्र युक्तिविरोधो दोष इत्युच्यते तथा जीवेऽपि किं नोच्यते तत्रापि चेतनत्वादिलिङ्गेन युक्तिविरोधस्याविरोधतासाधनसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—स्वपक्षेति ॥ 'इतिवचनात्' एवंरूपात् सयुक्तिकागमादित्यर्थः । 'जीवपक्षे' जीवकर्तृत्वपक्ष इति अनेन स्वपक्ष इत्यस्य एवेत्यनेन चशब्दस्य चार्थ उक्तो भवति । 'अयं' कृत्स्नप्रसक्त्यादियुक्तिविरोधः । एवशब्दव्यावर्त्यं दर्शयति—नेति । परमात्मकर्तृकत्वं जगत इति पक्ष इत्यर्थः । इति ज्ञायत इति शेषः । जीवपक्षे दोष एवेत्यप्येवकारान्वयः न त्वदोषतां नेतव्य इति तदर्थः । नेश्वरपक्ष इत्यनुक्त्वा न परपक्ष इत्युक्त्या स्वयमेव जीवः कर्ता न स्वस्मादन्य ईश्वर इति वादिनां पक्ष इति तत्त्वप्रदीपोक्तं सूत्रगतस्वपक्षेत्युक्तिप्रयोजनं सूचितं भवति । वचने यत्तदोर्दोष इत्यस्य चावृत्तिः । अपिः यद्यपीत्यर्थे । प्रतीता इति शेषः । तथा चेश्वरात् 'इतरत्र' जीवे ये दोषाः प्रतीतास्ते दोषाः एव, न तु 'अपि' कयाऽपि विधया तत्रादोषतां नेतव्याः । जीवे दोषाणां सम्भवेन तत्कल्पकाभावादिति भावः । त एव दोषाः विष्णौ 'मताः' प्रतीताश्चेत्तर्हि तेऽप्यचिन्त्यशक्तिशब्दमूलत्वाभ्यां गुणा एव 'मताः' कल्पनीयाः, न दोषाः । यथा सर्वोत्पादकत्वसर्वभुक्त्वादयः । कुत इत्यतोऽत्र कल्पकसद्भावादित्यत आह—न दोष इति । यतः परमेश्वरे कश्चिद्दोषो नास्ति, प्रत्युत गुणा एव सन्ति अत इत्यर्थः । ननु दुष्टधर्माश्रयत्वात् जीववत् न भगवतो निर्दोषत्वमित्याशङ्क्याह—निरन्तरा इति । ईश्वराद्भेदशून्या इत्यर्थः । यद्वा—ननु यदा गुणानां नाशो भविष्यति तदा दोषा भवि

न दोषः परमे कश्चिद्गुणा एव निरन्तराः ॥

इतिवचनाज्जीवपक्ष एव दोषो न परपक्षे ।

(७) 'अथ यस्य दोषः साञ्जनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मा' इति कापायणश्रुतिः ॥ ३० ॥

(८) सू—ॐ ॥ सर्वोपेता च तद्दर्शनात् ॥ ॐ ॥ ३१ ॥

ष्यन्तीत्यत आह—निरन्तरा इति । तथा चेश्वरवत् तदभिन्नगुणेष्व पि न दोषनाशौ शङ्क्याविति भावः । न च भगवतो निर्दोषत्वे निर्भेद गुणत्वे च प्रमाणाभाव इति वाच्यम् । 'निरनिष्टो निरवद्यः'( ) 'नेह नानाऽस्ति किञ्चन' (कठ.२-४-११.) 'एवं धर्मान् पृथक्पश्यन्' (कठ. ४-१४.) इत्यादिश्रुतिसद्भावादित्याह—यतो निरन्तरा गुणा विष्णौ मता प्रमिता इति श्रुत्यर्थः । 'ये दोषाः' इत्येतत् श्रुतिरिति भाति । स्मृतिरित्यपि केचित् । अत एव भाष्यटीकयोर्वचनशब्दप्रयोगः ॥

(७) ननु ईश्वरवत् जीवस्यापि निर्दोषत्वात्तत्र प्रतीतदोषोऽप्य न्यथा नीयतामित्याशङ्क्य 'स्वपक्षे' जीवेशयोः सदोषत्वनिर्दोषत्वप क्षे श्रुतिविरोधदोषाच्च स नेति सूत्रस्य वृत्त्यन्तरमाश्रित्य परिहरति— अथेति ॥ प्रकरणान्तरारम्भेऽथशब्दः । यो दुःखाल्पज्ञत्वादिना रागा दिना वा सदोषः 'साञ्जनः' पुण्यपापादिसङ्गी तत्फलभोक्तेति याव त् । 'सजनिः' उत्पत्तियुक् स जीवः । यो निर्दोषो 'निष्कलो' भिन्नां शशून्यः षोडशकलाशून्यो वा 'सगुणः' ज्ञानानन्दादिगुणयुक् 'परः' उत्तमः स परमात्मेति वा, यो जीवः सः उक्तगुणकः, यः परमात्मा स एवमादिगुण इति वा श्रुत्यर्थः । श्रुतिरित्यनन्तरं यतः इति शेषः । अस्य जीवपक्षे दोष एव न परपक्ष इति पूर्वेणान्वयः। अनेन—सूत्रे च शब्दस्योभयत्रान्वयः । युक्तिविरोधस्येति योग्यतयाऽन्वेति । दोषपदं च भावप्रधानं तदुक्तिलक्षकम् । तथा च कृत्स्नप्रसक्त्यादियुक्तिविरो धस्य जीवपक्षे दोषत्वस्यैवोक्तत्वात् नासौ तत्रादोषतां नेतव्यः । त था जीवपक्ष एवास्य दोषत्ववचनात् न परमात्मपक्षेऽयं दोषः । एवं जीवस्य निर्दोषत्वपक्षे जीवेशयोः सदोषत्वनिर्दोषत्ववचनविरोधाख्य दोषात्स न युक्त इति त्रेधा सूत्रार्थ उक्तो भवति ॥

(८) ननु सा शक्तिर्यद्विषयिणी न भवति, यदा च नश्यति, तदा तत्र विरोधनियमाच्च तया तत्परिहारो दुष्क इत्याशङ्क्य परिहरत्सूत्रमु

सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रश
[ क्तिम् ।
नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च
[ यां वदन्ति ॥

इति चतुर्वेदशिखायाम् । अतो न केवलं विचित्रश
क्तिः, किन्तु सर्वशक्तिरेव ॥ ३१ ॥

(९) सू—ॐ ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ॐ ॥ ३२ ॥
न च करणाभावादनुपपत्तिरिति युक्तम् ।

---

पन्यस्य व्याचष्टे—सर्वेति ॥ चतुर्वेदशिखायामुक्तमिति शेषः । ततः किमित्यत आह—अत इति । उक्तत्वादित्यर्थः । अनेन तद्दर्शनादिति हेत्वंशस्य तस्यां श्रुतौ तथोक्तत्वादित्यर्थ उक्तो भवति । न केवल मित्यनेन सौत्रचशब्दः समुच्चयार्थतया व्याख्यातः । सर्वशक्तिरिति । सर्वदा सर्वविषयिणी सर्वकालिका शक्तिर्यस्याः सा तथोक्ता । अनेन सर्वोपेतेति साध्यभागो व्याकृतो भवति । एवेति चशब्दस्यार्थान्तरो क्तिः।सा परमात्माख्यदेवतेति शेषः । न त्वसर्वशक्तिर्नापि कदाचिन्नष्टश क्तिरित्येवार्थः । अतः शक्त्या युक्तिविरोधपरिहारो युक्त इति भावः । स्पष्टः सूत्रार्थः । स्त्रीलिङ्गप्रयोगस्तु श्रुत्यनुसारेण । कवयो 'या मजस्रशक्तिं' नित्यशक्तियुतां प्राहुः । यां च 'शाश्वतात्मेति' निर्विकारस्वरूपिणीति वदन्ति । या च 'नित्यानन्दा' बहुव्रीहिरियम् । 'नित्यरूपा' नित्याऽऽकृतिरित्यपि तद्वदेव । न विद्यते जरा यस्याः सा तथोक्ता 'सा परा देवता' परमात्माख्या देवता, सा 'सर्वैः शक्तिभिः' लिङ्गव्यत्ययः । सर्वविषयिणीभिः सार्वकालिकाभिः शक्तिभिर्युक्तेति श्रुत्यर्थः विषयबाहुल्याच्छक्तिभिरिति बहुवचनम् ॥

(९) विष्णोर्जगत्कारणत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे—विकरणत्वादिति ॥ न चेत्यारभ्य युक्तमित्यन्तेन आक्षेपांशो विवृतः । चः समुच्चये, एतच्छङ्कापरिहारसमुच्चितस्यैवोक्तन्यायस्य साध्यसाधकत्वात् । ईश्वरस्य करणाभावादित्यनेन विकरणत्वादित्यस्य विगतं करणं यस्मादिति विग्रहेण फलितार्थ उक्तो भवति । करणमिन्द्रियं करादि । अनुपपत्तिः । जगत्कर्तृत्वस्येति । अनेन नेत्यस्य साध्यसमर्पकस्य पूर्वपक्षांशो न च युक्तमित्यनेन सिद्धान्तांशो च आवृत्त्याऽन्वयः सूचितः ॥

( १० ) अपाणिपादो जवनो गृहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरु
[ षं महान्तम् ॥ ( श्वे. ३-१९. )
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिक
[ श्च दृश्यते ।

( १० ) कुतो न युक्तमित्यतस्तत्र हेतुत्वेन प्रवृत्तस्य यतस्तदुक्तमि त्यस्य परोक्तहेतोरप्रयोजकत्वमसिद्धिं च प्रदर्शयतो यतस्तस्यां श्रुतौ पाण्यादिविरहिणोऽपि हरेर्ग्रहणादिकमुक्त्वा 'तस्य' करणराहित्यवचनस्य 'तत्' अप्राकृतविषयत्वं 'उक्तं' उपपादितं चेत्यर्थमभिप्रेत्य ननु साक्षादिममर्थं न काऽपि श्रुतिर्वक्ति, नाप्युपपादयति तत्कथमुच्यते तदुक्तमितीत्यसिद्धिशङ्कापरिहाराय सूत्रकृदभिप्रेताः श्रुतीरुदाहरति-अपाणिपाद इति ॥ अपाणिपाद इत्यारभ्य महान्तमित्यन्तमेकं वाक्यम् । 'न तस्य' इत्यन्यत् । 'न तत्समः' इत्यपरम् । 'पराऽस्ये' इति इतरत् । वाक्यचतुष्टयं श्वेताश्वतरश्रुतिगतं 'पराऽस्य' इत्याथर्वणेऽपि श्रुतम् । आदिशब्देन एतज्जातीयकं शाखान्तरवाक्यं गृह्यते । श्रुतिभ्य इति पञ्चमी तृतीयार्थे । तदुक्तमिति सौत्रपदमत्र सम्बध्यते । यत इति शेषः । अस्यातो न च युक्तमिति पूर्वेणान्वयः । तथा च 'अपाणिपादः' इति श्रुतौ पाण्यादिविरहिणोऽपि हरेर्ग्रहणाद्युक्त्याऽर्थादप्राकृतपाणिपादादेरुक्तत्वात् 'न तस्य कार्यम्' इति श्रुत्या च पाण्यादिराहित्यस्य प्राकृतविषयत्वेनोपपादितत्वात् 'न तत्समः' इति वाक्येऽपि सर्वोत्तमत्वोक्त्या प्राकृतपाण्यादिरहितत्वस्योपपादितत्वात् 'पराऽस्य' इत्यत्रापि परमशक्तित्वोक्त्याऽस्योपपादितत्वान्न तदुक्त्यभावो, नापि तदुपपादनाभाव इति भावः । सूत्रार्थस्तु स्पष्टः । श्रुतौ—स भगवान् 'अपाणिपादः' न विद्यते प्राकृतं पाणिपादं यस्य स तथोक्त इति प्राकृतभिन्नाप्राकृतपाण्यादिमानिति च द्वेधा व्याख्येयः । एवमचक्षुरित्याद्यपि व्याख्येयम् । अत एव तत्तदिन्द्रियोचितक्रियाकर्तृत्वमाह—जवन इत्यादिना । अत्रापाणिर्गृहीता अपादो 'जवनो' वेगेनागन्ता अचक्षुः पश्यति अकर्णः शृणोति इति योजना । स इति द्विर्ग्रहणात्स इत्यस्य सर्वत्र सम्बन्धः सूचितः । 'वेद्यं' ज्ञातव्यं सर्वं भूतं भवत् भविष्यच्च 'वेत्ति' जानाति । 'तस्य' हरेः कश्चन कोऽपि 'वेत्ता' ज्ञाता नास्तीत्यर्थः । नन्वन्यत्रादृष्टमपाण्यादेः गृहीतृत्वा

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल
[क्रिया च ॥ (श्वे. ६-८.)

इत्यादिश्रुतिभ्यः ।

(११) सर्वोपेता चेति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥ ३२ ॥

९. अधिकरणम् ॥

(१) यत्प्रयोजनार्थं सृष्ट्यादिः तदूनत्वादपूर्णता इति ।

---

दिकं कथमीश्वरे घटते इत्यत आह—तमिति । 'तं' उक्तगुणकं 'अग्र्यं' सर्वश्रेष्ठं महान्तं पुरुषमाहुः कवयः अत उक्तं युक्तमित्यन्वयः । 'तस्य' हरेः 'कार्यं' प्रकृतिकार्यं 'करणं' पाण्यादीन्द्रियं नास्त्येवेत्यर्थः । यद्वा—कार्यं प्राकृत ग्रहणादिकं तथाविधं कारणं च नास्तीत्यर्थः । 'न तत्समश्च' इत्यत्राद्यश्चशब्दोऽवधारणे अन्त्यस्तुशब्दार्थः । तथा च भगवत्सम एव न दृश्यते अधिकस्तु कुतः स्यादित्यर्थः । 'अस्य' हरेः शक्तिः 'परा' उत्कृष्टा 'विविधा' विचित्रा 'स्वाभाविकी' यावद्द्रव्यभाविनीति तथैव सुधोक्तेः । ज्ञानं च बलं च क्रिया च एतद्रूपेति च श्रूयत इत्यर्थः । यद्वा—अस्य 'विविधा' सर्वविषयिणी परा च शक्तिः । श्रूयते ज्ञानं बलं क्रिया च श्रूयत इत्यर्थः । अस्येति भेदोक्तिस्तु विशेषबलाद्युज्यते ॥

(११) ननु 'सर्वोपेता' इति सूत्र एव विचित्राशेषशक्तिबलेन निखिलविरोधानां परिहृतत्वात्कथं पुनर्विकरणत्वादिति शङ्काऽवकाश इत्यत आह—सर्वेति ॥ सूत्रेणेति शेषः । सामान्येति । अपियद्यपीत्यर्थे । साधारण्येन सर्वविरोधानां परिहारे कृतेऽपीत्यर्थः । विशेषेति । विशेषतो ऽसाधारण्येन अस्यैव चोद्यस्य परिहारानुकूल युक्तिबोधनेच्छया पुनः शङ्का दर्शितेत्यर्थः । अतएव सिद्धान्ते प्राकृतशरीराभावेऽपि चिदानन्दाद्यात्मकविग्रहवत्त्वादिरूपा, 'अपाणिपादः' इत्यादिप्रमाणविशेषरूपा वा शङ्कापरिहारोपायभूता विशेषयुक्तिः सूत्रकृता तदुक्तमित्यनेनोक्तेति भावः ॥ ८ ॥

इति श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥

९. अधिकरणम् ॥

(१) अत्राधिकरणे ईश्वरस्य जगत्कर्तृत्वे निष्फलत्वादियुक्तिवि

( २ ) अत आह—

सू—ॐ ॥ न प्रयोजनवत्त्वात् ॥ ॐ ॥ ३३ ॥

'अथैष एव परम आनन्दः' ( बृ. ६-३-३३. ) इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः ॥ ३३ ॥

---

रोधः परिह्रियते । सयुक्तितर्कं पूर्वपक्षयति—यदिति ॥ अत्र यच्छब्दो यद्यर्थे । यः पर इतिवत् किंशब्दार्थे च । तदूनत्वादिति तच्छब्दोऽपि बुद्ध्या विविक्तः तर्हीत्यर्थे भवति । विष्णोः स्यादिति शेषः । तथा च यदि 'प्रयोजनार्थे' तदुद्देशेन विष्णोः 'सृष्ट्यादिः' जगत्सर्जनाविषयक प्रवृत्तिरङ्गीकृता स्यात्, तर्हि 'तदूनत्वात्' सृष्ट्यादेः पूर्वं तेन भाविना प्रयोजनेन 'ऊनत्वात्' तद्रहितत्वात् 'अपूर्णता' अनाप्तकामत्वं स्यात्, ततश्च अपूर्णता अपालकत्वं च स्यात् । पालकत्वोपलक्षितं सर्वकर्तृत्वं न स्याद्यज्ञदत्तवदित्येका योजना । एवं सृष्ट्यादिरीश्वरस्य यत्प्रयोजनार्थं किं प्रयोजनार्थं, न किञ्चित्प्रयोजनायेति यदि, तर्हि 'तदूनत्वात्' प्रवृत्तिमात्रेणैवोनत्वात् 'अपूर्णता' न सर्वकर्तृत्वं स्यात् इत्यपरा योजना । तथा चोभयथाऽपि प्रवृत्त्ययोगात् प्रकारान्तरस्य चाभावान्न विष्णोर्जगत्कर्तृत्वं युक्तमिति भावः ॥

( २ ) एवं प्राप्ते फलानुद्देशेनैव प्रवृत्तिरिति द्वितीयपक्षावलम्बनेन सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इत्यादिना वाक्येन कृतकृत्यत्वावगमात् न प्रयोजनाय सृष्टिः परमेश्वरस्येति योजना । इत्यादिनेत्यनेनासिद्धिः परिहृता । कृतकृत्यत्वादित्यनेन प्रयोजनवत्त्वादित्यस्य नेत्यादिना च न प्रयोजनवत्त्वादित्यस्य विभक्तिविपरिणामेन व्याख्यानं कृतं भवति । परमेश्वरस्येत्यनुकर्षसिद्धत्वात् अनुक्तिः । आदिशब्देन 'निरनिष्टः सत्यकामः' इत्यादिकं गृह्यते । न च श्रुतेरेव साक्षात्प्राप्तव्यत्वापरपर्यायकृतकृत्यत्वसाधकत्वे टीकायां पूर्णानन्दत्वेन तत्साधनानुपपत्तिरिति वाच्यम् । पूर्णानन्दत्वेनेति टीकायाः पूर्णानन्दत्वप्रतिपादकवाक्येनेत्यर्थाश्रयणात् । अतएव सुधायां—न कर्तृत्वे न प्रयोजनवत्त्वं साध्यं, कृतकृत्यत्वेन प्रयोजनाभावस्य निश्चितत्वात् । न चासिद्धो हेतुः । 'अथैष एव परम आनन्दः' ( बृ. ६ - ३ - ३३. ) 'निरनिष्टो निरवद्यः' ( ) इति श्रुतेरिति । श्रुतेरेव साक्षात्कृतकृत्यत्वबोधकतोच्यते । यद्वा—टीकानुसारात् इत्यादिना सिद्धेन पूर्णानन्दत्वेन कृतकृत्यत्वावगमादिति भाष्यान्वयः । अस्मिन् पक्षे सुधा

( ३ ) किन्तु—

सू—ॐ ॥ लोकवत्तु लीलाकैवल्यम् ॥ ॐ ॥ ३४ ॥

यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिली

---

स्थहेतुशब्दो हेतुसाधकहेतुपरो द्रष्टव्यः । सौत्रपदं च प्रयोजनवत्त्वेन प्रयोजनवत्त्वादित्यावृत्त्या योज्यम् । सृष्ट्यादिरिति प्रकृतेऽपि पुनः सृष्टिरित्युक्तिः सृष्ट्यादिष्वेकैकमुखेनाप्याक्षेपपरिहारौ कर्तव्यावित्याशयेन । श्रुतावथेत्यर्थान्तरारम्भे । तथा च 'एषः' भगवानेव 'परमानन्दः' पूर्णानन्द इत्यर्थः । 'परम आनन्दः' (बृ.६-३-३३.) इति भिन्नपदत्वेन पाठेऽप्ययमेवार्थो बोध्यः । न प्रयोजनाय सृष्टिरित्यनन्तरं यत इति शेषः नेति चावर्तते। तथा च यतः परमेश्वरस्य न प्रयोजनाय न प्रयोजनोद्देशेन सृष्टिः सृष्ट्यादिप्रवृत्तिः अतो नापूर्णत्वादिदोषः अतएव न तस्य जगत्कर्तृत्वायोगः तथाऽऽप्तकामत्वेन दयासाध्यफलाभावात् न परप्रयोजनार्थमपि तस्य सृष्ट्यादिप्रवृत्तिर्युज्यते इति योजना ॥

( ३ ) ननु नेश्वरः फलानुद्देशेन प्रवृत्तिमान्, चेतनत्वाद्यज्ञदत्तवदित्युपपत्तिविरोधात्कथं ईश्वरस्य फलानुद्देशेन प्रवृत्तिरित्याशयेन पृच्छति—किन्त्विति ॥ तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे—लोकवदिति । यथेत्यारभ्य प्रयोजनापेक्षयेत्यनेन लोकवदित्यंशो व्याकृतः । 'लोके' भुवने 'मत्तस्य' उन्मत्तजनस्य 'सुखोद्रेकात्' अभिव्यक्तसुखात् नृत्तं नटनं गानं गीतिः । आदिपदेन निष्फलवार्तादिकं गृह्यते। 'लीला' क्रीडा दृश्यत इति शेषः । एवशब्दव्यावर्त्यं दर्शयति—न त्विति । अत्र दृष्टान्ते स्वपरप्रयोजननिषेधः । दार्ष्टान्तिके तु स्वप्रयोजनमात्रनिषेधः, ईश्वरप्रवृत्तेर्लोकानुग्रहार्थत्वाङ्गीकारात् । न चाप्तकामत्वेन तत्साध्यफलाभाव इत्युक्तमिति वाच्यम् । अस्वभावप्रवृत्तेः फलापेक्षितत्वेऽपीश्वरप्रवृत्तेः स्वभावत्वाभ्युपगमेन प्रयोजनानपेक्षत्वात् । न चात्र दृष्टान्ताभावः । दयालुप्रवृत्तेः सत्त्वात् । श्रुत्यादिसिद्धे तदनपेक्षत्वाच्च । लोकवदिति दृष्टान्तोक्त्या लब्धं दार्ष्टान्तिकं दर्शयति—एवमिति । सृष्टेरिति विपरिणम्येहावर्त्यते । एवमित्यावर्तते । तथा चैवं तथा परमेश्वरस्य 'सृष्टेः' तत्सम्बन्धिसर्जनादिप्रवृत्तेः 'एवं लीलाकैवल्यं' केवललीलात्वमेवेति योजना । एवेत्यनेन सौत्रतुशब्दो व्याकृतः । तथा च पूर्वपक्ष्युक्तानुमानस्योन्मत्तादौ व्यभिचारः । प्रेक्षावत्त्वेन हेतुविशेषणे व्याख्यानादिकाले निष्फलाङ्गुलिचालनकर्तरि व्यभि

ला, न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य ।

(४) नारायणसंहितायां च—

सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु ।
कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ।
मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मनः ॥ इति ।

---

चारो दुरुद्धर इति भावः । प्रथमसूत्रार्थस्तु—नेश्वरप्रवृत्तिरन्येषामिव स्वप्रयोजनार्था । कुतः? प्रयोजनवत्त्वेन कृतकृत्यत्वेन प्रयोजनवत्त्वात् । यदर्थमीश्वरस्य प्रवृत्तिस्तस्य प्रयोजनस्याप्तकामत्वेन प्रागेव सिद्धत्वात् । यद्वा-ईश्वरप्रवृत्तेर्दयालुप्रवृत्ताविव परप्रयोजनवत्त्वात् । अथ वा-नेश्वरप्रवृत्तिः स्वप्रयोजनार्था, नप्रयोजनवत्त्वात् । नसमासोऽयम् । व्याख्यानादिकाले हस्तचालनादाविव सुखोद्रेकाद्गानादाविव च प्रयोजनवत्त्वराहित्यादिति चन्द्रिकायामुक्तः । द्वितीयसूत्रे—लोकवदिति तुशब्दोऽवधारणे, पक्षान्तराङ्गीकारसूचकः, किं त्वित्यर्थे च । लीलाकैवल्यमिति समस्तपदं स्वरूपार्थोऽयं कैवल्यशब्दः । ईश्वरस्य प्रवृत्तिरिति शेषः । तथा च नेश्वरस्य प्रयोजनोद्देशेन प्रवृत्तिः किन्तु 'लोकवत्' यथा लोके मत्तस्य सुखोद्रेकादेव प्रवृत्तिः तस्याश्च लीलाकैवल्यं तथा परमेश्वरस्य तन्निमित्तप्रवृत्तेरपि 'लीलाकैवल्यं' केवललीलात्वं लीलारूपत्वमेव न तु प्रयोजनान्तरार्थत्वं न वा लीलार्थत्वं अतः प्रयोजनानुद्देशे हस्य कीदृशी प्रवृत्तिरिति प्रश्नानवकाश इति सूत्रार्थः । न चैवमाद्यसूत्रार्थे नाण्वपि प्रयोजनमीश्वरस्येति तत्त्वप्रदीपविरोधः, अत्र प्रयोजनसामान्यनिषेधादिति वाच्यम् । तस्य लोकानुग्रहाय सृष्ट्यादिक्रियां करोतीति टीकानुसारादण्वपि स्वप्रयोजनं नास्तीति व्याख्यातव्यत्वात् । अत एव भारततात्पर्यनिर्णये 'भूत्यै निजाश्रितजनस्य' इति परप्रयोजनोक्तिः ॥

(४) अत्रैवार्थे स्मृतिमाह—नारायणेति ॥ हरिः सृष्ट्यादिकं न स्वप्रयोजनं 'अपेक्ष्य' उद्दिश्य कुरुते, किन्तु 'केवलानन्दात्' स्वरूपानन्दादेव कुरुत इति योजना । अत्र दृष्टान्तमाह—यथेति । प्रथमार्थे मत्तस्येति षष्ठी । तथा च यथा मत्तस्स्वानन्दादेव कुरुते तथेत्यर्थः । कुत एवं कल्प्यत इत्यत आह—पूर्णेति । 'तस्य' हरेः 'इह' सृष्ट्या

( ५ ) 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा'

दिविषये 'प्रयोजनमतिः' अनेन मम भविष्यत्प्रयोजनमस्तीति बुद्धि स्तदपेक्षा वा 'कुतो' न कुतोऽपीत्यर्थः। कुतो नेत्यतस्तत्र—आप्तका मत्वादिति हेतुः पूर्णेत्यनेनोक्तः। तस्यासिद्धिमाशङ्क्य कैमुतिकन्याये न तं साधयति—मुक्ता इति। विशेषणसमुच्चयार्थोऽपिशब्दः। तथा च अनीश्वरा अपि 'मुक्ताः' जीवाः यदा आप्तकामाः स्युः तदा अखि लस्वामिनस्तस्य विष्णोराप्तकामता किमु वक्तव्येत्यर्थः। इति नाराय णसंहितायामित्यन्वयः। सूत्रकारोक्तमुक्तमिति शेषः॥

( ५ ) विवक्षिताशेषार्थप्रतिपादकत्वात् प्रथमं स्मृतिमुपन्यस्य सौ त्रलीलाशब्दार्थविवेकायात्रैवार्थे माण्डुकेयीं श्रुतिमप्याह—देवस्येति॥ चः समुच्चये। सूत्रकृदुक्तमाहेति शेषः। अत्र हि 'इच्छामात्रं प्रभोस्सृ ष्टिः' (गौ.का.१-८.) इति पूर्ववाक्येन सृष्टेरीश्वरेच्छाधीनत्वरूपं निश्चित सिद्धान्तमुक्त्वा पुनर्भगवतो जगत्सृष्ट्या प्रयोजनसद्सद्भावजिज्ञासायां तमेव सिद्धान्तं 'देवस्य' इत्यनेन सविशेषं विवक्षुः पूर्वपक्षावाह— भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे इति। तत्रेश्वरप्रवृत्तेः परोक्तं क्रीडार्थत्वमनङ्गीकृत्य तद्रूपत्वमङ्गीकुर्वाणो वेदपुरुष आह—देवस्येति। 'देवस्य' हरेः 'अयं' सृष्ट्यादिविषय 'एषः' इच्छा। भावे घञ्। त त्पूर्विका प्रवृत्तिरिति यावत्। स्वभाव एव न प्रयोजनाय भवति। कु तो? यत 'आप्तकामस्य' पूर्णकामस्य 'का स्पृहा' किं फलेच्छाऽस्ति न काऽप्यत इत्यर्थः। अयं च सुधायामुक्तः। न्यायदीपिकायां तु—'ए षः' अवतारादिः देवस्य स्वभावः स स्वभावश्च 'अयं' देव एव, न तु ततो भिन्न इत्यर्थे विशेष उक्तः। गीताभाष्यप्रमेयदीपयोस्तु—'अ यमेषः' इयमिच्छेति व्याख्याय विष्णोः सर्वजनरक्षणायावतारेच्छा लीलारूपा स च स्वभाव इत्यर्थः। का स्पृहेति नेच्छामात्रनिषेधः, 'इ च्छामात्रं प्रभोस्सृष्टिः' इति निश्चितसिद्धान्तकथनात्। किन्त्वेतत्सा ध्यस्य फलेच्छाया एवेति तत्त्वप्रदीपसत्तर्कदीपावल्योरुक्तम्। अत्र क्रीडैव लीला क्रीडा च स्वभाव एवेत्युक्तया सिद्धान्ते तस्याः प्रयोज नत्वं नाभिप्रेतमिति ज्ञायते। यथोक्तं माण्डूकभाष्ये—

तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः।
अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः॥

(मां.२-९.) इति च श्रुतिः ॥ ३४ ॥

—:*:—

## १०. अधिकरणम् ॥

(१) सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येति ।

(२) अतो वक्ति—

सू—ॐ ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ॐ ॥ ३५ ॥

कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये ।

---

सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्तया स्पृहा विभोः ॥

[ इति ॥ ९ ॥

इति नप्रयोजनाधिकरणम् ॥

—*:*:*—

## १०. अधिकरणम् ॥

(१) अत्राधिकरणे पूर्वोक्तपरप्रयोजनरूपफलविषययुक्तिविरोधः परिह्रियते । सयुक्तिकं पूर्वपक्षयति—सर्वेति ॥ परप्रयोजनाय कर्मानपेक्षयेति शेषः । तथा च 'तस्य' ईश्वरस्य परप्रयोजनाय कर्मानपेक्षया सर्वजगत्कर्तृत्वेऽङ्गीकृते वैषम्यनैर्घृण्ये स्यातामित्यर्थः । अयं भावः—परप्रयोजनाय पारमेश्वरी सृष्टिरिति पूर्वोक्तमयुक्तं, स किं कर्मानपेक्षया परप्रयोजनाय सृष्टिं करोति ? उत तदपेक्षया । नाद्यः, तथा सति सर्वेऽपि सर्वदा सुखिनः स्युः, न तु कदाचित्केचित् सुखिनः केचित् दुःखिनः । अन्यथा निर्निमित्तमीश्वरः कांश्चित्सुखयन् कांश्चिद्दुःखयन्निरये पतितानतिविह्वलानाक्रन्दतोऽनन्यनाथाननुद्दिधीर्षुर्विषमो निर्दयश्च स्यात् । कर्मबोधकवेदाप्रामाण्यं च स्यात् । न द्वितीयः, अस्वातन्त्र्यापत्तेः । तथाच उभयथाऽपि दोषित्वान्नेश्वरस्य सर्वकर्तृत्वं युक्तमिति ॥

(२) एवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्यव्याचष्टे—अत इति ॥ फलेति । सुखदुःखरूपेष्टानिष्टाख्यफलदातृत्वादित्यर्थः । अनेन सापेक्षत्वादिति सौत्रहेतोस्तात्पर्यमुक्तं भवति । फलदाने कर्मापेक्षासहितत्वादित्यक्षरार्थः । तस्येश्वरस्येति हेतुसाध्ययोरन्वेति । वैषम्यनैर्घृण्ये इति । कर्मादिकमनपेक्ष्य निर्निमित्तं विभागेन ईश्वरस्य सुखदुःखप्रदत्वे कर्मादेः सुखदुःखसाधनत्वप्रतिपादकज्योतिष्टोमेनेत्यादि वेदाप्रामाण्यापादकतया दोषभूते ये वैषम्यनैर्घृण्ये प्रसक्ते ते न स्त इत्यर्थः । अनेन साध्यांशो

'पुण्येन पुण्यं लोकं नयति पापेन पापम्' ( प्र. ३-७. )
इति हि श्रुतिः ॥ ३५ ॥

( ३ ) सू—ॐ ॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ॐ॥३६॥
यदपेक्षयाऽसौ फलं ददाति न तत्कर्म 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' ( कौ. ३-८. ) इतिश्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेत्—

व्याख्यातः। हेत्वसिद्धिपरिहारकतया तथाहीति सूत्रांशं व्याचष्टे—पुण्येनेति। इति हि श्रुतिरिति। हिशब्दो यत इत्यर्थे। अतः न हेत्वसिद्धिरिति वाक्यशेषः। अस्य हेतुवाक्येनान्वयः। षट्प्रश्नश्रुतिरियम्। अत्र जीवमीश्वर इति शेषः। तथा चेश्वरः 'पुण्येन' जीवपुण्यं निमित्तीकृत्य 'पुण्यं लोकं' पुण्यसाध्यं स्वर्गादिलोकं 'नयति' प्रापयति जीवमित्यर्थः। एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम्। पापेन 'पापं' नरकादिकं दुःखबहुलं लोकं नयति। 'उभाभ्यां' समप्रधानाभ्यां पुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयति इति शिष्टश्रुत्यर्थः। यद्यपि षट्प्रश्नभाष्यटीकयोरियं श्रुतिरुदानाख्यमुख्यवायुपरतया व्याख्याता। तथाऽपि परममुख्यवृत्त्या विष्णुपरत्वात् अत्रोदाहरणं युक्तम्। सूत्रं स्पष्टार्थम् ॥

( ३ ) कर्मापेक्षया फलदातृत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्यति—न कर्मेति॥ अत्र कर्मेति व्यस्तपदस्य नञाऽन्वयमभिप्रेत्याक्षेपांशं व्याचष्टे—यदपेक्षयेति। 'असौ' ईश्वरो यदपेक्षया फलं ददातीत्युच्यते, तदपेक्षणीयं कर्मैव नास्तीति प्रतिज्ञा विशिष्टप्रतिषेधपरा। नन्वस्ति पूर्वकर्मैवेत्यतः—अविभागादित्युक्तं सूत्रे। तत् लोके विभक्ते अस्वतन्त्र इति प्रयोगदर्शनात्तदनुसारेण अस्वतन्त्रत्वादित्यर्थकतया व्याचष्टे—कर्मणोऽपि तन्निमित्तत्वादिति। पूर्वकर्मणोऽपि भगवदधीनत्वादित्यर्थः। दोषपरिहारायापेक्ष्यस्यापीत्यपेरर्थः। न केवलं फलस्येति वाऽर्थः। तथा च कर्मणोऽपि स्वाधीनत्वान्निर्निमित्तं विषमाणां कर्मणां कारयितुः पुनर्वैषम्याद्यापातेन तत्परिहाराय तदपेक्षा सम्भवतीत्यपेक्ष्यं कर्म नास्तीति भावः। अनेन कर्माविभागादिति समस्तपदं चेति सूचितम्। न च हेत्वसिद्धिरित्याह—एष ह्येवेति। श्रुतेरिति। अस्य तन्निमित्तत्वावगमादित्यनेनान्वयः। तेनाविभागादित्यस्य अविभक्ततया प

(४) न, तस्यापि पूर्वकर्म कारणमित्यनादित्वात्कर्मणः।
(५) भविष्यत्पुराणे—
पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा।

रमात्माधीनतया श्रुत्युक्तत्वादित्यर्थ उक्तो भवति। श्रुतौ साधुकर्मेति मोक्षसाधनज्ञानादिकमुपलक्ष्यते। उन्निनीषतिशब्दोक्तमोक्षहेतुप्रसाद स्य केवलकर्मासाध्यत्वात्। हिशब्दः प्रसिद्धौ। तथा च 'एषः' भगवान् 'यं' जीवं 'एभ्यो' भूर्भुवस्स्वराख्यलोकेभ्यः 'उन्निनीषते' ऊर्ध्वं नेतुमिच्छति 'तं' योग्यजीवं 'कर्म ज्ञानादिकं कारयति' तेन तत्सम्पादयतीत्यर्थः। अनेन मोक्षस्येच्छाविशेषरूपेश्वरप्रसादसाध्यतोक्ता भवति। उशब्दो विष्णुवाची। असाधुकर्म मिथ्याज्ञानोपलक्षकम्। तथा च एषः यमेभ्यो लोकेभ्यः 'अधो निनीषते' तमो नेतुमिच्छति, तमयोग्यजीवं तेन असाधुकर्म कारयतीत्यर्थः। अयं च सुधारीत्योक्तः॥

(४) परिहारांशं व्याचष्टे—नेति॥ कुतो नेत्यतस्तत्रापेक्षितहेतुमुपस्कुर्वन्ननादित्वादिति हेतुं क्रमेण योजयति—तस्येति, पूर्वकर्मण इत्यर्थः। सत्त्वादिति शेषः, नेत्याद्यावर्तते। तथा चेत्थं योजना—नापेक्ष्यकर्माभावो वक्तव्यः। कुतः? पूर्वकर्मणस्तादृशस्यासत्त्वात्। ननु पूर्वस्यापि कर्मणो भगवन्निमित्तत्वेन वैषम्यादिपरिहाराहेतुत्वान्नापेक्ष्यता सम्भवतीत्यत आह—तस्यापीति, तस्यापेक्ष्यकर्मणस्ततोऽपि पूर्वं कर्मकारणमिति हेतोः, तस्यापि तत्पूर्वकर्मकारितत्वादिति यावत्। न केवलं पूर्वकर्मण इत्यपेरर्थः। तथा च तस्यैवापेक्ष्यतोपपत्तिरिति भावः। ननु पूर्वतनस्यापीश्वरनिमित्तत्वेन पुनर्वैषम्याद्यापादकत्वादनपेक्ष्यतैवेत्यत आह—तस्यापीति। पूर्वतनकर्मणोऽपि पूर्वं तत्पूर्वतनं कर्म कारणमिति हेतोः, तस्यापि तत्कारितत्वादित्येवार्थः। ननु यत्र कर्मापेक्षाशान्तिरूपं पर्यवसानं तदारभ्य वैषम्यादिरूपो दोषः स्यादित्यत आह—अनादित्वादिति। 'कर्मणः' कर्मपरम्परायास्तत्समुदायस्यानादित्वादिति॥

(५) सूत्रकृदुक्तार्थे पुराणसम्मतिमप्याह—भविष्यदिति॥ न केवलं सूत्रे, किन्तु पुराणेऽपीति समुच्चये चशब्दः। इदमुक्तमिति शेषः। किमुक्तमित्यतस्तत्पठति—पुण्येति। पुण्यपापपदाभ्यां तत्साधनं कर्मोपलक्ष्यते। आदिशब्दात् तपआदि गृह्यते। जीवेनेति शेषः। 'पूर्व

अनादित्वात्कर्मणश्च न विरोधः कथं चन ॥ इति ॥ ३६ ॥

( ६ ) सू—ॐ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ॐ ॥ ३७ ॥

न च कर्मापेक्षत्वेन ईश्वरस्यास्वातन्त्र्यम् ।

( ७ ) द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।

यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया ॥

---

कर्मणा' स्वापेक्ष्येण निमित्तभूतेनेत्यर्थः । 'कर्मणः' स्वापेक्ष्यस्य । च शब्दात्तत्पूर्वतनकर्मण इति सूचितम् । तथा च कर्मपरम्पराया अनादित्वात् 'कथं चन' केनापि प्रकारेण कार्यमूलकतया कारणकर्ममूलकतया वा 'विरोधो' वैषम्यनैर्घृण्याख्यो दोषो नास्तीत्यर्थः । इति भविष्यत्पुराण इत्यन्वयः ॥

( ६ ) नन्वीश्वरस्य कर्मापेक्षासहितत्वात् वैषम्याद्यभावेऽपि नियमेन कर्मापेक्षयैव फलदातृत्वादस्वातन्त्र्यं प्रसज्यत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—उपपद्यत इति ॥ अस्वातन्त्र्यमित्यनन्तरं किन्तूपपद्यते च तदिति शेषः । चशब्दोऽवधारणे । तथा च नेश्वरस्य कर्मापेक्षत्वेन निमित्तेन 'अस्वातन्त्र्यं' स्वातन्त्र्यानुपपत्तिः, किन्तु तत्स्वातन्त्र्यमुपपद्यत एवेति योजना । अनेन उपपद्यते चेति प्रतिज्ञा व्याख्याता ॥

( ७ ) ननु सापेक्षस्य कथं तदुपपद्यते इत्यतस्तत्र हेतुत्वेन प्रवृत्तस्य यतस्तदुपलभ्यते इत्यंशस्य तात्पर्यमाह—द्रव्यमित्यादिना ॥ 'न र्ते त्वत्क्रियते' इत्यादिरादिशब्दार्थः । कर्मेत्यतः प्रागपेक्षणीयेत्युपस्कार्थम् । कालजीवादिः द्वितीयादिशब्दार्थः । 'सत्त्वस्य' सत्त्वादेः । न केवलं कर्मादिस्वरूपाणां, किन्तु तेषां सत्तादेरपीत्यपिशब्दार्थः । 'तदधीनत्वात्' ईश्वराधीनत्वेनोपलभ्यमानत्वादित्यर्थः । तथा च स्वेच्छया नियमेन स्वाधीनसत्त्वादिमदपेक्षायामपि नास्वातन्त्र्यमिति भावः । अनेन यतस्तत्कर्मादिसत्त्वाद्यपि तदीश्वराधीनमुपलभ्यते स्मृत्यादाविति हेत्वर्थ उक्तो भवति । अत एव तत्त्वप्रदीपे उपपद्यते च तस्य स्वातन्त्र्यं, यत उपलभ्यते कर्मादेस्तदधीनत्वं श्रुतिस्मृत्योरिति प्रतिज्ञाहेत्वोर्योजना दर्शिता । केचित्तु—कर्मादीनामिति भाष्यं सूत्रे अध्याहृतहेतुपरं चशब्दसूचितहेतुपरं वा । द्रव्यमित्यादि च तस्यासिद्धिपरिहारायापिशब्दसूचितभागवतस्मृत्यादिप्रमाणोपन्यासरूपमित्याहुः । तत्तु तत्त्वप्रदीपविरुद्धं द्रव्यमिति स्मृत्युदाहरणेन 'प

इत्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात् ।

(८) न च पुनर्वैषम्याद्यापातेन दोषः । तादृशवैषम्यादेरुप लभ्यमानत्वात् ।

---

ष ह्येव' इति श्रुत्युक्तकर्मणामीशाधीनत्वमयुक्तमनादित्वादिति चोद्यं च निरस्तं भवति, द्रव्यमित्यादावनादेरपि सत्त्वस्येशाधीनत्वोक्तेः । द्रव्यमिति स्मृतौ द्रव्यशब्देन प्रकृत्यादि तत्त्वमुच्यते । कर्मेति धर्माधर्मौ । कालः प्रवाहरूपः प्रसिद्धः । स्वभावः प्रकृतिकर्मादीनां परिणामसत्त्वादि । जीव इत्येनेषामभिमानी गृह्यते । 'यदनुग्रहतः' ईशस्यानुग्रहादेव इति सुधायां स्मृतिर्व्याख्याता ॥

(८) ननु यदि कर्मादिसत्ताऽपि भगवदधीना, तर्हि तदपेक्षा नाम अनपेक्षैवेत्यर्थाद्भवति, तथा च पुनर्वैषम्याद्यापातः, तेन चेश्वरस्य दोषित्वं स्यादित्याशङ्कापरिहारायावृत्तमुपलभ्यते चेति सूत्रखण्डं तद्व्यावर्त्यशङ्काप्रदर्शनेन तत्साध्यं दर्शयन् तत्र हेतुत्वेन योजयति—न चेति ॥ यथा कर्मानपेक्षायां वैषम्यादिकमापतितं तथा पुनः पक्षान्तरेऽपि पूर्वमुत्पादितकर्मानुकूल्येन कर्मान्तरं कारयतीति कर्मापेक्षायामपि ईश्वरस्य वैषम्यापातेन 'दोषः' दोषित्वं स्यादित्यपि न शङ्क्यम्, कुतः? तादृशस्य वेदाप्रामाण्यानापादकस्य स्वाधीनकर्मापेक्षया विषमफलप्रदानरूपस्य वैषम्यादेरदोषतया श्रुतौ 'उपलभ्यमानत्वात्' प्रतीयमानत्वादिति योजना । यद्वा—दोष इत्यनन्तरं किन्तूपपद्यते चेति शेषः । तथा च न पुनः वैषम्याद्यापातेन दोषः किन्तु, तादृशमदोषतयैवोपपद्यते । कुतः ? श्रुतौ तादृशवैषम्यादेस्तथोपलभ्यमानत्वादिति योजना । अनेन सौत्रपदयोरावृत्तिः चशब्दस्य हेत्वर्थत्वं च सूचितम् । अत एव तत्त्वप्रदीपे—उपपद्यते च तादृशवैषम्यादि, न तु दोषित्वापादकं कुतः ? यतः श्रुतौ तथोपलभ्यत इत्युक्तम् । प्रथमयोजना तु टीकोक्ता । अत्रोपपद्यत इत्यस्य नावृत्तिः किन्तूपलभ्यत इत्यस्यैव । अदोषतयेति शेषः । तथा च यतः श्रुतौ वैषम्यमदोषतयोपलभ्यते नैर्घृण्यं चादोषतयोपलभ्यते अतस्तादृशयोस्तयोरदोषत्वात् ईश्वरे तदापादनं नानिष्टमिति साध्याध्याहारेणान्वयः । श्रुतौ पुण्यं पापं कारयेदित्येकवचननिर्देशात् सूत्रेऽपि तथा प्रयोगः । तथात्वे वैषम्यादेः प्रत्येकमन्वयः, वैषम्यादीत्यध्याहारेणैकान्वयो वा ॥

(९) स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्र
[जानाम् ॥

इति चतुर्वेदशिखायाम् ॥ ३७ ॥

११. अधिकरणम् ॥

(१) अवशिष्टैरुपसंहरति—

(९) काऽसौ श्रुतिरित्यतस्तामुदाहरति—स कारयेदिति ॥ चतुर्वेदशिखायामित्यस्य उपलभ्यमानत्वादित्यनेनान्वयः। श्रुतौ स इत्यस्योत्तरत्राप्यधिकारसूचकोऽथशब्दः। अपिशब्दौ समुच्चयार्थौ। तथा च 'सः' विष्णुः स्वाधीनपूर्वकर्मापेक्षया पुण्यं कर्म जीवेन कारयेत् पापं कर्म च कारयेत्। एवं तस्य कर्मणः 'ईशिता' नियन्ताऽपि स एव। तावता न वैषम्यादिदोषवानित्यर्थः। तत्त्वप्रदीपे तु—स भगवान् स्वयमीशिताऽपि पुण्यस्य शोभनमेव फलं पापस्य तद्विपरीतमेवेत्येतदन्यथा कर्तुं समर्थोऽपि न तथा करोति, किन्तु पुण्यं पुण्यैः कारयेत् पापं पापैरथ मिश्रकर्माण्यपि विमिश्रैः कारयेन्नैतावता वैषम्यादिदोषवान्। कुतो ? यतः 'परः' स्वतन्त्रः स परमात्मा 'गुणदोषादिसत्वे' अन्येषु गुणदोषसम्बन्धापादने गुणदोषादीनां गुणदोषत्वापादने च स्वयमेवेशः अतः। किञ्चायं न सकर्तृकः, येन पराधीनतया दोषसम्भवः, अतो न तस्य दोष इत्याह—'अनादिः' उत्पादकशून्य इति। इतोऽपि न दोषसम्भव इत्याह—आदिः प्रजानामिति। प्रजोपलक्षितसर्वकर्तेत्यर्थः। न च कस्यापि स्वदोषेच्छा भवति, किमु सर्वकर्तुरतो न दोषवान्, किन्तु परमेश्वरः स्वातन्त्र्यात् सर्वगुणगणपरिपूर्ण एव स्वाभाविकीं स्वीयां स्थितिमनपोह्य त्रिविधान् धर्मान् त्रिविधैः कारयतीत्यभ्युपगमे श्रुत्याद्यनुग्रहश्चोपपद्यते। वक्ष्यन्ते च नियमास्तद्रूपाभावाः। तत्रोपपद्यते चैवंनियमवत्त्वं स्वतन्त्रस्य। उपलभ्यते चैवं स्वभावत्त्वं 'देवस्य' (मां. २-९.) इति श्रुतौ, इति श्रुतिर्व्याख्याता। अनेनोपपद्यते उपलभ्यत इत्यनयोरसकृदावृत्तिस्सूचिता॥१०॥

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥

११. अधिकरणम्

(१) अत्राधिकरणे विष्णोः सर्वगुणपूर्तौ सर्वदोषराहित्ये च युक्त्य

सू—ॐ ॥ सर्वधर्मोपपत्तेश्च ॥ ॐ ॥ ३८ ॥
गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवा
[त्र शङ्का ।

विरोध उच्यते । ननु सर्वेषां युक्तिविरोधानां परिहृतत्वात्किमुत्तरसू त्रेणेत्यत एतत्सूत्रतात्पर्यमाह—अवशिष्टैरिति ॥ पूर्णत्वमितिशेषः । त था च विशिष्यप्रतिपादितेभ्यः स्रष्टृत्वादिगुणेभ्यः अवशिष्टैः सर्वगुणैः प्रतिपादितैः पूर्णत्वं 'उपसंहरति' निगमयत्यत्रेत्यर्थः । इदमुक्तं भवति– पूर्वाधिकरणेषु विष्णोः प्रत्येकमेकैकगुणविषये दोषाभावविषये च वि रोधं परिहृत्य तत्समर्थनं कृतम् । तेभ्योऽवशिष्टाः ये सर्वगुणा दोषा भावाश्च तत्र सामान्यतो युक्तिविरोधपरिहारेण तान् समर्थ्य विष्णोः सर्वगुणपूर्णत्वविषये सर्वदोषाभाववत्त्वविषये च प्राप्तयुक्तिविरोधप रिहारेण तत्प्रकरणमत्राधिकरणे समापयति सूत्रकार इति । यथोक्तं प्रमेयदीपे 'उपसंहरति' प्रकरणं समापयतीति । अत्र भाष्ये तृती या द्वितीयार्थे । समर्थ्य पूर्णत्वमितिपदद्वयमध्याहार्यमिति ध्येयम् । न विष्णोस्सर्वगुणपूर्णत्वं युक्तं, चेतनत्वात् जीववत्, अन्यथा ऽन्यस्यापि तत्स्यादविशेषादितिप्राप्ते सिद्धान्तयत्सूत्रं पठित्वा व्या चष्टे—सर्वेति । इति सर्वधर्मोपपत्तेरिति । एवंरूपसर्वधर्मोपपाद कश्रुतेरित्यर्थः । क्वचित् 'सर्वगुणोपपत्तिश्रुतेश्च' इतिपाठः । गुणे तिधर्मशब्दव्याख्यानम् । न केवलं स्वातन्त्र्यादिना विष्णोः सर्व धर्मोपपत्तिः, किन्तु 'गुणाः श्रुताः' (सौपर्णश्रुतिः.) इति सर्वधर्मो पपादकश्रुतेश्चेति समुच्चये चशब्दः । तत्त्वप्रदीपे तु—'इति सर्व गुणोपपत्तिश्रुतेः' कयाऽपि विधया दोषाभावश्रुतेश्चेति चशब्दार्थ उक्तः । अस्य हेतोः चशब्दसूचितेन नायुक्तं विष्णोः पूर्वत्वमि तिसाध्येनान्वयः । चेतनत्वं त्वप्रयोजकं श्रुतिविरुद्धं चेति भावः । सू त्रार्थस्तु स्पष्टः । वेदे 'श्रुता गुणाः' अणुत्वमहत्वादिशुभधर्माः 'सु विरुद्धाश्च' लोकदृष्ट्याऽतिविरुद्धाः अन्यत्र सहादृष्टा अपि 'देवे' ह रौ सन्त्येव, न तु तेषां विरुद्धतया मिथ्यात्वं कल्पनीयमित्यर्थः । न के वलं विरुद्धा इत्यपिशब्दार्थः । एवं हरौ 'अश्रुताः' वेदानुक्ताश्च रमा चतुर्मुखवाणीचिन्त्या गुणास्सन्ति । तर्हि यावन्तो रमादिभिश्चिन्तयि तुं शक्यन्ते तावन्त एव गुणाः किमित्यतो नेत्याह—अचिन्त्या इति । यथा रमादिभिश्चिन्त्यास्सन्ति, तथा तैरचिन्त्याश्च गुणाः सन्तीत्यर्थः ।

चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि त
[ था प्रतीताः ॥

इति सर्वधर्मोपपत्तेरिति ॥ ३८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये द्वितीयस्याध्यायस्य
प्रथमः पादः.
॥ ॐ ॥

---

ननु यथा गुणाः श्रुताः चिन्त्या अचिन्त्याश्च देवे सन्ति तथा दोषा अपि किमित्यतो नेत्याह—दोषा इति। देवे दोषाः श्रुता एव न सन्ति, नापि चिन्त्याः, किमुपुनरचिन्त्या दोषा न सन्तीति वक्तव्यमित्यर्थः। ननु कथं न दोषाः श्रुताः 'जनितोत विष्णोः' ( ) इत्यादौ प्रतीतेरित्यत आह—अज्ञैरिति। मिथ्यादृग्भिर्हि तथा श्रुता इति सन्तीति च प्रतीताः, न तु ज्ञानिनामित्यर्थः। अयं चार्थस्तत्त्वप्रदीपन्यायदीपिकासूक्तः। न चाश्रुता रमादिचिन्त्याः सन्ति चेत् 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्च न' इत्युक्तिविरोध इति वाच्यम्। सामान्यतः श्रुताः विशिष्याश्रुता इत्यर्थस्येह विवक्षितत्वेन विरोधाभावात्। इयं च गीतातात्पर्योक्तरीत्या ऋग्वेदे सौपर्णशाखाश्रुतिः। गीताभाष्ये तु इयं जाबालिखिलश्रुतिरित्युक्तम्। सुपर्णदृष्टाया अपि श्रुतेर्जाबालिदृष्टत्वसम्भवादविरोधः ॥ ११ ॥

॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां द्वितीयाध्यायस्य प्रथमः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) इतरेषां चानुपलब्धेरिति सामान्यतो निराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन् पादे ।

( २ ) अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति—

( ३ ) सू—ॐ ॥ रचनानुपपत्तेश्च नानुमानम् ॥ ॐ ॥ १ ॥

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—इतरेषामिति ॥ तानिति शेषः । तथा च 'इतरेषां चानुपलब्धेः' इति सूत्रे येषां समयानां दर्शनानां तदुक्तफलानुपलब्ध्याऽनाप्तोक्तत्वेन च लिङ्गेन निराकरणं कृतम् । तान् कपिलकणादादिसमयान् निराकरोत्यस्मिन् पादे सूत्रकार इति योजना । ननु प्राङ्निराकृतानां पुनर्निराकरणं व्यर्थमित्यत आह—सामान्यतो विशेषत इति । योजना तु सामान्यतो विशेषत इति पदद्वयप्रक्षेपेण पूर्ववदेव । तथा च प्राक्सामान्यतो निराकरणं कृतम् । नैतावताधिकारिणश्शास्त्रे निश्शङ्का प्रवृत्तिर्युज्यते । तेषामनादिकालानुवृत्तत्वात्प्रतीतिसुन्दरत्वाच्च । अतोऽधिकारिणो निश्शङ्कप्रवृत्त्यर्थं प्राङ्निराकृतानेव समयान्विशेषतया एकैकपक्षानुवादेन निराकरोत्यस्मिन्पादे इति न वैयर्थ्यमिति भावः ॥

( २ ) एतत्पादीयाद्याधिकरणार्थं दर्शयति—अचेतनेति ॥ ईश्वरनिरपेक्षाचेतनप्रकृतेरेव महदादिकार्यकरणे प्रवृत्तिरिति यन्निरीश्वरसाङ्ख्यमतं तत् 'प्रथमतः' अस्य पादस्य प्रथमेऽधिकरणे निराकरोति सूत्रकृदित्यर्थः । इतरसमयापेक्षया प्रबलत्वादतिविरोधित्वादतितुच्छत्वाच्चेति भावः ॥

( ३ ) अत्र नानुमानमित्यंशव्याख्यानेनैव पूर्वपक्षः प्रदर्शितो भवतीत्याशयेन तमप्रदर्श्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—रचनेति॥ रचनानुपपत्तेरित्यस्यैकपदत्वे तदन्वययोग्यपदं दर्शयति—अचेतनस्येति । हेतुगर्भविशेषणमेतत् । प्रधानस्येति विपरिणामेनाकृष्यते । रचनेत्यस्य भिन्नपदत्वेऽत्र स्वतःप्रवृत्तीत्येकं पदम् । तथात्वे बहुव्रीहिः । प्रधानमित्यनेनान्वेति । अनुपपत्तेरित्यत्र नञ् विरुद्धार्थः । स्वमतेऽपीश्वरप्रेरितचेतनप्रवृत्त्यभ्युपगमाद्विधिभेतदित्यत उक्तं—स्वत इति । ईश्वरनिरपेक्षस्येत्यर्थः । प्रवृत्तिर्यत्नः रचनपदव्याख्यानमेतत् । अ

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ ।

(४) चशब्देन प्रमाणाभावं दर्शयति ॥ १ ॥

(५) सू—ॐ ॥ प्रवृत्तेश्च ॥ ॐ ॥ २ ॥

नुपपत्तेः' उपपत्तिविरुद्धत्वात् । अनेन सूत्रे अचेतनस्य स्वतइति शेषः कार्यः । नेत्यस्य रचनेत्यनेन संबंधभाष्ये स्वतः प्रवृत्तीत्यत्रापि अन्वयः । सूत्रे अनुमानमिति वा आनुमानमिति वा छेदं अनुमीयत इत्यनुमानमिति व्युत्पत्तिं जगत्कर्तृ इत्यध्याहारं चाश्रित्य पर्यवसितार्थमाह—अनुमानेति । 'परिकल्पितं' सिद्धम् । प्रधानमिति शेषोक्तिः । अनेन नानुमानं प्रधानं जगत्कर्तृ इति प्रतिज्ञान्तरं दर्शितम् । तथा चेत्थं सूत्रभाष्ययोजना—अनुमानं महदादिकं स्वसदृशकारणकं कार्यत्वात् पटवदित्यनुमानेन सिद्धं प्रधानं न जगत्कर्तृ । कुतः? यतो नास्य रचना न प्रधानं स्वतःप्रवृत्ति ईश्वरनिरपेक्षप्रवृत्तिमत् । न चासिद्धिः । अचेतनस्य रचनानुपपत्तेः । रचनायाः स्वतःप्रवृत्तेरचेतनत्वोपपत्तिविरुद्धत्वात् । अनेन प्रधानस्य स्वतः प्रवृत्त्यभावे अचेतनत्वाख्यहेतुसूचनादसिद्धिः परिहृता । तद्विरुद्धोपपत्तेरेव तदभावसाधकत्वात् । यद्यद्विरुद्धं लिङ्गं तत्तदभावसाधकं यथा नित्यत्वविरुद्धकृतकत्वमनित्यत्वसाधकमितिव्याप्तेः । यद्यपि नानुमानमुपपत्तेरिति सुवचम्, सर्वस्यापि हेतोः सङ्ग्रहात् । तथापि विरोधिहेतुप्राबल्यसूचनाय विरोधस्फोरणाय चैवमुक्तम् । अतएवाचेतनस्येति पदमध्याहृतम्, असम्भवादित्यनुक्त्वाऽनुपपत्तेरिति चोक्तम् ॥

(४) प्रामाणिकं प्रधानस्य कर्तृत्वं न युक्त्या निराकर्तुं शक्यमित्यतः प्रवृत्तस्य सौत्रचशब्दस्यार्थमाह—चशब्देनेति ॥ प्रमाणाभावमिति । वादिनो हैतुकत्वेनात्र प्रमाणशब्दोऽनुमानपरः । वस्तुस्थितिकथनार्थं सामान्योक्तिः । अचेतनस्य स्वतः प्रवृत्तौ जगत्कर्तृत्वे चेति शेषः । 'दर्शयति' समुच्चिनोति सूत्रकृदित्यर्थः । अनेन न केवलं प्रकृतिकर्तृत्वे स्वतःप्रवृत्तौ च प्रमाणविरोधः, अपि तु प्रमाणाभावश्च । न चानुमानं मानम्, 'रचनानुपपत्तेः'अनुमानरचनानुपपत्तेः कार्यत्वाद्यनुमानं तु कारणतामात्रसाधकतया सिद्धसाधकत्वान्न प्रकृतोपयोगीति सूत्रस्य वृत्त्यन्तरं दर्शितं भवति ॥

(५) एवं प्रधानस्य स्वतःप्रवृत्तिकर्तृत्वे अचेतनत्वस्वतःप्रवृत्ति

चेतनस्य स्वतः प्रवृत्तिदर्शनाच्च ॥ २ ॥

( ६ ) सू—ॐ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ॐ ॥ ३ ॥

पयोऽम्बुवदचेतनस्यापि प्रवृत्तिर्न युज्यत इति न युक्तम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यस्स्य न्दन्ते याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यांयां च दिश

---

शून्यत्वप्रमाणाभावैः निराकृत्य युक्त्यन्तरेणापि तन्निराकुर्वत्सूत्रमुपन्य स्य व्याचष्टे—प्रवृत्तेश्चेति ॥ चेतनस्येति सावधारणम् । तथा च 'चे तनस्य' एव कुलालादेर्घटादिसृष्टौ 'प्रवृत्तेः' व्यापारस्य 'दर्शनात्' अहं करोमीत्यनुभवसिद्धत्वादित्यर्थः । अचेतनस्यापि चेतनाधीनप्रवृ त्तिदर्शनाद्व्यभिचारपरिहाराय 'स्वतः' इत्युक्तम् । चेतननिरपेक्षेत्य र्थः । अनेन सूत्रे चेतनस्य स्वतो दर्शनादितिपदत्रयमध्याहार्यमिति सू चितम् । चशब्दो न केवलमचेतनत्वसाधितस्वतःप्रवृत्तिशून्यत्वाख्या नुमानात्, नापि प्रधानकर्तृत्वसाधकप्रमाणाभावान्नानुमानं जगत्कर्तृ, किन्तुमहदादिसृष्टिश्चेतनेच्छानुसारिणी सृष्टित्वाद्घटादिसृष्टिवदित्य नुमानान्तरविरोधाच्चेति हेतुसमुच्चयार्थः । न चेदं कथं सूत्रोक्तमिति वाच्यम् । चेतनस्य ज्ञातुः प्रवृत्तेरित्यनेनास्योक्तत्वात् । प्रवृत्तिर्हि क्रि या, सा च कृतिं विना नोपपन्ना । सा च नेच्छां विना । सा च न ज्ञा नं विनेति प्रवृत्त्यादिकार्याणां स्वस्वकारणाविनाभूतत्वेन प्रवृत्त्या इ च्छापूर्वकत्वसाधनसम्भवात् । दर्शनादित्यस्य न दृष्टान्ते साध्यवैक ल्यमित्यध्याहृतसाध्येनान्वयः ॥

( ६ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे—पयोऽम्बुवदि ति ॥ अचेतनस्येत्यनन्तरं प्रधानस्येति शेषः । चो विशेषणसमुच्चये । यद्यपि तथापीत्यर्थे, न केवलं चेतनस्य किं त्वचेतनस्यापीतिसमुच्चये वाऽपिशब्दः । सूत्रे व्यस्तस्य रचनेत्यतोऽनुवृत्तस्य रचनाशब्दस्यार्थ माह—प्रवृत्तिरिति । युज्यत इति शेषोक्तिः । तथा चेत्थं पूर्वपक्षांशा र्थः—यथाऽचेतनस्य पयसः क्षीरस्य दध्याकारेण परिणामः अम्बुनो जलस्य गतिश्च दृष्टा। तथा अचेतनस्यापि प्रधानस्याचेतनत्वेऽपि रचना स्वतःप्रवृत्तिर्युज्यत इति चेदिति । अनेन. सिद्धान्त्युक्ताद्यानुमानस्य प्रत्यनुमाने पक्षसाध्यहेतुदृष्टान्तप्रदर्शनेन प्रतिपक्ष उक्तो भवति । व्या प्त्यभिधानायानेकदृष्टान्तोपादानम् । स्वतः परिणामे पयः, अम्बु तु प्र वृत्तिमात्रे दृष्टान्त इति केचित् । अनेन सिद्धान्तिहेतोर्व्यभिचाराभिधा

मनु ' ( बृ.५-८-९. ) ' एतेन ह वाव पयो मण्डं भवति'
( ) इत्यादि तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥३॥
( ७ ) सू—ॐ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ॐ ॥ ४ ॥
'न ऋते त्वत्क्रियते किञ्चनारे ' ( ऋ.१०-११२-९. ) इति

---

नायाभिहिते पयोऽम्ब्वादौ स्वतःप्रवृत्त्यभावरूपप्रथमसाध्यस्याभावो दर्शितः। अचेतनस्येत्यनेन हेतुरपि। तथा चाचेतनत्वहेतोः स्वेनैव सत्प्रतिपक्षितत्वात्पयोऽम्ब्वादौ व्यभिचारित्वाच्च न साधकत्वमिति भावः। सौत्रापिपदं नञस्समाकर्षकमिति भावेनाह—नेति। इत्यादी त्यविभक्तिको निर्देशः। इत्यादावित्यर्थः। 'तत्रापि' पयोऽम्ब्वादावपि न केवलं प्रधान इत्यपिशब्दार्थः। सौत्रापिशब्दः ईश्वराख्यचेतनाधीन प्रवृत्तेराकर्षकश्चेति भावेनाह—ईश्वरनिमित्तेति। पूर्वसूत्राध्याहृतस्य दर्शनादित्यस्य इहानुवृत्तिः कार्येतिभावेन तदर्थमाह—श्रुतेरिति। तथाच पूर्ववाद्युक्तप्रत्यनुमानदृष्टान्ते पयोऽम्ब्वादौ सिद्धान्त्यभिमतसाध्यस्यैव सत्त्वान्न तदनुमानस्य सत्प्रतिपक्षता न वा व्यभिचार इति भावः। श्रुतेः प्राबल्यात्तत्क्रमानुसारेण सौत्रक्रमातिक्रमः कृतः। अन्यथा एतेनेति वाक्यमादावुदाहरेत्। बृहदारण्यके एतस्यवेत्येकं वाक्यम्। एतेनेत्यन्यत्तत्रैव। तदर्थस्तु—याः अन्याः विलक्षणाः काश्चित्प्राच्यः प्राच्यां दिशि स्थिताः याश्चान्याः काश्चित्प्रतीच्यः प्रतीच्यां दिशि स्थिताः नद्यः श्वेतेभ्यः तन्नामकपर्वतेभ्यः। बहुवचनमाद्यर्थे। सकाशादिति शेषः। यां यां दिशमनुस्यन्दन्ते स्रवन्ते ताः नद्यः एतस्याक्षरस्य भगवदाख्यस्य प्रशासने। निमित्तसप्तमीयम्। आज्ञामात्रात्तां तां दिशमनुस्यन्दन्ते। एतेन भगवता पयः क्षीरं मण्डं दधि भवति तद्रूपं भवति। यद्वा—मण्डं दधिभावं भवति प्राप्नोति दध्युपादानं भवतीति वेति ॥

( ७ ) ननु श्रुतिसामर्थ्येन पयोऽम्बुनोः प्रवृत्तेरीश्वराधीनतया तत्र व्यभिचाराभावेपि अयस्कान्तशिलादिरूपाचेतनान्तरस्य प्रवृत्तौ सिद्धायां भविष्यति तत्र व्यभिचारः सेत्स्यति च प्रधानस्य स्वतः प्रवृत्तौ साध्यायामयस्कान्तादिकमेव निदर्शनं उदाहरणनियमस्यानाश्रयणीयत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—व्यतिरेकेति ॥ इतीत्यनन्तरं श्रुत्येति अनवस्थितेरित्यनन्तरं सिद्धत्वादिति च शेषः। यद्वा—इत्यनवस्थितेरसत्त्वश्रुतेरित्यर्थः। तद्व्यतिरेकेणेत्यनेनापि पदेन

तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेः अनपे क्षितमेवाचेतनवादिमतम् ॥ ४ ॥

——:*:——

प्रकृत ईश्वरोऽत्र व्यतिरेकप्रतियोगितया संयोज्य इति सूचितम् । सौत्रचशब्दस्यार्थमाह--कस्यापि कर्मण इति । किञ्चित्कर्तृकर्मण इति व्यधिकरणे षष्ठ्यौ । यदा समानाधिकरण्ये षष्ठ्यौ अपिरभिव्याप्तौ । तदा अनवस्थितेरित्यनन्तरं अत इति शेषः । अत इति अनपेक्षितमिति चावर्तते । अचेतनेति । अचेतनस्यैव स्वतः प्रवृत्तिरितिवादिनो मतमित्यर्थः । तथा चेत्थं सूत्रभाष्ययोजना—नर्ते इतीश्वरव्यतिरेकेण तं विना कस्यापि कर्मणोऽनवस्थितिश्रुतेर्नोचेतनत्वहेतोः कुत्रापि व्यभिचारः न वा पूर्वत्राद्युक्तानुमाने दृष्टान्तलाभः । यतएवमतोऽचेतनवादिमतमनपेक्षमनपेक्षितम् । अपेक्षापदोपलक्षितप्रमाणविरुद्धमप्रामाणिकं चातोऽनपेक्षत्वादनपेक्षितमेव प्रेक्षावतां सद्भिरनादरणीयमेवातोऽनपेक्षत्वादपेक्षाशब्दितादररहितत्वान्नैतद्विरोधः प्रकृतार्थस्येति । यद्वा—अयस्कान्तादेरपि पूर्वसूत्रेणैव निरासात्सुधोक्तरीत्या व्यतिरेकानवस्थितेरीश्वरव्यतिरेकेण कस्यापि चेतनस्यापि कर्मणः प्रवृत्तेरभावात् । जडस्य किमु वाच्यमित्यनपेक्षितमेवाचेतनवादिमतमिति कैमुत्यन्यायपरत्वेनेदं व्याख्येयम् ॥

'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किं च नारे महामर्कं मघवन् चित्रमर्च' (ऋक्सं. ८-६-१३.) इति ऋङ्मन्त्रस्यायमर्थः । हेगणपते इन्द्रियगणस्वामिन् मघवन् धनवन् यशस्विन् मखपते इति वा । भगवन् त्वं अर्चकानामिन्द्रियगणेषु निषुसीद सुसम्यङ्निषीद स्थितो भव । तत्र स्थित्वा च महां महान्तं पूज्यं अर्कं अरं अलं कं सुखं यस्य स तथोक्तः परमानन्दयुतम् । चित्रमद्भुतमाश्चर्यतमं त्वां त्वमेव पूजय । कुतो ममैव पूज्यत्वमिति मा वोचः। यतस्त्वामेव कवीनां ज्ञानिनां विप्रतमं विशेषेण प्रकृष्टतममाहुः कवयः । अतस्तवैव पूज्यत्वम् । न केवलं पूज्यत्वं तवैव । किन्तु पूजकत्वमपि तवैव मुख्यम् । नान्यस्य । कुतः ? यतस्त्वदृते त्वद्विना आरे दूरे समीपे वा केनचित् किञ्चन स्पन्दनमपि न क्रियते अत इति ॥ १ ॥

इति रचनानुपपत्त्यधिकरणम् ॥

२. अधिकरणम् ॥

( १ ) सेश्वरसाङ्ख्यमतं निराकरोति । यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते एवं प्रधानादीश्वरानुगृहीतं जगदिति ।

( २ ) अतो ब्रवीति—

२. अधिकरणम् ॥

( १ ) एतदधिकरणार्थं दर्शयति—सेश्वरेति ॥ प्रधानमेव जगत्कर्तृ, तस्य गुणभूतत्वेनेश्वरोऽस्तीति वदन् सेश्वरः, स चासौ साङ्ख्यश्च तस्य पतञ्जलेर्मतं निराकरोत्यस्मिन्नधिकरणे सूत्रकृदित्यर्थः । सिद्धान्तप्रतिज्ञापरेण न तृणादिवदित्यनेन सूचितं पूर्वपक्षमाह—यथेति । पृथिव्या इति पञ्चमी । उपलक्षणमेतत् । कलमादिबीजाच्चेत्यपि द्रष्टव्यम् । एवशब्दस्योत्तरत्राप्यन्वयः । प्रधानपदं पुरुषस्याप्युपलक्षकम् । तथा च—यथा स्वाधीनोपादानत्वशक्तिमत्या एव केवलायाः पृथिव्याः, न पुनर्वेदवादिन इव ईश्वराधीनत्वशक्तिमत्याः, एवं स्वाधीनबीजत्वशक्तियुक्तात्कलमादेश्च सकाशात् स्वोत्पत्तौ पृथिव्यनुग्राहकेण तत्सन्निधिमता तदनुकूलेन पर्जन्येनानुगृहीतं तदनुग्रहसहितं तत्कर्तृकस्वोत्पत्तीच्छाविषयीकृतं 'तृणादिक'अङ्कुरादिकमुत्पद्यते । तथा प्रधानात्स्वाधीनोपादानत्वशक्तियुक्तादेव केवलात्,न पुनरीश्वराधीनशक्तियुक्तात् । एवं देहादिसम्बन्धेनोत्पत्तौ या शक्तिः सा बीजशक्तिः स्वाधीनतच्छक्तियुक्तात्पुरुषाच्च स्वोत्पत्तौ स्वोपादानभूतप्रकृत्यनुग्राहकेणेश्वरेणानुगृहीतं तत्कर्तृकस्वोत्पत्तीच्छाविषयीकृतं जगदुत्पद्यत इत्यर्थः । तथा चेश्वरस्य प्रेरकत्वबीजावापकर्तृत्वाभावेऽपि सन्निधिमात्रेण प्रकृत्यनुग्राहकत्वमस्त्येवेति तदर्थमीश्वरोऽङ्गीकार्य इति न तद्वैयर्थ्यशङ्केति भावः । अत्र दृष्टान्तदार्ष्टान्तिकयोः कार्ये पर्जन्येश्वरानुग्रहोक्तिः कारणेऽपि तदनुग्रहोपलक्षणार्था । सिद्धान्ते सौत्रचशब्देन तस्य व्यावर्तनात्प्रकृत्यनुग्रहशक्तिरेवेश्वरस्येति पतञ्जलिनाऽङ्गीकारादिति सुधोक्तेश्चेति ध्येयम् ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ श्रुत्युदाहरणेन हेत्वसिद्धिः परिहृता । 'अन्यत्र' ईश्वरात् 'राज्ञि राष्ट्रं' इतिवत्, अन्यत्राभावादित्यस्यान्याधीनत्वेनाभावादित्यर्थः । अवगमोपलक्ष

सू—ॐ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ॐ ॥ ५ ॥

(३) 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥
ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि लयमभ्युपैति ब्रह्मैवाधस्ताद्ब्रह्मैवोपरिष्टाद्ब्रह्म मध्यतो ब्रह्म सर्वतः' 'ब्रह्मैवेदं सर्वम्' (बृ.४-५-१.) इत्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य।

(४) स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं

---

णमेतत्। तथा च इत्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावावगमादित्यन्वयः। तृणादिवदिति। तृणादीनामुत्पत्तौ यथा पर्जन्योऽनुग्राहक एव, न स्वतन्त्रोत्पादकः, तथा जगदुत्पत्तावीश्वरस्यानुग्राहकत्वमात्रं न, किन्तु स्वातन्त्र्येण तदुत्पादकत्वमेवेत्यर्थः ॥

(३) यच्चेति तैत्तिरीयवाक्यम्। ब्रह्मण्येवेत्यादीनि श्रुत्यन्तरवाक्यानि। आद्यश्रुतावपिशब्दः क्रियासमुच्चये कर्मसमुच्चये वा। वाशब्दोऽनादरे। तथा च नारायणो यत्किञ्चिद्दृश्यते यच्च श्रूयते वा तत्सर्वमपि जगत्सर्वं सर्वपदार्थानां सत्वादिकं प्रति तत्प्रदानाय व्याप्य। यद्वा-तदुद्दिश्य सर्वं सर्वथा देशकालगुणशक्तिभिर्व्याप्य तत्प्रेरकतया स्थितः। न केवलमेतावत्, किन्तुजगतोऽन्तर्बहिश्च तद्देशे तद्रहितदेशे च तत्काले तद्रहितकाले व्याप्य तद्भूतैस्तदभूतैश्च गुणैः शक्तिभिश्च युक्तस्सन् श्रुत इति तत्त्वप्रदीपटीकादिशा श्रुत्यर्थः। द्वितीयश्रुतावाद्यो ब्रह्मशब्दो निमित्तसप्तम्यन्तः। द्वितीयतृतीयावधिकरणसप्तम्यन्तौ। 'इदं' जगत्'आविरासीत्'अजायत। अनेनेशाधीनोत्पत्तिसत्तादिकमुक्तम्। ब्रह्मैवाधस्तादित्यनेनापि सत्ताप्रदानाय सर्वगतत्वमुच्यते। तदधीनसत्ताकस्य तदधीनत्वं सिद्धमेव। ब्रह्मैव सर्वपदार्थानामधस्तादुपरिष्टान्मध्यतः। किं बहुना-'सर्वतः' सर्वत्र च तत्तत्सत्तादिप्रदानाय तत्र तत्रास्तीत्यर्थः। ब्रह्मैवेदमितिवाक्यान्तरेणापि इदं जगत् तदधीनसत्ताकमेवोच्यते ॥

(४) इदानीं सप्रमाणकं सौत्रचशब्दार्थमाह—स एवेति ॥ अत्र स एवेत्यनेन ईश्वराधीनोद्बोधकत्वं प्रकृतेरुच्यते।'शास्तिकृत्'जगच्छिक्षकः

सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रिकृत् ॥ इति भागवते । द्रव्यं कर्म च कालश्चे त्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ॥ ५ ॥

३. अधिकरणम् ॥

( १ ) लोकायतिकपक्षं निराकरोति—

स हरिरेव 'अनामरूपात्मनि' प्राकृतनामरूपरहिते स्वस्मिन् स्वाधारत्वेन 'रूपनामनी' अर्थशब्दप्रपञ्चौ 'भूयः' पुनः 'विधित्समानः' सिसृक्षुः 'निजवीर्यचोदितां' स्वसामर्थ्यप्रेरितां 'स्वजीवमायां' स्वाधीनां जीवबन्धिकां 'सिसृक्षतीं' सर्जनोन्मुखीं 'प्रकृतिं' लक्ष्मीं 'अनुससार' अनुजग्राहेत्यर्थः । इति चेति चः समुच्चये । द्रव्यमित्यनेन तदधीनसत्त्वमुच्यते । भागवत इत्यस्य च पूर्वेणोत्तरेण च सम्बन्धः । वचनद्वयस्यापि भागवतस्थत्वात् । नानुग्राहकत्वमात्रमित्यत्रापि संयोज्यम् । समस्तं चेदं । चशब्देनेत्यतः परं सूचितमिति शेषः । उद्बोधप्रवृत्त्यादिरादिपदार्थः । चः समुच्चये । तथा च न केवलं कर्मस्वातन्त्र्यम् । किन्तु स एव द्रव्यमिति च भागवते आदिशब्दादन्यत्र चाङ्गीकृतं सूत्रकृतोक्तमत्र चशब्देन सूचितम् । प्रकृतिसत्तादिप्रदत्वं च नानुग्राहकत्वमात्रमीश्वरस्यानुग्राहकत्वमात्रविरोधीति योजना । यद्वा—न केवलं कार्यसत्ताप्रदत्वमेव नानुग्राहकत्वमात्रमीश्वरस्यानुग्राहकत्वमात्रविरोधीत्यङ्गीकृतम् , किन्तु प्रकृतिसत्तादिप्रदत्वमपीति चशब्देन सूत्रकृता सूचितं । कथं प्रकृतिसत्तादिप्रदत्वं तेनाङ्गीकृतमिति ज्ञायते यतो भागवते तद्वचनमस्त्यत इति योजना । अनेन—सूत्रे ईश्वर इति जगदिति च पदद्वयाध्याहारेणेश्वरादन्यत्र जगतोऽभावात्तदधीनसत्तादिमत्वादिति यावत् । एवं प्रकृत्यादेश्चान्यत्राभावान्न तृणादिवज्जगदनुग्राह्यमात्रम्, नापीश्वरः पर्जन्यवदनुग्राहकमात्रमिति सूत्रार्थ उक्तो भवति । द्रव्यमित्येतद्वैषम्याधिकरणे व्याख्यातम् ॥ २ ॥

इति अन्यत्राभावाधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) अत्राधिकरणार्थं दर्शयति—लोकायतिकेति ॥ लोकायतस्य

( २ ) सू—ॐ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ॐ ॥ ६ ॥
( ३ ) यस्य धर्माधर्मौ न स्तस्तत्सिद्धान्ते किं प्रयोजनम् ।

चार्वाकाचार्यस्य अयं लोकायतिकः स चासौ पक्षः सिद्धान्तश्च त मित्यर्थः । लोकायतेनाङ्गीकृत इति वा ॥

( २ ) धर्माद्यतीन्द्रियपदार्थानां तत्साधकश्रुत्यादिप्रामाण्यस्य चानभ्युपगमात्प्रमाणाभावेनेश्वरस्यैवाभावादन्तरेणापीश्वरं पूर्वपूर्वस्मादुत्तरोत्तरवस्तूत्पत्तिसम्भवान्न तस्य जगत्कारणत्वं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अभ्युपगम इति । न केवलं परोपपादनेन किन्तु 'अभ्युपगमेऽपि' स्वसिद्धान्तेऽपि तद्रीत्यापि विषयप्रयोजनयोरभावादनारम्भणीयमेव चार्वाकशास्त्रमिति सूत्रार्थः सुधायामुक्तः। चन्द्रिकायां तु पूर्वसूत्रान्नञोऽनुवृत्तिः । तथा च स्वकीयशास्त्रस्य सिद्धान्तत्वानभ्युपगमे सिद्धमस्मदिष्टम् । अभ्युपगमेऽपि तत्र तद्व्यापकयोर्विषयप्रयोजनयोरभावाभ्युपगमात् व्याहतिः स्यादिति उभयथापि न चार्वाकसिद्धान्तो युक्त इति सूत्रार्थ उक्तः । अत्र सुधापक्षे अनपेक्षमेवेत्यस्यावृत्तिः । योजनाद्वयेऽप्यपिशब्दः समुच्चयार्थः विरोधसूचकश्चेति ध्येयम् ॥

( ३ ) यस्येति॥सिद्धान्त इत्याकृष्यते।धर्मो यागादिजन्यादृष्टम्।अधर्मस्तदन्यः स्वर्गादिः । यद्वा—अधर्मः पापं तत्साध्यो नरकश्च । अधर्मनिवृत्तिप्रयोजनकत्वस्यापि निराकरणार्थमधर्मग्रहणम् । धर्माधर्मपदाभ्यामतीन्द्रियमात्रमुपलक्ष्यते । सप्तमी षष्ठ्यर्थे । किमाक्षेपे । प्रयुज्यते प्रवर्त्यते शास्त्रे अधिकार्यनेनेति व्युत्पत्त्या प्रयोजनशब्देन फलविषयौ गृह्येते । तथा च—'यस्य धर्माधर्मौ न स्तः' येन धर्माधर्मौ नाङ्गीकृतौ तस्य वादिनः सिद्धान्ते तेन सिद्धान्तत्वेनाभ्युपगतस्य शास्त्रस्य किं प्रयोजनं ? न किमपि विषयादिकमङ्गीकृतमिति योजना । सिद्धान्तप्रयोजनपदाभ्यां सौत्राभ्युपगमार्थशब्दौ विवृतौ । ततः किमित्यत आह—अत इति । स्वशास्त्रस्य सिद्धान्तत्वाभ्युपगमेऽपि तत्र तद्व्यापकयोर्विषयप्रयोजनयोरभावाङ्गीकारादित्यर्थः । ततोपि किमित्यतो विरोधस्फोरकेण सौत्रापिशब्देन सूचितं हेतुं दर्शयति—स्वेति। यः सिद्धान्तः असौ प्रयोजनादिमानिति नियमात्सिद्धान्तत्वेन अङ्गीकृतशास्त्रस्य प्रयोजनाद्यभावमभ्युपगतवतो माता वन्ध्येतिवत्स्ववचनविरुद्धवादित्वापातादित्यर्थः । न तत्र युक्त्यन्तरं वक्तव्यमित्येवश

अतः स्वव्याहतेरेवोपेक्ष्यः ॥ ६ ॥

———*———

४. अधिकरणम् ॥

( १ ) पुरुषोपसर्जनप्रकृतिकर्तृवादमपाकरोति—

( २ ) सू—ॐ ॥ पुरुषाश्मवदिति चेत्तथाऽपि ॥ ॐ ॥ ७ ॥

यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमा

---

द्वार्थः । ततः किमित्यतः सूत्रेऽनपेक्ष्य इति बुद्ध्या विविच्यानुवृत्तपदेन नञनुवृत्त्या वा लब्धसाध्यं दर्शयति—उपेक्ष्य इति । स इति विपरिणामेनानुवर्तते । एवकारोऽत्रापि सम्बध्यते । तथा च स चार्वाकः तत्सिद्धान्तो वा उपेक्ष्य एव न त्वादरणीयः परिहारायाभिषयो वा । अतो न तद्विरोधो विष्णुजगत्कारणत्वस्येत्यर्थः ॥ ३ ॥

इति अभ्युपगमाधिकरणम् ॥

———:*:———

४. अधिकरणम् ॥

( १ ) अत्राधिकरणप्रतिपाद्यं दर्शयति—पुरुषेति ॥ पुरुषश्चेतनः प्रकृतिरचेतना । कर्त्रिति भावप्रधानम् । उच्यते अर्थोऽत्रेति वादो मतम् । तथा चात्राधिकरणे निरीश्वरसाङ्ख्यैकदेशिनां चेतनोपसर्जनकाचेतनप्रकृतिकर्तृत्ववादिनां मतं निराकरोति सूत्रकृदित्यर्थः ॥

( २ ) पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं ताव द्व्याचष्टे—पुरुषेति ॥ चेतनसम्बन्धाज्जीवसन्निधानादित्यनेन सूत्रे पुरुषपदं जीवसम्बद्धशरीरपरमित्युक्तं भवति । एवकारः शरीरमेवेत्यन्वेति । न तु चेतनमपीत्येवार्थः । अश्मा पाषाणः । आदिशब्दाद्दार्वादिग्रहः । 'आदाय' तदर्थं प्रवर्तते तत् प्रगृह्य च 'गच्छति' गन्तुं प्रवर्तत इति । अनेन अश्मपदं लक्षणया तदादानादिविषयप्रवृत्तिपरमित्युक्तं भवति । दृष्टान्तवाक्येन सूचितं दार्ष्टान्तिकं दर्शयति-–एवमिति । अपिशब्दो यद्यपीत्याद्यर्थे प्रकृतिरपीति समुच्चये च प्रकृतिरेव न त्वीश्वर इत्यवधारणे वा । अचेतनमचेतनेतिहेतुगर्भविशेषणाभ्यां सिद्धान्त्युक्ताचेतनत्वहेतोः पक्षविपक्षवृत्तित्वोक्त्या तस्य व्यभिचारः, प्रधानं चेतनसन्निधानात्स्वतः प्रवृत्तिमत् अचेतनत्वात् शरीरवदिति अनुमानरूपप्रतिपक्षश्चोक्तो भवति । तथा च प्रधानादेव जगदुत्पत्तावीश्वरवैयर्थ्यान्नासावस्ति । तदभावे च तस्य जगत्कारणत्वं नास्त्येव ।

दाय गच्छति। एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धा
त्प्रवर्तेत इति चेन्न। 'न ऋते त्वत्क्रियते' इति तत्रा
पि तथात्वे दृष्टान्ताभावात् ॥ ७ ॥

( ३ ) सू—ॐ ॥ अङ्गित्वानुपपत्तेः ॥ ॐ ॥ ८ ॥

शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात्,

तस्यैव जगत्कारणत्वमित्येतद्दूरोत्सारितमिति भावः। एवमनुमानाव
लम्बेन प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं प्रवृत्तं तथापीति सिद्धान्तांशं नञनुवृ
त्त्या व्याचष्टे—नेति। नानुमानेन प्रकृतेः स्वतः प्रवृत्तिसाधनं युक्तमि
त्यर्थः। कुतो नेत्यतस्तत्र हेतुत्वेन तथापीत्यंशमावर्त्याव्ययानामने
कार्थत्वमिति न्यायमनुसृत्य व्याचष्टे—नेति। इतिश्रुतेरितिशेषः।
'तत्रापि' ईश्वरप्रवृत्तावपि। न केवलं पूर्वोक्तपयोम्ब्वादावित्यपिश
ब्दार्थः। तत्रापीति सूत्रपाठेऽप्ययमेवार्थो बोद्धव्यः। 'तथात्वे' परमा
त्माधीनत्वे सिद्धेसतीति शेषः। तथापीत्येतद्दृष्टान्ताभावादित्यनेना
पि सम्बध्यते। तथा च महदादिकार्यकरणप्रवृत्तेः पुरुषोपसर्जनं प्रकृ
त्यधीनत्वसाधनेऽपि निरीश्वरोपन्यस्तपूर्वानुमान इव निदर्शनाभावादि
त्यर्थः। अनेन—पुरुषाश्मवत् चेतनोपसर्जनकशरीरस्याश्माद्यानयनादौ
स्वतः प्रवृत्तिवत् पुरुषोपसर्जनप्रधानस्यैव महदादिकार्यकरणे स्वतः
प्रवृत्तिः सम्भवतीति ईश्वरवैयर्थ्यम्। तदभावे च तस्य जगत्कारणत्व
मपि नास्ति तस्यैव जगत्कारणत्वमित्येतद्दूरोत्सारितमिति चेन्न। कुतो?
यतः पुरुषोपसर्जनप्रकृतिकर्तृत्वे न मानमस्ति। न चोक्तानुमानं मान
म्। यतः तथा श्रुतेः नर्ते इति श्रुतेः। तथापि तत्रापि शरीरप्रवृत्ताव
पि तथैव व्यतिरेकानवस्थितेरित्यनेनोक्तेश्वराधीनत्वमेव सिद्धं अत
एव तथापि पुरुषोपसर्जनप्रकृतिकर्तृत्ववाद्युपन्यस्तानुमानेऽपि तथा
निरीश्वरसाङ्ख्योपन्यस्तपूर्वानुमान इव तथा दृष्टान्ताभाव इति सूत्रा
र्थ उक्तो भवति ॥

( ३ ) एवं श्रुतिलक्षणहेतुना दृष्टान्ते साध्यवैकल्यमभिधाय हेत्व
न्तरेण दृष्टान्ते साध्यवैकल्योपपादनाय सूत्रं—अङ्गित्वेति ॥ अत्राङ्गि
त्वपदं लौकिकपरीक्षकतद्व्यवहारोपलक्षकम्। तथापीत्यनुषज्यते, पु
रुषस्य चेत्यभिप्रेत्य दृष्टान्ते परोक्तसाध्याभ्युपगमे बाधकतर्कोक्तिपर
तया तद्व्याचष्टे—शरीरेति। तस्मादित्यादौ संयोज्यम्। शरीरप्रवृत्ता

'अङ्गमङ्गी समादाय यथा कार्यं करोत्यसौ'
इत्यङ्गित्वव्यवहारोऽनुपपन्नः ॥ ८ ॥

—*-:*:-*—

५. अधिकरणम् ॥

( १ ) प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति—

सू—ॐ ॥ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ॐ ॥ ९ ॥

( २ ) शरीरसम्बन्धात्पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वत

---

वित्यनेन तथापीत्यनुषक्तांशो विवृतः । तथा च यस्मात्पुरुषसंवलित शरीरस्यैव स्वतः प्रवृत्तावुच्यमानायां पुरुषस्याङ्गत्वादप्रधानत्वावश्यं भावादङ्गमितिस्मृतौ पुरुषस्याङ्गित्वव्यवहारः शरीरं प्रति प्राधान्यव्य पदेशोऽनुपपन्नः स्यात् । एवं दार्ष्टान्तिकेऽपि पुरुषस्य प्रधानाङ्गत्वाप स्याङ्गित्वव्यवहारानुपपत्तिरित्यर्थः । अस्य हेतोस्तस्मादपि न शरीर स्य स्वतः प्रवृत्त्यङ्गीकारो युज्यत इति विपर्ययपर्यवसानलब्धसाध्य द्वाराऽऽशब्दाध्याहारेण दृष्टान्ताभावादिति पूर्वहेतुनऽन्वयः । एवं सौ त्रहेतोर्न शारीरस्य स्वतः प्रवृत्तिर्न वा प्रधानस्य । कुतः ? पुरुषस्या ङ्गित्वव्यवहारानुपपत्तेः । शरीरप्रधानयोरङ्गित्वानुपपत्तेश्च इत्यध्याहृ तसाध्यमुखेन तथा दृष्टान्ताभावो बाधश्चेति पूर्वसाध्येनान्वयो द्रष्ट व्यः । वादिनो हैतुकत्वे नोक्तश्रुतावविश्वासादस्यैकस्यैव हेतुत्वा त्सूत्रे चशब्दाभावः । स्मृत्यर्थस्तु—अङ्गी प्रधानः पुरुषोऽङ्गं गुणभूतं शरीरं सङ्गृह्य यथाऽश्माद्यानयनादि कार्यं करोति तथाऽसौ भगवान पि प्रकृतिमादाय महदादिकार्यं करोतीति ॥ ४ ॥

॥ इति पुरुषाश्माधिकरणम् ॥

———*‡*———

५. अधिकरणम् ॥

( १ ) अधिकरणार्थं दर्शयति—प्रकृतीति ॥ प्रधानोपसर्जनकचेत नकर्तृत्ववादिनां निरीश्वरसाङ्ख्यैकदेशिनां वादं मतमस्मिन्नधिकरणे निराकरोति सूत्रकृदित्यर्थः ॥

( २ ) सूत्रे पुरुषाश्मवदिति चेदित्युक्तादन्यथानुमितौ चेति योज नामभिप्रेत्य तमंशं पूर्वपक्षपरतया व्याचष्टे—शरीरेति ॥ चेतनपद स्थाने शरीरपदस्य शरीरपदस्थाने पुरुषपदस्यैवमचेतनपदस्थाने पु रुषपदस्य पुरुषपदस्थाने प्रकृतिपदस्य प्रक्षेपेण यथेत्यादिपूर्वभाष्य

एतस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः ॥ ९ ॥
( ३ ) सू — ॐ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ॐ ॥ १० ॥
सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमस
[ मञ्जसम् ।
( ४ ) श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् ।

मत्रापि संयोज्येदं व्याख्येयम् । 'प्रवर्तते' अश्माद्यादाने । इत्यङ्गीकारेऽपीति । एवमभ्युपगम्य साधनेऽपीत्यर्थः । अनेन विमता प्रवृत्तिश्चेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवदिति पूर्वपक्षसाधकानुमानं सूचितम् । अपिशब्दो न केवलं पूर्ववाद्युक्तपक्ष इति समुच्चये । अनेन सौत्रचशब्दो व्याख्यातः । अपीत्यनन्तरं तथेतिपदं संयोज्यम् । दृष्टान्ते साध्याभाव इति तदर्थः । कुतोऽसावित्यतस्तत्र हेतुत्वेन चशब्दादाकृष्टमङ्गित्वाऽनुपपत्तेरिति पदं व्याचष्टे—शरीरेति। तस्येत्युभयत्रान्वेति । शरीरसम्बन्ध इति सप्तम्यन्तं प्रथमान्तं च । तत्राद्यस्य तस्य जीवस्य शरीरसम्बन्धेऽप्यसामर्थ्यादित्यन्वयः । द्वितीयस्य युक्तपदेनान्वयः । सुतरां शरीरसम्बन्धेन जीवस्याश्मानयनादिकार्ये प्रवृत्तिरित्येवशब्दार्थः । शरीरपदं प्रकृतेरप्युपलक्षकम् । कुतः ? शरीरसम्बन्धानुपपत्तिरित्यतस्तत्र हेतुत्वेन ज्ञशक्तिवियोगादित्यंशं असिद्धिपरिहाराय स्वतः पदाध्याहारेण व्याचष्टे—स्वत इति । स्वातन्त्र्येणेत्यर्थः। अनेन–अयथा पुरुषाश्मवदित्युक्तपक्षाद्वैपरीत्येन पुरुषाश्मवदचेतनसम्बन्धाच्चेतनं प्रवर्तत इत्येवं रूपेणानुमितावनुमानेऽपि तथा दृष्टान्ते साध्यवैकल्यम् । कुतः ? अङ्गित्वानुपपत्तेर्जीवस्याङ्गपदोक्तशरीरसम्बन्धित्वायोगात् । सोऽपि कुतः ? ज्ञशक्तिवियोगात् अङ्गसम्बन्धेन ज्ञस्य ज्ञातुर्जीवस्य सामर्थ्यायोगादिति सूत्रार्थ उक्तो भवति ॥

( ३ ) एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यविशेषेणापि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—विप्रतिषेधादिति ॥ श्रुतीत्यादिना विप्रतिषेधप्रतियोगिनो दर्शिताः । विरुद्धत्वादित्यनेन विप्रतिषेधशब्दार्थ उक्तः । न केवलं उक्तयुक्तिविरुद्धत्वादिति चकारार्थः । अनीश्वरेति । न विद्यते ईश्वरो यस्मिन्निति तत्तथोक्तम् । तच्च तन्मतं चेतिविग्रहः । अनीश्वराणां वादिनां मतमिति वा । मतमिति समुदायैकवचनम् । असमञ्जसमयुक्तमित्यर्थः ॥

( ४ ) कुतोऽनीश्वरमतानां श्रुत्यादिविरुद्धत्वमित्यत आह—श्रुतय

वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधमः ॥ इति
[ पाद्मे ॥ १० ॥

——:*ॐ*:——

६. अधिकरणम् ॥

( १ ) परमाण्वारम्भवादमपाकरोति ।

( २ ) सू—ॐ ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्॥ ॐ ॥११ ॥

इति । चशब्दौ मिथः समुच्चयार्थौ । ईश्वरमेव परं स्वतन्त्रं वदन्तीत्य न्वयः । युक्तिषु वदन्तीत्यस्य साधयन्तीत्यर्थः—श्रुतयः–' द्यावाभूमी जनयन्' ( श्वे. ३ - ३. ) ' यतो वा' ( तै. ३ - १. ) ' यस्सर्वज्ञः ' ( मुं.१-१-९. ) इत्याद्याः । स्मृतयः—' उत्पत्ति स्थितिसंहाराः' 'स्र ष्टा पाता तथैवात्ता' इत्याद्याः ।–युक्तयः– 'विमतं सकर्तृकं कार्यत्वात्' 'चिच्चैत्ये केनचिन्नियते अस्वतन्त्रत्वात्' इत्याद्याः । 'तद्विरुद्धं' श्रुतिस्मृ तियुक्तिविरुद्धं प्रकृतिस्वातन्त्र्यादिरूपमर्थमिति शेषः । यः पुरुषः त स्मादन्यः'अधमः'अयोग्येषु अवरो नास्तीत्यर्थः।नैतावता सेश्वरसाङ्ख्ये न सन्तोष्टव्यम् । यतः श्रुतयः स्मृतयश्चेति स्मृतिरीश्वरं परं वदती त्यनेन तमपि निराह । इति पाद्म इत्यनन्तरं वचनादिति शेषः । अस्य श्रुत्यादिविरुद्धत्वाद्विरुद्धतावगमादिति पूर्वेणान्वयः ॥ ५ ॥

इति अन्यथानुमित्यधिकरणम् ॥

——:*:——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणप्रतिपाद्यमाह–परमाण्विति ॥ परमाणुभ्यो जगदा रम्भः जगदुत्पत्तिरिति वादिनां वैशेषिकादीनां 'वादं'मतं 'अपाकरोति' निराकरोत्यस्मिन्नधिकरणे सूत्रकृदित्यर्थः । आरम्भकेतिपाठे परमाण वः जगदारम्भकाः तत्कारणानीति वादमित्यर्थः ॥

( २ ) सूत्रे दृष्टान्तोक्त्या लब्धपरपक्षप्रतिक्षेपकानुमाने साध्यसम र्पकेण ह्रस्वपरिमण्डलाभ्यामित्यंशेनैव परमतविरोधादीश्वरस्यानन्त गुणत्वमयुक्तमिति पूर्वपक्षस्य सूचनात्तद्विवरणेनैव पूर्वपक्षः प्रदर्शि तो भवतीत्याशयेन तमनुपन्यस्य सिद्धान्तयत्सूत्रमेवोपन्यस्य व्याच ष्टे—महदिति ॥ अत्र महत्त्वादित्याद्युक्त्या सूत्रे महदित्यादिनिर्देशो भावप्रधानः । 'कारणबाहुल्यात्कारणमहत्त्वात् प्रचयविशेषाच्च मह त् ' इति काणादसूत्रानुसारेण तथा निर्देशः । तत्र तस्येत्यस्य प्रथि

महत्त्वाद्दीर्घत्वाच्च यथा कार्यमुत्पद्यते एवं ह्रस्वत्वा
त्पारिमण्डल्याच्चोत्पद्येत ।

( ३ ) वाशब्दादन्यथैतयोरपि न स्यात् विशेषकारणाभावात्॥११॥

( ४ ) सू—ॐ ॥ उभयथाऽपि न कर्मातस्तदभावः ॥ ॐ ॥ १२ ॥

---

कत्वात् । ह्रस्वपरिमण्डलाभ्यामिति पञ्चमीसमभिव्याहारात्पञ्चम्य न्ताद्वतिः। सकाशादित्यध्याहारेण षष्ठ्यन्ताद्वा वतिः। उत्पद्यते उत्पद्ये त इति च शेषः कार्य इत्युक्तम् भवति । चः समुच्चये । तथा च वैशे षिकमते नैयायिकमते च यथा समवायिकारणीभूतत्र्यणुकचतुरणु कादिगतात् महत्त्वाख्यपरिमाणाद्दीर्घत्वाख्याच्चतुरणुकपञ्चाणुकादिग तं परिमाणाख्यकार्यमुत्पद्यते तथा द्व्यणुकगतह्रस्वत्वात् परमाणुगता त्पारिमाण्डल्याख्याच्च परिमाणात्त्र्यणुकद्व्यणुकगतं परिमाणाख्यं कार्य मुत्पद्येत इत्यर्थः । अनेन द्व्यणुकपरमाणुपरिमाणं परिमाणान्तरारम्भ कं द्रव्यसमवायिकारणपरिमाणत्वात् त्र्यणुकादिपरिमाणवदिति वै शेषिकादिमतस्य प्रतिकूलानुमानमुपन्यस्तं भवति ॥

( ३ ) त्र्यणुकादिपरिमाणस्यारम्भकत्वेऽपि द्व्यणुकादिगतस्यैतन्मा स्तु को दोषः। त्र्यणुकादिगतपरिमाणारम्भस्तु द्व्यणुकादिगतसङ्ख्य यैव सम्भवतीत्यप्रयोजकोऽयं हेतुरित्याशङ्कां परिहरन्वाशब्दं व्याख्या ति—वाशब्दादिति ॥ अस्य विशेषकारणाभावादित्यनन्तरं अध्याहृते न 'इति सूत्रकृता सूचितं' इत्यनेनान्वयः । किं सूचितमित्यतस्तदा ह—अन्यथेति । यद्युभयोः कारणगतपरिमाणत्वाविशेषेऽपि ह्रस्वत्वा देर्न कार्यमुत्पद्यते । तर्ह्येतयोर्महत्त्वदीर्घत्वयोरपि न स्यादित्यर्थः । त त्कार्यारम्भकत्वमिति शेषो वा,सकाशादिति शेषेण कार्यमित्यनेन वा ऽस्यान्वयः । न केवलं तयोरिति समुच्चयेऽपिः । ननु विशेषकारणे स ति प्रतिबन्दीमात्रं न बाधकमित्यतस्तदेवासिद्धमित्याह—विशेषेति । पक्षदृष्टान्तयोर्वैषम्यसाधकरूपस्य वा तदनङ्गीकारे बाधकरूपस्यवा नियामकविशेषस्याभावात् । भावे वा स वक्तव्यः स्यादित्यर्थः । तद भावस्तु टीकायामुपपादितः। तस्मादुपपत्तिविरुद्धत्वात् न तयोरसम वायिकारणत्वं किं त्वेतयोरेवेतिवैशेषिकाद्युक्तमसमञ्जसमेवेति न त द्विरोध ईश्वरानन्तगुणत्वस्येति भावः ॥

( ४ ) एवं वैशेषिकादिमते महत्त्वदीर्घत्वादेरसमवायिकारणत्वस्य

ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावा
न्नेदानीमपि तत्स्यात् ।
अनित्यत्वे तत्कारणाभावात् । अतः परमाणुचेष्टाभा
वात्तत्कार्याभावः ।
( ५ ) वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपप

ण्डनरीत्या समवायिकारणमात्रं निरस्तं भवतीत्यभिप्रेत्य निमित्तकारणमप्येवं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—उभयथाऽपीति ॥ ईश्वरेच्छाया इति। कार्यनिमित्तत्वेन पराभ्युपगतायाः ईश्वरेच्छायाः 'नित्यत्वे' सदातनत्वे 'तद्भावेऽपि' ईश्वरेच्छासद्भावेऽपि प्रलये 'परमाणुकर्माभावात्' तच्चेष्टाभावादन्वयव्यभिचारेण तस्यास्तत्कारणत्वायोगादिदानीं प्रलयादन्यस्मिन् अभिमतकालेऽपि ईश्वरेच्छायाः सकाशात्परमाणुकर्म 'न स्यात्' नोत्पद्येतेत्यर्थः । ततः किमित्यत आह—अत इति । अत इत्यस्य व्याख्यानं परमाण्विति । स्यादिति वर्तते । तदिति चेष्टा परामृश्यते। कार्यशब्दः प्रकृतद्व्यणुकादिकार्यपरः। एवं सौत्रस्तच्छब्दोऽपि। अनित्यत्व इत्यत्रेश्वरेच्छायाः इत्यनुवर्तते । तदिति तन्त्रम् । तथा च तस्याः ईश्वरेच्छायाः अनित्यत्वे तस्या निमित्तकारणाभावादत एव कर्मकारणीभूताया ईश्वरेच्छाया अभावादित्यर्थः । ततः किमित्यतः तदुत्तरत्वेन अत इत्याद्यत्रापि संयोज्यम् । अत्र अत इत्यस्येश्वरेच्छात इत्यर्थः । तत्कार्याभाव इत्यस्य तच्च तत्कार्यं चेति विग्रहेणेश्वरेच्छालक्षणकार्याभावः, तस्य कार्यमितिविग्रहेण परमाणुक्रियाजन्यद्व्यणुकादिकार्याभावः स्यादित्यर्थः।नित्यत्वेऽनित्यत्वे इत्युक्तोभयथेत्येतस्य दुष्यत्वेनोपस्थितेश्वरेच्छानित्यत्वानित्यत्वाख्यप्रकारद्वयपरामर्शकमित्यभिप्रैति। तद्भावेऽपीदानीमपीत्यनेनापेरर्थः उक्तः। परमाणुकर्माभावादित्यनेन न कर्मेत्येतद्यतश्शब्दशिरस्कतया व्याख्यातम् । कर्मशब्दस्यावृत्त्यभिप्रायेण स्यादित्यत्र कर्त्रनुक्तिः । अत इत्यादेरेवावृत्त्यभिप्रायेणान्ते अर्थ उक्तः।तथा च अतोऽप्यसमञ्जसं वैशेषिकाद्युक्तमितिभावः। कार्याभाव इत्यनन्तरं यत इति शेषः । अस्योत्तरत्रान्वयः ॥

( ५ ) ईश्वरेच्छाया निमित्तत्वनित्यत्वयोरभ्युपगमादाद्यपक्षोक्तदूषणं भवतामपि सममित्यत आह—वैदिकेति ॥ वैदिकैर्वेदाधिकृतैः तत्प्रामाण्यज्ञैरभ्युपगतो वैदिकः वेदगम्यो वा ईश्वरो यस्य तस्येत्यर्थः ।

द्यते । स्वत एव काले विशेषाङ्गीकृतेश्च ॥ १२ ॥

पक्ष इति शेषः । तेन विशेषार्थकतुशब्दस्यान्वयः । तेनेदं समाधानं परपक्षेऽपीति ज्ञापितम्। यद्वा—वैदिकश्चासावीश्वरश्चेति कर्मधारयः । अस्य च सर्वशक्तित्वोक्तेरित्यनेनान्वयः । तुशब्दः शङ्कापरिहारद्योतकः । तेन नायमस्मत्पक्षे दोष इति सूच्यते । अत्राद्यार्थो यस्य वेदगम्य ईश्वरस्तत्पक्षे इति तत्त्वप्रदीपे, तेनानुमानमात्रेणेश्वरमभ्युपगच्छतेति टीकायां चोक्तः । द्वितीयस्तु—ईश्वराचिन्त्यशक्तीति टीकोक्त्या तस्य वेदेनैव सर्वशक्तित्वोक्तेरिति तत्त्वप्रदीपोक्त्या च ज्ञापितः । तथा चेत्थं योजना—वैदिकेश्वरस्य पक्षे तु नायं दोषः । कुतः ? यतः सत्यामपीश्वरेच्छायां सर्वं कार्यानुत्पादादिकं ईश्वराचिन्त्यशक्तित एवोपपद्यते। साऽपि तस्य कुतः?'परास्य'इत्यादि वेदेनैवेश्वरस्य सर्वविषयकशक्तिमत्त्वोक्तेरिति न तत्र मानान्तरं मार्गणीयमित्येवकारार्थः । न च परपक्षे सममेतत् । तस्यानुमानमात्रगम्येश्वरत्वेन वेदैकगम्येश्वरत्वाभावादिति तुशब्दाभिप्रायः । इतश्च नायं दोषोऽस्मत्पक्ष इत्याह—स्वत इति । नास्मत्पक्षे प्रलये व्यभिचारदोषः । तदानीमीश्वरेच्छारूपनिमित्तसत्त्वेऽपि कालाख्यनिमित्तान्तरस्याभावेन कार्याभावस्यान्यथोपपत्तेः । न च प्रलये सोऽप्यस्तीति वाच्यम् । तदा सृष्टिकालाख्यकालविशेषस्याभावात्तस्यैव सृष्टिकारणत्वात् । न चैतत्परमतेऽपि सममिति वाच्यम् । अस्माभिः काले स्वत एव सृष्ट्याद्युपाधिमन्तरेणैव विशेषाणां स्वाभाविकसृष्टिकालत्वादिधर्माणामङ्गीकृतत्वात् । परेण तु सृष्ट्यवच्छिन्नः कालः सृष्टिकाल इति सृष्ट्याद्युपाधित एव काले विशेषाभ्युपगमेनानौपाधिकविशेषानभ्युपगमादित्युपस्कारेण वाक्ययोजना । ननु सत्यामपीश्वरेच्छायां सृष्टिकालाभावेन कार्याभावाभ्युपगमे सा मोघा स्यादित्यतोऽप्याह—स्वत एवेति । एवकारो भिन्नक्रमः । इच्छायाः इति शेषः । तथा च नैष दोषोऽस्माभिर्नित्याया अपीश्वरेच्छायाः 'काले एव' सृष्टिकाले एव 'स्वतः' अनौपाधिकानां सृष्टिविषयत्वादिविशेषाणामाविर्भावाभ्युपगमान्नैवं परेण वक्तुं शक्यम्, तेन इच्छायामनौपाधिकविशेषानभ्युपगमादित्यर्थः।यद्वा-उभयथाऽपि न कर्मेत्यस्य कालस्य नित्यत्वेऽनित्यत्वे चोक्तरीत्या न कर्मेति प्रकारेणापि व्याख्यानसम्भवात् कालस्य निमित्तकारणत्वमीश्वरेच्छानिमित्तकारणत्वनिरासन्यायेन निरस्तमित्यभिप्रेत्य तद्दोषं स्वपक्षे परिहर

( ६ ) सू—ॐ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१३॥
कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च

ति—स्वत एवेति। योजना तु—नायं दोषोऽस्मत्पक्षे। कुतः? स्वतएव स्वसृ ष्ट्याद्युपाधिमन्तरेणैव अनित्ये काले सृष्टिकालत्वादिविशेषोत्पत्त्यङ्गी कारात्तस्यैव निमित्तत्वात्। न चैवं परेण वक्तुं शक्यम्। अस्माभिः काले विशेषाणां सृष्टिकालत्वादीनां स्वतएव स्वाभाविकत्वस्यैव अ भ्युपगमात् परेण तु सृष्ट्याद्युपाधिनिबन्धनत्वाभ्युपगतेरिति। न च का लस्य कार्यमात्रनिमित्तकारणत्वात्सृष्टिकालाद्युत्पत्त्यसम्भवः। अधिक रणतयैव कालस्य सर्वकार्यकारणत्वेन सृष्टिकालादिकार्ये चात्माश्रय प्रसङ्गेन तत्र तस्याधिकरणतया कारणत्वायोगादिति वाच्यम्। का लातिरिक्तकार्येष्वेव कालस्याधिकरणतया कारणत्वाभ्युपगमात्। का ले तु तथा कारणत्वानभ्युपगमात्। परन्तु—ईश्वरोद्देश्यत्वेनाधारः कालोऽपेक्षितः। स च सृज्य एव। ईश्वरोद्देशश्च स कालस्तदैव स्या दित्येवंरूपः। इच्छाविषयत्वरूपोद्देश्यत्वं च न प्राक्सत्त्वापेक्षम्। न हि सृज्यस्य प्राक् सत्त्वमस्ति। एकस्यैवाधिकरणताधिकरणताच्च 'ईशोद्देशश्च कालश्च स्वगत एव' इति श्रुत्यादिसिद्धविशेषबलाच्चोपप द्यत इति न कश्चिद्दोषः। अथ वा—उभयथेत्यस्यादृष्टनित्यत्वेऽनित्यत्वे चेति व्याख्यानसम्भवाददृष्टस्य निमित्तत्वं ईश्वरेच्छाकालनिमित्तत्व निरासन्यायेन निरस्तमित्यभिप्रेत्य तद्दोषं स्वपक्षे परिहरति—स्वत एवे ति। काल इत्यावर्तते। अदृष्ट इति शेषः। तथा च नायमस्मत्पक्षे दो षः। कुतः?अस्माभिः काले प्रलयकाले सत्येवादृष्टे काले सृष्ट्यादिकाले एव समुद्बोधविशेषाभ्युपगमात्। न चैतदन्यमते सम्भवति। अस्मा भिः काले स्वत एव स्वाभाविकानामेव विशेषाणामङ्गीकारात्। परे ण च तदनङ्गीकारादिति योजना॥

( ६ ) एवं वैशेषिकादिपक्षे निमित्तकारणासम्भवं दर्शयित्वा सम वायिकारणमपि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—समवायेति॥ अत्र कार्यकारणपदे अवयव्यवयवपरे। आदिपदेनानित्यगुणक्रियातद्वतां सङ्ग्रहः। अथ वा कार्यकारणपदेनैषां सङ्ग्रहः। आदिपदेन नित्यगुणगु णिजातिव्यक्तिविशेषविशेषिणां प्रसङ्गाद्ग्रहणम्। भिन्नत्वाङ्गीकारादि त्यपि सम्बध्यते। ल्यब्लोपनिमित्ता पञ्चमी। तथा च द्व्यणुकादिका

भिन्नत्वसाम्यात्समवायान्तरापेक्षायामनवस्थितिः॥ १३ ॥
(७) न च तत्प्रमाणम् । प्रथमसम्बन्धासिद्ध्यैव च तदसि
द्धिः । स्वनिर्वाहकत्वे समवाय एव न स्यात् ॥ १३ ॥

योणां परमाण्वादिकारणानां च परस्परभिन्नत्वमुपेत्य समवायसम्ब न्धाङ्गीकारादित्यर्थः । अस्य हेतोः सूत्रे पूर्वस्मादनुषक्तेन नञाऽन्वयः । न समवायाङ्गीकारो युक्तः । अत एव न समवायिकारणत्वं युक्तमित्य र्थः । सम्बन्धेत्युक्त्या समवायशब्दस्य समावेशार्थत्वभ्रमो वारितः । अस्य तन्मतमसमञ्जसमित्यध्याहृतेनान्वयः । ननु भिन्नयोरवयवावय विभावविशेषणविशेष्यभावोपपत्तये समवायसम्बन्धोऽङ्गीकार्य एव । अतस्तदभ्युपगमे को दोष इत्यतः प्रवृत्तं साम्यादनवस्थितेरित्यंशं सा म्यधर्मिप्रकारप्रदर्शनपूर्वकं व्याचष्टे—तस्य चेति । समवायस्यापीत्य र्थः । न केवलं कार्यकारणादीनामित्यपेरर्थः । चशब्दस्साम्याच्चेति च सम्बध्यते । सूत्रे तु चकारो यथाश्रुतो भिन्नक्रमोपि हेतुसमुच्चयार्थः । अस्तु साम्यं, ततः को दोष इत्यत आह—समवायेति । तस्येत्येतदावृ त्तं विपरिणतमत्रापि सम्बध्यते । तस्य समवायस्य ताभ्यां समवा यिभ्यां भिन्नत्वसाम्यात् भिन्नस्य च तस्य विशेषणविशेष्यभावाद्युप पत्तये ताभ्यां समवायसम्बन्धाङ्गीकारात् तस्यापि समवायान्तरस्य तेन समवायान्तरेण भिन्नत्वसाम्यात् भिन्नस्य तस्य समवायान्तरस्य तेन विशेषणविशेष्यभावाद्युपपत्तये तेन समवायान्तरेण समवायान्त रापेक्षया निमित्तभूतयाऽनवस्थितिः स्यादिति योजना । अनवस्थिति रित्यनन्तरं यत इति शेषः । अन्यथा सूत्रविसंवादः स्यात् । अस्या प्युत्तरत्रान्वयः । अत एव सूत्रे हेतुसमुच्चयार्थश्चशब्दः ॥

(७) प्रामाणिकत्वान्नानवस्थादोषस्स्यादित्यत आह—न चेति ॥ तत्रतत्र समवायानन्त्य इत्यर्थः । बीजाङ्कुरादिवत् मूलक्षयाभावान्नान वस्था दूषणमित्यत आह—प्रथमेति । एवकारो भिन्नक्रमः कैमुत्यद्यो तकः । तथा च मूलभूतावयवावयव्यादिसम्बन्धस्यैवासिद्ध्या तदसि द्धिः । तेषां प्रथमसम्बन्धसिद्ध्यर्थं अभ्युपगन्तव्यानां सम्बन्धान्तराणां सुतरामसिद्धिरित्यर्थः । तथा चेत्यर्थयोजना । यतस्तत्र प्रमाणं नास्ति अतः प्रथमसंबन्धस्यैवासिद्ध्या तदसिद्धिः। यतएवमतोस्त्येव मूलक्षति रिति भवत्येवानवस्था दूषणमिति।माऽस्तु तर्हि समवायपरंपरा, प्रथम समवाय एव स्वनिर्वाहकोऽस्त्वित्यत आह—स्वनिर्वाहकत्वे इति । त

(८) सू—ॐ ॥ नित्यमेव च भावात ॥ ॐ ॥ १४ ॥
नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनि त्वाङ्गीकारान्नित्यमेव कार्यं स्यात। अन्यथा न कदाचित ॥ १४ ॥

---

स्येत्यनुवर्तते। तथा च तस्य समवायस्य स्वनिर्वाहकत्वे स्वस्मिन् स्वयमेव विशेषणविशेष्यभावबुद्धिजनकत्वेऽङ्गीकृते समवाय एव 'न स्यात्' न सिद्ध्येदित्यर्थः। गुणगुण्यादिभेदं तत्समवायं चाङ्गीकृत्य तस्य स्वनिर्वाहकत्वकल्पनापेक्षया लाघवेन गुणगुण्यादेरभेदमङ्गीकृत्य एकस्य द्रव्यस्यैव स्वनिर्वाहकत्वोपपत्तौ समवायवैयर्थ्यादिति भावः॥

(८) एवं परपक्षे कारणत्रयनिरासेन सृष्टिं निरस्य प्रलयनिरासार्थं प्रवृत्तं सूत्रं पठित्वा व्याचष्टे—नित्यमिति ॥ नित्यत्वादिति। सदातनत्वादित्यर्थः। 'सदातनं सत्यमिति नित्यमित्युच्यते बुधैः' इतिवचनात्। अनेन नित्यमित्यस्य भावादिति हेतावप्यन्वयो दर्शितः। चशब्दः परमाणूनां चेत्यन्वितो न केवलं समवायिकारणपरमाणूनां, किन्तु निमित्तकारणेश्वरेच्छादेश्चेति समुच्चयार्थः। 'नित्यमेव' नित्यदैव कार्यं स्यादित्यनेन नित्यमित्यस्य साध्येऽप्यन्वयः। कार्यमित्यस्याध्याहारश्च दर्शितः। न तु परपक्षे कदाचित्प्रलयं इत्येवकारार्थः। समवायसूत्रात्समवायस्येतिपदं बुद्ध्या विवेकेनानुवर्त्य समवायस्य नित्यं भावान्नित्यं नित्यदोत्पत्तिः स्यादिति सूत्रस्यार्थान्तरमभिप्रेत्याह—समवायस्येति। नित्यत्वादित्यनुवर्तते। सर्वं कार्यं नित्यमेव नित्यं जनिमदेव स्यादित्येवमत्रापाद्यस्यार्थः। न तु कादाचित्कजनिमदित्येवकारार्थः। न केवलं परमाण्वादीनामिति चशब्दार्थः। ततः किमित्यतो भावादित्यनेनोक्तं हेतुमाह—तस्यैवेति। समवायस्यैवेत्यर्थः। प्रागसतस्सत्तासमवाय एव जनिरिति परैरङ्गीकारादिति भावः। न तु विकारादेरित्येवकारार्थः। जनित्वाङ्गीकारादित्यनेन भावस्सद्भावः प्रजननं तद्रूपत्वाङ्गीकारादिति हेतोरर्थान्तरमुक्तं भवति। अनेन सौत्रश्चशब्दः कारणसमुच्चयार्थः। समवायसमुच्चयार्थश्चेति सूचितम्। केचित्तु—परपक्षे सृष्टिप्रलयनिराससमुच्चये चशब्दः किञ्चेत्यर्थक इत्याहुः। स्यादित्यनन्तरं तत इति शेषः। अस्याप्युक्तरीत्यान्वयः। समवायिकारणादिसत्त्वेपि कार्योत्पत्त्युपरमे बाधकमाह—अन्यथेति। सकलकारणसत्त्वेऽपि

( ९ ) सू—ॐ ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ ॐ ॥ १५ ॥
रूपादिमत्त्वाच्च परमाणूनामनित्यत्वं तथा दृष्टत्वाल्लोके॥१५॥
( १० ) सू—ॐ ॥ उभयथा च दोषात् ॥ ॐ ॥ १६ ॥

कार्योत्पादोपरम इत्यर्थः । न कदाचिदिति । कदाऽपि तस्मात्कार्योत्पत्तिर्न स्यादित्यर्थः । सति पुष्कलकारणे कार्यानुत्पादे तस्य तत्कारणत्वायोगादिति भावः ॥

( ९ ) एवं परमाणूनां नित्यत्वमभ्युपेत्य तदारम्भकवादो दूषितः। इदानीं नित्यत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—रूपादीति ॥ भौतिकरूपरसगन्धस्पर्शवत्त्वादिति हेत्वर्थः । तेन नेश्वरादौ व्यभिचारः । नित्यमिति पूर्वसूत्रे प्रकृताः परमाणवोऽत्र पक्षीभूता इत्याह—परमाणूनामिति । पार्थिवाप्यतैजसपरमाणूनामित्यर्थः । साध्यप्रदर्शकस्य विपर्ययशब्दस्यार्थमाह—अनित्यत्वमिति । तस्यैव स्वाभिमतप्रकृतनित्यत्वाभावरूपत्वादित्यर्थः । स्याद्यत इति शेषः । अस्योत्तरत्रान्वयः । सूत्रे विपर्ययश्चेति सम्बन्धः।तदनुसारेण भाष्येऽप्यनित्यत्वं चेति।उभयत्र चशब्दो भिन्नक्रमः । तदर्थस्तु सावयवत्वं, चकारात्सावयवत्त्वं गृह्यत इति तत्त्वप्रदीपोक्तेः । अतएव टीकायां अवयवित्वस्य द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकस्योपाधित्वमाशङ्क्य रूपादिमत्त्वादेव तत्सिद्धेरित्यनेन पक्ष एव साधनव्यापकतोक्ता । ननु रूपादिमत्त्वेऽपि अनित्यत्वं कुत इत्यतः प्रवृत्तं दर्शनादिति सूत्रखण्डं व्याचष्टे—तथेति । लोके रूपादिमति घटादावनित्यत्वस्य च दृष्टत्वादित्यर्थः । तथा चात्र व्याप्तिसद्भावान्नाप्रयोजकताऽऽशङ्केति भावः ॥

( १० ) ननु रूपादिमत्त्वेऽपि परमाणूनां नित्यत्वं किं न स्यात्,अस्तु वा नित्यत्वं किं बाधकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—उभयथा चेति ॥ परमाणूनां 'नित्यत्वे' अनित्यत्वाभावे अनित्यत्व इत्यनेन सूत्रे उभयथेत्येतन्नित्यमेव विपर्यय इतिप्रकृतनित्यत्वानित्यत्वरूपपक्षद्वयपरामर्शकमिति व्याख्यातम् । परमाणूनामित्यतः प्राग्रूपादिमतामपीत्युपस्कार्यम् । दोषादित्युक्तदोषमाद्यपक्षे संयोजयति—तद्वदिति । परमाणुवत्सर्वेषां घटादीनामपि नित्यत्वं स्यात् । अनित्यत्वं न स्यादित्यर्थः । ननु घटादेरवयवित्वात् कृतकत्वाच्च भवत्यनित्यत्वं, न परमाणूनां, तदभावात् । अतो रूपादिमत्त्वाविशेषेऽपि विशेषप्रमाणबलादस्तु घटादेरनित्यत्वं न परमाणूनामिति वैषम्यमाशङ्क्याह—विशे

नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात् । विशेष प्रमाणाभावात् । अनित्यत्वे कारणाभावात्तदुत्पत्त्य भावः ॥ १६ ॥

( ११ ) सू—ॐ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ ॐ ॥ १७ ॥

चेति । परमाणूनामनित्यत्वाभावसाधकस्यावयवित्वकृतकत्वाभावरूपस्य विशेषप्रमाणत्वेन पराभिमतस्य पक्षीभूतेषु परमाणुष्वभावादित्यर्थः । रूपादिमत्त्वादेव तत्सिद्धेरिति भावः । अनित्यत्वपक्षमनूद्य तत्र दोषादित्युक्तदोषं योजयति—अनित्यत्व इति । परमाणूनामिति वर्तते। तथा च परमाणूनामनित्यत्वे तेषां कारणाभावात्समवायिकारणाभावादुत्पत्त्यभावः स्यात् । यतएवमतो द्व्यणुकादेः समवायिकारणाभावादुत्पत्तेरप्यभावः स्यात् परपक्षे, अतः सवृष्टः अतः न तद्विरोधः प्रकृतार्थस्येत्यावृत्त्या योजना । अत्र सूत्रे चशब्दोऽप्यर्थे । न केवलमेकपक्षे दोषः, किन्तु पक्षद्वयेऽपीति समुच्चयार्थः । अथ वा—न केवलं 'उभयथापि न कर्म' इत्यत्र पक्षद्वयोक्तदोषात्, किन्त्वपसिद्धान्तदोषाच्चेति समुच्चये चशब्दः । अन्यथा परमाणुनित्यत्वे नित्यमेव कार्यं स्यादिति दोषस्योक्तत्वात्, अनित्यत्वेऽपीश्वरेच्छान्यायेन मूलकारणाभावापसिद्धान्तयोरर्थसिद्धत्वात्, उक्तयर्थाभ्यामुभयत्र दोषावगमादिदं सूत्रं व्यर्थमेव स्यात् । अतएव तत्त्वप्रदीपे—प्रथमं श्रुत्यर्थाभ्यामवगतदोषद्वयपरतयेदं सूत्रं व्याख्यायानन्तरं अथवोभयत्रापसिद्धान्ताख्यं दूषणान्तरमुच्यत इति पक्षान्तरपरतया व्याख्यातम् । न च व्यवधानायोगः । यतोऽत्र निमित्तं 'एवं परमाणूनाम्' इत्यवतारिकाटीकायां सङ्गतिविशेषाख्यं पूर्वसूत्रस्याभिहितं, तथास्य सूत्रस्य ननु रूपादिमत्त्वेपीत्यनेन विशेषाशङ्कारूपा सङ्गतिरपि तत्त्वप्रदीपटीकयोः प्रदर्शितेति ध्येयम् ॥

( ११ ) एवं प्रपञ्चेन दूषितं परमाण्वारम्भवादमप्रामाणिकत्वेनापि दूषयत्सूत्रं पठित्वा व्याचष्टे—अपरिग्रहाच्चेति ॥ श्रुतीति । श्रुतिस्मृत्यनुकूलत्वाभावात् तद्विरुद्धत्वाच्चेत्यर्थः । परमाण्वारम्भवादस्येति प्रकरणाल्लभ्यते। न केवलं पूर्वोक्तहेतुभ्य इति चार्थः । अनेन पूर्वोक्तहेतूनामनपेक्षेति साध्येनान्वयः इति सूचितम् । अत्र आद्यव्याख्याने सूत्रे अपरिग्रहादित्यस्य असूर्यपश्या राजदारा इति वदसामर्थ्येऽपि समासं निर्मक्षिकमित्यादाविव अव्ययत्वं वा आश्रित्य श्रुत्यादिपरिग्रहाभावा

श्रुतिस्मृत्यपरिगृहीतत्वाद्बाधातिशयेन अनपेक्षता ।
( १२ ) आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थकाम् ।
इति च मोक्षधर्मे ॥ १७ ॥

———:※:———

## ७. अधिकरणम् ॥

( १ ) परमाणुपुञ्जवादिमतमपाकरोति ।

---

न तदानुकूल्याभावादित्यर्थः । द्वितीयव्याख्याने तु परिगृह्यत इति परिग्रहः न परिग्रहः अपरिग्रहः इति विग्रहः। नञश्च विरुद्धार्थता। भावप्रधाननिर्देशश्च अयमिति ज्ञातव्यं, प्रधानकारणत्ववादापेक्षया अतिशयेनेत्यनेन अत्यन्तशब्दस्य अनपेक्षता अनादरणीयतेति। अनेन अनपेक्षेत्यस्य च अर्थ उक्तः। सूत्रे न अपेक्षा अनपेक्षेति विग्रहः। शिष्टः कार्येतिशेषः। परमाण्वारंभवाद इति च प्रकरणाल्लभ्यते ॥

( १२ ) यदवादि श्रुतिस्मृतिविरुद्धत्वादिति तत्स्मृतिसिद्धमित्याह–आन्वीक्षकीमिति ॥ इदं च—'इन्द्रः सृगालरूपेण बभाषे क्रुद्धमानसं' इति पूर्ववाक्ये प्रकृतस्य सृगालरूपस्य इन्द्रस्य कंचित्प्रति वाक्यम्। एतच्च 'अहमासं पण्डितको हैतुको वेद निन्दकः' इति पूर्वेण 'तस्येयं फलनिष्पत्तिस्सृगालत्वं यतो मतम्' इत्युत्तरेण वाक्येन च व्याख्येयम्। तथा हि–यतः अहं'पण्डितकः' कुत्सितो विद्वान् 'हैतुकः' शुष्कानुमानप्रामाण्यवादी अतएव स्वतर्कविरुद्धवेदपदोक्तसदागमार्थनिन्दकश्च'आसम्'अभूवं,न केवलमेतावत्,किन्तु'आन्वीक्षकीं'दृष्टवदुत्प्रेक्षारूपां 'निरर्थकां' परमात्मोत्कर्षाबोधकत्वान्निर्विषयां मोक्षासाधकत्वान्निष्प्रयोजनां तर्कविद्यामनुरक्तः तत्रातीवासक्तोऽभवम्। अतस्तस्यानुरागस्येदं सृगालत्वं फलरूपमिति । अत्रेन्द्रेण तर्कविद्यानुरागस्य जम्बुकजन्महेतुत्वोक्त्या वेदनिन्दक इत्युक्त्या च तर्कविद्यारूपपरमाण्वारम्भवादस्य 'आत्मन आकाशः' ( तै. १ - २. ) 'उत्पत्तिस्थितिसंहाराः' इत्यादिश्रुतिस्मृतिविरुद्धत्वं ज्ञायत इति न हेत्वसिद्धिः। मोक्षधर्म इत्यस्य श्रुत्यादिविरुद्धत्वं उक्तमिति अध्याहृतेनान्वयः ॥ ६ ॥

॥ इति वैशेषिकाधिकरणम् ॥

## ७. अधिकरणम् ॥

( १ ) अत्राधिकरणप्रतिपाद्यं दर्शयति—परमाणुपुञ्जेति ॥ अत्राधि

( २ ) सू—ॐ ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ ॐ ॥ १८ ॥
समुदायस्यैकहेतुकत्वं न युज्यते । उभयहेतुकेऽप्यन्यो
न्याश्रयत्वात्तदप्राप्तिः । अन्यथा सर्वदा समुदायस
त्त्वं स्यात् ॥ १८ ॥

करणे पाषण्डिप्रभेदेषु वैभाषिकसौत्रान्तिकमाध्यमिकयोगाचारभेदेन चतुर्विधेषु सौगतेषु मध्ये परमाणुसमुदाय एव गोघटादिबोधबोध्यो न त्ववयवी नाम तदतिरिक्तोऽस्तीति वादिनां वैभाषिकानां सौत्रान्तिकानां च मतं निराकरोति सूत्रकृदित्यर्थः ॥

( २ ) अत्र सूत्रव्याख्यानेनैव पूर्वपक्षः स्फुटीभविष्यतीत्यभिप्रेत्य सिद्धान्तयत्सूत्रं पठित्वा तत्र समुदाय इति सप्तम्यन्तपदस्योभयपदार्थप्रतियोगिना एकहेतुके इत्यध्याहृतपदेनान्वयमभिप्रेत्य प्रथममपिशब्दलब्धपक्षान्तरं प्रतिषेधति—समुदायस्येति ॥ 'समुदायस्य' परमाणुसमुदायस्य एकदेशसंयोगविशेषरूपस्य 'एकहेतुकत्वं' एकपरमाणुजन्यत्वमयुक्तमित्यर्थः । अस्मिन् साध्ये हेतुस्तु सूत्रे विरोध इत्यध्याहृतपदेन सूचितः एकस्मात्समुदाय इत्यस्य व्याहतेरित्येवंरूपो द्रष्टव्यः । इदानीं समुदाय उभय इति वाक्येन साक्षादुक्तं पक्षमनूद्य तत्र सूत्रकृदुक्तं दोषं योजयति—उभयेति । समुदाय इत्यस्ति । तथा च समुदाये उक्तरूपे 'उभयहेतुके' मिलितोभयहेतुके एकदेशस्थानेकपरमाणुहेतुकेऽङ्गीकृतेऽपि 'तदप्राप्तिः' तस्य समुदायस्याप्राप्तिरनुपपत्तिरेवेत्यर्थः । न केवलमेकहेतुक इत्यपिशब्दार्थः । कुतोऽप्राप्तिरित्यतस्तत्र तस्मादिति व्यस्ततत्पदेनोक्तं हेतुं दर्शयति—अन्योन्येति । उभयोरिति बुद्ध्या विवेकेन सम्बध्यते । तथा च मिलितानेकतः समुदायसिद्धिः समुदाये सति मिलितानेकत्वसिद्धिः इत्युभयोर्मिलितानेकत्वसमुदाययोः कार्यकारणयोः परस्पराश्रयभावापातादित्यर्थः । तदप्राप्तिः समुदायानुपपत्तिरित्यर्थः । इदानीमुभयहेतुक इत्यस्य विरलानेकहेतुकेत्यर्थमुपेत्य तेनोक्तं पक्षान्तरमनूद्य दूषयति—अन्यथेति । समुदायस्योक्तविधत्वमनङ्गीकृत्य नानादेशस्थानेकपरमाणुहेतुकत्वेऽङ्गीकृते इत्यर्थः । अत्र पक्षे समुदाय इत्यनेन अनेकत्वसङ्ख्या विवक्षिता । समुदायत्वं तेषामिति शेषः । तथा च सर्वदा सतां तेषां विरलानेकपरमाणूनां सर्वदा समुदायत्वं तदुत्पादकत्वं स्यात् । ततश्च समुदायस्यापि सर्वदा सत्त्वं स्यात् । तथा च प्रलयाभ्युपगमविरोध इति योज

( ३ ) सू—ॐ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ ॐ ॥ १९ ॥

सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यव

ना । समुदायस्येति पाठान्तरम् । यस्मादेवं समुदायस्याप्राप्तिः तस्मात्स एव गोघटादिबुद्धिवेद्यो न त्ववयवी कश्चिदस्तीति पक्षो न युक्त इति भावः ॥

( ३ ) उक्तमाक्षिप्य समादधत्सूत्रं पठति—इतरेतरेति ॥ अत्र षष्ठयन्ततया विपरिणतस्य समुदायस्येति पदस्य व्यवहार इत्यस्य वा अनुवृत्तिः, इतरसहितं इतरत् इतरेतरत् तस्य प्रत्ययः तद्विषयापेक्षाबुद्धिः इतरेतरप्रत्ययः । स निमित्तभूतो ययोर्वित्तिव्यवहारयोस्तावितरेतरप्रत्ययाविति व्यधिकरणो बहुव्रीहिः । ततः 'अर्श आदिभ्यो ऽच्' विषयतासम्बन्धेन तद्वान् । यद्वा—इतरत् इतरत्र प्रत्ययः इदं चेदं चेत्यपेक्षाबुद्धिः यस्य व्यवहारादेर्निमित्तभूतः स तथोक्तः । तस्य भावस्तत्वं, तस्मादिति विग्रहं चाभिप्रेत्य समुदायस्य विरलानेकहेतुकत्वपक्षोक्तदोषोद्धाराय तत्र हेतुकथनार्थं प्रवृत्तमाक्षेपांशं तावद्व्याचष्टे—सर्वदेति । अपिर्यद्यपितथापीत्यर्थे । नञावर्तते । योजना तु-यद्यपि विरलानेकहेतुकः समुदायः सर्वदा विद्यमानो नित्य एव भवति, तथाऽपि न प्रलयानुपपत्तिदोषः । कुतो? यतोऽनेकत्वसङ्ख्यारूपः समुदायः सर्वदा न व्यवह्रियते न प्रतीयते च । न च विद्यमानत्वे व्यवहाराद्यभावोऽपि कुत इति वाच्यम्। यतः 'परस्परापेक्षयैव' इदं चेदं चेति परस्परज्ञानापेक्षयैव 'व्यवह्रियते' तज्जन्यानेकत्वज्ञानेन तादृशव्यवहारेण च विषयीक्रियते । अपेक्षाबुद्ध्यभावे तु न प्रतीयते न व्यवह्रियते । न च प्रलये परस्परापेक्षाबुद्ध्यभावोऽपि कुत इति वाच्यम् । यतः परस्परापेक्षा परस्परापेक्षयैव मेलनरूपपरमाणुसामीप्यापेक्षयैव भवति । विप्रकृष्टे इदं चेदं चेत्यपेक्षाबुद्धेरदर्शनादिति परिहारांशं व्याचष्टे—नेति । नेत्येतद्विवृणोति-परस्परेति । परस्परं प्रत्येति विषयीकरोतीति परस्परप्रत्ययः अपेक्षाबुद्धिः तदपेक्षयेत्यर्थः । व्यवहार इत्यनेन तत्कारणज्ञानमप्युपलक्ष्यते । तथा च समुदायस्य नित्यत्वेऽपि तद्वित्तिव्यवहारयोरपेक्षाबुद्धिनिबन्धनयोः कादाचित्कतया न प्रत्ययानुपपत्तिदोष इत्येतन्न युक्तमित्यर्थः । कुतो नेत्यतस्तत्र तदप्राप्तेः समुदाये कदाऽपि वित्तिव्यवहारयोरभावापातादिति पूर्वसूत्रानुवृत्तहेतुमभिप्रेत्य तदुपपादकत्वे

ह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्यं विनष्टत्वा
त्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते ।
( ४ ) कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥ १९ ॥

न प्रवृत्तमुत्पत्तीति सौत्रहेतुं तात्पर्यतो व्याख्याति—एकमिति । 'तस्य' विरलानेकपरमाणुजन्यसमुदायस्य 'एकं' एव 'कार्यमुत्पाद्य नष्टत्वात्' इत्यर्थः । तथा च प्रथमं विरलपरमाणूनां मिलितपरमाणूत्पादकत्वं मिलितानां च दर्शनं ततः इदं चेदं चेतिपरस्परापेक्षाप्रत्ययः, ततो व्यवहारादिः, तत्र द्रष्टा पुरुषः परमाणवश्च क्षणिकाः ते चैकमेव कार्यमुत्पाद्य नश्यन्तीत्यङ्गीकुर्वतां सौगतानां मते प्रथममेकस्य परमाणुदर्शनम् , अथ तत्रैव तस्यैवापेक्षा बुद्धिः अथ तत्रैव तस्यैव व्यवहारादीति क्रमो न युज्यते । तन्मते सर्वेषां क्षणिकत्वेन दर्शनबुद्धिव्यवहारादीनां एकविषयत्वस्यैकाधिकरणत्वस्य चायोगादिति भावः । अनेनोत्पत्तिनिमित्तमात्रत्वादिति सूत्रशेषस्य परमाणूनामेककार्योत्पत्तावेव निमित्तत्वात् द्वितीयादिक्षणवृत्तिदर्शनापेक्षाबुद्ध्यादिरूपकार्यान्तरोत्पत्तावनिमित्तत्वात् तेषामेकं समुदायाख्यं कार्यमुत्पाद्य नष्टत्वात् पुनस्तेभ्यः कार्यान्तरोत्पत्त्ययोगादित्यर्थ उक्तो भवति ॥

( ४ ) ननु विरलपरमाणुजन्यानां मिलितपरमाणूनां स्थायित्वमङ्गीक्रियते । ततस्तद्विषये दर्शनापेक्षाबुद्धिव्यवहारा भवेयुरतो नोक्तदोष इत्यत आह—कारणे सतीति॥ हियतस्तस्य सौगतस्य नियमः। अस्तीति शेषः । अस्मातस्तेषां स्थायित्वाभ्युपगमे प्रतिक्षणं कार्योत्पादकत्वप्रसङ्गः। तथाचाल्पतरकालेऽप्येकैकस्मात्परमाणुपुञ्जात्मकाद्घटादनेककार्योत्पत्त्या कुलालशालापरिपूर्तिप्रसङ्ग इत्युपस्कृतवाक्येनान्वयः। यद्यपि क्षणिकत्वहानिरेव वक्तव्या, न तूक्तबाधकम् । तथापि क्षणिकत्वहानिरेव क्षणिकत्वाभ्युपगमे नियमाख्यकारणप्रदर्शनेनोक्ता वेदितव्या । अस्मान्नियमात्स्थायित्वाभ्युपगमे कुलालशालापरिपूर्तिप्रसङ्गाद्धि तैः क्षणिकत्वमभ्युपगतम् । अत्र तत्त्वप्रदीपे—इतिचेत्कार्यसम्भूतिमात्रव्यावृत्तिकारणमित्यनुभाष्यदिशा द्वितीयसूत्रांशस्य कारणस्य सदृशकार्योत्पत्तावेव निमित्तत्वादित्यर्थमभिप्रेत्य तदनुसारेणैकं सदृशं कार्यमुत्पाद्य तस्य विनष्टत्वान्नापेक्षाप्रत्ययादिरूपविसदृशकार्योत्पत्तिर्युज्यते । कुत एतत् ? कारणे सति कार्यं भवत्येवेति तस्य नियमो, न पुनर्विशेषकार्यमपीति भाष्यस्याप्यर्थ उक्तः । न चैवं टीकायास्तद्वि

( ५ ) सू—ॐ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ ॐ ॥ २० ॥
( ६ ) कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्यो त्पत्तिः ॥ २० ॥
( ७ ) सू—ॐ ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ ॐ ॥ २१ ॥

रोधः , सुधाविरोधश्चेति वाच्यम् । द्वितीयतृतीयसूत्रयोरर्थान्तराभिप्रायेण तत्प्रवृत्त्या विरोधाभावात् ॥

( ५ ) एवं विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिमभ्युपेत्य व्यवहाराद्यसम्भवो दर्शितः । अथ विसदृशकार्योत्पत्तिमपि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—उत्तरेति ॥ कार्यशब्दः सदृशकार्यपरः । विषयसप्तमीयम् । सामर्थ्यादिति शेषः । तथा च कारणस्य सदृशकार्यजननएव सामर्थ्यादित्यर्थः । न तु विसदृशकार्योत्पत्तौ । अन्यथा घटात्पटोत्पत्तिप्रसङ्गात् इत्येवशब्दार्थः । कार्यकारणपदाभ्यां उत्तरपूर्वशब्दौ व्याख्यातौ । कार्योत्पत्तावेव कारणस्य सामर्थ्यादिति हेत्वन्वययोग्यं सूत्रे नञनुवृत्त्या लब्धं साध्यं दर्शयति—नेति । विशेषेभ्यो विरलेभ्यः परमाणुभ्यो विशेषकार्योत्पत्तिः मिलितपरमाणुरूपविसदृशकार्योत्पत्तिर्न युक्तेत्यर्थः । चशब्दो भिन्नक्रमेणात्राप्यन्वेति । न केवलं वित्तिव्यवहारयोरसम्भव इति तदर्थः । एवेत्यनेन विशेषकार्योत्पत्तिश्चेत्यनेन च सौत्रचशब्दोऽवधारणार्थः समुच्चयार्थश्चेत्युक्तं भवति ॥

( ६ ) ननु सदृशकार्यजननं समर्थमपि कारणं कार्यमुत्पाद्य पश्चात्तत्र वैसादृश्यमुत्पादयति, न चातिप्रसङ्गः । विशेषकार्योत्पत्तेरदृष्टाधीनत्वादित्यतस्तत्रोत्तरत्वेनापि उत्तरोत्पाद इति समग्रसूत्रं योजयति—कार्येति ॥ अत्र पक्षे उत्तरोत्पाद इति सतिसप्तमी । निरोधाच्चेत्यपिशब्दान्वयः । तथा च 'उत्तरोत्पादे' कार्योत्पत्तौ सत्यामेव 'पूर्वनिरोधात् ' पूर्वस्य कारणस्य विनाशाच्च नोक्तविशेषकार्योत्पत्तिर्युक्तेत्यर्थः । अन्यथा पूर्वनिरोधात् पूर्वाचार्याङ्गीकृतक्षणिकत्वविरोधादिति चशब्दसूचितार्थः । तत्त्वप्रदीपे तु इतश्च न विशेषकार्योत्पत्तिरित्यवतारितत्वात् चशब्दस्य पूर्वहेतुसमुच्चायकत्वमुक्तम् । अतएवैकं कार्यमिति पूर्वहेतुव्याख्यानरूपं भाष्यमपि विशेषकार्योत्पत्तिनिरासकतया व्याख्यातम् ॥

( ७ ) एवं विसदृशकार्योत्पत्तिनिरासेन व्यवहारादिकं पराकृत्येदानीं प्रतिक्षणकार्योत्पत्तिमेव निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—अस

कारणे विनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः।
(८) तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम् ॥ २१ ॥
(९) सू—ॐ ॥ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ ॐ ॥ २२ ॥

---

तीति ॥ कारणे विनष्ट इत्यनेनासतीत्यस्यार्थ उक्तः। कार्यमुत्पद्यते चेदित्यनेन सूत्रे उत्तरोत्पाद इत्यस्यानुवृत्तिः सूचिता। अस्य पक्षान्तरत्वद्योतनाय-चेदिति। यदीत्यर्थेऽयम्। अतस्तर्हीति लभ्यते। तदिति तन्त्रं। तस्य तत्कार्यमिति प्रतिज्ञायाः सैद्धान्तिकप्रतिज्ञापदानां हानिर्विरोधः स्यादित्यर्थः। कार्यकाले कारणस्य सत्त्वावश्यंभावेन तदनभ्युपगमे तस्य तत्कार्यत्वमिति व्यपदेशो विरुद्ध इति भावः ॥

(८) पक्षान्तरोद्घाटनपरमन्यथेत्येतद्व्याचष्टे—तत्काल इति ॥ कार्योत्पत्तिक्षण इत्यर्थः। कारणे सत्येवकार्यमुत्पद्यते चेदिति पर्यवसितार्थः। यौगपद्यं स्यादिति शेषः। कुत इत्यतः सूत्रकृदभिप्रेतहेतुमाह-विनाशकारणाभावादिति। कार्योत्पत्तिक्षणरूपद्वितीयक्षणे कारणस्य सत्त्वेन तस्यास्तद्विनाशकत्वायोगात्, विनाशकान्तरस्य चाभावात्। तृतीयादिक्षणेऽपि सतस्तस्मात्पुनः कार्योत्पत्तयः स्युः। कारणे सति कार्यं भवत्येवेति नियमात्। तेभ्यस्तथेति सर्वकार्याणां यौगपद्यमविच्छेदेनोत्पत्तिः स्यादित्यर्थः। एवं तत्काल इति वाक्यं यस्मिन् काले कारणमस्ति तत्काले कारणसत्त्वकाले कार्यमस्ति चेत् तस्यापि किञ्चित्कार्यकारणत्वेन तत्सत्त्वकाले कार्यान्तरस्यापि सत्त्वापत्त्या तस्याप्येवं सत्त्वापत्त्या सर्वकार्याणां विनाशकारणाभावाद्यौगपद्यं युगपदवस्थानं स्यात्। ततश्चैकस्यां घटिकायां कुलालशालापरिपूर्तिप्रसङ्ग इत्यपि व्याख्येयम्। अतएव कारणे विनष्टे कार्यमुत्पद्यते चेदिति प्रथमपक्षवैपरीत्येनान्यथाशब्दार्थमनभिधायोभयविधयौगपद्यापादनाय तत्काले कारणमस्ति चेदिति वाक्यविन्यासः कृतः ॥

(९) एवं क्षणिकवादे कार्योत्पत्तिं निराकृत्य विनाशं च निराकुर्वत्सूत्रं पठित्वा व्याचष्टे—प्रतिसङ्ख्येति ॥ नियमादित्यनेन विच्छेदोऽनियमस्तदभावोऽविच्छेद इति हेतोरर्थान्तरमभिप्रैति। अभ्युपगमोपलक्षकमेतत्। कार्योत्पत्त्यविच्छेदादित्यर्थान्तरं तु न युज्यत इत्युत्तरवाक्यस्य न हि कार्योत्पत्तिविच्छेदो युज्यत इति योजनयाऽभिहितं बो

कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः स सन्तानश्च विनाशो न युज्यते ॥ २२ ॥

ष्यम् । सन्तानः कार्यपरम्परा निर्गतः सन्तानो यस्मान्नाशात्स तथोक्तः। सन्तानमन्तरेणेति यावत् । ससन्तान इत्यस्य प्रतियोगितया सन्तानेन सहित इत्यर्थः। विनाश इत्युभयान्वयी । कारणस्येति शेषः । चः समुच्चये । निस्सन्तानः ससन्तानश्चेत्यनेन प्रतिसङ्ख्याऽप्रतिसङ्ख्याशब्दौ व्युत्क्रमेण व्याख्यातौ । तत्राद्यनाशे सन्तानस्य नाशान्वयाभावः। द्वितीये तु तस्याप्येवं अविच्छेदोऽपि। प्रथमपक्षे कार्यविच्छेदाभावः, द्वितीये तु सन्तानोच्छेदाभावरूप इति विवेकः। विनाशश्चेति चशब्दो न केवलं विनाशद्वयसमुच्चये, किन्तु न केवलं परपक्षे कार्योत्पादो न युज्यते, किन्तु विनाशश्चेति समुच्चयेऽपि । तेन सूत्रे चशब्दोऽनुवर्त्य इति सूचितम्। न युज्यत इत्यनेनाप्राप्तिशब्दोऽनुपपत्त्यर्थकतया व्याख्यातः। यद्यपि प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधशब्दौ प्रतिसङ्ख्यापदोक्तबुद्धिपूर्वकविनाशार्थकतया बौद्धैः परिभाषितौ । तथापि घटादेः प्रतिक्षणविनाशस्याबुद्धिपूर्वकत्वात् सन्तानेन सहात्यन्तिकविनाशस्य मुसलप्रहारादिजन्यस्य प्रायेण बुद्धिपूर्वकत्वात्प्रतिक्षणविनाशसन्तानविनाशौ तदुभयशब्दार्थत्वेनोक्तावित्यदोषः । प्रतिक्षणं जायमानस्य घटादेः निस्सन्ताननाशस्य प्राथमिकत्वादात्यन्तिकनाशस्य ससन्तानस्य चानन्तरभावित्वात् तदभिप्रायेण भाष्ये व्युत्क्रमेण व्याख्यानम्। अनेन न केवलं क्षणिकमते कार्योत्पत्तिर्युक्ता, किन्तु प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधावपि, कुतोऽविच्छेदात् । न हि कार्योत्पत्तिविच्छेदो युज्यते। क्षणिकत्ववादिना हि प्रतिक्षणं कारणं कार्यमुत्पाद्य नश्यतीति वक्तव्यम् । अन्यथा सन्तानसाहित्येन नाशापत्तेः। क्षणिकत्वविरोधाच्च। क्षणिकस्य चोत्पत्तिकाल एव वियोगकालः। एवंचेत् कार्योत्पत्तिकाले सतः कारणस्य तद्वियोगकालेऽपि सत्त्वं प्राप्तम् । अन्यथा कार्येण वियोगानुपपत्तेः। एवं वियोगकालेऽपि कारणं कार्यमुत्पादयेत्। सतोऽपि कारणस्य कुतः कार्योत्पादकत्वम्, अविच्छेदात्, कारणे सति कार्यं भवत्येवेति नियमाभ्युपगमात्। एवं तदुत्पत्त्यनन्तरमपि कार्यान्तरमुत्पादयेदिति सिद्धः कार्योत्पत्त्यविच्छेदः। एवं सतो हि घटस्यात्यन्तिको नाशः न त्वसतः, अतोऽसौ सत्त्वात्कार्यमुत्पादयेदेव । कुतोऽविच्छेदात् । कारणे सति कार्यं भवत्येवेति निय

( १० ) सू—ॐ ॥ उभयथा च दोषात् ॥ ॐ ॥ २३ ॥
कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः । अनियमे कार्यानुत्पत्तिः॥२३॥

---

मात्, तत्कार्यं चैवमिति कार्यपरम्परायाः अविच्छेदात् कथं सन्तानोच्छेदावसर इत्यतोऽपि न क्षणिकपक्षो युक्त इति सूत्रार्थ उक्तो भवति । केचित्तु—अविच्छेदादित्यस्य विच्छेदाभावादित्यर्थः । कारणे सति कार्यं भवत्येवेति नियमादिति भाष्योक्तहेतुस्तूपस्कृतः, न सौत्रपदोक्त इति कारणस्य कार्योत्पत्त्युत्तरक्षणेऽपि सत्त्वमिति चाहुः ॥

(१०) ननु तथाऽपि सतां भावपदार्थानां न क्षणिकता निषेद्धुं शक्या, घटादेर्घटाद्यन्तररूपार्थक्रियाकारित्वं खलु सत्त्वं नाम । न च तत् क्षणिकतामन्तरेणोपपद्यते । यद्याद्यक्षणे घटो घटान्तरमुत्पाद्य न स्वयं नश्यति, तर्हि घटान्तरमपि तथेत्यनन्तकार्यापातः । ततश्चैकस्यां घटिकायां कुलालशालापरिपूर्तिस्स्यात् । अतोऽर्थक्रियाकारित्वरूपसत्त्वसिद्ध्यै क्षणिकत्वमेष्टव्यं भावानामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—उभयथेति॥ नियमे अनियमे इत्यनेन उभयथेत्येतद्व्याख्यातम् । सर्वदा कार्यभावात् । क्षणिकमते कार्यस्य यावत्कारणभावित्वादित्यनेन दोषादिति सौत्रहेतोरुपपादकश्चशब्दसूचितो हेतुर्दर्शितः । 'न कार्यकारणविशेषः' सव्येतरगोविषाणवत् कार्यकारणयोर्विशेषः कार्यकारणभावो न स्यादित्यनेन 'कार्यानुत्पत्तिः' यतः कार्योत्पत्तिर्न स्यात् इत्यनेन च पक्षद्वयेऽपि दोषादित्युक्तो हेतुर्विवृतः । तत्रानियमपक्षे कारणे सत्यपि कदाचित्कार्याभावाङ्गीकारे तत्काले कारणस्यार्थक्रियाकारित्वाभावेनासत्त्वापातिः । ततश्चासतः कारणात् कदाऽपि कार्योत्पत्तिर्न स्यादित्यनिष्टप्रसङ्गान्तरोपस्कारेण सौत्रहेतुर्योज्यः । एवमनियमपक्षे कारणस्य घटादेः अर्थक्रियाकारित्वरूपसत्त्वाभावेन ततः कल्प्यमाना क्षणिकताऽपि व्याहन्येतेति चशब्दसूचितानिष्टप्रसङ्गान्तरं च द्रष्टव्यम् । कार्योत्पत्तिरित्यनन्तरं नान्यतरपक्षावलम्बेन घटादीनां घटाद्यन्तररूपार्थक्रियाकारित्वेन सत्त्वं वाच्यम्, किन्तु जलाद्याहरणादियोग्यत्वेनेति परोक्तापादकासिद्धेर्न तदनुपपत्त्या क्षणिकता कल्प्येत्यसमञ्जसमिदं दर्शनमिति वाक्यशेषः । अनेन च सौत्रचशब्दस्य परपक्ष एवोभयथा दोषसत्वादस्मत्पक्षे च दोषाभावादिति हेतुसमुच्चायकत्वं

( ११ ) सू—ॐ ॥ आकाशे चाविशेषात् ॥ ॐ ॥ २४ ॥
दीपादिषु विशेषदर्शनात् क्षणिकत्वेनान्यत्रापि क्ष णिकत्वमनुमीयते चेदाकाशादिष्वविशेषदर्शनादन्य त्रापि तदनुमीयेत ॥ २४ ॥

प्रतिज्ञासमुच्चायकत्वं च अभिप्रैति ॥

( ११ ) ननु माभूदर्थापत्त्या क्षणिकत्वसिद्धिः। तथाऽपि विमतं क्षणिकं, सत्त्वात्, यत्सन्न तत् क्षणिकम्, यथा दीपादि, सन्तश्चामी भावाः पदार्था इत्यनुमानेन सेत्स्यति। न च दृष्टान्ते साध्यवैकल्यम्। यद्विरुद्धधर्माधिकरणं तन्नानेति व्याप्तेः। पूर्वोत्तरक्षणयोः प्रदीपे परिमाण विशेषदर्शनेन वस्तुभेदस्याप्यावश्यकत्वात्तत एव क्षणिकतासिद्धेरि त्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—आकाशे चेति ॥ दीपादिष्विति वायुक्तानुमानदृष्टान्तेषु दीपदेहफलेष्वित्यर्थः। विशेषेति। पूर्वोत्तरक्षणयोः परिमाणविशेषदर्शनात्,ततएव विशेषस्य भेदस्यापि दर्शनात्सिद्धत्वादित्यर्थः। 'क्षणिकत्वेन' क्षणिकत्वस्य निश्चितत्वेनेत्यर्थः। तद्दृष्टान्तेनेति शेषः। अन्यत्रापीति। दीपाद्यन्यनीलादिभावपदार्थेऽपीत्यर्थः। अपिः समुच्चये। अनेन चशब्दो विवृतः। चेद्यदि तर्हीति शेष। आकाशादीत्यादिपदेन प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधयोर्ग्रहणम्। अत एव विष्णुतत्त्वनिर्णयटीकायां सेयं दिगित्यादिप्रत्यभिज्ञाया इत्येतद्व्याख्यावसरे दिक्शब्देनात्राकाशो गृह्यते, अव्याकृताकाशस्यैव दिक्त्वज्ञापनार्थम्। आदिशब्देन सोयं विनाश इत्यस्य ग्रहणमित्युक्तम्। न च निरोधयोर्द्वित्वात् आदिष्विति बहुवचनानुपपत्तिरिति वाच्यम्। अवकाशात्मकानां प्राच्यादिदिशामप्यादिपदेन ग्रहणात्। न चैवं 'आकाशो द्वौ निरोधौ च नित्यं त्रयमसंस्कृतं' इति बौद्धवचनविरोधः। दिशामाकाशप्रभेदत्वेन वास्तवैक्यविवक्षया तदुपपत्तेः। अविशेषेति। परिमाणविशेषादर्शनादित्यर्थः। तत एव 'अविशेषस्य' अभेदस्यापि सिद्धत्वादित्यपि व्याख्येयमेतत्। अक्षणिकत्वेन तद्दृष्टान्तेनेति च शेषः। अक्षणिकत्वस्य निश्चितत्वेनेत्यर्थः। अन्यत्राकाशादेर्नीलघटादिप्रपञ्च इत्यर्थः। तदक्षणिकत्वमपीत्यपिशब्दो भिन्नक्रमः। न केवलमाकाशादिषु, किन्तु अन्यत्रापीति वा। अनुमीयते यत इति शेषः। अस्यास्तद्व्याप्तिस्तेन सत्वेन क्षणिकत्वस्याप्राप्तिरिति प्रकृतप्रति

( १२ ) सू—ॐ॥ अनुस्मृतेश्च ॥ ॐ ॥ २५ ॥

ज्ञयाऽन्वयः। अत्र वाद्युक्तानुमाने प्रतिपक्षानुमाने च पक्षसाध्यहेतुदृष्टा न्तानां समुच्चये अर्थापत्त्यनुमानसमुच्चये च सौत्रश्चशब्दः। तथा चा यं सूत्रार्थः—यदि दीपादौ विशेषात् क्षणिकत्वस्य सिद्धत्वादन्यत्रा पि तद्दृष्टान्तेन तदनुमीयते। तर्ह्याकाशेऽविशेषात् स्थायित्वस्य सिद्ध त्वेन तद्दृष्टान्तेन सत्त्वहेतुनैवाक्षणिकत्वमप्यनुमीयेत। सत्त्वहेतोराका शे दीपादौ नीलिमादौ चाविशेषात्। अतः सत्त्वहेतोः स्वेनैव प्रतिप क्षितत्वान्नानेनापि क्षणिकत्वसिद्धिः, न केवलमर्थापत्त्येति॥

( १२ ) एवं प्रतिपक्षेण सत्त्वानुमानं निरस्य प्रमाणबाधेनापि निरा कुर्वत्सूत्रं पठित्वा व्याचष्टे—अनुस्मृतेरिति ॥ तदेवेदमिति प्रत्यभिज्ञा नादिति। यद्दृष्टपूर्वं तदेवेदं घटादीति पूर्वोत्तरदेशकालसम्बन्धिनोरै क्यविषयकप्रत्यभिज्ञानादित्यर्थः। स एवाहमित्यनुक्त्वा तदेवेदमिति जडविषयकप्रत्यभिज्ञाप्रदर्शनं न परमत इवात्ममात्रस्थायित्वपरमिदं सूत्रमिति प्रदर्शनाय। चशब्दः पूर्वहेतुसमुच्चये। अस्यापि पूर्वसाध्ये नान्वयः। उक्तं हि चन्द्रिकायां—सप्तमाष्टमयोः क्षणभङ्गविरोधिस्था यित्वरूपैकसाध्यान्वयस्य सम्भव इति। ननु परिलूनपुनर्जातकुन्तल कलापे सोऽयं कुन्तलकलाप इति प्रत्यभिज्ञायाः इवास्याः प्रत्यभिज्ञायाः भ्रान्तित्वाङ्गीकारात् न तद्बाधः सत्त्वानुमानस्येत्यतः तत्र प्रत्यभिज्ञाया थार्थ्यसूचकानुपदसूचितं दोषमविशेषादिति हेतुमापाद्यापादकोपस्का रपूर्वकमाह—प्रत्यभिज्ञाया इति। 'भ्रान्तित्वे' बाधकं विनाऽपि भ्रा न्तित्वकल्पने 'विशेषदर्शनस्यापि' दीपादौ क्षणिकत्वसाधकतयोक्त परिमाणभेदादिदर्शनस्यापि। अपिः समुच्चये। 'भ्रान्तित्वं' स्याद विशेषादिति शेषः। ननु तत्त्वोद्योतटीकायामनुस्मृतेश्चेत्यादिना तृती याङ्गीकारोऽपीत्यनेनास्य सूत्रस्य तद्देशकालविशिष्टैतद्देशकालविशिष्ट वस्त्वैक्यसाधकप्रत्यभिज्ञापरतया व्याख्यानात् अस्मन्मते पूर्वोत्तरका लविशिष्टयोरैक्यसत्वेऽपि तयोर्भेदस्याप्यङ्गीकारात् तदेवेदमिति सा वधारणप्रत्यभिज्ञया चात्यन्ताभेदावगाहनेन तद्भ्रान्तित्वस्यावश्यकत्वा त् तस्याप्यापाद्यत्वमनुपपन्नमिति चेन्न। यत इदं चोद्यं सुधायामाश ङ्क्य परिहृतम्। तथा हि—ननु भवन्मते प्रत्यभिज्ञाभ्रान्तिरेव परिणा मवादे पूर्वोत्तरकालवर्तिवस्तुनोर्भेदाभेदाङ्गीकारात्तदेवेदमिति प्रत्य

तदेवेदमिति प्रत्यभिज्ञानाच्च । प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥ २५ ॥

——:*:——

८. अधिकरणम् ॥

( १ ) शून्यवादमपाकरोति—

सू—ॐ ॥ नासतो दृष्टत्वात् ॥ ॐ ॥ २६ ॥

अदृष्टत्वान्नासतः कारणत्वं युज्यते ॥ २६ ॥

---

भिज्ञया चात्यन्ताभेदावगाहनादिति चेत् । उच्यते—यदा हि पूर्वोत्तरकालभाविनोः अभेदः प्रत्यभिज्ञाविषयोऽङ्गीक्रियते तदा सावधारणस्य प्रत्यभिज्ञानस्य भ्रमत्वेऽपि तदिदमिति न भ्रमः, तेनैव च स्थायित्वसिद्धिर्भवति । यदा तु कालद्वयसम्बन्धो विषयः, तदा सावधारणमपि न भ्रम इति । तथा च तदेवेदमिति प्रत्यभिज्ञायाः तद्देशतत्कालसम्बन्ध्येवैतद्देशैतत्कालसम्बन्धीति विशेष्यमात्रैक्यविषयकत्वेनेदं भाष्यं प्रवृत्तम्, न तु विशिष्टैक्यविषयकत्वेन, तादृश्याश्च भ्रान्तित्वमानिष्टमेवेति नापाद्यत्वानुपपत्तिः । विशिष्टविषयकत्वेऽपि निरवधारणप्रत्यभिज्ञानस्याभ्रमत्वमेवेति तस्य भ्रान्तित्वापादने नानुपपत्तिः,न वा ग्रन्थान्तरविरोध इति ध्येयम् ॥ ७ ॥

॥ इति समुदायाधिकरणम् ॥

——*:*:*——

८. अधिकरणम् ॥

( १ ) अत्राधिकरणार्थं दर्शयति—शून्येति ॥ शून्यमेव जगत्कारणमिति वदतां माध्यमिकानां वादं समयं निराकरोति सूत्रकृदित्यर्थः । श्रुतिप्रामाण्यानभ्युपगमेन तद्विरोधाभावादसतस्यापि संवृतिसम्बन्धेन जगत्कारणत्वोपपत्तेः शून्यतत्वादेव जगदुदयसम्भवादीश्वरेणोपयोगाभावात्तस्य जगत्कारणत्वमयुक्तम् । तस्यैव तल्लक्षणमित्येतत् सुतरामयुक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—नेति । अदृष्टत्वादित्यतः । प्राक् प्रमाणाभावादित्युपस्कार्यम् । तथा चासतः सर्वधर्मविकलत्वरूपासत्त्वोपेतस्य शून्यस्य जगत्कारणत्वं न युज्यते । कुतः? तत्र प्रमाणाभावात् । न चासिद्धिः । शून्यकारणत्वस्य 'दृष्टत्वात्' अप्रत्यक्षत्वात् । तत एव तदुपजीव्यनुमानाविषयत्वात् । एवमेव शून्यकारणतावगमकागमस्याप्यदर्शनादिति योजना । एतेन सौ

(२) सू—ॐ ॥ उदासीनानामपि चैवं सिद्धिः ॥ ॐ ॥ २७ ॥
असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जिता
नां खपुष्पादीनामपि सकाशात्कार्यसिद्धिः ।

अहेतोरीश्वरादौ व्यभिचारो निरस्तः । अस्य हेतुसाधकहेतुत्वाभ्युप गमेन साक्षाद्धेतुत्वानभ्युपगमात् । अत एव तत्त्वप्रदीपे—प्रमाणेनाद्द ष्टत्वादित्येवोक्तम् ॥

(२) नन्वदृष्टमपि जगत्कारणत्वं शून्यस्याभ्युपगतं चेत्को दोषः । ननूक्तमदृष्टत्वादेव अप्रामाणिकत्वान्नाङ्गीकारार्हतेति, न अदृष्टत्वेन दृ ष्टानुमानानुपपत्तावपि सामान्यतो दृष्टत्वोपपत्तेः । कारणस्य हि का र्यवत् वस्तुत्वेन सत्त्वे निषिद्धे कार्यत्वेन हेतुनाऽसत एव जन्म सेत्स्य तीत्याशङ्कापरिहाराय पराभिप्रेतानुमानानां तर्कप्रतिघातं वक्तुं प्रवृत्तं सूत्रमुपन्यस्य व्याचष्टे—उदासीनानामिति ॥ असत इत्यस्य सर्वधर्म विकलत्वादसतः शून्यस्येत्यर्थः । न तुच्छस्येति । शून्यं परमार्थसदि ति परैरभ्युपगमादसतः कारणत्वेऽङ्गीकृत इत्यनेनापादकप्रदर्शकैवंश ब्दः पूर्वप्रकृतासत्कारणत्वपरामर्शकतया व्याख्यातो भवति । आपाद्य समर्पके उदासीनानामपि सिद्धिरित्यंशे उदासीनानामिति पदमनूद्य हेयोपादेयबुद्धिविषयत्वात् उद्गत्य आसीनानामिति तत्त्वप्रदीपोक्तेः । उदास्यन्त इति उदासीना इति व्युत्पत्तिमाश्रित्य चन्द्रिकारीत्योदासी नशब्दस्य हेयोपादेयबुद्ध्यविषयखपुष्पादिषु लक्षणामाश्रित्य वा हेयोपा देयबुद्धिवर्जितानां हेयत्वोपादेयत्वोपेक्षणीयत्वबुद्धिविषयताशून्याना मिति व्याख्यातम् । बुद्धिविषयत्वशून्यानामिति हेतुगर्भविशेषणपद स्य व्याख्यानात् बुद्धिशून्ये कार्यहेतौ तन्त्वादौ व्यभिचारो निरस्तः । अनेन चापाद्यस्य खपुष्पादेः कार्यसाधकत्वस्यानिष्टत्वे हेतुरुक्तो भव ति । 'खपुष्पादीनां' गगनकुसुमादीनां । आदिपदेन सप्तमरसादिकं गृह्यते । न केवलं पराभिमतशून्यात्कार्यसिद्धिरिति समुच्चयेऽपिशब्दः । षष्ठ्यर्थकार्यकारणभावसम्बन्धविवरणाय सकाशादित्युक्तम् । न तु शेषतया । उदासीनानामित्यस्य सिद्धिरित्यनेन साक्षादन्वयभ्रमवार णाय तदन्वयाय च सिद्धिपदमुदासीनसम्बन्धिकार्यसिद्धिपरतया व्याख्यातम् । कार्यपदं सौरभ्यपीनतादिकार्योत्पत्तिपरं स्यादित्यत्रापि सम्पद्यते ॥

( ३ ) चशब्दाच्च चेदन्यत्रापि न स्यात् अविशेषात् ॥ २७ ॥

( ४ ) सू—ॐ ॥ नाभाव उपलब्धेः ॥ ॐ ॥ २८ ॥

न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् ॥ २८ ॥

( ५ ) सू—ॐ॥वैधर्म्याच्च न स्वप्नादिवत् ॥ ॐ ॥ २९ ॥

( ३ ) खपुष्पादीनामकारणत्वेऽपि को दोष इत्यतस्तत्र स्वाभिमता सिद्धिरूप दोषोक्तिपरतया सौत्रचशब्दं व्याचष्टे—चशब्दादिति ॥ अस्याविशेषादित्यनन्तरं अध्याहार्येण इतिसूचितमित्यनेनान्वयः । किं सूचितमित्यतस्तदाह—न चेदिति । खपुष्पादीनामपि सकाशात्कार्य सिद्धिर्नास्ति चेदित्यर्थः । 'अन्यत्र' अन्यतः खपुष्पाद्यन्यबौद्धाभिमतशू न्यात् 'अपि' जगदाख्यकार्योत्पत्तिः 'न स्यात्' इत्यर्थः । ननु शू न्यस्य कारणत्वे खपुष्पादिकारणत्वापादनमसङ्गतं हेत्वभावादित्यत आह—अविशेषादिति । शून्यस्य खपुष्पादेश्चासत्त्वाविशेषादित्यर्थः । तथा च सर्वधर्मविकलत्वरूपासत्त्वं हेतुः । अत्र दृष्टान्तस्तु शून्यमेवे ति भावः । अनेन तर्कस्य विपर्ययपर्यवसानेन प्रकृतोपयोग उक्तो भ वति ॥

( ४ ) भवेदेतद्दूषणं यदि शून्यतत्त्वात्परमार्थतो मृत्पिण्डाद्घट इव जगदुत्पद्येत । नैतदस्ति । शून्यस्य जगदाकारेण परिणामानभ्युपगमा त् । किन्तु संवृतिशब्दिताज्ञानविशेषादसतो रजताकारेणेव शून्यस्या पि जगदाकारेण अवभासाख्यविवर्तत्वाभ्युपगमादित्याशङ्कां परिहर त्सूत्रमुपन्यस्य व्याचष्टे-नेति ॥ एवकारो भिन्नक्रमः । तथा च 'शून्य मेव' शून्यरूपमसदेव 'जगत्' जगदाकारेणावभाति न परमार्थतो जगद स्तीति न वाच्यमित्यर्थः । न केवलमेतावत्, किन्त्वदृष्टिदोषपरिहारा य यदसदेव रजताकारेणावभातीति वचनं तदपि न युक्तमिति चश ब्दार्थः । अनेन सौत्राभावशब्दो भवतीति भावः सन्, न भावोऽभाव इति व्युत्पत्त्या असत्पर इत्युक्तं भवति। 'दृष्टत्वात्' सदिति प्रतीयमान त्वादित्यनेन उपलब्धेरिति सौत्रहेतुर्व्याख्यातः । एवं दृष्टत्वादित्येतत् नेदं रजतं, किन्तु शुक्तिकैवेति बाधदर्शनादिति परोक्तसाधकनिरास कत्वेनापि व्याख्येयम् ॥

( ५ ) ननु सदिति दृश्यमानस्य स्वाप्नस्य रज्जुभुजङ्गादेश्चासत्त्वं दृष्टम् । अतो जगतस्सत्त्वेन दृष्टत्वेऽपि तद्वदसत्त्वं किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—वैधर्म्याच्चेति ॥ 'दृष्टस्य' सत्त्वेनोपल

न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात् ।

(६) न चात्र तादृशं प्रमाणमस्ति ॥ २९ ॥

—:*:—

ब्धस्य । अपिः वायुक्तहेतोः प्रतिपक्षहेतोश्च भेदे रुचिसूचको यद्यपीत्या द्यर्थे, न केवलमदृष्टस्येति समुच्चये वा । जगत इति शेषः । 'स्वप्ना दिवत्' गजतुरगादिरूपस्वाप्नपदार्थादेरिव । आदिपदेन रज्जुभुजङ्गा दिकं गृह्यते । अभावोऽसत्त्वम् । इदं चानुषक्तं पदं । शङ्क्य इति शे षः । अनेन दृष्टत्वादिति हेतोः स्वेनैव प्रतिपक्षो व्यभिचारश्च चोदि तो भवति । कुतो नेत्यतस्तत्रापि हेतुत्वेन वैधर्म्यादित्यस्य साध्यधर्मावि हीनत्वादृष्टान्तस्येत्यर्थाश्रयणेनान्वयसम्भवेऽपि सत्यवादिसिद्धान्तेऽ पि स्वप्ने मिथ्यार्थप्राचुर्यात्कतिपयार्थस्य सत्यत्वेऽपि विप्रतिपन्नत्वात् अङ्गीकारवादेन वा तंपरित्यज्य, ननु न स्वप्नो दृष्टान्तो येन तत्र सा ध्यवैकल्यम्, किन्तु स्वप्नजाग्रत्त्वम्, तस्य च मिथ्यात्वेनोभयसम्मत त्वान्नोक्तदोष इति वा यदि परो ब्रूयात्तं प्रति दोषान्तरोक्तिपरतया वै धर्म्यादिति हेतुं व्याख्याति–तस्येति । इदं चावर्तते । स्वप्न इति साव धारणम् । आदिपदेन बाधकान्तरं गृह्यते । तथा च तस्य स्वाप्नजाग्र त्वादेः तस्य जगतः सकाशात् भ्रान्त्युत्तरकाले प्रबोधानन्तरं स्वप्न ए वायं न जाग्रत् तथा नायं सर्पः किन्तु रज्जुरित्यादिबाधकप्रमाण विषयत्वरूपाद्वैलक्षण्यादित्यर्थः । अनेन परोदीरितप्रतिपक्षानुमानस्य बाधकप्रमाणविषयत्वरूपोपाधिः तदभावरूपप्रतिपक्षश्चोक्तो भवति । प्रागबाधितोपलब्धेरेव हेतुतया सिद्धान्तिभिरुपन्यासान्न व्यभिचारोऽ पीत्यप्युक्तम् ॥

(६) ननु जगत्यपि स्वप्नादिवद्बाधकादसत्त्वं किं न स्यात्तथा चो पाधेः साधनव्यापकत्वं तदभावस्यासिद्धिश्चेत्याशङ्कां सौत्रचशब्दाभि प्रायोक्त्या परिहरति—न चेति ॥ अत्र प्रकृतजगति 'तादृशं' दृष्टान्तो दाहृतबाधकप्रत्यक्षसदृशं जगदसत्त्वग्राहिबाधकप्रमाणं नास्तीत्यर्थः । अनेन न केवलं स्वप्नादेर्बाध्यत्वरूपाज्जगद्वैधर्म्यात्, किन्तु जगति बाध काभावाच्चेत्यनुक्तसमुच्चये चशब्द इत्युक्तं भवति । यद्यपि स्वप्नादौ जगद्वैधर्म्योक्तौ जगति बाधकाभावरूपस्वप्नवैधर्म्यमुक्तप्रायं, तथापि

९. अधिकरणम् ॥

(१) विज्ञानवादमपाकरोति—

सू—ॐ ॥ न भावोऽनुपलब्धेः ॥ ॐ ॥ ३० ॥

---

कण्ठतोऽनुक्तत्वादनुक्तत्वम् । न च द्वयमपि वैधर्म्यशब्देनैव वक्तुं युक्तमिति चशब्दो व्यर्थ इति वाच्यम्। आवृत्तिं विनैव तत्सूचनार्थत्वात्। न च चशब्दस्योक्तशङ्कापरिहारकतया व्याख्याने तत्त्वोद्योतटीकायां इह चशब्देन सूचितं जगद्धर्मिकवैधर्म्यं वैधर्म्यशब्दार्थत्वेनाङ्गीकृत्य दूषणान्तरसमुच्चयार्थश्चकार इत्युक्तत्वात् तद्विरोध इति वाच्यम् । 'चेति दृष्टे विरुद्धताम्। निष्प्रमाणत्वमप्यस्य दर्शयामास विश्वकृत्' इत्यनुव्याख्यानोक्तरीत्या मानाभावप्रत्यक्षविरोधरूपदूषणान्तरसमुच्चायकस्यापि चशब्दस्य बाधकप्रमाणाभावरूपार्थत्वस्यापि सम्भवेन विरोधाभावात् । परं तु वैधर्म्यंधर्मिव्यत्यासमात्रं । तच्च न प्रमेयविरुद्धम् । अस्तीत्यनन्तरं यत इति शेषः । अस्यातोऽपि न स्वप्नादिवदिति पूर्वेणान्वयः ॥ ८ ॥

॥ इति असदधिकरणम् ॥

——*——

९. अधिकरणम् ॥

(१) एतदधिकरणप्रतिपाद्यं दर्शयति—विज्ञानवादमिति ॥ चतुर्विधेषु सौगतेषु मध्ये वैभाषिकसौत्रान्तिकमाध्यमिकेषु त्रिषु निरस्तेषु अधुना क्रमप्राप्तं तुरीयं विज्ञानपरिणतं तन्मात्रमेवेदं जगत् न तु ततोऽतिरिक्तमिति वदतां योगाचाराणां वादं मतं निराकरोत्यस्मिन्नधिकरणे सूत्रकृदित्यर्थः । नित्यं निरञ्जनं विज्ञानतत्त्वमेव खलु विद्यमानं तन्मात्रमेवेदं जगत्, न तु ततोऽतिरिक्तमस्ति। तथा च ततएव जगदुदये नेश्वरेण कृत्यमित्ययुक्तं तस्य जगत्कारणत्वलक्षणमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—नेति । विज्ञानमात्रं तद्रूपमेव जगत् न ततोऽतिरिक्तमस्तीति न युक्तमित्यनेन न भाव इति साध्यांशः सावधारणं कृत्वा जगत्पदाध्याहारेण च व्याख्यातः। भावशब्दस्य विज्ञानार्थकत्वं च भवतेरनुभवार्थत्वात् उपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जका एवेति सुधोक्त्या सिद्धं । प्रसिद्धज्ञानपदं विहाय भाव इत्युक्तिस्तु परमते भवतीति भाव इति व्युत्पत्त्या भावशब्देन सद्विवक्षि

न विज्ञानमात्रं जगत्तथाऽनुभवाभावात् ॥ ३० ॥

( २ ) सू—ॐ ॥ क्षणिकत्वाच्च ॥ ॐ ॥ ३१ ॥

ज्ञानं क्षणिकमर्थानां च स्थायित्वमुक्तम् । अतश्च नैक्यम् ॥ ३१ ॥

( ३ ) सू—ॐ ॥ सर्वथाऽनुपपत्तेश्च ॥ ॐ ॥ ३२ ॥

तं तच्च विज्ञानमेव तन्मते तदतिरिक्तसतोऽभावादिति ज्ञापयितुम् । तथेति । विज्ञानभिन्नत्वेन जगतोऽनुभवाभावात् प्रमित्यभावात् प्रत्युत ततो भिन्नत्वेनैव अनुभवादित्यनेन हेतुर्व्याख्यातः । केचित्तु—विज्ञानमात्रमित्युक्तिस्वारस्यात् वः युष्माकं भासाकारत्वेनाभिमतं ज्ञानं न जगत्, कुतः ? तथाऽनुपलब्धेरिति व्याचख्युः ॥

( २ ) युक्त्यन्तरेणापि जगतो विज्ञानात्मकत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—क्षणिकत्वाच्चेति । ज्ञानमित्युक्त्या सूत्रे भावस्येत्यनुषङ्गो दर्शितः । क्षणिकं यत इति शेषः । ज्ञानस्य क्षणिकत्वादाशुतरविनाशत्वादित्येतदर्थानां स्थायित्वादित्यस्याप्युपलक्षकम् । चशब्दो वा तत्समुच्चायक इत्याशयेनार्थानां घटादीनां चेत्याद्युक्तमुक्तं साधितं 'उभयथा च ' इत्यादित्रिसूत्र्यामित्यर्थः । अत्रापि यत इति शेषः । अतो विरुद्धधर्माधिकरणत्वात् । चशब्दोऽप्यर्थे । न केवलं प्रमाणाभावादिति समुच्चये । नैक्यं विज्ञानजगतोरिति । अनेन सूत्रे न भावो जगदित्यनुवृत्तप्रतिज्ञाभागो व्याख्यातः ॥

( ३ ) एवं प्रत्येकं दूषितानि वैभाषिकादिबौद्धमतानि पुनः सामान्यदूषणेन पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—सर्वथेति ॥ प्रमाणाभावादित्यनेन अनुपपत्तेरित्येतत्प्रमाणसामान्यनिषेधपरतया व्याख्यातम् । नञो विरुद्धार्थत्वमाश्रित्य उपलक्षणं चाश्रित्य हेतोरर्थान्तरमाह—सर्वेति ॥ बहुश्रुतिस्मृतियुक्तिविरुद्धत्वादित्यर्थः । सर्वेति सर्वथेत्यस्य व्याख्यानम् । यद्वा–सर्वथेत्यस्य प्रत्यक्षक्षणिकत्वकल्पने प्रतिक्षणं उत्पत्तिविनाशकल्पने शून्याद्वैतकल्पने विज्ञानाद्वैतकल्पने प्रकटने प्रच्छादने वेति तत्त्वप्रदीपोक्तार्थो ग्राह्यः । सर्वेत्युक्तिस्त्वसङ्कोचाभिप्रायेणेति ध्येयम् । प्रमाणाभावतद्विरोधयोस्समुच्चये सौत्रश्चकारः । तत्त्वप्रदीपे तु–स्थायिनोर्जीवेशयोश्च अनङ्गीकारादित्यर्थ उक्तः । श्रुतयस्तु 'मर्ते ' (ऋ.१०-११२-९.) 'यच्च किञ्चित्' (महाना.११.) 'ब्रह्मण्येवेदमाविरासीत्' ( ) इत्याद्याः उक्ताः । पाशुपताद्यधिकरणेषु वक्ष्यमा

प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते प
क्षा ग्राह्याः ॥ ३२ ॥

——*✡*——

१०. अधिकरणम् ॥

( १ ) स्याद्वादिमतं दूषयति—

सू—ॐ ॥ नैकस्मिन्नसम्भवात् ॥ ॐ ॥ ३३ ॥

---

णाश्च । स्मृतयस्तु 'स एव भूयः' इत्याद्याः उक्ताः वक्ष्यमाणाश्च । युक्त
यस्तु सूत्रोक्ता एव द्रष्टव्याः । एते वेदविद्वेषिणां वैभाषिकसौत्रान्ति
कशून्यवादिविज्ञानवादिनां पक्षाः प्रेक्षावद्भिर्न ग्राह्याः नोपादेयाः इति।
अनेन नैते ग्राह्या इत्यस्याध्याहारः सूचितः। अत्र श्रुत्यादिविरोधवचन
मधिकारिणं प्रत्येव न तु परं प्रति तन्मते तेषां अप्रामाणिकत्वादिति
ध्येयम् । तथा चायं तत्त्वप्रदीपदिशा सूत्रार्थः । सर्वथा सर्वप्रकारेषु
प्रत्यक्षक्षणिकत्वकल्पने परोक्षप्रत्यक्षबिम्बप्रतिबिम्बजगद्युगलकल्पने शू
न्याद्वैतकल्पने विज्ञानाद्वैतकल्पने प्रकटने प्रच्छादने वा सर्वेषां वेदद्वे
षिणां पक्षाः नोपपद्यन्ते । कुतोऽनुपपत्तेः । उपपत्तिपदोपलक्षितप्रमाण
सामान्याभावात्प्रमाणविरुद्धत्वाच्च । स्थायिनोः जीवेशयोरनङ्गीकारा
च्च । अतो न ग्राह्या इति ॥ ९ ॥

॥ इति अनुपलब्ध्यधिकरणम् ॥

—*-:*:-*—

१०. अधिकरणम् ॥

( १ ) अधिकरणार्थं दर्शयति—स्यादिति ॥ सप्तप्रकारिणो जग
तः कायपरिमाणाज्जीवात्मनो दृष्टादृष्टसाधनैश्चोत्पत्तिसम्भवात्किमी
श्वरेण कृत्यमित्ययुक्तं लक्षणसूत्रमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्य
स्य व्याचष्टे—नेति । सत्स्यादित्याद्यनुवादेन जैनोक्तस्य सूत्रकृद्बुद्धि
स्थस्य नञर्थप्रतियोगिनः सप्तभङ्गित्वस्य सूत्रे अध्याहृतैतच्छब्देन प
रामर्शः कार्य इति सूचितम् । अत्र जगत्सत्स्यादित्यनेन सत्त्वाख्यैकप्र
कारोऽभिहितः। असत्स्यादित्यनेनान्यप्रकारः । सदसत्स्यादित्यनेन स
दसत्त्वरूपोऽपरः प्रकारोऽभिहितः । ततः उक्तपक्षत्रयादन्यप्रकारादन्य
त्पुनस्ततोऽन्यत्ततोऽन्यदपि स्यादित्यनेन प्रकारचतुष्टयमनूदितम् । त
था हि—ततः सदसद्भ्यां अन्यदिति सदसद्विलक्षणत्वप्रकारोक्तिः ।
पुनः सत्स्यात्ततोऽन्यत्स्यादिति अन्वयेन सत्वे सति सदसद्विलक्षण

सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्येतच्चै
कस्मिन् युज्यते । अदृष्टत्वेनासम्भवात् ॥ ३३ ॥

(२) सू—ॐ ॥ एवं चात्माकार्त्स्न्यम् ॥ ॐ ॥ ३४ ॥

जीवस्य । शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थ

---

त्वरूपोऽन्यः प्रकारोऽनूदितः । एवमसत्स्यात्ततोऽन्यच्च स्यादित्यन्वये न असत्त्वे सत्यसद्विलक्षणत्वरूपप्रकारोऽभिहितः । तथा सदसत्स्यात्ततोन्यत्स्यादित्यन्वयेन सदसत्त्वे सति सदसद्विलक्षणत्वरूपोऽपरः इति पूर्वोक्तप्रकारत्रयेण सहास्य सप्तत्वमित्येवं रूपमेतत् । तद्दोषपरिजिहीर्षुणा जिनेनोक्तं जगतः सप्तभङ्गित्वमेकस्मिन् वस्तुनि न युज्यते इत्यर्थः । कुतो नेत्यत उक्तस्यासम्भवादेतस्यासम्भावितत्वादिति हेतोर्हेत्वन्तरसाध्यत्वात्तद्धेतुत्वेनासत इति सूत्राददृष्टत्वादिति पदमनुवर्त्य योजयति—अदृष्टत्वेनेति । सदसद्भ्यामन्यभङ्गिन एवाप्रामाणिकत्वेन एकस्मिन् सप्तभङ्गित्वस्य सुतरामप्रामाणिकत्वेनेत्यर्थः ॥

(२) यदपि जीवस्याणुत्वे सर्वाङ्गवेदनानुसन्धानायोगाद्व्याप्तत्वे च देहान्तरगतस्याप्यनुसन्धानप्रसङ्गाच्छरीरपरिमितत्वमुक्तं जिनेन तत्र प्रष्टव्यं, किं तत् स्वीयसर्वशरीरावयवगतचेष्टोपपत्त्यर्थमुपेयते । उत शरीरावच्छिन्नत्वमन्तरेणात्मनः स्वतः परिमाणाभावाद्वा । तत्राद्यपक्षं प्रतिक्षेप्तुं प्रवृत्तं सूत्रमुपन्यस्य व्याचष्टे—एवं चेति ॥ जीवस्येत्यादिना जैनमतप्रसङ्गसन्निधापितमात्मनः शरीरपरिमाणत्वमेवमित्यनेन परामृश्यते । चकारोऽङ्गीकारद्योतक आत्मशब्दश्च जीवपर इत्युक्तं भवति। एवमेवमित्येतदापादकपरतया व्याख्यायात्माकार्त्स्न्यमित्येतदेकं पदं कृत्वा स्यादित्यध्याहारेणापाद्यपरतया व्याख्याति–अण्वादीति । पिपीलिकादिशरीरस्थस्यैवेत्यर्थः । जीवस्येत्यनुषज्यते । तत्तत्परिमाणस्येत्यपि द्रष्टव्यम् । हस्त्यादीति । गजगर्दभादिशरीर इत्यर्थः । कर्मवशात्प्राप्ते सतीति शेषः । 'अकार्त्स्न्यं' तस्य तत्रापूर्णता स्यादित्यर्थः । तत्तश्चात्मनः कायपरिमाणाभ्युपगमेऽपि न सर्वशरीरावयवगतचेष्टोपपत्तिरिति भावः । एवं शरीरपदं सावधारणं कृत्वाऽऽवृत्त्याण्वादिहस्त्यादिपदयोः विनियमेनाण्वादीत्यादिवाक्यं हस्त्यादिशरीरस्य तत्परिमाणस्यात्मनोऽण्वादिशरीरेपि पिपीलिकादिशरीरे कर्मवशात्प्राप्ते सति तच्छरीर एवाकार्त्स्न्यं स्यात् पूर्णता न स्यादतिरेकस्स्यादिति यावत् । तथा च शरीरपरिमाणत्वभङ्ग इत्यपि व्याख्येयम् । अत एवोभयत्रा

स्य हस्त्यादिशरीरेऽकार्त्स्न्यं स्यात् ॥ ३४ ॥

( ३ ) ॐ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ॐ ॥ ३५ ॥

तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम् ।
विकारित्वादनित्यत्वप्रसक्तेः ॥ ३५ ॥

---

दिशब्दः । उक्तं हि तत्त्वप्रदीपे—हस्त्यादिशरीरस्थस्याण्वादिशरीर प्राप्तौ तच्छरीर एवात्मनः कार्त्स्न्यं न स्यादिति । अनेन सूत्रे एवमात्मा कार्त्स्न्यं च स्यादिति चशब्दस्यान्वयः, स चातिरेकसमुच्चयार्थ इत्युक्तं भवति । केचित्तु—एतदर्थं भाष्येऽपि अकार्त्स्न्यमित्येतदनन्तरं चेति शेष इत्याहुः । यद्वा—सूत्रे आत्मेति प्रथमान्तं भिन्नं पदं कार्त्स्न्यं अकार्त्स्न्यमिति द्वेधा विच्छेदः । चः समुच्चये । तथा चात्मा जीवो यद्येवं कायपरिमाणोऽङ्गीक्रियते तर्हि स यदा पिपीलिकादिशरीरस्थस्तत्परिमाणो गजादिकायं प्राप्तस्तदा अकार्त्स्न्यं प्राप्नुयात् । एवं गजादिकायपरिमितो यदा पिपीलिकादिशरीरं प्राप्तस्तदा तत्र कार्त्स्न्यमाधिक्यं च प्राप्नुयादिति सूत्रं व्याख्यायैतदनुसारेण भाष्यमपि योजनीयम् ॥

( ३ ) ननु जीवो यदा यच्छरीरं प्राप्नोति तदा तत्परिमाणो भवति अतो नोक्तदोष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—नेति ॥ इतिशब्दानन्तरं चशब्दोऽध्याहार्यः नञश्चावृत्त्यान्वयः । तथा च 'तत्तच्छरीरस्थस्य' गजपिपीलिकादिशरीरस्थस्य आत्मनः 'तत्तत्परिमाणत्वं' क्रमिकतत्तद्देहपरिमाणत्वमिति 'न मन्तव्यम्' अत एवाविरोधः एवं चेत्युक्तदोषाभाव इति च न मन्तव्यमित्यर्थः । अनेन न केवलं पर्यायानङ्गीकारे विरोधपरिहाराभावः, किन्तु तदङ्गीकारेऽपीत्यपिशब्दार्थः । तथा पर्यायात्क्रमात्परिमाणपरिवर्तनात्तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वरूपाद्विरोधपरिहारो न युक्तः । कुतः? यतः पर्याय एव न युक्त इति चशब्दार्थश्च दर्शितो भवति । कुतः पर्यायो न युक्त इत्यतो विकारादिभ्य इत्यनेनोक्तान् हेतून् परस्परहेतुहेतुमद्भावाभिप्रायेण योजयति—विकारित्वादिति । विकारित्वापत्तेरित्यर्थः । ततः किमित्यत आह—अनित्यत्वप्रसक्तेरिति । तथा चानिर्मोक्षप्रसङ्गः । तथा च शास्त्रवैफल्यं स्यादिति सौत्रादिशब्दसूचितहेतोरप्युपलक्षकमेतत् । ननु समानः प्रसङ्गः यावताऽस्माभिरपि जीवे सुखदुःखानुभवाभ्यां उच्चनीचत्वरूपो विकारोऽभ्युपगम्यत इति चेन्न । यतो यस्य वस्तुनो

(४) सू—ॐ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशे
षात् ॥ ॐ ॥ ३६ ॥

परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थिते
स्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेण स

यल्लक्षणं तन्निवृत्तिरूपोऽन्यथाभाव एव तदनित्यतानिबन्धनं नान्यथा भावमात्रं जीवस्य लक्षणं च चैतन्यादिकमेव न सुखादीत्यस्मदभ्युप गमोऽत इति सुधोक्तिः ॥

(४) इदानीं शरीरावच्छेदमन्तरेणात्मनः स्वतः परिमाणाभावा त्तदर्थं कायपरिमाणत्वमङ्गीक्रियत इति द्वितीयपक्षं निराकुर्वत्सूत्रं प ठित्वा व्याचष्टे—अन्त्येति ॥ अत्र पूर्वसूत्रादेवं चेत्यनुषज्यते । अन्त्या वस्थितेरित्यावर्तते। चशब्दो हेतुसमुच्चये अवधारणेऽप्यर्थे च । प्रसङ्ग इति शेषः । तथा चैवं सूत्रभाष्ययोजना–एवं च एवं सति क्षपणकेन श रीरावच्छेदमन्तरेणात्मनः स्वतः परिमाणाभावरूपप्रसङ्गकभयाच्छरी रपरिमाणत्वेऽङ्गीकृते सत्यन्त्यावस्थितेःप्रसङ्गोऽन्त्यस्य मुक्तिकालीनस्या पि शरीरस्य स्थितेः प्रसङ्गः तदापि तत्सत्त्वमङ्गीकार्यं स्यात्कुतोऽन्त्याव स्थितेरन्त्यपरिमाणस्थितेरन्त्ये मुक्तौ परिमाणसत्त्वस्यावश्यकत्वात्तद र्थत्वेन परिमाणावच्छेदकत्वेन शरीरस्थितेरप्यावश्यकत्वादवच्छेदकं विनाऽवच्छेद्यसत्वायोगात्,मुक्तौ जीवे परिमाणस्थितिरेव कुतोऽन्त्याव स्थितेरन्त्ये मुक्तौ जीवस्य स्थितेस्तदर्थत्वेन परिमाणावस्थितेरावश्यक त्वात्। जीवसत्वेऽपि परिमाणावश्यकत्वं कुतः? यद्द्रव्यं तत्परमाणवदि ति व्याप्तेः । परिमाणशून्यस्य द्रव्यस्यासत्वात् परिमाणाभावे स्वरूप सत्त्वस्याप्यभावप्राप्त्या तत्सिद्धेः । नन्वस्तु मोक्षे शरीरसत्त्वं किमनि ष्टमिति चेत् , तथा सति उभयनित्यत्वादुभयस्य मुक्तात्मशरीरयोर्नि त्यत्वप्रसङ्गात् । मुक्तिकालीनत्वेन हेतुना आत्मदृष्टान्तेन शरीरस्यापि नित्यत्वसाधनसम्भवात् । अस्तु मुक्तौ शरीरस्य नित्यत्वं किमनिष्टमि ति चेत्तथा सति सर्वशरीरनित्यत्वं स्यात्सर्वेषामधुनातनशरीराणाम पि नित्यत्वप्रसङ्गात् । कुतोऽविशेषात् परिमाणविशेषात् परिमाणाव च्छेदकजडशरीरत्वाविशेषेण तत्प्राप्तेः। यदि चैतद्दोषपरिहाराय मुक्त देहस्याप्यनित्यत्वं, तर्ह्यविशेषादुभयस्य मुक्तिसंसारयोरविशेषप्रसङ्गा त् । यदि चैतद्दोषपरिहारायान्त्ये मोक्षे एवं शरीरपातेऽपि तत्परिमाण स्यावस्थितिरङ्गीक्रियते, तर्ह्यविशेषात्संसारेऽपि परिमाणपरिवर्तनाभा

वैशरीरनित्यत्वं स्यात् ॥ ३६ ॥

——:*:——

११. अधिकरणम् ॥

( १ ) पाशुपतपक्षमपाकरोति—

सू—ॐ ॥ पत्युरसामञ्जस्यात् ॥ ॐ ॥ ३७ ॥

'यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' ( ऋ.१०-१२५-५. ) 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ' (ऋ.१०-१२५-६.) 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः।

---

षप्रसङ्गादिति नात्मनः कायपरिमाणत्वपक्षो युक्त इति ॥ १० ॥

॥ इति नैकस्मिन्नधिकरणम् ॥

——:※:——

११. अधिकरणम् ॥

( १ ) अधिकरणार्थं दर्शयति—पाशुपतेति ॥ पशुपतेरमी पाशुपता इति विग्रहः। तथा च पाशुपतशाक्तेयसौरस्कान्दगाणपत्यभेदेन बहुविधेषु वैदिकाभासेषु मध्ये ये शैवपाशुपतकालामुखमहाव्रतभेदेन चत्वारः पशुपतिपारम्यवादिनः, तेषां पक्षमस्मिन्नधिकरणे निराकरोति सूत्रकृदित्यर्थः। सार्वज्ञ्याद्दिगुणशाली पशुपतिरेव प्रकृतिमुपादानीकृत्य हरिहिरण्यगर्भादिजगदुत्पत्त्यादि करोति। तथा श्रुतिस्मृतयोऽस्मिन्नर्थे भवन्ति। तथा च का वार्ता हरेर्जगत्कारणत्वस्य। अतो न लक्षणसूत्रं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—पत्युरिति। इत्यादिश्रुतेरिति पञ्चमी। समुदायैकवचनमेतत्। आदिशब्देन 'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' ( ) इत्यादिकं गृह्यते। 'पारतन्त्र्येण' परतन्त्रत्वाख्यदोषावगमेन पारतन्त्र्यं जननमरणादेरप्युपलक्षकम्। अनेनहेत्वसिद्धिःपरिहृता। पारतन्त्र्येणेत्यसामञ्जस्यपदस्यार्थान्तरं भावे ष्यञमभिप्रेत्याह-असमञ्जसत्वादिति। दोषित्वादित्यर्थः। पशुपतेरिति विपरिणामेनात्रापि सम्बध्यते। पशुपतिः पशूनां पाशबन्धविमोक्षद इति ईश्वर इति च पत्युरिति पदस्यार्थद्वयम्। ईश्वरत्वं चाज्ञजनप्रसिद्ध्याऽन्यस्यापीत्यतः-पशुपतिरित्याह,योगेनान्योऽपि पशुपतिर्भवतीत्यतः-ईश्वर इति चाह। उभयसमभिव्याहाराच्छिवस्यैव प्राप्तिः। न जगत्कर्तेत्यनेन प्रकरणाल्लब्धस्य जगत्कर्तृ

विद् हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्'
(ऋ. ७-४०-५.) एको नारायण आसीन्न ब्रह्मा नेशानो
नाग्नीषोमौ' (मह. १.) इत्यादिश्रुतेः पारतन्त्र्येणास
मञ्जसत्वान्न पशुपतिरीश्वरो जगत्कर्ता ॥ ३७ ॥

त्वमित्यस्य सूत्रेऽध्याहृतनञा सम्बन्धो ज्ञापितः। अनेन—पत्युर्न जगत्कर्तृत्वं, कुतः? 'असामञ्जस्यात्' अयुक्तत्वात्। तदपि कुतः? 'असामञ्जस्यात्' समञ्जसो गुणी तद्विरुद्धत्वात् दोषित्वात्। न चासिद्धिः। 'यम्' इत्यादिश्रुतेरिति सूत्रार्थ उक्तो भवति। 'यम्' इत्यम्भ्रणीवाक्येन शिवादेः पराधीनपदप्राप्तिमत्त्वावगमेन पारतन्त्र्याख्यदोषोऽवगम्यते। 'अहं रुद्राय' इति मृतिरपि। अहं 'यंयमुग्रं' रुद्रं कर्तुं कामये तंतं योग्यं उग्रं रुद्रं कृणोमि करोमि। तथा तं ब्रह्माणं ऋषिं सुमेधसं च तत्तद्भावयोग्यं करोमि। अहं 'शरवे' हिंसाशीलाय 'ब्रह्मद्विषे' चतुर्मुखपञ्चमुखच्छेत्रे प्रमेयदीपोक्तरीत्या संहारकाले ब्राह्मणादिसर्वप्राणिविद्विषे इति वा, सुधारीत्या व्यत्ययेन ब्रह्मद्विषां दैत्यानां शरवे हिंसकायेति वा, चन्द्रिकारीत्या दक्षप्रजापतिद्विषे इति वा रुद्राय। द्वितीयार्थे चतुर्थी। उक्तविशेषणकरुद्रमिति। 'हन्त वा उ' हन्तुमेव, न तु भीषणाद्यर्थम्, प्रलये दुर्गारूपेण हननात्। धनुः 'आतनोमि' विस्तारयामि सज्यं करोमीति वा। अहं 'जनाय' जनस्य 'समदं' सम्मदं हर्षं सन्ततमोदं वा करोमि। अहं 'द्यावापृथिवी' तदुपलक्षितानूर्ध्वाधोलोकान् धारणया 'आविवेश' छन्दसि परोक्षे लिट्। अहमस्य जगतः 'पितरं' ब्रह्माणं 'मूर्धन्' मूर्धनि सर्वजीवोत्कृष्टत्वे सुषुम्नायामिति नारायणपण्डिताचार्योक्तेः। 'सुवे' जनयामि। न केवलं पदे स्थापयामि। एवंभूतायाः मम 'योनिः' कारणं 'समुद्रे अप्सु' अपामन्तस्तिष्ठतीत्यर्थः। स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा 'आपो नाराः' इत्यादिनोक्तं तदर्थमेवाह। 'अस्येति' ऋग्वेदवाक्येनापि शिवादेः पारतन्त्र्यमवगम्यते। 'अस्य' प्रमितस्य 'देवस्य' द्योतनादिगुणततेः 'मीळ्हुषः' भक्ताभिलषितवर्षितुः मीढवान् समर्थ इति तत्त्वप्रदीपोक्तेः। समर्थस्येति वा। 'एषस्य' आसमन्तादीशस्य। व्यत्ययेन शकारस्यषकारः। सुधाविष्णुतत्त्वनिर्णयटीकारीत्या 'इषु इच्छायाम्' इत्यस्माद्भावे घञि गुणे एषस्य इच्छारूपस्य सत्यकामस्येति वा विष्णोः 'प्रभृथे' कर्म

(२) सू—ॐ ॥ सम्बन्धानुपपत्तेश्च ॥ ॐ ॥ ३८ ॥
अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ॥ ३८ ॥

(३) सू—ॐ ॥ अधिष्ठानानुपपत्तेश्च ॥ ॐ ॥ ३९ ॥
पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति, न चास्य तदस्ति ॥ ३९ ॥

णा ध्यानेन च प्रवृद्धे भरणे पूजने हविर्भिः कृते सति तत्प्रसादात् 'वयाः' अहंतत्त्वाभिमानित्वेन जनानां बन्धको रुद्रः 'रुद्रियं महित्वं' रौद्रं पदं 'विदे' विविदे लेभे। हि प्रसिद्धमेतत्। तथा हि 'अश्विनौ' युवामपि विष्णुपूजयैव तत्प्रसादात् 'इरावत्' अन्नवत् 'वर्तिः' वर्तनं समस्तभोगवत्पदं 'यासिष्टं' अयासिष्टं प्राप्तुवन्तौ स्त इति। 'एको नारायणः' इत्यादिकं श्रुत्यन्तरवाक्यम्। अनेन प्रलयेऽभावोऽवगम्यते। महाप्रलये नारायण एक एव प्रधान आसीत्। तदा स्वातन्त्र्येण 'न ब्रह्मा' न चतुर्मुख आसीत्, न 'शङ्करो' रुद्रश्चासीदित्यर्थः ॥

(२) युक्त्यन्तरेण पशुपतेर्जगत्कारणत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—सम्बन्धेति ॥ अशरीरत्वादित्यनेन न केवलं पारतन्त्र्यादेः, किन्त्वशरीरत्वाच्चेति चशब्दसमुच्चेतव्यो हेतुर्दर्शितः। 'तस्य' पशुपतेरिति। अनेन सूत्रे पत्युरित्यस्यानुवृत्तिर्दर्शिता। 'जगता' कार्येण। जगत्पदं अशरीरस्य क्वचिदपि कार्यकर्तृत्वेन सम्बन्धो न युज्यते सुतरां सर्वस्मिन्निति कैमुत्यद्योतनाय। सूत्रेऽनुपपत्तेरिति पञ्चमीप्रयोगेऽपि नात्र सम्बन्धानुपपत्तेः हेतुत्वं साध्याविशेषप्रसङ्गात्, किन्तु साध्यत्वं, पञ्चमी तु चशब्दसूचिताशरीरत्वस्य हेतुत्वज्ञापिकेति प्रदर्शनाय युक्तेरित्यनुक्त्वा न युज्यत इति निर्देशः कृतः। ननु कार्येण जगताऽपि सम्बन्धमात्रमशरीरस्यापि सम्भवति गगनादेर्घटादिसंयोगदर्शनात् अतः कोऽसावत्र विवक्षितः सम्बन्धोऽयुक्त इत्यतः कार्यकर्तृभाव इति भावेनोक्तं—कर्तृत्वेनेति। 'कर्तृत्वेन सम्बन्धः' कर्तृत्वरूपसम्बन्धः। अत्र दृष्टान्तमाह—मृतेति। त्यक्तदेहवदित्यर्थः। अनेन—न केवलमसामञ्जस्यात्, किन्तु पत्युरशरीरत्वाच्च न जगता कार्यकर्तृभावरूपसम्बन्धो युक्त इति सूत्रार्थोऽभिहितः ॥

(३) हेत्वन्तरेण पशुपतेर्जगत्कारणत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—अधिष्ठानेति ॥ 'चो' यतोऽस्य पत्युरतद्धिष्ठानं नास्त्यतो

( ४ ) सू—ॐ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ॐ ॥ ४० ॥
इदमेव जगत्तस्य करणवदधिष्ठानादिरूपं नित्यस्यापि कस्य चिद्भावाद्युज्यत इति चेत्—

ऽपि न जगत्कर्तृत्वमित्यनेन 'अधिष्ठानानुपपत्तेः' अधिष्ठानाभावाच्च न पत्युः जगत्कर्तृत्वमिति सूत्रार्थो दर्शितः। अत्राप्रयोजकत्वमाशङ्क्य तत्परिहाराय सूत्रे अधिष्ठानाभावादित्यनुक्त्वा अधिष्ठानानुपपत्तेः अधिष्ठानाख्यव्याप्याभावादित्युक्तिबलात्सूचितां व्यतिरेकव्याप्तिं सामान्यतः सदृष्टान्तं दर्शयति—पृथिव्यादीति । 'पृथिव्याद्यधिष्ठाने' भूम्याद्यधिकरणे । हिः प्रसिद्धौ । 'कार्ये' घटादि ॥

( ४ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—करणवदिति ॥ इदमेवेति । मायादिकारकसमुदायरूपं जगदेवेत्यर्थः । न ततोऽन्यत् मृग्यमित्येवशब्दार्थः । 'तस्य' ईश्वरस्य । अनेन सूत्रे पत्युरिदमेवेति पदानुषङ्गो दर्शितः । 'करणवत्' करणमस्मदादिशरीरेन्द्रियादि तद्वत् समानं भवति , साक्षात्प्रयत्नाधिष्ठेयत्वसाम्यात् । यत एवमतस्तस्य इदमेवाधिष्ठानादिस्वरूपं भवतीत्यर्थः । आदिपदेनेह विवक्षितं सम्बन्धोपपादकं शरीरं गृह्यते । यद्यप्यस्य सूत्रस्य व्यवहिताव्यवहितपूर्वसूत्रद्वयोक्तानुपपत्तिद्वयपरिहारनिरासकत्वात् व्यवहितपूर्वसूत्रेऽशरीरत्वस्य हेतुत्वेनोक्तत्वात् इदमेव विश्वं शरीरादिरूपमिति वक्तव्यम् । अतएवानुव्याख्याने 'देहादिवद्विश्वम्' इत्युक्तम् । तथाऽपि सन्निहितपरित्यागकारणाभावादधिष्ठानादिरूपमित्युक्तावपि उभयानुपपत्तिपरिहारप्रतीतेस्तन्निरासोऽत्र युज्यत एवेत्याशयेनाधिष्ठानादीत्युक्तम् । अनुव्याख्याने तु उभयानुपपत्तिपरिहारनिरासकत्वज्ञापनायोभयमध्ये 'करणवच्चेत्' इत्यस्य सूत्रस्य व्याख्यातत्वात् तदनुसारेण सन्निधिमनादृत्य देहादिवदित्युक्तमिति न विरोधः। अधिष्ठानादिरूपमित्यनन्तरं अतो न तदनुपपत्तिरिति वाक्यशेषः । ननु प्रलये सर्वस्यापि विनाशात् कारकसमूहस्यापि नाधिष्ठानत्वादि युज्यत इत्यत आह—नित्यस्येति । अपिः प्रलयेऽपीत्यध्याहृतेनान्वेति। अधिष्ठानादीति भावप्रधानमिहानुषज्यते । युज्यत इति चावर्तते । तथा च यतः प्रलयेऽपि 'कस्यचित्' मायादिरूपकारकसमूहस्य नित्यस्य 'भावात्' विद्यमानत्वात् तस्याधिष्ठानादिरूपत्वं युज्यते तदुक्तं युज्यत इति च योजना ॥

( ५ ) न, भोगादिप्राप्तेः । उत्पत्तिनाशौ सुखदुःखभोगाश्च प्राप्यन्ते तद्गताः ॥ ४० ॥

( ६ ) सू—ॐ ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ॐ ॥ ४१ ॥
देहवत्त्वेऽन्तवत्त्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा ।

( ५ ) परिहारांशं व्याचष्टे—नेति ॥ पूर्ववादिनोक्तं नेत्यर्थः । कुतो नेत्यतो भोगादिभ्य इत्येतत्प्राप्त्युपलक्षकतया व्याचष्टे—भोगादीति । भोगनिमित्तपदार्थवचनेन विषयोक्त्या च भोगादीति । एतदेव स्फुटीकरोति—उत्पत्तीति । यत इत्यादावुपस्कार्यम् । उत्पत्तिविनाशयोरादिशब्दगृहीतयोः पश्चाद्व्यक्तव्यत्वेऽपि सुखदुःखानुभवरूपभोगरूपत्वात्प्रथमं ग्रहणम् । अतएवासमासः । क्रियान्वयोऽपि विपरिणामेन पृथगेव द्रष्टव्यः । विषयीभूतसुखदुःखव्यक्तिबाहुल्याद्बहुवचनम् । सुखं दुःखे च तयोर्भोगश्चेति वा । भोगश्चेत्येकवचनपाठः स्वरसः । तथात्वे आहृत्यैते प्राप्यन्त इत्यन्वयः । 'तद्गताः' शरीरादिसमानकारकव्रातगताः तदुपादानहानिनिमित्ता इति यावत् । 'प्राप्यन्ते' प्राप्येरन् । यज्ञदत्तादेः साक्षात्प्रयत्नाधिष्ठेयविकारात्मकशरीरोपादानहानयोः सतोस्तन्निमित्तयोरुत्पत्तिविनाशयोर्दर्शनादिति भावः । सुखदुःखभोगस्य तद्गतत्वं चोत्पत्तिविनाशद्वारा बोध्यम् ॥

( ६ ) 'सम्बन्धानुपपत्तेः, करणवच्च' इत्याभ्यां मुक्तशरीरभावाभावपक्षावेव विकल्पभङ्ग्या दोषान्तरेण दूषयत्सूत्रं पठित्वा व्याचष्टे—अन्तवत्त्वमिति ॥ भावरूपत्वात्प्रथमं करणसूत्रोक्तपक्षो गृहीतः । 'अन्तवत्त्वं' देशतः परिच्छिन्नत्वं स्यात् यज्ञदत्तवदित्यर्थः । पत्युरिति वर्तते । ततश्च न जगत्कर्तृत्वं स्यादिति वाक्यशेषः । 'अन्यथा' देहाभावे ज्ञानस्यैवाभावस्स्यात् । सुतरां सार्वज्ञ्यस्येत्येवार्थः । ततश्च न जगत्कर्तृत्वं पत्युरिति भावः । शरीराभावे कुतो ज्ञानाभाव इत्यतो व्यतिरेकव्याप्तिं दर्शयति—शरीरिण एव हीति । न त्वशरीरिण इत्येवार्थः । हिः प्रसिद्धौ । अनेन-सूत्रे करणवदिति मतुबन्तं पदं भावप्रधानमनुवर्तनीयम् । न चेदिति शेषः । चशब्दार्थः वार्थः, कल्पभेदेन दोषसूचकश्च । तथा च यतः पत्युः करणवत्त्वं देहवत्त्वं चेत् अन्तवत्त्वं च स्यात्, न केवलं भोगादिप्राप्तिः । न चेदज्ञता स्यात्, सुतरामसर्वज्ञता च । न केवलं जगता कार्यकर्तृभावानुपपत्तिरिति सूत्रार्थ उक्तो

(७) विष्णोस्तु श्रुत्यैव सर्वे विरोधाः परिहृताः ।
'यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमा त्मको भगवान् । ज्ञानात्मक ऐश्वर्यात्मकः ' (एकायन.) इति । ' बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान्मनोवानङ्गवान्प्रत्यङ्गवान् ' ( ) इति । ' सद्देहः सुखगन्धश्च ज्ञानभाः सत्प

भवति । अत्र सम्बन्धानुपपत्तिसूत्रे शरीराभावे कर्तृत्वोपयुक्तज्ञाना द्यभावेन कर्तृत्वरूपसम्बन्धानुपपत्तिरुक्ता । अत्र तु शरीराभावे ज्ञाना भावेनासर्वज्ञत्वाज्जगत्कर्तृत्वानुपपत्तिरित्युच्यतेऽत इति भेदो द्रष्टव्यः॥

(७) ननु विष्णोरप्युक्तविकल्पमुखेनोक्तदोषाः प्रसरन्त्येवेति तस्यापि कर्तृत्वानुपपत्तिरित्याशङ्कां 'आत्मनि चैवम्, सर्वोपेता च, विकरणत्वात्' इत्यादिषु सूत्रकृता निरस्तामपि पुनः प्रमाणविशेषैः प रिहरति—विष्णोस्त्विति ॥ तुशब्दो रुद्रादेर्विशेषद्योतकः । देहित्वादा विति शेषः । 'श्रुत्या' वक्ष्यमाणया । समुदायैकवचनमेतत् । ' विरोधाः' अन्तवत्त्वादिदोषाः परिहृताः । न तत्र प्रमाणान्तरमन्वेषणीयमित्येवश ब्दार्थः । श्रुतीनां निरवकाशत्वद्योतको वैवकारः । ताः श्रुतीरुदा हरति—यदात्मक इति । 'यदात्मकः' इत्यारभ्य 'ऐश्वर्यात्मकः' इत्यन्तमेकं वाक्यम् । इतिशब्दस्य इत्युत्तरमित्यन्वयः । 'बुद्धि' इत्यारभ्य 'प्रत्यङ्गवान्' इत्यपरं वाक्यम् । इतिशब्दस्य क्रिययाऽन्वयः । 'सद्देहः' इत्या रभ्य 'परमोऽक्षरः' इत्यन्तमन्यत्पैङ्गिवाक्यम् । इत्यादिकयेत्यस्य भा ष्यकारीयस्य श्रुत्यैवेति पूर्वेणान्वयः । आदिशब्देन तत्त्वप्रदीपरी त्या 'स्वे महिम्नि' (छा. ७ - २४.) 'किं स्विदासीदधिष्ठानम्' (ऋ- १०-८१-२.) 'पतिं विश्वस्यात्मेश्वरम्' (महाना. ११.) इ त्यादिकं गृह्यते । सुधारीत्या श्रुत्यर्थस्तु—भगवान् यत्स्वरूपो 'व्य क्तिः' तद्देहोऽपि तदात्मिकेति प्रतिज्ञा । भगवानेव किमात्मक इति पृ च्छति—किमिति । उत्तरमाह—ज्ञानात्मक इति । अत्र भगवद्देहस्य तत्स्वरूपत्वज्ञानाद्यात्मकत्वोक्त्याऽन्तवत्त्वादिदोषाः परिहृताः । भगव तो बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां लक्षयामह इति प्रतिज्ञा । बुद्धिर्ज्ञानं, मनः चेतः, अङ्गं शरीरं, प्रत्यङ्गं हस्तादीनि । एतद्वत्त्वं ज्ञापयाम इत्यर्थः । त त्प्रकारमेवाह—बुद्धिमानित्यादिना । अत्रेश्वरस्य देहित्वाभिधानेनादे हित्वपक्षोक्तदोषाः परिहृताः । यो जन्मच्छेदादिदोषरहितो देहो य

राक्रमः ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः'
(पैङ्गिश्रुतिः) इत्यादिकया ॥ ४१ ॥

१२. अधिकरणम् ॥

(१) शक्तिपक्षं दूषयति—

सू—ॐ ॥ उत्पत्त्यसम्भवात् ॥ ॐ ॥ ४२ ॥

न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥ ४२ ॥

स्यासौ सद्देहः। यः 'सुखगन्धः' सुगन्धिः पुण्यगन्धः सुखात्मकग न्धो वा। तत्रैकः सुधोक्तः। द्वितीयस्तृतीयः न्यायदीपोक्तः। यश्च 'ज्ञान भाः' न तु तैजसभाः। 'सत्पराक्रमः' अप्रतिहतपराक्रमः। यश्च 'ज्ञा नज्ञानः' अतिशयितज्ञानः कर्तृसाधनोऽयं ज्ञानशब्दः। 'सुखसुखः' अ तिशयितसुखः। अर्शआद्यजन्तः। सुखशब्दः निर्धारणषष्ठ्या चोभय थोक्तार्थलाभः। स विष्णुः 'परमोऽक्षरः' परा जडप्रकृतिः। ततः प रा चित्प्रकृतिः। ततः परमः तत उत्तमोऽक्षर इत्यर्थः। तत्त्वप्रदीपे तु— 'ज्ञानज्ञानः' नाज्ञानमिश्रज्ञानः 'सुखसुखो' न दुःखमिश्रितसुख इत्य र्थ उक्तः ॥ ११ ॥

॥ इति पत्युरधिकरणम् ॥

१२. अधिकरणम्

(१) अधिकरणार्थं दर्शयति—शक्तीति ॥ असामञ्जस्यादिति पू र्वोक्तन्यायेन निरस्तमपि शक्तिपक्षं शक्तेः स्त्रिया एव जगदुत्पत्तिरि ति वदतां महावामनमध्यवामनाणुवामनभेदेन त्रिविधानां शाक्तानां मतमसाधारणदोषाविष्कारेण पुनर्दूषयत्यस्मिन्नधिकरणे सूत्रकृदित्य र्थः। शक्तिरेव खलु सार्वज्ञ्यादिगुणशालिनी सकलजगज्जननी श्रुति स्मृतीतिहासपुराणेषु पठ्यते। ततो न हरेर्जगत्कारणत्वं लक्षणं युक्त मितिप्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—उत्पत्तीति। न हीत्या दिना सूत्रे अनुषङ्गहेत्वध्याहाराभ्यां न शक्तेः केवलाया जगत्कर्तृत्वं युक्तं। केवलायास्तस्या जगत्कर्तृत्वासम्भवात्। कुतः? पुरुषाननु गृहीतत्वादिति सूत्रार्थो दर्शितः। अत्राप्रयोजकतामाशङ्क्य विपक्षे क्वचिदप्यनुपलम्भबाधोक्त्या साऽपि परिहृता ॥

(२) सू—ॐ ॥ न च कर्तुः करणम् ॥ ॐ ॥ ४३ ॥
यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः॥४३॥
(३) सू—ॐ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ॐ ॥ ४४ ॥
यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीशवादान्तर्भावः ॥ ४४ ॥
(४) सू—ॐ ॥ विप्रतिषेधाच्च ॥ ॐ ॥ ४५ ॥

(२) ननु हेतुरसिद्धः । यतोऽस्त्येव शक्त्यनुग्राहकः पुरुषः सदा शिवः अतस्तस्याः जगदुत्पत्तिर्युक्तेति वदतां मध्यमवामनानां मतं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—न चेति ॥ यद्यपीति सम्बन्धः । तत एव तथापीति लभ्यते । अङ्गीक्रियते कैश्चिच्छाक्तैः । 'तस्य' शक्त्यनुग्रहकर्तुः पुरुषस्य । करणाभावादिति । उत्पत्त्युपयोगिज्ञानादेस्तत्साधनेन्द्रियादेस्तत्कारणशरीरस्य चाभावादित्यर्थः । प्रकृतस्योत्पत्त्यसम्भवस्येह साध्यत्वेनान्वय इत्याशयेन अनुपपत्तिरित्युक्तम् । सावधारणमेतत् । तथा च पुरुषानुगृहीतशक्तेरपि जगदुत्पत्त्यसम्भव एवेत्यर्थः । अनेन सौत्रश्चशब्दो यत इत्यर्थे अवधारणे चेत्यभिप्रैति ॥

(३) ननु शक्त्यनुग्राहकपुरुषभावात् तस्याः जगदुत्पत्तिर्युक्तेत्येव नोच्यते, किन्तु तस्य पुंसः सार्वज्ञ्यादेरपि सद्भावेन युक्ततरा शक्तेर्जगदुत्पत्तिरितीत्यङ्गीकुर्वतामणुवामनानां मतनिरासाय सूत्रमुपन्यस्य व्याचष्टे—विज्ञानादीति ॥ आदिपदेनोत्पत्त्युपयोगिशरीरेन्द्रियादिग्रहणम् । 'करणं' तत्सत्त्वम् । 'तस्य' शक्त्यनुग्रहकर्तुरिति । अनेन सूत्रे कर्तुरित्यस्यानुवृत्तिः सूचिता । अङ्गीकार इत्यनेन सत्त्वार्थकभावपदमङ्गीकारोपलक्षकमित्युक्तं भवति । 'अत एव' यदितदेत्युक्ते तत एव शक्त्यनुग्रहकर्तुः शिवादेः कर्त्रन्तरमनपेक्ष्यैव 'सृष्ट्याद्युपपत्तेः' जगदुत्पत्त्यादिसम्भवात् इति भावकथनं, 'तदेश्वरवादान्तर्भावः' शक्तिमतस्य पाशुपतमतैक्यं स्यादिति।अनेन 'तदप्रतिषेधः' तेन शाक्तेयेन तस्य पाशुपतमतस्याप्रतिषेधः कृतः स्यात् । तेन तदनुमतमेव स्यात् । तच्च निरस्तमेवेति पुनस्तदप्रतिषेधो नास्माभिस्तत्प्रतिषेधः कार्य इत्यावृत्त्या तदप्रतिषेध इत्यंशो व्याख्यातः । सूत्रे वाशब्दो मतान्तरत्वद्योतकः ॥

(४) एवं शाक्तेयमतत्रयं पृथङ्निराकृत्य समुदितदूषणेनापि पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे-विप्रतिषेधाच्चेति ॥ आदिशब्देन स्मृत्या

सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ॥ ४५ ॥

—:✿:—

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये द्वितीयस्याध्यायस्य
द्वितीयः पादः.

—✿—

॥ ॐ ॥

—

द्विपरिग्रहः। विरुद्धत्वादित्यनेन विप्रतिषेधशब्दो व्याख्यातः। च शब्दः पूर्वोक्तप्रत्येकहेतुसमुच्चये। श्रुतयः 'नर्ते' 'एको नारायणः' ( महाना. ) इत्याद्याः। स्मृतयः 'स एव' इत्याद्याः। चशब्दः पूर्वोक्तप्रत्येकहेतुसमुच्चये। शिष्टजनैर्जिगुप्सितत्वाच्चेत्यनुभाष्योक्तयुक्तिसमुच्चये च।'असमञ्जसं' अयुक्तमिति। एतद्विप्रतिषेधसूत्रादनुषक्तं पदम्। शक्तिकर्तृत्वमतमिति शेषः ॥ १२ ॥

इति उत्पत्त्यधिकरणम् ॥

—:✽:—

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां द्वितीयाध्यायस्य द्वितीयः पादः

—:✿:—

॥ ॐ ॥

—

१. अधिकरणम् ॥

( १ ) जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परविरोध मपाकरोत्यनेन पादेन—

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—जीवेति ॥ अव्ययीभावगर्भतत्पुरुष गर्भद्वन्द्वसमासोऽयम् । तथा च जीवश्च परमात्मा च अधिभूतं च अ धिदैवं च तानि तथोक्तानि, तेषु तदुत्पत्तिविषये श्रुतीनामन्योन्यवि रोधं अनेन तृतीयपादेन निराकरोति सूत्रकृदित्यर्थः । अध्यात्मविषय श्रुतिविरोधपरिहारस्तु जिज्ञासोरध्यात्मविषयविचारस्यान्तिमत्वाच्च तुर्थपादे करिष्यतीति भावः । यद्यपि अस्मिन् पादे प्रथममेकैकस्मिन्न धिकरणे एकैकाधिभूतविचारस्यानन्तरं 'असम्भवस्तु, नात्माऽश्रुतेः' इत्यधिकरणद्वये परमात्मविचारस्य, अथ 'ज्ञोऽतएव' इत्यारभ्य आ पादपरिसमाप्तेर्जीवविचारस्य च करणात्तदनुसारेणाधिभूताधिदैवप रमात्मजीवेष्विति निर्देष्टव्यम् । तथाऽपि जीवविचारस्य बाहुल्यात्त द्विवक्षया क्रमोल्लङ्घनम् । यद्यप्यत्र पादे अधिदैवश्रुतिविरोधपरिहारः पृथङ्न क्रियते । तथाऽपि भूतविचारपराण्येव सूत्राण्यधिदैवपराणि इत्याशयेनैवमुक्तम् । 'एतेन' इत्यधिदैवविचारोऽपि कृतः । अ धिभूतं नाम भूतमधिकृत्य वर्तमानम् । अधिकर्तव्यप्रधाने अधिकरणे अधिशब्दः । सकार्यकारणभूतानि तत्र भूतं भूतकार्यं ब्रह्माण्डादिकं तत्कारणमव्यक्तादिकं तदेकदेशश्च भवति । उक्तं च सुधायाम्—अधि भूतानि कार्यकारणोपेतानि वियदादिभूतानीति । उक्तं च न्यायविवर णटीकायाम्—अधिभूतादिशब्दैः आकाशादीन्युच्यन्ते । समुदायैकदे शाश्रयेणाधिकरणाधिकर्तव्यतोपपत्तेरिति । तत्त्वप्रदीपकृच्चाह—अधि भूतेषु महाभूतेषु आकाशादिषु 'इमानि पञ्चभूतानि पृथिवीवाय्वाका शापोज्योतींषि' ( ऐ. ३ - ३. ) इति श्रुतिः । अथवा—अधिभूतेष्विति भूततत्सम्बन्धिविवक्षयेति । अधिभूताभिमानिदेवता अधिदैवतम् । अ धिगतं च तत् दैवतं चेति विग्रहः । तदुक्तं तत्त्वप्रदीपसुधयोः—अधि दैवेष्विति तदभिमानितत्सम्बन्धिविवक्षयेति । अधिदैवानि अव्यक्ताभि मानिदेवता इति च । एवमधिभूतशब्द इव अध्यात्मशब्देऽपि आत्मान न्देहं जीवं च अधिकृत्य वर्तमानं अध्यात्ममिति विग्रहो ज्ञातव्यः ॥

(२) सू—ॐ ॥ न वियदश्रुतेः ॥ ॐ ॥ १ ॥

न वियदनुत्पत्तिमत्, तथाऽश्रुतेः ॥ १ ॥

(३) सू—ॐ ॥ अस्ति तु ॥ ॐ ॥ २ ॥

अस्त्येव चोत्पत्तिश्रुतिः, 'आत्मन आकाशस्सम्भूतः' (तै.२-१.) इत्यादि ॥ २ ॥

(४) सू—ॐ ॥ गौण्यसम्भवात् ॥ ॐ ॥ ३ ॥

---

(२) न वियदित्यंशविवरणेनैव विषयपूर्वपक्षादिः सूचितो भवतीत्याशयेन तमप्रदर्श्य सिद्धान्तयत्सूत्रमेवोपन्यस्यति—नेति ॥ अत्र 'उत्पत्त्यसम्भवात्' इति सूत्रप्रकृतानुत्पत्तिबोधकानुत्पत्तिमदितिपदमनुवर्त्य न वियदिति प्रतिज्ञाभागं व्याचष्टे—नेति। अत्र वियत्पदेन भूताव्याकृताकाशौ तदभिमानिदैवतं चोच्यते। सुधाटीकोक्तरीत्या प्रकृतिजीवकालमहदहङ्कारादेः उपलक्षकमेतत्। तत्त्वप्रदीपे तु वियदिति विशेषव्याप्तिमत्त्वादहङ्कारादिकमप्युच्यत इत्युक्तम्। तत्रोच्यत इत्यस्य प्रतिपाद्यत इत्यर्थाश्रयणान्न विरोधः। कुतो नेत्यतस्तथाशब्दाध्याहारेण अश्रुतेरिति हेत्वंशं व्याचष्टे—तथेति। 'तथा' तत्रानुत्पत्तौ श्रुत्यभावादित्यर्थः ॥

(३) ननु न वियत उत्पत्त्यभावे प्रमाणं नियमेन वक्तव्यम्, उत्पत्तौ प्रमाणाभावेनैव तत्सिद्धेः। न हि घटे प्रमाणाभावे पुनः प्रमाणापेक्षा स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अस्तीति ॥ एवेति तुशब्दार्थ उक्तः। चेति तुशब्दस्य न केवलं तथाऽश्रुतेः, किन्तु यत उत्पत्तौ श्रुतिरस्त्येव चेति समुच्चयरूपार्थान्तरं यत इत्यर्थत्वं चाह। यथोक्तं तत्त्वप्रदीपे—न केवलमनुत्पत्तिर्न श्रूयते, किन्तु 'अस्ति तु' अस्त्येव चोत्पत्तिवादिनी श्रुतिरिति। इत्यादिश्रुतिरित्यन्वयः। आदिशब्देन 'एतस्माज्जायते....खं वायुः' (मु.२-१-३.) 'नाभ्या आसीदन्तरिक्षम्' (तै. आ. ३-१३.) 'सन्देहो बहुलः' (छा. ५-१८-२.) इत्यादिकं गृह्यते ॥

(४) ननु न वियतोऽनया श्रुत्योत्पत्तिः साधयितुं शक्या। 'अनादिर्वा' इत्यनादित्वाभिधायकश्रुतिविरोधादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—गौणीति ॥ इत्यादीति। एवमादिरूपे वाक्ये अनादित्वश्रुतिः तद्बोधकशब्दो 'गौणी' भूते छत्रिवल्लाक्षणिकी। आकाशशब्दार्थैकदेशानादित्वपरा। एकदेशनित्यत्वगुणयोग इति तत्त्वप्रदीपो

'शून्योऽलौकिकः' इत्यादिश्रुतिर्गौणी ।
( ५ ) अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥ ३ ॥

क्तेः । चिरंतनत्वमात्रेण गौणी चेत्यर्थः । यद्वा—' इत्यादिश्रुतिर्गौणी ' अमुख्यपदोपेतेत्यर्थः । तश्चोक्तरीत्याऽनादिपदमाकाशपदं वा । तस्यापि भूतेतरस्मिन्नाकाशशब्दबोध्ये लाक्षणिकत्वसम्भवादिति भावः । इत्यादिश्रुतिरित्यनेन सूत्रेऽनुत्पत्तिश्रुतिरिति प्रकृतमनुषज्यते इति सूचितम् । उपलक्षणमेतत् । उत्पत्तिश्रुतिस्तु मुख्यार्था सर्वविषयिणीत्यपि द्रष्टव्यम् । गौणीत्यनन्तरं यत एवं व्यवस्था युज्यते, अतो नोक्तश्रुतेस्तद्विरोध इति वाक्यशेषः । श्रुतौ अयमित्यव्याकृताकाशो ग्राह्यः । भूते कथमप्यवृत्तेरिति टीकाविरोधात् न भूताकाशोऽपि । आकाशानादित्वे हेतुमाह—यतः 'शून्यः' सूक्ष्मः अप्रतिघ इति । सूक्ष्मत्वं वायोरप्यस्तीति व्यभिचार इत्यतो हेतुगर्भं विशेषणान्तरमाह—अलौकिक इति । अतीन्द्रिय इत्यर्थः । नन्वव्याकृतस्य साक्षिवेद्यत्वात्कथमेतत् । न, तत्त्वप्रदीपरीत्यास्य लौकिकप्राकृतेन्द्रियागम्य इत्यर्थाश्रयणात्। ननु तथाऽपि व्यभिचारानुद्धारः, 'आकाशवायू त्वव्यक्तौ' इति भागवततात्पर्योक्तेः, तस्य प्रत्यक्षाप्रत्यक्षपञ्चमहाभूतविषयत्वादिति सुधोक्तेश्च वायोरप्यतीन्द्रियत्वादिति चेत्—न, भूताकाशस्य दिव्यदृष्टिगोचरत्वेन तद्विषयेऽव्यक्तशब्दस्य सङ्कोचेऽवश्यंभाविनि तद्वत् वायोरपि स्पार्शनेन्द्रियग्राह्यत्वमङ्गीकृत्य अव्यक्तशब्दस्येतरेन्द्रियाग्राह्यार्थकतया सङ्कोचसम्भवात् । अत एव सुधावाक्यस्थाप्रत्यक्षपदमपि भूताकाशमात्रपरम् । न च पद्धतौ 'वायुस्पर्शोऽपि त्वचो विषयः' इति वायुस्पर्शमात्रग्रहणविरोधः । वायुस्तत्स्पर्शोऽपीत्यर्थाश्रयणात् । अस्तु वा—तात्पर्यसुधानुसाराद्वायोरतीन्द्रियत्वम् । तथाऽपि न व्यभिचारः । भूताकाशवत् वायोरपि योगिचाक्षुषप्रत्यक्षविषयत्वेन प्राकृतेन्द्रियग्राह्यतया तदग्राह्यत्वहेतोस्तत्राभावात् ॥

( ५ ) ननु किमेतया व्यवस्थया, अनादित्वश्रुत्यनुसारेणानुत्पत्तिरेव किं नाश्रीयत इत्यतः प्रवृत्तमसम्भवादित्यंशं व्याचष्टे—अन्यथेति ॥ उक्तव्यवस्थामनभ्युपगम्याकाशस्य सर्वथाऽनुत्पत्तेरेवाभ्युपगमे 'उत्पत्तिश्रुत्यसम्भवात्' तत्प्रामाण्यासम्भवात्तदप्रामाण्यप्रसङ्गादित्यर्थः । विषयाभावादिति भावः । ननूत्पत्तिश्रुतेरनुभवाद्यनुसारिबलवदनादित्वश्रुतिविरोधेनाप्रामाण्यं युक्तमिति नेदमनिष्टमित्याशङ्कोत्तरत्वेनापि

( ६ ) सू—ॐ ॥ शब्दाच्च ॥ ॐ ॥ ४ ॥
'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति।
अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानी

---

प्रवृत्तमसम्भवादित्येतत् बाहुल्यासम्भवपरतयाऽपि व्याचष्टे—अन्य थेति ॥ अनादित्वश्रुतिविरोधेनोत्पत्तिश्रुतेरप्रामाण्याङ्गीकारे 'आत्मन आकाशस्सम्भूतः' इत्युत्पत्तिश्रुतेर्बहुविषयत्वरूपबाहुल्येन प्रबलत्वात्त दसम्भवप्रसङ्गादित्यर्थः। बाहुल्यस्य प्राबल्यहेतुतया उत्पत्तिश्रुतेरपि बलवत्त्वेन अप्रामाण्यस्य वक्तुमशक्यतया श्रुतिद्वयप्रामाण्याय उक्त व्यवस्थाया एव आश्रयणीयत्वादिति भावः। यद्वा—नन्वनादित्वश्रुतिर्मुख्या, उत्पत्तिश्रुतिस्तु गौणीति वैपरीत्यं किं न स्यादित्याशङ्को त्तरत्वेनापि प्रवृत्तं असम्भवादित्येतद्बाहुल्यासम्भवपरतया व्याचष्टे-अन्यथेति। उत्पत्तिश्रुतेरेवैकदेशविषयत्वरूपगौणार्थानभ्युपगमे तस्या बहुविषयत्वरूपबाहुल्यासम्भवप्रसङ्गादित्यर्थः। अयं भावः—उत्प त्तिवाक्यस्थाकाशशब्देन हि आकाशाख्यभूतं तदभिमानी विनायकः अव्याकृताकाशं तदभिमानिचित्प्रकृतिश्चेति चत्वारो वाच्याः। उत्प त्तिरपि अभूत्वाभवनरूपा देहसम्बन्धरूपा पराधीनविशेषावाप्तिरूपा चेति त्रिधा। तत्राद्या भूताकाशे। द्वितीया तदभिमानिनि। तृतीया मूर्तद्रव्यसम्बन्धरूपपराधीनविशेषवत्यव्याकृताकाशे, तदभिमानि चित्प्रकृतौ चास्ति। तथा चोत्पत्ति श्रुतेर्बहुविषयत्वम्, अनुत्पत्तिश्रुते स्त्ववकाशमात्रविषयत्वेनाल्पविषयत्वं सिद्धम्। एवं चोत्पत्तिश्रुतेरेव गौणार्थत्वे एकदेशविषयत्वापत्त्या बहुविषयत्वासम्भवप्रसंगाद्बहुनुग्र हायानुत्पत्तिश्रुतेरेव गौणत्वं अङ्गीकृत्योत्पत्तिश्रुतेर्मुख्यार्थताऽङ्गीकार्ये त्युक्तव्यवस्थैव युक्ता, न वैपरीत्यमिति ॥

( ६ ) न केवलमुक्तव्यवस्थाऽसम्भवयुक्तिसिद्धा, अपि तु श्रुतिसि द्धा चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति-शब्दाच्चेति॥ भाल्लवेयश्रुतेश्चेत्यस्य अनुत्पत्तिश्रुतिर्गौणीति व्यवस्था सिद्धेति पूर्वेणा न्वयः। न केवलमसम्भवयुक्त्येति चशब्दार्थः। श्रुतौ अथेति प्रमेया न्तरारम्भे। वावेति निपातौ प्रसिद्धौ। हेत्यास्वादने। हवावेति नि पातसमुदायो वा प्रसिद्धौ। यानीत्युभयत्र सम्बध्यते। तथा च यानि पुरुषादीनि तानि नित्यानि, यानि च प्राणादीनि प्रसिद्धानि तान्यनि त्यानीति प्रतिज्ञाद्वयस्यार्थः। इत्येतानीति इतिशब्दद्वयस्यान्वयः। 'पु

ति । यानि ह वाव उत्पत्तिमन्ति तान्यनित्यानि । या
नि ह वा अनुत्पत्तिमन्ति तानि नित्यानि, न ह्येतानि
कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा का

रुषो ' जीवचैतन्यं तदभिमानी ब्रह्मा च । ' प्रकृतिः ' सत्त्वादिगुणात्मकं जडं तदभिमानिनी श्रीभूदुर्गात्मिका लक्ष्मीश्च । तत्र लक्ष्म्याः न स्वरूपदेहयोरुत्पत्तिः, नापि प्रधानवत्परिणामेनेति नित्यं सत्त्वेन नित्यत्वमुच्यते । ' आत्मा ' परमात्मा । ' कालः ' तत्प्रवाहस्तदभिमानिप्रकृतिश्च । ' प्राणो ' मुख्यवायुः । ' श्रद्धा ' तत्पत्नी भारती । ' भूतानि ' आकाशादीनि । ' भौतिकानि ' भूतकार्याणि शरीरादीनि । यद्यपि सकलचैतन्यग्राहकपुरुषपदेनैव प्राणश्रद्धयोर्नित्यवर्गे गृहीतत्वात् तदुपकरणभूतयोस्तच्छरीरयोरपि भौतिकपदेनानित्यवर्गे गृहीतत्वात् पुनस्तदुभयग्रहणवैयर्थ्यम् । तथाऽपि प्रवाहतो नित्यं वृत्तिज्ञानरूपं परिकरान्तरं चैतन्यमात्रादधिकमेतयोरस्तीति दर्शयितुं पुनः प्राणश्रद्धयोरनित्ये ग्रहणम् । यद्यपि चैतन्यमात्रादधिकमपि नित्यज्ञानमस्तीति प्रदर्शनं तयोर्नित्यानित्यतोक्त्यैव सिद्ध्यति । तथाऽपि अनित्यत्वोक्त्यभावे नित्यानित्यत्वोक्तेः स्वरूपशरीरविषयतया पर्यवसानसम्भवेन न चैतन्यातिरिक्तज्ञाननित्यता सिद्ध्यति । सपरिकरयोः प्राणश्रद्धयोरनित्यत्वोक्तौ तु पुरुषपदेन तयोः स्वरूपनित्यत्वोक्तेः, भूतभौतिकपदेन शरीररूपपरिकरानित्यत्वोक्तेः, तयोश्चेतरजीवसाधारणत्वेन पुनर्नित्यानित्यत्वोक्तेः वैयर्थ्येन तद्विषयत्वासम्भवाच्चैतन्यातिरिक्तवृत्तिज्ञाननित्यताविषयतयैव पर्यवसानावश्यंभावादधिकनित्यसद्भावप्रदर्शनार्थं शरीराद्यशेषपरिकरविशिष्टयोः प्राणश्रद्धयोः पुनर्ग्रहणं कृतम् । पुरुषपदेन तु अपरिकरस्येति ध्येयम् । उदाहरणोपनयवाक्याभ्यामेवानादित्वात्सादित्वादिति हेतुलाभादत्राप्रयोजकत्वशङ्कापरिहारेण तद्धेतुकप्रतिज्ञाद्वयसमर्थनायोभयत्रापि व्याप्तौ वक्तव्यायामनुत्पत्तेरुत्पत्तिप्रतियोगिकत्वादानन्तरिकस्याप्युत्पत्तिमत्त्वहेतोः प्रथमं व्याप्तिमाह—यानीति ॥ हवैशब्दार्थः पूर्ववत् । नित्यत्वव्याप्तस्यानादित्वहेतोः समुचितदेशवृत्तिताबोधनायोपनयमाह—न हीति । हिशब्दः प्रसिद्धौ यस्मादित्यर्थे वा । ' कदा चन ' कदाऽपि । तस्यैव निगमनमाह—न विलीयन्त इति । न नश्यन्ति नित्यानीत्यर्थः । तस्मादित्यादौ ग्राह्यम् । इतिशब्दस्येत्येतानीति पूर्वेणान्वयः । एवमनित्येषु भूतभौति

ल इति । अथैतान्युत्पत्तिमन्ति च अनुत्पत्तिमन्ति च
प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते' इतिभाल्ल
वेयश्रुतेश्च ॥ ४ ॥

( ७ ) सू—ॐ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ॐ ॥ ५ ॥
स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्य
त्वापेक्षया ।

---

केषु नञ्परित्यागेनोपनयनिगमने द्रष्टव्ये । अनित्यत्वेन गृहीतेषु प्राणादिषु मध्ये न सर्वेषामनित्यत्वमेव मन्तव्यम्, किन्तु केषुचिन्नित्यत्वमपीत्याह—अथेति । अर्थान्तरवचनोऽयम् । चावन्योन्यसमुच्चये । इत्येतानीत्यन्वयः । तस्मान्नित्यानीति शेषः । तत्रोपपत्तिमाह—भागश इति । बहुभागैरुत्पद्यन्ते कैश्चिन्नोत्पद्यन्त इत्यर्थः । तथा च 'हि' यस्मात्प्राणादीनि भागश उत्पद्यन्ते, भागशस्तु न, अथ तस्मादुत्पत्तिमन्ति चानुत्पत्तिमन्ति च तस्मान्नित्यानित्यानीति योजना । तथा हि-प्राणपदोक्तो भूततदमुख्यमुख्याभिमानिरूपत्रितयात्मको वायुस्त्रिभिरपि भागैरुत्पद्यते । एवं श्रद्धापदोक्ता भारती च । एवमाकाशपदोक्तं भूतमव्याकृतं तदभिमानिद्वयं च । आहत्य चतुष्टयं चतुर्भिरपि भागैरुत्पद्यते उक्ताया उत्पत्तेश्च त्रिष्वपि सत्त्वात् । एतान्येवाभिमानिचैतन्यस्वरूपेणावकाशस्वरूपेण भूतसूक्ष्मरूपेण च नोत्पद्यन्ते इति । अनेन यानि प्राणः श्रद्धा आकाशाख्यभूतं चेत्येतानि, तानि नित्यानित्यानीति प्रतिज्ञान्तरम् । तत्र साधनादित्यादिर्हेतुः तदनुसार्युदाहरणोपनयनिगमनानि चोपलक्षणयाऽनेन दर्शितानीति ज्ञातव्यम् ॥

( ७ ) ननु भवेदाकाशस्य गौणमनादित्वं उत्पत्तिस्तु मुख्यत इति व्यवस्था, यद्यनादित्वश्रुतिर्गौणी भवेत्, नैतदस्ति, 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः' ( भ. गी-२. ) इत्यादौ न जायत इत्यनुत्पत्तिमत्त्वाभिधायकशब्दस्य परमात्मनि मुख्यत्वदर्शनेन तदेकार्थानादित्वश्रुतेरपि तथात्वौचित्यात् । यद्यप्ययं मन्त्रो गीताभाष्ये जीवपरत्वेन व्याख्यातः । तथाऽपि तत्र परमात्मप्रतिबिम्बत्वेनैव तच्छब्दप्रवृत्तिर्मुख्यतो भगवत्येवायं शब्द इत्यस्ति चोद्यावकाशः । 'अयं ना' परमपुरुषो न जायते इति गीतातात्पर्ये परमात्मपरत्वेनापि व्याख्यानाच्चेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—स्यादिति ॥ ए

(८) यथा ब्रह्मशब्दः । 'अथ कस्मादुच्यते परं ब्रह्मेति..
बृहति बृंहयति च' (अथर्वशिरः) इति श्रुतेः । परे
ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्चादिष्वपि वर्तते ।
अत एवाब्रह्मत्वं च तेषाम् । एवमन्यत्राप्यनुत्पत्तिम
च्छब्दः ॥ ५ ॥

(९) सू—ॐ ॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ॐ ॥ ६ ॥

---

वकारो भिन्नक्रमः, चकारार्थोऽयम् । इदं चैकस्यैवाकाशस्य उत्पत्ति मत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया स्यात् । भावरूपत्वात्क्रम व्यत्यासः । उत्पत्तिमत्त्वं मुख्यं अनुत्पत्तिमत्त्वं गौणमित्युभयमविरुद्धं स्यात् । कुतः ? यत एकस्यैवानुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यत्वेऽप्याकाशे गौणत्वमिति गौणमुख्यत्वापेक्षया प्रवृत्तिः स्यात् अत इत्था वृत्त्या योज्यम् ॥

(८) अत्र सूत्रकृदुक्तं दृष्टान्तं विवृणोति—यथेति ॥ आद्योऽपिर्यद्यपितथापीत्यर्थे । द्वितीयस्समुच्चये । ब्रह्मशब्दः परे ब्रह्मणि कुतो मुख्य इत्यत उक्तम्—अथेति । इति श्रुतेर्मुख्यत्वेनावगतोऽपीत्यन्वयः । 'गौणत्वेन' अमुख्यत्वेन परममुख्यान्यवृत्त्येति यावत् । ब्रह्मशब्दो विरिञ्चादिष्वमुख्यतः कुतोऽस्तीत्यत उक्तम्—अत एवेति । ब्रह्मशब्दस्य तत्रामुख्यत्वादेव 'तेषां' विरिञ्चादीनां 'अब्रह्मत्वं' अपूर्णत्वं मुख्यमस्तीत्यर्थः । न केवलं गौणं ब्रह्मत्वमिति चकारार्थः । हिशब्दार्थो वा चशब्दः । एवकारो मुख्यत्वस्य व्यापकतासूचकः । अनेन विरिञ्चादीनाममुख्यब्रह्मशब्दार्थत्वे पूर्णत्वादिति व्यतिरेकी हेतुः सूचितः । अथेति प्रश्नार्थः । परं वस्तु ब्रह्मेति कस्मान्निमित्तादुच्यत इति । बृहति बृंहयतीत्युत्तरम् । स्वयं वर्धते पूर्णं भवति, यथायोग्यं वर्धयति, पूरयति चान्यान् तस्मात् प्रवृत्तिनिमित्तसद्भावाद्ब्रह्मेत्युच्यत इति श्रुत्यर्थः । आथर्वणीयं श्रुतिः । ब्रह्मशब्दवदित्यनेन लब्धं दार्ष्टान्तिकमाह—एवमिति । 'अन्यत्र' विष्णोः आकाशे । अपिः समुच्चये । 'अनुत्पत्तिमच्छब्दः' तत्प्रतिपादको न जायतेऽनादिरित्यादिरूपः गौणत्वेन वर्तत इति शेषः ॥

(९) ननु युक्तं ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वम्, गुणपूर्णत्वरूपशब्दप्रवृत्तिनिमित्तसत्त्वासत्त्वाख्य कारणसद्भावात् । न

ब्रह्मणोऽन्यस्य नित्यत्वे 'स इदं सर्वमसृजत' (तै. २-६.) इत्यादिप्रतिज्ञाहानिः। आकाशस्यापि सर्वस्माद् व्यतिरेकात्।

( १० ) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. १-१.) स देव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. ६-

च तथाऽनुत्पत्तिमच्छब्दे वक्तुं शक्यम्, तद्वत्प्रकृते प्रवृत्तिनिमित्तपौष्कल्यभावाभावाख्यकारणानुपलम्भादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—प्रतिज्ञेति॥ ब्रह्मणः 'अन्यस्य' आकाशस्यापि 'नित्यत्वे' ब्रह्मवन्मुख्यनित्यत्वे मुख्यतस्तद्वाच्यनुत्पत्तिमच्छब्दवाच्यत्वेऽङ्गीकृते सति। अनेन सूत्रे पूर्ववाद्युक्तं सूत्रकृद्बुद्धिस्थमिहापादकत्वेन संयोज्यमिति सूचितम्। इत्यादिप्रतिज्ञाहानिरिति। नात्रप्रतिज्ञाशब्दः पक्षवचनपरः, अपि तु प्रतिपादयिषितार्थोक्तिपरः। तथा च 'स इदम्' इत्यादिपरमात्मकर्तृकसर्वसृष्ट्युक्तिविरोधः स्यादित्यर्थः। अतस्तत्परिहाराय ब्रह्मण्येवानुत्पत्तिमच्छब्दो मुख्योऽन्यत्र त्वमुख्य इत्यङ्गीकार्यमिति वाक्यशेषः। 'स इदम' इति तैत्तिरीये। अत्र 'स तपस्तप्त्वा' (तै. २ - ६.) इति प्रकृतस्य तच्छब्देन परामर्शः। 'इदं' प्रमितं सर्वं जगत्। आदिशब्देन 'पुरुषात्प्रकृतिर्जगदण्डम्' इत्यादिकं गृह्यते। ननु अत्राकाशशब्दश्रवणात्तस्य मुख्यानुत्पत्तावपि न प्रतिज्ञाहानिरित्यतः प्रवृत्तं अव्यतिरेकादित्यंशं व्याख्याति—आकाशस्यापीति। न केवलं पृथिव्यादीनां, किन्त्वाकाशस्यापीत्यपेरर्थः। 'सर्वस्मात्' सर्वशब्दार्थात् जगतः 'अव्यतिरेकात्' अनतिरेकात्सर्वमध्यपतितत्वादित्यर्थः। सर्वशब्दार्थसङ्कोचे कारणाभावादिति भावः॥

( १० ) तथाऽप्याकाशब्रह्मणोः सादित्वानादित्वे स्फुटं न प्रतीयेते, किन्त्वर्थतः। अतो नेदं नियामकमित्यतः प्रवृत्तं शब्देभ्य इत्यंशं तद्वाक्योदाहरणेन विवृणोति—आत्मेति॥ ऐतरेयवाक्यमेतत्। इदमिति द्वितीया षष्ठ्यर्थे। यथोक्तं बृहद्भाष्ये—इदमग्रे अस्याग्रइति षष्ठ्यर्थे द्वितीयेति। इदमग्र इति समस्तं पदम्, व्यस्तं वा, इदमित्यव्ययं वा। तथा च 'इदम्' अस्य जगतः 'अग्रे' प्रलये 'आत्मा' नारायण एव 'एकः' प्रधान एव 'आसीत्' अवर्ततेत्यर्थः। यद्यपि ऐतरेयभाष्ये इदमिति द्वितीयान्तं, अग्र इति प्रथमान्तं च कृत्वा 'इदं' रमाब्रह्मादि

२-१.) 'इदं वा अग्रे नैव किञ्चनासीत्' (तै. ब्रा.२-२-९.) इत्यादिश्रुतिभ्यः ॥ ६ ॥

( ११ ) सू—ॐ ॥ यावद्विकारं तु विभागो लोकवत् ॥ ॐ ॥ ७ ॥

कं सर्वं जगदपेक्ष्य ततगुणत्वात् 'आत्मा' विष्णुरेक एव 'अग्रः' अग्र्यो गुणतोऽधिक आसीदिति व्याख्यातम् । तथाऽपीदं बृहद्भाष्यदिशा टीकोक्तं व्याख्यानान्तरमित्यदोषः । 'सदेवेत्याद्यद्वितीयम्' इतन्तं छन्दोगवाक्यम् । सोम्येति श्वेतकेतुसम्बोधनं 'इदमस्य' जगतो अग्रे 'सत्' ब्रह्मैव स्वातन्त्र्येणासीत् । तद्ब्रह्म च 'एकं' स्वसजातीयमत्स्यादिभिर्भेदशून्यम् । 'एव' स्वगतगुणक्रियावयवादिभिरभिन्नं न तु तैर्भिन्नम् । यद्वा-अवयवादिनाऽप्यभिन्नमेव न तु घटादिवत्स्वावयवैर्भिन्नाभिन्नमित्येवशब्दार्थः । 'अद्वितीयं' समशून्यं अधिकशून्यत्वमार्थिकार्थः । 'इदं वा अग्रे' इत्यध्वर्यूणां श्रुतिः । इयं च—

सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ॥
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ॥

इति बृहद्भाष्योदाहृतब्रह्मतर्कवचनानुसारेण 'इदं' अस्य 'अग्रे' प्रलये 'किञ्चन' विष्णुरमादिभ्योऽन्यो नैवासीदिति व्याख्येया । इत्यादिश्रुतिभ्य इत्यस्यानुत्पत्तिमच्छब्दो ऽन्यत्रामुख्यो ब्रह्मणि तु मुख्य इत्यवसीयत इति पूर्वेणान्वयः । तथा चाकाशब्रह्मणोः 'आत्मा' इत्यादिश्रुतिभिः स्पष्टमेव सादित्वानादित्वप्रतीतेस्ता एव तयोरनुत्पत्तिमच्छब्दमुख्यत्वामुख्यत्वयोः कारणमिति तदनुपलम्भोऽसिद्ध इति भावः । बहुवचनाद्बहुश्रुतिविरोधे च एकस्यानुत्पत्तिमच्छब्दस्यामुख्यार्थत्वं न्याय्यमिति न्यायं सूचयति—यद्यप्युदाहृतवाक्येष्वपि ब्रह्मणोऽनादित्वस्य तदन्यस्य च कतिपयस्यानादित्वाभावस्य च प्रतीतावपि न स्पष्टमाकाशस्योत्पत्तिः प्रतीयते । तथाऽप्यादिशब्दगृहीतेषु तदुत्तरपूर्वभाविषु 'स इमान् लोकानसृजत' (ऐ. १-१.) इत्यादिषु सा प्रतीयत इति नानुपपत्तिरिति ध्येयम् । न च गौण्यसम्भवादित्यनेनेदं पुनरुक्तं, श्रुतिनिरूपितबाहुल्यासम्भवस्यापि असम्भवपदेनोक्तत्वादिति वाच्यम् । शब्देभ्य इत्यस्य पूर्वोक्तासम्भवसम्बन्धिबहुत्वाश्रयविवरणरूपत्वेनापुनरुक्तेः । अत एव 'अस्ति तु' इत्यनेनापि न पुनरुक्तिः ॥

( ११ ) अनुमानेनापि ब्रह्मण एवानादित्वं, अन्येषां सादित्वमनुत्प

विभक्तत्वाच्च विकारित्वं युक्तम् ।
(१२) विकारिण एव हि विभक्ता लोके दृश्यन्ते ।

त्तिश्रुतेर्मुख्यामुख्यत्वसिद्ध्यर्थं साधयत्सूत्रमुपन्यस्यति—यावदिति ॥ अत्र तुशब्दश्चार्थो हेताववधारणे च। तेन विकारस्य व्यापकता लभ्यते। यावच्छब्दोऽवधारणे। अत्र अवधारणमियत्तापरिच्छेदः। अव्ययीभावसमासश्चार्थं । विकारविभागशब्दौ कर्मणि घञन्तौ । लोकवदिति सप्तम्यन्ताद्वतिरित्यभिप्रेत्य व्याप्त्यर्थाभिधानेन लब्धौ प्रतिज्ञाहेतू बहिरेव दर्शयित्वा सूत्रं व्याप्तिप्रदर्शनपरतया व्याचष्टे-विभक्तत्वाच्चेति। वियत इति विपरिणामेनेहानुवर्तते। चौ हेतुसमुच्चये। तथा च न केवलं शब्देभ्यः, किन्तु वियतो 'विभक्तत्वात्' अल्पशक्तित्वानुमानाच्च 'विकारित्वं' उत्पत्तिमत्त्वमेव 'युक्तं' न्याय्यमित्यर्थः । चकारादविभक्तत्वादविकारित्वं च ब्रह्मणो युक्तमिति समुच्चयोऽपि सूच्यते ॥

(१२) एवं प्रतिज्ञाहेतू अभिधाय हेतोरप्रयोजकत्वशङ्कामपाकर्तुं सूत्रे यावद्विकारमिति सकलसाध्याश्रयार्पकांशेन साधनाश्रयार्पकेण विभाग इत्यनेन च लोकवदिति दृष्टान्तोक्त्या च ज्ञापितां व्याप्तिं दर्शयति—विकारिण एवेति ॥ घटादय इति शेषः। न त्वविकारिण इत्येवार्थः। बहुवचनेन यावत्पदतात्पर्यमुक्तम् । एवेत्यनेन विभक्तत्वहेतोर्व्यतिरेकव्याप्तिश्च दर्शिता । तेन विकारित्वसाध्येन व्यभिचाराभावो ज्ञापितः। एवकारस्य विभक्ता एवेति भिन्नक्रमेणान्वये समव्याप्तिरप्यनेन उक्ता । तेन ब्रह्मण्यविकारित्वे साध्ये तद्व्यतिरेकस्याविभक्तत्वाभावरूपविभक्तत्वव्याप्यता सिद्ध्यति । हिशब्दोऽस्यार्थस्य प्रमाणप्रसिद्धतामाह। यद्वा—सौत्रतुशब्दो हेतावपीत्याशयेन हिशब्दप्रयोगः। 'लोके' जगति। तस्माद्विभक्तत्वहेतोर्नाप्रयोजकताशङ्केति वाक्यशेषः। अनेन वियद्विकृतमुत्पत्तिमत् विभक्तत्वात् घटवत् , ब्रह्मानुत्पत्तिमत्, अविभक्तत्वात्, व्यतिरेकेण घटवत्, इत्यनुमानद्वयमुक्तं भवति । सूत्रार्थस्तु—'लोकवत्' यथा लोके जगति 'यावद्विकारं' विक्रियमाणं यावद्वस्तु घटादिकं तत्सर्वमेव 'विभागः' अल्पशक्तिमत् दृष्टम्, यद्यद्विभक्तं तत्तद्विकृतं दृष्टम्, यथा लोके घटादीति । यावदिति । एवं यावद्विभागं तु विकारो 'लोकवत्' यथा लोके इत्यपि व्याख्येयम् । यस्मादेवं तस्माद्विभक्तत्वाच्च वियद्विकारो विकृतमुत्पत्तिमत्, अविभक्तत्वात् ब्रह्माविकारीति च सिद्धमिति सूत्रशेषः ॥

(१३) एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते ।
प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ॥
(१४) चतुर्थस्तु महान् प्रोक्तः पञ्चमाऽहङ्कृतिर्मता ।
तद्विभागेन जायन्त आकाशाद्याः पृथक्पृथक् ॥
(१५) यो विभागी विकारः स सोऽविकारः परो हरिः ।
अविभागात्परानन्दो नित्यो नित्यगुणात्मकः ॥

(१३) सूत्रार्थे स्मृतिसम्मतिं चाह—एक इति ॥ यतो विष्णुरेक एव परमपुरुषः । अतः स एक एवाविभक्त उच्यते । एतत्समर्थनायान्येषां विभक्तत्वमाह—प्रकृतिरिति । प्रकृतिः पुरुषः कालः इति । एतैः प्राङ्नित्यत्वेन उत्तरत्र परनित्यत्वेन च गृहीतानां ग्रहणम् । तत्त्वप्रदीपे तु प्रकृतिः पुरुषः काल इत्येतैः परनित्यभूताः श्रीभूदुर्गाः सत्त्वाद्यात्मिकाः गृह्यन्त इत्युक्तम् । तत् नित्यस्याप्युपलक्षकं, श्रुत्यर्थनिर्णायकत्वात्स्मृतेः । श्रुतावक्रमेण निर्दिष्टानामपीह क्रमेण निर्देशः कृतः । तथा च प्रकृतिः पुरुषः काल इत्येते त्रयो 'विभागतो' विभागत्वेन प्रोक्ता इत्यर्थः ॥

(१४) एवं विभक्तेषु त्रीन् तत्त्वदेवान् प्रदर्श्य तत्सृज्यं चतुर्थमाह—चतुर्थ इति ॥ 'महान्' महत्तत्त्वाभिमानी चतुर्मुखस्तु विभक्तेषु 'चतुर्थः प्रोक्तः' तत्त्वेन परिगणितः । 'अहंकृतिः' रुद्रस्तु 'पञ्चमा' पञ्चमीत्वेन मता । अस्त्वेवं, ततः किमित्यत आह—तदिति । स चासौ विभागश्च स तथोक्तः । तथा च तेन विभक्तत्वरूपहेतुना आकाशाद्याः 'पृथक्पृथक्' प्रकृतिगुणेभ्यो महान्, ततो अहम्, तत आकाशः, आकाशाद्वायुः, वायोरग्निरिति परम्परया जायन्ते । न त्वेकस्मात्सर्वमित्यनुमीयत इत्यर्थः । आद्यशब्देन वाय्वादिकं गृह्यते ॥

(१५) विभक्तत्वेऽपि कुतो जन्मेति तत्राह—य इति ॥ 'यो विभागी' विभागवान् 'स विकारः' विकृत इत्यर्थः । इति व्याप्तेरिति शेषः। ननु विष्णुरेक एवाविभाग इत्युक्तम्, समर्थितं च तत् । ततः किमित्यत उक्तम्—स इति । अविभक्तत्वेनोक्तो हरिः 'अविकारः' अनादिनित्यः। कुतः? अविभागात् । न च द्वयमसम्भावितम् । यतः 'परः' लोकविलक्षणः । न केवलं हरिरविभागादविकारीत्येतावन्मात्रम् , किं तर्हि ? 'परानन्दः' पूर्णानन्दः स्वरूपतो देहतश्च नित्यः नित्यज्ञानादिगुणश्च भवति । नन्वविभागादित्यसिद्धं, तथासति विष्णोः द्रव्यत्वा

विभागो ह्यल्पशक्तिस्स्यान्न तदस्ति जनार्दने ॥
इति बृहत्संहितायाम् ॥ ७ ॥

——:*:——

२. अधिकरणम् ॥

( १ ) 'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति

---

नुपपत्तेरित्यत आह—विभाग इति । नात्र विभागशब्देन विभागाख्यो गुणो ग्राह्यः, येन द्रव्यत्वानुपपत्तिः, किन्तु 'अल्पशक्तिः' अल्पसामर्थ्यम्, तच्च जनार्दने नास्ति । अन्यथा तस्य महाबलदुर्जनसंहर्तृत्वानुपपत्तिरित्याशयेन जनार्दन इत्याह । न च तद्विभागेनेत्यत्र अन्वयसाधने विभागस्य हेतुत्वोक्तया व्यतिरेके तदभावस्य व्यापकत्वात् अविभागादिति तस्य हेतुत्वोक्तिरयुक्तेति वाच्यम् । विभागाख्यहेतोः समव्याप्त्यभिप्रायेणास्य प्रवृत्तेः । न च 'प्रकृतिः पुरुषः कालः' इति वचनस्य 'नित्यानि पुरुषः प्रकृतिरात्मा कालः' इति प्राचीनश्रुतिविरोधः । तत्र प्रकृत्यादेः स्वरूपस्य अभूत्वाभवनरूपोत्पत्त्यभावोक्तेः । अत्र पुनः पराधीनविशेषावाप्तिरूपोत्पत्त्युक्तेर्भिन्नविषयत्वेन विरोधाभावात् । ननु प्रकृत्यव्याकृताकाशप्राणश्रद्धादीनां विकारमूर्तसम्बन्धशरीरतदभिमानविशेषाख्यविशेषस्य भगवदुत्पन्नत्वे धर्मिणां कथमुत्पत्तिरिति चेत्—अत्रोक्तं सुधायां—अपूर्वविशेषोपजननेन हि विशिष्टाकारोपजनोऽवश्यं भावी । विशिष्टाकारश्च वस्तुस्वरूपाभिन्न इति तस्यैव असावुपजनो भवतीति । इति बृहत्संहितायामित्यस्य सूत्रकृदुक्तमित्यध्याहृतवाक्येनान्वयः ॥ १ ॥

॥ इति वियदधिकरणम् ॥

——:*:*:——

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे ईश्वरे श्रुतिसमन्वयसिद्धये मुख्यवायोरुत्पत्तिविषयश्रुतिविरोधः परिह्रियते । पूर्वेणास्य गतार्थताशङ्कापरिहाराय अधिकाशङ्कां दर्शयितुं वायोरनुत्पत्तौ श्रुतीराह—अथेति ॥ प्रकरणान्तरारम्भार्थोऽथशब्दः । हिशब्दः प्रसिद्धौ । नित्यानित्यशब्दावनादिसादिपरौ । भूतपदार्था उच्यन्त इति शेषः । चावन्योन्यसमुच्चये । नित्यस्य वायोरनित्यवैलक्षण्यज्ञापनाय प्रथममनित्यान् दर्शयति—तेज इति । 'अन्नं' पृथिवी । तेजश्चापश्चान्नं चेति विग्रहः । तेजोऽबन्नानि ।

तान्यनित्यानि वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्त ' ( )।

( २ ) 'अथ ह चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते ' ( )

---

आकाश इत्यत्र भूताकाश उच्यत इति तत्त्वप्रदीपोक्तेरत्राकाशशब्देन भूताकाशमात्रमुच्यते, न त्वव्याकृतमिति । न चैवं ' न चाकाशपदेन भूतमेवात्रोच्यते इत्यत्र नियामकमस्ति ' इति टीकाविरोधः । नियामकत्वोक्तेः पूर्वं पूर्वपक्षदशायां वायुभिन्नस्य सर्वस्याकाशादेः नित्यत्वाभावप्रदर्शनार्थं प्रौढवादेन तथोक्तिसम्भवात् । तत्वप्रदीपस्य च समभिव्याहारानुसारेण वस्तुस्थित्या प्रवृत्तत्वात् । तथा च यान्यनित्यानि प्रतिज्ञातानि तानि तेजोऽबन्नान्याकाश इत्येतानीति ज्ञेयानीत्यर्थः । यदर्थमनित्यं दर्शितम्, तं नित्यं दर्शयति—वायुरिति । यो नित्यः प्रतिज्ञातः स वायुरेवेत्यर्थः । यद्यपि नित्या इति प्रतिज्ञानुसारान्नित्या बहवः प्रदर्शनीयाः । तथाऽपि नित्यानां बहूनां मध्ये मुख्यवायोरतिशयितनित्यत्वमिति प्रदर्शनार्थैकवचननिर्देशः । एवं च नित्य इत्यस्य विशेषेण नित्य इत्यर्थः । ' नित्याश्चेतनाः ' इति बहुवचनद्वयं त्वंशबाहुल्यादुपपद्यत इति ध्येयम् । वायोर्नित्यत्वे हेतुमाह—वायुनाहीति । ' हि ' यस्मात् ' सर्वाणि भूतानि ' वायुभिन्नपृथिव्यादीनि ' नेनीयन्ते' स्वस्वकार्येषु भृशं प्रेर्यन्ते । तस्माद्भूतनेतृत्वात् वायुरेवातिशयितनित्य इत्यर्थः । यद्यपि मुख्यवायोर्नित्यत्वे ' वायुर्वाव नित्यः ' इति श्रुत्येश एव हेतुत्वेनोदाहार्यः , न त्वधिकांशः । तथाऽपि आकाशादिवद्वायोरपि गौणानुत्पत्तिमत्त्वे एकदेशतो नित्यत्वानित्यत्ववतामपि तेजोबन्नानामनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिरयुक्ता स्यादिति युक्तिप्रदर्शनाय स उदाहृतः ॥

( २ ) अनुत्पत्तिश्रुतेः गौणत्वाभावे युक्त्यन्तराभिधायकं श्रुत्यन्तरमुदाहरति—अथेति ॥ यतः सर्वाणि पञ्चभूतानि वायुना विज्ञायन्तेऽतः सर्वभूतज्ञत्वाद्वायुरेव सर्वभूतेभ्योऽतिशयितचेतन इत्यर्थः । चिती संज्ञाने इति स्मरणादिति भावः । अनेन वाय्वनुत्पत्तिश्रुतेः स्वरूपमात्रविषयतया गौणत्वे तस्य सर्वचेतनसमत्वेनातिशयितचेतनत्वोक्तिरयुक्ता स्यादिति युक्त्यन्तरमुपन्यस्तं भवति ॥

( ३ ) 'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण' ॥
(ऋ. ७-९१-१.)

( ४ ) सा वा एषा देवताऽनादिर्योऽयं पवत इति ॥

( ५ ) 'यस्य नादिर्न मध्यं नान्तो नोदयो न निम्लोचः'
( ) इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरिति ॥

( ६ ) अतो ब्रवीति—

---

( ३ ) वायोरनुत्पत्तौ युक्त्यन्तरोपन्यासाय श्रुत्यन्तरमुदाहरति—कुविदङ्गेति ॥ व्याख्यातोऽयं मन्त्रः शब्दाधिकरणे । अनेन वायोरुत्पत्तिमत्त्वे दोषित्वेन सर्वदेवतोपास्यत्वानुपपत्तिरिति पूर्वपक्षे विशेषयुक्त्यन्तर मुपन्यस्तं भवति ॥

( ४ ) वायोरुत्पत्त्यभावे युक्त्यन्तरोपन्यासाय श्रुत्यन्तरमुदाहरति—सेति ॥ 'पवते' शोधयति । कल्मषमिति शेषः । सञ्चरतीति वा शुद्धोऽस्तीति वा । इतिशब्दः श्रुत्यन्तर्गतः । 'योऽयं पवते' इति बृहदारण्यके 'अयं वै ब्रह्म योऽयं पवते' इति बह्वृचब्राह्मणे च । या पवत इति पवनकर्तृत्वेनोक्ता साऽनादिरित्यर्थः ॥

( ५ ) अनादित्व एव वाक्यान्तरमाह—यस्येति ॥ 'आदिः' उत्पत्तिः। 'मध्यं' मध्यमवयः । 'अन्तो' नाशश्च नास्ति यस्याः सा वायुदेवतेति सम्बन्धः । वायोरुदयनिम्लोचयोरेवाभावात्कुतो जन्म सम्भवतीत्याह—यतो नोदयो न निम्लोच इति । प्रादुर्भावतिरोभावौ न स्त इत्यर्थः । युक्तीनामपि श्रुतिगृहीतत्वाच्छ्रुतिभ्य इत्येवोक्तम् । हेतुमुक्त्वा साध्यमाह—वायोरनुत्पत्तिरिति । सावधारणमेतत्सिध्यतीति शेषः। अतः उत्पत्तिश्रुतिरप्रमाणमिति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयोयुक्त इति वाक्यशेषः ॥

( ६ ) एवमधिकाशङ्कया पूर्वपक्षितेऽतिदेशेन सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ एतेनेत्यनूद्य मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्चेति च व्याख्यातम् । अत्र 'भाष्यं चात्यर्थविस्तरम्' इत्युक्तेः मुख्यस्य वायोरमुख्यानुत्पत्तिवचनेन मुख्यानुत्पत्तिवचनाभावेनेत्येकोऽर्थः । अनेनाश्रुतेरिति प्रथमसूत्रोक्तो हेतुरुक्तो भवति । एवं

सू—ॐ ॥ एतेन मातरिश्वा व्याख्यातः ॥ ॐ ॥ ८ ॥
एतेन मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वाय्व
नुत्पत्तिश्रुतिरपि व्याख्याता ॥

(७) नित्यः परमनित्यश्च तथा नित्यः परस्तथा ।
चतुर्धैतज्जगत्सर्वं परानित्यं तु पार्थिवम् ॥

मुख्यस्यामुख्यानुत्पत्तिवचनेन 'प्राणाद्वायुरजायत' इत्यादिमुख्योत्प त्तिवचनेनेति व्याख्यानेऽस्तीति सूत्रोक्तहेतुर्दर्शितः । एवं मुख्यस्यामु ख्यानुत्पत्तिवचनेन अमुख्यानुत्पत्तिरितिवचनेनेति व्याख्याने तृतीयसू त्रोक्तहेतुर्दर्शितः । एवं 'अथैतानि' इतिवायोर्मुख्यामुख्योत्पत्त्यनुत्पत्ति वचनेनेति व्याख्याने चतुर्थसूत्रोक्तो हेतुर्दर्शितः । एवं तत्त्वप्रदीपरीत्या अनुत्पत्तिश्रुतिर्ब्रह्मण्येव मुख्या अन्यत्र प्रतिज्ञाहान्यादिबाधकादमुख्या अत एवोत्पत्तिश्रुतिर्मुख्येत्येवं स्याच्चैकस्येत्यादौ वचनेनेत्येवंव्याख्याने पञ्चमसूत्रोक्तौ हेतू दर्शिताविति ज्ञातव्यम् । विभक्तत्वादित्यस्याल्पश क्तित्वादित्यर्थः । चशब्दः षष्ठोक्तहेतुसमुच्चायकः । चकारादन्यथा स र्वसृष्टिप्रतिज्ञाहानेश्चेति तत्त्वप्रदीपोक्तेः । एवमेतत्पदं व्याख्याय अथ मातरिश्वपदं व्याख्यातपदस्वारस्यात्तदनुत्पत्तिपरतया व्याचष्टे—वा य्वनुत्पत्तिश्रुतिरपीति । अपिः समुच्चये । तथा च न केवलमाकाशानु त्पत्तिश्रुतिः, किन्तु 'वाय्वनुत्पत्तिश्रुतिः' वायोरनुत्पत्तिप्राप्तिप्रापिको क्तश्रुतिरप्यल्पभागविषयत्वेन स्वरूपानुत्पत्तिविषयत्वेन गौणी व्या ख्याता । उत्पत्तिश्रुतिस्तु बाहुल्यान्मुख्यार्थैवेति व्याख्यातेत्यर्थः । टी कायां तु 'एतेन' अनुत्पन्नत्वेन अश्रुतत्वात् उत्पन्नत्वेन श्रुतत्वात् स म्भवशब्दादिरूपहेतुना 'मातरिश्वा' मुख्यवायुरपि उत्पत्तिमान् 'व्या ख्यातः' तत्वेन निश्चित इति श्रुतिलक्षणां विनैव पर्यवसितार्थो द र्शितः ॥

(७) ननु वायोर्मुख्यानुत्पत्त्यभावे उत्पत्त्यनुत्पत्तिमद्भ्यो वियदा दिभ्यो विशेषेणानुत्पत्तिश्रुतिर्मुख्यचेतनत्वादित्युक्तिश्च विरुद्धा स्या दित्याशङ्कां परिहर्तुं स्मृतिमुदाहरति—नित्य इति ॥ लिङ्गव्यत्यय आ र्षः । पर इत्यनन्तरमनित्यपदमनुवर्तते । इतिशब्दोऽध्याहार्यः । तथा च 'एतत्' प्रमितमखिलं जगत् नित्यं परमनित्यं अनित्यं परानित्यं चे ति चतुर्धा भवतीत्यर्थः । चः समुच्चये । परस्परसमुच्चये तथाशब्दौ ।

अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः ।
परस्तु नित्यः पुरुषः प्रकृतिः काल एव च ॥
(८) एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः ।
प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः ॥

तानि क्रमेण दर्शयति—परेति । तुशब्दाः पूर्वपूर्वस्मादुत्तरोत्तरस्य विशेषद्योतकाः । 'पार्थिवं' पृथिव्युपलक्षितभूतकार्यं संसृष्टमण्डादि । 'अनित्यानि तु भूतानि' असंसृष्टान्तर्गतानि आकाशादीनि तदभिमानिविनायकादीनि च । भूतानामुपचयमात्रनाशात् तदभिमानिनः अभिमानमात्रनाशात् पूर्वेभ्यो विशेषः । न च प्रागाकाशस्य 'प्राणः श्रद्धाऽऽकाशः' इति नित्यानित्यत्वोक्तिविरोध इति वाच्यम् । पार्थिववत्परानित्यत्वस्य वायुवन्नित्यत्वस्य चाभावेन तदुक्तिसम्भवात् । 'वायुः' मुख्यवायुर्नित्य उदाहृतः प्रमाणेषु । स्वरूपातिरिक्तप्रातिभज्ञानस्याप्यनुपप्लवात् । न च प्राङ्नित्यत्वानित्यत्वोक्तिविरोधः । शरीराख्यपरिकरविशिष्टस्य तदुक्तिसम्भवात् । परो 'नित्यः' परमनित्यः शरीरतोऽपि नित्य इत्यर्थः । पुरुषः प्रकृतिः काल इति शब्दैस्तत्त्वप्रदीपरीत्या परनित्यत्वं देहादेरपि नित्यत्वमपि टीकारीत्या च श्रीभूदुर्गात्मिका चित्प्रकृतिरुच्यते ॥

(८) यद्येवं जगच्चतुर्विधं, तर्हि विष्णुर्न नित्यः स्यादित्यतस्तस्योक्तेभ्योऽतिशयितनित्यत्वाख्यप्रकारान्तरमाह—एतदिति ॥ विष्णुस्तु 'परात्परनित्यः' परनित्याच्छ्रीतत्त्वादपि परनित्य इत्यर्थः । यद्वा—स्वातन्त्र्यमनेन लभ्यते । तत्र हेतुमाह—एतदित्यादिना । विष्णुर्यतो 'नित्यानन्दैकलक्षणः' नित्यानन्द एव एकं केवलं लक्षणं स्वरूपभूतं यस्य स तथोक्तः । यतश्च 'देवो' द्योतनादिमान् । जननमर्दयतीत्यपगमयतीति जनार्दनः । यतश्चैतच्चतुर्विधं विश्वं 'व्यूह्य' अनित्यादिभेदेन विभज्य राशीकृत्येति वा । स्वयं 'प्रतिव्यूह्य' स्वात्मानं च जगत्प्रति तन्नियामकत्वेन विभज्य व्यूहशः समूहतः कृत्वेति वा । तत्र विभागेन प्रविश्यैतच्चतुष्टयं स्वगुणैः स्वशक्त्या वा 'अतीत्य' अतिक्रम्य प्रतिबिम्बभूतान् जीवान् प्रति निजरूपं 'व्यूह्य' जीवेषु च व्यूह्य स्वगुणैस्तानतीत्य गुणतस्तदुत्तमो भूत्वा तदनपेक्ष एव 'अनिशं' सदा एतज्जगत्स्वयं स्वतन्त्र एव 'धारयति' धत्ते, पुष्णाति च । अतः प

धारयत्यनिशं देवो नित्यानन्दैकलक्षणः ॥
इति कौर्मे ॥ ८ ॥

—— ※:※:※ ——

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ॐ ॥ ९ ॥
'असद्वा इदमग्र आसीत् । ततो वै सदजायत' ( तै. २-७. ) 'असतस्सदजायत' ( ऋ. १० - ७२- २. )

रात्परनित्य इति योजना । अनेन विष्णोः परात्परनित्यत्वे स्वातन्त्र्यं निमित्तमित्युक्तं भवति । टीकायां तु निमित्तनैमित्तकयोः उपचारेणा भेदोक्तिर्वा निमित्तार्थो वा लक्षणशब्दो द्रष्टव्यः यद्वा–परात्परनित्यः स्वतन्त्रनित्य इत्यर्थः । तथा च 'वायुर्वाव नित्यः' इत्याद्यनुत्परया दिश्रुतौ वायोः परतन्त्रत्वेन ईश्वरवत्स्वातन्त्र्यलक्षणपरात्परनित्यत्वा भावेऽपि देहोत्पत्तिमत्वेन चित्प्रकृतिवत्परनित्यत्वाभावेऽपि प्रलयेऽपि प्रतिभातपरायत्वात्स्वरूपातिरिक्तवृत्तिज्ञानप्रवाहनित्यत्वाभिप्रायेण पार्थिवादिवत्सम्यगनित्यताशून्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तसादिज्ञानेभ्यः तदभिमानिविनायकादिभ्यश्चातिशयेन नित्यत्वं भूतनेतृत्वेन वा नित्यत्वं सर्वभूतज्ञातृत्वेन मुख्यचेतनत्वं अवान्तरेश्वरत्वेन सर्वदेवतोपास्यत्वं वृत्तिज्ञानप्रवाहनिम्लोचाभावप्रयुक्तोदयनिम्लोचाभाववत्त्वं चोच्यत इति नोक्तश्रुतियुक्तिविरोध इति भावः । कौर्म इत्यस्योक्तमतो न विरोध इत्यध्याहारेणान्वयः ॥ २ ॥

॥ इति मातरिश्वाधिकरणम् ॥

—— :※: ——

३. अधिकरणम् ॥

( १ ) पूर्वपक्षादिजिज्ञासाजननाय प्रथमं सूत्रमेवोदाहृत्य तद्गततुशब्दव्यावर्त्यपूर्वपक्षं सयुक्तिकं तावद्बहिरेवाह—असम्भवस्त्विति ॥ 'असद्वा इदम्' इति तैत्तिरीयश्रुतिः । 'असतः सत' इति ऋक्श्रुतिः । आदिशब्देन एवंजातीयकश्रुत्यन्तराणि गृह्यन्ते । श्रुतिभ्य इति बहुवचनं न पूर्वपक्षयुक्तिबाहुल्यार्थकम, किन्तु बहुवाक्येषु ब्रह्मजन्मश्रुतिरिति जन्मप्रापकश्रुतिबहुत्वार्थकम । यद्यपि 'असद्वा' इत्यंशो नोपयुक्तः । तथाऽपि पूर्वपक्षे श्रुतिस्थासच्छब्दस्य शून्यार्थत्वेन सच्छब्दस्य च ब्रह्मार्थकतया असतो ब्रह्मकारणत्वे प्रमाणत्वेनोपयुक्तः ।

इत्यादि श्रुतिभ्यः सतोऽप्युत्पत्तिरिति चेत्—

( २ ) न, अनुत्पत्तिरेव सतः । तुशब्देनोक्तव्यवस्थामपाकरोति ।

( ३ ) न ह्यसतः सदुत्पद्यतेऽदृष्टत्वादनुपपत्तेः ।

---

न केवलं गगनपवनयोः, किन्तु सतो ब्रह्मणोऽपीति समुच्चये वा, गगनपवनयोरिवानादितया श्रुतस्यापीति विशेषणसमुच्चये वाऽपिशब्दः । तेन जन्मश्रुतेः सयुक्तिकत्वेन प्राबल्यं सूचितम् । उत्पत्तिः पराधीनविशेषावाप्तिरूपा । अवगम्यत इति शेषः ॥

( २ ) एवं पूर्वपक्षमभिधाय सिद्धान्तयत्सूत्रं व्याचष्टे—नेति ॥ सत उत्पत्तिर्नेत्यर्थः । नेत्यनन्तरं किन्त्विति शेषः । अनुत्पत्तिरित्यनेन असम्भवशब्दः, एवेत्यनेन तुशब्दः सर्वात्मना न तु व्यवस्थयेत्यवधारणार्थतया व्याख्यातः । कुत इत्यतोऽस्यां प्रतिज्ञायां सत इति पदेनैव 'सत्त्वं स्वातन्त्र्यमुद्दिष्टम्' इति भारतोक्तेः । सत्त्वात्स्वातन्त्र्यादिति केवलव्यतिरेकी हेतुः सूचितः । एतदर्थमेव सूत्रे भाष्ये च ब्रह्मण इत्यनुक्त्वा सत इत्युक्तिः । नभोनभस्वतोर्ब्रह्मवदनादित्वेऽप्यस्वातन्त्र्यादुत्पत्तिः । ब्रह्मणस्तु तदभावादनुत्पत्तिरिति वैषम्यनिमित्तोक्त्या पूर्वपक्ष्युक्तवैषम्यायोगहेतोर्गतिकथनार्थं च सत इत्युक्तिः । मयाऽपि वियदादिवद्व्यवस्थया ब्रह्मणोऽनुत्पत्तेरङ्गीकृतत्वात्सिद्धप्रतिज्ञेयमित्यतः एवार्थकतुशब्देन सूचितं प्रयोजनमाह—तुशब्देनेति ॥ उक्तेति स्वरूपेणानुत्पत्तिर्देहविशेषाभ्यामुत्पत्तिरित्युक्तव्यवस्थां निराकरोति सूत्रकृदित्यर्थः ॥

( ३ ) ननु 'असतः सदजायत' इत्यादिश्रुतौ ब्रह्मणोऽप्युत्पत्तिश्रवणात्कथं सर्वात्मनाऽनुत्पत्तिरुच्यत इत्यतो नायं श्रुत्यर्थ इत्याह—न हीति ॥ 'हि' यस्मादसतः सकाशात् 'सत्' ब्रह्म उत्पद्यत इति श्रुत्यर्थो न भवति, तस्माद्ब्रह्मणोऽनुत्पत्तौ न तद्विरोध इत्यर्थः । कुतो नायं श्रुत्यर्थ इत्यतस्तत्र अनुत्पत्तेरिति सौत्रं हेतुं योजयति—अनुपपत्तेरिति । असतस्सकाशात्सतः सम्भव इति प्रातीतिकार्थस्यायुक्तत्वादित्यर्थः । कुतोऽनुपपत्तिरित्यतः स्वतन्त्रानुपपत्तेरित्यनेन सूचितं हेतुमाह—अदृष्टत्वादिति । असतः सत्सम्भवस्येति प्रकृतमनुवर्तते । तथा च असतः सकाशात्सच्छब्दितवस्तुमात्रोत्पत्तेरेवाप्रामाणिकत्वात् अतएव सुतरां सतो ब्रह्मणः उत्पत्तेरदृष्टत्वादप्रामाणिकत्वादित्यर्थः ।

(४) 'तद्वा एतद्ब्रह्माहुर्बृहति बृंहयति चेति। तद्वा एतदसदाहुः न ह्यासादयति कश्चनेति। तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यते' इति श्रुतेरसच्छब्दो ब्रह्मवाची।

यद्यपि सुधायां ननु अनुत्पत्तेरित्यप्ययुक्तम्, सत्यम्। तस्यार्थो न ह्यसतः सदुत्पद्यतेऽदृष्टत्वादनुपपत्तेरित्यनेनानुपपत्तेरिति। हेतुवाक्यस्य न हीत्येतद्भाष्यमर्थकथनरूपमित्युक्तं। न हीत्यस्यासतः सदुत्पत्तेरभावात्, कुतः? अदृष्टत्वादसतः सत्कारणत्वानुपपत्तेः। सतो वाऽसत्कार्यत्वानुपपत्तेरनुत्पत्तिरेव सत इति योजनायां अनुत्पत्तिरूपे साध्ये असतः सदुत्पत्त्यभावो हेतुः तत्र चानुपपत्तिः तत्रादृष्टत्वं हेतुः सर्वथाऽनुत्पत्तौ तु प्रसक्तकारणनिरासादन्यस्याप्रसङ्गात्सिद्धः कारणमात्राभावो हेतुरिति प्रतीयते। टीकायां तु श्रुतिविरोधपरिहारायानुत्पत्तेरित्यस्य श्रुतेः प्रातीतिकार्थानुपपत्तेरित्यर्थोक्तेर्भेदः प्रतीयते। तथाऽपि टीकोक्तार्थमात्रग्रहणेऽनुत्पत्तिरूपे साध्ये हेतोरनभिधानात् न्यूनता स्यात्, अतः सुधोक्तार्थोऽपि ग्राह्यः। तथात्वे सौत्रहेतुः परम्परया योजनीयः॥

(४) नन्वसतः कारणविशेषस्य प्रतिषेधे कुतस्सतोऽनुत्पत्तिसिद्धिः कारणान्तरेणतदुत्पत्तिसंभवादिति चेन्नैवं प्रसक्तकारणनिरासात् अन्यस्याप्रसंगात् कारणाभावस्यैव सिद्धेः तस्यैवानुत्पत्तौ साक्षाद्धेतुत्वेनाभिप्रेतत्वात् तर्हि 'असतः सत्' (छा.६-२-१.) इति श्रुतेः प्रातीतिकार्थानुपपत्तावप्रामाण्यप्रसङ्ग इत्यतः श्रुत्यन्तरेण तां सम्यग्व्याचष्टे-तदिति। 'तद्वा एतदसदाहुर्न ह्यासादयति कश्च न' इत्यस्यैवात्रोपयोगित्वेऽपि तस्य पूर्वोत्तरवाक्यबलाद्ब्रह्मपरत्वज्ञापनायान्यांशोदाहरणम्। श्रुत्यर्थस्तु-'तदेतत्' नारायणाख्यं चैतन्यं ब्रह्मेत्याहुः वृद्धाः। वै प्रसिद्धम्। कस्मान्निमित्तात्? यतः स्वयं 'बृहति' वर्धते वै। नित्यवृद्धस्याप्ययं व्यपदेश आत्माऽस्तीति वद्युक्तः। न केवलमेतावान् किन्तु स जीवांश्च 'बृंहयति' वर्धयतीत्यतः। निमित्तद्वयसमुच्चये चः। इतिशब्दः श्रुतिस्थः इति हेतोरित्यर्थेऽस्ति। तदेतदसच्छब्दवाच्यमाहुः। किं निमित्तं? 'हि' यस्मात् 'कश्चन' कोऽपि अतिसमर्थोऽपि ब्रह्मादीतरत् नासादयति न विशरणादिकं प्रापयति च। तस्मात्तदेतद्ब्रह्म परमित्याहुः। कुतः? 'हि' यतः परतो रमादेरुच्चत्वेन 'ईक्ष्यते' ज्ञायते ज्ञानिभिः अत इति। श्रुतेरिति पञ्चमी। इति ज्ञायत इति शेषः॥

(५) 'देवानां पूर्वे युगेऽसतः सदजायतेति ब्रह्म वा असत् सद्वाव प्राणः प्राणं वाव महान् सह ओजो बलमित्या चक्षते' इति पैङ्गिश्रुतिः ॥

(६) त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविराद्धेऽजः। ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते ॥

---

(५) असच्छब्दस्य ब्रह्मपरत्वेऽपि कः समस्तश्रुत्यर्थ इत्यत आह—देवानामिति ॥ पैङ्गिश्रुतिर्देवानामिति ऋक्प्रतीकं गृहीत्वा ब्रह्मेत्यनेन तां व्याख्याति । 'पूर्वे युगे' आदिसृष्टिकाले देवानां मध्ये प्रथमं सच्छब्दितो वायुः 'असतः' परब्रह्मणोऽजायतेत्यर्थः । 'असत्' असच्छब्दवाच्यं, वैशब्दोऽवधारणे । वावेति निपातसमुच्चयः प्रसिद्धौ । कथं प्राणः सच्छब्दवाच्य इत्याह—प्राणमिति । यतो वृद्धाः 'प्राणं' मुख्यं 'महान्' पूज्यः 'सहः' सहनशक्तिः 'ओजो बलम्' 'इत्याचक्षते' प्राहुः, अतः प्राणो महत्त्वादिसद्गुणशालित्वान्निमित्तात् 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते' इति गीतोक्तेरिति भावः। धर्मधर्म्यभेदविवक्षया सह इत्याद्युक्तिः । यद्यप्युक्तार्थसिद्धौ पैङ्गिश्रुतिरेवालम्। तथाऽप्यसच्छब्दस्य ब्रह्मणि निर्वचनार्थं 'तद्वा एतत्' इति पूर्वश्रुत्युदाहरणम् । असच्छब्दितान्नारायणात्सच्छब्दितो वासुदेवः समुद्भूत इति तैत्तिरीयभाष्यं तु व्याख्यानान्तरम् । यच्च 'असतः' इति श्रुतेरनेकार्थत्वादिति प्रमेयदीपिकायामसच्छब्दस्य प्रकृतिपरतया व्याख्यानम्, तदप्यमुख्यवृत्त्यैवेति ध्येयम् । श्रुतिर्यत इति शेषः । अस्यातोऽसच्छब्दो ब्रह्मवाचीत्यनेन वा न हीति पूर्वेणान्वयः । तथा च असत इति श्रुतेः अन्यथा सम्यग्व्याख्यातत्वात् नाप्रामाण्यमिति भावः यद्वा न केवलं 'तद्वा एतत्' ( ) इति श्रुतिरिति समुच्चये चशब्दः॥

(६) सच्छब्दवाच्यस्य वायोः परब्रह्मजातत्वे न केवलं 'असतः' इति श्रुतिर्मानं, किन्त्वत्र स्पष्टस्मृतिश्चास्तीत्याह—त्वमिति ॥ भागवते तृतीयस्कन्धे देवानां वाक्यमेतत् । हे देव त्वं 'कविः' अतिक्रान्तदर्शी 'अजो' देहतोऽप्युत्पत्तिशून्यश्च अतः यद्यपि त्वयि देवदत्तवद्गर्भाधानादिकर्माण्यसम्भावितानि । तथाऽपि भवान् 'शक्त्यां' भार्यायां 'गुणकर्मयोनौ' गुणानां ज्ञानादीनां सत्त्वादीनां वा कर्मणामदृष्टादीनां योनौ हेतुभूतायां 'अजायां' जननधर्मरहितायां चित्प्रकृतौ 'रेतो' गर्भं

इति भागवते ॥

( ७ ) 'अजायमानो बहुधा विजायते' ( तै.आ.३-१३. ) इति च ।

( ८ ) प्रत्यक्षत्वं हरेर्जन्म न विकारः कथं चन ।
पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥

'आद्ध्ये' आधत्त । तुर्विशेषार्थः । ततः अथ तस्याः प्रकृतेस्सत्प्रमुखाः वायुप्रभृतयो बभूविम । किञ्चातः हे 'आत्मन्' स्वामिन् वयं यदर्थे यत्कार्याय बभूविम, ते तव तत्किकार्यं करवाम, न किमपि तदुपयुक्तज्ञानाद्यभावादित्यर्थः । यद्यपि सत्प्रमुखाः महदादय इति तात्पर्ये व्याख्यातम् । तथाऽपि वायुरपि महत्तत्वाभिमानीत्यविरोधः । यद्यपि त्वमग्रे प्रथमं मातरिश्वनः आविर्बभूवेति ऋग्भाष्यटीकायां युष्मद्युपपदेऽपि भाष्ये आविर्बभूवेति प्रथमपुरुषप्रयोगो युक्त इत्यत्र त्वं देवशक्त्यां रेत आद्ध्ये इति प्रयोगो दृष्टान्तीकृतः । तद्वदत्राप्यार्षत्वसमाधानं वक्तुं युक्तम् । तथाऽप्यार्षत्वं विना वाक्यभेदेन भवानित्यध्याहारेण च व्याख्यानान्तरमिदं व्यासतीर्थैः कृतमित्यदोषः । भागवते उक्तमत उक्तं युक्तमिति शेषेणान्वयः ॥

( ७ ) ननु रामकृष्णादिरूपेण हरेर्जायमानत्वात्कथं जन्माभाव इत्यत आह—अजायमान इति ॥ व्याख्यातेयं श्रुतिर्द्युभ्वाद्यधिकरणस्थानाधिकरणयोः । इति श्रुतिश्चार्थे मानम्, अतो न प्रातीतिकजनिविरोध इत्यन्वयः ॥

( ८ ) अजायमानस्य कीदृशं जन्मेत्यत आह—प्रत्यक्षत्वमिति ॥ अवतारेषु व्यक्तिरेवेत्यर्थः । कथं चनेति स्वरूपदेहविशेषाणामन्यतमेनेत्यर्थः । अन्यत्र तु विकार एव जन्मेत्याह—पुरुष इति । 'पुरुषः' चेतनः, अत एव चित्प्रकृतेरपि लाभः । प्रकृतिकालमहच्छब्दैः जडान्युच्यन्ते । तथैव तत्त्वप्रदीपोक्तेः । 'इत्यादिषु' एवमादिशब्दवाच्येषु । आदिशब्देन अहमादिशब्दवाच्याहङ्कारतत्त्वादीनि गृह्यन्ते । अभिमानिचेतनव्यावर्तनाय तत्त्वमात्रं ग्राहयितुमितिशब्दः । 'क्रमात्' पूर्वतत्त्वापेक्षया उत्तरोत्पन्नतत्त्वोपचयाधिक्यक्रमात् । उपचयो नाम स्थूलभावः । तस्याधिक्यमतिशयः तस्य क्रमः तारतम्यं तदनुसारेणाधिक्यतारतम्यवान्यो विकारस्तदेव प्रकृत्यादिषु जननमित्यर्थः । क्रमादित्यस्य प्रकृतिमहदादिष्वेवान्वयः । न तु पुरुषकालयोरपि, तयो

विकार एव जननं पुरुषे तद्विशेषणम् ।
परतन्त्रविशेषो हि विकार इति कीर्तितः ॥ इति च पाद्मे॥
(९) अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः ।

विकारवत्त्वेऽप्युपचयकृतविकारस्याभावात् । अतएव पुरुषे तद्विशेषणमिति पृथगुक्तिः । तत्र सत्त्वरजस्तमोगुणात्मकप्रकृतिगुणेषु मध्ये सत्त्वगुणस्य न द्रव्यान्तरसंयोगकृत उपचयः, अपि तु स्वत एव स्थूलभूतस्य मूलराशितो विभागेन देशान्तरसंयोगकृतः। रजसस्तु न मूलराशितो विभागेन देशान्तरसंयोगमात्रकृत उपचयः । अपि तु द्रव्यान्तरसंयोगकृतश्च स च तमसोऽल्पः। सत्त्वापेक्षयाऽधिकः। अतएव विकारोऽप्यधिकः । एवं तमसो रजोऽपेक्षयोपचयकृतविकारोऽधिकः गुणत्रयापेक्षया महत्तत्त्वस्य, तदपेक्षया अहङ्कारस्याधिकः । एवमुत्तरत्रापि । पूर्वपूर्वतत्त्वादुत्पन्नानामुत्तरोत्तरतत्त्वानां न केवलं पूर्वपूर्वतत्त्वभागसंयोगकृत एवोपचयः किन्तु स्वस्वसूक्ष्मभागसंयोगकृतश्च । अत एवोत्तरोत्तरतत्त्वेपूपचयाधिक्यमिति ध्येयम् । केचित्तु पुरुषपदोक्तचेतनानां सूक्ष्मसृष्टिकाले सूक्ष्मप्रकृतिभिरुपचयः । प्रकृतेरपि प्रकृत्यन्तरसम्बन्ध एवोपचयः । कालप्रकृतेरपि स एवोपचयः । महत्तत्त्वप्रकृतीनां गुणत्रयरूपकार्यभागैरुपचयः । एवमहङ्कारादिप्रकृतीनामपि महत्तत्त्वादिभागैरुपचय इत्युपचयाधिक्यक्रमादित्यर्थ इत्याहुः। ननु पुरुषस्य चेतनत्वात्कथं विकार इत्यत आह–पुरुष इति। चेतन इत्यर्थः। तद्विशेषणमिति। तेन विकारेण विशेषितत्वं तदाख्यविशेषवत्त्वं भवतीत्यर्थः । तथैव तत्त्वप्रदीपोक्तेः । स च विकारो विकारित्वस्त्वभिमानकृतः । तर्हि चेतनगतविशेषस्यैवोत्पत्तियोगता न चेतनस्येत्यत आह— परतन्त्रेति । पराधीनविशेष एव विकार इत्यर्थः । हिशब्दो यत इत्यर्थे। तत्र जडप्रकृतौ परिणामः चित्प्रकृतौ सिसृक्षाविषयत्वादिरूपो विशेषः परमात्माधीनोऽस्ति । जीवे तु विकाररूपविशेष एव पराधीनोऽस्ति । कालस्य तु निमेषादिरूपेणोत्पाद एव अस्ति । अत एव तत्त्वप्रदीपे 'सर्वे निमेषाः' ( महा. १-८. ) इत्यादिश्रुत्युपन्यासः । कीर्तित इत्यनेनास्य प्रमितत्वमाह पाद्म इत्यनन्तरं तच्चदवतारिकशङ्कापरिहृतेति शेषः ॥

(९) ननु जगत्कारणत्वात्परमेश्वरस्य कथमविकारित्वमित्यत

विकारहेतुकं सर्वं कुरुते निर्विकारवान् ॥
शक्तिशक्तिमतोश्चापि न विभेदः कथं चन ।
अविभिन्नाऽपि सेच्छादिभेदैरपि विभाव्यते ॥

आह—अविकारोऽपीति ॥ अपिरवधारणे । कर्तृत्वनिमित्तसुखदुःखा नुभवरूपविकाररहित एवेत्यर्थः । न केवलं स्वरूपतो विकारः, किन्तु निर्विकारवानपीति वाऽपिशब्दार्थः 'सर्वशक्तित्वहेतुतः' सर्वशक्तिम त्त्वनिमित्तेन शक्त्याख्यहेतुना सर्वं करोतीत्यनेन ईश्वरस्य कुलालादि वन्निमित्तकारणत्वात् न मृदादिवद्विकारित्वमित्युक्तं भवति । 'विकार हेतुकं' विक्रियमाणप्रकृत्याद्युपादानकं 'सर्वं' जगत् 'कुरुते' सृज तीत्यर्थः । निर्विकारवानिति । निर्गतो विकारः एभ्यस्ते निर्विकारध र्मास्तद्वानित्यर्थः । यथोक्तं तत्त्वप्रदीपे—विकारवान् धर्मोऽप्यस्य ना स्तीति निर्विकारवानिति । अनेन ईश्वरधर्मादेरविकारित्वमुच्यते । अतएवाविकारो निर्विकारवान् इत्यनयोर्न पुनरुक्तिः । ननु यदीश्वर स्य शक्त्या जगत्कारणत्वं तर्हि तद्विनाशे तदभावः स्यादित्यत आ ह–शक्तीति । चस्त्वर्थः । शक्तिशक्तिमतोस्तु न विभेदः किन्त्वभेद ए वेत्यर्थः । चशब्दावन्योन्यभेदाभावसमुच्चये नित्यत्वसमुच्चये वा । त था च शक्तेर्नित्यशक्तिमदभिन्नत्वान्नित्यत्वाच्च नोक्तदोष इति भावः । ननु इच्छाज्ञानप्रयत्नानां कर्तृत्वोपयुक्तत्वात्तैर्विना कथं शक्तिमात्रेण कर्तृत्वमित्यत आह—अविभिन्नाऽपीति । अत्राभेदो नान्योन्याभावाभा वः, तथासति तत्प्रतियोगिसमर्पकस्य भेदैरित्यस्यान्योन्याभावरूपो भेदोऽर्थः स्यात् । न च तद्युक्तम्, निर्भेदत्वात् । भेदैरिति बहुवचनायो गाच्च । किन्त्वेकत्वसङ्ख्यारूपः । अपिरेवार्थः यद्यपीत्याद्यर्थे च । ज्ञान प्रयत्नावादिपदोक्तौ । तथा च यद्यप्यभिन्ना तथाऽपि अविभिन्नाऽपि एकैव सा शक्तिः 'इच्छादिभेदैः' इच्छादिनिरूपितद्वित्वत्रित्वादिस ङ्ख्याभिः । इच्छेत्याद्यनेकशब्दैरिति यावत् । 'विभाव्यते' 'परास्य शक्तिः' इत्यादावभिधीयत इत्यर्थः । न केवलं शक्तिरित्यपेरर्थः । तथा च शक्तिसत्त्वे तदवान्तरभेदरूपाणामिच्छादीनामपि सत्वान्न शक्त्या कर्तृत्वनिर्वाहानुपपत्तिरिति भावः । अनेनेश्वरस्य न केवलं शक्त्या सर्वं करोतीति हेतोरुपादानत्वाभावः, येन विकारशक्तिमत्युपादाने व्यभिचारः स्यात्, किन्तु कुलालादिवदिच्छापूर्वकारणत्वाच्च नोपादा नत्वम् । अतोऽपि निर्विकारत्वमित्युक्तं भवति । भागवततन्त्र इत्य

इति भागवततन्त्रे ॥ ९ ॥

——:*:——

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ तेजोऽतस्तथा ह्याह ॥ ॐ ॥ १० ॥

'वायोरग्निः' ( तै. २-१. ) इत्यादेर्नान्यत उत्पत्तिर्ग्रा

स्योक्तत्वात् न कश्चिद्दोष इत्यध्याहृतेनान्वयः ॥ ३ ॥

॥ इति असम्भवाधिकरणम् ॥

——*——

४. अधिकरणम् ॥

( १ ) अस्मिन्नधिकरणे तेजोजन्मविषयश्रुतिविरोधः परिह्रियते । 'वायोरग्निः' इति श्रुतेस्तेजो वायोर्जायत इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—तेज इति ॥ इत्यादेरिति । इत्यादिश्रुत्येत्यर्थः । आदिशब्दात्तैत्तिरीयश्रुतिजातीयश्रुत्यन्तरपरिग्रहः । 'अन्यतो' ब्रह्मणोऽन्यस्माद्वायोः । तेजस इति शेषः । 'ग्राह्या' ज्ञातव्या। ग्राह्येत्यनन्तरं किन्त्विति शेषः । एवमवधारणार्थकानुवृत्ततुशब्दसूचितं स युक्तिकपूर्वपक्षं तन्निषेधरूपं साध्यं च प्रदर्श्य तत्र हेतुत्वेन किन्त्विति प्रश्नोत्तरभूतं तेजोऽत इत्यनेनोक्तं विधिरूपं साध्यान्तरं दर्शयति—अत एवेति । अत इत्यस्य व्याख्या परादिति। परादेवेति सम्बन्धः । यतो वियद्वायू जातावत एव पूर्वसूत्रे सच्छब्देन प्रकृतात्परमात्मन एवेत्यर्थः । 'तत्' तेजः। अपिशब्दो न केवलं वियदादिकं किन्तु तेजोऽपीति समुच्चयार्थः । अनुवृत्ततुशब्दव्याख्यानान्तरमेतत् । तत्त्वप्रदीपे तु अपिपदेन भूतवायुरपि परादेव जायत इति साधितमिति सूचयतीत्युक्तम्। न चोत्तराधिकरणटीकायामपि पदस्य भूतवाय्वाद्युपलक्षकत्वोक्तिविरोधः। लाघवात्तत्र सर्वोपलक्षणायामपि क्रमाभिप्रायेणात्र भूतवायोर्ग्रहणोपपत्तेः। जायत इति सूत्रे शेषोक्तिः । एवं प्रतिज्ञांशं व्याख्याय तथा ह्याहेति हेत्वंशं व्याख्याति—तदिति । इति श्रुतिरिति शेषः । इतीत्यनेन प्रकारार्थकतथाशब्दो व्याख्यातः। हिशब्दो यत इत्यर्थे । तच्छब्दोदितं ब्रह्म तेजोभूतं वायुद्वाराऽसृजतेति छान्दोग्यश्रुत्यर्थः । यद्यपि ।

सोऽसृजत्प्रथमं देवीं तेजआख्यां श्रियं सतीम् ।
तते स्थितेन रूपेण साऽजैव हि यतस्सदा ।
तेज इत्युच्यते तस्मात् जनेर्वा तत एव तु ॥

ह्या । अत एव परात्तदपि जायते । 'तत्तेजोऽसृजत' इति ह्याह ।

(२) कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपिशब्दोक्तत्वात्पु

---

इति छान्दोग्यभाष्ये तते व्याप्ते भगवति व्याप्तप्रकृतौ वा स्थितेन रूपेण न जायत इति वा तते भगवति निमित्ते सत्येव तस्माद्रूपविशेषेण जनेर्वा तेजश्शब्दः श्रीदेवीपर इत्युक्तेः। तथा प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धमिति, तद्भाष्यस्थवाक्यान्तरेण चास्य विरोधः प्रतीयते । तथाऽपि श्रुतिसूत्रयोस्तेजश्शब्देन तेजोदेवताया रमायास्तदभिमन्यमानतेजोभूतस्य च विवक्षितत्वान्न विरोधः । न च 'वायोरग्निः' इति श्रुतिविरोधपरिहारायात्र तेजसो वायुद्वारा ब्रह्मजातत्वस्याभिप्रेतत्वेन तेजश्शब्देन लक्ष्म्या अपि ग्रहणे कथं तस्याः वायुद्वारा ब्रह्मजातत्वमिति वाच्यम् । ब्रह्मजातत्वस्योभयसाधारण्येनोक्तावपि वायुजातत्वस्य भूतविवक्षयैवोक्तत्वात् । न च भूतविवक्षायां तेजःप्राथम्यायोग इति वाच्यम् । आकाशवाय्वोरप्रत्यक्षत्वेन प्रत्यक्षभूतेषु तेजसः प्राथम्येन तदुपपत्तेः । सृष्टिभेदेन वाक्यद्वयाविरोध इत्यपि केचित् ॥

(२) ननु 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' इत्यधिकरणे वाय्वादिशब्दानां ब्रह्मणि समन्वयस्योक्तत्वेन तेजसो ब्रह्मजातत्वस्य सिद्धत्वात्किं पुनरुक्त्येत्यत आह—कारणत्वेनेति ॥ इतीत्यनन्तरं अत्रेवेति शेषः । 'उक्तेऽपि' उक्तत्वेऽपि ब्रह्मणः कारणत्वस्येति शेषः । अपिः शङ्कापरिहारसमुच्चयार्थः । निवृत्त्यर्थमित्यनन्तरं यत इति शेषः । तथा च यद्यपि 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' 'इत्यत्रैव' इत्यधिकरण एव ब्रह्मणस्तेजःकारणत्वमुक्तम् । तथाऽपि तत्र तस्योक्तत्वेऽपि सिद्धत्वेऽपि पुनरत्रोक्तिर्युक्ता। न च वैयर्थ्यम्, यतस्सा 'उभयकारणत्वनिवृत्त्यर्थं भवति' उभयोर्ब्रह्मवाय्वोः साम्येन स्वतन्त्रकारणत्व शङ्कानिवृत्त्यर्थं भवतीति योजना। न चैतच्चोद्यपरिहारः तत्रैव कुतो न भवेदित्यत आह—अमुख्यतयेति । परममुख्यवृत्तिभिन्नमुख्यवृत्त्येत्यर्थः । 'अन्येषां' ब्रह्मणोऽन्येषां वाय्वादीनाम् । न केवलं ब्रह्मण इत्यपिशब्दार्थः । 'शब्दोक्तत्वात्' वाय्वादिशब्दवाच्यत्वस्याङ्गीकृतत्वादित्यर्थः । नोभयकारणत्वनिवृत्तिस्तत्र भवतीति वाक्य

शक्तिरुभयकारणत्वनिवृत्त्यर्थम् ॥ १० ॥

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आपः ॥ ॐ ॥ ११ ॥

'ब्रह्मैवेदमग्र आसीत्तदपो सृजत तदिदं सर्वम्' इति श्रुतेः 'अग्नेरापः' ( तै. २ - १. ) इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः ।

शेषः । अविरोधादिति भावः ॥ ४ ॥

इति तेजोधिकरणम् ॥

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे अब्जन्मविषयश्रुतिविरोधः परिह्रियते । 'अग्नेरापः' इतिश्रुतेः अग्नेरापोऽजायन्त इति पूर्वपक्षे सिद्धान्तय त्सूत्रमुपन्यस्य व्याचष्टे—आप इति ॥ श्रुतेरित्यनेन सूत्रे 'तथा ह्याह' इत्यस्यानुवृत्तिस्सूचिता । ब्रह्मण इत्यनेन अत इत्यस्य एवेत्यनेन तुशब्द स्यैवार्थस्य अनुवृत्तिस्सूचिता । श्रुतेर्ब्रह्मण इति पञ्चम्यौ । 'अग्नेरापः' इत्युक्तेऽपीत्यनेन एवकारव्यावर्त्यः सयुक्तिकपूर्वपक्षोऽपि दर्शितः । अपिः शङ्कापरिहारसमुच्चयार्थः । न त्वन्यतोऽग्नेरित्येवकारार्थः । अ बादीत्यादिपदं तु भूतवायुपृथिव्योषध्यादीनां उपलक्षणमप्पदमिति सूचनार्थम् तेषामपि 'आकाशाद्वायुः' ( तै. २-१-१. ) इति सयुक्ति कश्रुतिरूपपूर्वपक्षन्यायप्राप्तत्वात् । 'इदं सर्वमसृजत' ( बृ. ३-२-५. ) इति सिद्धान्तश्रुतिरूपन्यायप्राप्तत्वाच्च । अत एव 'इदं सर्वम्' इति श्रुत्यंशोदाहरणम् । सृष्टिरित्यनेन सूत्रे जायन्त इति शेषो दर्शितः । सृष्टिरपीत्यपिशब्दान्वयेन अनुवृत्ततुशब्दः आपोऽपीत्यर्थे तयाऽपि व्याख्यातः । तथा च यद्यपि 'अग्नेरापः' इत्युक्तं घर्मात्स्वेदा दिकं च दृष्टम् । तथाऽपि 'अग्नेराप इत्युक्तेऽपि' तथा श्रुतावपि घर्मा त्स्वेदादिदर्शनेऽपि नाग्न्यादेरबादिसृष्टिः मन्तव्या, किन्तु ब्रह्मण एवा बादिसृष्टिर्भवति । कुतो ? 'ब्रह्मैवेदम्' ( ) इति श्रुतेरिति योजना । 'इदम्' अस्य 'अग्रे' प्रलये ब्रह्मैवासीत् । तद्ब्रह्मापो सृजत । 'इदं सर्वं' भूतवाय्वादिकं तद्ब्रह्म ततो जातमेवेति श्रुत्यर्थः ॥

(२) एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ( मु. २-१-३. ) इत्यादि च ।

(३) कर्ता सर्वस्य वै विष्णुः एक एव न संशयः ।
इतरेषां तु सत्ताद्या यत एव तदाज्ञया॥ इति भविष्यत्पुराणे ।

(४) वामने च—

---

(२) 'तदपोऽसृजत' (छां. ६-२-३.) इति श्रुतेरम्मात्रस्य ब्रह्मजातत्वेऽपि वाय्वादेः सर्वस्य ब्रह्मजातत्वं कुतः? इदं सर्वमित्यस्य च सामान्यरूपत्वादित्यतः श्रुत्यन्तरमाह—एतस्मादिति ॥ 'एतस्मात्' परब्रह्मणो मुख्यप्राणो मुख्यवायुर्जायते । 'मनस्सर्वेन्द्रियाणि च' जडचेतनोभयरूपाणि जायन्ते। एवं 'खं' आकाशं भूतवायुः तेज आपः 'विश्वस्य धारिणी' पृथिवी च जायत इत्यर्थः । पृथिवीनिष्ठं विश्वधारकत्वमपीश्वराज्ञातमिति दर्शयितुं विश्वस्य धारिणीत्युक्तम् । इत्यादि चेत्यस्य ब्रह्मणोऽबादिसृष्टिरित्याहेति पूर्वेणान्वयः । चः पूर्वश्रुतिसमुच्चये । यद्यपीयं श्रुतिः पूर्वाधिकरण एवोदाहर्तव्या तेजसो ब्रह्मजातत्वस्याप्यत्रैवोक्तेः । तथाऽप्यधिकरणद्वयोक्तार्थसाधकत्वेन तदन्त एवोपन्यासो युक्तः।अत एव भाष्यकृता तेजःपदस्याप्यप्पदवदन्योपलक्षकत्वसम्भवेऽपि पूर्वत्र तेजआद्यपीत्यनुक्त्वाऽत्रैवाबादीत्युक्तम् ॥

(३) मनूदाहृतश्रुतिविरोधादितरमात्रजनकत्वानुपपत्तावपि 'वायोरग्निः, अग्नेरापः' इति सयुक्तिकश्रुतिबलाद्विष्णोरिवेतरेषामपि जनकत्वं किं न स्यादित्यतः शक्त्यभावादित्याह—कर्तेति ॥ विष्णुरेव सर्वस्य जगतो मुख्यः 'कर्ता' कारणं वै । कुतो? यत 'इतरेषां' वाय्वादीनां 'सत्ताद्याः' सत्ताप्रतीतिशक्तयः 'तदाज्ञया' तस्य विष्णोः आज्ञामात्रेणैव भवन्त्यत इत्यर्थः । तुशब्दो विशेषार्थः । यद्यपीयं स्मृतिरपि पूर्वत्रैवोपन्यसनीया , अतिव्याप्तिनिरासस्य तत्रापि साम्यात् । तथाऽप्यौचित्यादधिकरणद्वयान्त एवोपन्यस्ता । पुराणे इत्यस्य ब्रह्मण एव अबादिसृष्टिरित्युक्तमिति सावधारणवाक्येनान्वयः ॥

(४) तर्हि विमताः आपस्तेजसो जायन्ते अप्त्वात्, स्वेदादिवदिति युक्त्युपेता 'अग्नेरापः' इति श्रुतिः कथमुपपद्यत इत्यतो विशेषप्रमाणमाह—वामनेचेति ॥ यद्यपि विष्णुः 'एकः' अन्यानपेक्ष एवाबा

तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥ इति ॥

( ५ ) घर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः ॥ ११ ॥

——:*:——

६. अधिकरणम् ॥

( १ ) 'ता आप ऐक्षन्त बह्वयस्स्याम प्रजायेमहीति । ता

---

दिजनने 'महाशक्तिः' पूर्णसामर्थ्योपेतः । तथाऽपि लीलयैव 'तत्रत त्र' अग्न्यादिषु 'स्थितः सन्' स्थित्वा 'तत्तच्छक्तीः' अग्न्यादिसामर्थ्यानि प्रबोधयन् तद्द्वारा 'सर्वं' अबादिकं 'अञ्जसा' सम्यक् 'कुरुते' जनयतीत्यर्थः । अञ्जसेत्यनेन उत्पादनप्रकाराभिज्ञत्वं सूचितम् । तथा चाग्न्यादिगतेश्वरविषयं श्रुत्यादिकमिति न तदनुपपत्तिरिति भावः । इति च वामन इत्यन्वयः । 'अग्नेरापः' इत्यादिश्रुतिगतिरुक्तेति शेषः ॥

( ५ ) ननु कारणत्वेनेत्यत्रैवापां ब्रह्मणो जन्मनः सिद्धत्वात् व्यर्थमेतदधिकरणम् । न चाग्निब्रह्मणोरुभयोः स्वतन्त्रकारणत्वनिवृत्त्यर्थमेतदिति वाच्यम् । तस्यापि पूर्वाधिकरण एव निरस्तत्वादित्यत आह—घर्मादिति ॥ ऊष्मभयशोकादित्यर्थः । स्वेदादीति । स्वेदबाष्पादिदर्शनादित्यर्थः । 'प्रतिषेधः' अग्नेरापः प्रतिस्वतन्त्रकारणत्वस्याऽत्र क्रियत इति शेषः । तथा चापां ब्रह्म जन्यत्वसमर्थनार्थं चोभयकारणतानिरासार्थं वा नेदमधिकरणं, येन वैयर्थ्यं स्यात्, किन्तु भवतु वायोरग्न्युत्पत्तौ तद्द्वारत्वप्रतिपादकता 'वायोरग्निः' इति श्रुतेः , अत्र पुनरग्नेरप्कारणत्वमेव 'अग्नेरापः' इति श्रुत्या प्रतिपाद्यते, न तु द्वारकारणत्वम्, कुतः? प्रत्यक्षानुकूल्यादित्यभ्यधिकाऽऽशङ्का प्राप्तब्रह्मेतरमात्रजन्यतानिरासार्थं, अतः सार्थकमेतदिति भावः ॥ ५ ॥

इति अबधिकरणम् ॥

——*✽*——

६. अधिकरणम् ॥

( १ ) एवं सर्वस्य जगतः साक्षादन्यद्वारा वा ब्रह्मजातत्वे सिद्धेऽत्रान्यद्वाराजगत्कारणे समन्वयसिद्ध्यर्थमपां ब्रह्मद्वारत्वे श्रुतिविरोधः परिह्रियते । अत्रापः किमन्नस्य द्वारकारणमुत पृथिव्या इति सन्देहस्य बीजभूतं श्रुतिविरोधं दर्शयन् पूर्वपक्षयति—ता इति ॥ प्रथम इ

अन्नमसृजन्त ' (छा. ६-२.) इत्यद्भ्योऽन्नसृष्टिः श्रूयते । 'अद्भ्यः पृथिवी ' (तै. २-१.) इति कुत्र चित्पृथिवीसृष्टिः । अतो विरुद्धत्वादप्रामाण्यमिति ।

(२) अतो वक्ति—

सू—ॐ ॥ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ ॐ ॥ १२ ॥

पृथिवी तत्रान्नशब्देनोच्यते भूताधिकारत्वात् ।

---

तिशब्दः श्रुत्यन्तर्गतः । द्वितीयो भाष्यकारीयः । 'इति श्रूयते' इति छान्दोग्यश्रुत्योच्यत इत्यर्थः । यद्यपि 'ता अन्नमसृजन्त' इत्येतदेवोपयुक्तम् । तथाऽप्यस्य किञ्चिद्व्यवहितत्वात् तच्छब्दपरामर्शनीयप्रदर्शनाय तत्पूर्ववाक्यमप्युदाहृतम् । पूर्वपक्षेऽन्नशब्दौ प्रसिद्धावन्नपरौ । सिद्धान्ते श्रुत्यर्थस्तु–'ताः' तेजोऽभिमानिरमाजन्योऽब्भूताभिमानी मुख्यप्राणः 'ऐक्षन्त' व्यचिन्तयत् । किमिति ? तेजोवद्वयमपि 'बह्व्यो' बहुरूपवत्यः 'स्याम' भवेम तदर्थं 'प्रजायेमहि' सृज्यं जगत्प्रजनयाम इति । शब्दस्वाभाव्याद्बहुवचनम् । इत्थं विचिन्त्य 'ता' आपो मुख्यप्राणः 'अन्नमसृजन्त' अन्ननामकरुद्रसहितं तदभिमन्यमानपृथिव्याख्यं भूतमसृजतेति । अद्भ्यः पृथिवीति 'कुत्र चित्' तैत्तिरीयेऽद्भ्यः पृथिवीसृष्टिः श्रूयते इत्यर्थः । अत इति । यत एवं द्विधा श्रूयते, अतः संशयः, उभयोरप्रामाण्यं च भवेत्, कुतः ? श्रुतिद्वयस्य 'विरुद्धत्वात्' विरुद्धार्थबोधकत्वादिति योजना ॥

(२) एवं पूर्वपक्षेऽथ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'वक्ति' परिहारम् । सूत्रे न श्रुतिद्वयस्यानिर्णयमूलकाप्रामाण्यं कल्प्यम्, अपां पृथिवीकारणत्वस्यैव निर्णयात् इति प्रतिज्ञाहेतूपस्कारमभिप्रेत्य न च श्रुतिद्वयविरोध इत्याशङ्कायां तत्रोत्तरत्वेन पृथिवीत्यंशं व्याचष्टे—पृथिवीति । सूत्रे तत्र तेनोच्यते इति पदत्रयशेषमभिप्रेत्य तत्र 'ता अन्नम्' इति वाक्ये तेनान्नशब्देन पृथिव्युच्यत इत्याह । यत इति शेषः । कुतोऽसावन्नशब्दः पृथिवीपर इत्यतस्तत्र हेतुत्वेनोक्तमधिकारेत्यंशं सविभक्तिकं विच्छिद्याधिकारप्रतियोगिप्रदर्शनेन व्याचष्टे—भूतेति । 'तत्तेजोऽसृजत . . तदपो सृजत . . तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादिवाक्यादस्य प्रकरणस्य भूतविषयत्वावगमादित्यर्थः । विषयविषयितावोधनाय त्वप्रत्ययः ॥

(३) कार्ष्ण्यप्रचुरा च पृथिवी नान्नस्य तथा विशेषः ।
(४) 'आपश्च पृथिवी चान्नम्' (ऐ. आ. २-३-१.) 'पृथि
वी वा अन्नम्' (तै.३-९.) 'ता आपोऽन्नमसृजन्त पृ
थिवी वा अन्नम्' इत्यादिशब्दान्तराच्च ।
(५) आदिशब्दाद्युक्तिः अपौरुषेयत्वेनादोषस्य वाक्यस्य

(३) नन्वन्नश्रुतौ जाग्रत्यां कथं प्रकरणमात्रेण निर्णय इत्यतः त दुत्तरत्वेन रूपेत्यंशं व्याचष्टे—कार्ष्ण्येति ॥ पृथिवी 'कार्ष्ण्येन' कृष्ण रूपेण 'प्रचुरा' बाहुल्येन कृष्णवर्णोपेतेत्यर्थः । कार्ष्ण्यं चान्ने 'यत्कृ ष्णं तदन्नस्य' इति सिद्धम् । यत इति वाक्यशेषः । तथा च प्रकरण- लिङ्गाभ्यामन्नश्रुतिबाध इति भावः । पृथिव्यां रूपान्तरस्य सद्भावात्क थं कार्ष्ण्यं लिङ्गमित्याशङ्कापरिहाराय प्रचुरेत्युक्तम् । अनेन स्वतः कार्ष्ण्यं लिङ्गमित्यभिप्रैति । चशब्दो लिङ्गसमुच्चये । नन्वन्नेऽपि सम्भा वतः कार्ष्ण्यस्य कथं पृथिवीलिङ्गत्वमित्यत आह—नेति । अन्नस्य 'त था' पृथिवीवत् 'विशेषः' कार्ष्ण्यप्राचुर्यरूपो धर्मो नेत्यर्थः । तथा च लिङ्गं निरवकाशमिति भावः ॥

(४) न केवलं प्रकरणलिङ्गाभ्यामवाचकेनैवान्नशब्देन पृथिवी बो ध्यते, किन्तु श्रौतप्रयोगबलात्, तत्रापि तस्य वाचकत्वशक्तिरस्तीत्य तोऽपीत्याशयेन शब्दान्तरेत्यंशं व्याचष्टे—आपश्चेति ॥ 'आपश्च पृथि वी चान्नम्' इत्यैतरेयश्रुतिः । अन्नेत्युच्यत इति शेषः । परस्परसमुच्च ये चशब्दौ । यद्यप्यैतरेयभाष्ये पृथिव्यप्छब्दौ नारायणानिरुद्धपरत या व्याख्यातौ । तथाऽपि अन्यत्रापि शक्तिसत्त्वात् नासङ्गतिः । 'पृथि वी वा अन्नम्' इति तैत्तिरीयश्रुतिः । वैशब्दः प्रसिद्धौ । 'ता आपः' इत्यपरा श्रुतिः स्वयमेव स्वस्थितान्नशब्दं व्याख्याति—पृथिवीति । आदिशब्देनैवंजातीयका श्रुतिर्गृह्यते । 'शब्दान्तरात्' अन्नमित्यादि श्रुत्यपेक्षया अन्यस्माच्छ्रुतिवाक्यादित्यर्थः । शाखान्तरस्थत्वसूचना यान्तरेत्युक्तिः । यद्वा—शक्तिग्राहकशब्दविशेषादित्यर्थः । चो हेतुस मुच्चये । अस्य पृथिवी तत्रान्नशब्देनोच्यत इति पूर्ववाक्येनान्वयः ॥

(५) किमन्नश्रुतेरर्थान्तरकल्पनया, परस्परविरोधात् श्रुतिद्वया प्रामाण्यमेव किं नाभ्युपेयते इत्यत आह-आदिशब्दादिति॥ सूचितेति शेषः । तामेव युक्तिं साध्यसाधनोक्तया दर्शयति—अपौरुषेयत्वेनेति । वेदस्येति शेषः । तथा चापौरुषेयत्वेन लिङ्गेनाशेषस्य निर्दोषत्वेन सि

नाप्रामाण्यमित्यादि ।

( ६ ) कौर्मे च—

विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते ।
यथा विरुद्धता न स्यात्तथार्थः कल्प्य एतयोः ॥ इति ॥

( ७ ) रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः ।
नाभिपद्माभिसम्बन्धात्पीता सेत्यभिधीयते ॥
क्षत्ररक्ताभिसम्बन्धाद्रक्तोदकबहुत्वतः ।

---

द्धस्य वेदस्य नाप्रामाण्यमित्यादियुक्तिरनुमानमादिशब्दात्सूचितमित्यर्थः । आदिपदेन मन्वादिस्मृतिरूपाप्तवाक्यानुसारित्वादिति युक्तिर्गृह्यते । अनेन वेदो नाप्रमाणमप्रामाण्यकारणदोषशून्यत्वात्प्रत्यक्षवत् । न च हेतोरसिद्धिः । वेदोऽशेषदोषशून्यः, अपौरुषेयत्वात्, स्मृत्यनुसारित्वाच्च नाप्रमाणमित्यनुमानमुपन्यस्तं भवति । एवं च युक्तिबलाद्वेदप्रामाण्यसिद्धौ तत्र विरोधावभासेऽन्यार्थतैव कल्प्या, नाप्रामाण्यमिति भावः ॥

( ६ ) विरोधप्रतीतावन्यार्थतैव कल्प्या, नाप्रामाण्यमित्युक्तार्थ एव स्मृतिमाह—कौर्मे चेति ॥ न केवलमस्माभिः, किन्तु कौर्मे चोक्तमिति चशब्दार्थः । किमुक्तमित्यतस्तत्पठति—विरोध इति । आपाततो विरोध इत्यर्थः । 'यत्र' विषये 'तदा' तत्र 'नेष्यते' नाङ्गीक्रियत इत्यर्थः । किं तर्हीत्यत आह—यथेति । 'एतयोः' विरुद्धत्वेन प्रतीतवाक्ययोरन्योन्यं मानान्तरेण च 'विरुद्धता' विरोधो यथा न स्यात्तथा अर्थः प्रातीतिकादन्योऽर्थः कल्पनीय इति योजना । इति कौर्मे इतीतिशब्दान्वयः ॥

( ७ ) यदुक्तं प्राचुर्येण कृष्णा पृथिवीति तत्र प्रमाणमाह—रक्तोऽग्निरिति ॥ 'अग्निः' तेजो 'रक्तो' रक्तरूप इत्युक्तम् । उदकं स्वतः शुक्लम् । एवं पृथिवी 'स्वतो' निरुपाधिकतया कृष्णैव । स्वत इत्यस्य कृत्यं दर्शयति—नाभीति । विष्णोरिति शेषः । पद्मस्य लोकाधारत्वात्पीतरूपवत्त्वाच्चेति भावः । पद्मसम्बन्धादित्युक्त्या प्राक्स्थितानामेव लोकानां पद्मदलैः संबन्धो, न तु पाद्मसृष्टौ प्राग्विलीनानां पद्मदलैः सृष्टिरिति ज्ञायते । 'सा' पृथिवी । तस्या एवौपाधिकं रूपान्तरमाह—क्षत्रेति । दुष्टक्षत्रियाणां रक्ताभिसम्बन्धात् सा रक्तेत्यभिधीयत इत्यर्थः । तस्या एवौपाधिकं रूपान्तरमाह—उदकबहुत्वत इति ।

शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत् ॥
विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते ।
स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः ॥
इति व्योमसंहितायाम् ॥ १२ ॥

७. अधिकरणम् ॥

( १ ) 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्व' ( महाना. १६-२. ) इत्यादिनाऽन्यः संहर्ता प्रतीयते इति ।

उदकसम्बन्धबाहुल्यादित्यर्थः । 'एति' प्राप्नोति । सेत्यस्ति । एवमेवेति । पृथिव्यां वर्णान्तरस्य वर्णविशेषस्य 'एवमेव' वक्ष्यमाणरीत्या 'गतिः' स्थितिर्भवेदित्यर्थः । एवमेवेत्युक्तमेव दर्शयति—विष्ण्वति । 'वीर्याभियोगात्' वीर्यसम्बन्धात् वीर्यविकाराण्डद्वारेति भावः । न केवलं पद्मसम्बन्धात्, किं तु वीर्यसम्बन्धाच्चेति निमित्तसमुच्चये चशब्दः । वीर्यसम्बन्धेऽपि कुतः पीतत्वं भुव इत्यत आह—स्वर्णेति । हिशब्दो भगवतः स्वर्णवीर्यत्वे 'तदण्डमभवद्धैमम्' 'शुष्मं हिरण्यात्मकम्' इत्यादिप्रमाणप्रसिद्धिद्योतकः । स्वर्णस्य पीतत्वमप्यनेनैव सिद्धम् । यत इत्यर्थे वा हिशब्दः । नन्वन्यत्रादृष्टं विष्णुवीर्यस्य सुवर्णत्वं कथं कल्प्यते, वीर्यसम्बन्धात्पूर्वं निमित्ताभावश्चेत्यत आह—अनादिः पुरुषोत्तम इति । तथा च विष्णोरनादित्वेन तद्वीर्यसम्बन्धस्यापि प्रवाहतोऽनादित्वान्न निमित्ताभावः । लौकिकक्षराक्षरपुरुषविलक्षणत्वान्न दृष्टविरोध इति भावः । परमेश्वर इति पाठे तु ऐश्वर्यमुक्तार्थघटकतया व्याख्येयमिति । व्योमसंहितायामित्यस्य कार्ष्ण्यप्रचुरेत्युक्तमुक्तमित्यध्याहृतेनान्वयः । अनेन प्रचुरेत्युक्तिप्रयोजनमुक्तं भवति ॥ ६ ॥

॥ इति पृथिव्यधिकरणम् ॥

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मणः प्रकृताधिभूताधिदैवविषयसंहृतिकर्तृत्वे श्रुतिविरोधः परिह्रियते । पूर्वपक्षयति—प्राणानामिति ॥ तैत्तिरीयश्रुतिरियम् । आदिशब्दादेवंविधश्रुत्यन्तराणि पातृत्वादिति युक्तिश्च गृह्यते । व्याख्यातेयं श्रुतिर्द्युभ्वाद्यधिकरणे । 'अन्यो' विष्णोः रुद्र एवेत्यर्थः ॥

( २ ) अतो ब्रूते—

सू—ॐ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ ॐ ॥ १३ ॥

'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः' (श्वे.१-१०.) इति बन्धलयस्य तदभिध्यान निमित्तत्वलिङ्गात्तत्कर्तृत्वं प्रतीयते, किमु सादेर्जगतः। इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति प्रतीयते।

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इतीत्यनन्तरं श्रुताविति शेषः। बन्धलयस्येत्यनेन तदित्यस्यावृत्तिर्दर्शिता। अनादेरित्यादौ ग्राह्यम्। अस्य तत्कर्तृत्वमित्यनेनान्वयः। अत्र तत्कर्तृकत्वं तदिच्छाधीनत्वं विवक्षितम्। ततः किमित्यतस्तल्लिङ्गादित्यस्य तच्च तत् लिङ्गं चेति विग्रहाश्रयेणार्थमाह—तदभिध्यानेति। बन्धलयस्येत्यत्राप्यन्वीयते। तथा च बन्धस्य संसारस्य लयस्य तस्मान्मोक्षस्येश्वरेच्छाधीनत्वरूपहेतोरित्यर्थः। श्रुतादित्यध्याहारे लिङ्गादित्यस्येति श्रुताल्लिङ्गात्तत्कर्तृत्वं प्रतीयत इत्यन्वयः। अत्र तत्कर्तृकत्वं तत्कृत्यधीनत्वं, प्रतीयत इत्यस्य चानुमीयत इत्यर्थः। बन्धलयस्येच्छाधीनत्वलिङ्गेन तत्प्रयत्नाधीनत्वानुमानोपपत्तेरिति भावः। ततः किमित्यतोऽनादिबन्धलयकर्तृत्वेनेश्वरस्य सादिजगत्संहृतिकर्तृत्वं सुतरां सिध्यतीत्यभिप्रेत्य तदेव विवरितुं सौत्रमेवशब्दं कैमुतिकन्यायपरतया व्याख्याति—किम्विति। लयस्य तत्कर्तृत्वमित्यनुषज्यते। सिध्यतीति शेषः। नन्वस्तु विष्णोरनादिभवभेत्तुर्विश्वसंहारकर्तृत्वं, तावता प्रयत्नाख्यतत्संहारफलोपधानं कुतः सिध्यतीत्यत आह—इत्येतस्मादिति। इत्येतद्रूपात् सादिजगत्संहर्तृत्वरूपाद्धेतोरेवेत्यर्थः। सूत्रे उद्देश्यसमर्पकपदाभावाद्योग्यतया लब्धं तद्दर्शयति—सर्वेति। विधेयसमर्पकस्य स इत्यस्यार्थो विष्णुरिति। निखिलनिगमतात्पर्यप्रसाधितजगत्कर्तृत्वादिना तस्यैव प्रस्तुतत्वादिति भावः। यद्वा—स इत्यस्यावृत्त्योद्देश्यविधेयपरत्वमित्याशयेन सर्वसंहारकर्ता विष्णुरिति चोक्तम्। विष्णुरिति सावधारणम्। अत एव सूत्रेऽवधारणार्थकस्तुशब्दः प्रायोजि। नन्वस्त्वीश्वरेच्छाधीनत्वमनादिबन्धलयस्येश्वरकर्तृकत्वे लिङ्गम्, अस्तु चानादिबन्धलयस्येश्वरकर्तृकत्वं सादिजगत्संहर्तृत्वे। तथापि सादिजगल्लयकर्तृत्वं तत्संहर्तृत्वे कथं लिङ्गमुभयोरभेदादिति चेन्न। संहारकर्तृत्वशक्तेर्हेतुत्वेन तत्कर्तृत्वफलोपधानस्य साध्यत्वेनाभ्यु

( ३ ) किमु 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहा पगमेन अभेदाभावात् ॥

( ३ ) सौत्रमेवशब्दं कैमुत्यान्तरपरतया व्याख्याति—किम्विति ॥ इदं चावर्तते । किम्वित्यादिश्रुतिभ्यः इत्यन्वयः । तथा च यदा लिङ्गा देव सिद्ध्यति, तदा किमु श्रुत्या बलवत्या सिध्यतीति । यदैकयैव स्पष्टश्रुत्या विष्णुरेव संहारकर्तृत्वेन सिद्ध्यति, तदा किमु वक्तव्यं बहुश्रुतिभ्य इत्यर्थः । इत्येवशब्द इति । सूचयतीति शेषः । तथा च इत्येवमर्थं सौत्र एवशब्दो ज्ञापयतीत्यर्थः । अनेन सूत्रे तदभिध्यानादितिश्रुतियुक्तिसूचके व्यधिकरणे पञ्चम्याविति सूचितम् । तथा चायं सूत्रार्थः—'तदभिध्यानात्' 'तस्याभिध्यानात्' इति श्रुतौ तदभिध्यानहेतुकत्वश्रवणात्, 'तल्लिङ्गात्' तस्य बन्धलयस्याभिध्यानपदोक्तेच्छाधीनत्वरूपहेतोरीश्वरकृत्यधीनत्वं सिद्ध्यति । ततश्च यदाऽनादेरपि बन्धस्य लयईश्वरकर्तृकः सिद्धः, तदा 'तल्लिङ्गात्' तस्माल्लिङ्गात् सादिजगल्लयकर्तृत्वमीश्वरस्य सुतरां सिध्यति । ततश्च 'तल्लिङ्गात्' सादिजगत्संहृतिशक्तत्वरूपाल्लिङ्गात् स तु विष्णुरेव सर्वसंहारकर्ता सिद्धः । यदा सादिजगत्संहरणसामर्थ्यरूपलिङ्गादेवेश्वरः सर्वसंहर्ता सिध्यति, तदा सुतरां 'यमप्येति' इति स्पष्टश्रुत्या यदैकयैव सिध्यति किमु तदा बहुश्रुतिभ्य इति । चन्द्रिकायां तु तुशब्दोऽभिध्यानगतस्य संजिहीर्षात्वरूपविशेषस्य द्योतकः । समानाधिकरणे पञ्चम्यौ । तथा च तस्याभिध्यानादिति श्रुत्युक्ताद्धरेरनादिबन्धसञ्जिहीर्षारूपात् 'तल्लिङ्गात्' सादिजगत्संहर्तृत्वलिङ्गात् योऽवादिस्रष्टृत्वेन प्रकृतो यश्च जनकत्वेन मारकतया शक्तितो यश्च 'ओं तत्सदिति निर्देशः' इति स्मृतिसिद्धः तच्छब्दवाच्यत्वेनोक्तः 'स नो हरिः' इति श्रुतौ च स इत्युक्तः, स एव हरिः संहर्तेति सूत्रयोजनां प्रदर्श्य टीकाऽप्येतत्परेत्युक्तम् । श्रुतौ भूयश्चेति चशब्दो वीप्सायाम् । जातादिति शेषः । तथा च तस्मिन् भगवति तस्य मनसः संयोजनाद्भूयो भूयः 'तत्त्वभावात्' पुनः पुनस्तस्य भगवतो यथार्थध्यानाद्यादार्ढ्यज्ञानाच्च जातात् 'अभिध्यानाच्च' मध्यमप्रसादरूपाद्भगवदिच्छाविशेषात् 'अन्ते' परिपाककाले प्रारब्धकर्मावसाने सति 'विश्वमायानिवृत्तिः' विश्वबन्धकमायानिवृत्तिर्भवतीत्यर्थः । अत एव तृतीयाध्याये अव्यक्ताधिकरणे तस्याभिध्यानादिच्छया प्रसादेन संसारो निवर्तते इत्युच्यते । एतच्च

गुणेऽस्तु दैवः । ' य इदं सर्वं विलापयति स हरिः परः

मोक्षस्य प्रसादसाध्यत्वे लिङ्गं भगवत्प्रसादेन तद्दर्शनभावं च ज्ञापयति—दृष्ट्वैव तं मुच्यत इति । मोक्षस्य दर्शनसाध्यत्वश्रवणात्प्रसादाद्दर्शने दर्शनान्मोक्ष इत्यवश्यमङ्गीकार्यत्वादिति टीकावचनमुक्तार्थानुकूलम् । परिपाककाल इत्येतदधिकरणीयटीकापदस्योपासनाजनितप्रसादाद्दर्शने जाते सति प्रारब्धकर्मावसाने सतीति चार्थः । यथोक्तं तत्त्वप्रदीपे—तस्य विष्णोरभिध्यानाद्विश्वमायानिवृत्तिः कुतः जाता । तस्मिन्नेव मनोयोजनाद्भूयोभूयस्तत्त्वभावनया चान्ते परोक्षज्ञाने जाते विश्वबन्धकमायानिवृत्तिद्वारको मोक्षो भवतीति । उक्तं च सुधायाम्—अस्यापरोक्षज्ञाने जाते अन्ते कर्मक्षयान्ते इति । अत्र मायाशब्देन मायाऽविद्याप्रकृतिरित्यादिशब्दाभिधेयमनाद्येव किमपि द्रव्यमङ्गीकरणीयमिति सुधोक्तेः,

अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ॥
स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः ।
व्याधुस्य मोक्षपदवीं ददाति पुरुषोत्तमः ॥

इति स्मृतिसिद्धे द्विरूपे दुष्टप्रकृती गृह्येते । तयोर्दुष्टत्वं च स एवेश्वरः स्वप्रकाशमपि स्वरूपचैतन्यं स्वाधिष्ठानलब्धपरिणाममहदहङ्कारादिप्रकृत्यंशैः संयोज्याविद्यमानमेवास्य कर्तृत्वादि स्वातन्त्र्यादि प्रदर्श्य रागाद्युत्पादनद्वारा दुःखमनुभावयतीति सुधोक्तरीत्या जीवस्य दुष्टत्वसम्पादकत्वात्, 'अजामजितदोषामगृहीतगुणाम्' इति वचनाच्च सिद्धम् । जडप्रकृतेर्बन्धकत्वं चित्प्रकृतिद्वारा, चित्प्रकृतेर्बन्धकत्वं तु 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति स्मृतिसिद्धम् । एषा तु अस्य मोहिका इति व्याख्यानात् अन्यप्रकृतिद्वयमप्यस्ति, तच्च 'अथान्ये प्रकृती दुष्टे' इत्यादिवचनात्सिद्धं, दुष्टत्वमपि अत एव तयोः सिद्ध्यति । अनादिप्रकृतेः कीदृशो विनाश इति चेत्सुधोक्तरीत्या स्वरूपप्रध्वंस एवेति गृहाण । न च दुष्टप्रकृत्योरुभयोः स्वरूपेण निवृत्त्यभ्युपगमे श्रुतिगीतातात्पर्योद्घाटितश्रुतौ हन द्रावयेत्युक्तिविरोधः, स्मृतावपि व्याधुस्येत्युक्तिविरोधश्चेति वाच्यम् । व्याधुस्येत्यस्य निहत्येत्यर्थाभ्युपगमात् । प्रथमं द्रावय पश्चाद्धनेत्यर्थसम्भवाच्च । श्रुतौ विश्वश

परमात्मा ' ( ) इत्यादिश्रुतिभ्यः इति एवशब्दः।

ब्दः एकैकाशेषपरः न तु समस्ताशेषपरः। एकैकस्य प्रातिस्विकमायानिवृत्तावपि सर्वमायानिवृत्तेरभावात। अत एव ऋग्भाष्ये प्रातिस्विकी प्रकृतिर्यत्तमश्च दोषाश्चान्ये पुंस्यतो युक्तमेतदित्युक्तम। सुधायां च एकमुक्तौ न सर्वमुक्तिः, प्रतिजीवमविद्याभेदाङ्गीकारादित्युक्तम। इदं त्ववधेयम–जीवस्य न मायैवावरणं किन्त्वन्यान्यप्यावरणानि सन्ति। तानि चादौ देहः ततः प्रकृतिबन्धः ततः सत्त्वादिगुणबन्धः ततः कर्मादिबन्धः ततः लिङ्गदेहः ततः ईश्वरेच्छेत्येवंरूपाणि। न चात्र मूलाभावः। देहाद्बाह्यं विनाऽतीवबाह्यत्वादिति गीताभाष्यस्य मूलत्वात्। इदं हि भाष्यं प्रमेयदीपे देहाद्बाह्यं विनाऽऽत्माभिमानस्थमध्यात्मम,तत्र युक्तिः–अतीवबाह्यत्वादत्यभिमानविषयत्वाभावादिति व्याख्यातम। अत्र देहाद्बाह्यस्य गेहादेरध्यात्मत्वाभावे साध्ये जीवापेक्षयाऽतीवबाह्यत्वादिति हेतुरुक्तः। अस्य हेतोर्व्यभिचारवारणायात्यभिमानविषयत्वाभावादिति व्याख्यातः। तथा च जीवापेक्षया देहस्यातीवबाह्यत्वात मध्ये बहून्यावरणानि सन्तीति सिद्धमिति। न चापरोक्षज्ञाने जाते सतीत्यर्थाभ्युपगमे तन्निर्धारणाधिकरणविरोधः, तत्र श्रवणादेरेवाज्ञाननिवर्तकत्वोक्तेः। अत्रापि पुनःपुनर्भगवति मनोयोजनतत्त्वभावजनिताभिध्यानस्य श्रवणादिजनितप्रसादरूपस्य मायानिवर्तकत्वोक्तेश्चेति वाच्यम। यतोऽज्ञानस्य श्रवणादिनिवर्त्यत्वेऽप्यपरोक्षज्ञाननिवर्त्यत्वमपि सम्भवति। श्रवणजनितापरोक्षज्ञानेन अज्ञानस्य शिथिलीभावरूपनिवृत्तिः अपरोक्षज्ञानेनात्यन्तिकी निवृत्तिरित्यभ्युपगमात। एतत्सर्वं

ज्ञानेन तु तदज्ञानं एषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम॥

इति गीताभाष्यप्रमेयदीपिकयोः स्पष्टमुपवर्णितम। तथाहि प्रमेयदीपवचनं—स्वरूपज्ञानमविद्ययाऽऽवृतं, वृत्तिज्ञानं त्वविद्यां शिथिलयति। ब्रह्म प्रकाशयतीति। अत्र वृत्तिज्ञानशब्दस्य गीताभाष्यरीत्या परोक्षमपरोक्षं चार्थः। न चैवं प्रमाणैरुत्पन्नमपीदं मनोवृत्तिरूपतत्त्वज्ञानं अन्तरङ्गभूतेन विशुद्धस्वभावरूपज्ञानेनेोपोद्बलितं सत् बहिरङ्गमनाद्यपि सवासनमेवाज्ञानं समूलघातं हन्तीति सुधाविरोधः। अत्र केवलवृत्ति

(४) स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः ।
स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते ॥
एकदेशक्रिया चात्र न तु सर्वात्मनेरितम् ।
सृष्ट्यादिकं समस्तं तु विष्णोरेव परोद्भवेत् ॥ इति
च स्कान्दे ॥

ज्ञानस्याज्ञाननिवर्तकत्वोक्तेरज्ञाननिवर्तने स्वरूपज्ञानस्यापि वृत्तिज्ञान सहायत्वोक्तेश्चेति वाच्यम् । पूर्वं स्वरूपज्ञानस्यावृतत्वेनाकिञ्चित्कर त्वेऽपि परोक्षवृत्तिज्ञानेनावरकाज्ञानस्य शिथिलीभावानन्तरमपरोक्षवृ त्तिज्ञानोपोद्बलकत्वसम्भवात्केवलस्यापरोक्षवृत्तिज्ञानस्यात्यन्तिकाज्ञा मनिवर्तकत्वाभावेऽपि स्वरूपज्ञानोपोद्बलितस्य समूलाज्ञानघातक त्वोपपत्तेश्च । यमप्येतीति श्रुतिरत्ताधिकरणे व्याख्याता । य इदमित्य न्यश्रुत्यर्थस्तु यस्माद्यः ‘ इदं सर्वं ’ विश्वं ‘ विलापयति ’ नाशयति त स्मात्स भगवान् संहर्तृत्वाद्धरिरित्युच्यते । न च पितृत्वान्नाशकत्वा योगः । यतः स ‘ परो ’ ममत्वादिदोषराहित्याल्लोकपितृविलक्षणः । त त्कथं ? यतः स परमात्मा सर्वोत्कृष्टचेतनोऽत इति ॥

(४) विष्णोरेव संहर्तृत्वे ‘रुद्रो माऽऽविशान्तकः’ (महा. ३५. ) इत्युक्त श्रुतिविरोध इत्यत आह—स्रष्टेति ॥ यतो हरिः परमेश्वरो ईशोऽयो ब्रह्मा दिभ्योऽवर उत्तमोऽत एक एव स्रष्टा ‘पाता’ रक्षिता संहर्ता च भवति। ततोऽन्येषां ब्रह्मादीनां स्रष्टृत्वादिकं ‘दारुयोषावत्’ दारुमयस्त्रीप्रतिमा वत् परतन्त्रमुच्यते पुराणादावित्यर्थः । तदपि न सामस्त्येनेत्याह—ए कदेश इति । सृष्ट्यादिकमिति पूर्वत्रापि सम्बध्यते । चोऽवधारणेऽप्य र्थे च । तथा चात्र परतन्त्रेऽप्यन्यनिष्ठस्रष्टृत्वादावेकदेशस्य क्रियैव ज गदेकदेशविषयैव सृष्ट्यादिक्रिया निविष्टा, न तु ‘ सर्वात्मना ’ सर्वथा सर्वजगत्सम्बन्धिसृष्ट्यादिकमीरितं निविष्टमुक्तमित्यर्थः । यद्वा—पर तन्त्रेऽपि ब्रह्मादिजीवे ‘ एकदेशक्रिया ’ जगदेकदेशस्यैव क्रिया सृष्ट्या दिरूपा तत्कर्तृत्वमिति यावत् । ‘ न तु सर्वात्मना ’ सर्वथा सर्वजगत्स म्बन्धिसृष्ट्यादिकं तत्कर्तृत्वमीरितं प्रमाणेषु । तर्हि समस्तं सृष्ट्यादि कं कस्माद्भवेदित्यत आह—सृष्ट्यादिकमिति । तुशब्दो विशेषार्थः । परादिति हेतुगर्भम् । तथा च ‘ समस्तं ’ सर्वजगत्सम्बन्धिसृष्ट्यादिकं ‘ परात् ’ स्वतन्त्राद्विष्णोरेव भवेत्, न त्वन्यस्मादित्यर्थः । तथा चा न्तकत्वश्रुतिः पराधीनसंहारकर्तृत्वपरा परतन्त्रजगदेकदेशसंहृतिकर्तृ

( ५ ) निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तव ॥ इति
च भागवते ।
( ६ ) 'स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्प
त्तिरलय एक एव हरिः परः परानन्दः' इति च म

त्वविषयतया भाक्ता चेति न तद्विरोध इति भावः । स्कान्द इत्यनन्तर मुक्तमिति शेषः ॥

( ५ ) रुद्रस्य संहारे पारतन्त्र्यं च विष्णुकर्तृके तस्मिन् द्वारत्व मेवेति भावेनाह—निमित्तमिति ॥ दशमस्कन्धे उद्धववाक्यमेतत् । तवेति कृष्ण उच्यते । तस्य कालाख्यारूपिण इति हेतुगर्भं विशेषण म् । आख्या च रूपं च आख्यारूपे काल इत्याख्यारूपे यस्यासौ का लाख्यारूपी तस्येति विग्रहः । यस्येति बहुव्रीहिज्ञापकटीका तु इनेरर्थ कथनपरा । रूपस्याकृतेः कालत्वं सर्वसंहर्तृत्वादिगुणसम्पन्नत्वं, का लशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाचीति गीताभाष्यो क्तेः । धर्मविशिष्टभगवद्वाचीति तदर्थः । यद्वा—'विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहः' इति गीताभाष्योदाहृतस्मृतेः प्रमेयदीपे कालनामा विग्रहो यस्यासौ तथोक्त इति व्याख्यानादत्रापि सप्तम्य न्तरूपपदघटितबहुव्रीहिसमासविग्रहप्रदर्शकतया टीका व्याख्येया । न चैवं कालाख्यारूपिण इति न स्यादिति वाच्यम् । आरूपिणो व्या प्तरूपिण इति आङ् प्रश्लेषात् । अस्य काल इत्याख्यया युक्तं रूपम स्यास्तीति मध्यमपदलोपिवाद्वा । तत्त्वप्रदीपे तु—कालाख्यैव काल इति नामैव रूपं ज्ञापकं वाचकत्वेन तद्वानिति व्याख्यातम् । तथा च कालाख्यारूपिण ईशस्य तव 'विश्वसर्गनिरोधयोः' जगत्सृष्टिसंहार योः हिरण्यगर्भः शर्वश्च 'निमित्तमात्रं' द्वारमात्रं न तु स्वतन्त्रकारण मित्यर्थः । इति चेति चशब्दो न केवलं स्कान्दे, किन्तु भागवते चेति समुच्चयार्थः । अत्रापि पूर्ववदेव शेषः ॥

( ६ ) भागवतस्मृतेर्मूलभूतां श्रुतिं चाह—स इति ॥ स विष्णुः ब्र ह्मणा द्वारभूतेनेति शेषः । एवं रुद्रेणेत्यत्रापि । 'विसृजति' विविधं सृजति । 'विलापयति' विनाशयति । सृष्ट्यादौ विष्णोरेव मुख्यकार णत्वे हेतुमाह—सोऽनुत्पत्तिलयो यत इति । उत्पत्तिनाशशून्य इत्य र्थः । स एक एव हरिरित्यन्वयः । 'परः' उत्तमो विलक्षणो वा । अने

होपनिषदि ॥ १३ ॥

—※-:※:-※—

८, अधिकरणम् ॥

( १ ) 'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते ना सावुदेति नास्तमेति' इति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते ।

अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् ।
व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि ॥
इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते ।

( २ ) अत आह—

सू—ॐ ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ ॐ ॥ १४ ॥

---

न ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्याल्लोके पितुरन्यस्य मारकत्वेऽपि प्रकृते पितुरेव विष्णोर्मारकत्वोक्तौ न लोकविरोधः, तस्या दोषत्वादिति सूचितम् । 'परानन्दः' पूर्णानन्दः निर्दुःखत्वं चोक्तम् । महोपनिषदीत्यस्य ब्रह्मरुद्रयोर्द्धारत्वमेवोक्तमित्यध्याहारेणान्वयः ॥७॥

॥ इति तदभिध्यानाधिकरणम् ॥

———:※:———

८, अधिकरणम् ॥

( १ ) अस्मिन्नधिकरणे अधिभूतादिसंहारक्रमविषयश्रुतिविरोधः परिह्रियते । अत्र प्रकृताधिभूतादीनि किमुत्पत्तिक्रमानुसारेण भगवता लीयन्ते व्युत्क्रमेण वेति सन्देहस्य बीजभूतं श्रुतिविगानं दर्शयति—अत एवेति ॥ पूर्वप्रकृतादेव 'परात्' उत्तमात् 'इदं' जगत् 'क्रमात्' तत्त्वदेवतातारतम्यक्रमेणैवोत्पद्यते, क्रमेणैव लीयते इत्यर्थः । न जगद्वत्परमात्माऽप्युत्पत्तिनाशवानित्याह—नेति । 'असौ' परमात्मा 'नोदेति' नोत्पद्यते 'अस्तं' नाशं 'नैति' न प्राप्नोतीत्यर्थः । श्रीतरत्व्यावृत्त्यर्थं परमादक्षराद्विष्णोरिति । न त्वन्यस्मादिति प्रथमैवकारस्य व्युत्क्रमादेवेति द्वितीयस्य न त्वन्यस्मिन्निति तृतीयस्य चार्थः । उत्पत्तिक्रमेणैव लीयन्ते 'अत एव' इति श्रुतेर्लोकानुकूल्याच्च ।

( २ ) इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ क्रमवचनमपीत्यनेन सूत्रे आवृत्तः क्रमशब्दः क्रमवचनपरः । अप्यर्थस्तुरित्युक्तं भवति । अपिः बाधकत्वेन उपन्यस्तमपीति विशेषणसमु

क्रमवचनमपि विपरीतक्रमापेक्षया ।

( ३ ) कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च ।
यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते ॥
इत्यत एव भाल्लवेयश्रुतिवचनात् ॥

( ४ ) अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः ।
इति क्रमेण भगवान् सृष्टिसंहारकृद्विभुः ॥ इति च पाद्मे ॥

( ५ ) पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च ।

ग्ध्यार्थः । आवृत्तस्य विपर्ययेणेत्यस्यार्थः विपरीतेति । प्रवृत्तं यत इति शेषः । अस्यातो लयक्रमः विपर्ययेण उत्पत्तिक्रमवैपरीत्येनैवेति सौत्रपदोक्तसाध्येनान्वयः ॥

( ३ ) कुतः क्रमश्रुतेरर्थान्तरकल्पनमित्यतोऽपि प्रकृतं अत इति पदं तुशब्दार्थावधारणान्विततयाऽनूद्य व्याख्याति—कर्तेति ॥ कर्तेत्यतः प्राक् अतएवेत्युत्तरवचनात् कुत इत्युपस्कार्यम् । यस्यामेव श्रुतौ क्रमाल्लयः श्रूयते, तस्यामेव वचनात् न त्वन्यस्यामित्येवशब्दार्थः । यः 'प्राणादिकस्य' ब्रह्मादिकस्यास्य जगतः क्रमात्कर्ता यश्च 'भूम्यादिकस्यास्य' व्युत्क्रमाद्धन्ता स हरिरेव परो, न त्वन्य इत्यर्थः । अनेनोत्पत्तावुत्तमक्रमः, लये त्वधमक्रम इति सूचितम् ॥

( ४ ) ननु श्रुतित्वाविशेषात् व्युत्क्रमश्रुत्या क्रमश्रुतेः कुतो बाधः, विपरीतमेव किं न स्यादित्यतोऽतःशब्दसूचितां स्मृतिमाह—अनुरूप इति ॥ योजना तु—क्रमो द्विविधः अनुरूपः प्रतिरूपश्चेति । तत्र सृष्टौ यः क्रमः सोऽनुरूपः । उत्तमादितारतम्यानुसारित्वात् । यो लये क्रमः स प्रतिरूपः उत्तमादितारतम्यप्रतिकूलत्वात् । एवमुभयविधक्रमेण 'विभुः' समर्थो भगवान् सृष्टिसंहारकर्तेति । पाद्म इत्यनन्तरं वचनादित्यनुषज्यते । अस्य सावकाशक्रमश्रुतेर्निरवकाशव्युत्क्रमपदघटितश्रुत्या बाधो युक्त इत्यध्याहृतसाध्यवाक्येनान्वयः ॥

( ५ ) व्युत्क्रमाल्लयाङ्गीकारे लोकविरोधापातान्नासौ युक्तो, लोके प्रायेण पूर्वोत्पन्नानां पित्रादीनां प्रथमं लयदर्शनादित्यतः प्रवृत्तमतःशब्दावृत्त्या उपपद्यते चेत्यंशं व्याचष्टे—पूर्वेषामिति ॥ पूर्वोत्पन्नानामित्यर्थः । उपपद्यत इत्यतः प्राक् लये क्रमो विपर्ययेणेति सूत्रांश आवृत्त्या संयोज्यः । उपपद्यत इत्यस्य सामर्थ्याधिक्ययुक्त्या सिद्ध्यतीत्यर्थः । यद्वा-उपपद्यत इत्यस्य युज्यत इत्यर्थः । सामर्थ्याधिक्यं त्वतश्शब्दार्थः ।

( ६ ) वामने च—
पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ॥

न केवलं श्रूयते, किन्तु युज्यते चेति समुच्चये चशब्दः । तथा च लौकिकानां प्रायश्शतवर्षजीवित्वादिरूपस्य बलज्ञानादिरूपस्य वा सामर्थ्यस्य साम्यात् क्रमाल्लयेऽपि नासावलौकिकतत्त्वदेवतालये भवति, यतः पूर्वोत्पन्नानां सामर्थ्याधिक्यादुत्तरेषां तदभावात्,एवंच लौकिकविरोधस्यैव गुणत्वादिति भावः । पूर्वोत्पन्नेषु सर्वत्र उत्तरोत्पन्नापेक्षया सामर्थ्याधिक्यमस्तीति ज्ञापनाय द्विर्वचनम्। अनेन–यतः 'क्रमस्तु' क्रमवचनमपि 'विपर्ययेण' विपरीतक्रमापेक्षया प्रवृत्तमतो लये क्रमः ' विपर्ययेण तु 'उत्पत्तिक्रमवैपरीत्येनैव। कुतोऽर्थान्तरकल्पनं क्रमश्रुतेः?अत एव व्युत्क्रमाल्लयश्चेति श्रुतेश्च । तथाऽपि क्रमश्रुतेः कुतो बाधः श्रुतित्वाविशेषात् विपरीतं किं न स्यात् । अत एव सावकाशत्वादेव । न च लोकविरोधः । यत उपपद्यते चायं व्युत्क्रमो युज्यते च । कथम् ? अतः सामर्थ्याधिक्यात् । न केवलं श्रुत्योच्यते व्युत्क्रमः किन्तु उपपद्यते चेति सूत्रार्थ उक्तो भवति ॥

( ६ ) ननु पूर्वोत्पन्नानां सामर्थ्याधिक्यमेव कुतः? येन पश्चाल्लयः स्यादित्यत आह—वामने चेति ॥ सामस्त्यं वीप्सार्थः । तथा च यतः 'पूर्वे पूर्वे ' आदिसृष्टौ पूर्वोत्पन्नेषु चतुर्मुखादितत्त्वदेवेषु विष्णोः ' सन्निधानं ' सन्निधिः ' क्रमाधिकं ' तारतम्यक्रमेणाधिकं अत एव तेषां पूर्वोत्पन्नानां पश्चादुत्पन्नापेक्षया' सामर्थ्याधिक्यम्' बलज्ञानशक्त्याधिक्यमेवास्ति । न केवलमेतावत् , किन्तु तेषां ' व्याप्तिः' अण्डाद्बहिः स्वस्वाभिमन्यमानपर्यन्तं देहतो व्याप्तिरपि तारतम्यक्रमेणाधिकैव, न न्यूना समा च । यत एवं अतस्तेषां पश्चादेव लयो न कदाचित्पूर्वं, नात्र संशय इत्यर्थः । तथाशब्द उपमायां समुच्चये वा। तेन पश्चादुत्पन्नेषु उक्तवैपरीत्यं च सिध्यति। 'पूर्वादिभ्यो नवभ्यो वा' इति सर्वनामसंज्ञायां विकल्पानुशासनात् तदभावपक्षे पूर्व इत्येतत्सप्तम्यन्तं,तद्भावपक्षे तु प्रथमाबहुवचनमिदम् । न च तथात्वे सन्निधानमित्यस्यानन्वयः । सन्निधीयते विष्णुरत्रेति व्युत्पत्त्याऽस्य प्रतिमापरत्वात्। तथात्वे ' पूर्वे पूर्वे ' पूर्वपूर्वमुत्पन्नास्तत्त्वदेवाः यतो विष्णोः 'क्रमाधिकं सन्निधानं ' क्रमेणाधिकप्रतिमारूपा इति योजना । इति वामन इत्यन्व

ख्यातिश्चाऽभ्यधिका तेषामत एव न संशयः ॥ इति च ॥१४॥

——*:*:*——

९. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादि ति चेन्नाविशेषात् ॥ ॐ ॥ १५ ॥

'प्राणान्मनो मनसश्च विज्ञानम्' 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' (कठ. ३ - १३.) इति लिङ्गाद्विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत्—

---

यः । वचनादित्यत्राप्यनुषज्यते । न सामर्थ्याधिक्यासिद्धिरित्यध्याहृ तेनान्वयः ॥ ८ ॥

इति विपर्ययाधिकरणम् ॥

——:*:*:——

९. अधिकरणम् ॥

( १ ) अत्राधिकरणे पूर्वोक्तव्युत्क्रमेण लये विज्ञानादौ कश्चिदप वादशङ्का निराक्रियते । पूर्वपक्षस्य सूत्र एवोक्तत्वात् तत्पठित्वा पूर्व पक्षांशं तावद्व्याचष्टे—अन्तरेति ॥ तल्लिङ्गादित्येतच्छ्रुत्युक्तात्क्रमादुत्प त्तिक्रमाल्लयाख्यलिङ्गादित्यर्थः । यद्वा—इत्यंतद्रूपाल्लिङ्गदर्शनादित्यर्थः । मनसः पूर्वोत्पन्नत्वे 'प्राणान्मनः' इति श्रुत्युदाहरणेन तस्य पूर्वमेव लये 'यच्छेत्' इति श्रुत्युदाहरणेन चोभयोरसिद्धिः परिहृता । पूर्व पक्षे प्राणात् 'मनो' मनस्तत्त्वं जातं ततो विज्ञानतत्त्वं जातमित्यर्थः । सिद्धान्ते तु—मुख्यप्राणान्मनोरूपेन्द्रियं, तस्माद्वृत्तिरूपं विज्ञानं उत्प न्नमित्यर्थः । यच्छेदिति काठकवाक्ये पूर्वपक्षे मनश्शब्दस्तत्त्वपरः । सिद्धान्तेऽर्थस्तु—'प्राज्ञो' ज्ञानी 'वाक्' वाक्तत्त्वं तदभिमानिनी उ मा 'मनसि' मनस्तत्त्वे तदभिमानिनि रुद्र 'यच्छेत्' उपरमेत्तद्वश त्वात्तत्र लीयत इति स्मरेदिति यावत् । 'तत्' मनः 'ज्ञान आत्मनि' विज्ञानतत्त्वाभिमानिन्यां वाण्यां लीयत इति ध्यायेदिति । प्रमेयदीपे तु—'यच्छेत्' नियच्छेदिति काठकभाष्यानुरोधात् 'वाक्' वाचं म नसि 'यच्छेत्' तन्नियतां ध्यायेत् वाग्देवतां मनोदेवताधीनतया चि न्तयेदिति विपरिणामाश्रयेण अध्याहारं लयपरत्वं च विना व्याख्यात म् । अत एव तत्त्वप्रदीपकारोऽपि वाचं मनसि यच्छेत् इत्येवाह । मन

( २ ) न, विशेषप्रमाणाभावात् ॥ १५ ॥

( ३ ) ॥ सू—ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ ॐ ॥ १६ ॥

'मनसश्च विज्ञानम्' इति व्यपदेशश्चराचरेष्वालोच

---

सीति दीर्घश्छान्दसः । वाङ्मनसी परस्परं 'यच्छेत्' एकैकश्चैकैकं यच्छेत् इति व्याख्यानं तूदाहृतग्रन्थविरुद्धम् । हेत्वंशं व्याख्याय पूर्वपक्षप्रतिज्ञांशं व्याचष्टे—विज्ञानमनसी इति । तत्त्वे इति शेषः । द्वितीयाद्विवचनमेतत्। 'अन्तरा' विना। विपरीतक्रम इत्यनेन क्रमेणेत्येतदुक्तार्थं, अन्येषां लय इत्यादौ ग्राह्यम् । तेन सूत्रे लय इति शेषो दर्शितः ॥

( २ ) सिद्धान्तांशं व्याचष्टे—नेति ॥ विज्ञानमनस्तत्त्वे विना विपरीतक्रमेण लय इत्युक्तं नेत्यर्थः । कुतो नेत्यतः प्रवृत्तं अविशेषादित्येतद्विशेषधर्मरहितत्वादित्यन्यथाप्रतीतिनिरासाय व्याचष्टे—विशेषेति । सङ्कोचकप्रमाणाभावादित्यर्थः । यद्वा-विज्ञानमनस्तत्त्वयोर्यथोत्पत्ति लय इति विशेषप्रमाणाभावादित्यर्थः। ननु सर्वेषामपि विपरीतक्रमेणैव लय इत्यत्रापि प्रमाणं नास्ति । तथा च साम्यमेवेत्यतोऽप्याह—विशेषेति । अभावादिति विच्छेदः । तथा च सर्वं वा एतत्क्रमादुत्पद्यते क्रमाद्विलीयते इति विशेषप्रमाणाभावादित्यर्थः । अनेन नाविशेषादित्येकपद्यं सूचितम् । अथ वा—अभावादित्येव छेदः । तथात्वे सर्वं वेत्यविशेषप्रमाणाभावादित्यर्थः ॥

( ३ ) नन्वस्त्येवोक्तं लिङ्गदर्शनं केषां चित्क्रमाल्लयः, केषां चिद्व्युत्क्रमादित्यत्र विशेषप्रमाणरूपमतः कथं विशेषप्रमाणाभाव इत्याशङ्क्य परिहरत्सूत्रमुपन्यस्य व्याचष्टे—चराचरेति ॥ मनसश्च विज्ञानमिति व्यपदेश इत्यनेन तद्व्यपदेश इत्येतत् स चासौ व्यपदेशश्च तद्व्यपदेशो मनो विज्ञानमिति शब्द इति व्याख्यातम् । 'चराचरेषु' जङ्गमस्थावरेषु । विषयसप्तमीयम् । इदं चराचरेषु व्यपदेशश्चञ्चलान्तःकरणावबोधरूपचरतत्त्वरूपाचरविषयको व्यपदेश इति चराचरेष्वालोचनादिति चोभयान्वयि । पूर्वत्रान्वयेन चराचरव्यपाश्रयो व्यपदेश इत्येतद्व्याख्यातम् । चराचरेष्वालोचनाद्विज्ञानं भवतीत्यनेन च तद्भावभावित्वादित्यंशः तस्मिन् चराचरविषये तस्य मनसो भावेनालोचनेन तस्यावबोधस्य वृत्तिज्ञानस्य भावित्वात् उत्पद्यमानत्वादिति व्याख्यातः । यद्वा—चराचरेष्वालोचनादित्यनेन चन्द्रिकारीत्या चराचरव्य

नाद्विज्ञाने भवतीति भागापेक्षया स्यात् न विज्ञानत
त्त्वापेक्षया ।

( ४ ) स्कान्दे च—परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा ।
विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् ॥

---

पाश्रयत्वस्य समासान्तर्गततद्भावं प्रत्यपि विशेषणत्वं ज्ञापितम् । 'इ
ति' हेतोर्व्यपदेशो 'भागापेक्षया स्यात्' इन्द्रियावबोधाख्यभागविष
य एव स्यादिति । अनेन 'भजनं भागसेवयोः' इति वचनात् भजधा
तोर्भावेक्तप्रत्यये निष्पन्नभक्तशब्दात् क्तिन् प्रत्यये वा निष्पन्नाद्भक्तिश
ब्दाद्वा तस्येदमित्यणि कृते निष्पन्नो भाक्तशब्दो व्याख्यातः । 'न विज्ञा
नतत्त्वापेक्षया' न तत्त्वविषयोऽपीति । अनेन तुरवधारणार्थोऽप्यर्थश्चेत्यु
क्तं भवति । यत एवमतो न लिङ्गदर्शनविरोध इति वाक्यशेषः ।
अनेन—यद्यपि 'मनसश्च विज्ञानम्' इति व्यपदेशः 'चराचरव्यपा
श्रयः' मनोरूपेन्द्रियतज्जन्यज्ञानमनस्तत्त्वविज्ञानतत्त्वाख्यराशिद्वयवि
षयस्तत्साधारणः । तथाऽपीह यतः स 'भाक्तस्तु स्यात्' अन्तःकर
णवृत्तिज्ञानाख्यभागविषय एव स्यात्, न तु मनोविज्ञानाख्यतत्त्वविष
यः, अतो न तद्विरोधः । न चेन्द्रियावबोधविषयत्वेऽप्यनुपपत्तिः । तत्त्व
योरिव तयोरपि कार्यकारणभावायोगादिति वाच्यम् । 'तद्भावभा
वित्वात्' तेषु चराचरेषु तस्य मनसो भावेन । यद्वा—चराचरव्यपा
श्रयेण तद्भावेनालोचनेन तस्य वृत्तिज्ञानस्य भावित्वादुत्पद्यमानत्वा
दिति सूत्रार्थ उक्तो भवति ॥

( ४ ) ननु 'मनसश्च विज्ञानम्' इति व्यपदेशोऽस्तु भाक्तः, तथाऽपि
तत्त्वविषय एव किं न स्यादित्यत आह—स्कान्दे चेति ॥ चन्द्रिकारी
त्या स्मृत्यर्थस्तु—'अव्यक्तं' श्रीतत्त्वाभिमन्यमानं अव्यक्ताख्यतत्त्वं
'परात्' सर्वोत्तमाद्धरेरुत्पन्नं, 'महान्' चतुर्मुखाभिमन्यमानं महत्त
त्त्वं तु अव्यक्तादुत्पन्नम् । तथाशब्दः समुच्चये । 'महतः' चतुर्मुखात् मह
त्तत्वाभिमानिनश्चतुर्मुखात् वाण्यभिमन्यमानं विज्ञानतत्त्वं समुत्पन्न
म् । विज्ञानतत्त्वाद्रुद्राभिमन्यमानं मनस्तत्त्वं समुत्पन्नमिति । अनेन वै
कारिकाहङ्कारकार्यस्यापि मनसो विज्ञानतत्त्वकार्यत्वं चास्तीति ज्ञाय
ते । 'खादिकम्' इन्द्रियाख्याकाशादि वा । सर्वसृष्टावयं क्रमः कि
मित्याशङ्क्य नेत्याह—एवमिति । या 'बाह्या' ब्रह्माण्डबहिर्जाता सृ
ष्टिः सैव 'एवं' परादित्युक्तप्रकारेण भवति । 'परा' मुख्या तारतम्यज्ञापि

विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम् ।
एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया ॥
विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः ॥ इति ॥ १६ ॥

१०, अधिकरणम् ॥

( १ ) सू—ॐ ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ ॐ ॥ १७ ॥

का च । अथ यत्र क्वचित्तत्त्वानामेव अवरस्य पूर्वत्वमित्येवंरूपो विपरीतक्रमः श्रूयते, तत्र कथमित्यतस्तस्या विषयमाह—अन्तरिति । 'विपरीतक्रमः' परादित्युक्तापेक्षया विपरीतक्रमोत्पत्तिश्रुतिः 'प्राणान्मनोमनसश्च विज्ञानम्'इत्येवमादिरूपा अन्तः ब्रह्माण्डस्य देहस्य चान्तस्तत्त्वाभिव्यक्तौ ज्ञानिनां तदापरोक्ष्ये च क्रमापेक्षया च प्रवृत्तेत्यर्थः । यथोक्तं तत्त्वप्रदीपे—यस्मादवरेषां दर्शनान्ते हरेर्दर्शनं तस्मादुत्पत्तिक्रमवद्विपरीतो व्युत्क्रमो ज्ञेय इति । व्यक्तिपदं दर्शनस्याप्युपलक्षकम् । अत एव टीकायामन्तरभिव्यक्तौ ज्ञानिनां तत्त्वापरोक्ष्ये चेत्युक्तम् । आपरोक्ष्यस्य व्यक्तिसाध्यत्वात् । ब्रह्माण्डस्य देहस्यान्तर्व्यक्तावापरोक्ष्ये च विपरीतक्रम इत्यत्र लिङ्गमाह—यस्मादिति । यस्माद्द्वारपालदर्शनानन्तरं राज्ञ इव अधमतत्त्वदेवतादर्शनानन्तरं 'अन्ते' पश्चाद्धरेः 'दृशिः' दर्शनं भवति दर्शनसाधनीभूताधमतत्त्वदेवताव्यक्तिश्च भवति। तस्मादन्तस्तद्व्यक्त्यपेक्षया विपरीतक्रम इत्युक्तं युक्तमित्यर्थः । चन्द्रिकायां तु स्मृतिक्रमापेक्षया विपरीतक्रमश्रुतिः ब्रह्माण्डान्तः सृष्ट्यभिप्राया । तत्त्वदेवानां देहोत्पत्तिलक्षणानुसृष्ट्यभिप्राया । यद्वा—विपरीतक्रमश्रुतिः ज्ञानिनां स्वदेहे ज्ञानिकर्तृकत्वाभिमानिदेवतानामापरोक्ष्यक्रमाभिप्रायेत्युक्तम् । तत्पक्षे व्यक्तिशब्दो दृष्टिपरः । ब्रह्माण्डस्यान्तर्देहस्यान्तर्दृष्टिरिति व्यवस्थयाऽन्वयः । न तूभयोरुभयत्रान्वयः । टीकायामभिव्यक्तावित्यनन्तरं आपरोक्ष्ये चेति शेषः । इति स्कान्द इत्यन्वयः । उक्तत्वादिति शेषः । अस्यातो मनसश्च विज्ञानमिति व्यपदेशः, न तत्त्वापेक्षयेति पूर्वेणान्वयः । न केवलं सूत्र इति चशब्दार्थः ॥ ९ ॥

॥ इति अन्तराधिकरणम् ॥

१०, अधिकरणम् ॥

( १ ) अत्राधिकरणे परमात्मनिलयविषयश्रुतिविरोधपरिहारः क्रिय

'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' (           ) इति श्रुतेः परमात्माऽपि न लीयते अश्रुतत्वाद्ब्रह्मलयस्य ।

(२) निलीनशब्देनापिहितत्वमुच्यते । तुच्छयेनाभ्वपिहितं यदासीत्, (ऋ.१०-१२९-३.) इति श्रुतेः ।

ते। तत्र सूत्रमुपन्यस्य पूर्वपक्षं सूचयन् व्याचष्टे—नेति ॥ श्रुतेरित्यनेन सूत्रे श्रुतेरित्यपिपदच्छेदः सूचितः। परमात्माऽपि लीयते इति नेत्यर्थः। न केवलं पृथिव्यादिरित्यपिशब्दार्थः। अनेन आत्मा चेत्यन्वितश्चशब्दोऽप्यर्थतयाऽपि व्याख्यातः । तथा 'तमसि निलीनः' इति श्रुतेः चेतनत्वयुक्तेश्च परमात्माऽपि लीयत इति सयुक्तिकपूर्वपक्षश्च सूचितः। सृष्ट्याद्यष्टककर्तृत्वरूपब्रह्मलिङ्गप्रतिपादक 'स इदम्' इत्यादिवाक्यशेषोदाहरणं तु निलीनश्रुतेरीश्वरैकविषयत्वेन निरवकाशत्वोपपादनाय। 'सः' एक एव परमात्मा 'इदं सर्वं' जगद्विलाप्य चित्प्रकृतिरूपोदकात्मकेन तमसाऽऽच्छाद्य संहृत्य स्वयं तमस्यन्तर्निलीनः प्रकृतावाच्छन्नोऽथ तत्प्रकृतिरूपं तमो विलाप्याऽऽच्छाद्य स्वयं 'व्युत्तिष्ठते' प्रादुर्भवति। अथ स इदं जगत्सृजति। सृष्ट्वा च विविधं 'स्थापयति' स्थितिं प्रापयति। अथ 'विलापयति' संहारयति 'प्रस्थापयति' प्रेरयति 'आच्छादयति' अज्ञानेनावृतं करोति 'प्रकाशयति' जीवकर्तृकानुभवेन जीवं संयोजयति 'विमोचयति' स्वप्राप्तिबन्धादित्यर्थः। सर्वत्रान्वयार्थं स इति द्विरुक्तिः। नेत्यनेन सिद्धान्तप्रतिज्ञाया उक्तत्वात् तत्राश्रुतेरिति पदच्छेदेनोक्तं हेतुं योजयति—अश्रुतत्वादिति। 'तद्विलाप्य व्युत्तिष्ठते' इत्याद्युक्तयोदाहृतश्रुतितोऽपि ब्रह्मलयो नेति ज्ञायते। न चान्यतो ब्रह्मलयः श्रुतः। अतः कस्यामपि श्रुतौ ब्रह्मलयस्याश्रुतत्वादित्यर्थः। परमात्मनः प्रकृतत्वात्तल्लयस्येत्येतावता पूर्तौ ब्रह्मेत्युक्तिः कालापरिच्छिन्नत्वरूपयुक्तिसूचनार्था ॥

(२) नन्वन्तस्तमसि निलीन इति ब्रह्मलयस्य श्रुतत्वात्कथमुच्यते अश्रुतत्वमित्यत आह—निलीनेति ॥ अपिहितत्वमाच्छादितत्वम्। उपलक्षणमेतत्। इतरादृश्यत्वमित्यपि द्रष्टव्यम्। अतएव पैङ्गिश्रुतावदृश्यत्वमुच्यते। यथोक्तं बृहद्भाष्ये—

'स एतस्मिन् स्तमसि निलीनः प्रकृतिं पुरुषं कालं
चानुपश्यति कश्चन ' इति पैङ्गिश्रुतिः ।
( ४ ) 'नित्यो नित्यानां चेतनश्चेतनानाम्' ( कठ. ५-१३. )
'स नित्यो निर्गुणो विभुः परः परमात्मा' 'नित्यो वि

---

लौकिकव्यवहारो यो भूभारक्षपणादिकः ।
तद्दृष्टिं विना नान्यो लयः कृष्णादिनां क्वचित् ॥ इति ॥

लौकिको लोकविषयकः। कुतो निलीनशब्दोऽपिहितत्वार्थकः, येनाश्रुतत्वं सिध्येत् इत्यतस्तदुत्तरत्वेनापि श्रुतेरिति छेदेनोक्तां श्रुतिं दर्शयति—तुच्छयेनेति । श्रुतेरिति । समाख्यारूपश्रुतेरित्यर्थः । 'स इदं सर्वं विलाप्य' इत्यादेः 'व्युत्तिष्ठते' इत्यन्तस्य 'नासदासीत्' इत्यादेः 'महिना जायतैकम्' इत्यन्तस्य च समर्थनार्थत्वादिति भावः । श्रुतेरित्यस्य पूर्वेणान्वयः । व्याख्यातेयं श्रुतिः आनुमानिकनये। निलीनत्वमिहापिहितत्वमेव न त्वन्यदिति ॥

( ३ ) अत्र न केवलं समाख्यानं, किन्तु वाक्यमपीत्याशयेन श्रुतेरित्यनेनोक्तं श्रुतिवाक्यं चाह—स इति ॥ अत्र पूर्वोत्तरवाक्यार्थपर्यालोचनया वाक्यलक्षणप्रमाणेन अर्थात् निलीनशब्दोऽपिहितार्थे प्रयुक्त इति ज्ञायते । केचिदियमपि प्रयोगरूपश्रुतित्वात्समाख्यैव, समाख्यादीनामिति टीका तु वस्तुस्थितिकथनपरेत्याहुः। 'सः' परमात्मा 'एतस्मिन्' प्रकृतिरूपे तमसि 'निलीनः' छन्नः स्वयं प्रकृतिजीवकालाननुपश्यति एनं तु न कोऽपि पश्यतीत्यर्थः । 'पैङ्गिश्रुतेः' पैङ्गीनां वाक्यात् । अस्यापि निलीनशब्देनेति पूर्ववाक्येनान्वयः ॥

( ४ ) ननु किमर्थमेवं निलीनश्रुतेरर्थान्तरं परिकल्प्यते अस्याः लय एवार्थः किं न स्यात् । न च समाख्यादिविरोधः । तस्य श्रुतितो दुर्बलत्वात् । न च 'नित्यो नित्यानाम्' इति श्रुत्यन्तरबलात् । तस्या प्रामाण्योपपत्तेरित्यतः प्रवृत्तं नित्यत्वाच्च ताभ्य इत्यंशं व्याचष्टे—नित्य इति ॥

नित्यो नित्यानां चेतनश्चेतनानां
एको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीराः
तेषां शान्तिः शाश्वती नेतरेषाम् ॥

इति कठश्रुतेरयमर्थः—'नित्यानां' स्वरूपतः अविनाशिनां सकाशा

भुः कारणो लोकसाक्षी परो गुणैस्सर्वदृक् शाश्वतश्च '
( ) इत्यादिश्रुतिभ्यो नित्यत्वाच्च ॥ १७ ॥

११. अधिकरणम् ॥

(१) 'नित्यो नित्यानाम्' (कठ.५-१३.) इति जीवस्यापि नित्यत्वमुक्तम् । 'सर्वे एते चिदात्मानो व्युच्चरन्ति ' इत्युत्पत्तिरुच्यते।

त् ' नित्यो ' देहतोऽपि नित्यः परमनित्य इति यावत् । नित्यानां नित्यत्वप्रद इति वा । एवं ' चेतनानां ' ज्ञातॄणामपि ' चेतनः ' परमचेतनः, तेषां चैतन्यप्रद इति वा । यश्च स्वयमेक एव ' बहूनां ' पुरुषाणां ' कामान् ' काम्यान् ' विदधाति ' करोति तं हृदयस्थं ये धीराः अनुपश्यन्ति तेषां ' शाश्वती ' पुनरावृत्तिशून्या ' शान्तिः ' मोक्षो भवेन्नेतरेषामिति । ' स नित्यः ' इत्यन्यश्रुतिवाक्यम् । स परमात्मा देहतोऽपि नित्यः, यतो ' निर्गुणः ' सत्त्वादिगुणाबद्धो विभुः परो विलक्षणोऽत इत्यर्थः । ' नित्यो विभुः ' इत्यन्या श्रुतिः । नित्यत्वे हेतुर्विभुरित्यादिकं । ' कारणः ' कारणं जगत इति शेषः । ' गुणैः ' गुणेभ्यस्सत्त्वादिभ्यः ' परो ' मुक्तः गुणमयदेहादिवर्जितः ' सर्वदृक् ' सर्वज्ञः ' शाश्वतो ' निर्विकार इत्यर्थः । आदिशब्देन नित्यत्वबोधकवाक्यान्तरं गृह्यते । ताभ्य इत्यस्य व्याख्या श्रुतिभ्य इति । नित्यत्वादिति। देहतोऽपि नित्यत्वावगमादित्यर्थः । ब्रह्मण इत्यनुषज्यते । अस्यापि निलीनशब्देनापिहितत्वमुच्यत इति पूर्वेणान्वयः । चशब्दो हेतुसमुच्चये । तथा च बाहुळ्येन 'नित्यः' इत्यादिश्रुतीनां प्राबल्यान्नेतरश्रुतिविरोधेन अप्रामाण्यं शङ्क्यमिति तच्छ्रुतिविरोधान्निलीनश्रुतेरर्थान्तरकल्पनं युक्तमिति भावः॥१०॥

॥ इति अत्माधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवजन्मविषयश्रुतिविरोधः परिह्रियते । सन्देहबीजं श्रुतिविरोधं दर्शयति—नित्य इति ॥ न केवलं परस्येत्यपि शब्दार्थः । नित्यत्वमिति । अविनाशित्वमित्यर्थः । उक्तमिति । पूर्वाधिकरणोदाहृतवाक्येनेति शेषः । न चोत्पत्तिश्रुतिप्रतियोग्यनादित्वश्रुतेरेवोदाहर्तव्यतया नित्यत्वश्रुत्युदाहरणमसङ्गतमेवेति वाच्यम् । भावस्य

अतो विरोध इति ।

( २ ) अत आह—

सू—ॐ ॥ ज्ञोऽत एव ॥ ॐ ॥ १८ ॥

जीवोऽप्यत एव परमेश्वरादुत्पद्यते, शब्दादेव । 'ते वा एते चिदात्मानो विनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन' इति काषायणश्रुतिः ॥ १८ ॥

---

सतः नित्यत्वोक्त्यनुपपत्तित एव प्रागभावाप्रतियोगित्वरूपानादित्वस्याप्युक्तप्रायत्वात् । इतीति । इति श्रुत्यन्तरेणेत्यर्थः । 'आत्मानो' जीवाः 'व्युच्चरन्ति' मातृदेहात् निस्सरन्ति जायन्त इत्यर्थः । ततः किमित्यत आह—अत इति । यत एवं श्रुतिद्वयेन विरुद्धार्थद्वयमुक्तं, अतः श्रुत्योर्विरोध इत्यर्थः ॥

( २ ) अनुत्पत्तिज्ञापकनित्यत्वश्रुत्युपन्यासेनैव जीवोऽनुत्पत्तिमान् प्रागभावाप्रतियोगित्वरूपानादित्वात् ईश्वरवदिति सयुक्तिकपूर्वपक्षो लब्धो भवतीत्याशयवान् सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ जीव इत्यनेन जानातीति व्युत्पत्त्या ज्ञो जीव इति ज्ञशब्दो व्याख्यातः । पूर्वसूत्रादनुवृत्तस्य चशब्दस्यार्थोऽपीति । न केवलं वियदादिः किन्तु जीवोऽपीति तस्यार्थः । यद्वा—नित्यत्वेनोक्तोऽपीत्यर्थः । अत इत्यनुवादेन परमेश्वरादिति व्याख्यानम् । परमेश्वरादेवेत्येवकारान्वयः । सर्वसूत्रेषु तस्यैव प्रकृतत्वादिति भावः । उत्पद्यत इति सूत्रे शेषोक्तिः । एवकारस्यात्राप्यन्वयः । उत्पद्यत इत्यावर्तते । अनेन जीवोऽपि उत्पद्यत एव, उत्पद्यमानश्चेश्वरादेव उत्पद्यत इति प्रतिज्ञाद्वयं सूचितं भवति । उभयत्र हेतुमाह—शब्दादेवेति । अनेनातश्शब्दस्यावृत्तिस्सूचिता । न तत्र प्रमाणान्तरं गवेषणीयमिति एवशब्दार्थः । तमेव शब्दमुदाहरति—त इति । वैशब्दोऽवधारणे । 'ते' प्रसिद्धाः 'एते' जीवाः यतः 'चिदात्मानो' ज्ञानस्वरूपाः अतस्स्वरूपतोऽविनष्टास्सन्तो 'ज्योतिः' प्रकाशरूपं 'परं' ब्रह्म निविशन्ति प्रळये मुक्तौ च। तर्हि अनादिनित्यत्वश्रुतिविरोध इत्यत आह—अविनष्टा इति । स्वरूपतः अनादिनित्या एवेत्यर्थः । कादाचित्कनाशोऽपि नेत्याह—नेति । स्वरूपत इति शेषः। 'कदाचन' महाप्रळयेऽन्यदा वेत्यर्थः। इति श्रुतिरित्यनन्तरं अस्ति हीति शेषः ॥

( ३ ) सू—ॐ ॥ युक्तेश्च ॥ ॐ ॥ १९ ॥
नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ।
( ४ ) उत्पद्यन्ते चिदात्मानो नित्या नित्यात्परात्मनः ।
उपाध्यपेक्षया तेषां उत्पत्तिरपि गीयते ॥
इति च व्योमसंहितायाम् ॥ १९ ॥

——:*:——

( ३ ) नन्वनादिनित्यस्य जीवस्योत्पत्तिः श्रुताऽपि कथं युज्यते व न्ध्यात्वमभ्युपगम्य मातृत्ववचनवत् नित्यत्वमभ्युपगम्य पुनरुत्पत्तिव चनस्य व्याहतत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे-युक्तेश्चे ति ॥ 'नित्यस्यापि' अनादिनित्यस्यापि । अपिः यद्यपितथापीत्यर्थे। अनेन सूत्रे ह्यस्येति विपरिणतमनुषज्यते । चोऽप्यर्थः। स च विशेष णसमुच्चयार्थोऽपीत्युक्तं भवति । 'उपाध्यपेक्षया' बाह्यशरीराख्योपा ध्युत्पत्त्यपेक्षया तद्विषयकतया उत्पत्तिवचनं युज्यत इत्यर्थः । शरीरा देरुपाधित्वं न प्रतिफलनाधिकरणत्वम्, किन्तु उत्पत्त्यादिरूपविकार विशेषापादकत्वम्, अत एवाह—उत्पत्तिरिति । युज्यत इति । अनेन नायं युक्तिशब्दो लिङ्गार्थः, किन्तु योगार्थको विवक्षार्थकश्चेति सूचित म् । सावधारणं चैतत् । तेन सौत्रचशब्दो व्याख्यातः। अवधारणेन नै वमुपचारमात्रम्, किन्तु मुख्यमेव । पराधीनविशेषावाप्तिरूपोत्पत्तेरेवा त्र विवक्षितत्वादिति सूचितम् । अनेन—अनादिनित्यस्यापि ह्यस्य पराधीनविशेषावाप्तिरूपोत्पत्तेः योगान्न तदुक्ति व्याघात इति सूत्रार्थ उक्तो भवति ॥

( ४ ) अत्र स्मृतिसम्मतिमाह—उत्पद्यन्त इति ॥ चिदात्मत्वमना दिनित्यत्वे हेतुः । तथा च यद्यपि यतश्चिदात्मानो जीवा अतोऽनादिनि त्याः, तथाऽपि देहतोऽपि नित्यात्परात्मन उत्पद्यन्ते । व्याहतिमाश ङ्क्याह—उपाधीति । बाह्योपाध्युत्पत्त्यपेक्षयेत्यर्थः । 'तेषां' जीवानां, न केवलमनादिनित्यत्वमित्यपिशब्दार्थः । व्योमसंहितायामित्यनन्तरं नित्यस्यापीत्यादिशब्देनोक्तं युक्तमिति वाक्यशेषः ॥ ११ ॥

॥ इति ह्यधिकरणम् ॥

——:*:——

१२. अधिकरणम् ॥

( १ ) 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः' इति कापायणश्रुतौ व्याप्तत्वं प्रतीयते। 'अणुर्ह्येष आत्मा यं वा एते सिनीतः। पुण्यं च पापं च' इति गौपवनश्रुतावणुत्वमित्यतो विरोध इति ॥

( २ ) अतो ब्रवीति—

---

१२. अधिकरणम् ॥

( १ ) धर्मिणि जीवे उत्पत्त्यनुत्पत्तिश्रुतिविरोधपरिहारानन्तरं अत्राधिकरणे जीवधर्मे परिमाणेऽणुत्वश्रुतिविरोधः परिह्रियते। तत्र श्रुतिविरोधरूपं संशयबीजं दर्शयति—व्याप्ता हीति ॥ हिशब्दः प्रसिद्धौ। 'आत्मानः' परमात्मरूपविशेषाः 'व्याप्ताः' परममहत्परिमाणाः 'चेतनाः' ज्ञानरूपाः 'निर्गुणाः' सत्त्वादिगुणशून्याः 'सर्वात्मानः' सर्वस्यादानादिकर्तारः 'सर्वरूपाः' पूर्णस्वरूपाः । 'सर्वः पूर्णगुणत्वतः' इत्युक्तेः। 'अनन्ताः' कालतो गुणतश्चापरिच्छिन्ना इति सिद्धान्तरीत्या श्रुत्यर्थः। पूर्वपक्षे त्वात्मशब्दो जीवपरः। विशेषणानि च तस्यैवेत्याह—व्याप्ता ह्यात्मान इति। समग्रोदाहरणं तु सिद्धान्तानुकूलतया ब्रह्मलिङ्गानि सूचयितुम्। व्याप्तत्वं देशतो महत्त्वमिति यावत्। प्रतीयते। जीवस्येत्यनुषज्यते। 'एषः' इति श्रुतौ हिशब्दः प्रसिद्धौ। चावन्योन्यसमुच्चये। तथा च 'एष आत्मा' जीवोऽणुः यं जीवं एते 'सिनीतो' बध्नीतः। एते इत्येतदेव विवृणोति—पुण्यं च पापं चेति। अत्राप्यणुर्ह्येष आत्मेत्येतावदेव उदाहर्तव्ये वाक्यशेषोद्धारो जीवत्वज्ञापनार्थः। अणुत्वमित्यत्रापि प्रतीयते इत्यनुषज्यते। जीवस्येति चास्ति। ततः किमित्यत आह-अत इति। विरुद्धार्थद्वयप्रतीतित एवेत्यर्थः। 'विरोधः' श्रुत्योः प्रतीयत इत्यनुवर्तते ॥

( २ ) युक्तिसहितव्याप्तत्वश्रुतिबलात् व्याप्त एव जीव इति पूर्वपक्षे सिद्धान्तयत्सूत्रमवतार्य तच्छेषमेव पूरयति—अत इति ॥ हेतूनामित्युक्तिरुत्क्रान्त्यादेः लिङ्गताबोधनाय। तथाऽपि विभक्तिं विना हेतुताऽनवगमात्तदर्थं सकाशादिति शेषः कृतः। हेतूनामिति तु अनुवादो न दोषः। अणुरेवेति तु प्रकरणलब्धसाध्योक्तिः। जीव इति वर्तते। तेन सूत्रे ज्ञ इत्यस्यानुषङ्गस्सिध्यति। अनेन जीवः अणुरेव न व्याप्तः।

सू—ॐ ॥ उत्क्रान्तिगत्यागतीनाम् ॥ ॐ ॥ २० ॥

हेतूनां सकाशादणुरेव ।

( ३ ) 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भी भवति स प्रसूयते स कर्म कुरुते' इति पौष्यायणश्रुतेः ॥ २० ॥

( ४ ) तत्र स्वातन्त्र्यप्रतीतेः,

एकः प्रसूयते जन्तुरेक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥

इत्यादेश्च स्वयमेवेति ।

---

कुतः? उत्क्रान्तिगत्यागतिमत्त्वात्, पतत्रिशरीरवदित्यनुमानप्रयोगस्सूचितः । न च मध्यमपरिमाणत्वेनान्यथासिद्धिस्स्यात् । तस्यानित्यत्वप्रसङ्गेन निराकृतत्वात् इति भावेनाप्येवकारः प्रायोजि ॥

( ३ ) विभुत्वबाधकानामणुत्वसाधकानां हेतूनामसिद्धिमाशङ्क्य तत्र तत्सद्भावे श्रुतिमाह—स इति ॥ स जीवो बाह्यशरीरबन्धादुत्क्रम्यामुं लोकं 'अधिगच्छति' प्राप्नोति । 'अमुष्मादिमं लोकं' भूलोकं प्रत्यागच्छति । अनन्तरं 'स गर्भी भवति' पूर्वमगर्भः, अधुना गर्भस्सम्पद्यते मातुरुदरं प्रविशतीति यावत् । अथ 'प्रसूयते' उत्पद्यते । अथ पुण्यपापसाधनं कर्म करोतीति श्रुत्यर्थः । श्रुतेरित्यनन्तरं सिद्धानामिति शेषः । अस्य हेतूनामित्यनेनान्वयः ॥

( ४ ) एवमुत्क्रान्त्यादिहेतुभ्यो जीवस्याव्याप्तत्वे सिद्धे अणुत्वसाधकाधिकरणमध्ये अन्तर्भेदाधिकरणत्वेन किञ्चित्प्रसङ्गात् चिन्त्यते । किमिदमुत्क्रान्त्यादिकं जीवस्य परमेश्वरेण? स्वयमेवेति। तत्र पूर्वपक्षमाह—तत्रेति ॥ 'सोऽस्मात्' इत्युदाहृतश्रुतावित्यर्थः । तत्रेत्यावर्तते। तस्योत्क्रान्त्यादावित्यर्थः । जीवस्येत्यनुवर्तते । प्रतीतेरित्यस्य स्वयमेवेत्यनेनान्वयः । स्वयमेवेत्यनन्तरं तस्योत्क्रान्त्यादीति साध्यमध्याहार्यम् । नेश्वरेणेत्येवशब्दार्थः। नन्वस्यां श्रुतौ जीवस्योत्क्रान्त्याद्येव श्रूयते, न त्वन्याधीनताविधिः निषेधो वाऽस्ति । अतो नानया दृढनिर्णय इत्यत आह—एक इति । 'एकः' स्वतन्त्रो 'जन्तुः' जीवः 'प्रसूयते' उत्पद्यते 'प्रमीयते' नश्यति । एवशब्दस्य द्विर्ग्रहणं सर्वत्रान्वयज्ञापकम् । दुष्कृतं चेत्यन्वितः चशब्दः समुच्चये । अनुभुङ्क्त इत्यत्रापि सम्बध्यते । 'इत्यादेः' एवमादिस्मृतिवचनाच्चेत्यर्थः । न केवलं प्रतीतेरि

( ५ ) अतो वक्ति—

सू—ॐ ॥ स्वात्मना चोत्तरयोः ॥ ॐ ॥ २१ ॥

'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते । तं वा एतमभिवदन्ति स्वात्मा' इति, 'एष ह्यानन्दमादत्ते एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष आगमयति' (पौष्यायण) इत्युत्तरयोर्वाक्ययोः

---

ति चार्थः । तथा च स्मृत्यनुसारेण श्रुतेरपि जीवस्योत्क्रान्त्यादेः पराधीनतानिषेधोऽर्थ इति भावः ॥

( ५ ) एवं पूर्वपक्षे तन्निराकरणाय सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'स एतेन' इत्याद्येकं श्रुतिवाक्यम् । 'एष ह्यानन्दम्' इत्यन्यत् । अनेनोत्तरयोरित्यनेन ज्ञापितं वाक्यद्वयमुदाहृतं भवति । 'सः' जीवः 'एतेन' स्वस्थितेन 'स्वात्मना' स्वरूपभूतमानन्दमादत्ते इति व्युत्पत्त्या स्वात्मशब्दवाच्येन परमात्मनाऽनुगृहीतः इमं मातृदेहस्थं गर्भं प्रविशति । परेणैव तत्प्रेरित एव जायते । तेनैव लोकान्तरं 'नीयते' म्रियते 'उन्नीयते' मोक्षायोर्ध्वं नीयते । तमेतं विष्णुं स्वात्मेत्यभिवदन्ति विद्वांस इत्यर्थः । अनेन स्वात्मशब्दस्य विद्वद्रूढिर्दर्शिता । 'एषः' परमात्मा आनन्दं जीवकृतशुभकर्मफलं 'आदत्ते' गृह्णाति स्वरूपानन्दमनुभवतीति वा । 'अभि जीवयति' धृतप्राणं करोति संस्थापयति । 'उद्गमयति' देहान्निर्गमयति ऊर्ध्वं परलोकं गमयतीति वा । 'आगमयति' देहं प्रावेशयति । इमां भूमिमागमयतीति वेत्यर्थः । यद्यप्येष ह्येनं जीवमित्यारभ्यैव द्वितीयवाक्यमुदाहर्तव्यम् । तस्यैव प्रकृतोपयुक्तत्वात् । तथाऽपि द्वितीयवाक्ये स्वात्मशब्दाभावात् कथमुत्तरयोरित्यनेन द्वितीयवाक्यं गृह्यत इत्याशङ्क्य मैवं द्वितीयवाक्ये स्वात्मशब्दाभावेऽपि तद्व्याख्यानरूपैष ह्यानन्दमादत्त इति वाक्यसद्भावादिति भावेन तत्पूर्ववाक्यमप्युदाहृतम् । अत एव सूत्रे उभयोदाहरणम् । इत्युत्तरयोरिति । पौष्यायणश्रुतौ सोऽस्मादिति वाक्यापेक्षयोत्तरयोरित्यर्थः । सकाशादिति शेषः । यद्वा—सप्तमीयं न षष्ठी । तथात्वे सूत्रे वचनादिति शेषः। भाष्ये तूच्यन्त यत इति शेषः। आद्ये तु भवन्तीति । एवं हेतुं व्याख्याय इदानीं स्वात्मना चेति प्रतिज्ञांशं व्याचष्टे—परमात्मनैवेति ॥ स्वात्मनेत्यनुक्त्वा परमात्मनेत्युक्त्या परं पूर्णं स्वरू

परमात्मनैवोत्क्रान्त्यादयः ॥ २१ ॥

( ६ ) ॐ ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ ॐ ॥ २२ ॥

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति व्याप्तिश्रुतेर्नाणुर्जीव इति चेत्—

( ७ ) न, 'स आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च। स बहुधेदमनुप्रविश्यात्मनोऽभिनयति । स आत्मा

पभूतमानन्दं आदत्त इति व्युत्पत्त्या स्वात्मशब्दो व्याख्यातः । उत्क्रान्त्यादय इत्यनेन सूत्रे उत्क्रान्तिगत्यागतय इति पूर्वसूत्राद्विपरिणतपदस्यानुवृत्तिः सूचिता । अल्पाक्षरत्वायादिशब्दप्रयोगः । तथा च सोऽस्मादिति पूर्ववाक्यमप्येतदर्थकमेव । स्मृतिस्तु प्रसवादिदुःखानुभवे परमात्मदत्तस्वातन्त्र्यमाहेति न तद्विरोध इति भावः ॥

( ६ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—नेति ॥ इति व्याप्तिश्रुतेरित्यनेनातच्छ्रुतेरिति पूर्वपक्षहेत्वंशस्याणुत्वविरुद्धव्याप्तत्वश्रुतेरित्यर्थ उक्तो भवति । बहुवचनश्रवणादियं श्रुतिः परमात्मनि निरवकाशा, उत्क्रान्त्यादिकं तु मनोगतं जीवात्मन्युपचर्यत इति भावः । नाणुर्जीव इत्यनेन 'ज्ञोऽतः' इत्यतो ज्ञ इति पदानुवृत्त्या प्रतिज्ञांशो व्याख्यातः ॥

( ७ ) परिहारांशं व्याचष्टे—नेति ॥ नैतच्छ्रुतिबलेन जीवस्य व्याप्तत्वं वक्तव्यमित्यर्थः । कुतो नेत्यतस्तत्र तस्याः परमात्मविषयत्वेन सावकाशत्वादिति हेतूपस्कारमभिप्रेत्य तदपि कुत इत्याशङ्कायां तत्र हेतुत्वेनेतराधिकारादित्यंशं योजयति—स इति । इतीति । वाक्य इत्यर्थः । यद्वा—इत्यादिवाक्यस्येत्यर्थः । इति परमात्माधिकारत्वादित्यनेनेतराधिकारादित्यस्यैतरस्याधिकार इतराधिकारस्तस्मात् । यद्वा—इतरमधिकरोतीतीतराधिकारः, भावप्रधानश्चायम् । तथा च 'सः' इति वाक्ये 'इतरस्य' प्रकृतजीवाद्भिन्नस्य परमात्मनः 'अधिकारात्' पठितत्वात् प्रकृतत्वादिति यावत् । तत एव च 'व्याप्ता ह्यात्मानः' इत्यादिवाक्यसन्दर्भस्य 'इतराधिकारात्' परमात्माधिकारत्वात्तत्प्रकरणत्वात् । अत एवास्य 'व्याप्ताः' इत्यस्य 'इतराधिकारत्वात्' परमात्मपरत्वादित्यर्थत्रयमुक्तं भवति । तथा च प्रकरणबलाद्व्याप्ता इति श्रुतिर्विष्णुपरैव, न तु जीवपरा । न च बहुवचनविरोधः । परमात्मन्येव स इति श्रुतावात्मान इति बहुवचनान्तशब्दप्रयोगेणात्रत्यबहुवचन

स आत्मानः स ईशः स विष्णुः स परः परोवरीयान्' इति परमात्माधिकारत्वात् ।

(८) एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः ।
एक एवोच्यते वेदैस्तावता नास्य भिन्नता ॥
इति भविष्यत्पुराणे ।

(९) 'तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा–आ तेन या

स्यापि तस्मिन्नेव साधकाशत्वात् । निर्गुणा इति गुणबन्धराहित्योक्तेश्च । अत एव नोत्क्रान्त्यादीनां औपचारिकत्वं कल्प्यमेतच्छ्रुतेरबाधकत्वादिति भावः । 'सः' परमात्मा 'इदं' जगत् सृजति । सोऽन्तर्गतो बहिर्गतश्चेति द्विधा भूत्वाऽन्तर्बहिश्चेदं जगद्बिभर्ति । बहुधा भूत्वा इदमनुप्रविश्य 'आत्मनः' स्वस्य स्वत एवाभितः आभिमुख्येन 'नयति' स्वक्रियानुकूलक्रियं करोति । यद्वा—'आत्मनः' आत्मरूपानभितो नयति। 'स आत्मा स आत्मानः' तादृशैकवचनबहुवचनान्तशब्दबोध्यः 'परोवरीयान्' सर्वोत्तम इति श्रुत्यर्थः । न चैवं विरोधः पौनरुक्त्यं वा, बहुरूपत्वात्तात्पर्यज्ञापकत्वाच्च । सृष्ट्यादिकर्तृत्वाभिधायिपूर्वांशस्य 'स ईशः' इत्याद्युत्तरांशस्य चोदाहरणमेतच्छ्रुतिस्थतच्छब्दानां विष्ण्वेकविषयत्वसाधनार्थम् । तदेतत्सर्वमभिप्रेत्योक्तं तत्त्वप्रदीपे—बहुरूपैरिदं जगत्प्रविश्य स्वत एवाभितो नयति । स आत्मा स आत्मानः इत्येकस्यैव बहुरूपत्वं पुनः पुनस्तात्पर्यादुपदिशति । विष्णुश्रुतिः सृष्ट्यादिकर्तृत्वरूपतल्लिङ्गोक्तया स इति तच्छब्दानां विष्णुविषयत्वमेवेति साधयति । परोवरीयस्त्वोक्त्या चात्मशब्दितस्य विष्णोरवरत्वं दूरीकरोतीति ॥

(८) ईश्वरस्य बहुवचनवाच्यत्वे भेदः स्यादित्यत आह—एकशब्दैरिति ॥ 'केशवः' सृष्टिसंहारयोर्ब्रह्मरुद्रनियोजको विष्णुरेक एवाभिन्न एवानेकरूपत्वात् 'वेदैः' वेदगतैः 'एकशब्दैः' एकवचनान्तशब्दैर्द्विवचनान्तशब्दैर्बहुवचनान्तशब्दैश्चोच्यते । तावताऽस्य विष्णोर्भिन्नता नाशङ्क्येत्यर्थः । भविष्यत्पुराणे इत्यनन्तरमुक्तं अतो न भेदप्रसक्तिदोष इति वाक्यशेषः ॥

(९) एकस्मिन्ननेकशब्दप्रयोगं सम्प्रतिपन्नस्थले दर्शयति—तदिति ॥ व्याख्यातमेतद्वाक्यं प्राणनये ऐतरेयश्रुतिः । तदयमिति वाक्येन

तम्' ( ऐ.आ.२-३-८. ) इत्यादि च ॥ २२ ॥

परमात्मनः एकस्यैव शरीररथाधिष्ठातृत्वमुक्त्वा तत्र द्विवचनयुक्तौ मन्त्रौ प्रमाणयति—तदित्यनेन। तत्तन्मन्त्रार्थे मन्त्रद्रष्ट्रऋषिणा हयग्रीवेण प्रमाणमुक्तमित्यर्थः। तन्मन्त्रद्वयं पठति—आतेनेति। इत्यादीति। इत्याद्युदाहरणं च निर्भेदेऽपि हरौ बहुरूपत्वापेक्षया बहुवचनं युक्तमित्येतमर्थं गमयतीति। तृतीयान्तपाठे इत्यादिना करणेनैतमर्थं गमयतीत्यध्याहारेणान्वयो द्रष्टव्यः। न केवलं भविष्यत्पुराणोक्तिमात्रमिति चशब्दार्थः। आदिशब्देन समग्रो मन्त्रः 'निमिषश्चित्' इति मन्त्रान्तरं च गृह्यते। तत्र—

आ तेन यातं मनसो जवीयसा
रथं यं वामृभवश्चक्रुरश्विना।
यस्य योगे दुहिता जायते दिव
उभे अहनी सुदिने विवस्वतः ॥ ( ऋ.१०-३९-१२.)

इति प्रथममन्त्रस्यायमर्थः—हे अश्विनौ आशुगतिमत्त्वाद्व्याप्तत्वाभिमित्ताद्वा अश्विशब्दवाच्यौ विष्णुवायू 'ऋभवः' सर्वदेववाचकोऽयं शब्दः। तथा च सर्वे देवा ये रथं 'वां' युवयोरर्थे 'चक्रुः' कृतवन्तो 'यस्य' च देहाख्यस्य रथस्य 'योगे' सम्यग्योगे। निमित्तसप्तमीयम्। मनोवाक्कायकर्मभिस्सह भगवदर्पणाख्यैकक्रियासम्बन्धात् मनोवाक्कायकर्मणां भगवदर्पणात्तेषां तदधीनत्वज्ञानात् इति यावत्। 'विवस्वतो' विविधं वासवत्त्वात् निमित्तात् तद्वाच्याद्विष्णोः तत्प्रसादात् 'दिवो' रमाभिमन्यमानायाः विद्यायाः 'दुहिता' तज्जन्यं सरस्वत्यभिमन्यमानं विष्णुतत्त्वापरोक्षज्ञानं जीवस्य जायते। तथा 'सुदिने' साध्ये उभे अहनी जीवन्मुक्तिमुक्त्यवस्थे 'जायते' भवतः तेन मनसोऽपि 'जवीयसा' वेगेन मनसोऽपि पटुतरेण रथेन अध्यात्मं देहाख्येन अधिदैवं प्रसिद्धरथरूपेण रथेन 'आयातं' आगच्छतमिति यथोक्तमैतरेयभाष्ये—ऋभव इति देवानां साधारणं नाम।

आदित्या वसवो रुद्राः विश्वे ऋभव इत्यपि।
सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि ॥

इति शब्दनिर्णये। सुखं ददत इति सुदिने। 'विवस्वतो' विष्णोस्सकाशात् दिवो दुहिता अहनी च जायन्ते। अहनी इति द्विवचनेन द्वित्वासिद्धेऽपि उभे इति वचनं अध्यात्माधिदैवयोरुभयोरपि वचनार्थमि

( १० ) सू—ॐ ॥ स्वशब्दोन्मानाभ्यां च ॥ ॐ ॥ २३ ॥
एषो ह्यात्माऽप्युद्गतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः ।
पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता ॥

ति । भागवततात्पर्ये तु–'यत्रोभयोरसशब्दस्स्यात् तत्र द्विवचनेऽप्युभे' इत्युक्तम् । 'सशब्दः' समानशब्दः । केचित्तु—यस्य मनोवाक्कर्मभिः योगे भगवत्सम्बन्धादिति व्याचख्युः । तन्नु ऐतरेयभाष्यतट्टीकाविरुद्धम् ।

निमिषश्चिज्जवीयसा रथेनायातमश्विना ।
अन्तिषद्भूतु वामवः ॥ ( ऋ.८-६२-२. )

इति द्वितीयमन्त्रस्यायमर्थः—हे अश्विनौ 'निमिषश्चित्' चक्षुर्निमेषादपि 'जवीयसा' अत्यन्तं वेगवता देहाख्यरथेनायातम् । 'वां' युवयोस्सकाशात् यत् 'अवः' अवनं तत् 'अन्तिषत्' समीपे विद्यमानं अस्मदन्तिके स्थितं 'भूतु' भवत्विति ॥

( १० ) यदुक्तं व्याप्तिश्रुतिरीश्वरविषया तत्प्रकरणादिति, तदयुक्तम्, श्रुत्यपेक्षया प्रकरणस्य दुर्बलत्वात्, तन्मात्रेण बहुवचनश्रुतेः ईश्वरविषयत्वेन सङ्कोचरूपबाधायोगात् इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—स्वेति ॥ इति वाक्यशेष इति । इत्येवं रूपे काषायणवाक्यशेष इत्यर्थः । श्रुताभ्यामिति शेषः । आत्मशब्दोन्मानाभ्यामिति । आत्मशब्दोन्मानत्वलिङ्गाभ्यामित्यर्थः । अस्य व्याप्तत्वश्रुतेः ईश्वरविषयत्वेन सावकाशत्वादिति पूर्वाध्याहृतवाक्येनान्वयः । न केवलं 'इतराधिकारात्' इत्युक्तप्रकरणात्, किन्तु आत्मश्रुत्युन्मानत्वलिङ्गाभ्यां चेति चशब्दार्थः । तथा च श्रुतिलिङ्गसहितप्रकरणेन केवलाया बहुवचनश्रुतेः बाधो युक्त एवेति भावः । आत्मशब्दोन्मानाभ्यामित्यनेन सूत्रे स्वेतिशब्दः स्वशब्दः, स्वस्य ब्रह्मणः शब्द इति वा विग्रहः । तेन च तत्पर्यायात्मशब्दो गृह्यते । उन्मानशब्दश्च भावप्रधानः । तेन च अपरिमितत्वलिङ्गमुच्यते । 'परमतस्सेतून्मान' इतिवत् इत्यभिप्रेति । 'एषः' इति श्रुतौ उत्तरार्धेन पूर्वार्धोदितमुपपाद्यते । तथा च— 'एषः' हरिः 'हि' यतः गुणैः पूर्णः अचिन्त्यश्च, तथा 'स सर्ववेदैकयोनिः' सर्वे वेदाः एकं केवलं योनयो व्यक्तिकारणानि यस्य स तथो

इति वाक्यशेषे आत्मशब्दोन्मानाभ्यां च ।
( ११ ) आत्माऽमेयः परंब्रह्म परानन्दादिकाभिधाः ।
वदन्ति विष्णुमेवैकं नान्यत्रासाङ्गतिः क्वचित्॥
इति च कौर्मे ॥ २३ ॥
( १२ ) सू—ॐ ॥ अविरोधश्चन्दनवत् ॥ ॐ ॥ २४ ॥

क्तः सर्वाधीशः सर्वज्ञः सर्वकर्ता च, अतो 'मानशक्तेः' पुरुषगतपरिमाणशक्तेः अध्युद्गतः परिमाणातीतः पूर्ण इत्यर्थः । अत एव तत्त्वप्रदीपे मानशक्तेः अधिकत्वेनोद्गतः सर्वैश्वर्यो गुणाधिकत्वेन मानशक्तिमतिलङ्घ्य वर्तते कैश्चिदपि न मानशक्त्या मीयत इत्युक्तम् । यद्वा—'मानशक्तेः' वेदगतयथार्थज्ञानजननशक्तेरुद्गतः तदविषय इत्यर्थः । यद्यप्येवं, तथाऽपि 'असौ' परमात्मा विषयतया 'वेदैः प्रमितिं याति' वेदजन्यज्ञानविषयो भवतीत्यर्थः । अपरिमितस्यापि विभोः वेदैः एकदेशप्रमितिः तत्प्रसादात् भवतीति भावः । यद्वा—वेदानां स्वशक्त्यविषयस्यापि विष्णोः तत्प्रसादात् ज्ञानकरणत्वं भवतीति भावः । अथ वा—द्रष्टुश्चक्षुः इतिवत् विष्णुः प्रमितिं स्वप्रमितिं याति यापयति स्वातन्त्र्यादित्यर्थः ॥

( ११ ) आत्मश्रुतेरुन्मानत्वलिङ्गस्य च कुतो वैष्णवत्वमित्यत आह—आत्मेति॥ 'अमेयः' अपरिमितः । स्मृतेः विष्णुविषयत्वोपपादनाय परंब्रह्मेत्याद्युपन्यासः । एकपदमिदं, परानन्देत्यनन्तरं विसर्गलोपः आर्षो बोध्यः । इतिशब्दोऽत्राध्याहार्यः । इत्यादिका एवमाद्या अभिधा अभिधायकाः शब्दाः विष्णुमेवैकं मुख्यतो वदन्ति । 'आसां' अभिधानां 'अन्यत्र' जीवादौ क्वचिदपि 'गतिः' वृत्तिः मुख्यतो नास्तीत्यर्थः । इति च कौर्मे इति । न केवलं वाक्यशेषे श्रुतमात्राभ्यां, किन्तु कौर्मे वचने विष्ण्वेकनिष्ठत्वेन निश्चिताभ्यामप्यात्मशब्दोन्मानाभ्यामित्यन्वयः । यद्यपि 'व्याप्ता ह्यात्मानः' इति श्रुतावात्मशब्दानन्त्ययोः श्रवणात् पृथग्वाक्यशेषग्रहणं व्यर्थम् । तथाऽपि 'व्याप्ता ह्यात्मानः' इति वाक्ये बहुवचनसमभिव्याहारात् अन्यार्थताया एव झडिति प्रतिभासाद्वाक्यशेषे च तदभावेनास्य स्मृतिगतामेयपदव्याख्येयोद्गतोमानशक्तेरितिपदयुक्तत्वेन च निश्चितार्थत्वात्तदर्थं पृथगुपन्यासो युक्तः॥

( १२ ) नन्वथापि न जीवस्याणुत्वं युक्तम्, अणोस्तस्य शरीरे

अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते । यथा ह
रिचन्दनविप्रुष एकदेशपतितायाः सर्वशरीरव्याप्तिः ।
( १३ ) अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति ।
यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः ॥
इति च ब्रह्माण्डपुराणे ॥ २४ ॥
( १४ ) सू—ॐ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृ
दि हि ॥ ॐ ॥ २५ ॥

कदेशस्थत्वेन तदन्यत्राभावेन कस्याप्यप्राप्तकरणेन क्रियानिर्वर्तक त्वाभावेन सर्वशरीरगतस्पर्शज्ञानायोगात् तत्रतत्र चक्षुरादिषु तैस्तैर्यु गपद्रूपादिपरिज्ञानायोगाच्चेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे— अविरोध इति ॥ अणोरपि जीवस्येत्यादिना सूत्रे ज्ञस्य जीवस्येत्यस्या नुवृत्त्या विरोधपदावृत्त्या च यतो जीवस्य अणुत्वव्याप्त्यविरोधः अणु त्वेऽप्यंशैः सर्वशरीरव्याप्तिर्युज्यते, अतो 'विरोधः'तत्र तत्र परिज्ञानायो गाख्यविरोधो नेति योजना दर्शिता । अपिस्तु यद्यपितथापीत्यर्थः, समुच्चयार्थो वा । उभयादृष्टिबाधपरिहाराय प्रवृत्तं चन्दनवदिति दृष्टा न्तांशं चन्दनेषु श्रेष्ठत्वाद्विशेषपरतया विवृणोति—यथेति । हरिचन्द नेति । 'गन्धसारो मलयजो हरिचन्दनम्' इत्युक्तेः गन्धसाराख्यमल यगिरितरुकाष्ठकृतद्रव्यबिन्दोरित्यर्थः। विप्रुष इत्यनेन अणुत्वं ज्ञापित म् । 'एकदेशपतितायाः' अंशैः शरीरैकदेशनिपतितायाः । अस्य तथे ति पदाध्याहारेण अणोरपीति पूर्ववाक्येनान्वयः ॥

( १३ ) ननु नियामकं विना न दृष्टान्तमात्रेण अर्थसिद्धिः, एतत्प्रति कूलदृष्टान्तस्यापि वचनसम्भवादित्यत आह—अणुमात्रोऽपीति ॥ अ णुपरिमाणोऽपीत्यर्थः । अपिः पूर्वोक्तार्थकः । अंशैरिति शेषः । 'शरी राणि' शरीराङ्गानि 'हरिचन्दनविप्रुषो' गन्धद्रव्यबिन्दवः एकदेशप तिताः तिष्ठन्ति, तथेति शेषः । ब्रह्माण्डपुराणे उक्तमिति शेषः । तथा च अस्यैव नियामकत्वान्नोक्तदोष इति भावः ॥

( १४ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याच ष्टे—अवस्थितीति ॥ विप्रुष इत्यनुषज्यते । तथा नेति । वाऽप्यत्रान्वीय ते । सर्वशरीरव्याप्तिरिति चास्ति । तथा च चन्दनस्य विप्रुषः सर्व शरीरव्याप्तिर्युज्यते । कुतः ? 'सम्यगसम्यगवस्थानविशेषात्' चन्द

सम्यगसम्यगवस्थानविशेषाद्युज्यते चन्दनस्येति चेत्—
( १५ ) न, 'हृदि ह्येष आत्मा' (प्र. ३.६.) इति जीवस्यापि
तथाऽभ्युपगमात् ॥ २५ ॥

नबिन्दोः सांशत्वेन शरीरैकदेशे सम्यगवस्थानस्य अन्यत्र असम्यगवस्थानस्य च विशेषस्यानुभवसिद्धत्वात् न तथा जीवस्य । कुतः ? यतोऽयं न तथा सांशः, तथा सत्यनित्यत्वप्रसङ्गादिति योजना । विशेषादित्युक्त्या सूत्रे स्वार्थे ष्यञिति ज्ञापितम् ॥

( १५ ) परिहारांशं व्याचष्टे—नेति ॥ न जीवस्य शरीरे सम्यगसम्यगवस्थानाभाव इत्यर्थः । येन दृष्टान्तवैषम्यं स्यादिति भावः । कुतो नेत्यतस्तत्र हेतुतया अभ्युपगमादित्यंशं योजयति—जीवस्येति ॥ अनेन सूत्रे ह्यस्य जीवस्येत्यस्य अनुवृत्तिस्सूचिता । न केवलं चन्दनबिन्द्वोः किन्तु जीवस्यापीत्यपेरर्थः । 'तथाऽभ्युपगमात्' चन्दनबिन्दुवद्देहे हृदयतदितरस्थानयोः सम्यगसम्यगवस्थानाभ्युपगमात् । कथमेतत् 'तथाऽभ्युपगमात्' चन्दनबिन्दुवज्जीवस्यापि सांशत्वाभ्युपगमादित्यर्थः । न चानित्यत्वप्रसङ्गः । यतो न सांशत्वमात्रमनित्यत्वे प्रयोजकम्, किन्त्वारम्भकांशवत्त्वं, तच्च न जीवेऽस्ति । अन्यथा प्रकृत्यादेरपि दशदिक्सम्बन्धेन सांशत्वादनित्यत्वप्रसङ्गादिति भावः । अयं च भावस्तत्त्वप्रदीपे सूचितः । कुतस्तथाऽभ्युपगम इत्यतस्तत्र हेतुतया हृदि हीत्यंशं योजयति—हृदीति । श्रुतेरिति शेषः । हृदि हीति श्रुतिप्रतीकग्रहणम् । हृदयेऽवस्थितिवैशेष्याभ्युपगमादिति स्थलोक्तिरूपं वा । 'हि' यतः 'एष आत्मा' जीवो 'हृदि' हृदये स्वरूपेणास्ति अतो नेन्द्रियवृत्तिं विनाऽणोस्तस्य विषयसङ्गतिरिति षट्प्रश्नश्रुतिवाक्यार्थः । अनेन— चन्दनवज्जीवस्य 'अविरोधः' स्वरूपतदंशाभ्यां सर्वशरीरव्याप्तिर्युज्यते । कुतः ? चन्दनबिन्दोरात्मनस्सकाशात् 'अवस्थितिवैशेष्यात्' शरीरैकदेशे सम्यगवस्थानस्य अन्यत्र असम्यगवस्थानस्य च विशेषस्य अनुभवसिद्धत्वादस्य च जीवेऽभावादिति चेत्—न, कुतो?जीवस्यापि हृदि तदन्यत्र च तथाभावाभ्युपगमात् । सोऽपि कुतः ? 'हृदि हि' इति श्रुतेरिति सूत्रयोजना विरोधपदानुवृत्त्या नञावृत्त्या तथाशब्दाध्याहारेण च दर्शिता भवति । इदं त्ववधेयम्—सांशानां देवादीनामेकस्मिन् देहे हृदि नवनीतपिण्डवत्सान्द्रद्रव्यरूपेण सम्यगवस्थानं तदन्यत्रासम्यगवस्थानमिति । यथो

( १६ ) सू—ॐ ॥ गुणाद्वाऽऽलोकवत् ॥ ॐ ॥ २६ ॥

यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा ।

( १७ ) स्कान्दे च—

असम्यक्सम्यगिति च व्यवस्थाभेदतस्सुराः ।

क्तं बृहद्भाष्ये—

हृदये संस्थितो जीवो विशेषेण हरिस्तथा ।
चक्षुरादिषु रूपाणि जाग्रत्काले तयोस्सदा ॥
बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः ॥

हृदयस्थितेन रूपेणेति । विशेषेण सान्द्रद्रव्यरूपेणेत्यर्थः ॥

( १६ ) एवं स्वरूपतदंशाभ्यां आत्मनः शरीरव्याप्तव्याप्ती सदृष्टान्तमुक्त्वा प्रकारान्तरेणापि तदुपपादकं सूत्रमुपन्यस्य व्याचष्टे—गुणाद्वेति ॥ यथा 'आलोकस्य' प्रदीपस्य प्रकाशाख्यगुणेनेति । अनेनालोकस्यालोकगुणेन व्याप्तिवदिति दृष्टान्तांश आवृत्त्या व्याख्यातः । 'ज्योतीरूपेण' प्रदीपरूपेण 'अव्याप्तिः' दीपिकादावेव सम्यगवस्थानं अन्यत्र तदभाव इत्यर्थः । 'चिद्गुणेन' ज्ञानाख्यगुणेनेति । अनेन पञ्चमी तृतीयार्थे गुणव्याप्तिमपेक्ष्येति ल्यब्लोपनिमित्तेत्युक्तं भवति । शरीराङ्गेषु हृदि च व्याप्तिरव्याप्तिरिति । अनेन सूत्रे ज्ञस्याविरोध इति पदानुषङ्गेणाऽणोरपि जीवस्य व्याप्त्यव्याप्त्यविरोध इति दार्ष्टान्तिकांशो व्याख्यातः । इति वेत्यनन्तरमविरोध इतिपदमनुषञ्जनीयम् । एवं वा विरोधपरिहारः कार्य इत्यर्थः । अनेन—जीवस्य गुणिनोऽणुत्वेऽपि 'आलोकवत्' प्रदीपप्रकाशवत् गुणात् चिद्गुणस्य व्याप्तियोगादविरोधः । न तत्र तत्र परिज्ञानायोगाख्यविरोध इति वेतीतिशब्दाध्याहारेण सूत्रार्थ उक्तो भवति ॥

( १७ ) नन्वविरोधसूत्रोक्तांशव्याप्तिः गुणाद्वेत्युक्तप्रकाशव्याप्तिश्चैकत्र विरुद्धेत्यत आह—स्कान्दे चेति ॥ यथाऽविरोधस्तथोक्तमिति शेषः । चशब्दो वचनान्तरसमुच्चये । यथोक्तं तत्त्वप्रदीपे—न केवलं स्कान्दे, किन्त्वन्यत्र चेति । किमुक्तमित्यतस्तत्पठति—असम्यगिति । 'हि' यतः 'सुराः' देवा असम्यक्सम्यगित्यवस्थाभेदत एकस्मिन्नेव शरीरे हृदयादितरस्थानेष्वंशैरसम्यगवस्थानं, हृदये तु अंशिस्व

व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ।
( १८ ) चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यते ।

रूपेण सम्यगवस्थानमित्यवस्थाभेदमपेक्ष्यैव व्याप्त्यव्याप्तियुताः, एवं देवांशा अर्जुनादयोऽपि प्रत्येकं हृदयादितरत्रासम्यक्कस्मिंश्च सम्यगवस्थानेन व्याप्त्यव्याप्तियुताः । एवमंश्यपेक्षया ऽप्यव्याप्तियुताः असम्यगवस्थिताश्चांशिनस्त्वंशापेक्षया सम्यगवस्थिताः व्याप्तियुताश्च, न त्वन्यथा । देवादिभ्योऽन्ये नरास्तु प्रकाशगुणेनैव व्याप्तियुताः, न देववत्सान्द्रव्याप्तिभाजः । अतो जीवानामणुत्वेऽपि न तत्र तत्र परिज्ञानायोगाख्यविरोधावकाश इत्यर्थः ॥

( १८ ) नन्वस्तु गुणस्य व्याप्तिः, गुणिनः कुत इत्यत आह—चिद्गुणस्येति ॥ ज्ञानाख्यगुणस्येत्यर्थः । 'स्वरूपत्वात्' अनपायित्वेन गुण्यभिन्नत्वात् । तद्व्याप्तिरित्यावर्तते । तथा च 'तद्व्याप्तिः' गुणव्याप्तिः गुणिव्याप्तिर्भवति । तर्हि कथं व्यवहारभेद इत्यतोऽप्याह—तद्व्याप्तिरिति। गुणव्याप्तिर्गुणिव्याप्तिश्चेति व्यवहारभेदोऽपि युज्यते। कुतः?'चिद्गुणस्य स्वरूपत्वात्'सविशेषाभिन्नत्वात् । सम्यगसम्यगवस्थाभेदेन व्याप्त्यव्याप्तियुक्तत्वं च न देवेषु सर्वत्रैकविधमित्याह—शक्तियोगादिति । 'सुराणां' देवानां तु 'शक्तियोगात्' गन्धर्वादिभ्योऽधिकशक्त्याख्यादुपायात्तेभ्यः उत्कृष्टा व्यवस्थितिः युक्ता । देवेष्वपि केषांचिदधमेभ्योऽधिकशक्तियोगात्कदाचिद्बहुस्थानेषु प्रायः सम्यगवस्थानम् । अत्युत्तमानां भगवत्प्रसादादिच्छया सम्यगवस्थानं व्याप्तिश्चाप्यधिका । तेषामित्युक्तेः अवतारेष्वपि केषां चित्परमार्थपरायणानां महात्मनां तत्त्वविद्याचार्यवर्याणां मूलरूप इव सौष्ठवसार्वज्ञ्यसौलक्षण्यादिगुणाः परिदृश्यमानाः युज्यन्ते । यथा मध्वाचार्यवर्याणामिति । एवं 'विविधा' नानाविधा 'व्यवस्थितिः' विशिष्टावस्थावस्थानं युक्तमेवेत्यर्थः । न चैवमेवं अणूनामपि जीवानां प्रकाशो व्यापको भवेत् । 'अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम्' इति माण्डूकभाष्यविरोधः । तत्र देवानां प्रकाशव्याप्त्युक्तेरिति वाच्यम् । देवतानां जीवानामिति सामानाधिकरण्येन अस्य वाक्यस्य देवमात्रपरत्वेऽपि देवानां अंशपरित्यागेन केवलं प्रकाशव्याप्त्यभावेऽपि अंशसहभावेन प्रकाशव्याप्तेरपि सत्त्वात् । यद्वा—प्रकाशशब्दः अंशस्याप्युपलक्षकः ।

शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिः ॥
इति ॥ २६ ॥

—:*:—

१३. अधिकरणम् ॥

( १ ) 'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चावर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति गोपवनश्रुतावेकस्याबहुत्वं प्रतीयते। 'सपञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यते'

---

मात्रशब्दोऽवधारणार्थः। तथा च अणूनामपि जीवानां देवेतरेषामण्डमात्रे यथाक्रमं प्रकाशो व्यापकः। अतएव तत्त्वप्रदीपे—'तद्यथाणुनश्चक्षसः प्रकाशो व्याततः एवमेवास्य प्रकाशो व्याततः' (शाण्डिल्य.) इति श्रुतिमुदाहृत्य जीवमात्रस्य शरीराद्बहिरपि प्रकाशव्याप्तिरस्तीत्युक्तम्। अतात्त्विकदेवानामण्डमात्रे यथाक्रममंशो व्यापकः। तात्त्विकदेवानां तु यथाक्रमं बहिरपि अंशो व्यापक इत्युभयपरं वाक्यमिति न विरोधः ॥ १२ ॥

॥ इति उत्क्रान्त्यधिकरणम् ॥

---

१३. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवस्यैकरूपत्वानेकरूपत्वविषयश्रुतिविरोधः परिह्रियते। सन्देहबीजं श्रुतिविभागेन दर्शयति—स इति ॥ 'सः' जीवो नित्यः। तत्र हेतुः—यतो निरवयव इति। तत्रैव हेत्वन्तरम्—पुण्ययुक्पापयुक्चेति। तत्फलभोक्तेत्यर्थः। तथा च नित्यत्वाभावे कृतहानाकृताभ्यागमप्रसङ्गात्तदेष्टव्यमिति भावः। अतएव तेषां बद्धक्रमत्वान्न पृथक् तच्छब्दाभावः। 'इमं' भूलोकं 'प्रत्यावर्तते' पुण्यपापक्षये पुनः पुनरागच्छति। एवममुं परलोकं 'प्रत्यावर्तते' तदा तदा गच्छति 'स विमुच्यते' बन्धात्। 'स एकधा भवति' एकरूप एव भवति। नानेकरूप इत्यर्थः। यद्यपि स एकधेत्याद्येवोदाहार्यम्। तथाऽपि तच्छब्दबोध्यस्य जीवत्वज्ञापनाय, निरवयवत्वादंशबाहुल्येनाप्यनेकरूपत्वं न सम्भवतीति पूर्वपक्षयुक्तिज्ञापनाय च श्रुतेरीश्वरविषयत्वनिवारणाय 'पुण्ययुक्' इत्यादिवाक्यस्य, 'स नित्यः' इति तदादिवा

इति पाराशर्यायणश्रुतौ बहुरूपत्वं प्रतीयते ।

( २ ) अतो विरोधं परिहरति—

सू—ॐ ॥ व्यतिरेको गन्धवत्तथा च दर्शयति ॥ ॐ ॥ २७ ॥

यथापुष्पाद्गन्धः पृथग्गच्छत्येवमंशिनो जीवादंशाः पृथग्गच्छन्ति ।

क्यस्य चोदाहरणं कृतम् । एकस्य जीवस्येति शेषः । 'अबहुत्वं' अबहुरूपत्वं एकरूपत्वमिति यावत् । स जीवः 'पञ्चधा' पञ्चरूपः । एवमुत्तरत्रापि । 'गच्छति' परं लोकं प्रति । अत्रापि जीवत्वज्ञापनाय 'स मुच्यते' इति शेषोदाहरणम् । अत्र श्रुतिद्वयेऽपि प्रतिपाद्यो योगिजीवः । स एवेह विचारविषय इति ध्येयम् ॥

( २ ) सयुक्तिकाबहुरूपत्वश्रुतिविरोधेन बहुरूपत्वश्रुतेः अप्रामाण्यात्तत्साम्याज्जगत्कारणत्वश्रुतेः अप्रामाण्यात् न हरौ श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ यतो विरोधः द्वेधाश्रुतिमूलकः संशयबीजमस्ति, अतः संशयनिवृत्त्यै तं विरोधं परिहरति सूत्रकृदित्यर्थः । सूत्रं व्याचष्टे—यथेति ॥ यथा 'गन्धः' गुणः वायुनाऽऽकृष्टः 'पुष्पात्' पुष्पं विहाय 'पृथक्' पार्थक्येन प्रदेशान्तरस्थितं घ्राणदेशं गच्छति तथा ये योगिजीवांशाः अंशिनो जीवात् पृथग्विभक्ताः सन्तस्तत्र तत्र स्वकार्याय गच्छन्तीत्यर्थः । यद्वा—गन्धशब्दो गन्धवद्द्रव्यावयवपरः । अतएव प्रमेयदीपे 'वायुर्गन्धानिव' इत्यत्र गन्धवतोऽवयवानिति व्याख्यातम् । पृथगित्यनेन व्यतिरेकशब्दस्य पृथग्भावार्थत्वमभिप्रैति । अंशिनो०ऽशा इत्यनेन सूत्रे ह्यस्येति विपरिणतपदस्यानुवृत्तिरंशैरित्यध्याहारश्च सूचितः । अत एव टीकायाम्—प्राथम्यसाम्येन गुणत्वोक्तिरित्युक्तम् । एतेन 'यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः' इति तृतीयस्कन्धविरोधोऽपि निरस्तः । न चैवं दीपं विहाय वृत्तेर्द्रव्यत्वसाधकताविवादादिति पूर्वाधिकरणटीकोक्त्या गन्धादिगुणानामपि गुणिनं विहाय गमनावगमनात् तथा, द्रव्यत्वसाधकगमनदूषकचन्द्रिकया च विरोध इति वाच्यम् । गमनोक्तेः सूक्ष्मावयवविषयत्वात्, दूषणोक्तेश्च स्थूलावयवविषयत्वात्, पक्षद्वयस्याप्यविरुद्धत्वात् । अत्र भाष्यटीकयोः आलोकगन्धयोर्गुणत्वोक्तिर्मुख्या । द्रव्यत्वोक्तिस्त्वमुख्येति द्रष्टव्यम् ॥

(३) 'अथैक एव सन् गन्धवद्व्यतिरिच्यते। अथैकीभवति।
अथ बह्वीभवति। तं यथा यथेश्वरः प्रकुरुते तथा
तथा भवति सोऽचिन्त्यः परमो गरीयान्' इति
शाण्डिल्यश्रुतिः।

(४) अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः।

---

(३) ननु विभक्तांशबाहुळ्येन जीवस्य बहुरूपत्वाभ्युपगमेऽपि 'स एकधा' (गोपवन.) इति श्रुतिविरोध इत्यतस्तत्र तस्याः स्वरूपैक्यविषयत्वादिति परिहारम्, न च भिन्नांशशून्यत्वादनेकरूपत्वानुपपत्तिरित्यतस्तत्र योगसम्पदोपपत्तेरिति परिहारम्, न चेश्वरेण साम्यापात इत्यतस्तत्र योगिनामपि बहुरूपत्वशक्तेः योगाराधितेश्वरप्रसादायत्तत्वादिति परिहारम्, न चेश्वरस्याप्येतदशक्यमित्यतस्तत्र तस्याचिन्त्यशक्तित्वादिति परिहारं चाभिप्रेत्य कुत एतत्सर्वं ज्ञायत इत्यतस्तत्र प्रमाणप्रदर्शकतया तथा च दर्शयतीति सूत्रखण्डो योज्य इत्याशयेन तत्सूचितश्रुतिमुदाहरति–अथेति॥ प्रमेयान्तरारम्भार्थोऽथशब्दः। जीवः स्वरूपत एक एव सन् 'गन्धगुणवद्व्यतिरिच्यते' अंशिनं विहायांशैः पृथग्भवति 'अथैकीभवति' पुनः पुनरंशैरैक्यं सम्पद्यते। अथ योगसम्पदा 'बह्वीभवति' बहुरूपस्सम्पद्यते। 'तं' जीवं 'यथा यथा' एकधाऽनेकधा च, तथा तथा भवति जीवः। ईश्वरः अचिन्त्यशक्तिः कुतः? यतः 'परमो' लोकोत्तरो 'गरीयान्' गुरुतमो महत्तम इत्यर्थः। अत्रैक एवेत्युक्त्या स्वरूपैक्यमुक्तम्। एकीभवतीत्युक्त्या भिन्नांशशून्यत्वमुक्तम्। अथ बह्वीभवतीत्यनेन योगसम्पदा बहुरूपत्वमुक्तम्। तमित्यादिना योगिनां बहुरूपत्वशक्तेः योगाराधितेश्वरप्रसादाधीनत्वमुक्त्वा तत्साम्यं निराकृतम्। सोऽचिन्त्यशक्तिरितीश्वरस्याचिन्त्यशक्तित्वोक्त्या ईश्वरस्याप्यशक्यमिदमित्याशङ्का निवारिता। परमो गरीयानित्यनेन लोकविरोधः परिहृतः। श्रुतिरित्यनन्तरमुक्तार्थे प्रमाणमिति शेषः॥

(४) भिन्नांशशून्यत्वस्य योगसम्पदा इत्यस्य च श्रुतौ कण्ठतोऽनुक्तेस्तदर्थं अत्रार्थे चशब्दसूचितां स्मृतिं दर्शयति—अचिन्त्ययेति॥ स्वरूपत एक एव जीवः 'अवयववर्जितो' भिन्नांशशून्योऽपि अचिन्त्येश्वरशक्त्या प्राप्तया 'योगसम्पदा' योगश्च सा सम्पच्च परमयोगशास्त्रोक्तयोगाख्यसम्पदा अचिन्त्यशक्तीश्वरप्रसादागतध्यानोपाया

आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा ॥ इति च पाद्मे ॥ २७ ॥

१४. अधिकरणम् ॥

( १ ) 'तत्त्वमसि' ( छा.६-८-७. ) 'अहं ब्रह्मास्मि' ( बृ.३-४ - १०. ) इत्यादिषु जीवस्य परेणाभेदः प्रतीयते । 'नित्यो नित्यानां चेतनश्चेतनानां' (श्वे.६-१३. ) 'द्वा सुपर्णा' ( श्वे.४-६. ) इत्यादिषु भेदः ।

( २ ) अत उच्यते—

सू—ॐ ॥ पृथगुपदेशात् ॥ ॐ ॥ २८ ॥

ध्यसम्पत्त्या स्वात्मानं बहुधा कृत्वा क्रीडत इत्यर्थः । 'एतेन योगः' इत्यत्रेतरयोगशास्त्रस्यैव दृष्टार्थविषये अप्रामाण्यमुक्तं भगवता, न तु परमयोगस्येति तत्त्वप्रदीप एवोक्तम् । इति पाद्मे इत्यनन्तरं सूत्रकृदुक्तमुक्तमिति शेषः ॥ १३ ॥

॥ इति व्यतिरेकाधिकरणम् ॥

१४. अधिकरणम् ॥

( १ ) अस्मिन्नधिकरणे जीवस्य परमात्माभिन्नत्वादिविषयश्रुतिविरोधः परिह्रियते । संशयबीजं श्रुतिधिगानं दर्शयति-तत्त्वमसीति ॥ 'इत्यादिषु' एवमादिश्रुतिवाक्येषु । आदिशब्देन 'स यो हवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु. ३-२-९. ) इत्यादिकं गृह्यते । 'परेण' परमात्मना । 'नित्यो नित्यानाम्' इत्यत्र 'चेतनश्चेतनानाम्' इत्यत्र च निर्धारणषष्ठ्या जीवस्य भेदः प्रतीयते । 'द्वा सुपर्णा' इत्यत्र तु अभेदविरोधिद्वित्वसङ्ख्यया भेदवाचकद्विशब्देनैव वा भेदोऽवगम्यत इति ध्येयम् । 'तत्त्वमसि' इत्येतदानन्दमयाधिकरणे 'नित्यो नित्यानाम्' इत्येतत् 'आत्मा' इत्यत्र 'द्वा सुपर्णा' इत्येतत् द्युभ्वाधिकरणे व्याख्यातम् ॥

( २ ) 'तत्त्वमसि' इत्यादिश्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबलत्वात् परमात्माभिन्न एव जीव इति पूर्वपक्षे सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ उपदेशादित्यस्यार्थः श्रुतेरिति । नन्वभेदश्रुतेर

'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति सोपपत्तिककौशिकश्रुते र्भिन्न एव जीवः ॥ २८ ॥

( ३ ) सू—ॐ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ ॐ ॥ २९ ॥

ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपम

---

भिन्नो जीव इत्यपि सुवचत्वादवधारणानुपपत्तिरित्यतः सोपपत्ति केति हेतुविशेषणमदायि । विरुद्धधर्माधिकरणत्वरूपयुक्तियुक्तेत्य र्थः । सावधारणस्य पृथगिति साध्यपदस्यार्थो भिन्न एवेति । स्वात्मने तिप्रकृतपरमात्मन इति शेषः । ज्ञ इत्यस्य अनुवृत्तपदस्यार्थो जीव इ ति । श्रुतिसूत्रयोः प्रतिज्ञावाक्यादित्वेऽपि हेतुगर्भा प्रतिज्ञाऽपि उपप त्तिज्ञापिकेति प्रमाणलक्षणोक्तेरनियमपक्षमाश्रित्य हेतुगर्भप्रतिज्ञैवेह प्रदर्शिता । एवमन्यत्रापि द्रष्टव्यम् । यतः 'परः' परमात्माऽचिन्त्यः साकल्येन 'जीवसङ्घात्' जीवसमुदायात् 'परमः' उत्तमः पूर्णः गु णैः । जीवसङ्घस्तु चिन्त्यः परमत्वावधिभूतोऽपूर्णश्च 'हि' प्रसि द्धः । किञ्च—यतोऽसौ हरिर्नित्यमुक्तः, अयं जीवश्च संसरति बन्धान्मो क्षं 'ततः' परमादेव स्वस्याभिवाञ्छति 'हिः' प्रसिद्धम् । अतो जी वविरुद्धधर्मत्वात् ततो भिन्न एवेति श्रुत्यर्थः । यद्यपि श्रुतावीश्वरध र्मिकाभेदस्यैव श्रवणात् 'जीवैक्यं परमात्मनः' इत्यनुव्याख्याने तथै वोक्तत्वाच्च ईश्वरो जीवाद्भिन्न इति प्रतिज्ञातव्यम् । तथाऽपि जीवपेक्षि कात्वादेकवित्तिवेद्यतया विरुद्धधर्मोक्तिद्वारा जीवधर्मिकभेदस्यापि श्रु त्युक्तत्वादेवमुक्तम् । अत एव सुधायां—यतो विष्णुः जीवात् जीवश्च विष्णोः पृथगिति साध्यनिर्देशः कृतः ॥

( ३ ) नन्वेवं सति 'तत्त्वमसि' इत्याद्यद्वैतश्रुतेर्निर्विषयतयाऽप्रामा ण्यं स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—तदिति ॥ ज्ञाना नन्दादिब्रह्मगुणा एवेत्युक्त्या अभेदेत्युक्त्या च तदिति तच्छब्दद्वये न स्वात्मनेतिप्रकृतस्य परमात्मनः परामर्शः, तस्य गुणास्तद्गुणा इ ति विग्रहः, तद्गुणशब्दस्तद्गुणसदृशगुणपरः, द्वितीयतच्छब्दो भावप्र धान इति च सूचितम् । अस्येत्यनेन ज्ञस्येति विपरिणतपदस्य सूत्रेऽ नुवृत्तिस्सूचिता । न चायोग्यस्य जीवस्य ज्ञानानन्दादिगुणाभाव इति

तोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वात्सर्वात्मकत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्म' (छा. ३-१४-१.) इति।

(४) भविष्यत्पुराणे च—

---

वाच्यम्। अस्य शास्त्रस्य विशिष्टाधिकारिकत्वेन तं प्रत्येव 'तत्त्वमसि' इत्याद्युपदेशप्रवृत्तेः अस्य सज्जीवस्येत्यर्थाभ्युपगमात्। सारपदमनूद्य व्याचष्टे—सारः स्वरूपमिति। न च ज्ञानानन्दादिरूपब्रह्मगुणानां कथं जीवस्वरूपत्वमिति वाच्यम्। ब्रह्मगुणा इत्यस्य तद्गुणसदृशगुणा इत्यर्थाभ्युपगमात्। एवं सूत्रेऽपि गुणशब्दस्तद्गुणसदृशगुणपरः॥ अत इति सावधारणम्। अनेन सौत्र तुशब्दो व्याख्यातः। तद्व्यपदेश इत्यस्य पर्यवसितार्थोऽभेदव्यपदेश इति। 'तत्त्वमसि' इत्यादिपरब्रह्मैक्योक्तिरित्यर्थः। ज्ञानानन्दादीत्यादिवाक्यं च यतो जीवस्य ब्रह्मगुणसदृशगुणस्वरूपत्वं, अतस्तद्विवक्षयैव गौण्या वृत्त्या जीवे ब्रह्माभेदोक्तिः अभेदप्रापकतदादिपदप्रयोगो, न त्वभेदाभिप्रायेण। यत एवमभेदव्यपदेशोऽन्यथोपपन्नः, अतो न तस्याप्रामाण्यमिति साध्याध्याहारेणावृत्त्या योज्यम्। एवं यतस्तद्व्यपदेशो जीवस्य तद्गुणसारत्वमपेक्ष्योपपन्नोऽतो नाभेदश्रुतेरप्रामाण्यमिति प्रतिज्ञाध्याहारेण सूत्रयोजना द्रष्टव्या। सर्वगुणात्मकत्वादिति। समस्तजगद्गुणसदृशगुणस्वरूपत्वमपेक्ष्य यथा 'सर्वं खल्विदं ब्रह्म' इति छन्दोगश्रुतौ प्रकृष्टज्ञातृत्वान्निमित्तात् प्राज्ञशब्दोक्तस्य ब्रह्मणः 'सर्वात्मकत्वं' जडजगदभेदः 'उच्यते' व्यपदिश्यते तथैवेत्यर्थः। यथेत्यादिना प्राज्ञ एव प्राज्ञः तद्वत् तस्य सर्वाभेदोक्तिवदिति दृष्टान्तांशो व्याख्यातः। यद्यपि छान्दोग्यभाष्ये 'इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः' इति वचनानुसारेणेदंसर्वपदयोः परमात्मनि मुख्यवृत्तिरभिहिता, न तु गौणी वृत्तिः। तथाऽपि पदसमन्वयाभिप्रायेण तस्य प्रवृत्तत्वात्, वाक्यान्वयाभिप्रायेणात्र गौणिवृत्त्यभिधानात् न विरोधः॥

(४) अत्रैव स्मृतिसम्मतिमाह—भविष्यदिति॥ न केवलं सूत्रकृता सूत्र एवैतदुक्तम्, किन्तु स्पष्टोक्तिरूपे भविष्यत्पुराणे चोक्तमित्यर्थः। किमुक्तमित्यतस्तत्पठति—भिन्ना इति। यद्यपि जीवाः परमात्मनो भिन्नाः, परमात्माऽपि जीवेभ्यो भिन्नः। तथाऽपि सर्वेषु 'वेदवा

भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥ इति ॥ २९ ॥

——*——

१५. अधिकरणम् ॥

( १ ) जीवस्याप्युत्पत्तिरुक्ता । अतस्तस्य 'सोऽनादिना पुण्येन पापेन चानुबद्धः । परेण निर्मुक्त आनन्त्याय कल्प्यते '(          ) इत्यनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इति ।

( २ ) अत आह—

देषु' 'तत्त्वमसि' इत्यादिषु 'ब्रह्मरूपेण' परब्रह्माभेदेन 'प्रोच्यन्ते' व्यपदिश्यन्ते । कस्मात्? 'ज्ञानरूपतः' तदुपलक्षितब्रह्मगुणसदृशगुणस्वरूपत्वादित्यर्थः । अनेन जीवब्रह्माभेदोक्तेः चित्त्वादिसाम्यं निमित्तमित्युक्तं भवति । इति भविष्यत्पुराणे इतीतिशब्दान्वयः ॥ १४ ॥

॥ इति पृथगधिकरणम् ॥

——:*:——

१५. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवनित्यत्वविषयश्रुतिविरोधः परिह्रियते । सफलं पूर्वपक्षमाह—जीवस्येति ॥ ऽत इत्यत्रेति भावः । न केवलं वियदादेः, किन्तु जीवस्यापीति वा , न केवलं जीवोपाधेः किन्तु जीवस्यापीति वाऽपेरर्थः । न केवलं पूर्वोक्तन्यायेनोत्पत्तिमात्रं जीवस्य, किन्तु उत्पत्तिमतो भावस्य विनाशित्वरूपानित्यत्वनियमादनित्यत्वमपि प्राप्तमित्यपिशब्दाभिप्रायः । अनेन सयुक्तिकपूर्वपक्षः प्रदर्शितः । ततः किमित्यत आह—अत इति । इतिशब्दानन्तरं श्रुत इति शेषः । तथा च यतस्तस्य जीवस्योत्पत्तिमत्त्वं, अतोऽत्र श्रुतोऽनादिकर्मसम्बन्धो न युज्यते । एवं यतो विनाशित्वं, अतोऽविनाशित्वप्राप्तिरूपानन्त्यावाप्तिर्मुक्तिश्च न युज्यत इति योजना । अनेन पूर्वपक्षफलं दर्शितम् । 'सः' जीवः । अनादिनेत्येतत् बन्धकपुण्यपापयोरुभयोरपि विशेषणम् । परेणेत्येतत् परमात्मना बद्धः, परेण बन्धाद्बन्धककर्मणा निर्मुक्तः, इत्युभयत्रान्वेति । 'आनन्त्याय' अविनाशाय मोक्षाय 'कल्पते' समर्थो भवति तत्प्राप्नोतीति श्रुत्यर्थः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ परमात्मेत्य

सू—ॐ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ॐ॥ ३० ॥
यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि ।

( ३ ) 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः । अत उत्पद्यते च म्रियते च विमुच्यते च ' इति च आग्निवेश्यश्रुतिः ।

( ४ ) आत्मा नित्यस्सुखदुःखे त्वनित्ये, जीवो नित्यो धातुर

---

नेन आत्मशब्दो व्याख्यातः । 'तिष्ठति ' अस्तीत्यनेन भाविशब्दः , 'अनाद्यनन्तत्वेन ' उत्पत्तिनाशशून्यत्वेनेति सत्त्वप्रकार उक्तः । 'एवं' तावत्कालं जीवोऽपि तिष्ठतीत्यनेन सूत्रे इत्यनुवृत्तिस्सूचिता । न केवलं परमात्मा किन्तु जीवोऽपीति समुच्चये अपिशब्दः। अनेन बिम्बस्य परमात्मनोऽनाद्यनन्तत्वात् जीवस्वरूपोपाधेश्च यावदात्मभावित्वात् परमात्मनोऽनन्तत्वेन बिम्बोपाधिसन्निधेरनाद्यनन्तत्वात् नित्यत्वादिति हेतुसमुच्चायकतया सौत्रचशब्दो व्याख्यातः। न दोष इति साध्यांशः अनादिकर्मसम्बन्धः आनन्त्यावाप्तिश्च न युज्यत इत्युक्तो दोषो नेति पूर्वपक्षफलकथनपरभाष्येणैव व्याख्यातप्रायत्वात् पुनर्न व्याख्यातः। अनेनैव 'सोऽनादिना ' इति श्रुत्यप्रामाण्यदोषोऽपि नेत्यपि व्याख्यातः ॥

( ३ ) कुत एतदखिलं सिद्धमित्यतः तत्र प्रमाणप्रदर्शकतया तद्दर्शनादिति सूत्रखण्डं योजयति—नित्य इति ॥ बिम्बभूतः ' परः ' परमात्मा नित्यः । तथा 'जीवः ' प्रतिबिम्बनोपाधिभूतः जीवस्वरूपप्रकाशो 'नित्यो ' यावत्परमात्मभावी । न चैवं 'ब्रह्मन् लयमभ्युपैति ' इति जीवस्य ब्रह्मणि लयश्रुतिविरोध इत्याह—अनित्या इति । यतस्तस्य जीवस्य 'धातवो ' बाह्यदेहाः अनित्याः अतो जीवा उत्पद्यन्ते 'म्रियन्ते ' नश्यन्ति इत्युच्यन्ते । तथा च श्रुतेरुपाधिविषयत्वात् न तद्विरोध इति भावः।स्वरूपतोऽविनाशित्वादेव जीवो देहबन्धात् 'विमुच्यते ' आनन्त्यावाप्तिरूपमुक्तिभागी च भवतीति श्रुत्यर्थः । चशब्दः क्रियासमुच्चये ॥

( ४ ) सूत्रे दर्शनाच्चेत्यपि चशब्दान्वयेन सूचिते स्मृती दर्शयति—आत्मेति ॥ सुखदुःखपदाभ्यां बाह्योपाधिरुपलक्ष्यते। अत एव टीकायाम्—धात्वादिपदोदितेत्युक्तम् । भारते आत्मेति पादः एकस्थानस्थितः। आत्मेत्यस्य सुखदुःखेत्यस्य च व्याख्यानरूपो जीवधातु

स्य त्वनित्यः। इति च भारते ॥ ३० ॥

—:※:—

१६. अधिकरणम् ॥

( १ ) 'विज्ञानात्मा सह देवैश्च सर्वैः' (प्र.४-११.) 'स आनन्दः स परेणामुं लोकं नीयते स विमुच्यते' इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। 'स दुःखाद्विमुक्त आनन्दीभवति। सोऽज्ञानाद्विमुक्तो ज्ञानीभवति।

पदघटितोऽन्यः पादः स्थलान्तरगतः। अत एव न पुनरुक्तिः। धातुस्त्वित्यन्वयः। उभयत्रापि तुशब्दो वैलक्षण्यद्योतकः। भारत इत्यनन्तरं वचनमिति शेषः। आग्निवेश्यश्रुतिर्वचनमित्युभयत्रापि यत इति शेषः। अस्यैवं जीवोऽपीति पूर्वेणान्वयः। चशब्दः श्रुतिस्मृतिसमुच्चयार्थः॥ १५ ॥

इति यावदधिकरणम् ॥

—:※:—

१६. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवस्य आनन्दादिरूपत्वतदभावश्रुत्योर्विरोधः परिह्रियते। श्रुतिविरोधरूपं सन्देहबीजं दर्शयति–विज्ञानात्मेति ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र।
तदेतदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेश ॥

इति षट्प्रश्नश्रुतिः। 'स आनन्दः' इति श्रुत्यन्तरम्। इतीति। इत्यादिश्रुतिभिरित्यर्थः। सोम्येति कस्य चित्सम्बोधनम्। तुशब्दोऽवधारणे। तथा च 'विज्ञानात्मा' विज्ञानस्वरूपो जीवः 'प्राणाः' चक्षुराद्याः तद्विषयाश्च रूपादयः 'भूतानि' पृथिव्यादीनि तन्मात्राश्च 'सर्वैर्देवैः' अभिमानिभिः सूर्यादिभिः सह 'यत्र' यस्मिन् अक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति। तदेतदक्षरं यः पुरुषो 'वेदयते' विजानाति 'सः' उक्तप्रकारेण सर्वज्ञः 'सर्वं' पूर्णं परं ब्रह्म 'आविवेशैव' ध्रुवमाविशत्येवेति प्रथमश्रुत्यर्थः। 'सः' जीवः 'आनन्दः' आनन्दरूपः। एवं बलरूपः ओजोरूपः 'परेण' परमात्मनाऽमुमामुष्मिकं लोकं प्रति नीयते। तत्पूर्वं तेनैव देहसम्बन्धाद्विमुच्यत इति द्वितीयश्रुत्यर्थः। आनन्दादिगुणानां प्रत्येकमभेदे तात्पर्यज्ञापनार्थं स इत्यभ्यासः। स परेणेत्यधिकांशोदाहरणं अस्य ईश्वरविषयतानिरासाय। एवं पूर्ववाक्य

सोऽबलाद्विमुक्तो बलीभवति । स नित्यो निरातङ्कोऽवतिष्ठते ' इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते ।

(२) अत आह—

सू—ॐ ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ॐ ॥ ३१ ॥

यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यते एवं

---

स्यापि 'प्राणा भूतानि' इत्युत्तरवाक्यबलात् ईश्वरविषयता निराकार्या । 'सः' जीवः । आनन्दीभवतीत्येकं पदम् । पूर्वमनभिव्यक्तानन्दरूपो मुक्तावभिव्यक्तानन्दरूपः सम्पद्यत इत्यर्थः । अज्ञानादबलादिति च्छेदः । ज्ञानीभवति बलीभवतीत्यस्यापि उक्त एवार्थः । केचित्तु—इतः परमानन्दवान् ज्ञानवान् भवतीति इनिप्रत्ययान्ततया भिन्नपदत्वाश्रयेण व्याचक्षते । तत्तु 'आनन्दीभवति स्फुटम्' इत्यनुव्याख्याने आनन्दस्य स्वभावसिद्धत्वाद्भवतीति कथमित्यतः—स्फुटमित्युक्तमिति सुधाविरुद्धम् । अनया आनन्दीभवतीत्येकपदप्रतीतेः । स जीवो 'निरातङ्की' निर्भयस्सन् नित्योऽवतिष्ठते मुक्ताविति श्रुत्यर्थः । 'अनानन्दादिरूपत्वं' आनन्दादिरूपत्वाभावः श्रुतौ प्रतीयत इति । करणे अधिकरणत्वोपचारः । पूर्वं ज्ञानस्य प्रथमं ग्रहणात् तत्र तद्विरुद्धस्यैव ग्रहणे कर्तव्ये श्रुत्यनुसारादनानन्देत्युक्तम् । पूर्वत्राप्ययमेव हेतुः ॥

(२) न जीवो ज्ञानादिरूपः, तथा श्रुतेरानन्दादिरूपत्वस्य अननुभवाच्चेति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ बालस्येति । स्त्रीपुंसरूपचेतनस्येत्यर्थः । सामान्योक्त्या सौत्रादिशब्दः स्त्रीत्वार्थकतया व्याख्यातः । सदेवेति । बाल्ये विद्यमानमेवेत्यर्थः । न तु पूर्वं असदित्येवार्थः । 'पुंस्त्वं' अपत्योत्पादनशक्तिः । स्त्रीत्वस्याप्युपलक्षणमेतत् । 'यौवने' यौवनावस्थायाम् । अनेन पुंस्त्वादिवदिति दृष्टान्तांशो व्याख्यातः । सूत्रे अवधारणार्थकतुशब्दस्य सतस्त्विति सम्बन्धं, अस्येत्यस्य प्रकृतनद्गुणसारत्वप्रविष्टगुणपरामर्शकत्वमभिप्रेत्य स्वरूपतया मुक्तेः पूर्वमपि सतामेव आनन्दादीनामित्युक्तम् । यद्यपि सूत्रानुसारात्सत एव आनन्दादेरिति वक्तुमुचितम् । तथाऽपि ज्ञानानन्दादेरोजोबलादेर्बहुधर्मस्य सङ्ग्रहाय बहुवचनप्रयोगः । 'व्यक्त्यपेक्षयैव' मुक्तौ सम्यगभिव्यक्तिनिमित्तेनैव, न तूत्पत्तिनिमित्तेनेत्येवकारार्थः । सम्यग्व्यक्त्यपेक्षयेत्यनेन योगशब्दो निमित्तार्थः, अम्बुव

सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः ।
( ३ ) बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥
इति गौपवनश्रुतिः ॥ ३१ ॥

द्ग्रहणादित्यत्रैव तुशब्दो विशेषार्थोऽपीत्युक्तं भवति । तदुक्तिरिति । आनन्दीभवतीत्यादिव्यपदेश इत्यर्थः । उपपद्यते यत इति शेषः । अनेन सूत्रे तद्व्यपदेशस्येति विपरिणतपदस्य अनुषङ्गः, योगादित्यस्य आवृत्तिश्च सूचिता । अस्य हेतोः न 'दोषः' न श्रुतिविरोधाख्यो दोष इति पूर्वसूत्रादनुषक्तसाध्येनान्वयः । अनेन—'पुंस्त्वादिवत्' यथा पुरुषयोषिदादीनामपत्योत्पादनशक्तेः स्वरूपत्वेऽपि यौवने अभिव्यक्तेः अन्यदा अनभिव्यक्तेश्च इदानीं पुमान् पूर्वं तु नेति व्यवहारविशेषोपयोगिता, तथा ज्ञस्य जीवस्य मुक्तेः पूर्वमपि सतोऽस्य ज्ञानानन्दादिगुणसमुदायस्य मुक्तौ 'सतः' प्रसन्नादीश्वरात्तत्प्रसादेन सम्यगभिव्यक्तिरूपयोगान्निमित्तादेव आनन्दीभवतीत्यादिव्यपदेशस्य पूर्वमानन्दाद्यननुभवस्य मुमुक्षुप्रयत्नस्य च योगादुपपत्तेर्न दोषो न श्रुत्यादिविरोधः । अतो भवत्येव जीव आनन्दादिरूप इति सूत्रार्थ उक्तो भवति ॥

( ३ ) ननु प्रागसतामुत्पत्तिवादिनी श्रुतिः किं न स्यात्, किमभिव्यक्तिकल्पनयेत्यत आह—बलमिति ॥ 'ओजः' पराक्रमः । 'सहः' सहनशक्तिः । 'अनाकुलं' असंशयविपर्ययं ज्ञानम् । एतानि जीवस्य स्वरूपाण्येव मुक्तौ 'परमाद्विभोः' विष्णोः तत्प्रसादात् महत्तया व्यज्यन्त एव, न तु प्रागसन्ति अपूर्वतया उत्पद्यन्त इत्यर्थः । अत एव बृहद्भाष्ये—

अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तथैव सुमहत्तेजः करोति भगवान् महत् ॥ इति ॥

स्वरूपस्यैव तेजसो मोक्षे भगवतः सम्यग्व्यक्तिरेवोक्ता न तूत्पत्तिः । 'अल्पं तेजः सुमहत्करोति' अल्परूपं परिमाणतो महत्करोति मुक्तावित्यर्थः । एतच्च सज्जीवविषयम् । एवं तमोयोग्यानां दुःखादिरूपत्वं नित्यसंसारिणां मिश्रत्वं च ज्ञातव्यमिति । गौपवनश्रुतिरिति । यत इति शेषः । अस्यातः सतां व्यक्तिमेव आनन्दीभवतीत्यादिश्रुतिराह न तूत्पत्तिमित्यध्याहृतसाध्येनान्वयः ॥

( ४ ) सू—ॐ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ॐ ॥ ३२ ॥

व्यक्त्यनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीना

( ४ ) यदुक्तं जीवस्वरूपभूतानामानन्दादीनां प्रागनभिव्यक्तानां मोक्षे अभिव्यक्तिरिति तदयुक्तम् । जीवस्वरूपस्य नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानामीश्वरप्रसादेन अभिव्यक्त्ययोगादिति चेत्—तत्र प्रष्टव्यम्, किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणाभावात्तन्निवृत्तिर्नाभ्युपगम्यते? किं वा आनन्दादिरूपत्वमेवानङ्गीकृत्येदमुच्यते ? प्रथमपक्षदूषणाय ( न च जीवस्वरूपस्याप्यानन्दादेः आवरणनिमित्तात्प्रागनभिव्यक्तिः, ईश्वरप्रसादेन आवरणनिवृत्तौ तदभिव्यक्तिर्भवतीति तन्निवृत्त्यर्थात्यर्थप्रसादार्थं मुमुक्षुप्रयत्नो युक्त इति वाच्यम्। आवरणाभावेन तन्निवृत्तेरनभ्युपगमादित्याशङ्कां परिहर्तुं ) सूत्रमुपन्यस्य व्याचष्टे—नित्येति ॥ सौत्रान्यथाशब्दार्थमाह-व्यक्त्यनङ्गीकार इति । जीवस्य आनन्दादिरूपत्वमङ्गीकृत्य आवरणाभावान्मोक्षे आवरणनिवृत्तिरूपव्यक्तेरनङ्गीकारे आवरणस्यैवानङ्गीकार इति यावत् । तत्त्वप्रदीपे तु पूर्वं सतोऽप्यव्यक्तस्य ज्ञानानन्दादेः पश्चाद्व्यक्तिरित्यनङ्गीकार इत्यन्यथाशब्दार्थ उक्तः। तस्याप्ययमेवाशयः। इदं चापाद्यत्रयेऽप्यन्वेति। 'देवानां' मुक्तियोग्यानामिति। अनेन सूत्रे ज्ञानामित्यस्यानुवृत्तिस्सूचिता। त्रिविधाधिकारिनिर्देशेन वाशब्दो व्यवस्थितविकल्पार्थ इति सूचितम् । अस्येत्यनुवृत्तपदव्याख्यानं—आनन्दादीनामिति। सर्वत्रान्वेति। उत्तरत्र आनन्दादिर्वैषयिको ग्राह्यः। प्रसज्ज्येते इत्येतद्विपरिणामेन पूर्वत्रापि सम्बध्यते। तथा च व्यक्त्यनङ्गीकारे देवानामानन्दादीनां देवसम्बन्ध्यानन्दज्ञानादीनां 'नित्योपलब्धिः' नित्यमनुभवः प्रसज्ज्यते। एवं व्यक्त्यनङ्गीकारे 'असुराणां' मोक्षायोग्यानामानन्दादीनां 'अनुपलब्धिः' आनन्दाद्युपलब्धिविरुद्धदुःखाद्युपलब्धिः नित्यं स्वरूपदुःखोपलब्धिरेव प्रसज्यते,न तु कदाचिद्विषयसुखाद्यनुभवः। एवं व्यक्त्यनङ्गीकारे 'मनुष्याणां' मध्यमानां आनन्दादीनां नित्योपलब्ध्यनुपलब्धी प्रसज्ज्येते इति योजना। नित्योपलब्ध्यनुपलब्धी इत्यनेन अन्यतरशब्दः उभयार्थतया व्याख्यातः। चः समुच्चये। अत्रानुपलब्धिशब्देन केवलायाः दुःखाद्यनुपलब्धिविशिष्टायाः सुखाद्युपलब्धेरभावो विवक्षितः। तथा च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेव

मसुराणां नित्यानुपलब्धिर्मनुष्याणां च नित्योपलब्ध्य
नुपलब्धी प्रसज्ज्येते ॥

(५) 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसु

---

आपादिता भवति। एवं च मध्यममनुष्याणां मिश्ररूपत्वात्स्वरूपभूत स्य सुखस्य दुःखस्य चोपलब्धिः समैव स्यात्, न तु कदाचिद्विषय सुखदुःखोपलब्धिः, आवरणाभावे अनुभवाभावायोगादिति भावः। अनेन असुरपक्षे अनुपलब्ध्यापादनमयुक्तम्, तेषां स्वरूपानन्दादेरभा वादेव अनुपलब्ध्युपपत्तेः। अनावरणस्य अविद्यमानानन्दानुपलब्धि प्रत्यप्रयोजकत्वादिति शङ्का, एवं मध्यममनुष्यपक्षेऽप्यनुपलब्ध्यापा दनमयुक्तम्, आवरणाभावस्योपलब्ध्यभावं प्रत्यप्रयोजकत्वादिति शङ्का च निरस्ता। असुरपक्षे सूत्रे अनुपलब्धिपदेन आसुराविद्येत्या दाविव प्रकृतसुखाद्युपलब्धिविरुद्धदुःखाद्युपलब्धेरेव विवक्षितत्वात्। मध्यममनुष्यपक्षेऽप्यनुपलब्धिपदेन निरवधारणाया दुःखाद्युपलब्धेरेव विवक्षितत्वात्। अत एव टीकायामेतच्च सज्जीवविषयम्, केषां चिद्दुः खादिरूपत्वं मिश्रत्वं च ज्ञातव्यमित्युक्तम्। अत्र केचित्—'नित्यान न्दः' इत्यादिप्रमाणानुसारेण अन्यतरशब्दस्वारस्याच्च देवानामित्या दिभाष्यं सौत्रक्रममुल्लङ्घ्य 'अन्यतरनियमः' इत्यस्य व्याख्यानरूपं 'नित्योपलब्ध्यनुपलब्धी' इत्येतन्नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्य स्य व्याख्यानरूपं, सूत्रे उक्तिलाघवाय मध्यमजीवानां प्रथममापाद नम्। एवमसुरपक्षे अनुपलब्धिरुपलब्ध्यभाव एव, न तु दुःखोपल ब्धिः, सा तु साक्षादापाद्या, परम्परया तु सुखोपलब्धेरभाव इति व्या चक्षते। तन्न—'नित्यानन्दः' इति प्रमाणस्योक्तपक्ष एवानुगुणत्वात्, वक्ष्यमाणरीत्या अन्यतरशब्दस्योभयपरत्व एव स्वारस्याच्च, भाष्यटी कातत्त्वप्रदीपाननुगुणत्वाच्च। भाष्यटीकयोर्देवदानवमिश्रक्रमेणापाद नात्। तत्त्वप्रदीपेऽपि व्यक्तयनङ्गीकारे मुक्तियोग्या विनैव साधनसम्प त्त्या नित्यव्यक्तानन्दा भवेयुः, तमोयोग्याः संसृतावपि सुखलेशहीनाः नित्यदुःखिनः स्युरित्यादिना देवादिक्रमेणैवासुरपक्षे दुःखोपलब्धेरेव च आपादनात्॥

(५) द्वितीयपक्षं प्रमाणविरोधेन निराचष्टे—(ननु यदि जीवानां आनन्दादिरूपत्वं स्यात्तदा तस्य संसृतौ अनभिव्यक्त्यर्थं ज्ञानाभावा तिरिक्ताविद्यावरणं भगवत्प्रसादेन तन्निवृत्तिश्च अङ्गीकार्या स्यात्तदेव

रा एवमनेवं च मनुष्याः' इति ह्याग्निवेश्यश्रुतिः।

(६) भविष्यत्पुराणे च—

नित्यानन्दज्ञानबला देवा नैवं तु दानवाः।

दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः॥

(७) तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम्।

विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः॥

---

नास्ति। तदनङ्गीकारे दोषाभावादित्याशङ्कां प्रमाणविरोधेन निराचष्टे) नित्येति॥ 'नित्यानन्दः' यथार्थज्ञानादिरूपः परमात्मेत्यर्थः। परमात्मेत्यनन्तरं एवं सुरा इत्यध्याहारोऽभिप्रेतः। अत एव स्मृतौ 'नित्यानन्दज्ञानबला देवाः' इत्युक्तम्। तत्त्वप्रदीपे तु परमात्मनो नित्यानन्दत्वोक्त्या देवानां च नित्यानन्दत्वं विवक्षितम्, देवभागत्वात्तस्येत्युक्तम्। तस्याभिप्रायस्तुअत्र परमात्मशब्देन उत्तमजीवराशिर्विवक्षित इति सुधायामुक्तम्। चन्द्रिकायामपि तथैवोक्तम्। 'असुराः' तमोयोग्याः 'नैवं' मुक्तियोग्यवन्न, किन्तु तद्विरुद्धदुःखमिथ्याज्ञानस्वरूपा इत्यर्थः। 'मनुष्याः' मध्यमास्तु 'एवं' आनन्दादिरूपाः 'अनेवं' दुःखरूपाश्चेत्यर्थः। इति हीति। हिशब्दः प्रसिद्धौ। श्रुतिरित्यनन्तरं जीवस्य आनन्दादिरूपत्वं वक्तीति वाक्यशेषः। तथा च जीवस्यानन्दादिरूपत्वानङ्गीकारे श्रुतिविरोधापत्तेः तस्य तदङ्गीकार्यमिति भावः। यद्यप्यत्रार्थे 'विज्ञानात्मा' इति प्रागुदाहृतश्रुतिरतिदेष्टुं युक्ता। 'बलमानन्द ओजः' इति श्रुतिर्वोदाहर्तुं युक्ता। तथाऽपि त्रिविधस्यापि जीवस्वरूपस्यानुक्तेः श्रुत्यन्तरोदाहरणम्॥

(६) अधिकरणार्थे स्मृतिं चाह—भविष्यदिति॥ श्रुतिसमुच्चये चशब्दः। नित्यत्वमानन्दादेर्विशेषणम्। 'देवाः' मुक्तियोग्याः 'दानवाः' तमोयोग्याः 'एवं' देववन्न, किं तर्हीत्यत आह—दुःखोपलब्धीति। 'ते' दानवाः 'दुःखोपलब्धिमात्राः' दुःखानुभवमात्रयोग्या इत्यर्थः। योग्यत्वं तु संसृतावप्यस्ति। मात्रशब्देन सुखोपलब्धिर्व्यावर्त्यते। मध्यममानुषास्तु 'उभयात्मकाः' सुखदुःखमिश्रस्वरूपाः॥

(७) ननु देवानां सुखज्ञानादिरूपत्वमनुपपन्नम्, संसारे दुःखस्याप्यनुभवात् विपरीतज्ञानस्यापि दर्शनाच्च। एवं दैत्यानां दुःखोपलब्धिमात्रत्वमप्यनुपपन्नम्, संसारे सुखस्याप्यनुभवात्। एवं मनुष्याणां मिश्रत्वमप्ययुक्तम्, संसारे केवलसुखदुःखयोरप्यनुभवादित्यत आह—ते

(८) सम्यज्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।
विपरीतं तु दैत्यानां ज्ञानस्यैवं व्यवस्थितिः ॥ इति ॥ ३२ ॥

१७. अधिकरणम् ॥

(१) ईश्वरस्यैव कर्तृत्वमुक्तं 'यत्कर्म कुरुते तदभिसम्पद्य ते' (बृ.६-४-५.) इति जीवस्योपलभ्यते ।

---

षामिति ॥ उपाधिर्बाह्यः । तथा च 'तेषां' देवानां यत्स्वरूपात् 'अन्यथा' अन्यत् 'दृश्यं' दुःखादि 'तदुपाधिकृतम्' जीवस्वरूपोपाध्यतिरिक्त बाह्यदेहनिमित्तम् । उपाधिनिवृत्तिः कुत इत्यत आह-विज्ञानेति । यतः 'आत्मयोग्येन' स्वयोग्येन 'विज्ञानेन' विशेषज्ञानेन तृतीयार्थेसप्तमी । आविर्भूतस्वस्वरूपेण व्यवस्थितिर्भवतीत्यर्थः । विज्ञानेनात्मयोग्येनेत्यादिना नित्यसंसारिणामप्यावरणाभावे अनिष्टप्रसङ्गोक्तथा च तेषामपि आवरणनिवृत्त्या स्वरूपाविर्भावोऽस्तीति सूचितम् ॥

(८) किं तन्निजरूपमित्यत उक्तं विवृणोति—सम्यगिति । तुशब्दोऽवधारणे । 'देवानां' मुक्तियोग्यानां सम्यज्ज्ञानमेवेति। 'विमिश्रितं' विपरीतमिति । अत्र ज्ञानमित्यनुषज्यते । दैत्यानां त्वित्यन्वितस्तु शब्दो विशेषार्थः । 'ज्ञानस्य' स्वरूपज्ञानस्य 'एवं' उक्तप्रकारेण 'व्यवस्थितिः' स्थितिरित्यर्थः । इतिशब्दस्य भविष्यत्पर्वणीति पूर्वेणान्वयः । अधिकरणार्थ उक्त इति शेषः ॥ १६ ॥

इति पुंस्त्वाधिकरणम् ॥

१७. अधिकरणम् ॥

(१) अत्राधिकरणे जीवकर्तृत्वविषयश्रुतिविरोधः परिह्रियते । श्रुतिविरोधं संशयबीजं दर्शयति—ईश्वरस्येति ॥ 'नान्यः कर्ता' इत्यादिश्रुतावन्यनिषेधादीश्वरस्यैव कर्तृत्वमुक्तमित्यर्थः । इतीति । इति श्रुतावित्यर्थः। 'जीवस्य' जीवस्यापि 'उपलभ्यते' प्रतीयते। कर्तृत्वमित्यनुषङ्गः । यादृशं कर्म कुरुते जीवः तादृक्कर्मफलं 'अभिसम्पद्यते' प्राप्नोतीति वाजसनेयश्रुत्यर्थः । श्रुतेः जीवैकनिष्ठत्वज्ञापनाय तदिति फलवाक्यशेषोदाहरणम् । ईश्वरस्यैवेति सावधारणया संशयबीजोक्त्या स्वातन्त्र्येण पारतन्त्र्येण वा केनापि रूपेण न जीवः कर्ता, किं त्वीश्वर एवेति पूर्वपक्षो जीवकर्तृत्वाभावस्य श्रुतत्वादिति युक्तिश्च सूचि

( २ ) अत आह—

सू—ॐ ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ॐ ॥ ३३ ॥

जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता ॥ ३३ ॥

( ३ ) सू—ॐ ॥ विहारोपदेशात् ॥ ॐ ॥ ३४ ॥

'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छा. ८-१२-३.) इत्यादि मोक्षेऽपि ॥ ३४ ॥

---

ता। योजना तु न जीवः कर्ता यतः श्रुतावीश्वरस्यैव कर्तृत्वमुक्तं न चान्यत्रापि 'यत' इति श्रुतिरस्तीति वाच्यम्। यत ईश्वरस्यैव कर्तृत्वमुक्तं इतरव्यपदेशादित्यादावनन्ययोगेन समर्थितम्। तथा च फलवच्छ्रुत्यपेक्षया सयुक्तिकश्रुतेः प्राबल्यात् अनया अन्यस्या बाध इति भाव इति ॥

( २ ) एवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ कर्तृत्वाभाव इति। कर्तृत्वसामान्याभाव इत्यर्थः। शास्त्रस्येति। 'यजेत स्वर्गकामः' 'ब्राह्मणो न हन्तव्यः' इत्यादिविधिनिषेधरूपशास्त्रस्येत्यर्थः। अप्रयोजकत्वेति। प्रयुज्यतेऽनेन पुरुषः शास्त्रे इति व्युत्पत्त्या प्रयोजकं प्रयोजनं ततो बहुव्रीहिः, तथा च वैयर्थ्यप्रसङ्गादित्यर्थः। न हि कर्तारमन्तरेणारण्यरोदनायमानशास्त्रस्य सार्थक्यं भवतीति भावः। अनेन जीवस्य कर्तृत्वाङ्गीकार एव 'शास्त्रार्थवत्त्वात्' शास्त्रस्यार्थवत्त्वसिद्धेः अन्यथाऽसिद्धेरिति हेत्वंशो विपक्षे हेतूच्छित्तिरूपबाधकोक्तिमुखेन व्याख्यातः। अनुवृत्तस्य ञ्च इत्यस्यार्थो जीवोऽपीति। 'कर्ता' कर्तैव न त्वकर्ताऽङ्गीकार्य इति शेषः। अपीत्यनेन सूत्रेऽप्यर्थकचशब्दस्यानुवृत्तिः सूचिता ॥

( ३ ) ननु जीवस्य स्वतः कर्तृत्वाभावेऽपि परगतकर्तृत्वे स्वीयत्वाग्रहोऽस्त्येव। अतः काल्पनिककर्तृत्ववन्तं जीवं प्रति विधिनिषेधशास्त्रं प्रवर्ततामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—विहारेति॥ जीवः कर्तेत्यनुषज्यते। तत्त्वत इति शेषः। अनेन सूत्रेऽप्यनुवृत्तिशेषौ सूचितौ। अपिशब्दो विशेषणसमुच्चयार्थः। आदिशब्दात् 'सोऽश्नुते सर्वान्' (तै. २-१.) इत्यादिकं गृह्यते। तथा च 'अपि' विगलिताखिलकल्पनेऽपि मोक्षे 'स्त्रीभिर्वा' इत्यादिना विहारपदोक्तसञ्चरणक्री

( ४ ) सू—ॐ ॥ उपादानात् ॥ ॐ ॥ ३५ ॥

साधनाद्युपादानप्रतीतेश्च ॥ ५ ॥

( ५ ) सू—ॐ ॥ व्यपदेशाच्चाक्रियायां न चेन्निर्देशविपर्ययः ॥ ॐ ॥ ३६ ॥

ङाकाम्यप्राप्त्यादिकर्तृत्वोक्तेः 'तत्त्वतः' परमार्थत एव जीवः कर्ता न कल्पनयेति योजना। अस्य मोक्षप्रकरणत्वं तु छान्दोग्ये तैत्तिरीये च 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.८-३-४.) 'ब्रह्म विदाप्नोति परम्' ( तै. २ - १. ) इति च मोक्षं प्रस्तुत्याम्नातत्वात् ज्ञायते। श्रुतिस्तु दहरनये व्याख्याता ॥

( ४ ) नन्वस्तु मोक्षे जीवस्य स्वाभाविकं कर्तृत्वं प्रामाणिकत्वात्। संसारे तु काल्पनिकमेव किं न स्यात्। तावता शास्त्रसार्थक्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—उपादानादिति ॥ साधनेति। मोक्षस्वर्गाद्यर्थं वेदविचारयागादिरूपेत्यर्थः। आदिशब्देन तदितिकर्तव्यता गृह्यते। यद्वा—तत्त्वप्रदीपरीत्या छेदाद्यर्थकुठारादिकं साधनपदोक्तं आदिपदेन काष्ठादिरूपविषय उक्त इति ध्येयम्। उपादानं अनुष्ठानं सम्पादनमिति यावत्। तस्य प्रतीतेः प्रत्यक्षसिद्धत्वाज्जीवस्येत्यर्थः। ततश्च फलदर्शनादिति चशब्दार्थः। अस्यापि जीवोऽपि कर्तेति पूर्वसाध्येनान्वयः। यद्वा—तत्त्वप्रदीपे न केवलं शास्त्रार्थवत्त्वाज्जीवस्य कर्तृत्वं प्रतिपद्यामहे, अपि तु प्रत्यक्षत एव तत्सिद्धमित्याहेत्यवतार्य चशब्दान्न च तद्बाधो दृश्यत इत्युक्तहेतुसमुच्चयार्थत्वस्योक्तत्वात् टीकाकारस्याप्ययमेव चशब्दार्थोऽभिप्रेतः। अत एवोत्तरटीकायामेव मुपपत्त्या प्रत्यक्षेण चेत्युक्तम्। चशब्दप्रयोगेन सूत्रेऽपि चशब्दोऽनुषञ्जनीय इति सूचितम्। केचित्तु—अत्र सूत्रे पूर्वसूत्रे च क्रमेण शङ्काद्वयपरिहारात् न चशब्दः, मौक्ताकाल्पनिकत्वसांसारिकाकाल्पनिकत्वरूपविषयभेदात्। तथापि अवान्तरसाध्यभेदेऽपि अकाल्पनिकत्वसामान्यस्य पूर्वसूत्रे युक्तया अत्र तु प्रत्यक्षेण चोपादानात् भाष्ये चशब्दः प्रयुक्त इत्याहुः। तत्तु उत्तरटीकातत्त्वप्रदीपविरुद्धम्। तत्र कर्तृत्वस्यैवेह साध्यत्वेनोक्तेः ॥

( ५ ) एवं संसारे शास्त्रार्थवत्त्वरूपयुक्त्या साधनाद्युपादानप्रत्यक्षेण च साधितं जीवकर्तृत्वं श्रुत्याऽपि समर्थयत्सूत्रमुपन्यस्य व्याचष्टे—व्यपदेशाच्चेति ॥ इतीति। उपासनाख्यक्रियायां उपासीतेत्यात्मनः क

'आत्मानमेव लोकमुपासीत' (बृ. ३-४-१५.) इति क्रियायां व्यपदेशाच्च ।

(६) अन्यथाऽऽत्मैव लोकमिति निर्देशः स्यात् ॥ ३६ ॥

(७) तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति—

सू—ॐ ॥ उपलब्धिवदनियमः ॥ ॐ ॥ ३७ ॥

र्तृत्वोक्तेरित्यर्थः । अस्य हेतोर्जीवोऽपि कर्तेति पूर्वसाध्येनान्वयः । न केवलं युक्तिप्रत्यक्षाभ्यां, किन्तु श्रुतेश्चेति चशब्दार्थः । तथा चोक्तं भारततात्पर्यनिर्णये—

प्रत्यक्षैषा कर्तृता जीवसंस्था ।

तथाऽऽगमादनुमानाच्च सर्वम् ॥ इत्यादि ॥

'लोकं' सर्वाश्रयं प्रकाशमानं वा 'आत्मानं' विष्णुमुपासीत जीव इति बृहदारण्यकच्छन्दोगश्रुत्यर्थः ॥

(६) ननु अत्र जीव उपासीतेत्युक्त्यभावात् कथमयं जीवस्य कर्तृत्वव्यपदेशस्स्यादित्यतस्तदुपपादनाय विपक्षे बाधकोक्तिपरं न चेदित्यंशं व्याचष्टे—अन्यथेति ॥ जीवस्य उपासनाक्रियायां कर्तृत्वेन श्रुत्यनभिमतत्वे क्रियाया अकर्तृकत्वजडकर्तृकत्वयोरसम्भवाच्छ्रुतिवैयर्थ्यापत्त्या तत्परिहाराय परमात्मन एव क्रियाकर्तृत्वेन तदभिमतत्वे चेत्यर्थः । आत्मैवेत्यनेन निर्देशविपर्ययपदं तद्विन्यासव्यत्यासपरमिति सूचितम् । अस्मिन् पक्षे आत्मा परमात्मैव स्वात्मानमन्यं वा लोकमुपासीतेति श्रुत्यर्थप्राप्तेरिति भावः । अत्रात्मानमिति पक्षे टीकायां कर्तृत्वेनेत्यस्य कर्तृत्वेनापीत्यर्थः । कर्मत्वेनेत्यस्य केवलकर्मत्वेनेत्यर्थोऽवगन्तव्यः। अन्यमिति पक्षे तु यथा श्रुतैव व्याख्या। अन्यथेत्यनेन न चेदित्यस्यार्थ उक्तः । स्यादिति शेषोक्तिः । तथाचास्य कर्तृत्वाभावास्ति चासौ विपरीतनिर्देशः तस्मान्न जीवोऽकर्ता किं तु कर्तैवेति विपर्ययपर्यवसाने जीवस्यापि कर्तृतासिद्धिरिति भावः । न च जीवपरयोरुभयोरपि कर्तृत्वे गौरवं दोषः, प्रामाणिकत्वात् ॥

(७) नन्वेवं जीवस्यापि कर्तृत्वे कथमितरव्यपदेशादित्यादौ ईश्वरस्यैव कर्तृत्वं समर्थितम् । कथं च 'नान्यः कर्ता' इति श्रुतिरुपपद्यते । अतस्तद्विरोधोऽस्त्येवेत्याशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे–तर्हीति ॥ जीवस्यापि कर्तृत्व इत्यर्थः । उक्तमिति 'नान्यः कर्ता' इति श्रुताविति शेषः । यद्वा–इतरव्यपदेशादित्यादौ कथं समार्थितमित्य

ज्ञाने इदं ज्ञास्यामीत्यनियमः प्रतीयते एवं कर्मण्यपि जीवस्य ।

( ८ ) 'य आत्मानमन्तरोऽयमयति' ( माध्यन्दिनपाठः ) इति च श्रुतिः ॥ ३७ ॥

( ९ ) कुतः—

र्थः। यथा ज्ञाने इत्यनेन सूत्रे सप्तम्यन्ताद्वतिरिति सूचितम्। ज्ञास्यामीत्यनन्तरं इच्छत इति शेषः । कर्मणीत्यनेन क्रियायामित्यस्य जीवस्येत्यनेन ज्ञस्येति विपरिणतपदस्य च अनुवृत्तिस्सूचिता। जीवस्येत्यनन्तरं अनुषक्तानियमपदं नियमस्याप्युपलक्षकम् । दृष्टान्तसमुच्चये विशेषणसमुच्चये वाऽपिशब्दः । तथा चाहमिदं सुरूपं सुगन्धं सुस्वरं वा ज्ञास्यामि, विपरीतं न पश्यामि न जिघ्रामि न शृणवानीत्येवं स्पृहयतो जीवस्य यथोपलब्धौ ज्ञाने 'अनियमः' स्वेच्छानुसारेण न ज्ञानलाभः प्रतीयते। एवं तथा क्रियायां 'कर्मण्यपि' करिष्यामीति सङ्कल्पितेऽपि व्यापारे अनियमः प्रत्येतव्यः। तद्दृष्टान्तेनात्रानियमः साध्य इति यावत् । ईश्वरस्य तु ज्ञाने कर्मणि च नियम इति योजना । तथा च यत एवं जीवस्य कर्माणि नियमाभावः, ईश्वरस्य तु तद्भावस्सिद्धोऽतोऽनन्याधीनकर्तृत्वविवक्षया ईश्वरस्यैव कर्तृत्वं न जीवस्येत्युक्तं प्राक् । न तु सर्वथा कर्तृत्वाभावेनेति न पूर्वोक्तविरोध इति भावः । ज्ञास्यामीति इच्छत इत्यनेन च दृष्टान्तः साध्यविकल इति शङ्का परिहृता। कथमिति चेत्—न हि जिज्ञासुर्ज्ञाने साक्षाद्व्याप्रियते, येन नियमेन ज्ञानप्राप्तिः, किं तु ज्ञानक्रियासाधन एव, न तु फलेच्छया साधनानुष्ठाने फलाव्यभिचारोऽदृष्ट इति टीकोक्तरीत्येति गृहाण ॥

( ८ ) ईश्वरस्यैव नियमनकर्तृत्वं, न जीवस्येत्यत्र प्रमाणमाह—य इति ॥ इति च श्रुतिरिति। इति श्रुतिरप्येवमेवाह, न केवलं सूत्रमिति चार्थः। यः चतुर्मुखादिजीवं तत्तदन्तर्गतो नियमयति एष परमात्मा तवान्तर्यामीति वाजसनेयश्रुत्यर्थः । अत्रेश्वरस्य जीवनियामकत्वोक्तया तत्प्रेरणां विना जीवानां नियमेन कर्तृत्वाभावः स्वेच्छानुसारिकर्तृत्वाभावः, ईश्वरस्य तु नियामकत्वात् तद्भावोऽवगम्यते ॥

( ९ ) ननूभयोः कर्तृत्वाविशेषेऽपि ईश्वरस्यैव नियमेन कर्तृत्वं, न जीवस्येत्येतद्वैलक्षण्यं किंनिमित्तमिति पृच्छति—कुत इति ॥ निय

सू—ॐ ॥ शक्तिविपर्ययात् ॥ ३८ ॥
अल्पशक्तित्वाज्जीवस्य ॥ ३८ ॥
( १० ) सू—ॐ ॥ समाध्यभावाच्च ॥ ॐ ॥ ३९ ॥
समाधानाभावाच्च अस्वातन्त्र्यं प्रतीयते अतः ॥ ३९ ॥
( ११ ) सू—ॐ ॥ यथा च तक्षोभयथा ॥ ॐ ॥ ४० ॥

मानियमौ ईशजीवयोः 'कुतः' किंनिमित्तकावित्यर्थः । अत्र स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमाविति परिहारं वक्तुं ईशजीवयोः स्वातन्त्र्यपारतन्त्र्ये साधयत्सूत्रं पठित्वा व्याचष्टे—शक्तीति ॥ अल्पशक्तित्वादित्यनेन मुख्यत्वाच्छक्तिशब्दः पूर्णशक्तिपरः विपर्ययशब्दस्तु तद्विपरीताल्पशक्तिपर इति सूचितम । अस्येत्यनुवृत्तपदस्यार्थो जीवस्येति । उपलक्षणमेतत् । ईश्वरस्य पूर्णशक्तित्वादित्यपि द्रष्टव्यम् । अस्वातन्त्र्यं स्वातन्त्र्यमिति वक्ष्यमाणमत्रापि सम्बध्यते ॥

( १० ) युक्त्यन्तरेणेशजीवयोः स्वातन्त्र्यपारतन्त्र्ये समर्थयत्सूत्रमुपन्यस्य व्याचष्टे—समाध्यभावाच्चेति ॥ समाधानमलंबुद्धिरपूर्णकामत्वमिति यावत् । न केवलमल्पशक्तित्वादिति चार्थः । जीवस्येति वर्तते । सूत्रे तु अस्येति वर्तते । उपलक्षणमेतत् । समाधिभावाच्चेश्वरस्य स्वातन्त्र्यमित्यपि द्रष्टव्यम् । चशब्द उक्तानुक्तहेतुसमुच्चायकः। अस्तूक्तहेतुभ्यः ईशजीवयोः स्वातन्त्र्यपारतन्त्र्यसिद्धिः । तावता नियमानियमयोः किंनिमित्तकत्वमुक्तं भवतीत्यत आह—अत इति । नियमानियमाविति शेषः । तथा च यत एवमीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये प्रतीयेते अतस्तयोस्ताभ्यां निमित्ताभ्यां कर्मणि नियमानियमौ प्रतिपत्तव्यावित्यर्थः । तत्त्वप्रदीपे तु अत इत्यस्य 'यथा च तक्षोभयथा' इति सूत्रेणान्वयमभिप्रेत्य अतोऽस्वातन्त्र्यप्रमाणेभ्यः कर्तृत्वमानेभ्यश्च यथा च तक्षोभयथा व्यपदिश्यते एवं जीवोऽस्वतन्त्रः कर्ता चेति व्यपदिश्यत इत्युक्तम् ॥

( ११ ) ननु यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वम्, अपि तु ईश्वरेच्छयैव, तर्हि कथं जीवः कर्तोच्यते, स्वतन्त्रः खलु कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—यथेति ॥ यथा च 'तक्ष्णो' वर्धकेः प्रासादकारयितृराजादिप्रेरितत्वं तत्कर्तृत्वं च अस्ति, एवं जीवस्यापि ईश्वरनियतत्वं घटादिकर्तृत्वं चास्तित्यध्याहारेण योजना । कारयितृनियतत्वं कर्तृत्वमित्यनेनोभयथेत्युक्तप्रकारद्वयं दर्शितम् । एवं जीव

यथा तक्षणः कारयितृनियतत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि ॥ ४० ॥

( १२ ) सू—ॐ ॥ परात्तु तच्छ्रुतेः ॥ ॐ ॥ ४१ ॥

सा च कर्तृत्वशक्तिः परादेव ।

( १३ ) कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥

---

स्यापीत्यनेन चशब्दस्य दार्ष्टान्तिकसमुच्चयार्थत्वमभिप्रैति । केचित्तु-सूत्रे उभयथा चेति चशब्दसम्बन्धमभिप्रेत्य भाष्ये कर्तृत्वं चेत्युक्तमित्याहुः । तन्न, तद्भाष्यस्योभयथेत्युक्तप्रकारद्वयसमुच्चयपरत्वेन चशब्दार्थप्रदर्शकत्वाभावात् । तथा चेश्वराधीनेऽपि जीवे दृष्टान्तबलात्कारकाप्रयोज्यत्वरूपामुख्यस्वातन्त्र्यगर्भितकर्तृत्वव्यपदेशो युज्यत एवेति भावः ॥

( १२ ) ननु किं तक्षण इव जीवस्य कर्तृत्वशक्तिर्जीवाधीनैव, ईश्वराधीनत्वं तु वचनवेतनदानादिवत् । उत कर्तृत्वशक्तिरपीश्वराधीना । यद्याद्यः तर्हीश्वरस्यैव कर्तृत्वमिति गतः पक्षः । द्वितीये न जीवस्य कर्तृत्वशक्तिरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—परादिति ॥ सेति प्रकृतत्वोपपादकं, या शक्तिसूत्रे प्रकृता, या च तक्षकदृष्टान्तेन उपपादिता सेत्यर्थः । चोऽप्यर्थः । कर्तृत्वेत्यतः प्राक् जीवस्येत्युपस्कार्यम् । शक्तिरित्यनेन तदिति भिन्नपदस्यार्थ उक्तः । सामर्थ्यमिति वक्तव्ये शक्तिरिति तच्छब्दपर्यायशब्देनार्थकथनम् । शक्तिसूत्रगतशक्तिशब्दविवक्षयेति ध्येयम् । केचित्तु—सूत्रे शक्तिरिति शेषः । तच्छ्रुतेरित्येकं पदं, तथा च ईशाधीनत्वेन श्रुतेरिति तदर्थ इत्याहुः । 'परादेव' परमात्मनः सकाशादागतैव तदधीनैव न जीवाधीनेत्यर्थः। अनेन सौत्रतुशब्दोऽवधारणार्थतया व्याख्यातः । तस्मान्नापसिद्धान्त इति वाक्यशेषः ॥

( १३ ) कुत इत्यतस्तत्र हेतुत्वेन श्रुतेरित्येतद्योजयति—कर्तृत्वमिति ॥ कर्तृत्वकरणत्वपदाभ्यां तच्छक्तिरुपलक्ष्यते । तत्राद्यं जीवस्य द्वितीयमिन्द्रियादेः । 'स्वभावः' प्रकृत्यादीनां परिणामादिः । अल्पज्ञत्वाल्पशक्तित्वादिरूपो वा । 'चेतना' चेतसो व्याप्तिः 'बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते' इत्युक्तेश्चैतन्यं वा । 'धृतिः' देहादिधारण

इति हि पैङ्गिश्रुतिः ॥ ४१ ॥

(१४) सू—ॐ ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॥ ॐ ॥ ४२ ॥

ततोऽप्रयोजकत्वं शास्त्रस्य नापद्यते कृतप्रयत्नापेक्ष

---

सामर्थ्यम् । आहत्य 'इमे' भावाः 'यत्प्रसादात्' यस्य परमात्मनोऽनुग्रहादिच्छया सन्ति 'यदुपेक्षया' यत्कटाक्षाभावे न सन्ति इत्यर्थः। अनेनेश्वरस्य कर्तुमकर्तुमन्यथा कर्तुं चास्ति सामर्थ्यम्, सङ्कल्पाभावात् तथा न करोतीत्युक्तं भवति । अस्य यच्छब्दस्य तत्र प्रकृतेन तच्छब्देनान्वयः । 'हि' यतः श्रुतिरित्यस्य परादेवेति साध्येनान्वयः ॥

(१४) नन्वस्मिन् पक्षेऽपि दोष उक्तः, यदि कर्तृत्वशक्तिरीश्वराधीना तर्हि तस्यैव कर्तृत्वम्, न जीवस्य दारुप्रतिमावदन्याधीनस्येति पुनश्शास्त्रवैयर्थ्यमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—कृतेति ॥ 'ततः' कर्तृत्वशक्तेरीश्वराधीनत्वादपि 'शास्त्रस्य' विधिनिषेधात्मकस्य 'अप्रयोजकत्वं' न विद्यते प्रयोजकं प्रयोजनं यस्य तस्य भावो वैयर्थ्यं 'नापद्यते' न प्रसज्यते । कुतः? 'ततः' तदवैयर्थ्यायैव 'तत्प्रेरकत्वस्य' तस्येश्वरस्य जीवप्रेरकत्वस्य 'कृतप्रयत्नापेक्षत्वात्' पूर्वकर्मप्रयत्नयोग्यतासापेक्षत्वादिति योजना । तत इत्यनेन विहितेति चतुर्थ्यन्तं पदं व्याख्यातम् । कृतेत्यादिना कृतेति हेतुसमर्पकशब्दो व्याख्यातः । तत्प्रेरकत्वस्येत्यनेन सूत्रे पूर्वसूत्रात्पर इति विपरिणतपदस्य द्वितीयान्तत्वशब्दस्य चानुवृत्तिः प्रेरयतीत्यध्याहारः सूचितः । सूत्रे तुशब्दोऽवधारणेऽप्यर्थे चेत्यभिप्रेत्यादिशब्दार्थमाह—आदिशब्देनेति । 'अवैषम्यादि' सङ्गृहीतमिति शेषः । अत्रादिशब्देनानैर्घृण्यं गृह्यते । अनेन—न ततोऽपि जीवशक्तेरीश्वराधीनत्वादपि शास्त्रस्य वैयर्थ्यमापद्यते । कुतो? यतोऽयं परमात्मा 'विहितप्रतिषेधावैयर्थ्यादिभ्यस्तु' विधिनिषेधशास्त्रावैयर्थ्यायैव, न तु स्वस्य सहायार्थं, तथा स्वस्य वैषम्यनैर्घृण्यपरिहाराय च 'कृतप्रयत्नापेक्षस्तु' जीवस्यानादिकर्मप्रयत्नसापेक्ष एव जीवं भोगे प्रेरयति, तद्योग्यतामपेक्ष्य तु कर्मणि, न तु तदनपेक्ष इति सूत्रार्थ उक्तो भवति । अत एवोक्तं भारततात्पर्यनिर्णये—

एतानपेक्ष्यैव फलं ददामी

त्वात्तत्प्रेरकत्वस्य । आदिशब्देनावैषम्यादि ।
( १५ ) पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु ।
ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं मतम् ॥
अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः ।
इति भविष्यत्पर्वणि ।

---

त्यस्यैव सङ्कल्प इति स्वतन्त्रता ॥ इति ॥

अत्रायं चन्द्रिकोक्तो भावः—जीवस्य विधिवाक्यतदर्थज्ञाने तज्जन्य साधनफलेच्छयोः साधनविषयककृतौ च भगवत्प्रेर्यत्वेऽपि न विधिविषयत्वकर्मफलभाक्त्वयोरनुपपत्तिरिति न शास्त्रप्रवृत्तिवैयर्थ्यम् । राजभटाद्युत्पादितेच्छादिमतोऽपि त्रिवर्णादेर्विष्टिगृहीतस्य च सन्ध्योपासनादौ भारवहनादौ च विध्यादिदर्शनेन तद्वदेवास्वतन्त्रकर्तृतामात्रेण तयोरुपपत्तेरिति । उक्तं हि गीताभाष्ये—अकर्तृकत्वेऽपि विधिद्वारा ईशप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा मोक्षो भवतीति न प्रवृत्तिविधिवैयर्थ्यमिति । विवृतं चैतत्प्रमेयदीपे—जीवस्यापराधीनकर्तृत्वाभावेऽपि स्वसम्बन्धितया विधिज्ञानस्येश्वरप्रसादायत्तयोः कर्मफलं चोद्दिश्येच्छाप्रयत्नयोरधिष्ठानादिकर्मकारणसन्निधानस्य कर्मसंबन्धस्य तत्फलभाक्त्वस्य च विधिविषयताप्रयोजकस्य सत्त्वात्तस्य विधिविषयत्वोपपत्तिरिति । एतच्च प्रयोजकं नेश्वरमुक्तजीवजडेष्वस्तीति न तेषां विधिविषयत्वं किन्तु संसारिजीवस्येति चोक्तम् । यद्यपि वैषम्यादिपरिहारः पूर्वमेव वैषम्यसूत्रे कृतः । तथाऽपि स एव कर्तृत्वशक्तेरीश्वराधीनत्वप्रयुक्तवैषम्यादिशङ्कापरिहारायेहादिशब्देन स्मारयितुं पुनरुक्त इति न पौनरुक्त्यम् ॥

( १५ ) सूत्रार्थे स्मृतिमाह—पूर्वेति ॥ 'संस्कारो' योग्यता । चशब्दौ परस्परसमुच्चये । तुशब्दोऽवधारणे । 'सर्वं' पुण्यपापादि कर्म जीवेन कारयति तत्करणाय तं प्रेरयतीत्यर्थः । यद्वा—कारयति भोजयतीत्यर्थद्वयमपि विहितकारिणं पुण्यं भोजयति कारयति च पुण्यं, निषिद्धकारिणं दुःखं भोजयति पुनः पापं कारयति चेति तत्त्वप्रदीपोक्तम् । नन्वीश्वरस्य जीवकर्मापेक्षया प्रेरकत्वे तस्य तत्कर्माकर्तृकत्वं स्यादित्यत आह—तच्चेति । अपेक्ष्यं च कर्मेत्यर्थः । स्वयं साक्षात्तर्हि तत्प्रेरणे ईश्वरस्यापेक्ष्यकर्माभाव इत्यत आह—अनादित्वादिति । कर्मणः कार्यकारणीभूतकर्मपरम्परायास्त्वनादित्वान्नापेक्ष्याभावकृतवैष

( १६ ) एतदेवं न चाप्येवमेतदस्ति न चास्ति च ॥ इति मोक्षधर्मे ॥ ४२ ॥

——:*:——

१८. अधिकरणम् ॥

( १ ) अंशा एव हीमे जीवाः अंशी हि परमेश्वरः ।
स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः ॥
इति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते ।

---

म्यादिदोष इत्यर्थः । तर्हि कार्यकारणरूपाणां पूर्वपूर्वकर्मणामनन्तत्वात्कथं तत्कारयितृत्वमीश्वरस्योपपद्यते इत्यत आह—पूर्णेति । तथाच हरेरमितशक्तित्वादनन्तकर्मकारयितृत्वं तस्य सम्भवत्येवेति न दोष इति भावः । भविष्यत्पर्वणि 'कृत' इति सूत्रार्थे उक्त इति शेषः ॥

( १६ ) अधिकरणार्थे स्मृतिं चाह—एतदिति ॥ यतः 'एतत्' जीवस्य कर्तृत्वं 'एवं' प्रामाणिकं ईश्वरवत्स्वातन्त्र्येण चेतदेवं न, अत एतत्कर्तृत्वमस्वातन्त्र्येणास्ति स्वातन्त्र्यविवक्षया नास्तीति 'नान्यः कर्ता' इति श्रुतावुच्यते अत इत्यर्थः । इतीति । एवंरूपमोक्षधर्मवचनेऽधिकरणार्थ उक्त इत्यर्थः ॥ १७ ॥

इति कर्तृत्वाधिकरणम् ॥

——*——

१८. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवविषये श्रुतिविरोधः परिह्रियते । तत्र जीवस्येश्वरांशत्वमनंशत्वं वेत्यनिर्णयपूर्वपक्षमभिप्रेत्य विरुद्धश्रुतिद्वयरूपमनिर्णयकारणं दर्शयति—अंशा एव हीति ॥ 'इमे' प्रमिता जीवाः अंशा एव पितापुत्रादिसम्बन्धैः केवलं तदुपजीव्यत्वेन तच्छेषभूता एवेत्यर्थः । यद्वा—ततो न्यूनत्वे सति किञ्चित्तत्सदृशत्वरूपांशत्वोपेता इत्यर्थः । न तु निरुक्तांशत्वरहिता इत्येवशब्दार्थः । एवेत्यनेनांशत्वानंशत्वयोर्विकल्पोऽपि निरस्तः । हिशब्दौ उभयत्र प्रसिद्धिद्योतकौ । ननु जीवानामप्यंशत्वे कथं तर्हि हरिरंशेन जगत्सृजतीति व्यपदेश इत्यत आह—स्वयमिति । साक्षादंशैरनिरुद्धाद्यैः 'सर्वं' जगत् 'कारयति' सृजतीत्यर्थः । तथा च स्वरूपांशविषयं तद्वचनम् । जीवास्तु भिन्नांशा इति न तेषां तद्विषयत्वमिति भावः । यद्वा—स्वयं साक्षाद्भिन्नांशैर्विरिञ्चादिजीवैः स्वपदादभ्रष्टत्वाभिर्धिकारत्वाद्वाऽचलो हरिः सृ

( २ ) नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य ।
तथापि तु यथायोगं फलदः प्रभुरेकराट् ॥
न नियम्यस्स कस्यापि स सर्वस्य नियामकः ॥
इति भाल्लवेयश्रुतौ ।

---

ष्यादि कारयतीत्यर्थः ॥

( २ ) एवमंशत्वश्रुतिमुदाहृत्यानंशत्वश्रुतिमुदाहरति— नैवेति ॥ सिद्धान्तरीत्याऽयं श्रुत्यर्थः—जीवः 'परस्य' परमात्मनः अंशो न भवति, किन्त्वमंश एव । अनेन विकल्पो निरस्तः । कुत इत्यत आह—न सम्बन्ध इति । यतो लोकपितृवत्पोषयितृत्वादिरूपसम्बन्धरहितोऽत इत्यर्थः । ननु पितृत्वादिरूपसम्बन्धाभावेऽपि उपकर्तृत्वादिरूपसम्बन्धः किं न स्यादित्यतो न सम्बन्ध इत्येतद्विवृणोति—नापेक्ष्य इति । जीवः परस्य 'अपेक्ष्यः' उपकर्ताऽपि न भवतीत्यर्थः । नन्वत्र परशब्दो नेश्वरपरः, किन्तु जीवान्तरपर इत्याशङ्कां वाक्यशेषोदाहरणेन परिहरति—तथाऽपीति । यद्यप्येवं, तथाऽपीश्वरस्य जीवेनानुपकृतत्वेऽपि स ईशः सर्वस्य जीवजातस्य 'यथायोगं' योग्यतामनतिक्रम्य तामपेक्ष्य स्वर्गमोक्षादिफलदो भवत्येव । योग्यतापेक्षायां स्वातन्त्र्यभङ्ग इत्यत उक्तम्—'एकराट्' स्वतन्त्र इति । तत्कथमित्यतः—प्रभुः समर्थ इत्याह । तथा च स्वाधीनयोग्यतापेक्षायां न स्वातन्त्र्यहानिरिति भावः । अनेन जीवस्यानुपकर्तृत्वमीश्वरस्य तु उपकर्तृत्वमेवेत्युक्तं भवति । नन्वस्त्वीश्वरः उपकर्ता, तथाऽपि लोके स्वामिभृत्यादिरन्योन्योपकार्योपकारकभावदर्शनात्तद्वदीश्वरस्यापि कदाचित् जीवोपकार्यत्वं किं न स्यादित्यत आह—न नियम्य इति । 'सः' ईश्वरः केनाप्युपकार्यो न भवतीत्यर्थः । अनेनानंशत्वश्रुतिः जीव उपकर्तव्य एव, न तूपकर्ता, ईश्वरस्तु उपकर्तैव न तूपकर्तव्य इत्यभिप्राया, भिन्नांशत्वनिषेधपरा वा, एवमसम्बन्धश्रुतिरपीश्वरस्य लोकपितृवत्पोषकत्वाभावाभिप्राया, तथाऽनपेक्ष्यत्वश्रुतिरपि परमात्मनः उपकार्यत्वाभावाभिप्रायेत्युक्तं भवति । पूर्वपक्षी तु जीवा अंशा एव, जीवोऽनंश एवेति आपाततो विरुद्धसावधारणश्रुतिद्वयदर्शनेनानिर्णयं मन्यते। श्रुतावित्यस्यानंशत्वं जीवस्योपलभ्यते प्रतीयत इत्यनुषक्तवाक्येनान्वयः ॥

( ३ ) अतो ब्रवीति —

सू—ॐ ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ॐ ॥ ४३ ॥

( ३ ) अथ सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अत इति ॥ यत एवं श्रुतिद्वये विरुद्धोक्तिस्संशयबीजमस्ति, अतस्तत्परिहारार्थमन्यतरकोटिनिर्णयरूपसिद्धान्तमाह सूत्रकार इत्यर्थः। सौत्रहेतुव्याख्यानाय नानाव्यपदेशान् दर्शयति—मां रक्षत्विति। ‘ विभुः ’ हरिः। अहमित्युक्तस्य जीवस्य स्पष्टं परमात्मपुत्रत्वप्रतिपादकत्वादादौ स्मृतिमुदाहृत्याथ श्रुतिरूपव्यपदेशं दर्शयति—अव इति। अव इत्येकदेशग्रहणेनास्य ब्रह्मपरत्वस्फोरकः ‘कवीयमानः क इह प्रवोचद्देवं मनः कुतो अधि प्रजातम्’ (ऋ.१-१६४-१८.) इत्युत्तरभागोऽपि ग्राह्यः। इत्यादिर्नेति। यस्मादिवाक्येन जीवस्य पितृत्वपुत्रत्वादिरूपनानाप्रकारेण परमात्मसम्बन्धित्वोक्तेरित्यर्थः। ब्रपदानुवृत्त्या प्रतिज्ञावाक्यं दर्शयति—अंश इति। अत्रांशत्वं द्विविधम्। उपजीवकत्वरूपतच्छेषत्वं तन्न्यूनत्वे सति तत्सदृशत्वं चेति। अत एवोभयविधांशत्वमभिप्रेत्य सादृश्यं चांशताऽस्त्वित्यनुव्याख्यानं चशब्दात्तदधीनत्वं चेति सुधा च प्रवृत्ता। अत्राद्ये अंशत्वे साध्ये अन्यथाऽपीत्यंशसहितो नानाव्यपदेशादित्यंशो हेतुः तत्रान्यथेत्यस्योपजीव्यत्वराहित्येन व्यपदेशादित्यर्थः। इदं च विशेषणं परमात्मनि व्यभिचारपरिहारकम्। न च पूर्वत्राप्यन्यथेत्यस्यान्वये ज्ञापकाभावः। ‘नासौ’ इत्यादिनानाव्यपदेशाविरुद्धासम्बन्धप्रतिपादकांशोदाहरणस्यैव ज्ञापकत्वात्। अन्यथा तद्वैयर्थ्यापत्तेः। अत एव चान्यथा चेत्युभयत्रान्वयज्ञापकचशब्दप्रयोगः। न च चशब्दो वक्ष्यमाणाभेदसमुच्चायक एवास्तु, न सम्बन्धसमुच्चायकोऽपीति वाच्यम्। तस्यापिशब्देनैव लाभात्। अत एवाभेदेनापीति भाष्ये अपिशब्दः। न च नानाव्यपदेशाख्योक्तहेतुसमुच्चायकोऽपिरिति वाच्यम्। एकेनैवोभयलाभात्। टीकायां सुधायां चान्यथेत्यस्य वक्ष्यमाणेन सम्बन्धोक्तिरपि वक्ष्यमाणेनापि सम्बन्धाभिप्रायिका, न तु पूर्वत्रासम्बन्धाभिप्रायिका। न च तत्सम्बन्धित्वरूपांशत्वे सम्बन्धाभावव्यपदेशस्यापि हेतुत्वेऽनंशत्वश्रुतेर्गतिं चाहेत्युत्तरभाष्यविरोधः, तत्रासम्बन्धश्रुतेः गत्युक्तेरिति वाच्यम्। तद्भाष्यस्य भेदाभेदव्यपदेशप्रयुक्तांशत्वप्रतियोग्यनंशत्वविषयत्वेनासम्बन्धरूपानंशत्वविषयत्वाभावात्। अत एव अ

मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः ।
'अवः परेण पितरं यो अस्यानुवेद पर एनावरेण' (ऋ.१-१६४-१८.) 'यस्तद्वेद सपितुष्पिताऽसत्' (म. हाना.१-१४.) 'यस्ता विजानात्स पितुष्पिताऽसत्'

सम्बन्धश्रुतेरुपकर्तृत्वाभावविषयत्वेनाद्यसूत्रभाष्य एव गतेरुक्तत्वान्न तद्विरोधोंशत्वश्रुतेर्न वा पौनरुक्त्यम् । द्वितीये अंशत्वे साध्ये तूत्तरत्रा प्यन्वितेनान्यथाचापीत्यंशसहितेन दाशकितवादीत्यादिनोक्तो हेतुर्यो ज्यः । हेत्वन्तरेणैतत्समर्थयत इति टीकायां एतच्छब्दोऽप्यंशत्वसामा न्यपर इति चन्द्रिकाकाराः । भावबोधकारास्तु अत्र तदधीनत्वे सति तत्सादृश्यमंशत्वं परमात्मनः पुत्रत्वं पुन्नाम्नो नरकात्त्राणकर्तृत्वेन जीव नियामकत्वरूपमेव। जीवस्य परमात्मपितृत्वमपि तज्ज्ञानेन तत्संरक्ष्यत्वे न तदधीनत्वमेव । तत्र तदधीनत्वरूपसम्बन्धित्वांशे नानाव्यपदेशो हेतुः। तत्सदृशत्वांशे तु अन्यथाचापीत्यादिः हेतुः। अन्यथा चापीत्यत्रत्यच शब्दो वक्ष्यमाणाभेदव्यपदेशसमुच्चायकः। अपिशब्दस्तु भेदाभेदव्यप देशाख्यहेतोर्नानाव्यपदेशरूपपूर्वोक्तहेतुना सह समुच्चयार्थः। यथा च 'अन्यः परोऽन्यो जीवः' ( पाराशर्या ) इत्यंशोऽन्यथाशब्दोक्तभेदव्यपदे शः । तथा 'नासावस्य कुतश्चन' 'नायं तस्यापि कश्चन' इत्यंशोऽपि । 'असौ' परमात्मा 'अस्य' जीवस्य 'कुतश्चन' केनापि प्रकारेणो पकर्तव्यो न, किन्तूपकर्तैव। 'अयं' जीवोऽपि तस्य परमात्मनः कश्चनो पकर्ता न, किन्तूपकर्तव्य एवेति जीवपरमात्मनोः सदोपजीव्योपजीव कत्वकथनेन भेदव्यपदेश एव नासम्बन्धव्यपदेशः। हेत्वन्तरेणैतत्स मर्थयत इति टीकाऽप्यंशत्वान्तर्गततदधीनत्वसाधकनानाव्यपदेशरूप हेत्वपेक्षया हेत्वन्तरेण तदन्तर्गततत्सदृशत्वांशं साधयतीत्यभिप्रायके त्याहुः। 'अवः परेण' इति ऋङ्मन्त्रे तृतीया पञ्चम्यर्थे । जात इति उ च्यत इति ब्रह्मेति च शेषः । अधीत्यस्याधिक्येनेत्यर्थः । प्रेत्युपसर्गस्तु उत्पत्तावतिशयमाह । यद्वा—अधीत्यस्य ब्रह्मेत्यर्थः । कुत इति तसिः षष्ठ्यर्थे । तथा च यतः 'परेण' पराद्धरेः 'अवः' अवमः यो जीवः 'अस्य' जगतः स्वस्य वा 'पितरं' परमात्मानं 'अनुवेद' यथावज्जा नाति । अतोऽयं 'परः' परमात्मा 'एन' एतेनानेन 'अवरेण' जीवेन 'जातः' उत्पन्न इति व्यपदिश्यत इत्यर्थः । ननु तज्ज्ञातत्वात्तज्जात त्योक्तौ देवदत्तज्ञाते यज्ञदत्तेऽपि तज्जाततोक्तिः स्यादित्यतः तज्ज्ञानं

(ऋ. १-१६४-१६.) 'द्वा सुपर्णा सयुजा सखाया'
(मु.३-१-१.) इत्यादिना नानाव्यपदेशादंशो जीवः।

दुर्लभमित्याह—कवीयमान इति। 'इह' लोके 'कवीयमानः' सर्वज्ञ कल्पः तत्त्वेनाभिमतः को नु को वा इह प्रजासु ब्रह्म प्रावोचत् न कोऽपि। तथा 'कुतः' कस्य च 'देवं' देवसम्बन्धि परब्रह्मविषयं 'मनो' ज्ञानमाधिक्येन समुत्पन्नम्। न कस्यापीत्यर्थः। तथा च परमात्मज्ञान वद्देवदत्तादिज्ञानस्य दुर्लभत्वाभावान्न तज्ज्ञातृषु तत्पितृत्वादिव्यपदेशप्रसङ्ग इति भावः। तत्त्वप्रदीपे तु योऽवरोऽस्य स्वस्य जगतो वा पितरं यथावद्वेद 'परेण' परमात्मप्रसादेन, न तु स्वतः स तु जीवः परो भवति। अनेन परमात्मनाऽवरभूतेन निमित्तेनावरभूतपरमात्मप्रसादेनेति यावत्। कथं परमात्मनोऽवरत्वं ? दर्शनक्रममपेक्ष्य, जीवः स्व स्वरूपदर्शनानन्तरं हि भगवन्तं पश्यति। तथा चान्ते दृश्यमानत्वाद वरत्वमिति व्याख्यातम्। 'त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुष्पिता सत्' (महा. १-१-४.) इति तैत्तिरीयश्रुतेरयमर्थः। यस्य 'त्रीणि पदानि' स्वरूपाणि नारायणवासुदेववैकुण्ठाख्यानि गूहितत्वात् 'गुहासु' श्वेतद्वीपादिषु निहितानि। तद्ब्रह्म यो वेद 'सः' जीवः 'पितुः' जगत्पितुः ब्रह्मणः पिता 'असत्' अभवदित्यर्थः॥

स्त्रियः सतीस्ताँ उमे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः।
कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात्स पितुष्पिताऽसत्॥

इति ऋङ्मन्त्रस्यायमर्थः—'सतीः' सत्यः निर्दुष्टाः स्त्रियः स्त्रीलिङ्गशब्दवाच्याः 'मे' मदुपास्याः या भगवन्मूर्तयः 'ताँ उ' तानेव ता एव 'पुंसः' परमपुरुषानाहुः। वेदादयो या देवतेत्यादिस्त्रीलिङ्गशब्दैः प्रतिपादयन्ति ता एव पुरुषादिपुल्लिङ्गशब्दैरपि प्रतिपादयन्तीति भावः। विधेयविवक्षया तान् पुंस इति पुल्लिङ्गप्रयोगः। योऽधिकारी ताः 'पश्यत्' पश्यति स चक्षुष्मान्। यो 'न विचेतत्' न विजानाति सोऽन्धः। यो भगवन्मूर्तीः पश्यति जीवः तच्चक्षुरेव सफलं तदन्यन्निष्फलमविद्यमानप्रायमेवेति भावः। 'यः कविः' सर्वज्ञो भगवत्पुत्रोऽपि विरिञ्चः 'स ईं' स एव 'आ' समन्तात्सम्यक् 'चिकेत' जानाति। यश्च 'ताः' मूर्तयो 'विजानात्' व्यजानात् विजानाति सः 'पितुः' जगत्पितुः विष्णोरभिव्यञ्जकत्वान्निमित्तात् 'पिता' जनकः 'असत्' भवेदिति। म इत्यस्मच्छब्देन दीर्घतमा नाम ऋषिः गृह्यते। अस्य स

(४) तथा च पाराशर्यायणश्रुतिः—
अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति। पितेति पुत्रेति भ्रातेति सखे ति च, इति।

(५) 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन। नायं त

द्दृष्टत्वात्। तत्त्वप्रदीपे तु याः 'सतीः' निर्दुष्टाः स्त्रियो वेदाभिमानिन्य स्तान् परमपुरुषानाहुः वेदादिशब्दैर्ज्ञानिनः, श्रुतिरित्यादिस्त्रीलिङ्गश ब्दवाच्या एव मद्दृष्टाः वेदाभिमानिदेवताः वेद इत्यादिपुलिङ्गशब्दवा च्यानाहुरिति यावत्। अभिमानिन्यपेक्षया चायं व्यपदेशः। 'अक्षण्वा न्' ज्ञानदृष्टिमानेव तान् पश्यति नाज्ञानी। यः कविः 'पुत्रो' ब्रह्मा स एव

'यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.६-१८.) इति श्रुतेः।

'तेने ब्रह्म हृदा य आदिकवये' इत्यादिस्मृतेश्च। 'आ' समन्ताद्वेद यः तानि छन्दांसि विशिष्टत्वेन जानाति साक्षाद्विष्णुवाचकत्वेन सः 'पि तुः' विष्णोः पिता भवति। व्यञ्जकत्वाच्छन्दसां तज्ज्ञत्वात्पुरुषस्येति भाव इति वेदाभिमानिदेवतापरतया व्याख्यातम्। 'द्वा सुपर्णा' इत्या थर्वणश्रुतिस्तु द्युभ्वाधिकरणे व्याख्याता॥

(४) यन्नानाव्यपदेशादंशो जीव इति सूत्रकृदाह, तत्र श्रुतिं चा ह—तथा चेति॥ चशब्दो भिन्नक्रमः। न केवलं सूत्रकृतैव नानाव्यप देशेनांशत्वं साधितम्, किन्तु श्रुत्याऽपीति चशब्दार्थः। तां श्रुतिं पठ ति—अंश इति। हिशब्दः प्रसिद्धौ। एष इति क इत्यपेक्षायामाह— य इति। तथा च य उत्पत्तिनाशवान्पुरुषः प्रसिद्धोऽयं जीवः परमा त्मनोंश इति प्रतिज्ञार्थः। चशब्दौ परस्परसमुच्चये। कुत इत्यत आ ह—नानेति। हि यतः 'एनं' जीवं परस्य पितेत्यादिनानाप्रकारेण व्य पदिशन्ति वेदा अत इत्यर्थः। इतिशब्दाः प्रकारवचनाः। चशब्दो द्वि र्गृहीतः सर्वत्रान्वितः प्रकाराणां परस्परसमुच्चयमाह। इतीत्यस्य इ ति पाराशर्यायणश्रुतिरिति पूर्वेणान्वयः॥

(५) हेत्वन्तरेणांशत्वं समर्थयते—अन्यथेति॥ तमंशं व्याख्या ति—अन्य इति। टीकायामन्य इतीति प्राथिकः पाठः। अन्यथेतीति पाठः सूत्रांशप्रतीकग्रहणरूपः स्वरसः। 'अन्यथा च' वक्ष्यमाणाभे

स्यापि कश्चन' इत्यन्यथा च कौषायणश्रुतिः ।

( ६ ) 'ब्रह्म दाशा ब्रह्म कितवाः, ब्रह्मैवेमे दाशाः' इत्यभेदेनाप्येकेऽधीयते ।

( ७ ) तथा चाग्निवेश्यश्रुतिः—'अंशो ह्येष परस्य भिन्नं ह्येतमधीयिरे अभिन्नं ह्येनमधीयिरे' इति ।

( ८ ) वाराहे च—

---

द्यपेक्षया परमात्मभिन्नत्वेनेति यावत् । श्रुतिरित्यनन्तरं एनं व्यपदिशतीति शेषः । चशब्दार्थः प्रागेवोक्तः । इयं च श्रुतिः नासावित्यस्य वैयर्थ्यपरिहाराय भेदे असम्बन्धे च प्रमाणम् । अर्थस्तु प्रागेवोक्तः ॥

( ६ ) भेदप्रतियोग्यभेदव्यपदेशं दर्शयति—ब्रह्मेति ॥ ब्रह्मैवेमे दाशा इत्युपसंहारस्थं वाक्यान्तरं शाखान्तरस्थं वा । यद्वा—ब्रह्मैवेमे दासा इत्यादिपदार्थपरश्रुतिवाक्योदाहरणम् । अत्र ये दाशाः नौतारकाः कैवर्ताः ते, ये च 'कितवाः' द्यूतकृतः, ये चामी 'दासाः' स्वामिष्वात्मानं उपक्षिपन्तः ते सर्वेऽपि ब्रह्मैवेति दाशकितवाद्युद्देशेन ब्रह्माभेदो विधीयत इत्यस्याभेदव्यपदेशोपपत्तिरिति भावेन दाशकितवादित्वमित्यस्य तात्पर्यार्थमाह—अभेदेनापीति । न केवलं 'अन्यः परः' इति भेदेन, किन्त्वभेदेनापीत्यपिशब्दार्थः । अधीयत इत्यनन्तरं ब्रह्मसूक्ते आथर्वणिका इति शेषः। तथा चैतच्छ्रुतिद्वये जीवेशयोर्भेदाभेदोक्तेरन्यतरश्रुतिबाधस्य चायोगात् साक्षाद्भेदाभेदयोश्च विरोधादनुपपत्तेः श्रुतिद्वयान्यथाऽनुपपत्त्या भेदमङ्गीकृत्याभेदस्थाने अंशत्वं च वक्तव्यमिति भावः ॥

( ७ ) नानाव्यपदेशहेतुनांशत्वसाधनस्य यथा श्रुतिसमाख्योक्ता, तथा भेदाभेदोक्तयन्यथाऽनुपपत्त्याऽप्यंशो जीव इत्यत्रापि श्रुतिसमाख्यामाह—तथाचेति ॥ अन्यथेत्यादिना यथा सूत्रकृदाह, तथा श्रुतिरप्याहेत्यर्थः । तां श्रुतिमुदाहरति—अंश इति । आद्यो हिः प्रसिद्धौ । 'एषः' जीवः परस्य 'अंशः' ततोऽन्यूनत्वे सति तत्सदृशत्वरूपांशत्ववानिति प्रतिज्ञार्थः । द्वितीयतृतीयहिशब्दौ भेदाभेदव्यपदेशयोरुभयोरपि हेतुत्वज्ञापकौ । तथाचैनं जीवं परस्य सकाशाद्यतो भिन्नमभिन्नं चाधीयिरे शाखिनः अत इत्यर्थः ॥

( ८ ) समस्तसूत्रार्थे स्मृतिं चाह—वाराहे चेति ॥ न केवलं सू

पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।
बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु ॥
( ९ ) यतो भेदेन तस्यायमभेदेन च गीयते ।
अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः ॥ इति ॥ ४३ ॥
( १० )सू—ॐ ॥ मन्त्रवर्णात् ॥ ॐ ॥ ४४ ॥

चकृतैव उक्तमिदं, किन्तु 'वाराहे' वराहपुराणवचनेऽप्युक्तमित्यर्थः । पुत्रेत्यादिना बहुधेत्येतद्विवृतम् । यद्वा—पुत्रेत्यादिः संक्षेपः बहुधेति विस्तरः । जीवस्येति शेषः । त्वप्रत्ययस्य प्रत्येकं सम्बन्धः । प्रकारे तृतीया । उपलक्षणमेतत् । असम्बन्धित्वे चेत्यपि द्रष्टव्यम् । 'गीयते' प्रतिपाद्यते 'तेन' हेतुना । तुरेव । जीवस्तस्य हरेरंश एवेति संबन्धः ॥

( ९ ) एवं नानाव्यपदेशादंशो जीव इत्युक्त्वा यदन्यथेत्यादिनोक्तं भेदाभेदव्यपदेशस्यांशत्वाक्षेपकत्वं तदाह—यत इति ॥ आद्यश्चः प्रकारसमुच्चये, द्वितीयो हेतुसमुच्चये । तथा च यतोऽयं जीवस्तस्य हरेस्सकाशात् 'भेदेन' भिन्नत्वेनाभेदेन च प्रकारेण 'गीयते' प्रतिपाद्यते अतोऽस्य जीवस्यांशत्वं 'उद्दिष्टं' आक्षिप्तमिति योजना । ननु भेदाभेदव्यपदेशान्यथाऽनुपपत्त्या भेदमङ्गीकृत्य अभेदस्थाने तन्न्यूनत्वे सति तत्सदृशत्वरूपांशत्वं किमर्थमङ्गीकर्तव्यम्, मुख्यतो भेदाभेदावेव किं न स्यातामित्यत आह—भेदाभेदाविति । 'मुख्यतः' साक्षाद्विरोधादिति भावः । इतीत्यस्य इति वाराह इति पूर्वेणान्वयः । ततश्चायं चन्द्रिकारीत्या सूत्रार्थः—'नानाव्यपदेशात्' पितृत्वपुत्रत्वादिनानाप्रकारेण जीवस्य परमात्मोपकर्तव्यत्वेन तत्सम्बन्धित्वोक्तेः 'अन्यथा च' 'न सम्बन्धः परस्य, नासावस्य' इत्यसम्बन्धित्वेनाप्युक्तः जीवः परस्यांश इवांशस्तदुपजीवित्वेन तच्छेषभूतः । किञ्च—यतः 'एके' शाखिनो 'अन्यथा' वक्ष्यमाणभेदापेक्षया पराद्भेदेनैनं जीवं 'अधीयते' पठन्ति । एवं 'एके' परे शाखिनः परब्रह्मणः 'दाशकितवादित्वं' दाशकितवदासादिरूपजीवभावं दाशकितवादेर्ब्रह्मत्वं तदभेदमधीयते, अतोऽपि जीवः परस्य 'अंशः' तन्न्यूनत्वे सति तत्सदृशत्वरूपांशत्वोपेत इति ॥

( १० ) एवमुपपत्त्या जीवस्येश्वरांशत्वं प्रसाध्य श्रुत्याऽपि तत्साधकसूत्रं पठित्वा तां श्रुतिमुदाहरति—मन्त्रेति ॥ मन्त्रवर्णः श्रुतिः । म

'पादोऽस्य विश्वा भूतानि' ( ऋ.१०-९०-३. ) ॥ ४४ ॥

( ११ ) सू—ॐ ॥ अपि स्मर्यते ॥ ॐ ॥ ४५ ॥

'ममैवांशो जीवलोके जीवभूतस्सनातनः' ( गी.१५-७.) इति ॥ ४५ ॥

( १२ ) अनंशत्वश्रुतेर्गतिं चाह—

सू—ॐ ॥ प्रकाशादिवन्नैवं परः ॥ ॐ ॥ ४६ ॥

अनंशत्वेऽपि न मत्स्यादिरूपी पर एवंविधः ।

शब्दोऽत्राकर्षणीयः । ज्ञः अंश इति च वर्तते । तथा च न केवलमुपपत्तेः, किन्तु 'पादोऽस्य' इति मन्त्रवर्णाच्च जीवः परस्यांश इति योजना । 'विश्वा भूतानि' सर्वे जीवाः 'अस्य' परमात्मनः 'पादः' अंश इति श्रुत्यर्थः प्रागेवोक्तः ॥

( ११ ) स्मृत्याऽपि जीवस्य परमात्मांशत्वं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—अपीति ॥ न केवलं जीवस्य परमात्मांशत्वं श्रूयते, किन्तु 'स्मर्यते' स्मृत्याऽप्युच्यते, अतोऽपि जीवः परस्यांश इत्यन्वयः । 'जीवलोके' जीवच्छरीरे स्थितः 'सनातनः' नित्यो 'जीवभूतः' जीवभावोपेतः जीवाख्यो यो ब्रह्मादिचेतनराशिः सः 'ममांश एव' मदुपजीव्य एव मदधीनत्वे सति मत्सदृश एव वा, न तु अभिन्नांशोऽनंशो वेत्यर्थः । कृष्णवाक्यमेतत् । कुतो ? यत ईश्वर एव जीवस्य विषयानुभवार्थं मनष्षष्ठानि । बहुव्रीहिः । 'प्रकृतिस्थानि' मूलकारणस्थानि शरीरस्थानि वा ज्ञानेन्द्रियाणि 'कर्षति' आकर्षति अत इत्यर्थः । ईश्वरश्चाहमेवेति भावः । तत्र च विवेकः—ईश्वरो जीवस्य शरीरावाप्तौ मूलकारणादिन्द्रियाणि कर्षति, तदुत्क्रमणे तु शरीरात्, स्थितौ तु गोलकादिभ्य इति प्रमेयदीपोक्तो ज्ञातव्यः ॥

( १२ ) ननु जीवस्येशांशत्वं न युक्तम्, तथा सति अंशत्वाविशेषात् जीवानां मत्स्यादिसाम्यापातात्, अनंशत्वश्रुतिविरोधाच्चेत्याशङ्कां परिहरत्सूत्रमवतारयति—अनंशत्वेति ॥ 'नैवांशः' इत्यादिश्रुतेरित्यर्थः । 'गतिं' विषयं, मत्स्याद्यसाम्यं चशब्दार्थः । 'आह' अर्थात्साक्षाच्चेति भावः । अंशत्वश्रुतेः तद्विरोधशान्त्यर्थमिति शेषः । पूर्वसूत्रादपि शब्दमनुवर्त्य नैवं पर इति सूत्रांशं व्याचष्टे—अंशत्वेऽपीति । जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपीत्यर्थः । पर इत्यस्यार्थो—'मत्स्यादिरूपी परः' परमात्मेति । एवमित्यस्यार्थः—एवंविध इति । जी

( १३ ) यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च । यथा च पृथिव्यंशस्य मेरोर्विष्ठादेश्च ।

( १४ ) अभिमानिदेवतापेक्षयैतत् ॥ ४६ ॥

वेन सर्वथा समो न, कुतो ? यतः 'एवंविधो न' जीवधर्मिन्नांशो न, किन्तु एवंविधः स्वरूपांश इत्यनुवृत्त्या योजना । केवलांशत्वं तु सर्वसाम्ये न प्रयोजकमिति भावः ॥

( १३ ) ननु जीवेषु भेद एव मत्स्यादिष्वभेद एवेति वैषम्यमनुपपन्नम्, उभयोरंशत्वे विशेषाभावादित्याशङ्कोत्तरत्वेन प्रवृत्तं प्रकाशादिवदित्यंशं

अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् ।
जीवाः भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवत् ॥

इति तत्वप्रदीपोक्तप्रमाणानुसारेण विवृणोति—यथेति ॥ एवकारोऽप्यर्थः । चशब्दः समुच्चये । 'एकप्रकारता' उभयोर्भिन्नांशत्वाभिन्नांशत्वाख्यैकप्रकारता न, किन्तु प्रलयकालीनाग्नेरभिन्नांशत्वं, खद्योतशब्दितकीटविशेषस्य भिन्नांशत्वमिति भिन्नप्रकारतैवेत्यर्थः । सौत्रादिशब्दगृहीतदृष्टान्तान्तरं विवृणोति—यथा जलांशस्येति । जलांशस्यापीत्यर्थः । जलांशत्वाविशेषेऽपीति यावत् । 'अमृतसमुद्रस्य' शुद्धोदकसमुद्रस्य । मूत्रादेश्चेत्यनन्तरं नैकप्रकारतेत्यनुषज्यते । किन्त्वमृतसमुद्रस्याभिन्नांशत्वं मूत्रादेर्भिन्नांशत्वमेवेति भावः । आदिपदेन कश्मलोदकं गृह्यते । आदिपदगृहीतदृष्टान्तान्तरं विवृणोति—यथा पृथिवीति । अत्राप्यर्थकैवकारोऽनुषज्यते, नैकप्रकारतेति च । किन्तु मेरुगिरेः पृथिव्यभिन्नांशत्वं विष्ठाशब्दिताशुद्धादेस्तु भिन्नांशत्वमेवेति भावः । तथेति शेषः । पूर्वेणान्वयः ॥

( १४ ) ननु कालाग्निखद्योतयोः तेजोलक्षणभूतकार्यत्वात् मूत्रामृतसमुद्रयोरब्लक्षणभूतकार्यत्वात् मेरुविष्ठयोश्च पृथिवीलक्षणभूतकार्यत्वात् कार्यकारणानां च सिद्धान्तिभिर्भेदाभेदाभ्युपगमेन भेदाभेदसाम्यात् कथमेतन्मत्स्यादीनामभिन्नांशत्वे जीवानां च भिन्नांशत्वे दृष्टान्ता भवेयुरित्यत आह—अभिमानीति ॥ प्रकाशाद्यभिमानिदेवतापेक्षयेत्यर्थः । 'एतत्' प्रकाशादिवदिति दृष्टान्ताभिधानं एतेषां दृष्टान्तत्वं वा । तथा च तेजोजलपृथिव्यभिमानिनीनां सूर्यवरुणधराणां काला

( १५ ) सू—ॐ ॥ स्मरन्ति च ॥ ॐ ॥ ४७ ॥
( १६ ) एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।

प्रथमृतसमुद्रमेत्रभिमानिनां तदंशानां च क्रमेणान्योन्यमभिन्नत्वात्, खद्योतमूत्रविष्ठाद्यभिमानिनीनां अपभ्रष्टाख्यदेवतानां तु क्रमेण तेजो जलपृथिव्यभिमानिभ्यो भिन्नत्वात् युक्तं दृष्टान्तत्वमिति भावः । अनेन सूत्रे प्रकाशादिशब्द उभयविधतेजोंशादिपरोऽभिमानिदेवतापरश्च। त था च प्रकाशादिवदित्यस्य कालाग्निखद्योतादिषु तेजआद्यंशेष्वेव भिन्न त्वाभिन्नत्ववैषम्यवदित्यर्थ इत्युक्तं भवति । अनेनैवानंशत्वश्रुतेरभि न्नांशत्वनिषेधपरत्वेन गतिरुक्ता भवति । अत एवांशत्वश्रुतेः तद्विरो धोऽपि परिहृतः ॥

( १५ ) ननु दृष्टान्तमात्रस्यानिर्णायकत्वात् तत्र तथात्वेऽपि जीवानां मत्स्यादीनां च स्वरूपांशत्वमभेदश्च किं न स्यादित्याशङ्कां स्मृतिभिः परिहरत्सूत्रमुपन्यस्यति—स्मरन्ति चेति ॥ न केवलं दृष्टान्तमात्रादेत दुच्यते, किन्तु यतः स्मृतिकर्तारो जीवस्य भिन्नांशत्वं मत्स्यादेरभि न्नांशत्वं च स्मरन्त्यतोऽपीत्यर्थः ॥

( १६ ) सूत्रकृदभिप्रेताः स्मृतीरुदाहरति—एत इति ॥ भागवते प्र थमस्कन्धे

जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥

इत्यनेन यो भगवान् प्राक् जगत्संहृत्य चित्प्रकृत्यात्मके प्रलयोदके श्रीप र्यङ्के प्रकृतिमयतमसा निगूढः स्थितः स एव लोकसृष्टीच्छया आदौ पु नःसृष्टिकाले स्वगूहकं तमः पीत्वा प्रलये सूक्ष्मरूपेण स्योदरनिविष्टैर्म हदहङ्कारादिभिः सहितमेकादशेन्द्रियपञ्चभूताख्यषोडशकलायुक्तं प्रा णादिषोडशकलान्वितं वा 'पौरुषं' परमपुरुषाख्यं रूपं 'जगृहे' व्य क्तमकरोत् इत्यण्डसृष्टेः पूर्वं परमपुरुषाख्यं रूपं अभिधायाथ 'यस्या म्भसि शयानस्य' इत्यनेन अण्डसृष्ट्यनन्तरं महदादितत्त्वदेवैस्सहा ण्डान्तःप्रविष्टात्तस्मादेव परमपुरुषाच्चतुर्मुखजनकपद्मयुक्ताभियुतशेष शायिपद्मनाभाख्यरूपस्याभिव्यक्तिमभिधाय 'यस्यावयवसंस्थानैः' इत्यनेन अन्तरिक्षादिलोकजनकपरमपुरुषाख्यविराड्रूपं चाभिधाय 'य स्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः' इत्यनेन सर्वे परमपुरुषांशवि

इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे ॥
(१७) अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।

भागरूपत्वेनावतिष्ठन्ते तत्सामर्थ्यैकदेशेन जायन्ते चेत्यभिहिते, के ते अंशा इत्याकांक्षायां 'द्वितीयं तु भवायास्य' इत्यारभ्य 'अथासौ युगसन्ध्यायाम्' इत्यन्तेन सविस्तरं वराहादीनां भगवदंशत्वमुक्त्वा,

ऋषयो मनवो देवाः मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयस्स्मृताः ॥

इत्यनेन ऋष्यादीनां प्रियव्रतादिमनुपुत्राणां दक्षादिप्रजेश्वराणां च जीवानामपि कला इत्यनेन भगवदंशत्वमुक्तम् । तत्र किमविशेषेण सर्वे अंशा इत्याशङ्कानिरासाय भगवदवतारेषु जीव इव कलात्वस्योपचरितत्वशङ्कावारणाय च 'एते' इत्यनेन वराहादीनां स्वरूपांशत्वमभिधीयते । 'एते' वराहाद्या अवताराः 'पुंसः' परमपुरुषस्य नारायणस्य 'स्वांशकलाः' कल्प्यन्त इति कलाः स्वरूपांशरूपा एव विभागाः, न तु भिन्नांशाः, उपचारेण कला इव कला वा । भेदवद्भेदाभेदावपि नेत्याह—कृष्ण इत्यादिना । कृष्णशब्दोऽयं 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादाविव नारायणेऽस्ति । तुशब्दोऽवधारणे । तथा च एते न स्वांशकला इत्येतावन्मात्रं, किन्तु 'स्वयं' साक्षात् भगवान् कृष्णो मूलरूप्येव तदत्यन्ताभिन्नोऽपि । उक्तं हि प्रमेयदीपे—एते वराहाद्याः पुंसः स्वांशकलाः । कोऽर्थः ? कृष्णः परमपुरुषो भगवान् स्वयमेव एत इति स्वांशकला इत्यस्यैव भेदाभेदशङ्कावारणायार्थकथनं, कृष्ण इत्यादीत्यस्याभिप्रायः । आदिसृष्टाववतीर्णाः एते वराहादय एव इन्द्रारिभिः दैत्यैर्व्याकुलं पीडितं जनं 'युगेयुगे' पुनरवतीर्य 'मृडयन्ति' रक्षन्ति सुखयन्ति चेत्यर्थः । यथोक्तं गीताभाष्ये—'रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः' इति । सः नारायणः 'असृजत्' व्यभजत् । उत्तरत्रेति शेषः ॥

(१७) एवं वराहादीनां स्वरूपांशत्वमुक्त्वा ऋषय इत्यादिना भगवदंशत्वेनोक्तानां जीवानां भिन्नांशत्वमुच्यते—अतः परमित्यादिना ॥ यत् 'अतः' परमपुरुषात् जडाच्च 'परं' भिन्नं 'अव्यक्तं' अकार्यं सूक्ष्ममिति वा 'अव्यूढगुणबृंहितं' अनादिकालात्कदाचिदपि अनपगतसत्त्वादिगुणयुक्तं चैतन्यं यच्च 'अदृष्टाश्रुतवस्तुत्वात्' श्रुतपदं मननादेरप्युपलक्षणम् । तथा च अश्रुतामतानुपासितासाक्षात्कृतपरमात्मस्व

अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः ॥
( १८ ) स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।
विभिन्नांशोऽल्पशक्तिस्स्यात्किञ्चित्साद्दश्यमात्रयुक् ॥
इति वाराहे ।
( १९ ) न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः । (गी. ११-४३.)

रूपत्वात् 'पुनर्भव' पौनःपुन्येन जायमानो म्रियमाणश्च संसारी स जीव इत्यर्थः । तत्त्वप्रदीपे तु—अदृष्टाश्रुतवस्तुत्वादित्यस्य अव्यूढगुणबृंहितमित्यनेन अन्वय उक्तः । पुनर्भव इत्यनन्तरमिति भागवते इति शेषः ॥

( १८ ) न केवलमसंसारित्वसंसारित्वाभ्यां रक्षकत्वरक्ष्यत्वाभ्यां गुणबन्धागुणबन्धाभ्यां मत्स्यादीनां जीवानां चांशिनोऽभेदभेदावसाम्यं च, किन्तु मत्स्यादीनां स्वरूपांशलक्षणयुक्तत्वात् जीवानां तु भिन्नांशलक्षणयोगित्वात् अंशिना भेदाभेदावसाम्यं चेति भावेन स्वरूपास्वरूपांशविभागपूर्वकं तयोर्लक्षणं तावत् स्मृत्या दर्शयति—स्वांशश्चेति ॥ स्वरूपांश इत्यर्थः । चशब्दो द्वेधैवेत्यवधारणार्थः । अथो इत्यर्थान्तरे । 'सामर्थ्यं' जगत्सृष्ट्यादिलक्षणं, तुश्चार्थः । 'यत्स्वरूपं' यथाज्ञानानन्दादि 'यथा स्थितिः' यथा सर्वोत्तमत्वादि । सुधारीत्या सर्वगतत्वादि परिमाणं वा, देशतः कालतो गुणतः व्याप्तत्वेन स्थितिरिति वा । तदेव स्वरूपांशस्य भवतीति शेषः । न तु ततो भिन्नमित्येवार्थः । कुत इत्यत आह—न भेदस्स्वांशांशिनोरिति । स्वरूपांशांशिनोः 'क्वचिदपि' काले भेदो नास्तीत्यर्थः । ननु केवलभेदाभावेऽपि अभेदसहितः किं न स्यादित्यत आह—अणुमात्रोऽपीति । अभेदसहितोऽपीत्यर्थः विभिन्नांशलक्षणमाह—विभिन्नांश इति । किञ्चित्साद्दश्यमात्रयुगित्येतत् सुधारीत्या परमेश्वरेण चित्त्वादिरूपेण किञ्चित्साद्दश्यमात्रयुगिति, अंशिशब्दमुख्यवाच्येन मत्स्यादिना किञ्चित्साद्दश्यं तत्सत्तयैव सत्तावत्स्वरूपं तन्मात्रयुगिति च द्वेधा व्याख्येयम् । मात्रशब्देन सर्वथा साद्दश्यमभेदो भेदाभेदौ च निरस्तौ ॥

( १९ ) एतच्च स्वरूपांशत्वलक्षणं कृष्णाद्यवतारेऽस्तीति स्मृत्याऽऽह—नेति ॥ त्वत्समोऽन्यो नास्ति कुतोऽधिक इत्यर्थः । कृष्णं प्रति पा

इति च ॥ ४७ ॥

( २० ) सू—ॐ ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ॐ ॥ ४८ ॥

परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयते, अंशत्वेऽपि देहसम्बन्धात् ।

---

र्थवचनमेतत् । गीतायामिति शेषः । सप्तम्यन्तानां स्मरन्तीत्यनेनान्वयः । जीवेषु भिन्नांशलक्षणवत्त्वं साक्ष्यनुभवसिद्धमिति न तत्र प्रमाणमुदाहृतम् । अनेन—यतः स्मृतिकर्तारो मत्स्यादीनां जीवानां च भगवदंशत्वं स्वरूपास्वरूपांशत्वे तल्लक्षणे मत्स्यादीनां तद्योगित्वं च 'स्मरन्ति' भागवतादिस्मृतिषु प्रतिपादयन्ति अतोऽपि नोभयेषां अविशेष इति सूत्रार्थ उक्तो भवति ॥

( २० ) एवं जीवानां मत्स्यादीनां च अंशिना क्रमेण भेदाभेदसद्भावान्नैकविधतेत्युक्तम् । युक्त्यन्तरेण च एकविधतां पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे—अनुज्ञेति ॥ परानुज्ञया प्रवृत्तिरित्यनेन सूत्रे परपदान्वयः, जीवस्य प्रवृत्तये परानुज्ञेति तत्त्वप्रदीपोक्तेः । अनुज्ञापदं अनुज्ञासाध्यप्रवृत्तिपरमिति सूचितम् । परतो बन्धनिवृत्तिरित्यनेन अत्रापि परपदान्वयः, बन्धस्य योग्यतया सम्बन्धः, अनुज्ञा च परिहारश्चेति विग्रहश्च सूचितः । जीवस्य प्रवृत्तिमोक्षयोरुभयोरपीश्वराधीनत्वज्ञापनायोभयत्र परशब्दप्रयोगः । केचित्तु—परितो हारः परिहारः सर्वकर्माणि जीवस्य प्रवृत्तिः, बन्धनिवृत्तिश्च परिहारः, परिहारश्च परिहारश्च परिहारौ, अनुज्ञया परिहारौ अनुज्ञापरिहाराविति तृतीयातत्पुरुष इति परानुज्ञयेत्यादिभाष्यानुज्ञासूत्रांशयोरर्थ इत्याहुः । चस्समुच्चये । सूत्रे अस्येत्यनुवृत्तपदस्यार्थो जीवस्येति । विमतजीवस्येत्यर्थः । समुदायैकवचनमिदम् । अनुवृत्तस्यापेरर्थमाह—अंशत्वेऽपीति । जीवानां मत्स्यादीनां चांशत्वाविशेषेऽपीत्यर्थः । प्रतीयत इत्यस्य प्रत्येकमन्वयः । यत इति शेषः । अस्यातोऽपि नैवं नैकविधतेत्यनुवृत्तसाध्येनान्वयः । प्रतीयते चेत्यप्यन्वयेन सूत्रचशब्दानुवृत्तिस्सूचिता । केन हेतुना प्रतीयत इत्यतः तत्र देहसम्बन्धादित्येतद्योजयति—देहेति । स्वांशिकर्मानिर्मितदेहसम्बन्धित्वादित्यर्थः । स्वांशिपदं परमात्मरूपभिन्नांशिस्वरूपांश्युभयपरम् । तेन नार्जुनादौ व्यभिचारः, न वा पक्षे विमतजीवेऽप्रसिद्धिरिति ध्येयम् ॥

(२१) 'य आत्मानमन्तरोऽयमयति' (माध्यन्दिनशा.) 'तमेवं विद्वान्' (तै.आ.३-१२.) इत्यादिना। न तु परस्य।

(२२) 'वासुदेवस्सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिस्सर्व एव ह्येते पूर्णा अजरा अमृताः पराः परानन्दाः'

---

(२१) न केवलं देहसम्बन्धाज्जीवस्यानुज्ञापरिहारौ प्रतीयेते, किन्तु श्रुत्याऽपीत्याशयेन तत्र क्रमेण श्रुती आह—य इत्यादिना॥ 'यः' इति श्रुतिः कर्त्रधिकरणे 'तम्' इति श्रुतिश्च जिज्ञासाधिकरणे व्याख्याता। इत्यादिनेत्यस्य प्रतीयत इत्यनेनान्वयः। चशब्दोऽत्राध्याहार्यः। मत्स्यादीनामपि प्रवृत्तिमोक्षयोरीश्वराधीनत्वात् कथं नैकविधतेत्यत आह—नेति। परानुज्ञापरिहारौ नेत्यर्थः। तुर्विशेषे। 'परस्य' मत्स्यादेः॥

(२२) नेत्येतत्कुतः इत्यतो देहासम्बन्धादेवेति सिद्धेऽप्यत्र श्रुतिं चाह—वासुदेव इति॥ विष्णुवाक्यमेतत्। अहं वासुदेवादिचतुर्मूर्तिः, अहं मत्स्यादिदशमूर्तिः, 'रामो' भार्गवः, पुनश्च 'रामो' दाशरथिः, कल्किशब्द इकारान्तोऽप्यस्ति। अहं 'शतधा' नारायणादिशतरूपी अष्टोत्तरनामवाच्यस्य नारायणादेः अल्पत्वादष्टाविवक्षया शतधेत्युक्तिः। उक्तं हि तत्त्वप्रदीपे—शतधा नामाष्टशतवाच्यत्वेन शतर्चिन इतिवत् सामीप्यादविरोध इति। अहं 'सहस्रधा' विश्वादिसहस्रनामवाच्यत्वेन सहस्ररूपी। 'सहस्रधा' सहस्रनामवाच्यत्वेनेति तत्त्वप्रदीपोक्तेः। अहं 'अमितः' परादिबहुरूपी 'अहमनन्तः' अजिताद्यनन्तरूपीत्यर्थः। तदुक्तं बृहदारण्यकभाष्ये—

शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकम्।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः॥ इति।

'एते' वासुदेवाद्याः। 'एषां' वासुदेवादीनां 'अनुज्ञा' प्रवृत्त्यर्थं परानुज्ञा परानुज्ञया प्रवृत्तिः 'मुक्तिः' बन्धात्। अत्र निषेधवाक्यपञ्चकेन जीवनिष्ठानां जननादीनां भगवदवतारेषु प्रत्येकं निषेधात् मत्स्यादीनामनेकधा जीववैषम्यमुपपादितम्। अनेन सूत्रे अनुज्ञापरिहारशब्दौ जननादीनामपि उपलक्षकावित्युक्तं भवति। निषेधपञ्चकेऽपि हेतुमाह—एते सर्वे पूर्णा इति। 'अमृताः' नित्यमुक्ताः। हिशब्दो हेतौ। विधिप

इति चतुर्वेदशिखायाम् ॥

( २३ ) युज्यते च ज्योतिरादिवत् । यथाऽऽदित्यो वियद्गतस्त त्प्रकारश्चैकप्रकारः ।

( २४ ) 'शुक्लं कृष्णं कनीनिका' (ऐ.आ.२-१-५.) इति तदंश स्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः । तदनुज्ञा

ज्ञकेनापि मत्स्यादिषु ईश्वरस्वरूपांशलक्षणोक्त्या अतथाभूतानां म त्स्यादिवैषम्यमुपपादितं भवति । चतुर्वेदशिखायामित्यनन्तरं वचना दिति शेषः । अस्य न तु परस्य परतोऽनुज्ञापरिहारौ स्त इति पूर्ववा क्येनान्वयः ॥

( २३ ) यदुक्तं जीवः अंशिपरमात्माधीनप्रवृत्त्यादिमान् स्वांशिकर्मोनि र्मितदेहसम्बन्धित्वादिति, तन्न युज्यते व्याप्त्यभावादित्यतः प्रवृत्तं दृ ष्टान्तांशं सशेषं योजयति—युज्यते चेति ॥ एतदिति शेषः । अनेन सू त्रे युज्यते चैतादित्यध्याहारस्सूचितः । 'एतत्' साधनम् । सूत्रे ज्यो तिरादिवदित्युक्त्या मत्स्यादिः स्वांश्यधीनप्रवृत्तिर्न भवति स्वांशिक र्मोनिर्मितदेहासम्बन्धित्वात् वियद्गतप्रकाशाद्यभिमानिवदिति यत् प्र योगान्तरमप्यभिप्रेतम्, तदपि युज्यत इत्याशयेन दृष्टान्तवचनमेव स्फु टयति—यथेति । 'वियद्गतः' अन्तरिक्षगतः 'आदित्यः' तन्मण्डलाभि मानी सूर्यः अंशी तत्प्रकाशः सूर्यप्रकाशाभिमानी सूर्यांशश्च 'एकप्र कारः' एकविधः द्वावेकलक्षणोपेतौ, अत एवांशः अंश्यधीनानुज्ञादि रहित इत्यर्थः । तथा परो मत्स्यादिश्चैकप्रकार इति वाक्यशेषः ॥

( २४ ) एवं ज्योतिरादिवदित्यंशे देहसम्बन्धित्वहेतोर्व्यतिरेकव्या प्तौ तदसम्बन्धित्वहेतोरन्वयव्याप्तौ दृष्टान्तपरतया व्याख्याय वैपरी त्येन तदुभयव्याप्तिदृष्टान्तपरतयाऽपि व्याचष्टे—शुक्लमिति ॥ यथेत्य त्रापि संयोज्यम् । इतीत्यनन्तरं श्रुताविति शेषः । तदंशस्यापीति । सू र्यमण्डलांशत्वेनोक्तस्यापीत्यर्थः । यद्वा—मण्डलाभिमान्यंशत्वेन उक्त स्यापीत्यर्थः । एवमक्षिपदमपि चक्षुस्तदभिमान्यपम्नष्टाख्यदेवतोभयप रतया व्याख्येयम् । यद्यपितथापीत्यर्थेऽपिशब्दः । अयं भावः—छान्दोग्ये 'अथ यदेतदादित्यस्य शुक्लं भाः सैव ऋक्, अथ यन्नीलं परः कृष्णं तत्सा म. .अथ यदेतदक्ष्णश्शुक्लं भाः सैव ऋक्, अथ यन्नीलं परःकृष्णम्'(छा. १-६, ७.) इत्यधिदैवताध्यात्मप्रकरणगतवाक्यद्वयेनाक्ष्यादित्यमण्डल योरुभयोरपि शुक्लादिरूपत्रयचरणोक्त्या साम्यं सिद्धम् । एवं च चक्षु

ह्युत्वं तेनैवावृतिपरिहारश्च ॥
( २५ ) यथा बाह्यामृतजलस्यामृतसमुद्रस्य चैकत्वं तदंशस्या

पि श्रुत्यन्तरसिद्धशुक्लादिरूपत्रयवत्त्वरूपादित्यमण्डलसाम्यस्य 'त्रिवृदिव वै चक्षुः शुक्लं कृष्णम्' (ऐ.आ.२-१-५.) इत्यैतरेये कथितत्वात्। तत एव तयोरंशांशित्वे सिद्धे तदभिमानिनोरपि तत्सिध्यत्येवेति। तत्त्वप्रदीपे तु-भाष्ये 'शुक्लं कृष्णं कनीनिका' इति न श्रुतिग्रहणम्, किन्तु स्ववचनेनाक्ष्यादित्ययोः साम्यप्रदर्शनमेव। साम्यप्रदर्शकश्रुत्यन्तरं तूदाहर्तव्यमित्यभिप्रेत्य 'शुक्लं कृष्णं कनीनिका' इत्यादित्यसादृश्यात्तदंशत्वमक्ष्णः 'अथ यदेतदादित्यस्य शुक्लं भाः सैव ऋक्' इत्यादिश्रुतेरित्युक्तम्। ऐतरेयश्रुताविवशब्दः एवार्थः। त्रित्वेन वर्तत इति त्रिवृत्। तथा च चक्षुश्शुक्लकृष्णकनीनिकाकृष्णतारावभासिपुरुषरूपेण त्रिवृदेव वा इत्यर्थः। श्रुत्यन्तरमपि ऋक्सामशब्दितार्धनारीनरात्मकवाणीवायुपरतया व्याख्येयम्। परः कृष्णमित्येतत्तु कनीनिका परः कृष्ण इति तत्त्वप्रदीपे व्याख्यातम्। न तादृशीति। प्रमाभिमानिनोर्यादृशी न तादृशीत्यर्थः। अपभ्रष्टाख्यदेवतानां परदेहसम्बन्धप्रयुक्तपरदेहगतदोषैः दुष्टत्वादिति भावः। तासां देवतात्वं तु अन्तर्धानशक्त्येति सुधायामुक्तम्। न केवलं चक्षुर्देवस्य तादृशशक्त्यभावमात्रं, किन्तु तेनांशिना अनुग्राह्यत्वम्। तेनैवावृतेरावरणस्य विषयावृतिभूतस्य तमसो निवृत्तिश्च भवतीत्यर्थः। तथा जीवानामपि देहसम्बन्धात् मत्स्यादिवच्छक्त्यभाव ईश्वरानुग्राह्यत्वं, तत एव बन्धनिवृत्तिश्च भवेत्। न तु मत्स्यादीनां तदसम्बन्धित्वादिति वाक्यशेषः। अनेन सूत्रे ज्योतिश्शब्दः सूर्यतदभिन्नभिन्नांशपर इत्युक्तं भवति ॥

( २५ ) सौत्रादिशब्दगृहीतं दृष्टान्तं विवृणोति—यथा बाह्येति ॥ अण्डाद्बाह्यशुद्धजलाभिमानिवरुणस्यांशिन इत्यर्थः। गृहावरणाद्बाह्यकूपादिजलाभिमानिनो भिन्नत्वात्तद्व्यावृत्त्यर्थममृतेति। बहिरावरणोदकस्य बहुत्वात्समुद्रत्वं, 'अमृतसमुद्रस्य' सप्तमसमुद्राभिमानिनो वरुणांशस्येत्यर्थः। 'एकत्वं' एकविधत्वमेकशक्त्युपेतत्वमिति यावत्। लवणादिसमुद्राभिमानिनां भिन्नांशानामपि सत्त्वात् तद्व्यावृत्त्यर्थमत्राप्यमृतेत्युक्तम्। एवं देहसम्बन्धित्वासम्बन्धित्वहेतोरादिशब्दगृहीतव्यतिरेकान्वयदृष्टान्तावुक्त्वा तयोरेव तच्छब्दगृहीतान्वयव्यतिरेकदृष्टान्तावाह—तदंशस्येति। अमृतजलाभिमानिवरुणांशस्येत्यर्थः। य

पि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव विरोधिनिवृत्तिश्च ।

( २६ ) मोक्षधर्मे च—

यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥
ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट् ।

थेत्यादौ योज्यम् । अपिशब्दार्थः पूर्ववत् । 'श्लेष्मणः' तदभिमान्यप भ्रष्टदेवतायाः इत्यर्थः । तच्छब्दद्वयेन वरुणो गृह्यते । विरोधीति । 'श्लेष्मा पित्तस्य विरोधी पित्तं श्लेष्मणः' इति श्लेष्मविरोधिनः पित्त धातोः निवृत्तिर्भवतीत्यर्थः । अत्र पूर्वत्र च तथेति दार्ष्टान्तिकवाक्या ध्याहार उक्तरीत्या कर्तव्यः ॥

( २६ ) ननु यदुक्तं जीवस्य स्वांशिकर्मानिर्मितदेहसम्बन्धित्वादप भ्रष्टवदीशाधीना प्रवृत्तिः, ततो बन्धनिवृत्तिश्चेति । यच्च यथेत्यादिना दृष्टान्तविवरणेन अभिसंहितं देहासम्बन्धित्वाद्भियद्भूतप्रभाभिमानिव त् मत्स्यादेरीश्वराधीनप्रवृत्त्यभाव इति । तद्द्वयमप्यनुपपन्नम् । आ द्ये मत्स्यादौ व्यभिचारात्, द्वितीये दृष्टान्तासिद्धेरित्यत आह---मो क्षधर्मे चेति ॥ चशब्दः शङ्काव्यावर्तकः । युधिष्ठिरं प्रति भीष्मवचनमे तत् । हे 'विशां' प्रजानां पते अस्मिन् 'लोके' जगति यत्किञ्चिज्जीव जातं देहबद्धं वर्तते, तदीश्वरबुद्धिजैः तन्निमित्तकैः पञ्चभिर्भूतैः 'आ विष्टं' बद्धमित्यर्थः । एवं जीवानां भौतिकदेहसम्बन्धमुक्त्वा ईश्वर स्य तदसम्बन्ध उच्यते—ईश्वरो हीति । हिर्हेतौ, प्रसिद्धौ वा । हेतूने वाह—महदिति । महच्च तद्भूतं च महद्भूतं भूतेभ्यो महदिति वा 'म हत्' पूज्यं अपरिच्छिन्नं 'भूतं' सदा स्थितं निर्विकारं वा । 'ईश्वरो हि जगत्स्रष्टा' इति गीताभाष्ये पठितम् । स चेश्वरो नान्यः, किन्तु 'नारायणः' मुक्ताश्रयो विष्णुः विशेषेण राजत इति 'विराट्' नित्या भिव्यक्तरूपः । 'भूतान्तरात्मा' सर्वजीवान्तर्यामी 'वरदो' मोक्षदः । विज्ञेय इति क्वचित्पाठः । 'सगुणः' ऐश्वर्यादिगुणोपेतः 'निर्गुणः' स त्त्वादिगुणाकार्यदेहः । अपिचौ समुच्चये । पुनर्जीवस्वरूपमुच्यते—भू तेति । तस्येति शेषः । अस्य तमिति यावत् । नृपश्चासावतिशयितस ज्जनश्च, तस्य सम्बुद्धिः नृपसत्तमेति । हे नृपसत्तम भूतसम्बन्धाधीन प्रलयोपेतमकार्यत्वादव्यक्तशब्दितं जीवचैतन्यं तस्य नारायणस्य 'गु

भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ॥
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम ॥ इति ॥

( २७ ) वाराहे च—
अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः ।
अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥

श्रूषुः ' जिज्ञासुर्भवतीति जीवकर्तृकशुश्रूषां प्रति प्रकृतो नारायणः कर्मत्वेन सम्बध्यत इति चन्द्रिकाकारः । प्रमेयदीपिकायां तु--भूतप्रलयस्थानभूता श्रीः ' तस्य ' प्रकृतस्य नारायणस्य शुश्रूषुः ' ये चाप्यक्षरमव्यक्तम् ' इति स्मृतेरिति तत्त्वप्रदीपानुसारात् कृष्णस्य मानुषतनुत्वं कुतो नेत्यवतार्य शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरबुद्धिजानि तत्कथं तानि सम्बध्नीयुः । भूतानि प्रलीयन्ते यस्मिन् तदव्यक्तं तदभिमानिदेवता तस्य शुश्रूषु लिङ्गव्यत्ययः छान्दस इति व्याख्यातम् । तत्र चन्द्रिकोक्तः टीकाभिप्रायः स्वरसः । ईश्वरस्य जीववैलक्षण्यप्रतिपादनार्थे प्रवृत्ते मोक्षधर्मवचने तस्यैव प्रतिपादनीयतया लक्ष्मीवैलक्षण्यप्रतिपादनस्येहासङ्गतत्वात् । तत्त्वप्रदीपप्रमेयदीपोक्तं त्विहानभिप्रेतमपि योजनान्तरमित्यभिप्रेत्योक्तं चन्द्रिकायां तत्त्वप्रदीपे योजनान्तरमुक्तमिति । इतीत्यस्य इति मोक्षधर्म इत्यन्वयः । उक्तेः न व्यभिचारासिद्धी इति वाक्यशेषः । तथा च मोक्षधर्मे जीवानां भौतिकदेहसम्बन्धस्योक्तत्वादाद्यहेतोः भौतिकत्वविशेषणेन मत्स्यादौ व्यभिचारो निरस्तः । द्वितीयस्य स्वांशिकर्मानिर्मितत्वविशेषणात् दृष्टान्ते असिद्धिः परिहृतेति भावः । द्वितीयहेतौ च पक्षे भौतिकत्वविशेषितदेहसम्बन्धित्वरूपविशेष्याभावेन दृष्टान्ते स्वांशिकर्मानिर्मितत्वरूपविशेषणाभावेन विशिष्टाभावरूपहेतुसत्त्वोपपादनाय नञ्द्वयप्रयोग इति ध्येयम् । न च ' ईश्वरो हि ' इत्यादिनांशिनो नारायणस्यैव निर्गुणादिपदैः देहासम्बन्धः उक्तः, नांशानां मत्स्यादीनामिति कथं तत्र हेतुसिद्धिरिति वाच्यम् । ' यत्तद्दृशिवान् ब्रह्म रूपं हयशिरोधरम् ' इति हयग्रीवावतारप्रसङ्ग एवास्योक्तत्वेनास्यावतारविषयत्वात् । नारायणशब्दस्तु अंशानां तदभेदाभिप्राय इति न तदनुपपत्तिः ॥

( २७ ) सूत्रार्थे स्मृतिं चाह—वाराहे चेति ॥ न केवलं श्रुतिसूत्राभ्यामुक्तोऽयमर्थः, किन्तु वाराहे चेति चशब्दार्थः । जीवाः अंशा अपीति चशब्दार्थः । देहयोग्यत्वादित्यनेन मुक्ता अपि आद्यानुमाने पक्षत्वे

अदेहबन्धयोग्यत्वाद्यथा सूर्यप्रभाऽक्षिणी ।
यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता ॥
अनुग्राह्यत्वमन्यस्य तेनैवावृतिरोधनम् ॥ इति ॥ ४८ ॥

(२८) सू—ॐ ॥ असन्ततेश्चाव्यतिकरः ॥ ॐ ॥ ४९ ॥

अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम् ।

(२९) तथा च चतुर्वेदशिखायाम्—

'तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य परमस्य पञ्च

---

न सङ्गृहीताः । अनेन देहसम्बन्धित्वहेतोस्तत्र भागासिद्धिश्च परिहृता । अदेहेति । देहसम्बन्धायोग्यत्वादित्यर्थः । अनुमानद्वये व्युत्क्रमेण दृष्टान्तमाह—यथेति । सूर्यप्रभा चाक्षि चेति विग्रहः । नैकप्रकारे इति शेषः । 'अमृतसमुद्रस्य' शुद्धोदकसमुद्रस्य 'द्विरूपता' भिन्नप्रकारता । 'अन्यस्य' अक्षिश्लेष्मादेः भिन्नांशस्य 'तेनैव' अंशिनैव आवृतिः तमःपित्तादिः । तस्य रोधनं निवृत्तिर्भवतीत्यर्थः । इति वाराहे इत्यन्वयः । सूत्रोक्तमुक्तमिति शेषः ॥

(२८) युक्त्यन्तरेण मत्स्यादीनां जीवानां चैकविध्यं पराकुर्वत्सूत्रं पठित्वा व्याचष्टे—असन्ततेश्चेति ॥ अपूर्णशक्तित्वादित्यनेनासन्ततेरित्यस्य सम्यक्ततिः सन्ततिः पूर्णता शक्तयेति योग्यतयाऽन्वये नञ्सम्बन्धे चापूर्णशक्तित्वादित्यर्थ उक्तः । सूत्रे भाष्ये चशब्दो न केवलमैश्यधीनप्रवृत्तितदभावादिना जीवानां मत्स्यादीनां च नैकविधता, किन्त्वसन्ततेश्चेति युक्तिसमुच्चये । अनुवृत्तपदस्यार्थमाह—जीवस्येति । 'न मत्स्यादिसाम्यम्' सर्वसाम्यमिति । अनेनाव्यतिकर इत्यस्य नैवं पर इत्युक्तस्य व्यत्यासाभाव इति वा, जीवानां मत्स्यादीनां च शास्त्रोक्तस्वरूपस्याव्यत्यास इति वाऽर्थ उक्तो भवति ॥

(२९) मत्स्यादीनां पूर्णशक्तित्वं, न जीवस्येत्येतत्कुत इत्यत आह—तथा चेति ॥ परावरभेदेन चेतनद्वैविध्यमभिधाय तत्र परो नारायण इत्यप्यभिधाय तस्य व्यूहरूपाण्युच्यन्ते—तस्येत्यादिना । 'तस्य' प्रसिद्धस्य 'एतस्य' प्रकृतस्य 'परमस्य' नारायणस्य कृष्णो रामः कपिल इति त्रीणि रूपाणीत्यन्वयः । तस्येत्यादेः सर्वत्रान्वयग्रहणाय द्विर्ग्रहणम् । कृष्णादित्रयं कश्चन व्यूहः । न तु 'पञ्चात्मकः' इत्युक्तसप्तव्यूहान्तर्गम् । केचित्त—कृष्णादिकस्तु न व्यूहः ना

रूपाणि दशरूपाणि सहस्ररूपाण्यमितरूपाणि । तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि सर्वाण्यमितानि । अथावरास्सर्व एवापूर्णाः सर्वे एव बध्यन्ते अथ मुच्यन्ते च केचन ' इति ॥ ४९ ॥

( ३० ) सू—ॐ ॥ आभास एव च ॥ ॐ ॥ ५० ॥

' रूपं रूपं प्रतिरूपो बभूव ' (ऋ. ६-४७-१८.) इति प्र

तिरिक्तव्यूह इति टीकार्थमाश्रित्य सप्तव्यूहान्तर्गतमेवैतदित्याहुः । ' पञ्च ' नारायणाद्यनिरुद्धान्तानि ' दश ' मत्स्यादीनि ' शतं ' नारायणाद्यष्टोत्तरशतनामवाच्यानि । विश्वादीनि सहस्राणि । अजितादीन्यनन्तानि रूपाणि पूर्णानि देशकालाभ्यामनन्तानि गुणतः ' असम्मितानि ' निरुपमानि । अथेति प्रतिज्ञान्तरम् । ' अवराः ' चेतनाः । उच्यन्त इति शेषः । तेषां गुणानाह—सर्वे इति । 'अपूर्णाः' देशकालगुणैः ' बध्यन्ते ' पञ्चभिर्भूतैः । अथ मुच्यन्ते तेभ्य एव । अपूर्णत्वबन्धयोः सर्वजीवसाधारण्याद्दृष्टिः सर्वशब्दप्रयोगः । बद्धेषु सर्वमुक्तौ संसाराभावापत्त्या केच नेत्युक्तम् । न च क्रमेण सर्वमुक्तौ संसाराभावप्रसङ्ग इत्याशङ्कापरिहाराय सर्वे जीवाः अनन्ता इति विपरिणामेनात्रापि संयोज्यम् । सङ्ख्यातोऽनन्ता इत्यर्थः । अपूर्णाः बध्यन्ते अथ मुच्यन्त इत्यनेन जीवानामपूर्णत्वबद्धत्वानित्यत्वमुक्तत्वानि ईश्वराभिष्ठानि सामान्यान्युक्तानि भवन्ति । इति चतुर्वेदशिखायामित्यन्वयः । यत उक्तमतो न हेत्वसिद्धिरिति शेषः ॥

( ३० ) युक्त्यन्तरेणोक्तमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे—आभास एवेति ॥ ' रूपं रूपम् ' इति श्रुत्युदाहरणेनाभासत्वहेतोरसिद्धिः परिहृता । प्रतिबिम्बत्वादिति । प्रतिबिम्बांशकत्वादित्यर्थः । अनेन आभासपदार्थोऽभिहितः । यत इति शेषश्च सूचितः । आभासपदस्य तदधीनसत्ताप्रतीतिकत्वरूपप्रतिबिम्बत्वोपेतार्थकत्वं च भाच सा च भासे आ सर्वकालवर्तिन्यौ भासे आभासे, अस्य परशब्देनान्वयं परमात्माधीने आभासे प्रतीतिसत्ते यस्यासौ पराभास इति सुधोक्तरीत्येति द्रष्टव्यम् । चशब्दः पूर्वोक्तहेतुसमुच्चये । एवं सूत्रेऽपि । एवशब्दस्तु अनाभासत्वव्यावर्तकः, अव्यभिचारसूचकश्च । सूत्रे नैवमित्यनुवृत्तसाध्यांशस्यार्थमाह—न साम्यमिति । अंशत्वाविशेषेऽपि न म

तिबिम्बत्वाच्च न साम्यम् ।

( ३१ ) वाराहे च—

द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।
प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥
प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु ॥ इति ॥

( ३२ ) सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते ।

---

त्स्यादिसाम्यमित्यर्थः । जीवस्येत्यनुवर्तते । साम्यमेकविधत्वम् ॥

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥
(ऋ.६-४७-१८.)

इति ऋङ्मन्त्रस्यायमर्थः–'शृण्वे वीरः'(ऋ.६-४७-१६.) इत्यादिना प्रकृतः त्रिविधजीवसमुदायः अस्य परमेश्वरस्य रूपंरूपं प्रति 'प्रतिरूपः' प्रतिबिम्बो 'बभूव' प्रतिबिम्बो भूत्वा वर्तते। तद्बिम्बरूपमस्य प्रतिबिम्बत्वेनोक्तस्य योग्यजीवस्य मुक्त्यर्थे 'प्रतिचक्षणाय' साक्षात्काराय भवति तद्विषयो भवति । स च ' इन्द्रः ' परमेश्वरः ' मायाभिः ' स्वसामर्थ्यैः इच्छाभिर्वा ' पुरुरूपः ' अनन्तजीवबिम्बरूपः ' ईयते ' ज्ञायते । 'अस्य ' ईश्वरस्य ' शतमनन्तं भवति ' इति वचनात् शतानि अजिताद्यनन्तरूपाणि, एवं दशशतानि विश्वादिसहस्ररूपाणि, एवं शतानि 'नारायणो नरः शौरिः ' इत्यादीनि, दश मत्स्यादीनि, एवं दश बहूनि परादीनि, ' हरयो ' हरिनामकानि रूपाणि ' युक्ताः ' व्यूहशः सन्ति ' हि ' प्रसिद्धमिति ॥

( ३१ ) सूत्रार्थे स्मृतिं चाह—वाराहे चेति ॥ अंश एवांशक इति स्वार्थे कप्रत्ययः । एवमुत्तरत्रापि । ' परे ' स्वरूपांशाः ' प्रादुर्भावाः ' मत्स्याद्यवतारा इत्यर्थः । ननु जीवानां प्रतिबिम्बांशत्वं मत्स्यादीनां तु स्वरूपांशत्वमिति कुतः ?, उभयोः स्वरूपांशत्वं किं न स्यादित्यत आह—प्रतिबिम्बेष्विति । यत इति शेषः । सर्वसाम्ये स्वरूपत्वमेव स्यादतोऽल्पेत्युक्तम् । ' स्वरूपाणि ' स्वरूपांशरूपाणि प्रादुर्भावात्मकानि मत्स्यादीनि ' इतराणि ' अल्पसाम्यवद्भिन्नानि यावत्साम्यवन्तीत्यर्थः। तुशब्दोऽवधारणे । इति वाराह इत्यन्वयः । सूत्रार्थ उक्त इति शेषः ॥

( ३२ ) ननु न जीवस्य परमात्मप्रतिबिम्बांशत्वं युक्तम्, जीवस्यक

जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवेः ॥
इति पैङ्गिश्रुतिः ॥
( ३३ ) 'यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्' (प्र.३-३.)
इति च श्रुतिः ॥ ५० ॥

——:*:——

पातिरिक्तप्रतिबिम्बोपाध्यभावादित्यत आह—सोपाधिरिति ॥ इति शब्दोऽध्याहार्यः । 'ईयते' ज्ञायते । 'इन्द्रचापः' तत्संज्ञका वृष्टिसूचक धनुराकृतिः 'रवेः' सूर्यस्य तत्तेजसो यथा निरुपाधिप्रतिबिम्बः बिम्बातिरिक्तोपादानोपाध्यभावात्, अत एव न तस्य सूर्यात्यन्तसादृश्यम्, तथा जीवः परस्य हरेः 'अनुपाधिः' स्वरूपातिरिक्तोपाधिरहितप्रतिबिम्ब इत्यर्थः । अत्र दृष्टान्ते बिम्बातिरिक्तोपाध्यभावः । दार्ष्टान्तिके तु प्रतिबिम्बातिरिक्तोपाध्यभावः । अतिरिक्तोपाध्यभावस्तु उभयत्र सम इति द्रष्टव्यम् । सोपाधिप्रतिबिम्बस्य दर्पणादिप्रतिबिम्बितत्वं प्रसिद्धमेवेति नोदाहृतम् । केचित्तु—सोपाधिप्रतिबिम्बस्य इन्द्रचाप उदाहरणं, तस्य च मेघमण्डलं वा सूर्यतेजो वोपाधिः । उपादानं च तदेव । निरुपाधिप्रतिबिम्बस्य तु जीव उदाहरणमिति यथाशब्दावृत्त्या वाक्यद्वयमपि दृष्टान्तपरतया योजयन्ति । तत्तु चन्द्रिकाननुगुणत्वान्मूलाभावाच्चोपेक्ष्यम् । अनेन सूत्रपञ्चकेन जीवस्य मत्स्यादिवत्स्वरूपांशत्वाभावोक्त्याऽनंशत्वश्रुतेः स्वरूपांशत्वाभावविषयत्वेन गतिरुक्ता भवति । श्रुतिरित्यस्य जीवस्य प्रतिबिम्बत्वमुक्त्वाऽतिरिक्तोपाध्यभावमपि वक्तीति शेषः । अतो नातिरिक्तोपाध्यभावेऽपि प्रतिबिम्बत्वहानिरिति भावः॥
( ३३ ) जीवस्य निरुपाधिप्रतिबिम्बत्वे छायारूपदृष्टान्तान्तरप्रतिपादकं षट्प्रश्नवाक्यं पठति—यथेति ॥ यथा पुरुषस्य देहस्य छाया 'पुरुषे' देहे 'आतता' तदधीना तत्प्रतिरूपा भवतीति यावत् । तद्वत् 'एतस्मिन्' पुरुषोत्तमे विष्णौ 'एतत्' प्रतिबिम्बरूपं विश्वं जीवजातं वा 'आततं' आयत्तं तदधीनतया वर्तते तत्प्रतिबिम्बभूतमित्यर्थः तत्त्वप्रदीपोक्तो ध्येयः । अत्र सर्वस्यापि शरीरस्य छायया प्रस्तत्वात् उपहितानुपहितांशद्वयाभावाच्छायाया इन्द्रचापवन्निरुपाधिप्रतिबिम्बत्वोक्तिः । छायोपादानं तु नीरूपि द्रव्यान्तरमिति चन्द्रिकाकाराः । इति चेति । इति श्रुतिश्चोक्तार्थमाहेत्यर्थः । चस्समुच्चये ॥१८॥

॥ इति अंशाधिकरणम् ॥

१९. अधिकरणम् ॥

( १ ) प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह—

सू—ॐ ॥ अदृष्टानियमात् ॥ ॐ ॥ ५१ ॥

अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥ ५१ ॥

( २ ) सू—ॐ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ॐ ॥ ५२ ॥

१९. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवस्येश्वरप्रतिबिम्बविषयश्रुतिविरोधः परिह्रियते। विरुद्धश्रुतिद्वयस्येह भाष्ये अनुपन्यासेऽप्यव्यवहितसूत्रभाष्ये'रूपं रूपम्' इत्यस्योदाहृतत्वात् सैका व्यवहितातीतसूत्रभाष्ये उदाहृता 'नैवांशो न सम्बन्धः' ( भाल्लवेय. ) इतिश्रुतिरन्या संशयबीजभूतेति द्रष्टव्यम् । द्वितीयश्रुतौ स्फुटमप्रतिबिम्बत्वस्याप्रतिपादनात् टीकाया मनुमितत्वोक्तिः । न जीवाः भगवत्प्रतिबिम्बाः तथा श्रुतेः, न जीवा एकप्रतिबिम्बाः अन्योन्यं भेदवत्त्वाद्दर्पणादिप्रतिबिम्बितघटपटवदित्यनुमानाच्च । अतः सयुक्तिकानुमितश्रुतिविरोधात्प्रतिबिम्बत्वश्रुतिरप्रमाणमिति नोक्तसमन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतारयति—प्रतिबिम्बानामिति ॥ प्रतिबिम्बत्वेनोक्तानां जीवानां तदभ्युपगम्य तेषां 'मिथः' परस्परं 'वैचित्र्ये' सुरनरतिर्यगादिरूपभेदे 'कारणं' कारणान्तरं बिम्बवैचित्र्यादन्यत् । यद्वा—अप्रतिबिम्बत्वापेक्षयाऽन्यत् । अथ वा—ईशशक्त्यपेक्षया कारणान्तरं अदृष्टादिवैचित्र्यमाह सूत्रकार इत्यर्थः । विद्याकर्मेत्युक्त्या अदृष्टशब्दो विद्योपलक्षकतया व्याख्यातः । तेन 'यथा प्रज्ञं हि सम्भवाः' इत्यादिश्रुतिः सूचिता। वैचित्र्यादित्युक्त्या अनियमशब्दो व्याख्यातः । पुनर्वैचित्र्यमित्युक्त्या अनियमपदस्यावृत्तिस्सूचिता । पूर्वपूर्वादृष्टवैचित्र्यादुत्तरोत्तरादृष्टवैचित्र्योपपत्तेः नादृष्टवैचित्र्यासम्भावनाशङ्केत्याशयेन-अनादीत्युक्तम् । उपपद्यते जीवानां यत इति शेषः । अनेन यत एकेश्वराभासानामपि जीवानामदृष्टानियमाद्देवदानवादिवैचित्र्यमुपपद्यते, अतो न तदन्यथाऽनुपपत्त्या एकस्य ज्ञस्य प्रतिबिम्बत्वमुपेत्यान्येषां तदभावो वाच्यः, किन्तु सर्वोऽपि ज्ञः पराभास इति सूत्रार्थ उक्तो भवति ॥

( २ ) देवदानवादिवैचित्र्यस्य रागद्वेषमोहाख्यदोषनिमित्तकत्वोपपत्तेः किमदृष्टकारणकत्वकल्पनयेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अभिसन्ध्येति ॥ न केवलं सुरनरादिवैचित्र्यं, किन्तु इच्छादि

इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव। चशब्देन प्रतिक्षणवैचित्र्यं च ॥ ५२ ॥

( ३ ) सू—ॐ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ॐ ॥ ५३ ॥

न स्वर्गनरकभूम्यादिप्रदेशविशेषाद्वैचित्र्यम्, तत्प्रा

---

वैचित्र्यं चेति चशब्दार्थः। 'इच्छा' रागः। आदिशब्देन मोहो गृह्यते। वैचित्र्यमिति अनुवृत्तानियमपदव्याख्यानम्। एवमित्युक्तं व्यनक्ति—अदृष्टादिति। अदृष्टवैचित्र्यादित्यर्थः। भवतीति शेषः। न कारणान्तरादित्येवार्थः। नन्वस्माभिरपि सिद्धान्तिवत्पूर्वपूर्वदोषवैचित्र्यमेव उत्तरोत्तरदोषवैचित्र्ये कारणमित्यङ्गीकारान्न काऽप्यदृष्टवैचित्र्यापेक्षे त्यतः प्रवृत्तं चशब्दं व्याचष्टे—चशब्देनेति। प्रतिक्षणेति। पुरुषविशेषनिष्ठप्रतिक्षणवैचित्र्यमित्यर्थः। सङ्गृहीतमिति शेषः। चः समुच्चये। अनेन—यतो न केवलमाभासे देवदानवादावनियमोऽदृष्टानियमात्, किन्तु अभिसन्धिपदोक्तरागादिष्वनियमोऽपि तत एव भवति, न रागाद्यनियमात्। अतो न तस्मात्सुरासुरादिवैचित्र्यं वाच्यम्। न केवलमभिसन्ध्यादिषु वैचित्र्यमदृष्टानियमात्, किन्त्वेकपुन्निष्ठप्रतिक्षणवैचित्र्यं च 'एवं' अदृष्टानियमादेव भवति, न कारणान्तरादिति सूत्रार्थ उक्तो भवति। दोषवैचित्र्याभावेऽपि एकस्मिन् पुंसि प्रतिक्षणवैचित्र्यदर्शनेन कारणान्वेषणे तत्कारणतयाऽदृष्टवैचित्र्यस्यैवाङ्गीकार्यत्वावश्यकत्वात् जीववैचित्र्येऽपि तदेव कारणमिति भावः॥

( ३ ) ननु स्वर्गस्थाः सुराः, भूमिस्थाः नराः, इत्यादिरूपेण स्थानवैचित्र्यादेव सुरनरादिवैचित्र्योपपत्तेः किमदृष्टवैचित्र्येणेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—प्रदेशादिति॥ अत्र प्रदेशपदं तद्वैचित्र्यपरमित्याह—स्वर्गेति। 'प्रदेशः' स्थानं 'वैचित्र्यं' सुरनरादिभेदः। प्रतिबिम्बानामिति वाच्यमिति शेषः। कुतो न वाच्यमित्यतः प्रवृत्तमन्तर्भावादित्येतत्तात्पर्यतो व्याचष्टे—तत्प्राप्तेरिति। विचित्रप्रदेशप्राप्तेरप्यदृष्टसापेक्षत्वादित्यर्थः। अदृष्टस्यापेक्षा यस्यामिति विग्रहः। न केवलमाभासवैचित्र्यस्येत्यपिशब्दार्थः। निष्कारणस्थानवैचित्र्यस्यैवानुपपत्त्या तत्कारणान्वेषणे अन्ततोऽदृष्टस्यैव तत्कारणत्वाऽङ्गीकार्यत्वादिति भावः। अनेन प्रदेशवैचित्र्यकारणस्यादृष्ट एवान्तर्भावात्तस्यैतद्रूपत्वादिति सूत्रखण्डार्थ उक्तो भवति। युक्त्यन्तरमाह—

तेरदृष्टापेक्षत्वात् । एकदेशस्थितानामेव वैचित्र्यद
र्शनाच्च ॥ ५३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये द्वितीयस्याध्यायस्य
तृतीयः पादः.

॥ ॐ ॥

एकेति । एकस्थाने स्थितानामेव सुरनरादिजीवानामित्यर्थः । मिथ इति शेषः। तथा च इतोऽप्यदृष्टवैचित्र्यं कारणतयाऽङ्गीकार्यमिति भावः। अनेनैकस्थानस्थितानां मिथो वैचित्र्यकारणस्यादृष्ट एवान्तर्भावादिति सूत्रखण्डस्यार्थान्तरमुक्तं भवति । अनेन 'न सम्बन्धः' इति प्रतिबिम्बत्वनिषेधकश्रुतेः स्वरूपातिरिक्तोपाधिनिमित्तकप्रतिबिम्बत्वाभावविषयत्वान्न तद्विरोधो जीवप्रतिबिम्बत्वश्रुतेरित्युक्तं भवति ॥ १९ ॥

॥ इति अदृष्टाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां द्वितीयाध्यायस्य तृतीयः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन। 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे भूतेभ्यो ऽण्डमण्डस्यान्तस्त्विमे लोका अथ प्राणा एवानादयः प्राणा नित्याः' इति काषायणश्रुतौ प्राणानामनुत्पत्तिश्श्रूयते।

( २ ) नोपादानं हीन्द्रियाणां अतोऽनुत्पत्तिरिष्यते।
उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते ॥
इति भविष्यत्पर्वणि।
'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु.२-१-३.) इति च।

---

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति–युक्तीति॥ सिद्धान्त्यभिहितानां श्रुतीनां युक्तिसहिताभिः श्रुतिभिर्विरोधं 'अनेन' चतुर्थपादेन निराकरोति सूत्रकार इत्यर्थः। अत्राधिकरणे इन्द्रियोत्पत्तिविषयश्रुतिविरोधः परिह्रियते। तत्र किमिन्द्रियाण्युत्पत्तिमन्ति न वेति संशयबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च दर्शयति—प्राणा इति ॥ 'इदं' अस्य जगतः 'अग्रे' प्रलये 'प्राणाः' इन्द्रियाण्येव 'आसुः' बभूवुरित्यर्थः। 'तेभ्यः' इन्द्रियेभ्यः पञ्च 'भूतानि' आकाशादीनि जज्ञिरे। भूतेभ्यो ब्रह्माण्डं, अण्डस्यान्तः 'इमे' चतुर्दश लोका आसुः। यतएवं 'अथ' तस्मात्सर्वकारणत्वेन प्रलयेऽवस्थानात् प्राणाः 'अनादयः, उत्पत्तिशून्या एव' अतएव नित्या इत्यर्थः। अत्रानादित्वोपपादनाय पूर्वांशोदाहरणम् ॥

( २ ) एव मिन्द्रियाणामनुत्पत्तिश्रुतिमुपन्यस्य तस्याः प्राबल्यायानुत्पत्तावुपादानशून्यत्वादिति युक्तिमभिप्रेत्य तस्या असिद्ध्यादिपरिहाराय स्मृति माह—नेति ॥ 'हि' यतः 'उपादानं' परिणामिकारणं, 'अतो' निरुपादानत्वात्। ब्रह्मवदित्यन्वयदृष्टान्तसम्भवेऽपि व्यभिचारशङ्कानिरासायोक्तहेतोर्व्यतिरेकव्याप्तिं दर्शयति—उपादानकृतेति। तन्निमित्तेत्यर्थः। 'सर्वलोकेषु' घटादिकार्येषु। इतीति। युक्तिरुक्तेति शेषः। इतीति। प्राणानामुत्पत्तिश्च श्रूयत इति सम्बन्धः। श्रुतिस्त्वग्रनये व्याख्याता ॥

( ३ ) अत उच्यते--

सू—ॐ ॥ तथा प्राणाः ॥ ॐ ॥ १ ॥

यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥ १ ॥

( ४ ) सू—ॐ ॥ गौण्यसम्भवात् ॥ ॐ ॥ २ ॥

अनादित्वश्रुतिर्गौणानादित्वापेक्षया, मुख्यासम्भवात् ।

( ५ ) नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः ।

---

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ यतः श्रुतिविरोधः संशयकारणमस्ति अतस्तत्परिहाराय सिद्धान्त उच्यते सूत्रकृतेत्यर्थः । सूत्रे तथाशब्दः पूर्वोक्तयुक्तीनां साध्यस्य च परामर्शक इत्यभिप्रेत्य सूत्रं व्याचष्टे—यथेति । यैर्हेतुभिरित्यर्थः । 'उत्पद्यन्ते' उत्पत्तिमत्त्वेन सिध्यन्ति 'तथा' तैरेव हेतुभिः 'उत्पद्यन्ते' पराधीनविशेषावाप्तिरूपोत्पत्तिमन्त एव सिध्यन्तीत्यर्थः । हेतवस्तु वियदधिकरण एवोक्ताः । तेजआदेर्ब्रह्मान्यकार्यत्वे घर्मात्स्वेददृष्टिवत् अत्र पुनः प्राणानां तदन्यकार्यत्वे प्रापकहेत्वभावेन विप्रतिपत्त्यभावात् अत एव प्राणानां कारणस्याविवादात् सिद्धवत्कृत्य परमात्मन इत्युक्तम् ॥

( ४ ) नन्वाकाशोत्पत्तिसिद्ध्यर्थमनुत्पत्तौ श्रुत्यभावाख्यो हेतुरुक्तः । न चासाविह सम्भवति । 'प्राणाः' एवेत्यनुत्पत्तिश्रुतेर्विद्यमानत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—गौणीति ॥ प्रतिज्ञांशं व्याचष्टे—अनादीति । 'प्राणा अनादयः' ( काषायण. ) इति अनादित्वप्रतिपादक श्रुतिरित्यर्थः । गौणानादित्वापेक्षयेति । अमुख्यानादित्वविवक्षयेत्यर्थः । प्रवृत्ता यत इति शेषः । अतो मुख्यानुत्पत्तौ श्रुत्यभाव इति प्रतिज्ञावाक्यशेषश्च कर्तव्यः । कुत इत्यतः प्रवृत्तमसम्भवादिति हेतुसाधकहेतुं व्याचष्टे--मुख्येति । श्रुतेर्मुख्यानुत्पत्तिवाचित्वासम्भवात् । सोऽपि कुतः ? इन्द्रियाणां मुख्यानुत्पत्तेरसम्भवात् 'एतस्मात्' इत्यादिश्रुत्यन्तरासम्भवाच्च, अकारवाच्याद्विष्णोः सम्भवाच्चेत्यर्थः ॥

( ५ ) ननु प्राणानां गौणानादित्वं किं नाम, यत्परा श्रुतिर्भवेत् । कथं च गौणार्थग्रहणहेतुर्मुख्यासम्भवः । प्रत्युत उत्पत्तिरेव न सम्भवत्युपादानाभावादित्यत आह--नित्यानीति ॥ 'सर्वशः' सर्वाणीन्द्रियाणि 'सौक्ष्म्येण' सूक्ष्मेण रूपेण 'नित्यानि' चकारादनादीनि च ।

तेषां भूतैरुपचयः सृष्टिकाले विधीयते ॥
परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता ॥

न च सृष्टिवाक्यविरोधः। 'हि' यतः 'तेषां' इन्द्रियाणां सृष्टिकाले 'भूतैः' पञ्चमहाभूतैः 'उपचयो' वृद्धिः स्थूलभावो 'विधीयते' परेण क्रियते। तर्ह्युपचयात्पूर्वमसमर्थानीन्द्रियाणि न संसारकारणानि स्युरित्याशङ्क्य तत्परिहाराय—सृष्टिकाल इत्याह। प्रळये वियुक्तांशानां तेषां प्रतिसृष्टिकालं उपचयो विधीयत इत्यर्थः। तथा च यस्मिन् लयकालेऽनुपचयः तदा न समर्थान्येव। यस्मिंस्तु सृष्टिकाले समर्थानि तदाऽस्त्येवोपचयः। स च न कादाचित्कः, किन्तु प्रतिसृष्टिकाले भावीति नोक्तदोष इति भावः। मुख्यानादित्वासम्भवे हेतुमाह—'परेण' परमात्मनेति। साम्यं स्वातन्त्र्याविभक्तत्वादिधर्मेण। कस्य स्यात्, न कस्यापि भवेदित्यर्थः। मुख्यनित्यतेति। देहस्वरूपविशेषैः अविकृतत्वरूपेत्यर्थः। उपलक्षणमेतत्। मुख्यानादिता चेत्यपि द्रष्टव्यम्। अनेन सूक्ष्मरूपेण अनादित्वमेव गौणानादित्वम्। अनादित्वश्रुतिरपि तत्परैव। जन्मश्रुतिस्तूपचितस्थूलेन्द्रियपरा। भूतान्येवोपादानानीति न तदभावोऽपि। स्वातन्त्र्याद्यापत्तेः न मुख्यानादित्वादिसम्भवोऽपीति सर्वस्योत्तरमुक्तं भवति। परेण साम्येत्यनेन यावद्विकारमित्यादियुक्तयो गृहीता भवन्ति। भविष्यपर्वणीत्यस्य उक्तत्वादित्यध्याहारेणानादीति पूर्ववाक्येनान्वयः। नन्विन्द्रियाणां भूतैरुपचयाभ्युपगमे

तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्।
तैजसानीन्द्रियाण्याहुः ॥

इत्यादितैजसाहङ्कारकार्यत्ववाचिभागवतादिवाक्यविरोध इति चेत्—न, भूतैरुपचयोक्तावप्यत्र अहङ्कारकारणकत्वस्यानिषेधात्। तथाऽपि

तथा विशिष्टकार्यत्वाद्देवा वैकारिकाः स्मृताः।
अतिजाज्वल्यमानत्वात्तैजसानीन्द्रियाण्यपि ॥
तामसानि तु भूतानि ततस्तावदभूत्त्रयम् ॥

इति पाद्मस्मृतौ भूतानां तामसाहङ्कारकार्यत्वोक्तेः। 'तेभ्यो भूतानि जज्ञिरे' (कात्रायण.) इति श्रुतौ च तेषां प्राणशब्दितेन्द्रियकार्यत्वोक्तेर्विरोध इति चेत्—न, अहङ्कारोत्पन्नभूतानामपि सूक्ष्मप्राणैरुपचयाभ्युपगमात्।

इति हि भविष्यत्पर्वणि ॥ २ ॥

( ६ ) सू—ॐ ॥ प्रतिज्ञानुपरोधाच्च ॥ ॐ ॥ ३ ॥

'स इदं सर्वमसृजत' (तै.२-६.) इति ॥ ३॥

——:✻:——

२. अधिकरणम् ॥

( १ ) 'द्विधा ह्येवेन्द्रियाणि नित्यान्यनित्यानि च । तत्र नित्यं

---

ननु तथाऽपि 'तेषां भूतैरुपचयः' इतीन्द्रियाणां भूतकार्यत्वोक्तेः 'तेभ्यो भूतानि' इति भूतानामिन्द्रियकार्यत्वोक्तेः विरोध इति चेत्—न, यतः 'तेभ्यो भूतानि' इति वाक्यं भूतेभ्योऽपि पूर्वमुत्पन्नानां महदादितत्त्वाभिमानिनां देवानां इन्द्रियादिव्यापारैः भूतोत्पत्तिपरम्, न तु तत्त्वरूपेन्द्रियैः। यथोक्तं तत्त्वप्रदीपे—तात्त्विकदेवोत्तमानां प्राकृते देहाधिष्ठितेन्द्रियव्यापारपूर्वकत्वाद्भूतसृष्टेः भूतकारणत्वव्यपदेशोपपत्तिरिति। यद्वा—सूक्ष्मप्राणैरिति टीकोक्तेः तत्त्वरूपेन्द्रियैरेव सूक्ष्मैर्भूतानामुपचयः। 'तेषां भूतैरुपचयः' इत्यनेन तु सूक्ष्मसृष्टिकाले जीवेन्द्रियाणां भूतसूक्ष्मैरेवोपचयः कथ्यते इति न तत्त्वरूपेन्द्रियाणां, तेषां पूर्वोत्पन्नत्वेन पश्चादुत्पन्नभूतैरुपचयायोगात् । न च जीवेन्द्रियाणामपि कथं भूतैरुपचयः, तद्कार्यत्वादिति वाच्यम् । जीवानां सूक्ष्मसृष्ट्युक्तेरेव तज्ज्ञापकत्वात् । यद्वा—तत्त्वरूपाणां अहङ्कारोत्पन्नानां भूतानां सूक्ष्मप्राणैरुपचयवत् तत्त्वरूपेन्द्रियाणामपि भूतसूक्ष्मैरुपचयोऽस्तु, अन्योन्यसूक्ष्मैरुपचये बाधकाभावात् ॥

( ६ ) वियदधिकरणोक्तप्रतिज्ञाहानियुक्त्या इन्द्रियाणां उत्पत्तिं समर्थयत्सूत्रं पठित्वा व्याचष्टे—प्रतिज्ञेति ॥ इतीत्यन्तस्य सूत्रेणान्वयः। चशब्दोऽनेन स्मारितप्रतिज्ञाहान्याख्यपूर्वोक्तयुक्तिसमुच्चये, विभक्तत्वादियुक्तिसमुच्चये वा । हेतोः पूर्वेणान्वयः । तथा च प्राणानां उत्पत्त्यङ्गीकारे 'स इदम्' इति प्रतिज्ञानुपरोधात् अनुपहतेस्तदनुसाराच्चोत्पत्तिमन्तः प्राणा इति सूत्रार्थः । 'स इदम्' इति श्रुतिस्तु वियदधिकरणे व्याख्याता ॥ १ ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥

——:✻✻:——

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे मनोजन्मविषयश्रुतिविरोधः परिह्रियते । पूर्वं

मनोऽनादित्वात् । न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्य न्यानि ' इति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते ।

( २ ) अत आह—

सू—ॐ ॥ तत्प्राक् श्रुतेश्च ॥ ॐ ॥ ४ ॥

' मनस्सर्वेन्द्रियाणि च ' ( मु. २-१-३. ) इति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते ।

---

पक्षयति—द्विधेति ॥ अत्र मनसोऽनुत्पत्तिरिति पूर्वपक्षप्रतिज्ञा । कुत इत्यतः तत्र हेतुत्वेन द्विधेत्यादिकं योजनीयम् । यत इति शेषः । तथा च यतो गौपवनश्रुतौ मनसोऽनुत्पत्तिः 'श्रूयते' प्रतिपाद्यते अत इति योजना । न चात्र नित्यत्वमेवोच्यते, नानुत्पत्तिरिति वाच्यम् । नित्यमित्यस्यानुत्पत्तिमदित्यर्थाश्रयणात् । न च साध्याविशेषः, अनादित्वादित्यस्य अनादिपुरुषसम्बन्धित्वादित्यर्थाश्रयणात् । यद्वा—अनादित्वादित्यस्यैव अनुत्पत्तिमत्त्वादित्यर्थाश्रयणादत एवानुत्पत्तिसिद्धिः । तत एव टीकायां ' नित्यं मनोऽनादित्वात् ' इति श्रुतेरिति हेतुवाक्यमपि गृहीतम् । ननु ' एतस्मात् ' इति श्रुत्यनुसारेणेन्द्रियानुत्पत्तिश्रुतिवदनादित्वश्रुतेः गौणार्थत्वं किं न स्यादित्यत आह--सयुक्तिकेति । युक्त्यभिधानसहितेत्यर्थः । अनुत्पत्तिश्रुतेः विशेषणमेतत् । द्विधैवेति सम्बन्धः । हिशब्दः प्रसिद्धौ । ' तत्र ' नित्यानित्ययोर्मध्ये । तथा च ' द्विधा ' इति वाक्ये मनोभिन्नेन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानात् अनादित्वहेतोः असिद्धिशङ्कायां 'न ह्यमनाः' इति विपर्ययपर्यवसानसूचितात्कदाचिन्मनोहीनेन अनादिपुरुषेण अवस्थातव्यं स्यात्, तथात्वे च तदा संसाराभावप्रसङ्गादित्यनिष्टप्रसङ्गाभिधानाच्च युक्तिरुक्तेति भावः । अनेन युक्तियुक्तानादित्वश्रुतेः प्राबल्यात्तद्विरोधेनोत्पत्तिश्रुतेरप्रामाण्यात् न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वसिद्धिरिति पूर्वपक्षो दर्शितः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इतीति । इति श्रुतावन्येन्द्रियेभ्यः पूर्वोत्पन्नतयोक्तत्वान्नानुत्पत्तिर्मनसो युज्यत इत्यन्वयः । नेत्यादिना प्रतिज्ञाध्याहारो दर्शितः । अत्रोत्पन्नत्वेनोक्तत्वमेव लिङ्गम् । पूर्वोत्पन्नत्वं तु पृथगभिधानस्य वैयर्थ्यशङ्कापरिहारकमिति ध्येयम् ॥

( ३ ) पूर्वं मनस्समुत्पन्नं ततोऽन्येषां समुद्भवः।
तदनुत्पत्तिवचनमल्पोपचयकारणात् ॥

( ३ ) ननु कुतो मनसः पूर्वोत्पत्तिस्सिध्यति । न च श्रुतौ पूर्वनिर्देशात्तत्सिद्धिः, तस्याप्रयोजकत्वात् । कथं चोत्पत्त्यङ्गीकारे श्रुतियुक्तिविरोधपरिहार इत्यतः तदुत्तरत्वेन चशब्दं व्याचष्टे—पूर्वमिति ॥ अन्येन्द्रियेभ्यः पूर्वमित्यर्थः । 'समुत्पन्नं' उपचितरूपेणेति शेषः । 'ततो' मनउत्पत्त्यनन्तरं 'अन्येषां' मनोभिन्नेन्द्रियाणां 'समुद्भवः' समुत्पत्तिः । तर्हि श्रुत्यादिविरोध इत्यत आह—तदिति । यतस्तस्य मनसोऽनुत्पत्तिवचनं नित्यत्ववचनं अनादित्ववचनं वा 'अल्पोपचयकारणात्' इतरेन्द्रियवन्मनसो भूतादिबहुभागैरुपचयाभावान्निमित्तादनेन ज्ञापितादितरेन्द्रियवत्प्रलयेऽपि सूक्ष्मरूपेण सत्त्वाद्धेतोरुपपद्यते । एवं 'तदनुत्पत्तिवचनं' विशिष्य मनसो नित्यत्वाभिधानरूपा युक्तिः 'अल्पोपचयकारणात्' अन्येन्द्रियेभ्योऽल्पोपचयान्निमित्तादुपपद्यते । अतो न तद्विरोध इत्यर्थः । अनेनानादिनित्यत्ववचनस्य सूक्ष्मरूपविषयत्वमुक्तं भवति । न च सूक्ष्मरूपेणानादिपुरुषसम्बन्धिनोऽपि मनसः कदाचिदेवोपचयरूपोत्पत्त्यङ्गीकारे उपचयात्पूर्वं संसाराभावप्रसङ्गः, उपचितमनस एव संसारबीजत्वादिति वाच्यम् । प्रतिसृष्टिकालं उपचयसत्त्वात् तदैव हि संसारो, न प्रलये, तदा उपचयाभावेऽपि दोषाभावादित्युक्त एव परिहारः । 'वायुप्रोक्तवचनम्' वायुप्रोक्ताख्यग्रन्थवचनं सौत्रचशब्देन सूचितमित्यर्थः । अनेन—नानुत्पत्तिर्मनसो युज्यते । कुतः ? 'तच्छ्रुतेः' 'मनस्सर्वेन्द्रियाणि च' इत्युत्पत्तिश्रुतिसद्भावात् । न च छत्रिन्यायेन इयमुपचरितेति वाच्यम् । 'तत्प्राक्छ्रुतेः' तस्य मनसः पृथग्जन्मश्रुतेः । अस्याः राजा छत्री याति, अन्ये छत्रिणो यान्तीतिवद्विशेषश्रुतित्वेनेन्द्रियाणि जायन्त इत्येतावन्मात्रोक्तिरूपसामान्योक्तित्वाभावादिति भावः । न चेतरेन्द्रियवन्मनसोऽप्युत्पत्तिमत्त्वे पृथगुत्पत्तिश्रुतिर्व्यर्थेति वाच्यम् । 'तत्प्राक्छ्रुतेश्च' तच्छ्रुतेश्च मनसः पृथगुत्पत्तिश्रुतेरपि तेभ्योऽन्येभ्यः प्रागुत्पन्नत्वाभिप्रायेणोपपन्नत्वात् । ननु कुतो मनसः पूर्वोत्पत्तिः ज्ञायते, श्रुतौ प्राङ्निर्देशमात्रस्य नियामकविशेषप्रमाणं विना प्रागुत्पन्नत्वानिश्चायकत्वा

इति वायुप्रोक्तवचनं चशब्देन सङ्गृहीतम् ॥ ४ ॥

—*—

३. अधिकरणम् ॥

( १ ) 'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतम् । इति ।
वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठते'

---

दित्याशङ्कापरिहारकवायुप्रोक्तवचनसङ्ग्रहाय चशब्द इति सूत्रार्थ उक्तो भवति ॥ २ ॥

॥ इति तत्प्रागधिकरणम् ॥

—*:*:*—

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे वागुत्पत्तिश्रुतेरनुत्पत्तिश्रुत्या विरोधः परिह्रियते । पूर्वपक्षयति—नित्ययेति ॥ वाचोऽनुत्पत्तिरेव भवेत् । कुतः? यतो 'नित्यया' इति पौष्यायणश्रुतौ 'वाग्वाव नित्या न ह्येषोत्पद्यते' इति वाक्येन वाचोऽनुत्पत्तिरुच्यते इत्यन्वयः । अत्र नित्यत्वमविनाशित्वं, तत्र हेतुः—न हीति । नन्वनुत्पत्तिवदुत्पत्तेरपि 'सर्वेन्द्रियाणि च' इति श्रुत्युक्तत्वात् सत्प्रतिपक्षितेयं श्रुतिर्न निर्णयकरीत्यत आह—सयुक्तिकमिति । 'अस्यां हि' इति वाक्यबोध्यनित्यवेदाश्रयस्यानित्यत्वासम्भवरूपतर्कसाहितश्रुत्याश्रयत्वरूपयुक्तिसाहित्येनेत्यर्थः । उच्यत इति क्रियाविशेषणमेतत् । तथा चानुत्पत्तिश्रुतेः अधिकबलत्वात् न सत्प्रतिपक्षितत्वमिति भावः । ननु

नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदम् । इति ॥
श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः ॥

इति पैङ्गिब्राह्मणे 'नित्यया' इति मन्त्रमुदाहृत्य तद्गतनित्यानित्यशब्दयोः श्रुतिस्मृतिविषयत्वेन व्याख्यातत्वात् तत्समाख्यानात् सामान्यवाक्शब्दस्य विशेषार्थकल्पनोपपत्तेरुत्पत्तिश्रुत्यानुकूल्याच्चात्रत्यवाक्शब्दो वेदपर एव, न वागिन्द्रियपरः । तथा च नेयं वागनुत्पत्तिसाधिकेत्यतोऽप्याह—सयुक्तिकमिति । श्रुतिविशेषणमेतत् । तथा च विशेषश्रुतित्वाख्ययुक्तिसहितश्रुतावित्यर्थः । तथा च 'अस्यां हि श्रुतिरवतिष्ठते' इति वाक्यशेषे वेदे असम्भाव्यमानवेदाश्रयत्वोक्त्या तद्बलात् 'वाग्वाव' इति श्रुतेः विशेषश्रुतित्वात् अत्रत्यवाक्शब्दो वागिन्द्रियपर एव, न वेदपर इति भवत्येवेयं श्रुतिः अनुत्पत्तिसाधिकेति भावः ।

इति सयुक्तिकं पैष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते ।
(२) अतो ब्रवीति—

सू—ॐ ॥ तत्पूर्वकत्वाद्वाचः ॥ ॐ ॥ ५ ॥

नन्वियं श्रुतिः इतरेन्द्रियवत् वाचस्सूक्ष्मरूपानादित्वपरा किं न स्यात् । न च नित्याश्रयत्वयुक्तिविरोधः । तस्या अपि सूक्ष्मरूप नित्यत्वेनोपपत्तेः । एवमुत्पत्तिश्रुत्यानुकूल्यादुपचयोऽप्यस्तीत्यतो वाऽऽह—सयुक्तिकमिति । यतः 'सयुक्तिकं' श्रुत्याश्रयत्वयुक्तिसहितं यथा भवति तथा अनुत्पत्तिरुच्यते अत इत्यर्थः । अयं भावः—अस्यां हीति वाक्यशेषे तावच्छ्रुत्याश्रयत्वमुच्यते । श्रुत्याश्रयत्वं नाम नित्यं श्रुत्युच्चारणसामर्थ्यमेव, न तु श्रुत्याधारत्वमात्रम् । अन्यथा श्रुतेर्वर्णात्मकत्वात् वर्णानां च नित्यसर्वगतत्वात् विशिष्य वागाश्रयत्वोक्तिर्व्यर्था स्यात् । नित्यं वेदोच्चारणसामर्थ्यं च सूक्ष्मरूपानादित्वे न घटते । तथा सत्युपचयदशायामेव वाचः श्रुत्युच्चारणसामर्थ्यं नान्यदेति स्यात्, किन्तु स्वरूपानादित्वे । एवं चेन्नोपचयः कल्प्यः व्यर्थत्वात् । तथा च अत्र श्रुतश्रुत्याश्रयत्वान्यथाऽनुपपत्त्या स्वरूपानादित्वपरैव अनुत्पत्तिश्रुतिः, न सूक्ष्मरूपानादित्वपरा, अतस्तद्विरोधादुत्पत्तिश्रुतिः अप्रमाणमेवेति । श्रुतौ नित्यया अनित्ययेति पदच्छेदः । स्तौमीति मन्त्रद्रष्ट्रृषिणा उच्यते । परमात्मानमित्यनेन पैङ्गिश्रुतिव्याख्येयमन्त्रादयमन्यो मन्त्रः तद्गतब्रह्मपदविवरणरूप इति सूचितम् । अच्युतमित्यनेन तत्रत्यं परमं पदं इत्येतद्विवृतम् । नाशरहितस्यैव मुख्यतो गम्यत्वात् । इतिशब्दो मन्त्रप्रतीकग्रहणार्थः । एवं मन्त्रमुदाहृत्य तद्गतनित्यशब्दविशेष्यं दर्शयति—वाग्वावेति । निपातसमुदायः प्रसिद्धौ । नित्यत्वे हेतुमाह—नेति । हिः हेतौ । 'एषा' वागित्यर्थः । केचित्तु—इह नित्यत्वमनुत्पत्तिमत्त्वं, तत्र अनुत्पन्नत्वेन प्रसिद्धत्वं हेतुः । प्रसिद्धिर्हिशब्दार्थः । अवधारणार्थो निपात इत्याहुः॥

(२) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ इतीत्यनन्तरं श्रुताविति शेषः । मनःपूर्वकत्वादिति । मनःकारणकत्वोक्तेरित्यर्थः । 'वाचो' वागिन्द्रियस्य 'नानुत्पत्तिः' नाकार्यत्वमित्यर्थः । कारणवतः कार्यत्वनियमादिति भावः । अनेन सूत्रे नेत्यध्याहार्यम् । तथा च वाचः 'तत्पूर्वकत्वात्' प्रकृतमनःकारणत्वोक्तेर्नानुत्पत्तिरिति सूत्रार्थ उक्तो भवति । यद्यपि 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' इति

'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' ( ऐ.आ. ३-१-१. ) इति मनःपूर्वकत्वाद्वाचो नानुत्पत्तिः ।
( ३ ) वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता ।
उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन ॥

भाष्योदाहृतैतरेयश्रुतेः तद्भाष्ये मनोवाङ्नामकतदन्तर्गतरूपयोर्विष्णुनामगतपूर्वोत्तरवर्णदेवतात्वपरत्वमुक्तमिति नास्याः प्रकृतोपयोगिता। तथाऽपि 'मनः पूर्वरूपं वागुत्तररूपम्' इति प्रतिज्ञावाक्योपपादके 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' ( ऐ.आ.३-१-१. ) इति वाक्ये भाष्यस्थेनेतिशब्देन गृहीते वाक्शब्दस्य साधारणतापरिहाराय टीकाकृतोदाहृते वाक्ये स्थितयोः पूर्वोत्तरशब्दयोः कार्यकारणपरत्वात्प्रकृतोपयोगितोपपत्तिः । यद्वा—भगवद्रूपाधिष्ठानयोरपि मनोवागिन्द्रिययोः इह वाच्यत्वात्तद्विवक्षया कार्यकारणभाव इहोक्त इति प्रकृतसङ्गतिः । अत एव टीकायां अत्र पूर्वोत्तरशब्दावित्युक्तम् । उपपादकवाक्ये वा प्रतिज्ञावाक्ये वेति तदर्थः । अस्मिन्नधिकरण इत्यप्यर्थः ॥

( ३ ) वागिन्द्रियस्योत्पत्त्यङ्गीकारे 'न ह्येषोत्पद्यते' (पौष्यायण. ) इति श्रुतिविरोधः, 'अस्यां हि' ( पौष्यायण. ) इत्युक्तयुक्तिविरोधश्चेत्यत आह—वागिन्द्रियस्येति ॥ यतो नित्यश्रुतिसन्निधियोग्यता (नित्यं श्रुत्युच्चारणहेतुता योग्यत्वम्) वागिन्द्रियस्य नित्यत्वं नित्यत्वानादित्वोक्तेरुपचरितत्वे बीजमस्ति, अतो वागिन्द्रियस्य नित्यत्ववचनं प्रवृत्तम्, न तु मुख्यनित्यत्वं तदर्थः । तथा च श्रुतेरुपचरितार्थत्वान्न तद्विरोध इति भावः । ननु कादाचित्कं श्रुतिसन्निधानं कथं सार्वकालिकनित्यत्वोक्तेरुपचारबीजं भवतीत्यतो योग्यतेत्युक्तम् । तथा च श्रुतिसन्निधेः कादाचित्कत्वेनोपचारबीजत्वानुपपत्तावपि तद्योग्यत्वस्य सार्वकालिकत्वाद्भवत्युपचारबीजत्वम् । अत एव श्रुत्याश्रयत्वमपि न नित्यदा, किन्तु तद्योग्यतैव। अतो न नित्याश्रयत्वमात्रेणाश्रयनित्यत्वाक्षेपः, अनित्यस्यापि तत्सम्भवात्, अपि तु नित्यदा नित्याश्रयत्वं, तच्च वाचि नास्त्येवेति न तेन नित्यत्वाक्षेपो युक्तः । अत एव नोपचयवैयर्थ्यम् । उपचयदशायामेव श्रुत्याश्रयत्वात् श्रुत्युच्चारणसमर्थत्वादन्यदा सामर्थ्याभावादिति भावः । अनेन नित्यं श्रुत्युच्चारणसामर्थ्यस्यासिद्धिरुक्ता भवति । कुत एवं कल्प्यते ? स्वरूपनित्यत्वमेव किं

इति वायुप्रोक्ते ॥ ५ ॥

—:※:—

४. अधिकरणम ॥

( १ ) 'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मु. २-१-८. ) इति श्रुतिः ।

सप्तैव मारुता बाह्ये प्राणास्सप्त तथाऽऽत्मनि ।

नेष्यत इत्यत आह—उत्पत्तिरिति । मनस इति न षष्ठी, किन्तु पञ्चमी । वागिन्द्रियस्येत्यस्ति । ज्ञायत इति शेषः । 'कुतश्चन' 'न हि' इति विशेषश्रुत्या श्रुत्याश्रयत्वयुक्तया चेत्यर्थः । सिध्यतीति शेषः । यद्वा—यस्माद्वागिन्द्रियस्य मनस उत्पत्तिरवगम्यते तस्मादेवमभ्युपगम एव 'नित्यत्वं' 'वाग्वाव' इति नित्यत्वश्रुतिरुपचरितनित्यत्वार्थतयोपपन्ना भवति, न मुख्यनित्यत्वे 'कुतश्चन' कथमप्युपपन्नेत्यर्थः । न चोत्पत्तिमत्त्वेनानुत्पत्त्यभाव एव साध्यो नानुत्पत्तिरिति तस्यैव प्रतिज्ञातत्वात्, नानित्यत्वं ध्वंसे व्यभिचारादिति वाच्यम् । अत्र सर्वत्र नित्यानित्यशब्दयोरनुत्पत्त्युत्पत्तिमदर्थकत्वात् । इतीति । इत्येवं वायुप्रोक्ताख्यग्रन्थे उक्तत्वाच्च विरोध इत्यर्थः । अनेन सिद्धान्ते वाङ्नित्यत्वोक्तेरुपचारबीजोपपादकं 'अस्यां हि' इति वाक्यं 'अस्यां हि स्मृतिरवतिष्ठते' इत्यनित्यत्वोपचारबीजकथनवाक्यस्याप्युपलक्षकम् । तथा च अहं नित्यवेदाश्रयत्वान्नित्यया अनित्यपुराणाद्याश्रयत्वादनित्यया वाचा परमात्मानं स्तौमीति श्रुत्यर्थ उक्तः । एतेन ब्रह्मशब्दघटितसमाख्याश्रुत्यनुरोधोऽपि दर्शितः । नित्यानित्यशब्दयोर्वेदपुराणाद्यर्थकत्वाविघातेनैवास्या व्याख्यानात् ॥ ३ ॥

॥ इति तत्पूर्वकत्वाधिकरणम ॥

—*-:*:-*—

४. अधिकरणम ॥

( १ ) अत्र प्राणसङ्ख्याविषयश्रुतिविरोधः परिह्रियते । सन्देहबीजश्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति—सप्तेति ॥ आथर्वणीयं श्रुतिः । 'प्राणाः' इन्द्रियाणि 'तस्मात्' परमात्मनः । श्रुतिरित्यनन्तरं प्राणानां सप्तत्वं वक्तीति शेषः । न केवलमिन्द्रियाणां सप्तत्वं श्रुतिसिद्धं, किन्तु युक्तिसिद्धं चेत्याशयेन प्रमाणोक्तया तां दर्शयति—सप्तैवेति । यस्मात् 'बाह्ये' देहाद्बहिः स्थिताः 'मारुताः' मरुत्संज्ञिकाः इन्द्रिया

अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुः ॥
इति च स्कान्दे ।

( २ ) ' द्वादश वा एते प्राणा द्वादश मासा द्वादशादित्या द्वादश राशयो द्वादश ग्रहाः ' इति कौण्डिन्यश्रुतौ द्वादश प्राणा दृश्यन्ते ।

---

भिमानिनो देवाः सन्त्येव । तथा तस्य ' आत्मनि ' देहे स्थिता अपि प्राणास्सन्त्येवेत्यर्थः । नन्वप्रयोजकोऽयं हेतुरित्यत आह—अधिदैव इति । तथाशब्दः समुच्चये । तथा च यस्मात् ' अधिदैवे ' देहाद्बहिर्गतेष्वभिमानिदेवेषु ' अध्यात्मे ' देहान्तर्गतेष्वभिमन्यमानेषु च 'सङ्ख्यासाम्यं' समसङ्ख्याकत्वं ' विदो ' ज्ञानिनो ' विदुः ' जानन्ति तस्मादित्यर्थः । स्कान्द इत्यनन्तरं उक्तिश्चेति शेषः ॥

( २ ) ' द्वादश वा ' इति श्रुतौ वैशब्दः प्रसिद्धौ । प्राणशब्दितेन्द्रियाणां द्वादशत्वं कुत इत्यतस्तत्र हेतुमाह—द्वादशेति ॥ इदं च यतो मासादयो द्वादशैव, अतः प्राणा अपि द्वादशैवेति हेतुहेतुमद्भावेन योज्यम् । अत्राप्रयोजकताशङ्कायां ' द्वादश मासाः ' इति श्रुतेर्मासादीनां प्राणानां चादित्याख्यसमसङ्ख्यदेवताकत्वाभिप्रायेण प्रवृत्ततया प्राणाभिमानिनां द्वादशत्वावगतेस्तेषां च द्वादशत्वे तदभिमन्यमानानां प्राणानामपि द्वादशत्वसिद्धेरिति हेतुरभिप्रेतो बोध्यः । अत एव ' द्वादश मासाः ' इत्यादिवाक्यशेषोपन्यासः । ' ग्रहाः ' सोमस्य द्वादशर्तुयाजग्रहाः मध्वादिद्वादशमासोद्देश्या इति तत्त्वप्रदीपोक्तेः । तस्याः षडृतुप्रविष्टत्वेन ऋतुशब्दवाच्यमध्वादिशब्दितचैत्रादिद्वादशमासदेवतोद्देश्यकयागार्थाः सोमरसग्रहणार्थपात्रविशेषा इत्यर्थः । 'ऋत्वधिपो विष्णुः केशवादिस्वरूपतः । ग्रहान् सोमस्य ' इति ऋग्भाष्योक्तेः । एकैकस्य ऋतोर्मासभेदेन द्विरूपत्वाद्देवतानां केशवादीनां तदुद्देश्यानां ग्रहाणामपि द्वादशत्वमिति भावः । चन्द्रिकायां तु ज्योतिष्टोमे सोमरसग्रहणार्थाः सूक्ष्मोलूखलाकाराः पात्रविशेषाः द्वादश सन्ति । अत एव ग्रहणक्रिया अपि द्वादशसङ्ख्याकाः । तेचोपांश्वन्तर्यामैन्द्रवायवमैत्रावरुणाश्विनाः पञ्च, शुक्रामन्थिनौ द्वौ, ऋतुपात्रे द्वे, अतिग्राह्या नाम त्रयः इत्येवंरूपाः । यद्यप्यंश्वदाभ्यावपि तत्र ग्रहौ स्तः । तथाऽपि तयोः अनित्यत्वात् सदनोपस्थानाद्यभावाच्च नित्यसदनादियुक्तग्रहविवक्षया द्वादशत्वोक्तिरित्युक्तम् । अत्र तत्त्वप्रदीपे ' षडृतुनेति यजन्ति

( ३ ) अतो वक्ति—

सू—ॐ ॥ सप्त गतेर्विशेषितत्वाच्च ॥ ॐ ॥ ६ ॥

ज्ञानेन्द्रियापेक्षया सप्तत्वम् ' गुहाशयां निहिताः सप्त सप्त ' ( मु.२-१-८. ) इति विशेषणात् ॥

---

प्राणमेव तद्यजमाने दधाति । चत्वारि ऋतुभिरित्यपानमेव तद्यजमाने दधाति । द्व्यर्तुनेत्युपरिष्टात् ' ( ) इति श्रुत्युदाहरणात् ज्योतिष्टोमयागादन्ययागार्थाः पात्रविशेषाः इहोपात्ता इति प्रतीयते । अत्र विशेषो नाववुद्धः । दृश्यन्त इत्यनन्तरं अतो विरोध इति वाक्यशेषः ॥

( ३ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ ज्ञानेन्द्रियापेक्षयेत्यनेन सूत्रे सप्तेति श्रुतिप्रतीकग्रहणम् । गतेरिति ल्यब्लोपनिमित्ता पञ्चमी । गतिशब्दश्च ज्ञानसाधनेन्द्रियपरः । तथा च गतिमपेक्ष्य ज्ञानकरणेन्द्रियाण्यपेक्ष्य 'सप्तत्वम्' सप्तेतिश्रुतिः प्रवृत्तेति सौत्रप्रतिज्ञांशो व्याख्यातः । 'गतेः' ज्ञानस्य सम्बन्धिनः प्राणास्सप्तेति व्याख्या तु न भाष्यटीकानुसारिणी। सप्तत्वमित्यनन्तरं अतो न विरोध इति वाक्यशेषः । श्रुत्युक्तानां सप्तानां ज्ञानेन्द्रियत्वं कुतः इत्यतः प्रवृत्तं विशेषितत्वादित्यंशं व्याख्याति—गुहाशयामिति । आथर्वणे

' सप्त प्राणाः प्रभवन्ति तस्मात् ' इत्यनन्तरं श्रुते
सप्तार्चिषः सप्तसमिधः सप्त होमाः ।
सप्तेमे लोका येषु चरन्ति प्राणाः
गुहाशयां निहितास्सप्तसप्त ॥ ( मु. २- १- ८. )

इति वाक्यशेषे श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनां सप्तानामिन्द्रियाणां ज्ञानार्थत्वविशेषणेन विशेषितत्वादित्यर्थः । अतो गुहाशयामिति पदं ' गुहाशयां ' गुहाशयायां बुद्धौ तदर्थं निहिताः ' समाने लोपः ' इति एकयकारलोप इत्याथर्वणभाष्योक्तरीत्या तादर्थ्यसप्तम्यन्ततया व्याख्येयम् । यद्वा-गुहाशयामित्युद्देश्यद्वितीया । तां बुद्धिं प्रतीति तत्त्वप्रदीपोक्तेः । अथ वा-गुहाशयेति प्रथमा द्वितीयार्थे, सप्तम्यर्थे वा । सप्तम्यर्थे प्रथमेति तत्त्वप्रदीपोक्तेः । प्राणानां प्रतिपुरुषं भेदात् सप्त सप्तेति वीप्सा । तथा च 'तस्मात्' 'पुमान् रेतस्सिञ्चति योषितायाम्' ( मु.२-१-५. ) इति पूर्ववाक्ये प्रकृतात् तस्मात्ख्ययोषिति गर्भाधानकर्तुः

(४) सप्तप्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः।
एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्।
इति भविष्यत्पर्ववचनं चशब्दात् ॥ ६ ॥
(५) सू—ॐ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ॐ ॥ ७ ॥
हस्तादीनां कर्मविषयत्वान्न सहपाठः ॥

परमपुरुषात् 'सप्त' सप्तसङ्ख्याकाः 'प्राणाः' इन्द्रियाणि 'प्रभवन्ति' प्रजज्ञिरे। एवं 'सप्तार्चिषः' सप्तेन्द्रियवृत्तयः 'समिधो' विषयाः 'सप्त होमाः' सप्त विषयेन्द्रियसम्बन्धाः प्रजज्ञिरे। 'गुहाशयां' गुहा हृदयं आशयः स्थानं यस्याः बुद्धेः सा तथोक्ता, तस्यां तदर्थं तां प्रति तदर्थमिति वा। तथा च प्रतिशरीरं बुद्ध्यर्थं ये परमपुरुषात् 'निहिताः' स्थापिताः 'सप्तसप्त' प्राणाः ते 'यत्र' येषु लोकेषु गोळकेषु सञ्चरन्ति, त इमे लोकाः सप्तेति श्रुत्यर्थः ॥

(४) मन्वस्तु सप्तानामिन्द्रियाणां ज्ञानविशेषणबलेन ज्ञानार्थत्वं, तथाऽपि ते प्राणाः सप्तसङ्ख्याका एव किं नस्युः। किमिति तेषां द्वादशत्वमङ्गीकृत्य सप्तश्रुतेः सावकाशत्वकल्पनमित्याशङ्कां चशब्दोपात्तस्मृत्या निराह—सप्तेति ॥ चशब्दादिति। सौत्रचशब्दादित्यर्थः। सङ्गृहीतामिति शेषः। 'अवगतेः' ज्ञानस्य सम्बन्धिनः प्राणाः सप्त। एवं क्रियारूपकर्मणः सम्बन्धिनस्तज्जनकाः प्राणाः पञ्च। एवं प्राणद्वादशकं प्रतिशरीरं नियमेन संस्थितमित्यर्थः। तुशब्दो विशेषद्योतकः। चशब्दस्समुच्चयार्थः। यद्यपीयं स्मृतिः ज्ञानेन्द्रियत्वकर्मेन्द्रियत्वरूपावच्छेदकप्रदर्शनेन सप्तत्वपञ्चत्वोक्त्योः सावकाशत्वं कथयन्ती बाधकपरिहाररूपैव, न तु द्वादशत्वसाधिका। तथाऽप्यनया सप्तश्रुतौ सावकाशायां 'द्वादश वा एते प्राणाः' (कौण्डिन्य ) इति पूर्वोदाहृतश्रुत्यैव द्वादशत्वं सिध्यतीति साऽपि चशब्दसङ्गृहीताऽत्रोदाहर्तव्या ॥

(५) ननु सप्तभ्योऽन्येषां प्राणानां सद्भावेऽत्राथर्वणश्रुतौ तेषां परमात्मजन्यत्वेनोच्यमानैः सप्तभिः 'सह सप्त पञ्च प्राणाः' इति पाठस्स्यात्। अत्र सहपाठाभावो द्वेधा भवेत् अनादित्वेन वा? परमात्मनस्तदकारणत्वेन वा? तदुभयमपि 'तथा प्राणाः' (सू.२-४-१.) इत्युक्तिविरुद्धम्। न च सहपाठे कारणान्तरं पश्यामः, न वा परमात्मनः तदकारणत्वे कारणान्तरं पश्यामः। अकारणकार्योत्पत्तिश्चायुक्ता। तस्मात्सहपा

( ६ ) संसारस्थितिहेतुत्वात्स्थितं कर्म विदो विदुः ।
तस्मादुद्गतिहेतुत्वात् ज्ञानं गतिरिहोच्यते ॥
इति च वायुप्रोक्ते ॥ ७ ॥

---

ठाभावात् न सप्तभ्योऽन्ये प्राणाः सन्तीत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—हस्तादय इति ॥ आदिशब्देन पादपायुगुह्यवाचो गृह्यन्ते । ‘कर्मविषयत्वात्’ कर्मार्थत्वादिति अतःशब्दव्याख्यानम् । विषयेऽनेन सप्तम्यर्थः कर्मेत्यनेन स्थितशब्दार्थश्च दर्शितः । सहपाठ इत्यनेनैवंश ब्दार्थ उक्तः । हस्तादीनां सप्तभिरिति शेषः । अनेन सूत्रे तुशब्दो वैल क्षण्यार्थः । यत इति शेष इति सूचितम् ॥

( ६ ) ननु पूर्वसूत्रगतो गतिशब्दो ज्ञानार्थस्सन् तद्द्वारा तत्करण बोधकः । द्वितीयसूत्रगतश्च स्थितशब्दः कर्मवाचीत्येतत्कुत इत्यत आ ह—संसारेति ॥ पुरुषस्य संसारस्थितौ हेतुत्वादित्यर्थः । ‘तस्मात्’ संसारात् उद्गतिरुत्थितिर्मोक्षः तत्कारणत्वादित्यर्थः । ननु मुक्तानां प रमा गतिर्हरिरेव । सतां गतिरित्यादौ गतिशब्दस्य गम्यार्थत्वात्कथं ज्ञानार्थत्वमित्यत आह—इहेति । एतत्सूत्रे तदनुकूलप्रमाणे चेत्यर्थः । कर्म मानुषमिहाभिप्रेतं, ज्ञानं च तत्त्वविषयमिति तत्त्वप्रदीपोक्तेरत्र क र्मशब्देन मानुषकर्तृकं प्रवृत्तिकर्मोच्यते । तस्यैव बन्धकत्वात् । ज्ञान शब्देन ब्रह्मज्ञानम् । न च निवृत्तिकर्मणि अब्रह्मज्ञाने च कथं स्थितग तिशब्दौ, उक्तनिमित्ताभावादिति वाच्यम् । यथा ‘तं प्रपदाभ्यां प्राप द्यत ब्रह्मेमं पुरुषं . . . . तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते’ (२-१-४.) इत्यैतरेयश्रुत्युक्तस्य परमात्मकर्तृकतच्छब्दोक्तचतुर्मुखप्राप्तिकरणत्व रूपस्य प्रपदशब्दप्रवृत्तिनिमित्तस्य चतुर्मुखपादतलोपरिगतस्येऽपि त त्सजातीये पुरुषान्तरसम्बन्धिन्यपि पादतलोपरिभागे प्रपदशब्दः प्रयु ज्यते । तथेहापि संसारस्थितिहेतुप्रवृत्तिसजातीये निवृत्तिकर्मण्यपि स्थितशब्दः प्रयुज्यते । एवं संसारोद्गतिहेतुब्रह्मज्ञानसजातीये घटादि ज्ञानेऽपि गतिशब्दप्रयोगोपपत्तिः । वायुप्रोक्ते ग्रन्थे स्थितगतिशब्दौ कर्मज्ञानार्थावित्युक्तमिति वाक्यशेषः ॥ ४ ॥

॥ इति सप्तगत्यधिकरणम् ॥

—:*:—

५. अधिकरणम् ॥

( १ ) 'दिवीव चक्षुराततम्' ( ऋ. १-२२-२०. ) इति व्याप्तिः प्रतीयते । दूरश्रवणदर्शनादियुक्तिश्च ।

( २ ) 'अणुभिः पश्यत्यणुभिः कृणोति प्राणा वा अणवः प्रा

५. अधिकरणम् ॥

( १ ) पूर्वाधिकरणे प्राणसङ्ख्याविषयश्रुतिविरोधः परिहृतः । अत्राधिकरणे तत्परिमाणविषयश्रुतिविरोधः परिह्रियते । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति—दिवीवेति ॥ इति श्रुताविति शेषः । 'व्याप्तिः' प्राणानामिति शेषः । चक्षुःपदेन इन्द्रियमात्रोपलक्षणया समानन्यायविषयत्वेन वेति भावः । नन्वणुत्वश्रुत्या सत्प्रतिपक्षितेयं श्रुतिरिति शङ्कापरिहाराय दिवीवेत्यंश उदाहृतः । अनेनास्यां श्रुतौ विष्णोर्व्याप्तत्वे दृष्टान्तत्वेन चक्षुःपदोपलक्षितेन्द्रियव्याप्तेरुक्तत्वात् सा सिद्धेति प्राणानां व्याप्तौ युक्तिरुक्ता भवति । तथा च व्याप्तत्वश्रुतेर्युक्तियुक्तत्वान्न सत्प्रतिपक्षितत्वमिति भावः । व्याप्तिश्रुतेः प्राबल्योपपादनायैवेन्द्रियव्याप्तौ युक्त्यन्तरमाह—दूरेति । चस्समुच्चये । तथा च किञ्चिद्दूरस्थवस्तुदर्शनं तथा दूरस्थशब्दश्रवणं, आदिशब्दात् दूरस्थवस्तुस्मरणं गृह्यते । एतद्रूपा युक्तिः प्राणानां व्याप्तिं साधयतीत्यर्थः । इन्द्रियाणां प्राप्यकारित्वेन व्याप्तिं विना चक्षुश्श्रोत्रमनसामुक्तकार्यजनकत्वाद्दिति भावः । यथा चक्षुः 'दिवि' आकाशे 'आततं' व्याप्तमपि न दृश्यते, किन्तु विषयोपलब्धिलक्षणेन फलेनानुमीयते, तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यं, किन्त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इति श्रुतितात्पर्यार्थो ऋग्भाष्यटीकायामुक्तः । अनेनैव व्याप्ता एव प्राणास्तथा श्रुतेर्युक्तेश्चेति सयुक्तिकपूर्वपक्षः सूचितो भवति ॥

( २ ) एवं व्याप्तिश्रुतिमुदाहृत्याणुत्वेऽपि श्रुतिमुदाहरति—अणुभिरिति ॥ चः समुच्चये । श्रुतिः प्राणानामणुत्वं वक्तीति शेषः । पुरुषः 'अणुभिः' ज्ञानेन्द्रियैः 'पश्यति' तत्तदिन्द्रिययोग्यं वस्तु जानाति । एवं 'अणुभिः' कर्मेन्द्रियैः तत्तद्योग्यं कार्यं 'कृणोति' करोतीत्यर्थः । भावबोधे तु अणुभिः शृणोतीतिपाठमभिप्रेत्य ज्ञानकर्मकरणत्वलिङ्गादिति टीकावाक्येन 'अणुभिः शृणोति' इत्येतत्सर्वेन्द्रियोपलक्षणमि

णेर्ह्येतद्भवति' इति च कौण्डिन्यश्रुतिः ।

( ३ ) अतो वक्ति—

सू—ॐ ॥ अणवश्च ॥ ॐ ॥ ८ ॥

'तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्याततः एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवति' इति शाण्डिल्यश्रुतिः ॥ ८ ॥

——:*:——

६. अधिकरणम् ॥

( १ ) 'नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता

---

त्युक्तं भवतीत्युक्तम् । के तेऽणव इत्यतोऽणून् दर्शयति—प्राणा वा अणव इति । ते चाणवः 'प्राणाः' इन्द्रियाणीत्यर्थः । कुतोऽणवः प्राणा इत्यत आह—प्राणैरिति ॥ 'हि' यस्मात् 'एतत्' पश्यतिशृणोतीत्याद्युक्तं ज्ञानकर्माख्यकार्यं 'प्राणैः' इन्द्रियैरेव भवति तस्मादित्यर्थः॥

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे चोऽवधारणे, समुच्चये च । प्राणा इत्यस्ति । तथा च प्राणाः स्वरूपतोऽणव एव। न चोक्तश्रुतियुक्तिविरोधः । यतो न केवलमणवः, किन्तु प्रकाशतो व्याप्ताश्चेति सूत्रार्थः । अतिसुदृढार्थश्रुतिसिद्धे व्याप्तत्वे सति कुतोऽणुत्वं प्राणानां, तेजसा व्याप्तिश्चेत्यत आह—तद्यथेति । 'तत्' वक्ष्यमाणं निदर्शनं यथेत्यर्थः । 'अणुनः' स्वरूपेण 'चक्षसः' चक्षुषः 'प्रकाशः' तेजो 'व्याततः' व्याप्तं एवं 'पुरुषस्य' जीवस्य प्रकाशो व्याप्तः । मन्वस्तु अणुत्वात् चक्षुषः प्रकाशव्याप्तिः । जीवस्य कुत इत्यतोऽस्याप्यणुत्वादित्याह—अणुरिति । 'हि' यस्मात् इति श्रुतिः चक्षुःपदोपलक्षितानां प्राणानामणुत्वं प्रकाशव्याप्तिं च वक्तीति शेषः । अतो न सूत्रकृदुक्तस्याभावः शङ्क्य इति वाक्यशेषः । यद्यप्यत्र श्रुतौ प्रकाशव्याप्तावेव चक्षुषः दृष्टान्तत्वं प्रतीयते, न तु जीवस्याणुत्वेऽपि । तथाऽपि प्रकाशव्याप्तिसाधकाणुत्वस्य जीवेऽपि 'अणुर्ह्येषः' इत्यनेनोक्तत्वात्तदंशेऽपि दृष्टान्तत्वमभिप्रेतमिति भावः ॥ ५ ॥

॥ इति अण्वधिकरणम् ॥

——:*:——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुख्यप्राणजन्मविषयश्रुतिविरोधः परिह्रियते ।

अथैनमाहुर्मध्यमः’ इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते।
( २ ) यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा।
तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते॥
इति च युक्तिर्वायुप्रोक्ते। ‘आत्मत एष प्राणो जायते’
( प्र.३-३. ) इति च।

---

‘एतेन’ इत्यधिकरणे बाह्यमुख्यवायूत्पत्तिविचारः कृतः। इह तु आध्यात्मिकमुख्यवायूत्पत्तिविचार इति वा तत्र भूतप्रकरणत्वात् भूतमुख्यवायोः सम्मुग्धो विचारः। अत्र पुनः केवलो मुख्यविषय इति वा पूर्वस्मादस्य भेद इत्युक्तं तत्त्वप्रदीपे। मुख्यप्राण उत्पत्तिमान्न वेति सन्देहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च दर्शयति—नेति॥ ‘एषः’ मुख्यप्राणो ‘नोदेति’ नोत्पद्यते ‘अस्तं’ नाशं च ‘नैति’ नाप्नोति, किन्तु ‘एकलः’ प्रधानः एकप्रकारो वा ‘मध्ये’ जननमरणयोर्मध्यावस्थायां उदयास्तमययोर्मध्ये यौवने देहमध्ये वा स्थातेत्यर्थः। अथ वा ‘एकल एव मध्ये स्थाता’ इति छान्दोग्यवाक्यव्याख्यारूपैकलः प्रलये स्थातेति भाष्योक्तदिशा ‘मध्ये’ स्थितिसृष्टिकालमध्ये प्रलय इत्यर्थः। यस्मादेवं ‘अथ’ तस्मान्मध्यावस्थां गतत्वात् ‘एनं’ मुख्यप्राणं मध्यम इत्याहुर्विद्वांस इत्यर्थः। इतीति। इति श्रुतावित्यर्थः। ‘श्रूयते’ उच्यते। अनेन मुख्यप्राणो नोत्पत्तिमानिति पूर्वःपक्षः सूचितो भवति॥

( २ ) नन्वनुत्पत्तिश्रुतेः मुख्यवाग्वनुत्पत्तिश्रुतिवत् स्वरूपानुत्पत्तिपरतया सावकाशत्वान्नोत्पत्तिश्रुत्यपेक्षया प्राबल्यमिति नैतद्बाधकत्वमित्यतः प्राबल्यहेतुभूतां युक्तिं प्रमाणोक्तया दर्शयति—यदिति॥ यस्य यद्देहप्राप्तिः यद्देहसंयोगः सा तज्जीवस्य उत्पत्तिः तत्कारणं, तथा यद्देहपरित्यागः सैव तद्देहिनो मृतिः तत्कारणं। यद्वा—यस्य देहप्राप्तिः संयोगः अखिलोत्पत्तिः, यस्य परित्यागः सर्वेषां मरणं, तस्याखिलजीवोत्पत्तिमरणकारणस्य मुख्यप्राणस्य उत्पत्तिर्मरणं च कथं युज्यते, न कथमपीत्यर्थः। दुःखहेतवे स्वजननाय स्वप्रवृत्त्ययोगादिति भावः। अनेन मुख्यप्राणस्यानुत्पत्तावखिलोत्पत्तिमरणकारणत्वादिति युक्तिरुपन्यस्ता भवति। उत्पत्तिश्रुतिं दर्शयति—आत्मत इति। ‘एषः’ मुख्यप्राणः परमात्मनो जायत इति षट्प्रश्नश्रुत्यर्थः॥

( ३ ) अत आह—

सू—ॐ ॥ श्रेष्ठश्च ॥ ॐ ॥ ९ ॥

'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च । प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिरिति ' गौपवनश्रुतेः ॥ ९ ॥

( ४ ) सू—ॐ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ॐ ॥ १० ॥

चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।

( ३ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे चः समुच्चये । तथा च यथेतरे प्राणाः परमात्मन उत्पद्यन्ते तथा प्राणेषु 'श्रेष्ठो' मुख्यप्राणोऽपि परमात्मन उत्पद्यत इत्यर्थः । तत्त्वप्रदीपे तु उत्पद्यतेऽनुत्पद्यते चेति चशब्दार्थ उक्तः । ननु कुतो मुख्यप्राणस्योत्पत्तिः । तदङ्गीकारे अनादित्वश्रुतिविरोधः इत्यत आह—सौक्ष्म्येणेति । सूक्ष्मरूपेणेत्यर्थः । हेत्यास्वादने, प्रमाणप्रसिद्धौ वा । वैशब्दोऽवधारणे । 'एषः' मुख्यप्राणः 'अवतिष्ठते' सर्वदा तिष्ठति । 'स्थूलत्वेन' स्थूलभावेन तद्रूपेण 'उदेति' कदाचिदुत्पद्यते 'अथो' तस्मात् सूक्ष्मत्वेन सर्वदा स्थितत्वात् स्थूलरूपेण कदाचित् उदितत्वाच्चासौ प्राणः सूक्ष्मः स्थूलश्चेत्युच्यते । परस्परसमुच्चये चौ । ननु स्थूलादिभावस्य स्वरूपत्वात्कथं तस्योत्पत्त्यादीत्यत उक्तम्—प्रकृतित इति । स्वभावत इत्यर्थः । 'अन्यतः' शरीरादितः । तथा च स्थौल्यादिकं न स्वरूपमिति भावः । यद्यप्यस्येतरजीवसाधारणत्वान्न विशेषत्वम् । तथाऽपि शरीरादिष्वेवायं स्थूलो, न त्वितरजीवानामिव चैतन्ये । तदभिमानकृतविक्रियाविशेषवानिति भवति विशेषः । 'अथ' तस्मात्स्वरूपेणानुत्पत्तिमत्त्वात्स्थूलरूपेणोत्पत्तिमत्त्वाच्च 'एनं' मुख्यं सादिरनादिरित्याहुर्विद्वांस इत्यर्थः । श्रुतेरित्यस्य श्रेष्ठश्चोत्पद्यते अनुत्पद्यते चेति गम्यत इति सूत्रेणान्वयः ॥

( ४ ) ननु प्राणानुत्पत्तिश्रुतिः सयुक्तिकत्वेन प्रबला, अतः कथमुत्पत्तिश्रुतिमात्रानुसारेणान्यथा व्याख्यायते । अपि तु उत्पत्तिश्रुतिरेव चेष्टाबाह्यवायुविषयतया व्याख्यातव्या । तयोरपि 'चेष्टायाम्' इति वाक्ये प्राणशब्दवाच्यत्वोक्तेरेतयोरनुत्पत्तिवचनाभावेन उत्पत्त्यङ्गीकारे विरोधाभावात् इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—नेति ॥ चेष्टा स्पन्दनम् । बाह्यो भूतवायुः । चौ परस्परसमुच्चये । 'गीयते' प्रयु

प्राणशब्दस्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तितः ।
इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात् ।

( ५ ) 'स प्राणमसृजत .... खं वायुर्ज्योतिरापः .... तपो मन्त्राः कर्म' (प्र.६-४.) इति पृथगुपदेशात् ।

---

ज्यते एषु त्रिषु मध्ये 'मुख्ये' मुख्यप्राणे 'मणिर्मुख्यं प्रधानश्चेत्युत्तमस्य वचो भवेत्' इत्यभिधानात् 'मुख्यः' मुख्यवृत्तिमान् प्रकीर्तितो बुद्धैरित्यर्थः । इति व्यपदेशादित्यन्वयः । प्राणशब्दस्येति शेषः । तथा च प्राणशब्दस्य 'चेष्टायाम्' इति वाक्ये वायुक्रिययोरपि 'व्यपदेशात्' वृत्त्युक्तेः 'उत्पत्तिश्रुतिः' 'प्राणोऽजायत' इत्युत्पत्तिवाक्यं 'तयोरुत्पत्तिश्रुतिः स्यात्' तयोरुत्पत्तिवादिनी स्यादिति नोपपद्यते इति योजना । अनेन वायुक्रिये इति साध्यांशो व्याख्यातः ॥

( ५ ) कुतो नेत्यतस्तत्र हेतुतया पृथगुपदेशादित्येतद्योजयति—स इति ॥ अत्र 'उपदेशात्' 'आत्मतः' इति वाक्यापेक्षया अन्यस्मात् 'स प्राणमसृजत' इति स्पष्टवाक्यादिति प्रथमं योज्यम् । अत्रापि चेष्टादिकं वाच्यं किं न स्यादित्याशङ्कायां तत्र हेतुत्वेन पृथगुपदेशादिति समग्रं योजनीयम्, तथा च इति षट्प्रश्नश्रुतौ स प्राणमित्युक्तात् प्राणाद्वायुकर्मणोः पृथगभिधानादित्यन्वयः । तथा च 'सः' इति श्रुतेरपिवायुक्रियोत्पत्तिपरत्वे पुनः वायुः कर्म चेति वायुचेष्टयोः पृथगुत्पत्त्यभिधानं पुनरुक्तं स्यात्, अतो न तस्यास्तद्विषयत्वमितिभावः ।

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् ।
मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥

इति मन्त्रस्यायमर्थः–'सः' प्रकृतः परमपुरुषो भगवान् पुरुषं 'प्राणं' जीवकलाभिमानिनमसृजत् । 'प्राणाच्छ्रद्धां' प्राणं निमित्तीकृत्य जीवस्यास्तिक्यनिष्ठां भारतीमसृजत् । ततश्च 'खं' आकाशं वायुः 'ज्योतिः' तेज आपः पृथिवी इत्येतानि शरीरोपादानभूतानि पञ्चभूतान्यसृजत् । ततः 'इन्द्रियं' जीवस्य प्रवृत्त्युपकरणानि चक्षुरादीन्द्रियाणि प्रधानकरणं मनः तत्स्थितिकारणमन्नं चासृजत् । तस्मादन्नं निमित्तीकृत्य शरीरहेतुभूतं 'वीर्यं' रेतोऽसृजत् । ततो जीवस्य ज्ञानादिहेतुतया सुखसाधनं तपोऽसृजत् । ततो 'मन्त्राः' जीवस्य साक्षात् ज्ञानादिहेतवो ये ऋगाद्याः तानसृजत् । यच्च सुखादिनिमित्तं पुण्यापुण्य

( ६ ) भूतानि चेष्टामन्त्राश्च मुख्यप्राणादिदं जगत् ।
मुख्यप्राणः परस्माच्च न परः कारणान्वितः ॥
इति वायुप्रोक्ते ॥ १० ॥

——:*:——

७. अधिकरणम् ॥

( १ ) 'प्राणादिदमाविरासीत्प्राणो धत्ते प्राणे लयमभ्युपैति

---

लक्षणं कर्म तच्चासृजत । 'लोकाः' गोळकाः इन्द्रियाश्रयभूतास्तान्, लोकेषु सृष्टेषु सत्सु तं निमित्तीकृत्य देवदत्तादिनाम चासृजदिति । अत्र प्राणादिशब्दाः षोडशकलावाचिनः तत्तत्कलाभिमानिमुख्यप्राणादिवाचिनश्चेति ।

विष्णोः प्राणस्ततश्श्रद्धा तस्या रुद्रो मनोभिधः ।
ततस्त्विन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ॥

इति षट्प्रश्नभाष्ये स्पष्टम् । पूर्वपूर्वोत्पन्नकलाः उत्तरोत्तरकलोत्पत्तौ निमित्तभूता इत्येतदपि तत एव ज्ञातव्यम् ॥

( ६ ) न केवलमर्थापत्त्यैव प्राणादिशब्दा भिन्नार्थाः, किन्तु स्मृत्याऽपीत्यभिप्रेत्य श्रुत्यर्थनिर्णयात्मिकां स्मृतिं चाह—भूतानीति ॥ 'खं वायुः पृथिवी' इत्यन्तस्यार्थो—भूतानीति । कर्मेत्यस्य—चेष्टेति । एवमादीति शेषः । 'स प्राणमसृजत' इत्यस्य व्याख्यानं—मुख्यप्राणः 'परस्मात्' पराद्विष्णोरिति । आर्षस्स्मादादेशः । इति वायुप्रोक्ते इत्यस्य पृथगुपदेशादित्यनेनान्वयः । प्राणादिशब्दानां भिन्नार्थत्वोक्तेरिति तदर्थः । अत्र 'स प्राणमसृजत, मुख्यप्राणः परस्मात्' इति श्रुतिस्मृतिभ्यां पूर्वपक्षयुक्तयुक्तिविरोधोऽपि परिहृतः । ननु श्रुतिस्मृतिभ्यां मुख्यप्राणस्य विष्णुजातत्वाभिधानेऽपि कथं युक्तिविरोधपरिहार इत्याशङ्का 'न परः कारणान्वितः' कारणजन्य इति स्मृत्यंशेन परिहृता । 'यत्प्राप्तिः' इत्याद्युक्तमाहात्म्यवतोऽपि मुख्यप्राणस्य स्वापेक्षया कारणाजन्यत्वादिरूपातिमाहात्म्योपेतविष्णूत्पन्नत्वोपपत्तेः तथा च मुख्यप्राणस्याखिलोत्पादकत्वं स्वनियम्यसर्वोत्पादकत्वे पर्यवस्यतीति न युक्ति विरोध इति भावः ॥ ६ ॥

॥ इति श्रेष्ठाधिकरणम् ॥

——:*:——

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुख्यप्राणस्वातन्त्र्यास्वातन्त्र्यश्रुतिविरोधः

न प्राणः किञ्चिदाश्रितः' इत्यग्निवेश्यश्रुतौ ।
( २ ) यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् ।
यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत् ॥
इति च युक्तिर्भारते ॥
( ३ ) प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः ।
न परः किञ्चिदाश्रित्य वर्तते परमो यतः ॥
इति पैङ्गिश्रुतिः ।

---

परिह्रियते । मुख्यप्राणः स्वतन्त्रः परतन्त्रो वेति सन्देहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति—प्राणादिति ॥ 'प्राणात्' मुख्यात् 'इदं' प्राणव्यतिरिक्तं जगत् 'आविरासीत्' अजायत । इदमित्येतत् धत्ते एतीत्यत्रापि सम्बध्यते । श्रुतावित्यनन्तरं प्राणस्य स्वातन्त्र्यं प्रतीयत इति शेषः । न किञ्चिदाश्रित इत्यनेनानन्याश्रयत्वरूपस्वातन्त्र्यहेतूक्तेरिति भावः । अनेन मुख्यप्राणः स्वतन्त्र एव, तथा श्रुतेरिति सयुक्तिकपूर्वपक्षः सूचितः ॥

( २ ) स्वातन्त्र्यश्रुतेरितरश्रुत्या सत्प्रतिपक्षितत्वशङ्कावारणाय युक्तिसाहित्येन प्राबल्यं स्मृत्या दर्शयति—यदिति ॥ 'अस्य' जगतः 'सः' प्राणः अन्यं कथमुपाश्रयेदित्यनन्तरं तस्मात्सकलजगच्चेष्टकत्वात् एवानन्याश्रयत्वात्प्राणः स्वातन्त्र्येण सर्वाश्रय इति वाक्यशेषः । अत एवाखिलजगच्चेष्टकत्वेन सिद्धानन्याश्रयत्वरूपयुक्तियुक्ततयेति टीकार्थो द्रष्टव्यः । अस्य दृष्टान्तत्वेनोपादानाच्चैतत्सिद्धमित्याह-यथेति । 'एकाश्रयो' मुख्याश्रयः, भवेदिति प्रार्थनायां लिङ् । तथा चात्र राज्ञः स्वातन्त्र्येण सर्वाश्रयत्वे मुख्यप्राणस्य दृष्टान्तीकरणात् सिद्धस्यैव दृष्टान्तत्वादिति । अनेन लिङ्गेन प्राणस्य स्वातन्त्र्येण सर्वाश्रयत्वं सिद्धमिति भावः । यथा राजा सर्वस्यैकाश्रयः तथा प्राणः सर्वस्यैकाश्रयः इति भाष्ययोजना तु शेषकरणटीकाविरुद्धा । युक्तिश्चेति सम्बन्धः । न केवलं श्रुतिरिति चार्थः । भारते उक्ताऽस्तीति शेषः ॥

( ३ ) पारतन्त्र्ये श्रुतिमुदाहरति—प्राणस्येति ॥ 'एतत्' सर्वं जगत्प्राणस्य मुख्यस्य वशेऽस्तीत्यर्थः । 'परः' परमात्मा 'न परः किञ्चिदाश्रितः' इत्यनेन तस्य स्वातन्त्र्यमाह । श्रुतिः' प्राणस्य पारतन्त्र्यं बक्तीति शेषः ।

( ४ ) अत आह—

सू—ॐ ॥ चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ॥ ॐ ॥ ११ ॥

चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव । 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च । स एक एवैतान्नयत्युन्नयति वशीकरोति' इति गौपवन श्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात् ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ अपिशब्दो यथेतरे प्राणास्तथा मुख्यप्रणोऽपीति समुच्चये । मुख्यप्राण इत्यनेन सूत्रे श्रेष्ठपदानुवृत्तिः सूचिता । परमात्मवश इत्यनेन दृष्टान्तोक्त्या लब्धः साध्यभागो दर्शितः । एवेत्यनेन तुशब्दोऽवधारणेऽपीति सूचितम् । परमात्मवश इत्यावर्तते । तद्वशत्वेन शासनादित्यप्यावर्तते । तथा चेत्थं भाष्ययोजना–मुख्यप्राणोऽपि 'परमात्मवशः' तदधीन एव, न तु स्वतन्त्रः । कुतः? 'तद्वशत्वेन शासनात्' 'प्राणः परवशे स्थितः' इति तस्य तद्वशत्वेन श्रुत्युक्तत्वात् । न चोत्पत्ताविव पारतन्त्र्येऽपि का चन व्यवस्था, अपि तु चक्षुरादिवदेव सर्वात्मना । कुतः? 'सर्वं ह्येतत्परमेऽवतिष्ठते' इति श्रुतौ चक्षुरादिभिः सह तद्वशत्वेन परमात्माधीनत्वेन प्रकारेण 'शासनात्' प्रतिपादनादिति । अनेन तस्यां तैस्सह तेन प्रकारेण तस्य शंसनादिति तच्छब्दो बहुधा व्याख्यातः । तद्वशत्वेनैवेत्यनेन तुशब्दार्थावधारणस्य तच्छब्दितप्रकारेणान्वयः सूचितः । सूत्रे शिष्टीति शासुधातोरुपादानाद्भाष्येऽपि शासनादिति स एव गृहीतः । श्रुत्युक्तत्वादिति टीकानुसाराच्छंसनादिति पाठः स्वरसः । तथात्वे धातोरर्थान्तरोक्तिः । अनेन–श्रेष्ठोऽपि परवश एव, कुतः? 'तच्छिष्टेः' 'प्राणः परवशे स्थितः' इति तथा श्रुतेः । ननु प्राणस्योत्पत्तौ प्रकृतितः सूक्ष्मो देहतः स्थूल इति यथा व्यवस्था, एवं पारतन्त्र्येऽपि न स्वभावोपाधिकृतव्यवस्था, अपि तु चक्षुरादिवत्सर्वात्मनैव । कुतः? 'तत्सहशिष्ट्यादिभ्यः' तस्यां 'सर्वम्' इति श्रुतौ तस्य श्रेष्ठस्य तैश्चक्षुर्घ्राणादिभिस्सह तेन परवशत्वेनैव प्रकारेण शिष्टेरुक्तत्वादिति सूत्रार्थ उक्तो भवति । श्रुत्यर्थस्तु–सर्वमेतज्जगत् 'परमे' परमात्मन्यवतिष्ठते 'हि' प्रसिद्धम् । किं तत्सर्वमित्यतो विवृणोति—'प्राणो' मुख्यप्राणः 'प्राणाः' इतरेन्द्रियाणि 'प्राणिनो' जीवा इति । चशब्दाः मिथः समुच्चये । अत्र हेतुमाह—स

( ५ ) सर्वकर्ताऽपि सन्प्राणः परमाधारतस्स्थितः ।
कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम् ॥
( ६ ) अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।
अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥
( ७ ) अनन्येश्वरता प्राणे तदन्येश्वरवर्जना ।

---

हीति । 'हि' यस्मात् 'सः' परमात्मा 'एक एव' स्वतन्त्र एव 'एता न्' प्राणादीन् 'नयति' जन्मादिकं प्रापयति 'उन्नयति' ऊर्ध्वं नय ति मोचयतीति यावत् । 'वशीकरोति' स्ववशवर्तिनः करोतीति ॥

( ५ ) ननु प्राणस्वातन्त्र्येऽखिलचेष्टकत्वयुक्तियुक्तायाः 'न प्राणः किञ्चिदाश्रितः' इति श्रुतेः सद्भावात् 'प्राणः परवशे स्थितः' 'सर्वं ह्येतत्' इति श्रुतिमात्रेण न पारतन्त्र्यनिर्णय इत्यत आह—सर्वेति ॥ अपिर्यद्यपीत्याद्यर्थे, विशेषणसमुच्चये वा । 'परमाधारतः' परमात्मा धारकत्वेन स्थितः । तथा च स्वभिन्नसर्वचेष्टकत्वाभ्युपगमान्न युक्ति विरोध इति भावः । तर्हि 'प्राणादिदमाविरासीत्प्राणो धत्ते' इति स र्वेश्वरत्वापरपर्यायसर्वकर्तृत्वश्रुत्या 'न प्राणः किञ्चिदाश्रितः' इत्यन न्याश्रयत्वश्रुत्या च विरोध इत्यत आह—कथमिति । 'अन्यथा' पर मात्माधारत्वं विना 'सः' मुख्यप्राणः कथमेव स्वतन्त्रस्स्यात्, न क थंचित् । कुतः? यतो मुख्यप्राणस्वातन्त्र्याङ्गीकारे 'सर्वं ह्येतत्परमेऽव तिष्ठते' इति श्रुत्युक्तभगवत्स्वातन्त्र्यस्य हातुमशक्यत्वेन ईश्वरद्वय मङ्गीकार्यम्, तच्चानुपपन्नम्, अन्योन्यानुरोधाननुरोधयोः सर्वैश्वर्यहा नेः, अतः । तथा च ईश्वरद्वयानुपपत्तिरूपयुक्तिविरोधात् सर्वेश्वरत्वा नन्येश्वरत्वश्रुतिर्बाध्यत इति भावः ॥

( ६ ) ननु श्रुतेर्बाधायोगात् अर्थान्तरं वक्तव्यम्, स क इत्यत आ ह—अवान्तरेति ॥ मध्यमेश्वरत्वरूपवाच्येन निमित्तेनेत्यर्थः । 'तस्य' मुख्यप्राणस्य 'ईश्वरवचः' ईश्वरत्वबोधकं 'प्राणो धत्ते' इत्यादिसर्व कर्तृत्ववचनम् । ननु मुख्येश्वरत्वमेव तदर्थः किं न स्यादित्यत आह- अत इति । अवान्तरेश्वरत्वादेव 'तस्य' मुख्यस्य 'वेदिनः' ज्ञानिनः वृद्धाः 'वेदेषु' 'मध्यमः प्राणो' 'मध्ये स्थाता' इत्यादिरूपेषु 'म ध्यमतां' प्राहुरित्यर्थः । अन्यथा तन्न स्यादिति भावः ॥

( ७ ) एवमीश्वरश्रुतेर्गतिमुक्त्वा अनन्येश्वरत्वश्रुतेरपि गतिमाह-

यतो विशेषवाक्येन ह्रियते समतावचः ॥

(८) 'नान्योऽतोऽस्ति द्रष्टा' (बृ.५-७-२३.) 'नान्यदतोऽस्ति द्रष्टृ' (बृ.५-८-११.) इत्यादिवचनयुक्तयश्चा दिशब्दोक्ताः ॥ ११ ॥

(९) सू—ॐ ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ॐ॥१२॥

इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वाच्च त

---

अनन्येति ॥ 'तदन्येश्वरवर्जना' भगवद्व्यतिरिक्तेश्वरराहित्यमेव अनन्येश्वरता । तथा च 'न प्राणः किञ्चिदाश्रितः' इत्यनन्याश्रयताऽपरपर्यायानन्येश्वरताबोधकवाक्यस्य प्राणो भगवद्व्यतिरिक्तं किञ्चिन्नाश्रित इत्यर्थ इति भावः । तदन्येश्वरवर्जनादिति पञ्चम्यन्तपाठेऽप्ययमेवार्थः । न केवलं यतो नैवेत्युक्तेश्वरद्वयानुपपत्तिरूपयुक्तिविरोधात् 'प्राणादिदमाविरासीत्' इति श्रुतेः अन्यार्थता, किन्तु विशेषश्रुतेरपीत्याह—यत इति । 'विशेषवाक्येन' 'प्राणस्यैतद्वशे सर्वम्' इति विशेषवाक्येन च 'समतावचः' समतया साधारण्येन युक्तं वचः, स्वार्थे तल्वा, साधारणवचनं 'प्राणात्' इत्येतत् 'ह्रियते' अवान्तरेश्वरत्वाद्यर्थान्तरपरतया नीयत इत्यर्थः । इति यतोऽत उक्त एवार्थ इति शेषः॥

(८) इदानीं सहशासनरूपवाक्यापेक्षया भिन्नं सौत्रादिशब्दगृहीतमुदाहरति—नेति ॥ अत्र वाक्यद्वये 'अतः' भगवतस्सकाशादन्यः स्वातन्त्र्येण द्रष्टा नास्तीति भगवदितरस्य स्वातन्त्र्येण द्रष्टृत्वाभाव उच्यते इत्यस्य प्रकृतोपयोगिता । वचनेति वचनानि च युक्तयश्च वचनयुक्तयः, वचनोक्ता युक्तय इति वा । 'यतः' इत्यनेन ईश्वरद्वयायोगादिति युक्तेः, 'अतो मध्यमतामाहुः' इत्यनेन मध्यमत्वादियुक्तेः, द्वितीयेन 'यतः' इत्यनेन सामान्यवाक्यस्य विशेषवाक्यबलेन नेयत्वादिति युक्तेः, 'नान्यः' इत्यादिनाऽन्यस्य स्वातन्त्र्येण द्रष्टृत्वादेरभावादिति युक्तेश्च उक्तत्वादिति भावः ॥

(९) ननु यदि चक्षुरादिवद्देवेश्वराधीनत्वं मुख्यप्राणस्य, तर्हि तद्वदेव तस्यावान्तरेश्वरत्वाद्यसम्भवेन 'न प्राणः किञ्चिदाश्रितः' इति स्वातन्त्र्यश्रुतिर्व्यर्था स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—अकरणत्वादिति ॥ करणत्वादित्यनेन चशब्दश्चक्षुरादीनां करणत्वसमुच्चयार्थ इति सूचितम् । 'मुख्यस्य' प्राणस्येत्यनेन श्रेष्ठ इत्यस्य विपरिणामेनानुवृत्तिः सूचिता । 'तस्य' मुख्यस्य 'अन्येभ्यः' इन्द्रि

स्यान्येभ्य उत्तमत्वं युज्यते ।

( १० ) माण्डव्यश्रुतिश्च ' तानि ह वा एतानि सर्वाणि करणा न्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इ त्याचक्षते ' इति ॥ १२ ॥

९. अधिकरणम् ॥

( १ ) ' सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः

---

येभ्य 'उत्तमत्वं' अतिशयः । यद्यपि चक्षुरादीनां मुख्यस्य चेश्वरवश त्वसाम्यात्तेषां कर्तृप्रयोज्यत्वरूपं करणत्वं मुख्यप्राणस्य तदप्रयोज्य त्वरूपमकरणत्वमित्येतद्वैलक्षण्यं नोपपद्यते । तथाऽपि सुप्त्यादौ व्यापाराभावाभावरूपयुक्तया 'तानि ह वा' इति श्रुत्या चैतद्वैलक्षण्यं सिद्ध्यतीति नानुपपत्तिः । युज्यत इत्यनन्तरमतो न वैयर्थ्याख्यदोष इति वाक्यशेषः । हेत्वसिद्धिपरिहाराय—तथाहीत्युक्तम् ॥

(१०) तत्सूचितश्रुतिमुदाहर्तुं प्रतिजानीते—माण्डव्येति ॥ माण्ड व्यानां श्रुतिरत्रार्थे प्रमाणत्वेन भवतीत्यर्थः । न केवलं सूत्रोक्तिरिति चार्थः । तां श्रुतिं पठति—तानीति । ' तान्येतानि ' चक्षुरादीनि । स ङ्कोचशङ्कावारणाय-सर्वाणीति । ' करणानि ' कर्तृप्रयोज्यानि इति यतः 'अथ' तस्मान्मुख्यप्राण एक एव 'अकरणः' कर्त्रप्रयोज्यः ' तस्मान्मु ख्यः' तस्मान्मुख्यत्वादेनं प्राणं मुख्य इत्याचक्षते विद्वांस इत्यर्थः । इति माण्डव्यश्रुतिरित्यन्वयः । अनेन-'हि' यस्मात् 'तथा' अकरणत्वा दिप्रकारेण श्रुतिरेनं मुख्यं चक्षुरादींश्च ' दर्शयति ' प्रतिपादयति त स्मान्मुख्यस्याकरणत्वाच्चक्षुरादीनां च करणत्वादस्माद्वैलक्षण्यात्त स्येतरेभ्योऽतिशयो युज्यते । यत एवमतो न श्रुतिवैयर्थ्याख्यो दोष इति सूत्रार्थ उक्तो भवति ॥ ७ ॥

॥ इति चक्षुराद्यधिकरणम् ॥

८. अधिकरणम् ॥

( १ ) अत्र प्राणापानादेर्मुख्यप्राणस्वरूपत्वतद्दासत्वविषये श्रुति विरोधः परिह्रियते । सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूच यति सर्व इति ॥ वैशब्दः प्रसिद्धौ । एत इत्येतद्विवृणोति—प्राण इ

समान इत्यथ प्राणो वाव सम्राट्' इति कौण्डिन्यश्रुतिः।

(२) प्राणापानादयस्सर्वे मुख्यदासा यतोऽनिशम्।
अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते॥
इति युक्तिर्वायुप्रोक्ते।

(३) मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः।
स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्॥
इति गौपवनश्रुतिः॥

(४) अतो वक्ति—

---

ति। इत्येत इत्यन्वयः। 'अथ' तस्मात् 'प्राणो' मुख्यः 'सम्राट्' सर्वैश्वरत्वेन प्रकाशमानः। श्रुतिरिति। दासत्वं वक्तीति शेषः॥

(२) न चास्याः स्वरूपत्वश्रुतिविरोधो युक्तियुक्तत्वादित्याशयेन तां युक्तिं स्मृत्या दर्शयति—प्राणेति॥ यतः सर्वे प्राणापानादयोऽनिशं मुख्यस्य प्राणस्य दासाः, अत एव तदाज्ञया नित्यं स्वानि कर्माणि कुर्वन्तीत्यर्थः। प्राणादीनां कर्माणि

यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः। ( )
ऊर्ध्वं प्राण उन्नयत्यपानं प्रत्यगस्यति (कठ.५-३.)॥

इत्यादिश्रुतिषु,

प्राणः प्रवृत्तिहेतुः स्यादपानः तन्निवर्तने।
वनकर्मा तथा व्यानः उदानो योगकर्मकृत्॥
देहेन्द्रियमनोनेता समानोऽन्तस्स्थितिप्रदः॥

इतिबृहद्भाष्योदाहृतस्मृतौ चोक्तानि। इतीति। एवं वायुप्रोक्ताख्यग्रन्थवचने उक्तमित्यर्थः। अनेन प्राणादयो मुख्यदासास्तदाज्ञया कर्मकारित्वादिति सप्रतिज्ञा युक्तिरुक्ता भवति॥

(३) एवं दासत्वे श्रुतिमभिधाय प्राणादीनां मुख्यस्वरूपत्वेऽपि श्रुतिमुदाहरति—मुख्यस्यैवेति॥ 'स एव' मुख्य एव। अत्र मुख्यस्य स्वरूपाण्येव, स एवेतिद्विरवधारणेन स्वरूपत्वे तात्पर्यमुक्तम्। तेन स्वरूपत्वे श्रुतेरपि प्राबल्यं सिद्ध्यति। अनेन श्रुतिद्वयस्यापि समानबलत्वेन विरुद्धत्वाच्चानिर्णायकत्वादप्रामाण्यमिति पूर्वपक्षः सूचितो भवति॥

(४) अथ सिद्धान्तयत्सूत्रमवतार्य, तस्य प्राणादयः पञ्च न केव

सू—ॐ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ॐ ॥ १३ ॥

अथ पञ्चवृत्त्यैतत्प्रवर्तते। प्राणो वाव पञ्चवृत्तिः। प्राणोऽपानो व्यान उदानः समान इति। तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते। प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानः।

(५) यथा ह वै मनः पञ्चधा व्यपदिश्यते मनो बुद्धिरहङ्कारश्चित्तं चेतनेति। तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजा

---

लं मुख्यदासा एव, किन्तु तद्वृत्तयोऽपि मुख्यप्राणस्वरूपभूताश्च। कुत एतत्? यस्मात् 'अथ' इति श्रुतौ श्रेष्ठो मनोवत् पञ्चवृत्तिर्व्यपदिश्यते तस्मात्। यद्वा—श्रेष्ठः 'पञ्चवृत्तिश्च' पञ्चदासवान् पञ्चवृत्तिमांश्च, कुतः? यतो 'मनोवत्' मनोदृष्टान्तेन पञ्चवृत्तिर्व्यपदिश्यते, अत इत्यध्याहारविपरिणामानुषङ्गपदभेदैस्तं विना वा स्पष्टार्थत्वात्तदुपात्तश्रुतिमेवोदाहरति—अत इति ॥ अथेतिश्रुतौ प्रमेयान्तरारम्भेऽथशब्दः। 'पञ्चवृत्त्या' पञ्चवृत्तिना 'एतत्' शरीरम्। कः पञ्चवृत्तिरित्याह—प्राण इति। वावेति निपातसमुदायः। प्रसिद्धौ। पञ्च वृत्तयः स्वरूपाणि यस्य स तथोक्तः। कास्ताः पञ्च वृत्तय इत्यत आह—प्राण इत्यादि। इति पञ्चवृत्तिरित्यन्वयः। अत्र प्राणादिशब्दाः देवतापराः, न तु जडपराः 'तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते' इत्युत्तरवाक्यविरोधात्। एवं स्वरूपाण्यभिधाय दासानाह—तेभ्य इति। श्रुतिप्रसिद्धेभ्यः शरीरगतेभ्यश्चेत्यर्थः। पञ्चानां दासत्वोपपादनाय प्राणादिजन्यत्वमुक्तम्। कस्मात् कस्य जन्मेत्यतस्तद्विवृणोति—प्राणादिति ॥

(५) एवं दार्ष्टान्तिकार्पकश्रुत्यंशमुदाहृत्येदानीं मनोवदिति दृष्टान्तं विवृण्वन् श्रुत्यंशमुदाहरति—यथेति। हेत्यास्वादमे। प्रसिद्धौ वै शब्दः। सङ्कल्पविकल्पात्मकं मनः। करिष्ये यक्ष्ये इत्यादिक्रियाहेतुभूतः कामः सङ्कल्पः। स एव नानार्थविषयो विकल्पः। निश्चयरूपा बुद्धिः। अस्वरूपे स्वातन्त्र्याद्यस्वधर्मे स्वरूपत्वमतिः स्वधर्मत्वबुद्धिः अहङ्कारोऽभिमानः इति तत्त्वप्रदीपोक्तेः। स्मरणहेतुश्चित्तम्। चेतसः स्मरणस्य व्याप्तिर्बहुविषयकत्वं तदनुकूलशक्तिश्चेतना।

चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणम्।
बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते ॥

यन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चि त्ताच्चित्तं चेतनाया एव चेतनैवमिति ' इति ॥ १३ ॥

——*——

९. अधिकरणम् ॥

( १ ) ' प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राण

इति वचनात् । अत्र मनस इति शेषः । इति पञ्चधेत्यन्वयः । उपादानो पादेयैक्यविवक्षया सङ्कल्पविकल्परूपं मन इत्याद्युक्तिः । अत एवै तरेयभाष्ये सङ्कल्पविकल्पयोर्हृदयमनोरूपत्वमुक्तम् । अत्रापि मनआ दिशब्दैर्देवता उच्यन्ते । उत्तरवाक्ये दासत्वोक्तेः टीकायां जडलक्ष णोक्तावपि तदभिमानितया चेतनानामपि लक्षितत्वान्न तद्विरोधः । एवं मनस्स्वरूपाण्युक्त्वा तस्य पञ्च वृत्तीराह-तेभ्य इति । तदुपपादय ति—मनस इति । एवमित्यस्य एवं प्राणो वाव पञ्चवृत्तिरिति पूर्वेणान्व यः । श्रुतिगतस्य द्वितीयेतिकरणस्य इति तेभ्यः पञ्च दासाः प्रजाय न्त इति पूर्वेणान्वयः । भाष्यकारीयस्यान्तिमस्येतिशब्दस्य श्रुतिस माप्तिद्योतकस्य इति व्यपदिश्यत इति सौत्रपदेनान्वयः । अतएव टी कायां तदुपात्तश्रुतिमित्युक्तम् । श्रुतिनामाग्रहणात्कौण्डिन्यश्रुतिरि यमिति निश्चेतुं न शक्यः । पञ्चकविवेकस्तु—

प्राणाद्यास्त्रिविधाः पञ्च प्रधानो वायुरेव च ।
मुख्यपञ्चकरूपस्सन् गरुडो मध्यपञ्चकः ॥
अवमाः पञ्चकास्त्वन्ये प्राणाद्यास्तस्य सूनवः ।
इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः ॥
प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ ।
रुद्रेन्द्रौ तत्परश्श्रेष्ठो वायुर्व्यान उदाहृतः ॥

इति छान्दोग्यभाष्यादवगन्तव्यः । एतेन सयुक्तिकश्रुतिविरोधः परि हृतः । स्वरूपत्वदासत्ववचनयोर्भिन्नव्यक्तिविषयत्वात् ॥ ८ ॥

॥ इति पञ्चवृत्त्यधिकरणम् ॥

——*——

९. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुख्यप्राणपरिमाणविषयश्रुतिविरोधः परि ह्रियते । यद्यपि जीवाणुत्वोक्त्यैव प्राणस्याप्यणुत्वं सिद्धमिति न पृथ ग्विचार्यत्वम् । तथाऽपि तत्र चैतन्यविषये विचारः । अत्र तु रूपविषय

स्सर्वतः प्राण एवेदं सर्वम्' इति प्राणस्य व्याप्तिः प्र
तीयते।

(२) यतस्सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु।
अतो धृतं जगत्सर्वमन्यथा केन धार्यते॥
इति च युक्तिर्वायुप्रोक्ते।

इति न गतार्थता। यद्यपि 'अणवश्च' इत्यनेनेदं गतार्थं, मुख्यस्यापि प्राणत्वात्। तथाऽप्यस्य बहिर्देहादपि व्याप्तेः सत्त्वात्, कर्त्रप्रयोज्यत्वे न इन्द्रियविलक्षणत्वाच्च 'अणुश्च' इति पृथगणुत्वसमर्थनं युक्तमिति ध्येयम्। मुख्यप्राणो व्याप्तोऽणुर्वेति सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति—प्राण एवेति॥ अत्र प्राणशब्देन मुख्यप्राण उच्यते। तस्याभ्यासस्तात्पर्यार्थोऽन्यत्वशङ्कानिरासार्थश्च। 'सर्वतः' सर्वदिक्षु अस्तीति शेषः। 'सर्वं' सर्वसत्ताप्रदः। एवशब्दस्य द्विर्ग्रहणं सर्वत्रानुषङ्गार्थम्। प्राधान्याभिप्रायेणैवकारः। इतीत्यनन्तरं श्रुताविति शेषः॥

(२) नन्वणुत्वेऽपि श्रुतिरस्तीति तद्विरोधोऽस्या इत्यत आह—यत इति॥ तुशब्दोऽवधारणे। अतस्त्विति सम्बध्यते। तेन पूर्वार्धोक्तस्य व्यापकतासिद्धिः। एवकारोऽन्यप्राधान्यव्यवच्छेदकः। सङ्कोचनिरासाय सर्वशब्दः। 'अन्यथा' सर्वत्र व्याप्त्यभावे, असौ न धारयेदिति शेषः। ततश्च सर्वं जगत्केन धार्यते, न केनापीत्यर्थः। इति वायुप्रोक्ते ग्रन्थे उक्ता युक्तिश्चात्रार्थे मानमित्यर्थः। न केवलं श्रुतिरिति चार्थः। वायुप्रोक्ते चेति वा चान्वयः। तथात्वे न केवलं वायुप्रोक्ते जगद्धारकत्वयुक्तिरुक्ता, किन्तु 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः' इति हरिवंशेऽपीति समुच्चयार्थश्चकारः। तथा च व्याप्तिश्रुतेर्युक्तियुक्तत्वेन प्राबल्यात् नाणुत्वश्रुतिविरोधोऽस्या इति भावः। एकोनपञ्चाशन्मरुतां दितिगर्भे प्रविष्टानां गणशः सप्तधेन्द्रेण विभक्तानां पुनश्चैकैकशः सप्तधा कृतानां सप्तस्कन्धसंज्ञा समजनि। तान् गतो यो महाबलो लोकान् बिभर्तीति हरिवंशवचनार्थः। 'सप्तस्कन्धा इमे सप्त चरन्तु मम पुत्रकाः' इति दिति वचनात्, 'सप्तगणा वै मरुतः' (तै. सं.२-२-५.) इति श्रुतेः, सप्त सप्तका हि ते इति ऋग्भाष्यटीकोक्तेश्च। केचित्तु स्वस्कन्धेन गतः प्राप्तः सप्त लोकान् बिभर्तीत्यर्थमाहुः। तन्न, 'सप्तस्कन्धगतो लोकान् त्रीन् दधार चचार ह' इति पाठान्तरविरो

(३) 'अणुनैतत्सृज्यते अणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणैर्ह्येतद्भवति' इति च सौत्रायणश्रुतिः ॥

(४) अत आह—

सू—ॐ ॥ अणुश्च ॥ ॐ ॥ १४ ॥

'स वा एष प्राणोऽणुर्महान् नामान्तर्वा अणुर्बहिर्महान् । प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च पर

---

धात् । मरुत्सु प्रधाना ये सप्त मरुतः तेषां स्कन्धगतो मुख्यवायुः लोकान् बिभर्तीति व्याख्यानमप्युक्तप्रमाणविरुद्धम् । एतेन महदहङ्कारपञ्चभूताख्यसप्तस्कन्धगत इत्यर्थ इति पक्षोऽपि निरस्तः ॥

(३) एवं व्याप्तिश्रुतिं प्रदर्श्याणुत्वश्रुतिं दर्शयति—अणुनेति ॥ 'एतत्' शरीरं जगद्वा । अणुः क इत्यत आह—प्राणो वेति । अत्रोक्तोऽणुः श्रेष्ठः प्राणः कुतः, अन्यः किं न स्यादित्यतो जगत्स्रष्टृत्वादिकमुक्तम् । तस्योपनयमाह—प्राणैर्हीति । हिः प्रसिद्धौ यत इत्यर्थे च । 'एतत्' जगत्स्रष्टृत्वादिकम् । श्रुतिरित्यनन्तरमणुत्वं वक्तीति शेषः । अनेन प्रबलव्याप्तिश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमिति पूर्वपक्षस्सूचितः ॥

(४) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे चशब्द एवार्थो व्याप्तत्वसमुच्चयार्थश्च । श्रेष्ठ इति चानुवर्तते । तथा च श्रेष्ठो मुख्यप्राणरूपेणाणुरेव । न च व्याप्तिश्रुत्यादिविरोधः । यतो न केवलमणुः, किन्तु बहिर्देहाद्वर्तमानेन मुख्यप्राणरूपेणाण्डादिव्याप्तश्च, अत इति सूत्रार्थः । कुतोऽयं विशेष इत्यत आह—स इति । वै नामेति निपातौ प्रसिद्ध्यर्थौ । 'एष प्राणो' मुख्यप्राणोऽणुर्महांश्च भवति । न चैकस्मिन्नुभयोर्विरोध इत्यत आह—अन्तरिति । देहस्यान्तरणुः हृदयसुषिरस्य सूक्ष्मत्वादिति तत्त्वप्रदीपोक्तेः । तथा च अध्यात्मगतप्राणरूपेणाणुरित्यर्थः । 'बहिः' देहात् । तथा चाधिदैवगतवायुरूपेण 'महान्' व्याप्त इत्यर्थः । तत्र बहिर्देहत एव व्याप्तिः, अन्तस्तु प्राणस्य देहतोऽप्यणुत्वमिति विवेकः । नन्वत्र श्रुतः प्राणो मुख्य इति कुत इत्यतो वाक्यशेषादित्याशयेन तमुदाहरति—प्राण इति । वै प्रसिद्धौ । ईशितव्यश्चासावीशश्चेति विग्रहः । तदुभयं विवृणोति—ईश इति । 'हि' यतः 'असौ' मुख्यः 'सर्वस्य' स्वपरमात्मातिरिक्तस्य जगतः 'ईशः'

स्य ' इति कौण्डिन्यश्रुतिः ॥ १४ ॥

---*---

१०. अधिकरणम् ॥

( १ ) करणत्वं प्राणानामुक्तम् ।
जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः ।
यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु ॥
इति सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते ।
( २ ) 'ब्रह्मणो वा एतानि करणानि चक्षुश्श्रोत्रं मनो वागि
ति । तद्ध्येतैः कारयति ' इति काषायणश्रुतौ ।

---

स्वामी ' परस्य ' परमात्मनः ' ईशितव्यः ' भृत्यः । श्रुतिरित्यनन्तरं उ क्तविशेषमाहेति शेषः । अनेन पूर्वोदाहृतव्याप्तिश्रुतौ प्राणशब्दो मुख्य वायुपर इति सूचितम् ॥ ९ ॥

॥ इति अण्वधिकरणम् ॥

---*---

१०. अधिकरणम् ॥

( १ ) अत्रेन्द्रियविषयश्रुतिविरोधः परिह्रियते । अधिकरणसङ्गतिं दर्शयति—करणत्वमिति ॥ ' प्राणानां ' इन्द्रियाणां करणत्वं ' अकर णत्वाच्च ' इति चशब्देन ' उक्तं ' सूचितमित्यर्थः । सन्देहबीजं श्रुति विरोधं दर्शयन् पूर्वपक्षं च सूचयति—जीवस्येति । तेषामेवेत्यादावु पस्कार्यम् । अस्य जीवकरणत्वं प्रतीयत इत्यनेनान्वयः । श्रुतौ तुश ब्दोऽवधारणे । ' सर्वशः ' सर्वान् । तथा च वृद्धाः ज्ञानिनः सर्वशः स र्वान् ' प्राणान् ' इन्द्रियाणि ' जीवस्यैव करणानि ' तदपेक्षयैव तत्प्रयो ज्यानीत्याहुरित्यर्थः । कुत इत्यतस्तत्र हेतुमाह—यस्मादिति ॥ यस्मा त् ' एते ' प्राणाः ' सर्वदेहिषु ' सर्वप्राणिभिः ' तद्वशगाः ' जीववशव र्तिनः स्वस्ववशा एव ' दृश्यन्ते ' अनुभूयन्ते तस्मादित्यर्थः ॥

( २ ) एवं जीवकरणत्वश्रुतिमुदाहृत्य तद्विरुद्धश्रुतिमुदाहर ति—ब्रह्मण इति ॥ एतानीत्यस्य व्याख्यानं—चक्षुरित्यादि । इत्येता नीत्यन्वयः । अत्र हेतुमाह—तदिति । ' तत् ' ब्रह्म । हिशब्दो यस्मादि त्यर्थे । ' एतैः ' इन्द्रियैः । इन्द्रियाणि कर्म कुर्वन्ति, तैर्ब्रह्म कारयतीति करणे कर्तृत्वोपचारः । एतैर्ब्रह्म करोतीति फलितार्थः । चः श्रुतिसमु च्चये । श्रुतावित्यनन्तरं ब्रह्मकरणत्वं प्रतीयते इति शेषः । श्रुतावित्यने

( ३ ) अत आह—

सू—ॐ ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ ॐ॥ १५ ॥

यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तय

न सयुक्तिकमिति क्रियाविशेषणेन चक्षुरादीनि जीवस्यैव करणानि, तथा श्रुतेस्तद्वशत्वेनानुभवसिद्धत्वाच्चेति सयुक्तिकपूर्वपक्षः सूचितो भवति ॥

( ३ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे-अत इति ॥ ज्योतिराद्यधिष्ठानमिति हेतुगर्भं पक्षविशेषणम् । अत्र ज्योतिश्शब्दो 'योऽग्नौ तिष्ठन्' (बृ. ५-७-५.) इति श्रुताग्निपरः । आदिशब्देन पृथिव्यादिभूतं तद्देवता च गृह्यते । 'यस्तेजसि तिष्ठन्' (बृ.५-७-१४.) इति श्रुता प्रकृतिश्च । 'अधिष्ठानं' प्रेरकम् । ज्योतिराद्यधिष्ठानं यद्ब्रह्म तदेवेत्यनेन सूत्रे तदिति व्यस्तमपि भवति । तच्च ब्रह्मपरं, तेन अवधारणार्थकतुशब्दस्यान्वय इत्युक्तं भवति । तदेव, न जीव इत्येवशब्दार्थः । 'एतैः' चक्षुरादिभिः करणैः प्रवर्तयतीति । अनेन सूत्रे ज्योतिराद्यधिष्ठानमित्यावर्तते । अत्र ज्योतिश्शब्दोऽग्निकार्यचक्षुःपरः । तथा च ज्योतिराद्यधिष्ठानं यद्ब्रह्म तदेव 'ज्योतिराद्यधिष्ठानं' ज्योतीरूपचक्षुरादिनियामकम्, न जीव इति सौत्रप्रतिज्ञापदतात्पर्यार्थ उक्तो भवति । केचित्तु—सूत्रे शेषोक्तिरियमित्याहुः । कुत इत्यतस्तत्र ज्योतिराद्यधिष्ठानमिति पक्षविशेषणेन ब्रह्मणः तेजःप्रभृतिभूतप्रेरकत्वे तदुपचितत्वेन तदंशभूतचक्षुरादिप्रेरकत्वस्यापि युक्तत्वादिति हेतोः, एवमादिपदगृहीतप्रकृतिसूर्याग्न्यादिनियन्तुः परस्य चक्षुरादिनियामकत्वस्य कैमुत्येन सिद्धत्वादिति हेतोश्च सिद्धत्वात् चक्षुरादिनियामकत्वे कैमुत्यान्तरपरतया तदामननादिति सूत्रखण्डं व्याचष्टे-य इति । इत्यादीति लुप्तविभक्तिको निर्देशः । इत्यादावित्यर्थः । आदिपदेन 'यश्चक्षुषि तिष्ठन्' (बृ.५-७.) इत्यादिकं गृह्यते । तथा च इत्यादिवाजसनेयवाक्ये तस्य सर्वेन्द्रियप्रेरकमुख्यप्राणप्रेरकत्वस्य आमननात् प्रतिपादनादित्यर्थः । 'यश्चक्षुषि' इत्यादिश्रुतिसूचनेन विष्णोश्चक्षुरादिनियामकत्वे श्रुतिप्रदर्शनपरतयाऽपि तदामननादित्यंशो व्याख्यातः । 'प्राणे' सर्वप्राणप्रेरकमुख्यप्राणे तिष्ठन्यस्तस्मात् 'अन्तरो' विविक्तः एष त आत्माऽन्तर्यामीति श्रुत्यर्थः । एवमुत्तरवाक्यस्यार्थोऽपि ज्ञेयः । यद्यपीन्द्रियप्रायपाठात् प्राणशब्दो घ्राणे

ति । 'यः प्राणे तिष्ठन्' (बृ. ५ - ७ - १६.) इत्यादि तदामननात् ॥ १५ ॥

(४) कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—

सू—ॐ ॥ प्राणवता शब्दात् ॥ ॐ ॥ १६ ॥

जीवेनैव स्वकरणैः कारयति परमात्माऽतो न विरोधः ।

(५) 'एष ह्यनेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुद्ध्या बोधयति तस्मादेतावाहुः स्मृति

---

न्द्रियपरो वा इन्द्रियमात्रपरो वा भवति । तथाऽप्यधिकार्थलाभादपौनरुक्त्याच्चेन्द्रियमुख्याभिमानिप्रधानवायुपरो व्याख्येयः । अत एव टीकायां मुख्यप्राणेत्युक्तम् । प्रमेयदीपेऽप्यमुख्यमुख्यसाधारण्येन प्राणेन्द्रियदेवतापरोऽयमित्युक्तम् । ननु सूत्रे भूतक्रमेणोक्तौ आकाशाद्यधिष्ठानमिति वाच्यम् । श्रौतक्रमेण चेत्, पृथिव्याद्यधिष्ठानमिति । तदुभयं विहाय ज्योतिरादीति कथं निर्देश इति चेत्-न, पूर्वसूत्रे चक्षुरादिवदिति, 'ब्रह्मणो वा' (काषायण.) इति श्रुतौ चक्षुरिति, 'एषः' इति वक्ष्यमाणश्रुतौ च चक्षुषेति चक्षुष आदित्वेन प्रकृतत्वात्तद्विवक्षया चक्षुरादीत्युक्तत्वात् । अत एव भाष्ये द्वितीयश्रुत्यनुसाराद्ब्रह्मेत्युक्तम् ॥

(४) प्राणवतेतिसूत्रं तन्निरसनीयशङ्काप्रदर्शनपूर्वकमवतारयति-कथमिति ॥ तर्हीति शेषः । तथाच यदि प्राणानां ब्रह्मकरणत्वं तर्हीत्यर्थः । श्रुतिरित्यनन्तरमुपपद्यत इति शेषः । किन्तु ब्रह्मकरणत्वस्य तद्विरोध एव भवेदिति वाक्यशेषः । सूत्रं व्याचष्टे—जीवेनेति । एवकारो भिन्नक्रमः । सूत्रे करणैस्स्वकरणैरेव, न तु जीवकरणैरित्यवधारणार्थकतुशब्दोऽन्वितः । सूत्रानुषक्तं तदिति पदं 'एषः' इति श्रुत्यनुसाराल्लिङ्गविपरिणामेन परमात्मेति व्याख्यातम् । दर्शनादीति इति श्रुतेरर्थ इति च शेषः । जीवेनेत्यनेन प्राणवता इन्द्रियवता जीवेनेति प्राणवतेत्यस्यार्थ उक्तः । न विरोध इति सूत्रे शेषोक्तिः । तथा च यतो 'जीवस्य करणानि' इति श्रुतेः स्वकरणैरेव प्राणैः परमात्मा जीवेनामुख्यकर्त्रा दर्शनादि कर्म कारयतीत्यर्थो युक्तः । अतः प्राणानां ब्रह्मकरणत्वोक्तेः जीवकरणत्वश्रुतिविरोधो नेत्यर्थः ॥

(५) ब्रह्म इन्द्रियैः जीवेन दर्शनादि कारयतीत्येतत्कुत इत्यतस्तत्र हेतुत्वेन शब्दादित्यंशं व्याचष्टे—एष इति ॥ 'हि' यस्मात् 'एषः' परमात्मा जीवस्य स्वाधीनतया किञ्चिदिन्द्रियस्वामित्वं दत्वा एतेनानेन

स्मृतिरिति ' इति भाल्लवेयश्रुतेः ।
(६) करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।
श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ॥
(७) न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।
केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम् ॥
इति वाराहे ॥ १६ ॥

'आत्मना' जीवेनामुख्यकर्त्रा स्वापेक्षयैव करणभूतेन चक्षुषा रूपादिकं दर्शयतीत्यर्थः । 'बुद्ध्या' बुद्धीन्द्रियेण । मानबोधौ सामान्यविशेषज्ञानरूपौ । यद्वा-मानयति विचारयति बोधयति ज्ञापयतीत्यर्थः । बाह्येन्द्रियेषु चक्षुषः प्राधान्यात्प्रथमोक्तिः । 'एतौ' परमात्मजीवौ सृत्सृती स्वातन्त्र्येण प्रवृत्तियुक्तद्विहीनावित्याहुरित्यन्वयः । श्रुतेरित्यस्य जीवेनेति पूर्ववाक्येनान्वयः । इति ज्ञायत इति शेषः ॥

(६) अस्तु ब्रह्म जीवेन चक्षुरादिभिर्दर्शनादि कारयतीति । तथाऽपि जीवकरणत्वश्रुतिस्तदर्थेत्येतत्कुतः इत्यतः शब्दादित्यनेनैव सूचितां स्मृतिमाह-करणैरिति ॥ यतः 'कारणं' ब्रह्म 'पुरुषापेक्षया' वस्तुतः परमपुरुषापेक्षया जीवप्रयत्नापेक्षया च करणैः श्रोत्रादिभिर्जीवेन 'अखिलं' श्रवणादि कारयति । यद्वा—'पुरुषापेक्षया' पुरुषस्य जीवस्य यद्यत् ज्ञानमपेक्षितं तदनुसारेण तेनाखिलमपेक्षितं कारयति, अतस्तद्विवक्षया श्रोत्रादीनि जीवस्य करणानीति श्रुतिः प्रवृत्तेति वृद्धा विदुरित्यर्थः । पुरुषापेक्षयेत्यनेन श्रोत्रेन्द्रियस्य स्वशब्देन ग्रहणे श्रुतौ प्रथमनिर्दिष्टस्य चक्षुषः आदिशब्देन ग्रहणे च कारणमुक्तं भवति ॥

(७) ननु यदि चक्षुरादीनि ब्रह्मप्रयोज्यत्वाद्ब्रह्मणः करणानीत्युच्यन्ते, तर्हि मुख्यप्राणस्यापि ब्रह्मप्रयोज्यत्वरूपं ब्रह्मकरणत्वं सम्भवतीति तस्याकरणत्वहेतुना 'प्राण एवाकरणस्तस्मान्मुख्यः' इत्युक्तं मुख्यत्वं विरुद्धं स्यात् । इन्द्रियाणां जीवकरणत्वे तु मुख्यप्राणस्य जीवप्रयोज्यत्वाभावेन इन्द्रियवज्जीवकरणत्वाभावादकरणत्वकृतमुख्यत्वोपपत्तिरित्यत आह—नेति ॥ यस्मात्परमेश्वरो 'मुख्यं' मुख्यप्राणं 'जीवापेक्षया न कारयेत्' जीवेच्छाप्रयत्नप्रयोज्यमपि न कुर्यादिति यावत्, किन्तु 'केवलात्मेच्छया' स्वेच्छाप्रयत्नमात्रप्रयोज्यं कुर्यात् । 'तस्मात्' जीवापेक्षया करणत्वाभावात् 'तस्य' मुख्यप्राणस्य मुख्यत्वं 'निश्चितं' अविरुद्धमित्यर्थः । तथा च जीवापेक्षया ब्रह्मकरण

( ८ ) सू—ॐ ॥ तस्य च नित्यत्वात् ॥ ॐ ॥ १७ ॥
अनादिनित्यत्वाज्जीवकरणसम्बन्धस्य युज्यते तत्कर
णत्वश्रुतिः ।

( ९ ) 'अथावियोगीनि करणैर्वाव न वियुज्यते देहेनैव वियु
ज्यते इत्येतद्वाव करणानां करणत्वं यद्वाव न वियुज्य

त्वं परमेश्वरदत्तजीवप्रयोज्यत्वरूपजीवकरणत्वसहितब्रह्मकरणत्वमि न्द्रियाणां 'अकरणत्वात्' इति सूत्रे चशब्देन विवक्षितमिति तस्य च मुख्येऽनभ्युपगमात् न तस्याकरणत्वोक्तिविरोध इति भावः । इति वाराहे उक्तमिति शेषः । अस्यातो न विरोध इति पूर्ववाक्यानुवृत्त्या ऽन्वयः ॥

( ८ ) एवं भगवदधीनान्यपीन्द्रियाण्यस्वतन्त्रजीवकर्तृके कर्मणि साधनत्वात्तत्करणानीत्युच्यन्ते, यथा परकीयकुठारेणापि प्रभ्रष्टतोऽसौ तत्करणमुच्यत इत्येवं मुख्यमर्थं जीवकरणत्वश्रुतेरुक्त्वा मुख्यार्थान्त रप्रतिपादकं सूत्रं पठित्वा व्याचष्टे—तस्य चेति ॥ सूत्रे नित्यत्वादि त्युपलक्षणम् । अनेन नाशाभावोक्तावपि उत्पत्त्यभावस्यालाभादित्या शयेनानादीत्युक्तम् । मुक्तिपर्यन्तं सदा विद्यमानत्वादित्यर्थः । न के वलं जीवकर्तृके कर्मणि इन्द्रियाणां साधनत्वादिति चशब्दार्थः । अने न चशब्दो भिन्नक्रमो निमित्तसमुच्चयार्थ इति सूचितम् । जीवकरण सम्बन्धस्येत्यनेन तस्येति पदं व्याख्यातम् । युज्यत इत्यादिना साध्या ध्याहारस्सूचितः । 'तत्करणत्वश्रुतिः' 'जीवस्य करणानि' इति जीवक रणत्वश्रुतिरित्यर्थः । तथा च परकीयेऽपि बहुकालसम्बन्धिनि वस्तु नि उपचारतस्तदीयत्वव्यवहारदर्शनादत्रापि भगवदीयेष्वपीन्द्रियेषु बहुकालीनजीवसम्बन्धितामादाय तत्करणत्वश्रुतिः प्रवृत्तेति श्रुतेरुपच रितार्थत्वमिति भावः ॥

( ९ ) अनादिकालीनसम्बन्धनिमित्तेयमिन्द्रियाणां जीवकरण त्वश्रुतिरित्येतत्कुत इत्यत आह—अथेति ॥ प्रमेयान्तरारम्भार्थोऽथेति शब्दः । 'अवियोगीनि' जीवेनेति शेषः । कुत इत्यत आह—'करणैः' इन्द्रियैरिति । वावेति प्रसिद्धौ न वियुज्यते जीवः, तर्हि कथं मृतिरि त्यत आह—देहेनेति । न करणैरित्येवार्थः । एवं जीवकरणसम्बन्ध स्यानादिनित्यत्वमुक्त्वा तस्य जीवकरणत्वव्यवहारनिमित्तत्वमुपपा दयति—इत्येतदिति । इति वाक्यबोध्यमित्यर्थः । 'करणानां करणत्वं'

ते ' इति गौपवनश्रुतिः ।

( १० ) चशब्दः करणसम्बन्धग्राही ॥ १७ ॥

११. अधिकरणम् ॥

( १ ) 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं प्रवन्ति'

---

इन्द्रियाणां जीवकरणत्वव्यवहारे निमित्तम् । किमेतदित्यतो देहेन्द्रियादिक व्यावर्तनेन करणैरित्यंशेनोक्तं पुनराह—यद्विति । यद्वाच न वियुज्यत इत्यंशेनोक्तं जीवकर्तृकावियोगित्वमिन्द्रियधर्मिकावियोगित्व व्यवहारे हेतुभूतमनादिसम्बन्धिस्त्वपर्यवसितं तदेतदिन्द्रियाणां जीव करणत्वव्यवहारनिमित्तमित्यर्थः । श्रुतिरित्यनन्तरं यत इति शेषः । अस्यानादिनित्यत्वाच्चेति सहेतुकप्रतिज्ञावाक्येनान्वयः ॥

( १० ) ननु 'प्राणवता' इति सूत्रे जीवस्य प्राणवत्पदेन प्रकृतत्वादत्र तच्छब्देन प्राधान्याज्जीवपरामर्शो युक्तः, न तु जीवकरणसम्बन्धस्य, अतः कथं व्याख्यायते सम्बन्धस्येत्यत आह—चशब्द इति ॥ सौत्रश्च शब्दः करणानामिन्द्रियाणां तत्सम्बन्धस्य च 'ग्राही' समुच्चायक इत्यर्थः । तथा च सत्यं तच्छब्दो जीवपरामर्शीति । तथापि यतोऽस्माभिः तच्छब्दपरामृष्टं चशब्दसङ्गृहीतौ श्रयं च मिलित्वा प्राग्जीवकरणसम्बन्धस्येति व्याख्यातम्, न तु सम्बन्धमात्राभिप्रायेण, अतो नानुपपत्तिरिति भावः । अनेन तस्यान्यस्य चेति धर्मिसमुच्चयेऽपि चशब्द इत्युक्तं भवति । न च सूत्रे सम्बन्धोक्त्यैव प्रकृतार्थसिद्धेः व्यर्था सम्बन्ध्युक्तिरिति वाच्यम् । सम्बन्धिनोरभावे सम्बन्धाभावेन तदुक्तेस्सार्थकत्वात् ॥ १० ॥

॥ इति ज्योतिरधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्र मुख्यप्राणस्येन्द्रियत्वानिन्द्रियत्वश्रुतिविरोधः परिह्रियते । सन्देहबीजं श्रुतिविगानं दर्शयन् विषयसंशयपूर्वपक्षांश्च दर्शयति—अथेति ॥ प्रमेयान्तरारम्भार्थोऽथशब्दः । उच्यन्त इति शेषः । कानि तानीत्यत आह—प्राणा इति । वैशब्दोऽप्यर्थः । सर्वेऽपि प्राणा इति । ते च 'प्राणाः' मुख्यप्राणद्वादशेन्द्रियरूपास्त्रयोदशसङ्ख्याका

इति सयुक्तिकपौत्रायणश्रुतिः सामान्येन प्राणानामिन्द्रियत्वं वक्ति । 'द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादशे' इति च काषायणश्रुतिः । अतः कस्येन्द्रियत्वं निवार्यमिति ।

---

ज्ञेयाः । प्राणानामिन्द्रियत्वं कुत इत्यत आह—प्राणा इति । 'हि' यस्मात् 'इदं' विषयजातमुद्दिश्य प्राणाः 'द्रवन्ति' गच्छन्ति तस्मादित्यर्थः । एवमिन्द्रियाणां त्रयोदशत्वप्रापकश्रुतिं समुदाहृत्य द्वादशत्वश्रुतिमुदाहरति—द्वादशेति । एवकारोऽधिकसङ्ख्याव्यावर्तकः । 'मनोबुद्धी' मनश्च बुद्धिश्च मनोबुद्धी इति विग्रहः । तुशब्दो विशेषार्थः । द्वादशे इति । द्वादशं च द्वादशं च द्वादशे । इन्द्रियशब्दविवक्षया नपुंसकद्विवचनप्रयोगः । प्रथमयोरित्यत्रेव द्वादशशब्दस्यैकत्र लक्षणया एकादशे द्वादशत्वारोपो वा । तथा च मनोबुद्धीन्द्रिये एकादशत्वद्वादशत्वसङ्ख्यापूरके इत्यर्थः । यत्तु एकादशी च द्वादशं चेति ततो 'नपुंसकम्' इत्येकशेषे एकवद्भावाभावे च द्वादशे इति रूपं सिद्ध्यतीति व्याख्यानं, तत्तु बुद्धेरेकादशीत्वं मनसः द्वादशत्वं इति व्यत्यासेनान्वयस्य भिन्नार्थयोर्विरूपयोरेकशेषस्याहष्टस्य कल्प्यत्वादुपेक्ष्यम् । केचित्तु—एकादशं च एकादशी चैकादशे द्वादशं च द्वादशी च द्वादशे उभयत्र नपुंसकमित्येकशेषः । ततः एकादशे च ते द्वादशे चेति कर्मधारयः । एवं च मनोबुद्ध्योः प्रत्येकमेकादशत्वं द्वादशत्वं च लभ्यते इति एतट्टीकार्थमाहुः। अपरे तु—काकेभ्यो दधि रक्ष्यतामित्यत्रोपलक्षितार्थमादाय बहुत्वान्वयवदत्रापि द्वादशशब्दोपलक्षितैकादशशब्दबोध्यार्थमादाय द्वित्वान्वय इत्याहुः । अयं प्रथमपक्षान्तर्भूत एव । स्वप्रबुद्धार्थस्तु मिलित्वा द्वौ दशशब्दौ ययोः पदयोः प्रविष्टौ ते द्वादशे तत्पदबोध्ये इति यावत् । एकादशद्वादशपदयोः दशशब्दस्य प्रविष्टत्वादिति भावः । अत एवैकादशद्वादशे इति टीकाऽपि मनोबुद्धिपदसामानाधिकरण्यात् तत्पदबोध्यत्वाभिप्रायेति । अस्तु श्रुतिद्वयम्, ततः किमित्यत आह—अत इति । यतः पौत्रायणश्रुतिः त्रयोदशानामपि प्राणानामिन्द्रियत्वं वक्ति । 'द्वादश' इति काषायणदृष्टश्रुतिश्च द्वादशानामेव । अतो विप्रतिपत्तेः संशय इत्यध्याहारेण योजना । अनेनाधिकरणाङ्गसंशयः इन्द्रियत्वाख्यविषयश्च दर्शितो भवति। एवं 'अथ' इति श्रुतिर्यतस्त्रयोदशानामपि प्राणानामिन्द्रियत्वं वक्ति,

( २ ) अतो वक्ति—

सू—ॐ ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ ॐ ॥ १८ ॥

मुख्यप्राणमृते त एवेन्द्रियाणि ॥

( ३ ) द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।
द्रवतामिन्द्रियाणां हि नियन्ता प्राण एकराट् ॥
इति पौत्रायणश्रुतिः ।

अतः सर्वेऽपि प्राणाः इन्द्रियाणीति साध्याध्याहारेणावृत्त्या योजनायां पूर्वपक्षः प्रदर्शितो भवति । तत्र हेत्वसिद्धिपरिहाराय सामान्येनेत्युक्तम् । तथा च यतः श्रुतिः ‘सामान्येन’ साधारण्येन सर्वेषामिन्द्रियत्वं वक्ति, अतो नासिद्धिरिति भावः । ननु विशेषश्रुतित्वात् द्वादशत्वश्रुत्या बाधितेयं त्रयोदशत्वश्रुतिरित्यत आह—सयुक्तिकेति । यत इयं श्रुतिः ‘सयुक्तिका’ इदंद्रवणरूपयुक्तियुक्ता तद्वादिनी अतः प्राबल्यान्न बाधितेति भावः । नन्वन्यतमस्य निवारणेन द्वादशानामेवेन्द्रियत्वनिर्धारणसम्भवात् कथमयं पूर्वपक्ष इत्यत आह—अत इति । यतः सामान्येनेन्द्रियत्वेदंद्रवणयोर्वचनमस्ति, अतः कस्य प्राणस्येन्द्रियत्वं ‘निवार्यते’ न कस्याप्यशक्यत्वात् इत्यर्थः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ अन्यत्र श्रेष्ठादित्यस्यार्थो—मुख्यप्राणमृत इति । मुख्यप्राणादन्ये प्राणा इत्यर्थः । पूर्वसूत्रानुवृत्तचशब्दस्य एवेत्यर्थ उक्तः । ते ऋत इति चावर्तते । एकमिति चाध्याह्रियते । तथा च ‘एकमृते’ विनैव ‘ते’ श्रुत्युक्ताः प्राणाः ‘इन्द्रियाणि’ द्वादशैवेन्द्रियाणि, न तु सर्वे प्राणा इत्यर्थः । तत्र कस्य व्यावृत्तिरित्यत आह—मुख्येति । तथा च मुख्यप्राणमेकमृतेऽन्ये प्राणाः इन्द्रियाणि, न तु मुख्यप्राणोऽपीत्यर्थः ॥

( ३ ) कुत इत्यतस्तत्र हेतुत्वेन तद्व्यपदेशादित्येतद्व्याचष्टे—द्वादशैवेति ॥ ‘हि’ यस्मात् इति विशेषश्रुतिरस्ति तस्मान्मुख्यप्राणमृतेऽन्य एवेन्द्रियाणि न तु मुख्योऽपीत्यर्थः । श्रुत्यर्थस्तु—इन्द्रियाणि द्वादशैवेत्याहुः, न तु त्रयोदशेति।अत्र कस्य व्यावृत्तिरित्यत आह—प्राण इति। मुख्यप्राणस्त्वित्यन्वयः । तुशब्दो विशेषार्थः । इत्याहुरित्यस्ति । नन्विदंद्रवणवतः तस्य कथमिन्द्रियत्वाभाव इत्यत उक्तम्—द्रवतामिति। गच्छतामित्यर्थः । विषयं प्रतीति शेषः । ‘नियन्ता’ स्वामी ‘एकराट्’ स्वतन्त्रः । तथा च मुख्ये इदंद्रवणादिति हेतुरसिद्ध इति भावः । दूरे

( ४ ) श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् ।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ॥
विषयद्रवणात्तेषां इन्द्रियत्वमुदाहृतम् ।
तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः ॥
इति बृहत्संहितायाम् ॥ १८ ॥

( ५ ) सू—ॐ ॥ भेदश्रुतेः ॥ ॐ ॥ १९ ॥
'स्थित एव हीदं मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न धत्ते न धारयन्ति तानि ह वा एतान्यबला

---

बार्थो नियन्तैवेति सम्बध्यते ॥

( ४ ) अत्रैव स्मृतिमाह—श्रोत्रादीनीति ॥ आद्यस्तुशब्दो ज्ञानेन्द्रियत्वरूपविशेषद्योतकः द्वितीयश्चेदित्यर्थे । एवशब्दो वागादिपञ्चकस्य ज्ञानेन्द्रियत्वव्यावर्तकः, तथाशब्दः समुच्चये, तथा च यानि श्रोत्रादीनि पञ्चैव ज्ञानेन्द्रियाणि यच्चातथाभूतं वागादिपञ्चकं कर्मेन्द्रियं तान्येव मनोबुद्धिसहायानि चेत् द्वादश भवन्ति । एतानि द्वादशैवेन्द्रियाणि, न त्वन्यदिति योजना । कुतो द्वादशानामिन्द्रियत्वमत आह—विषयेति । विषयं प्रति गमनादित्यर्थः । एतदन्यस्य मुख्यप्राणस्यानिन्द्रियत्वे हेतुमाह—'तेषां' इन्द्रियाणामिति । गच्छन्नियामकस्यापि गमनमस्त्येवेति तस्यापीन्द्रियत्वं स्यात् इत्यत आह-स्थित इति । स्वस्थान इति शेषः । न तु विषयं प्रति स्वयमपि गच्छतीत्यर्थः । अत्रोपपत्तिमाह-अखिलेति । अखिलेन्द्रियस्वामीत्यर्थः । स्वामिनो भृत्यानुगमनमयुक्तमिति भावः । बृहत्संहितायामिति । उक्तमिति शेषः ॥

( ५ ) यदि मुख्यप्राणो नेन्द्रियं तर्हि चक्षुरपि न स्यात्, चक्षुर्मुख्यप्राणयोः सर्वथा विशेषाभावात् इदंद्रवणभावाभावरूपस्य स्थितत्वास्थितत्वरूपस्य सूत्रकृताऽनुक्तत्वात् अप्रयोजकत्वाच्च इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—भेदेति ॥ स्थित इत्यतः प्राक्स्वस्थान इत्युपस्कार्यम् । हिशब्दः प्रसिद्धौ । 'इदं' सर्वं कार्यं करोति स्वयं, कारयत्यन्यमुखेन 'बलति' बलयुक्तवदाचरति चेष्टते वा 'बालयति' बलयुक्तान् करोति चेष्टयतीति वा । स्वयमखिलं 'धत्ते' बिभर्ति धारयत्यन्यमुखेन । उभयत्र हेतुमाह—प्रभुमिति । 'एनं' मुख्यं, अनेन

नि तस्मात्राहुरिन्द्रियाणि करणानि ' इति पौत्रायण श्रुतेः ॥ १९ ॥

( ६ ) सू—ॐ ॥ वैलक्षण्याच्च ॥ ॐ ॥ २० ॥

पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य ।

---

मुख्यस्य सर्वकर्तृत्वकारयितृत्वबलत्वबालयितृत्वधर्तृत्वधारयितृत्वादिविशेषोक्तया ईश्वरसाम्यमुक्तम् । तथा च सौत्रभेदशब्दो विशेषपरतया व्याख्यातः । एवं मुख्यप्राणधर्ममभिधाय तदभावमिन्द्रियेष्वाह—अथेति । इन्द्रियस्वामिस्थितिकथनानन्तरं तद्वशानीन्द्रियाणि लक्षणमुखेन कथ्यन्त इत्यर्थः । ततः किमित्यत आह—तानीति । हवेति प्रसिद्धौ । यस्मात्तान्येतानीन्द्रियाणि ' अबलानि ' करणकारणबलनबालनधरणधारणपोषणादिष्वत्यन्तं असमर्थानि तस्माज्जीवापेक्षया 'करणानि' तत्प्रयोज्यानि इति विद्वांस आहुरित्यर्थः । श्रुतेरित्यस्य न श्रेष्ठस्य चक्षुरादीनां चाविशेष इत्यध्याहृतसाध्येनान्वयः ॥

( ६ ) नन्वयं मुख्यप्राणः परमात्मवशो न वा । आद्ये न तस्यानिन्द्रियत्वसिद्धिः । ईशवशत्वसाम्यात् इदंप्रथणाभावस्थितत्वाद्यवान्तरवैलक्षण्यस्य चेन्द्रियेष्वपि सम्भवात् । द्वितीये चक्षुरादीत्युक्तविरोध इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—वैलक्षण्याच्चेति ॥ पुरुषेति । जीवप्रयत्नापेक्षयेत्यर्थः । तदपेक्षयेति यावत् । ' प्रवृत्तिः ' विषयेषु व्यापृतिः । इन्द्रियाणां जीवप्रयत्नापेक्षप्रवृत्तिकत्वं कुत इत्याशङ्कयाह—दृश्यत इति । यत इन्द्रियाणां जाग्रत्येव प्रवृत्तिर्दृश्यते, सुषुप्तौ चाप्रवृत्तिर्दृश्यते, अत इन्द्रियाणां प्रवृत्तिः पुरुषापेक्षयैव दृश्यत इति योजना । एवमिन्द्रियधर्मिकं वैलक्षण्यं सप्रमाणकं प्रदर्श्य तदभावरूपवैलक्षण्यं मुख्यस्याप्याह—नेति । न पुरुषापेक्षया प्रवृत्तिः मुख्यस्येत्यर्थः । मुख्यप्राणस्य प्रवृत्तिर्न पुरुषापेक्षेत्येतत्कुत इत्यतः सौत्रचशब्दसूचितां श्रुतिं पठति—इति च श्रुतिरिति । इति श्रुतिश्चेत्यन्वयः । चः प्रत्यक्षसमुच्चये । यत इति शेषः । अनेनोभयत्र वैलक्षण्यासिद्धिः परिहृता । वैलक्षण्यादिति हेतुवाक्यस्य त एवेन्द्रियाणीति प्रधानसाध्येनान्वयः । अनेन सूत्रेऽप्यर्थश्चशब्दः श्रुतिसूचकश्च । त इन्द्रियाणीति मुख्यप्राणस्यैवानिन्द्रियत्वोक्तिविरोधो नेति साध्यं चानुषञ्जनीयम् । तथा च ' अपि ' श्रेष्ठस्येशवशत्वेऽपि न ' ते ' इत्युक्तिविरोधः । कुतः ? ' अपि ' ईशाधीनत्वेऽपि ' वैलक्षण्यात् ' इन्द्रियाणामीश्वरजीवो

'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (प्र.४-३.) इति च श्रुतेः ॥ २० ॥

——:*:——

१२. अधिकरणम् ॥

(१) 'विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्मा वाव वि

---

भयवशप्रवृत्तिकत्वात् मुख्यस्य च केवलेश्वराधीनप्रवृत्तित्वरूपवैलक्षण्यात्। न चासिद्धिः 'वैलक्षण्यात्' इन्द्रियेषूक्तवैलक्षण्यस्य प्रत्यक्षसिद्धत्वात्, मुख्यप्राणे च श्रुतिसिद्धत्वादिति सूत्रार्थ उक्तो भवति। षट्प्रश्ने हि 'एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते' (प्र. ४-२.) इति पूर्ववाक्ये जीवस्य स्वापकाले श्रोत्रचक्षुर्घ्राणरसनत्वग्वाक्पाण्युपस्थपायुपादाख्यदशेन्द्रियव्यापाराभावमभिधाय तर्हि कानि तदा जाग्रतीति पिप्पलादऋषिं प्रति सौर्यायणिऋषिप्रश्नस्योत्तरमुच्यते—प्राणाग्नय इति। स्वापकाले 'एतस्मिन् पुरे' शरीरे 'प्राणाग्नयः' प्राणापानादिमुख्यप्राणरूपाण्येवाग्नयः त एव 'जाग्रति' शरीरधारणादिव्यापारं कुर्वन्तीत्यर्थः ॥ ११ ॥

॥ इति त इन्द्रियाधिकरणम् ॥

——*✲*——

१२. अधिकरणम् ॥

(१) अत्राधिकरणे नामरूपविषये श्रुतिविरोधः परिह्रियते। न चासङ्गतिः। नामरूपात्मकप्रपञ्चमध्ये शरीरस्यापि प्रविष्टत्वात्तस्य प्रकृतेन्द्रियाश्रयत्वात्तद्विचारस्याध्यात्मविचारपादेऽन्तर्भावोपपत्तेः। यद्वा-रूपशब्दो देहार्थपरः, नामशब्दश्च तद्वाचकशब्दपर इति नासङ्गतिः। तत्त्वप्रदीपे तु प्राण एव प्राणत्वादुपरि ब्रह्मपदमधिष्ठास्यतीति ज्ञापनाय प्राणप्रसङ्गे चतुर्मुखप्रसञ्जनमिति सङ्गतिरुक्ता। शरीरं किं विरिञ्चसृष्टं परमात्मसृष्टं वेति सन्देहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति—विरिञ्च इति ॥ वाशब्द एवार्थः। तथा च विरिञ्च एव 'इदं' विश्वं नामरूपात्मकं विरेचयति। तस्य व्याख्यानं—'विदधाति' करोतीति। तत्त्वप्रदीपे तु 'विरेचयति' सृजति 'विदधाति' विशेषेण धारयति नियोजयति चेति व्याख्यातम्। विरिञ्चशब्दोक्तः क इत्यत आह—ब्रह्मेति। चतुर्मुख इत्यर्थः। वावेति प्रसिद्धौ। ब्रह्मणः

रिञ्च एतस्माद्धीमे रूपनामनी ' इति गौपवनश्रुतिः ।

(२) यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते ।
एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुखः ॥
इति च युक्तिर्ब्राह्मे ।

कुतो विरिञ्चत्वमित्यतस्तदर्थभूतविरेचकत्वस्य तत्र प्रसिद्धत्वादित्या आह—एतस्माद्धीति । ब्रह्मण इत्यर्थः । हिशब्दः प्रसिद्धौ । ' इमे ' प्रसिद्धे रूपनामनी उत्पद्येते इति शेषः । अत्र ' रूपं च तदपेक्षया ' इति स्मृतेः अयोगिप्रत्यक्षगम्यं रूपं त्रिवृत्क्रियापेक्षया भवति । नाम च तद्व्यवहार्यं तदपेक्षं भवतीति तत्त्वप्रदीपोक्तेः अयोगिप्रत्यक्षगम्यं अस्मदादिशरीरमेव रूपशब्देनोच्यते, अयोगिभिर्व्यवहार्यमेव नामशब्देनोच्यते । अस्मदादिशरीरस्यैव त्रिवृत्कृतोपादानकत्वात्, उपादानार्थमेव त्रिवृत्क्रियापेक्षणात्, अयोगिभिर्व्यवहार्यनाम्नामेव रूपापेक्षत्वाच्च, न तु योगिप्रत्यक्षगम्यदेवतादिशरीरमपि रूपशब्देनोच्यते, तस्य केवलभूतोपादानकत्वेन तदर्थं त्रिवृत्क्रियानपेक्षणात् । योगिभिर्व्यवहार्यनाम्नां रूपानपेक्षत्वाच्च । श्रुतिरित्यनन्तरं विरिञ्चस्य नामरूपकर्तृत्वं वक्तीति शेषः ॥

(२) श्रुत्यन्तरापेक्षयाऽस्याः प्राबल्योपपादनाय युक्त्युपेततां दर्शयति—यस्मादिति ॥ यस्मात् ' सर्वं ' नामरूपात्मकं ' विरेचयेत् ' सृजेत् तेन कारणेन ब्रह्मा विरिञ्च इति भण्यते । नास्य कर्तृत्वं द्वारत्वाभिप्रायं, किन्तु मुख्यमेवेत्याशयेन अस्य साध्यमाह—एको हीति । हिः प्रसिद्धौ । तुरेव । यस्मादित्यावर्तते, तेनेति च । तथा च यस्माद्विरिञ्चो भण्यते, तेन ब्रह्मैव जगतः ' एको ' मुख्यः कर्ता, न द्वारभूतः, स च ' ब्रह्मा ' प्रसिद्धश्चतुर्मुख एवेत्यर्थः । चतुर्मुख इत्यनेन श्रुतिगतो ब्रह्मशब्दो जगत इत्यनेनेदंशब्दश्च विवृतः । केचित्तु—श्रुतौ विरेचकत्वनिमित्तेन विरिञ्चशब्दवाच्यत्वोक्तावपि तस्य जगत्स्रष्टृत्वे हेतुत्वानुक्तेः तदर्थं यस्मादित्यादिस्मृत्युदाहरणम् । तथा च यस्मात् विरिञ्चो भण्यते तस्मात् एको हि कर्ता जगत इत्यावृत्तिं विना स्मृतिवाक्यार्थमाहुः । इतीति । इति ब्राह्मवचने विरेचयितृत्वनिमित्तकविरिञ्चशब्दवाच्यत्वरूपयुक्तिश्चोक्तेत्यन्वयः । न केवलं श्रुतिरिति चशब्दार्थः । अनेन विरिञ्चस्यैव नामरूपात्मकदेहादिकर्तृत्वं तथा श्रुतेः विरिञ्चत्वयुक्तेश्चेति सयुक्तिकः पूर्वपक्षस्सूचितो भवति ॥

( ३ ) 'अथ कस्मादुच्यते परम इति परमाद्धयेते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद्बृंहितत्वाच्च' इत्याग्निवेश्यश्रुतिः।

( ४ ) अत आह—

सू—ॐ ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ ॐ ॥ २१ ॥

नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते' (तै.आ.३-१२) इति श्रुतेः ।

---

( ३ ) एवं विरिञ्चकर्तृत्वे श्रुतिमुदाहृत्य परमात्मकर्तृत्वेऽपि तामुदाहरति—अथेति ॥ प्रश्नेऽथशब्दः । विष्णुः परम इति कस्मादुच्यत इति प्रश्नस्योत्तरमाह—परमादिति । 'हि' यस्मात् 'एते नामरूपे' संज्ञामूर्ती 'परमात्' विष्णोः 'व्याक्रियेते' सृज्येते तस्मादेनं परम इत्याहुः कवय इत्यर्थः । अत्र परमत्वे नामरूपकर्तृत्वाख्यो हेतुरुक्तः, स च नाप्रयोजकः, अपरस्याल्पशक्तेः सर्वनामरूपकर्तृत्वायोगात् । 'कर्तृत्वात्सगुणं ब्रह्म' इति भागवतोक्तेरिति ध्येयम् । न केवलं नामरूपकर्तृत्वं परमत्वे हेतुः, किन्तु विष्णोर्ब्रह्मत्वेऽपि हेतुरिति सूचनाय ब्रह्मशब्दं प्रश्नपूर्वं निर्वक्ति—अथेति । यद्वा—'ब्रह्म वा' (          ) इति श्रुतिगतब्रह्मशब्दप्रकृतेः सावकाशत्वोपपादनायेदमुदाहृतम् । पूर्ववत्प्रश्नार्थोऽथ शब्दः । 'बृहत्त्वात्' वृद्धत्वात् 'बृंहितत्वात्' नामरूपात्मकजगत्सृष्ट्यादिगुणबृंहितत्वात् पूर्णत्वाच्च ब्रह्मेत्युच्यते इत्यर्थः । श्रुतिरिति । विष्णोर्नामकर्तृत्वं वक्तीति शेषः ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ संज्ञामूर्तिक्लृप्तिरित्यस्य व्याख्यानं—नामरूपक्लृप्तिरिति । नामरूपात्मकदेहादिप्रपञ्चस्योत्पत्तिरित्यर्थः । 'परात्' परमात्मन इति लब्धविशेष्योक्तिः । न विरिञ्चादित्येवकारार्थः । भवतीत्यध्याहार्यम् । कुत इत्यतः प्रवृत्तमुपदेशादिति हेत्वंशं व्याचष्टे—सर्वाणीति । इतीति । इति तैत्तिरीयपुरुषसूक्तमन्त्रोक्तत्वादित्यर्थः । श्रुतौ यदिति लिङ्गव्यत्यासः । तथा च 'यो धीरः' परमधैर्यशीलो भगवान् सर्वाणि रूपाणि 'विचित्य' सृष्ट्वा तेषां 'नामानि' वाचकशब्दांश्च कृत्वा तानि तैः 'अभिवदन्' व्यवहरन्नास्ते । तमेवं विद्वान् अमृतो भवतीत्यर्थः ॥

( ५ ) त्रिवृत्कुर्वत इति हेतुगर्भः। त्रिवृत्करणापेक्षत्वान्नामरूपयोः।

( ६ ) सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः।

( ५ ) नामरूपयोः विरिञ्चसृष्टत्वेऽप्यस्ति श्रोतस्य ...मनया परमात्मसृष्टत्वनिश्चय इत्यतस्तत्परिहारत्वेन प्र... भावप्रधानत्रिवृत्पदघटितं त्रिवृत्कुर्वत इत्यंशं परस्य नामरूपकर्तृत्व हेतुसमर्पकतया व्याचष्टे--त्रिवृत्कुर्वत इति ॥ त्रिवृत्कुर्वत इति 'विशेषणनिर्देशो हेतुगर्भः' वाच्यो यस्य स हेतुगर्भो लिङ्गवाचीत्यर्थः। तथा च सिद्धान्तश्रुतेः प्राबल्यज्ञापनाय त्रिवृत्क्रियाकर्तृत्वरूपपरमात्मविशेषणवाचकपञ्चम्यन्तशब्देन परस्य नामरूपकर्तृत्वे त्रिवृत्त्वकर्तृत्वादिति युक्तिरुक्तेति भावः। कारणेन कार्यानुमानमिदम्। ननु त्रिवृत्त्वं नाम पृथिव्यप्तेजोरूपभूतत्रयस्य मिश्रीभावः, तत्कर्तृत्वे च कुतो नामादिकर्तृत्वं हरेः। तथा च हेतुरप्रयोजक इत्यत आह--त्रिवृदिति। त्रिवृत्करणसापेक्षत्वादित्यर्थः। 'नामरूपयोः' करणस्येति शेषः। तथा च त्रिवृत्करणमन्तरेण रूपोत्पत्त्यभावस्य वक्ष्यमाणत्वात् तदभावे च नामानुपपत्तेः साक्षाद्व्यवधानेन वा नामादिकरणस्य त्रिवृत्करणसापेक्षत्वेन तत्समाविनाभूतकार्यत्वात्तदभावे तदनुपपत्तेः नाप्रयोजकतेति भावः। न च विष्णोस्त्रिवृत्कर्तृत्वासिद्धिरित्याशङ्कोत्तरत्वेनाप्युपदेशादिति सौत्रहेतुर्योज्यः। 'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' ( छा. ६- ३-३. ) इति श्रुतेरिति तदर्थः। 'अग्निहोत्रं जुहोति यवागूं पचति' इतिवत् 'इयं' विष्णवाख्या देवता 'अनेन जीवेन' तदाख्येनानिरुद्धेनात्मना स्वरूपेण 'इमाः' तेजोऽबन्नाख्यदेवतास्त्रीन् देवाननुप्रविश्य नामरूपे 'व्याकरोत्' विशेषेणाकरोत्, तदर्थं तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति अर्थक्रमेणेयं श्रुतिर्व्याख्याता तत्त्वप्रदीपे ॥

( ६ ) ननु पूर्वपक्ष्युदाहृतश्रुतेरपि विरिञ्चत्वादियुक्तियुक्तत्वेन बलवत्त्वात्पुनरनिर्णय एवेत्यतस्तस्याः सावकाशतां स्मृत्यैव दर्शयति--सर्वेति ॥ व्यवहारस्येत्युक्तेः षष्ठ्यर्थे सप्तमी। तथा च यतो 'विरिञ्चादिसर्वनाम्नां' सर्वसंज्ञानां 'रूपाणां' मूर्तीनां 'व्यवहारेषु' अभिलपनादिव्यवहाराणां च 'व्यवहारेषु' व्यवहारविषयीभूतानां सर्वनाम्नामिति वा 'केशवः' सृष्ट्यादिना ब्रह्मरुद्रप्रवर्तको हरिरेव 'एको' मुख्यः स्रष्टा 'तत्' तस्माद्ब्रह्माद्या देवाः 'अवान्तराः' सृष्टौ द्वारकरणी

एक एव यतः स्रष्टा ब्रह्माद्यास्तद्वान्तराः ॥
इति पाद्मे ।
( ७ ) त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥
अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् ।
हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः ॥
इति च ब्रह्माण्डे ॥ २१ ॥

——:*:——

१३. अधिकरणम् ॥

( १ ) 'अद्भयो हार्दमुत्पद्यते आपो वाव मांसमस्थि च भव

---

भूता इत्यर्थः । तद्वान्तरा इत्यस्यैकपदत्वे तस्य विष्णोस्तस्यां सृष्टौ द्वारभूता इत्यर्थः । यतस्सर्वरूपाणां स्रष्टाऽतः सर्वनाम्नां चेत्यप्यन्वयः। तथा च पूर्वपक्षिश्रुतेः द्वारविषयत्वेन सावकाशत्वान्न तद्विरोध इति भावः । न च मुख्यार्थसम्भवे किममुख्यार्थाश्रयणेनेति वाच्यम् । यतः कर्तृत्वशक्तिरूपं मुख्यकर्तृत्वं 'एक एव स्रष्टा' इत्यनेन विष्णोरेव, नान्येषां तस्यैव त्रिवृत्कर्तृत्वादित्युक्त्वा 'ब्रह्माद्यास्तद्वान्तराः' इत्य नेनेतरेषां द्वारकारणत्वरूपामुख्यकर्तृत्वमेवोक्तम् । इति पाद्मे इत्यस्य वचनादित्यध्याहारेण नामरूपक्लृप्तिः परादेवेति पूर्वेणान्वयः ॥

( ७ ) सूत्रार्थे स्मृतिसम्मतिं चाह—त्रिवृदिति ॥ आद्यश्चस्त्वर्थः। तथाशब्द उपमायाम् । द्वितीयश्चशब्दः समुच्चये । भवतीति शेषः। तथा च 'यतस्त्रिवृत्क्रिया' पृथिव्यप्तेजसां मिश्रीभावकरणं विष्णोस्स म्बन्धि भवति । यतश्च रूपं 'तदपेक्षया' त्रिवृत्क्रियाऽपेक्षयैव भवति । यतश्च नाम 'रूपापेक्षं' तत्साध्यं यतश्च 'व्यवहारः' अभिलपनादिरूपः 'तदात्मकः'नामापेक्षः अतो नाम्नो रूपस्य व्यवहारस्य च हरिरेव 'एकराट्' स्वतन्त्रः कर्ता, नान्यः । यतः कर्ता भगवान् अतः सर्वजी वानां पिता । न केवलमेतावत्, किन्तु 'प्रभुः' स्वामी चेत्यर्थः स्मृति द्वयसमुच्चये चशब्दः ॥ १२ ॥

॥ इति संज्ञाधिकरणम् ॥

——:*:——

१३. अधिकरणम् ॥

( १ ) अत्राधिकरणे शरीरकारणश्रुतिविरोधः परिह्रियते । तत्रोप

*आपः शरीरमाप एवेदं सर्वम्' इति कौण्डिन्यश्रुतिः।
(२) अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसतः।
इति च भारते ॥
(३) 'पृथिवीं शरीरमाकाशमात्मा' (बृ. ५-२-१३.) इ

लक्षणाभिप्रायेण कोटिद्वयमात्रे सन्देहबीजं दर्शयन् पूर्वपक्षं च दर्शयति—अद्भ्य इति ॥ हिशब्दः प्रसिद्धौ। 'इदं' शरीरम्। एवं प्रतिज्ञातमपां सर्वशरीरकारणत्वमुपपादयति-आप इति। आपो मांसं भवन्ति, अस्थि च भवन्तीति प्रत्येकमन्वयः। यत इति शेषः। अतः 'आपः शरीरं' अब्जन्यं शरीरमित्यर्थः। शरीरस्य मांसाद्यात्मकत्वादिति भावः। निगमयति—आप एवेति 'इदं' शरीरम्। श्रुतिरिति। आप्यत्वं शरीरस्य वक्तीति शेषः। अनेन शरीरमाप्यमेवेत्येकः पूर्वः पक्षः प्रदर्शितो भवति ॥

(२) नन्वाप्यत्वश्रुतेः पार्थिवत्वादिप्रापकश्रुत्यन्तरविरोध इत्याशङ्क्य सयुक्तिकत्वेनास्याः प्राबल्यमित्याह—अम्मयमिति ॥ तुशब्दोऽवधारणे भिन्नक्रमः। यतो मांसमम्मयं, अत एव मांसतः तृप्तिर्जायते तर्पकत्वस्याब्धर्मत्वेन कार्यानुस्यूतेरावश्यकत्वादिति भावः। 'भारते' शरीरस्याप्यत्वे युक्तिरुक्तेति शेषः। शरीरैकदेशस्य मांसस्याप्यत्वे तर्पकत्वाख्ययुक्तिकथनाच्छरीरस्याप्याप्यत्वे युक्तिरुक्तप्रायेति भावः ॥

(३) संशयकोट्यन्तरप्रदर्शनाय श्रुत्यन्तरमुदाहरति—पृथिवीमिति ॥ 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रं पृथिवीं शरीरमाकाशमात्मा' इति बृहदारण्यकश्रुतौ वागादीनामंशेन गमनमुक्त्वा आत्मशब्दितदेहान्तर्गतपरमात्मरूपस्याकाशपदोक्तमूलरूपप्राप्तिरुच्यते। तथा च पुरुषस्य वाक् अग्निमप्येति, पुरुषस्य शरीरं 'पृथिवीमप्येति' तत्र लीनं भवति, पुरुषस्य 'आत्मा' देहान्तर्गतो हरिः 'आकाशं' मूलरूपिणं परमात्मानं प्राप्नोतीत्यर्थः। 'आत्मा' जीवः आकाशं परमात्मानमाप्नोतीति व्याख्यानं तु 'पुरुषस्य' जीवस्य 'आत्मा' जीव इत्यन्वयायोगादयुक्तम्। 'आकाशाख्यं स्वरूपं तु विष्णुस्तद्धृदि संस्थितः' इति बृहद्भाष्यविरुद्धं च। इति श्रुतिरित्यनन्तरं शरीरस्य पार्थिवत्वमाहेति शेषः। चो भिन्नक्रमः समुच्चये। कार्यस्य कारण एवाश्रयनियमादम्मयशरीरस्य पृथि

ति च श्रुतिः ।

( ४ ) अतो ब्रवीति—

सू—ॐ ॥ मांसादिभौमं यथाशब्दमितरयोश्च ॥ ॐ ॥ २२ ॥

वीकार्यत्वासिद्धिः । अनेन शरीरं पार्थिवमित्यपरः पूर्वः पक्षः प्रदर्शितो भवति । एवं शरीरस्य तैजसत्वपूर्वपक्षेऽपि 'सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति' ( ऐ.ब्रा.७-४.) इति बह्वृचब्राह्मणवाक्यमुदाहर्तव्यम । 'सः' यजमानो देवेभ्यः स्वदत्ताहुतिप्रदानेन देवपोषकत्वेन 'देवयोन्याः' देवमुखादग्नेः स्वेन दत्ताहुतिभ्यां निमित्तभ्यो हिरण्यशरीरः 'सम्भूय' भूत्वा 'ऊर्ध्वः' ऊर्ध्वगतिस्सन् स्वर्गं लोकमेतीति श्रुत्यर्थः । एवं शरीरस्य भूतत्रयात्मकत्वेऽपि 'इमास्तिस्रो देवताः पुरुषं प्राप्य' ( छा.६-४-७. ) इत्यादिश्रुतिरुदाहर्तव्या । 'इमाः' तेजोऽबन्नात्मिकाः तिस्रो देवताः ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ यतोऽनेकधा विरुद्धश्रुतिरस्ति । यतश्च देहस्य भूतत्रयात्मकत्वश्रुतेः एकैकभूतोपादानकत्वश्रुतिविरोधेनाप्रामाण्ये तन्न्यायेन जगत्कारणत्वश्रुतेरप्यप्रामाण्यान्न तया विष्णोर्जगत्कारणतासिद्धिः, अतस्तन्निराकरणार्थं सिद्धान्तमाह—सूत्रकार इत्यर्थः । इति श्रुतेरित्यनेन यथाशब्दमिति या श्रुतिः सूचिता, यच्च श्रुतेरङ्गीकारहेतुत्वं सूचितं तद्विवृतं भवति । तेन विपक्षे श्रुतिविरोध उक्तः । ग्रहणे 'यत्कठिनं' मांसादि सा पृथिवी । 'यद्द्रवं' शोणितादि तदापः । 'यदुष्णं' मज्जादि तत्तेज इति श्रुत्यर्थः । मांसादीति शोणितादिमज्जादीत्यनयोरुपलक्षणम् । अतएव टीकायां शरीरेऽस्ति शोणितमज्जादीत्युक्तम् । तत्र प्रत्येकमादिशब्दान्वयः । अस्थिशोणितेत्यपपाठः । सूत्रे मध्यमधातुजन्यत्वेन मांससमयोः शोणितमज्जयोरेव ग्राह्यत्वात्, अस्तीति क्रियापदस्यैव अपेक्षितत्वाच्च । तत्र प्रथमादिशब्देन मनःपुरीषयोर्ग्रहणम् । द्वितीयेन मूत्रप्राणयोः, तृतीयेनास्थिवाचोर्ग्रहणम् । एवेत्यनेन पूर्वसूत्रादेवार्थस्य तुशब्दस्यानुवृत्तिस्सूचिता । चार्थो वा एवकारः । भौममित्येतत् आप्यं तैजसमित्यनयोरुपलक्षणम् । अत्र सर्वत्र तत्त्वप्रदीपोदाहृता सूत्रे यथाशब्दमित्यनेन सूचिता भाष्ये श्रुतेरित्यनेनोपलक्षिता टीकायामपि यथाशब्दत्वादित्यनेनोक्ता 'अन्नमशितं त्रेधा विधीयते तस्य यस्स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमः तन्मांसं योऽणिष्ठस्तन्मनः' ( छा.६-५-१. ) इति तथा 'अ

'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजः' ( गर्भ.३. ) इति श्रुतेर्मांसाद्येव भौमं, न सर्वशरीरम्। अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम्।

( ५ ) 'यद्वावाथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि हि भू

न्नमयं हि सोम्य मनः' ( छा.६-६-५. ) इति छन्दोगे पुरीषमांसमनसां पार्थिवत्वश्रुतिः, एवं 'आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुः तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठस्स प्राणः' (छा. ६-५-२.) इति तथा 'आपोमयः प्राणः' (छा.६-६-५.) इति मूत्रशोणितप्राणानामाप्यत्वश्रुतिः, एवं 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्' (छा.६-५-३.) इति तथा 'तेजोमयी वाक्' (छा.६-६-५.) इति चास्थिमज्जावाचां तैजसत्वश्रुतिश्च ज्ञापिकेति ध्येयम्। मांसाद्येवेत्यस्य व्यावर्त्यं दर्शयति–नेति। भौममित्यनुषज्यते। तर्हि शरीरे किमन्यदस्तीत्याशङ्कायां प्रवृत्तमितरयोरित्येतद्व्याचष्टे–अप्तेजसोरिति। इदं च भूमितेजसोः भूमिजलयोरित्यनयोरुपलक्षणम्। 'कार्यं' शोणितादि मज्जादि च। कार्यमित्यनन्तरं शरीरेऽस्तीति शेषः। अत एव टीकायामस्ति शोणितमज्जादीत्युक्तम्। इति शब्दोऽध्याहार्यः। अनेन सूत्रे कार्यमित्यादेः शेषो दर्शितः। न केवलं शरीरे भौमं मांसाद्येवास्ति, किं तर्हि अप्तेजसोश्च कार्यमस्तीति समुच्चये चशब्दः। यथाशब्दमित्येतत्क्रियाविशेषणमव्ययमिति भावेन अङ्गीकार्यमिति क्रियाध्याहारेण तद्योजितम्। शब्दमनतिक्रम्य श्रुत्यनुसारेणेति तदर्थः। यद्वा–ननु कथं मांसस्य पार्थिवत्वमुच्यते 'आपो वाव मांसम्' (कौण्डिन्य. ) इति श्रुत्या तर्पकत्वयुक्त्या च विरोधादित्यत आह–अप्तेजसोश्चेति। अत एव तत्त्वप्रदीपे मांसादि भौममुक्तमित्येतावता भौममेवेति नाशङ्क्यं, किन्त्वप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यमिति अप्तेजसोश्चेति भाष्यं प्रकारान्तरेणावतारितम्। अस्मिन् पक्षे नावधारणान्वयः, किन्तु 'मांसादि भौमं' न केवलं भौमं, किं तर्हि तत्राप्तेजसोश्च कार्यमङ्गीकार्यमित्यन्वयः। तथा च मांसादीनां अनेकभूतात्मकत्वाङ्गीकारान्न श्रुतियुक्तिविरोध इति भावः॥

( ५ ) मांसादीनामनेकभूतकार्यत्वाङ्गीकरणं शब्दानुसारीत्युक्तम्, कोऽसौ शब्द इत्यतस्तं दर्शयति—यदिति॥ वावेत्यर्थे । हि प्रसि

तानि तस्मादेवैवमाचक्षते भूतानि' इति हि काषाय णश्रुतिः ।

( ६ ) पञ्चभूतात्मकं सर्वं तदप्येकविवक्षया ।
एकभूतात्मकत्वेन व्यवहारस्तु वैदिके ॥

द्धौ हेतौ च । तथा च 'यत्' यस्मात् विमिश्राणि भूतानीति प्रसिद्धं, 'अथो' तस्मात् यच्छरीरे मांसादि तदपि विमिश्रमेव स्यात् । न चा प्रयोजकता हेतोः, हि यस्मात् 'एतत्' मांसादि 'विमिश्रात्' भूम्या देर्भवति 'अथो' तस्मात्कार्यस्य कारणानुरूपत्वादिति भावः । ननु भूतानां विमिश्रत्वमेव कुतोऽवगतमित्यतो भूतशब्दवाच्यत्वादित्याह- तस्मादेवेति । सम्भूतत्वात्सहभूतत्वाद्विमिश्रत्वादेवेत्यर्थः । अनेन वह्नि मत्त्वादेव धूमवत्त्वमित्यादाविव विमिश्रत्वादेव पृथिव्यादीनि भूतानी त्येवमाचक्षते विद्वांस इत्युक्त्वा विमिश्रत्वस्य व्यापकता भूतशब्दवा च्यत्वस्य तु व्याप्यता बोध्यते । तच्छब्दप्रवृत्तिनिमित्तत्वात् तस्य, त दभावे तच्छब्दप्रवृत्त्ययोगात् । वस्तुतो भूतानामादिसृष्टौ मिश्रत्वेनैव सृष्टत्वाच्चेति भावः । अत्र तत्त्वप्रदीपे विमिश्रं शरीरादि मांसादि चेति व्याख्यानेन शरीरे अप्तेजसोश्च कार्यमस्तीत्यत्रापीयं श्रुतिः प्रमा णमिति सूचनाच्छङ्कोत्तरटीका शरीरविषयतयाऽपि व्याख्येया । श्रुति रित्यनन्तरं मांसादीनामनेकभूतकार्यत्वं शरीरस्याप्यनेकभूतात्मकत्वं वक्तीति शेषः । अनेन—यच्छरीरे मांसादि तदेव भौमम, न सर्वशरी रं, किं तर्हि शरीरे 'इतरयोः' अप्तेजसोश्च कार्यं शोणितमज्जाद्यस्ती त्यङ्गीकार्यम् । कुतो ? यतः तदङ्गीकरणं 'यत्कठिनम्' इति 'अन्नम यम्' इति 'यद्भाव' इति च श्रुत्यनुसारि भवति अतः । अथ वा—न केवलं मांसादि भौमं, किन्तु मांसादौ 'इतरयोः' अप्तेजसोश्च का र्यमस्तीत्यङ्गीकार्यम् । कुतो ? यतो 'यथाशब्दं' तद्भवति 'यद्भाव' इ ति श्रुत्यनुसारि भवति अतः । यत एवमतो न मांसस्याप्यत्वे युक्तिवि रोध इति सूत्रार्थ उक्तो भवति ॥

( ६ ) मांसादीनामनेकभूतकार्यत्वात् तदपेक्षयाऽऽप्यत्वाद्युक्तिर्युक्ते त्युक्तार्थे स्मृतिं चाह—पञ्चेति ॥ यद्यपि पार्थिवादिसर्वशरीरेष्वपि मां सादिकं सर्वमेकैकशः पञ्चभूतात्मकं 'तदपि' तथाऽपि 'एकविवक्षया' एकैकभूतसम्बन्धविवक्षया 'एकभूतात्मकत्वेन' एकभूतकार्यत्वेन भौ ममित्यादिरूपेण वैदिकवचने व्यवहारोऽस्ति ॥

(७) भौममित्येव काठिन्याच्छ्रौक्ल्यादौदकमित्यपि ।
तेजिष्ठत्वात्तैजसं च यथाऽस्थ्नां वचनं श्रुतौ ॥
इति वायुप्रोक्ते ॥ २२ ॥

(७) एतदेव विवृणोति—भौममित्यादिना ॥ काठिन्याच्छ्रौक्ल्यात् ततोऽवगताद्भूजलसम्बन्धात् 'तेजिष्ठत्वात्' अतिशयिततेजोभागवत्त्वादेकस्यैव भौममित्याद्यनेकशब्दव्यवहारभाक्त्वं भवतीत्यर्थः। तदुदाहृत्य दर्शयति—यथेति । भौमत्वादिनेति शेषः। तत्र 'यत्कठिनम्' इति सामान्यश्रुतौ काठिन्यादवगतात् भूसम्बन्धात् अस्थ्नां भौमत्वेन वचनम्, 'अस्थि च भवन्त्यापः' (कौण्डिन्य. ) इति श्रुतौ च शौक्ल्यादवगतादप्सम्बन्धादौदकमित्याप्यत्वेन व्यवहारः, 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति' (छा.६-५-३.) इति श्रुतौ च तेजिष्ठत्वान्निमित्तादस्थिषु तैजसत्वेन वचनमिति ज्ञेयम्। इयं च योजना यत्र प्रायो भूतसाम्यं तस्मिन्नंशे एकैकभूतानूनत्वविवक्षया तत्तदात्मकत्वं श्रुतिपूच्यते इत्युक्तिनानात्वेऽप्यविरोध इति तत्त्वप्रदीपेऽपि प्रदर्शिता। अत्रास्थ्नामित्यस्थिपदेन भूतसाम्यस्थलीयास्थिग्रहणम्। तथा च भूतसाम्यस्थले काठिन्यादिनिमित्तैनैकत्रैव भौममित्याद्यनेकव्यवहारस्तस्यैवोदाहरणेन प्रदर्शनं यथाऽस्थ्नामित्यर्थः। पञ्चभूतात्मकमित्येतदेव तत्त्वप्रदीपे—एवं ग्रहणे 'यत्कठिनं सा पृथिवी' इत्याद्युक्तिविरोध इत्यत आह, इत्यवतार्य मांसादि सर्वमप्येकैकशः पञ्चभूतात्मकं तत्र प्राधान्यविवक्षया भौमं मांसमित्यादिव्यवहारः ।

सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि विशेषितम् ।
भौमं मांसमसृग्वारि तेजो मज्जा विशेषतः ॥

इत्यादेश्चेति प्रकारान्तरेणापि व्याख्यातम्। अस्मिन् पक्षे 'एकविवक्षया' इत्यस्यैकैकभूतप्राचुर्यस्थले एकैकभूतप्राचुर्यविवक्षयेत्यर्थः। भूतसाम्यस्थले चैकैकभूतानूनत्वविवक्षयेति चार्थः। 'भौममित्येव' इत्यादेश्च काठिन्यादिनिमित्तेन मांसादिषु पृथिव्यादिप्राचुर्यविवक्षया भौमत्वादिव्यवहार इत्यर्थः। अत एव तेजिष्ठत्वादिति इष्ठन्प्रत्ययेनास्थ्नि तेजोभागप्राचुर्यमवगम्यते। एतच्चोपलक्षणम्, अस्थ्नामित्यप्युपलक्षणम्। मांसादेर्भौमत्वादिवचनमित्यपि द्रष्टव्यम्। इयं च विशेषोक्तेर्गतिप्रदर्शकोत्तरसूत्रसूचिता योजना । अत एव टीकाकृता नोक्ता। तत्त्वप्रदीपकृता तु वक्ष्यमाणैव भाष्योदाहृतस्मृत्यर्थतयाऽपि दर्शिता। वायुप्रोक्त इत्यनन्तरमुक्तत्वादेकैकस्मिन्नेव मांसादावाप्यत्वाद्यनेकोक्तिर्यु

( ८ ) कथं तर्हि विशेषवचनमित्यत आह—

सू—ॐ ॥ वैशेष्यात्तु तद्वादस्तद्वाद: ॥ ॐ ॥ २३ ॥

भूतानां तु विशेषसंयोगादेव विशेषव्यवहारः ।

( ९ ) पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।

इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः ॥

---

क्तेति वाक्यशेषः ॥

( ८ ) यदि शरीरं नैकभूतप्रकृतिकं, कथं तर्हि विशेषोक्तिरित्युक्तार्थमाशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे—कथमिति ॥ तर्हीति श्रवणात् यदीति लभ्यते । यदि शरीरं नैकभूतोपादानकमिति तदर्थः। विशेषवचनमिति । आपः शरीरं, पृथिवी शरीरं, हिरण्यशरीर इति विशेषोक्तिरित्यर्थः । एवमिदमेव वाक्यं यदि मांसादिकं नैकभूतप्रकृतिकं, कथं तर्हि भौमं मांसमित्यादिविशेषव्यवहार इत्यप्यवतारणीयम्। भूतानामिति । पृथिव्यादिभूतानां पार्थिवादिशरीरेषु मांसादिषु च 'विशेषसंयोगात्' सम्बन्धाधिक्यात्तदपेक्षयैव 'विशेषव्यवहारः' पार्थिवमाप्यमित्यादिविशेषोक्तिरित्यर्थः । न तु एकैकभूतात्मकत्वादित्येवार्थः। उपपद्यते यत इति शेषः । अस्यातो न विशेषोक्तिविरोध इति लब्धसाध्येनान्वयः । अनेन—सूत्रे तुरेवार्थः । तच्छब्दो वैशेष्यपरः । वैशेष्यशब्दश्च स्वार्थे ष्यञन्तो वा विशेषिणां भाव इति भावे ष्यञन्तो वा भूतानां धर्मिणां विशेषसंयोगपरः । पञ्चमी ल्यब्लोपनिमित्तेति सूचितम् । तथा च यतः 'तद्वादः' आपः शरीरं, आपो वाव मांसमित्यादिविशेषोक्तिः 'वैशेष्यात्तु' भूतानां धर्मिणां संयोगाधिक्यमपेक्ष्यैवोपपद्यते, अतो न शरीरस्य मांसादेर्वा नैकभूतोपादानकत्वे तद्विरोधः शङ्क्य इति सूत्रार्थ उक्तो भवति ॥

( ९ ) ननु शरीरे मांसादिषु वा भूतानां विशेषसंयोग एव कुतः ?, सर्वशरीरेषु सर्वभूतानां विशेषसंयोगभावे च पुनः एकैकभूतप्राचुर्यविवक्षया पार्थिवादिविशेषोक्तप्रयोग इत्यत आह—पार्थिवानामिति॥ पृथिवीस्थितानां स्थलजानां शरीराणां 'अर्धेन भागेन पृथिवी स्मृता' तेष्वर्धे पृथिवीभाग इत्यर्थः। तेषामर्धादितरस्मिन् अर्धे 'त्रिभागिन्य आपः' त्रयोऽम्भागाः, तत्र स्मृता इति यावत् । 'भागतस्तु तेजो' भागमात्रं तेजः एकस्तत्र तेजोभाग इत्यर्थः। स्मृत इति विपरिणामेनानुषज्यते । एवं सामान्यतः पार्थिवाप्यशरीरेषु सर्वेष्वपि स्वस्वभाग

इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम् ।
स्वर्गस्थानां शरीराणामर्धे तेज उदाहृतम् ॥
इति च बृहत्संहितायाम् ।

( १० ) सर्वाध्यायार्थावधारणार्थोऽध्यायान्ते द्विरुक्तिः ।

( ११ ) गारुडे च—
अध्यायान्ते द्विरुक्तिस्स्याच्छेदे वा वैदिकेऽपि वा ।

चतुष्टयमस्तीति ज्ञेयम् । अयं विशेषो न पार्थिवादिषु नियतः, किन्तु सर्वत्र नियत इत्याह—भेदश्चेति । विशेषसंयोग इत्यर्थः । 'प्रतिपूरुषं' पार्थिवादिप्रतिशरीरं सर्वशरीरेष्वपि नियत इत्यर्थः । तथाच पार्थिवादिदेहभेदेन तत्तद्भूतविशेषसंयोगस्य प्रमाणीकृतत्वात् न तस्याऽसिद्धिः, न वा तद्भावपक्षोक्तदोष इति भावः । तैजसशरीरेष्वेतं विशेषमाह—स्वर्गस्थानामिति । 'इतरेऽर्धे त्रिभागिन्य आपः' इति स्वर्गशरीरेऽपि बोद्धव्यमिति तत्त्वप्रदीपोक्तेः 'इतरेऽर्धे त्रिभागिन्य आपः' इत्यत्राप्यनुषञ्जनीयम् । तथा तेजःपदस्थाने पृथिवीपदं प्रक्षिप्य पृथिवी भागत इत्येतदपि । तथा च अर्धे तेजः इतरेऽर्धे त्रिभागिन्य आपः पृथिवी तु भागतः उदाहृता इत्यर्थः । एवं जलजानां शरीरेष्वर्धमापः इतरेऽर्धे त्रिभागिनी पृथिवी भागमात्रं तेज इत्यपि द्रष्टव्यम् । 'बृहत्संहितायां' वचनादिति शेषः । अस्य विशेषसंयोगादेवेति पूर्ववाक्येनान्वयः ॥

( १० ) ननु किमर्थेयं सूत्रपदे द्विरुक्तिः । अध्यायसमाप्तिज्ञापनार्थमिति चेत्, तस्या अर्थभेदेन ज्ञातुं शक्यत्वात् । अन्यथा पादान्तेऽपि तत्प्रसङ्गादित्यतो द्विरुक्तेः प्रयोजनं दर्शयति—सर्वेति ॥ सर्वो योऽयमध्यायार्थः तस्यैवमेवेत्यवधारणं निश्चयस्तदर्थः प्रयोजनं यस्याः सा तथोक्ता । 'द्विरुक्तिः' द्विर्वचनं 'अध्यायान्ते' सर्वाध्यायान्तिमसूत्रे । पदस्य क्रियते इति शेषः ॥

( ११ ) उक्तमेव किमर्थमुच्यत इत्यतोऽनुक्तमपि प्रयोजनं प्रमाणविशेषेणाह—गारुडे चेति ॥ पूर्वाध्यायोक्तस्मृतिसमुच्चये, न केवलमस्माभिः, किन्तु गारुडे चेति समुच्चये वा चशब्दः । 'अध्यायान्ते' अध्यायान्तिमसूत्रेषु पदस्येति शेषः । 'वैदिके' वेदानुसारिषु । अपिः समुच्चये। वावेति निपातौ नियमसूचकौ । भागवतादावुक्तनियमस्य व्यभिचारमाशङ्क्याह—विचार इति । व्यापकधर्मनिर्णयहेतुर्व्याप्यधर्मनिश्चय इत्यर्थः । यथोक्तं 'जिज्ञासा धर्मनिर्णयः' इति । यद्वा—पूर्वोत्तरप

विचारो यत्र सज्ज्येत पूर्वोक्तस्यावधारणे ॥
( १२ ) अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ।
विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा ॥ इति च ॥

———*———

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्र भाष्ये द्वितीयाध्यायस्य चतुर्थः पादः.

॥ द्वितीयाध्यायस्समाप्तः ॥

॥ ॐ ॥

बलाबलचिन्तेत्यर्थः 'यत्र' यस्मिन् ग्रन्थे 'सज्ज्येत' सम्बध्येत येन क्रियेत इति यावत् । तत्राध्यायान्त इति पूर्वेणान्वयः । पूर्वोक्तस्येति । अध्यायादिमारभ्योक्तार्थस्येत्यर्थः 'अवधारणे' अवधारणार्थम् ॥

( १२ ) उक्तमुक्त्वा द्विरुक्तेः पूर्वानुक्तं प्रयोजनविशेषमाह—अनुक्तानामिति ॥ सूत्रपदैर्मुखतोऽनुक्तानामित्यर्थः । सूचितानामिति यावत् । 'स्वीकारः' सङ्ग्रहो द्विरुक्तेरिति शेषः । प्रयोजनविशेषान्तरमाह—विनिन्द्येति । 'इतरान्' सूत्रतदनुकूलेतरान् 'मार्गान्' ज्ञानोपायान् तथाविधानि शास्त्राणि 'विनिन्द्य' विषयादिशून्यत्वेन अनुपादेयानीति गर्हयित्वा अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेदित्यन्वयः । अनेन निन्दनाख्यं प्रयोजनं सूचितम् । द्विरुक्तेः प्रयोजनविशेषान्तरं चाह—सम्पूर्णेति । विशिष्टमोक्षसाधनतेत्यर्थः । तथाशब्दः समुच्चये । शास्त्रस्योक्ता भवतीति शेषः । इति गारुडे इत्यन्वयः । अस्य सर्वाध्यायेत्यादिनोक्तमुक्तमित्यध्याहृतेनान्वयः ॥ १३ ॥

इति मांसाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः

॥ द्वितीयाध्यायस्समाप्तः ॥

॥ ॐ ॥

॥ श्रीः ॥

——:*:——

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

——*:*:*——

## ॥ अथ तृतीयाध्यायः ॥

### १. अधिकरणम् ॥

(१) साधनविचारोऽयमध्यायः । वैराग्यार्थे गत्यादिनिरूपणा प्रथमपादे ।

---

## ॥ अथ तृतीयाध्यायः ॥

### १. अधिकरणम् ॥

(१) वृत्तवर्तिष्यमाणयोरध्याययोः सङ्गत्यर्थमेतदध्यायप्रतिपाद्यं दर्शयति—साधनेति ॥ वैराग्यादिमोक्षसाधनानि विचार्यन्ते अवश्यानुष्ठेयत्वेन निरूप्यन्ते अत्रेति साधनविचार इत्यर्थः । 'अयं' उपक्रम्यमाणः । अनेन समन्वयाविरोधार्थकाभ्यां अध्यायाभ्यामस्यानन्तर्यलक्षणा सङ्गतिरुक्ता भवति । तथाहि—यद्यप्याद्यसूत्रे ससाधनफलो ब्रह्मविचारः कर्तव्यतयोक्तः । तत्र ब्रह्म पूर्वद्विके सम्यक्सविरोधपरिहारं विचारितम् । तथाऽपि कृतब्रह्मविचारस्याधिकारिणो यन्मया कार्यं साधनं तत्किं कथं भूतमिति जिज्ञासा भवत्येवेति तदर्थं तृतीयाध्यायः प्रवृत्त इति । प्रथमपादार्थं दर्शयति—वैराग्यार्थ इति । ब्रह्मेतरविषयभोगरागोच्छेदायेत्यर्थः । गतिः स्वर्गं प्रति । आदिपदेन स्वर्गाद्भूमिप्रत्यागतिः नरकगर्भवासादि च गृह्यते । एतेषां 'निरूपणा' दुःखरूपत्वप्रतिपादनं 'प्रथमपादे' तृतीयस्याद्यपादे क्रियत इत्यर्थः । अस्मिन् पादे गत्यादिनिरूपणे सति तस्य दुःखरूपतां श्रुत्वा चिन्तयतोऽधिकारिणः पुमर्थत्वेन सिद्धेऽपि स्वर्गादौ रागो विच्छिद्यते एवेति तस्याः तादर्थ्यं युज्यत इति भावः । वैराग्यनिरूपणेत्यनुक्त्वा वैराग्यार्थे गत्यादीत्युक्त्या वैराग्यस्य विषयासौन्दर्यज्ञानाधीनत्वेन पुरुषप्रयत्नाविषयत्वान्न साक्षात्तस्यानुष्ठेयत्वेन निरूपणं युज्यत इति सूचितम् । अनेनैव वैराग्यसाधनबोधविषयगत्यादिस्वरूपस्यैवात्र निरूपणेन मुखतो लक्षणप्रमाणाभ्यां वैराग्यस्यानिरूपणात् असङ्गतिरिति चोद्यं निरस्तम् । गत्यादिनिरूपणे सति तच्छ्रोतुस्तत्र वैराग्यस्य स्वत एवोत्पादेन तस्य तदुपयोगितया तन्निरूपणस्य वैराग्यपादे सङ्गतत्वात् ॥

( २ ) भूतबन्धो हि बन्धः ।
भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम् ।
इति वाराहे ॥
( ३ ) तच्च मरणे भवति ।
भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् ।
भूतानां संप्रयोगश्च जनिरित्येव पण्डितैः ॥
इति भारते । अतः किं साधनैरिति ।

---

( २ ) अत्राधिकरणे भगवत्प्राप्तिसाधनवैराग्याय जीवस्य भूताभियोगः समर्थ्यते । पूर्वपक्षयति—भूतेति ॥ यन्निवृत्त्यर्थं वैराग्यादि साधनमिष्यते स बन्धो नाम पञ्चभिः भूतैर्बन्ध इत्यर्थः । उपलक्षणमेतत् । बन्धनिवृत्तिर्मुक्तिरित्यपि द्रष्टव्यम् । हिशब्दो यत इत्यर्थे । अत इत्युत्तरेणान्वेति । कुत एतदुभयमवगतमित्यत आह—भूतबन्धस्त्विति । तुः एवार्थः । यस्संसाराख्यो बन्धः स भूतबन्ध एवेत्यर्थः । मुक्तिस्त्वित्यत्राप्यन्वयः । तथा च या बन्धनिवृत्त्याख्या मुक्तिः सा तेभ्यो भूतेभ्य आत्यन्तिकविमोचनमेव, नान्येत्यर्थः । वाराहे पुराणवचने उक्तमिति शेषः । न केवलमस्माभिरिति चार्थः ॥

( ३ ) ततः किमित्यत आह—तच्चेति ॥ चस्त्वर्थः । तथा च तद्भूतविमोचनं तु 'मरणे' प्राणत्यागे सति तन्निमित्तं भवतीत्यर्थः । यद्वा—'मरणं समुदाहृतम्' इत्यभेदोक्तेर्मरणशब्दार्थेऽन्तर्भवति तद्रूपं भवतीत्यर्थः । भूतविमोचनं मरणे भवतीत्येतत्कुत इत्यत आह—भूतानामिति । तुः अवधारणे । चः समुच्चये । तथा च पूर्वपक्षे भूतनिवृत्तिरात्यन्तिक्यभिमता । सा च तद्वियोगः स च मरणाविनाभावीति वा भूतसंयोगवियोगावेव जनिमरणे इति वा पण्डितैः समुदाहृतमित्यर्थः । भारत इत्यनन्तरं पूर्ववच्छेषश्चार्थश्च बोध्यः । किञ्चाऽत इत्यत आह–अत इति । तथा च यतो बन्धनिवृत्त्यर्थं साधनान्यनुष्ठेयानि, सा च मरणमेव तत्कारणकं वा, मरणं च नियतत्वान्न साधनसापेक्षं, अतो वैराग्यादिसाधनैः किं कृत्यं, न किमपीति न तान्यनुष्ठेयानीति योजना । साधनैरिति सामान्योक्तया वैराग्यादिसर्वसाधनविचारारम्भप्रयोजकतया जिज्ञासासूत्रस्य शास्त्रेणेवास्याधिकरणस्य साधनाध्यायेनोपोद्घातिकी सङ्गतिरुक्ता भवति । अत एवास्य वैराग्यप्रतिपादनारम्भप्रयोजकत्वादेतत्पादेनाप्यस्ति सङ्गतिरित्यभिप्रैति । उक्तं हि तत्त्वप्रदीपे—

( ४ ) अत आह—

सू—ॐ ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ॐ ॥ १ ॥

शरीरान्तरप्रतिपत्तौ भूतसंपरिष्वक्त एव गच्छति ।

( ५ ) 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति . .

मोक्षस्य मरणातिरिक्तकारणायत्तत्वं प्रदर्श्य साधनविचारस्य प्रयोजकत्वप्रतिपादनात्मकमिदमधिकरणं स्वर्गादिगतिनिरूपणया वैराग्याख्यप्रथमसाधनप्रतिपादनारम्भात्मकं च भवतीति । अत एवास्य प्रथमपादादौ निवेशः । प्रथमातिक्रमे कारणाभावात् ॥

( ४ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ शरीरेत्यनेन मांसादीति पूर्वसूत्रे प्रकृतं शरीरमिह तच्छब्देन ग्राह्यमिति सूचितम् । ऐहिकशरीरादन्यच्छरीरं शरीरान्तरम् , भूतपरिष्वङ्गेन इहागतिवैयर्थ्यपरिहारायोक्तम् । तदन्तरप्रतिपत्तौ प्राप्ताविति तादर्थ्ये सप्तमीयम् । भूतसम्परिष्वक्त इत्यनेन तत्तच्छरीरारम्भकत्वेन प्रस्तुतभूतसंयुक्त इत्येवं सम्परिष्वक्तपदं व्याख्यातम् । समित्युक्त्या मुक्तिपर्यन्तं परिष्वक्त एव, न मध्ये वियुक्त इत्याह । तदनूद्य व्याख्यातमेवेति रंहतीत्यस्यार्थो—गच्छतीति । क्तो जीव इत्यस्ति । यतोऽत इति शेषः । अस्य न मरणे आत्यन्तिकः भूतवियोग इत्यध्याहृतसाध्येनान्वयः । अनेन 'भूतानां विनिवृत्तिः' इत्येतद्भागनिवृत्तिपरम् । एवं भूतसंप्रयोगोऽपीत्युक्तं भवति ॥

( ५ ) भूतसंयुक्तस्यैव गतिरसिद्धेत्यतः प्रवृत्तं प्रश्नेत्यादिकं व्याचष्टे—वेत्थेति । छान्दोग्यस्थाविमौ प्रश्नपरिहारौ । श्वेतकेतुर्नाम ऋषिः स्वपितृसमीपेऽभ्यस्तविद्यः पाञ्चालानां समितिं जगाम । तत्र तद्देशाधिपतिः प्रवाहणो नाम राजा पण्डितंमन्यस्यास्याहङ्कारशान्त्यै परीक्षार्थं पञ्च प्रश्नानप्राक्षीत्। तत्र 'वेत्थ' इति पञ्चमप्रश्नवाक्यम् । तस्यायमर्थः—हे श्वेतकेतो 'यथा' येन क्रमेण येन प्रकारेण च द्युपर्जन्यधरापुरुषयोषाख्येषु पञ्चस्वग्निषु आहुत्यधिकरणत्वेन अग्निशब्दवाच्येषु मध्ये योषाख्याग्नौ रेतोरूपायां पञ्चम्यामाहुतौ हुतायां 'आपः' अद्भिः सम्परिष्वक्तो जीवो लब्धदेहः 'पुरुषवचसः' पुरुषनामवान् भवति, तं क्रमं प्रकारं च वेत्थ किमिति । एवं पृष्टः श्वेतकेतुः 'नैव भगव इति' (छा.५-३-३.) अहं नैव वेदेत्यवोचत् । तर्हि कथं विद्वानिति अब्रवीषि इति राज्ञा साक्षेपम

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'
(छा.५-३,९.) इति प्रश्नपरिहाराभ्याम् ॥ १ ॥

२. अधिकरणम् ॥

(१) सू—ॐ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ॐ ॥ २ ॥

प्रतिष्ठितः स्वपितुः स्थानमागत्य तत्सर्वं यथावद्वदत्। श्वेतकेतुनैवमुक्तस्तत्पितोद्दालकः स्वयमपि राजकृतप्रश्नोत्तरासमर्थस्तज्ज्ञातुकामः स्वयमेव राजस्थानं प्रत्यागत्यैतद्विद्यां मे ब्रूहीति प्रार्थयामास। अथ प्रवाहणो राजोद्दालकं प्रति पञ्चप्रश्नपरिहारानवदत्—असौ लोको गौतमाग्निरित्यादिना। तत्र स्वर्गपर्जन्यभूमिपुरुषयोषिदन्तर्गतेषु नारायणवासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्येषु पञ्चाग्निविषयप्रश्नपरिहारेषु अभिहितेषु, किं तत इत्यतः पञ्चमप्रश्नोत्तरं जातमित्याह—इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति। तस्यार्थस्तु—इत्येवं प्रकारेण रेतोरूपायां 'पञ्चम्यामाहुतौ' योषाख्यायां हुतायां प्रक्षिप्तायां मरणानन्तरं जीवेन सह गताः पुनः सहागताः भूतत्रयात्मिका आपः 'पुरुषवचसः' तच्छब्दवाच्या भवन्तीति। इतीति। अयमितिशब्दो भाष्यकारीयः, न तु प्रश्नोत्तरयोरन्यतरः। सूत्रे पित्रसामर्थ्यज्ञापनाय ज्ञापनापरपर्यायनिरूपणाशब्देऽभिहितेऽपि पर्यवसितार्थाभिप्रायेण परिहारेति तद्विवरणं कृतम् ॥ १ ॥

॥ इति तदन्तराधिकरणम् ॥

——:*:——

२. अधिकरणम् ॥

(१) अत्र भगवत्प्राप्तिसाधनवैराग्यार्थं जीवस्य समस्तभूतपरिष्वक्तस्य गतिः समर्थ्यते। सौत्रतुशब्देनैव 'आपः' इति श्रवणाज्जीवोऽस्मात्परिष्वक्त एव गच्छति, न सर्वभूतैरिति पूर्वपक्षसूचनात्तमनुपन्यस्य सिद्धान्तयत्सूत्रमेवोपन्यस्य व्याचष्टे—त्र्यात्मकत्वादिति ॥ 'अप्छब्दः' श्रुतावाप इति विशेषनामग्रहणं 'त्र्यात्मकत्वात्' क्षितिसलिलानलात्मकत्वात्। अपामित्यत्रापि सम्बध्यते। अप्छब्दस्तु युज्यत इत्यनेन तुशब्दोऽध्याहृतान्वयी सन् नाप्छब्दविरोध इति साध्यसूचक इत्युक्तं भवति। त्र्यात्मकत्वादपामित्यनेन श्रुतावब्ग्रहणे अन्यभूतानामप्यर्थात् प्राप्तेर्न तद्विरोध इति हेतुस्सूचितः। न च जीवेन सहागता

अप्छब्दस्तु त्र्यात्मकत्वाद्युज्यते, भूयस्त्वाद्यपाम् ।
(२) तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः । इति भागवते ॥ २ ॥

—:*:—

णां त्रिवृत्करणशून्यत्वान्न त्र्यात्मकत्वमिति वाच्यम् । आदिकाले मिश्रत्वेन सृष्टानां भूतानां त्रिवृत्करणेन पुनर्मिश्रीकृतानां जीवशरीरस्थत्वेन तेन सहागतानामपि तेषां त्रिवृत्कृतत्वाविरोधात्, त्रिवृत्कृतजातीयत्वाद्वा । ननु यद्यापो भूतत्रयात्मिक्यः, कथं तर्हि तत्र विशिष्याप्छब्दप्रयोग इत्यतस्तत्रोत्तरतया भूयस्त्वादित्यंशो योज्य इत्याशयेनाह—भूयस्त्वादिति । आधिक्यादित्यर्थः । चस्त्वर्थेऽवधारणे च । तथा च अप्छब्दस्त्वप्सु युज्यते यतोऽतो न तत्र तदुक्तिविरोधः । कुतः ? अपां भूयस्त्वादेवेति योजना । अनेन हेतुद्वयस्यापि तुशब्दसूचितसाध्येनान्वयो दर्शितः । श्रुत्युदकरूपधर्मिभेदात्साध्यभेद इति ज्ञातव्यम् । यद्वा—अस्त्वपां क्षितिसलिलानलात्मकत्वेन श्रुतौ तद्ग्रहणेऽन्यभूतानामपि प्राप्तिः । तथाऽपि अपामिव भूतान्तरस्यापि सर्वभूतात्मकत्वात् अपामेव ग्रहणे को विशेषहेतुरित्यत आह—भूयस्त्वादिति । 'पार्थिवानां शरीराणां अर्धेन' इत्युक्तप्रकारेण सर्वदेहेषु सम्भूय भूतेजसोरप्यपां दशभागयुक्तत्वेन भूयस्त्वात्तद्ग्रहणं युज्यत इत्यर्थः । तत्त्वप्रदीपे तु अनाप्यशरीरेष्वप्यपां भूयस्त्वमित्युक्तम् ॥

(२) अपां भूयस्त्वधर्मकत्वे प्रमाणमाह—तापेति ॥
क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् ।
तापापनोदः ॥ इति भागवतवाक्यम् ॥

'क्लेदनं' आर्द्रीकरणं 'पिण्डनं' पिण्डीकरणम् 'तृप्तिः' तर्पकत्वं 'प्राणनं' चेष्टाकारणत्वं 'आप्यायनं' सुखकरत्वं 'उन्दनं' बिन्दुभावः 'उन्दनं बिन्दुभावस्स्यात्' इत्युक्तेः, 'तापापनोदः' तापनिवर्तकत्वं 'भूयस्त्वं' अन्येभ्यो भूतेभ्यः कार्येषु भागाधिक्यं इमा अष्टौ 'अम्भसो' जलस्य 'वृत्तयः' स्वरूपलक्षणभूता धर्मा इत्यर्थः । भागवते तृतीयस्कन्धे इत्यस्य भूयस्त्वादित्यनेन अन्वयः । अनेन भूयस्त्वादित्येतद्भूयस्त्वावगमादित्यपि व्याख्यातम् ॥ २ ॥

इति त्र्यात्मकत्वाधिकरणम् ॥

—*—

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ प्राणगतेश्च ॥ ॐ ॥ ३ ॥

'यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि न चैतानि कदाचिद्वियुज्यन्ते न च विलीयन्ते' इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे वैराग्यसिद्ध्यर्थं जीवस्य भूतैः सह गतिः समर्थ्यते। सूत्रे हेतुकथा भूतसम्परिष्वक्त एव रंहति जीव इति साध्यानुवृत्तिसूचनात् तत एव न भूतानि सह गच्छन्तीति तद्विरोधिपूर्वपक्षस्य सिद्धत्वात्तमनुपन्यस्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—प्राणेति ॥ सूत्रे चशब्दः प्राणानां भूतैस्सहाविनाभावार्थक इत्यभिप्रेत्य तदसिद्धिपरिहाराय तत्र श्रुतिमुदाहरति—यत्रेति । व्याप्तेरागमिकत्वादत्र दृष्टान्तो मृग्यः। यद्यपि टीकायां प्राणपदोक्तेन्द्रियाणां व्यापकतावगतेः श्रुत्याऽपि तथैव प्रतीतेः सूत्रभाष्ययोश्च तेषां व्याप्यताबोधात् विरोधो भाति । तथाऽपि यत्रैव भूतानि तत्रैव करणानि इत्येवकारशिरस्कतया श्रुतिव्याख्यानात्, तत्सहगन्तृप्राणा अविनाभूता यैरिति टीकाविवरणाच्च भूतानां व्यापकतोपपत्तेः । समव्याप्त्यभिप्रायेण वा श्रुतिटीकाप्रवृत्तेर्न विरोधः । प्राणगतेः इत्यतः प्राक् व्यापकत्वेनावगतेरित्युपस्कार्यम् । अनेन श्रुतेर्व्याप्तिग्राहकत्वं अभिप्रैति । श्रुतेः सिद्धमिति वाऽन्वयः । अस्मिन् पक्षे नोपस्कारः । हेत्वसिद्धिपरिहारस्तु 'ये प्राणमनूत्क्रामन्ति' (   ) इत्यादितत्त्वप्रदीपोदाहृतश्रुत्या लोकप्रसिद्धितश्च कर्तव्यः । भाष्ये भूतान्यपि सन्तीति पाठे गन्तृजीवेन सह गतिमन्ति वर्तन्ते सह गच्छन्तीति यावदिति व्याख्येयम् । श्रुत्यनुसार्ययम् । न केवलं प्राणाः किन्तु भूतान्यपि जीवेन सह गच्छन्तीत्यपिशब्दार्थः। यद्यपि वह्निगमनेऽपि धूमगमनाभावाद्व्यभिचारः । तथाऽपि नियमेन संयुक्तयोर्मध्ये व्यापकगमने व्याप्यगमनमवश्यं भावि । प्राणभूतयोर्यथा नियतसंयोगः न तथा वह्निधूमसामान्ययोरिति न व्यभिचारः । श्रुतौ वावेत्यवधारणे । 'भूतानि' पृथिव्यादीनि 'करणानि' चक्षुरादीन्द्रियाणि । न केवलं भूतेन्द्रिययोर्दैशिकी व्याप्तिः, कालतोऽप्यस्तीत्याह—नित्यानीति । उभयविधां व्याप्तिमुपपादयति—न चैतानीति । भूतानि

सह गच्छन्तीति सिद्धम् ॥ ३ ॥

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ॐ ॥ ४ ॥

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' (बृ.५-२-१३.) इत्यादिश्रुतेः न प्राणानां जीवेन सह गतिरिति चेत्—

करणानि चेत्यर्थः । आमोक्षमिति भावः ॥ ३ ॥

॥ इति प्राणगत्यधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे प्राणानां जीवेन सह गतिः समर्थ्यते । सूत्र एव पूर्वपक्षस्योक्तत्वात् तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे—अग्न्यादीति ॥ बृहदारण्यके 'यत्रास्य' इत्यादावग्न्यादीन् प्रति प्राणानां गतिश्रुतेरित्यर्थः । आदिशब्देन 'चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्' (बृ.५-२-१३.) इत्यादिर्गृह्यते । पूर्वपक्षहेतुभागं व्याख्याय नेत्यस्यावृत्त्या प्राणगतेरित्यस्यानुवृत्त्या च लब्धं साध्यं दर्शयति—नेति । प्राणानामिन्द्रियाणां जीवेन सह गमनं नेति । अनेन पूर्वहेतोरसिद्धिरुक्ता भवति । 'यत्र' यदा मरणकाले 'मृतस्य' म्रियमाणस्य 'अस्य' पुरुषस्य जीवस्य सम्बन्धिनी 'वाक्' वागिन्द्रियमग्निमप्येति । 'वातं' वायुं 'प्राणः' श्वासादिरूपो जडवायुस्तदभिमानी मुख्यप्राणश्च प्राप्नोति । 'श्रोत्रं' एकेन रूपेण 'दिशो' दिग्देवानप्येतीत्यर्थः । अत्र विष्णोस्तत्त्वदेवानां चैकांशेन जीवं त्यक्त्वा स्वस्वमूलरूपप्राप्तिः, अंशान्तरेण तु जीवेन सह गमनमभिप्रेतम् । यथोक्तमैतरेयभाष्ये—

म्रियमाणमिमं जीवं वासुदेवादिदेवताः ।
त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ॥ इति ॥

तथा बृहद्भाष्ये—

आकाशाख्यं स्वरूपं तु विष्णुस्तद्धृदि संस्थितः ।
भागतोऽभागतश्चैताननुयाति जनार्दनः ॥

इति । पूर्वपक्षे तु सामस्त्येन गतिः श्रुत्यर्थः । न च मुख्यप्राणस्या

( २ ) न, भागतोऽग्न्यादिप्राप्तेः ।
( ३ ) पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु ।
अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ॥

प्यंशेन गमने 'अनावृत्तिर्देहिनां देहपाते' इत्युक्तिविरोध इति वाच्यम् । वायुः अनावृत्तिमोक्षप्रद इति वा अनस्य मुख्यप्राणस्य अवृत्तिः असत्त्वमिति वा देहपाते अनस्यावृत्तिः कारणमिति वा तस्य व्याख्यानात् ॥

( २ ) सिद्धान्तांशं व्याचष्टे—नेति ॥ न प्राणानां श्रुतिबलाद् सहगतिर्वक्तव्येत्यर्थः । कुतो नेत्यतस्तद्धेतुत्वेन उक्तश्रुतेः साव काशत्वादित्याशयेन तदुक्तयर्थे प्रवृत्तस्य भाक्तत्वादित्यंशस्या ग्न्यादिगतिश्रुतेः भाक्तत्वात् गतिश्रुत्योर्भाक्तत्वादित्युभयत्रान्वय मभिप्रेत्याह—भागत इति । भागेनेत्यर्थः । प्राणानामित्यनुवर्तते । श्रुतेरिति शेषः । तथा च प्राणानामग्न्यादीन् प्रति भागतः प्राप्तेः श्रुतेरपि प्राणानामग्न्यादीन् प्रति भागतः प्राप्तिविषयत्वादित्यावृत्त्या योजना ॥

( ३ ) जीवेन सह केचन प्राणभागा गच्छन्ति, अग्न्यादीन् प्रति तु केचनेत्ययं विभागः कुतोऽवगत इत्यत आह—पुरुषस्येति ॥ जीवस्येत्यर्थः । उभयान्वयीदम्—पुरुषस्य मृतौ सत्यां पुरुषस्य प्राणा इति । 'ब्रह्मन्' हे ज्ञानिवृद्धेति चतुर्मुखो नारदं प्रति वक्ति । 'प्राणाः' इन्द्रियाणि तद्देवाश्च । एवेति समस्तभागं व्यावर्तयति । तुशब्दो मृतौ त्विति वा प्राणास्त्विति वाऽन्वेति । द्वितीयान्वयेनोपचि तेष्वेवायं विवेक इति सूचितम् । 'अधिदैवं' अग्न्यादीन् 'तं' पुरु षम् । ननु प्रतिमरणं अधिदैवमिन्द्रियभागापगमे कालतः सर्वापगमः स्यात् । तथा च सर्वभूतापगमः प्राप्त इत्यत आह—पुनरिति । स्वर्गा दिभोगानन्तरं भूलोकं प्राप्तस्य शरीरान्तरप्राप्तौ सत्यां यमनुव्रजन्ति 'तमेव' पुरुषं जीवमनुसृत्य तेन सह शरीरान्तरं प्रविशन्तीत्यर्थः । गमनप्रवेशयोः समुच्चये चशब्दः । अत्र जीवानां भूलोके शरीरत्याग प्राप्त्योरेवेन्द्रियाणां गमनागमनयोरभिप्रेतत्वेन स्वर्गादिभोगाय पूर्व शरीरत्यागेन ज्योतिर्मयादिशरीरान्तरप्राप्तौ गमनागमनयोरभावात्त दुक्तद्यनुपपत्तिरिति चोद्यानवकाशः ।

गतैर्भागैरपि पुनः विशेषुर्भोगसिद्धये ।

पुनश्शरीरसंप्राप्तौ तमेवानुविशन्ति च ॥

इति ब्राह्मे ॥

( ४ ) ब्रह्माण्डे च—

मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च ।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः ॥ इति ॥ ४ ॥

——:*:——

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ॐ॥५॥

---

भोग्यलोकमनुप्राप्तम् ॥

इत्यैतरेयभाष्यस्याप्ययमेवाभिप्रायः । अत्र एकादशेन्द्रियाणां पञ्चभूतानां च लिङ्गशरीरात्मना अनादितो जीवेन सह विद्यमानानामपि प्रतिसृष्टिकालं ‘ तेषां भूतैरुपचयः सृष्टिकाले विधीयते ’ इत्युक्तरीत्या उपचयो भवति । प्रलये च तदपचयः । उपचितभागेष्वपि मरणकाले केषांचिद्भागानां गमनम् । पुनश्शरीरप्राप्तावागमनं चेति विशेषः तुशब्देन चशब्देन च सूचितो द्रष्टव्यः ॥

( ४ ) ननु भागतोऽग्न्यादीन् प्रति गच्छद्भिः प्राणैस्सह भूतानां गतिरस्ति न वा । अस्ति चेत् न जीवेन सह गतिः, सामस्त्येन तान् प्रत्येव गतत्वात् । न चेत्प्राणभूतयोः समव्याप्त्यभाव इत्यत आह—ब्रह्माण्डे चेति ॥ न केवलं ब्राह्मे अग्न्यादिप्राप्तेरुक्तिः, किन्तु ब्रह्माण्डे चेति समुच्चये चशब्दः । का उक्तिरित्यतः तां पठति—मृतीति । ‘एनं’ पुरुषं ‘ भागतो जहति ’ त्यजन्तीत्यर्थः । ‘ सर्वशो भूतानि ’ पृथिव्यादिसर्वभूतानि प्राणाश्चैनमनुगच्छन्तीत्यर्थः । तथा च प्राणैस्सह भूतानां भागतो गतिसत्त्वेऽपि न सर्वशो गमनमिति जीवेन सहापि भागतो गतिर्युक्तेति भावः । आद्यश्चशब्दः समुच्चये । द्वितीयस्तुशब्दार्थो विशेषद्योतकः ॥ ४ ॥

॥ इति अग्न्याद्यधिकरणम् ॥

——:*:——

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे भूतानां जीवेन सह गतिराक्षिप्य समाधीयते। पूर्वपक्षस्य सूत्र एवोक्तत्वात् तत्पठित्वा पूर्वपक्षांशं तावद्व्याचष्टे-प्रथम इति ॥ ‘तस्मिन्’ (छा.५-४-२.) इति छान्दोग्यवाक्योदाहरणेन प्रथम इत्य

'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा. ५-४-२.) इति प्रथमाग्नौ श्रूयते न भूतानि जुह्वतीति। अतो नेति चेत्—

(२) न, ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा.५-

स्यावृत्तिस्सूचिता। जुह्वतीत्यनन्तरं श्रूयत इत्यनुवर्तते। यत इति शेषः। श्रूयते न श्रूयत इत्यनेन श्रवणादश्रवणादित्युभयथा पदच्छेदस्सूचितः। नेति। न भूतानां जीवेन सह गतिरित्यर्थः। अनेन नेत्यस्य आवृत्तिस्सूचिता। तथा च यतः 'प्रथमे' 'तस्मिन्' इत्युपक्रमवाक्ये 'प्रथमे' स्वर्गाख्यप्रथमाग्नौ श्रद्धासहितस्य जीवस्य होमः श्रूयते, यतश्च भूतानि जुह्वतीति न श्रूयते, अतो नेति योजना। श्रुतौ श्रद्धाशब्दः पूर्वपक्षे श्रद्धामात्रयुक्तजीवपरः। सिद्धान्ते त्वजहल्लक्षणया श्रद्धयाऽद्भिश्च सम्परिष्वक्तं जीवमाह। तथा च 'तस्मिन्' द्युलोकाख्ये 'एतस्मिन्' आदित्यादिसमिदादिविशिष्टे 'द्व्यादीनां देवताभोगस्थानत्वात् अग्नित्वम्' इति तत्त्वप्रदीपोक्तेः देवताभोगस्थानत्वात् अग्निशब्दवाच्ये नारायणाधिष्ठाने द्युपर्जन्यधरापुंस्त्र्याख्यपञ्चाग्निषु मध्ये प्रथमाग्नौ द्युलोकाधिपतयो देवाः श्रद्धां तयेष्टवन्तं यजमानं 'श्रद्धा सोमवर्षादीनां देवभोग्यत्वादाहुतित्वम्' इति तत्त्वप्रदीपोक्तरीत्या आहुतिरूपं 'जुह्वति' निक्षिपन्तीत्यर्थः॥

(२) सिद्धान्तांशं व्याचष्टे—नेति॥ प्रथमाग्नौ भूतसहितस्य होमाश्रवणात् न भूतानामसहगतिः कल्पनीयेत्यर्थः। कुतो नेत्यतस्तत्रोक्तहेत्वसिद्धेरिति हेतुमभिप्रेत्य कुतः सेत्यतस्तत्र हेतुत्वेन ता एव हीति सूत्रखण्डं व्याचष्टे—ता इति। यत इत्यादौ संयोज्यम्। अनेन सौत्रो हिर्व्याख्यातः। ता इत्यनूद्य प्रस्तुता इति व्याख्यानम्। 'वेत्थ' इति वाक्ये प्रकृता इत्यर्थः। आप एवेत्यन्वयः। न श्रद्धामात्रमित्येवार्थः। 'श्रद्धारूपेण' श्रद्धाशब्दार्थरूपतया 'हूयन्ते' होम्यतया श्रूयन्ते। श्रद्धाशब्दस्याजहल्लक्षणया श्रद्धोपयुक्तजीवपरत्वादिति भावः। अपां श्रद्धाशब्दार्थत्वं कुत इत्यतस्तत्र हेतुत्वेनोपपत्तेरिति सूत्रखण्डं व्याचष्टे—इतीति। इत्युपसंहारेति। एवं सति एवंरूपोपसंहारवाक्यस्योपपन्नत्वादविरुद्धत्वादित्यर्थः। अन्यथोपसंहारानुसारेणोपक्रमार्थाकल्पने उपसंहारानुपपत्तेस्तद्विरोधेनोपक्रमस्य प्रबलप्रमाणविरुद्धार्थबोधक

९-१.) इत्युपसंहारोपपत्तेः ॥ ५ ॥

*

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ॐ॥ ६॥
अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणा
न्न युक्तमिति चेत्—
( २ ) न, 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव
गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचर

त्स्वरूपाप्रामाण्यप्रसङ्गादिति भावः ॥ ५ ॥

॥ इति प्रथमाधिकरणम् ॥

*

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवस्य भूतैः सह गतिस्समर्थ्यते । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे—अश्रुतत्वादिति ॥ अतश्शब्दस्तथाशब्दार्थे । तेन यथेत्यप्याद्वौ सिध्यति । हेत्वर्थे च । न भूतानामित्यध्याह्रियते । अतःशब्दस्य हेत्वर्थत्वं च

अतः शब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते ।
उभयार्थे च भवति यथाशब्दविदो विदुः ॥

इति श्रुतिगीतातात्पर्योदाहृतवचनासिद्धम् । शब्दस्वरूपमनतिक्रम्य वर्तमानं यथाशब्दं तद्विद इत्यर्थः । हेत्वर्थकातःशब्दस्य विवरणं प्रत्यक्षेति । न युक्तमित्यनेन नञावृत्तिः सूचिता । तथा च यथा प्राणानामग्न्यादीन् प्रति गतिः 'प्रत्यक्षतः' 'अग्निं वाक्' (बृ.५-२-१३.) इति साक्षाच्छ्रूयते न तथा भूतानां गतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणाद्भूतानां जीवेन सह गतेर्विशेषतोऽश्रवणादतः नियमेन प्रत्यक्षाश्रवणस्यार्थिकश्रवणादपि बलवत्त्वात् 'न युक्तम्' न जीवो रंहति सम्परिष्वक्त इत्युक्तं युक्तमिति योजना ॥

( २ ) सिद्धान्तांशं व्याचष्टे—नेति ॥ न प्रत्यक्षश्रुत्यभावादसह गतिर्भूतानां वक्तव्येत्यर्थः । कुतो नेत्यतोऽस्यासिद्धेरिति भावेन तद्विरोधिप्रतीत्या तामुपपादयति—अथेति । प्रमेयान्तरप्रश्नारम्भेऽथशब्दः । मृतिकाले सदेति वा शेषः । 'यजमानं' यागादिकर्तारं 'एनं' पुरुषं

ति' इति कौण्डिन्यश्रुतौ प्रतीतेः ॥ ६ ॥

---*---

७. अधिकरणम् ॥

( १ ) 'अपामसोमममृता अभूम' (ऋ. ८-४८-३.) इत्यादि श्रुतिविरोध इति ।

( २ ) अतो वक्ति—

---

'किं' वस्तु न जहातीति । अस्योत्तरमाह—भूतानीति । एवशब्दो विपरिणतेन जहतीत्यनेन सम्बध्यते । तत्र हेतुः—भूतैरित्यादि । भूतैः सहैव परं लोकं गच्छतीत्यर्थः । एवमुत्तरत्रापि सहैवेत्यर्थः । 'भुङ्क्ते' पुण्यफलं 'उत्पद्यते' भूमौ 'चरति' सञ्चरति सत्कर्म करोतीति वा 'विचरति' विरुद्धं दुष्टं कर्माचरति करोतीत्यर्थः । सौत्रादिपदार्थेऽप्येषैव श्रुतिः प्रमाणम् । यद्वा—आदिपदोपात्तपूर्तादिकृतामपि भूतैस्सह गतौ श्रुत्यन्तरमस्तीति ज्ञातव्यम् । प्रतीतेरित्यनेन इष्टादिकारिणामिति सौत्रपदं संयोज्यम् । तथा च इष्टादिकारिणां यागपूर्तादिकृतां भूतैः सहैव गतेः 'प्रतीतेः' प्रत्यक्षत एव श्रवणादित्यर्थः ॥ ६ ॥

॥ इति अश्रुतत्वाधिकरणम् ॥

---*---

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवत्प्राप्त्यर्थं कर्मणामस्थिरफलकत्वोक्त्या वैराग्यादेरावश्यकसाधनत्वं समर्थ्यते । पूर्वपक्षयति—अपामेति ॥ तर्हीत्यादौ अध्याहार्यम् । तत एव यदीति लभ्यते । आदिपदेन 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' (आप.श्रौ.८-१-१.) इत्यादिकं गृह्यते। तथा च यद्यधिकरणषट्कोक्तरीत्या मरणमात्रेण मोक्षाभावात्तदर्थं मुमुक्षुणाऽवश्यमनुष्ठेयं वैराग्यादिसाधनम्, तर्हि 'अपाम' इत्यादिश्रुतिविरोधः, तत्र विना वैराग्यादिकं कर्मादिनैव मोक्षोक्तेरित्यर्थः । तत्त्वप्रदीपे तु तदन्तरप्रतिपत्ताविल्यादौ इष्टादिकारिणां धूमादिमार्गेण स्वर्गगतानां पुनरावृत्तिरभिप्रेता, तर्हि 'अपाम' इत्यादिश्रुतिविरोध इत्याक्षेपाभिप्राय उक्तः । इष्टशेषं सोमं 'अपाम' अपिबाम, अतोऽमृताः मुक्ता अभूम । सुकृतमक्षय्यं मोक्षमिति पूर्वपक्षे श्रुत्यर्थः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ तदमृतत्वमिति द्वे पदे । तथा च यस्मात् 'तदमृतत्वं' अपामेति श्रुत्युक्तममृत

सू—ॐ ॥ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ॐ ॥ ७ ॥
भागतस्तदमृतत्वं 'नान्यः पन्था अयनाय विद्यते'

त्वं काम्यसोमयागादिसाध्यं मुक्तत्वं 'भागतः' कालभागतः तमपेक्ष्याल्पकालीनममुख्यमिति यावत्। तस्मान्न श्रुतिविरोध इति योजना। भागत इत्यनेन भक्तमिति व्याख्यातम्। तदित्यनेन सूत्रे तत्पदाध्याहारः सूचितः। मुख्यामृतत्वमेव श्रुत्यर्थः किं न स्यादित्यतः तदुत्तरत्वेन तथाहि दर्शयति इति सूत्रखण्डसूचितां श्रुतिमाह—नेति। श्रुतेरित्यनेन सौत्रो हिशब्दो हेत्वर्थतया व्याख्यातः। योजना तु यतो 'नान्यः' इति श्रुतेर्मुख्यामृतत्वं न काम्यकर्मसाध्यमित्यन्वयव्यतिरेकोक्त्याऽवगतम्, अतस्तदमृतत्वं भागत एवेति। श्रुतिस्तु जिज्ञासानये व्याख्याता। काम्यकर्मिणां कुतो मुख्यामृतत्वाभाव इत्यतस्तदुत्तरत्वेन अनात्मवित्त्वादित्यंशं व्यतिरेकमुखेन योजयति—आत्मेति। न त्वनात्मविद् इत्येवशब्दार्थः। हिशब्दो हेतौ। तदमृतत्वम्। ननु काम्यकर्मिणां मुख्यामृतत्वाभावेऽपि अकाम्यकर्मिणां तदस्त्वित्याशङ्कापरिहाराय प्रवृत्तं सौत्रं वाशब्दं व्यवस्थितविकल्पार्थतया व्याख्याति-वाशब्दादिति। इति सूचितमिति शेषः। तदमृतत्वमित्युभयत्रानुवर्तते। योजना तु 'अपाम' इति श्रुतौ यद्यकाम्यं कर्म विवक्षितम्, तदा तज्जिज्ञासूनां चेत्तदमृतत्वं मुख्यामृतत्वमेव, परं तु तत् कर्मणा न साक्षाद्भवति, किन्तु कर्मणा शुद्धान्तःकरणस्य वैराग्यादि, अथ तद्वतः श्रवणादिरूपा जिज्ञासा, जिज्ञासोर्ज्ञानम्, ज्ञानिनो मोक्ष इति 'पारम्पर्येण' परम्परयैव लभ्यमिति परम्पराविवक्षयैवैषा श्रुतिः प्रवृत्तेति वक्तुं युक्तम्। अपरोक्षज्ञानिनामकाम्यं कर्म चेत्तदा तच्छ्रुत्युक्तममृतत्वं न ज्ञानसाध्यसंसारनिवृत्तिरूपं, किन्तु 'आत्मविदपेक्षया' परमात्मापरोक्षज्ञानिनमपेक्ष्यैव तत्कर्मफलमपेक्ष्यैव आत्मज्ञानलब्धे मोक्षे प्रचुरानन्दव्यक्तिवैचित्र्याख्यातिशयमपेक्ष्यैवोक्तं तद्रूपमेवोक्तमिति यावदिति वाशब्दात्सूत्रकृत्सूचयतीति। तथा च न सर्वथा संसारनिवृत्तिरूपमोक्षः कर्मसाध्य इति तदर्थं वैराग्यादिकमावश्यकमिति नोक्तविरोध इति भावः। अत्र तत्त्वप्रदीपे-परम्परयाऽमृतत्वफलकत्वमपि नाज्ञकृतकर्मणः, किन्तु ज्ञानिकृतस्यैवेत्याशयेन पारम्पर्येणात्मविदपेक्षया वा तदमृतत्वमिति एकवाक्यतया भाष्यं व्याख्याय, 'कर्मणा ज्ञानमातनोति' ( ) इत्या

( तै.आ. ३-१३. ) इति श्रुतेरात्मविद एव हि मुख्यम् ।
वाशब्दात्पारम्पर्येणात्मविदपेक्षया वा ।
( ३ ) तथा हि श्रुतिः—' स एनमविदितो न भुनक्ति यथा

दिश्रुत्यनुसारेण वाशब्दादित्यादेरन्यश्चार्थः-वाशब्दात्पारम्पर्येण कर्मिणा ममृतत्वं ज्ञानोत्पत्तिद्वारेणेतीदं प्रकारान्तरेणापि व्याख्यातम् । तथा च तत्त्वप्रदीपे टीकोक्तप्रकारत्रयं विनाऽस्याप्युक्तत्वात् टीकायां प्रकार त्रयेत्युपलक्षणम् । सिद्धान्ते अपामेति श्रुतेरयमर्थः—यस्मात्सोमरस मपाम, सोमादिकर्मणा चान्तःकरणशुद्धिद्वारा देवान्विष्ण्वादींस्तार तम्येन ' अविदाम ' व्यजिज्ञासिष्म । अथ ' ज्योतिः ' ब्रह्म ' अगन्म ' अद्राक्ष्म, तस्मात् ' अमृताः ' मुक्ता अभूमेति । यथोक्तं तत्त्वप्रदीपे— सोममपाम, देवानविदाम, ज्योतिरगन्म, अमृता अभूमेति । ज्योतिर्ब्र ह्मेत्युदितमिति च । ' ज्योतिश्चरणाभिधानात् ' इत्यादौ ज्योतिर्ब्रह्मेत्यु दितमित्यर्थः । यद्वा—काम्यकर्मभिर्ज्योतिर्ब्रह्म ' अगन्म ' अज्ञासिष्म, ' ज्योतिः ' ब्रह्मज्ञानं ' अगन्म ' प्राप्नुम इति वा । तेन च ' देवान् ' अ र्चिरादिमार्गस्थान् ' अविदाम ' प्राप्नुम इत्यर्थः । एवं चान्द्रमसं ज्यो तिरगन्म, ततो मार्गरूपान् धूमादिदेवान् अविदाम, ततोऽल्पकालममृ ता अभूमेति । प्रथमपक्षे यतः पूर्वकल्पे मनुष्याः सन्तो ज्योतिरपरोक्ष तोऽगन्म, अतो देवान्यथायोग्यं देवादित्वमविदामेति । तृतीयपक्षे च वाक्यशेषार्थो द्रष्टव्यः । यद्यपि कर्मनिर्णयटीकायां अमृता इवामृता इ ति गौण्या वृत्त्या मन्वन्तरापेक्षयाऽमृतशब्दस्य तत्साधनज्ञानलक्षणया तदेकदेशलक्षणया चेति त्रेधाऽमृतशब्दस्यामुख्यत्वरूपभाक्तत्वोक्तेः अत्र चाकाम्यकर्मणां पारम्पर्येण मोक्षसाधनत्वपक्षेऽमृतशब्दस्य मुख्य त्वोक्तेर्विरोधः । तथाऽपि यथा कथञ्चित् श्रुतेरविरुद्धार्थोक्तौ तात्पर्या त्तत्रापि मुख्यत्वस्यैवाभिप्रेतत्वादविरोधः । यद्वा—वाचनिकार्थत्यागे नेति कर्मनिर्णयगतवाचनिकपदं न मुख्यार्थमात्रपरम्, किन्तु प्रतिपा द्यपरमिति सूचनाय तत्रामुख्यत्वोक्तावप्यत्र मुख्यत्वोक्तिरिति वा त त्त्वप्रदीपरीत्याऽत्राप्यमुख्यत्वाद्वा न विरोधः ॥

( ३ ) यदुक्तमनात्मवित्त्वान्न कर्मिणो मुख्यामृतत्वमिति । तदयुक्तम्, तेषामपि तदभ्युपगमे विरोधाभावादित्याशङ्कापरिहारायास्याः श्रुतेरु क्तार्थत्रयसमर्थनाय च तथा हि दर्शयतीत्यनेन ज्ञापिताः श्रुतीरुदाहर्तुं प्रतिजानीते—तथा हीति ॥ दर्शयतीत्यस्ति । तथा च ' हि ' यतः

वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवं
विन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवा
त्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपा

'तथा' भाक्तं वेत्युक्तप्रकारेण श्रुतिः 'दर्शयति' प्रतिपादयतीत्यर्थः। अस्यात उक्तं युक्तमित्यध्याहृतेनान्वयः। श्रुतिरिति समुदायैकवचनम्। यद्यप्यनात्मविदां न मोक्ष इत्यस्मिन्नर्थे 'नान्यः' इति श्रुतिरुदाहृता। न च तत्रैव श्रुत्यन्तरमेतदिति वाच्यम्। तस्यापि पूर्वमेवोदाहर्तव्यत्वात्। तथाऽपि 'स य आत्मानम्' (बृ.३-४-१५.) इत्यादेरात्मविदपेक्षयेत्युक्तार्थसाधकत्वस्यापि सत्त्वात् अत्रोदाहरणम्। अत्रात्मविदामेव मुख्यामृतत्वं नानात्मविदामित्यर्थे 'स एनम्' इत्यारभ्य 'तत्तत्सृजते' इत्यन्तं बृहदारण्यकवाक्यं प्रमाणम्। आत्मविदां कर्मापेक्षया तदमृतत्वमित्यर्थे 'आत्मानमेव' इत्यादिभागतस्तदमृतत्वमित्यस्मिन्नर्थे 'अमृतः' इति श्रुत्यन्तरम्, पारम्पर्येणेत्यर्थे 'कर्मणा' इत्यन्यश्रुतिः प्रमाणमिति विवेकः। इति चेत्यस्य श्रुतिरिति पूर्वेणान्वयः। चशब्दोऽनेकश्रुतिसमुच्चये। अनेनेतिशब्दः प्रत्येकं संयोज्य इति सूचितम्। श्रुत्यर्थस्तु—'अथ यो ह वा अस्माल्लोकमदृष्ट्वा प्रैति' (बृ.३-४-१५.) इति वाक्ये प्रकृतो योऽग्निविप्रार्चकोऽधिकारी अखिलाश्रयत्वाल्लोकशब्दितं परमात्मानमदृष्ट्वाऽस्माद्देहात्प्रैति तमेनं 'सः' हरिः 'अविदितः' तेनादृष्टो 'न भुनक्ति' नामृतत्वं भोजयति न पालयति चेति। अत्र दृष्टान्तमाह—यथेति। यथा वेदः 'अननूक्तो' यथाविध्यनधीत ईश्वरज्ञानादिजननेनैनं श्रोत्रियं न भुनक्ति। अन्यद्वा निदर्शनं, यथा वा 'अकृतं' यथावदननुष्ठितं कर्म न फलप्रदं तथेत्यर्थः। ननु विप्राग्न्यादिपूजनादिना मोक्षाभावेऽपि अश्वमेधादिमहत्कर्मानुष्ठानेन स भविष्यतीत्यत आह—यदि हेति। यदि 'अनेवंवित्' उक्तप्रकारेण परमात्मानपरोक्षज्ञानी महदपि 'पुण्यं' पुण्यसाधनं अश्वमेधादि कर्म करोति, तदा 'अस्य' अज्ञानिनः 'तत्' कर्म 'अन्ततः' अन्ते स्वर्गादिफलभोगावसाने स्वल्पफलदानान्त इति वा क्षीयत एव 'ह' निश्चितम्, न तु पुनरक्षयमोक्षफलसाधनं, तस्मान्मुमुक्षुः 'लोकं' सर्वाश्रयं ज्ञानरूपं वा 'आत्मानं' विष्णुं 'उपासीत' जानीयादित्यर्थः। यद्वा—लोक्यत इति लोकशब्दः स्वरूपवाची 'आत्मानमेव लोकमुपासीत' (बृ.३-४-१५.) इतिवदित्यैतरेयभाष्योक्तेः परमात्माख्यं प्र

स्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्काम
यते तत्तत्सृजते ' (बृ. ३-४-१५.)

( ४ ) ' अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनु
र्यावदादित्यः ' (           )

( ५ ) ' कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृता
नि कर्माणि यत एनममृतत्वं नयन्ति ' (           )

काशमानस्वरूपमित्यर्थः । ननु जिज्ञासुज्ञानिकृतकर्मणोरपि अज्ञकर्मव
त्क्षये किं ज्ञानसम्पादनेन इत्यत आह—स य इति । ' सः ' प्रसिद्धो
' यो ' जिज्ञासुः ' आत्मानं ' परमुपास्ते तस्य ' कर्म ' अकाम्यं पुण्यं
' न क्षीयते ' ज्ञानद्वारेणाक्षयमोक्षदं भवति । तथा यः ' उपास्ते ' जा
नीतेऽस्य पुण्यं कर्म ' न क्षीयते ' अक्षयमोक्षातिशयाय भवतीत्यर्थः ।
ननु कर्मण आशुतरविनाशित्वान्न क्षीयत इति कथमित्यत आह—अ
स्मादिति । ' हि ' यस्मादेवमुपासनापरोक्षज्ञानाभ्यां मुक्तो मोक्षे यद्य
द्वैषयिकं फलं कामयते तत्सर्वं ' तस्मादेव ' अपरोक्षीकृतात्मनस्तत्प्र
सादादेव कर्म सृजत इत्यर्थः । यद्वा—यद्यत्कामयते मुक्तस्तत्तत्सृजते
कर्मेति यत तत् ' अस्मात् ' आत्मनोऽनुग्रहाद्धि, कर्मणा प्रसन्नः पर
मात्मैव सृजतीत्यर्थः । तथा च कर्मण आशुतरविनाशित्वेऽपि तज्जात
भगवत्प्रसादस्य नित्यत्वेन तद्विवक्षया न तस्य कर्म क्षीयत इत्युक्तिरि
ति भावः । केचित्तु—तत्कर्म सृजतीत्युक्त्या ज्ञानोत्तरानुष्ठितकर्मजा
तपुण्यस्य जीवस्वरूपतया मुक्तावप्यवस्थानं सिद्ध्यति । अन्यथा कर्मण
एव प्रसादजनकत्वापत्त्याऽदृष्टासिद्धिप्रसङ्गादित्याहुः ॥

( ४ ) ' अमृतः ' इति श्रुतौ वावेति निपातौ प्रसिद्धौ । तथा च
' सोमपः ' सोमयाजी ' अमृतः ' अमुख्यामृतत्ववान् भवति । तस्यामु
ख्यत्वं कुत इत्यतोऽनित्यत्वादित्याह—यावदिति । इन्द्रः स्वपदे याव
त्कालमास्ते, एवं मनुः सूर्यश्च, अयं तावदमृतो भवतीत्यर्थः ॥

( ५ ) अधिकारी अकाम्येन कर्मणा ज्ञानं ' आतनोति ' उत्पादय
ति । तेन ' अमृती ' मुक्तो भवतीत्यर्थः । कर्मणां पारम्पर्येण मुक्तिसा
धनत्वे युक्तिमाह—अथेति ॥ यतः कर्माणि ' एनं ' जिज्ञासुं ' अमृतत्वं '
मोक्षं ' नयन्ति ' प्रापयन्ति । अथ तस्मादेवामृतानीत्युच्यन्ते, अतस्ते
षां तत्साधनत्वं युक्तमिति भावः । नन्वेवं श्रुत्यादिबलात् ' अपाम '
इत्यस्य त्रेधा स्वार्थपरत्वोक्तौ

इति च ॥ ७ ॥

---*---

८, अधिकरणम् ॥

( १ ) कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरिति ।

यानि तीर्थादिवाक्यानि कर्माणि विषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि च ॥

इति गीताभाष्यवचनविरोध इति चेन्न, रोचनार्थं फलश्रुतिरित्युक्तेः फलवचनवदल्पाधिकार्यपेक्षया तदुपपत्तेः, श्रुतीनां स्वार्थपरत्वस्यात्यागात् । अन्यथा 'प्रशंसादीनां तात्पर्यं वाचनिकार्थात्यागेनैवोक्तं स्वयं भगवता भाक्तं वेति' इति कर्मनिर्णयविरोधात् । सूत्रार्थस्तु--यतः 'तत्' अमृतत्वं 'अपाम' इति श्रुतौ काम्यकर्मिण उक्तममृतत्वं 'भाक्तं' कालभागतोऽल्पकालीनमिति यावत् । 'वा' अथ वा जिज्ञासोरकाम्यकर्मिणः पारम्पर्येण तदमृतत्वं श्रुतावुक्तम् । यद्वा—परमात्मविदां कर्मापेक्षया तदमृतत्वमुक्तम्, अतो मुमुक्षुणाऽवश्यानुष्ठेयमेव वैराग्यादीत्युक्तार्थे न श्रुतिविरोधः । काम्यकर्मिभिरपि मुख्यामृतत्वमेव प्राप्यमिति श्रुत्यर्थः किं न स्यादित्यत आह—अनात्मवित्त्वादिति । काम्यकर्मिणां परमात्मानपरोक्षज्ञानित्वादित्यर्थः । अनात्मवित्त्वेऽपि कुतो न तेषां मुख्यामृतत्वलाभः । तथा 'अपाम' इत्यादेरुक्तानेकार्थकत्वे च किं प्रमाणमित्यत आह—तथा हीति । 'हि' यतो 'नान्यः' इति 'स एनम्' इति श्रुतिश्च 'तथा' आत्मविदामेव मुख्यामृतत्वं नानात्मविदामित्यर्थम्, 'आत्मानमेव' इति श्रुतिर्ज्ञानोत्तरकर्मापेक्षयेत्यर्थं 'अमृतः' इति श्रुतिर्भाक्तमित्यर्थं 'कर्मणा' इति श्रुतिः पारम्पर्येणेत्यर्थं च 'दर्शयति' प्रतिपादयत्यत इति ॥ ७ ॥

॥ इति भाक्ताधिकरणम् ॥

---*---

८, अधिकरणम् ॥

( १ ) अत्राधिकरणे वैराग्यादिसाधनस्यावश्यानुष्ठेयत्वं समर्थ्यते । 'कृतात्यये' इत्यनेन सूचितं पूर्वपक्षं दर्शयति—कृतस्येति ॥ कृतस्येत्यनुवादेन कर्मण इति व्याख्यानम् । 'भोगेन' फलानुभवेन 'क्षयात्' नाशात् । अनेन निमित्तसप्तमीति सूचितम् । कर्मणः क्षयादित्यावर्तते । तथा च जीवेन सम्पादितस्य कृतस्य कर्मणः स्वर्गादिष्वेव भोगेन नि

(२) अत आह—

सू—ॐ ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ॐ ॥ ८ ॥

'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति' ( ) इति श्रुतेः ।

---

श्शेषमत्ययान्नाशात् तत एव कर्मणस्तन्मूलबन्धस्यापि क्षयादुच्छेदात् तदुच्छेदरूपा मुक्तिः स्वत एव भवतीति न तदर्थे वैराग्यादिकमनुष्ठेयमिति योजना । मुक्तिरिति सूत्रे शेषोक्तिः ॥

(२) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ श्रुतेरित्यनेन भावार्थकदृष्टपदं व्याख्यातम् । चः समुच्चये । 'शेषवान्' भुक्तकर्मशेषवानेव, न तु निश्शेष इत्येवशब्दार्थः । अनेन अनुशयपदं कर्ममात्रवाचकमपि स्मृत्यनुसारादेवं व्याख्यातम् । सूत्रे नेति आयातीति च शेषः । तथा च भोगेन कृतात्ययान्निमित्तात्तन्मूलबन्धात्ययात्स्वत एव मुक्तिः स्यादिति किं वैराग्यादिसाधनैरिति चेन्न, यतोऽयं जीवः कृतानां मध्ये कतिपयात्ययेऽपि 'अनुशयवान्' भुक्तशिष्टकर्मवानेव परलोकादायाति भुवम् । न चास्यासिद्धिः 'दृष्टस्मृतिभ्यां' श्रुतिस्मृतिभ्यां तत्सिद्धेरिति सूत्रार्थः । 'ततः' स्वर्गादेः 'शेषेण' कर्मशेषेण तद्युक्त एव 'इमं लोकं' भूलोकं प्रत्यायाति कर्मी । पुनर्भूमौ कर्म कुरुते, पुनः स्वर्गं प्रतिगच्छति पुनरायाति भुवमित्यर्थः । स्मृतावनुशयशब्दः कर्मार्थकः । तथा च कर्मी जीवो भुक्तशिष्टकर्मवानिमां भुवं प्राप्य पुनस्तत्र कर्म कृत्वा पुनस्स्वर्गं गच्छेत् । पुनस्ततो भुवं 'नित्यशो' नियमेन करोत्यायाति गच्छतीत्यर्थः । अनेन श्रुतौ पुनः कर्म कुरुते, स्मृतौ पुनः कर्म कृत्वेत्युक्तया एवं द्वित्रिचतुरावर्तने अशेषकर्मनिवृत्तिः स्यादिति शङ्का निरस्ता । अल्पापादने कर्मसमाप्तिरित्याशङ्कानिरासायाह—आचतुर्दशमाद्वर्षादिति । अत्राङ् पूर्वावधिरूपमर्यादार्थकः आजन्मेत्यादिवत्, न त्वामुक्तीत्यादाविवोत्तरावधिरूपमर्यादार्थकः । 'नान्तादसङ्ख्यादेः' इति निषेधस्त्विह न प्रवर्तते, निपातनादेव । तथा च चतुर्दशमं वर्षमारभ्येत्यर्थः । 'अयं' बद्धजीवो 'नियमेन तु' नियमेनैव 'दशावराणां' दशसङ्ख्याका देहा येषु प्राप्तव्येषु देहेष्ववरकक्ष्यात्वमापन्नास्ते दशावरास्तेषाम् । अत्रावरपदबलादारभ्यव्येषु देहेषु दशकस्य पृथक्कक्ष्यात्वसिद्धिः । इतोऽधिकानामेकादशादीनामपि बहुव्रीहिणैव सिद्धिः । अत एव प्रमेयदीपे 'स्त्री धाऽप्य

भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः ।
कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥
आ चतुर्दशमाद्वर्षात्कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ॥
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥
इत्यादिस्मृतेश्च शेषवानेवायाति ॥ ८ ॥

---*---

९. अधिकरणम् ॥

(१) 'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म

---

नूनदशकम्' इत्यत्र दशानां सङ्घो दशकः अनूनो दशको यस्येति विग्रहप्रदर्शनेन दशकस्य ततोऽधिकसङ्ख्यानां चान्यपदार्थत्वमाश्रितम्। न च 'जीवंश्चतुर्दशादूर्ध्वम्' इति वचनविरोधः । अत्र चतुर्दशमं वर्षं तत्समाप्तिमारभ्येत्यर्थाश्रयणात् उभयत्रापि तदुत्पत्तिमारभ्य तदुत्पत्तेरूर्ध्वमित्यर्थाश्रयणाद्वा न विरोधः । केचित्त्वेतद्वचनविरोधाद्बिभ्यतो दशावरा इत्यत्र दश वरा येषु न भवति किन्तु समकक्ष्यात्वं वाऽवरकक्ष्यात्वं वाऽऽपन्ना येषु देहेषु तेषां कारणानीति व्याचख्युः । तन्न, उक्तरीत्योक्तवचनविरोधाभावेन कौटिल्यकल्पनायोगात् । दशकस्य वरत्वमात्रनिषेधेऽपि समकक्ष्यात्वस्य वाऽवरकक्ष्यात्वस्य वाऽनुक्तेः, 'आनूनदशकम्' इत्युक्तिविरोधाच्च । 'मुनिस्सुकर्मशीलोऽपि' इति वचनान्मुनिविषयमेतदित्यपि न, मुनिरपीति कैमुत्यस्यैवोक्तयाऽस्य सर्वविषयत्वात् । कर्मक्षयान्मुक्तिरिति । बन्धककर्मणो निश्शेषक्षयान्निमित्तात्कर्ममूलकबन्धनिवृत्तिरूपा मुक्तिः 'कुतो' न कुतोऽपीत्यर्थः ॥ ८ ॥

॥ इति कृतात्ययाधिकरणम् ॥

---*---

९. अधिकरणम् ॥

(१) अत्राधिकरणे स्वर्गादागतिप्रकारो निरूप्यते । तत्रानेवमित्यनेन सूचितं पूर्वपक्षं दर्शयति–यथेति ॥ गतिप्रकारेणेत्याद्यावर्तते । तथा च इति श्रुतौ यतो जीवस्यैवं गतिप्रकारेणागतिः प्रतीयते अतो गतिप्रकारेणैव आगतिः, न त्वनेवमपीति योजना । पूर्वमन्यैः स्वेन वा यथा येन मार्गेण स्वर्गादिमं लोकं प्रति 'इतं' आगतं तथा तेन स्वर्गं प्रति

कुरुते स परिवर्तते' ( ) इति गतिप्रकारेणागतिः प्रतीयते।

( २ ) अतो ब्रूते—

सू—ॐ ॥ यथेतमनेवं च ॥ ॐ ॥ ९ ॥

'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति काषायणश्रुतेर्यथागतमन्यथा च ॥ ९ ॥

गच्छति। यथाऽस्माल्लोकात्स्वर्गं 'इतं' गतं तथा भुवमागच्छतीत्यर्थः। गमने फलमाह—स इति। 'सः' जीवः कर्मफलं स्वर्गादौ भुङ्क्ते इत्यर्थः। आगमने फलमाह—स इति। कुरुते भूमौ। गमनागमनयोरामुक्त्युच्छित्तिर्नास्तीत्याह—स इति। 'परिवर्तते' आवर्तत इत्यर्थः। जीवविषयमेतदिति ज्ञापनाय वाक्यशेषोदाहरणम् ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ काषायणश्रुतेरित्यनेन सूत्रे हेत्वनुक्तिदोषः परिहृतः। प्रतिज्ञोक्त्यैव तत्सूचनात्। जीवः पूर्वमन्यैः स्वेन वा 'यथा' येन पथा वा स्वर्गं प्रति गतस्तथाऽऽकाशपर्यन्तमागच्छति ततोऽर्वाक् भुवं प्रत्यन्यथा चागच्छतीत्यर्थः। यथोक्तं तत्त्वप्रदीपे—यथागतं तथाऽऽकाशपर्यन्तं आगच्छति। ततोऽर्वागन्यथा चेति। चः प्रकारसमुच्चये। अनेन यथेतमनेवं चेति प्रतिज्ञावाक्यं व्याख्यातम्। यद्यपि 'यथा' इत्यादि छन्दोगा अपि पठन्ति। तथाऽपि 'धूमात्' इत्यादेस्तैरपाठाच्छाखान्तरवाक्यमुदाहृतम्। तदर्थस्तु—धूमदेवतालोकादभ्रदेवलोकं गच्छति, अभ्रादाकाशं, आकाशाच्चन्द्रलोकं गच्छति। 'यथा' येन पथा आकाशं प्रति 'इतं' गतं तथा तेनैव पथा तावत्पर्यन्तं गतिप्रकारेणैव अगच्छतीत्यर्थः। आकाशलोकानन्तरमागमने प्रदेशविशेषेऽन्यथात्वमाह— आकाशाद्वायुमिति। वायुर्भूत्वेत्यादेः कर्मणः तत्स्वाभाव्यापत्तिरेवार्थो, न तु तदैक्यम, तत्पदप्राप्तिर्वा। धूमादिस्वाभाव्यापत्तिर्नाम धूमादिदेवतास्वभावसदृशस्वभाववस्त्वप्राप्तिः। सादृश्यं च तद्देहप्रवेशेन तद्गतौ गतिः तत्स्थितौ स्थितिरित्येवंरूपम्। अभ्रमेघयोः अवान्तरभेदात् तद्देवलोकयोरपि भेदोक्तिः। प्रवर्षतीति। प्रवर्षणान्तर्गतो भवतीत्यर्थः ॥ ९ ॥

॥ इति यथेताधिकरणम् ॥

१०. अधिकरणम् ॥

( १ ) सू—ॐ ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ॐ ॥ १० ॥

'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्' ( छा. ५-१०-७. ) इति श्रुतेश्चरणफलमेव गमनागमनं न यज्ञादिकृतः ।

१०. अधिकरणम् ॥

( १ ) अत्राधिकरणे गतागतस्य कर्मफलत्वं समर्थ्यते । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे—चरणादिति ॥ श्रुतेरित्यनेन चरणादित्यस्य चरणश्रुतेरित्यर्थ उक्तः । यद्यपि छन्दोगा आपद्येरन्निति पठन्ति । तथाऽपि तदंशेऽर्थतोऽनुवादः शाखान्तरपाठो वेत्यदोषः । 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति छन्दोगवाक्यम् । प्रमेयान्तरारम्भेऽथशब्दः । 'तत्' तत्र कर्मिषु मध्ये ये 'रमणीयचरणाः' सदाचारपूर्वकसाधुयज्ञादिमन्तस्ते 'इह' भूमौ संसारे 'रमणीयां' साधु 'योनिं' जन्म 'आपद्येरन्' आपद्यन्ते । आपद्यन्त इति यत् तच्च 'अभ्याशः' समीपं कालसामीप्येन, न तु विलम्बेन 'ह' प्रसिद्धमित्यर्थः । तत्त्वप्रदीपे तु—'अभ्याशोहयत' यथा योन्यापत्तौ कालतः सन्निकर्षो भवति तथा योनिमापद्यन्त इत्युक्तम् । अत्र तत्त्वप्रदीपटीकापक्षयोः यदित्यस्य यथाशब्दार्थत्वानुवादकत्वाभ्यां अभ्याश इत्यस्य प्रथमातृतीयाविभक्त्यर्थत्वाभ्यां आपद्यन्त इत्यस्यावृत्त्यनुवृत्तिभ्यां च भेद इति ध्येयम् । रमणीयामित्युक्तं विवृणोति—ब्राह्मणयोनिमित्यादिना । 'कपूयचरणाः' असाधुयज्ञादिमन्तः । अन्यत्समम् । 'चरणफलं' आचारफलमित्यर्थः । गमनं चागमनं च तत्तथेति द्वन्द्वैकवद्भावः । एवकारव्यावर्त्यार्थं दर्शयति—नेति । न यज्ञादिकर्मण इत्यर्थः । यद्वा—यागादिकर्तुः फलं नेत्यर्थः । इति ज्ञायत इति शेषः । न च श्रुतौ चरणस्य गमनागमनसाधकता न प्रतीयत इति वाच्यम् । रमणीयस्वर्गादिगतेरपि तत्तत्कर्मफलत्वेनात्राभिप्रेतत्वात् । चरणफलमित्यादिना सूत्रे चरणादित्यस्यावृत्तिः सूचिता । तथा च तत्र गतागतं चरणादेव

( २ ) आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः।
अशुद्धिदस्त्वनाचारः चरणं तूभयं मतम् ॥
इति स्मृतेरिति चेन्न, यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ॥ १० ॥

भवतीत्यनेन पूर्वपक्षप्रतिज्ञा सूचिता ॥

( २ ) ननु यज्ञादिकर्मण एव श्रुतिस्थचरणशब्दोक्तत्वात् कथं इति श्रुतेश्चरणफलं गतागतं, न यज्ञादिफलमित्युक्तिरित्यत आह—आचार इति ॥ यः कर्माङ्गत्वेन प्रोक्तः स आचारः स क्रियाद्रव्यतत्कर्तृशुद्धिदः। अनाचारस्त्वशुद्धिदः। आचारानाचाराख्यं तदुभयमपि चरणशब्दवाच्यं मतमित्यर्थः। इति स्मृतेरित्यस्य इति श्रुतेश्चरणफलमेवेति सहेतुकप्रतिज्ञयोक्तं युक्तमित्यध्याहारेणान्वयः। सिद्धान्तांशं व्याचष्टे—नेति। गतागतस्य कर्मफलत्वाभावो नेत्यर्थः। किन्तु यज्ञादिकर्मफलमेव गतागतमिति वाक्यशेषः। कुत इत्यतस्तत्र 'नान्यः पन्था अयनाय विद्यते' (तै.आ.३-१३.) इति श्रुत्या गतागतशून्यफलस्य कर्मसाध्यत्वनिषेधात्तत्फलस्य च परिशेषाद्गतागतवत्फलत्वप्राप्तेः 'इष्टा पूर्तम्' (मु.१-२-१०.) इत्यादिवचनाच्चेति हेतुं बहिरेवाभिप्रेत्य तर्हि 'रमणीय' इति श्रुतिविरोध इत्यतस्तदुत्तरत्वेन श्रुतिगतिप्रदर्शकतया तदित्यादिकं योजयति—यज्ञादीति। तच्छब्दार्थोक्तिरियम्। आदिपदात्पूर्तादिग्रहणम्। चरणादिश्रुतिरिति। चरणादिपदघटितश्रुतिरित्यर्थः। आदिपदात् 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा.५-१०-३.) इति श्रुतिर्गृह्यते। श्रुतिरित्यनन्तरमतो न विरोध इति शेषः। तथा च यतश्चरणादिश्रुतिः 'तदुपलक्षणार्था' तस्य यज्ञादेरुपलक्षणं ज्ञापनमर्थः प्रयोजनं यस्याः सा तथोक्ता। अजहल्लक्षणया यज्ञादिकर्मप्रतिपादिकाऽतो गतागतस्य यज्ञादिफलत्वेन न चरणश्रुतिविरोध इति योजना। यद्यपि विष्णुतत्त्वनिर्णयटीकायां-इष्टं यजनं पूर्तमन्नदानादिकं 'अन्येषामपि दृश्यते' इति दीर्घ इति व्याख्यातम्। तथाऽपि 'अथ य इमे' इति श्रुतौ दत्तमिति पृथक् श्रवणात्पूर्तं तटाकादीति व्याख्येयम्। इतिशब्द आद्यर्थे। तथा च ये स्वस्वग्रामे इष्टापूर्ते दत्तं दानं एवमादि कर्म 'उपासते' अनुतिष्ठन्तीति सिद्धान्तरीत्या श्रुत्यर्थः। इतीति सूत्रपदानुवादः। एवमित्यर्थः। कार्ष्णाजिनिरिति कश्चिदाचार्यः, मन्यत इति शेषोक्तिः ॥

(३) सू—ॐ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ॐ ॥ ११॥
तर्हि रमणीयाः कपूया इत्येव स्यात्। चरणशब्दस्यानर्थक्यमिति चेत्—
(४) न, चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ॥ ११ ॥

---

(३) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे-आनर्थक्यमिति ॥ तर्हीत्युक्ते यदीति लभ्यते। यज्ञादीत्यादिकमत्रापि सम्बध्यते। तथा च यदि 'रमणीयचरणाः' (छा.५-१०-७.) इत्यादिश्रुतिर्यज्ञाद्युपलक्षणार्था, तर्हि श्रुतौ चरणशब्दस्य 'आनर्थक्यं' तत्प्रयोगवैयर्थ्यम्, किन्तु रमणीयाः कपूया इत्येव प्रयोज्यं स्यात् न तु चरणशब्दोऽपीत्यर्थः। यज्ञादिकारिणां पूर्वं प्रकृतत्वेन ये यज्ञादिकारिणो रमणीयाः कपूयाश्चेति रमणीयकपूयपदाभ्यामेव यज्ञाद्युपलक्षणसम्भवात् 'चरणशब्दानर्थक्यं' तच्च न युक्तमिति भावः॥
(४) परिहारांशं व्याचष्टे—नेति॥ वैयर्थ्यप्रसङ्गादुपलक्षकत्वमेव नास्तीति पक्षो नेत्यर्थः। तथा सति 'इष्टापूर्तं मन्यमानाः' (मु.१-२-१०.) 'त्रैविद्याः' इत्यागमविरोधः स्यादिति भावः। यद्वा-उपलक्षणत्वमङ्गीकृत्य पदान्तरेणाप्युपलक्षणसम्भवाच्चरणपदेनैवोपलक्षणे किं प्रयोजनं, न किमपीति पक्षो नेत्यर्थः। कुतो नेत्यतश्चरणपदसार्थक्योपपादकतया तदपेक्षत्वादित्येतद्योजयति—चरणापेक्षत्वादिति। 'रमणीयत्वादेः' साध्वसाधुयज्ञादिमत्त्वस्य चरणापेक्षत्वात् स्नानाचमनाद्याचारापेक्षत्वादित्यर्थः। ततः किमित्यत आह—तदिति। तदित्यावर्तते। सार्थक्येत्युपस्कार्यम्। एवं सूत्रेऽपि। तस्य रमणीयत्वादेर्ज्ञापनमर्थः प्रयोजनं यस्य तस्य भावस्तत्त्वं तेनेति विग्रहः। इत्थंभूतलक्षणे तृतीया। तथा च रमणीयचरणत्वेन ये साधवो यज्ञादिकृतः 'ते रमणीया' इति श्रुतियोजनायां तेषां यज्ञादिकारिणामपि रमणीयकपूयाचाराभ्यामेतद्रमणीयत्वादि इति ज्ञापनार्थत्वेन तस्य चरणशब्दस्य सार्थक्योपपत्तेरिति योजना। अनेन — यदि चरणादिश्रुतिर्यज्ञाद्युपलक्षणार्था, तर्हि चरणशब्दस्यानर्थक्यं, रमणीयकपूयपदाभ्यामेव केवलाभ्यां यज्ञाद्युपलक्षणसम्भवादिति चेन्न, कुतः? 'तदपेक्षत्वात' तस्य यज्ञादेस्तस्य रमणीयत्वादेस्तदपेक्षत्वात्साध्वसाध्वाचारापेक्षत्वात्। ततश्च तेषां यज्ञादिकृतां रमणीयकपूयाचाराभ्यामेव रमणीयत्वादि नान्यत

( ५ ) सू—ॐ ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ॐ ॥ १२ ॥
'धर्मं चरत माऽधर्मम्' इत्यादिप्रयोगात्सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते। तुशब्दात् स्व सिद्धान्तोऽपि स एवेति सूचयति।
तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे ॥

इति ज्ञापनाय तस्य चरणशब्दस्य सार्थक्योपपत्तेरिति सूत्रार्थ उक्तो भवति ॥

( ५ ) प्रकारान्तरेण चरणश्रुतिं व्याकुर्वत्सूत्रं पठित्वा व्याचष्टे— सुकृतेति ॥ इत्यादिप्रयोगादिति । कुरुतेत्यर्थे चरतेति प्रयोगादित्यर्थः। 'सुकृतदुष्कृते' साध्वसाध्वाचाराङ्गविशिष्टे एव यज्ञादिकर्मणी इत्यर्थः। न तु सदसदाचाराङ्गमात्रमित्येवशब्दार्थः। 'चरणशब्दोक्ते' एव श्रुतिस्थचरणशब्दवाच्ये एवेत्यर्थः। ('चरणशब्दोक्ते' एतच्छ्रुतिस्थचरणशब्दवाच्ये अपीत्यर्थः। न केवलमुपलक्ष्ये इत्यपि पदार्थः। भाष्ये अपिपदाध्याहारेण सूत्रगततुशब्दो व्याख्यातः।) चरणशब्दोक्ते इत्यनेन सूत्रे चरणे इति विपरिणतपदानुवृत्तिः सूचिता। एवकारस्योभयत्रान्वयश्च। न चाङ्गविशिष्टकर्मण एव चरणशब्दवाच्यत्वे केवलाचारे तत्प्रयोगानुपपत्तिरिति वाच्यम्। अन्यत्राङ्गमात्रवाचित्वस्याप्यभ्युपगमात्। अतएव टीकायां साधारणश्रुतेश्च अत्रबाधकवशात्साङ्गकर्मार्थत्वस्यैवोपपत्तेरित्युक्तम्। 'नान्यः पन्थाः' (तै.आ.३-१३.) 'इष्टापूर्तम्'(मु.१-२-१०.)इत्यादिबाधकवशादित्यर्थः। न च शक्यानेकत्वं स्यादिति वाच्यम्। इष्टापत्तेः। अतएव तत्त्वप्रदीपे–चरणशब्दस्यानुष्ठानमात्रेऽपि प्रवृत्तिमत्त्वात्सदाचारादेः सुकृतादावन्तर्भावाच्चेत्युक्तम्। सुकृतशब्दार्थेऽन्तर्भावादित्यर्थः। टीकायामपि साधारणश्रुतेश्चेत्युक्तम्। (एतेनैवकारस्य भिन्नक्रमत्वमुपेत्य सुकृतदुष्कृते चरणपदोक्ते एव न तु लक्ष्ये इति भाष्यव्याख्यानं निरस्तम्। न चरणश्रुतिः यज्ञाद्युपलक्षत्वेनैवोक्ताविरोधिनी, किंनाम यज्ञादिकर्मवाचिनी चेति टीकाविरोधात, तत्त्वप्रदीपविरोधाच्च।) 'बादरिः' शुकाचार्यः। मन्यत इति शेषोक्तिः। परमतमभिधाय सूत्रकारः स्वमतं कुतो न वक्तीत्यत आह—तुशब्दादिति। 'स्वः' सूत्रकृत्। न केवलमन्यसिद्धान्त इत्यपेरर्थः। 'स एव' बादरिसिद्धान्त एव। न त्वन्य इत्येवार्थः। 'सूचयति' सूत्रकृत्। (अनेन तुशब्दार्थस्यापेः बादरिरपीत्यन्वयो दर्शितः। यद्वा—)नि

इति नाममहोदधौ ॥ १२ ॥

—:*:—

११. अधिकरणम् ॥

( १ ) पुण्यकृतामेव गमनागमने नेतरेषामिति ।

( २ ) अत आह—

सू—ॐ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ ॐ ॥ १३ ॥

'तद्य इह शुभाकृतो ये चाशुभकृतस्तेऽशुभमनुभूया वर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति' इति भाल्लवेयश्रुतौ ॥ १३ ॥

---

दिष्टसिद्धान्तस्य स्वसिद्धान्तस्य चैवयं तुशब्दार्थ इति भावः । तुशब्दस्यैतदभिधायकत्वं कुत इत्यत आह—तुशब्द इति । 'नाममहोदधौ' ग्रन्थे । उक्तमिति शेषः ॥ १० ॥

॥ इति चरणाधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽनिष्टाधिकारिणामपि गतागतादिदुःखमस्तीति समर्थ्यते । पूर्वपक्षयति—पुण्येति ॥ इष्टादिपुण्यकर्मकृतामेवेत्यर्थः । स्वप्रयुक्तैवशब्दव्यावर्त्यं दर्शयति—नेति । 'इतरेषां' पापकर्मकारिणामपि नेत्यर्थः । अनात्मविदामिति शेषः । तथा च अनिष्टादिकारिणामज्ञानां गतागतयोरभावात्तेषां तच्छून्यो मोक्ष एवेति पुण्यतत्फलयोरेव विरक्तया भाव्यं, नान्यत्रानिष्टादावपीति भावः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य तदुपात्तश्रुतिमेवोदाहरति—अत इति ॥ श्रुतावित्यस्य सूत्रेणान्वयः । गमनागमने इत्यनुषज्यते । अनेन सूत्रे यथेत्यत इतमनितं चेति पदद्वयानुवृत्तिस्सूचिता । पुण्यकृतामित्यनेनापिशब्दार्थस्सूचितः । सूत्रे संयमनसूत्रोक्तदुःखान्तरसमुच्चायकश्चशब्दः । तथा च 'इतं' गमनं 'अनितं' आगमनं च न केवलमिष्टादिकारिणां, किं नाम? 'अनिष्टादिकारिणामपि' यागाद्यकारिणां तद्विरुद्धपापकर्मकारिणां चास्ति । न केवलमनिष्टादिकारिणां गतागतमात्रम्, किं नाम ? संयमनाख्यं प्रबलदुःखान्तरं चास्ति । कुतो? यतः 'तद्य इह' इति श्रुतौ तथा श्रुतं अत इति योजना । 'इह' भूमौ 'ये शुभाकृतो' यागादिपुण्यकर्माकारिणः ये च 'अशुभकृतः' इष्टादिविरुद्धपापादिकारिणः ते लोकान्तरं गतास्तत्र 'अशुभं' पापफलमनुभूय

(३) सू—ॐ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ॐ ॥ १४ ॥

संयमनमनुभूय केषां चिदारोहः केषां चिदवरोहः। तुशब्दोऽवधारणे। 'सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदव मन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रप

पुनः आवर्तन्ते। भुवमागच्छन्ति, आगत्य च पुनः तत्र कर्म कुर्वन्ति, पुनः परलोकं गच्छन्ति, पुनर्भुवमागच्छन्तीत्यर्थः। 'शुभकृतः' इति पाठे 'ये चाशुभकृतः' इत्यस्य द्वेधाऽर्थः। 'तेशुभम्' इत्यत्रापि द्वेधा पदच्छेदः॥

(३) न केवलमनिष्टादिकारिणां गतागतमात्रम्, किं नाम? अति दुःखं पूर्वसूत्रे चशब्देन सूचितमन्यदस्तीत्यर्थप्रतिपादकं सूत्रमुपन्य स्य व्याचष्टे—संयमने त्विति ॥ अत्र संयमन इत्यावर्तते। तत्रैकमधि करणसप्तम्यन्तं नरकवाचि, अपरं कर्मवाचि सप्तम्यन्तमित्याशयेन सं यमनमिति व्याख्यातम्। सम्यग्यमनं नियमनं शासनं संयमनं यमस्ये ति शेषः। अत एव तत्त्वप्रदीपे—'यम उपरमे' इति धातोः पापोपर मणं संयमनमित्युक्तम्। तत्र यमशासनमेव पापोपरमशब्दार्थ इति। तच्चेदं चार्थत एकरूपमेव। अनुभूयेति। यमशासननिमित्तदुःखमनुभू यैवेत्यर्थः। संयमन इति तात्पर्यम्। अत एव तत्त्वप्रदीपे—संयमने न रक इत्युक्तम्। केषां चिदित्यनेन 'इतरेषां' इष्टादिकारिभ्योऽन्येषाम निष्टादिकारिणां मध्ये केषां चिदिति व्याख्यातम्। 'आरोहो' नरका दुत्थानं 'अवरोहः' ततोऽतिनीचस्थाने नित्यनरके पातो भवतीति शे षः। न च तमसः पृथिव्यां लोकालोकगिरेः परस्तात्सत्त्वेन पृथिवीस मानदेशत्वात् संयमनस्य च पातालस्थत्वेन चतुरशीतिसहस्रयोजना धस्तनत्वात्कथमूर्ध्वगते तमस्यवरोहोक्तिरिति वाच्यम्। तमसः अति गम्भीरत्वेन पातालस्थितबिलद्वारागतानां क्रमेण पातालगतनरकादपि नीचस्थाने तमस अधोभागे पातसम्भवेन विरोधाभावात्। यथा भग वद्द्वेषादियुतानामेव नित्यनरकपातलक्षणोऽवरोहः, अन्येषां ततो व्युत्थानलक्षण आरोह इति व्यवस्थितविकल्पः तथा संयमनेऽप्यस्ती ति शङ्कानिरासकत्वेन तुशब्दं व्याचष्टे—तुशब्द इति। स चानुभूयेत्य नेन सङ्गमनीय इति हृदयम्। श्रुतेरित्यनेन तद्गतीति हेत्वंशः तेषां तद्ग

तन्ति नैवेत उत्तिष्ठन्तेऽपि कर्हिचित वव्रं वा एतदित्या
हुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनु
भूयेमं लोकमनुव्रजन्ति' इति कौण्ठरव्यश्रुतेः ॥ १४ ॥

तेः एवंविधगतेः श्रुतिसिद्धत्वादित्येवं तच्छब्दावृत्त्या व्याख्यातो भवति। श्रुतौ अशुभकृत इत्यस्य शुभकर्माकारिणस्तद्विरुद्धाशुभकर्मकारिणश्चेत्यर्थः। एतेन सर्व इत्यनेनाज्ञमात्रस्य नरकपातो न तत्र नियम इति सूचितम्। संयमने प्रपतन्तीत्यनेन सौत्रसप्तम्यर्थो दर्शितः। तत्र तेषु मध्य इत्यनेनेतरेषामिति व्याख्यातम्। 'परद्विषः' हरिद्विषः विष्णुद्वेषो नाम तत्र प्रतीपबुद्धिः। सा च 'जीवाभेदो निर्गुणत्वम्' इत्याद्यागमादनेकविधा द्रष्टव्या। 'श्रुतिद्विषः' वेदद्वेषिणः तदप्रामाण्यवादिनः तदनभिमतवक्तारश्च। 'तदवमन्तारो' हरिगुरुश्रुत्यवमन्तारः। विष्णाववमतिर्नाम अवमत्वेन नीचतया विज्ञानमिति न्यायदीपिकाटीकयोरुक्तिः।

ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता॥
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने॥

इति गीतातात्पर्यवचनानुसारेण विष्णावन्यसाम्यादिदृष्टिर्वा। 'शठाः' गूढद्वेषिणः 'मूर्खाः' तत्त्वज्ञानशून्याः विपरीतज्ञानिनश्च। इतीत्यस्य इति ये प्रसिद्धा इत्यन्वयः। 'ते' अज्ञाः 'ततः' संयमनीपुरात् अवरुह्येत्यनन्तरं ततोऽपि नीचस्थाने इति शेषः। 'इतः' तमसः 'कर्हिचिदपि' कदाचिदपि नोत्तिष्ठन्ते एवेत्यन्वयः। नैवेत इत्यनेन यत्तमसः पुनरावृत्तिराहित्यमुक्तम्, तत्कुत इत्यत आह—वव्रमिति। स्वस्थितान् वारयति गन्तुं न विमुञ्चतीति वव्रम्। न्यायदीपिकायां तु स्वगतानां गमनं वारयतीति टीकोक्तमुक्त्वा सदा आवृणोतीति वा वरमानन्दं वारयतीति वा वव्रमित्यर्थान्तरं चोक्तम्। वैशब्दोऽवधारणार्थः। 'एतत्' तमः 'आहुः' 'वव्राननन्तान्' (                ) इत्यागमाः। अथेत्यर्थान्तरारम्भे। 'अन्ये' परद्विडादिभ्यः षड्भ्योऽन्ये 'ब्रह्मद्विषो' ब्राह्मणद्वेषिणः 'स्तेनाः' चोराः 'सुरापाः' मद्यपायिन इति ये वै प्रसिद्धाः 'ते' सर्वे 'तत्' संयमनदुःखमनुभूयैव 'अनु' अनन्तरं तत उपरि आरुह्य 'इमं' भूलोकं व्रजन्तीत्यर्थः॥

(४) सू—ॐ ॥ स्मरन्ति च ॥ ॐ ॥ १५ ॥

गच्छन्ति पापिनस्सर्वे नरकं नात्र संशयः ।
तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ॥
महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।
इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा ॥ इत्यादि ॥ १५ ॥

(४) उक्तार्थे स्मृत्या समर्थयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—स्मरन्ति चेति ॥ सूत्रे दर्शनपदोक्तश्रुतिस्मरणयोः समुच्चये चशब्दः । इत्यादि स्मरन्तीत्यन्वयः । स्मृतिकर्तार एवंभूतां स्मृतिं कुर्वन्तीत्यर्थः । इत्यादीत्यनेन सूत्रगतबहुवचनकृत्यमुक्तं भवति । आदिपदेन

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ (Bhag. Gita XVI, 19)

इत्यस्याः—

सर्वदेववरत्वेन यो न जानाति केशवम् ।
तस्य पुण्यानि मोघानि याति चान्धंतमो ध्रुवम् ॥

इत्यादेश्च सङ्ग्रहः । यत इत्यादि स्मरन्ति, अतोऽप्युक्तं युक्तमिति सूत्रार्थः । स्मृत्यर्थस्तु—सर्वेऽपि पापिनो नरकं गच्छन्ति । तत्र संयमनं चानुभवन्ति नात्र संशयः । 'तत्र' पापिषु ये जनार्दनं द्विषन्ति । उपलक्षणमेतत् । पूर्वश्रुत्युदाहृतं सर्वं ग्राह्यम् । ते नरके किञ्चित्कालं दुःखं भुक्त्वा ततोऽवरुह्य महातमसि पतन्त्येव । तत्र मग्नानां तेषां च क्वचिदपि 'नैवोत्थितिः' नारोहोऽस्ति वज्राभिधत्वादिति भावः । द्वेषिभ्य इतरेषां 'पापानां' पापवतां तु 'व्युत्थानं' पापस्थानादारोहः फलतो निवृत्तिश्च कदाचिद्विद्यते । नैवं तमसि मग्नानाम् । अपि च-'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्' इति सर्वत्रानित्यनरके नियमोऽस्ति । रौरवादिभ्यः पञ्चभ्योऽपि कष्टे पञ्चेन्द्रियाणि प्रति कष्टे दुस्सहशब्दादिपञ्चकयुक्तत्वात्पञ्चकष्टे इति वा एतादृशे नित्यनरके तु 'तत्' दुःखं सदाऽस्तीति ॥ ११ ॥

॥ इति अनिष्टाधिकरणम् ॥

१२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अपि सप्त ॥ ॐ ॥ १६ ॥

रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि च ॥
तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।
एतानि क्रमशो गत्वैवारोहोऽथावरोहणम् ॥

१२. अधिकरणम् ॥

( १ ) अत्र भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वं समर्थ्यते । नरकभोगोऽनित्य एवेति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—अपीति ॥ अत्र 'नैवेत उत्तिष्ठन्ते' (कौण्ठरव्य.) इति श्रुतेर्नरकभोगो भवत्येव नित्य इति सहेतुकसिद्धान्तप्रतिज्ञां बहिरेवाभिप्रेत्य तर्हि 'यावदिन्द्राश्चतुर्दश' 'यावदाभूतसंप्लव' इति वचनविरोध इत्याशङ्कापरिहाराय प्रवृत्तं सूत्रं स्मृत्युदाहरणेन व्याचष्टे-रौरव इति । भारते इत्यस्यापिपदेनानुकृष्टेन स्मरन्तीत्यनेनान्वयः । तथा च यतः स्मृतिकर्तारः संयमनानि सप्तापि नरकान् तेषु नित्यानित्यविभागं च स्मरन्ति । अतो न नरकसप्तत्वे तदवान्तरविभागे च प्रमाणाभावो न वा नरकानित्यत्वोक्तिविरोधस्तस्यानित्यविषयत्वादिति सूत्रार्थः । तत्त्वप्रदीपे तु—यद्यपि बहुकोटयो नरकाः, तथाऽपि सप्त प्रधानानीत्यपिशब्दार्थः । दर्शयति च आचार्यः 'इति सप्त प्रधानानि' इति सौत्रापिशब्दस्यार्थान्तरप्रतिपादनपरेति सप्तप्रधानानीति भाष्यानुसारेणापिपदं बहुनरकाभिधायकपुराणविरोधपरिहाराय यद्यपितथाऽपीत्यर्थकतया व्याख्यातम् । एतदपि टीकाकृदनुमतमेव । सप्तप्रधानानीत्यनेन पुराणविरोधोऽपि परिहृत इत्युक्तेः । अनेन भाष्ये भारतोदाहरणमुपलक्षणम् । अत एवापिपदात् स्मरन्तीति बहुस्मृतिसूचकबहुवचनान्तपदमाकृष्टम् । स्मृतावथेत्यर्थान्तरे । तदेवाह—महानिति । महारौरव इत्यर्थः । चः समुच्चये । तथैवेत्यन्वयः । उपमार्थस्तथाशब्दः । तुरेवार्थः । ननु 'तत्र हैके नरकानेकविंशतिं गणयन्ति अष्टाविंशतिनरका एवंविधा नरका यमालये सन्ति शतशः सहस्रशः' इत्यादिना भागवतादौ नरकबाहुल्योक्तेस्तद्विरोधोऽस्येत्यत आह—इति सप्त प्रधानानि नरकाणीति । एतेषूत्तरोत्तरं पूर्वपूर्वनिर्दिष्टापेक्षया 'बलीयो' दुःखाधिक्ययुक्तम् । 'क्रमशः'

इति भारते ॥ १६ ॥

——:*:——

१३. अधिकरणम् ॥

/ (१) ईश्वरस्य नरकायुक्तेः 'सर्वं विसृजति सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः' इति कौषारवश्रुतिविरोध इति ।

(२) अतो वक्ति—

सू—ॐ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ ॐ ॥ १७ ॥

चशब्दाददुःखानुभवेन ।

---

पापाधिक्यक्रमात् निर्दिष्टक्रमानुसारेण च । अधिकारिभेदज्ञापनायारोहावरोहयोर्मध्येऽस्थेत्युक्तिः ॥ १२ ॥

॥ इति अपिसप्ताधिकरणम् ॥

——:*:*:——

१३. अधिकरणम् ॥

(१) अत्राधिकरणे नरकस्य सदुःखत्वं समर्थ्यते । पूर्वपक्षमाह—ईश्वरस्येति ॥ हेतुगर्भमेतत् । न तत्र दुःखमिति शेषः । तथा च यदि नरके दुःखमङ्गीक्रियते तदा तत्र नारकिजनप्रेरकतया ईश्वरोप्यङ्गीकार्यः । तथा च तस्य जीववद्दुःखमप्यङ्गीकार्यम्, तच्चायुक्तम् । ईश्वरत्वविरोधात् अतो न तत्र दुःखमस्तीत्यङ्गीकार्यमिति भावः । ननु नरके प्रेरकतया ईश्वरसत्त्वं नोपेयते, अतो नोक्तदोष इत्यत आह—सर्वमिति । सर्वमित्यतः प्रागन्यथेत्युपस्कार्यम् । ईश्वरस्य प्रेरकतया नरके सत्त्वानभ्युपगम इति तदर्थः । ईश्वरः सर्वं जगत् 'विसृजति' विविधाकारेण सृजति 'विलापयति' नाशयति यो जनो रमणयोग्यस्तं सर्वं रमयति यस्तदयोग्यस्तं न रमयतीत्यर्थः । 'अस्मिन्' सर्वस्मिन् अन्तर्निविष्टो रमयति । प्रवृत्तिकृदित्यनेन प्रेरकत्वमुक्तं भवति ॥

(२) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ नरकस्य सदुःखत्वमुपेत्य तत्र प्रवर्तकतया ईश्वरसत्त्वाभ्युपगमे दुःखप्राप्तेः ईश्वरत्वव्याकोप इति यो विरोध उक्तः तत्परिहारः कुतो न सूत्रित इत्यत आह—चशब्दादिति । अदुःखेति । नीचोच्चतापर्यवसितदुःखानुभवाभावेनेत्यर्थः । इति समुच्चिनोतीति शेषः । सूत्रे तदिति व्यस्तं समस्तं च । तथा च न केवलं स्वर्गादौ, किन्तु 'तत्रापि' नरकेऽपि अदुःखा

(३) 'स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रवृत्तिकृ देक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात्सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेद' इति पौत्रायणश्रुतेरविरोधः ।

(४) नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ॥

नुभवेन 'तद्व्यापारात्' तस्येश्वरस्य प्रेरणाख्यव्यापाराभ्युपगमात् श्रुतियुक्तिविरोधाभाव इति सूत्रार्थः ॥

(३) भवेदयमुभयविरोधाभावो यद्यस्यार्थस्य प्रामाणिकत्वं स्यात्, तदेव कुत इत्यत आह—स इति ॥ इति श्रुतेरित्यस्य न सन्निहितेनाविरोधपदेनान्वयः, किं त्वदुःखेन । तद्व्यापारादित्यस्य नासिद्धिरित्युपस्कृतसाध्येन, अस्य चाविरोध इत्यनेनान्वयः । अविरोधः नरके दुःखमङ्गीकृत्य ईश्वरस्य नारकिप्रेरकत्वपक्षोक्तदोषो नेत्यर्थः । प्रेरकत्वमङ्गीकृत्य तत्र दुःखाननुभवेन तत्रोक्तदोषपरिहारादिति भावः । 'सः' ईश्वरः स्वर्गादावनुविष्टस्सन् एक एव स्वतः प्रवृत्तिकृदित्यर्थः । ननु स्वर्गनरकादौ जीवेन सहावस्थानात्तद्वदीश्वरस्यापि तत्तद्गतसुखदुःखभोगः स्यादित्यत आह—नेति । 'असौ' ईश्वरः । नेत्यत्र हेतुः—प्रभुत्वादिति । तथा त्वे असार्वज्ञ्यं स्यात् यतो दुःखाभोगो दुःखाननुभव इत्यत उक्तम्—सर्वं पश्यतीति । तत्र हेतुः—सर्वं कारयतीति । कैमुत्यन्यायेनेश्वरस्य दुःखाभोगमाह—नेति । य एवं वेदासावधिकार्यपि न दुःखभुक्, किमीश्वर इत्यर्थः ॥

(४) सर्वं पश्यतीत्युक्तार्थे स्मृतिं चाह—नरकेऽपीति ॥ तर्हि सर्वज्ञस्य कथं दुःखाभोगः, अनुभवस्यैव भोगत्वादित्यत आह—नीचेति ।

अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोति भगवान् महत् ॥

इति बृहद्भाष्योक्तदिशा तूलपिण्डस्येव स्वरूपसङ्कोचविकासावेव दुःखादेर्भोग इत्युच्यते, न तत्साक्षात्कारमात्रमित्यर्थः । न च

तद्गतानां तु भोगानां भोगोऽभिमतिरुच्यते ।
तदभावान्नाभिमानी भगवान् पुरुषोत्तमः ॥

इति गीतातात्पर्यवचनविरोधः । तथा भोगोऽनुभवः स्वीयतया साक्षा

नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः ॥
इति भागवततन्त्रे ॥ १७ ॥

१४. अधिकरणम् ॥

( १ ) 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्रमिश्राण्य सकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येत त्तृतीयं स्थानम्' ( छा. ५ - १० - ८. ) इति गतिस्वात

त्कार इति गीताभाष्यप्रमेयदीपविरोधः । अत्रोभयत्राभिमानरूपसम्ब न्धेन स्वीयतया सुखादिसाक्षात्कारो भोग इत्युक्तत्वादिति वाच्यम् । अस्य लक्षणान्तरपरत्वात्, एवकारेण च केवलसाक्षात्कारव्यावर्तना त् । एवं जीवस्वरूपभूतसाक्ष्यनुभवप्रयोज्यत्वात् तयोरीश्वरे वाऽभा वान्नासौ दुःखभुगिति । ततः किमित्यत आह—नेति । 'असौ' ईश्व रः 'पश्यति' दुःखादिकं सर्वं, तथा च दुःखादिसाक्षात्कारमात्रस्य भोगत्वाभावान्नीचोच्चतयोरेव भोगत्वात्तयोश्च दुःखादिविषयकजीव स्वरूपभूतसाक्ष्यनुभवप्रयोज्यत्वादीश्वरे तदभावे तयोरप्यभावात् स र्वज्ञत्वेऽपीश्वरस्य न दुःखभोग इति भावः । जीवसहभूतस्यापीश्वर स्य दुःखादिसाक्षात्कार एव, न तु भोग इत्यत्र हेतुमाह—प्रभुत्वत इति । भागवततन्त्र इत्यस्य सर्वं पश्यतीत्याद्युक्तमित्यध्याहृतेना न्वयः ॥ १३ ॥

॥ इति तत्राप्यधिकरणम् ॥

१४. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवानां गतिस्वातन्त्र्यं निराक्रियते । पूर्वप क्षयति—अथेति ॥ इतीत्यनन्तरं छन्दोगश्रुताविति शेषः । गतिः मार्ग रूपं फलम् । तत्र स्वातन्त्र्यमित्यर्थः । 'भूतानां' जीवानां 'प्रतीयते' प्रतिपाद्यते यत इति शेषः । अस्य अतोऽस्त्येव भूतानां गतिस्वातन्त्र्य मित्यनुवृत्तसाध्येनान्वयः । श्रुतौ गच्छन्तीति शेषः । तथा च 'अथ' यदि 'एतयोः पथोः' 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्यु पासते तेऽर्चिषमभिसम्भवन्ति . . . . अथ य इमे ग्राम इष्टापूर्ते दत्तमि त्युपासते ते धूममभिसम्भवन्ति' ( छा. ५-१०-३. ) इति पूर्ववाक्ये प्र कृतयोर्ज्ञानिकर्मिप्राप्ययोरर्चिरादिधूमादिमार्गयोर्मध्ये सिद्धान्तरीत्या

न्यर्थं भूतानां प्रतीयत इति ।

( २ ) अत आह—

सू—ॐ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ॐ ॥ १८ ॥

विद्याकर्मापेक्ष्यैतद्वचनम् । तयोरपि प्रकृतत्वात् ।

( ३ ) विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।

---

ज्ञानकर्मणोर्मध्य इति वा यानि 'कतरेण च' कतरेणापि पथा न गच्छन्ति, तदा तानीमानि 'क्षुद्रमिश्राणि' क्षुद्राण्यल्पानि सुखदुःखाभ्यां मिश्राणि च 'असकृदावृत्तीनि' सदा गत्यादिमन्ति भवन्ति । 'जायस्व म्रियस्व' क्रियासमभिव्याहारे लोट्, पौनःपुन्यं भृशार्थो वा क्रियासमभिव्याहारः, लोटः स्वप्रत्ययः । तथा च पुनःपुनः जायन्ते म्रियन्ते चेत्यर्थः । 'इत्येतत्' इत्येवंरूपं स्वर्गापवर्गयोरन्यत्तृतीयं स्थानं प्राणिनामावासस्थलमित्यर्थः । केचित्तु—'नैकतरेण च गच्छन्ति चेत्' इति श्रुतिपाठमाहुः । तच्छन्दोगसम्प्रदायपाठविरुद्धम् । न गच्छन्ति चेदिति प्रयोगो युज्यत इति टीका तु अथशब्दस्य चेदर्थकत्वं गच्छन्तीत्यध्याहारं चाभिप्रेत्य । अत एव छान्दोग्यव्यासतीर्थीये गच्छन्तीति शेष इत्युक्तमिति ध्येयम् ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ विद्येति सावधारणम् । ज्ञानकर्माख्यार्थमपेक्ष्यैवेत्यर्थः । 'एतद्वचनं' एतयोरिति पदम् । यत इति शेषः । कुतोऽयमस्यार्थ इत्यत आह—तयोरिति । न केवलमर्चिर्धूमादिमार्गयोरित्यपिशब्दार्थः । अनेन सूत्रे विद्येत्यस्यावृत्तिः । इतिशब्दो वचनविशेषद्योतकः । तुशब्द एवार्थोऽप्यर्थश्च । कर्मणि च षष्ठी । साध्ये चाध्याहार्यम् । तथा च यतः देवयानपितृयाणरूपफलयोरिव विद्याकर्माख्यसाधनयोरपि 'तद्य इत्थं विदुः' (छा. ५-१०-१.) इति पूर्ववाक्ये प्रकृतत्वादेतयोरिति पदं 'विद्याकर्मणोः स्यात' तत्परामर्शकमेव भवेत्, न तु मार्गरूपफलपरामर्शकम् । अतो न तद्बलाद्भूतानां गतिस्वातन्त्र्यं मन्तव्यमिति सूत्रार्थ उक्तो भवति ॥

( ३ ) नन्वेतयोरित्यस्य मार्गतत्साधनरूपार्थद्वये सम्भवति सति किं साधनमात्रार्थग्रहणे कारणमित्यतः श्रुतिसमाख्यैवेति भावेन विद्याकर्मपदसूचितां स्मृतिमाह—विद्येति ॥ 'विद्यापथो' विद्यामार्गः । 'कर्मपथः' कर्ममार्गः । तदुभयात्मकं साधनमिति यावत् । 'प्रकीर्तितौ' एतयोरितिशब्दबोध्याविति यावत् । यद्वा—'आत्मा वा अरे द्र

तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः ॥ इति ॥ १८ ॥

१५. अधिकरणम् ॥

( १ ) यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते।
अपि नीचगतौ किञ्चित्किमु मानुषदेहिनः ॥
इति वचनान्महातमस्यपि सुखप्राप्तिरिति ।

---

ष्टव्यः' (बृ.४-४-५.) 'तद्विजिज्ञासस्व' (तै.३-१.) 'ज्योतिष्टोमेन यजेत' ( आप.श्रौ.१०-२-१. ) इत्यादौ विहिताविल्यर्थः । विद्यापथः कर्मपथ इत्यकारान्तौ शब्दौ। 'तद्वर्जितः' तदुभयवर्जितो जनः 'त्रिधा' प्रकारत्रयेण 'याति' प्रकारत्रयोपेतं फलं प्राप्नोतीत्यर्थः। तानेव प्रकारानाह–तिर्यगिति । भावनिर्देशोऽयम् । जायस्व म्रियस्वेत्युक्तगतिरित्यर्थः । उक्तं हि तत्त्वप्रदीपे—तिर्यङ्नरकं तम इति । तत्र प्रथमं स्पष्टमुक्तम्—जायस्व म्रियस्वेति । इतरे चोक्ते 'संयमने' इत्यादिनेति । अनेन नरकार्थतया यातनापदमपि व्याख्यातम् । वाशब्द उभयत्र सम्बध्यते । भारते इत्यनन्तरं वचनादिति शेषः । अस्य विद्याकर्मापेक्षयेति पूर्वेणान्वयः । केचित्तु—सूत्रे इतिशब्दः सौत्रपदार्थोक्तिपरः । अर्थशब्दश्चाध्याहार्यः । तथा चैतयोरित्यस्य 'विद्याकर्मणोरिति' तु विद्याकर्मणोरेवार्थः, न तु मार्गयोरित्यपीति सूत्रार्थमाहुः ॥ १४ ॥

॥ इति विद्याधिकरणम् ॥

---

१५. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽन्धतमसस्य दुःखमात्रत्वं समर्थ्यते। पूर्वपक्षयति—यत्रेति ॥ इति वचनादिति । इत्येतद्वचनगृहीतव्याप्तिकदुःखयुक्तत्वहेतोरित्यर्थः । तथा च परसुखदुःखयोरप्रत्यक्षत्वाद्व्याप्तिग्रहणायोग इति चोद्यानवकाशः। अत्र यस्मिन् यस्मिन् दुःखं तत्र सर्वत्रापि सुखमस्ति न तु क्वचिदिति नियतसहचारप्रतीतेरिति भावः । सर्वत्रेत्युक्तमुपपादयति-अपीति । विशेषणसमुच्चयार्थोऽपिः । तथा च यदा दुःखाकरत्वेन प्रसिद्धायामपि 'नीचगतौ' नरके किञ्चित्सुखमस्ति तदा मानुषदेहिनो गतौ सुखमस्तीति किमु वक्तव्यमित्यर्थः । तथा च न कुत्रापि व्यभिचार इति भावः । महातमस्यपीति । त्रिविधाधोगतिषु मध्ये न केवलं मानुषादौ नरके च, किन्तु महादुः

( २ ) अत आह—

सू—न तृतीये तथोपलब्धेः ॥ ॐ ॥ १९ ॥

'अथाविद्वानकर्माऽवाग्गच्छति। त्रिधा ह वावाग्गति स्तिर्यग्यातना तम इति। द्वे वाव सुखानुवृत्ते न तम स्सुखानुवृत्तं केवलं ह्यवात्र दुःखं भवति' ( ) इति श्रुतेर्न तृतीयावाग्गतौ सुखम् ॥ १९ ॥

( ३ ) सू—ॐ ॥ स्मर्यतेऽपि च लोके ॥ ॐ ॥ २० ॥

तिर्यक्षु नरके चैव सुखलेशो विधीयते।
नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन ॥

---

खत्वेन प्रसिद्धे तमस्यपीत्यर्थः। प्राप्तिरिति । अस्ति तमोयोग्यस्येति शेषः। अनेनान्धं तमोऽपि सुखयुक्तमेवेति पूर्वपक्षसाध्यं दर्शितम् । सुखप्राप्तिरपीत्यन्वये सति दुःखयुक्तत्वादिति हेतुरपि दर्शितः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ अर्थान्तरारम्भे ऽथशब्दः। 'अविद्वान्' मुक्तिहेतुज्ञानरहितः 'अकर्मा' स्वर्गाद्या पादककर्मरहितो दुष्टकर्मा सात्त्विकतामसो राजसतामसश्च 'अ वाक्' अधोगतिं 'गच्छति' प्राप्नोति। तां विभजते-त्रिधेति। 'त्रिधा ह वाऽवाग्गच्छति' इति श्रुतिपाठः। हेति प्रसिद्धौ। वावेत्यवधारणे। तत्त्वप्रदीपोक्तरीत्या समाने लोप इति एकवकारलोपः। अवाग्गच्छती ति यत्तत्त्रिधैवेत्यर्थः। त्रैविध्यमेव दर्शयति—तिर्यगिति। तिर्यक्त्वमित्य र्थः। साच नानायोनिप्राप्तिरूपा 'जायस्व म्रियस्व' इत्युक्ता तृतीया ग तिः। 'यातना' नरको दुर्नरत्वं वा। यथोक्तं गीतातात्पर्ये—'दुर्नर त्वं च तिर्यक्त्वं तमश्चेति फलं क्रमात्' इति। इति त्रिधैवेत्यन्वयः । तासां लक्षणमाह—द्वे इति। 'अनुवृत्ते' युक्ते । न तमः सुखयुक्तमि त्यत्र हेतुमाह—'हि' यतः 'केवलं' अत्यन्तं 'अत्र' तमसि दुःखं 'भवति' प्राप्यते। इति श्रुतेरित्यनेन तथोपलब्धेरिति हेतुर्व्याख्यातः। न तृतीयेति। 'तिर्यग्वा नरकं तमः' इत्युक्ताधोगतिषु 'तृतीये' तम सि न सुखमस्तीत्यर्थः। अनेन सुखमस्तीत्यध्याहृतसाध्यभागो व्या ख्यातः ॥

( ३ ) एतमेवार्थं स्मृत्यनुमानाभ्यां च साधयत्सूत्रमुपन्यस्य तां स्मृतिमुदाहरति—स्मर्यते इति ॥ तिर्यक्ष्विति। 'क्षुद्रमिश्राणि' इत्यु क्ततृतीयगतावित्यर्थः। 'विधीयते' अस्तीत्युच्यते आगमेषु। 'मग्ना

इति भविष्यत्पर्वणि ।

( ४ ) लोकसिद्धं चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।

( ५ ) अतिप्रिये यथा राजा न दुःखं सहते क्वचित् ।
अत्यप्रिये सुखमपि तथैव परमेश्वरः ॥
इति हि ब्राह्मे ॥ २० ॥

( ६ ) सू—ॐ ॥ दर्शनाच्च ॥ ॐ ॥ २१ ॥

---

स्तां' स्थितानां 'कश्चन' किंनिमित्तोऽपीत्यर्थः । किमु यथेष्टमित्यपेर र्थः । भविष्यत्पर्वणीत्यस्य स्मर्यत इत्यनेनान्वयः ॥

( ४ ) लोक इत्येतदनुमानसूचकतया व्याख्याति—लोकसिद्धमिति ॥ 'एतत्' अन्धे तमसि सुखराहित्यं लौकिकदृष्टान्तयुक्तानुमानसिद्धं चेत्यर्थः। न केवलं स्मृतिसिद्धमिति चार्थः। चेत्यनेन अपिः व्याख्यातः । अनुमानप्राबल्यहेतुस्मृतिसिद्धत्वसूचकतया चशब्दं व्याख्याति—चशब्दादिति । न केवलं तमसः सुखराहित्यं श्रुतिसिद्धं, किन्तु 'लोकसिद्धिः' लौकिकदृष्टान्तवदनुमानेन तमसः सुखराहित्यसिद्धिरपि 'स्मार्ता' स्मृतिसिद्धेति चशब्दात् सूत्रकारः 'आह' सूचयतीत्यर्थः । तथा च लोकसिद्धत्वं च स्मर्यत इति चशब्दान्वय इति भावः॥

( ५ ) काऽसौ स्मृतिरित्यत आह—अतीति ॥ राजा यथा अतिप्रिये पुरुषे क्वचित्कालेऽपि दुःखं न सहते, किन्तु सुखमेव । यथा चात्यप्रिये सुखं न सहते, किन्तु दुःखमेव, तथा परमेश्वरोऽपीत्यर्थः । अनेन विप्रतिपन्नास्तामसाः न सुखित्वेन ईश्वरेष्टाः अप्रियत्वादिति सूत्रकृदभिप्रेतानुमाने पादद्वयेन राजप्रिये व्यतिरेकव्याप्तिः तृतीयेन तु राजविप्रियेऽन्वयव्याप्तिश्च दर्शिता भवति । अथ वा—पूर्वं सदसज्जनानां प्रकृतत्वात्तेषां प्रकृतिः स्वरूपमत्रोच्यते । न चासङ्गतिः । प्रियत्वाप्रियत्वाभ्यां सदसज्जनेषु दुःखसुखासहने साध्ये अनुमानद्वयेऽप्यन्वयव्याप्तेः दृष्टान्तप्रदर्शनार्थत्वेन सङ्गतत्वात् । यद्यपि नानेनानुमानेन तमसः सुखराहित्यसिद्धिः। तथाऽप्यनेन सिद्धेन सुखित्वेनेश्वरानिष्टत्वेन हेतुना तामसानां सुखराहित्यसिद्धौ तमसस्तद्रहितत्वमपि सिद्ध्यतीति तात्पर्यम् । इति हीति । हिशब्दो यत इत्यर्थे । तथा च ब्राह्मे पुराणवचने यत इत्युक्तं अतः चशब्दादित्युक्तं युक्तमित्यन्वयः ॥

( ६ ) प्रत्यक्षेणाप्येतमर्थं साधयत्सूत्रमुपन्यस्य व्याचष्टे—दर्शनाच्चेति ॥ दर्शनवचनादित्यनेन दर्शनादित्येतद्दर्शनवचनादिति व्या

नारायणप्रसादेन समिद्धज्ञानचक्षुषा ।
अत्यन्तदुःखसंलीनान्निश्शेषसुखवर्जितान् ॥
नित्यमेव तथाभूतान्विमिश्रांश्च गणान् बहून् ।
निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः ॥
अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुखः ।

ख्यातम् । अनेन हेत्वसिद्धिः परिहृता । पाद्मे दर्शनप्रतिपादकवचनादित्यन्वयः । चशब्दस्तु न वचनान्वितः, किन्तु दर्शनान्वितः । तस्य तमसः सुखराहित्ये साध्ये हिरण्यगर्भकर्तृकप्रत्यक्षाख्यहेतुसमुच्चयार्थत्वात् । सम्यगिद्धं दीप्तं समिद्धं, समृद्धमिति पाठे सम्यगभिवृद्धमित्यर्थः । समिद्धं च तत् ज्ञानचक्षुश्चेति विग्रहः । चक्षुर्दृष्टिः । तथा च चतुर्मुखो नारायणप्रसादेन समृद्धज्ञानचक्षुषा 'साक्षात्' परमुखमन्तरेण स्वयमेव त्रिविधान् जीवानपश्यदित्यन्वयः । तानेव प्रकारिणो दर्शयति—अत्यन्तेति । 'संलीनान्' मग्नान् । अनेन पादद्वयेन तमोयोग्याः सङ्गृहीताः । नित्यमेवेति पादद्वयेन नित्यसंसारिणः । 'तथाभूतान्' मिश्रभूतान्। निरस्तेति पादद्वयेन मोक्षयोग्याः । जीवानिति शेषः । चौ परस्परसमुच्चये । अत्र तत्त्वप्रदीपे—'अपश्यत्त्रिविधान्ब्रह्म' इत्युक्तम् । त्रैविध्यं त्रिष्वपि तेषु नित्यदुःखिषु विमिश्रेषु नित्यसुखिषु च अवान्तरभेदादवगन्तव्यम् । 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम्' इति हि वक्ष्यति दुःखतारतम्येन भेदं तदायतनानाम् । विमिश्रभेदस्तु अल्पसुखसममिश्राल्पदुःखभेदान्नारकिणो मानुषाः स्वर्गिण इति । मनुष्योत्तमा ऋषिगन्धर्वा देवा इति मुक्तेषु नित्यसुखिषु च सुखतारतम्याद्भेद उक्तः । एतेषु नित्यमेव तथाभूतत्वं च समानम् । विमिश्रेषु नित्यमतथाभाविनश्च सन्ति । स्वरूपस्थितमध्यम एव नित्यं तथा भावात्सर्वेषां च जीवानां आस्वरूपावस्थानाद्विमिश्रत्वमेवेत्यनेकशो विमिश्राः । अत एव तदाह—विमिश्रांश्च गणान्बहूनिति । तच्च विमिश्रत्वमनन्तविधमिति सूचयति—विमिश्रानिति, इत्युक्तम् । अनेन त्रिविधानित्यस्य प्रत्येकं त्रिविधानित्यर्थः सूचितः । 'तदायतनानां' नित्यदुःखस्थानानामित्यर्थः । विमिश्रभेदस्तु नारकिणो मानुषाः स्वर्गिण इत्युक्त इत्यन्वयः । कथम्? अल्पसुखादिभेदात् । अल्पसुखमिश्राः सुखदुःखसाम्येन मिश्राः अल्पदुःखमिश्राश्चेति भेदादित्यर्थः ।

इति दर्शनवचनाच्च पाद्मे ॥ २१ ॥

( ७ ) सू—ॐ ॥ तृतीये शब्दावरोधः संशोकजस्य ॥ ॐ ॥ २२ ॥

तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशो

'नारकिणो' नरकप्रचुराः 'मानुषाः' भूप्रचुराः 'स्वर्गिणः' स्वर्गप्रचुराः । भेदः उक्त इति । 'तत्र मन्दा मनुष्येषु' इत्यादिप्रमाणेपूक्त इत्यर्थः । 'एतेषु' त्रिषु तमोयोग्यादिषु नित्यमेव 'तथाभूतत्वं' स्वस्वरूपावस्थितत्वम् । समानमित्यनेन नित्यमेव तथाभूतानित्येतत्त्रिविधानामपि विशेषणमिति सूचितम् । विमिश्रेषु नित्यमतथाभाविनश्च सन्तीत्यनेन मुक्तियोग्यादीनां त्रयाणामपि विमिश्रत्वं सूचितम् । परं तु मुक्तियोग्यतमोयोग्ययोः 'आस्वरूपावस्थानात्' स्वरूपाविर्भावपर्यन्तमेव, न तु ततः परमपि विमिश्रत्वम् । 'स्वरूपस्थितमध्यमे' नित्यसंसारिण्येव नित्यं मिश्रभाव इति ते नित्यमेव तथाभूताः । अनेकश इति । मुक्तियोग्यतमोयोग्यनित्यसंसारिभेदेन अनेकरूपा इत्यर्थः । अनन्तविधमिति । प्रतिजीवं सुखवैचित्र्येणानन्तविधत्वमित्यर्थः । अत्र केचित्—सर्वेषां च जीवानामास्वरूपावस्थानाद्विमिश्रत्वमिति तत्त्वप्रदीपोक्तेः नित्यसंसारिणामपि मुक्तिरस्तीत्याहुः । तन्न, मुक्तिपर्यन्तं त्रितयनिष्ठं, ततः परं विमिश्रत्वं नित्यसंसारिमात्रनिष्ठमिति तद्वाक्यार्थाभ्युपगमात् । अन्यथा 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्' इति तद्ग्रन्थकारोक्तिविरोधापत्तेः ॥

( ७ ) अर्थापत्त्याऽप्येतमर्थं समर्थयत्सूत्रं पठित्वा व्याचष्टे—तृतीय इति ॥ अत्र तृतीयपदेन नाधोगतिषु तृतीयं विवक्षितम्, तस्य 'न तृतीये' इति प्रथमसूत्र एवोक्तत्वात् अत्र पुनस्तृतीयग्रहणवैयर्थ्यात् । किन्तु तमसस्तृतीयं ग्राह्यमित्याशयेन तृतीयपदमनूद्य विवृणोति—तृतीय इति । तमस्स्वित्यादावुपस्कार्यम् । कर्मणि षष्ठीयम् । तृतीये विषयसप्तमीं मत्वाऽऽह—तमस इति । 'श्रवणात्' प्रतिपादकशब्दश्रवणादिति सावधारणमेतत् । श्रवणादेव, किम्वनुभवादिनेति कैमुत्यद्योतक एवकारः । अनेन सूत्रे शब्दपदं श्रवणोपलक्षकम् । विषयसप्तमीयम्, तृतीयातत्पुरुषः, संशोकजस्यावरोधः प्राप्तिरित्यन्वयस्सूचितः । तथा च तृतीयविषये यः शब्दस्तेनावरोधः प्राप्तिर्भवति । कस्य ? 'संशोकजस्य' सम्यक् शोकः संशोकोऽतिदुःखं तज्जन्यस्य मोहस्य मूर्छाया इति सूत्रार्थः । शब्दानुसारेणेत्यनेन शब्दश्रवणेन भव

कजमोहप्राप्तिः ॥ २२ ॥
( ८ ) सू—ॐ ॥ स्मरणाच्च ॥ ॐ ॥ २३ ॥
महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।
श्रवणादेव मूर्छादिरधरस्य यतो भवेत् ॥
तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तम । इति कौर्मे ॥ २३ ॥

—:*:—

न्तौ मोहप्राप्तिरपि न सर्वेषामेकविधा, किन्तु स्वकारणश्रवणविषयव क्तृशब्दानुसारेणेत्युक्तं भवति । तथा च तृतीयतमःस्वरूपप्रतिपादक वक्तृशब्दविस्तरानुसारात्तदानुगुण्यादित्यर्थः । विस्तरस्तु व्याख्यान सम्यग्व्याख्यानातिसम्यग्व्याख्यानादिरूपः । फलमपि सम्यग्व्याख्या नेऽतिमूर्छेत्यादिरूपम् । तदुक्तिविस्तरानुसारेण मूर्छादि समासतो व्यासतो वा भवतीति तत्त्वप्रदीपवाक्यस्य एकस्य द्वयोर्वा प्राप्तिस्स मासः, सर्वेषां प्राप्तिर्व्यास इत्यर्थः। प्राप्तिरित्यनन्तरमतोऽपीत्यध्याहारे ण न तृतीये सुखमिति प्रधानसाध्येनान्वयः । अनेन यतस्तृतीयतम स्सु विषये तृतीये वक्तृशब्दानुसारात् संशोकजादेरवरोधः प्राप्तिर्भ वति, अतश्च न तृतीये सुखमिति चशब्दानुषङ्गेण सूत्रयोजनान्तरमु क्तं भवति ॥

( ८ ) तृतीयतमःस्वरूपश्रवणे श्रोतृणां मोहप्राप्तिरित्येतत्कुतोऽवग म्यते । यदन्यथाऽनुपपत्त्या तत्र सुखाभावावगम इत्याशङ्कां स्मृत्या प रिहरत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—स्मरणाच्चेति ॥ अत्र चश ब्दो नाक्षेपकस्यासिद्धिरिति साध्यसमुच्चायकः । तस्येति शेषः । तथा च तस्य तृतीये शब्दावरोधस्य स्मरणान्नार्थापत्तावाक्षेपकस्यासिद्धिरि ति सूत्रार्थः । स्मृतौ 'महातमः' अन्धतामिस्राख्यम् । 'अधरस्य' त मसः शब्दश्रवणेन तस्मान्निमित्ताच्छ्रोतृणां मूर्छादि भवेदित्यर्थः । आ दिशब्दाट्टीकारीत्याऽतिमूर्छादि ग्राह्यं, तत्त्वप्रदीपरीत्या तु उन्मादमर णयोर्ग्रहणम् । 'विस्तरेण' सम्यग्व्याख्यानेन 'एतत्' अन्धतमसः, विस्तारो न क्रियत इति यावत् । राजसत्तमेति कस्य चित्सम्बुद्धिः । कौर्मे स्मरणादित्यन्वयः ॥ १५ ॥

॥ इति न तृतीयाधिकरणम् ॥

—*—

१६. अधिकरणम् ॥

( १ ) 'धूमो भूत्वाऽभ्रं भवति' ( छा. ५-१०-५. ) इत्याद्यन्य भावः श्रूयते । स कथमिति ।

( २ ) अतो ब्रवीति—

सू—ॐ ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ॐ ॥ २४ ॥

धूमादिषु प्रविश्य तद्गतौ गतिस्तत्स्थितौ स्थितिरित्या

१६. अधिकरणम् ॥

( १ ) अत्राधिकरणे कर्मिणो धूमादिभावो निवार्यते । तत्र विषयं दर्शयति—धूम इति ॥ इत्यादीति लुप्तविभक्तिकम् । तथा च छन्दोग श्रुतौ काषायणश्रुतौ च 'धूमो भूत्वा' इत्यादौ धूमादिदेवताभ्योऽन्य स्य कर्मिणो धूमादिदेवताभावः श्रूयत इत्यर्थः । अनेन धूमादिदेवता भावाख्यविषयो दर्शितः । सन्देहप्रकारं दर्शयति—स इति । धूमादि भावः 'कथं' किं प्रकारः किं कर्मिणो धूमादिदेवतैक्यं ? किं वा तत्प दप्राप्तिः ? प्रकारान्तरं वेत्यर्थः ॥

( २ ) धूमादिदेवतैक्यं तत्पदप्राप्तिर्वा धूमादिभाव इति पूर्वपक्ष स्य अन्यभावः प्रतीयत इत्यनेनैव प्रदर्शितत्वात्तमप्रदर्श्य सिद्धान्तयत्सू त्रमवतार्य व्याचष्टे—अत इति ॥ धूमादिष्विति । धूमादिदेवतादेहेष्वि त्यर्थः । कर्मणि सप्तमी । 'तद्गतौ' धूमादिगतौ । स्थिताविति त्रापि त च्छब्दान्वयः । आदिशब्दाल्लघुत्वं अन्यदेहाविष्टग्रहवत्तद्देह एवाभिमा नः पृथगभिमानाभावश्च गृह्यते । 'तद्भावापत्तिः' तत्स्वभावापत्तिः । तथा च तत्स्वभावैकदेशसादृश्यनिबन्धनो गौणोऽयं निर्देश इति भा वः । यद्वा—आदिशब्देन स्थानैक्यं गृह्यते । तेन लाक्षणिकोऽयं प्रयोग इति सूचयति । एवं टीकाभिप्रेतं तदधीनत्वनिमित्तं च आदिपदार्थत या ग्राह्यम् । अत एव स्मृतौ 'ब्रह्मेदं जगदित्यपि' इति दृष्टान्तोक्तिः । अन्यथाऽसङ्गतेः । अस्मिन् पक्षे श्रौतनिर्देशो मुख्यः । अनेन सूत्रे तत्त्व प्रदीपोक्तरीत्या गजमुख इतिवत्तस्य धूमादेः स्वभावपदोक्तधर्मसदृशः स्वभावो यस्य सः तत्स्वभावः, तस्य भावः तत्स्वाभाव्यम्, तस्याप त्तिरिति विग्रहः । लाक्षणिकत्वपक्षे तस्य स्वभावस्य तद्देहस्थितत्व स्यापत्तिरिति विग्रहः । मुख्यत्वपक्षे तदधीनस्वभावस्यापत्तिरिति । पक्षद्वयेऽपि स्वार्थे ष्यञ् । तथा च 'तस्यां' 'धूमो भूत्वा' इति श्रुतौ श्रुता 'तद्भावापत्तिः' धूमादिभावप्राप्तिर्नाम तत्स्वाभाव्यापत्तिरेव, न

द्विरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते ।
न च तत्पदप्राप्तिः ।

( ३ ) गारुडे च—
धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु ।
स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ॥
न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते ।
विद्यागम्यं पदं यस्माच्च तत्प्राप्यं हि कर्मणा ॥

( ४ ) एकदेशस्वभावेन वागभेदाऽपि युज्यते ।

---

त्वैक्यम्, तत्पदप्राप्तिर्वेति प्रतिज्ञार्थ उक्तो भवति । कुतोऽर्थोऽयं श्रुतेः स्यादित्यतः प्रवृत्तमुपपत्तेरिति हेतुं व्याचष्टे—न हीति । हिशब्दो यस्मादित्यर्थे । ‘ अन्यस्य ’ कर्मिणः ‘ अन्यभावो ’ धूमादिभावः । कुतो नेत्यतोऽप्याह—न हीति । दृश्यत इति शेषः । तत्पदेति । धूमादिपदप्राप्तिरित्यर्थः । युज्यत इत्यनुषज्यते । अत्र युक्तिस्तु स्मृत्युक्तेति हृद्यम् । अनेन स्वप्रयुक्तैवकारव्यावर्त्यं दर्शितं भवति ॥

( ३ ) एवं न्यायप्राप्तेऽर्थे स्मृतिं चाह—गारुडे चेति ॥ अस्य उक्तमित्यध्याहारेण इत्यपीत्यनेनान्वयः । न केवलं न्यायलब्धमेतदिति चशब्दार्थः । किमुक्तमित्यतस्तत्पठति—धूमादीति । श्रुत्युक्तेति शेषः । चशब्दतुशब्दयोः प्राप्तिस्तु स्थितिश्चेति भिन्नक्रमेणान्वयः । अत्र प्रवेशो न गौणत्वार्थमुक्तः, किन्तु स्थानैक्यरूपपक्षान्तरोपन्यासार्थम् । अत एव स्ववाक्ये प्रविश्येत्युक्तम् । अनेन श्रौततदापत्तेः गौणत्वलाक्षणिकत्वे ज्ञापिते । आदिपदात्पृथगभिमानाभावो गृह्यते । कुत इयं श्रुतेरमुख्यार्थकल्पनेत्यतो मुख्यार्थानुपपत्तेरेवेत्याह—न ह्यन्यस्येति । व्याख्यातमेतत् । ‘ तत्पदं ’ अन्यस्य प्राप्यमिति शेषः । कर्तरि षष्ठी । ‘ इष्यते ’ अङ्गीक्रियते प्रामाणिकैः । कुतो नेत्यत आह—विद्येति । ‘हि’ यस्मात्तत्पदं विद्यया ब्रह्मदर्शनेनैव गम्यम् । ‘ तत् ’ तस्मात्तेन कर्मणा प्राप्यं नेत्यर्थः । हिशब्दोऽस्य श्रुतिप्रसिद्धतामाह । यद्वा—युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्ययोग इति न्यायसूचको हिशब्दः । ‘ कर्मणा ’ काम्यकर्मणा ॥

( ४ ) न च ‘ धूमो भूत्वा ’ इति सामानाधिकरण्यश्रुतिविरोध इत्यत आह—एकदेशेति ॥ स्वभावैकदेशसादृश्येनेत्यर्थः । ‘ अभेदा ’ न विद्यते भेदः प्रतिपाद्यो यस्यां सा अभेदा अभेदवादिनी वागित्यर्थः ।

यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि ॥ इति ॥ २४ ॥

१७. अधिकरणम् ॥

( १ ) बहुस्थानगमनात्कल्पान्तमप्येवं स्यादिति ।

यथोक्तं तत्त्वप्रदीपे—भेदरहिता वागिति । केचित्तु—अर्शआद्यजन्तोऽयं शब्द इत्याहुः । अपिर्निमित्तान्तरसमुच्चये । पूर्वपादेनान्वेति । नन्वदर्शनादयुक्तोऽयमर्थ इत्यत एकदेशसादृश्येनाभेदप्रयोगं दर्शयति—यथेति । 'तत्त्वमसि' (छा.६-८-७.) इत्यादावित्यर्थः । श्रुतियुक्त्यनुभवसम्प्रतिपत्तिबलादयं दृष्टान्त उपात्तः । यत्प्राक्सूचितं तदधीनत्वाद्प्ययं प्रयोग इति, तत्र दृष्टान्तमाह–ब्रह्मेदमिति । 'सर्वं खल्विदं ब्रह्म' (छा.३-१४-१.) इत्यादावित्यर्थः । सर्वस्य ब्रह्माधीनत्वादयं व्यपदेशः । यद्वा—तद्गुणसारत्वादित्यत्रोक्तदिशाऽयमपि दृष्टान्तः सकलजगद्गुणसदृशगुणात्मकत्वेन ब्रह्म जगदित्युच्यत इति सादृश्यनिमित्तक एव योजनीयः । अपिर्दृष्टान्तसमुच्चये ॥ १६ ॥

॥ इति तत्स्वाभाव्याधिकरणम् ॥

१७. अधिकरणम् ॥

( १ ) अत्राधिकरणे स्वर्गादवरूढस्य कर्मिणोऽचिरेण गर्भवासादिप्राप्तिः समर्थ्यते । तत्र कर्मी स्वर्गान्निर्गतश्चिरेणैव देहं प्राप्नोतीति पूर्वपक्षप्रतिज्ञाया नातिचिरेणेति सूत्रांशेन ज्ञापितत्वात्तमप्रदर्श्य तद्धेतुं दर्शयति—बहुस्थानेति ॥ गमनं प्राप्तिः । तेन च तच्छ्रवणमुपलक्ष्यते । तथा च 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' (छा. ५-१०-५.) इत्यादौ कर्मिणो बहुस्थानप्राप्तिश्रवणादित्यर्थः । बहुस्थानगमनं च नाचिरेण सम्भवति । तत्र तत्र तत्स्वाभाव्येनातिमहासुखे च सम्भवति तद्विहायागमने प्रयोजनाभावात् । अतस्तदन्यथानुपपत्त्याऽऽगतौ विलम्बोऽङ्गीकार्य इति भावः । तावता स्वर्गादागमने विलम्बः कुत इत्यत आह—कल्पान्तमिति । ब्रह्मकल्पपर्यन्तमित्यर्थः । 'एवं' तत्तद्देवतास्वाभाव्यं 'स्यात्' असकृदनुष्ठितयज्ञस्य मध्ये मार्गमिति भावः । सदेत्यनुक्त्वा कल्पान्तमित्यवध्युक्तिः कल्पावसाने देवानां पदपर्यवसानादित्यभिप्रायेण ॥

( २ ) अत आह—

सू—ॐ ॥ नातिचिरेण विशेषात् ॥ ॐ ॥ २५ ॥

'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते' ( छा. ५-१०-७. ) इति विशेषान्नाति चिरेण ।

( ३ ) स्वर्गाल्लोकादवाक्प्राप्तो वत्सरात्पूर्वमेव तु ।
मातुश्शरीरमाप्नोति पर्यटन्यत्र तत्र च ॥ इति च नारदीये ॥ २५ ॥

—*—

१८. अधिकरणम् ॥

( १ ) 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति

---

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ विशेषादिति । कालसामीप्यबोधकविशेषश्रुतेरित्यर्थः । सौत्रप्रतिज्ञामनुकरोति—नेति । कर्मी स्वर्गान्न चिरेणेमं लोकमागच्छति, किन्त्वचिरेणैव । तर्हि बहुस्थानगमनविरोध इति न वाच्यम् । यतः कल्पान्तरूपातिचिरेण गमनाभावेऽपि बहुस्थानप्राप्तिप्रयुक्तचिरगमनमस्त्येवेत्याशयेन—अतीत्याह । व्याख्यातेयं श्रुतिश्चरणनये ॥

( ३ ) ननु 'अभ्याशः' (छा.५-१०-७.) इति श्रुतिर्न निर्णायिका कल्पान्तकालस्यापि ततोऽधिककालापेक्षया समीपत्वादित्यतः श्रुत्यर्थनिर्णयाय स्मृतिमुदाहरति—स्वर्गादिति ॥ 'अवाक्' अधोदेशं प्राप्तः 'वत्सरात्' संवत्सरात्तत्समाप्तेः पूर्वमेव, न त्वधिककालमित्येवशब्दार्थः । तुशब्दः संवत्सरे मानुषत्वरूपविशेषद्योतकः । 'यत्र तत्र च' यत्र कुत्र चेत्यर्थः । अनेकस्थानेष्विति यावत् । 'पर्यटन्' सञ्चरन् । इति चेति चशब्दो नारदीये चेति सम्बध्यते । न केवलं श्रुतिवचनात्, किन्तु नारदीये पुराणे उक्तमित्यर्थः ॥ १७ ॥

॥ इति नातिचिरेणाधिकरणम् ॥

—:*:—

१८. अधिकरणम् ॥

( १ ) अत्राधिकरणे कर्मिणां व्रीह्यादिभावनिमित्तदुःखाभावः प्रतिपाद्यते । पूर्वपक्षयति—त इति ॥ इतीति । एवंरूपच्छन्दोगश्रुतेरित्यर्थः । 'अनर्थफलत्वं' दुःखफलकत्वमेव 'यज्ञादेः' अन्ततः प्राप्नोतीति

जायन्ते ' ( छा. ५-१०-६. ) इति श्रवणादनर्थफलत्वं यज्ञादेरिति ।

( २ ) अतो वक्ति —

सू — ॐ ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ॐ ॥ २६ ॥

अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः । न तु भोगोऽस्य । ' धूमो भूत्वाऽभ्रं भवति ' (छा. ५-१०-५.) इत्यादिपूर्वोक्तिवत् ।

---

शेषः । अत्र श्रुतिर्न दुःखफलकत्वे साक्षाद्धेतुः, किन्तु स्वावगतव्रीह्यादिभावकृतच्छेदनादिनिमित्तेन योनिप्रवेशप्राक्कालीनस्थावरजातिनिमित्तेन वेति द्रष्टव्यम् । तथा च सुखसाधनतया वेदोक्तस्यापि कर्मणो दुःखसाधनत्वे मोक्षसाधनत्वेनोपदिष्टवैराग्यादावपि विश्वासाभावादननुष्ठेयत्वं तस्येति भावः । ' ते ' भुक्तपुण्याः कर्मिणः स्वर्गादागच्छन्तो मेघपर्यन्तेन पथा वर्षेण सहावनितलमापन्नाः ' इह ' भूमौ केचिद्व्रीहियवाः केचिदोषधिवनस्पतयः केचित्तिलमाषाः ' जायन्ते ' अन्यजीवाधिष्ठिते व्रीह्यादिशरीरे प्रविशन्तीत्यर्थः । इतिशब्दः आद्यर्थकः श्यामाकादिधान्योपलक्षणार्थकः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ अन्येति । अन्येन व्रीह्यादिशरीराभिमानिजीवेन भोक्तृतयाऽधिष्ठितव्रीह्यादिशरीरे इत्यर्थः । सूत्रेऽपेक्षितशेषं दर्शयति—प्रवेश इति । सावधारणमेतत् । न त्वभिमानित्वमिति तदर्थः । श्रुतावुच्यते यत इति शेषः । अस्यातो मानाभावान्न कर्मिणो व्रीह्यादिभावो न वा तत्कृतदुःखमित्युपस्कृतवाक्येनान्वयः । ननु मा भूदभिमानित्वं कर्मिणः, तथाऽपि व्रीह्यादिसहावस्थानेऽपि दुःखं स्यादित्यत आह—न त्विति । 'अस्य' कर्मिणः । तुशब्दो भोगस्यानवसरप्राप्तत्वरूपविशेषद्योतकः । यदि कर्मिणो व्रीह्यादिप्रवेश एव, न तद्भावः, तर्हि कथं सामानाधिकरण्यमित्यतस्तत्परिहारत्वेन पूर्ववदित्यंशं व्याचष्टे—धूम इति । यथा तत्स्वाभाव्यापत्तिरिति पूर्वसूत्रे प्रकृता ' त इह ' इत्युक्त्यपेक्षया पूर्वा ' धूमो भूत्वा ' इत्यादिरूपोक्तिः धूमादिदेवतादेहप्रवेशेन स्थानैक्याद्यभिप्राया, तथा ' त इह व्रीहियवाः ' इति सामानाधिकरण्योक्तिरपीत्यर्थः । पूर्वोक्तिवदिति पाठे यथा धूमादिषु पूर्वोक्तेषु तद्भावोक्तया प्रवेशादिः विवक्षित इति तत्त्वप्रदीपोक्तार्थो द्रष्टव्यः ॥

( ३ ) 'सोऽवाग्गतः स्थावरान्प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात्कौषारवश्रुतौ ।

( ४ ) स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः ।
अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः ॥ इतिवाराहे ॥२६॥

( ५ ) सू—ॐ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २७ ॥
हिंसारूपत्वात्पापस्यापि सम्भवाद्दुःखं च भवत्विति

---

( ३ ) ननु कर्मिणो व्रीह्यादिशरीरप्रवेश एव, न तु तदभिमतिकृतद्भावः । प्रवेशोऽपि न भोग इत्येतत्कुतो ज्ञायते, येन श्रुतेरर्थान्तरकल्पनेत्यतः प्रवृत्तं अभिलापादित्यंशं व्याचष्टे—स इति ॥ 'सः' कर्मी स्वर्गादवाग्गतः 'स्थावरान्' व्रीह्यादिरूपान् 'प्रविश्याभोगेनैव व्रजन्' इतरजीवेन सहावस्थानेऽपि दुःखाननुभवेन वर्तमानः पितृमातृद्वारा 'स्थूलं' मानुषादिशरीरमाप्नोति । 'स्थूलाच्छरीरात्' स्थूलशरीरेण 'भोगान्' भोग्यान् सुखादीननुभवतीत्यर्थः । अभिलापो वचनम् । कौषारवश्रुतौ इत्यभिलापादित्यन्वयः । अभिलापादित्यस्य चास्याधिष्ठिते प्रवेश एवेति प्रतिज्ञयाऽन्वयः ॥

( ४ ) अत्रार्थे स्मृतिं चाह—स्वर्गादिति ॥ व्रीह्यादीति । इतरस्य देहः इतरदेहः व्रीह्यादिरूपश्चासावितरदेहश्चेति स तथोक्तः । तत्र स्थित इत्यर्थः । अभुञ्जन्निति । सहावस्थानेऽपि तद्देहकृतदुःखमननुभवन्नित्यर्थः । 'कालतः' अल्पकालेनैव 'क्रमेण' मातापितृक्रमेण 'देहं' स्थूलदेहमाप्नोतीत्यर्थः । अभुञ्जन्निति परस्मैपदमार्षम् । वाराह इत्यस्याभिलापादित्यनेनान्वयः ॥

( ५ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—अशुद्धमिति ॥ 'हिंसारूपत्वात्' तद्युक्तत्वात् । यज्ञादिकर्मण इति शेषः । पापस्येत्यतः प्राक् तत इति संयोज्यम् । न केवलं पुण्यस्येत्यपेरर्थः । दुःखं चेत्यत्रापि तत इति वर्तते । न केवलं पापमिति चशब्दार्थः । अत्रोत्तरं प्रति पूर्वो हेतुतया योज्यः । अनेन यज्ञादि कर्म 'अशुद्धं' दुःखहेतुः । कुतः ? यतः 'अशुद्धं' पापापादकम् । तत्त्वमपि कुतः ? यतः 'अशुद्धं' हिंसारूपमिति पूर्वपक्षांश आवृत्त्या व्याख्यातः । परिहारांशं व्याचष्टे—नेति । इदं चावर्तनीयम् । यज्ञादिकं न दुः

चेन्न, शब्दविहितत्वात् ।

( ६ ) हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।

वेदोक्तया हिंसया तु नैवानर्थः कथं चन ॥ इतिवाराहे॥२७॥

---*---

१९. अधिकरणम् ॥

( १ ) स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेत् ।

---

खसाधनं, कुतः ? यतो न पापसाधनमिति । कुतो नेत्यत आह--शब्दे ति । 'वायव्यं श्वेतमालभेत ' (तै.सं.२-१-१.) इत्यादिश्रुतिविहितत्वा दित्यर्थः । अनेन सूत्रे शब्दादित्यनन्तरं विहितत्वादिति शेषः कार्य इ ति सूचितम् । हिंसारूपत्वात्कथं न पापसाधनत्वमित्यतोऽप्याह—श ब्देति । तथा च अनुमानस्य निषिद्धत्वोपाधिदुष्टत्वमिति भावः ॥

( ६ ) स्मृतिविरोधं चाह—हिंसेति ॥ ' अवैदिका ' वेदाविहिता । ङीबभाव आर्षः । ठक्ठञ्भ्यामन्यो वा प्रत्यय इति प्रमेयदीपोक्तिवत् । यद्वा—वैदिकाः शब्दाः अस्यां सन्ति ज्ञापका इति 'अर्शआदिभ्योऽच्' इति अचि कृते वैदिकेति भवति । न वैदिकाऽवैदिकेत्यर्थः । अथ वा- अय गतावित्यस्मात्कर्मणि घञ् । तथा च वैदिकशब्दैराया वैदिकाया त तो नञ्समासः । अत्र च पक्षे तच्छब्दबलाद्यच्छब्दलाभः । इदं च स माधानत्रयं 'विद्वद्रूढिर्वैदिका स्यात्' इत्येतत्सुधारीत्या कृतम् । अवै दिकीति पाठः स्वरसः । 'तया' अवैदिकहिंसया 'अनर्थः' पापं दुःखं 'ध्रु वं ' निश्चितं भवेत् । तुशब्दो विशेषार्थः । ' कथं चन ' कमपि प्रकारं प्राप्तोऽल्पो वा महान् वा न भवेदिति यावत् । वाराहे उक्तमिति शे षः ॥ १८ ॥

॥ इति अन्याधिकरणम् ॥

---:*:---

१९. अधिकरणम् ॥

( १ ) अत्राधिकरणे स्वर्गादवतीर्णस्य पितृप्रवेशः समर्थ्यते । तत्र रेतस्सिक्पदसूचितं पूर्वपक्षं दर्शयति-स्वर्गादिति॥ स्वर्गादवाग्गतो भू मिं प्रत्यागतश्चेति विशेषसमुच्चये चशब्दः । न केवलं स्वर्गादागतः क र्मी किंतु नरकादपीत्यपेरर्थः । एवकारः पूर्वपक्षे अन्ययोगव्यवच्छेदकः । सिद्धान्ते ऽयोगव्यवच्छेदकः । इतीति । इति स्मृतिवचनादित्यर्थः । वचनादित्यस्य न जीवस्य पितृप्रवेशोऽस्तीति ज्ञायते इत्यध्याहृतम

इति वचनात् 'य एव गृही भवति यो वा रेतस्सिञ्च
ति तमेवानुविशति' (          ) इति श्रुतिः कथमिति ।

(२) अत आह—

---

तिञ्चयाऽन्वयः। न चास्य पितृप्रवेशश्रुतिविरोधः । वचनस्य युक्तिसाहित्येन बलवत्त्वादित्याह-य एवेति। यद्यपीयं श्रुतिः शाखान्तरस्थत्वान्नोदाहर्तुमुचिता, किन्तु 'यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद्भूय एव भवति' (छां.५-१०-६.) इति छन्दोगश्रुतिरेवोदाहार्या स्यात्, 'त इह' (छां.५-१०-६.) इत्यादिवाक्येन सह एकप्रकरणस्थत्वात् । तथाऽपि इति श्रुतिश्चेति चशब्देनास्या अपि समुच्चितत्वात्। श्रुत्यन्तरस्य स्पष्टार्थत्वाच्चोदाहरणं युक्तम् । अत एव तत्त्वप्रदीपे 'य एव गृही भवति यो वा रेतः सिञ्चति' इत्यादिश्रुतिः 'यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति' इत्यादिकया समानप्रकरणपठितया च सह कथं युज्यत इत्युक्तम् । समानप्रकरणपठितयेत्यस्य 'त इह' इत्यादिवाक्येन सहैकप्रकरणपठितयेत्यर्थः। 'यः' पुरुषो 'गृही' गृहस्थाश्रमी भवति, यो वा रेतः सिञ्चति तं पितरमेव प्रविशति जीव इति श्रुत्यर्थः । श्रुतिरिति । श्रुत्युक्ता पितृशरीरप्राप्तिरित्यर्थः । कथमित्याक्षेपे । किमर्था निष्प्रयोजनेत्यर्थः । अनेन स्मृतेः पितृप्रवेशे प्रयोजनाभावादिति युक्तियुक्तत्वेन प्राबल्यमुक्तं भवति । ननु श्रुतेर्युक्त्ययुक्तत्वेऽपि श्रुतित्वेन स्वभावतः प्रबलत्वात्साम्यमित्यतोऽप्याह-श्रुतिः कथमिति। आक्षेपोऽयम् । प्रतीतार्थे प्रमाणमिति शेषः । कुत इत्यतोऽत्रापि 'इति वचनात्' वचनविरोधादित्युक्त एव हेतुर्योज्यः । तथा च श्रुतेरर्थान्तरपरतया सावकाशत्वेन दुर्बलत्वान्न तद्विरोधः स्मृतेरिति भावः । ननु सावकाशत्वं ममासिद्धमित्यतोऽप्याह—श्रुतिः कथमिति । प्रश्नोऽयं, किमर्थेत्यर्थः । 'वचनात्' वचनविरोधादित्यत्रापि सम्बध्यते । तथा च श्रुतिर्यत उक्तवचनविरुद्धाऽतः प्रतीतार्थायोगादर्थान्तरस्यावश्यंभावात्किमर्था श्रुतिः श्रुत्यर्थः क इति सिद्धान्तिनं प्रति वादिना पृष्टे तदा तेनापि श्रुतेरर्थान्तरमेव वक्तव्यम्, न प्रतीतार्थ एवाग्रहः कार्य इति नासिद्धिरिति भावः । 'हि' यतः 'अन्नं' अद्यमत्ति अत एव यो वै रेतः सिञ्चति अतस्तद्भूय एव भवति तद्भाव एव तन्मयो वा भवति । अद्यमानान्नानुगतः कर्मी 'तमेव' रेतस्सिचमेव पुरुषं प्रविशतीति श्रुत्यर्थः ॥

(२) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ श्रुतेरित्यनेन

सू—ॐ ॥ रेतस्सिग्योगोऽथ ॥ ॐ ॥ २८ ॥

'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुते' इति कौण्ठरव्यश्रुतेः पितरमेव प्रथम तः प्रविशति। मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥ २८ ॥

——*——

२०. अधिकरणम् ॥

( १ ) देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गतः ।

पूर्वस्माच्छब्दादित्यनुवर्तनीयमिति सूचितम्। पितरं प्रविशतीत्यनेन रेतस्सिग्योग इति पदं व्याख्यातम्। सूत्रे पितृयाग इत्यनुक्त्वा रेतस्सिग्योग इत्युक्तिः शरीरपरिणामाय रेतसोऽपेक्षितत्वात्तस्य च सेचकपुरुषं विनाऽयोगात् पितुरेवानुपयोग इति चोद्यानवकाश इति ज्ञापनाय पितृप्रवेशस्त्वीशक्लृप्तत्वान्न व्यर्थ इति भावः। पितरमेवेत्यनेन रेतस्सिक्पदं सावधारणमिति सूचितम्। प्रथमत इति सूत्रे शेषोक्तिः। एवकारोऽन्यप्रवेशस्य प्राथम्यव्यवच्छेदकः। श्रुत्यर्थस्तु—स इत्यस्याकर्षणेन अन्नशब्दस्य चाध्याहारेण 'सः' व्रीह्यादिस्थो जीवः 'ततः' अयान्नेन सह पितरमेव प्रविशतीति तत्त्वप्रदीपोक्तो बोध्यः। 'अथ' पितृप्रवेशानन्तरं 'प्रसूयते' उत्पद्यते। एवं चेत् 'मातुरेवोदरं व्रजेत्' इति वचनमप्रमाणं प्राप्तमित्यत आह—अथेति। तद्व्याख्यानं—मात्रिति। अपिः मातृप्राप्तेः प्रथममभावेऽपीत्यर्थे। तथा च 'मातृप्राप्तेः' प्रथममभावेऽपि 'पश्चात्' पितृप्रवेशानन्तरं 'भाव्यत्वात्' विद्यमानत्वादित्यर्थः। अनेन सूत्रे अथेत्यनन्तरं मातृप्राप्तिरिति शेषः सूचितः। तथा च स्मृतेः पश्चात्तनविषयत्वान्नाप्रामाण्यं न वा तद्विरोधः श्रुतेः। स्मृतेः सावकाशत्वादिति भावः। स्मृतिगतैवकारस्तु व्रजेदेवेत्यन्वितोऽयोगव्यवच्छेदकः। अन्ययोगव्यवच्छेदकत्वेऽप्यास्तिकादिविशेषविषयम्। उक्तं हि तत्त्वप्रदीपे—मातुरेवाङ्गतः। अतश्चैतदाह—'स्वर्गादवागतो देही मातुरेवोदरं व्रजेत्' इतीति ॥ १९ ॥

॥ इति रेतोऽधिकरणम् ॥

——*——

२०. अधिकरणम् ॥

( १ ) अत्राधिकरणे जीवस्य पितृद्वारा योनिं प्रविश्य शरीरप्राप्तिः समर्थ्यते। पूर्वपक्षयति—देहमिति ॥ कर्मी 'रेतोरक्तसंयोगात्पश्चात्'

इति वचनोत्पश्चादेव प्रविशतीति ।

( २ ) अत आह—

सू—ॐ ॥ योनेश्शरीरम् ॥ ॐ ॥ २९ ॥

पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरमाप्नोति ।

( ३ ) 'दिवः स्वोऽनूनगच्छति स्वास्नुभ्यः पितरं पितुर्मातरं

---

मातृयोनौ पित्रा सिक्तस्य रेतसो रक्तसंयुक्तस्य देहाकारेण परिणामानन्तरमेव मातृगर्भस्थं पूर्वसिद्धं देहमन्नादिद्वारेण प्रविशतीत्यर्थः । न तु पितृशरीराद्रेतसा सह योनिद्वारा मातृशरीरं प्रविश्याथ तत्र देहं प्राप्नोतीति नियम इत्येवकारार्थः । अनेन पूर्वपक्षे योनिप्रवेशो न विद्यते, व्यर्थश्च योनिप्रवेशः, पितृप्रवेशोऽप्ययुक्तः, शरीरप्राप्तिरप्यनुपपन्नेत्यनेकप्रतिज्ञा सूचिता । सर्वत्रापि ' देहे गर्भस्थितं क्वापि' इति वचनादिति हेतुर्योज्यः । तद्वचनस्य स्वर्गाद्भूमिं गतो जीवः पितृगर्भस्थितं पितुः सकाशात्संस्पर्शद्वारेण मातुरुदरस्थगर्भस्थितं वा प्रागसिद्धशरीरं क्वापि क्वचिन्मातृस्थरेतसैव परिणतं मातृगर्भस्थितं वा प्राक्सिद्धशरीरं मात्रुपभुक्तान्नादिद्वारेण पितुर्मातुरुदरस्थगर्भस्थितं वा प्रागसिद्धशरीरं प्रविशेदिति व्याख्यानेनोक्तसाध्यचतुष्टयेऽपि हेतुबोधकता द्रष्टव्या ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ पितृशब्दो रेतस्सिक्तपरः । अनेन सौत्रो योनिशब्दो बीजपुरुषाद्युपलक्षक इति सूचितम् । पितृशरीरादिति ल्यब्लोपनिमित्ता पञ्चमी । प्रथमत इति शेषः । योनिमनुप्रविश्येत्यनेन सौत्री पञ्चमी ल्यब्लोपनिमित्तेति ज्ञापितम् । 'ततः' अनन्तरम् । अनेन सूत्रेऽथशब्दानुवृत्तिस्सूचिता । एवकारो भिन्नक्रमः । तथा च स्वर्गादवागतो जीवो वृष्टिद्वारा व्रीह्यादिबीजेषु सङ्क्रान्तो रेतस्सिक्तपुरुषस्य शरीरं प्रविश्यैव अथ ततो रेतसा सह मातृयोनिद्वारा तदुदरमनुप्रविश्य ततस्तत्रैव प्रागसिद्धं कललबुद्बुदादिक्रमेणोत्पन्नं शरीरं प्राप्नोति, न तूक्तक्रमातिक्रमेणेति सावधारणप्रतिज्ञार्थः ॥

( ३ ) यथोक्तं सुधायाम्—नैतदुक्तमप्रामाणिकत्वादिति । अतोऽत्र प्रमाणमाह—दिव इति ॥ 'दिवः' स्वर्गाद्भूमिं प्रत्यागतो जीवः ' स्वान्

मातुः शरीरं शरीरेण जायत इति सम्मितम् । अथास
म्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा
बहिर्वा ' इति पौष्यायणश्रुतेः ।

नू ' स्थावराणि व्रीह्यादिशरीराणि ' गच्छति ' प्राप्नोति । स्थास्नुभ्यः पितरं गच्छति । पितुस्सकाशाद्योनिद्वारा मातरं गच्छति । मातुस्सकाशाच्छरीरं प्रागसिद्धं गच्छति । ततश्शरीरेण युक्तो जायत इत्येवं 'सम्मितं ' विद्यातपआदिविशेषकारणमन्तरेण साधारणं जन्मोक्तमित्यर्थः । सूत्रेऽनुवृत्तस्याथशब्दस्य योनेश्शरीरमापद्यते नापद्यते च क्वचिदित्यर्थान्तरार्थत्वमभिप्रेत्य तत्र प्रमाणमाह--अथेति । अथान्यत् ' असम्मितं ' तपोज्ञानादिविशेषकारणकमुत्तममुत्तमाधिकारिभिरेव लभ्यमसाधारणं जन्मेत्यर्थः । इति सम्मितमित्यादिशेषवाक्योदाहरणेन 'देहं गर्भस्थितम् ' इत्यादिप्रागुदाहृतवचनस्य साधारणजन्मविषयत्वेन गतिरुक्ता भवति । ' स्थास्नुभ्यः' स्थावरेभ्यः । कश्चिज्जीव इति शेषः । यथा शुकादिः अरण्यादेः । ' पितुः ' जायते कश्चित्, यथा मान्धातृप्रमुखाः। 'मातुः' जायते, यथा जरत्कार्वाद्यनुग्रहादास्तिकादिः । 'अन्तरे ' स्थानान्तरे, यथा धृष्टद्युम्नादिरग्नौ । यद्वा--' अन्तरे ' मातापित्रोर्मध्ये अन्योन्यदर्शनमात्रेणेत्यर्थः । उदाहरणं तूक्तमेव । तत्वप्रदीपे तु अन्तरे द्रुपदादयः इत्युक्तम् । ' गर्भे ' पूर्वमेव सिद्धं शरीरं केचित्प्रविशन्ति यथा श्रीमध्वाचार्याद्याः । तदुक्तं मध्वविजये—' सम्पूर्णलक्षणचणम्' इत्यादिनेति कश्चिदाहुः । तच्च तत्त्वप्रदीपे तेषां बहिःप्रवेशोक्त्या विरुद्धम् । अत एव तत्त्वप्रदीपे--अत्यन्तविशिष्टविषयं बहिःप्रवेशवचनमवगम्यत इत्युक्तम् । अत्यन्तविशिष्टास्तु ऋजव एव । न च टीकायां बहिर्द्रुपदादय इत्युक्तिविरोधः । तस्याः पितृमात्रपेक्षया मातुरुदराद्बहिरित्यर्थाश्रयेण प्रवृत्तत्वात् । तत्त्वप्रदीपस्य च मातापित्रुभयबहिर्गतोभयनिरपेक्षदेहविषयत्वात् । यथोक्तं तत्त्वप्रदीपे—सञ्जाते शरीरे प्रवेष्टुर्गर्भवासप्रसूत्यादिदुःखग्रामलेशस्पर्शोद्धिनैव यथाकामं देहग्रहणसम्भवात्तस्य च जन्मभाजामतिदुर्लभत्वादतो नारायणपरायणस्य कस्य चित् तत्प्रसादसामग्रीसमुद्भूतप्रभावस्यैव तत्सुलभमुपलभामहे । स्वयं चावोचत् ' बीजपूरुषयोनीनाम् ' इत्यादि । तद्बहिर्निर्गतशरीरप्रवेशेन जननमित्यर्थः । तस्मात् ऋजुव्यतिरिक्ता एव गर्भे इत्य

( ४ ) स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् ।
पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम् ॥
देहेन जायते जन्तुरिति सामान्यतो जनिः ।
विशेषजननं चापि प्रोच्यमानं निबोध मे ॥
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।
गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च॥ इति ब्राह्मे॥२९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये तृतीयस्याध्यायस्य
प्रथमः पादः.

॥ ॐ ॥

श्चोदाहरणीयाः । अत एव टीकायां गर्भे पूर्वसिद्धशरीरं केचिदिति सामान्येनोक्तं, न त्वाचार्या इति। तस्माद्गर्भे इत्येतत् ऋजुव्यतिरिक्तजीवविषयं, बहिरित्येतत् ऋजुविषयमिति विवेको द्रष्टव्यः । श्रुतेरित्यस्य पितृशरीरादिति प्रतिज्ञयाऽन्वयः ॥

( ४ ) श्रुत्यर्थनिर्णयायात्र स्मृतिं चाह—स्थावराणीति ॥ 'जन्तुः' कर्मिजीवः 'दिवः' स्वर्गात् 'स्थावराणि' व्रीह्यादीनि प्राप्तो भवतीत्यन्वयः । एवमुत्तरत्रापि 'यथाक्रमं' उक्तक्रममनतिक्रम्य 'देहेन' तद्विशिष्टः 'सामान्यतः' साधारणम् । 'विशेषजननं' असाधारणं जन्म 'प्रोच्यमानं' प्रवक्ष्यमाणं 'मे' सकाशान्मयेति वा 'निबोध' जानीहि । 'प्रमदायां' भार्यायां जरत्कार्वादौ । स्थास्नुष्वित्यादेरुदाहरणानि तु पूर्वोक्तान्येव द्रष्टव्यानि । 'ब्राह्मे' उक्तत्वादिति शेषः । अस्यापि पितृशरीरादिति प्रतिज्ञयाऽन्वयः ॥ २० ॥

॥ इति योन्यधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिका
यां तृतीयाध्यायस्य प्रथमः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) भक्तिरस्मिन् पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ।

सू—ॐ ॥ सन्ध्ये सृष्टिराह हि ॥ ॐ ॥ १ ॥

न स्वप्नोऽपि तं विना प्रतीयते ।

१. अधिकरणम् ॥

( १ ) एतत्पादप्रतिपाद्यं दर्शयति—भक्तिरिति ॥ यद्दार्ढ्यार्थं वैराग्यं निरूपितं पूर्वपादे, या चोपासनस्याङ्गं सा भक्तिरवसरप्राप्ता 'अस्मिन्' तृतीयस्य द्वितीयपादे 'उच्यते' निरूप्यत इत्यर्थः । ननु भक्तिरुच्यत इति कोऽर्थः । किं तत्स्वरूपं निरूप्यते ? उत तत्कर्तव्यता विधीयते ? । नाद्योऽनुपलम्भात् । न द्वितीयः, स्नेहरूपायास्तस्याः पुरुषप्रयत्नायोग्यत्वेन तत्कर्तव्यताविधेरयोगादित्यत आह—भक्त्यर्थमिति । माहात्म्यज्ञानपूर्वकस्नेहो भक्तिः, तदुत्पादनार्थमित्यर्थः । तथा च भक्तिरुच्यत इत्यस्य भक्त्यैकदेशोपायज्ञानविषयमाहात्म्यमुच्यत इति वा, भक्त्यैकदेशोत्पादनार्थं माहात्म्यमुच्यत इति वाऽर्थाश्रयणान्नानुपपत्तिरिति भावः । ननु सर्वस्यापि माहात्म्यस्य प्रथमाध्याय एवोक्तत्वात्कथमत्रोक्तिरिति । सत्यम्, उक्तिरित्यस्य क्वचिद्विवेचनं क्वचित्समर्थनमित्यर्थाश्रयणात् । क्रियत इति शेषः । अत्राधिकरणे भगवत्प्राप्तिसाधनभक्त्यर्थमर्थज्ञानात्मकस्य स्वाप्नप्रपञ्चस्य भगवदधीनत्वमहिमा वर्ण्यते । मरुमरीचिकाजलादिवत्प्रातीतिकत्वेनासत्त्वान्न स्वप्नविषयस्येश्वराधीनत्वमिति न तस्य महामहिमत्वमिति प्राप्ते सिद्धान्तयत्सूत्रं पठित्वा अधिकरणतात्पर्यं तावदाह—सन्ध्य इति । स्वप्न इत्यनेन जाग्रत्सुषुप्तिसन्धौ भवं सन्ध्यं स्वप्न इति सन्ध्यशब्दो व्याख्यातः । अपीत्यनेनोत्तरसूत्राच्चशब्दस्यानुकर्षस्सूचितः । न केवलं जाग्रदादिप्रतीतिः, किन्तु स्वप्नोऽपीत्यपिशब्दार्थः । 'तं' प्रस्तुतं परमात्मानमेवेति । अनेन सूत्रे परमात्मन एवेति शेषो दर्शितः । प्रतीयत इत्यनेन सृष्टिशब्दो व्याख्यातः । यथोक्तं तत्त्वप्रदीपे—तत्प्रत्यायनस्यैव सृष्टित्वात् सृष्टिशब्दः प्रतीयत इति व्याख्यात इति । तथा च न केवलं जाग्रदादिप्रतीतिः, किंतु स्वप्नोऽपि तं विना न प्रतीयत इति योजना । अनेन न केवलं जाग्रदादिप्रतीतिः, किन्तु 'सन्ध्ये' तद्विषये 'सृष्टिः' प्रतीतिश्च स्वप्नोऽपीति यावत्, परमात्मनस्सकाशादेव भवति, 'न तं विना' तदधीनैवेति परमसाध्यं दर्शितं भवति ॥

(२) 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' (बृ.६-३-१०.) इत्यादिश्रुतेः ॥१॥

(३) सू—ॐ ॥ निर्मातारं चैके पुत्रादयश्च ॥ ॐ ॥ २ ॥
'य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' (कठ.५-८.) इति च। 'एतस्माद्ध्येव पुत्रो जायते ए

(२) ननु न स्वप्नस्य भगवदधीनत्वं युक्तं पश्चाद्दृष्टेरित्यतस्तत्परिहारत्वेन आवृत्त्या अन्वितस्य सन्ध्ये सृष्टिर्हीत्यंशस्य 'हि' यतः सन्ध्ये प्रागसतां पदार्थानां परमात्मनः सृष्टिर्निरोधश्चाङ्गीक्रियते, अतो नोक्तदोष इत्यर्थमभिप्रेत्यास्याप्रामाणिकत्वशङ्कापरिहारकतया प्रवृत्तं सृष्टिमाह हीति सूत्रांशं व्याचष्टे—नेति ॥ श्रुतेरित्यनेन हिशब्दो वचनकर्तुः शब्दस्य हेतुत्वसूचकतया व्याख्यातः। तस्यावृत्तिरपि सूचिता। आदिशब्देन 'न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान्मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि सर्वस्य कर्ता' (बृ.६-३-१०.) इति समग्रवाक्यं निरोधवाक्यं च गृह्यते। बृहदारण्यकश्रुतिरियम्। 'तत्र' स्वप्नावस्थायां अन्तरिक्षे स्वर्गे मोक्षे वा 'रथा न भवन्ति' पूर्वं नासन्। रथैर्युज्यन्त इति रथयोगा अश्वादयश्च पुरा नासन्। तथा 'पन्थानो' मार्गाश्च न प्रागासन्। किन्तु तदैव स आत्मा तत्तत्कर्मानुसारेण रथान् रथयोगान् पथश्च सृजते। तथा आनन्दमुत्प्रमुदः सुखविशेषा न प्राक्स्थिताः, तांश्च सृजते। वेश्यायै दीयमानं वेशं तत्सम्बन्धिनी वेश्याऽपि वेशेत्युच्यते। तस्या अन्ताः प्रवेश्या गृहाः 'अन्तस्स्थानं स्थलं वासः' इति वचनात्। 'पुष्करिण्यः' सरांसि 'स्रवन्त्यो' नद्यस्ताश्च सृजते। न केवलं स्वाप्नादीनामेव कर्ता स परमात्मा, किन्तु सर्वस्य जगतोऽपि हीति श्रुत्यर्थः ॥

(३) ननु कर्तुरभावान्न स्वप्नकालीनसृष्टिर्युक्ता। न हि जीवस्तत्कर्ता। सुप्तत्वात्तस्य। नापीश्वरः। तत्प्रमाणाभावात्। न च पक्षद्वयेऽपि सृष्टिरुपपन्ना। तत्काल एवोत्पत्तिविनाशकर्तुरदर्शनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुतीरुदाहरति—निर्मातारमिति ॥ इति चेत्यस्य इत्येके शाखिनः ईश्वरं निर्मातारं सन्ध्यकर्तारं आहुरिति सौत्रपदेनान्वयः। चशब्दः आह हीत्युक्तप्रमाणसमुच्चयार्थः। यत इत्यर्थे वा। अतो नेश्वरस्य स्वप्नकर्तृत्वे प्रमाणाभाव इति वाक्यशेषः। 'यः' पुरुषः पूर्णषड्गुणः पुरि शयो वा 'एषु' जीवेषु सुप्तेषु सत्सु, तदा 'कामं' स्वे

तस्माद्धातैतस्माद्धार्या यदेनं पुरुषमेष स्वप्नेनाभिह
न्ति ' इति गौपवनश्रुतिश्च ॥ २ ॥

(४) केन साधनेन?

सू—ॐ ॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ॐ॥ ३॥

च्छानुसारेण 'काम' काम्यं स्वाप्नरथादीन् निर्मिमाणो जागर्ति, तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते (कठ. ५-८.) 'शुक्रं' शोकरहितं 'ब्रह्म' पूर्णं 'अमृतं' नित्यमुक्तमित्युच्यते इति कठश्रुत्यर्थः। गौपवनश्रुतिश्चे त्यनन्तरं ईश्वरं सन्ध्यकर्तारमाहेति शेषः। अनेन निर्मेयभूताः स्वाप्नपु त्रादयो हरेरेव जायन्ते इति 'एके शाखिनो' गौपवनाः स्पष्टं 'एतस्मा त्' इत्यादिना आहुरित्यध्याहारावृत्तिभ्यां पुत्रादयश्चेत्यस्यान्वय उ क्तः। यदा 'एनं पुरुषं' जीवं 'एषः' परमात्मा 'स्वप्नेनाभिहन्ति' सं योजयति तदा स्वप्नावस्थायां एतस्माद्धरेरेव पुत्रादयश्च स्वाप्ना जाय न्ते। हि प्रसिद्धमिति श्रुत्यर्थः ॥

(४) उपादाननिमित्तयोरभावात्स्वाप्नसृष्टिरनुपपन्नेत्याक्षिपति—केनेति ॥ सन्ध्ये सृष्टिरित्यनुवर्तते। तथा च साधनाभावान्न सन्ध्ये सृ ष्टिर्युक्तेत्यर्थः। एतदाक्षेपपरिहाराय सूत्रमुपन्यस्य व्याचष्टे—मायेति। अनादीति। अनादिभूतं यन्मनस्त्रिगुणात्मकं तद्गतान् तदुपादानकान् 'संस्कारान्' पूर्वानुभूतवस्तुविषयकान् वासनाख्यसंस्कारान् उपा दानीकृत्य 'स्वेच्छामात्रेण' निमित्तभूतया स्वेच्छयैव, न तु परापेक्ष या मनसा 'प्रदर्शयति' सन्ध्यमीश्वरो जीवायेति योजना। स्वाप्नशि रश्छेदादीनामसत्त्वपरिहाराय अनादिमनोग्रहणम्। तेषामपि इह ज न्मनि जन्मान्तरे वा कदाचिदनुभवसम्भवेन तज्जन्यसंस्कारस्यापि अ नादिमनसि स्थितिसम्भवादिति भावः। संस्कारानित्यनेन जैवप्रज्ञाप रतया मायाशब्दार्थो व्याख्यातः।

त्रिगुणात्मिकाऽथ ज्ञानं च विष्णुशक्तिस्तथैव च।
मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभिः ॥

इति वचनात्। स्वेच्छयेति मायाशब्दस्यार्थान्तरोक्तिः।

महामायेत्यविद्येति नियतिर्मोहिनीति च।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥

इति वचनात्। अनेन मायाभ्यां निर्मितं मायामात्रमिति विग्रहस्सूचि तः। मनसा प्रदर्शयतीत्यनेन यथा घटादीनां मृदादिभिः सृष्टिश्चक्षुरा दिभिः प्रदर्शनं नात्र तथा, किन्तु मनसैव तदुभयमिति सूचितम्। प्रे

अनादिमनोगतान् संस्कारान् स्वेच्छामात्रेण प्रदर्श
यति। नान्येन साधनेन। सम्यगनभिव्यक्तत्वात्।

(५) ब्रह्माण्डे च—
मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः।
प्रदर्शयति जीवाय स स्वप्न इति गीयते॥
यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता।
अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्॥ इति॥ ३॥

---

त्यनेन सन्ध्यस्येश्वरकर्तृकत्वेनाबाधितप्रमाविषयत्वात्सत्यत्वमेवेति सू चितम्। कुतोऽस्य वासनामयत्वं, बाह्यकारणकत्वं किं न स्यादित्या शङ्कोत्तरत्वेन प्रवृत्तं तुशब्दमवधारणार्थमभिप्रेत्य तस्य बुद्ध्या विविक्त मायाशब्दार्थेनान्वयं प्रदर्श्य तद्व्यावर्त्यं च दर्शयति—नेति। आन्तर वासनादन्येन 'साधनेन' मृदादिरूपबाह्यकारणेन न प्रदर्शयति न त दुपादानीकृत्य सन्ध्यं सृजतीत्यर्थः। कुतो नेत्यतस्तत्र हेतुत्वेन का त्स्न्र्येनेत्यंशं योजयति—सम्यगिति। जागरितार्थवत्स्वाप्नानां सम्यग भिव्यक्तिरहितस्वरूपत्वादित्यर्थः। अनेन सन्ध्यं 'मायामात्रं तु' मा याभ्यामेव निर्मितं, न बाह्यकारणकम्। कुतः 'कात्स्न्र्येन' सम्यगनभि व्यक्तस्वरूपत्वात्। यत एवमतो नोपादानाद्यभावेन सन्ध्यस्य सृष्ट्य भावः शङ्क्य इति सूत्रयोजना दर्शिता भवति॥

(५) सूत्रार्थे स्मृतिसम्मतिं च दर्शयति—ब्रह्माण्डे चेति॥ अव धारणार्थस्तुशब्दः स्वेच्छयेत्यनेन सम्बध्यते। तेन बाह्यसाधनव्यावृ त्तिः। 'संस्कारान्' तदुपादानकार्थान् तानुपादानीकृत्य स्वनिर्मितं स न्ध्यमिति शेषो वा। स इति। यत्प्रदर्शनं यत्प्रयोज्यज्ञानमर्थश्च स इ त्यर्थः। ननु स्वप्नोत्थितस्याविद्यमानानेव करितुरगादीनहमपश्यमि त्यनुभवात् कथमुत्पत्तिस्स्वाप्नस्योच्यत इत्यत आह—यदिति। 'तत्र' स्वाप्नपदार्थेषु 'यज्जाग्रत्त्वं' अहं जाग्रत् जाग्रदिदमिति प्रतीतं यज्जाग्र त्त्व जागरानुभूतपदार्थैरेकत्वं घटादीनां मृदाद्युपादानकत्वं जलाहरणा द्यर्थक्रियाकारित्वं चेत्यादि तस्य यतोऽन्यथात्वं बाध्यत्वं 'तदन्यथा त्वं' अन्यथा बाध्यमिति केचित्। अतस्तत्प्रतीतिरेव भ्रान्तिर्न स्वप्नप्र तीतिः। न च जाग्रत्त्वप्रतीतेः भ्रान्तित्वे मानाभाव इत्यतो विषयान्यथा त्वमेव तत्र मानम्, न पृथङ्मानं गवेषणीयमित्याह—सा च त

(६) सू—ॐ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ॐ ॥ ४॥
साधनान्तराभावेऽपि भावाभावसूचकत्वेनेश्वरो द
र्शयति ॥
(७) यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥ (छा.५-२-९.)

त्कृतेति । 'सा' भ्रान्तिता अन्यथात्वहेतुकृतेत्यर्थः । यद्वा—भ्रान्ति कारणाभावाच्च तदुत्पत्तिसम्भव इत्यत आह—सा च तत्कृता ईश्वर कृतेति । अन्यकारणकारणकत्वाभावे अनभिव्यक्तस्वरूपत्वादिति हे तुः। सम्यगित्यादौ योज्यम् । सन्ध्यामिति शेषः । 'इति' ब्रह्माण्डे उक्तमि ति शेषः । न केवलं सूत्रकृतेति चार्थः ॥

(६) ननु सत्यताशून्यानां स्वाप्नानां बाह्यार्थजन्यत्वाभावाच्छुक्ति रजतादिवदसत्त्वं स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—सूचकश्चेति ॥ 'साधनान्तराभावेऽपि' बाह्यकारणजन्यत्वाभावेऽपीत्य र्थः । अनेन वक्ष्यमाणानुमाने उपाधिशङ्का निरस्ता । परोक्तहेतोरप्रयो जकत्वं चोक्तं भवति । अपिः यद्यपितथापीत्यर्थे । अनेन सौत्रश्चश्च शब्दो व्याख्यातः । स्वाप्नानां न सत्त्वहानिरिति शेषः । कुत इत्यत आह—'भावाभावसूचकत्वेन' शुभाशुभसूचकत्वेन हेतुनेति । स न्ध्यस्येति शेषः । अनेन सन्ध्यः सन्नेव नासन्, कुतः? यतो भावाभा वसूचकः । न ह्यविद्यमानं शाकुनं कस्य चित्सूचकं भवति । न च बा ह्यार्थजन्यत्वमुपाधिः । तदभावेऽपि सन्ध्यस्य शुभाशुभसूचकत्वेन स त्त्वस्यैव निश्चिततया साध्याव्यापकत्वेन तदभावेनासत्त्वसाधनायो गात् । किञ्च—यतः ईश्वरः सन्ध्यं जीवस्य 'दर्शयति' ज्ञापयति । अतोऽपि नासन् न हीश्वरेण सम्यक्प्रदर्शितस्यासत्त्वं शङ्कार्हम् । न च प्रदर्शनेन प्रयोजनाभावः, यतस्सन्ध्यं भावाभावसूचकत्वेन शुभाशुभ सूचनाय दर्शयत्यत इति सूत्रखण्डो व्याख्यातः ॥

(७) स्वाप्नपदार्थानां भावाभावसूचकत्वमेव कुत इत्यतः प्रवृत्तं श्रुते रित्यंशं व्याचष्टे–यदेति ॥ छन्दोगश्रुतिरियम् । आदिशब्देन 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति...मर्कट एनं हन्ति' (ऐ.आ.३-२-४.) इ त्यैतरेयादिश्रुतिर्गृह्यते । श्रुतेरित्यस्य सूचक इति साध्येनान्वयः । अ त्रैव प्रमाणान्तरपरतया हिशब्दं योजयति—हिशब्दादिति । इति सू चितमिति शेषः । न केवलं श्रुतेः, किन्तु 'दर्शनात्' साक्षिप्रत्यक्षाच्च

इत्यादिश्रुतेः । हिशब्दाद्दर्शनाच्च ।
(८) यद्वाव ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।
स्वप्नस्थमथ वा राजा तत्तथैव भविष्यति ॥
इत्याचक्षते च स्वप्नविदो व्यासादयः ॥ ४ ॥

---*---

प्रत्यक्षतः फलदर्शनाद्वा सन्ध्यस्सूचक इति योजना । अनेनाद्यश्च शब्दः श्रुतिप्रत्यक्षयोः समुच्चायकोऽपीत्युक्तं भवति। अत एव प्राक् शुभाशुभसूचकत्वेनेश्वरो दर्शयतीत्येतावदेवोक्त्वा अत्रैव चशब्दः पठित इति ध्येयम्। काम्येषु कर्मसु क्रियमाणेषु 'यदा' यदि स्त्रियमभिपश्यति पुरुषः 'तत्र' तर्हि 'तस्मिन् स्वप्ननिदर्शने' स्वाप्नाख्यनिदर्शने जाते सति स्वस्य 'समृद्धिं' श्रेयोलाभं जानीयादित्यर्थः । कृष्णं कृष्णदन्तं वा पुरुषं मर्कटं वा यदि स्वप्ने पश्यति जीवस्तदा 'सः' स्वप्नदृष्टपदार्थः 'एनं' द्रष्टारं 'हन्ति' हननसूचको भवतीत्यर्थः । यद्यप्यत्र ज्ञानस्यैव शुभाशुभसूचकत्वं प्रतीयते न त्वर्थस्य । उक्तं हि न्यायामृते—'पुरुषं कृष्णं कृष्णदन्तं पश्यति' इत्यादिश्रुत्या ज्ञानमेव सूचकम्, स्वाप्नज्ञानमेव अर्थक्रियाकारीति च । तथाऽपिअर्थावच्छिन्नज्ञानस्य सूचकत्वे विशेषणतयाऽर्थस्यापि सूचकत्वलाभादेवमुक्तम् । स्वप्नसत्यतासाधकार्थसत्त्वमन्तरेण वचनसत्यताऽयोगात् अनेन स्वाप्नसत्तासिद्धिः ॥

(८) स्मृतिपरतया आचक्षते च तद्विद इति सूत्रांशं व्याचष्टे—यदिति ॥ वायेत्यवधारणे । वाऽपीत्यपि पाठः । 'यत्' यदि ब्राह्मणो वा देवता वा 'वृषभो' देवश्रेष्ठो वा वृषं बिभर्तीति वृषभो रुद्रो वा अथ राजा वा 'स्वप्नस्थं' स्वप्नावस्थापन्नं जनं प्रति 'यत्' यदेव कार्यं ब्रूयात् 'तत्' तद्वचनं 'तथैव' तथ्यमेव 'भविष्यति' भवेदित्यर्थः । 'इत्याचक्षते' वदन्ति चेति । चो हेतुसमुच्चये । स्वप्नविद इत्यनेन तद्विद इति व्याख्यातम् । व्यासादय इत्यादिशब्दात् मन्वादयो गृह्यन्ते । अनेन यतो व्यासादय इत्याचक्षते अतोऽपि सन्ध्यः सूचकः । न चाप्रयोजकता । यतस्ते तद्विदः अत इति सूत्रखण्डो व्याख्यातः ॥ १ ॥

॥ इति संध्याधिकरणम्॥

---*---

२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध विपर्ययौ ॥ ॐ ॥ ५ ॥

बन्धमोक्षप्रदत्वात्स एव स्वप्नतिरस्कर्ता ।
( २ ) स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवतः स्वप्नतिरोधायकत्वमहिमा वर्ण्यते । सौत्रतुशब्देनैव बाह्यार्थज्ञानादेव स्वप्नतिरोधानं नाशः, तस्य तदज्ञान कृतत्वादिति सयुक्तिकपूर्वपक्षस्य सूचनात् सिद्धान्तयत्सूत्रमेवोपन्य स्य व्याचष्टे—परेति ॥ बन्धमोक्षप्रदातृत्वादित्यनेन हिशब्दो हेत्वर्थतया व्याख्यातः । मोक्षेति विपर्ययपदार्थकथनम् । सूत्रे पराभिध्यानादिती च्छाग्रहणेऽपि इच्छेश्वरयोरैक्यात्स पर ईश्वर एवेत्युक्तम् । न ज्ञान मित्येवशब्दार्थः । अनेन तुशब्दो व्याख्यातः । स्वप्नतिरस्कर्तेति । जी वस्य स्वाप्नपदार्थज्ञानकर्ता तत्तिरस्कर्ता चेत्यर्थः । अनेन सूत्रे तिरो हितमित्युपलक्षणम् । आविर्भूतमिति च द्रष्टव्यम् । सन्ध्यमिति च सं योज्यम् । कर्मणि क्तः । स्वप्नस्य तिरस्कर्ता इति विग्रहे भावे क्तः अ स्येति स्वप्नजीवयोरित्युक्तं भवति । न च बन्धमोक्षप्रदातृत्वेन कथं स्वप्नतिरोधायकत्वसिद्धिः व्याप्त्यभावादिति वाच्यम् । यदभिध्यान निबन्धनोऽनादिबन्धः तद्विमोक्षश्चातिदुरापोऽनन्तकालीनः, स्वप्नति रोधानादिशक्तिः किं तस्य वर्णनीयेति तत्त्वप्रदीपोक्तरीत्याऽस्य कैमु त्यपरत्वेन व्याप्त्यनभ्युपगमात् । टीकायां तु यथा ‘ अस्य ’ जीवस्य ब न्धमोक्षावज्ञानज्ञानकृतत्वेन सुप्रसिद्धावपि हि ‘ बन्धको भवपाशेन भवपाशाच्च मोचकः ’ इति वचनात् ‘पराभिध्यानात्तु ’ परमेश्वरेच्छा या एव तदधीनावेव । नाज्ञानज्ञानकृतौ तयोरचेतनत्वेनास्वातन्त्र्या त् । तथा ‘ अस्य ’ स्वप्नस्य तिरोधानम् । उपलक्षणमेतत् आविर्भाव श्च ‘ पराभिध्यानात् ’ इच्छाऽभिन्नपरमेश्वरादेव जायते, न ज्ञानाज्ञाना भ्याम् । ते तु निमित्तमात्रमिति दृष्टान्तदार्ष्टान्तिकभावपरतया सूत्रं व्याख्यातम् । अनेन ज्ञानाज्ञाने न स्वातन्त्र्येण तिरोभावादिहेतू अ चेतनत्वात्तन्निमित्तमात्रत्वेन प्रसिद्धत्वादित्यनुमानं सूचितम् ॥

( २ ) नेदं दृष्टान्तमूलकानुमानमात्रमिति भावेन सूत्रार्थे स्मृतिं चोदाहरति—स्वप्नादीति ॥ स्वप्नः अर्थात्मा, तद्बुद्धेः पृथगुक्तत्वात्

तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ ॥ इति कौर्मे ॥ ५ ॥

——*:*:*——

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ देहयोगाद्वासोऽपि ॥ ॐ ॥ ६ ॥
देहयोगेन वासो जाग्रदपि तत एव
( २ ) 'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुरीयाद्

आदिपदाज्जाग्रत । तिरस्कर्ता स्वप्नादिबुद्धेः । चौ परस्परसमुच्चये । 'सः' ईश्वरः । 'तदिच्छया' ईश्वरेच्छया । 'हिः' प्रसिद्धौ । 'अस्य' जीवस्य । अत्र दृष्टान्तदार्ष्टान्तिकभावः कैमुत्यं वा, आगमाद्व्याप्तेरेव निश्चयोपपत्तेः साऽप्यभिप्रेयते । इति कौर्मे चोक्तमित्यन्वयः । न केवलं सूत्रकृतेति चार्थः ॥ २ ॥

॥ इति पराभिध्यानाधिकरणम् ॥

——*——

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोर्जाग्रत्प्रवर्तकत्वमहिमा निरूप्यते । जागरणस्य कालाधीनतायाः प्रत्यक्षसिद्धत्वात । तस्य च बाधकाभावेन भ्रान्तित्वायोगात् नेश्वराधीनत्वमितिपूर्वपक्षे सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे—देहेति ॥ 'देहयोगेन' स्वदेहाभिमानेन तद्विशिष्टतया वा सहस्थितिरित्यर्थः । अनेन पञ्चमी तृतीयार्थतया व्याख्याता। फलितार्थमाह—'जाग्रत' जाग्रत्त्वं जाग्रदवस्थेति यावदिति । तत एवेति । पराभिध्यानादेवेत्यर्थः । भवतीति शेषः । न कालजीवादेरित्येवार्थः । तत एवेत्यनेनापेः पराभिध्यानादिति पदानुकर्षकत्वं सूचितम् । यद्वा—अनुक्तसमुच्चायकोऽपिः । तथा च न केवलं जाग्रदेव, किन्तु स्वप्नसुषुप्ती अपीति । अतएव 'स स्वप्ने' इति श्रुतिशेषोदाहरणम्। पदद्वयानुवादेन सूत्रे जाग्रदपीति वाच्ये देहयोगाद्वास इत्युक्तिः जाग्रत्त्वेन देहाभिमानेन अवस्थितिः जाग्रदवस्थेति जाग्रत्स्वरूपनिर्वचनायेति सूचितम् ॥

( २ ) ननु जाग्रदवस्थायाः प्रत्यक्षत एवाहरादिकालाधीनत्वप्रतीतेः कथमीश्वराधीनत्वमुच्यत इत्यतः पूर्वस्माद्धिशब्दमनुवर्त्य तेन अपिना च सूचितां स्मृतिमुदाहरति—स इति ॥ 'सः' ईश्वर एव, न

स एको बहुधा भवति' इति कौण्ठरव्यश्रुतेः ॥ ६ ॥

—*—

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ॐ ॥ ७ ॥

---

कालजीवादिरित्यर्थः । 'जागरिते' जाग्रदवस्थायां, जीवमिति शेषः । असामर्थ्यमाशङ्क्याह—प्रभुरिति । तदुपपादनं—तुराषाडिति । वैरिवेगसह इत्यर्थः । 'तुरं भगस्य धीमहि' (ऋ.५-८२-१.) इति तुरशब्दस्य वायौ प्रयोगात् वायुसह इति वा । नन्वेकस्यानेकावस्थाप्रेरकत्वं कथमित्यत आह—स इति । 'बहुधा' विश्वतैजसादिरूपेण । श्रुतेरित्यस्य देहयोगेनेत्यादिनाऽन्वयः । तथाच कालस्यैव तत्प्रवर्तकत्वे श्रुतिविरोधान्निमित्तमात्रविषयं प्रत्यक्षमिति भावः ॥ ३ ॥

॥ इति देहयोगाधिकरणम् ॥

—*—

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे सुप्तप्राप्यत्वमहिमा वर्ण्यते । नाडीष्विति पदेन परमात्मन्येव सुप्तिः, न तु नाडीष्वपीति पूर्वपक्षस्य सूचितत्वात् तमनुपन्यस्य सिद्धान्तयत्सूत्रमेवोपन्यस्य व्याचष्टे—तदिति ॥ न च केवलपरमात्मनि सुप्तिरिति पूर्वपक्षे भगवतो माहात्म्याक्षेपाभावेन भक्त्यनाक्षेपात्कथमयं विरोधीति वाच्यम् । तथासति नाडीसुप्तिप्रतिपादकश्रुतेरप्रामाण्यापातेन तन्न्यायेन भक्तेः मोक्षसाधनत्वश्रुतेरीश्वरमाहात्म्यप्रतिपादकश्रुतेश्चाप्रामाण्यापातादित्येवं विरोधित्वात् । जाग्रदिति भावप्रधानः । अनेन तयोः जाग्रत्त्वस्वप्नयोरभावः तदभाव इति तदभावपदं व्याख्यातम् । फलितार्थमाह—सुप्तिरिति । अस्य जीवस्येति वर्तते । अनेन सूत्रे सुप्तिरिति वक्तव्ये तदभाव इत्युक्तिः सर्वेन्द्रियव्यापारोपरतिः सुप्तिरिति सुप्तिस्वरूपनिर्वचनार्थेति सूचितम् । एवं तदभाव इति पक्षवचनं व्याख्याय नाडीष्वात्मनीति साध्यांशं व्याचष्टे—नाडीस्थ इति । अत्र सूत्रे न श्रुतपदार्थयोरेवाभेदेनान्वयः, नापि प्रत्येकमन्वयः, किन्तु स्थित इति पदाध्याहारेण सामानाधिकरण्येनान्वयः, मन्दिरे मञ्जूषायां मणिमालेत्यत्रेवाधाराधेयभावो वाऽभिप्रेत इति सूचितम् । 'परमात्मनि' भवतीति शेषः । ननु परमात्मन्येव सुप्तिर

जाग्रत्स्वप्नाभावः सुप्तिः नाडीस्थे परमात्मनि ।
(२) 'आसु तदा नाडीषु सृप्तो भवति' (छा. ८-६-३.) 'स
ता सोम्य तदा सम्पन्नो भवति' (छा.६-८-१.) इति
श्रुतेः ॥ ७ ॥

---

स्तु, किं नाडीस्थत्वविशेषणेनेत्यतः प्रवृत्तं तच्छ्रुतेरिति हेत्वंशं परमात्मनो नाडीस्थत्वप्रतिपादकश्रुतिपरतया जीवस्य परमात्मनि सुप्तिप्रतिपादकश्रुतिपरतया च व्याचष्टे—आस्विति ॥ इति श्रुतेरिति । इति छान्दोग्यश्रुतिवचनद्वयादित्यर्थः । श्रुतिद्वयोदाहरणेन नाडीस्थे परमात्मन्येव सुप्तिः न तु केवलयोः । अन्यथा श्रुतिद्वयानुपपत्तेरिति सूचितम् । 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति' (छा.८-६-३.) इति पूर्ववाक्ये 'तत' तदा स्वप्नकाले 'यत्र' प्राज्ञे परमात्मनि 'एतत्सुप्तः' एष सुप्तः 'समस्तः' उपसंहृतेन्द्रियव्यापारः 'संप्रसन्नः' स्वरूपसुखानुभववान् 'स्वप्नं' स्वाप्नमेव वस्तु न विजानाति, किमु जाग्रद्वस्त्विति प्रकृतो जीवः 'आसु नाडीषु' स्वप्नवहन्नाडीषु नाडीं सुषुम्नाख्यां 'सृप्तः' प्राप्तो भवतीत्यर्थः । प्रतिशरीरं नाडीभेदाद्बहुवचनम् । यत्रैतत्पुरुषः स्वपिति नाम 'तदा' सुप्तिकाले एष पुरुषः 'सता' परमात्मना 'सम्पन्नः' सङ्गतो भवतीति द्वितीयस्यार्थः । सोम्येति श्वेतकेतुसम्बुद्धिः । सूत्रे हेतिशब्दः 'तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते' इति छान्दोग्यभाष्योदाहृतप्रमाणप्रसिद्धिद्योतकः । अत एव तत्त्वप्रदीपे तदुपन्यासः । न च

अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा ॥

इति बृहद्भाष्योदाहृतप्रमाणात्कर्णिकाग्रस्थतयाऽवगतस्य हरेः कथं नाडीस्थतेति वाच्यम् । मन्दिरे मणिमालेतिवन्नाडीकर्णिकोभयस्थत्वोपपत्तेः । न च 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि' इति काठकभाष्योक्तेः देहाङ्गुष्ठमितस्य कथमतिसूक्ष्मनाडीस्थकर्णिकाग्रस्थत्वमिति वाच्यम् । अचिन्त्यत्वादीश्वरशक्तेः ॥ ४ ॥

॥ इति तदभावाधिकरणम् ॥

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अतः प्रबोधोऽस्मात् ॥ ॐ ॥ ८ ॥
यतस्तस्मिन् सुप्तिः ।

( २ ) 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष

---

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे हरेः सुप्तप्रबोधकत्वमाहात्म्यं वर्ण्यते । भेरीताडनादेरेव सुप्तस्य प्रबोधो नेश्वरादिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अत इति ॥ तस्मिन्निति सावधारणम् । तथा च नाडीस्थे परमात्मन्येवेत्यर्थः । उपलक्षणं चैतत् । तदभिध्यानादेवेति तत्त्वप्रदीपोक्तं द्रष्टव्यम् । सुप्तिरित्यनन्तरं उक्तेति शेषः । अस्येत्यनुवृत्तिश्च कार्या । अनेन यतोऽस्य जीवस्य तस्मिन्नेव तदिच्छयैव सुप्तिरुक्ता, अतोऽस्यास्मात्परमात्मन एव तदिच्छयैव सुप्तेः प्रबोधोऽपि नान्यस्मादिति सूत्रयोजनोक्ता भवति । न चात्राप्रयोजकता ।

अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा ॥

इति वचनविरोधात् ।

देहाद्देहान्तरगते प्रविशेत्प्राणमेव तु ।
जीवः प्राणः परात्मानमेवं सुप्तौ . . ॥

इति वचनाच्च । मुख्यप्राणद्वारेण स्वान्तर्निवेशितस्य जीवस्य तत्प्रेरणामन्तरेण स्वत एव सुप्त्युद्बोधनशक्त्यभावाच्च ॥

( २ ) ननु भेरीताडनाद्यनन्तरं प्रबोधदर्शनात्तेषामपि सुप्तप्रबोधहेतुत्वं सिद्धमिति कथं प्रबोधस्य भगवदेकाधीनत्वं प्रत्यक्षविरोधादित्याशङ्कापरिहारायातश्शब्दं श्रुतिपरतयाऽपि व्याचष्टे—एष इति ॥ श्रुतिरित्यनन्तरं यत इत्यनुवर्तते । तथा च 'यतः' एवं कौण्डिन्यश्रुतिरतोऽस्मादेव प्रबोधो भवतीत्यन्वयः । अनेनातश्शब्दस्य तदभावो नाडीष्वात्मनीत्युक्तपरामर्शकत्वं तच्छ्रुतेरिति प्रकृतश्रुतिपरामर्शकत्वं चोक्तं भवति । प्रत्यक्षं तु निमित्तमात्रविषयं, अन्यथा सावधारणश्रुतिविरोधादिति भावः । 'एषः' परमात्मैव 'सुप्तं' जीवं सुप्तेः प्रबोधयति नान्यः । एतस्मादीशादेव जीव उत्तिष्ठति सुप्तेः । एष एव 'प्रमाता'

प्रमातैष परमः ' इति कौण्डिन्यश्रुतिः ॥ ८ ॥

——:*:——

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ स एव च कर्मानुस्मृतिशब्दविधिभ्यः॥ ॐ ॥९॥
न च केषां चित्स्वप्नादिकर्ता न तु सर्वेषामिति ।
' एष ह्येव साधु कर्म कारयति ' ( कौ.३-८. ) इति क
र्मण्यवधारणात् ।

सुप्तस्य प्रबोधकः । एष परम इति तदुपपादनमिति श्रुत्यर्थः ॥ ५ ॥
॥ इति प्रबोधाधिकरणम् ॥

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे सर्वपुरुषीयसार्वकालिकसर्वावस्थानां भग वदधीनत्वमहिमा वर्ण्यते । न सर्वेषां सार्वकालीनावस्थाः भगवदधीनाः, किं नाम ? केषां चित् किञ्चित्कालीनैवेति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—स एवेति ॥ चशब्दः शङ्कापरिहारसमुच्चये । केषां चित्पुरुषाणां इत्युपलक्षणम् । कदाचिदित्यपि द्रष्टव्यम् । ' सः ' ईश्वरः । स्वप्नादीत्यादिशब्देन सुषुप्तिः गृह्यते । तुशब्दोऽवधारणे केषां चिदेवेति । तद्व्यावर्त्यमाह-नेति । सर्वेषामित्युपलक्षणम् । सर्वदेत्यपि द्रष्टव्यम् । न कदाचित् केषां चित्, किन्तु सर्वदा सर्वपुरुषाणां स परमात्मैव स्वप्नादिकर्तेति सौत्रचशब्दः साध्यधर्मसमुच्चायकः। यद्वा-सौत्रचशब्दः पुरुषान्तरे कालान्तरे अवस्थाप्रेरकत्वव्यवच्छेदकः। चशब्दस्तु अवधारणार्थः परमात्मनः ईश्वरान्तरसाहित्येन सर्वावस्थाप्रेरकत्वव्यवच्छेदकः । अत एव टीकायां पक्षान्तरनिषेधार्थश्चशब्द इत्युक्तम् । तत्त्वप्रदीपरीत्या हेतौ वा चशब्दः । तस्मात्स एव परमात्मा सर्वकर्ता, नान्यो न च किञ्चित्स्वभावत एव । स्वभावस्यापि परमात्माधीनत्वादित्यभिप्राय इत्युक्तम् । इति न च मन्तव्यमित्यन्वयः । कुत इत्यतस्तत्र हेतुत्वेन कर्मेत्याद्यंशं योजयति—एष ह्येवेति । श्रुताविति शेषः । ' कर्मणि ' सर्वक्रियाहेतुत्वे । तथा च ' एष ह्येव ' इति श्रुतावीशस्यैव सर्वकर्महेतुत्वं, नान्यस्येत्येवकारेणान्यत्र क्रियाहेतुत्वस्य ' अवधारणात् ' व्यवच्छेदात्स्वप्नादिप्राप्तेरपि क्रियारूपत्वात्स एव सर्वे

( २ ) प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एष तु ।
परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन ॥
इत्यनुसारिस्मृतेश्च । 'एष स्वप्नान्प्रदर्शयत्येष प्रबो
धयत्येष एव परम आनन्दः' ( ) इति च

षां सर्वावस्थाप्रेरको, न केषां चिदिति भावः । अनेन सौत्रकर्मशब्दो लक्षणया कर्मणामीशैकाधीनत्वश्रुतिपर इत्युक्तं भवति । यद्यपि सुधा यां श्रुतिस्थः साधुकर्मशब्दो मोक्षजनकज्ञानाद्युपलक्षकः । असाधुकर्म शब्दश्च मिथ्याज्ञानाद्युपलक्षक इत्युक्तम् । तथाऽपि कर्मशब्दस्यात्रोक्त क्रियावाचित्वापरित्यागेन उन्निनीषतिवाक्यपर्यालोचनया उपलक्षणो केरदोषः । व्याख्यातेयं श्रुतिर्वैषम्याधिकरणे ॥

( २ ) प्रदर्शक इति ॥ स्मृतेरित्यनेन स्मृतेरित्यंशोऽनुसारीत्यनेना न्वित्यंशो व्याख्यातः । स्फुटमभिमतार्थाभिधायकत्वमनुसारित्वम् । हेतुसमुच्चये चः । स्मृतौ तुशब्दश्चार्थः । यतः स्वप्नादेर्जनकश्चेति तत्त्व प्रदीपोक्तेः । द्वितीयो मुख्यत्वविशेषद्योतकः । सर्वदेति शेषः । तथा च विष्णुरेव मुख्यतः सर्वदा सर्वेषां स्वप्नादेरवस्थानस्य 'प्रदर्शकः' तत्प्रेरकः तज्जनकश्च एक एव, न तु सद्वितीयः पुरुषान्तरसहितः । स च विष्णुरेव भवेत्, नान्यः, कुतः ? यतस्ततः 'कश्चन' कोऽपि परमः पुरुषो नास्त्यत इत्यर्थः । इति श्रुतिश्चेत्यन्वयः । यत इति शेषः । अने न शब्दादित्यंशो व्याख्यातः । श्रुतावेवशब्दः सर्वत्र सम्बध्यते । अन्य था स्वप्नानिति बहुवचनेन सर्वपुरुषसम्बन्धिसार्वकालिकावस्थाप्रेरक त्वलाभेऽपि तस्यान्यस्यापि सर्वावस्थाप्रेरकस्य सत्त्वेऽपि सम्भवेन त द्व्यावृत्त्यलाभात्परमात्मन एव सर्वावस्थाप्रेरकत्वरूपविवक्षितार्थासि द्धिप्रसङ्गात् । न चावधारणस्य पूर्वसम्बन्धस्य प्रयोजनवत्त्वेऽपि परम इति वाक्ये सम्बन्धो व्यर्थ इति वाच्यम् । अन्यस्यापि सर्वावस्थाप्रेर कस्य सत्त्वे तस्यापि परमत्वप्राप्त्या 'एष ह्येव परमः' इत्यवधारणा सम्भव इति बाधकोपन्यासार्थत्वात् । तथा च यतः 'एषः' परमा त्मैव 'स्वप्नान्' स्वप्नावस्थाः 'प्रदर्शयति' संयोजयति जीवान्, यत श्चैष एव सुप्तजीवान् प्रबोधयति अत एष एव 'परमः' सर्वोत्तमः 'आनन्दः' पूर्णानन्द इति श्रुत्यर्थः । 'विधिः' परमात्मन एवोपास्यत्व विधायकश्रुतिरिति । अनेन विधेरित्यंशो व्याख्यातः । अत्रापि चश ब्दो योज्यः । यत इति शेषः । अन्यस्यापि प्रेरकस्य सद्भावे तस्याप्यु

श्रुतिः 'आत्मानमेव लोकमुपासीत' (बृ.उ.३-४-१५.)
इति च विधिः ॥ ९ ॥

——:*:——

७. अधिकरणम् ॥

( १ ) सू—ॐ ॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ॐ ॥ १० ॥
मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ।

( २ ) हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।

---

पास्यत्वप्राप्त्या श्रुतौ परमात्मन एवोपास्यत्वावधारणानुपपत्तिरिति भावः । श्रुतिस्तु भाक्तनये व्याख्याता ॥ ६ ॥

॥ इति कर्मानुस्मृत्यधिकरणम् ॥

——:*:——

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे ईश्वरस्यावान्तरावस्थासंस्थितजीवप्राप्यत्व महिमा निरूप्यते । भगवत्येव मोह इति पूर्वपक्षे मोहावस्थायाः सुषुप्त्यन्तर्भावापत्त्या पृथगवस्थासंस्थितजीवप्राप्यत्वमहिमालाभात् मोहावस्थाया अर्धप्राप्तिरूपत्वेन ईश्वरतदितराधिकरणकत्वमिति समर्थनेन पृथगवस्थात्वसमर्थनमपि तन्निरूपणोपयुक्तमेव भवति । अत्र भगवत्येव मोहो न तदितरत्रापीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य प्रतिज्ञांशं तावद्व्याचष्टे—मुग्ध इति ॥ मोहेत्यनेन 'मुग्धे' मूर्छायामिति मुग्धपदं भावार्थकक्तप्रत्ययान्ततया व्याख्यातम् । परमेश्वरेत्यनेन तद्भावसूत्रादात्मनीत्यस्यानुवृत्तिः सूचिता । अर्धप्राप्तिरिति । भगवदुदरे अर्धप्रवेश एवेत्यर्थः । अनेनार्धसम्पत्तिपदं व्याख्यातम् । 'पर' इति सूत्रादनुवृत्तस्य अस्येत्यस्यार्थो जीवस्येति । अनेन न मोह ईश्वर एव, नापि तदितरत्रैव, किन्त्वीश्वरे तदितरत्र चेति सिद्धान्तप्रतिज्ञा प्रदर्शिता भवति ॥

( २ ) एवं प्रतिज्ञांशं व्याख्याय परिशेषादिति हेत्वंशं व्याख्यातुं प्रतिज्ञाहेत्वात्मकसमस्तसूत्रार्थे स्मृतिमुदाहरति—हृदयस्थादिति ॥ ल्यब्लोपनिमित्ते पञ्चम्यौ । तथाशब्दस्समुच्चये । तथा च यदा जीवः 'परात्' परमात्मानमपेक्ष्य 'दूरस्थः' अक्षिस्थो भवति तदा 'जाग्रत्' जाग्रत्त्वमेष्यति । यदा तु 'समीपस्थः' कण्ठदेशस्थस्तदा स्वप्नावस्थामेष्यति । यदा च 'अस्मिन्' परमात्मनि 'लयं' माक्षिकाणां प्रह

समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् ॥
यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।

गोधिकादेहान्तःप्रवेशवत्प्रवेशं व्रजन् भवति तदा ' स्वपिति ' सुप्त्यव स्थां प्राप्नोतीत्यर्थः । ननु जीवस्य दक्षिणाक्षिस्थत्वे दूरस्थत्वं कुतः ? तत्रापि ' दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ' ( मा. २ - ६. ) इति श्रुतेः विश्वनामकपरमात्मसामीप्यसत्त्वादित्यत उक्तं—हृदयस्था दिति । तथा च नेह यत्किञ्चिद्रूपात्सामीप्यमभिप्रेतम्, किन्तु हृदय स्थप्राज्ञनामकपरमात्मानमपेक्ष्य , तच्च नातिप्रसङ्गीति भावः । त्रय इ त्यावर्तते । लिङ्गव्यत्ययः । अवस्था इति बहुवचनम् । न तथेति शेषः। तथा च ' यत एवं ' उक्तप्रकारेण ' त्रयः ' तिस्रः ' अवस्थाः ' जाग्रदा द्याः परमात्मविदूरत्वतत्सामीप्यतत्प्रवेशार्धप्रवेशाख्यप्रकारेषु मध्ये ' त्रयः ' क्रमेण परमात्मविदूरत्वसामीप्यप्रवेशरूपप्रकारत्रययुताः, मोहस्तु न तथा, अतः ' परिशेषतः ' प्रसक्तप्रतिषेधे परिशिष्यमाणे बु द्धिः परिशेषः, तेन तत्कारणानुमानं गृह्यते । तस्मात् मोहः ' अर्धप्रा प्तिः ' अर्धप्रवेशाख्यप्रकारयुक्त इति ज्ञेय इत्यर्थः । यद्वा—दूरस्थत्वा दित्रयः प्रकाराः यत एवमवस्थात्रयेऽपि नियुक्ता अतः परिशेषात् ' अ वस्था ' अवान्तरावस्थारूपो मोहोऽर्धप्राप्तिरिति ज्ञेय इत्यर्थः । अस्मिन् पक्षे न लिङ्गव्यत्ययः । अवस्थापदं चैकवचनान्तम् । अवस्थात्रये वि नियुक्ता इति प्रकारा इति च शेष इति ध्येयम् । न च ' हृदि ह्येष आ त्मा ' ( प्र. ३ - ६. ) इति श्रुतेर्हृदिस्थानां जीवानां कथमक्ष्यादिस्थत्व मिति वाच्यम् । देवानामंशेन तदितरेषामभिमानातिशयेन प्रकाशगु णेन वा हृदयस्थत्वोपपत्तेः । उक्तं हि देवताविषये बृहदारण्यकभाष्ये-

हृदये संस्थितो जीवो विशेषेण हरिस्तथा ।
चक्षुरादिषु रूपाणि जाग्रत्काले तयोस्सदा ॥
बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः ॥
हृदयस्थेन रूपेण तदा जीवो न किञ्चन ॥
जानातीति विदुः प्राज्ञाः ॥ इति ॥

न चैवमैतरेयभाष्ये न हि जीवस्याक्ष्यादिषु पृथक्शिरोबाह्वादिकं वि द्यते हृदिस्थमेव हि तस्य रूपमित्युक्तिविरोधः । ' पृथक् ' स्वरूपाद्भि न्नं शिरआदिकं नास्तीति विशिष्टनिषेधाभ्युपगमात् । अन्यथा तयोः ' चक्षुरादिषु बहूनि रूपाणि सन्ति ' इत्युक्तिविरोधात् । रूपशब्दितश

अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः॥ इति वाराहे ॥
(३) सोऽपि तत एवेति सिद्धम् ।
(४) मूर्छाप्रबोधनं चैव यत एव प्रवर्तते ।

रीरस्य शिरआदिकं विनाऽयोगात् । अत एव तत्र जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवतीत्युक्तम् । देवेतरजीवविषयं वा तद्भाष्यं, तथात्वे शिरोबाह्वादिकमित्यस्य शिरआदिमद्रूपमित्यर्थः । ननु मोहस्यावस्थात्रयातिरेकित्वे परं दूरस्थत्वादिप्रकारत्रयस्यावस्थात्रये विनियुक्तत्वात्परिशिष्टोऽर्धप्रवेशो मोहे भवेत् , तदेव कुत इत्यत आह—दुःखेति । दुःखपदमात्मकालयोरुपलक्षणम् । प्रतिस्मृतिः अनुसन्धानम् । मात्रपदेन दुःखात्मकालेतरविषयदर्शनं व्यावर्त्यते । अनेन मोहस्यावस्थात्रयातिरेकित्वं परिशेषात्सिद्धमित्युक्तं भवति । तथा हि—न तावत्सुप्त्यन्तर्भावो मोहस्य, दुःखानुसन्धानात् । न च तदानीं कारणाभावेन दुःखानुदयात्कथं तदनुभव इति वाच्यम् । मोहात्प्राग्विषयानुभवजन्यस्य दुःखस्य तदानीमनुसन्धानसम्भवात् । नापि जाग्रत्स्वप्नयोरन्तर्भावः । दुःखात्मकालातिरिक्तविषयादर्शनात् । अतः परिशेषान्मोहस्य पृथगवस्थात्वसिद्धिरिति । यद्वा—अनेन मोहे अर्धप्राप्तिसमर्थनाय साक्षादेव परिशेषप्रकारः प्रदर्श्यते । तथाहि—न सुप्ताविव मोहे स्वाप्रप्राप्तिः दुःखानुसन्धानात् । नापि जाग्रत्स्वप्नयोरिवाप्राप्तिरेव, दुःखमात्रानुसन्धानेन अन्यार्थादर्शनात् । अतः परिशेषादर्धप्राप्तिरेवेति । वाराहे उक्तमिति शेषः । न केवलं सूत्रे, किन्तु वाराहे चेति चशब्दार्थः ॥

(३) ननु मोहे जीवस्य अर्धप्रवेशरूपावस्थानमेव चिन्त्यते । तदयुक्तम् । मोहस्येश्वराधीनतायाः असिद्धत्वेन तस्यैवेह चिन्त्यत्वात् । केवलैतच्चिन्तनस्य व्यर्थत्वात् । न च शङ्काकारणाभाव इति वाच्यम् । मोहे आघातव्याध्यादिकारणान्तरस्यापि दर्शनेन तस्येश्वराधीनत्वशङ्कोदयात् इत्यत आह—सोऽपीति ॥ अपिशब्दस्समुच्चये । तत इत्यावर्तते । भवतीत्यध्याहारः । तथा च यतः न केवलं स्वप्नादिः,अपि तु 'सः मोहोऽपि तदुद्बोधश्च 'तत एव' ईश्वरादेव भवतीति, 'तत एव' कर्मानुस्मृत्यादिपूर्वोक्तहेतुत एव सिद्धम् । अतस्स ततोऽन्यतो वेति चिन्ता न क्रियत इत्यन्वयः ॥

(४) ननु कर्मानुस्मृत्यादेः साध्यसङ्कोचः कार्यः । अन्यथा घा

स ईशः परमो ज्ञेयः परमानन्दलक्षणः ॥ इति कौर्मे ॥ १० ॥

—*-:*:-*—

८. अधिकरणम् ॥

( १ ) स्थानापेक्षया परमात्मनो भेदादनुग्राह्यानुग्राहकभाव इति ।

---

त्यादिबाह्यकारणदर्शनविरोध इत्यतो निमित्तकारणविषयं तत्, अन्यथा विशेषस्मृतिविरोधादिति भावेन तां स्मृतिमुदाहरति—मूर्छेति ॥ इदं च व्यस्तं समस्तं च । समासे मूर्छायाः प्रबोधनमिति विग्रहः । चस्समुच्चये । तथा च मूर्छा मूर्छायाः प्रबोधनं च ‘ यतः ’ यस्मादेव ‘ प्रवर्तते ’ उत्पद्यते स परम ईशः परमेश्वर एव ज्ञेयो, न ब्रह्मादिर्जीवः । कुतः ? यतः सः ‘ परमानन्दलक्षणः ’ परमः उत्तमः पूर्णो वा आनन्दः स्वरूपलक्षणं यस्यासौ तथोक्तो नान्योऽत इति योजना। कौर्मे उक्तमिति शेषः । अस्यातः सोऽपि तत एवेति पूर्वेणान्वयः । तथा च मोहावस्थाया ईश्वराधीनत्वस्य पूर्वन्यायसिद्धत्वेन अविचार्यत्वात् अनिश्चितस्वरूपायाश्च तदधीनत्वज्ञानायोगात् अवस्थास्वरूपविचारोऽपि तदधीनत्वप्रतिपत्तिहेतुत्वात् सार्थक एवेति भावः ॥ ७ ॥

॥ इति संपत्त्यधिकरणम् ॥

——:*:——

८. अधिकरणम् ॥

( १ ) अत्रेश्वरस्य सर्वरूपेषु निर्दोषाशेषगुणत्वं समर्थ्यते । तत्र न स्थानतोऽपीत्यनेन सूचितं पूर्वपक्षं दर्शयति—स्थानेति ॥ स्थानानां सुरनरादिसर्वशरीराणां तत्रापि दक्षिणाक्ष्यादीनां अपेक्षया तद्भेदापेक्षया स्थानभेदान्निमित्तादिति यावत् । न केवलं स्थानानां, किन्तु स्थानिपरमात्मनोऽपीति वा न केवलमात्मनां जीवानां अनात्मनां पटादीनां, किन्तु परमात्मनोऽपीति वाऽपिशब्दार्थः । ततः किमित्यतोऽनिष्टमापाद्यमाह—अनुग्राह्येति । स्यादिति शेषः । अपिशब्दोऽत्रापि सम्बध्यते । परमात्मन इति पञ्चमी षष्ठी च । तथा च परमात्मनः सकाशाद्घटादीनां स्थानभेदाद्भेददर्शनात् तत एव भेदनिमित्तकगुणादितारतम्यस्यापि दर्शनात् तत एवानुग्राह्यानुग्राहकभावदर्शनात् तद्वद्विश्वादिरूपिणः परमात्मनोऽपि परस्परं स्थानापेक्षया ‘ भेदात् ’ भेदप्राप्तेः तत एव गुणादितारतम्यमनुग्राह्यानुग्राहकभावश्च स्यादिति यो

( २ ) अत आह—

सू—ॐ ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ॐ ॥ ११ ॥

स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ।

---

जना । एवं च स एवेत्युक्तमयुक्तमिति भावः ॥

( २ ) एवं पूर्वपक्षं प्रदर्श्य सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ न केवलं स्वतः, किन्तु 'स्थानापेक्षया' स्थानभेदादपीत्यर्थः । अनेन सूत्रे स्थानपदं तद्भेदोपलक्षकं, सप्तम्यर्थे च तसिरित्युक्तं भवति । परस्येत्यस्य व्याख्या—परमात्मन इति । सूत्रे परस्योभयत्वमित्येवोक्तौ वियदादिवत्पाणिपाद्यवयवरूपैकैकदेशतोऽनेकस्थानस्थितत्वं तत्रैव भेदाभावश्च विज्ञायेत तदुभयं प्रमाणासिद्धम्, परमात्मा नैकैकदेशतः अनेकस्थानः एकदेशतोऽपि पूर्णत्वादिति युक्तिविरुद्धं, 'सप्ताङ्ग एकोनविंशतिमुखो विश्वः' ( मा. २-१. ) इति स्पष्टश्रुतिविरुद्धं च । अतस्तन्मा विज्ञायीति उभयलिङ्गमित्युक्तम् । तत्र भिन्नमित्यनेनोभयपदं व्याख्यातम् । रूपमित्यनेन लिङ्गपदं, 'लिङ्गं स्वरूपमुद्दिष्टम्' इति वचनात् । रूपस्वरूपशब्दयोश्च पर्यायत्वात् । तथा च पूर्वपक्षे विश्वादिरूपिणो हरेः समग्ररूपेणैव भिन्नस्थानस्थितत्वहेतुको भेदो ज्ञायत इति भावः । सिद्धान्ते न भिन्नमिति विशिष्टनिषेधो विशेषणीभूतभेदनिषेधपर्यवसितः । भेदशब्देन च सुधोक्तरीत्या अन्योन्याभावस्य तत्साध्यगुणादिकृतहीनाधिकभावस्य तत्साध्यानुग्राह्यानुग्राहकभावस्य च ग्रहणम् । उभयशब्दस्य भिन्नार्थत्वं चोभशब्दपर्यायत्वात्सिद्धम् । तच्च 'उभादुदात्तः' इति सूत्रवृत्तिसिद्धम् । सूत्रे रूपमित्यनुक्त्वा लिङ्गमित्युक्तिः न स्थानापेक्षयाऽपि परमात्मनो भिन्नं रूपं, न हि स्थानभेदस्तस्योभयत्वस्य लिङ्गं कारणं वा भवति । स्थानभेदेऽपि तद्गतवस्त्वेकत्वोपपत्तेः । स्वप्नाद्यवस्थाभेदेऽपि तद्गतो भोक्तुरेकत्ववदिति तत्त्वप्रदीपे, न स्थानभेदस्तद्भेदस्य ज्ञापकः कारको वा स्यादिति आनन्दमालायां चोक्तस्यार्थान्तरस्य ज्ञापकत्वरूपस्य ज्ञापनार्था । तदपि पूर्वपक्ष्यभिमतहेतोरप्रयोजकत्वोद्घाटनार्थम् । तथा च तत्त्वप्रदीपकारस्य स्थानत इति प्रथमार्थे तसिः । उभयमिति च भावनिर्देशः । तस्य द्वित्वपर्यायत्वाद्भेदत्वम् । लिङ्गत्वं च ज्ञापकत्वं कारणत्वं वाऽभिप्रेतम् । परमात्मनो रूपं विश्वादिलक्षणं स्थानभेदान्न भिन्नं ज्ञेयमिति भाष्यार्थश्चाभिप्रेत इति ध्येयम् ॥

( ३ ) 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐ.आ.३-२-३.)
इति श्रुतिः ।

( ४ ) एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।
ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते ॥
इति मात्स्ये ।

( ५ ) प्रतिदृशमिव नैकधार्कमेकं

---

( ३ ) कुतो नेत्यतस्तद्धेतुत्वेन प्रवृत्तं सर्वत्र हीति सूत्रखण्डं व्याच ष्टे—सर्वेष्विति ॥ इतिशब्दः प्रकारवाची । एकत्वमेकवचनार्थः । तथा च 'सर्वेषु भूतेषु' सुरनरादिदेहेषु तत्रापि चक्षुरादिस्थानेषु 'एतं' परमात्मानमेकमेव 'ब्रह्म' पूर्णगुणमाचक्षते विद्वांस इति श्रुत्यर्थोऽत्राभिप्रेतः । सर्वत्राधिकरणेषु नैवं इति । 'हि' इति श्रुतिरैतरेयेऽस्तीति शेषः ॥ तथा च 'हि' यतः परस्य 'सर्वत्र' सर्वेषु नैवं निर्दोषाशेषगुणत्वाभेदप्रतिपादिका 'सर्वेषु भूतेषु' इति श्रुतिरस्ति अतो न तस्य स्थानभेदात् उभयं लिङ्गं मन्तव्यमिति योजना ॥

( ४ ) ननु हरेः समग्ररूपेणानेकस्थानस्थितत्वं कथमुपपद्यते तदन्यत्रादृष्टत्वादित्यतः सर्वत्रेत्यनेन सूचितां सर्वत्रेतिपदघटितां स्मृतिमुदाहरति—एकरूप इति ॥ रूपशब्दोऽवतारधर्मपरः । अपिरभिव्याप्तौ । तथा च विष्णुः सर्वत्रापि स्थानेषु गुणादिभिरवतारैश्चैकरूप एव अभिन्नरूप एवास्ति, न भिन्नो न वा हीनाधिकरूपः । स च सर्वत्र 'परः' अवयवैः पूर्ण एव, न त्वेकदेशेन स्थितः । कथमेतदित्यत आह— 'ऐश्वर्यात्' ईश्वरत्वादिति । चोऽप्यर्थः । तथाचैकमपि तद्रूपं ऐश्वर्यात् बहुधा अनेकस्थानेषु सामग्र्येणैव सूर्यवत् अनेकधा स्थितं ज्ञायते इत्यर्थः । सूर्यवदित्युक्त्या अन्यत्रादृष्टशङ्का निरस्ता । 'मात्स्ये' पुराणे उक्तमिति शेषः ॥

( ५ ) सूर्यदृष्टान्तं स्पष्टयन् उक्तार्थे स्मृतिं चाह—प्रतिदृशमिति ॥ इदं च—

तमिममहमजं शरीरभाजां
हृदि हृदि विष्ठितमात्मकल्पितानाम् ।

इति पूर्वार्धेन सह व्याख्येयम् । तथाहि—'प्रतिदृशं' दृशं दृशं प्रति चक्षुरभिमानितया तन्नियामकत्वेनैश्वर्यवशात् 'नैकधा' नसमासः । अनेकरूपेण स्थितमर्कमिव तं यथा एकमेव समधिगच्छति ज्ञानी, त

समधिगतोऽस्मि विधूतभेदमोहः । इति च भागवते ॥ ११ ॥

( ६ ) सू—ॐ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचना
त् ॥ ॐ ॥ १२ ॥

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।

था अहमपि 'आत्मकल्पितानां' परमात्मसृष्टानां 'शरीरभाजां' जीवानां 'हृदि हृदि' प्रतिहृदयं 'धिष्ठितं' समग्ररूपेणैव विविधतया स्थितं 'तं' ईश्वरं 'इममजं' कृष्णं एकत्वसङ्ख्याविशिष्टमभिन्नं भेद मोहो भेदोऽस्तीति व्यामोहो विधूतः अवतारगुणादिषु निरस्तो भेद भ्रमो यस्य सः, समधिगतोऽस्मीत्यर्थः । करचरणादिरूपसामग्र्यमात्रेऽयं दृष्टान्तः न तु द्रव्यपूर्तिरूपेऽपि । सूर्यस्य ईश्वरवच्चक्षुरादिषु द्रव्यपूर्त्या स्थित्यभावादिति ध्येयम् । यद्वा—'प्रतिदृशं' दृशंदृशं प्रति मां प्रति मां प्रत्ययं वर्तत इति नैकधा बहूनामाभिमुख्येन स्थितमर्कमेकमेकमिव ईश्वरमप्यहं एकं समधिगतोऽस्मीत्यर्थः । न चास्मिन् पक्षे सूर्यस्य वस्तुतोऽनेकस्थानत्वाभावात्कथमस्य पूर्वप्रमाणगतसूर्यदृष्टान्तस्पष्टनरूपत्वमिति वाच्यम् । मां प्रति मां प्रतीति भ्रान्त्या बहुधा व्यवस्थितस्य सूर्यस्य यथैकत्वज्ञानमित्येवंस्पष्टनरूपत्वसम्भवात् । इति चेति । न केवलं मात्स्ये, किन्तु भागवते चोक्तार्थोऽभिहित इति चशब्दार्थः । प्रथमस्कन्धे युधिष्ठिरं प्रति भीष्मवाक्यमेतत् ॥

( ६ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे—नेति ॥ भेदवचनादित्यनेन भेदशब्दो वचनपरतया व्याख्यातः । शेषित्वादेरुपलक्षणमेतत् । तथा च 'कार्यकारणबद्धौ' इति भेदकधर्मोक्तिमुखेन भेदोक्तेर्विश्वाद्यात्मनः परस्यानुग्राह्यानुग्राहकभावान्न तस्याभेदो निर्दोषत्वं गुणपूर्णत्वं च युक्तमित्यर्थः । 'सर्वत्र हि' इत्युक्तानुमानं तु प्रतिपक्षितत्वादसाधकमिति भावः । 'कार्य' इति माण्डूकश्रुतौ कार्यशब्देनाज्ञानकार्यस्वातन्त्र्यभ्रमरूपं वा, तत्त्वप्रदीपोक्तरीत्या प्रकृतिकार्यदेहेन्द्रियादिविषयकममताभिमानादिरूपं वा, जागरणं जाग्रत्कालीनभ्रमकार्यभूतभ्रमरूपस्वप्नश्च विवक्षितः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वं कथमिति वाच्यम् । जाग्रत्कालीनभ्रमाहितसंस्कारात्स्वप्नकालीनजाग्रत्त्वभ्रमोत्पत्तिसम्भवात् । कारणशब्देन तु अज्ञानं वा, भ्रान्तिकारणप्रकृतिर्वा, 'स्वप्नादुत्थाने तैजसाद्विभक्तो वि

प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः॥ (मा.२-१६.)
इति भेदवचनान्नेति चेत्—

(७) न, 'एषत आत्माऽन्तर्याम्यमृतः' (बृ.५-७-३.) 'अय मेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्' (बृ.४-५-१.) 'अयं वै हरयो यं वै दश च सहस्राणि च बहू

श्वः' इति माण्डूकभाष्योक्तेः जाग्रदवस्थाकारणं स्वप्नो वा विवक्षितः। बद्धत्वं च सिद्धान्ते बन्धस्वामित्वम्। पूर्वपक्षे बन्धकत्वे अवान्तरभेदादेव रूपभेदो वक्तुं शक्यः। तथाऽपि सिद्धान्ते पूर्वपक्ष्यभिमतबद्धत्वनिरासाय तद्व्याख्यानपरस्मृत्युदाहरणात्पूर्वपक्षे बद्धत्वमेवाभिप्रेतम्। अत एव टीकायां उभयपरबद्धशब्दप्रयोगः। अत्र कार्यं च कारणं चेति, कार्यं कारणं यस्येति, कार्यस्य कारणमिति च विग्रहः। तथा च अविद्याकार्यभ्रमरूपजाग्रत्त्वेनाविद्यातत्कार्यस्वप्नरूपोभयकारणकजाग्रत्त्वेन च बद्धो विश्वः कार्यकारणबद्धः। तैजसोऽप्येवमुभयबद्धः। प्राज्ञस्तु कारणमात्रबद्धः। जाग्रत्स्वप्नयोः कारणं यदज्ञानं तन्मात्ररूपसुप्तिबद्धत्वात्कार्यकारणाकारेण द्वावपि बन्धौ तुर्याख्यरूपे न स्त इत्यर्थः॥

(७) परिहारांशं व्याचष्टे—नेति॥ नैतच्छ्रुतिबलेनेश्वररूपाणां भेदो वक्तव्य इत्यर्थः। कुतो नेत्यतः प्रवृत्तं प्रत्येकमतद्वचनादित्यंशं व्याचष्टे—एष त इति। इति प्रत्येकमित्यस्यानन्तरं परस्परं मूलरूपेणेति च शेषः। इदं च 'एष त आत्मा' इति प्रत्येकमभेदवचनात् 'अयमेव सः' इति प्रत्येकमभेदवचनात् 'अयं वै हरयः' इति प्रत्येकमभेदवचनादिति वाक्यत्रयेऽप्यावृत्त्या योज्यम्। तत्राद्ययोः प्रत्येकं परस्परमित्यस्यान्वयः। अन्तेन तु मूलरूपेणेत्यस्य। अनेन 'यः पृथिव्यां तिष्ठन्..योऽप्सु तिष्ठन्..योऽग्नौ तिष्ठन्' (बृ. ५-७.) इत्यादिना भगवतोऽनेकस्थानान्युक्त्वा तत्र तत्र प्रत्येकं 'एष त आत्माऽन्तर्याम्यमृतः' इति तत्तत्स्थानगतभगवद्रूपाणां परस्परमन्योन्यमभेदवचनात्। तथा 'यः पृथिव्यां तेजोमयोऽमृतमयो..योऽप्सु तेजोमयोऽमृतमयो..योऽग्नौ तेजोमयोऽमृतमयो..यो वायौ' (बृ. ४-५.) इत्यादिना भगवतोऽनेकस्थानस्थितत्वमभिधाय तत्र तत्र प्रत्येकं 'अयमेव स योऽयमात्मा....अयमेव स योऽयमात्मा' इति तद्रूपाणां परस्परमभेदवचनात्। तथा 'अयं वै हरयो यं वै दश' (बृ.४-५-१९.) इ

नि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्य
मयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ' (बृ. ४-५-
१९.) इति प्रत्येकमभेदवचनात् ॥ १२ ॥

ति भगवद्रूपाणां मूलरूपेणाभेदवचनादिति हेत्वर्थ उक्तो भवति । सू
त्रभाष्ययोः प्रत्येकमित्युक्तिरादरसूचनार्था । तत्प्रयोजनं तु सिद्धान्त
श्रुतीनां प्राबल्यसूचनेन ताभिः पूर्वपक्षश्रुतेर्बाधसूचनम् । तेन भेदाभे
दवचनयोः साम्यादनिर्णय इति शङ्का निरस्ता । ' एष ते ' इति बृह
दारण्यके उद्दालकं प्रति याज्ञवल्क्यवचनमेतत् । ' एषः ' पृथिव्यन्त
र्याम्येव तवान्तर्यामीत्यर्थः । एवमग्रादावपि । 'अयमेव सः ' इत्यारभ्य
' इदं सर्वम्' इत्यन्तमपि । तत्रैव मधुब्राह्मणे श्रुतम् । तदर्थस्तु-यः ' ते
जोमयोऽमृतमयः पुरुषः ' इति पूर्ववाक्ये तेजःपूर्णत्वनित्यस्वरूपत्वपू
र्णत्वगुणः परमात्मा अभिहितः सोऽयम् । अयं क इत्याशङ्कायामाह-य
इति । अयं स एव यः पूर्वोक्त आत्मा सर्वगो हयशीर्षाख्यः । 'इदं ' रूपं
'अमृतं ' नित्यमुक्तं 'सर्वमिदं ' जगत् 'ब्रह्म' तदधीनमिति । 'अयं वै हर
यः' इत्यारभ्य 'इत्यनुशासनम् ' इत्यन्तमपि बृहदारण्यके श्रुतम् । अनेन
हि परमात्मरूपाणामभेदे प्रमाणत्वेन ' इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता ह्यस्य हरयः शता दश' (ऋ.६-४७-१८.) इति मन्त्रमुदाहृत्य व्या
ख्यातः । ' हरयो ' हरिनामानो ' दश ' मत्स्याद्याः ' अयं वै ' मूलरू
प्येव चशब्दात्सूचितानि शतानि नारायणादिहरिनामकानि अयमेव ।
एवमृक्स्थं ' शता दश ' इत्येतद्व्यूहद्वयपरत्वेन व्याख्याय दशशता
नीति व्युत्क्रमेणान्वयेनैकव्यूहपरत्वेनापि व्याख्याति—सहस्राणीति ।
विश्वादीनि सहस्राणि अयं वा इत्यन्वयः । दशेत्येतद्बहुपर्यायमभ्युपेत्य
व्यूहान्तरपरत्वेनापि व्याख्याति-बहूनि चेति । परादीनि बहूनि च हर
योऽयं वा इत्यन्वयः । 'शतमनन्तं भवति' ( ) इति वचनाच्छ
तेत्येतदनन्तपर्यायमित्यभिप्रेत्य व्यूहान्तरपरत्वेनापि व्याचष्टे-अनन्ता
नि चेति । अजितादीन्यपि हरयोऽयं वा इत्यन्वयः । एवं मत्स्यादिपरमा
त्मरूपाणामभेदमुक्त्वा तन्महिमानमाह—तदेतदिति । ' तत् ' प्रसिद्ध
मेतद्रूपजातं ' ब्रह्म ' गुणपूर्णं न विद्यते पूर्वं यस्मात्तत् ' अपूर्वं ' अना
दि न विद्यते परमुत्तरं यस्मात्तत् ' अनपरम् ' अन्तशून्यं न विद्यतेऽन्त
रमन्यद्यस्य तत् ' अनन्तरम् ' न विद्यते बहिरन्यद्यस्य तत् ' अबाह्यं '

( ८ ) सू—ॐ ॥ अपि चैवमेके ॥ ॐ ॥ १३ ॥
एवमभेदेनैव चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति ।
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमश्शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥ (मा. ४-७.)

इदमेव सर्वस्मादन्तरं बाह्यं चेत्यर्थः । ब्रह्मायमात्मा सर्वमनुभवतीति 'सर्वानुभूः' सर्वज्ञ इति 'वेदानुशासनं' वेदव्याख्यानमित्यर्थः । पुनर्ब्रह्मेत्युक्तिस्तात्पर्यार्था, अनेकविशेषणसम्बन्धार्था वा । यद्वा—ब्रह्मेत्यनुवादोऽतो न पौनरुक्त्यम् । तथा च यत् ब्रह्मायमात्मा सर्वानुभूरित्यन्वयः । विधेयविवक्षया अयमात्मेति पुलिङ्गप्रयोगः ॥

( ८ ) ननु नाभेदश्रुतिभिः भेदश्रुतेः बाधो युक्तः । तासां कतिपयरूपविषयत्वेन सावकाशत्वात् । नापि 'अयं वै हरयः' इत्यन्तिमश्रुतिविरोधः । तत्र परस्परमभेदानुक्तेः, मूलरूपेणापि 'एष त आत्मा......अयमेव सः' इतिवत् स्पष्टमभेदाप्रतीतेः । अतो भेदश्रुतिबलात् विश्वादीनां भेद एवेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—अपीति ॥ अत्रापिः तत्त्वप्रदीपोक्तरीत्या न केवलं काण्वा एवं पठन्ति, किन्तु 'एके' अन्ये माण्डूकेया अपीति समुच्चयार्थः। एवमित्यनुवादः, अभेदेनेति व्याख्यानम् । इत्थंभूतलक्षणे तृतीया । तथा च अभिन्नत्वप्रकारं प्राप्तान्येवेत्यर्थः । विश्वाद्यनन्तरूपाणीति शेषः । चशब्दादित्यनन्तरं विष्णोस्समुचितमिति शेषः । द्वितीयान्तशब्दयोरेके पठन्तीत्यनेनान्वयः । यद्वा—अभेदेनेति सहयोगे तृतीया । तथा च चशब्दबोधितं 'अनन्तरूपत्वं' विश्वादिरूपाणामनन्तत्वं बहुत्वं अभेदेन सहैके पठन्तीत्यर्थः । चस्समुच्चये । इति पठन्तीत्यन्वयः । इतिरावर्तते । स च हेतौ । तथा च इति यतः पठन्ति अतो न भेदश्रुतिमवलम्ब्य विश्वादिभेदो ग्राह्यः, न भेदश्रुतिः अभेदश्रुतिविरोधिनीति वा अध्याहारेणान्वयः । अनेन सूत्रे पठन्तीत्यस्य यतोऽतश्शब्दयोरुक्तसाध्यवाक्यस्य च अध्याहारः कार्य इति सूचितम् । श्रुत्यर्थस्तु—यद्यपि 'अमात्रो' भिन्नांशशून्यः तथाऽपि 'अनन्तमात्रः' अभिन्नानन्तांशवान् 'द्वैतस्योपशमः' द्वितीयेन प्रकारेणेतं द्वीतं इण् गतौ, भावे निष्ठा, द्वीतमेव द्वैतं, मिथ्याज्ञानं तस्योपशमस्तन्नाशकृत् । तत्त्वप्रदीपे तु—'अमात्रः' परिमाणरहितः 'अनन्तमात्रः' अनन्तरूपः

(९) अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते ।

(१०) ब्रह्मतर्के च ।

बद्धो बन्धादिसाक्षित्वाद्भिन्नो भिन्नेषु संस्थितेः ।

---

'शिवः' सुखात्मकः 'ओंकारः' ओमित्याक्रियमाणः प्रणववाच्यः परमात्मा येन जीवेन विदितः स एव मुनिः न त्वितर इति 'द्वैतस्योपशमः' भेदरहित इति व्याख्यातम् । पठन्तीत्यन्वयः ॥

(९) तर्हि का गतिः 'कार्यकारणबद्धौ' ( मा.२ - १६. ) इति भेदव्यपदेशस्येत्यत आह—अभेदेऽपीति ॥ विश्वादिरूपाणामभिन्नत्वेऽपीत्यर्थः । यद्यपितथाऽपीत्यर्थे अपिशब्दः । अनेन सौत्रापिशब्दस्यार्थान्तरं दर्शितम् । भेदव्यपदेशो युज्यत इति । विश्वादयो बद्धाः तुरीयस्त्वबद्ध इति भेदकधर्मोक्तिमुखेन भेदोक्तिर्युज्यते इत्यर्थः । अनेनैवंशब्दस्यार्थान्तरं दर्शितम् । कथं युज्यते अत आह—स्थानभेदादिति । अक्ष्यादितदन्यरूपस्थानभेदादित्यर्थः । तथा चाक्ष्यादिस्थो बद्धः अन्यत्रगस्त्वबद्ध इति भेदकधर्मोक्तिः स्थानभेदाद्युज्यते । तथा भेदोक्तिरपि स्थानगतभेदस्य स्थानिन्युपचाराद्युज्यत इत्यर्थः । 'अनन्योऽप्यन्यशब्देन' इत्यानन्दमयनयोदाहृतप्रमाणे तु अभेदे भेदव्यपदेशः अचिन्त्यैश्वर्यात् युज्यत इत्युक्तम् । तत् भेदव्यपदेशस्य मुख्यत्वाभिप्रायकम् । अभिन्नस्यैकस्य स्थानभेदोऽपि कुत इत्यत आह—ऐश्वर्येति । अचिन्त्यशक्त्याख्योपायादित्यर्थः । हेतुसाधकहेतुसमुच्चये चशब्दः ॥

(१०) ननु निर्दोषस्य हरेः कथं बन्ध इत्याशङ्कां परिहर्तुमुक्तार्थे चशब्दसूचितां स्मृतिमाह—ब्रह्मतर्के चेति ॥ न केवलमस्माभिरिति समुच्चये शङ्कापरिहारसमुच्चये वा चशब्दः । बन्धादीति । जीवस्य जाग्रदादिभ्रमकारणतया बन्धकर्तृत्वादित्यर्थः । आदिशब्देन दुःखादिदोषो गृह्यते । बद्ध इत्युपलक्षणम् । दुःखीत्यपि द्रष्टव्यम् । निर्दोषेति विशेषणयोः कर्मधारयो बहुलग्रहणात् । अपिः प्रत्येकं सम्बध्यते । तथा च परमेश्वरो यद्यपि निर्दोषः, तथाऽपि 'बन्धादिसाक्षित्वात्' अन्यगतबन्धदुःखादिद्रष्टृत्वात्तत्स्वामित्वाच्च बद्धादिरिति कथ्यते । एवं परमेश्वरो यद्यपि 'अद्वयरूपः' अभिन्नरूपः । तथाऽपि 'भिन्नेषु' अक्ष्यादिषु संस्थितेर्निमित्ताद्भिन्न इति कथ्यते इति योजना । इति ब्र

निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः ॥ इति ॥ १३ ॥

——*——

९. अधिकरणम् ॥

( १ ) रूपवत्त्वादनित्यत्वमिति ।

( २ ) अतो वक्ति—

सू—ॐ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म ।

---

ह्यतर्क इत्यन्वयः । उक्तमिति शेषः ॥ ८ ॥

॥ इति न स्थानतोऽप्यधिकरणम् ॥

——:*:——

९. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्णोरप्राकृतरूपं समर्थ्यते । पूर्वपक्षयति—रूपवत्त्वादिति ॥ शुक्लादिरूपवत्त्वेन विग्रहवत्त्वेन चोक्तत्वादित्यर्थः । अत एव च तत्त्वप्रदीपे 'रूपोपन्यासाच्च, पुरुषविधमपि' इत्यादिना रूपवत्त्वमुक्तमिति रूपशब्दितविग्रहवर्णोभयप्रापकसूत्रोदाहरणं कृतम् । न चैवं रूपशब्देन शुक्लादिगुणप्रतीतिः स्यात् अतः—शिरःपाणीत्युक्तमिति सुधाविरोध इति वाच्यम् । तस्यास्तन्मात्रप्रतीतिस्स्यादित्यर्थकत्वात् । 'अनित्यत्वं' देहतो नाशवत्त्वं, विष्णोः स्यादिति शेषः । एवं रूपवत्त्वादित्येतत् रूपवत्त्वेन 'रुक्मवर्णं, आदित्यवर्णम्' इत्यादिश्रुतिसिद्धत्वादित्यपि व्याख्येयम् । तेन हेत्वासिद्धिः परिहृता । अनित्यपदं च विष्णो रूपवत्त्वे 'अरूपमव्ययम्' 'तदरूपमनामयम्' इत्यादिश्रुत्यप्रामाण्यं च स्यादित्यप्रामाण्यपरतयाऽपि व्याख्येयम् । यथा 'अनित्यमुच्यते' (१-२-१.) इति जैमिनिसूत्रे बाधकद्वयमुक्तं भवति, एवमरूपत्वपक्षेऽपि बाधकद्वयं टीकोक्तमनुसन्धेयम् । तथा च पक्षद्वयेऽपि भक्तिरनुपपन्नेति पूर्वपक्ष्यभिप्रायः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'प्रकृत्यादिप्रवर्तकत्वेन' तन्नियामकत्वेनेति । अनेन तच्छब्दार्थो दर्शितः । आदिशब्देन भूतं गृह्यते । उत्तमत्वादित्यनेन प्रधानत्वादित्येतत्प्रकारान्तरेण व्याख्यातम् । तत्र पूर्वं उत्तमत्वे प्रकारप्रदर्शनरूपम् । सूत्रेऽरूपमिति वाच्ये रूपरूपिभेदनिवृत्त्यर्थमरूपवदित्युक्तं, तद्व्याचष्टे—नेति । प्राकृतभौतिकरूपवद्भिन्नमेवेत्यर्थः । न तु तद्वदित्येवकारार्थः । सूत्रे तदि

( ३ ) हिशब्दात् ' अस्थूलमनणु ' ( बृ. ५ - ८ - ८. ) इत्यादि श्रुतेश्च ।

( ४ ) भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः ।
अरूपवानतः प्रोक्तः क्व तद् व्यक्ततः परे ॥
इति मात्स्ये ॥ १४ ॥

( ५ ) सू—ॐ ॥ प्रकाशवच्चावैयर्थ्यम् ॥ ॐ ॥ १५ ॥

---

ति व्यस्तं समस्तं चेत्याशयेन व्यस्ततच्छब्दार्थमाह—ब्रह्मेति । तस्मात् नानित्यत्वं ब्रह्मणः शङ्क्यमिति वाक्यशेषः ॥

( ३ ) ननु ब्रह्मणः प्रकृत्यादिसामर्थ्येन देहबन्धाभावेऽपि स्वेच्छालीलादिनिमित्तं रूपं किं न स्यादित्याशङ्कावारकतया हिशब्दं व्याचष्टे—हिशब्दादिति ॥ सूचिताया इति शेषः । श्रुतेरित्यस्य नेतिवाक्येनान्वयः । तथा च निमित्तान्तरकृतरूपपदोक्तदेहाभ्युपगमे श्रुतावरूपमिति सामान्यनिषेधो न स्यादिति भावः । न केवलमुक्तयुक्तेरिति चशब्दार्थः । व्याख्यातेयं श्रुतिः अक्षरनये । अनेन सूत्रे नपुंसकोक्तिरेतच्छ्रुत्यनुसारादिति ध्येयम् ॥

( ४ ) सूत्रार्थे स्मृतिं चाह—भौतिकानीति ॥ यस्मात् सर्वाणि 'रूपाणि' शरीराणि पाञ्चभौतिकानि । उपलक्षणमेतत् । आव्यक्तिकानि च । यस्माद्वा 'असौ' परमात्मा भूतेभ्यः 'परः' तत्प्रवर्तकत्वेन तदुत्तमः तस्मात् 'अरूपवान्' तत्कार्यरूपरहितः । ननु भूतपरे भौतिकरूपाभावेऽपि अव्यक्तकार्यं रूपं किं न स्यादित्यत आह—क्वेति । 'अव्यक्ततः' प्रकृतितः 'परे' तत्प्रवर्तकत्वेन तदुत्तमे अत एव तत्कृतबन्धशून्ये ब्रह्मणि 'तत्' आव्यक्तिकं रूपमपि 'क्व' नेत्यर्थः । यद्वा—तत्त्वप्रदीपोक्तरीत्या कैमुत्यमेतत् । अस्मिन् पक्षे नोपलक्षणम् । तच्छब्देन भौतिकरूपस्यैव परामर्शः । तथा च यदा भूतेभ्यः परे भगवति भूतकार्यदेहो न, तदा भूतकारणाव्यक्तमप्यतीत्य वर्तमाने तस्मिन् तदव्यक्तकार्यभूतकार्यशरीरं नेति किमु वक्तव्यमित्यर्थः । यदा भूतपरत्वमेव भौतिकदेहाभावे हेतुः, तदा सुतरां भूतपराव्यक्तपरत्वमिति भावः । एवं यतो भौतिकानि रूपाणि अनित्यत्वव्याप्तानि, असौ च भूतेभ्यः परत्वात्तद्रहितोऽतो नानित्यताशङ्का कार्येत्यध्याहारेण तत्त्वप्रदीपोक्तं योजनान्तरं द्रष्टव्यम् । इति मात्स्य इति । उक्तमिति शेषः ॥

( ५ ) ननु ब्रह्मणो रूपाभावे 'रुक्मवर्णम्' इत्यादिरूपित्वश्रुति

'यदा पश्यः पश्यते रुक्मवर्णम्' ( मु.३-१-३. ) 'श्यामाच्छबलं प्रपद्ये' ( छा.८-१३-१. ) 'सुवर्णज्योतिः' ( तै. ३- १०. ) इत्यादिश्रुतीनां च न वैयर्थ्यम् , विलक्षणरूपवत्त्वात् ।

वैयर्थ्यं, सौन्दर्यसौलक्षण्याद्यभावश्चेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—प्रकाशवच्चेति ॥ श्रुतीनामित्यनेन वैयर्थ्यसम्बन्धी दर्शितः । 'यदा' इति मुण्डकश्रुतिरदृश्यत्वनये व्याख्याता । 'श्यामात्' इति छन्दोगश्रुतिः । 'श्यामो हृदि स्थितो विष्णुः शबलो विश्वरूपवान्' इति तद्भाष्ये व्याख्याता । यो हृदिस्थो विष्णुः श्यामरूपवान् तस्मात्तदुपासनानन्तरं यो हृदि स्थितः 'शबलो' विश्वरूपवान्नानावर्णयुक्तस्तमहं प्रपद्ये उपासे इति तदभिप्रायः । हृद्गतोपास्तिसाध्यां विश्वरूपोपास्तिमाहेति छान्दोग्यटीकोक्तेः यो हृदिस्थो विष्णुस्तदुपासनानन्तरं यो विश्वरूपी व्याप्तरूपी तमुपासे इत्यर्थः । 'सुवर्णज्योतिः' इति वेदान्तरवाक्यं तैत्तिरीयगतं वा । तस्य तद्भाष्ये सुष्ठु परमानन्दो हरिः ज्योतिः प्रेरको यस्येति मुक्तपरतया व्याख्यानेऽपीह ब्रह्मणो रुक्मवर्णाभिधायकतयाऽपि व्याख्यानादविरोधः । आदिशब्देन 'आदित्यवर्णम्' इत्यादिकं गृह्यते । श्रुतीनां चेति चशब्दः न केवलमरूपित्वश्रुतीनां न वैयर्थ्यं, अपि तु रूपित्वश्रुतीनां च 'न वैयर्थ्यं' विषयाभावकृताप्रामाण्यमिति समुच्चये । वैयर्थ्यं चेति भिन्नक्रमेणान्वये सौन्दर्याद्यभावसमुच्चये वा चशब्दः । कुतो रूपश्रुतिवैयर्थ्याभावः सौन्दर्याद्यभावो वेत्यतस्तत्र हेतुतया प्रकाशवदित्यंशं मतुबभिप्रायेण व्याचष्टे—रूपवत्त्वादिति । पञ्चमीनिर्देशेन यतः तत् प्रकाशवद्रूपवदिति हेतुर्दर्शितः । यत् चशब्देनारूपित्वश्रुतीनामप्यवैयर्थ्यमनित्यत्वराहित्यं च सूचितम्, तदयुक्तम् । ब्रह्मणो रूपित्वे अनित्यत्वस्यारूपित्वश्रुतिवैयर्थ्यस्य चापत्तेरित्यतो नैवमित्याह सूत्रकृत—अवैयर्थ्यमिति । तस्यार्थो—विलक्षणेति । प्राकृतभौतिकरूपविलक्षणेत्यर्थः । अरूपवच्चेति चशब्दार्थो वाऽयम् । तथा चानित्यत्वादिव्याप्तप्राकृतादिरूपाभावान्न ब्रह्मणोऽनित्यत्वं, न वाऽरूपित्वश्रुतिवैयर्थ्यं प्राकृतादिरूपाभावविषयत्वात्तस्या इति भावः । एवं न वैयर्थ्यमित्येतत् व्युत्पत्त्यभावादरूपित्वश्रुतेरर्थाबोधकत्वं नेत्यपि व्याख्येयम् ॥

( ६ ) यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः ॥ १५ ॥

( ७ ) सू—ॐ ॥ आह च तन्मात्रम् ॥ ॐ ॥ १६ ॥

( ६ ) ननु यद्यस्ति परमात्मनो रूपं, तर्हि कथं तस्य प्रसिद्धरूपवैलक्षण्यमात्रेणारूपित्वोक्तिरित्याशङ्कोत्तरत्वेनापि प्रकाशवदित्येतद्व्यन्ताभिप्रायेण व्याचष्टे—यथेति ॥ आदिशब्देन तेजोऽन्तरं गृह्यते । विद्यमाने इत्यतः प्राक् गृहान्तरित्युपस्कार्यम् । अपिशब्दो विरोधसूचकः । 'वैलक्षण्यात्' सौरदीपादिप्रकाशवैलक्षण्यात् चक्षुरादिप्रकाशस्येति विपरिणामेनान्वयः । अप्रकाशादीति । नास्ति प्रकाश इत्यादि व्यवहार इत्यर्थः । आदिशब्देनान्धकारावृतमिदं गृहमित्यादिव्यवहारो गृह्यते । व्यवहार इत्यनेन प्रकाशशब्दः प्रकाशप्रतियोगिकाभावव्यवहारपर इति सूचितम् । तथा प्रकृतेऽपीति वाक्यशेषः । एवं प्रकाशवदित्येतत् परमात्मनि 'आत्मैवास्य ज्योतिः' इति प्रकाशशब्दप्रयोगवदित्यपि व्याख्येयम् । पूर्वसूत्रात्तदिति पदं विपरिणाम्येहानुवर्तते । तदपि श्रुतिब्रह्मोभयपरम् । तथा चायं सूत्रार्थः—यतस्तद्ब्रह्म 'प्रकाशवत्' रूपवद्विग्रहवत् शुक्लादिरूपवच्च । शुक्लादिरूपवतस्तस्य ब्रह्मणोऽरूपत्वेऽपि तासां रुक्मवर्णादिश्रुतीनां 'अवैयर्थ्यम्' वैयर्थ्यं नास्ति, नापि सौन्दर्याद्यभावः । न केवलं रूपित्वश्रुतीनामेवावैयर्थ्यम्, किन्तु तस्मिन् ब्रह्मणो रूपित्वपक्षे तासां ब्रह्मणोऽरूपित्वबोधकानां 'अरूपमव्ययम्' इत्यादिश्रुतीनां च । नापि तस्यानित्यत्वम् । कुतो ? यतः तद्ब्रह्म 'अरूपवत्' अनित्यत्वव्याप्तप्राकृतभौतिकविलक्षणरूपवत् यतस्तस्य ब्रह्मणः 'अवैयर्थ्ये' अत्यन्तविलक्षणार्थत्वं विलक्षणरूपवत्त्वमत इति वा । ननु विलक्षणरूपवत्त्वे कथमरूपत्वश्रुत्यवैयर्थ्यम् ? यतः 'प्रकाशवत्' प्रकाशविषयव्यवहारवत् । यथाऽन्धकारे गृहान्तर्नयनादिप्रकाशे विद्यमानेऽपि तस्य सौरादिप्रकाशविलक्षणत्वात्तदभावे नास्ति प्रकाश इति व्यवहारो भवति, तथा रूपित्वेऽपि विलक्षणरूपवत्त्वात् ब्रह्मणः अरूपित्वश्रुत्यवैयर्थ्यं भवति । न चैवं रूपशब्दस्य प्राकृतादावेव व्युत्पन्नत्वेनात्र व्युत्पत्त्यभावात् रूपित्वश्रुतिवैयर्थ्यम् । यतः 'प्रकाशवत्' अप्रसिद्धप्रकाशेऽपि परमात्मनि 'आत्मैवास्य ज्योतिः' ( बृ. ६-६-६. ) इति प्रकाशार्थकज्योतिश्शब्दव्यवहारवदुपपद्यते अत इति ॥

( ७ ) ननु कथं ब्रह्मणो विलक्षणरूपवत्त्वं, येनानित्यत्वादिदोषाभा

वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वं 'ऐका
त्म्यप्रत्ययसारम्' (मा. २-७.) इति ।

(८) आनन्दमात्रमजरं पुराणं
एकं सन्तं बहुधा दृश्यमानम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा

---

घः, सर्वरूपाणां प्रकृत्याद्यात्मकत्वनियमात् इतररूपापेक्षया तद्रूपस्य वैलक्षण्यानुक्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—आह चेति ॥ सूत्रे भाष्ये च चोऽवधारणे । उच्यत एवेति सम्बध्यते । न तु नोच्यत इत्येवशब्दार्थः । 'रूपस्य' शरीरस्येति बुद्ध्या विविक्तस्य विपरिणतस्य तत्पदस्य व्याख्यानम् । विज्ञानानन्दमात्रत्वमिति । ज्ञानानन्दाद्येकस्वरूपत्वमित्यर्थः । अनेन तच्छब्दः तद्गुणसारत्वादित्यत्र प्रकृतज्ञानानन्दगुणवाची भावनिर्देशश्चायमिति सूचितम् । इदं च वैलक्षण्यपदेन समानाधिकृततयाऽन्वेतव्यम् । मात्रपदेन रूपस्य प्राकृतत्वनिवृत्तिः । इति श्रुत्योच्यत इत्यन्वयः । ब्रह्मणो ज्ञानानन्दाद्यात्मकत्वोक्त्या तद्रूपस्यापि तदुक्तमित्यभिप्रायः । अनेन यतः 'ऐकात्मप्रत्ययसारम्' इति माण्डूकश्रुतिः तस्य ब्रह्मणो रूपस्य तन्मात्रत्वं ज्ञानानन्द्राद्येकस्वरूपत्वं 'आह च' वक्त्यैव अतो न वैलक्षण्यानुक्तिरिति सूत्रार्थ उक्तो भवति । तथा च पूर्ववाद्युक्तहेतुरसिद्ध इति भावः । एकः प्रधानः स चासावात्मा च पूर्णश्चैकात्मा तस्य भावः ऐकात्म्यम्, प्रत्ययो ज्ञानं, ऐकात्म्यं प्रत्ययश्चेत्युभयं सारः स्वरूपं यस्य तदैकात्म्यप्रत्ययसारमिति श्रुत्यर्थः । यद्यपि माण्डूकभाष्ये

एकः प्रधान उद्दिष्टः आत्मा पूर्णत्वतश्श्रुतः ।
तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितम् ॥
प्रत्ययो ज्ञानरूपत्वात्सार आनन्दरूपतः ॥

इत्यानन्दरूपत्वं सारशब्दार्थो, न स्वरूपमित्युक्तम् । तथा व्यासतीर्थीये—स्वार्थे ष्यञ् । ऐकात्म्यस्य ब्रह्माभेदं चाश्रित्य ऐकात्म्यश्चासौ प्रत्ययश्चासौ सारश्चेति विग्रहः प्रदर्शितः । तथाऽपि 'आनन्दमात्रम्' इत्युत्तरश्रुत्यवैयर्थ्यायेह स्वरूपार्थतया सारशब्दो व्याख्यातः ॥

(८) इह सारशब्दस्य स्वरूपार्थत्वादानन्दरूपत्वे श्रुत्यन्तरं पठति—आनन्दमात्रमिति । आनन्दैकस्वरूपं, न तु प्राकृतं, कुतो ? यतः

एतेषां सुखं शाश्वतं नेतरेषाम् ।
इति चतुर्वेदशिखायाम् ॥ १६ ॥

( ९ ) सू—ॐ ॥ दर्शयति चाथो अपि स्मर्यते ॥ ॐ ॥ १७ ॥
दर्शयति चानन्दरूपत्वं 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' (मु. २-२-८.) इति ॥

( १० ) शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।

---

'अजरं' सदा दृढं 'पुराणं' अनादिभूतं 'एकं' सर्वोत्कृष्टं 'सन्तं' निर्दुष्टं, एकं सन्तमिति वा 'बहुधा' विश्वाद्यात्मना मत्स्यादिरूपैर्वा दृश्यमानं 'आत्मस्थं' देहस्थं परमात्मानं 'ये धीराः' ज्ञानिनः 'अनुपश्यन्ति' साक्षात्कुर्वन्ति तेषां 'शाश्वतं सुखं' मोक्षो भवति, नान्येषामित्यर्थः । इतीति । इति चतुर्वेदशिखायां च वैलक्षण्यमुच्यत इत्यन्वयः । अनेन सौत्रचशब्दः श्रुतिसमुच्चयेऽपीति सूचितम् ॥

( ९ ) ननु उक्तश्रुतिद्वये ब्रह्मणो ज्ञानानन्दाद्यात्मकत्वमेवोच्यते, न त्वानन्दादेर्ब्रह्मशरीरत्वम् । अतो रूपिपदोक्तदेहित्वश्रुतेर्लोकविलक्षणरूपविषयत्वाभावाद्वैयर्थ्यस्, सौन्दर्याभावश्चापरिहृतः । न च रूपरूपिणोरभेदादिति तत्त्वप्रदीपे तदपि श्रुत्यभिप्रेतमित्युक्तमिति वाच्यम् । स्पष्टोक्त्यभावेनानिर्णयादित्याशङ्कां परिहरन्सूत्रं पठित्वा व्याचष्टे—दर्शयतीति ॥ चशब्दो रूपत्वमित्यतः परो योज्यः । 'आनन्दरूपत्वं' ब्रह्मशरीरत्वमिति । अनेन सूत्रेऽपेक्षिताध्याहारो दर्शितः । न केवलमानन्दस्य ब्रह्मात्मकत्वं, किन्तु तच्छरीरत्वं चेति चशब्दार्थः । इतीत्यनन्तरं भाष्ये सूत्रे च श्रुतिरिति शेषः । श्रुतिर्दर्शयतीत्यन्वयः । 'आनन्दरूपं' आनन्दशरीरं अत एव 'अमृतं' देहतो नाशरहितं यद्विभाति तद्ब्रह्म 'विज्ञानेन' श्रवणादिजनितसाक्षात्कारेण 'परिपश्यन्ति' विषयीकुर्वन्ति ज्ञानिन इत्याथर्वणश्रुत्यर्थः ॥

( १० ) सूत्रे अथोपदं ज्ञानरूपार्थान्तरवाचि । अपिस्समुच्चये । असन्धिः प्रगृह्यत्वात् । तथा च न केवलमानन्दस्यैव ब्रह्मात्मकत्वं तद्रूपत्वं चोच्यते श्रुत्या, किन्तु ज्ञानस्यापि तदात्मत्वं तद्रूपत्वं चोच्यते स्मृत्येति सूत्रखण्डार्थमभिप्रेत्य तां स्मृतिं पठति—शुद्धेति ॥ इति मात्स्ये स्मर्यत इत्यन्वयः । तद्वचनाख्यस्मृत्येदमुच्यत इति यावत् । यतिः 'शुद्धस्फटिकसङ्काशं' तद्वच्छुक्लवर्णं निरञ्जनं वासुदेवमेव परं प्र

चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः ॥
इति च मात्स्ये ॥ १७ ॥

धानं 'ऋते' ज्ञानाय 'चिन्तयीत' ध्यायीत। 'ज्ञानरूपात्' ज्ञानशरीराद्वासुदेवादृते 'अन्यं' ब्रह्मादिकं परत्वेन न चिन्तयीतेत्यर्थः । न चैतत्सूत्रे एव ज्ञानानन्दयोः ब्रह्मरूपत्वे स्पष्टश्रुत्युक्तेरार्थिकोक्तिरूपपूर्वसूत्रवैयर्थ्यमिति वाच्यम् । स्वरूपस्यापि ज्ञानाद्यात्मकत्वसिद्ध्यर्थं तदुपन्यासात् । न चानर्थक्यम् । ब्रह्मतच्छरीरयोरभेदेन ब्रह्मणो ज्ञानानन्दाद्यात्मकत्वे तच्छरीरस्यापि तल्लाभाभिप्रायेण तदुदाहरणोपपत्तेः। अत्र तत्त्वप्रदीपे दर्शयति चानन्दस्य स्वरूपत्वं 'आनन्दरूपम्' इत्यादि । अथो च दर्शयति—

सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
सज्ज्ञानानन्ददेहस्तु सज्ज्ञानानन्दपादवान् ॥

इति । अथो च दर्शयति—

ब्रह्मणस्तद्गुणानां च भेदद्दर्श्यधरं तमः ।
भेदाभेदप्रदर्शी च तम एवोत्तरं विशेत् ॥
विजानीयात्ततो ब्रह्म सदा सर्वगुणात्मकम् ।
गुणानां च विशेषोऽस्ति न विशेषः कथं च न ॥
ते सर्वेऽपि गुणाः पूर्णास्तच्छरीरः परः स्मृतः ।
आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु यं जनाः ॥
अदेहं भूतदेहं वा विदुस्ते चाधरं तमः ।
तथा प्रकृतिदेहज्ञाः कर्मदेहविदोऽपि वा ॥
तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।
चिदानन्दभुजं ज्ञानसुखैकपरमाङ्गुलिम् ॥
आ देहादा नखाग्रेभ्यः पूर्णचित्सुखशक्तिकम् ।
प्रत्येकं तु गुणांस्तांस्तु सदा सर्वगुणात्मकान् ॥
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन् ॥

इति पैङ्गिश्रुतिरिति । एवं दर्शयति इत्येतत् अथो इत्युत्तरत्रापि संयोज्य व्याख्यातम् । तत्पक्षे न केवलं दर्शयति, किन्तु स्मर्यतेऽपीत्यपिशब्दार्थः ॥ ९ ॥

॥ इति अरूपाधिकरणम् ॥

१०, अधिकरणम् ॥

( १ ) सू—ॐ ॥ अतएव चोपमा सूर्यकादिवत् ॥ ॐ ॥ १८ ॥

यस्मादेवं परमेश्वररूपाणां मिथो न कश्चिद्भेदः । अतः सादृश्याज्जीवस्यापि तथा स्यादिति, तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ।

१०, अधिकरणम् ॥

( १ ) अत्राधिकरणे ईश्वरस्य जीवाद्भेदाभेदो निराक्रियते । अत्र पूर्वपक्षानुवादरूपं अत एवोपमेति सूत्रांशं व्याकरोति—यस्मादिति॥ योजना तु 'यस्मात्' यत एवं 'न स्थानतोऽपि' इत्याद्युक्तप्रकारेण परमेश्वररूपाणां परमेश्वरस्य च 'मिथः' परस्परं 'कश्चित्' अन्योन्याभावरूपो वा हीनाधिकभावरूपो वा अनुग्राह्यानुग्राहकभावरूपो वा भेदो न, किन्त्वभेद एव सिद्धोऽत इति दृष्टान्तलाभादिति भावः । न तत्रान्योऽन्वेषणीय इत्येवशब्दार्थः । एवं सौत्रातःशब्दपरामृश्यं प्रदर्श्यावृत्त्यभिप्रायेण समनुकृत्य तस्यार्थान्तरमाह—सादृश्यादिति । चित्त्वादिना परमेश्वरसादृश्यादित्यर्थः । सूत्रे 'ततो ह्यस्य' इत्यतोऽनुवृत्तस्यास्येत्यस्यार्थमाह—जीवस्येति । न केवलं परमेश्वररूपाणामित्यपरर्थः । अनेन पूर्वत्रापि चशब्दसम्बन्धो ज्ञापितः । उपमेत्यस्यार्थः—तथेति । परमेश्वराभेद इत्यर्थः । स्यादिति शेषोक्तिः । स्यादितीत्यनन्तरं प्राप्ते तत्परिहारायेति शेषः । अनेन सूत्रे 'न स्थानतोऽपि' इत्यतो नञनुकर्षोऽभिप्रेयते ॥ कुतो नेत्यतस्तत्र हेतुतयाऽऽगतं सूर्यकादिवद्वेत्यंशं सिद्धान्त्यभिप्रेतानुमानपरतया व्याचष्टे—तस्येति । जीवस्येत्यर्थः । 'प्रतिबिम्बत्वं' ईशप्रतिबिम्बत्वाख्यं हेतुमुक्त्वा सूर्यकादिवदिति दृष्टान्तोक्त्यैवेति शेषः । 'चशब्देन' उत्तरत्राप्यन्वितेन 'भेदं' परमेश्वरेणात्यन्तभेदरूपं साध्यं 'दर्शयति' समुच्चिनोति सूत्रकार इत्यर्थः । तत्त्वप्रदीपरीत्या तु रूपमित्यादिका श्रुतिस्तस्य प्रतिबिम्बत्वमुक्त्वा भेदं दर्शयतीति चशब्देन सूत्रकारो दर्शयतीत्यर्थः । यद्वा—भेदाभेदपूर्वपक्षस्य बहिरेव लाभादत एवेत्यादि समग्रसूत्रं सिद्धान्त एवेत्याह—यस्मादिति । ज्ञानैश्वर्यादाविति शेषः । भेदशब्दश्च विशेषवाची । अत इत्यावर्ततेऽपीति च । तथा च यस्मादेवमुक्तरीत्या परमेश्वररूपाणां तत्स्वरूपांशानां मत्स्यादीनां परमेश्वरस्य च मिथो ज्ञानैश्वर्यादौ न कश्चिद्विशेषः, तस्मादेव जीवस्यापि अतः परमेश्वरस्वरूपां

(२) रूपं रूपं प्रतिरूपो बभूव (बृ. ४-५-१९.)
बहवस्सूर्यका यद्वत्सूर्यस्य सदृशा जले ।
एवमेवात्मका लोके परात्मसदृशा मताः ॥ ( )
इत्यादि ।

शत्वे 'सादृश्यात्' मत्स्यादिसाम्यात् 'तथा स्यात्' परमेश्वरस्वरूपांशवत् ज्ञानैश्वर्याद्यविशेषः स्यादिति 'अतः' एतदर्थमेवानिष्टप्रसङ्गपरिहारार्थमेव अत एवोपमेति पदैः 'तस्य' जीवस्य तथाऽपि अंशत्वेऽपि 'तथा' प्रतिबिम्बभाव एवेति प्रतिबिम्बभावमेवोक्त्वा 'चशब्देन' अतस्तेन हेतुना सूर्यकादिदृष्टान्तेन 'भेदं' साध्यं समुच्चिनोति सूत्रकार इत्यन्वयः ॥

(२) जीवस्येश्वरप्रतिबिम्बत्वमेव कुत इत्यतश्चशब्दसूचितश्रुतेरेवेत्याह—रूपमिति ॥ द्वितीयव्याख्याने तु युक्तिसिद्धप्रतिबिम्बत्वे दार्ढ्याय श्रुत्युपन्यासः । व्याख्यातेयं श्रुतिरंशनये । 'जले' जलादौ 'सूर्यकाः' तत्र प्रतिबिम्बिताः सूर्याः 'यद्वत्' यथा सूर्यस्य सदृशा मताः, एवमेव लोके प्रमिताः 'आत्मकाः' ईशप्रतिबिम्बभूता अमुख्यात्मानः परमात्मसदृशा मता इति श्रुत्यन्तरार्थः । अत्राद्यश्रुतौ रूपशब्दोक्तं प्रतिबिम्बत्वं द्वितीयश्रुत्या परमात्मसदृशा इति व्याख्यातमिति ज्ञेयम् । इत्यादीत्यनन्तरं श्रुतिरिति शेषः । अत एव तत्त्वप्रदीपे श्रुतिर्दर्शयतीत्युक्तम् । टीकाकृताऽपि श्रुतिरित्यध्याहारस्य सिद्धत्वादित्याशयेन प्रतिबिम्बत्वं दर्शयतीत्यन्वययोग्यपदद्वयमनुषज्यते इत्युक्तम् । तथा चायं टीकारीत्या सूत्रार्थः—'अत एव' ईशतद्रूपाणामभेदोक्तेरेव 'अत एव' जीवस्य चेतनत्वादिना ईश्वरसाम्यादेवास्य जीवस्य 'उपमा' मत्स्यादिसाम्यम् । तद्वदीशाभेदः स्यादिति न, कुतः? यतः 'सूर्यकादिवत्' जलादौ प्रतिबिम्बितसूर्यच्छायादिवत् ईशप्रतिबिम्बस्तस्मादेव तद्भिन्नश्चातः । यद्वा—'अत एव' मत्स्यादीनामीश्वरस्य च ज्ञानैश्वर्यादाविव विशेषस्योक्तत्वादेव अतः । तर्हि जीवस्यापि परमेश्वरस्वरूपांशत्वे यतः 'उपमा' मत्स्यादिभिः साम्यं स्यात्, ततश्च तस्योपमा परमेश्वरवत् ज्ञानाद्यविशेषः स्यात् अतः एतदर्थमेवंरूपानिष्टपरिहारार्थं जीवस्योपमैव ईश्वरप्रतिबिम्बतैव, न स्वरूपांशता । यतः प्रतिबिम्बोऽतः सूर्यकादिवच्च भेद एव नाभेदोऽपि । न च हेत्वसिद्धिः । 'रूपम्' इत्यादिश्रुतेरिति । तत्त्वप्रदीपरीत्या तु—'अत एव' जी

( ३ ) अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा, नोपाध्यधीनत्वादिना ॥ १८ ॥

११. अधिकरणम् ॥

( १ ) नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेः न भक्ति

---

वस्य परमेश्वरेण चिदानन्दादिसादृश्यादेव 'रूपम्' इत्यादिश्रुतौ सूर्यकादिवदुपमा प्रतिबिम्बत्वमुक्तम्। तस्य तद्रूपत्वादिति भावः।'अत एव' प्रतिबिम्बत्वोक्त्यैव श्रुत्या भेदोऽप्युक्तः। तस्य भेदघटितत्वादिति चशब्दार्थ इति ॥

( ३ ) यदुक्तं सूर्यकादिवज्जीवो ब्रह्मप्रतिबिम्ब इति। तदयुक्तम्। जीवस्य सूर्यकादिवदुपाध्यायत्तत्वाभावेन तदुपमत्वासम्भवात्। तद्भावे चानित्यत्वजन्ममोक्षाभावापत्तेः। अतः प्रतिबिम्बत्वाभावाद्भेदासिद्धिरिति दूषणं सुस्थमित्याशङ्कोत्तरत्वेनापि अत एव चोपमेति सूत्रखण्डं व्याचष्टे—अत एवेति ॥ अनुकृतातःशब्दपरामृश्यं दर्शयति—भिन्नत्वेति। अत्र भिन्नत्वं साध्यत्वेनोपात्तं, न तु त्रयाणामेकप्रकारत्वम्। तथा च बिम्बभिन्नत्वरूपसाध्यधर्मेण बिम्बाधीनत्वतत्सादृश्यरूपसाधनधर्माभ्यामेव जीवस्य 'सूर्यकाद्युपमा' तत्साम्यमित्यर्थः। सूत्रकृतोक्तेति शेषः। प्रागाभासत्वं चोक्तमिति चशब्दार्थः। स्वप्रयुक्तैवकारव्यावर्त्यमाह—नेति। आदिशब्देनोपाधिनाशनाश्यत्वजडत्वादि गृह्यते। अतो न सूर्यकाद्युपमासम्भवः। न वाऽनित्यत्वादिप्रसङ्ग इति वाक्यशेषः। दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यस्यानपेक्षितत्वादिति भावः। अनेन 'अत एव' तदधीनत्वसादृश्याभ्यामेव 'सूर्यकादिवत्' आभासत्वं जीवस्य सूर्यकाद्युपमा चाभिहिता नोपाध्यधीनत्वादिनेति सूत्रखण्डस्य वृत्त्यन्तरमुक्तं भवति ॥ १० ॥

॥ इति उपमाधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे ईश्वरे भक्त्यर्थं तस्या जीवस्वरूपाभिव्यक्तिरूपफलं निरूप्यते। पूर्वपक्षयति—नित्येति ॥ भक्तिश्च ज्ञानं च भक्तिज्ञाने, ज्ञानमपरोक्षं, आदिशब्देन प्रसादो लभ्यते। प्रत्येकं तृतीयान्वयः। 'प्रयोजनं' साध्यम्। न प्रयोजनमित्यावर्तते। यत इति मोक्षस्येति च

ज्ञानादिना प्रयोजनमिति ।

( २ ) अतो ब्रवीति—

सू—ॐ ॥ अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ ॐ ॥ १९ ॥

अम्बुवत्स्नेहेन ग्रहणं ज्ञानं भक्तिं विना न तत्सादृश्यं

---

शेषः । तथा चेत्थं योजना । न भक्तिः कर्तव्या । कुतः ? यतो न तया प्रयोजनमस्ति । न च ज्ञानमेव प्रयोजनम् । यतो न तेनापि प्रयोजनमस्ति । न च तस्य प्रसादः प्रयोजनम् । यतो न तेनापि प्रयोजनमस्ति । न च प्रसादेन मोक्षसम्भवात्कथं तेन न प्रयोजनमिति वाच्यम् । मोक्षस्य नित्यसिद्धत्वात् । कथम् ? ' नित्यानन्दज्ञानादेः ' मोक्षस्य नित्यानन्दज्ञानबलादिरूपत्वात् । कुतस्तस्य नित्यसिद्धत्वम् ? परमात्मसादृशस्य जीवे ' नित्यसिद्धत्वात् ' नित्यं सत्त्वात् । किं ततः ? तस्य नित्यज्ञानानन्दादिरूपत्वात् । न च विद्यमानस्याप्यभिव्यक्त्यर्थं भक्त्याद्यपेक्षितमिति वाच्यम् । विद्यमानस्य योग्यस्याभिव्यक्तेर्नित्यसिद्धत्वात् कदाचित्स्वयमेव सम्भवात्सुप्ताविवेति ॥

( २ ) सिद्धान्तयत्सूत्रमुपन्यस्याम्बुवदिति पदतात्पर्यमाह—अम्बुवदिति ॥ अम्बुवद्ग्रहणादिति अर्थाभावेऽव्ययमित्याशयेन तत्प्रविष्टग्रहणपदं व्याचष्टे—ग्रहणमिति । सूत्रार्थमाह—भक्तिं विनेति । भक्तिं विनेत्यनुक्त्वा अम्बुवद्ग्रहणादिति गुरूक्तेः प्रयोजनं सलक्षणं दर्शयितुमेवमुक्तिर्गोपनीयत्वेन चेति तत्त्वप्रदीपेऽभिहितम् । अत्र भाष्ये—अम्बुवदित्यनूद्य स्नेहेनेति व्याख्याति । स्नेहात्मकत्वादम्बुनः । तेन मानसस्नेहं लक्षयति । अम्बुवद्ग्रहणं स्नेहसहितं ज्ञानमित्यर्थ इति तत्त्वप्रदीपानुसारात् स्नेहेनेत्यनन्तरं सहितमिति शेषः । सूत्रे अम्बुवदिति मतुब्वत्त्वं छान्दसम् । स्नेहात्मकजलवाचकाम्बुपदस्य तदात्मकस्नेहे शक्तिः, चिक्कणतासाधारणस्नेहमात्रप्रतिपादकस्याम्बुपदस्य मानसस्नेहे लक्षणा । तथाचाम्बुवद्ग्रहणादित्यस्य मानसिकस्नेहेन सहितं यन्माहात्म्यग्रहणं तस्याभावादित्यर्थः। अस्य पर्यवसितार्थो भक्तिं विनेति। केचित्तु—सूत्रे सादृश्ये वतिरियं, ग्रहणस्य जलसादृश्यं च स्नेहेन विवक्षितम् । परन्तूपमानजलस्य चिक्कणताख्यस्नेहयुक्तत्वं उपमेयज्ञानस्य तु मानसिकस्नेहसाहित्यम् । तथा चाम्बुसदृशग्रहणाभावादित्यर्थ इत्याहुः । तन्न, तत्त्वप्रदीपविरोधात् । अम्बुवत्पदतात्पर्यमाहेति टीकायां ' महत्त्वबुद्धिः ' इति स्मृत्या तस्या अवतारिकारूपया यदुक्तं स्ने

सम्यगभिव्यज्यते । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (कठ.२-२३.) इति हि श्रुतिः ।

( ३ ) महित्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयत ।

हेन ज्ञानं भक्तिरितीति टीकया च विरोधात् । भाष्ये स्नेहेनेत्यस्यान्वयाय तत्त्वप्रदीपावतारिकाटीकारीत्या सहितमिति पदाध्याहारस्यावश्यकत्वात् । सूत्रार्थकथनेन सिद्धान्त्यभिमतानुमाने हेत्वसिद्धिपरिहाराय प्रवृत्तस्य सूत्रस्यासिद्धिकारणव्यतिरेकव्यभिचारपरिहारकत्वमुक्तं भवति । तथात्वमित्यस्यार्थमाह—तत्साहश्यमिति । तद्गुणसारत्वादिति प्रकृतं ज्ञानानन्दादिनेश्वरसाहश्यमित्यर्थः । अस्य जीवस्येति वर्तते । तुशब्दार्थस्सम्यगिति । सुप्तौ विनाऽपि भक्तिं सुखाद्यभिव्यक्तिदर्शनाद्व्यभिचारपरिहारायैतत्पदम् । सूत्रे भवतीत्यध्याहारेण भवतेर्व्यक्त्यर्थत्वं अभिव्यज्यत इति क्रियापदाध्याहारं वाऽभिप्रेत्याह–अभिव्यज्यत इति । सूत्रे न साम्यमित्यनुक्त्वा न तथात्वमित्युक्त्या अभिव्यक्तिरपि कदाचित्स्वयमेव भवतीति शङ्का निरस्ता । कदाचित् तत्साहश्यस्य स्वयमेवाभिव्यक्तत्वमपि नेति तस्यार्थान्तरसम्भवात् । स्वयमेवाभिव्यक्त्यङ्गीकारेऽनादिसंसारप्रवाहानुपपत्तेरिति भावः । भक्तिं विना न तत्साहश्यं सम्यगभिव्यज्यत इति भाष्यस्य सूत्रानुसारेण व्यतिरेकमुखत्वेऽपि तेन किन्तु भक्त्यैवाभिव्यज्यत इत्यन्वयोऽपि सूचितः । तत्कुत इत्यत आह—यमिति । कठश्रुतिरियम् । भक्तिमतः 'तस्य' जीवस्य 'स्वां तनुं' तत्स्वरूपमानन्दादिजीवस्वरूपं 'विवृणुते' प्रकाशयतीत्यर्थोऽत्राभिमतः । इति हीति । हियतः । अस्तीति शेषः ॥

( ३ ) यदुक्तं स्नेहेन सहितं ज्ञानं भक्तिः, तया जीवस्वरूपस्य सम्यगभिव्यक्तिरिति तत्स्फुटमत्र श्रुतौ न प्रतीयत इत्यतः स्मृतिं चाह—महित्वेति ॥ तुरवधारणे । 'महित्वबुद्धिः' महत्त्वबुद्धिः । तृतीयोऽतिशये । अत एव तत्त्वप्रदीपे महित्वबुद्धिः महत्त्वबुद्धिः । 'वैश्वानरो महिनः शर्म यच्छत' ( ) इतिवदित्युक्तम् । स्नेहः पूर्वः साहित्यप्रतियोगित्वेन पूर्वनिर्दिष्टो यस्यां सा तथोक्ता । तथा च मानसिकस्नेहसहिता विष्णोर्माहात्म्यज्ञप्तिरेव भक्तिरित्यभिधीयत इत्यर्थः । 'तया' भक्त्या, न स्वत इत्येवशब्दार्थः । 'जीवरूपं' जीवस्वरूपम् । यद्यपि

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।

तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥ इति पा
द्मे ॥ १९. ॥

१२. अधिकरणम् ॥

( १ ) सू--ॐ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्ज
स्यादेवम् ॥ ॐ ॥ २० ॥

स्नेहो भक्तिरिति प्रोक्तः ॥
इति भारततात्पर्यनिर्णये स्नेहस्य विशेष्यत्वमुक्तम् । तथाऽपि विशेष
णविशेष्यभावस्य कामचारत्वाद्विरोधः । अत्र यद्यपि पूर्वपक्षभाष्येऽ
परोक्षज्ञानपूर्वकालीना भक्तिर्गृहीता । सिद्धान्तभाष्ये तु ज्ञानोत्तरका
लीनेति नैकरूप्यम् । तथाऽपि भक्तिमात्रस्य भक्तित्वेनैकरूपस्येहसा
फल्यसमर्थनान्न विरोधः । न च भक्त्यैव सम्यगभिव्यक्तौ ज्ञानोत्तरकृ
तकर्मवैयर्थ्यमिति वाच्यम् । ज्ञानजन्यभक्तेः सम्यगभिव्यक्तिहेतुत्वं
ज्ञानानन्तरं पुनरनुष्ठीयमानभक्तेरुपासनस्य निवृत्तकर्मणां चेश्वरप्रसा
दद्वारा अनभिव्यक्तानन्दाभिव्यक्तिरूपे वा विचित्रानुभवरूपे वा आ
नन्दवैचित्र्ये हेतुत्वमित्यङ्गीकारेण सार्थक्योपपत्तेः । यथोक्तम्—' उ
पासया कर्मभिश्च भक्त्या चानन्दचित्रता' ( ) इति । पाद्म
इत्यतः प्राक् हीत्यनुवर्तते । उक्तमिति शेषः । अस्य पूर्वस्य च अत
इत्यध्याहारेण भक्तिं विनेत्यनेनान्वयः ॥ ११ ॥

॥ इति अम्बुवदधिकरणम् ॥

१२. अधिकरणम् ॥

( १ ) अत्राधिकरणे यदर्थं भगवन्महिमोच्यते, सा भक्तिः पुरुषेषु
तारतम्येन तिष्ठति । तदनुसारेण भगवान् फलं प्रयच्छतीत्येतत्सम
र्थ्यते । तत्र भक्तिः साधकेषु एकप्रकारेति पूर्वपक्षे सिद्धान्तयत्सूत्रमु
पन्यस्य व्याचष्टे—वृद्धीति ॥ अरूपसूत्रादनुवृत्तं तत्पदं विपरिणाम्या
नूद्य व्याचष्टे—तस्येति । चशब्दोऽवधारणार्थः 'वृद्धिह्रासभाक्त्वं'
साधकेष्वाधिक्यन्यूनतावत्त्वमित्यनेन सम्बध्यते । न त्वेकप्रकारत्व
मित्यवधारणार्थः । अनेन पूर्वसूत्रादत्र तुशब्दानुवृत्तिः सूचिता । भ
क्तिशब्देन तत्त्वप्रदीपरीत्या अपरोक्षज्ञानसाधनं भक्तिर्गृह्यते । ज्ञानश
ब्देन परोक्षज्ञानम् । भक्त्यंशत्वेऽपि ज्ञानस्य पृथगुक्तिः स्नेहवद्बहुमाना

तस्य च भक्तिज्ञानादेः वृद्धिह्रासभाक्त्वं विद्यते ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् ।

( २ ) एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीन

त्मको भाव एवापरोक्षज्ञानसाधनमिति सूचयितुम् ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन ॥ इति गीतोक्तेः ॥

भावबोधे तु भक्तिशब्देनापरोक्षज्ञानसाध्यमोक्षसाधनोद्रिक्तभक्तेर्ग्रहणम् । ज्ञानशब्देनापरोक्षज्ञानस्येत्युक्तम् । तत् तत्त्वप्रदीपविरुद्धम् । आदिशब्देन भक्तिसाधनवैराग्यादेस्तत्साध्योपासनादेश्च ग्रहणम् । 'विद्यते' अङ्गीकार्यत्वेनास्ति । अङ्गीकार्यमिति यावत् । यद्यपि पूर्वसूत्रे अम्बुवद्ग्रहणपदेन भक्तेः प्रकृतत्वात्सैवेह धर्मिसमर्पकतच्छब्देन परामर्शनीया, भक्तितारतम्यकथनेनैवेष्टसिद्धेः, न तु ज्ञानादिकमपि । तथाऽपि ज्ञानादितारतम्याभावे तत्साध्यभक्तितारतम्यं न सिध्यति । फलतारतम्यवत्साधनतारतम्यस्यापि भक्तितारतम्यहेतुत्वादित्याशयेनोपलक्षणाभिप्रायेण भक्तिज्ञानादेरित्युक्तम् । कुतो भक्तेर्वृद्धिह्रासभाक्त्वमित्यतस्तत्र हेतुत्वेन अन्तर्भावादित्यंशं सर्वेषामिति भक्तत्वे इति पदाध्याहारेण तेषां महदल्पत्वादिति हेतूपस्कारेण च व्याचष्टे—ब्रह्मादीनामिति । 'उत्तमानां' ब्रह्मादिदेवानां 'भक्तत्वे' भक्तवर्गे अन्तर्भावात्तेषां च महाफलत्वात्, एवं ब्रह्मादिदेवेतरेषां मध्यमानां ऋष्यादीनां अधमानां मनुष्योत्तमानां च सर्वेषामधिकारिणां भक्तत्वेऽन्तर्भावात्तेषां च महदल्पफलत्वादिति योजना । अनेनोभयेषामिति धर्मिसमर्पकपदं देवतदन्यपरतया विवृतं भवति । मध्यमाधमाधिकारिणामल्पफलत्वेन देवेतरत्वेन चैकीकरणम् । सूत्रे उभयेषां भक्तत्वादित्येवोक्तौ भक्तत्वस्योभयत्ववद्व्यासज्यवृत्तित्वाभावेनोभयत्वाश्रयेष्वेकैकेष्वपि पर्याप्तत्वादन्यतरेषामभक्तत्वशङ्का स्यात् तथा चोभयसामञ्जस्यादित्युक्तं स्यादत उभयपदस्योभयविधभक्तपरत्वात् अतोऽन्तर्भावादित्युक्तम् । अनेन त्रिविधाधिकारिणामपि भक्तत्वसिद्धिः । यद्यपि सूत्रे भाष्ये च भक्त्यादेः पक्षीकरणादधिकारिनिष्ठहेतुप्रयोगोऽनुपपन्नः । तथाऽपि पक्षधर्मताया अनावश्यकत्वादेवमुक्तम् ॥

( २ ) ब्रह्मादीनामन्येषां च महदल्पफलत्वेऽपि कुतो भक्तितारतम्यमित्यतः प्रवृत्तमुभयेत्यादिसूत्रखण्डं व्याचष्टे—एवमिति ॥ अस्या

न्यान् प्रति च सामञ्जस्यं भवति ।

( ३ ) साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः ॥ इति ब्रा
ह्मे ॥ २० ॥

( ४ ) कुतः ?

सू—ॐ ॥ दर्शनाच्च ॥ ॐ ॥ २१ ॥

र्थो-भक्त्यादीति । विशेषस्तारतम्यम् । आदिशब्देन पूर्वोक्तानां ग्रहण म् । 'अङ्गीकारादेव' अङ्गीकारे सत्येवेति । अनेन एवमित्येतत्सावधार णमात्रौ योजनीयमित्युक्तं भवति । न स्थानत इत्यतोऽनुवृत्तस्य पर स्येत्यस्यार्थमाह—ईश्वरस्येति । विषमफलदातुरिति शेषः । उभयप दपरामर्शं दर्शयति—ब्रह्मादीनिति । 'अन्यान्' मध्यमाधमान् । बहु लग्रहणाद्द्वितीयातत्पुरुषः । चः समुच्चये । सामञ्जस्यमिति । समञ्ज सो वैषम्यादिदोषशून्यस्तस्य भावः सामञ्जस्यं 'भवति' भवेत् ना न्यथेत्येवशब्दार्थः । न तु समभक्तीनां फलवैषम्यमिति तदर्थः । तथा च फलवैषम्यान्यथानुपपत्त्या भक्तितारतम्यसिद्धिरिति भावः ॥

( ३ ) फलं समं, साधनं तु विषममित्येवंरूपफलसाधनवैरूप्ये सू त्रकृदुक्तं युक्तिविरोधमुक्त्वा स्मृतिविरोधं च दर्शयति—साधनस्ये ति ॥ भक्त्यादिरूपसाधनस्येत्यर्थः । 'उत्तमत्वेन' महत्त्वेनाल्पत्वेन चेत्यस्याप्युपलक्षकमेतत् । हेतौ तृतीया । हेतुत्वं च साध्यगतोत्तमत्वं प्रतीति द्रष्टव्यम्। 'साध्यं' मुक्तिफलं 'उत्तमं' महत्,अल्पं चेत्यपि ग्रा ह्यम् । चोऽप्यर्थस्समुच्चये । ब्रह्मादयो देवा इति शेषः । अन्योपलक्षक मेतत् । साम्यभ्रमनिरासायाह—क्रमेणेति । 'अथात आनन्दस्य' (तै. २ - ८. ) इति श्रुतौ 'यथा' येन क्रमेणानन्दित्वेन श्रुताः, तथा तेनैव क्रमेण साध्यमानन्दमाप्नुयुरित्यर्थः । इतीति । ब्राह्मे उक्तिश्चात्र प्रमा णत्वेन भवतीत्यन्वयः ॥

( ४ ) ननु भवेदेतद्यदि ब्रह्मादीनां फलतारतम्यं स्यात्, तदेव कु त इति हेत्वसिद्धिमाक्षिपति—कुत इति ॥ फलस्य वृद्धिह्रासभाक्त्वं कुतः? प्रमाणाभावान्नास्त्येवेति भावः। एतदाक्षेपपरिहाराय सूत्रं पठि त्वा व्याचष्टे—दर्शनाच्चेति ॥ आरभ्येति । आरभ्य पठितायां श्रुतावि त्यन्वयः। यद्वा—इति सुखे विशेषदर्शनादित्यन्वयः। आरभ्येत्यस्य मनुष्योत्तममारभ्येत्यर्थः । आद्यपक्षे मनुष्योत्तममारभ्येति शेषः । 'ब्र

'अथात आनन्दस्य मीमांसा भवति' ( तै. २ - ८. )
इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् ।

ह्मपर्यन्तेषु' चतुर्मुखपर्यन्तेषु मुक्तेष्विति शेषः। 'सुखे' आनन्देषु विशेषस्य तारतम्यस्य दर्शनादुक्तत्वादित्यर्थः। यद्यपि 'सैषाऽऽनन्दस्य मीमांसा भवति' ( तै.२-८.) इति तैत्तिरीयश्रुति पाठः। तथाऽपि शाखान्तरपाठोऽयमित्यदोषः। श्रुतौ प्रकरणान्तरारम्भे अथशब्दः। 'अतः' पक्षद्वयप्रापकसत्त्वात् 'आनन्दस्य' मुक्तसुखस्य 'मीमांसा' किं सर्वेषामेकप्रकार उत अनेकप्रकार आनन्द इति विचारो 'भवति' प्रवर्तत इत्यर्थः। एवं विचारे अनेकथेत्युत्तरमुच्यत इति केचित्। तन्न, तैत्तिरीयभाष्ये आनन्दस्य 'मीमांसा' विचित्रता भवतीति व्याख्यानात्। विविधचरणं वैचित्र्यम् धात्वर्थः। स्वार्थे सन्। फलवैचित्र्ये हेतुभावादित्यतश्शब्दार्थः। मानुषोत्तममारभ्य विरिञ्चपर्यन्तमानन्दतारतम्यं वक्तुं तत्र मनुष्योत्तमचक्रवर्त्यानन्दस्य पूर्वावधिभूतत्वात्तद्वचनाय मुक्तचक्रवर्तिनो विशेषणान्याह—युवा स्यादित्यादिना। विष्णुना युतस्सन् वाति गच्छतीति युवा। साधुगुणयुक्तत्वात्साधुना विष्णुना युतत्वाद्वा साधुयुवा। मुक्तथाख्याध्ययनफलवत्त्वादाध्यायिकः। आसमन्ताच्छमस्येत्याशः अतिशयेनाशः आशिष्ठः नित्यपूर्णसुखवानित्यर्थः। अतिशयेन दृढो द्रढिष्ठः। अतिशयेन बली बलिष्ठः। य एवंभूतः मुक्तचक्रवर्ती तस्य त्रेतायुगे संसारदशायामियं सर्वा पृथिवी 'वित्तस्य' वित्तेन पूर्णा स्यात्तदा तस्य यत्सुखं 'स एको मानुष आनन्दः' मुक्तमनुष्यचक्रवर्तिसम्बन्ध्येक आनन्द इत्यर्थः। 'ते' प्रसिद्धाः 'ये शतं मानुषाः' मुक्तमनुष्यचक्रवर्तिसम्बन्ध्यानन्दाः 'स एकः मनुष्यगन्धर्वाणां' मुक्तानामानन्दः। मुक्तत्वज्ञापनाय विशेषणद्वयमाह-श्रोत्रियस्येति। श्रोत्रियाणामकामहतानां चेत्यर्थः। एवमग्रेऽपि वचनव्यत्ययो ज्ञेयः। प्राप्तमोक्षिणः श्रोत्रियाः। कामकृतोपद्रवशून्याः अकामहताः। ये साक्षाद्देवप्रेष्यास्ते देवगन्धर्वाः। तेषां मनुष्यगन्धर्वापेक्षया शतगुणितोत्कृष्ट आनन्द इत्यर्थः। एवमग्रेऽपि पूर्वपूर्वापेक्षया उत्तरोत्तरेषां शतगुणोत्कर्षो ज्ञातव्यः। चिरकालीनो लोकश्चिरलोकः, स एव लोको येषां ते तथोक्तास्तेषामित्यर्थः। देवेष्वनाख्याता अकथिता या देवताः देवकुले जातास्ते आजानदेवास्तेषामित्यर्थः। के कर्मदेवाः? कुतश्च तेषां कर्मदेवत्वमित्यत उक्तं—ये कर्मणेत्यादि। 'ये' बल्याद्याः कर्मणा

(५) चशब्दात् स्मृतिः ।
यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥ इति ॥ २१ ॥

—※—

१३. अधिकरणम् ॥

(१) सृष्टिसंहारकर्तृत्वमेवास्य, न पालकत्वम्, स्वतस्सि द्धेरिति ।

---

मध्ये 'देवान्' देवत्वं 'अपियन्ति' प्राप्नुवन्ति ते कर्मदेवा इत्यर्थः । देवानामिति । सृष्ट्यादौ देवत्वं प्राप्तानां तत्त्वाभिमानिदेवानामित्यर्थः । 'इन्द्रस्य' दक्षप्रजेश्वरस्य 'बृहस्पतेः' पुरन्दरस्य 'प्रजापतेः' रुद्रस्य 'ब्रह्मणः' चतुर्मुखस्येति समग्रश्रुत्यर्थः ॥

(५) नन्वस्तु फलतारतम्यं, तथाऽपि भक्तिसाम्यं किं न स्यात्, फलतारतम्यस्य भक्तीतरप्रसादादितारतम्येनापि सम्भवादित्यत आह—चशब्दादिति ॥ समुचितेति शेषः । काऽसावित्यतः तां स्मृतिं पठति—यथेति । 'अत्र' संसारे ज्ञानिनां परमेश्वरे 'यथा भक्तिविशेषो' भक्त्यतिशयो दृश्यते, तथैव तेषां 'लिङ्गभेदने' लिङ्गशरीरभङ्गे जाते सति 'मुक्तिविशेषो' मुक्तावानन्दव्यक्तिविशेषोऽपि दृश्यते । नान्यथेत्यर्थः । दृशिरत्र भवत्यर्थः । यद्वा— अत्र 'ज्ञानिनां' ज्ञानिषु यथा भक्तितारतम्यं योगिभिः 'दृश्यते' ज्ञायते तथैव तेषां लिङ्गभेदने सति 'मुक्तिविशेषो' मुक्तितारतम्यमपि दृश्यते । न वैरूप्येणेत्यर्थः इति स्मृतिरित्यन्वयः ॥ १२ ॥

॥ इति वृद्धिह्रासाधिकरणम् ॥

—:※:—

१३. अधिकरणम् ॥

(१) अत्राधिकरणे विश्वपालकत्वं समर्थ्यते । पूर्वपक्षयति—सृष्टीति ॥ सृष्टिश्च संहारश्च तयोः कर्ता तस्य भावस्तत्त्वमित्यर्थः । यद्वा—सृष्टौ सत्यां संहारः तस्य कर्तृत्वमित्यर्थः 'अस्य' भगवतः । इदं चावर्तनीयम् । एवकारः क्रमेण भिन्नक्रमेण चान्वेति । तत्राद्यपक्षे तद्व्यावर्त्यं दर्शयति—नेति । अस्तीति शेषः । अस्येत्यनुवृत्तपदं । तथा च न विश्वपालकत्वं भगवतोऽस्ति किन्तु सृष्टिसंहारकर्तृत्वमेव । कुतः? यतोऽस्य संहारकर्तृत्वं, न च संहर्तुः पालकत्वं सम्भवतीति भावः ।

( २ ) अत आह—

सू—ॐ ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ॐ॥२२॥

पालनसाध्यकार्याभावाच्च । न च स्थितिस्तत्कार्यं, सृष्टौ सत्यां याव त्संहारस्तावदस्य जगतः स्थितिकार्यस्य पालनं विना स्वत एव सि द्धेस्तस्य तदेकप्रयोजनत्वात् । न च संहारनिवारणव्यापारः अवा न्तरोपद्रवनिवारणं वा तत्प्रयोजनम् । यतोऽस्यैव सृष्टिसंहारकर्तृत्वं न त्वन्यस्येति योजना । अनेन सयुक्तिकः पूर्वपक्षः प्रदर्शितो भवति ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति । उक्तमिति । स्वस्यां प्रागुक्तमित्यर्थः । अनेन प्रकृतेति प्रातिपदिकं व्याख्यातं भवति । एतावत्त्वमित्येतद्व्याचष्टे—सृष्टीति । इदं चावर्तते । तथा च उक्तं सृ ष्टिसंहारकर्तृत्वं सृष्टिसंहारकर्तृत्वमात्रं तावन्मात्रपर्यवसितमित्येतत्प्र तिषिध्येत्यर्थः । वचनापेक्षया प्रतिषेधस्य पूर्वकालीनत्वज्ञापनाय ल्यब न्तनिर्देशः । मात्रशब्देन पालनाख्यगुणान्तरं व्यावर्त्यते । 'ततः' उ क्तात् । भूय इत्यस्य व्याख्यानं—अधिकमिति । पालनमपीत्यर्थः । अ स्येत्यनुवर्तते । ब्रवीतीत्यनन्तरं श्रुतिरिति यत इति च शेषः । अस्य हे तोरस्त्येव हरेः पालकत्वमिति प्रकरणलब्धसाध्येनान्वयः । अनेन हि शब्दो हेत्वर्थतया व्याख्यातः ।,

अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आभरणे बिभ्रमाणाः॥
किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
सन्तस्थाने अजरे इतऊती अहानि पूर्वीरुषसोऽजरन्त ॥
नैतावदेनापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥

(ऋ. १०-३१-६,७,८. )

इति ऋक्श्रुतेरयमर्थः 'अस्येत्' विष्णोस्सकाशादेव 'एषा सुमतिः' ब्रह्मादिसुबुद्धिः–'पप्रधाना' अतिशयेन प्रथाना प्रथमाऽभवत् । अनेन 'भूमना' भूम्ना पूर्णेन विष्णुना 'पूर्व्या' पूर्वतना 'गौः' द्यावापृथिवी 'अभवत' अभूताम् । अस्य विष्णोर्भूम्ना महिम्नैव सुमतिर्गौश्चाभवदि ति वा। 'असुरस्य' असुषु प्राणेषु रमणादसुत्वात्प्राणरूपत्वात् रमणीय त्वाच्चासुरो वायुः 'महद्देवानामसुरत्वमेकम्' (ऋ.३-५५-१.) इति श्रुतेः। 'या मारुताद्गर्भमाधत्त पूर्वम्' इति स्मृतेः । तस्य 'योनौ' भार्यायां

उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति। 'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इति (ऋ. १०-३१-८.)

'समाने' एकस्मिन् 'आभरणे' आसमन्ताद्भरणस्थाने गर्भे 'म्रियमाणाः' देवाः अस्य सकाशादेव 'सनीळाः' भवन्ति निलीयन्ते संह्रियन्त इति यावत् ॥

भगवन्महिम्नैव द्युभ्वाद्युत्पत्तिरित्यनङ्गीकारे तन्निर्माणे अधिष्ठानादिकं किं स्यादित्याक्षिपति-किं स्विदित्यादिना ॥ सर्गाद्यसमये वनं किं वाऽऽसीत्, क एव वृक्ष आस, न कोऽपीत्यर्थः। एवं वनं 'किंस्वित्' कस्माज्जातं 'स वृक्षो' वनादन्यत्र विद्यमान एकैकवृक्षश्च 'क आस कस्माज्जातः। किंकारणकं वनमास, किंकारणकश्च वृक्ष आसेति प्रश्नपरतयाऽपीदं व्याख्येयम्। अस्योत्तरमाह-यत इति। 'यतो' यस्माद्धरेः सर्वे लोकास्तत्स्थाश्च 'निष्टतक्षुः' समुत्पन्नाः। यस्मादेव 'सन्तस्थाने' सम्यक् स्थायिन्यौ 'अजरे' जराशून्ये दृढे द्यावापृथिव्यौ 'इतऊती' अस्मादेव समुद्भूतज्ञानादिके अहानि 'पूर्वीः' पूर्व्य उषसश्च 'अजरन्त' जीर्णा अभूवन्। यद्वा—'पाताळमेतस्य हि पादमूलं लोमानि वृक्षौषधयः' इतिस्मृतेः 'यतो' यस्यावयवेभ्यो द्यावापृथिव्युपलक्षितचतुर्दशभुवनानि 'निष्टतक्षुः' नितरां कृतानि तेभ्य एवावयवेभ्यो 'वनं' वृक्षादि जातं, किञ्च—'इतो' भूमेरुपरि गते 'अजरे' नाशरहिते 'सन्तस्थाने' सम्यक्तते वैकुण्ठादिस्थाने 'ऊती' ऊतयो व्याप्तयो यस्य परमात्मनः पूर्वीरहानि उषसश्च 'अजरन्त' जीर्णा आसन्। येनानेनेश्वरेण भवत्कार्यमिति शेषः ॥

'अस्येदेषा सुमतिः' इत्यादिना प्रागुक्तं सृष्टिसंहाररूपं एतावत्सृष्टिसंहारमात्रपर्यवसितं न भवति, किन्त्वन्यदप्यस्ति। किं तदित्यत आह—स इति। 'सः' परमात्मा 'उक्षा' भक्ताभिलषितसेचकः द्यावापृथिव्यौ 'बिभर्ति' धत्ते पुष्णाति च। यः 'स्वधावान्' पूर्णसुखो भगवान् तस्य स्मृत्या तद्वन्तो भूत्वा 'त्वचं' शरीरं पवित्रं 'कृणुत' कुरुत। हे सन्त इति शेषः। यद्वा—स्वधावान् स परमात्मा ध्यातश्चेच्छरीरं पवित्रं करोतीत्यर्थः। 'यत्' येन पवित्रीकरणेन 'हरितो' दिशः 'सूर्यं न' सूर्यमिव सदा भगवन्तमक्लेशेनैव प्रजा वहन्तीत्यर्थः। माधबोधे तु सदिति पदच्छेदं कृत्वा सदित्यस्य भवत्कार्यमिति च द्वे

( ३ ) चशब्दात् स्मृतिश्च —
सृष्टिं च पालनं चैव संहारं नियमं तथा ।
एक एव करोतीशः सर्वस्य जगतां हरिः ॥
इति ब्रह्माण्डे ॥ २२ ॥

—*—

१४. अधिकरणम् ॥

( १ ) परमात्मापरोक्ष्यं च तत्प्रसादादेव । न जीवशक्त्यैवेति

---

धा व्याख्यानमित्युक्तम् । तत्र स इति प्रसिद्धपदविभागविरोधादकारे च्छित्वाश्रवणं च बाधकमिति ध्येयम् ॥

( ३ ) सृष्टिसंहारकर्तुरपि पालकत्वरूपगुणान्तरवत्त्वे स्पष्टस्मृतिपरतया सौत्रचशब्दं व्याचष्टे—चशब्दादिति ॥ समुच्चितेति शेषः । तां स्मृतिं पठति—सृष्टिमिति । सृष्ट्यादिशब्दैः प्रयोज्यव्यापारा लक्ष्यन्ते । सर्वस्य जगत इत्यादौ योज्यम् । परस्परसमुच्चये चः । 'चैव' एवं संहारम् । तथाशब्दः समुच्चये । नियमनं च । 'एक एव' न त्वन्यः । अत्रोपपत्तिः—ईश इति । ब्रह्माण्डे उक्तिश्चेति शेषः । अस्य श्रुतिरित्यस्य च ब्रवीतीति क्रियापदेनान्वयः । श्रुतौ स्थित्यतिरिक्तस्य धारणपोषणादिरूपप्रयोजनान्तरस्योक्त्या तस्य च 'एकः' इति स्मृतावनन्यसाध्यत्वस्योक्त्या च स्थितेः स्वतस्सिद्धत्वात्तत्पालनं निष्प्रयोजनमिति चोद्यं निरस्तं भवति । अनेन—'हि' यतो 'नैतावत्' इति श्रुतिः 'अस्यैषा सुमतिः' इत्यादिना पूर्वं प्रकृतस्योक्तस्य सृष्ट्यादिकर्तृत्वस्य 'एतावत्त्वं' एतावन्मात्रपर्यवसितत्वं पालनाख्यगुणान्तरासाहित्यं प्रतिषेधति । न केवलमेतावत्किन्तु 'ततः' सृष्ट्यादिकर्तृत्वात् 'भूयः' अधिकं पालकत्वमप्यस्य विष्णोर्ब्रवीति । तथा 'सृष्टिं च' इति स्मृतिश्च स्पष्टम् । अतः सृष्टिसंहारकर्तृत्वातिरिक्तं पालकत्वाख्यं महिमान्तरमपि परस्य सिद्धमिति सूत्रार्थ उक्तो भवति ॥ २३ ॥

॥ इति प्रकृत्यधिकरणम् ॥

—*·*·*—

१४. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवद्भक्तेः कर्तव्यतासमर्थनाय तस्योपलब्ध्युपायत्वं समर्थ्यते । सिद्धान्तसूत्रमवतारयति—परमात्मेति ॥

वक्तुमुच्यते —

सू — ॐ ॥ तदव्यक्तमाह हि ॥ ॐ ॥ २३ ॥

अव्यक्तमेव तद्ब्रह्म स्वतः ।

( २ ) अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।

यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत् ॥

इति कौण्डिन्यश्रुतिः ॥ २३ ॥

---

चस्त्वर्थः । भक्तिफलत्वेनोक्तमिति विशेषणसमुच्चये वा । तदिति ईश्वरो भक्तिश्चोच्यते । तथा च भक्तिसाध्येश्वरप्रसादादित्यर्थः । यद्वा—तदितीश्वर एवोक्तः । भक्तिसाध्यादिति शेषः । एवकारव्यावर्त्य माह—नेति । 'जीवशक्त्या' पुरुषप्रयत्नेनेत्यर्थः । अनेनेश्वरस्य व्यक्तत्वे विनैव भक्तिं जीवशक्त्यैव स्तम्भादिवदपरोक्षज्ञानसम्भवात् अव्यक्तत्वे च सत्यामपि भक्तौ तदसम्भवात्प्रयोजनस्याभावान्न भक्तिः कर्तव्येति सयुक्तिकपूर्वपक्षः, तथा स्वतोऽव्यक्तस्यापीश्वरस्य भक्तिसाध्यप्रसादादापरोक्ष्यसम्भवात्सफलत्वाद्भक्तिः कर्तव्येति सयुक्तिकसिद्धान्तश्च सूचितो भवति । 'इति' एवं वक्तुं 'अतोऽनन्तेन' इत्यादाविति शेषः । 'उच्यते' प्रथमं तत्र हेतुत्वेन अव्यक्तत्वमिति शेषः । अव्यक्तमेवेत्यनेन सूत्रे पूर्वस्मात् एवार्थकचशब्दानुवृत्तिस्सूचिता । तदित्यस्य व्याख्या—ब्रह्मेति । परं ब्रह्मेत्यर्थः । 'स्वतः' स्वभावत इति शेषोक्तिः । अनेन अव्यक्तत्वस्यास्वाभाविकत्वं निराकृतं भवति । स्वत इत्यनन्तरं यत इति शेषः । अस्य परमात्मापरोक्ष्यं च न जीवशक्त्या, किन्तु तत्प्रसादादेवेति प्रकृतसाध्येनान्वयः । अत एव साध्यवाक्यप्रदर्शनार्थमेव वक्तुमित्यन्तमुक्तम् ॥

( २ ) अव्यक्तत्वहेतोरसिद्धिपरिहाराय प्रवृत्तं—आह हीति सूत्रखण्डं व्याचष्टे—अरूपमिति ॥ ब्रह्म यतः 'अक्षरं' सर्वथा नाशशून्यमतः 'अरूपं' प्राकृतविग्रहशून्यं तादृशशुक्लादिरूपशून्यं च, अन्यथा नाशापत्तेरिति भावः । यतोऽरूपमतः 'अव्यक्तं' अप्रत्यक्षम् । कादाचित्कास्वाभाविकाव्यक्ततानिरासाय—सदेत्युक्तम् । चो विशेषणसमुच्चये । 'निष्कळं' भिन्नांशशून्यं षोडशकलाशून्यं वा, निष्कळत्वमक्षरत्वे हेतुतयोक्तम् । 'यत्' ब्रह्माख्यं वास्तवत्यस्य तत्त्यतच्छब्देनान्वयः । 'ज्ञात्वा' अपरोक्षतो 'जन्तुः' स जीवो मुच्यते संसृतेः । न केवलमनिष्टनिवृत्तिमात्रं, किन्त्वस्य स्वरूपभूतानन्दः 'अक्षयो'

( ३ ) सू—ॐ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ॐ ॥२४॥
आराधनेऽप्यव्यक्तमेव ज्ञानिनां प्रत्यक्षेण इतरेषामतिसू
क्ष्मत्वाल्लिङ्गादनुमानेन ।

( ४ ) न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति ।

---

नित्योऽभिव्यक्तश्च भवेदित्यर्थः । हिशब्दो हेतौ । श्रुतिराहेति । अनेन सूत्रे श्रुतिरिति शेषो दर्शितः ॥

( ३ ) नन्वस्तु ब्रह्म स्वतोऽव्यक्तं, तथाऽप्याराधनेन पुरुषप्रयत्नेन व्यक्तीभविष्यति । समाराधनेनाव्यक्तप्रत्यक्षसाक्षात्कारदर्शनात् । एवं चेत्किं भक्तयेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—अपीति ॥ अव्यक्तमेवेत्यनन्तरं तत्स्वत इत्यनुवर्तते । तथा च न केवलमनाराधनेऽव्यक्तं, किंतु 'आराधनेऽपि' भक्तिरहिताराधनेन संपूजनेनाप्यव्यक्तमेव, न तु व्यक्तीकर्तुं शक्यमित्यर्थः । कुतः ? यतस्तद्ब्रह्म स्वतोऽव्यक्तं अत इति योजना । यद्वा—भक्तिरहिताराधने एव तदव्यक्तं, न तु भक्तिसहिताराधनेऽपि येन भक्तेर्वैयर्थ्यं स्यादिति । अनेन सूत्रे संराधने संपूजने इति निमित्तसप्तमी । अपिः भिन्नक्रमः समुच्चये । तदव्यक्तमिति चानुवर्तनीयमित्युक्तं भवति । आराधनेऽप्यव्यक्तत्वं कुत इत्यतः प्रवृत्तं प्रत्यक्षानुमानाभ्यामिति सूत्रखण्डं व्याचष्टे—ज्ञानिनां प्रत्यक्षेणेति । कर्तरि षष्ठीयम् । इतरेषां ज्ञानसाधनमाह—इतरेषामिति । ज्ञानिभ्योऽन्येषामित्यर्थः । इतरेषामित्यनेन प्रत्यक्षसिद्धेऽर्थेऽनुमानवैफल्यमिति निरस्तम् । लिङ्गादनुमानेनेति । लिङ्गाख्येनानुमानेनेत्यर्थः । आगमव्यावर्तनायेदं विशेषणम् । यद्वा—लिङ्गात् अव्यक्तत्वस्य अनुमानेनेति वैयधिकरण्येनान्वयः । समासपाठे सूक्ष्मत्वहेतुकानुमानेनेत्यर्थः । अस्याराधनेऽप्यव्यक्तमेवेति साध्येनान्वयः । इति सिद्धमिति शेषः । यद्यपि सूक्ष्मत्वस्याव्यक्तशब्दप्रवृत्तिनिमित्तत्वान्न तत्साधकत्वम् । तथाऽपि प्रत्यक्षाविषयस्वभावत्वमव्यक्तत्वम् । सूक्ष्मत्वं तु ततोऽतिरिक्तमिति भेदादविरोधः । यदा सूक्ष्मा अपि परमाण्वादयो नास्मदक्षगोचराः तदा किम्वतिसूक्ष्मं ब्रह्मेति ज्ञापनाय—अतीत्युक्तम् । न च ज्ञानिकर्तृकब्रह्मविशेष्यकाव्यक्तत्वप्रकारकप्रत्यक्षे ब्रह्मणोऽपि भानात् तस्याव्यक्तताविरोध इति वाच्यम् । स्वतोऽव्यक्तस्यापि ब्रह्मणो भक्तिवशादचिन्त्यशक्त्याऽभिव्यक्तेरङ्गीकारात् ॥

( ४ ) ननु परप्रत्यक्षस्यासिद्धत्वात्कथमत्र ज्ञानिप्रत्यक्षं प्रमाणीक्रि

नित्याव्यक्तो यतो देवः परमात्मा सनातनः॥
इति ब्रह्मवैवर्ते ॥ २४ ॥

( ५ ) नित्याव्यक्तरूपेण तथैव तिष्ठति व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते । यथाऽग्न्याद्यस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्ते एवमिति चेत्—

---

यत इत्यतः तैरव्यक्तत्वोक्त्या तदन्यथाऽनुपपत्त्या तेषामव्यक्तप्रत्यक्षसिद्धेः तदुपन्यासोपपत्तेरिति भावेनाह—नेति ॥ 'तं' परमात्मानं, न केवलमनाराधयित्वा, किन्तु भक्तिं विनाऽऽराधयित्वाऽपि भक्तिं विनाऽपीति वा अपिशब्दार्थः । 'कश्चित्' योग्यो जनः । कुतो न व्यक्तीकरिष्यति ? यतोऽव्यक्तः । नन्वव्यक्तस्यापि विष्णोराराधनेन व्यक्तिस्सम्भवति यक्षादिवदित्यत उक्तम्—नित्येति । नित्यं सदा स्वतोऽव्यक्त इत्यर्थः । यक्षादयस्तु नैवमिति न व्यभिचार इति भावः । एवंभूतश्चेत्कथं भक्त्याऽपि व्यक्तो भवेत्, तथा च भक्तेर्वैयर्थ्यमित्यतो—देवः परमात्मेति चोक्तम् । अचिन्त्यशक्त्योभयं युज्यत इति तदभिप्रायः । अनित्यस्य कथं नित्याभिव्यक्तत्वमित्यत आह—सनातन इति । देहतः स्वभावतश्च नित्य इत्यर्थः । ब्रह्मवैवर्त इति । उक्तमिति शेषः । अतो न प्रत्यक्षासिद्धिरिति भावः ॥ न चानेनाव्यक्तत्वमात्रसिद्धावपि कथं तत्प्रत्यक्षासिद्धिरिति वाच्यम् । व्यासादिज्ञानिकर्तृकाव्यक्तत्वादिवचनस्य वचनान्तरमूलत्वेनानवस्थापत्त्या प्रत्यक्षमूलकत्वस्यैव वक्तव्यत्वेन तेनाव्यक्तत्वसिद्धिसम्भवात् ॥

( ५ ) आक्षिपति—नित्येति ॥ ब्रह्मेत्यनुवर्तते । आदिपदेन जलभुवौ गृह्येते । न त्वाकाशवायू अपि, तयोः स्थूलरूपेणाप्यदृश्यत्वात् । यद्यपितथापीत्यर्थेऽपिशब्दः । तथा च यथा अग्न्यादयोऽग्निमात्रादिलक्षणानुपचितसूक्ष्मरूपेणादृश्या अपि स्थूलेनोपचितरूपेण 'दृश्यन्ते' व्यज्यन्ते, एवं नित्यमुत्पत्त्यादिरहितमत एवाव्यक्तं यन्मूलरूपं तेन 'तथैव' अव्यक्तत्वेनैव तिष्ठति ब्रह्म, किञ्चिद्वताररूपं गृहीत्वा तेन दृश्यत इति योजना । यत एवमतो भक्तिं विनाऽपि ब्रह्मदर्शनभावाद्व्यर्था सेति वाक्यशेषः । तथैवेत्येतदवताररूपमित्यनेनापि सम्बध्यते । मूलरूपसदृशमेवेति तदर्थः । तेन मूलरूपदर्शनस्य मोक्षहेतुत्वेऽपि नावतारदर्शनस्य तथात्वमिति शङ्काऽनवकाशः ॥

( ६ ) न,

सू—ॐ ॥ प्रकाशवच्चावैशेष्यम् ॥ ॐ ॥ २५ ॥

अग्न्यादिवत्स्थूलसूक्ष्मत्वविशेषाभावात् ।

( ७ ) 'नासौ सूक्ष्मो न स्थूलः पर एव स भवति । तस्मादाहुः परमः' इति माण्डव्यश्रुतेः ।

( ८ ) स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे ।

( ६ ) एतच्चोद्यं प्रतिषेधति—नेति ॥ नित्येत्यादिनोक्तं नेत्यर्थः । अनेन सौत्रचशब्दो न दृष्टान्तान्तरसमुच्चायकः, किन्तु शङ्काव्यावर्तक इत्युक्तं भवति । तत्त्वप्रदीपे तु 'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः' इति तुरश्रुतेः प्रकृतिवच्च नास्य सूक्ष्मत्वं नैव चाग्न्यादिवदिति चकारार्थ इति चकारस्यानुक्तदृष्टान्तसमुच्चायकत्वमुक्तम् । एतत्पक्षे नेत्येतत् आगामिसूत्रेऽध्याहृतनञर्थकथनरूपमिति द्रष्टव्यम् । कुतो नेति हेत्वाकांक्षायां सूत्रमुपन्यस्य व्याचष्टे—प्रकाशवच्चेति । अग्न्यादिवदित्यनेन गुणवाचकप्रकाशशब्दोऽग्न्यादिगुणिवाचकतया व्याख्यातः । आदिशब्देन जलपृथिव्योर्ग्रहणम् । त्वप्रत्ययः प्रत्येकं सम्बध्यते । विशेषेत्यनेन सूत्रे स्वार्थे ष्यञित्युक्तं भवति । विशेषो धर्मः । पञ्चमीनिर्देशेन चो यत इत्यर्थेऽपीत्युक्तं भवति । ब्रह्मणीति शेषः ॥

( ७ ) ननु ब्रह्मणि स्थूलसूक्ष्मत्वयोरभावः कुतो ज्ञायते, येन व्यक्ताव्यक्तत्वयोरभावः स्यादित्यतः अत्रापि—आह हीत्यस्यानुवृत्तिमभिप्रेत्य तदभिप्रेतां श्रुतिमुदाहरति—नासाविति ॥ 'असौ' भगवान् केनचिद्रूपेण सूक्ष्मः केनचित्स्थूल इति न, किन्तु 'स पर एव' सर्वरूपेषु परमसूक्ष्म एव भवति न त्वनेवंभूतः । एवं असौ केनचित् रूपेण स्थूलः केनचित्सूक्ष्म इति न, किन्तु सर्वत्र 'परः' परमस्थूल एवेत्यर्थः । अत एव नञ्द्वयप्रयोगः, 'महतो महीयान्' (कठ.२-२०.) इति श्रुत्यविरोधश्च । स्थूलात् स्थूलतमत्वं हि तदर्थः । न चैवं व्यक्तत्वापत्तिः, तद्विरोधिपरमसूक्ष्मत्वेन तत्प्रतिबन्धात् । किञ्चातः ? यस्मात्सर्वत्र परमसूक्ष्मः स्थूलश्च तस्मादेनं विष्णुं परम इत्याहुर्ज्ञानिन इत्यर्थः । श्रुतेरित्यस्यावैशेष्यमित्यनेनान्वयः । सिद्धमिति शेषः ॥

( ८ ) नन्वनुत्पन्नस्य मूलरूपस्योत्पन्नानां चावताररूपाणां च कथं स्थूलसूक्ष्मत्वविशेषाभाव इत्यत आह—स्थूलेति ॥ व्यवस्थयेति शे

सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः ॥

इति च गारुडे ।

( ९. ) अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे ।

सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दनः ॥

इति कौर्मे ॥ २५ ॥

( १० ) तर्हि किं यत्नेनेत्यत आह—

सू—ॐ ॥ प्रकाशश्च कर्मण्यभ्यासात् ॥ ॐ ॥ २६ ॥

---

षः । तथा च यतोऽसौ भगवान् ' सर्वरूपेष्वजः ' उत्पत्तिशून्यः सदा अतः 'अत्र' भगवति क्वचिदपि रूपे काले वा 'स्थूलसूक्ष्मविशेषः' स्थूलसूक्ष्मत्वरूपो धर्मः ' व्यवस्थया ' केनचित् रूपेण स्थूलः केनचित् रूपेण सूक्ष्म इति न । एवं घटादिवज्जननात्पूर्वं सूक्ष्मस्तदूर्ध्वं स्थूल इत्यपि न, किन्तु सर्वत्रैकरूप एवेत्यर्थः । ननु कथमेतदन्यत्रादृष्टमत्र युज्यत इत्यत आह—परमेश्वर इति । हेतुगर्भमेतत् । इति चेति चः श्रुतिसमुच्चये । गारुडे उक्तमिति शेषः । अस्याप्यवैशेष्यमित्यनेनान्वयः ॥

( ९ ) एवं स्थूलसूक्ष्मत्वयोर्व्यापकयोर्हरावनुपलब्ध्या तद्व्याप्ययोर्व्यक्तत्वाव्यक्तत्वयोरप्यभाव उक्तः । स्मृत्याऽप्येतदभावं साधयति—अव्यक्तेति ॥ अव्यक्तत्वव्यक्तत्वे इत्यर्थः । चः समुच्चये । क्वचिद्रूपेऽव्यक्तत्वं क्वचिद्व्यक्तत्वमिति व्यवस्थितौ नेत्यर्थः । परमेश्वरपदप्रयोजनं तु पूर्ववदेव । कुतो नेत्यत आह—सर्वत्रेति । सर्वरूपेष्वित्यर्थः । ' अव्यक्तरूपः ' अव्यक्तस्वरूपः ' अयं ' परमेश्वरः । कुत इत्यत आह—यत इति । एवकारो भिन्नक्रमः । उत्पत्त्या जननं व्यक्तिमर्दयति गमयति प्रापयत्येवान्यान् न स्वयमन्यशक्त्या प्राप्नोतीति जनार्दनः । स्वजननमर्दयति अपगमयतीति वा । गीताभाष्ये तु न जायत इति जनः अर्दयति गमयति संसारमिति जनार्दन इति व्याख्यातं, तदपि प्रकृतानुकूलमेव । कौर्मे उक्तमिति शेषः । अस्याप्यवैशेष्यमित्यनेनान्वयः । व्यक्तत्वाव्यक्तत्वरूपविशेषराहित्यमिति तदर्थः ॥

( १० ) उत्तरसूत्रमवतारयति—तर्हीति ॥ ब्रह्मणः सर्वथाऽव्यक्तत्वे इत्यर्थः । किमिति । ' यत्नेन ' श्रवणादिरूपेण भक्तिपूर्वकेण किं प्रयोजनं, न किमपीत्यर्थः । ' इत्यतः ' इति शङ्कायां परिहारमाह सूत्रकृदित्यर्थः । सूत्रे निराकृतेऽप्यशब्दत्वे तदव्यक्तमित्युक्त्या कस्य चित्तदविषयत्वाशङ्का स्यात्, तां वारयितुं प्रयुक्तः कर्मशब्दः कर्मकारकपरः ।

विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात्प्रकाशश्च भ
वति ।

( ११ ) 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या
सितव्यः' (बृ. ४-४-५.) इति श्रुतेः ॥ २६ ॥

( १२ ) नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—
सू—ॐ ॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥ ॐ ॥ २७॥
उभयत्र प्रमाणभावात् तत्प्रसादादेव प्रकाशो भवति।

---

तद्व्यक्तमित्यनुवर्तते । तस्य विपरिणाम इत्याशयेन विषयभूते 'त
स्मिन्' अव्यक्ते ब्रह्मणीत्युक्तम् । न त्वन्यत्रेत्येवार्थः । तथा च तदे
कविषयकश्रवणमननाद्यावर्तनादित्यर्थः । भक्तिपूर्वकादिति शेषः । प्र
काश इत्यत्रापि तस्मिन्नित्यावर्तनीयम् । तथा च तस्मिन् 'प्रकाशः'
तद्विषयकापरोक्ष्यमित्यर्थः । न केवलमप्रकाशः, किन्तु प्रकाशश्चेति
चार्थः । 'तस्मिन्' अव्यक्तेऽपीत्यप्यर्थो वा । यत इति शेषः । अनेन सू
त्रे हिशब्दस्यानुवृत्तिस्सूचिता । अस्यातो न श्रवणादिवैयर्थ्यमित्य
ध्याहृतेनान्वयः । अनेन सूत्रे नञनुवृत्तिस्सूचिता ॥

( ११ ) श्रवणाद्यभ्यासेन अपरोक्षं भवतीत्येतत्कुतो ज्ञायत इत्यत
श्चशब्देन आह हीत्यनुवृत्तेन वा सूचितश्रुतेरेवेत्याह—आत्मेति ॥ ब्रह्म
णो निदिध्यासनकर्मत्वं च स्वप्रतिमाद्वारा तदुपासनं च भवति । प्र
तिमोपासनमित्युक्तेः । व्याख्यातेयं श्रुतिर्जिज्ञासाधिकरणे ॥

( १२ ) उत्तरसूत्रमवतारयति—नित्येति ॥ ब्रह्मणः श्रवणाद्यभ्या
सादपीति सम्बन्धः । कथमित्याक्षेपे । न कथमपीत्यर्थः । युक्तिविरोधा
दिति भावः । उच्यत इति । इत्यस्मिन् चोद्ये परिहार उच्यत इत्यर्थः ।
तत्सूत्रं पठित्वा व्याचष्टे—अत इति । उभयत्रेति । अव्यक्तत्वे प्रत्यक्ष
त्वे च प्रमाणसद्भावादित्यर्थः । तदन्यथाऽनुपपत्त्येति यावत् । अत इ
त्यस्यार्थान्तरमाह—तस्य प्रसादादिति । तस्याधिकारिणस्तस्याव्य
क्तस्यापि परब्रह्मणः प्रसादादेवेत्यर्थः । न साधनसामर्थ्येनेत्येवार्थः ।
'प्रकाशः' आपरोक्ष्यम् । इदं चानुवृत्तं पदं भवति । इति ज्ञायत इति
शेषः । चेत्यप्यनुषञ्जनीयम् । तस्य 'अनन्तेन' अपरिमितसामर्थ्येने
त्यनेनान्वितस्यावधारणार्थत्वं, प्रकाशश्चेत्यनेनान्वितस्य पुरुषप्रयत्ने
नाप्रकाशसमुच्चायकत्वं च द्रष्टव्यम् ॥

( १३ ) 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्व
मायानिवृत्तिः' (श्वे. १-१०.) इति लिङ्गात् ।
( १४ ) युज्यते च तस्य अनन्तशक्तित्वात् ।
( १५ ) नित्याव्यक्तोऽपि भगवान् ईक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येतामितं प्रभुम् ॥

( १३ ) न केवलमन्यथाऽनुपपत्त्या प्रसादाधीनप्रत्यक्षत्वं ब्रह्मणः, किन्तु बलवद्युक्त्या चेत्याह सूत्रकृत्—तथा हीति । तद्व्याचष्टे—तस्येति ॥ इतिलिङ्गादिति । इतिवाक्योक्ताद्बन्धनिवृत्तिरूपमोक्षस्य मध्यमप्रसादसाध्यत्वरूपात् दर्शनस्य प्रसादसाध्यत्वज्ञापकादित्यर्थः । इतिशब्द आद्यर्थे । तेन च 'दृष्ट्वैव तं मुच्यते' (         ) इति श्रुतिः सूचिता । तथा च 'तस्याभिध्यानात्' 'दृष्ट्वैव' इति वाक्यद्वयबलाद्दर्शनान्मोक्षः, उपासनाजनितप्रसादाच्च दर्शनमिति पारम्पर्यं सिद्ध्यतीति भावः । लिङ्गादित्युक्त्या सूत्रे यत इत्यध्याहार्यमित्युक्तं भवति । तथाशब्दस्तूपमार्थो वा अर्थापत्तियुक्त्योः समुच्चयार्थो वेति हृदयम् । 'तस्य' इति श्रुतिस्तदभिध्याननये व्याख्याता ॥

( १४ ) नन्वव्यक्तस्वभावस्य ब्रह्मणः प्रसादेनापि न प्रत्यक्षता युज्यते । न हि प्रसन्नोऽपि नरो वानरो भवितुमीष्ट इत्यत आह—युज्यते चेति ॥ चशब्दोऽवधारणार्थः । उभयमिति विपरिणामेन सम्बध्यते । तदिति च । तथा च तस्य विष्णोरव्यक्तत्वं प्रत्यक्षत्वं चेत्युक्तमुभयं युज्यते । तस्यैव युज्यते न त्वन्यस्येति वा । कुतः? 'अनन्तशक्तित्वात्' अपरिमिताघटितघटकसामर्थ्यत्वादित्यर्थः । तस्यैवानन्तशक्तित्वादित्यनेन सूत्रे तेनेत्यनुक्त्वा अनन्तेनेत्यधिकोक्तेः प्रयोजनं चोक्तं भवति । अत एव प्रमेयदीपे—ननु ज्ञानिभिर्भगवान् दृश्यते चिन्त्यते च । तत्कथमुच्यते 'अव्यक्तोऽयमचिन्त्योयम्' (गीता. २-२५.) इत्यवतार्य अत एवाव्यक्तादिरूप इति भाष्यं 'अत एव' अचिन्त्यशक्तित्वादेव, यथोक्तं—'अतोऽनन्तेन' इतीति व्याख्यातम् । सौत्रातश्शब्दस्य व्याख्यानान्तरमिदमिति केचित् ॥

( १५ ) सूत्रार्थे स्मृतिं चाह—नित्येति ॥ अत्रेत्थं योजना—यद्यपि भगवान्नित्यं नियमेन स्वतोऽव्यक्तस्तथाऽपि 'भक्तैरीक्ष्यते' तद्दर्शनविषयो भवति । कथम्? 'निजशक्तितः' स्वरूपसामर्थ्यादेव । तेन विना सत्कार्यं प्रति कथं तस्य हेतुत्वं व्यभिचारादित्यत आह-

इति नारायणाध्यात्मे ॥ २७ ॥

---*---

१५. अधिकरणम् ॥

( १ ) स्वरूपेणानन्दादिना कथमानन्दित्वादिरिति ।

( २ ) अत उच्यते—

सू—ॐ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ॐ ॥ २८ ॥

---

तमिति । परमात्मानं विना तत्प्रसादं विनेति यावत् । तं परमात्मानं कः पश्येन्न कोऽपीति । अव्यक्तस्वभावस्य कथं दर्शनकर्मता युक्तिविरोधादित्यत उक्तम्—'अमितं' अनन्तं 'प्रभुं' समर्थमिति च । नारायणाध्यात्म इत्यनन्तरं सूत्रोक्तमुक्तमिति शेषः ॥ १४ ॥

॥ इति अव्यक्तत्वाधिकरणम् ॥

---:*:---

१५. अधिकरणम् ॥

( १ ) अत्र भगवतो गुणित्वं समर्थ्यते । सयुक्तिकं पूर्वपक्षयति—स्वरूपेणेति ॥ हेतौ तृतीया । कथमित्याक्षेपे । ब्रह्मण इति शेषः । प्रथमादिपदेन ज्ञानादिकं गृह्यते । द्वितीयेन ज्ञानत्वादिकं भजनीयत्वं च । युज्यते इत्याकृष्यते । तथा च ब्रह्मणः 'कथं भजनीयत्वं युज्यते' न युज्यते । कुतः ? यतस्तस्य 'कथमानन्दित्वादिर्युज्यते' न युज्यते । अगुणित्वादिति यावत् । कुतः ? 'स्वरूपेण' ब्रह्मस्वरूपत्वेनाङ्गीकृते नानन्दादिना हेतुना, आनन्दादिगुणानां ब्रह्मस्वरूपत्वाङ्गीकारादिति यावत् । तत्स्वरूपत्वे च तद्वत्त्वायोगादिति भाव इति योजना । स्वरूपेणानन्दादिना धर्मेण कथमानन्दित्वादिर्युज्यते इत्येकान्वयो वा । तथात्वे युक्तिविरोधादिति शेषः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ 'आनन्दं ब्रह्मणः' इति तैत्तिरीयश्रुतेः 'न बिभेति कदाचन' इत्युत्तरेणान्वयः । 'अथ' इत्यन्या श्रुतिः । 'एषः' विष्णुरेव 'परमः' पूर्णः । इतिशब्द आद्यर्थे । तेन 'आनन्दो ब्रह्म' ( तै. ३-६. ) इत्यादिः गृह्यते । इत्युभयव्यपदेशादिति । इत्यादानु श्रुतिपूर्वयोः ब्रह्मतदानन्दाद्योः उभयोर्गुणित्वतत्स्वरूपत्वयोरुक्तत्वादित्यर्थः । यद्वा—ब्रह्मण इति शेषः । अत्राद्यवाक्यं ब्रह्मणो गुणित्वं वक्ति, द्वितीयं तत्स्वरूपत्वमिति विवेकः । ननु श्रौतमपि गुणात्मकस्य ब्रह्मणो गुणित्वं कथं युज्यते अदर्शनादित्यत उक्तं—अ

'आनन्दं ब्रह्मणो विद्वान्' (तै. २-४.) 'अथैष एव प
रम आनन्दः' (बृ. ६-३-३३.) इत्युभयव्यपदेशादहि
कुण्डलवदेव युज्यते। यथाऽहिः कुण्डली कुण्डलं च।
( ३ ) तुशब्दात्केवलश्रुतिगम्यत्वं दर्शयति ॥ २८ ॥
( ३ ) सू—ॐ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ॐ ॥ २९ ॥

हिकुण्डलवदिति दृष्टान्तवाक्यमनूद्य व्याचष्टे–अहीति। नन्वहेः कुण्डलित्वावस्थायाः कादाचित्कत्वेन खण्डितत्वाद्भेदाभेदयोः सत्त्वेन कुण्डलित्वं कुण्डलत्वं चेत्युभयं युज्यते। ब्रह्मणस्तु आनन्दादिनाऽत्यन्ताभेदात्कथं गुणत्वं गुणित्वं च युज्यत इत्यतः अहिकुण्डलवदिति सावधारणमित्याह—एवेति। विशेषादेवेत्यर्थः। तथा च ब्रह्मणस्तद्धर्माणां च भेदप्रतिनिधिविशेषाङ्गीकारादेवोक्तं युज्यत इति भावः। युज्यत इत्यत्र स्वरूपेणानन्दादिनेत्याद्यनुवर्तते। अनेन सूत्रेऽध्याहार्यं प्रतिज्ञावाक्यं दर्शितम्। ननु नेश्वरो गुणवान्, गुणात्मकत्वात्, यथा अश्वोऽनश्ववान् दण्डोऽदण्डवान्। आनन्दाद्या न ब्रह्मगुणाः तत्स्वरूपत्वाद्ब्रह्मवदिति युक्तिविरोधात् न गुणित्वं गुणत्वं च ब्रह्मणो युज्यत इत्यतः प्रवृत्तं तुशब्दं व्याचष्टे–तुशब्दादिति ॥ केवलेति। प्रत्यक्षाद्यसहितेत्यर्थः। श्रुत्यैकसमधिगम्यत्वमिति यावत्। ब्रह्मस्वरूपानन्दादेरिति शेषः। 'दर्शयति' ज्ञापयति सूत्रकार इत्यर्थः। तथा च न तत्र युक्तिविरोधः शङ्क्य इति भावः। तत्र अहेः कुण्डलित्वस्य सिद्धत्वात् कुण्डलत्ववदित्येकस्यैव ग्रहणं कृतमिति ध्येयम् ॥

( ३ ) दृष्टान्तान्तरेणैतदेव साधयत्सूत्रमुपन्यस्य व्याचष्टे–प्रकाशेति॥ यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं चेत्यनेन भास्वररूपार्थप्रकाशशब्दो भावप्रधानः, प्रकाशाश्रयशब्दोऽपि भावप्रधानः। स चावर्तनीयः। तत्पुरुषश्चायम्। तथा च प्रकाशाश्रयस्यादित्यमण्डलस्य प्रकाशत्ववत् प्रकाशाश्रयत्ववत् प्रकाशित्ववच्चेति दृष्टान्तपदस्यार्थ उक्तो भवति। अत्र पूर्वदृष्टान्त इव न भेदाभेदौ, अखण्डितत्वात्। किन्तु भेदप्रतिनिधिविशेष एवेति ध्येयम्। एवमित्यत्र ब्रह्मण इत्याकृष्यते। तथा ब्रह्मणोऽपि विशेषबलाद्गुणगुणिभावो युज्यत इत्यर्थः। इतिशब्दोऽध्याहार्यः। वाशब्दो व्यवस्थितविकल्पे। 'दृष्टान्तो' वाच्य इति शेषः। उभयेत्युक्तानुमाने अहिकुण्डलवदिति वा प्रकाशाश्रयवदिति वा दृष्टान्तपदं प्रयोज्यमिति सूत्रकृतो हृदयमिति भावः। नन्वत्र यावद्द्रव्यभावि

यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च एवं वा दृष्टा न्तः । तेजोरूपत्वाद्ब्रह्मणः ॥ २९ ॥

( ४ ) सू—ॐ ॥ पूर्ववद्वा ॥ ॐ ॥ ३० ॥

यथैक एव कालः पूर्व इति अवच्छेदको अवच्छेद्य श्च भवति । अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः । स्थूलम तीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः ।

( ५ ) प्रकाशवत्कालवद्वा यथाऽङ्गे शयनादिकम् ।

---

गुणाभिन्नानां तद्वतां घटादीनामपि दृष्टान्तयितुं शक्यत्वात्तान्विहाय विशिष्यादित्यग्रहणे का विवक्षेत्यतः प्रवृत्तं तेजस्त्वादिति सूत्रखण्डं व्याचष्टे—तेजोरूपत्वादिति । ब्रह्मणः आदित्यस्येत्युभाभ्यामस्य सम्ब न्धः । तेन सूत्रे उभयोरिति पदानुवृत्तिस्सूचिता । तथा च घटादीना मतेजोरूपत्वात् तान् परित्यज्य तेजोरूपत्वसाधर्म्यविवक्षयाऽऽदित्यदृ ष्टान्तोक्तिरिति भावः ॥

( ४ ) दृष्टान्तान्तरेण ब्रह्मणो गुणगुणिरूपत्वं साधयत्सूत्रं पठित्वा व्याचष्टे—पूर्ववद्वेति ॥ एक एवेति । अभिन्नोऽपीत्यर्थः । कालशब्दस्त दंशपरः । पूर्व इत्यनन्तरमपि कालशब्दो योज्यः । भवतीत्यनन्तरं ए वमित्यादि च । तथा च यथा पूर्वः काल इति प्रयोगे पूर्वेणाभिन्नोऽपि कालः पूर्व इति 'अवच्छेदको' विशेषकः काल इति 'अवच्छेद्यो' विशेष्यश्च विशेषबलाद्भवत्येवमिति वा दृष्टान्तयोजना । ननु व्यर्थोक्ते रपर्यवसानात्किमर्थोऽयं दृष्टान्त इत्यत आह—अतीति । 'अपेक्षया' विवक्षया । ब्रह्मण इति शेषः । 'एषः' कालदृष्टान्तः । तर्ह्यलमनेन दृ ष्टान्तद्वयेन, किं भेदाभेदविषयेणाहिकुण्डलदृष्टान्तेनेत्यत आह—स्थू लेति । चोऽप्यर्थः । 'प्रदर्शनार्थे' एकस्मिन्नेव विशेषणविशेष्यभाव स्येति शेषः । अत एवास्य प्राथमिकत्वम् । उभयत्र सूत्रकृदभिहित मिति शेषः ॥

( ५ ) सूत्रकृदुक्तार्थे स्मृतिं पठति—प्रकाशवदिति ॥ आदित्यम ण्डलप्रकाशवदित्यर्थः । 'कालवत्' साक्षिसिद्धपूर्वोत्तरादिकालावय ववदित्यर्थः । 'अङ्गे' शरीरे 'शयनं' अवस्थाविशेषः, न तु निद्रा म नोधर्मो वा । तथा च अङ्गे शयनमिति प्रयोगे अङ्गाभिन्नमपि शयनं यथा अङ्गविशेषणकं भवति अङ्गं शयनविशेषणं भवतीत्यर्थः । आदि पदेनाङ्गं शेत इत्यङ्गस्य शयनक्रियाकर्तृभावो गृह्यते । अङ्गमङ्गमधिशे

ब्रह्मणश्चैव मुक्तानामानन्दो भिन्न एव तु ॥
इति नारायणाध्यात्मे ।
(६) आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् ।
कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेत् ॥ इति
पाद्मे ॥ ३० ॥
(७) सू—ॐ ॥ प्रतिषेधाच्च ॥ ॐ ॥ ३१ ॥
'एकमेवाद्वितीयम्' (छा. ६-२-१.) 'नेह नानाऽ

त इत्यङ्गस्य शयनक्रियाकर्मकर्तृभावो वा । अनेनाहिकुण्डलदृष्टान्तः सङ्गृहीतः । कुण्डलस्याप्यवस्थाविशेषत्वात् । 'एव' एवम् । तुशब्दो विशेषार्थः । चशब्दो भिन्नक्रमः । तथा च यद्यप्यभिन्न एवानन्दः, तथाऽपि प्रकाशवत्कालवद्वा ब्रह्मणो मुक्तानां चेत्येवं तत्सम्बन्धित्वेनोच्यते इत्येकोऽन्वयः । यथाऽङ्गे 'शयनादिकं' शयनक्रियानिरूपितविशेषणत्वकर्तृत्वादिकं तदभिन्नमपि तद्धर्मत्वेनोच्यते, तथा ब्रह्माभिन्नोऽप्यानन्दादिर्विशेषादेव तद्धर्मत्वेनोच्यते इत्यपरोऽन्वयो द्रष्टव्यः । न त्वेकान्वयः । आद्ययोर्विशेषनिर्वाह्यत्वात् अन्त्यस्य भेदनिर्वाह्यत्वात् । अत एव प्रकाशवत् कालवदिति यथाऽङ्गे शयनादिकमिति विचित्रोक्तिः ॥

(६) सूत्रकृदुक्तार्थे स्मृत्यन्तरं चाह—आनन्देन त्विति ॥ तुरवधारणे । स्वाभिन्नेनैवेति सम्बध्यते । 'व्यवहारो' विशेषणविशेष्यभावेन व्यपदेशः । भवतीति शेषः । कालवदित्येतद्विवृणोति—यथेति । 'स्वावच्छेदकतां' स्वविशेषणकत्वम् । स्वावच्छेद्यत्वस्याप्युपलक्षणमेतत् । एवमानन्दादिरपीत्युपस्कृतवाक्येनास्यान्वयः । नारायणाध्यात्मे ब्राह्मे इत्युभयत्रापि सूत्रोक्तमुक्तमिति शेषः । आद्यदृष्टान्तस्य विषमत्वाद्द्वितीयस्मृतावनुक्तिः ॥

(७) ननु किमनेन गुणगुणिनोरभेदमभ्युपेत्य ब्रह्मणो गुणित्वप्रतिपादनेन । गुणगुणिनोर्भेद एव किं न स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—प्रतिषेधाच्चेति ॥ इति वाक्येन ब्रह्मणस्तद्गुणानां च भेदनिषेधादित्येवं भाष्यस्य सूत्रेणान्वयः । अनेन सौत्रश्चशब्दः शङ्काव्यावर्तकः । तेन न ब्रह्मतद्गुणादेर्भेदः शंक्य इति प्रतिज्ञा सिद्धा । कुतः ? तस्य भेदस्य प्रतिषेधादिति वा, उभयोर्गुणगुणिनोरुभयत्वस्य भेदस्य प्रतिषिद्धत्वादिति वाऽध्याहारानुवृत्तिभ्यां सूत्रयोजना दर्शि

स्ति किञ्चन' (कठ. २-४-११.) इति भेदस्य ॥ ३१ ॥

—*✿*—

१६. अधिकरणम् ॥

(१) सू—ॐ ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशे भ्यः ॥ ॐ ॥ ३२ ॥

न चानन्दादित्वाल्लोकानन्दादिवत्, 'एष सेतुर्विधृ

ता भवति।' 'एकमेव' इति छन्दोगश्रुतिः। तस्याः 'एकं' ज्ञानानन्दादिगुणैरवयवैश्चाभिन्नं ब्रह्मैकमेव, न घटादिवदवयवसहितैकत्वयुक्तं स्वावयवैर्भिन्नाभिन्नं, 'अद्वितीयं' समाभ्यधिकशून्यमित्यर्थः। 'नेह' इति कठश्रुतिः। तस्याः 'इह' ब्रह्मणि 'किञ्चन' गुणगुण्यादिकं 'नाना' भिन्नं नास्तीत्यर्थः। तत्त्वप्रदीपे तु 'इह' परमेश्वररूपेषु अवयवेषु धर्मेषु च किञ्चन नाना नास्तीत्यर्थ इत्युक्तं। एतत्पक्षे नानाशब्दो नानात्वार्थकः। तथा च 'किंचन' किंरूपोऽपि हीनाधिकभावो वा अन्योन्याभावो वा पृथक्त्वरूपो वा भेदो नास्तीत्यर्थः ॥ १५ ॥

॥ इति अहिकुण्डलाधिकरणम् ॥

—*—

१६. अधिकरणम् ॥

(१) अत्र भगवद्गुणानां लोकविलक्षणत्वं समर्थ्यते। सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—परमिति ॥ अत्रेत्थं योजना। ब्रह्मानन्दादिकं 'आनन्दादित्वात्' तच्छब्दवाच्यत्वाद्धेतोः 'लोकानन्दादिवत्' लौकिकजीवानन्दादिसदृशं न, किन्त्वतो लोकानन्दादेः 'अलौकिकत्वात्' तृतीयार्थे पञ्चमी। अलौकिकत्वेन प्रकारेण 'परं' विलक्षणं अलौकिकमेवेत्येका प्रतिज्ञा। यद्वा—परब्रह्मानन्दादिकं 'अतो' लोकानन्दादेः 'परं' विलक्षणमित्येव प्रतिज्ञासमर्पकम्, नालौकिकत्वादित्यपि। न चेत्यादिकमपि अतः परमेवेति सावधारणप्रतिज्ञासूचितपूर्वपक्षनिषेधकं, न प्रतिज्ञान्तर्गतं, अलौकिकत्वादित्येतच्च हेतुसमर्पकमित्यपरा। प्रथमपक्षे कुतोऽलौकिकत्वरूपवैलक्षण्यमित्यतः प्रवृत्तं सेतून्मानेति हेतुं व्याचष्टे—एष इति। यद्वा—द्वितीयपक्षे वैलक्षण्ये साध्येऽतःशब्दोक्तस्यालौकिकत्वादिति हेतोः साधकतया प्रवृत्तं हेतुवाक्यं व्याचष्टे—एष इति। सेतुपदं भावप्रधानमित्याशयेन इति सेतुत्वमित्युक्तम्। एवंविधमाधारत्वरूपं वैलक्षण्यमित्यर्थः। हिशब्दो यत इत्य

तिः' ( छा.८-४-१. ) 'य एष आनन्दः परस्य' 'एष नित्यो महिमा ब्राह्मणस्य' (बृ.६-४-२३.) इति सेतुत्वं ह्युच्यते । 'यतो वाचो निवर्तन्ते' ( तै.२-४. ) इत्युन्मानत्वं 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' ( बृ.६-३-३२. ) इति सम्बन्धः ।

र्थे । 'उच्यते' व्यपदिश्यते । इत्युच्यत इति सर्वत्र सम्बध्यते । अस्यात एभ्यो व्यपदेशेभ्योऽलौकिकत्वावगमादित्यन्वयः । अत्र प्रथमपक्षे सेतुत्वादिधर्मवत्त्वरूपवैलक्षण्ये व्यपदेशः साक्षाद्धेतुः । द्वितीये तु अवगमो हेतुः । व्यपदेशस्तु तत्साधक इति विवेकः । न च व्यपदेशेभ्यः सेतुत्वादिकमेवावगम्यते नालौकिकत्वहेतुरिति वाच्यम् । अलौकिकत्वादित्यस्य टीकारीत्या लोकानन्दादावसम्भावितसेतुत्वादिधर्मवत्त्वादित्यर्थाभ्युपगमात् । 'एषः' इति शाखान्तरवाक्ये विधृतिः सेतुः धारणसमर्थाश्रय इत्यर्थः । एष इति क इत्यत आह—य इति । नन्वत्रानन्दस्य विष्णुसम्बन्धित्वं न प्रतीयते परशब्दस्यानेकार्थत्वादित्यत उक्तं-एष इति । प्रकृतसार्वज्ञ्यपूर्णानन्दादिरित्यर्थः। तथा च विष्णुपरब्राह्मणश्रुतिनित्यमहिमत्वलिङ्गबलाद्विष्णुसम्बन्धित्वं ज्ञायत इति भावः। 'यतः' इति श्रुतिरीक्षत्यधिकरणे व्याख्याता। उन्मानपदमपि भावप्रधानं कृत्वा व्याचष्टे–उन्मानत्वमिति । उद्गतं मानं मर्यादा यस्मादिति विग्रहः । पूर्णत्वमित्यर्थः । अत्र यद्यपि सर्वात्मना वेदाद्यवाच्यत्वमानन्दस्य प्रतीयते, न विष्णोः, न चोद्गतमर्यादत्वम् । तथाऽपि निमित्तेन नैमित्तिकोपलक्षणान्नासङ्गतिः । व्याख्यानान्तरे वा । स्वरूपत्वाद्यानन्दस्य, ततो नासङ्गतिः । 'एतस्य' इति बृहदारण्यकवाक्यम् । 'अन्यानि भूतानि' ब्रह्मादीनि मुक्तान्यपि 'एतस्य' विष्णोरेवानन्दस्य 'मात्रां' प्रतिबिम्बांशमश्नन्तीत्यर्थः ।

प्रतिबिम्बरूपविप्लुदुक्तं तदानन्दस्य चाखिलाः ।
मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदा ॥

इति बृहद्भाष्योक्तेः । इतीत्यनन्तरं वाक्यबोधित इति शेषः । 'सम्बन्धो' बिम्बप्रतिबिम्बभावः उपजीव्योपजीवकभावरूपः । अन्यज्ज्ञानमिति । 'जीवानां ज्ञानमन्यत्' नियामकादीशज्ञानान्नियम्यत्वेन विलक्षणमित्यर्थः । 'परस्य' विष्णोः । वैलक्षण्ये निमित्तमाह—नित्येति । परस्य ज्ञानं 'नित्यानन्दाव्ययं' नियमेनानन्दरूपमव्ययं च 'पूर्णं' अ

अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।
नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते ॥ इति भेदः ।
अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ॥ ३२ ॥
( २ ) सू—ॐ ॥ दर्शनात् ॥ ॐ ॥ ३३ ॥

परिमितं च 'विधीयते' तेन रूपेण व्यपदिश्यते शास्त्रेषु, जैवं तु न तथेत्यर्थः । इतीति । इति श्रुतिवाक्य इत्यर्थः । 'भेदः' ईशज्ञानस्याधिक्यरूपं वैलक्षण्यम् । यद्यप्युदाहृतवाक्यैरानन्दमात्रस्यालौकिकत्वमवगम्यते, न सर्वगुणानाम् । तथा च ब्रह्मानन्दादिकमित्यादिपदायोगः । तथाऽपि सेत्वादिवाक्येष्वानन्दग्रहणात् वैलक्षण्यवाक्ये ज्ञानग्रहणात् तस्य चानन्दाभेदोक्तेः प्रयोजनान्तराभावात् विचित्रोक्तिबलात्पूर्वत्र ज्ञानादीनामुत्तरत्रानन्दादीनां चोपलक्षणया ग्रहणावगमान्न दोषः । अथ वा—न चेत्यनेन अतः परमित्यनेन ज्ञापितपूर्वपक्षं प्रतिषिद्धय 'एषः' इत्यादिना सौत्रहेतून्व्याख्याय अतः परमिति प्रतिज्ञा व्याख्याते । अत्रात इत्यनूदितपदस्य लौकिकत्वादिति पदच्छेदेन 'अमृतत्वस्येशानः' (तै.आ.३-१२.) इतिवत् भावभवित्रोरभेदविवक्षया त्वप्रत्ययस्य स्वार्थिकत्वेन वा लौकिकत्वादिति व्याख्यानम् । तथा च 'अतो लौकिकत्वात्परं' अलौकिकमित्यर्थः । लौकिकत्वात्परं तदतिक्रान्तमिति यथाश्रुतमेव वा । अस्मिन् पक्षे न चेत्यपि न सिद्धान्तप्रतिज्ञान्तर्गतं, किन्तु द्वितीयपक्ष इव पूर्वपक्षप्रतिषेधकम् । आद्यपक्षे तु तदपि प्रतिज्ञान्तर्गतम् । न चैवमस्य द्वितीयसाङ्कर्यम् । नञ्प्रश्लेषाप्रश्लेषाभ्यां भेदात् । ब्रह्मानन्दादिकमित्यनेन अहिकुण्डलसूत्रे प्रकृतमीशानन्दादिकमिह विशेष्यत्वेन संयोज्यमित्युक्तं भवति । शिष्टं सुगमम् । तत्त्वप्रदीपे तु परमित्यस्य उत्तममित्यर्थमुपेत्य 'एष सेतुः' इत्यादौ आधारत्वामितत्वोपजीव्यत्वनियामकत्वानां व्यपदेशात् 'नित्यानन्द' इत्यादावाधिक्येन वैलक्षण्यव्यपदेशाच्च सर्वस्मात्परं उत्तममेव ब्रह्मानन्दादिकमिति सूत्रार्थोऽभिहितः । अस्मिन् पक्षे 'अतो' व्यपदेशेभ्यः सेतुत्वाद्यलौकिकधर्मवत्त्वरूपालौकिकत्वावगमात्परमिति भाष्यार्थोऽवगन्तव्यः ॥

( २ ) हेत्वन्तरेणानन्दादेरलौकिकत्वं समर्थयत्सूत्रमुपन्यस्य व्याचष्टे—दर्शनादिति ॥ मनोवाग्गोचरत्वादित्यर्थः । अत एवोत्तरत्र तादृक्श्रुत्युपन्यासः । अन्येति । ब्रह्मणोऽन्येषां जीवानामानन्दादीनामित्य

दर्शनादेव चान्यानन्दादीनाम् ।

( ३ ) 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते तस्माद्ब्रह्मेत्याचक्षते ' इति कौण्डिन्यश्रुतिः ॥ ३३ ॥

( ४ ) अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—

र्थः । अस्य अतः परमिति साध्यवाक्येनान्वयः। एवशब्दो लिङ्गस्य निरवकाशत्वेन प्राबल्यसूचकः । चो भिन्नक्रमः । न केवलं सेतुत्वादिभ्यः, किन्तु दर्शनाच्च । ब्रह्माद्यानन्दादीनां मनसा विषयीकरणात् वाचा व्यवहरणात् परानन्दादीनां चातथाभूतत्वाच्चेति समुच्चये । न चान्यानन्दादीनां तत्तत्साक्षिवेद्यानां च कथं अन्यमनोजन्यप्रत्यक्षविषयत्वमिति वाच्यम् । तेषां परिमितत्वेन योगिमनोजन्यप्रत्यक्षविषयत्वसम्भवात् । सूत्रभाष्ययोः मनसा वाचेत्यध्याहारेण दर्शनपदस्य मनोवाग्वृत्तिसामान्यपरत्वाच्च ॥

( ३ ) ननु अन्यानन्दादीनां मनोवाग्गोचरत्वादस्तु लौकिकत्वं, तावता ब्रह्मानन्दादेः कथमलौकिकत्वसिद्धिः मानाभावादित्यतस्तत्प्रमाणत्वेन दर्शनपदोक्तां श्रुतिमाह—अदृष्टमिति ॥ परमादन्यैस्सर्वात्मनाऽस्पष्टत्वेन च मनसाऽदृष्टमित्यर्थः । 'अव्यवहार्यं' वाचा । तत्त्वप्रदीपरीत्याऽहेयोपादेयं वा । 'अव्यपदेश्यं' वाचा विविक्ततया निरूपयितुमशक्यम् । तत्त्वप्रदीपरीत्या वाचा अव्यवहार्यं वा । इति ब्रह्मण इति । ब्रह्मण आनन्दादिकमेवं ज्ञेयमित्यर्थः । तस्माददृष्टत्वादिनाऽलौकिकानन्दादिपूर्णत्वाद्ब्रह्मेत्याचक्षते ज्ञानिनः । तस्मात्तच्छब्दमुख्यवाच्यत्वाद्ब्रह्मेति शब्देन परं ब्रह्म व्यवहरन्तीत्यर्थः । श्रुतिरिति । ब्रह्मानन्दादेरलौकिकत्वं वक्तीत्यर्थः ॥

( ४ ) नन्वेवमानन्दादेरलौकिकत्वात्कथं श्रुतिपुराणादिष्वानन्दादिपदप्रयोग इत्याशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे—अप्रसिद्धस्येति ॥ ब्रह्मानन्दादेरिति विपरिणामेनान्वेति । हेतुगर्भमिदम् । कथमित्याक्षेपे । आनन्दशब्दात्परं इतिशब्दो योज्यः । आदिशब्देन ज्ञानमित्यादिव्यवहारो गृह्यते । तथा च 'अप्रसिद्धस्य' ब्रह्मानन्दादेः 'आनन्दादिव्यपदेशः' ब्रह्मानन्दादिकर्मकानन्दादिशब्दव्यवहारः 'कथं' केनोपायेन युज्यते । एवं 'कथं' किमर्थं युज्यते न युज्यते, तस्याप्रसिद्धत्वेन तच्छब्दानां तत्र शक्तिग्रहायोगात् तत्र तत्प्रयोगे प्रयोजना

सू—ॐ ॥ बुध्यर्थः पादवत् ॥ ॐ ॥ ३४ ॥
जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानि' (ऋ.१०-९०-३.) इति तथा ।

( ५ ) अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।

---

भावाश्चेत्याक्षेपाभिप्रायः । आनन्दादिव्यपदेश इत्येतत् बुद्ध्यर्थ इत्यनेनापि सम्बध्यते । बुद्ध्यर्थ इत्यस्य बुद्ध्यर्थमिति व्यत्ययेन दृष्टान्तभागेऽप्यन्वयमभिप्रेत्य पादवदित्यंशं विवृणोति—जीवेति । सम्बन्धः अंशांशिभावः । तथा च यथा पुरुषपादस्य तदंशत्वं तथा भूतानामिति जीवेश्वरयोरंशांशित्वसम्बन्धज्ञापनार्थमित्यर्थः । न चैवं जीवेश्वरयोरभेदप्रत्ययापत्तिः। भेदश्रुतिपर्यालोचनया ज्ञातांशांशिभावस्यापि पुंसो भिन्नांशत्वस्यैव प्रतीतेः । अप्रसिद्ध इति । पुरुषदेहावयवप्रसिद्धचरणविलक्षणः 'त्रिपादस्यामृतं दिवि' (ऋ.१०-९०-३.) इत्युक्तश्वेतद्वीपानन्तासनवैकुण्ठगतनारायणवासुदेववैकुण्ठाख्यमूर्तित्रयविलक्षणश्चेत्यर्थः । यद्यपितथाऽपीत्यर्थे, न केवलं प्रसिद्धः, किन्तु अप्रसिद्धोऽपीति समुच्चये वा अपिशब्दः । पाद इति । विश्वाख्योंश इत्यर्थः । इति श्रुतिगतेन पादशब्देनेत्यन्वयः । 'व्यपदिश्यते' व्यवह्रियते । पादवदित्यनेन लब्धं दार्ष्टान्तिकभागं दर्शयति—तथेति । 'तथा व्यपदिश्यते' तद्वदेव व्युत्पाद्यत इत्यर्थः । एवं 'तथा' लौकिकविलक्षणत्वेन अप्रसिद्धस्याप्यानन्दादेर्व्यपदेशो 'बुद्ध्यर्थः' आनन्दादेरनुकूलवेदनीयत्वादिज्ञापनार्थ इत्यर्थः । प्रकारान्तरेण तत्प्रत्यायनोपायाभावादिति भावः । न चैवमप्यलौकिकत्वविशिष्टानन्दप्रत्ययोपायाभाव इति वाच्यम् । अनुकूलवेदनीयत्वादिज्ञानमात्रवतः पुरुषस्य 'अदृष्टमव्यवहार्यम्' (कौण्डिन्य.) 'अलौकिकास्तस्य शब्दाः तथाऽर्थाः' (       ) 'अलौकिको ह्येष विष्णुः परत्वात्' (       ) इत्यादिश्रुत्यन्तरबलेनालौकिकत्वज्ञानसम्भवात् । सूत्रभाष्ययोर्यत इति शेषः । अस्यातो नानन्दादिव्यपदेशायोगो न वा प्रयोजनाभाव इत्यवतारिकालब्धसाध्येनान्वयः ॥

( ५ ) अत्रार्थेऽनुभवसिद्धदृष्टान्तप्रतिपादिकां स्मृतिं चाह—अलौकिकोऽपीति ॥ यद्यपितथाऽपीत्यर्थेऽपिशब्दः । आदिपदादानन्दादिग्रहः । 'तच्छब्दैः' ज्ञानमित्यादिरूपैरलौकिकैश्शब्दैः 'लोकस्य' जनस्य ज्ञापनार्थायैवेति सम्बन्धः । बोधकत्वसर्वव्यवहारहेतुत्वानुकूलवेदनी

ज्ञापनार्थाय लोकस्य यथा राजेव देवराट् ॥ इति पाद्मे॥३४॥

——*——

१७. अधिकरणम् ॥

( १ ) परानन्दमात्रात्वे कथं ब्रह्माद्यानन्दादीनां विशेष इति ।

यत्वादिज्ञापनप्रयोजनायेत्यर्थः । यथैव ' देवराट् ' देवेन्द्रः प्रसिद्धराज विलक्षणोऽपि राजेवास्ते इति यथा राजेतिशब्देन ' भण्यते ' व्यवह्रिय ते तथेत्यर्थः । यद्वा—यथा राजा तथेन्द्र इति वाक्येनेवेत्यर्थः । ' भण्य ते ' निर्दिश्यते । अत्र ईश्वरानन्दादिरूपाणामर्थानामलौकिकत्वं नाम अप्राकृतत्वं शब्दानामलौकिकत्वं नाम वैदिकत्वमिति भावबोधकाराः। तन्न, लौकिका अपि शब्दाः अमुष्मिन् प्रवर्तमानाः अधिकार्थान् लोक विलक्षणानन्दादीन्वदन्तीति वाक्यशेषानुपपत्तेः । संस्कृतत्वरूपवैदि कत्वस्य लौकिकेष्वपि सत्त्वात् प्राकृतानां चेह प्रसक्त्यभावात् । त स्माच्छब्दतदुपजीवीतरप्रमाणगम्यत्वं लौकिकत्वमर्थस्य तदगम्यत्व मलौकिकत्वम् । एवंविधार्थके एव शब्दस्य लौकिकत्वालौकिकत्वे इ ति द्रष्टव्यम् । केचित्तु—शब्दस्यालौकिकत्वं लोकाप्राप्तभगवत्स्वरूप भूतानन्तवर्णपदादिरूपत्वमित्याहुः । तन्मूलं चिन्त्यम् । पाद्मे चायमर्थ उक्त इत्यन्वयः ॥ १६ ॥

॥ इति परमताधिकरणम् ॥

——:*:——

१७. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्माद्यानन्दादीनां भगवदानन्दादिप्रतिबिम्ब त्वं पूर्वनयोक्तं समर्थ्यते । पूर्वपक्षयति—परेति ॥ आनन्दशब्दात्परं आदिशब्दो योज्यः । मात्रात्वं प्रतिबिम्बत्वम् । कथमित्याक्षेपे । ब्रह्मा चतुर्मुखः । मुक्तब्रह्मादिपरोऽयं शब्दः । उक्तं हि तत्त्वप्रदीपे—सृतिगा नां सृष्ट्यादिना वैषम्यकालुष्यादेर्वैचित्र्यमुपपद्यते, न मुक्तब्रह्माद्यान न्दादीनां विशुद्धरूपाणां तदुपपत्तिरिति । मिथ इति शेषः । ' विशे षो ' शुद्धचैतन्यरूपेण वैचित्र्यं स्यात् । यत इति शेषः । तथा च य तो ब्रह्माद्यानन्दादीनां परमात्मानन्दादिमात्रात्वे अभ्युपगते तेषां ' मि थः ' अन्योन्यं ' विशेषः ' वैचित्र्यं कथं स्यात् न स्यात्, अन्यथा बि म्बभूतभगवदानन्दादावपि विशेषः स्यात्, तथा च भगवद्रूपेषु वि शेषः गुणतारतम्यम्। एवं चेत् कथं तत्र भक्तिः कर्तव्या स्यात्, न क

( २ ) अत उच्यते—

सू—ॐ ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ॐ ॥ ३५ ॥

यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बे विशेषः एवमानन्दादेरपि ।

( ३ ) ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।
प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः ॥
इति वाराहे ॥ ३५ ॥

---

तैव्यैव स्यात्, अतः कथं ब्रह्माद्यानन्दादीनां परानन्दादिमात्रात्वं तत्प्रतिबिम्बत्वं स्यात्, नास्त्येवेति योजना ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ यथेति । दर्पणादीत्यादिपदेन जलसूर्यकान्तादेर्ग्रहणम् । प्रसिद्धत्वाद्दर्पणग्रहणं, न प्रकृतोपयुक्तत्वात् । अपिर्यद्यपितथापीत्यर्थे । दृष्टान्तदार्ष्टान्तिकसमुच्चये चः । आदित्यशब्दात्परमादिशब्दो योज्यः । तथा च यथाऽऽदित्यादेः प्रतिबिम्बे सूर्यकान्ताद्युपाधिकृते सूर्यकान्तादिस्थानविशेषात् स्थानगुणात् विशेषः अग्निजनकत्वादिवैचित्र्यं, एवं परमात्मानन्दादेः प्रतिबिम्बे जीवानन्दादौ ब्रह्मादिस्थानगतभक्त्यादिगुणविशेषाद्विशेषो वैचित्र्यं युज्यत इति योजना । अस्यातो न प्रतिबिम्बे वैचित्र्यानुपपत्तिरित्यध्याहृतसाध्येनान्वयः । अनेन सूत्रे षष्ठ्यन्तात्सप्तम्यन्ताच्च वतिः, आवर्तनीयश्चायं, प्रतिबिम्बोपलक्षकश्च विशेषशब्दोऽप्यावर्तनीय इति सूचितम् ॥

( ३ ) अत्र स्मृतिं चाह—ब्रह्मादीति ॥ परमस्य आनन्दादिः 'मध्योच्चादिविभेदतो' मध्यमोत्तमाधमभेदेन 'ब्रह्मादिगुणवैशेष्यात्' ब्रह्मादिगतभक्तिज्ञानादिगुणवैचित्र्यात् 'प्रतिबिम्बत्वमायाति' प्रतिफलितो भवति । ब्रह्मादिस्वरूपोपाधौ मध्योच्चादिभेदतः प्रतिबिम्बको भवतीत्यर्थः। उक्तं हि तत्त्वप्रदीपे—एवं परमात्मानन्दादेरपि ब्रह्मादिस्थानगतगुणविशेषात् प्रतिबिम्बभूतानन्दादिविशेष इत्युक्त्वा प्रतिबिम्बत्वमायातीत्यर्थ इति । भावबोधे तु—ब्रह्मादीनामिति पदमध्याहृत्य ब्रह्मादीनामानन्दादिः परस्यानन्दादेर्ब्रह्मादिगुणवैशेष्यात् मध्योच्चादिविभेदतः 'प्रतिबिम्बत्वमायाति' प्रतिफलितो भवति तदधीनत्वे सति तत्सदृशो भवतीति व्याख्यातम् । तत्पक्षे तत्त्वप्रदीपविरोधः तावत् स्फुटः, प्रतिबिम्बो भवतीत्यनुक्त्वा प्रतिफलितो भवतीत्युक्त्वा च

(४) सू—ॐ ॥ उपपत्तेश्च ॥ ३६ ॥
ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता ॥
इति पाद्मे ॥ ३६ ॥

—*—

१८. अधिकरणम् ॥

(१) ध्यानकाले यच्चित्ते प्रदृश्यते तदेव ब्रह्मरूपं अतः कथ
मव्यक्तेति ।

---

स्वारस्यं चेति ध्येयम् । वाराह इति । उक्तार्थोऽभिहित इति शेषः ॥

(४) युक्त्यन्तरेण बिम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बवैचित्र्यमु पपादयत्सूत्रं पठित्वा स्मृत्यैव व्याचष्टे—उपपत्तेश्चेति ॥ न केवलं प्रति बिम्बानन्दादिवैचित्र्यस्य बिम्बावैचित्र्येऽपि स्थानविशेषादुपपत्तिः, किन्तु बिम्बभूतभगवदैश्वर्यवशाच्चेति सूत्रवृत्ति चशब्दस्याध्याहृतहे तुनाऽन्वयं चाभिप्रेत्यासिद्धिपरिहारायोपपत्तेरित्यस्य उक्तहेतुकोपप त्तिवचनादित्यर्थमुपेत्य स्मृतिरूपं तद्वचनमुदाहरति—ऐश्वर्यादिति ॥ विष्णोः परमादैश्वर्याद्ब्रह्मादीनां गुणानां भक्त्यादीनां 'अनादितः' अनादिभक्त्यादिवशादिति यावत् । ब्रह्मादीनामानन्दादेः 'विचित्रता' मध्योच्चादिभेदभिन्नं तारतम्यं 'हि' आनन्दश्रुत्यादिप्रसिद्धं 'सूपपन्ना' सम्यगुपपन्नमित्यर्थः । एकस्यैवानन्दस्य चूतफलादिभोगप्रयुक्ता ये आनन्दादेर्विशेषास्तदात्मकत्वं विचित्रत्वं तु प्रकृतानुपयुक्तम् । भ क्त्यादिग्रहणेन पूर्वसूत्रोक्तभक्त्यादिरूपनिमित्तं चशब्दसमुच्चेयं द र्शितम् । भक्त्यादीनामनादित्वोक्त्या पुरुषापाद्यानां भक्त्यादिस्थानगु णानां कथं स्वाभाविकानन्दादिवैचित्र्ये हेतुत्वमिति शङ्का परिहृता । पाद्म इत्यस्य सूत्रेणान्वयः । 'उपपत्तेः' उपपन्नत्वोक्तेरित्यर्थः । अस्य नासिद्धिरित्यध्याहृतसाध्येनान्वयः ॥ १७ ॥

॥ इति स्थानविशेषाधिकरणम् ॥

—*—

१८. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मणो ध्यानप्रतीतादन्यत्वोक्त्या पुनरव्यक्त त्वं समर्थ्यते । पूर्वपक्षयति—ध्यानेति ॥ योजना तु—'यत्' यतो ब्र ह्म ध्यानकाले 'चित्ते' मनसि 'प्रदृश्यते' तेन प्रतीयते अतः कथं

( २ ) अत आह—

सू--ॐ ॥ तथाऽन्यत्प्रतिषेधात् ॥ ॐ ॥ ३७ ॥

यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपि ।

यन्मनसा न मनुते येनाहुर्मनो मतम् ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते (केन.१-६.) ।

इति प्रतिषेधात् ।

---

ब्रह्मणोऽव्यक्तता तस्माद्व्यक्तमेवेति । न च यच्चित्ते प्रदृश्यते न तद्ब्र ह्मेति वाच्यम् । यतस्तद्ब्रह्मरूपमेव, न ततोऽन्यत् । ननु ध्यानप्रतीतं न ब्रह्म, तथा सति ध्यातृबहुत्वेन तस्य बहुत्वापत्तेरित्यतोऽप्युक्तं—ब्र ह्मरूपमिति । रूपशब्दोऽत्र व्यक्तिपरः । समुदायैकवचनमेतत् । तथा च चित्ते प्रतीतानि ब्रह्मरूपाण्येव अतः स्वरूपभेदाभावेऽपि रूपाणां नानात्वात् ध्येयबहुत्वोपपत्तिरिति भावः ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ ब्रह्मेत्येतत् तदानन्दादेरप्युपलक्षकम् । 'उपासाकृतात्' उपासनेन मानसत्रास नामयस्य वस्तुनो मनसाऽवलोकनाख्येन विषयीकृताद्भासनामयात् । अपिर्भिन्नक्रमः समुच्चयेऽवधारणे च । अत्र यथा जीवानन्दादेः ब्रह्मान न्दादिकमन्यत् तथा ब्रह्म उपासाकृतात् अन्यदिति नान्वयः । वैषम्ये णोपमानोपमेयभावायोगात् । किन्तु जीवानन्दादेरित्यतः परं यथाश ब्दस्यावृत्त्या योजनेन यथा जीवानन्दादेर्यथा येन विकृतत्वापरपर्याया न्यथात्वाल्पत्वादिना कारणेन ब्रह्मानन्दादि ततः 'अन्यत्' वि लक्षणं तथा तत्सदृशेन दुर्लक्षणत्वादिना कारणेन ब्रह्मापि उपासाकृ तात् 'अन्यदपि' विलक्षणमेवेति । अनेन सौत्रस्तथाशब्दः 'परमतः' इत्यत्रोक्तन्यायातिदेशकः समुच्चयार्थ इत्युक्तं भवति । इतीति । इत्येवं रूपे तलवकारवाक्ये उपासाकृतस्य ब्रह्मत्वप्रतिषेधादित्यर्थः। अनेन सू त्रे तदव्यक्तमित्यनुवर्तनीयम् । अन्यदिति चावर्तनीयम् । तथा च 'त त्' ब्रह्म उपासाकृतादन्यत् । कुतः? यतोऽन्यत् अत एव शेषशेषि णोरैक्यानुपपत्तेरेव श्रुतौ तस्य चित्ते प्रतिबिम्बितस्य ब्रह्मत्वप्रतिषेधः, अतः प्रतिषेधात् तद्वा ब्रह्म न, यतोऽन्यत् अतोऽव्यक्तमेव, न व्यक्तमिति सूत्रयोजना दर्शिता भवति। यदिदं वस्तु 'उपासते' ध्याय न्ति नेदं ब्रह्म, किन्तु पुरुषो यद्वस्तु 'न मनुते' साकल्येन न जानाति, येन वस्तुना मनो ज्ञातमाहुः कवयस्तदेव त्वं ब्रह्मेति विद्धीत्यर्थः । उ

( ३ ) पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यद्तस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते त्वापरोक्ष्येण ज्ञानेनैव परं पदम् ॥
उपासनात्त्वापारोक्ष्यं गमयेत्तत्प्रसादतः ॥

मां प्रति शङ्करवाक्यमेतत् । यद्यपि तलवकारभाष्ये आसेति भिन्नं पदमुपेत्य नेदं जीवस्वरूपं ब्रह्म, किन्तु यत् 'ते' तव 'उप' समीपे 'आस' नियामकतया आस्ते तदेव ब्रह्म विद्धीति श्रुत्यर्थोऽभिहितः । तथाऽपि प्रकृतोपयुक्तं व्याख्यानान्तरमेतत् । तत्राप्यासत इत्येकपद्यं वेत्यविरोधः ॥

( ३ ) ननु ध्यानकाले प्रतीतस्याब्रह्मत्वे कथं ब्रह्म फलदं स्यात् । न ह्यन्यस्य ध्यानमन्यस्य फलदातृत्वमिति युज्यते अतिप्रसङ्गादित्यत आह—पश्यन्तीति ॥ यन्मनसि 'प्रतिबिम्बितं' प्रतिफलितं वासनामयं वस्तु तत्परमं ब्रह्मेत्युच्यते । उपचारेण तदाश्रये तद्व्यपदेश इति भावः । तदेव ध्यानकाले पश्यन्ति । केचित्तु—ध्यानानन्तरं परमं ब्रह्मापरोक्ष्येण पश्यन्तीत्यन्वयमाहुः । ननु प्रतिबिम्बितस्याब्रह्मत्वात् तद्ध्यानं कथं ब्रह्मध्यानफलदं स्यादित्यत आह—ब्रह्मैवेति । यतो न ध्यानं फलदं, किन्तु प्रतिबिम्बे यद्ब्रह्मास्ति तदेव तेषां ध्यातॄणां दर्शनाख्यफलप्रदमतो नोक्तदोष इत्यर्थः । यतः प्रतिबिम्बे ब्रह्मास्ति अतस्तेषां फलप्रदं भवतीत्येव वा । अल्पा अपि पिशाचादयः स्वाकारस्मृतौ किञ्चित्फलं दद्युः किमुत सर्वज्ञं सर्वशक्तिकं ब्रह्मेति भावेन पुनर्ब्रह्मेत्युक्तिः । ननु स्थितिमात्रेण कथं ब्रह्म फलदमध्यातत्वादित्यत आह-तदिति । प्रतिबिम्बोपासनमित्यध्याहारेण सम्बध्यते । तदुपासनमित्यस्यावृत्तिर्वा । तथा च यथा 'प्रतिमोपासनं' प्रतिमायामित्थंभूतो भगवानस्तीति स्मृतिः तदुपासनं तदधिष्ठितब्रह्मोपासनं भवति, तथा 'तदुपासनं' प्रतिबिम्बोपासनं वासनामयवस्तुध्यानमपि 'तदुपासनं' ब्रह्मोपासनं भवतीति योजना ॥ प्रतिबिम्बं ब्रह्मैव कुतः न भवतीत्यत आह-दृश्यते इति ॥ यतः 'परं पदं' उत्तमं ब्रह्मापरोक्ष्येण । स्वार्थे ष्यञ्-भावभविन्नोरभेदोपदेशो वा । अपरोक्षेण ज्ञानेनैव 'दृश्यते' विषयीक्रियते, न तु ध्यानेनेत्यर्थः । अपरोक्षेणेति पाठः स्वरसः । तर्हि ज्ञानायैव प्रयतितव्यं,

इति ब्रह्मतर्के ॥ ३७ ॥

——*——

१९, अधिकरणम् ॥

( १ ) देशकालान्तरे अन्यतोऽपि सृष्ट्यादि युक्तम् ॥ इति ॥

( २ ) अतो ब्रूते—

सू—ॐ ॥ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥ ॐ ॥ ३८ ॥

---

किमुपासनयेत्यत आह—उपासनेति । तुशब्दो निरर्थकत्वव्यवच्छेदकः, स्वातन्त्र्यव्यवच्छेदको वा अवधारणे वा । तथा चोपासना तस्य ध्यानमेव । तस्य ब्रह्मणः प्रसादेन 'तत्' ब्रह्मापरोक्ष्यं 'गमयेत्' प्रापयेदित्यर्थः । तद्ब्रह्मापरोक्ष्यमपरोक्षज्ञानं तद्विषयतां गमयेदिति वा । ब्रह्मतर्क इत्यनन्तरमुक्तं अतो न किञ्चिद्बाधावकाश इति वाक्यशेषः ॥१८॥

॥ इति तथान्यत्वाधिकरणम् ॥

——:*:——

१९, अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवत एव सर्वकर्तृत्वादि समर्थ्यते । पूर्वपक्षयति—देशेति ॥ 'अन्यतो' ब्रह्मणोऽन्यस्मात् । अपिरेवार्थः । तत्त्वप्रदीपे तु यद्यपि सृष्ट्यादि ब्रह्मण एव, तथाऽपि देशकालान्तरेऽन्यतो युक्तमित्यपिशब्दार्थ उक्तः । तथा च न ब्रह्मणः सकाशादेव सर्वसृष्ट्यादि युक्तमिति भावः । युक्तेति पाठे क्रियेति संयोज्यम् । युक्तेत्यनेन राजादौ तथा दर्शनादिति युक्तिरुक्ता भवति ॥

( २ ) सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत इति ॥ प्रवर्तत इत्यन्तेन अनेनेति साध्यभागः अनेन एषु इदमित्यावृत्तिविपरिणामाभ्यां व्याख्यातः । सृष्ट्यादिकं प्रवर्तते भवतीति शेषो वा । पूर्वसूत्रेऽन्यदित्यस्य विशेष्यतया प्रकृतं ब्रह्मानेनेति परामृश्यते । न त्वन्यत इत्यवधारणार्थः । आधारत्वं विषयत्वं च सप्तम्यर्थः । तत्र देशकालयोराधारत्वं वियदादिवस्तुनो विषयत्वमिति विवेकः । कुत इत्यतोऽत्र हेतुत्वेन प्रवृत्तं सर्वगतत्वेत्याद्यंशं सर्वगतत्वं च मायामयशब्दश्च सर्वगतत्वमायामयशब्दौ तयोश्शब्द इति शब्दपदावृत्त्या विग्रहं एकत्र षष्ठ्याः प्रतिपाद्यप्रतिपादकसम्बन्धार्थकत्वं अन्यत्र व्याख्यानव्याख्येयभावसम्बन्धार्थकत्वं चाभिप्रेत्योभयविधव्युत्पुपन्यासपूर्वकं व्याचष्टे-एष इति । 'एषः' हरिः 'सर्वो' गुणपूर्णः व्याप्तश्चेत्यर्थः । प्रत्युद्देश्यं

सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते । 'एष सर्व एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परमः' इति भाल्लवेयश्रुतिः ।

( ३ ) सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु ।
स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ॥
अतो मायामयं विष्णुं प्रवदन्ति सनातनम ।
इति चतुर्वेदशिखायाम् । आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥ ३८ ॥

---

विधेयसम्बन्धबोधनायैष इत्यभ्यासः । यद्यपि प्रथमोक्तं सर्वत्वं न साध्यसाधकमिति भावेन यदनन्तरोक्तं सर्वगतत्वं सूत्रकृता गृहीतं तदप्यस्यैव सृष्ट्यादिकर्तृत्वमित्युक्तसाध्ये साधकं न भवति । तथाऽपि 'अनुप्रविश्य नामरूपे व्याकरोत्' ( छा. ६-३-३. ) इति श्रुतेः सर्वगतत्वस्य सृष्ट्याद्यर्थत्वात् तच्छब्देनोक्तसाध्यसिद्धिसम्भवाद्युक्तस्तदुपन्यासः । ईश्वरपरत्वज्ञापनाय समग्रश्रुत्युपन्यासः । सर्वगतत्वश्रुतौ सर्वसृष्ट्यादिकर्तृत्वस्य अर्थादुक्तत्वात् मायामयशब्दोक्तायां मायामयशब्दव्याख्यानरूपायां श्रुतौ तु साक्षादुक्तत्वात् प्रमेयभेदाच्छ्रुतिद्वयोपन्यासः॥

( ३ ) 'सर्वत्र' सर्वदेशेषु 'एतस्मात्' विष्णोः 'सर्वदा' सर्वकालेषु सर्ववस्तुषु सर्वमित्यन्वयः । सर्ववस्तुविषयं सृष्ट्यादीत्यर्थः । प्रवर्तत इति भाष्यपदमिहापि सम्बध्यते । तथा च यतः एतस्मात् मायया विश्वसृष्ट्यादि 'प्रवर्तते' भवति, अत एनं विष्णुं मायामयं वदन्ति कवयः । मायया शक्त्या मातीति माया इच्छात्मिका शक्तिः स्वरूपभूता यस्यासौ मायामय इति व्युत्पत्तिसम्भवादिति भावः । कदाचिदिच्छाभावे शक्त्यभावेन सर्वदेशकालीनसर्वसृष्ट्यादिकर्तृत्वायोग इति शङ्कावारणाय—'सनातनं' परमनित्यं विष्णुं नित्यशक्त्येति चोक्तम् । नित्यत्वोपपादनाय—स्वरूपभूतयेति । चतुर्वेदशिखायां श्रुतिः पठितेति शेषः । 'अन्यत्र' देशकालान्तरे कतिपयवस्तुविषये विष्णोरन्यतः सृष्ट्यादावित्यर्थः । प्रमाणाभावाच्चेति । इति सङ्गृहीतमिति शेषः । न केवलं स्वपक्षसाधकादुक्तसाध्यसिद्धिः, किन्त्वन्यत्र परपक्षे प्रमाणाभावाच्चेति समुच्चये चशब्दः ॥ १९ ॥

॥ इति फलाधिकरणम् ॥

२०. अधिकरणम् ॥

( १ ) कर्मापेक्षत्वात्फलदानस्य तदेव ददातीति न वाच्यम्। कुतः ?

( २ ) सू—ॐ ॥ फलमत उपपत्तेः ॥ ॐ ३९ ॥
अत एवेश्वरात्फलं भवति । न ह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥ ३९ ॥

( ३ ) सू—ॐ ॥ श्रुतत्वाच्च ॥ ॐ ॥ ४० ॥

२०. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवतः स्वर्गादिकर्मफलदातृत्वं समर्थ्यते । पूर्वपक्षयति—कर्मेति ॥ फलदानस्येति षष्ठी सप्तम्यर्थे । ईश्वरस्येति शेषः । तथा च शुभाशुभफलदाने ईश्वरस्य पुण्यपापाख्यकर्मापेक्षत्वादित्यर्थः । यद्वा—ईश्वरकर्तृकफलदानस्य कर्मापेक्षत्वात्तदधीनत्वादित्यर्थः । कर्मापेक्षत्वादित्येतद्व्याहत्यसिद्धिपरिहाराय कर्मापेक्षत्वस्येश्वरवादिभिरङ्गीकृतत्वादित्यपि व्याख्येयम् । एवं फलदानस्य फलखण्डनस्य फलादानस्य कर्मापेक्षत्वात् तदकरणापेक्षत्वादिति व्यतिरेकपरतयाऽपीदं व्याख्येयम् । तथा च अन्वयव्यतिरेकाभ्यां तदेव कर्मैव फलं ददाति नेश्वर इति ज्ञायत इत्यर्थः । सिद्धान्तयन्नेतत्प्रतिषेधति-इति न वाच्यमिति । अत्र हेतुं पृच्छति—कुत इति ॥

( २ ) एतच्चोद्योत्तरत्वेन सूत्रमुपन्यस्य व्याचष्टे—फलमिति ॥ अत इत्यनूद्य सावधारणत्वाभिप्रायेणास्मादीश्वरादेवेति व्याख्यातम् । न कर्मण इत्येवार्थः । उपलक्षणमेतत् । अतः सर्वत्र सर्वमेतस्मादित्युक्तेरेवेति तत्त्वप्रदीपोक्तमपि द्रष्टव्यम् । 'फलं' स्वर्गनरकादिरूपम् । भवतीति सूत्रशेषोक्तिः । इतिशब्दो हेतौ, सूत्रार्थस्य न वाच्यमिति साध्ये हेतुत्वद्योतकः । फलमत इति प्रतिज्ञायामुपपत्तेरिति हेतुर्योज्यः । तस्येश्वरस्य चेतनत्वात्सर्वैशितृत्वाच्च फलदातृत्वोपपत्तेरित्यर्थः इत्याशयेनैवकारेणोक्ते कर्मणः फलदातृत्वाभावे उपपत्तौरित्यनेनार्थाल्लब्धं हेतुं स्वयं योजयति—न हीति । अचेतनस्येति हेतुगर्भः । 'प्रवृत्तिः' फलदाने । फलदातृत्वमिति यावत् । अस्मदादावदर्शनादिति हिशब्दार्थः । अन्याधीनप्रवृत्तिदर्शनात्कथमेतदित्यत आह-स्वत इति॥

( ३ ) नन्वीश्वरस्य चेतनत्वेन फलदातृत्वसम्भावनैव भवेत् न नि

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' (बृ. ५-९-२८.) इति ॥ ४० ॥

( ४ ) सू—ॐ ॥ धर्मं जैमिनिरत एव ॥ ॐ ॥ ४१ ॥

यतः फलं तदेव कर्म ईश्वराद्भवति । 'एष ह्येव साधु

---

श्रयः, अतः कुतोऽसौ निश्चय इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—श्रुतत्वाच्चेति ॥ इति श्रुतत्वाच्चेत्यन्वयः । न केवलं चेतनत्वाद्युपपत्तेरीश्वरस्य फलदातृत्वं सम्भाव्यते, किन्तु श्रुत्युक्तत्वाच्च तन्निश्चीयते चेति सूत्रार्थः ।

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।
तिष्ठमानस्य तद्विदः' ( बृ.५-९-२८. )

इति वाजसनेयवाक्ये एकवचनं समुदायापेक्षया, विशेष्यब्रह्मशब्दविवक्षया आनन्दमिति नपुंसकप्रयोगः 'निर्दोषचैतन्यसुखान्तनुम्' इति विष्णुतत्त्वनिर्णयोदाहृतवाक्य इव । तथा च 'दातुः' हविःप्रदातॄणां यजमानानां पूजकानां 'रातिः' प्रियः । फलप्रद इति यावत् । 'तिष्ठमानस्य' स्वस्मिन् मनसा वर्तमानानां 'तद्विदो' ब्रह्मज्ञानिनां 'परायणं' परमप्रियं 'विज्ञानं' पूर्णज्ञानं पूर्णानन्दं ब्रह्मेत्यर्थः । यथोक्तं बृहद्भाष्ये—

स प्रियः सर्वदातॄणां ज्ञानिनां परमप्रियः ।
ये तु तद्भाविता नित्यं तेषामेव परायणम् ॥ इति ॥

ब्रह्मपरत्वस्फोरणाय विज्ञानमित्याद्युदाहृतम् ॥

( ४ ) उक्तमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे—धर्ममिति ॥ तत्कर्मैवेत्येवकारान्वयः । सौत्रधर्मपदमधर्मस्याप्युपलक्षकमिति भावेन तदिति स्वपदं कर्मेति सामान्यपदेन विवृतम् । ईश्वरात् यतश्श्रुतिरित्याभ्यां अत इति पदं द्वेधा व्याख्यातम् । कर्मेति सामान्योक्त्या 'एष ह्येव' इति श्रुतिप्रतीकग्रहणेन च 'एष ह्येवासाधु कर्म कारयति' ( कौ.३-८. ) इत्यस्याप्युदाहर्तव्यतां ज्ञापयति । जैमिनिर्मन्यत इति शेषः । श्रुतिस्तु वैषम्यनये व्याख्याता । सूत्रे नेति शेषः । तथा च यदुक्तं ईश्वर एव फलप्रदो, न कर्मेति तन्न, कुतः? 'अत एव' फलस्य कर्मान्वयव्यतिरेकानुविधायित्वादेव । इदं तु न्याय्यं, किं तत्? यत् 'अतो' धर्माधर्माख्यकर्मत एव फलं भवति, तच्च कर्म तदीश्वराद्भवति । कुतः? 'अतः' 'एष ह्येव' इति श्रुतेरेव । यत एवमत ईश्वरोऽपि अतः एतस्मि

कर्म कारयति' (कौ. ३-८.) इति श्रुतेरिति जैमिनिः ॥४१॥

( ५ ) सू—ॐ ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ॐ ॥ ४२ ॥

परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म पर प्रवर्तकम् । पर एव कर्मणः प्रवर्तकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र. ३-२.) इति हेतुव्यप

---

धं 'रातिः' इति श्रुतिवचने एतेन फलदातृत्वेन रूपेणोपचर्यत इति । न केवलं कर्मणः फलप्रदत्वमन्वयव्यतिरेकरूपन्यायप्राप्तं, किन्तु जैमिनिराचार्योऽपि धर्माधर्माख्यं कर्मैव फलप्रदं मन्यते । अतोऽपीदं युक्तमिति पूर्वपक्षरीत्या सूत्रार्थः । जैमिन्यभिप्रायानुसारेण तु यतः फलं तस्मादीश्वरादेव कर्म भवतीति 'एष ह्येव' इति श्रुतेरिति सूत्रार्थः । अस्मिन् पक्षे यतः फलं तस्मादेवेश्वरात् भवतीति भाष्ययोजना द्रष्टव्या । तथैव तत्त्वप्रदीपोक्तेः ॥

( ५ ) एतत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे—पूर्वमिति ॥ उभयोरिति स्वपदं परस्य परमात्मनः कर्मणश्चेति च व्याख्यातम् । समुच्चये चशब्दः । अपिशब्दो यद्यपीत्यर्थे । अनेन सौत्रतुशब्दोऽप्यर्थतया व्याख्यातः । तुशब्दस्य कर्तृत्वकरणत्वरूपविशेषार्थत्वमवधारणार्थत्वं चाभिप्रेत्यावधारणव्यावर्त्यं दर्शयति—नेति । कर्मेत्यनन्तरं कर्तृ सदिति पर एवेत्यनन्तरं कर्ता सन्निति च शेषः । प्रयोजकः प्रवर्तक इति सूत्रशेषोक्तिः । अनेन यद्यपि कर्मब्रह्मणोरुभयोः कारणत्वमस्ति, तथाऽपि नोभयोः समप्रधानभावः, किन्तु पूर्वं पूर्वसूत्रेऽतच्छब्देनोक्तं ब्रह्मैव फलदाने कर्तृ सत् करणीभूतस्य कर्मणः प्रयोजकं, न तु कर्म ब्रह्मणः । तत्तु करणं सत् ब्रह्म प्रयोज्यमेवेति सौत्रः प्रतिज्ञाभागो व्याख्यातः । कुत इत्यतः प्रवृत्तं हेतुव्यपदेशादिति हेतुं व्याचष्टे—पुण्येनेति । इति श्रुतौ ब्रह्मकर्मणोः कर्तृत्वकरणत्वरूपहेतुत्वस्योक्तत्वादित्यर्थः । यद्वा—हेतुशब्दो निमित्तपरः । तथा च ब्रह्मणः कर्तृत्वाख्यस्यैव कर्मणः करणत्वाख्यस्यैव फलप्रदाने स्वातन्त्र्यास्वातन्त्र्यनिमित्तस्योक्तत्वादित्यर्थः । अत एव न समप्रधानभावो, न विनिमयो वा शङ्क्य इति भावः । व्यपदेशादित्यनन्तरं इति बादरायणो मन्यत इति वाक्यशेषः । न केवलं फलप्रदानक्रियायां कर्म परप्रेरितं, किन्तु तत्सत्ताऽपीश्वराधीनेति न तत्कर्त्रिति भावेनाह—द्रव्यमिति । इति वचनाच्च न कर्म प्रवर्तकमित्यन्वयः । अनेन सौत्रस्तुशब्दश्चार्थोऽपि भवति । तेन पू

देशात् । 'द्रव्यं कर्म च कालश्च' इति च ॥ ४२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये तृतीयस्याध्यायस्य
द्वितीयः पादः.

॥ ॐ ॥

वोक्तचेतनत्वादिति हेतुः 'द्रव्यम्' इति स्मृतिश्च समुच्चीयत इत्युक्तं भवति । 'पुण्येन' इति श्रुतिः वैषम्यनये 'द्रव्यम्' इति स्मृतिश्च रचनाधिकरणे व्याख्याता । अत्र श्रुतेः पुण्येन च ज्ञानमुत्पाद्य पापं विनाश्य तस्य पुण्यपापरहितस्य ज्ञानिनः प्रसन्नः स्वयमेव फलमनन्तं हि ददातीत्यहो भगवतो नारायणस्याश्चर्यरूपोऽयं महिमेति तत्त्वप्रदीपोक्तार्थविशेषोऽपि ग्राह्यः । कर्मब्रह्मणोः स्वातन्त्र्यास्वातन्त्र्यव्युत्पादनप्रकारश्च तत्रैवोक्तः ॥ २० ॥

॥ इति फलाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिका
यां तृतीयाध्यायस्य द्वितीयः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) उपासनाऽस्मिन् पाद उच्यते । सर्वपरिज्ञानं प्रथमत उच्यते—

सू—ॐ ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ॐ ॥ १ ॥

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—उपासनेति ॥ जिज्ञासापरपर्यायोपासना 'अस्मिन्' तृतीयस्य तृतीये पादे 'उच्यते' कर्तव्यत्वेन प्रतिपाद्यत इत्यर्थः । आद्याधिकरणतात्पर्यमाह-सर्वेति । उपासना द्विविधा । श्रवणमननापरपर्यायशास्त्राभ्यासरूपा ध्यानरूपा चेति । तत्राद्यायाः यथाशक्तिसर्ववेदतदर्थज्ञानरूपाया अज्ञानसंशयविपर्ययनिवर्तिकायाः ध्यानाङ्गत्वात् सैव 'प्रथमतः' आद्याधिकरणे 'उच्यते' अधिकारिभिः सम्पाद्यत्वेन प्रतिपाद्यत इत्यर्थः । अत्र भाष्यसुधाटीकासु सर्ववेदेति सर्वशाखेति च विशिष्योक्त्या मीमांसकमत इव ऋग्यजुस्सामरूपवेदत्रयस्याध्येतव्यत्वनियमवत्तैत्तिरीयकाण्वादिरूपशाखाद्वयस्याध्येतव्यत्वनियमो नास्तीति न भ्रमितव्यमिति सूचितम् । अस्मन्मते सर्ववेदसर्वशाखोक्तब्रह्मगुणज्ञानार्थं शक्तैस्सर्ववेदवत्सर्वशाखानां अध्येतव्यत्वात् । तदर्थानामपि शक्तैर्ज्ञेयत्वात् । अशक्तैस्तु यथाशक्ति अध्येतव्यत्वात् ज्ञेयत्वाच्च । अत्र किमेकैकेनैव सर्ववेदशाखोक्तं ब्रह्म श्रवणमननाभ्यां ज्ञातव्यं उत स्वस्ववेदशाखोक्तमिति संशये स्वस्ववेदशाखोक्तमेव ज्ञातव्यमिति पूर्वपक्षे च सति सिद्धान्तयत्सूत्रं पठति—सर्वेति । अत्र वेदान्तपदस्योपनिषत्परत्वभ्रान्तिवारणाय अन्तपदं व्याचष्टे-अन्त इति । अत्र प्रमाणमाह—उभयोरिति । 'नासतो विद्यते भावो नाभावो विद्यते सतः' ( गी. २-१६. ) इति पूर्वार्धेन असच्छब्दितस्य कारणस्य प्रकृतेः सच्छब्दितस्य ब्रह्मणश्चाभावः प्रागभावः प्रध्वंसश्च न विद्यत इति वेदनित्यत्वसाधकानादिनित्यत्वव्याप्तावनेकदृष्टान्तप्रदर्शनाय तत्रादरपूर्वकं प्रकृतिपरब्रह्मणोरनादिनित्यत्वमभिधाय अत्रार्थे सम्प्रदायरूपप्रमाणमुच्यते—उभयोरिति । 'अनयोरुभयोः' सदसतोरन्तो निर्णयोऽनादिनित्यत्वावधारणं 'तत्त्वदर्शिभिः' वेदार्थतत्त्वज्ञानिभिः 'अपिदृष्टः' कृतश्चेत्यर्थः । अपिसिञ्चेतिवत् अपिदृष्ट इति निर्देशः । यद्वा—तत्त्वदर्शिभिरपीति भिन्नक्रमेणापिशब्दान्वयः । न केवलं 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इत्यागमसिद्धमेत

अन्तो निर्णयः 'उभयोरपि दृष्टोऽन्तः' (गी. २-१६.) इति वचनात् सर्ववेदविनिर्णयोत्पाद्यज्ञानं ब्रह्म।
(२) 'आत्मेत्येवोपासीत' (बृ.३-४-७.) इत्यादिविधीनां त

---

दित्यपिशब्दार्थः। यद्वा—'अन्तः' निर्णयः तद्विषयीभूतार्थो दृष्ट इत्यर्थः। अनेन दर्शनमूलकः सम्प्रदायः उपदेशपरम्परारूपो लक्षणयोक्तो भवति। वचनादिति। गीतायामिति शेषः। सूत्रे पूर्वसूत्रात् ब्रह्मवाचकं पूर्वपदमनुवर्त्य सर्वेति भाष्यभागं व्याचष्टे—सर्वेति। सूत्रभाष्ययोर्वेदशब्दः तदर्थपरः। शब्दविषयकनिर्णयस्य ब्रह्मविषयकत्वाभावात्। तथा च सर्ववेदानां तदर्थानां अन्तः सर्ववेदान्तः तद्रूपः प्रत्ययो ज्ञानं यस्य तत्तथोक्तम्। अनेन ब्रह्मण एव सर्ववेदार्थत्वं ज्ञापितम्। अन्यथा सर्ववेदाधिगमो व्यर्थस्स्यात्। तथा च तत्त्वप्रदीपटीकारीत्या पूर्वपदोदितं ब्रह्म सर्ववेदाधिगमानन्तरोत्पन्नविचारसाध्यवेदार्थनिर्णयरूपज्ञानविषय इति भाष्यार्थः। टीकायां ध्यानार्थिना सर्ववेदान्निर्णीय श्रवणमननाभ्यां ज्ञातव्यं ब्रह्मेत्यन्वयः। केचित्तु-सर्ववेदानां योऽन्तः निर्णयः तेनोत्पाद्यं यदर्थज्ञानं तद्विषयो ब्रह्मेत्यर्थ इत्याहुः। अस्मिन् पक्षे व्यधिकरणबहुव्रीहिमात्रं दोषः। उदाहृततत्त्वप्रदीपटीके अनुगुणे। सर्ववेदनिर्णयेनोत्पाद्यज्ञानविषय इति टीका तु अत्यन्तमनुगुणेति ध्येयम्॥

(२) कुत इत्यतस्तत्र हेतुत्वेन चोदनाद्यविशेषादित्यंशं व्याचष्टे-आत्मेति॥ इत्यादीनि विधिवाक्यानि यास्विति बहुव्रीहिः। तथा च इत्यादिविधियुक्तानां काण्वादिशाखानां 'अविशिष्टत्वात्' अधिकारिविशेषनिर्देश शून्यत्वादित्यर्थः। अस्य हेतोरसिद्धिपरिहारकतयाऽन्यथं योज्यः। अस्मिन् पक्षे इत्यादयश्च ते विधयश्चेति कर्मधारयः। तथा च 'इत्यादिविधीनामविशिष्टत्वात्' सर्वाधिकारिसाधारणत्वादित्यर्थः। इत्यादीत्यादिशब्देन 'आत्मानमेव लोकमुपासीत' (बृ. ३-४-१५.) 'तमेवैकं जानथ' (मुं.२-२-५.) 'विज्ञाय प्रज्ञां कुर्वीत' (बृ.६-४-२१.) इत्यादिविधयो गृह्यन्ते। ननु कर्मविद्यायां गृहीतवाधिकारिविशेषः कल्प्यताम्। न च स्वर्गकामत्वादिवदिह कल्पकाभाव इति वाच्यम्। युक्तीनां कल्पकत्वसम्भवात् इत्याशङ्कापरिहारायोक्तं आदिशब्दं व्याख्याति—तदिति। तदित्यावर्तते। तथा च तस्मै ज्ञानविध्यर्थं

दुक्तयुक्तीनां च अविशिष्टत्वात् ॥ १ ॥

( ३ ) सू—ॐ भेदान्नेति चेदेकस्यामपि ॥ ॐ ॥ २ ॥

तत्र उपासीतेत्यादिज्ञानविधिसमीपगतेषु 'अत्र ह्येते सर्व एकंभवन्ति' (बृ.३-४-७.) 'स य आत्मानमेव लोकमुपास्ते' (बृ.३-४-१५.) 'न हास्य कर्म क्षीयते' (बृ.३-४-१५.) 'अमृतस्यैष सेतुः' (मुं.२-२-५.) 'वाचो विग्लापनं हि तत्' (बृ.६-४-२१.) इत्यादिवाक्येषूक्तानां युक्तीनां 'अविशिष्टत्वात्' सर्वाधिकारिसाधारणत्वादित्यर्थः। इतरांशस्तु श्रे यादिप्रतिपादकत्वात् नाधिकारिविशेषकल्पक इति भावः। बृहदार ण्यके 'आत्मेत्येवोपासीत' इति विधिसमीपे 'अत्र ह्येते' इत्यात्मत्व प्रशंसार्थमर्थवादश्श्रुतः। अत्र आत्मत्वगुणे 'एते' 'प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः' (बृ. ३- ४- ७.) इति पूर्ववाक्योक्ताः प्राणत्ववक्तृत्वद्रष्टृत्वश्रोतृत्व मन्तृत्वादयः सर्वे गुणाः 'एकं भवन्ति' अन्तर्भवन्तीत्युक्तेः अत्रा त्मत्वस्य विवक्षितसर्वगुणसङ्ग्राहकत्वयुक्तिरुच्यते। यद्यपि 'अत्र' आत्मत्वे सर्वेऽप्यानन्दादयो गुणाः अन्तर्भवन्तीत्यर्थः टीकायां 'आत्म गृहीतिः' इत्यधिकरणे अभिहितः। तथा व्यासतीर्थीये 'अत्र' आत्म शब्दे 'एते' आनन्दादयः सर्वे धर्माः वाच्यत्वेन 'एकं भवन्ति' पुञ्जी भवन्तीत्यर्थ उक्तः। ते च पूर्वं नोक्ताः, किन्तु तत्त्वप्रदीपोदाहृतवाक्यो क्ता एव। तथाऽपि 'प्राणन्' इत्यनेनानन्दस्वामित्वनिर्दोषत्वानां ग्रह णाद्विरोधः। एवं 'आत्मानमेव लोकम्' इति विधिसमीपवर्तिनि 'न हास्य' इति वाक्ये अक्षयकर्मफलहेतुत्वयुक्तिरुच्यते। तथाऽऽथर्व णे 'तमेवैकम्' इति विधिसमीपवर्तिनि 'अमृतस्य' इत्यर्थवादे मु क्त्योपसृप्यत्वयुक्तिरुच्यते। तथा बृहदारण्यके 'विज्ञाय' इति वाक्य समीपवर्तिनि 'वाचो विग्लापनम्' इति वाक्येऽन्यार्थवेदाध्ययनादे र्वाक्श्रमकरत्वयुक्तिरुच्यत इति ध्येयम्। अनेन चोदनानां विधीनाम विशेषात्सर्वसाधारणत्वादत एव चोदनायुक्तकाण्वादिशाखानामवि शेषात्, एवं काण्वैरध्येतव्यं एवं माध्यन्दिनैः इत्यधिकारिविशेषनिर्दे शाशून्यत्वात् तदुक्तयुक्तीनामप्यविशिष्टत्वेनाधिकारिविशेषाकल्पक त्वादिति हेतुवाक्यस्यानेकधाऽर्थ उक्तो भवति॥

( ३ ) उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे–भे दादिति॥ 'विज्ञानम्' इति वाजसनेयके 'सत्यम्' इति तैत्तिरीयके। आ

'विज्ञानमानन्दं ब्रह्म' (बृ. ५-९-२८.) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २-१.) इत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेत्—न, एकस्यामपि शाखायां 'आत्मेत्येवोपासीत' (बृ.३-४-७.)

दिपदेन 'श्रोता मन्ता' (ऐ.आ.३-२-४-१९.) इत्यैतरेयवाक्यम्, 'य आत्माऽपहतपाप्मा' (छा.८-७-१.) इति छन्दोगवाक्यं च गृह्यते। प्रतिशाखमित्याद्युक्तिभेदादित्यन्वयः। इत्यादिरूपा च सा उक्तिश्च इत्यादिरूपा उक्तिः वाचिका येषामर्थानामिति च द्वेधा विग्रहः। एवमाक्षेपांशे साधनांशं व्याख्याय साध्यांशं व्याख्याति–नेति। सर्वशाखाः नैकार्थविषयाः तत्प्रतिपादिकाः, किन्तु भिन्नविषयाः, अत एव नैकविषया नैकाधिकारिका इत्यावृत्त्याऽन्वयः। एकेनैकस्यैवार्थस्य ज्ञेयत्वादिति भावः। नञावृत्त्यभिप्रायेण सौत्रं परिहारांशं व्याचष्टे–नेति। तत्तच्छाखोक्तार्थानां पृथक्त्वात्सर्वशाखोक्तं नैकेन ज्ञातव्यम्, किन्त्वनेकैरिति नेत्यर्थः। कुतो नेत्यतः प्रवृत्तं परिहारांशे साधनभागं व्याचष्टे—एकस्यामिति। न केवलमनेकशाखास्वित्यपिशब्दार्थः। चोदनापदस्य विपरिणतस्य विशेष्यत्वमभिप्रेत्याह—शाखायामिति। वाजसनेयशाखायामित्यर्थः। इत्यादीति। इत्याद्युक्तीनां तदर्थानामानन्दज्ञानरूपत्वादिधर्माणां च भेददर्शनादित्यर्थः। आवृत्त्याऽन्वितस्य भेदादित्यस्यासिद्धिपरिहाराय—दर्शनादित्युक्तम्। आवृत्तिसूचनाय चशब्दः। श्रुतौ कखशब्दावानन्दज्ञानवाचिनौ। आदिशब्देन गुणान्तरोक्तयो गृह्यन्ते। सूत्रे भेदादपीत्यपिशब्दान्वयः। न भेदादित्यपि। भेदशब्देन प्रसक्तभेदोऽपि ग्राह्यः। साम्यादिति शेषः। तथा चायं सूत्रार्थः—'भेदात्' प्रतिशाखं 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्युक्तिभेदात् अत एव सर्वशाखोक्तार्थानामपि 'भेदात्' एकेनैकस्यैव ज्ञेयत्वात् न पूर्वपदोक्तं ब्रह्म सर्ववेदान्तप्रत्ययं, किन्तु स्वस्वशाखान्तप्रत्ययमिति चेन्न। तथा सति 'एकस्यामपि' चोदनायां शाखायां 'भेदात्' 'आत्मेत्येवोपासीत' 'कं ब्रह्म खं ब्रह्म' (छा.४-१०-५.) इत्याद्युक्तिभेददर्शनात् अत एव तत्रोक्तार्थानामपि भेदावगमादेकस्यामपि 'भेदात्' अधिकारिभेदप्रसङ्गात्। नन्वेकस्यामपि शाखायां विधेयधर्मस्यैव भेदाद्धर्मिणो 'नभेदात्' अभेदान्न प्रतिपाद्यभेद इति चेन्न। 'अपि' सर्वशाखास्वपि विधेयधर्मस्यैव भेदाद्धर्मिणो न पृथक्त्वमिति समाधिसाम्यात्। ननु न सर्व

'कं ब्रह्म खं ब्रह्म' (छा.४-१०-५.) इत्यादिभेददर्शनात्॥२॥

(४) सू—ॐ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च॥ ॐ॥ ३॥

'स्वाध्यायोऽध्येतव्यः' (तै. आ. २-१५.) इति सामान्यविधेः। हिशब्दात्

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना। इति स्मृतेः॥

शाखोक्तं ब्रह्म, तथासति न भेदात् सर्वशाखानामेकविषयत्वात्पौनरुक्त्यप्रसंगादिति चेन्न। एकस्यामपि साम्यात्। नन्वेकस्यां शाखायां प्रसंगभेदात् प्रागुक्तस्यानुवादाद्वा न पौनरुक्त्यम्। काण्वश्रुतौ 'अयं पुरुषः' (बृ.६-३-९.) इति द्विरुक्तवाक्यस्य जीवस्य परमात्मज्योतिष्ट्वपरस्य स्वप्नसुषुप्तिप्रकरणयोः श्रुतस्य प्रसङ्गभेदेनानुवादविधानाश्रयणादपौनरुक्त्यवत् छन्दोगश्रुतौ 'सैषा षड्विधा चतुष्पदा गायत्री' (छा. ३-१२-५.) इति वाक्ये प्रसङ्गभेदात्प्रागुक्तषाड्विध्यानुवादेन चतुष्पात्त्वविधानात्तदंशेऽपौनरुक्त्यवच्चेति चेन्न। 'अपि' सर्वशाखास्वपि प्रसङ्गभेदात् अनुवादादिपरिहारस्य साम्यादिति॥

(४) पूर्वं सर्ववेदान्तप्रत्ययमित्यत्रैव हेत्वन्तराभिधानाय सूत्रं–स्वाध्यायस्येति॥ अत्र स्वाध्यायस्य तथात्वेनेत्यावृत्तेन हेतुवाक्येनोक्तं हेतुसाधकं हेतुमाह–स्वाध्याय इति। इति विधेः सामान्यादित्यन्वयः। 'स्वाध्यायोऽध्येतव्यः' इति यजुर्वेदगतविधेः 'सामान्यात्' अयं स्वाध्यायोऽनेनाध्येतव्यः अयं अनेन इति विशेषं विना सर्ववेदसर्वाधिकारिसाधारणत्वादित्यर्थः। सामान्यपदेन सौत्रं तथात्वपदं अविशेषादिति प्रकृतसाधारण्यार्थकमित्युक्तं भवति। पञ्चमीप्रयोगेन तृतीया पञ्चम्यर्थेत्युक्तम्। विधेरित्यनन्तरं स्वाध्यायस्य तथात्वेनेति संयोज्यं, तस्य स्वाध्यायस्य सर्वशाखाध्ययनस्य तथात्वेन सर्वसाधारणत्वेन एकैकाधिकारिकत्वेनेत्यर्थः। सूत्रे भाष्ये च हेत्वन्तरत्वद्योतकः चशब्दोऽत्रापि योज्यः। ननु लोके शाखाभेदस्य प्रसिद्धत्वाद्विधेरपि विशेषनिष्ठताऽऽवश्यकीति सामान्यादित्यसिद्धमित्यतः प्रवृत्तस्य हिशब्दस्यार्थमाह—हिशब्दादिति। सूचितायाः इति शेषः। स्मृतेरित्यस्य विधेः सामान्यादित्यनेनान्वयः। ज्ञानोपलक्षकमेतत्। 'द्विजन्मना' त्रैवर्णिकेन 'सरहस्यः' उपनिषत्सहितो रहस्यार्थसहितो वा 'कृत्स्नः' सर्वो वे

( ५ ) सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः ।
आनन्दो हि फलं यस्मात् शाखाभेदो ह्यशक्तिजः ॥
सर्वकर्मकृतौ यस्मात् अशक्तास्सर्वजन्तवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत् ॥

इति समाचारे सर्वेषामधिकाराच्च ॥ ३ ॥

दः 'अधिगन्तव्यः' अर्थज्ञानार्थमध्येतव्य इत्यर्थः । एवं सर्वशाखस्यपि द्रष्टव्यम् ॥

( ५ ) किं च अनुष्ठानापेक्षया ज्ञानमात्रस्य सुलभत्वात् यदा सर्ववेदोक्तशक्यकर्मानुष्ठाने सर्वेषामधिकारसद्भावः तदा तदुक्तब्रह्मज्ञानं सुतरामिति भावेन हेत्वन्तरप्रतिपादनाय प्रवृत्तं समाचारेऽधिकाराच्चेत्यंशं सप्रमाणकं व्याचष्टे—सर्वेति ॥ सर्वान् वेदान् सर्वशाखाश्च अधिगम्य 'सर्ववेदोक्तमार्गेण' तदुक्तप्रकारेणानुष्ठानपूर्वकं यज्ञादि कर्म 'नित्यशः' नित्यं कुर्यात् सर्वोऽपि जन्तुरिति विपरिणामेनान्वयः । न च प्रयोजनाभावः । 'हि' यतः यस्माद्वेदोदितसर्वकर्मज्ञानतदनुष्ठानात् 'आनन्दः' मौक्तसुखोद्रेकः फलं भवति ज्ञानिनः । तदितरस्यान्यत् चित्तशुद्ध्यादि अतः । अनेन सौत्रः संशब्दो व्याख्यातः । ननु यदि सर्वेषां सर्वशाखाध्ययनादि, कथं तर्हि शाखाभेदः, कर्मणि च भेद इत्यत आह—शाखेति । कर्मभेदश्चेत्यपि द्रष्टव्यम् । 'हि' यस्मात् 'अशक्तिजः' असामर्थ्यनिमित्तकः तस्मात् स न प्रकृतविरोधीति वाक्यशेषः । एतदेवोपपादयति—सर्वेति । सम्यक्सर्वशाखोक्तकर्माचरण इत्यर्थः । सर्वशाखाध्ययने चेत्यपि द्रष्टव्यम् । 'जन्तवो' द्विजाः । 'अचीक्लृपत्' अकरोत् । इतीत्यनन्तरं स्मृतेरित्यनुषज्यते । 'समाचारः' वेदोदितसर्वकर्मणां सम्यगनुष्ठानम् । तत्र 'सर्वेषां' शाखिनां अधिकारादित्यर्थः । अत्र देवाद्याचार एव हेतुः । तस्यानधिकारकृताभावशङ्कावारणाय पूर्वोक्तस्मारणाय अधिकारादित्युक्तम् । इदमपि ज्ञानोपलक्षकम् । चः समुच्चये । विधेस्सामान्यात् अधिकारादित्यनयोः सर्वेति प्रतिज्ञावाक्येनान्वयः । अनेन—हिशब्दसूचितस्मृतेः 'स्वाध्यायस्य' वेदाध्ययनविधेः 'तथात्वं' अविशिष्टत्वं यत एवं अतः 'स्वाध्यायस्य' वेदाध्ययनस्य 'तथात्वं' सर्वसाधारणत्वम् । न च सर्वशाखाध्ययनस्य सर्वसाधारणत्वेऽपि सर्वशाखोक्तमेकेन ज्ञातव्यमित्येतत्कुत इति वाच्यम् । यतः 'स्वाध्यायस्य' अध्ययनविधेः 'तथात्वं' अर्थज्ञानप

( ६ ) सू—ॐ ॥ सलिलवच्च तन्नियमः ॥ ॐ ॥ ४ ॥
यथा सर्वं सलिलं समुद्रं गच्छति । एवं सर्वाणि वच
नानि ब्रह्मज्ञानार्थानीति नियमः ।

( ७ ) आग्नेये च—
यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।
एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये ॥ इति ॥४॥

( ८ ) सू—ॐ ॥ दर्शयति च ॥ ॐ ॥ ५ ॥
सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः
प्रसिध्येत् ।

र्यवसायित्वं, न त्वक्षरग्रहणमात्रे चरितार्थत्वम् । न केवलं स्वाध्याय स्य तथात्वात्, किन्तु सर्ववेदोक्तकर्मसमाचारे सर्वेषामधिकारात् , अत एव सुतरां तत्साध्ये ब्रह्मज्ञानेऽधिकाराच्च , पूर्वं ब्रह्म एकैकेनैव सर्ववेदान्तप्रत्ययमिति सूत्रार्थ उक्तो भवति । तत्त्वप्रदीपे तु कैमुत्यं न प्रदर्शितम् ॥

( ६ ) ननु यदि सर्वशाखोक्तप्रकारेण जानतो ध्यानाधिकारः, त र्ह्यधमाधिकारिणां ध्यानाभावः प्राप्त इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—सलिलवदिति ॥ 'सर्वं सलिलं' नद्यादिजलं 'गच्छति' प्राप्नोति 'वचनानि' वेदवचनानि 'ब्रह्मज्ञानार्थानि' पुंशक्त्यनुसारेण स्वज्ञानद्वारा ब्रह्मज्ञानप्रयोजनकानीत्यर्थः । इति नियम इति । इत्येवंरू पनियम इत्यर्थः । अनेन सूत्रे स चासौ नियमश्च तन्नियमः ध्यानेच्छु ना सर्ववेदान्तप्रत्ययं ब्रह्म सर्ववेदोक्तप्रकारेण ज्ञातव्यमित्येवंरूपः, त स्य तत्त्वं च प्रतिबन्धाभावमपेक्ष्य प्रवृत्तत्वं, चशब्दश्च प्रतिबन्धाभाव मपेक्ष्यैव नियमो, न त्वतिदृढ इत्यवधारणार्थ इत्युक्तं भवति ॥

( ७ ) चशब्दः स्मृतिसमुच्चायकोऽपीत्यभिप्रेत्यात्रैवार्थे स्मृतिमा ह—आग्नेये चेति ॥ न केवलं सूत्रे, किन्तु स्मृतावप्ययमर्थ उक्त इत्य र्थः । शक्य इति । समुद्रं गन्तुं शक्ये सतीत्यर्थः । असति प्रतिबन्धक इति यावत् । 'वाक्यानि' वेदवचनानि 'पुंशक्त्या' पुरुषशक्त्यनु सारेण 'ब्रह्मवित्तये' अध्ययनद्वारा परब्रह्मज्ञानाय भवन्तीत्यर्थः । त था च यथाशक्त्यधीतसर्ववेदेभ्यः श्रवणमननाभ्यां ब्रह्म जानतां मन्दा नामपि ध्यानोपपत्तिरिति भावः । इत्याग्नेये इतीतिशब्दान्वयः ॥

( ८ ) चोदनाद्यविशेषादित्युक्तिसमर्थितार्थं श्रुतिस्मृतिभ्यां च सा

तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मु
मुक्षुः ॥
इति चतुर्वेदशिखायाम् ।
सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् ॥
स पञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ॥
इति ब्रह्मतर्के ॥ ५ ॥

---

२. अधिकरणम् ॥

( १ ) सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वात् इति ।
अत आह—

---

धयत्सूत्रं पठित्वा तद्वचनद्वयमुदाहरति—दर्शयति चेति ॥ तमेतमर्थं यतः श्रुतिः मुखत एव 'दर्शयति' प्रतिपादयति । चशब्दात्स्मृतिश्च, अतः सर्ववेदान्तप्रत्ययं ब्रह्मेति तत्त्वप्रदीपदिशा सूत्रार्थः । न केवलं युक्तिः, किन्तु श्रुतिः स्मृतिश्चेति वा टीकादिशा चार्थः । 'हि' यस्मा त्परमो देवः 'सर्वैर्वेदैरेव प्रसिद्ध्येत्' ज्ञातो भवेत्, नाल्पैर्वेदैः तस्मात्स र्वैरेव वेदैः जिज्ञास्यो नाल्पवेदैः । यस्मादेवं तस्माद्यदि मुमुक्षुः 'एनं' विष्णुमपरोक्षतो ज्ञातुमिच्छेत् तदा 'सर्ववेदानधीत्य विचार्य' श्रवण मननाभ्यां तं ज्ञात्वैव तिष्ठेत् । तदैव देवः 'प्रसिद्ध्येत्' अपरोक्षविष यो भवेदित्यर्थः । इति चतुर्वेदशिखायामयमर्थ उक्त इति शेषः । 'इ तिहासो' भारतं 'युक्तिः' मीमांसा 'विज्ञाय' स्थितेन विजानतेति यावत् । विष्णुर्ज्ञेयो 'नान्यथा' नाल्पवेदान् जानतेत्यर्थः । ब्रह्मतर्क इ त्यत्रापि पूर्ववच्छेषः ॥ १ ॥

॥ इति सर्ववेदाधिकरणम् ॥

---

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे ज्ञानार्थं सार्वत्रिकगुणोपसंहारः समर्थ्यते । पूर्वपक्षयति—सर्वैरिति । परमात्मेति शेषः । ज्ञेय इति सावधारणम् । तथा च परमात्मा 'सर्वैर्वेदैः' सर्ववेदोक्तगुणैर्विशिष्टत्वेन ज्ञेय एव 'नोपास्यो' न सर्ववेदोक्तगुणानुपसंहृत्य ध्यातव्य इत्यर्थः । तथा च तदर्थमुक्तं सर्वपरिज्ञानं व्यर्थमिति भावः । कुत इत्यत आह—अशक्य त्वादिति । अनन्तवेदोदितानन्तगुणानां स्वभुजवद्युगपद्बुद्धावारोपरू

सू—ॐ ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ॐ ॥ ६ ॥
सर्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमा
त्मोपास्यः ।
(२) उपास्य एकः परतः परो यो
वेदैश्च सर्वैस्सह चेतिहासैः ।
सपञ्चरात्रैस्सपुराणैश्च देवः
सर्वैर्गुणैस्तत्र तत्र प्रतीतैः ।
इति भाल्लवेयश्रुतिः ।

---

पोपसंहारस्याशक्यत्वेन तत्पूर्वकोपासनस्याप्यशक्यत्वादित्यर्थः । स र्वपरिज्ञानं तु विततप्रज्ञानां केषां चित् कथं चित् क्रमेण शक्यमिति भावः । सूत्रे सर्ववेदान्तेत्यतः सर्ववेदेत्यनुवर्तते । अर्थशब्दो गुणदोषा भावपरः । सर्ववेदार्थाभेदात् उपसंहार इत्यन्वयः। अर्थपदं चोभयान्व यीत्यभिप्रेत्य उपसंहारोऽर्थाभेदादिति प्रतिज्ञांशं व्याचष्टे—सर्ववेदेति। यद्यपि दोषाभावो गुण इत्युक्तेर्दोषाभावोऽपि गुणः, शुभधर्मपरत्वाद्गु णशब्दस्य । तथाऽपि ये विधिमुखवेद्या आनन्दादयो धर्मास्ते गुणाः । ये निषेधमुखवेद्या अपहतपाप्मत्वनिर्दुःखत्वादयः ते दोषाभावा इति विवक्षाभेदात्पृथगुक्तिः । तत्त्वप्रदीपे तु लोकवेदानुसारेण भेदोक्त्युप देशः स्पष्टत्वायेत्युक्तम् । चेत्यनन्तरं अभेदादिति सौत्रपदमन्वेतव्यम् । 'अभेदात्' अविभागेन एते गुणा नोपसंहर्तव्याः एते तु उपसंहर्तव्या इति विभागमन्तरेणेत्यर्थः । यद्वा—'अभेदात्' ऐक्येनेत्यर्थः । उक्तं हि तत्त्वप्रदीपे—एको हि परमात्मा सर्ववेदादिषूपास्योऽर्थः सर्वगुणा त्मक इति । उपसंहारश्चेत्यपि चशब्दान्वयमभिप्रेत्य तदर्थमाह—उप संहृत्यैवेति । नतु कांश्चिदनुपसंहृत्येत्येवशब्दार्थः । सूत्रे सर्ववेदान्तप्र त्ययमित्यनेन प्रकृतः परमात्मा उपसंहारोपलक्ष्येणोपासनेन विषयतया सम्बन्धनीय इत्याशयेनाह—परमात्मेति । उपास्य इति सावधारणम् ॥

(२) कुत इत्यतस्तत्र यतो विधिशेषवदित्यनेन श्रुतिविहितत्वादि ति हेतुस्सूचित इत्याशयेन तां श्रुतिमुदाहरति—उपास्य इति ॥ 'पर तो' रमादेः परो देवः सर्ववेदैः 'एकः' अविभक्तः अविभागेन 'उपास्यः' इत्यन्वयः । 'सहेतिहासैः' सपुराणैरिति सामान्योक्तावपि वेदानुकू लग्रन्थपरतया इदं व्याख्येयम् । ननु सर्ववेदैरुपास्य इत्यसङ्गतमित्यत स्तद्विवृणोति—सर्वैर्गुणैरिति । सर्वैर्गुणैरित्यनेन पूर्वोक्तं व्याचष्टे

(३) आग्नेये च—
विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि।
यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः॥
एवं सर्वगुणान् सर्वदोषाभावांश्च यत्नतः।
योजयित्वैव भगवानुपास्यो नान्यथा क्वचित्॥ इति॥

(४) समानविषये चोपसंहारः। न तु 'सोऽरोदीत्' (तै.सं. १-५-१.) इत्यादीनाम्।

---

श्रुतिः। एक इति पदेनार्थाभेदादिति सूत्रावयवं व्याचष्टे। एको हि परमात्मा सर्ववेदादिभिरुपास्योऽर्थ इति तत्त्वप्रदीपोक्तेः। अस्मिन् पक्षे 'एकः' अभिन्न इत्यर्थः। 'सूत्रावयवं' अभेदादिति सूत्रावयववाक्यम्। भावबोधे तु बहुवचनेन त्रिमात्रप्रतीतिवारणाय सर्वैरितिपदेन विवृतमित्युक्तम्। 'तत्र तत्र' वेदपुराणादिषु 'प्रतीतैः' प्रतिपादितैरित्यर्थः। श्रुतिरित्यनन्तरं यत इति शेषः॥

(३) उपसंहृत्योपास्य इत्यत्रैवार्थे स्मृतिमाह-आग्नेये चेति॥ श्रुतिसमुच्चये चः। 'विधिशेषाणि' शिष्यन्त इति शेषाणि विधिभिः शिष्टानि 'सोमेन यजेत' (आप.श्रौ.१०-२-१.) इत्यादिविधिविहितानि कर्माणि ज्योतिष्टोमादीनि। यद्वा-प्रधानविधिशेषाणि कर्माणि प्रयाजादीनि। न केवलं स्वस्वशाखाविधिविहितानि, किन्तु सर्ववेदोदितान्यपि 'अविशेषतः' अधिकारिविशेषाविभागेन 'सर्वैः' शाखिभिः यथा कार्याणि, एवं भगवान् सर्ववेदोक्तान् गुणान् दोषाभावांश्च 'यत्नतः' श्रवणादिप्रयत्नतः 'योजयित्वा' यथाशक्त्युपसंहृत्यैव सर्वैरुपास्यो, न तु 'क्वचित्' कालदेशपुरुषेषु उक्तस्यान्यथाभावोऽस्तीत्यर्थः। इतिशब्दस्य इत्याग्नेये वचनाच्च उपास्य इत्यन्वयः॥

(४) सर्ववेदोक्तगुणोपसंहारमुक्त्वा तदपवादमाह—समाने चेति॥ तद्व्याचष्टे—समानविषये चेति॥ योग्यगुणविषय एवेत्यर्थः। अनेन विषयसप्तमीयम्, चोऽवधारण इति सूचितम्। उपसंहार इत्यस्यावृत्त्याऽत्राप्यन्वय इत्याह—उपसंहार इति। चशब्दार्थावधारणव्यावर्त्यमाह—न त्विति। 'इत्यादीनां' इत्यादिवाक्यबोध्यानामर्थानाम्। असमानानामिति शेषः। इत्यादीनामुपसंहार इत्यन्वयः। अयोग्योपासनेनानर्थप्राप्तेरिति भावः। आदिशब्देन 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' (तै. सं.१-५-१.) 'रुद्रस्य त्वेव धनुरार्त्निः शिर उत्पिपेष' (तै.आ.१-५.) इत्या

(५) गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन।
गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः॥
इति बृहत्तन्त्रे॥ ६॥

(६) सू—ॐ॥ अन्यथात्वं च शब्दादिति चेन्नाविशेषात्॥ॐ॥७॥
'आत्मेत्येवोपासीत' (बृ. ३-४-७.) इति शब्दादुपसं

दिश्रुतिर्गृह्यते। 'सः' प्रकृतो महादेवः 'अरोदीत्' रोदनमकार्षीत्। अरोदीदिति पदबोध्यं यद्रोदनं तद्रुद्रस्य प्रसिद्धस्य 'रुद्रत्वं' रुद्रशब्दप्रवृत्तिनिमित्तम्। विष्णुविवक्षायां तु रोदनस्वातन्त्र्यं रुद्रशब्दप्रवृत्तिनिमित्तमिति विवेकः। आरोपितं धनुः क्षिताववष्टभ्य स्थितस्य रुद्रस्य शिरो ज्यायां वम्रिरूपेण इन्द्रेण छिन्नायां उत्क्षिप्त्वा 'धनुरार्त्निः' धनुष्कोटिः 'उत्पिपेष' चिच्छेदेति श्रुत्यर्थः॥

(५) अत्र स्मृतिमाह—गुणैरिति॥ 'सः' विष्णुः ज्ञानानन्दादि गुणैरेवोपास्यः, न तु दुःखादिदोषैः। ननु रोदनादीनामपि विधिमुखवेद्यत्वेन गुणत्वादुपास्यत्वापत्तिः। तथा च 'नैव दोषैः' इति व्याहतमित्यतः उक्तस्यापवादमाह—गुणैरिति। भगवान् ये पूर्णत्वविरोधिनो मितभुक्त्वादयस्तादृशगुणैरपि नोपास्य एव मितभुक्त्वादीनां लोके गुणत्वेऽपीश्वरे दोषत्वात्। तत्र बहुभुक्त्वस्यैव गुणत्वात्। तदुक्तम् —'बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित्' इति बृहत्तन्त्रे उक्तमिति शेषः। सूत्रार्थस्तु—अर्थानां सर्ववेदार्थभूतानां धर्माणां भावाभावरूपाणां अभेदात् अविभागेन एते उपसंहर्तव्या एते तु नेति विभागमन्तरेण उपसंहारो युगपद्बुद्धावारोपः कार्यः। उपसंहृत्य च परमात्मा तद्गुणात्मकत्वेन ध्यातव्य इति यावत्। कुतः? यतो 'विधिशेषवदयं' विशिष्टसन्ध्यावन्दनादिवदस्यापि विहितत्वात्। गुणदोषाभाववत् दोषाणामप्युपसंहर्तव्यत्वं किं न स्यादिति न वाच्यम्। यतः स चोपसंहारः 'समाने च' योग्ये एव पूर्णत्वाविरोधिगुणविषये एव युक्तः, न तु तद्विरोधिरोदनामितभुक्त्वादिष्विति॥

(६) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे—अन्यथात्वमिति॥ अत्र पूर्वसूत्राद्विधिशेषवदिति पदस्यानुवृत्तिं उपसंहारस्येति विपरिणतपदानुवृत्तिं अन्यथात्वमित्यस्यावृत्तिं चाभिप्रेत्य शब्दपदगृहीतश्रुत्युदाहरणपूर्वकं आक्षेपांशं व्याचष्टे—आत्मेति। योजना तु 'वि

हारस्यान्यथात्वमिति चेन्न, एते गुणा नोपास्या इति विशेषवचनाभावात् 'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो न तु दोषैः कदाचित्' ( ) इति विशेषवचनाच्च। आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थम्॥७॥

(७) सू—ॐ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्॥ ॐ॥ ८॥

धिशेषवत' विधिविहितोपसंहारवत् यतः 'आत्मा' इति शब्दादुपसंहारस्यान्यथात्वं च अनुपसंहारः अल्पगुणज्ञानरूपोऽप्यर्थाद्विहितः ततश्च 'अन्यथात्वे' अन्यथोपसंहारे विधिशेषस्य विधिविहितकर्मणः 'अन्यथात्वं' लोपः प्रसज्यते तदुपसंहारस्य 'अन्यथात्वं' अकर्तव्यत्वं सिद्धमिति। परिहारांशं व्याचष्टे—नेति। सर्वगुणोपसंहारस्य 'अन्यथात्वं' अभावः नेत्यर्थः। कुतो नेत्यतः किमसौ प्रामाणिकत्वादङ्गीक्रियते, उत तद्विरोधिगुणोपसंहारे प्रमाणाभावाद्वेति विकल्प्य आद्यपक्षनिषेधहेतुत्वेन अविशेषादिति पदं व्याचष्टे-एत इति। विशेषेति। विशेषप्रमाणाभावादित्यर्थः। नाविशेषादित्यस्यैकपद्याश्रयणेन विशेषवचनादित्यर्थाभिप्रायेण द्वितीयपक्षनिषेधहेतुत्वेनाप्येतद्व्याचष्टे—सर्वैरिति। सर्ववेदोक्तैरित्यर्थः। 'गुणैः' पूर्णत्वाविरोधिधर्मैः। तथा चासावीश्वरः 'एक एव' अभिन्न एव सर्वैर्गुणैरेव 'उपासितव्यः' उपसंहृत्य ध्यातव्यो न तु दुःखादिदोषैरपीति योजना। चः समुच्चये। नन्वात्मत्वमेवोपासीत न त्वन्यदिति आत्मत्वावधारणादेव तदन्यगुणा नोपास्या इति सिद्ध्यतीत्यतः तदुत्तरत्वेनाप्यविशेषादिति हेतुं व्याचष्टे—आत्मेति। इत्यवधारणमिति। इतिवाक्यगतैवकार इत्यर्थः। अनात्मत्वेति। अनात्मत्वमात्मत्वायोगः तस्य निवृत्तिर्व्यवच्छेदः स एवार्थो यस्य तत्तथोक्तम्। यतोऽतो न तद्विरोध इति वाक्यशेषः। तथा च भगवन्तं आत्मैवायमित्युपासीत न त्वनात्मेतीति उत्तमाधिकारिणः प्रति अयोगव्यवच्छेदक एव एवकारो नान्ययोगव्यवच्छेदकः। निरवकाशोदाहृतश्रुतिविरोधादिति भावः। अनेनावधारणस्यायोगव्यवच्छेदेऽप्यविशेषादिति सौत्रहेतोरर्थान्तरमुक्तं भवति॥

(७) ननु नायं सर्वगुणोपसंहारो युक्तोऽशक्यत्वादित्याशङ्कामभ्युपगमवादेन परिहरन् न वेति सूत्रं उपसंहारः कार्य इत्येतयोरनुवृत्त्यध्याहाराभ्यां व्याचष्टे—प्रकरणभेदादिति॥ परोवरीयस्त्वादिवदित्या

प्रकरणभेदान्न वोपसंहारः कार्यः । परोवरीयस्त्वा
दिषु तावदेव ह्युक्तम् ॥ ८ ॥

( ८ ) सू—ॐ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ॐ ॥ ९ ॥

दावुपस्कार्यम् । वेति व्यवस्थितविकल्पः । तथा च एवमुपसंहारः कार्यतयोक्तः नासौ कार्यो वा । कुतः? परोवरीयस्त्वादिवत् प्रकरण भेदात् । परोवरीयोवैश्वानरादिप्रकरणानां विद्यानां भेदादित्यर्थः । य द्येकैकस्य सर्वगुणोपासनं स्यान्न तर्हि प्रकरणानि भिद्येरन् कारणा भावादिति भावः । नन्वेकैकस्मिन्नेव प्रकरणे सर्वगुणोक्तिसम्भवात्प्र करणभेदेऽपि सर्वगुणोपासनोपपत्तिरित्यत आह—परोवरीयस्त्वादि ष्विति । परोवरीयस्त्वादिगुणप्रतिपादकेष्वित्यर्थः। प्रकरणेष्विति। यथे ति च शेषः । परोवरीयस्त्वं नाम 'परस्मात्' इत्यनेन निरुक्तं निरवधि कसर्वोत्तमत्वम् । आदिपदेनोद्गीथत्वानन्तत्वे प्रकरणान्तरोक्ते च गृह्य ते । स्पष्टं गुणप्रतिपत्त्यर्थं त्वप्रत्ययः । सूत्रे तु सप्तम्यन्तं प्रथमान्तं चै तत् । अनेनैवं सर्वगुणोपसंहारः कर्तव्यतयोक्तः सः न कर्तव्यो वा । कु तः? 'प्रकरणभेदात्' परोवरीयोवैश्वानरादिविद्याभेदात् । अन्यथा स न स्यात् । न चैकस्मिन् प्रकरणे सर्वगुणोक्तिसम्भवात्प्रकरणभेदे ऽपि सर्वगुणोपसंहारोपपत्तिरिति वाच्यम् । यतः 'परोवरीयस्त्वादिव त्'निरवधिकसर्वोत्कृष्टत्वरूपपरोवरीयस्त्वादिगुणप्रतिपादकेषु 'स एष परो वरीयानुद्गीथः स एषोऽनन्तः' (छा.१-९-२.) इत्यादिषु प्रकरणेषु तावदेवोपास्यगुणेषु । कियदेव? परोवरीयस्त्वादि उक्तं न सर्वमत इति सूत्रार्थ उक्तो भवति ॥

( ८ ) उक्तमाक्षिप्य समादधत्सूत्रं—संज्ञात इति ॥ अत्रापि पूर्वव दुपसंहारः कार्य इत्येतयोरावृत्त्यध्याहाराभ्यामाक्षेपांशं व्याचष्टे— सर्वेति । सर्वस्येत्यावर्तते । गुणाभिधायकत्वात् गुणाभिधानस्य चो पसंहारार्थत्वादिति शेषः । कार्य इति सावधारणम् । तथा च 'सर्व स्य' सर्वविद्योक्तगुणस्योपसंहारः कार्य एव । कुतः? 'सर्वस्य' वि द्याराशेः ब्रह्मगुणाभिधायकत्वात् गुणाभिधानस्य चोपसंहारार्थत्वात्। न चासिद्धिः । 'सर्वस्य' शब्दराशेः ब्रह्मनामत्वात् । नामोदितगुणा नुपसंहारे तन्नाम्नो ब्रह्मणोऽनुपास्तिप्रसङ्गादिति योजना । अनेन सूत्रे सर्वस्येति शेषः कार्यः,संज्ञात इति भावप्रधानमित्युक्तं भवति । ननु स र्वस्य ब्रह्मनामत्वमसिद्धमित्यत आह—' सोऽहं नामविदेवास्मि नात्म

सर्वविद्या उक्त्वा 'सोऽहं नामविदेवास्मि नात्मवित्'
( छा.७-१-३. ) इति वचनात्सर्वस्य ब्रह्मनामत्वात्तदु
पसंहारः कार्यः ।

( ९ ) नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः ।
कार्यैव ब्रह्मणि परे नात्रकार्या विचारणा ॥

वित्' इति वचनादिति । सनत्कुमारं प्रति नारदोक्तेरित्यर्थः । इति व चनादवगतात् ब्रह्मनामत्वादित्यन्वयः । 'सः ' एवं सर्वविद्यावेत्ताऽप्य हं परमात्मनामविदेवास्मि न परमात्मवित् । कुतः ? सर्वविद्यानिर्णेत व्याज्ञानादिति श्रुत्यर्थः । यद्यपि ' मन्त्रविदेव ' इति छन्दोगानां पाठः । तथाऽपि शाखान्तरवाक्यमेतदित्यदोषः । ' यद्वै किं चिदध्यगीष्ट नामै वैतत ' ( छा.७-१-३.) इति उत्तरवाक्यबलान्मन्त्रशब्दो नामपरो वा । केचित्तु—' मन्त्रवित् ' इत्येव श्रुतिपाठः । भाष्यं तूपनिषदर्थानुवादप रमित्याहुः । ननु 'सोऽहम् ' इति वाक्ये स्वस्य नामवित्त्वमात्रोक्तावपि कथं सर्वस्य ब्रह्मनामत्वसिद्धिरित्यत आह—सर्वेति । ऋग्वेदमित्यादि नेति प्रागध्याहार्यम् । वेदयन्तीति विद्या वेदादयः । तथा च ' ऋ ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदं अथर्वणं चतुर्थमितिहासपुरा णं पञ्चमं वेदानां वेदम् ' ( छा. ७ - १ - २. ) इत्यादिनाऽऽत्मनः सर्वविद्यावेदित्वमुक्त्वेत्यर्थः । यद्वा—ऋगादिसर्वविद्या आत्मना अ धीता इत्युक्त्वेत्यर्थः । तथा च सर्वविद्यावेत्ताऽहं नामविदेवेत्युक्ति बलात् सर्वस्य ब्रह्मनामत्वमवगम्यत इति भावः । श्रुत्यर्थस्तु—' भग वो ' भगवन् सनत्कुमार अहं ऋग्वेदादिकमध्येमि । इतिहासपुराणमि ति द्वन्द्वैकवद्भावः । विशेष्यनिघ्नोऽयं शब्दः । वेदशब्द आवर्तते । तथा च इतिहासपुराणात्मकं ग्रन्थं वेदं सन्तं वेदानां पञ्चमं पञ्चत्वसङ्ख्या पूरणं वेदमध्येमीति ॥

( ९ ) अत्रैव स्मृतिमाह—नामत्वादिति ॥ सर्वविद्यानां ब्रह्मनाम त्वात् । अत एव सर्वगुणाभिधायकत्वाद्गुणाभिधानस्य चोपसंहारार्थ त्वात्परे ब्रह्मणि गुणानामुपसंहृतिः कार्यैवेति योजना । इति चेति । इ ति ब्रह्मतर्कवचनाच्चोपसंहारः कार्य इत्यन्वयः । न केवलं सूत्रकृदुक्त हेतोरिति चार्थः । अभ्युपगमरूपं तदुक्तमित्यादिसमाधानांशं व्याच ष्टे—सत्यमिति । सोपपत्तिकं यद्गुणोपसंहारकर्तव्यत्वमुक्तं तत् ' स

इति च ब्रह्मतर्के । इति चेत् सत्यं, उक्तो ह्युपसंहारः। तत्प्रमाणमप्यस्त्येव । 'नाम वा एता ब्रह्मणः सर्ववि द्यास्तस्मादेकः सर्वगुणैर्विचिन्त्यः' इति कौण्डिन्य श्रुतौ ॥ ९ ॥

—*:*:*—

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ प्राप्तेश्च समञ्जसम् ॥ ॐ ॥ १० ॥

त्यं' युक्तमेवेत्यर्थः । अनेन सूत्रे सत्यमिति शेषः । तस्य तदित्यनेनान्व य इत्युक्तं भवति । कथं युक्तमित्यतस्तद्धेतुत्वेनापि तदुक्तमित्येतद्योज यति—उक्तो हीति । 'हि' यतः कर्तव्यतयेति शेषः । अनेन तदुपसंहा रकर्तव्यत्वं यतोऽस्माभिः 'उक्तं' साधितमिति सूत्रखण्डार्थ उक्तो भ वति । श्रुत्याऽप्युक्तार्थसाधनाय—अस्ति तु तदपीति सूत्रांशः प्रवृत्तः। तं व्याचष्टे—तदिति । तदित्यनूद्य प्रमाणमित्यर्थकथनम् । यद्वा—त स्मिन् सर्वविद्यानां ब्रह्मनामत्वेन तद्गुणाभिधायकत्वादुपसंहारः कार्य इत्युक्तार्थे इत्यर्थः । 'प्रमाणं' श्रुतिवचनम् । न केवलं गुणाभिधान स्योपसंहारार्थत्वादिति युक्तिमात्रमित्यपिशब्दार्थः । सौत्रतुशब्दार्थमा ह—एवेति । अस्य सत्यमित्यनेनान्वयः । एतास्सर्वविद्याः परब्रह्मनामै व, तस्माद्विष्णुरेक एव सर्वगुणैरुपसंहृत्योपास्य इत्यर्थः । यावच्छ क्तिप्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणग्रहणार्थं च पुनः पुनः उपसंहारोपन्यास इति न पौनरुक्त्यमिति तत्त्वप्रदीपोक्तिः । कौ ण्डिन्यश्रुतावित्यस्य उक्तो ह्युपसंहार इत्यनुषङ्गः । अतः तत्प्रमाणम स्त्येवेत्यन्वयः ॥ २ ॥

॥ इति उपसंहाराधिकरणम् ॥

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे प्रागुक्तोपसंहारानुपसंहारयोः पुरुषभेदेन क र्तव्यत्वं समर्थ्यते । सूत्रे समञ्जसमित्यनेन असमञ्जसमिति पूर्वपक्षस्य सूचनात्तमनुपन्यस्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—प्राप्तेश्चे ति ॥ समञ्जसमित्यस्यार्थो—युज्यत इति । चशब्दोऽवधारणे । अनेन सौत्रश्चशब्दः भिन्नक्रम इति सूचितम् । उपसंहारोऽनुपसंहार इति सूत्रेऽनुषक्तपदस्यार्थकथनम् । चः समुच्चये । युज्यत इत्यस्य प्रत्येकं

युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।
( २ ) गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।
अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ॥
इति भविष्यत्पर्वणि ॥ १० ॥

———:*:———

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ सर्वाभेदादन्यत्रेमे ॥ ॐ ॥ ११ ॥

---

सम्बन्धः । पुरुषभेदेनेति शेषः । नन्वनेनोपसंहारः कर्तव्यः अनेनानुप संहार इति निर्णयाभावात् तौ पुरुषभेदेनापि न युक्तावित्यतस्तदुत्तर त्वेन प्राप्तेरित्येतद्व्याचष्टे—योग्यतेति । प्राप्यते फलमनयेति प्राप्तिर्यो ग्यता । तथा च स्वभुजवत् ध्यानकाले युगपद्गुणप्रतीत्यादियोग्यता विशेषादित्यर्थः । विशेषात् प्राप्तेरित्यनेन प्राप्तेरित्यस्य पुरुषविशेषात् निर्णयसंभवादित्यप्यर्थ उक्तो भवति । तत्र युगपद्वेदोक्तसर्वगुणप्रती तियोग्यता ब्रह्मणः । देवपित्रादीनां क्रमेण न्यूनगुणप्रतीतिः । मानुषा णामल्पगुणप्रतीतिरित्येवं युगपत्प्रतीत्यादियोग्यता ज्ञातव्या ॥

( २ ) युगपत्सर्वगुणप्रतीतिः ब्रह्मणः, अन्येषां क्रमेणेति तदेव श्रङ्गग्राहिकया स्मृत्या दर्शयति—गुणैरिति ॥ 'अन्यैः' चतुर्मुखेतर देवपित्रादिभिः । चोऽप्यर्थः । मानुषैस्त्वित्यन्वयः । 'कैश्चित्' अल्पै रानन्दादिगुणैः । यद्यपि स्मृतावुपासनाविशेष एवोच्यते न तु प्रती तिनियमः । तथाऽपि ध्यानरूपोपासनस्य गुणप्रतीतिसाध्यत्वादर्थोक्त लाभ इति भावः । तथा च सर्वैर्गुणैरित्यस्य युगपत् प्रतीतिरित्यभ्युप गमान्नासंगतिरिति भावः ॥ ३ ॥

॥ इति प्राप्त्यधिकरणम्॥

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे बहुगुणोपसंहारस्य फलातिशयोक्त्या कर्तव्यता समर्थ्यते । प्रमाणाभावेन फलविशेषानिर्णयादयुक्तो बहुगुणोपसंहार इति प्राप्ते सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे-सर्वेति ॥ अत्र पूर्वसूत्राद वधारणार्थकचशब्दशिरस्कस्य विपरिणतसमञ्जसपदस्योपसंहारसू त्रादुपसंहारपदस्य चानुवृत्त्या युक्त एव ब्रह्मादीनां यथायोगं बहुगुणो पसंहार इति साध्यलाभमभिप्रेत्य तत्र हेतुसमर्पकतया सूत्रं व्याचष्टे-

सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्माद्यो भवन्ति।
(२) सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत्।
इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति हि ॥
इति पाद्मे ॥ ११ ॥

—*-:*:-*—

५. अधिकरणम् ॥

(१) सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमित्यत आह—

सर्वेति। सर्वगुणयुक्तत्वेनोपासनादित्यनेन सर्वाभेदादित्यस्य एते गुणा उपसंहर्तव्या एते तु नेति विभागं विना सर्वेषां गुणानामभेदादविभागेनेत्यर्थ उक्तो भवति। 'उपासनात्' उपसंहृत्योपासनान्निमित्तादिति शेषः। अन्यत्रेत्यस्य विशेष्यमाह—फल इति। एवकारेणाल्पफलव्यावृत्तिः। अनेनान्यत्रेत्यस्यानुपसंहारालपाधिकारिभ्योऽन्यत्र तत्फलविलक्षणे फले इत्यर्थ उक्तो भवति। इमे इत्यस्यार्थो—ब्रह्मादय इति। इमे इति विशेषतः प्रस्तुतत्वात् सर्वोपसंहारा उच्यन्त इति तत्त्वप्रदीपोक्तेः। यद्यपि ब्रह्मैव सर्वोपासक इति आदिपदानुपपत्तिः। तथाऽपि तदनतिन्यूनब्रह्माण्यादिविषयमादिपदमित्युक्तं तत्त्वप्रदीपे। भवन्तीति सूत्रे शेषोक्तिः। यत इति शेषः। अस्य लब्धसाध्येनान्वयः॥

(२) न केवलमुपासनानां महदल्पत्वाभ्यां तत्फलानामपि महदल्पत्वे निश्चीयेते, किन्तु तथा स्मृत्युक्तत्वाच्चेत्याह—सम्पूर्णेति॥ 'आनन्दभाक्' आनन्दयुक्तः। तुशब्दोऽप्यर्थः। सम्यगिति क्रियाविशेषणम्। तथा च 'इतरे तु' ब्रह्म ब्रह्माणीतरदेवादयोऽपि 'यथायोगं' यथायोग्यं उपासनात् मुक्तौ यथायोगं 'सम्यग्भवन्ति' अतिशयवन्तो भवन्तीत्यर्थः। तत्त्वप्रदीपे तु सम्यङ्मुक्तावित्येकपद्याभिप्रायेण इतरे तु यथायोगं यथाशक्त्युपास्तिं कुर्वाणाः 'सम्यङ्मुक्तौ भवन्ति' यथायोगं फलभाजो भवन्ति। सम्यङ्मुक्ताविति वचनादत्यल्पगुणोपासकानामपि सम्यङ्मुक्तिरेव नासम्यङ्मुक्तिरिति सिध्यति। दुःखलेशाभावादिति विशेषार्थ उक्तः। पाद्मे वचनादिति शेषः ॥ ४ ॥

॥ इति सर्वाभेदाधिकरणम् ॥

——:*:——

५. अधिकरणम् ॥

(१) अत्राधिकरणे सर्वमुमुक्षुसाधारणोपास्यगुणा निर्णीयन्ते।

सू—ॐ ॥ आनन्दादयः प्रधानस्य ॥ १२ ॥
प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्यु पास्य एव ।

पूर्वपक्षं सूचयति—सर्वेषामिति ॥ कियदित्याक्षेपे । उपास्यगुणजातं 'कियत्' न कियदित्यर्थः । अनेन संख्याक्लृप्त्याक्षेपः कृतो भवति । किमुपास्यमिति निर्देशक्लृप्त्याक्षेपस्याप्युपलक्षकमेतत् । क्वचित् किमिति पाठः । तदा व्यत्यासः । एवं कियत्किमित्यनयोः नियमशब्देनान्वय यदितर्ह्योरध्याहारेण यदि उपास्यगुणाः चत्वारः पञ्च वा इति चोच्यते तर्हि अन्येषामपि समुच्चयसम्भवात् नैते, अन्ये एवेत्यपि वक्तुं शक्यत्वात् कियत् नियमेन किं नियमेनेति नियमाक्षेपपरत्वेनापीदं व्याख्येयम् । इत्यत इति । सर्वमुमुक्षूपास्यगुणानिर्णयान्न कस्याप्युपासनं युक्तमित्यर्थः । आहेति । सिद्धान्तं सूत्रकार इति शेषः । सूत्रे प्रधानस्येति हेत्वंशं व्याचष्टे—प्रधानफलस्येति । शेषित्वेन प्रधानस्य फलस्येत्यर्थः । यद्वा—फलेषु प्रधानस्येत्यर्थः । फलं निर्दिशति—मोक्षस्येति । अर्थ इति शेषोक्तिः । मोक्षप्रयोजनायेत्यर्थः । आनन्दादय इति साध्यभागं व्याचष्टे—आनन्द इत्यादिना । सर्वेषां मुमुक्षूणामित्यत्रापि सम्बध्यते । सर्वमुमुक्षुभिरित्यर्थः । सदात्मेति भावप्रधानो निर्देशः । इतिशब्दो वस्तुनिर्देशार्थः । गुणा इति शेषः । एवशब्दस्य एते एवेत्यध्याहृतपदेन सम्बन्धः । न च चतुर्गुणोपासनस्य सर्वमुमुक्षुसाधारण्यानुपपत्तिरेकगुणोपासकानां तदभावात् । अन्यथा 'आत्मेत्येव परं देवमुपास्य' इति वचनविरोधापत्तेरिति वाच्यम् । अस्य चतुर्विधमोक्षयोग्याधिकारिविषयत्वात् । अत एव तत्र टीका—न चानन्दादयः प्रधानस्येत्युक्तिविरोधः । तदुपासनस्य सम्पूर्णमोक्षार्थत्वात् । अत्र च 'नोत्क्रामन्ति' इति पूर्णमोक्षाभावोक्तेरिति । न चास्य देवसाधारण्यानुपपत्तिः । देवानामुत्क्रान्तिमार्गयोरभावादिति वाच्यम् । तेषामप्यंशेनोत्क्रान्तिसम्भवात्, तदप्राप्तेः पूर्वं तत्सम्भवाच्च । न च 'सच्चिदानन्द आत्मेति मानुषैः' इत्यणुभाष्ये, ये सम्यङ्मुक्तिमात्रमिच्छन्ति तत्र विशेषान् तेषां ये गुणा उपास्याः ते कियन्त इत्यधुना निरूप्यत इति तत्त्वप्रदीपे च अस्योपासनस्य मनुष्यमात्राधिकारत्वोक्तेर्विरोध इति वाच्यम् । प्राधान्येन चतुर्गुणोपासनं मनुष्याणामेवेत्यभिप्रायेण ग्रन्थद्वयप्रवृत्तेः । देवैस्तु साधारण्येनैव तदुपास्तिकरणात् ।

(२) सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ॥
इति ब्रह्मतर्के ॥ १२ ॥

---*---

६. अधिकरणम् ॥

(१) सू—ॐ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ॐ ॥ १३ ॥

---

यद्यपि सूत्रे आनन्दमात्रस्य मुखतो निर्देशात्सङ्ख्यानिर्देशक्लृप्त्यसम्भवः । तथाऽपि सत्पदोदितनिर्दोषत्वस्य ज्ञानानन्दयोः आत्मपदोदितस्वामित्वस्य सर्वापेक्षिततत्वात् स्वसम्बन्धानुस्मरणस्य भगवत्प्रीतिसाधनत्वेन सर्वापेक्षितत्वात् 'तं यथा यथा' ( ) इति श्रुतेरपेक्षितफलानुसारेणैवेश्वरस्योपास्यत्वात् प्रधानस्येत्युक्तफलपर्यालोचनया आदिपदेन ज्ञानादित्रयस्यैव ग्राह्यत्वात् सङ्ख्यानिर्देशज्ञानं सुकरमिति न दोषः। यद्यप्युपासनस्यानन्दादिरूपमोक्षार्थत्वादिति सौत्रो हेतुः निर्देशनियमसाधक एव, न त्वधिकसङ्ख्येयसमुच्चयव्यवच्छेदमुखेन सङ्ख्यानियमसाधकः । तथाऽपि तत्सूचितस्सर्वेषां मुमुक्षूणामधिकोपासनासमर्थत्वादिति हेतुस्तत्साधको भविष्यतीत्यदोषः ॥

(२) अत्र स्मृतिं चाह—सच्चिदिति ॥ 'सर्वेषां मुमुक्षूणां' कर्मक्षयादिचतुर्विधमोक्षेच्छूनां ब्रह्म सच्चिदानन्दात्मेत्येवंप्रकारेणोपासा विनिश्चिता कर्तव्यतयेति शेषः । कुतः ? यतः सा 'अपेक्षिता' अपेक्षितफलसाधनम् । न चास्तु अन्यथाऽप्युपासनं, 'फलसाम्यात्' फलस्योपास्तिसदृशत्वात् । यद्वा—उपासनस्य प्रतिमुखस्य 'यथा मुखश्रीः' इति भागवतोक्तेः अपेक्षितफलेन साम्यात् तदनुसारित्वादित्यर्थः ॥ ५ ॥

॥ इति आनन्दाधिकरणम् ॥

---:*:---

६. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मोपासने प्रियशिरस्त्वादिगुणानां सर्वाधिकारिसाधारण्यनिरासेन सर्वेषां चतुर्गुणनियमः समर्थ्यते । अप्राप्तिरित्यनेन प्राप्तिपूर्वपक्षसूचनात्तमनुपन्यस्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—प्रियेति ॥ सूत्रे प्रधानस्येत्यनुवर्तते । तस्य भेदशब्देनान्व

फलभेदार्थमुपचयापचययोः भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिः ।

यः। भेद इति तादर्थ्ये सप्तमी। हिशब्दो हेतौ प्रसिद्धौ चेत्यभिप्रेत्य भेदे उपचयापचयौ हीति हेत्वंशं व्याचष्टे–फलभेदार्थमिति। 'अथात आनन्दस्य' इति श्रुतिसिद्धफलतारतम्यार्थमित्यर्थः। 'उपचयापचययोः' क्रमेणाधिकाल्पविशेषविषयकत्वरूपयोः। तारतम्यस्येति यावत्। गुणोपासनेऽपीति शेषः। केचित्तु—उत्तमानां साधारणातिरिक्तस्य गुणस्य यथायोग्यमुपचयः संग्रहः अन्येषां अपचयः त्याग इत्याहुः। 'भावात्' अभ्युपेतत्वादित्यर्थः। नञ्व्यत्यासेनान्वयमभिप्रेत्य प्रियशिरस्त्वाद्यप्राप्तिरिति साध्यांशं व्याचष्टे—नेति। 'सर्वेषां' उत्तमानामवरेषां चेत्यर्थः। प्रियं शिरो यस्यानन्दमयस्य तस्य भावः प्रियशिरस्त्वं, आदिपदेन मोदादिपक्षकत्वादीनां ग्रहणम्। गुणशब्दात्परो विशेषशब्दो योज्यः। प्रियशिरस्त्वादिरूपश्चासौ आनन्दादिगुणविशेषश्च तस्योपासा आनन्दादिगुणानां प्रियशिरस्त्वादिसकलविशेषयुक्तत्वेन उपासनेति यावत्। तस्याः प्राप्तिः योग्यता तस्याः प्राप्तिः प्रसक्तिरित्यर्थः न सर्वैः चतुर्णां गुणानां सकलविशेषयुक्तत्वेनोपासनीयत्वं, तथासति सर्वेषां सर्वगुणोपास्तिप्रसङ्गात्सर्वगुणानामपि गुणचतुष्टयविशेषत्वस्य वक्तुं शक्यत्वात्। किन्तूत्तमैरेवेति फलितोऽर्थः। यथोक्तं तत्त्वप्रदीपे—एकैकस्मिन् गुणे विशेषाणामुपचयापचयौ फलतारतम्यार्थौ भवतः। अपचयः फलमात्राय भवति, न फलाभावाय। उक्तगुणोपास्तावुपचयोऽधिकफलाय भवति, अतो नावरेषां प्रियशिरस्त्वादिप्रियगुणविशेषोपास्तिः प्राप्यत इति। अस्यार्थः—आनन्दादिषु एकैकस्मिन्नपि गुणे विद्यमानानां विशेषाणामवान्तरभेदानां प्रियत्वादीनां विषयीकरणे उपचयापचयावाधिक्याल्पत्वे फलतारतम्यार्थमङ्गीकार्यौ भवतः। 'अपचयः' कतिपयविशेषविषयत्वरूपमल्पत्वम्। उपास्तावित्युभयत्राप्याकृष्यते। 'फलमात्राय' मोक्षायैव भवति, नातिशयितफलाय। 'उक्तगुणोपास्तावुपचयः' उक्तानां आनन्दादिगुणानां मध्ये एकैकस्मिन्नपि गुणे विद्यमाना ये प्रियत्वादयस्तेषां साकल्येन विषयीकरणमुपचयः साधिकफलाय सातिशयमोक्षाय भवति। यत इत्यर्थः। 'अवरेषां' उत्तमाधिकारिव्यतिरिक्तानां 'गुणविशेषोपास्तिः' उक्तगुणगतविशेषविषयोपास्तिरित्यर्थः। कि

(२) नैव सर्वेगुणाः सर्वैरुपास्या मुक्तिभेदतः।
विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता ॥
इति वाराहे ॥ १३ ॥

———*———

७. अधिकरणम् ॥

(१) सू—ॐ ॥ इतरे त्वर्थसामान्यात् ॥ ॐ ॥ १४ ॥

न्तूत्तमानामेवेति वाक्यशेषः ॥

(२) अत्रैव स्मृतिमाह—नैवेति ॥ सर्वगुणास्तद्विशेषाश्च सर्वैरु पास्या नैव। कुतो? 'मुक्तिभेदतः' मुक्तौ फलतारतम्यात्। अन्यथा स न स्यादिति भावः। 'यत्' यस्माद्विरिञ्चस्यैव मुक्तावानन्दफल स्य सुपूर्णता, अन्येषां विरिञ्चेतरेषामपूर्णता चास्तीत्यर्थः। वाराहे पु राणे उक्तमिति शेषः। अस्य नेत्यनेनान्वयः। न चास्य सूत्रस्य 'अ ज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को विमुच्येत बन्धात्' (                ) इति गीताभाष्योदाहृतश्रुतिविरोधः शङ्क्यः। यतः प्रमेयदीपे ध्यानापे क्षया सूत्रं, ज्ञानापेक्षया तु श्रुतिरिति विशिष्टाधिकारिविषयेयं श्रुतिरि ति च द्वेधा समाधानमुक्तम् ॥ ६ ॥

॥ इति प्रियशिरस्त्वाधिकरणम् ॥

———:*:*:———

७. अधिकरणम् ॥

(१) अत्राधिकरणे देवगन्धर्वपर्यन्तानां ब्रह्मवाणीतरदेवादीनां प्रियशिरस्त्वादिबहुगुणोपासनं समर्थ्यते। योग्यतानियमानिर्णयाद्वि रिञ्चेतरदेवादिभिश्चतुर्भ्योऽन्ये मध्यमगुणा नोपास्या इति प्राप्ते सिद्धा न्तयत्सूत्रं पठित्वा व्याचष्टे—इतरे त्विति ॥ 'आनन्दादयः' इत्यत्र प्र कृतेभ्यश्चतुर्भ्यः 'सर्वाभेदात्' इत्यत्र प्रकृतेभ्यस्सर्वगुणेभ्यश्च 'इतरे' मध्यमगुणाः 'इतरैः' चतुर्मुखेतरदेवादिभिः 'उपसंहर्तव्याः' उपसं हृत्योपास्या इत्यर्थः। अनेन तुरप्यर्थ इति सूचितम्। न चोपासन योग्यतानिर्णय इत्यतः तद्धेतुत्वेन अर्थादित्येतत् ल्यब्लोपनिमित्तप ञ्चमीत्याभिप्रायेण व्याचष्टे—फलेति। तत्तत्प्राप्यफलानुसारेणेत्यर्थः। फलमपेक्ष्य कथं निर्णय इत्यतः फलोपासनयोः साम्यादिति युक्तिक थनपरतया सामान्यपदं व्याचष्टे—साम्येति। उपासनस्य तत्तत्प्राप्य

इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ॥ १४ ॥

——:※:——

८. अधिकरणम् ॥

( १ ) उपसंहारानुपसंहारप्रमाणमाह—

सू—ॐ ॥ आध्यानाय प्रयोजनाभावात् ॥ ॐ ॥ १५ ॥

आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ।

---

फलसाम्यमपेक्ष्येत्यर्थः । यद्वा—फलस्योपासनसाम्यमपेक्ष्येत्यर्थः । न च भविष्यत्फलानिर्णयः, गुरूपदेशेन तन्निर्णयोपपत्तेरिति भावः । अनेन सूत्रे निर्णयोपपत्तेरिति शेषः । तस्य फलनिर्णयोपपत्तेः योग्यता निर्णयोपपत्तेरिति द्वेधाऽर्थ उक्तो भवति ॥ ७ ॥

॥ इति इतराधिकरणम् ॥

——:※:——

८. अधिकरणम् ॥

( १ ) अत्राधिकरणे सर्वगुणोपसंहारानुपसंहारयोः कर्तव्यत्वे प्रमाणमुच्यते । मानाभावान्नोपसंहारानुपसंहारौ कर्तव्याविति प्राप्ते सिद्धान्तयन्नधिकरणतात्पर्यमाह—उपसंहारेति ॥ सर्वगुणोपसंहारानुपसंहारयोः कर्तव्यत्वे प्रमाणमाह अस्मिन्नधिकरणे सूत्रकृदित्यर्थः । अनुपसंहारशब्दः तत्त्वप्रदीपरीत्याऽल्पगुणोपसंहारपरः । तत्र प्रथममुपसंहारप्रमाणप्रदर्शनार्थं सूत्रं पठति—आध्यानायेति । अत्र प्रियशिरस्त्वादीत्यतो हिशब्दमनुवर्त्य सर्वविद्यासु सर्वे गुणा उच्यन्तेऽत इति चोपस्कृत्य आध्यानायेति हेत्वंशं व्याचष्टे—आध्यानार्थं हीति । अत्र तत्त्वप्रदीपे आप्त्या धिया ध्यानार्थं हि सर्वे गुणा उच्यन्त इत्याद्योऽर्थ उक्तः । अस्यार्थः—धिया अशेषान् गुणानाप्त्वोपसंहृत्येति । स एव टीकायामशेषेत्यादिना विवृतः । तथा च 'हि' यस्मात् 'आध्यानार्थं' अशेषगुणोपसंहारपूर्वकध्यानार्थं सर्वविद्यासु सर्वे गुणा उच्यन्ते इत्यर्थः । अस्य तस्मात् सर्वविद्यातो गुणोपसंहारः कार्य इति उपसंहारसूत्रोक्तसाध्येनान्वयः । सर्वविद्यानां भगवद्गुणाभिधायकत्वं च सर्वासां भगवत्संज्ञान्वितः सिद्धमिति न तदसिद्धिरिति भावः । गुणाभिधानस्य ध्यानार्थत्वं कुत इत्यतः तत्र हेतुत्वेन प्रयोजनाभावादित्यंशं व्याचष्टे—प्रयोजनान्तरेति । ध्यानं विनाऽन्यस्य प्रयोजनस्याभावादित्यर्थः । ध्यानलक्षणप्रयोजनसत्त्वादसिद्धिवारणाय—अन्तरेति । विप्रकी

(२) ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा ।
ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ॥
नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।
श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यते ॥
इति परमसंहितायाम् ॥
(३) गुणास्सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ॥
नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥
(४) ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् ।

र्णगुणोपसंहारफलं तु मोक्तानन्दातिशय इति टीकायामुक्तम् ॥

(२) गुणाभिधानस्य ध्यानार्थत्वे स्मृतिं चाह—ज्ञानार्थमिति ॥ अथशब्दः कर्मणां चेत्यर्थान्तरे । तस्या इति शेषः । तथा च यतः 'तस्याः' उदीरणायाः विद्याभिर्गुणाद्युक्तेः विद्याभिधेयानां हरेर्गुणानां परोक्षज्ञानात् ध्यानात् हरेः कर्मकरणात् शब्दग्रहणरूपाच्छ्रवणात् शब्दाभ्यासरूपात्पाठात् अन्यत् किञ्चित्प्रयोजनं 'नेष्यते' नोपेयते, अतो 'विद्याभिः' ब्रह्मकर्मोभयविद्याभिर्गुणानां कर्मणां च 'समुदीरणा' अभिधानं ज्ञानार्थं तद्द्वारा ध्यानार्थमेव भवेत् । उपलक्षणमेतत् । कर्मकरणार्थं चेत्यपि द्रष्टव्यम् । यतः सोदीरणा ध्यानाद्यर्थमेव, न प्रयोजनान्तराय, अतस्तस्याः प्रयोजनवत्त्वाय सर्वेऽपि हरेर्गुणाः ज्ञातव्या ध्यातव्याश्चैवेत्यर्थः । कर्माणि च कर्तव्यान्येवेत्यपि द्रष्टव्यम् । तथा च अनया स्मृत्या गुणाभिधानमाध्यानायैव भवति, सप्रयोजनस्य सतः प्रयोजनान्तराभावादिति सूत्रकृदुक्तानुमानं ज्ञापितं भवतीति ध्येयम् । 'इति परमसंहितायां' तदाख्यग्रन्थे सूत्रकृदुक्तं कथितमिति शेषः ॥

(३) ननु तथाऽपि प्रयोजनान्तराभावादिति हेतुरसिद्धः । स्मृतौ श्रवणपाठयोरपि गुणाभिधानप्रयोजनत्वेनोक्तत्वादित्यत आह— गुणा इति ॥ यतो गुणानां 'कथने' कथनात् ज्ञानध्यानाभ्यामन्यत् मुख्यं प्रयोजनं न भवेदेव, अतस्तस्य तत्प्रयोजनवत्त्वाय सर्वे हरेर्गुणा ज्ञातव्या ध्यातव्याश्चेत्यर्थः । तथा च श्रवणादेः परोक्षज्ञानध्यानार्थत्वेन तत्साधनत्वान्न तद्गुणाभिधानस्य मुख्यं प्रयोजनमिति हेतुत्वेनाभिमतस्य मुख्यप्रयोजनान्तराभावस्य नासिद्धिरिति भावः ॥

(४) ननु तथाऽपि ध्यानान्यस्य परोक्षज्ञानस्य गुणाभिधानप्रयोजनत्वात्प्रयोजनान्तराभावादित्यसिद्धमित्यत आह—ज्ञानेति ॥ 'सर्व

मुख्यं भवेन्न चान्येन फलं मुख्यं कचिद्भवेत् ॥
इति बृहत्तन्त्रे ॥ १५ ॥

( ५ ) सू—ॐ ॥ आत्मशब्दाच्च ॥ ॐ ॥ १६ ॥
'आत्मेत्येवोपासीत' (बृ. ३-४-७.) इत्यनुपसंहारे प्रमाणम् ॥ १६ ॥

---

शः' सर्वेषां गुणानां 'ज्ञानध्यानसमायोगात्' ज्ञानध्यानयोरुपयोग्युपयोग्यभावेन संमेलनान्मुख्यं फलमपरोक्षज्ञानादिकं भवेत्, नान्येन परोक्षज्ञानमात्रेणेत्यर्थः। तथा च ध्यानपूर्वभाविज्ञानमपि ध्यानोपयोगितया न मुख्यमिति न मुख्यप्रयोजनान्तराभावहेतोरसिद्धिरिति भावः। यद्यपि श्रवणादेस्तत्त्वनिश्चयद्वारा जनलोकादिफलकस्य गुणाभिधानमुख्यप्रयोजनत्वसम्भवात् मुख्यत्वविशेषणेऽपि प्रयोजनान्तराभावहेतोरसिद्धिरेव। तथाऽपि मोक्षाख्यमहाफलसाधनापरोक्षज्ञानसाधनत्वेन विहितस्य श्रवणादेर्जनलोकादिकं न मुख्यं प्रयोजनमिति ज्ञानमेव प्रयोजनं वाच्यम्। तथा च श्रवणादेरपरोक्षज्ञानसाधनतत्त्वज्ञानार्थत्वेन न श्रवणादिकं गुणकथनस्य मुख्यं प्रयोजनमिति नासिद्धिरिति भावः। इति बृहत्तन्त्रे कथितत्वान्नासिद्ध्यादिदोष इत्यन्वयः। अनेनोपसंहारे मुख्यप्रयोजनान्तरशून्यसप्रयोजनसर्वगुणाभिधानमेव लिङ्गतया प्रमाणमित्युक्तं भवति ॥

( ५ ) एवं सर्वगुणोपसंहारं प्रमाणेन समर्थ्यानुपसंहारं च समर्थयत्सूत्रं पठित्वा व्याचष्टे—आत्मशब्दाच्चेति॥ चोऽप्यर्थः। तथा च 'आत्मशब्दात्' तद्घटितश्रुतेः अनुपसंहारोऽपि सिद्ध्यतीति सूत्रार्थमभिप्रेत्य श्रुत्युदाहरणपूर्वकं सूत्रं व्याचष्टे—आत्मेति। इति वाक्यमिति शेषः। अनुपसंहारेति। उपासनाक्षिप्ताल्पगुणोपसंहारे प्रमाणमित्यर्थः। अन्यथा गुणान्तरव्यावृत्तिपूर्वकं आत्मत्वोपासनस्यैवात्र विधानादसङ्गतेः। न च अवधारणस्य 'अन्यथात्वम्' इति सूत्रे अयोगव्यवच्छेदकत्वस्योक्तत्वात् कथमन्ययोगव्यवच्छेदकत्वमुच्यत इति वाच्यम्। उपसंहारानुपसंहारवद्ब्रह्मादीन् उत्तमाधिकारिणः प्रत्ययोगव्यवच्छेदकत्वं अधमाधिकारिणः प्रत्यन्ययोगव्यवच्छेदकत्वमित्यधिकारिभेदेनाविरोधात् ॥ ८ ॥

॥ इति आध्यानाधिकरणम् ॥

९. अधिकरणम् ॥

(१) सू—ॐ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ ॐ ॥ १७ ॥

न च 'आनन्दादयः प्रधानस्य' इत्युक्तिविरोधः । य तः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २-१.) 'विज्ञानमान न्दं ब्रह्म' (बृ. ५-९-२८.) इतिवदेवात्मशब्दगृहीतिः । 'अत्र ह्येते सर्व एकीभवन्ति' (बृ. ३-४-७.) इत्युत्तरात् ।

(२) आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।

९. अधिकरणम् ॥

(१) अत्राधिकरणे उपासनायामानन्दादिचतुर्गुणनियमः समर्थ्यते । 'आत्मेत्येवोपासीत' इति सावधारणश्रुतेरात्मत्वमेव सर्वोपास्यं न त्वानन्दादयोऽपीति पूर्वपक्षे प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति—आत्मेति ॥ अत्रात्मपदं शब्दपरमित्याशयेन आत्मगृहीतिरित्युक्तहेतोरपेक्षितं साध्यमध्याहृत्य दर्शयति—न चेति । इत्युक्तीत्यावर्तते । तथा च 'आनन्दादयः प्रधानस्य' इत्युक्तेः 'आत्मेत्येवोपासीत' इति सावधारणोक्तिविरोधो नैवेत्यर्थः । कुतो नेत्यतस्तत्र हेतुत्वेन इतरवदिति दृष्टान्तविवरणपूर्वकमात्मगृहीतिरित्येतद्योजयति—यत इति । 'सत्यं ज्ञानम्' इति तैत्तिरीये 'विज्ञानमानन्दं ब्रह्म' इति बृहदारण्यके । इतिवदिति । इत्यादिवाक्येषु यथा अनेकेषां सत्यत्वज्ञानानन्दादीनां ग्रहणम्, तथा आत्मशब्देनापि सत्यज्ञानानन्दादीनां 'गृहीतिः' ग्रहणं भवेत् । 'आनन्दानुभवत्वाच्च' इति वचनादात्मशब्दस्यापि सत्यज्ञानानन्दादिग्राहकत्वात् । यथोक्तं तत्त्वप्रदीपे—यथेतरेषु विज्ञानमानन्दं ब्रह्मेत्यादिषु वचनेषु नैकगुणगृहीतिः तद्वदितरयुक्तत्वेनैवात्मशब्दगृहीतिरानन्दादयो गुणा आत्मशब्देन विवक्षिता इत्यर्थ इति । कुतोऽयमात्मशब्दः सत्त्वानन्दाद्यभिधायको, न स्वामित्वमात्रस्येत्याशङ्कोत्तरत्वेनोत्तरादित्यंशं व्याचष्टे—अत्रेति । उत्तरादिति । बृहदारण्यके 'आत्मा' इति विधेरुत्तरत्र श्रुताद्वाक्यादित्यर्थः । व्याख्यातमेतत्सर्वं वेदान्तनये ॥

(२) आत्मशब्दो न स्वामित्वमात्रं वक्ति, किन्तु सत्त्वानन्दादीनपीत्युक्तार्थे स्मृतिं चाह—आनन्देति ॥ ईश्वरो वेदवादिभिर्न केवलं स्वामित्वादात्मेति भण्यते, किन्तु 'आनन्दरूपत्वात्' अनुभवरूपत्वाच्च निर्दोषत्वात् नित्यत्वाच्च 'भण्यते' उच्यत इत्यर्थः । निर्दोषत्वमपि

नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वरः ॥ इति बृहत्तन्त्रे ॥ १७ ॥

——*——

१०. अधिकरणम् ॥

(१) सू—ॐ ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ ॐ ॥ १८ ॥

सर्वगुणानामन्वय आत्मशब्दे भवति । 'आप्तव्याप्तेरा

---

स्यत्वादित्यनेन सत्त्वमात्मशब्दार्थे इति सूचितम् । चशब्दः समुच्चये । बृहत्तन्त्रे उक्तमिति शेषः ॥ ९ ॥

॥ इति आत्मगृहीत्यधिकरणम् ॥

——*——

१०. अधिकरणम् ॥

(१) अत्राधिकरणे आत्मशब्दस्य पूर्वोक्तमनुपसंहारमानत्वमाक्षिप्य समाधीयते । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे—अन्वयादिति ॥ अत्रेत्थं योजना—नात्मशब्दस्यानुपसंहारमानत्वं युक्तम्, तदुक्तगुणानां सर्वोपास्यत्वाभावात् । कुतः ? श्रुतचतुर्गुणोपासनस्य पुंसः विभ्रमकरत्वेन निश्चायकत्वाभावात् । सोऽपि कुतो ? यत आत्मशब्दे सर्वगुणानां वाच्यतयाऽन्वयो भवति अत आत्मशब्दस्य सर्वगुणाभिधायकत्वमिति यावत् । तदपि कुतः ? आप्तव्याप्तेरिति वचनादिति । वचनार्थस्तु—आप्ता प्राप्ता व्याप्तिर्देशकालगुणापरिच्छेदो यं स तथोक्तस्तस्येति हेतुगर्भे विशेषणम् । 'परमस्य' परमात्मनः । सप्तम्यर्थे षष्ठी । 'आत्मशब्दः' आत्मेति शब्दः 'इति वचनात्' इत्यन्वयवचनात् । सत्यमेवमिति पदद्वयाध्याहारेण स्यादवधारणादिति सिद्धान्तांशं व्याचष्टे—सत्यमिति । अर्धाङ्गीकारे सत्यमितिशब्दः । तथा च यत् परेण सर्वगुणाभिधायकत्वमात्मशब्दस्योक्तं तदङ्गीक्रियते । यदात्मशब्दोक्तस्य सर्वोपास्यत्वाभावोऽनुपसंहारामानत्वं च तन्नाङ्गीक्रियत इति भावः । कथं परेणोक्तमभ्युपगम्यत इत्यत आह—स्यादिति । चोऽवधारणे । यत्परेणात्मशब्दस्य सर्वगुणाभिधायकत्वमुक्तम् । 'तदेवं' तथा स्यादेव । कुतः ? यतः 'आप्तव्याप्तेः' इति प्रमाणमत्र स्यात् । तथा च प्रमितत्वात्परोक्ताङ्गीकारो न दोषायेति भावः । ननु श्रुतचतुर्गुणोपासनस्य पुंसो विभ्रमक

त्मशब्दः परमस्य प्रयुज्यते ' इति वचनादिति चेत्स
त्यम्, स्याद्येवम् ।

( २ ) ' आत्मेत्येव ' (बृ. ३-४-७.) इत्यवधारणात् । अन्यथा

रत्वात्कथमात्मशब्दोक्तगुणानां सर्वोपास्यत्वमित्यतो ऽयाह—स्याद्येव मिति । ब्रह्मादीन् प्रत्येव, नान्यान् प्रतीति शेषः । तथा च यदात्मश ब्दस्य सर्वगुणाभिधायकत्वमङ्गीकृतम् ' तदेवं ' तथा स्यादेव, किन्तु ब्रह्मादीन् प्रत्येव, नाल्पाननुपसंहर्तॄन् प्रति, तान् प्रति तु अल्पगुणाभि धायकः स्यात् । कुतः ? ' अन्वयात् ' तथाऽनुभवात् । अतो विभ्रमक रत्वाभावात् तदुपासने सर्वेषां ' स्यात् ' युक्तमित्यर्थः ॥

( २ ) ननु ब्रह्मादीनामात्मशब्दः सर्वगुणान् ज्ञापयतीति कुतः, अ न्यान् प्रतीव तान्प्रत्यल्पगुणाभिधायकः किं न स्यादित्याशङ्कोत्तरत्वे नावधारणादित्यंशं व्याचष्टे—आत्मेति ॥ अन्ययोगव्यवच्छेदकावधा रणयुक्तत्वादित्यर्थः । अवधारणेऽपि किमायातमित्यत आह—अन्यथे ति । आत्मशब्दस्यान्यान् प्रतीव ब्रह्मादीन् प्रत्यल्पगुणाभिधायकत्व इ त्यर्थः । सर्वोपसंहारेति । ' गुणैस्सर्वैरुपास्योऽसौ ' इत्यादिसर्वोपसंहा रपूर्वकोपासनवचनविरोधादित्यर्थः । अयं भावः—यद्ययमात्मशब्दोऽ न्यान् प्रतीव ब्रह्मादीन् प्रत्यल्पगुणाभिधायकः, तर्हि अवधारणमप्य न्यान् प्रतीव तान् प्रत्यन्ययोगव्यवच्छेदकमेव स्यात् । न चेष्टापत्तिः । तथा सति आत्मशब्दोक्तस्यैवोपास्यत्वप्राप्त्या सर्वोपसंहारवचन विरोधः स्यात् । अतोऽसौ ब्रह्मादीन् प्रति सर्वगुणाभिधायक इति । यद्यपि तत्त्वप्रदीपे सत्यमिति वाक्यं नानुपसंहार एव प्र माणं, किन्तु सर्वोपसंहारेऽपि प्रमाणं स्यादेव, कुतः? ' आत्मे त्येव ' इति सर्वगुणपूर्ण इत्येवेत्यवधारणात् । ' अन्यथा ' एवमर्थानङ्गी कारे सर्वोपसंहारवचनविरोधादित्यात्मेति वाक्यस्यानुसंहारमात्रामा नत्वाङ्गीकारपरतया सत्यमित्यादि भाष्यं व्याख्यातम् । तथाऽपि टी काकृत् तदङ्गीकृत्यावधारणादित्यंशं तद्भाष्यं च प्रकारान्तरेणापि व्या ख्यातवानिति ध्येयम् । अनेन—' अन्वयात् ' ' आप्तव्याप्तेः ' इत्यन्वय वचनात् आत्मशब्दे सर्वेषां गुणानां अन्वयात् वाच्यतया सम्बन्धात् तस्य तदभिधायकत्वात् अत एव श्रुतचतुर्गुणोपासनस्य पुंसः विभ्र मकरत्वात् अत एव तदुक्तगुणानां सर्वोपास्यत्वाभावात् न तस्यानुप संहारमानत्वं युक्तमिति चेत् सत्यं, यतः तथा स्यादेव यत्परेणात्मश

सर्वोपसंहारवचनविरोधात् ॥ १८ ॥

—*✲*—

११. अधिकरणम् ॥

(१) सू—ॐ ॥ कार्याख्यानादपूर्वम् ॥ १९ ॥

'अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्ति

दस्य सर्वगुणाभिधायकत्वमुक्तं तत् तथा स्यादेव ब्रह्मादीन् प्रति। कुतः? अस्य वाक्यस्य 'अवधारणात्' अयोगव्यवच्छेदकावधारण युक्तत्वात्, नान्यान् अल्पान् प्रति। कुतः? अन्ययोगव्यवच्छेदकावधारणात्। अतो विभ्रमकत्वाभावात् मौक्तानुपपत्तिरिति सूत्रार्थ उक्तो भवति। तत्त्वप्रदीपरीत्या तु—यत् आत्मेत्यस्य अनुपसंहारमात्रमान त्वमुक्तं तत्सत्यं युक्तमेव। कुतः? तस्य सर्वोपसंहारेऽपि मानत्वात्। तत्कुतः? अवधारणात् 'आत्मेत्येव' इति सर्वगुणपूर्ण इत्येवेत्ययोग व्यवच्छेदकावधारणादिति सूत्रखण्डार्थः ॥ १० ॥

॥ इति अन्वयाधिकरणम् ॥

—*—

११. अधिकरणम् ॥

(१) अत्राधिकरणेऽलौकिकगुणानामेवोपसंहार्यत्वं समर्थ्यते। लौकिका एव गुणा उपसंहृत्य ध्यातव्या नालौकिकास्तेषां पूर्वमननुभूतत्वेन ध्यानकालेऽप्रतीतेरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति—कार्येति ॥ मुक्तिकार्यत्वाख्यानात् ध्यानकार्यभूताया मुक्तेरलौकिकत्वाख्यानादिति हेतुवाक्यार्थमभिप्रेत्य तत्सूचितां श्रुतिं दर्शयति—अलौकिका इति। अलौकिका एवेत्यर्थः। 'तस्य' हरेः। कुत इत्यतो हेतुमाह—अलौकिकमिति। 'अस्य' उपासनस्य 'मुक्तिकार्यं' कार्यभूता मुक्तिः 'अलौकिकं' अलौकिकी। कार्यानुसार्युपासनस्यैव कर्तव्यत्वनियमादिति हेतुसूचको हिशब्दः। इति कार्याख्यानादिति। इति श्रुतौ कार्यस्य मोक्षस्यालौकिकत्वोक्तेः ध्यानकार्यत्वोक्तेश्चेत्यर्थः। अनेन सूत्रे कार्याख्यानादिति मध्यमपदलोपी समासः, आ ख्यानादित्याङ्प्रश्लेषो वा। आङोऽर्थस्तु सम्यक्त्वमलौकिकत्वपर्यवसितं, कार्यपदं भावप्रधानमावर्तनीयं चेति सूचितम्। अपूर्वमिति प्रतिज्ञाभागमन्यत्रेतिपदाकर्षणेन श्रुत्यनुसाराद्वचनविपरिणामेन चोपास्या इति पदाध्याहारेण व्याचष्टे—अन्यत्रेति। ब्रह्मणोऽन्यत्र लोके इत्यर्थः। 'अ

कार्यं शतोऽस्य ' इति कार्याख्यानादन्यत्र अदृष्टा एव गुणा उपास्याः ॥ १९ ॥

—*—

१२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ समान एवं चाभेदात् ॥ ॐ ॥ २० ॥

दृष्टाः ' अप्रतीता अलौकिका इति यावत् । गुणा ब्रह्मणः ' उपास्याः ' ध्यातव्या इत्यर्थः । एवेत्यनेनापूर्वपदं सावधारणमिति सूचितम् । यद्यप्यपूर्वशब्दः तद्व्याख्यानरूपोऽदृष्टशब्दश्च यागादिक्रियाजन्ये पुण्ये रूढः । तथाऽपि श्रुतौ यौगिकालौकिकपदप्रयोगात्तत्समानार्थकस्यापूर्वपदस्यादृष्टपदस्य च योगवृत्तिरेवाश्रयणीयेति भावेन असावाश्रिता । न चालौकिकगुणाप्रतीतेः शक्तिग्रहानुपपत्तिः । अभिमान्यधिकरणसुधोक्तरीत्या इन्द्रादौ यस्सहस्राक्षः स इन्द्रः यः पाशहस्तः स वरुणः इत्याद्युपदेशवदत्रापि साक्षात्कृतभगवद्रूपाणां योगिनां योऽनुकूलवेदनीयो गुणः स आनन्दः यत् सर्वविषयं तत् ज्ञानमित्याद्युपदेशोपपत्तेः । उपदेशेन च गुणप्रतीतिसम्भवाच्छक्तिग्रहोपपत्तेश्च ॥ ११ ॥

॥ इति कार्याधिकरणम् ॥

—*—

१२. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनस्य स्वसदृशफलप्रदत्वसिद्ध्यर्थं ब्रह्माणीब्रह्मणोरुपासनस्य समविषमत्वं समर्थ्यते । तत्र ब्रह्माणीब्रह्मणोः सत्यलोकादिस्थानैक्यस्य आनन्दादिगुणतारतम्यस्य च सद्भावेन फलस्य समविषमत्वेऽप्युपासनस्य न तथात्वं युक्तं, विरोधादतो नोपासनसदृशं फलमिति प्राप्ते सिद्धान्तहेत्वभिधानाय प्रवृत्तं सूत्रं पठति—समान इति ॥ त्रिविक्रमत्वादिक्रियाणां लोकदृष्टक्रियाविलक्षणत्वेनात्याश्चर्यत्वात् कथं तदुपासनं ब्रह्माणी हास्यतीत्याशङ्काप्रदर्शनाय—एवं चेत्युक्तम् । तत्रैवंशब्देन पूर्वसूत्रोक्तं परामृश्यते । चोऽप्यर्थ इत्याशयेनैवं चेत्येतद्व्याचष्टे—अपूर्वत्वेऽपीति । अन्यत्रादृष्टत्वेऽपीत्यर्थः । त्रिविक्रमत्वादिक्रियाणामित्येतत् आदावन्वीयते । यद्यपितथापीत्यर्थेऽपिः । सूत्रे समाने चेत्यपि चशब्दान्वयः । स चावधारणार्थः । विषयसप्तमी चेयमित्यभिप्रेत्य प्रदर्शितशङ्कापरिहारकं समाने चेत्येतद्व्याचष्टे—समानानामेवेति । साधारणानां नित्यविश्रान्तिनित्यरमणादि

अपूर्वत्वेऽपि समानानामेवोपसंहारः। न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥ २० ॥

(२) सू—ॐ ॥ सम्बन्धादेवमन्यत्रापि ॥ ॐ ॥ २१ ॥

---

रूपाणां योग्यानामेव क्रियाणामित्यर्थः। उपसंहार इति सूत्रेऽनुवृत्तं पदम्। उपसंहृत्योपासनमित्यर्थः। एवशब्दव्यावृत्तिं दर्शयति—न त्विति। तुशब्दो योग्यत्वविशेषद्योतकः। त्रिविक्रमत्वेति। अत्र त्रित्वस्यान्वयः पादद्वारा विन्यासेषु, त्रिविक्रमरूपस्य पादत्रययुक्तत्वात्। त्रयो विक्रमा यस्य स तथोक्तः, तस्य भावस्तत्त्वं त्रित्वसङ्ख्योपेतपादविक्षेपरूपक्रियादीनामित्यर्थः। आदिशब्देन रिङ्गणरमणभक्षणसंहरणादिक्रिया गृह्यन्ते। कादाचित्कानामिति। कदाचिदभिव्यक्तानामित्यर्थः। ननु त्रिविक्रमत्वादीनामप्यन्तर्भावेन कदाचिद्विशेषरूपेण च उपास्यत्वान्निषेधायोग इत्यत आह—पृथक्त्वेनेति। सदेत्यपि प्रागध्याहार्यम्। तथा च सर्वदा त्रिविक्रमत्वादिविशेषाकारेणोपसंहार इत्यर्थः। ननु त्रिविक्रमत्वादिक्रियाणां सदा पृथक्त्वेनानुपासने सर्वथा तन्निषेधादनुपासनमेव प्राप्नोति प्रकारान्तरेणोपासनानुक्तेरित्याशङ्कानिरासाय—अभेदादित्युक्तं सूत्रे, तद्व्याचष्टे—नित्येति। किन्त्वर्थकस्तुशब्द आदौ संयोज्यः। तेन सौत्रचशब्दस्तुशब्दार्थकतयाऽपि व्याख्यातः। त्रिविक्रमत्वादीनामित्यत्राप्यन्वीयते। विक्रान्तिः क्रिया। आदिपदेन पूर्वोक्तमुच्यते। अन्तर्भावादिति। अन्तर्भाव्य उपसंहारः। नित्यमनन्तरूपेषु अनन्तक्रियास्सन्तीत्युपास्तौ त्रिविक्रमत्वादीनामपि सामान्यत उपास्यासु नित्यविक्रान्त्यादिरूपक्रियासु अन्तर्भूतत्वादिति भावः। सूत्रस्य ब्रह्माणीब्रह्मणोः फलवत् उपासनमपि समविषममेवेति उपस्कृतसाध्येनान्वयः॥

(२) ननु न विरिञ्चस्यापि सदा त्रिविक्रमत्वादिविशेषक्रियोपसंहारो युज्यते, तासामनित्यत्वेन ध्यानकालेऽभावादित्याशङ्कां परिहरत्सूत्रं पठति—सम्बन्धादिति॥ अत्र सम्बन्धादिति हेतूक्तया तत्साध्यं नित्यत्वमपि सूचितमिति भावेन सम्बन्ध्यन्तरप्रदर्शनपूर्वकं सम्बन्धादित्येतद्व्याचष्टे—परमात्मेति। सम्बन्धस्तादात्म्यं परमात्माभिन्नत्वेनेत्यर्थः। त्रिविक्रमत्वादीनामिति वर्तते। सूत्रे ऐक्यादित्यनुक्त्वा सम्बन्धादित्युक्तिः ऐक्येऽपि विशेषबलात्तत्सम्बन्धित्वव्यवहारो न

परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्व
प्युपसंहार्यत्वं युज्यते ।

( २ ) गुणास्त्रैविक्रमाद्यास्तु संहर्तव्या न संशयः ।
विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः ॥
इति बृहत्तन्त्रे ॥ २१ ॥

——:*:——

१३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ न वा विशेषात् ॥ ॐ ॥ २२ ॥

---

विरुद्ध इति सूचनायेति ज्ञापयितुं सम्बन्धित्वेनेत्युक्तम् । 'नित्यत्वात्' शक्त्यात्मना नित्यत्वात् । एवमन्यत्रेत्यस्य नित्यव्यक्तवदेव ततोऽन्यत्र कादाचित्कव्यक्तिषु त्रिविक्रमत्वादिष्वित्यर्थ इत्याशयेनाह—त्रिविक्रमत्वादिष्वियिति । त्रिविक्रमादिष्वितिपाठे भावप्रधानो निर्देशः । विषय सप्तमीयम् । न केवलं नित्यव्यक्तिषु किन्त्वन्यत्रापीति समुच्चयेऽपिशब्दः । एवमित्यस्यार्थमाह—उपसंहार्यत्वमिति । युज्यते इति । हिरण्यगर्भेण सदेति शेषः ॥

( २ ) अत्रार्थे स्मृतिं चाह—गुणा इति ॥ 'त्रैविक्रमाद्याः' त्रिविक्रमस्यायं त्रैविक्रमः त्रिविक्रमत्वादिक्रियात्मकधर्मा इत्यर्थः । आद्यशब्देन हननभक्षणादिकमुच्यते । तुरवधारणे, भिन्नक्रमः । पृथक्त्वेनेति विशेषद्योतको वा । 'संहर्तव्याः' उपसंहर्तव्याः 'अन्येषां' वाण्यादीनाम् । अत्र युक्तिमाह—स हीति । 'सः' विरिञ्चः । हिशब्दो हेतौ । सर्वेति । सर्वेभ्योऽधिकारिभ्यो गुणैरधिक इत्यर्थः । बृहत्तन्त्रे कथितमिति शेषः ॥ १२ ॥

॥ इति समानाधिकरणम् ॥

——*——

१३. अधिकरणम् ॥

( १ ) अत्राधिकरणे आत्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यत्वं समर्थ्यते । आत्मशब्दस्य सर्वगुणाभिधायकत्वेन विभ्रमकरत्वात् आत्मशब्देन अस्यैतावन्त एवोच्यन्त इति प्रातिस्विकनियमाभावेनोपासनाऽसम्भवाच्च न तदुक्तगुणाः सर्वोपास्या इति प्राप्ते सिद्धान्तयितुं सूत्रं पठति—न वेति । अत्र युक्तमेव सर्वेषामात्मशब्दोक्तगुणोपासनमिति साध्यमध्याहार्यमित्याशयेन तत्र हेतुत्वेन न वेत्यंशं व्याचष्टे—न

न वाऽऽत्मशब्देन सर्वगुणगृहीतिः। अधिकारिविशेषात्॥२२॥

(२) सू—ॐ ॥ दर्शयति च ॥ ॐ ॥ २३ ॥

'सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव' इति भाल्लवेयश्रुतिः ॥ २३ ॥

——:*:——

१४. अधिकरणम् ॥

(१) सू—ॐ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ ॐ ॥ २४ ॥

वेति। वाशब्दो व्यवस्थितविकल्पे। आत्मशब्देनेत्यनेन सूत्रे आत्मगृहीतिरिति पदानुवृत्तिस्सूचिता। तथा च आत्मपदेन सर्वेषां गुणानां शुभधर्माणां गृहीतिरभिधानं न वा सर्वान् प्रति, किन्तु ब्रह्मादीन् प्रत्येवेत्यर्थः। अस्य यत इति शेषेणाध्याहृतसाध्येनान्वयः। कुतो नेत्यतस्तत्र हेतुत्वेन विशेषादित्यंशं व्याचष्टे—अधिकारीति। आत्मशब्दस्य अधिकारिसामर्थ्यविशेषमपेक्ष्य तत्तद्योग्यगुणाभिधायकत्वादित्यर्थः ॥

(२) विशेषादिति युक्तिसिद्धार्थं श्रुत्याऽपि समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति—दर्शयति चेति ॥ न वेत्युक्तमर्थं श्रुतिरपि दर्शयतीत्यर्थः। न केवलं युक्तिरिति चार्थः। बह्वर्थकोऽप्यात्मशब्दः 'ब्रह्मादीनां' ब्रह्मब्रह्माण्यादीन् प्रति 'सर्वान्' स्वयोग्यान् बहून् 'गुणान्' भगवद्धर्मान् 'ब्रवीति' ध्यानकाले युगपत्प्रकाशयतीत्यर्थः। 'इतरेषां' देवगन्धर्वाणां मनुष्योत्तमानां च न बहुगुणान्, किन्त्वल्पानित्यर्थः। यथोक्तं तत्त्वप्रदीपे— सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मणः, ब्रह्मण्यादीनां शतं शतमूनान् क्रमादिति, न्यूनत्वाद्योग्यतायाः। अवरेषामल्पगुणानेवेति। अनेन यस्य यावन्तो गुणा आत्मशब्देन युगपत्प्रतीयन्ते तेन तावन्तो ध्यातव्या इति हेतोः व्युत्पत्तिवशेनात्मशब्देन जाता प्रतीतिः न ध्यानोपयोगिनीत्युक्तं भवति ॥ १३ ॥

॥ इति नवाधिकरणम् ॥

——*——

१४. अधिकरणम् ॥

(१) अत्राधिकरणे सम्भृत्यादिगुणस्य सर्वोपास्यत्वं नेत्युच्यते। मोक्षे स्वाधमभरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वात् फलानुसारेण सम्भृतिद्युव्याप्ती सर्वोपास्ये इति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्या

सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये नान्येषाम् । अत एव योग्यताविशेषात् ।

( २ ) देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः ।

चष्टे–सम्भृतीति ॥ अत्रापिशब्दो नञस्समाकर्षकः । उपसंहर्तव्ये इति शेष इत्याशयेन सम्भृतिद्युव्याप्त्यपीति साध्यांशमनूद्य तत्तात्पर्यमाह–सम्भृतीति । द्यावापृथिव्योर्भरणं सम्भृतिः, द्युत्या महाप्रकाशेन व्याप्तिः द्युव्याप्तिः कर्तरि षष्ठ्यौ । तथा च 'उक्षा स द्यावापृथिवी बिभर्ति' (ऋ. १०-३१-७.)'एष हि सर्वेषु लोकेषु भाति'(छा.४-१५-४.)इत्यादौ प्रतीतेःसम्भरणप्रकाशव्याप्ती देवादिभ्योऽन्यैर्मनुष्योत्तमैः 'नोपसंहर्तव्ये' उपसंहृत्योपास्ये न, किन्तु देवादीनामेवोपसंहृत्योपास्ये इत्यर्थः । सूत्रे सम्भृतिद्युव्याप्ती इति द्विवचनान्तं पदम्, अप्रगृह्यत्वं तु छान्दसमिति ज्ञापनायसम्भृतिद्युव्याप्ती अपीति प्रकृतिभावेन निर्देशः । अपिशब्दलब्धार्थो–नान्येषामिति । तत्त्वप्रदीपे तु 'भृतिव्याप्त्यादयो गुणाः' इति प्रमाणानुसारेण सूत्रे द्विवचनमविवक्षित्वा सम्भृतिद्युव्याप्त्यादयोऽपि गुणा देवानामुपसंहर्तव्याः, नानन्दादय एव । एवमपिशब्दात् वीर्यैश्वर्यादयोऽपि ग्राह्याः । द्वित्वमात्रव्यावृत्त्यर्थं किलाप्रगृह्य असूत्रयत् इत्यपेस्समुच्चयार्थत्वमुक्तम् । अनेन सूत्रे समाहारद्वन्द्व इति केषांचित्पक्षो निरस्तः । सूत्रे अतश्चेत्यन्वयः चशब्द एवार्थ इत्याशयेन हेत्वंशं व्याचष्टे–अत एवेति । देवादीनामेव तदुपास्तियोग्यता, नान्येषामित्यधिकारियोग्यतायां विशेषसद्भावादेवेत्यर्थः । योग्यतैवोपास्तिनियमप्रयोजिका न फलापेक्षेति द्योतयितुमेवशब्दः । न च प्रकाशाद्युपास्त्यभावे मुक्तौ सर्वेषां स्वस्वयोग्यप्रकाशः स्वावरभरणं च कथं लभ्यत इति वाच्यम् । स्वस्वयोग्यगुणयुक्तभगवद्रूपविषयस्मृतिरूपप्रतीतिविषयत्वेन तदविनाभूततत्प्रकाशादिनैव प्रकाशभरणयोः प्राप्त्युपपत्तेः । यथोक्तं न्यायविवरणे—गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते इति । अत एव 'उद्यद्भास्वत्समाभासः' 'युक्ताः प्रदीपवर्णाश्च' 'हरितोपलाभम्' 'हरिन्मणिनिभम्' 'ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानः' 'विधिशर्वपूर्वगीर्वाणविज्ञानदम्' 'अजेशासमिति प्रतिबोधयन्तम्' इति स्वस्वयोग्यतानुसारेण किञ्चित्प्रकाशविषयकतया ब्रह्माद्यवरदेवताभरणविषयतया च सर्वेऽपि ध्यानं कुर्वन्ति ॥

( २ ) ननु सम्भृत्यादिगुणोपास्तिर्देवानामेव योग्येति कुतः, अन्ये

आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत् ॥ इति ब्र ह्मतर्के ॥ २४ ॥

———:०:———

१५. अधिकरणम् ॥

( १ ) यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानां इतरा ऽन्येषामिति चेत्,

( २ ) न—

सू—ॐ ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ॐ ॥ २५ ॥

---

षामयोग्यतायामप्युपासने को विरोधः, फलसिद्धेरविशेषादित्यत आ ह—देवादीनामिति ॥ तुरवधारणे । देवादीनामेवेत्यन्वेति । भूतिः स म्भूतिः । व्याप्तिर्द्युव्याप्तिः । आदिपदाद्वीर्यादयोऽपि गृह्यन्ते । वेधादय इति केचित् । 'सर्वेषां' सम्पूर्णमोक्षयोग्यानां देवादिमनुष्योत्तमा न्तानां 'अन्यथा' अयोग्योपासने तदुपासनं उपासकस्यानर्थकृद्भवे दित्यर्थः । ब्रह्मतर्के च सूत्रकृदुक्तमुक्तमित्यन्वयः ॥ १४ ॥

॥ इति संभृत्यधिकरणम् ॥

———*———

१५. अधिकरणम् ॥

( १ ) अत्राधिकरणे सर्वविद्यातो गुणोपसंहारः कर्तव्य इति सम र्थ्यते । पूर्वपक्षयति—यस्यामिति । अत्रेत्थं योजना । न सर्वविद्यातो गुणोपसंहारः कर्तव्यः प्रयोजनाभावात् । न च स्वस्वयोग्यगुणोपास नाय स कार्यः । सार्वत्रिकगुणोपसंहारमन्तरेणापि तत्सम्भवात् । कथम्? यस्यां विद्यायां 'महागुणाः' बहुगुणा उच्यन्ते सा विद्या 'उत्तमानां' बहुगुणोपास्तियोग्यानामुपासनाय भवति । तत् साधन मिति यावत् । 'अन्येषां' अल्पगुणोपासनयोग्यानां 'इतरा' अल्पगु णप्रतिपादिका विद्या उपासनाय भवतीति ॥

( २ ) पूर्वपक्षं प्रतिषेधति—नेति ॥ सर्वविद्यातो गुणोपसंहारो न कर्तव्य इति न, किन्तु कर्तव्य एवेत्यर्थः । कुत इत्यतस्तत्र हेतुतया सू त्रं पठति—पुरुषेति । अत उपसंहार इत्यस्यानुवृत्त्या नञनुवृत्त्या च कर्तव्य एव सर्वविद्यातो गुणोपसंहार इति साध्यस्य लाभात्, अना म्नानाच्चेति चशब्दसम्बन्धेन तत्समुच्चयस्य सर्वगुणोपास्तियोग्यानाम धिकारिणां भावात्, सर्वगुणोपास्तेश्च सर्वोपसंहारं विनाऽयोगादिति

पुरुषसूक्तोक्तविद्यायामपि केषां चिद्गुणानामनाम्नानात् ।
( ३ ) सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ।
तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिः ॥
इति ब्रह्मतर्के ॥ २५ ॥

हेतोश्च सिद्धत्वात्, तथाऽपि कुतस्सर्वत उपसंहारः कर्तव्य इत्यतोऽनाम्नानादित्यनेनैव एकस्यां विद्यायां सर्वगुणानामनुक्तत्वादिति हेतुसाधकहेतोरपि सिद्धत्वात्, सोऽपि कुतः सिद्ध इत्यतः कैमुत्येन तत्साधनपरतया समग्रसूत्रं व्याचष्टे—पुरुषेति । अपिर्भिन्नक्रमः । तथा च अपि सर्वविद्योत्तमायामपि 'पुरुषविद्यायां पुरुषसूक्तोक्तविद्यायां' पुरुषसूक्तमित्युक्तविद्यायां स्वापेक्षितगुणानां मध्ये केषां चिदेव आम्नानात् पाठात् 'इतरेषां' तदन्येषां 'अनाम्नानात्' सुतरां विद्यान्तरे सर्वेषामनाम्नानस्य सिद्धत्वादत एवैकस्यां विद्यायां सर्वेषां 'अनाम्नानात्' अनुक्तेस्सिद्धत्वादित्यर्थः । अनेन केषां चिदाम्नानात् इतरेषां अनाम्नानाच्चेत्यपि समुच्चयः चशब्दार्थ इत्युक्तं भवति ॥

( ३ ) भवेदुपसंहारस्य कर्तव्यता, यदि स्यात् पुरुषसूक्तस्य सर्वविद्योत्तमत्वं, तत्रापि केषां चिद्गुणानामनुक्तत्वं च । तदेव कुत इत्यत आह—सर्वत इति ॥ 'पौरुषे सूक्ते' परमपुरुषप्रतिपादके पुरुषसूक्ते 'सर्वतः' सर्वत्र आदावन्ते च मध्ये चेत्यर्थः । 'सर्वतः' सर्वे गुणा इति वा । 'सर्वतः' सर्वविद्यातः आधिक्येनेति शेष इति वा । 'तत्रापि' पुरुषसूक्तेऽपि स्वापेक्षिताः सर्वेऽपि गुणा नोदीरिता इत्यन्वयः । मानुषापेक्षितज्ञानानन्दादिगुणानामकथनादिति भावः । तस्मादिति । एकस्यामपि स्वापेक्षितसर्वगुणावचनात् सर्वतः उपसंहृतिः कार्येत्यर्थः । ब्रह्मतर्के सूत्रकृदुक्तमुक्तं इत्यध्याहारेणान्वयः । सूत्रे सर्वेषामनाम्नानादित्यनुक्त्वा इतरेषामनाम्नानादित्युक्त्या च एकस्यामेव विद्यायां सर्वगुणानुक्तेः अस्तु चतुर्मुखस्य सर्वविद्यातो गुणोपसंहारः, अन्येषां महदल्पगुणाभिधायकविद्याभिरेवोपास्तिसम्भवात् उपसंहारो व्यर्थ इति चोद्यं निरस्तं भवति । सङ्ख्यासाम्यसम्भवेऽपि एकस्यामेव स्वापेक्षितगुणोक्तिनियमाभावात् ॥ १५ ॥

॥ इति पुरुषाधिकरणम् ॥

१६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ वेधाद्यर्थभेदात् ॥ ॐ ॥ २६ ॥

भिन्धि विद्ध्य शृणीहीति फलभेदेन सर्वशः ।
यत्यादीनां तेष्वयोगान्नाधिकारिकता भवेत् ॥
अयोग्योपासनादीयुरनर्थं चार्थनाशनम् ।

१६. अधिकरणम् ॥

( १ ) अत्राधिकरणे भेदनादिगुणानां सर्वोपास्यत्वं निरस्यते । सर्वसज्जनापेक्षितदुष्टजननिग्रहफलकत्वेन वेधादीनां सर्वोपास्यत्वान्न चतुर्गुणोपासनानियम इति प्राप्ते सिद्धान्तयत्सूत्रं पठति—वेधादीति ॥ अत्र वेधाद्यर्थभेदादित्येकं पदम् । वेधादीति भिन्नं चावर्तते । नेत्यस्ति । तथा च 'वेधादि' रक्षोघ्नसूक्ते

'ताभिर्विध्य हृदये यातुधानान्....
अग्ने त्वचं यातुधानस्य भिन्धि....

प्रपर्वाणि जातवेदश्शृणीहि' ( ऋ. १० - ८७ - ४, ५. ) इत्यादिनोक्तं दुर्जनवेधनभेदनहिंसनादिकं न सर्वोपास्यं, कुतः ? यतो न यत्याद्युपास्यं, तदपि कुतः ? 'वेधाद्यर्थभेदात्' वेधाद्यर्थस्य तद्विषयकोपासनफलस्य हिंसनस्य यत्यादियोग्यफलात् भेदात् विलक्षणत्वात् । अयोग्यफलस्य चानर्थकफलसाधनत्वादिति सूत्रार्थमभिप्रेत्याऽत्र स्मृतिं चाह—भिन्धीति ॥ 'शृणीहि' जहि । इतिशब्दानन्तरमुपासनेष्विति शेषः । तथा चेत्थं योजना—हे भगवन् दुष्टान् भिन्धि विद्ध्य शृणीहीत्येवंरूपेपूपासनेषु 'सर्वशः' सर्वेषां 'नाधिकारिकता' नाधिकारसाम्यं भवेत् । एतदुपासनं सर्वाधिकारिसमं न भवेदिति यावत् । कुतः ? यत्यादीनां 'तेषु' उपासनेषु 'अयोगात्' अयोग्यत्वात् । तदपि कस्मात् ? 'फलभेदेन' फलभेदात् एतदुपासनफलानां यत्यादियोग्यफलाद्विलक्षणत्वात् । नन्वयोग्यत्वेऽपि कुतो यत्यादीनां वेधाद्युपासनाभाव इत्यत आह—अयोग्येति । यतोऽयोग्योपासनादनर्थमर्थनाशनं च 'ईयुः' प्राप्नुयुरत इति । बृहत्तन्त्रे इति । सूत्रकारोक्तः कथित इति शेषः । इदं त्ववधेयम् । यत्यादीनां ध्यानात्प्राक्प्राणायामकरणकाले पापपुरुषशोषणदहनादिकमस्ति, न तु ध्यानकाले । तदा

इति बृहत्तन्त्रे ॥ २६ ॥

——:※:——

१७. अधिकरणम् ॥

( १ ) मुक्तस्योपासना कर्तव्या न वेति ।

---

तु ते स्वयोग्यगुणानेव ध्यायन्ति न तु भेदनादिकमिति ॥ २६ ॥

॥ इति वेधाधिकरणम् ॥

——※——

१७. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनस्य मुक्तावप्यनुवृत्तिः समर्थ्यते । तत्र विषयसंशयौ दर्शयति–मुक्तस्येति ॥ प्रकृतोपासनं विषयः । मुक्तेन क्रियते न वेति सन्देह इत्यर्थः । प्राप्तफलत्वं ‘जक्षन् क्रीडन्’ (छां.८-१२-३.) इति क्रियान्तरश्रुतिश्च सन्देहबीजमिति भावः । एवं मुक्तस्योपासना न कर्तव्येत्यनेन मुक्तेनोपासना क्रियत इति पूर्वपक्षस्य तथा मुक्तस्योपासना कर्तव्या न वेति समग्रवाक्ये कर्तव्या विहिता नेति विकल्पपरतया व्याख्यायमाने नोभावपि कल्पौ मुक्तौ विहितस्य वा अविहितस्य वा कर्मणः फलावश्यंभावात्फलप्राप्तिप्रसङ्गात् , तथा चापूर्णताप्रसक्तिः । न चेष्टापत्तिः, मुक्तस्य अपूर्णतारूपामुक्तस्य तदयोगात् । किञ्चाद्ये मुक्तस्य विधिबद्धत्वेन मुक्तेस्संसारसमानधर्मत्वापत्तिः । द्वितीये मुक्तस्याविधिबन्धत्वादेव करणानुपपत्तिरिति मुक्तस्येत्यस्मिन् व्याख्यायमाने च अनेन पूर्वपक्षयुक्तेश्च सूचनं कृतं भवति । सिद्धान्तदूषकयुक्तेरेव पूर्वपक्षसाधनत्वादिति ज्ञातव्यम् । तत्त्वप्रदीपे तु मुक्तस्योपासना न कर्तव्येत्यंशमेकपूर्वपक्षपरतया व्याख्याय तत्पूर्वपक्षे विध्यभावात्प्रयोजनाभावाच्चेति हेतुमभिधाय मोक्षार्थं ह्युपासनं तत्पर्यन्तं च विधेयम्, अतः कुतो मुक्तस्योपासनाप्राप्तिरिति तमुपपाद्य कर्तव्येत्यपरः पक्षः । मुक्तस्यापि परतन्त्रत्वात् । तदा विशेषभोगापेक्षयोपास्तिसम्भवादित्यत आहेति कर्तव्येत्यंशः पूर्वपक्षान्तरपरतया व्याख्यातः । तत्राद्यः पूर्वपक्षः तद्धेतुश्च टीकोक्तः । द्वितीयस्तु तन्मात्रोक्तः । तत्पक्षे न कर्तव्येति पूर्वपक्षनिरासो ‘हानौ तूपायनशब्दशेषत्वात्’ इत्यनेन सूचितोऽभ्युपगमेन कृतः । कर्तव्येति द्वितीयपूर्वपक्षनिरासस्तु ‘कुशाच्छन्द’ इत्यनेन सूचितो विधिबद्धत्वान्न क्रियते, किन्तु स्वेच्छयेत्यपाकृ

( २ ) अतो ब्रवीति ।

सू—ॐ ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ॐ ॥ २७ ॥

नियतस्वाध्यायानन्तरं स्वेच्छयाकुशाग्रहणस्तुत्युपगानवदेव मोक्षे उपासनादि ।

( ३ ) 'ब्रह्मविदाप्नोति परम्' ( तै.३-१०. ) इति मोक्षवाक्य

रेण कृतः । तस्मात्संसारोपाधिकमेवोपासनं न स्वाभाविकमिति तत्साधनाय भक्तिर्व्यर्थेति भावः ॥

( २ ) अथ सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रे मुक्तस्योपासना विहिता न वेति विकल्पितपक्षद्वये आ संसारहानेः विहितत्वात्प्रयोजनाय क्रियते । तद्धानौ मोक्षे तु स्वेच्छयेति तत्त्वप्रदीपदिशा 'हानौ तु' इत्यनेन आद्यपक्षोक्तदोषनिरासात् । द्वितीयपक्षोक्तदोषपरिहाराय 'कुशाच्छन्द' इत्याद्युक्तम् । तत्र कुशपदं तद्ग्रहणपरम् । आच्छन्दपदं च बुद्ध्या विवेकेन कुशग्रहणे तच्छब्दार्थोपासनादौ चान्वीयत इति भावेनार्थक्रमेण व्याख्याति—स्वेच्छयेति । स्वेच्छया कुशाग्रहणपूर्वकत्वं स्तुत्युपगानयोः कदेत्याकांक्षायां तद्योग्यं कालमाह—नियतेति । स्वाध्यायो वेदाध्ययनं स्वकाले विधिनियतब्रह्मयज्ञानन्तरमित्यर्थः । कुशस्य आग्रहणं सम्यग्ग्रहणं, स्तुतिः यजुरादिमन्त्रः, उपगानं साम । आच्छन्देन कुशाग्रहणेन सहिते तत्पूर्वके च ते स्तुत्युपगाने च ते तथोक्ते, ताभ्यां तदध्ययनं लक्ष्यते । तत्त्वप्रदीपे उपगानं साम्ना, स्तुतिस्तदन्यैर्यजुरादिभिरित्युक्तत्वेऽपि टीकायां स्तुत्युपगानपदाभ्यां तत्करणे एव गृहीते तयोरेवाध्ययनकर्मत्वात् । अत्र ब्रह्मयज्ञरूपमन्त्राध्ययनकाल एव कुशाग्रहणं विहितम् । ब्रह्मयज्ञानन्तरभाविमन्त्राध्ययने तु कुशाग्रहणं स्वेच्छयैवेति विवेकः । एवेत्यनेन एवार्थकतुशब्दो भिन्नक्रमेणात्र सम्बध्यत इत्याह । तत्त्वप्रदीपे तु तुशब्दो विशेषार्थक इत्याशयेन बन्धहानौ त्वित्यन्वयो दर्शितः। हानावित्यस्य विधिबन्धहानावित्यर्थमभिप्रेत्य तद्विशेष्यस्यागामिसूत्रादाकृष्टस्य 'साम्पराये' इत्यस्यार्थमाह—मोक्ष इति । आदिपदेन यजनादिकर्मपरिग्रहः । उपासनादीत्यनन्तरं अस्तीति क्रियत इति वा शेषः । तेनाप्येवार्थकतुशब्दस्यान्वयः ॥

( ३ ) ननु मोक्षे उपासनमस्ति चेत्तत्कुतः स्वेच्छयैवेत्यङ्गीकार्यं,

शेषत्वादितरेषाम्, तच्चोक्तम् । ' एतत्साम गायन्नास्ते '
( तै. ३-१०. ) इत्यादि ।

( ४ ) ब्रह्मतर्के च ।

मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।

विधित एव किं न स्यादित्याशङ्कापरिहारायोक्तं सूत्रे—उपायनेति ॥ तत्रायनेन ज्ञानेन उप ब्रह्मसमीपे अयनं गमनं तस्य शब्दः उपायनशब्दो मोक्षस्य ज्ञानसाध्यताबोधकं वाक्यमिति भावेन तमंशं व्याचष्टे-ब्रह्मेति । इति मोक्षेति । इत्येवंरूपं यन्मोक्षस्य ज्ञानसाध्यताभिधायकं वाक्यं तच्छेषत्वात् तदर्थत्वात् तद्वाक्यविहितापरोक्षज्ञानसाधनविधायकत्वादित्यर्थः । ' पुरुषविद्यायाम् ' इत्यतोऽस्य सम्बन्धिपदमनुवर्तनीयमित्याह—इतरेषामिति । ' श्रोतव्यो मन्तव्यः ' ( बृ.४-४-५. ) ' तद्विजिज्ञासस्व ' ( तै. ३ - १. ) इत्याद्युपासनविधीनामित्यर्थः । केचित्तु—इदमध्याहृतमित्याहुः । तत्त्वप्रदीपदिशा उपासनाशब्दशेषत्वादिति सूत्रपाठे उपासनाशब्दानां उपासनाविधीनां शब्दशेषत्वात् मोक्षवाक्यशेषत्वादित्यर्थः । अस्मिन् पक्षे उपासनेति व्यस्तं पदं समस्तं च । तत्र व्यस्तपदस्य कर्मोपलक्षकस्यार्थो भाष्यकृता उपासनादीत्यनेन दर्शितः, न तु पृथक्तच्छब्दव्याख्यानं, न वा भावबोधरीत्याऽयं शेषः । इतरेषामित्येतदपि श्रुतपदार्थकथनं, नानुवृत्तमिति ध्येयम् । भवेदियं चिन्ता, यदि मुक्तस्योपासनमेव स्यात्, तदेव कुत इत्यतस्सूत्रे तदुक्तमित्युक्तं, तद्व्याचष्टे—तच्चेति । अनेन सूत्रे तुशब्दश्चार्थोऽपि । स च तदित्यनेनापि सम्बध्यते । तथा च यदुपासनं श्रुतावुक्तं यत्तस्य स्वेच्छायत्तत्वं तच्च ब्रह्मतर्के उक्तं चेति सूत्रांशयोजना दर्शिता भवति । श्रुतिं पठति—एतदिति । आदिपदात् ' ऋचां त्वः पोषमास्ते ' (ऋ.१०-७१-११.) इत्यादि गृह्यते । इत्यादीति । इत्यादावित्यर्थः। 'एतत्' वक्ष्यमाणं 'हावु' (तै.३-१०-५.) इत्यादि साम गायन्नास्ते मुक्तचतुर्मुख इति तैत्तिरीयश्रुत्यर्थः । 'त्वः' कश्चिद्ब्रह्मा 'पुपुष्वान्' पुष्टस्सन् ऋचां 'पोषं'पुष्टिमुच्चारणं कुर्वन्नास्ते । 'त्वः' अन्यस्तु ब्रह्मा शक्करीषु ऋक्षु गायत्रं साम गायति । त्वस्तु ब्रह्मा ' जातविद्यां ' पौरुषेयविद्यां वदति । त्वस्तु ब्रह्मा ' यज्ञस्य ' विष्णोः 'मात्रां ' उ अंशमेव ' विमिमीते ' ध्यायतीति ऋङ्मन्त्रार्थः ॥

( ४ ) न केवलं श्रुतौ, किन्तु ब्रह्मतर्के चोपासनमुक्तमिति चशब्दा

नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते ॥ इति ॥

(५) कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ इति च भारते ॥ २७ ॥

(६) सू—ॐ ॥ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ ॐ ॥ २८ ॥

स्वेच्छयेत्यङ्गीकर्तव्यं मुक्तस्य तीर्णत्वात् । 'तीर्णो हि

---

र्थः । 'नियमानन्तरं' नियतस्वाध्यायानन्तरं 'विप्राः' द्विजन्मानः । यथेति शेषः । कुशाद्यैरित्याद्यशब्दात् प्राङ्मुखत्वादि गृह्यत इति तत्त्वप्रदीपोक्तिः । इति ब्रह्मतर्के इत्यन्वयः ॥

(५) किञ्च मुक्तानां यजनाद्यप्यस्ति, किमुतोपासनमिति भावेन चार्थकतुशब्दात्कर्मापि क्रियत इत्युक्तं सूत्रे । तद्विवृतं आदिपदेन भाष्यकृता । तत्रार्थे प्रमाणमाह—कृष्ण इति ॥ व्याख्यातमिदमंशाधिकरणे । भारते उक्तमित्यन्वयः । अनेन—अस्त्येव 'हानौ' बन्धहानिरूपायां मुक्तौ तदुपासनादि । न च विधिबद्धत्वेन संसारसमानधर्मत्वं मुक्तेः, यतः तत्रोपासनादि विधिं विना 'छन्देन तु' स्वेच्छयैवाङ्गीकृतम् । कुतो ? यतो मुक्तिबन्धहानिर्विधिबन्धहानिरूपा अतः । न चाविहितत्वान्न तत्करणानुपपत्तिः, अदर्शनादिति वाच्यम् । कुशाच्छन्दस्तुत्युपगानवदुपपत्तेः । यथा द्विजन्मनां स्वकाले विधिनियतस्वाध्यायानन्तरमपि संस्कारवशात्स्वेच्छया कुशाग्रहणपूर्वं स्तुत्युपगानपदोक्तमन्त्रसामाध्ययनं तद्वत् मुक्तानां संस्कारवशान्मोक्षेऽपि स्वेच्छयैवोपासनोपपत्तेः । न च मुक्तावुपासनमस्ति चेत्स्वेच्छयेति कुतः, वैधमेव किं न स्यादिति वाच्यम् । इतरेषां 'उपायनशब्दशेषत्वात्' अयनेन ज्ञानेनोपायनं ब्रह्मसामीप्यादिप्राप्तिः । तथा चोपासनाविधीनां 'ब्रह्मविदाप्नोति' (तै. २-१-१.) इति सामीप्यादिरूपमोक्षस्य ज्ञानसाध्यत्वाभिधायकमोक्षवाक्यशेषत्वादित्यर्थः । तथा च मोक्षसिद्ध्यर्थं प्रवृत्ता विधयस्तत्रापि कथं तां विदध्युरिति भावः । न च मुक्तस्योपासनादावेव मानाभाव इति वाच्यम् । यतस्तस्योपासनादि तस्येच्छाधीनत्वं च श्रुतौ भारते ब्रह्मतर्कवाक्ये चोक्तमिति सूत्रार्थ उक्तो भवति ॥

(६) ननु मुक्तस्योपासनं न स्वेच्छया, किन्तु मोक्षे तदातदा प्राप्तानिष्टपरिहारार्थमेव, कस्यापि निष्फलप्रवृत्तेरदर्शनात् इत्याशङ्कां परिहर्तुं सूत्रं—साम्पराय इति ॥ अत्र आच्छन्देनेत्यनुवृत्तपदस्यार्थमाह—स्वेच्छयेति । इतीति सावधारणम् । न त्वनिष्टपरिहारार्थमित्यवधारणार्थः । तदुपासादीति सम्बध्यते । साम्परायशब्दस्य तात्पर्यार्थं

तदा सर्वान् शोकान् हृदयस्य भवति' (बृ.६-३-२२.)
इति ह्यन्ये पठन्ति।
(७) वायुप्रोक्ते च—
स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः।
ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः॥
तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम्॥ इति॥ २८॥

---

माह—मुक्तस्येति। पूर्वोत्तरान्वयि तत्। साम्परायशब्दस्तु सम्यक्पररस्य आयः प्राप्तिः सम्परायः स एव साम्पराय इति व्युत्पत्त्या मोक्षार्थक इति पूर्वमेव मोक्ष इत्युक्तया व्याख्यातः। कुत इत्यतस्साम्पराये तर्तव्यानिष्टस्यैवाभावादिति सूत्र एव हेत्वभिधानात् तमनुपन्यस्य तस्यासिद्धिपरिहाराय तल्लब्धं हेतुमाह—मुक्तस्य तीर्णत्वादिति। तीर्णाशेषानिष्टत्वादित्यर्थः। तस्याप्यसिद्धिमाशङ्क्य तत्परिहारत्वेन तथा ह्यन्य इत्येतद्व्याचष्टे—तीर्णो हीति। 'तदा' मुक्तो सर्वान् शोकान् 'तीर्णः' अतिक्रान्तः पुरुषः 'अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः' इति छान्दोग्यभाष्योक्तेः सर्वहृदि स्थितेः हृदयं विष्णुः तस्य 'भवति' तत्सम्बन्धी भवति। तत्प्रतिबिम्बत्वेन तच्छेषभूतो भवतीत्यर्थः। सार्वकालिकस्यापि शेषभावस्य व्यक्त्यपेक्षयाऽत्र भवतीति निर्देशः। अत एव तत्त्वप्रदीपे हृदयस्यैव भवति स्वदृष्ट्याऽपीत्युक्तम्। 'हि' यस्मात् 'अन्ये' छन्दोगाः वाजसनेयिनश्च॥

(७) अत्र स्मृतिं चाह—वायुप्रोक्ते चेति॥ 'ये' जनाः परमात्मनो 'ज्ञानेन' परोक्षेण 'स्थितप्रज्ञत्वं' स्थिता प्रतिष्ठां प्राप्ता प्रज्ञा अपरोक्षज्ञानं येषां ते तथोक्तास्तेषां भावस्तत्त्वं तत्प्राप्ताः तत एव 'ब्रह्मलोकं' सत्यलोकं गताः तत्र चतुर्मुखोपदेशं प्राप्ताः अथ तेन सह 'परं' आत्मानं गताः बन्धमोक्षाख्यभागयोर्मध्ये तर्तव्यो भागः अंशो बन्धः तीर्णः तर्तव्यभागो यैस्ते तथोक्ताः ते सर्वेऽपि 'परं' परमात्मानं स्वेच्छया उपासत इत्यर्थः। प्रतीकालम्बनविवक्षया 'ब्रह्मलोकं गताः सर्वे' इत्युक्तिरिति केचित्। तत्रान्त्यपादः साध्याभिधायी, उपान्त्यः साधनाभिधायी, अन्ये तदुपपादकसमर्पका इति स्मृतेः प्रकृतोपयोगो द्रष्टव्यः। इतीति। इति वायुप्रोक्ते एतदेवोक्तमित्यर्थः॥ १७॥

॥ इति ह्यन्यधिकरणम्॥

१८. अधिकरणम् ॥

( १ ) कर्मापि कुर्वन्ति न वेत्यत आह—

सू—ॐ ॥ छन्दत उभयाविरोधात् ॥ ॐ ॥ २९ ॥

स्वेच्छया कुर्वन्ति न वा। बन्धप्रत्यवाययोरभावात् ॥२९॥

( २ ) सू—गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ॐ ॥ ३० ॥

बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम्। अन्यथा मोक्षत्वमेव न स्यात्।

---

१८. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुक्तानां कर्मणि नियमाभावः समर्थ्यते। प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिः। विषयसंशयौ दर्शयति—कर्मेति ॥ मुक्ता इति प्रकृतमस्ति। न केवलमुपासनमित्यपिशब्दार्थः। कर्मकरणशक्तावपीति वा। नियमेनेति शेषः। तथा च इति सन्देहे नियमेन कुर्वन्तीति पूर्वपक्षे प्राप्ते कर्म कुर्वन्ति न वेत्यनियमसिद्धान्तमाह सूत्रकार इत्यर्थः। सूत्रं पठति—छन्दत इति। सूत्रे हानावित्यनुवर्तते। तदिति च। तच्च कर्मकरणवाचीत्याशयेन छन्दत इत्यस्यार्थमाह—स्वेच्छयेति। स्वेच्छानुसारेणेत्यर्थः। छन्दत इत्यनेन लब्धं साध्यमाह—कुर्वन्ति न वेति। अनेन कर्मण्यनियमः सूचितः। कुत इत्यतस्तत्र हेतुत्वेनोभयाविरोधादित्येतद्व्याचष्टे—बन्धेति। अनेनोभयस्मिन् कर्मकरणाकरणयोः अविरोधात् विधिबन्धप्रत्यवायाख्यविरोधाभावादिति हेत्वर्थ उक्तो भवति ॥

( २ ) ननु मुक्तानां विधिबन्धप्रत्यवायाभाव एव कुत इत्यतः सूत्रं—गतेरिति ॥ अत्रोभयाविरोधादित्यस्यानुवृत्तिमभिप्रेत्य तत्पदं व्याचष्टे—बन्धेति। निमित्तसप्तमीयं, विधिबन्धप्रत्यवायाभावादित्यर्थः। सावधारणमेतत्। तेनास्य व्यापकतासिद्धिः। हिशब्दः खल्वित्यर्थे। गतेरित्यस्यार्थमाह—मोक्षस्येति। 'अर्थवत्त्वं' अर्थ इच्छाविषयतया तद्वत्त्वं पुरुषैरर्थ्यमानत्वमिति यावत्। 'अन्यथा' विधिबन्धप्रत्यवाययोर्भावे। अर्थवत्त्वमित्यस्य व्याख्या-मोक्षत्वम्। मोक्षेच्छावत्त्वमिति। मुचेः सनन्ताद्भावे घञ्, तत अर्शआद्यच्। मोक्षस्य तत्सम्बध्यते, किमु प्राप्यत्वमित्येवार्थः। न स्यादित्यनेन विरोध इत्यस्यार्थ उक्तो भवति। तथा चायं सूत्रार्थः—'हि' यस्मादुभयाविरोधादेव उभयस्मिन् कर्मकरणाकरणयोर्विधिबन्धप्रत्यवायाख्यविरोधाभावादेव 'ग

( ३ ) कदाचित्कर्मकुर्वन्ति कदाचिन्नैव कुर्वते ।
नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम् ॥

तेः' परमात्मगतिरूपमोक्षस्य 'अर्थवत्त्वं' पुरुषैरर्थ्यमानत्वम् । भावे घञन्तोऽयमर्थशब्दः अर्थ इच्छाविषयतयाऽस्यामस्तीत्यर्थवती तस्या भावोऽर्थवत्त्वम् । 'अन्यथा' गतावपि विधिबन्धप्रत्यवाययोर्भावे तस्या विधिबन्धप्रत्ययाख्यसंसारसमानधर्मवत्त्वे तद्वैलक्षण्याभावाद्विरोधः । तस्मान्मुक्तानां 'उभयथा' कर्मकरणेन तदकरणेन च स्थितिरिति ॥

( ३ ) ननु मुक्तानां कर्मण्यनियमश्चेदुपासनेऽपि तथा स्यादविशेषादित्याशङ्कां परिहर्तुं कर्मोपासनयोः अनियमनियमरूपोक्तार्थे स्मृतिमाह—कदाचिदिति ॥ मुक्ता इति शेषः । अनेन कर्मण्यनियम उक्तः । पूर्ववाद्युक्ताविशेषहेतोरसिद्धिं वक्तुमुपासननियमे हेतुमाह—नित्येति । नित्यं भगवद्विषयकं यदपरोक्षज्ञानं तत्स्वरूपत्वान्मुक्तानामित्यर्थः । संसारे भगवदपरोक्षज्ञानस्यामुक्तकर्तृकस्यान्तःकरणवृत्तिरूपत्वेऽपि मुक्तौ अन्तःकरणवृत्तिरूपत्वाभावेन तस्यात्मस्वरूपत्वमेवेति सिद्ध्यति । न च स्वरूपत्वे ज्ञानस्य सकर्तृकत्वानुपपत्तिरिति वाच्यम् । विशेषबलादुपपत्तेः । 'नित्यं' नियमेन ध्यायन्ति । उपासते नित्यं भगवद्दृष्टिकर्तृत्वे नित्यं भगवदुपास्तिकर्तृत्वं कुत इति चेत् दृष्टेरेवोपास्तिरूपत्वात् । यथोक्तं तत्त्वप्रदीपे—नित्यं भगवद्दृष्टिरूपत्वान्मुक्ता नित्यमुपासते । सभक्तिभगवद्दृष्टिरुपास्तिर्भवति । पूर्वमविरतनिरन्तरोपास्त्या हि भगवन्तमैक्षन्त पश्चादानन्दस्वरूपिणी सा स्वत एवानुवर्तत इति । अस्यार्थः—नित्यं भगवद्दृष्टिस्तत्स्वरूपत्वात्कर्तृत्वान्मुक्ता नित्यमुपासते । उपास्तिकर्तारो भवन्ति । ननु भगवद्दृष्टिकर्तृत्वे उपास्तिकर्तृत्वं कुत इत्यत आह—सभक्तीति । इदं च द्वेषिकर्तृकभगवद्दृष्टिव्यावृत्त्यर्थम् । ननु भगवद्दृष्टेरुपास्तिसाध्यत्वात्कथं उपास्तिरूपत्वमित्यत आह—पूर्वमिति । संसारे अन्तःकरणवृत्तिरूपावच्छिन्नोपास्त्या हि भगवन्तमैक्षन्त जडमनसा युक्ताः । पश्चात्संसृत्यन्तरं मुक्तावानन्दस्वरूपिण्युपास्तिः स्वत एवानुवर्तते । तथा चान्तःकरणवृत्तिरूपायाः दृष्टेः तादृशोपास्तिसाध्यत्वेऽपि न मुक्तकर्तृकभगवद्दृष्टेरुपास्तिसाध्यत्वं किं त्वमेवेति भवति । सोपास्तिरिति भाव इति ॥

(४) तीर्णकर्तव्यभागा ये प्राप्तानन्दाः परात्मनः ॥
प्रत्यवायस्य बन्धस्याप्यभावात्स्वेच्छया भवेत् ॥
इति ब्रह्माण्डे ॥ ३० ॥

(५) सू—ॐ ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ॐ ॥ ३१ ॥
उपपन्नश्चैवंभावः । प्राप्तत्वात्तल्लक्षणस्य फलस्य ।
(६) यथा लोके विध्यर्थत्वेन विष्णुक्रमणादिकं कृत्वा स

---

(४) विध्याद्यभावेऽप्यनिष्टनिवृत्त्यर्थं आनन्दप्राप्त्यर्थं वा कर्मणि नियमः किं न स्यादिति शङ्कायामाह—तीर्णेति ॥ व्याख्यातमेतत् । 'परमात्मनः' हरेः प्रसादात् ये प्राप्तानन्दाः तेषामिति शेषः । अपिश्चार्थः । यद्यपीत्याद्यर्थे च । भवेत् कर्मेति शेषः । प्रत्यवायस्येत्यादिनाऽर्थेन कदाचिदिति साध्यवाक्यं हेतूक्तिपूर्वं विवृतं भवति । न च 'सोमेनानन्दं जनयन्' इत्युक्तिविरोधः । कर्मभिरप्राप्तानन्दप्राप्तेरेवेह निषिद्धत्वात् । तत्र भोगेनानन्दवैचित्र्यकरणमात्रस्योक्तत्वात् । ब्रह्माण्डे पुराणे नियमानियमौ समर्थिताविति शेषः ॥

(५) ननु विध्याद्यभावो मुक्तानां कर्मानियमसम्भावकएव, न तूपपादकहेतुः, विध्यादिरहितेश्वरकर्तृकसृष्ट्यादिकर्मणि व्यभिचारादतस्तदुपपादकाभावादनुपपन्नोऽसौ कर्मानियम इत्याशङ्कां परिहर्तुं सूत्रं—उपपन्न इति ॥ अत्रोपपन्न इत्यस्य विशेष्यमाह—एवंभाव इति । मुक्तानामिति शेषः । छन्दत इति प्रकृतः । कदाचित्कर्म कुर्वन्ति न चेत्येवंस्थितिरित्यर्थः । उपपन्नश्चेत्यनेन न केवलं सम्भावितोऽयम्, किन्तूपपन्नश्चेति समुच्चयार्थकश्चशब्दः सूत्रेऽनुषञ्जनीय इत्युक्तं भवति । तल्लक्षणार्थोपलब्धेरिति हेतुपदस्य तस्य कर्मणः अर्थः फलं परम्परया मोक्षस्तस्योपलब्धेः प्राप्तेरिति, एवं तत् स्वप्राप्त्यनन्तरं स्वसाधनानुष्ठाननियमनिवारणं लक्षणमसाधारणधर्मो यस्यार्थस्य स तथोक्त इति विभागेनार्थमभिप्रेत्य तत्पदं व्याचष्टे—प्राप्तत्वादिति । तल्लक्षणस्येति । अत्रापि तत्फलस्य कर्मफलस्य मोक्षस्य तत् स्वप्राप्त्यनन्तरं स्वसाधनानुष्ठाननियमनिवारणं लक्षणमसाधारणधर्मो यस्य फलस्येति द्वेधा व्याख्या कार्या ॥

(६) लोकवदिति दृष्टान्तांशं विवृणोति—यथेति ॥ विध्यर्थत्वेनेति । यजमानस्य यागविधिपूर्तिलक्षणफलसाधनत्वेनेत्यर्थः । विष्णुक्रमणादिकमिति । विष्णुक्रमणं नाम विष्णुमुद्दिश्य क्रियमाणो यागपूर्वो

मात्तकर्मेच्छया करोति न करोति च ॥ ३१ ॥

१९. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अनियमस्सर्वेषामविरोधाच्छब्दानुमाना
भ्याम् ॥ ॐ ॥ ३२ ॥

प्राप्तज्ञानानामपि केषां चिन्मुक्तिप्राप्तिः केषां चिन्न, यथोपसंहारनियम इति न मन्तव्यम् । 'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः' इत्युपसंहारे विरोधादन्यत्राविरोधात् ।

ङ्गभूतः कर्मविशेषः । 'समाप्ते' पूर्ति गते 'कर्मणि' यागे 'इच्छया' स्वेच्छया करोति । यजमान इति शेषः । समाप्तकर्मेति बहुव्रीहिपाठे न शेषः कार्यः । अनेन मुक्ता न कर्मनियमवन्तः, विशेषहेत्वभावे सति प्राप्तफलत्वात् यागकर्तृवदित्यनुमानमुक्तं भवति ॥ १८ ॥

॥ इति छंदाधिकरणम् ॥

१९. अधिकरणम् ॥

( १ ) अत्रोपासनोत्पन्नब्रह्मज्ञानानां सर्वेषां मोक्षनैयत्यं साध्यते । सूत्रे नियमपूर्वपक्षनिषेधपूर्वकं अनियम इति साध्यांशं व्याचष्टे—प्राप्तेति ॥ 'प्राप्तज्ञानानां' उत्पन्नापरोक्षज्ञानानामपीत्यर्थः । न केवलम प्राप्तज्ञानानां मोक्षो नेत्यपिशब्दार्थः । यद्यपितथाऽपीत्यर्थे वा अपिः । सिद्धान्तवाक्येनास्यान्वयः । निर्धारणषष्ठीयम् । केषां चित् योग्यानां केषां चित् अयोग्यानाम् । पूर्ववादी नियमे दृष्टान्तमाह—यथेति । उपासकेषु केषां चिदेव सर्वगुणोपसंहारो नायोग्यानामित्युपसंहारे यथा पुरुषनियमस्तथा मुक्तावपीत्यर्थः । इतिशब्दो नेत्यनेनापि सम्बध्यते । नेति । नियम इति न मन्तव्यमित्यनन्तरं किन्तु सर्वेषामपि मुक्तिरिति शेषः । अनेन सूत्रे तुशब्दानुवृत्तिस्तस्याप्यर्थत्वं मुक्तिरिति शेषश्च सूचितः । अत्र हेतुः—अविरोधादिति । तद्व्याचष्टे—सर्वे इति । इतीति । इति श्रुत्योपसंहारे अनियमनिषेधादित्यर्थः । 'अन्यत्र' सर्वेषां मोक्षे 'अविरोधात्' निषेधाभावादित्यर्थः । 'हि' यस्मात् वेदोक्ताः सर्वे गुणाः 'अन्यैः' ब्रह्मेतरैर्देवैर्नोपास्याः, किमु मनुष्यैर्नेति, तस्मादुक्तैर्वैयर्थ्यायोगाद्ब्रह्मणैवोपास्या इति श्रुत्यर्थः ॥

(२) 'न कश्चिद्ब्रह्मवित्सृतिमनुभवति मुक्तो ह्येव भवति त स्मादाहुः सृतिहेति' इति कौण्डिन्यश्रुतेश्च ॥ यथा के षां चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ॥ ३२ ॥

---*---

२०. अधिकरणम् ॥

(१) सू—ॐ ॥ यावदधिकारमवस्थितिराधिकारिकाणा म् ॥ ॐ ॥ ३३ ॥

---

(२) नन्वनियमे निषेधाभावेऽपि साधकाभावान्नियम एवेत्यतः प्राप्तं शब्दानुमानाभ्यामित्यंशं व्याचष्टे—नेति ॥ 'कश्चित्' कोऽपि 'ब्र ह्मवित्' ब्रह्मापरोक्षज्ञानी 'सृतिं' संसारं, सदेति शेषः। अत्र हेतुः— मुक्तो हीति। 'हि' यस्मात्कदाचित्सृतेः मुक्तो भवति तस्मादित्य र्थः। हेत्वन्तरमाह—तस्मादिति। सदा सृत्यनुभवाभावादेवंनं ज्ञानि जीवं 'सृतिहा' सृतित्यागीत्याहुरित्यर्थः। यद्वा—सृतिनिवर्तकज्ञान विषयत्वादेनं परमात्मानं 'सृतिहा' सृतिघ्न इत्याहुरित्यर्थः। श्रौतेति शब्दस्य इत्याहुर्वृद्धा इत्यन्वयः। श्रुतेश्चेति। न केवलमविरोधादिति चार्थः। अस्यानियम इत्यनेनान्वयः। केषां चिदिति। ब्रह्मज्ञानिनां म ध्ये केषां चिदित्यर्थः। अन्येषामिति। सम्प्रतिपन्नेभ्योऽन्येषां विप्रतिप न्नानामित्यर्थः। इत्यनुमानादिति। इतिवाक्यस्मारितव्याप्तिमल्लिङ्गादि त्यर्थः॥ प्रयोगस्तु—विप्रतिपन्ना ज्ञानिनो नियतमोक्षाः, ज्ञानित्वात् स म्प्रतिपन्नवदिति। श्रुतिसमुच्चये चशब्दः। अनेन—सूत्रे साम्पराय इत्यनुवर्तते, तु रिति च। मुक्तिरिति शेषः। तथा च यथा सर्वगुणोप संहारे पुरुषनियमस्तथा ब्रह्मज्ञानिनां मध्ये केषां चिन्मुक्तिः केषां चि न्नेति साम्पराये मोक्षे 'नियमः' पुरुषनियमो नास्ति, किन्तु प्राप्तज्ञाना नामपि सर्वेषामस्ति मुक्तिः। कुतः? 'अविरोधात्' तन्निषेधाभावात् शा ब्दानुमानाभ्यां साधकाभ्यां च तत्सिद्धेरिति सूत्रार्थ उक्तो भवति॥१९॥

॥ इति अनियमाधिकरणम् ॥

---*---

२०. अधिकरणम् ॥

(१) अत्राधिकरणे उपासनेऽधिकारनियमः समर्थ्यते। नोपासित मन्तोऽधिकारनियमवन्तः मानाभावादिति प्राप्ते सिद्धान्तयत्सूत्रमुप न्यस्य व्याचष्टे—यावदिति ॥ यथायथेत्यनेन यावदधिकारमित्यव्य

यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो वि
शिष्यते 'मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणा
मृषिभ्यो देवानां देवेभ्य इन्द्रस्य इन्द्राद्रुद्रस्य रुद्राद्ब्र
ह्मण एष ह्येव शतानन्द इति' चतुर्वेदशिखायाम्।

( २ ) अध्यात्मे च—

ज्ञानं चोपासनं चैव मुक्तावानन्द एव च।

यं अधिकारशब्दितयोग्यतानुसारेणैवेति व्याख्यातं भवति। एवमिति। तथा तथैव, न तु श्रवणादिरूपस्वप्रयत्नानुसारेणेत्यर्थः। 'विशिष्यते' उत्तरोत्तरमतिशीयते तारतम्येन मुक्तो वर्तते इति यावत्। अनेनाव स्थितिरिति पदं व्याख्यातम्। सूत्रे साम्पराय इत्यस्य गताविव्यस्य वा अनुवृत्तिमभिप्रेत्य तदर्थमाह—मुक्ताविति। आनन्द इति अवस्था प्रकारीभूततारतम्याश्रयकथनम्। अनेन 'आधिकारिकाणां' अधिकारा नुसारेणैव अनुष्ठानशीलानां परमेश्वरदत्ताधिकारे वर्तमानानां ब्रह्मादी नां मुक्तावस्थितिः आनन्दादिगुणतारतम्येन अवस्थानं यदस्ति तत् 'यावदधिकारं' उपासनाधिकारनियमानुसारेणैव भवति न तूपासना दिप्रयत्नानुसारेणेति समग्रसूत्रं हेतुसाध्ययोः व्याप्त्युपपादकतया व्याख्यातं भवति। अनेनास्त्येवाधिकारिकाणां उपासनाधिकारनिय मः। कुतो? मुक्तावानन्दतारतम्यसद्भावादित्यनुमानं सूचितम्। सूत्रे तारतम्यस्यावधिनिरूप्यत्वेऽपि तत्स्वरूपत्वज्ञापनायावस्थितिपर्यन्त धावनम्। अन्यथा तारतम्यमित्येवब्रूयात्। ननु मुक्तावानन्दतारतम्य मेव कुतः येनोपासनाधिकारनियम इत्यत आह—मनुष्येभ्य इति। मनुष्योत्तमेभ्य इत्यर्थः। न चास्य 'अथात आनन्दस्य मीमांसा' ( तै. २-८. ) इत्यादिश्रुतिविरोधः। चक्रवर्तिपित्रादीनां अनुक्तेरिति वाच्यम्। संक्षेपरूपस्यास्य विस्तराविरोधित्वात्। अत्र गन्धर्वपदं देवमनुष्योभयपरम्। ऋषिग्रहणेनाजानजा अपि परिगृहीताः। 'दे वानां' इन्द्रावरतात्त्विकदेवानाम्। षष्ठ्यन्तपदानां श्रुतिगतेन पूर्ववा क्येन आनन्दो विशिष्यत इत्येवंरूपेणान्वयः। अत एव प्राक् स्ववाक्ये विशिष्यत इत्युक्तं, न तु रुद्राच्छतानन्दस्येति क्वचिदुच्यते। ब्रह्मण इति कथमित्यत आह—एष इति। हिशब्दः प्रसिद्धौ। चतुर्वेदशिखा यामित्यस्य इत्युक्तमिति शेषेण विशिष्यत इत्यनेनान्वयः॥

( २ ) ननु मुक्तावानन्दतारतम्यं उपासनादिरूपप्रयत्नतारतम्येनैव

यथाऽधिकारं देवानां भवत्येवोत्तरोत्तरम् ॥ इति ॥ ३३ ॥

( ३ ) सू—ॐ ॥ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ॐ ॥ ३४ ॥

न चासमत्वेन विरोधो भवति । ब्रह्मधीत्वाद्दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च ।

सम्भवत्यतोऽप्रयोजको हेतुरित्यत आह—अध्यात्मे चेति ॥ चशब्दः परस्परसमुच्चये । 'देवानां' मुक्तियोग्यानां 'यथाधिकारं' अधिकारानुसारेणैव उपासनं यथोपासनमेव ज्ञानं यथाज्ञानमेव मुक्तावानन्द इत्येते गुणाः उत्तरोत्तरं परस्परसापेक्षा भवन्तीत्यर्थः । अध्यात्मे चेत्यस्यापि पूर्ववदन्वयः ॥

( ३ ) ननु मुक्तावानन्दतारतम्यमेव नोपपद्यते असमत्वे मुक्तानां परस्परविरोधप्राप्तेः, लोके तथा दर्शनात् । तारतम्यश्रुतयस्तु संसारविषया इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—अक्षरधियामिति ॥ असमत्वेन निमित्तेन, अनेन तुशब्दो विरोधनिमित्तसूचकतया व्याख्यातः । विरोधः परस्परं वध्यघातकभावादिः । विरोधप्रयोजकासमत्वस्य सत्त्वात् कथं मुक्तानां विरोधो न भवतीत्यतः तत्र सामान्यादित्यस्य हेतुत्वमभिप्रेत्य सामान्यशब्दितसाम्यप्रतियोगिनं दर्शयति—दोषाभावेति । सूत्रे दोषाभावादित्येव वक्तव्ये साम्यादित्यधिकोक्तिबलात्सर्वेषामिति लभ्यते । साम्यशब्दार्थः समस्तश इति सुधोक्तेः । तथा च दोषाभावसाम्यादित्यस्यासङ्कुचितसर्वेषां मुक्तानां विषयलम्पटत्वमात्सर्यादिदोषाभावादित्यर्थः । विषयलम्पटत्वं विषयरागः, मात्सर्यमप्रीतिः 'अप्रीतिर्मद्वशो नायमिति मत्सर ईरितः' इति भागवततात्पर्योक्तेः । अप्रीतिश्चित्ततोदः 'न मद्वशोऽसाविति चित्ततोदो मात्सर्यमार्याः प्रवदन्ति' इति सङ्ग्रहरामायणोक्तेः । ननु मुक्तानां दोषाभाव एव कुतः इत्यतः तत्राक्षरधियामिति हेतुगर्भविशेषणेन सूचितं हेतुमाह—ब्रह्मधीत्वादिति । मुक्तानामिति शेषः । ब्रह्मधीत्वात् दोषाभावसाम्यादिति हेतुहेतुमद्भावेनान्वयः । देशकालगुणापरिच्छेदवाचिना ब्रह्मशब्देन अक्षरशब्दो व्याख्यातः । तदेतत्सर्वमक्षयगुणगणधाम्नि परमानन्दरूपे परमैश्वर्यरूपे यथेष्टानन्दभोजके भगवति स्थितधियां कुतोऽसमत्वेन विरोधः । रागद्वेषादिदोषाभावसाम्याच्च । अन्यथा ब्रह्मदर्शनमेव न स्यात् । रागमत्सरादिव्यपोहेन बहुजन्मसु निर

(४) औपसद्वच्छिष्यवत् । उक्तं च तुरश्रुतौ—
नानाविधा जीवसङ्घा विमुक्तौ
न चैव तेषां ब्रह्मधियां विरोधः ।
दोषाभावाद्गुरुशिष्यादिभावात्

न्तरोपासकानां हि तद्भवतीति तत्त्वप्रदीपेऽभिहितम् । अत्र साम्याच्चेति चशब्दस्योत्तरत्र तद्भावहेतुनाऽन्वयः। असमत्वनिमित्तविरोधाभावे दोषाभावाख्यहेतुमभिधाय हेत्वन्तरप्रतिपादनाय तद्भावादिति सूत्रखण्डः प्रवृत्तः । तं व्याचष्टे—उत्तमेभ्य इति । मात्सर्यादिविषयतया प्रसञ्जितेभ्यः उत्तमेभ्यः 'अन्येषां' अवराणां ज्ञानादिरूपोपकारस्य 'भावात्' सद्भावादित्यर्थः । यथोक्तं तत्त्वप्रदीपे, यैश्च मत्सराद्विरोध आशङ्क्यते तेभ्य एव परेषां ज्ञानादिगुणभावात्तत्रोत्कर्षो हर्षमाधत्त इति । अनेन सूत्रे तेभ्यः तेषां तस्येति तन्त्रावृत्तिर्दर्शिता भवति । चशब्दो हेतुसमुच्चये । अनेन सौत्रतुशब्दो भिन्नक्रमेण चशब्दार्थतयाऽपि व्याख्यातः ॥

(४) ननु विरोधिष्वसाम्यं विषयलम्पटत्वादि च दृश्यते, तत्कथं निश्चिनुमो दोषनिबन्धन एव विरोधो, न त्वसाम्यनिमित्त इत्यतस्तदुत्तरत्वेनौपसदवदित्येतद्व्याचष्टे—औपसदवदिति ॥ उप ब्रह्मसमीपं सादयति, गमयत्येनमित्युपसद्गुरुः तस्यायमौपसदः तेन शिक्षणीयः शिष्यः । (उपसीदतीत्युपसदः स एव औपसदः स्वार्थिकोऽण्प्रत्ययः । तथा च शिष्य इत्यर्थलाभ इति भावः) सच्छिष्यवदिति भाष्यपाठस्तु शिष्यवदिति चायुक्तमिति सुधानुवादविरोधादनादरणीयः । वस्तुतस्तु शिष्यवदित्यस्य तत्त्वप्रदीपानुसारात् सच्छिष्यवदित्यर्थः । न च सूत्रे तदर्थालाभः । आङ्प्रश्लेषेण तल्लाभात् । तथा च दोषासमत्वयोः क्वचिद्विरोधिषु समावेशेऽपि दोषाणामेव विरोधप्रयोजकत्वनिश्चयो युज्यते । असमयोरपि गुरुशिष्ययोर्दोषाभावेन विरोधाभावदर्शनात् । अन्यथा तत्र व्यभिचारापत्तेरिति भावः । स्वोक्तार्थे श्रुतिं चाह सूत्रकृत्—तदुक्तमिति ॥ तच्चार्थतुशब्दान्वयेन व्याचष्टे—उक्तं चेति । 'देवसंघाः' मुक्तियोग्यसमुदायाः । जीवसंघा इति क्वचित्पाठः । 'विमुक्तौ' मोक्षे । 'नानाविधाः' तारतम्योपेताः गणशस्सन्तीत्यर्थः । 'तेषां' मुक्तानां न विरोधः । कुतो? दोषाभावात् । अत्र हे

लोकेऽपि नासौ किमु तेषां विमुक्तेः ॥ इति ॥ ३४ ॥

---*---

२१. अधिकरणम् ॥

( १ ) सू—ॐ ॥ इयदामननात् ॥ ॐ ॥ ३५ ॥

नामाद्यारभ्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात्किंचिद्भूय उक्तम् । तथाऽपि पूर्ववत्स्यादिति न वाच्यम् ।

---

तुः—ब्रह्मधियामिति । विरोधाभावे हेत्वन्तरमाह—गुरुशिष्यादीति । आदिशब्देन स्वामिभृत्यभावो गृह्यते । इदमर्थं कैमुत्येनाप्याह—लोक इति । 'तेषां' ब्रह्मधियां 'लोके' संसारेऽपि । 'असौ' विरोधो न, कुतो? दोषाभावाद्गुरुशिष्यादिभावाच्च । 'किमु विमुक्तेः' अनन्तरमिति शेषः ॥ २० ॥

इति यावदधिकरणम् ॥

---*---

२१. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनाधिकारिणां प्राणावसानत्वं समर्थ्यते । सूत्रं पठति—इयदिति ॥ तथाऽपि पूर्ववत्स्यादित्यनेन द्वितीयसूत्रसूचितपूर्वपक्षं प्रदर्शयिष्यन्पूर्वपक्षे बाधकमाशङ्कते—नामादीति । यद्यपि छन्दोगश्रुताविति वाक्यं प्रागध्याहार्यम् । नामादीत्यादिपदेन नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशा गृह्यन्ते । नामादिशब्दाश्च उषास्वाहापर्जन्यमित्राग्निवरुणविधुप्रवहानिरुद्धाहङ्कारिकप्राणेन्द्रोमारुद्रवाणीपराः । 'प्राणान्तं' मुख्यवायुपर्यन्तं 'उत्तरोत्तरोत्तमत्वं' पूर्वपूर्वापेक्षयोत्तरोत्तरमाधिक्यमुक्तमित्यर्थः । 'प्राणात्' मुख्यप्राणात् 'किंचित्' वस्त्विति शेषः । 'भूयः' अधिकं नोक्तमित्यन्वयः । तथा च प्राणः स्वोत्तमाधिकारियुक्तः अधिकारित्वात् नामाधिकारिवदिति पूर्वपक्षसाधकानुमानेऽनुक्तिः बाधिकेति भावः । बाधकं परिहरन् द्वितीयसूत्रदर्शितपूर्वपक्षमाह—तथाऽपीति । पूर्ववदिति । श्रुतौ पूर्वगृहीतनामादिवदित्यर्थः । स्यादिति । प्राणादधिकोऽधिकारी साध्यः स्यादित्यर्थः । अधिकारित्वाद्धेतोरिति शेषः । अनुक्तिस्तु प्रमाणदुर्बलत्वान्न बाधिकेति भावः । सिद्धान्तय

( २ ) 'प्राणो वाव सर्वेभ्यो भूयान्न हि प्राणाद्भूयान्प्राणो ह्येव भूयांस्तस्माद्भूयान्नाम' इति कौण्ठरव्यश्रुतेः ॥ ३५ ॥

( ३ ) सू—ॐ ॥ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॥ ॐ ॥३६॥ यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न, प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावे न प्रमाणम् । दृश्यते चान्यत्रोत्तमत्वम् ॥ ३६ ॥

---

ति—नेति । न वाच्यमित्यनन्तरं किन्तु अधिकारिणामपि 'इयत्' इयत्त्वमेव प्राणावधित्वमेवेति भावप्रधानं सौत्रं प्रतिज्ञावाक्यं संयोज्यम्। अधिकारिणां प्राणावधित्वमेवेति तदर्थः ॥

( २ ) कुत इत्यतः प्रवृत्तं आमननादिति हेत्वंशं व्याचष्टे—प्राण इति। वावेत्यवधारणे । 'हि' यस्मात्प्राणात् 'भूयान्' अधिकः कोऽपि नास्ति तस्मात्प्राण एव सर्वेभ्यो भूयान्, प्राण एव भूयानिति निगमनम्। यस्मात्प्राणो भूयानधिकः तस्मात्प्राणो लोके 'भूयान्नाम' भूयश्शब्दवाच्यतया प्रसिद्ध इत्यर्थः ॥

( ३ ) उक्तमाक्षिप्य समाधातुं सूत्रं—अन्तरेति । अत्राक्षेपांशं व्याचष्टे—यथेति । यथा 'भूतग्रामे' प्राणिसमूहे नामादौ 'उत्तमो' विशिष्टोऽस्त्येव, तथा प्राणादप्युत्तमो विद्यत इति साध्यत इत्यर्थः । ननु परमात्मनः श्रियश्चोत्तमत्वाङ्गीकारेण सिद्धसाधनमित्यत उक्तम्—अन्तरेति सौत्रं पदं व्याचष्टे—परमात्मानमिति । श्रियोऽप्युपलक्षकमेतत् । अनेन सूत्रे अक्षरमिति पदानुषङ्गस्सूचितः । 'अन्तरा' विना । नञाकर्षेण परिहारांशं व्याचष्टे—नेति । नानुमानेन प्राणादप्युत्तमः साध्य इत्यर्थः । कुतो नेत्यतस्तत्र हेतुत्वेन तदुक्तमित्यंशं व्याचष्टे—प्राणादिति । 'प्रमाणम्' 'प्राणो वाव सर्वेभ्यो भूयान्' इति श्रुतिरूपम्। उक्तमित्यनन्तरं यत इति शेषः । तथा चाधिकारित्वादित्यनुमानस्यागमबाध इति भावः । ननु नास्मदनुमानस्य बाधः, प्राणादुत्तमाभावे नामादेरप्युत्तमो न स्यादधिकारित्वाविशेषादिति अनुकूलतर्कसाहाय्येन इतरानुमानापेक्षया प्रबलत्वादित्याशङ्क्य आकृष्टनञावृत्त्या अन्यत्रेत्यध्याहारेण च परिहरति-अन्यत्रेति । नामादावुत्तमाभाव इत्यर्थः। नन्वभाव इव भावेऽपि न प्रमाणमस्तीत्यतः तदुत्तरत्वेन दृश्यत इति पदाध्याहारेण तदित्येतद्योजयति—दृश्यते चेति । 'अन्यत्र' वागादौ

( ४ ) मू — ॐ ॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ॐ ॥ ३७ ॥
प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चे
न्न, श्रुत्युपदिष्टवदुपपत्तेः । अन्येभ्यः प्राणस्योत्तमत्वं
तस्मात्परमात्मना ह्युपदिष्टम् ॥ ३७ ॥

—※—

नामाद्युत्तमत्वं 'दृश्यते' उच्यते छान्दोग्य इति शेषः । न केवलमन्य त्रोत्तमाभावो न दृश्यते, किन्तूत्तमसद्भावो दृश्यते प्रमीयते चेति चश ब्दार्थः । तथा च प्रतितर्कस्य प्रमाणबाध इति भावः । अनेन—'तत्' तत्र प्राणादुत्तमाभावे तच्छ्रुतिरूपं प्रमाणमुक्तम् । भूतग्रामे तु नोत्त माभावे प्रमाणम्, प्रत्युत तत्सद्भाव एव दृश्यत इति सूत्रखण्डार्थ उ क्तो भवति ॥

( ४ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे-अन्यथेति ॥ अ त्रान्यथाशब्दार्थमाह-प्राणस्येति । सर्वोत्तमत्वे इत्युपलक्षणम् । प्राणादु त्तमाधिकार्यभावे 'प्राणो चात्र सर्वेभ्यः' (कौण्ठरव्य. ) इति श्रुतिस्थ स र्वशब्दस्य निरुपचरित सर्वार्थत्वाङ्गीकारे चेत्यपि अन्यथाशब्दार्थो ज्ञात व्यः । सूत्रे अक्षरेणेत्यनुषक्तपदस्यार्थमाह-परमात्मनेति । भेदेति । प्राण स्येति वर्तते । सर्वोत्तमद्वयायोगादिति भावः । एवं 'अन्यथा' श्रुतिस्थ सर्वशब्दस्य सङ्कुचितार्थत्वे परमात्मानं च श्रियं च विनेतिवत्कतिप याधिकारिणश्च विनेत्यपि वक्तुं शक्यत्वाद्विवक्षितसिद्ध्यनुपपत्तिरि ति सूत्रखण्डव्यावृत्त्यन्तरमपि भाष्याभिप्रेतं द्रष्टव्यम् । परिहारांशं व्या चष्टे—नेति । नोक्तदोषप्राप्तिरित्यर्थः । कुत इत्यतः कर्मणि घञन्तत्वमा श्रित्य यत उपदेशवदुपपद्यत इति हेत्वंशं व्याचष्टे—श्रुतीति । छन्दो गश्रुत्युक्तप्रकारेणैव श्रुत्यन्तरस्थसर्वशब्दस्य सङ्कोचोपपत्तेः । अत ए व प्राणपरमयोः भेदोपपत्तेरित्यर्थः । तथा च द्वितीयपक्ष एवाङ्गीक्रिय ते । संकोचनियामकं तु श्रुतिवाक्यमेवेति भावः । किं तच्छ्रुत्युपदिष्ट मित्यत आह—अन्येभ्य इति । स्वव्यतिरिक्तसर्वाधिकारिभ्य इत्यर्थः । 'तस्मात्' प्राणात् । हिः प्रसिद्धौ हेतौ वा । 'उपदिष्टं' उक्तं छन्दोग श्रुतौ । तस्मात् विष्णुव्यतिरिक्तसर्वार्थत्वं श्रुतेरिति वाक्यशेषः ॥२१॥

॥ इति इयदामननाधिकरणम् ॥

—:※:—

२२. अधिकरणम् ॥

( १ ) नेति चेन्न—

सू—ॐ ॥ व्यतिहारो विंशिषन्ति हीतरवत् ॥ ॐ ॥ ३८ ॥

उक्तं प्राणात्परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण ।

( २ ) 'एष तु वा अतिवदति' ( छा. ७-१६. ) इति विंशिषन्ति हि ।

२२. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनाधिकारिणः प्राणात्परमेश्वरस्योत्तमत्वं प्रसाध्यते । पूर्वपक्षयति—नेति ॥ छन्दोगश्रुतौ प्राणस्यैव सर्वोत्तमत्वमुक्तम्, न तु प्राणात्परमात्मनः । न च वाच्यं सत्यपदोदितस्य विष्णोः प्राणादाधिक्यमुक्तमिति । कुतो? यतो भूतग्रामवत्प्रश्नप्रतिवचनरूपप्रकरणभेदकल्पकं न, यतश्च 'एष तु वा अतिवदति । यः सत्येनातिवदति' इत्युक्तम्, सत्यत्वं प्राणविशेषणमेव न विष्णुविशेषणं, अत इत्यर्थः। पूर्वपक्षं प्रतिषेधति-नेति । प्रश्नादिरूपप्रकरणभेदकल्पकाभावात् सत्यत्वस्य प्राणविशेषणतया विष्णुविशेषणत्वाभावात् न प्राणाद्विष्णोरुत्तमत्वमुक्तमित्यर्थः । कुतो नेत्यतः सूत्रं पठित्वा व्याचष्टे—व्यतिहार इति । यतश्छान्दोग्ये 'पूर्वोक्ताध्याहारेण' पूर्वेषु नामादिप्रकरणेषु 'अस्ति भगवो नाम्नो वाव भूयोऽस्तीति, तन्मे भगवान् ब्रवीत्विति' ( छा. ७-१-५. ) 'वाग्वाव नाम्नो भूयसी' (छा.७-२-१.) इत्युक्तवाक्यसदृशस्य 'अस्ति भगवः प्राणाद्भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति सत्यं वाव प्राणाद्भूयः' इत्येवंरूपस्य प्रश्नप्रतिवचनरूपवाक्यस्याध्याहारेण प्रकरणभेदकल्पनया सत्यस्य विष्णोः प्राणादुत्तमत्वमुक्तं अतो नेति योजना । अनेन यतः इतरवत् 'व्यतिहारः' अध्याहार इति हेत्वंशो व्याख्यातः । श्रुतौ 'भगवो' भगवन्निति नारदकर्तृकप्रश्नस्य 'सत्यं वाव' इति सनत्कुमारकर्तृकं प्रतिवचनम् ॥

( २ ) नन्वध्याहारे कारणाभाव इत्यतस्तत्र हेतुत्वेन विंशिषन्तीत्यंशं व्याचष्टे-एष तु वा अतिवदतीति ॥ विंशिषन्ति हीति । छान्दोग्ये 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति । तं चेद्ब्रूयुरतिवाद्यसीति । अतिवाद्यस्मीति ब्रूयात् । नापह्नुवीत' (छा. ७-१५.) इति प्राणवादिनोऽतिशयितवस्तुवादित्वेनातिवादित्वमुक्तम् । ततश्च

( ३ ) यथेतरेषु विशेषणम् ।

'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्याख्यवस्तुवादिनोऽप्यतिवादित्वमुच्यते । तत्र प्राणातिवादिनः सकाशात्सत्यातिवादी तु शब्देन विशेष्यते। तथा च 'हि' यस्माच्छन्दोगाः प्राणातिवादिनः सकाशात्सत्यातिवादिनं 'विशिषन्ति' अतिशयितवस्तुवादित्वविशेषणयुक्ततया आमनन्ति । एवं सत्यवादिनं विशिंषन्तः प्राणात्सत्यं विशिंषन्ति । तेन ज्ञायते अन्योऽसावन्योऽसाविति । तस्मात् प्रकरणभेदकसद्भावात्प्राणप्रकरणात्परस्तात् 'एष तु वा' इत्यतः प्राक् 'अस्ति भगवः' इत्यादिप्रश्नप्रतिवचनाध्याहारः कार्य इत्यर्थः । स एषोऽधिकारी एवं शृण्वान एवं विजानन्नेवं ध्यायन्नेवं पश्यन् 'अतिवादी' अतिशयितं उत्तमं मुख्यप्राणाख्यं वस्तु वदतीत्यतिवादी भवति 'तं' प्राणातिवादिनं प्रति यदि त्वमतिवाद्यसीत्यन्ये ब्रूयुः, तदा सत्यमतिवाद्यस्मीति ब्रूयात् 'नापह्नुवीतेव' नैवापनीयेतेत्यर्थः। योऽधिकारी सन् निर्दोषश्चासौ यो नियामकश्चेति सत्यो विष्णुस्तेनातिवदति तमतिवदति एष एव तु प्राणातिवाद्यपेक्षया विशेषेणातिवदति अतिशयितमुत्तमं वस्तु वदतीत्यर्थः ॥

( ३ ) ननु कथमिदं विशेषणं प्रकरणभेदकं, येन प्रश्नाद्यध्याहारं प्रतिपद्येमहीत्यतः तदुत्तरत्वेनापि इतरवदित्यंशं व्याचष्टे— यथेति ॥ 'इतरेषु' वागादिषु । प्रयुक्तमिति शेषः । 'वाग्वाव नाम्नो भूयसी' इत्यादिकं विशेषणं प्रकरणभेदकमित्यर्थः । वाचो नामाधिक्यरूपातिशयाभिधायकत्वादिति भावः । तथैतदपीति वाक्यशेषः । यस्सत्येनातिवदति स तु प्राणातिवादिनोऽप्यतिशयितं वस्तु विशेषेणवदतीति वचनमुखेन प्राणात्सत्यस्य आधिक्यवाचकत्वादिति भावः । अनेनेतरवदित्यस्य विशिषन्ति हीत्यनेनापि सम्बन्धः सूचितः । अनेन न विष्णोः प्राणादुत्तमत्वाभावः, यतस्तच्छ्रुत्युपदिष्टं, न च प्रश्नाद्यभावात्प्राणपरैव श्रुतिः, यत इतरवत्प्रकरणान्तरवत्प्रश्नाद्यध्याहारः कर्तुं शक्यः । न चात्र कारणाभावः । हि यतः छन्दोगाः इतरवद्विशिषन्ति 'वाग्वाव नाम्नो भूयसी' इत्यादिना नामादितो वागादिकमिव 'एष तु वा इति' तुशब्देन प्राणात्सत्यं विशिषन्त्यत इति सूत्रार्थ उक्तो भवति ॥

(४) उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् ।
तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः ॥ इति
बृहत्तन्त्रे ॥ ३८ ॥

—*—

२३. अधिकरणम् ॥

(१) कृतिर्निष्ठा विज्ञानमित्यादीनां भेदाद्बहव उत्तमा इति
चेत्—

---

(४) उक्तार्थे हिशब्दसूचितां स्मृतिं चाह—उत्तमत्वमिति ॥ 'देवानां' नामादिदेवानां 'मानवात्' मनुष्योत्तमादिति । उपलक्षणम् । मुक्तावप्युत्तमत्वमस्ति किमु संसारे इत्यर्थः । 'तेभ्यो' देवेभ्यः 'प्राणस्य' मुख्यवायोः 'तस्मात्' प्राणात् । चस्त्वर्थः । नित्यमुक्तस्येति हेतुगर्भम् । हरेरुत्तमत्वमिति सम्बन्धः । बृहत्तन्त्र इत्यस्योक्तमिति पूर्ववाक्येनान्वयः ॥ २२ ॥

॥ इति व्यतिहाराधिकरणम् ॥

—*—

२३. अधिकरणम् ॥

(१) अत्राधिकरणे प्राणाद्विष्णोरेवोत्तमत्वं साध्यते । पूर्वपक्षयति—कृतिरिति ॥ बहव इत्यनन्तरं अपीति, इत्यादीनामित्यनन्तरं उक्तत्वादिति च शेषः । तथा च न केवलं प्राणात्सत्यपदोक्तो विष्णुरेवोत्तमः, किन्तु बहवोऽप्युत्तमास्सन्ति । कुतः ? कृतिः निष्ठा ज्ञानमित्यादिशब्दवाच्यानां बहूनां सत्यादुपर्युक्तत्वादित्यर्थः । आदिपदेन सत्यं विज्ञानं मतिः श्रद्धा सुखं भूमा अहङ्कारः आत्मेति शब्दवाच्या गृह्यन्ते । ननु विज्ञानादीनां सत्येनान्योन्यं चाभेदान्न बहूनामुत्तमत्वं, किन्त्वेकस्यैवेत्यत आह—भेदादिति । सत्येनान्योन्यं चेति शेषः । बहव इति । प्राणादुत्तमा बहव एव स्युः, न त्वेकः सत्यपदोदितो विष्णुरित्यर्थः । तत्त्वप्रदीपे तु सत्यस्य परमात्मत्वे सत्यादीनां भेदात्परमात्मनोऽपि बहव उत्तमाः स्युरिति पूर्वपक्षो दर्शितः । यद्यपि छान्दोग्ये सत्यादनन्तरं विज्ञानं मतिः श्रद्धा निष्ठा कृतिः सुखं भूमा अहङ्कार आत्मेति क्रमो, न तु कृत्यादित्वेन । तथाऽपि सूत्रे अक्षरस्य प्रकृतत्वात् तदिति वक्तव्ये श्रुतिस्थकृत्यादिशब्दानुसारेण सेति स्त्रीलिङ्गनिर्देशात्तदनुसारेणात्र कृत्यादित्वेनोक्तिः । न चैवं मत्यादित्वेनोक्तिस्स्यादिति वाच्यम् ।

( २ ) न,

सू—ॐ ॥ सैव हि सत्यादयः ॥ ॐ ॥ ३९ ॥

सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः ।

( ३ ) ब्रह्मतर्के च ।

नामादिप्राणपर्यन्तात् यो हि सत्यादिरूपवान् ।

तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ॥ इति ॥

'सत्यं पूर्णं कृतिः पूर्णा निष्ठा पूर्णा श्रद्धा पूर्णा ' ( ) इत्यादिश्रुत्यन्तरानुरोधेन सत्यादनन्तरं कृतिर्निष्ठेति क्रमेण निर्देशात् । तत्त्वप्रदीपे तु लक्ष्मीरपि सत्यादिगुणकत्वात्सत्यादिपदैरुच्यते । तथा च तद्विवक्षया सैवेति स्त्रीलिङ्गशब्दप्रयोग इत्युक्तम । तथा स्त्रीलिङ्गोक्तया कृतिर्निष्ठेत्यादिशब्दवाच्यत्वं विष्णोरुचितमिति चोक्तम् ॥

( २ ) पूर्वपक्षं प्रतिषेधति—नेति ॥ न प्राणादधिकाः बहव इति युक्तमित्यर्थः । तत्त्वप्रदीपदिशा तु न तु परमात्मनोऽपि बहव उत्तमाः शङ्क्या इत्यर्थः । एवं प्रतिज्ञां बहिरेव प्रदर्श्य कुतो नेत्यतः तत्र हेतुत्वेन सूत्रमुपन्यस्य व्याचष्टे—सैवेति । 'हि' यस्मात्सत्यादयोऽहङ्कारान्ताः 'सा' अक्षरशब्देन प्रकृता ईश्वराख्या परदेवतैव, न तु ततो भिन्नाः तस्मादित्यर्थः । तस्या एवेति । अक्षरशब्देन प्रकृताया एवेत्यर्थः । सत्यादयः आत्मान्ताः सा परदेवतैवेति व्याख्यातव्ये सत्यादयो गुणाः तस्या एव स्वरूपभूता इति व्याख्यानं सत्यादिशब्दवाच्यानां भेदनिराकरणेन अभेदसाधनार्थम् । अनेन कथमभेदसिद्धिरिति चेदित्थं— 'सत्यं भगवो विजिज्ञासे' ( छा.७-१६. ) इति नारदस्य सत्याख्यस्य विष्णोः गुणजिज्ञासायां सनत्कुमारेण 'यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति' (छा.७-१७.) इति वाक्यशेषेण सत्याख्यविष्णुगुणत्वेन तदविनाभूतज्ञानस्योक्तत्वात्, तथोत्तरत्रापि तत्तद्गुणजिज्ञासायां तत्तदविनाभूतसत्यादीनामेवोक्तत्वादभेदसिद्धेः । अन्यथा सत्यादिजिज्ञासायां विज्ञानादिकथनस्यासङ्गतत्वापातात् ॥

( ३ ) गुणत्वयुक्तिसिद्धाभेदरूपार्थे हिशब्दसूचितां स्मृतिं चाह—ब्रह्मतर्के चेति ॥ न केवलं सूत्र इति चार्थः । यो नामादिप्राणपर्यन्तात् अधिकारिजातात् 'अधि' उपरि 'सत्यादिरूपवान्' सत्यादिशब्दवाच्यगुणवानुक्तः, गुणस्वरूपतयोक्तः, तस्मै भगवते 'सर्वजिष्णवे' सर्वजनकशीलाय विष्णवे नम इत्यन्वयः । 'नामादिप्राणपर्यन्ताद्यो हि

(४) सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः ।
तस्मै नमो भगवते यस्माद्वेद विमुच्यते ॥
इति चाध्यात्मे ॥ ३९. ॥

—*✿*—

२५. अधिकरणम् ॥

(१) प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्व

सत्यादिरूपवान्' इति पाठे उपरि श्रुत इति आधिक्येनेति वा शेषः । हिः प्रसिद्धौ ॥

(४) नन्वस्तु भूमान्तानां भगवद्गुणोक्त्या तेनाभेदः, न त्वहङ्कारात्मनोः, तयोरभेदानुक्तेरित्यत आह—सत्याद्या इति ॥ सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमान इत्यर्थः । 'अहमात्मान्ताः' बहुव्रीहिः । अहङ्कारात्मान्ताः शब्दाः 'यद्गुणाः' यस्य परस्य गुणस्य वाचकाः समुदीरिताः प्रमाणे तस्मै भगवते नम इत्यर्थः । अहङ्कारात्मनोः सत्यादाविव गुणप्रश्नप्रतिवचनपूर्वकमभेदानुक्तावपि अस्त्येव भगवत्स्वरूपत्वमित्यत्र हेतुर्यस्मादिति । यस्मादहङ्कारात्मनोः ज्ञानात् यस्मात् 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स्वराट् भवति' (छा.७-२५.) इति वाक्यशेषे बन्धाद्विमुच्यत इत्युक्तम्, तस्मात्तयोस्तत्स्वरूपत्वमित्यर्थः । श्रुतावात्मशब्दो विष्णुपरः, तस्मिन् सत्यादिमान् 'स्वराट्' स्वतन्त्रो बन्धरहित इत्यर्थः । इति ब्रह्मतर्के इति चाध्यात्म इत्युभयत्राप्युक्तमिति शेषः । अन्वयः अतस्सत्यादय इति पूर्वेणान्वयः ॥ २३ ॥

॥ इति सत्याधिकरणम् ॥

—*—

२४. अधिकरणम् ॥

(१) अत्राधिकरणे श्रिय उपासनानधिकारित्वं साध्यते । पूर्वपक्षयति—प्रकृतेरिति ॥ न केवलं प्राणादेः किन्तु चित्प्रकृतेर्लक्ष्म्या अपि उपासनाधिकारोऽस्त्येवेति प्रतिज्ञायां हेतुमाह—संसारेति । 'प्राप्तेः' सिद्धेः । साधुत्वाच्चेत्यपि द्रष्टव्यम् । नन्वसिद्धः संसार इत्यत आह—जन्मादेरिति । सीतारुक्मिण्यादिरूपेण जन्ममरणादेर्दर्शनात् । 'यतः प्रसूता' (महा. १.) इत्यादिश्रुतेश्चेत्यर्थः । अधिकारासिद्धेः फलमाह—कि

पाठ इति ।

( २ ) अत्रोच्यते—

सू—ॐ ॥ कामादितरत्र तत्र चायतनादिभ्यः ॥ ॐ ॥ ४० ॥

स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्रावतारान् करोती श्वरानुसारेण ।

( ३ ) 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धि

---

मिति । कस्माद्धेतोरित्यर्थः । नामादिषु मध्ये । किमिति । किंनिमित्तः 'अपाठो' पाठाभावः किंप्रयुक्त इत्यर्थः । किन्तु तदध्याहारः । तत्पाठोऽध्याहर्तव्य एवेत्यर्थः । स च भवन् प्राणादुपरि एव भवेत्, तथा च नाधिकारिणां प्राणावसानत्वमिति भावः ।

( २ ) सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अत्रेति । अत्रास्मिन् पूर्वपक्षे सिद्धान्त उच्यते सूत्रकृतेत्यर्थः । सूत्रं पठति—कामादिति । अत्र कामादित्येतत्स्वकामपरतया व्याख्याति—स्वेच्छयेति । सौत्रचशब्दस्य कामाच्चेत्यन्वयमभिप्रेत्यार्थमाह—एवेति । न कर्मतं इत्यर्थः । अनेनेन्द्रादिवज्जननादिकं निरस्तं भवति । तत्रेत्यनन्तरं शेषं दर्शयन् तदर्थमाह—मूलेति । मूलरूपेण 'मूलस्थाने' वैकुण्ठादौ भगवत्समीपे स्थितेत्यर्थः । अनेन प्रकृतेः इतरजननवत् मुख्यजननादि निरस्तो भवति । चशब्दस्येतरत्र चेत्यपि सम्बन्धं समुच्चयार्थत्वं चाभिप्रेत्य इतरत्रेत्यस्यार्थमाह—अन्यत्र चेति । भूम्यादावपीत्यर्थः । सूत्रे इतरत्रेत्यनन्तरमध्याहार्यं दर्शयति—अवतारेति । बहुवचनमाद्यर्थे । अवतारादि करोतीत्यर्थः । 'अवतारो' जनप्रत्यक्षविषयता । आदिपदेनैतदविषयत्वरूपा मृतिर्गृह्यते । यद्वा—अवतीर्यमाणसीतारुक्मिण्यादिरूपबाहुळ्याद्बहुवचनम् । मरणादेरुपलक्षणमेतत् । 'करोति' प्राप्नोति । अनेन जननादेरवतारादिविषयत्वेनान्यथासिद्धिरुक्ता भवति । कामादित्यस्येशकामादित्यप्यर्थमाह—ईश्वरेति । अनेन प्रकृतेःस्वातन्त्र्यशङ्का निरस्ता भवति । अत्रेश्वरेच्छानुसारेण वर्तमानया स्वेच्छयैव मूलस्थाने स्थितेन तेन सहैवान्यत्र च तेन सहावतारान् करोतीति तत्त्वप्रदीपोक्तार्थविशेषो बोध्यः । करोतीत्यस्य प्रकृतिरिति विपरिणतेन सम्बन्धः ॥

( ३ ) मूलरूपेण भगवत्समीपे स्थिता स्वेच्छयैवावतारान् करोतीत्येतत्कुतः इत्यतः तत्र हेतुत्वेन आयतनादिभ्य इत्यंशं व्याचष्टे—

का सैषा प्रकृतिरविकृतिः' इति वत्सश्रुतेः ।
( ४ ) नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।
उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥

सर्वायतनेति ॥ सर्वं जगदायतनमाश्रयो यस्यास्सा तथोक्ता । सर्वः कालः आश्रयो यस्याः सा तथोक्ता । आभ्यां देशकालानन्त्यमुच्यते । सर्वमिच्छाधीनं यस्यास्सा 'सर्वेच्छा' सर्वं जानातीति 'सर्वज्ञा' सर्वावस्थेति पाठे सर्वजनस्य सर्वाऽपि जाग्रदाद्यवस्था यस्याः सा तथोक्तेत्यर्थः । तत्त्वप्रदीपे तु सर्वः पूर्णो विष्णुस्तस्यायतनमेवास्या आयतनं, तत्काल एव कालः तस्मादेव च इच्छा चेत्यर्थः उक्तः । स्वयं क्वचिदपि न बद्धा बन्धिका च सर्वजीवानां 'अविकृतिः' विकाररहिता । अचेतनप्रकृतिव्यावृत्त्यर्थमिदं विशेषणम् । सर्वेच्छा सर्वज्ञेत्येतच्च न व्यावर्तकं, जडेऽपि ज्ञानेच्छोपादानत्वेन तथोक्तिसम्भवात् । या एवंभूता सैषा चित्प्रकृतिरिति श्रुत्यर्थः । इति वत्सश्रुतेरित्यनेन आयतनादिभ्य इति सौत्रपदस्य भावप्रधानगर्भितस्य सर्वायतनत्वादिबोधकश्रुतेरित्यर्थ उक्तो भवति । सूत्रे बहुवचनं तु श्रुतिप्रतिपाद्यबहुत्वाद्युक्तमिति भावः ॥

( ४ ) नन्वेवं प्रकृतेरसंसारित्वेनानधिकारित्वेऽपि कुतः छन्दोगश्रुतौ नामादिष्वपाठः, भगवदुक्तिवत्तारतम्यकथनावसरे तदुक्तेरावश्यकत्वात् । अन्यथा प्रकृतेरभावप्रसङ्गादित्यतः सूत्रचशब्दसूचितां स्मृतिमाह—नामादयस्त्विति ॥ तुशब्दो विशेषार्थः । चशब्दोऽवधारणे । तथा च यथा छन्दोगश्रुतौ बद्धत्वान्निमित्तादेव नामवागाद्य उदिताः । मोचकत्वादेव परमात्माऽप्युदितः । उभयोर्बन्धमोचकत्वयोरभावेनैव 'अव्यक्तं' श्रीतत्त्वं 'नोदितं' नोक्तं, न तु तस्या अभावान्निमित्तात् । तथा 'द्वा सुपर्णा' ( मु. ३-१. ) इति श्रुतौ 'स्वाद्वत्ति' इत्युक्तात्कर्मबद्धत्वात् 'सखाया' उपकार्योपकारिणावित्यनेनोक्तात् मोचकत्वादेव जीवपरमात्मानावेवोच्येते । न तु ताभ्यां 'इतरत्' अन्यत्किञ्चिज्जडमुच्यते । अनेन बुद्धिजडपरतया व्याख्यानं निरस्तं भवति । यदा चैवमुक्तिः तदा श्रुतौ

ईश्वरः प्रकृतिर्जीवो जडं चेति चतुष्टयम् ।
पदार्थानां समुद्दिष्टम्.... ॥

इति बृहदारण्यकभाष्योदाहृतप्रमाणोक्ततत्त्वचतुष्टयमध्ये ईश्वरजीवा

श्रुतौ तथा जीवपरावुच्येते किञ्चनेतरत ।
नोच्यते च तदा तत्त्वद्वयं वै समुदाहृतम ॥
इति ब्रह्मतर्के ॥ ४० ॥

रूपं तत्त्वद्वयमेवोक्तं ज्ञातव्यं, न तु जडाभाव इत्यर्थः । तत्त्वप्रदीपे तु-बद्धत्वमोचकत्वयोरुभयोरभावेन यथा येन प्रकारेण योजनायामव्यक्तं नैवोदितं छन्दोगश्रुतौ, तथा तस्मिन्नेव योजनाप्रकारे प्राणपर्यन्तो जीवराशिः सत्यादिगुणकः परमेश्वरश्चैवोच्यते, न त्वन्यत्किंचित्, अव्यक्तस्याबद्धत्वेन परतत्त्वेऽन्तर्भावात् । 'तदा' तस्मिन् पक्षे तत्त्वद्वयमेवोक्तमित्युक्त्वा, एवं च प्रकारान्तरेणापि श्रुतियोजनाऽस्तीति गम्यते। येन प्रकारेणाव्यक्तशब्दशब्दिता स्वरमणपरतन्त्रा अक्षतगुणगणलक्षणा सा महालक्ष्मीरत्र संलक्ष्यते । स्वयं च सूत्रं 'सैव हि सत्यादयः' ( ३-३-३९. ) इति तदभिमुखमिव च प्रतिभाति। 'यथाऽव्यक्तं न तूदितम' इत्यादिकमुदाहरद्भिरिह भट्टारकैश्च तां कटाक्षेण वीक्षमाणामभिप्रेक्षामहे । सा देवी प्रस्तुतैव भगवत्प्रस्तावे अनादिकालभगवत्सम्बन्धित्वादित्याह। भूमादिगुणत्वमुभयथा विष्णोरेवेति भूमा विष्णुरेवेत्युक्तं, पुरस्ताच्छ्रीगुणेपूदितेष्वपि सत्यादिषु तेषां भूमा विष्णुरेवेत्यर्थः । न हि भगवतोऽन्यत्र सत्यज्ञानादीनां परिपूर्तिः । न च 'यत्र नान्यत्पश्यति' इत्यादिना सर्वस्वातन्त्र्याद्धिधर्मोपपत्तिरन्यत्रेत्यादि तत्रैवावेदितम् । अन्तराले अनुक्तिपक्षेऽपि नोपासनीया सेति मा भूच्छङ्का इत्युपासनापादे प्रस्तौति देवीम् । प्राणप्रस्तुतिः प्राणादुपरि सहैव भगवता मुमुक्षूणां अभिध्यातव्येति । नामादिप्राणपर्यन्तानामपि भूतानामुत्तरोत्तरतो विशेषादुपास्तिपूजादिकं विवक्षितम्, किं पुनरखिलेश्वरस्य अतिप्रियतमाया विरिञ्चमुखनिखिलसुरवरपुरस्सरसज्जनसन्ततसेव्याया देव्या इति विशेषार्थ उक्तः । अत्र तत्त्वप्रदीपपक्षे स्मृतिगतस्य श्रुतावित्यस्य नावृत्तिः । टीकाकृत्पक्षे तु आवृत्तिः यथातथाशब्दयोर्दृष्टान्तदार्ष्टान्तिकभावसूचकत्वम् । तत्त्वप्रदीपपक्षे तु प्रकारसमर्पकत्वम्। टीकाकृत्पक्षेऽस्याः स्मृतेः प्राकृतिकजडाभावशङ्कानिवारकत्वम्। तत्त्वप्रदीपपक्षे तु बन्धमोचकत्वान्यप्रकारेण परापरत्वरूपेण अव्यक्तपरतयाऽपि छन्दोगश्रुतियोजनाप्रदर्शकत्वमिति विशेषो ज्ञातव्यः । महालक्ष्मीः 'अत्र' छन्दोगश्रुतौ 'संलक्ष्यते' प्रतिपाद्यतयाऽभिप्रेयते इत्यर्थः । 'तदभिमुखं' लक्ष्म्यभिमुखं तत्परमिवेत्यर्थः। भट्टारकैः श्रीम

( ५ ) सू—ॐ ॥ आदरादलोपः ॥ ॐ ॥ ४१ ॥
अबद्धत्वेऽपि भक्तिविशेषाद्देवोपासनाद्यलोपस्तस्या भवति ।

द्याचार्यराजैः सा देवीत्यादिना सा देवी सत्याद्य इति सूत्रस्य अर्थान्तरमुक्तम् । 'प्रस्तावे' प्रकरणे 'प्रस्तुता' प्रकृतैवेत्यर्थः । 'इत्याह' उपास्थतेरिति सूत्रकृत् । प्रकृतिपुरुषयोः साम्यशङ्कां वारयति—भूमादीति । आदिशब्देन अहमात्मनोः ग्रहणं 'उभयथा' सम्प्रसादादध्युपदेशाच्च । 'सत्यादिषु' मत्यादिरूपश्रीगुणेष्वदितेष्वपीत्यन्वयः । 'तेषां' तैः 'भूमा' पूर्ण इत्यर्थः । तैरेव भूमाधिकरणे 'अन्तराले' प्राणपरमात्मनोर्मध्ये बन्धमोचकत्वविवक्षया श्रुत्यनुक्तिपक्षेऽपि प्रस्तौति देवीं सत्यादिशब्दैः सूत्रकृदित्यर्थः । 'मुमुक्षूणां' मुमुक्षुभिः अभिध्यातव्या देवीति हेतोः प्राणप्रस्तुतिरित्यन्वयः । देव्याः पूजादिकं विवक्षितमिति किमु वक्तव्यमित्यर्थः। अनेन–चित्प्रकृतिरुपासनाधिकारिणी न भवति, तत्साधकसंसारित्वशून्यत्वात् । न च जननादिदर्शनश्रुतिविरोधाद्धेतोरसिद्धिः । यतश्च 'इतरत्र' भूम्यादावप्यवतारान् करोति । अतो जननादिदर्शनस्यावतारविषयत्वेन विरोधाभावादिति भावः । न च लोकसिद्धजन्माद्येव किं न स्यादिति शङ्क्यम् । यतस्सा तत्र मूलस्थाने मूलरूपेण भगवत्समीपे स्थिता । न च तादृशानामपीन्द्रादीनामर्जुनादिरूपेण उत्पत्तेर्दर्शनात् हेतोरप्रयोजकत्वं शङ्क्यम् । यतः सा 'कामात्' स्वेच्छयैव तत्र स्थिता न कर्मतोऽतः । न च स्वेच्छानुसारित्वे तस्याः स्वातन्त्र्यं शङ्क्यम् । यतः सा 'कामात्' ईश्वरेच्छामनुसृत्यैवावतारादि करोति, न स्वेच्छामात्रादतः। न च मूलरूपेण भगवत्समीपे स्थिता इतरत्र स्वेच्छयैवावतारादि करोतीति विशिष्टहेतोरसिद्धिरिति वाच्यम् । 'आयतनादिभ्यः' सर्वायतनत्वादिप्रतिपादकश्रुतेरेवेति सूत्रार्थ उक्तो भवति ॥

( ५ ) ननु रमाया असंसारित्वे कृतकृत्यत्वेन भगवदुपासनाद्यभावस्स्यात् । न चासौ युक्तः ।

यदर्चितं ब्रह्म भवादिभिः सुरैः
श्रिया च देव्या मुनिभिश्च सात्त्वतैः ।
तुलसीभिरीशमभ्यर्चेति . .

इत्यादिप्रमाणविरुद्धत्वात् । अत्रार्चितमुपासितं पूजितं चेत्युक्तेरिस्या

(६) यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत् ॥
इति बृहत्तन्त्रे ॥ ४१ ॥

(७) सू—ॐ ॥ उपस्थितेस्तद्वचनात् ॥ ॐ ॥ ४२ ॥
अनादिकाले भगवत्सम्बन्धित्वाद्युज्यते च नित्यमुक्तत्वं तस्याः ।

---

शङ्कां परिहरत्सूत्रं पठति—आदरादिति ॥ अत्र पूर्वसूत्राच्चोऽनुवर्तते। स चाप्यर्थ इति भावेन सूत्रं व्याचष्टे—अबद्धत्वेऽपीति । यद्यपि श्री रबद्धा अत एव कृतकृत्या च, तथाऽपीत्यर्थः । आदरशब्दस्य 'आदरो भजनं भक्तिर्बहुमानं च सेवनम्' इत्यभिधानसिद्धमर्थमाह—भक्तीति । निरुपाधिकसर्वातिशयितभक्तिवशादित्यर्थः । अलोप इत्येतत्प्रतियोग्युक्तिपूर्वकं व्याचष्टे—उपासनादीति । आदिपदेन पूजोच्यते । सूत्रेऽध्याहारात्प्रकरणाद्वा लब्धं धर्मिपदमाह—तस्या इति । प्रकृतेरित्यर्थः ॥

(६) अत्रार्थे स्मृतिं चाह—यथेति ॥ 'प्राप्तकामा' लब्धेष्टा कृतकृत्याऽपीति यावत् । विशेषणद्वयसमुच्चयेऽपिशब्दौ । 'नित्यशः' सर्वदा 'एवं' तथा हरेर्भक्तोऽन्योऽपीति शेषः । एवमित्यावर्तते । तस्य 'एवं भवेत्' निरुपाधिकभक्त्या हरेरुपासको भवेदित्यर्थः ॥

(७) ननु न रमायाः नित्यमुक्तत्वं युक्तं, कारणाभावात् । न च स्वत एव तत् । तस्या अस्वतन्त्रत्वादित्याशङ्कां परिहरत्सूत्रं पठति—उपस्थितेरिति ॥ अत्रोपस्थितिर्नाम समीपे स्थितिः । भक्तिकर्मत्वेन प्रकृतत्वादीशस्येति लभ्यते । सा च सर्वकाले विवक्षिता । तस्याः नित्यावियोगित्वादिति भावेनोपस्थितेरित्येतद्व्याचष्टे—अनादीति । अनाद्यनन्तकाले भगवदविनाभूतत्वादित्यर्थः । भगवत्सम्बन्धित्वादित्यस्य भगवत्प्रसाद्यत्वादित्यप्यर्थः । अनेन नित्यमुक्तत्वे भगवत्प्रसादाख्यकारणमुक्तं भवति । सूत्रेऽध्याहार्यं प्रतिज्ञावाक्यं दर्शयति—युज्यते चेति । चोऽवधारणे । युज्यते इत्यस्य कर्त्राकांक्षायां तत्कर्तृत्वेन तद्वचनादित्यत्र तदिति व्यस्तपदेन बोध्यं दर्शयति—नित्यमुक्तत्वमिति । कस्या इत्याकांक्षायां प्रकरणलब्धं धर्मिणं दर्शयति—तस्या इति । श्रिय इत्यर्थः ॥

( ८ ) 'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तावनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः स्वस्मिन् हि रमते परमो न स्वस्मिन् प्रकृतिरत एनमाहुः परम इति' इति गौपवनश्रुतिवचनात् ॥ ४२ ॥

——*——

२५. अधिकरणम् ॥

( १ ) दर्शनार्थं ह्युपासनं तच्च श्रवणादेरेव भवति, अतः किमर्थमिति ।

---

( ८ ) ननु उपस्थितिः कुतः सिद्धेत्यतस्तत्र हेतुत्वेन तद्वचनादित्येतद्व्याचष्टे—द्वाविति ॥ या प्रकृतिर्यश्चायं परमः तौ द्वौ 'अनादिनित्यौ' देहतोऽपि 'अनादियुक्तौ' अनादिकालतः सम्बद्धौ 'नित्यमुक्तौ' अनन्तकालदुःखासम्बन्धौ 'अनादिकृतौ' नित्यकृतौ सर्वकाले पूर्णावित्यर्थः । विष्णोः परमशब्दवाच्यत्वे निमित्तमाह—रमत इति । 'अस्यां' प्रकृतौ 'अस्मिन्' परमे । तर्ह्युभयोः साम्यमित्यत आह—स्वस्मिन्निति । श्रियां रममाणोऽपि तत्स्थे स्वस्मिन् रमत इत्यर्थः । 'रमायां रममाणोऽपि तत्स्थेनैव श्रियाऽऽत्मना । रमते' इत्यैतरेयभाष्योक्तेः। यत एवमत एनं विष्णुं परम इत्याहुः स्वरमणेन मायाः परत्वात् परमशब्दवाच्य इत्यर्थः । इति श्रुतिवचनादिति । अस्य सिद्धादिति शेषेण भगवत्संबन्धित्वादित्यनेनान्वयः । अनेन सूत्रे तद्वचनात् सिद्धादुपस्थितेरित्यन्वयः । तद्वचनादित्यस्य च तस्यां श्रुतौ तस्याः उपस्थितेः वचनात् उक्तेरित्यर्थ उक्तो भवति ॥ २४॥

॥ इति कामाधिकरणम् ॥

——:※:——

२५. अधिकरणम् ॥

( १ ) अत्राधिकरणे श्रवणमनननिदिध्यासनरूपस्य समस्तस्याप्युपासनस्य कर्तव्यत्वं समर्थ्यते । पूर्वपक्षयति—दर्शनार्थमिति ॥ 'हि' यतः 'उपासनं' ध्यानं ब्रह्मदर्शनार्थमेव, न तु प्रयोजनान्तरार्थं, तस्यादर्शनात्, अनिष्टत्वाच्च । 'तच्च' दर्शनं उपासनान्तर्गत 'श्रवणादेः' श्रवणमननाभ्यामेव 'भवति' भविष्यति । अतः किमर्थं समस्तोपासनमित्यर्थः । एवं 'हि' यतः तच्चोपासनमेव हरेः 'दर्शनार्थं' तत्प्रयोजन

( २ ) अत्रोच्यते—

सू—ॐ ॥ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ॐ ॥ ४३ ॥

तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव।

( ३ ) हि शब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ.४-४-५. ) इति श्रुतिं सूचयति ॥

---

र्कं, न तु श्रवणाद्यपीति 'भवति' इष्यते, अतः 'श्रवणादेः' श्रवणमननयोः किमर्थं उपासनमनुष्ठानमित्यपि तत्त्वप्रदीपदिशा व्याख्येयम् ॥

( २ ) अथ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—अत्रेति ॥ सूत्रं पठति—तन्निर्धारणेति । अत्र ध्यानस्य दर्शनार्थं अवश्यकर्तव्यतासमर्थनाय तन्निर्धारणार्थनियमः तद्दृष्टेः पृथक्फलं इत्ययमंशः प्रवृत्तः। तत्र तन्निर्धारणं च अर्थनियमश्चेति द्वन्द्वः, छन्दःकल्पत्वात् एकवद्भावेऽपि नपुंसकत्वाभावः । यद्वा—तन्निर्धारणेन सहितोऽर्थनियम इति मध्यमपदलोपी समासः । प्रथमतच्छब्दः इयदामननात्, सैवेत्यत्र प्रकृतपरापरतत्त्वपरः भावप्रधानो वा । द्वितीयस्तु सैव हीति प्रकृतब्रह्मपरः। फलमिति तद्दृष्टेरिति चावर्तते । हिः हेताविस्याशयेन तमंशं व्याचष्टे-तत्त्वेति । परापरतत्त्वज्ञानमित्यर्थः। 'वेदार्थनियमः' अयमेव वेदार्थो नान्य इति निर्णय इत्यर्थः । फलमित्यत्रान्वीयते। तद्दृष्टेरित्यस्यार्थो—ब्रह्मदृष्टेरिति। भगवद्दर्शनादित्यर्थः ।फलादिति विपरिणामेनात्रापि सम्बध्यते। ध्यानफलादिति तदर्थः। पृथगिति सावधारणमित्याह-पृथगेवेति। एवेत्यनन्तरं फलमिति सम्बध्यते। अतो दर्शनार्थं ध्यानं कर्तव्यमिति वाक्यदोषः । तत्त्वप्रदीपे तु समस्तगुणसम्पूर्णो नारायण इत्ययमेव वेदार्थ इति ज्ञानं वेदार्थनियमः, इदं श्रवणफलम् । उपपन्न एवं भाव इति निश्चयः तत्त्वनिश्चयः, इदं मननफलमित्यभिहितम्। अस्मिन् पक्षे तत्त्वनिश्चयो वेदार्थनियम इति भाष्यपदद्वयं सौत्रपदद्वयस्य व्यत्यासेन व्याख्यानरूपमिति प्रतिभाति ॥

( ३ ) ननु ध्यानादेव चेद्दर्शनं, किं तर्हि श्रवणमननाभ्यां प्रयोजनमित्याशङ्कानिरासाय सौत्रं हिशब्दं श्रुतिसूचकतया व्याचष्टे—हिशब्देनेति ॥ सूचयति सूत्रकारः । श्रुतिस्तु जिज्ञासानये व्याकृता । अत्र दर्शनार्थं ध्यानं, तदर्थं श्रवणमनने इति त्रितयस्याप्यङ्गाङ्गिभावेन वि

( ४ ) श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः ।
( ५ ) ब्रह्मतर्के च—

हितत्वात्समस्तमुपासनं कर्तव्यमिति भावः ॥

( ४ ) ननु श्रुतोऽपि श्रवणादित्रितयसमुच्चयः कथमङ्गीकर्तुं शक्यते, ध्यानादेव दर्शनसम्भवात् । न च ज्ञानोपयोगितया श्रवणादेः कर्तव्यता । श्रवणादेः फलान्तरस्योक्तत्वादित्याशङ्कानिरासकं प्रतिबन्धः फलमित्यंशं व्याचष्टे—श्रवणादीति ॥ श्रवणादेः साक्षात्फलं चेत्यर्थः । आदिशब्देन मननं गृह्यते । अज्ञानेति । अज्ञानविपर्ययादिरूपं यद्दर्शनस्य प्रतिबन्धकं तन्निवृत्तिरित्यर्थः । आदिपदेन संशयो गृह्यते । तथा च तत्त्वनिर्णयो वेदार्थनियमः अपरोक्षज्ञानं चेति क्रमभावीति शब्दादिजन्यानीत्युत्तरभाविटीकारीत्या गुरूपदेशरूपशब्दप्रत्ययस्य श्रवणशब्दार्थत्वेन विवक्षितस्य तत्त्वनिर्णयद्वाराऽज्ञाननिवर्तकत्वात् युक्त्यनुसन्धानात्मकमननस्य च वेदार्थनियमद्वारा संशयविपर्ययनिवर्तकत्वेन प्रतिबन्धकनिवर्तकतया ध्यानफलकापरोक्षज्ञानोपयोगित्वात् , ध्यानस्य च ज्ञानप्रतिबन्धकस्य दृढत्वाद्ध्यानादेव दर्शनमिति टीकानुसारेण दृढप्रतिबन्धकस्य संशयस्यात्यन्तिकनिरासद्वारा तदुपयोगित्वात् , ज्ञानार्थिनः समस्तोपासनमपेक्षितमेवेति भावः । अनेन—'हि' यतः 'तन्निर्धारणार्थनियमः' तत्त्वनिश्चयो वेदार्थनियमश्चेत्येवंरूपं गुरूपदेशविषयवाक्यश्रवणयुक्त्यनुसन्धानात्मकमननफलं ध्यानफलात् 'तद्दृष्टेः' ब्रह्मदर्शनात्पृथक् ताभ्यां तद्दृष्टेरसिद्धेः, तद्दृष्टेरर्थे तद्ध्यानं कार्यम् । ननु ध्यानादेव चेद्दर्शनं, तर्हि श्रवणमननाभ्यां प्रयोजनाभावात् श्रवणादित्रयानुष्ठानं कुत इत्यतो—हीति । 'श्रोतव्यो मन्तव्यः' इत्यादिश्रुत्या ज्ञानार्थं त्रितयस्यापि विहितत्वादित्यर्थः । ननु श्रौतोऽपि त्रितयसमुच्चयः कथमङ्गीकर्तुं शक्यः, ध्यानादेव दर्शनसम्भवात्, श्रवणादेः फलान्तरस्यैव उक्तत्वाच्चेत्यतः—अप्रतिबन्धः फलमित्याह । यतस्तद्दृष्टेः 'अप्रतिबन्धः' प्रतिबन्धनिवृत्तिः तयोः श्रवणमननयोः साक्षात् फलं, तद्द्वारा ध्यानजन्यज्ञानं फलं अतः समुच्चयोऽङ्गीकार्य इति सूत्रार्थ उक्तो भवति ॥

( ५ ) श्रवणादेः प्रतिबन्धकनिवृत्तिद्वारा ज्ञानोपयोगित्वरूपोक्तार्थे स्मृतिं चाह—ब्रह्मतर्के चेति ॥ उक्तमिति शेषः । न केवलं सूत्र इति चार्थः । किमुक्तमित्यतस्तत्पठति—श्रुत्वेति । 'श्रुत्वा' गुरूपदेशं प्रा

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥ इति ॥ ४३ ॥

——:*:——

ण्य तज्जन्यतत्त्वज्ञानद्वारा तदज्ञानं 'पराणुद्य' परिहृत्य 'मत्वा' ब्रह्म विषयकयुक्त्यनुसन्धानात्मकमननं कृत्वा 'तत्संशयविपर्ययौ' संशय मिथ्याज्ञाने पराणुद्य, तथा 'ध्यात्वा' दृढप्रतिबन्धं च पराणुद्य ब्रह्म दर्शनं 'लभते' प्राप्नोतीत्यर्थः । यद्वा—श्रवणमनननिदिध्यासनानां क्र मेणाज्ञानविपर्ययसंशयनिवर्तकत्वमत्रोच्यते । यथोक्तं तत्त्वप्रदीपे— तत्त्वनिश्चयवतोऽपि परोक्षात्कश्चित्संशयो भवति आ दृष्टेः । दर्शने तु कीदृशोऽपि न भवेत् । तदाह—

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥ इति ॥

ननु—

अथ वा सततं शास्त्रविमर्शो न भविष्यति ।
विष्णुशास्त्रावमर्शनं, एकमन्यद्धरेर्ध्यानम् ॥

इति च । तन्त्रसारे श्रवणादिरूपशास्त्रावमर्शस्य साक्षादपरोक्षज्ञान साधनत्वोक्तेरत्र प्रतिबन्धकनिवर्तकतया ध्यानाङ्गतया अपरोक्षज्ञानोप योगित्वोक्तौ तद्विरोध इति चेत्, अत्रोक्तं सुधायां—शास्त्राभ्यास स्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति । तेन चित्तवृत्तिनिरोध नादिति । अथ वा—उपासनाप्राक्कालीनयोः तदनन्तर्गतयोः तज्जाती ययोः श्रवणमननयोः अत्र विचारितत्वात् तन्त्रसारे च तदतिरिक्त योः तदनन्तरभाविनोः विवक्षितत्वात् न विरोधः । शास्त्राभ्यासध्यान रूपद्विविधोपासनस्यापि श्रवणमननमङ्गमिति तत्त्वप्रदीपोक्तेः सुधा यामपि श्रवणमननरूपशास्त्राभ्यासस्य भेद एव तात्पर्यं, न तु भावबो ध इव अभेदे तात्पर्यं वर्णनीयम् । केचित्तु—ईषद्बिम्बध्यानस्य सर्वापे क्षितत्वेऽपि अधिकारिविशेषे शास्त्रविमर्शप्राचुर्यविवक्षया 'अथवा सततम्' इति वाक्योपपत्तेः न विरोध इत्याहुः । इति ब्रह्मतर्के इत्यन्व यः । अस्य च अज्ञानादिनिवृत्तिः श्रवणादिफलमित्युक्तमिति पूर्वेणा न्वयः ॥ २५ ॥

॥ इति निर्धारणाधिकरणम् ॥

——*——

२६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ प्रदानवदेव हि तदुक्तम् ॥ ॐ ॥ ४४ ॥

न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति, किन्तु सेतिक र्तव्येन । यथा गुरुदत्तं तथैव भवति ।

( २ ) 'आचार्यवान् पुरुषो वेद' ( छां. ६-१४-२. ) इति श्रु

---

२६. अधिकरणम् ॥

( १ ) अत्र भगवज्ज्ञानसाधनश्रवणाद्युपासनस्य सेतिकर्तव्यताक त्वं साध्यते । सूत्रं पठति—प्रदानवदेवेति ॥ अत्र तच्छब्दपरामर्शप्रद र्शनपूर्वकं एवशब्दसूचितपूर्वपक्षं प्रतिक्षिपन् सूत्रं व्याचष्टे—न चेति । श्रवणादिमात्रेणेति । यथाकथंचिदनुष्ठितेन इतिकर्तव्यतारहितेन श्रव णादिनेत्यर्थः । अनेन पूर्वपक्षसूचकैवशब्दार्थ उक्तो भवति । ब्रह्मदृष्टिर्भ वतीत्यनेन सूत्रे पूर्वस्माद्विपरिणामेन दृष्टेरिति पदमनुवर्तत इति सूचि तम् । कुतो नेत्याशङ्कते—किं त्विति । तदुत्तरतया मतुबाश्रयणेन प्रदा नवदित्येतद्व्याचष्टे—सेतिकर्तव्येनेति । भावप्रधानोऽयं निर्देशः । इति शब्दः प्रकारार्थः । इति प्रकारेण कर्तव्यमितिकर्तव्यमङ्गिभूतं कर्म त स्य भाव इतिकर्तव्यत्वमङ्गं तत्सहितेनेत्यर्थः । श्रवणादिनेति वर्तते । कुत इत्यतोऽपि प्रवृत्तं यतस्तत्फलं 'प्रदानवत्' तदनुरूपमित्यभिप्राये ण वत्यन्तांशं विवृणोति—यथेति । 'गुरुदत्तं' गुरुदानं तदुपदेशो यथा 'तथा' तदनुसार्येव भवति । फलमिति शेषः । सप्रदानेनेत्यनुक्त्वा सेतिकर्तव्येनेत्युक्त्या 'श्रोतव्यो मन्तव्यः' इति श्रुतिविरोधः परिहृतः । तथा च गुरुप्रदानं ज्ञानसाधनस्य श्रवणादेः इतिकर्तव्यताऽङ्गमेव, न चैतावता तस्य साधनवत्कार्यत्वेन पृथग्वाच्यता सोमलतारसकार्य त्वोक्तिवत् तदङ्गदृढमुष्टिनिपीडनादेः पृथग्वचनात् । अतो न श्रवणा दिमात्रस्य ज्ञानहेतुताबोधकश्रोतव्य इत्यादिवचनविरोध इति भावः ॥

( २ ) ननु प्रदानाधीनत्वं ज्ञानस्य कुत इत्यतः प्रवृत्तं तदुक्तमित्ये तद्व्याचष्टे—आचार्यवानिति ॥ 'हि' यस्मादुक्तं तदिति सम्बध्यते । तथा च छन्दोगश्रुतौ तज्ज्ञानस्य गुरुप्रसादाधीनत्वमुक्तमित्यर्थः । ही त्यनेन सूत्रे पूर्वस्माद्धिशब्दोऽनुवर्तनीयः, स च श्रुतिसूचकः, यस्मा दित्यर्थे चेत्युक्तं भवति । 'आचार्यवान्' तदनुग्रहवान् पुरुषो विमु क्ताविद्यापटलस्सन् ब्रह्म वेदेति छन्दोगश्रुत्यर्थः । अनेन—'हि' यत स्तत्र प्रदानयुक्तमेव श्रवणादि ज्ञानसाधनमिति तस्यां श्रुतावुक्तं अतः

कम् ॥ ४४ ॥

——:*✿*:——

२७. अधिकरणम् ॥

( १ ) गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते—

सू—ॐ ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ॐ ॥ ४५ ॥

ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन 'भगवां स्त्वेव मे कामे ब्रूयात्'। (छा. ४-९-२.) श्रुतं ह्येव मे

'प्रदानवत्' प्रसादपूर्वकत्वेन प्रकृष्टगुरूपदेशाख्यदानयुक्तमेव श्रवणादि 'तद्दृष्टेः' ब्रह्मज्ञानस्य साधनं, न श्रवणादिमात्रमिति सूत्रार्थ उक्तो भवति ॥ २६ ॥

॥ इति प्रदानाधिकरणम् ॥

——:*:——

२७. अधिकरणम् ॥

( १ ) अत्रेतिकर्तव्यतारूपगुरुप्रसादस्य बलीयस्त्वं समर्थ्यते। संशयप्रकारं दर्शयति—गुर्विति ॥ यज्ज्ञानसाधनतया गुरुप्रसादपूर्वकं श्रवणादि प्रकृतं तन्मध्ये किं गुरुप्रसादो बलवान् उत श्रवणादिरूप शिष्यप्रयत्न इति संशय इत्यर्थः। एवं वाशब्दं चशब्दार्थे कृत्वा इति द्वयं समं वेति कोट्यन्तरपरतया व्याख्येयम्। उपलक्षणमेतत् । गुरुप्रसादस्येतिकर्तव्यतामात्रत्वात् शिष्यप्रयत्न एव बलवानिति पूर्वपक्षे चेत्यपि द्रष्टव्यम्। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—निगद्यत इति। सूत्रं पठति—लिङ्गेति। अत्र 'तत्' तस्य गुरुप्रसादस्य 'तत्र' प्राबल्ये 'लिङ्गभूयस्त्वात्' लिङ्गबाहुल्यदर्शनाद्बहुलिङ्गदर्शनादिति हेतुवाक्ययोजनामभिप्रेत्य सूत्रक्रमेण प्रथमं हेतुवाक्यं व्याचष्टे—ऋषभादिभ्य इति। ऋषभाविष्टाद्वाय्योरित्यर्थः । तथैव तत्त्वप्रदीपोक्तेः । 'वायुर्वृषभरूपः सन्' इति छान्दोग्यभाष्यस्याप्ययमेवार्थः। आदिपदेन प्रत्यक्षोऽग्निः हंसरूपी ब्रह्मा जलवायसरूपी वरुणश्च गृह्यते। 'विद्यां' ब्रह्मविद्यां 'ज्ञात्वाऽपि' श्रुत्वैव । यद्वा—'विद्यां' ज्ञानादिगुणकं ब्रह्म ज्ञात्वा पुनरपीत्यर्थः। सत्यकामेन 'वचनात्' उक्तत्वादित्यन्वयः। सत्यकामो नाम ऋषिः स्वोपनेत्रा गौतमेन पालनार्थं गवानुगमनकर्मणि नियुक्तोऽरण्यं प्रविष्टो गुर्वाज्ञाक्रमेण तत्रैव बहुवर्षगणं प्रोवास। तत्रैनं प्रत्यृषभोऽग्निर्हंसो मद्गुश्चेत्येतद्रूपा देवाः स्वयमेत्र आग

भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति' (छा. ४-९-३.) इति वचनात्।

(२) 'अत्र ह न किञ्चन वीयाय' इत्यनुज्ञानादुपकोसलव

स्य ब्रह्मविद्यामुपदिदिशुः। अथ तैः ब्रह्मविद्यां श्रुत्वा स्वाचार्यकुलं पुनः प्राप्तोऽथाचार्येण गौतमेन हे सत्यकाम त्वं ब्रह्मविदिव भासि को नु त्वामनुशशास देवो वा मनुष्यो वेत्युक्तो मनुष्येभ्योऽन्य देवा इति 'प्रतिजज्ञे' विज्ञापयांचक्रे। अथ गौतममुपदेशाय प्रार्थयत। किमिति? यद्यपि देवेभ्यो मया श्रुतं ब्रह्म, तथाऽपि भगवानेव तु 'मे' मम 'कामे' तादर्थ्ये सप्तमी, शुभार्थे 'ब्रूयात्' ब्रवीतु। कुतः? 'हि' यतो 'भगवद्दृशेभ्यो' भगवत्समेभ्य एव 'मे' मया श्रुतम्, न त्वाचार्यात् अतो हेतोः। न च यस्मात्कस्माच्चित् श्रवणेनालमिति शङ्क्यम्। यतः उपनयनादिकर्तुराचार्यादाराधितादेव 'विदिता' लब्धा विद्या 'साधिष्ठं' भावप्रधानोऽयं, साधुतमत्वं स्थिरत्वं वा 'प्रापयति' स्वार्थे णिच्, प्राप्नोति। क्वचिद्भवतीति पाठः, तदा भवतेः प्राप्त्यर्थता ज्ञेया। न च देवा मे आचार्याः, तेषामाचार्यतया मयाऽनङ्गीकृतत्वादिति भावः। प्रापयतीत्यनन्तरं श्रुताविति शब्दोऽस्ति, तस्य इति प्रतिजज्ञे इत्यन्वयः। अयं तु भाष्यकारीयः। इति वचनादित्यस्योत्तरत्रान्वयः॥

(२) लिङ्गान्तरं दर्शयति—अत्रेति॥ 'अत्र' ऋषभादिदेवेभ्यः श्रवणे तन्निमित्तं किञ्चन 'न वीयाय' नापगतं न ते काचिद्धानिरपराधोऽभूदिति गौतमः सत्यकामायोवाचेत्यर्थः। हेत्यास्वादने। इत्यनुज्ञानादिति। इत्येवं गौतमेन गुरुणा देवोपदिष्टस्य स्वाभिमतिसूचकशब्दोक्तिरूपानुज्ञाकरणादित्यर्थः। स्वप्रदानस्याप्राबल्येऽनुज्ञावैयर्थ्यादिति भावः। लिङ्गान्तरं दर्शयति—उपकोसलवचनाच्चेति। उपकोसलस्य सत्यकामस्य गुरुप्रार्थनारूपवचनादित्यर्थः। एवमुपकोसलं प्रति गुरूपदेशवचनाच्चेत्यप्यर्थः। तत्त्वप्रदीपे तु उपकोसलस्यार्थे सत्यकामं प्रति जायावचनात् उपकोसलायाग्नीनां वचनात् तेषां प्रत्येकं वचनात् तथा उपकोसलायाचार्यानुज्ञार्थं अग्नीनां वचनादिति चतुर्धा व्याख्यातम्। इत्थं हि छान्दोग्ये आख्यायिका—उपकोसलो नाम ऋषिः तस्मै सत्यकामाख्यो गुरुः स्वजायोक्तोऽपि विद्यामप्रोच्यैव प्रोषि

चनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान्।

तः। अथोपकोसलः स्वगुरोराज्ञानुसारेण बहुवर्षगणं गार्हपत्यादीनग्नीन् परिचचार। अथ ते तुष्टाः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा. ४-१०.) इत्यादिना सम्भूय प्रत्येकं च ब्रह्मविद्यामुपदिदिशुः। तेभ्यः श्रुतविद्योऽप्युपकोसलः 'आचार्यस्तु ते गतिं वक्ता' (छा. ४-१४.) इति तैरुपदिष्टो गुरुमार्थयत। गुरुरपि सत्यकामस्तं प्रति 'य एषोऽन्तराक्षिणि पुरुषो दृश्यते' (छा. ४-१५.) इत्यादिना विद्यामुवाचेति श्रवणादेरेव प्राबल्येन तेन गुरुः प्रार्थ्येत, गुरुणा च नोच्येत, अतो ज्ञायते गुरुप्रदानं बलवदिति। यद्यपि छान्दोग्ये 'किन्नु सोम्य तेऽनुवोचन्' (छा.४-१४.) इति सत्यकामेन पृष्टः उपकोसलः 'इति ह प्रतिजज्ञे' (छा.४-१४.) अग्निभिरुक्तं विज्ञापयांचक्रे इत्येवोच्यते, न तु तेन विद्योपदेशाय गुरुरर्थ्यते इति। प्रत्युत 'लोकान्वाव किल सोम्यतेऽवोचन्नहं तु वक्ष्यामि' (छा.४-१४.) इत्यनेन स्वयमेवोपदिष्टवानिति प्रतीयते। तथाऽपि 'इति ह प्रतिजज्ञे' इत्यनेनाग्निभिरुक्तस्य 'आचार्यस्तु ते गतिं वक्ता' (छा.४-१४.) इत्यस्यापि विज्ञापितत्वात्तदेव प्रार्थनाज्ञापकमिति भावः। 'वचनात्' अभ्यनुज्ञानात्। वचनाच्च लिङ्गभूयस्त्वादिति सामानाधिकरण्यम्। तथा च सत्यकामप्रार्थनगौतमानुज्ञोपकोसलप्रार्थनसत्यकामवचनात्मकात् बहुलिङ्गादित्यर्थः। एवं हेतुं व्याख्याय तद्बलीय इति प्रतिज्ञांशं व्याचष्टे—गुर्विति। 'बलवत्' प्रबलं स्वप्रयत्नादिति शेषः। एवेति सूत्रेऽनुवृत्तपदानुवादः। न श्रवणादीत्येवार्थः। यद्यपि तत्र गुरुप्रसादमात्रं बलवदिति प्रतिज्ञातव्यम्। प्रसादप्राबल्यस्यैवेह विचार्यत्वात्। न तु प्रसादपूर्वकगुरूपदेशात्मकप्रदानपर्यन्तधावनम्। तथाऽपि 'सविशेषणे हि' इति न्यायेन गुरुप्रसादप्राबल्य एव तात्पर्यान्न दोषः। न च सूत्रे बलीय इति बलप्रकर्ष एवोक्तः, न तु बलवत्त्वमिति वाच्यम्। प्रदानं न श्रवणादितो दुर्बलं नापि तद्वत् बलवत्, किन्तु बलीयः बलवत्तरमिति ज्ञापनाय प्रयुक्तस्य बलीयःपदस्य बलवत्तरमिति स्मृत्यनुसारेण तथैव व्याख्येयत्वात्। सूत्रे स्मृत्यनुसारेण अर्शआद्यजन्तात् इन्नन्ताद्वा प्रत्ययमाश्रित्य बलवदिति व्याख्यातमित्यदोषः। तर्हि स्मृताविव प्रसादापेक्षया अन्यद्बलवत्साधनं व्युदसितुं बलवत्तरमिति प्रतिज्ञातव्यमिति वाच्यम्। बलवदित्यस्य श्रवणा

( ३ ) तर्हि तावताऽलमिति न मन्तव्यम् । 'श्रोतव्यो मन्तव्यः' ( बृ. ४-४-५. ) इत्यादेस्तदपि कर्तव्यम् ।

( ४ ) वाराहे च—

गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम् ।
तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये ॥ इति ॥ ४५॥

—*—

२८. अधिकरणम् ॥

( १ ) सू—ॐ ॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ॐ ॥ ४६ ॥

---

देः सर्वस्मात् साधनात् बलवत्तरमित्यर्थाभ्युपगमात् । एवशब्दश्च बलवदेवेत्यपि संबध्यते । नाधमं नापि सममित्यर्थसिद्धेः । यद्वा—सूत्रे मत्वर्थे ईयसुन्, स्मृतौ स्वार्थे तरबार्षः ॥

( ३ ) तदपीत्यंशमवतारयति—तर्हीति ॥ गुरुप्रसादस्य प्राबल्ये इत्यर्थः । 'तावता' तावतैव न श्रवणादिना कृत्यमित्येवशब्दार्थः । 'इति' इत्यपि न केवलं प्रसादस्य दौर्बल्यमिति, किन्तु श्रवणादेर्वैयर्थ्यमित्यपि न मन्तव्यमित्यर्थः । कुतो नेत्यतस्तत्र हेतुतया-हि तदपीत्यंशं हिशब्दसूचितश्रुत्युदाहरणपूर्वकं कर्तव्यमिति पदाध्याहारेण च व्याचष्टे—श्रोतव्य इति । 'तदपि' श्रवणादिकमपीत्यर्थः ॥

( ४ ) अत्र स्मृतिमाह—वाराहे चेति ॥ न केवलं सूत्र इति चार्थः। साधनेषु गुरुप्रसादो बलवान्, तस्मात्प्रसादात् 'बलवत्तरं' बलवत्साधनं नास्तीत्यर्थः । यद्यप्येवं, तथाऽपि मोक्षसिद्धये 'श्रवणादिश्च' श्रवणादिरपि कर्तव्य इत्यर्थः । इति वाराहे इत्यस्य सूत्रकृदुक्तमुक्तमित्यध्याहृतेनान्वयः ॥ २७ ॥

॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥

—*—

२८. अधिकरणम् ॥

( १ ) अत्राधिकरणे पूर्वप्राप्तादन्योऽपि गुरुः स्वीकार्य एवेति समर्थ्यते ।

गुरुत्यागे भवेन्मृत्युर्मन्त्रत्यागे दरिद्रता ।
गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत् ॥ इति ॥

गुरुपरित्यागे दोषश्रवणात्, प्रथमप्राप्तपरित्यागे कारणाभावाच्च पूर्व

न च पूर्वप्राप्त एव गुरुरिति नियमः । समग्रानुग्रहं चे
त्पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यात् ।

प्राप्त एव गुरुर्ग्राह्यो नान्य इति प्राप्ते सिद्धान्तयत्सूत्रं पठति—पूर्वेति ॥ अत्र पूर्वविकल्पः स्यादिति साध्यांशं व्याचष्टे—न चेति । किन्तु पश्चात्तनोऽपि स्वीकार्यो भवतीत्येवकारार्थः। अनेन पूर्वविकल्पस्स्यादित्यस्य पूर्वप्राप्ते गुरौ विकल्पो 'नियमः' स एवानुवर्तनीय इति नियमो नास्ति, किन्तु पश्चात्तनोऽपि स्वीकार्यो भवेदित्यर्थ उक्तो भवति। ननु पश्चात्तनस्वीकार वैयर्थ्यमित्यतः प्रवृत्तं प्रकरणादित्यंशं व्याचष्टे—समग्रेति। समग्रानुग्रहमिति प्र इत्यस्यार्थकथनम् । शिष्याज्ञानादिपरिहरणसमर्थं तदपेक्षितार्थोपदेशार्थानुग्रहमित्यर्थः । अनुग्रहमित्यनेन सूत्रे प्रकृष्टानुग्रहकरणमपेक्ष्येति ल्यब्लोपे पञ्चमीत्युक्तं भवति। 'चेत्' यतः पश्चात्तनो गुरुरिति शेषः । प्रकरोतीत्यनेनोपसर्गस्य न केवलं कर्मसमर्पकत्वं, किन्तु क्रियातिशयद्योतकत्वमपीत्युक्तं भवति। तथा च पूर्वगृहीतात्पश्चात्तनो गुरुः यतः समग्रानुग्रहं करोति अतो न तत्स्वीकारवैयर्थ्यमिति सोऽपि स्वीकार्यः, न तु पूर्वप्राप्त एव गुरुरिति नियम इति योजना। इदानीं प्रकरणात्पूर्वविकल्प इत्यंशं पूर्वत्यागे पश्चात्तनस्वीकारे विशेषाभिधानपरतयाऽपि व्याचष्टे—समग्रेति। अस्मिन् पक्षे प्रकरोतीत्यन्तस्य न पूर्वेणान्वयः, किन्तु उत्तरवाक्येनान्वयः। 'चेत्' यदि। पश्चात्तन इत्यनन्तरं समोऽधिकः अधम इति शेषः। 'स्वयमेव' यदृच्छयैव। तदेत्यस्य तत्र त्यागे स्वीकारे चेत्यप्यर्थः। सूत्रे पूर्वविकल्प इत्यस्य पररूपभावाभावयोः अविकल्पो विकल्प इति द्वेधा विच्छिन्नत्वात् भाष्येऽपि विकल्पोऽविकल्प इति द्वेधा विच्छेदः कार्यः। पूर्वानुज्ञयेति शेषः। नेति चानुषज्यते। तथा च पश्चात्तनो यदि पूर्वगृहीतेन समः तदा पूर्वत्यागे पश्चात्तनः समग्रानुग्रहं करोति चेत् पूर्वतनस्त्याज्यः, न चेत् न त्याज्य इति विकल्पः व्यवस्थितप्रकारभेदः स्यात्। एवं समः समग्रानुग्रहं करोति चेत्तदा पूर्वसमस्वीकारे विकल्पः स्यात् पूर्वानुज्ञया स्वीकार्यः। तदभावे 'न वा' न स्वीकार्य एवेति विधिरिति। स्वयमेवेत्यनेन विकल्पश्च यदृच्छया प्राप्तौ, न तु तदर्थं प्रयतितव्यमित्युक्तं भवति। एवं पश्चात्तनोऽधिक उत्तमश्चेत् स च यदि समग्रानुग्रहं न करोति, तदा पूर्वस्मादधिकस्वीकारे 'अविकल्पो' विकल्पो न स्यात्। न स्वीकार्य

(२) मानसक्रियावत् । यथोभयोर्ध्यानयोः समयोः ।
(३) पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि ।
गृह्णीयादविचारेण विकल्पः समयो भवेत् ॥
समग्रानुग्रहाभावात्सत्यकामस्स्वकं गुरुम् ।
ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यते ॥
इति बृहत्तन्त्रे ॥

इति यावत् । एवं पश्चात्तनः पूर्वस्मादधिकः समग्रानुग्रहं करोति चेत् तदा स्वयमेव पूर्वानुज्ञां विना 'अविकल्पः' असंशयः, पूर्वं परित्यज्योत्तमो गुरुस्स्वीकार्यस्स्यात् । एवं पश्चात्तनः पूर्वस्मादधमश्चेत्तदात्यागे 'अविकल्पो' नियमत्याग एव न स्यात् । 'गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचित्' इति वचनात् । पूर्वस्मादधमः समग्रानुग्रहं करोति चेत् स्वीकारे विकल्पः स्यात् पूर्वानुज्ञया ग्राह्य एव स्यात् । यथोक्तं तत्त्वप्रदीपे, अतः सिद्धं समग्रानुग्रहे तूत्तमस्य तदनुज्ञया वरः प्राप्य इतीति योजना ॥

(२) साम्ये विकल्प इत्यत्र सूत्रोक्तं दृष्टान्तमर्थक्रमेण व्याचष्टे—मानसेति ॥ अनेन सूत्रे षष्ठीद्विवचनान्ताद्वतिः । क्रिया धात्वर्थः ध्यायत्यर्थो ध्यानम् । मानसी मनोवृत्तिरूपा च सा क्रिया च कडारादित्वात्परनिपातः इत्युक्तं भवति । मानसक्रियावदिति स्वपदं वर्णयति—यथेति । विकल्पः स्यादिति सम्बन्धः । 'उभयोः' रामकृष्णादिरूपद्वयविषययोः नीलपीतादिरूपद्वयविषययोर्वेत्यर्थः । 'समयोः' फलतः समयोरेव विकल्पः नोत्तमाधमयोरिति ॥

(३) अत्र स्मृतिमाह—पूर्वस्मादिति ॥ यदि 'पूर्वस्मात्' पूर्वगृहीतात् उत्तमो गुरुर्लब्धस्तदा असौ अविचारेणासंशयं स्वयमेव पूर्वानुज्ञां विना गृह्णीयादित्यर्थः । 'समयोः' ज्ञानादितः । पूर्वोत्तरयोरिति च त्यागस्वीकारयोरिति च शेषः । यदि पूर्वस्मादुत्तमोऽविचारेण स्वीकार्यः, तर्हि कथमृषभादयः सत्यकामेन न गृहीताः, प्रत्युत पूर्वतन एव प्राप्तोऽतो नैतद्युक्तमित्यत आह—समग्रेति । 'हि' यस्मात्सत्यकामः ऋषभादीनां एकैकस्मादेव 'समग्रानुग्रहाभावात्' तैस्तदकरणात् ऋषभाद्यनुज्ञयैव 'स्वकं' स्वयोग्ययावदुपदेशकत्वेन स्वयोग्यमेव गुरुं गौतमं 'प्राप' जग्राह, न तूत्तमान्, तस्मात्पूर्वपरित्यागे न समग्रानुग्रहकर्ता उत्तमः समो वा स्वीकार्य इत्येतद्युज्यत इत्यर्थः ॥

(४) समग्रानुग्रहं कश्चित्स्वयमेव समो यदि ।
कुर्यात्पुनश्च गृह्णीयादविरोधेन कामतः ॥
(५) ध्यानयोस्समयोर्यद्वद्विकल्पः कामतो भवेत् ।
एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि च ।
इति महासंहितायाम् ॥ ४६ ॥
(६) सू—ॐ ॥ अतिदेशाच्च ॥ ॐ ॥ ४७ ॥
'ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणु हि तत्त्वामवतु ।
यथा ब्रह्मोपचरेर्यथा मामुपचरेर्य चाऽन्येऽस्मद्विधाः श्रे

---

(४) साम्ये पूर्वानुज्ञापेक्षितेति भावेन तत्र स्मृतिमाह—समग्रेति ॥ यदि पुनः पूर्वस्य ज्ञानादिगुणैः समः कश्चिन्मध्ये प्राप्तो गुरुः स्वयमेव शिष्यप्रयत्नं विनैव प्रसन्नः समग्रानुग्रहं कुर्यात् 'तदाऽविरोधेन' पूर्वानुज्ञया 'कामतो' यथेच्छं गृह्णीयात्तमिति शेषः । पूर्वानुज्ञाऽभावे स्वस्येच्छाभावे च न गृह्णीयादिति भावः ॥

(५) सौत्रदृष्टान्तं स्ववाक्येन विवृतमपि स्मृत्याऽपि विवृणोति—ध्यानयोरिति ॥ ईशरूपद्वयविषयकयोः फलतः समयोः ध्यानयोः 'यद्वत्' यथा 'कामतः' इच्छया व्यवस्थितो विकल्पः स्वापेक्षितान्यतरानुष्ठानं, एवं तथा द्वितीयस्योत्तरस्य पूर्वसमस्य गुरोः 'ग्रहणे' स्वीकारे 'विकल्पः' पूर्वानुज्ञया स्वीकार्यः अन्यथा नेति । एवमिच्छायां स्वीकार्योऽन्यथा नेति । एवं द्वितीयस्य समस्य लाभे पूर्वस्याग्रहणे त्यागे विकल्पः, द्वितीयस्य समग्रानुग्रहकर्तृत्वे पूर्वस्य त्यागोऽन्यथाऽत्याग इति विकल्पस्स्यादित्यपि व्याख्येयम् । बृहत्तन्त्रे महासंहितायां चेत्युभयत्र सूत्रकृदुक्तं उक्तमिति शेषः । अनेन 'गुरुत्यागी' इति दोषवचनस्याधमस्वीकारविषयत्वं वा अनुज्ञाभावविषयत्वं वा समग्रानुग्रहस्याकर्तुः स्वीकारविषयत्वं वेति गतिरुक्ता भवति ॥

(६) हेत्वन्तरेण समोत्तमगुरुस्वीकारं समर्थयत्सूत्रं पठित्वा व्याचष्टे—अतिदेशाच्चेति ॥ दृष्टान्तमुखेन वचनमतिदेशः । तथा च इति श्रुतौ पूर्वगुरुणैव स्वसमोत्तमगुरुस्वीकाराय दृष्टान्तमुखेन शिष्यधर्माणामुपदिश्यमानत्वादित्यर्थः । अतिदेशाच्चेत्यस्य आचार्यादन्यस्यापि समोत्तमेषु शिष्यस्य वृत्त्यतिदेशाच्चोक्तार्थे निश्चय इति तत्त्वप्रदीपदिशा पूर्वविकल्प इत्युक्तार्थनिश्चय इति वाक्यशेषेणान्वयः । 'ब्रह्मोपास्व' तद्विषयकध्यानादिकं कुरु । 'उपचरस्व' पूजय 'तद्धि'

यसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणु हि ते त्वा मवन्तु' इति पौष्यायणश्रुतावतिदेशाच्च ॥ ४७ ॥

———*———

२९. अधिकरणम् ॥

( १ ) न च 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ( गी.३-२०. ) इत्यादिनाऽन्यन्मोक्षसाधनम् ।

सू—ॐ ॥ विद्यैव तु निर्धारणात् ॥ ॐ ॥ ४८ ॥

'तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ( श्वे. ३-८. ) इति निर्धारणाद्विद्ययैव मोक्षः ॥४८॥

---

प्रसिद्धं ब्रह्म शृणु । शृणुहीति छान्दसमेकं वा पदम् । तत् त्वां रक्षतु । यथा ब्रह्मोपासीथाः तथा मामुपास्व, यथा ब्रह्मोपचरेः तथा मामुपचरस्वेति शेषः । यथा मामुपचरेस्तथा येऽन्ये च 'अस्मद्विधाः' अस्मत्समानाः 'श्रेयसो' विभक्तिविपरिणामेन श्रेयांसः तान् श्रेयसोऽस्मदुत्तमांश्च उपास्वोपचरस्वेति शिष्यं प्रति गुरुवाक्यमेतत् । आचार्योपासनं नाम सविनयमन्ते स्थितिः आचार्योपचारोऽभीष्टकरणादिः । 'तेभ्यः' समोत्तमेभ्यः ब्रह्म शृणु 'ते' समोत्तमाः त्वां 'अवन्तु' रक्षन्त्विति तत्त्वप्रदीपदिशा श्रुत्यर्थः ॥ २८ ॥

इति विकल्पाधिकरणम् ॥

———:*:———

२९. अधिकरणम् ॥

( १ ) अत्र नये उपासनस्य कर्तव्यता समर्थनाय ज्ञानमेव मुक्तिहेतुरिति समर्थ्यते । सूत्रगतैवकारसूचितपूर्वपक्षं प्रतिषेधति—न चेति॥ चोऽवधारणे अप्यर्थे च । ज्ञातमिति शेषः । तथा च इत्यादिना वाक्येन मोक्षसाधनत्वेन ज्ञातं ज्ञानात् 'अन्यत्' कर्माद्येव मोक्षसाधनं नेत्यर्थः । यद्वा-'अन्यत्' कर्माद्यपि मोक्षसाधनं नेत्यर्थः । आदिशब्देन 'त्यागेनैके अमृतत्वमानशुः' (महाना.१०.) 'प्रयागमरणेन वा' इत्यादिकं गृह्यते । 'संसिद्धिं' मोक्षं 'आस्थिताः' प्राप्ताः 'जनकादयो' विदेहादयः । इदं गीतावाक्यम् । 'त्यागेन' देवतामुद्दिश्य द्रव्यत्यागेन 'अमृतत्वं' मोक्षं 'आनशुः' प्रापुरिति श्रुत्यर्थः । न चेत्युक्तार्थे हेतुतया सूत्रमुपन्यस्य व्याचष्टे—विद्येति । 'अयनाय' मोक्षार्थं अपरोक्षज्ञानादन्यः 'पन्थाः' उपायो न विद्यते इत्यर्थः । इति निर्धारणादिति । इति

( २ ) सू—ॐ ॥ दर्शनाच्च ॥ ॐ ॥ ४९ ॥

न केवलं विद्यया, किं तु अपरोक्षज्ञानेन च । 'सर्वान् परो मायया ऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण' इति कौशिकश्रुतेः ॥ ४९ ॥

—:*:—

३०. अधिकरणम् ॥

( १ ) सू—ॐ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ॐ ॥ ५० ॥

श्रुतौ अन्यस्य मोक्षसाधनत्वनिवारणादित्यर्थः । यद्वा—निर्णायकवचनादित्यर्थः । सूत्रे मोक्षसाधनमिति शेषः कार्य इति भावेन विद्यैवेत्येतत्तात्पर्यतो व्याचष्टे—विद्ययैवेति । 'मोक्षः' संसारनिवृत्तिरूपः । भवतीति शेषः । भवति यतोऽतो नेत्यन्वयः । सूत्रे 'नान्यःपन्थाः' इत्येवार्थश्रुत्यनुसारेण प्रथमाप्रयोगेऽपि विद्ययैवेति तृतीयाप्रयोगेण 'कर्मणैव' इत्यादिवचनात्सावधारणविद्यावचनस्य प्राबल्यमुक्तं भवति । अनेन सौत्रतुशब्दः प्राबल्यार्थतया व्याख्यातः । कर्मवचनानां गतिस्तु भाक्तनये एव प्रतिपादिता । प्रतिपादयिष्यते चोत्तरत्र ॥

( २ ) ननु यदि विद्या मोक्षसाधनं तर्हि ध्यानवैयर्थ्यं, ज्ञानरूपायाः विद्यायाः श्रवणादेव सम्भवादित्याशङ्कां परिहरत्सूत्रं पठति—दर्शनाच्चेति ॥ अत्र चशब्दः समुच्चये अप्यर्थः । मोक्ष इति शेष इति भावेन सूत्रं व्याचष्टे—नेति । 'विद्यया' परोक्षज्ञप्त्या । सौत्रदर्शनपदार्थमाह—अपरोक्षज्ञानेनेति । मोक्ष इति वर्तते । तथा च दर्शनार्थं ध्यानमावश्यकमिति भावः । नन्वेवं 'विद्वान्' इति परोक्षविद्यया मोक्षश्रवणात्कथमुच्यते दर्शनान्मोक्ष इति, तत्राह—सर्वानिति । विशेषश्रुतिबलात्साऽपि दर्शनार्थेति भावः । अयं 'परः' सर्वोत्तमः हरिः 'सर्वान्' जीवान् 'मायया' स्वेच्छया प्रकृत्या च यतः 'सिनीते' बध्नाति अतः 'तं' यथायोग्यं दृष्ट्वैव मुच्यते बन्धात्, नान्येन परोक्षज्ञानमात्रेण नान्यपुरुषदर्शनेन, अन्यस्य बन्धमोचनशक्तस्याभावादिति वा श्रुत्यर्थः । श्रुतेरित्यनेन न केवलं ब्रह्मदर्शनादित्यर्थः, किन्तु श्रुतेरित्यप्यर्थ इत्युक्तं भवति ॥ २९ ॥

॥ इति विद्याधिकरणम् ॥

—*—

३०. अधिकरणम् ॥

( १ ) अस्मिन्नधिकरणे यत्साधनं भगवदुपास्तिः तस्य ज्ञानस्य

सावधारणा बलवती श्रुतिः ।
इन्द्रोऽश्वमेधांच्छतमिष्ट्वाऽपि राजा
ब्रह्माणमीड्यं समुवाचोपसन्नः ।
न कर्मभिर्न धनैर्नैव चान्यैः
पश्येत् सुखं तेन तत्त्वं ब्रवीहि ॥ इति बलवल्लिङ्गम् ।
'नास्त्यकृतः कृतेन' (मु. १-२.) इत्युपपत्तिश्च ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।

---

मोक्षसाधनत्वं समर्थ्यते । 'कर्मणैव' इति वचनात् कर्मसाध्य एव मोक्ष इति प्राप्ते सिद्धान्ताभिधानाय सूत्रं पठति—श्रुत्यादीति ॥ अत्र मत्वर्थे ईयसुन् । श्रुत्यादिबलीयस्त्वादित्यस्य श्रुतिलिङ्गोपपत्तिस्मृतीनामतिबलवत्त्वात्। बलवच्छ्रुत्यादेरिति यावत्। इत्यर्थमभिप्रेत्य बलीयस्त्वे हेतुप्रदर्शनपूर्वकं सूत्राभिप्रेतां श्रुतिं, आदिपदसूचितप्रमाणानि च दर्शयति—सावधारणेति । 'तमेवम्' इति 'दृष्ट्वैव' (कौशिक. ) इति श्रुतिः 'कर्मणैव' इति स्मृतेर्बलवती यतः 'सावधारणा' निरवकाशेतरव्यवच्छेदरूपाऽवधारणेन युक्ता अत इत्यर्थः । यद्यपि 'तमेवम्' ( श्वे. ३-८. ) इति श्रुतावधारणं न श्रूयते, तथाऽपि 'नान्यः पन्थाः' ( श्वे. ३-८. ) इत्यवधारणार्थप्रतीतेः, 'दृष्ट्वैव' इत्यत्र च साक्षादवधारणश्रुतेः सावधारणेत्युक्तम् । राजा इन्द्रः शतसङ्ख्याकानश्वमेधाख्यक्रतून् कृत्वा ईड्यं ब्रह्माणं उपसन्नस्समुवाच । किमिति ? हे ब्रह्मन् अहं 'कर्मभिः' अश्वमेधाद्यैः धनैः 'अन्यैः' तपआदिभिः सुखं 'न पश्येत्' पश्येयं न पश्यामि । पश्य इति पाठोऽप्यस्ति । तदा पदव्यत्ययः । आद्यपाठे पुरुषव्यत्ययः । ( यद्वा–इन्द्रः पश्येदिति परोक्षनिर्देशः। द्रोणं प्रति भीमवचनमेतत्)। यत एवं 'तेन' कारणेन तदर्थं दुःखासंभिन्नसुखरूपमोक्षार्थं 'तत्त्वं' मोक्षसाधनज्ञानविषयं ब्रवीहीति श्रुत्यर्थः। इति बलवदिति । इत्युक्तं मोक्षस्य ज्ञानसाध्यत्वे अव्यवहितं लिङ्गं बहुकर्मकृतोऽपीन्द्रस्य दुःखासम्भिन्नसुखरूपमोक्षार्थं तत्त्वज्ञानस्य प्रार्थनरूपज्ञापकं स्मृतेर्बलवत् निरवकाशत्वरूपप्राबल्योपेतमित्यर्थः । इत्युपपत्तिरिति । इति श्रुतिबोध्या कार्यत्वे सत्यन्यासाध्यत्वादिलक्षणरूपा मोक्षस्य ज्ञानैकसाध्यत्वे साक्षादुपपत्तिश्च स्मृतेर्बलवतीति सम्बन्धः । व्यभिचारादिदूषणशून्यत्वात् श्रौतत्वाच्चेति भावः । लिङ्गोपपत्त्योरुभ

तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
इति युक्तिमद्भगवद्वचनम् । अतो न प्रमाणान्तरबाधः॥
( २ ) 'कर्मणैव' ( गी. ३-२०. ) इत्ययोगव्यवच्छेदः ॥ ५० ॥

—*—

३१. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अनुबन्धादिभ्यश्च ॥ ॐ ॥ ५१ ॥

योः श्रौतत्वेऽपि मोक्षस्य ज्ञानैकसाध्यत्वे साध्ये व्यवहितत्वाव्यवहितत्वाभ्यां भेदः । श्रुतिस्तु जिज्ञासानये व्याख्याता । यस्मात् 'जन्तुः' शरीरी काम्येन कर्मणा बध्यते 'विद्यया च' अपरोक्षज्ञानेनैव विमुच्यते, तस्मात्कर्म न कुर्वन्ति 'यतयो' निगृहीतेन्द्रियाः 'पारदर्शिनः' संसृतेः पारभूतस्य ब्रह्मणो दर्शिन इति गीतास्मृत्यर्थः । इतीति । इति वचनं स्मृतेर्बलवत् कर्मणो बन्धकत्वमुमुक्षुर्वाक्रियमाणत्वरूपयुक्तियुक्तत्वादित्यर्थः । भगवद्वचनमित्यनेन पूर्वपक्षिणा भगवद्वाक्यत्वादित्युक्तहेतोस्साम्यम् । ततश्च तस्य सावकाशत्वमुक्तं भवति । प्रथमान्तानां अस्तीत्यध्याहृतेनान्वयः । ततः किमित्यतः साध्यसम्बन्धं दर्शयति—अत इति । बलवच्छ्रुत्यादेः सत्त्वादित्यर्थः । नेति । प्रमाणान्तरेण स्मृतिवचनेन बाधो नत्यर्थः । विद्यैव मोक्षसाधनमित्युक्तस्येति शेषः ।

( २ ) नन्वेवं चेत् 'कर्मणैव' इति स्मृतिरप्रमाणमेवेति प्राप्तमित्यतः चशब्दसूचितार्थमाह—कर्मणेति । क्रियत इति शेषः । 'कर्मणैव' इति वाक्यगतैवकारेण कर्मायोगस्य तदसम्बन्धस्य व्यवच्छेदो निरासः क्रियते बोध्यत इत्यर्थः । तथा च जनकादयः 'कर्मणा सह' कर्म कुर्वन्त एव 'संसिद्धिं' मुक्तिं 'आस्थिताः' प्राप्ता इति न तस्याप्रामाण्यमिति भावः । उपलक्षणमेतत् । कर्मणा संसिद्धिमास्थिता एवेत्यपि योजनासम्भवेन नासौ निरवकाश इत्यपि द्रष्टव्यम् । अनेन परकीयस्मृतेः सावकाशत्वाच्चेति सौत्रचशब्दार्थ उक्तो भवति ॥ ३० ॥

॥ इति श्रुत्यधिकरणम् ॥

३१. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मज्ञानसाधनस्योपासनस्य भक्तिपूर्वकत्वं समर्थ्यते । प्रबलगुरुप्रसादेनैव ब्रह्मदर्शनसम्भवान्न तदर्थं भक्त्यादिकमपेक्षितमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अनुब

न केवलं श्रवणादिभिः गुरुप्रसादेन च ब्रह्मदर्शनम् ।
किन्तु भक्तयादिभिश्च ।
( २ ) सर्वलक्षणसम्पन्नस्सर्वज्ञो विष्णुतत्परः ।
यद्गुरुस्सुप्रसन्नस्सन् दद्यात्तन्नान्यथा भवेत् ॥
तथाऽप्यनादिसंसिद्धभक्तयादिगुणपूगतः ।
लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत् ॥ इति ॥

न्धेति ॥ सूत्रे पूर्वस्मादनुवृत्तस्य चशब्दस्यार्थमाह—न केवलमिति । श्रवणमननादिभिः दर्शनासम्भवेऽपि प्रबलगुरुप्रसादादिना तत्सम्भव तीत्याशङ्कावारणाय गुरुप्रसादस्य पृथङ्निर्देशः । प्रसादेनापीत्यर्थः । 'ब्रह्मदर्शनं' भवतीति शेषः । अनेन सूत्रे दर्शनाश्चेत्यतो विपरिणामे न दर्शनमित्यनुवर्तनीयमित्युक्तं भवति । अनुबन्धादिभ्य इत्यत्र अनुब न्धशब्दार्थमाह—भक्तीति । 'अनुबन्धस्तु भक्तिस्स्याद्बन्धस्नेह उदा हृतः' इत्यभिधानात् । 'अनुबन्धो' माहात्म्यज्ञानानुसारिस्नेहरूपभ क्तिरित्यर्थः । अनुबन्धशब्देन हरिगुरुभक्तयोरुभयोर्ग्रहणमिति सूच नाय भक्तीति सामान्यनिर्देशः । आदिपदेन शमदमादयो गृह्यन्ते । तृ तीयापञ्चम्योरेकार्थत्वान्न सूत्रभाष्ययोर्विसंवादः शङ्क्यः । सूत्रे भाष्ये च तैर्विना तदसिद्धेरिति हेतोः सिद्धत्वादनुक्तिः ॥

( २ ) ननु नियामकाभाव इत्यतोऽत्रार्थेऽनुवृत्तचशब्दसूचितस्मृ तिमाह—सर्वेति । स्वयोग्यषण्णवत्यङ्गुलत्वादिलक्षणसम्पन्नः स्वयो ग्यसार्वज्ञ्योपेतः 'विष्णुतत्परो' विष्णुभक्तिमान् गुरुः सुप्रसन्नस्सन् शिष्याय 'यद्द्यात्' उपदिशेत् 'तदन्यथा' फलविसंवादि न भवे दित्यर्थः । यद्यपि बलवद्गुरुप्रसादादेव दर्शनं भवति । तथाऽपि भक्तया द्यपेक्षितमिति शेषः । कुत इत्यत आह—अनादीति । यदनादिकाला त्संसिद्धं स्वतः सिद्धमव्यक्तं भक्त्यादि स एव गुणपूगः गुणसमुदा यः तस्माद्गुरुप्रसादं लभेदित्यर्थः । चशब्दाद्धरिप्रसादं चेति सूचयति । यत इति शेषः । तर्हि भक्तयादिकं हरिगुरुप्रसादार्थमेव, न ज्ञानार्थं स्यादित्यत आह—तस्मादेवेति । 'तस्मात्' अभिव्यक्तभक्तयादेरेव 'तत्' अपरोक्षज्ञानं भवेदित्यर्थः । तर्हि भक्तयादि ज्ञानसाधनमेव न गुरुप्रसादस्येत्यतोऽप्याह—तस्मादिति । 'तस्मात्' भक्तयादेरेव त द्गुरुप्रसादादि भवेदित्यर्थः । न च भक्तयादेरुभयसाधनत्वमयुक्तमिति

( ३ ) भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।
दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः ॥
तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत् ॥
इति च नारायणतन्त्रे ॥ ५१ ॥

---

३२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ ॐ ॥ ५२ ॥

उपासनाभेदवत्तद्दर्शनभेदः ।

---

वाच्यम् । यतोऽनादिसिद्धाव्यक्तभक्त्यादिना गुरुप्रसादः तेन भक्त्या द्यभिव्यक्तिः अभिव्यक्त्यादिना च ज्ञानमित्यभ्युपगम्यते ॥

( ३ ) भक्त्यादिगुणपूगत इत्यत्रादिशब्दोक्तं तस्मादिति सामान्येनोक्तं च स्पष्टयति—भक्तिरिति ॥ विष्णौ गुरौ च स्वरूपभूतानादिसिद्धा या भक्तिः यश्च शमदमादिस्तत्सर्वं गुरोर्नित्यप्रसन्नतां दद्यात्। तेन गुरुप्रसादेन च पुनरेते भक्त्यादिगुणाः व्यक्ता भवन्ति । व्यक्तैस्सर्वैस्तैर्भक्त्यादिभिः विष्णोर्दर्शनं भवेत् । न चैतावता श्रवणादिवैयर्थ्यमित्याह—श्रवणादिकृतमिति । दर्शनं श्रवणादिभिः साधनैश्च कृतं भवति । ‘ तस्मादेव च तद्भवेदिति ’ इति प्रथमेतिशब्दस्य ‘ श्रवणादिकृतं भवेदिति ’ इति द्वितीयेतिशब्दस्य च इति नारायणतन्त्र इत्यनेनान्वयः । सूत्रकृदुक्तमुक्तमिति शेषः ॥ ३१ ॥

॥ इति अनुबन्धाधिकरणम् ॥

---

३२. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनासाध्यज्ञाने विशेषतारतम्यं समर्थ्यते । ‘दृष्ट्वैव तम्’ ( कौशिक. ) इति श्रुतावविशेपितज्ञानेनैव मोक्षोक्तेः सर्वेषां ज्ञानमेकप्रकारमेवेति पूर्वपक्षे सिद्धान्तयितुं सूत्रं प्रवृत्तं-प्रज्ञान्तरेति ॥ अत्र प्रज्ञान्तरपृथक्त्ववदित्यनेन दृष्टान्तोक्तिमुखेन हेतुरुच्यत इत्याशयेन तत्पदं व्याचष्टे—उपासनेति। चशब्दोऽवधारणे, पृथगित्यस्यानुकर्षणार्थश्चेति भावेन दृष्टिश्चेति साध्यांशं व्याचष्टे—दर्शनभेद इति। अनेन प्रज्ञान्तरं प्रज्ञाविशेषः लिङ्गशब्दजन्याविच्छिन्नपरोक्षज्ञानसन्ततिरूपध्यानं तस्य पृथक्त्ववत् भेदवदनेकप्रकारवत्त्ववत् तदनुसारेण ‘दृष्टिः’ ब्रह्मदर्शनं च पृथक् भिन्नमनेकप्रकारमेव, फलस्य साधनानुसा

( २ ) तच्चोक्तं कमठश्रुतौ । 'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतार दृष्टयस्सर्वदृष्टय इति । तेषां वाव सर्वदृष्टयस्तेषु चो त्तरोत्तरमाब्रह्मणोऽन्येषु यथायोगं यथा ह्याचार्या आचक्षते' इति ।

---

रित्यादिति सूत्रखण्डार्थ उक्तो भवति । न च ध्यानस्य परोक्षज्ञानस न्ततिरूपत्व 'मानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानम्' इति सुधाविरोधः, 'क्रियामानसवत्' इति क्रियात्वविरोधश्चेति श ङ्क्यम् । परमात्मविषये परोक्षत्वेऽपि तदधिष्ठानभूतवासनामयरूपवि षये अपरोक्षत्वसम्भवात् । न च परमात्मांशे उपनीतभानरूपत्वान्न प रोक्षत्वमिति वाच्यम् । उपनीतांशेऽपि लौकिकापरोक्षप्रत्यासत्त्यज न्यत्वेन श्रवणादिरूपपरोक्षज्ञानोपनीतविषयत्वेन वा परोक्षत्वाभ्युपग मात् । केचित्तु—गुणादिध्यानमप्यत्र विवक्षितमिति तदंशे परोक्षत्वं युक्तमित्याहुः । तन्न, तस्यापि स्मृतिरूपस्य मनोजन्यत्वेन परोक्षत्वानु पपत्तेः । ध्यायत्यर्थत्वेन क्रियार्थत्वसम्भवान्न तद्विरोधः ॥

( २ ) ननु साधनपृथक्त्वेऽपि साध्यपृथक्त्वं मा स्तु, साध्यसाम्य मेव किं न स्यादित्यतस्तदुक्तमित्युक्तं सूत्रे, तद्व्याचष्टे ॥ तच्चोक्तमि ति ॥ चो भिन्नक्रमः । अनेन सूत्रे चशब्दः उक्तं चेत्यपि संयोज्यः । त था च न केवलं तद्दर्शनपृथक्त्वं साधनपृथक्त्वयुक्तिसिद्धम्, किन्तु श्रुत्युक्तं चेति सूत्रखण्डार्थ उक्तो भवति । केचित् शरीरान्तर्ब्रह्मोपास काः, अत एव तत्र ब्रह्मदर्शिनः । केचित् बहिरग्न्याद्यधिष्ठाने ब्रह्मोपा सकाः, तत्रैव तद्दर्शिनश्च । केचित् अवतारोपासकाः, अत एव दिव्य दृष्ट्या रामकृष्णाद्यवतारदर्शिनः । केचित् व्याप्तोपासकाः, तत एव 'सर्वदृष्टयो' व्याप्तदर्शिनः । यद्यपि सर्वेषामन्तर्बिम्बदर्शनमपेक्षितमे व, तस्य मोक्षार्थत्वादिति सुधोक्तेः । तथाऽपि प्राचुर्यापेक्षया एवमु क्तिः । उपासात्रैविध्योक्तिरपि प्राचुर्यापेक्षयैव । अन्यथा एषां बहिरु पासनेन मोक्षः तेषां ह्युपासनं किञ्चित्कार्यमेवेति बृहद्भाष्यविरोधापा तात् । भावबोधे तु केचिदधिकारिणोऽवताराणां दिव्यदृष्ट्या दर्शनेनै व मुच्यन्ते, न तेषामन्तरुपास्तिरावश्यकी, बृहद्भाष्यं तु अवतारदृष्टि विशेषार्थमेवावान्तरोपास्त्यावश्यकतापरं, अत एव 'अञ्जसा दृष्ट्यैव ह्यवताराणाम्' इत्युक्तम् । इतीति । श्रुतिः व्याख्येयपदानि स्वयमेव

( ३ ) अध्यात्मे च—

दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनान्तरेणान्ये देवास्सर्वत्र दर्शनात् ॥

---

प्रतीकत्वेन गृह्णाति । तत्र प्राधान्यक्रमानुसारेण व्याप्तदृष्टीन् प्रथमतः निर्दिशति—देवा इति । 'तेषु' देवेष्वपि 'आब्रह्मणः' चतुर्मुखपर्यन्तं 'उत्तरोत्तरं' अधिकं व्याप्तदर्शित्वं ज्ञेयमित्यर्थः । तत्प्रकारश्च 'ब्रह्मा तु सर्वगं पश्येत्' इत्यादिनोक्तः । अवतारादिदर्शिनः के ? तेषां च कथं स्थितिरित्याशङ्कायामाह—अन्येष्विति । अवतारादिदर्शिष्विति त्यर्थः । 'यथायोगं' योग्यतानुसारेण व्यक्तिविशेषो निर्णतव्य इति शेषः । यद्वा—अन्येष्वपि यथायोगं उत्तरोत्तरमाधिक्यं ज्ञातव्यमित्यर्थः। ननु योग्यतैव कथं ज्ञायत इत्यत आह—यथेति । 'आचार्याः' गुरवो यथा 'आचक्षते' उपदिशन्ति त्वमेतद्रूपदर्शनयोग्यस्त्वमेतद्रूपदर्शनयोग्य इति तथेत्यर्थः ॥

( ३ ) ननु यद्यस्ति दर्शनभेदः, तर्हि न सर्वेषां मोक्षस्स्यात्, सम्पूर्णज्ञानेनैव मोक्षस्य 'तमेवं, दृष्ट्वा' इत्यादौ प्रमितत्वादित्यतस्तदुत्तरत्वेनापि तदुक्तमित्येतद्व्याचष्टे—अध्यात्मे चेति । अध्यात्माख्यग्रन्थेपि तद्दर्शनपृथक्त्वमुक्तमित्यर्थः । तद्वाक्यं पठति—दृष्टेति । दिव्यदृष्ट्येत्यर्थः ।

प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति ।
तदैव मुच्यते योगी ॥ इति काठकभाष्योक्तेः ।

तथा च केचिन्मनुष्याः 'अवताराणां' रामकृष्णादिरूपाणां 'अञ्जसा दृष्ट्या' दिव्यदृष्ट्यादर्शनेनैव मुच्यन्ते इत्यर्थः । एवकारस्त्वयोगव्यवच्छेदकः । भावबोधपक्षेऽधिकारिविशेषापेक्षयाऽन्ययोगव्यवच्छेदकः । केचित् ऋषयः 'आन्तरेण' हृदयान्तर्गतेन दर्शनेन मुच्यन्ते । सर्वत्र स्थितस्य ब्रह्मणो दर्शनाद्देवा मुच्यन्त इत्यर्थः । 'तेषां' अधिकारिणाम् । यद्वा–'तेषां' देवानां 'विशेषं' तारतम्यं योग्यताविशेषं वा सर्वज्ञतां 'गतः' प्राप्त आचार्यो 'वेत्ति' जानातीत्यर्थः । अनेन 'विद्वान्, दृष्ट्यैव' इत्यादेः न सम्पूर्णतो जानन् दृष्ट्यैवेत्यर्थः, किन्तूदाहृतविशेषवाक्यबलाद्यथायोग्यमित्यभ्युपगमात् न तद्विरोध इत्युक्तं भवति । 'यावान्' इति वाक्यं चतुर्मुखविषयं सामान्यतः सार्वज्ञ्यविवक्षया सर्वविषयं

तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः ॥ इति ॥ ५२ ॥

——:※:——

३३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ॐ ॥ ५३ ॥

---

येति ध्येयम् । इतीत्यस्याध्यात्म इत्यनेनान्वयः ॥ ३२ ॥

॥ इति प्रज्ञान्तराधिकरणम् ॥

——※——

३३. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनस्य बिम्बशब्दितयोग्यात्मरूपविषयकस्यैव मुक्तिसाधनत्वं समर्थ्यते । भगवतस्सर्वरूपेष्वपि मोक्षदातृत्वगुणसाम्यात् यत्किञ्चिद्रूपदर्शनमेव मोक्षसाधनं न बिम्बविषयमेवेति नियम इति प्राप्ते सिद्धान्तयितुं प्रवृत्तं सूत्रं—न सामान्यादिति ॥ अत्र 'सामान्यात्' साधारणात् उपलब्धेरिति सामानाधिकरण्यम् । लिङ्गव्यत्ययः शब्दस्वभावकृतः । यद्यपितथाऽपीत्यर्थे मात्रार्थे चापिशब्दः । उपलब्धेरपीत्यन्वीयते । मुक्तिरिति प्रकृतत्वात्सम्बध्यते । तथा च यद्यपि भगवद्रूपाणां सामान्यं साम्यं, अत एव तद्विषयकदर्शनानामपि समानत्वम् । तथाऽपि 'सामान्यायाः' समानब्रह्मरूपविषयत्वेन स्वयोग्यरूपदर्शनेन समानतया वर्तमानायाः उपलब्धेरपि यत्किञ्चिद्रूपदर्शनमात्रात् तस्मादेव सर्वेषां न मुक्तिरित्यर्थः । यद्वा—उपलब्धेः दर्शनस्य साम्यात् साधारणविषयत्वात् न तस्या मुक्तिरित्यर्थः । अथवा-ल्यब्लोपनिमित्ता पञ्चमीयम् । तथा च सामान्यमपेक्ष्य रूपसामान्यं विषयीकृत्य सत्या उपलब्धेः दर्शनान्न मुक्तिरित्यर्थः । एतत्कल्पद्वये सामान्यादुपलब्धेरिति वैयधिकरण्यमिति भावेन सामान्यादप्युपलब्धेरिति प्रतिज्ञांशं व्याचष्टे-नेति । अपि तु स्वयोग्यात्मदर्शनादेवेति शेषः । तेनापीत्यस्यापि त्वित्यर्थाश्रयणेन उपलब्धेरित्यस्यावृत्त्या च अपि तु उप समीपे योग्यतया वर्तमानस्य बिम्बरूपस्य लब्धेर्दर्शनादेवेति सूत्रे प्रतिज्ञाशेषः प्रदर्शितो भवति । कुतो नेत्यतः तत्रोपलब्धेः सामान्यात् साधारणत्वादिति हेतुं उपलब्धेरित्यनेनोक्तं

मुक्त्यर्थमात्मयोग्यं तु विज्ञानं तदुदाहृतम् ।
समोऽपि भगवान् बिम्बदर्शनयैवैनं मोचयति ॥ (        )

न सामान्यदर्शनमात्रेण मुक्तिः । यथा मृत्युमात्रात् ।

(२) न हि लोकापत्तिमात्रं मुक्तिः ।

(३) सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात् ।

---

इत्यादिश्रुतेरिति हेतुं मनसि निधाय सामान्यमात्रान्न मुक्तिरित्यत्र दृष्टान्तप्रतिपादनायोक्तं मृत्युवदित्यंशं व्याख्याति—यथेति । मृत्युमात्रादिति । मृतिमात्रादित्यर्थः । न मुक्तिरित्यनुषज्यते । तथा च यथा ब्रह्मज्ञानिनां सर्वमृतौ मृतित्वसाम्येऽपि न 'मृत्युमात्रात्' साधारणमृतेरनन्तरं मुक्तिः, किन्तु प्रारब्धकर्मक्षये चरममृत्यनन्तरमेव, तथा प्रकृतेऽपि रूपविशेषज्ञानादेव मुक्तिः, न साधारणादित्यर्थः । यद्वा—मृत्युशब्देन मारक उच्यते । संसृतेरिति शेषः । तथा च यथा ब्रह्मज्ञानिनां ज्ञाने संसारमृत्युत्वे समानेऽपि ज्ञानरूपमृत्युमात्रादनन्तरं न मुक्तिः, किन्तु प्रारब्धकर्मावसानकालीनत्वविशेषितान्मृत्योरवतरणानन्तरमेव, एवं भगवद्रूपाणां साम्येऽपि रूपविशेषज्ञानमेव मोक्षसाधनं, न सामान्यदर्शनमित्यर्थः । 'समोऽपि' इति श्रुतौ बिम्बशब्दो योग्यात्मपरः । न तु

हृदिस्था या हरेर्मूर्तिः जीवो यत्प्रतिबिम्बकः ।
यद्वशे वर्तते जीवः सा तु जीवकला स्मृता ॥

इत्युक्तहृद्गतरूपविशेषपरः । 'दृष्ट्वैव' इति वाक्यविरोधात् । जीवः कलांशो यस्यासौ जीवकला ॥

(२) ननु यदि सामान्यदर्शनान्न मुक्तिः, तर्हि तद्वैफल्यं स्यात् । न च ब्रह्मदर्शनस्य तद्युक्तं, अतः सफलत्वेऽवश्यंभाविनि यत्तस्य फलं स एव मोक्ष इति सामान्यदर्शनमपि मुक्तिसाधनं भवतीत्यतः प्रवृत्तं—न हि लोकापत्तिरित्यंशं व्याचष्टे—न हीति ॥ 'लोकापत्तिमात्रं' महदादिलोकप्राप्तिरेवेत्यर्थः । अनेन लोकापत्तिरित्यनन्तरमप्यपिशब्दोऽनुषञ्जनीयः । स चावधारणार्थमात्रार्थः । तथा च न सामान्यदर्शनस्य वैफल्यं शङ्क्यम् । यतः सामान्यादप्युपलब्धेर्लोकापत्तिः भवति अतः। न चैवं तस्य मोक्षसाधनत्वापत्तिः । 'हि' यतो न लोकापत्तिरेव मोक्ष इति 'हि' प्रसिद्धमत इति सूत्रांशयोजनोक्ता भवति ॥

(३) ननु सामान्यदर्शनेन लोकापत्तिरेव न मुक्तिरिति कुत इत्यतो हिशब्दसूचितप्रमाणमाह—सामान्येति ॥ योग्यात्मदर्शनातिरिक्तावतारादिदर्शनादित्यर्थः । 'लोकाः' महदादयः । योग्येति । स्वयोग्य

इति नारायणतन्त्रे ॥

( ४ ) मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया ।

इति च ।

( ५ ) दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केन चित् ॥

इति चाध्यात्मे ॥ ५३ ॥

३४. अधिकरणम् ॥

( १ ) 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः

---

परमात्मरूपदर्शनादित्यर्थः । भवन्तीति शेषः । नारायणतन्त्रे उक्तत्वादिति शेषः । अस्य न हीत्यनेनान्वयः । न च 'दृष्ट्वैव' इत्युक्तिविरोधः । तस्याधिकारिविशेषविषयत्वात् अधिकारिविशेषाणां च अवतारदर्शनस्य सामान्यदर्शनत्वाभावात् , एवकारस्यायोगव्यवच्छेदार्थाभ्युपगमाद्वा ॥

( ४ ) ननु यथा भगवद्दृष्टीनां मध्ये योग्यात्मदृष्टिरेव मुक्तिहेतुः, न तु रूपान्तरदृष्टिरिति विकल्पः, तथा योग्यात्मदर्शनेऽपि किञ्चिन्मुक्तिहेतुः किञ्चिन्नेति विकल्पः स्यादित्यत आह—मुच्यत इति । तुरेवार्थे । स्वात्मयोग्यया दृष्ट्या मुच्यत एव नात्र संशय इत्यर्थः । इति नारायणतन्त्र इत्यन्वयः । भिन्नप्रकरणस्थत्वात् पुनरितिशब्दः ॥

( ५ ) ननु सामान्यदर्शनेन यथा लोकापत्तिः तथा क्वचिन्मुक्तिश्च किं न स्यादित्यत आह—दर्शनेनेति ॥ 'आत्मयोग्येन' स्वयोग्यरूपविषयकेन दर्शनेनैव मुक्तिः 'नान्येन केन चित्' सामान्यदर्शनादिनेत्यर्थः । अवतारदर्शनमपि केषांचित् स्वयोग्यमिति न तदत्र व्यावर्त्यमिति न 'दृष्ट्वैव' इत्यनेन विरोधः । यद्वा—मुक्तिर्नान्येनेत्यनेन अवतारादिदर्शनस्याव्यवधानेन मुक्तिसाधनत्वं निषिध्यते । 'दृष्ट्वैव' इत्यत्र तु व्यवधानेन तदुच्यते । अतो न विरोधः । यथोक्तं गीतातात्पर्ये ।

दृशिः—नियमेनैव मोक्षाय भवेद्योग्या भवेद्यदि ।

अयोग्या भक्तिजाता चेत् क्रमान्मुक्तिर्भवेत्तया ॥ इति ॥

इत्यध्यात्मे च सूत्रकृदुक्तमुक्तमिति शेषः ॥ ३३ ॥

॥ इति न सामान्याधिकरणम् ॥

---

३४. अधिकरणम् ॥

( १ ) अत्राधिकरणे 'अनुबन्धादिभ्यः' इत्यत्र दर्शनसाधनतयो

पुरुषो भक्तिरेव भूयसी ' इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेत्—

(२) न, ' तस्यैष आत्मा विशते ब्रह्मधाम ' ( मु. ३-२-४. ) इति श्रुतेः।

(३) कथं तर्ह्येषा श्रुतिः।

सू—ॐ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ॐ ॥५४॥

पासनसाहित्येनोक्तभक्तेः स्वातन्त्र्यं निरस्यते। पूर्वपक्षयति—भक्तिरिति ॥ भक्तिरेव ' एनं ' परमात्मानमधिकारिणं नयति, न त्वन्यदित्यर्थः। यद्वा—' तयैवेनं वशं न येत् ' इति स्मृत्यनुसारेण भक्तिरेवैनं परमात्मानं वशं नयतीत्यर्थः। ' एनं ' विष्णुं भक्ताय दर्शयति। पुरुषो हरिभक्तिवशो भक्तयधीनः ' भूयसी ' साधनेषु श्रेष्ठा। इति श्रुतेः ' परमात्मना ' तत्प्रसादेन ' दर्शनं ' दर्शनादि ब्रह्मसाक्षात्कारादि न भवतीति ज्ञायत इत्यर्थः ॥

(२) सिद्धान्तयति—नेति ॥ परमात्मना दर्शनादि नेति न, किन्तु तेनैव दर्शनादि भवतीत्यर्थः। कुत इत्यतस्तत्र हेतुत्वेन चशब्दसूचितां श्रुतिमाह—तस्येति। आथर्वणे—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥
एतैरुपायैर्यतते यस्तु विद्वान् ॥ ( मु. ३ - २ - ३. )

इति पूर्ववाक्ये अयं परमात्मा भक्तिरहितैः प्रवचनमेधाश्रवणादिभिः न लभ्यते भक्तिपूर्वकैरपि स्वातन्त्र्यान्न लभ्यः, किन्तु ' एतैः ' भक्तिप्रधानकैः प्रवचनाद्युपायैः ' यो ' ब्रह्मदर्शनार्थं यतते इत्युक्तः, तस्याधिकारिणः एतैः प्रसन्नः परमात्मा ' ब्रह्मधाम ' परब्रह्माधिष्ठानभूतं वायुं ' विशते ' तत्र तस्याविर्भवतीत्यर्थः। 'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः ' इत्याथर्वणभाष्योक्तेः। तत्त्वप्रदीपे तु ब्रह्मपुरं हृदयं 'एषः ' परमात्मा ' विशते ' तत्र दृश्यते इत्युक्तम् ॥

(३) यदि परमात्मनैव दर्शनादि कथं तर्हि भक्तेरेव तत्साधनत्वाभिधायकश्रुतिरुपपद्यत इति शङ्कते—कथमिति ॥ ' एषा ' भक्तेः कर्तृत्वाभिधात्री ' भक्तिरेवैनम् ' इति श्रुतिः कथमुपपद्यत इत्यर्थः। तत्परिहाराय सूत्रं पठित्वा व्याचष्टे—परेण चेति। एवकारो भिन्नक्र

परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते ।

(४) मायावैभवे च—

भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥

मः । अत्रेति शेषः । परमात्मा भक्त्यैव 'दर्शनं प्राप्य' दर्शनविषयो भूत्वा मुक्तिं ददातीति हेतोः अत्र 'एतैरुपायैः' इति श्रुतौ भक्तिः करणत्वेनोच्यते यतोऽत एषा श्रुतिरुपपद्यत इति योजना । करणे कर्तृत्वोपचार इति भावः । ननु साधनान्तराण्यनुक्त्वा किं विशिष्याभिधीयते 'भक्तिरेवैनम्' इतीत्यत आह—प्रधानसाधनत्वादिति । साधनेषु प्रधानत्वादित्यर्थः । भक्तिः करणत्वेनोच्यत इत्यत्र भक्त्यैव मुक्तिं ददातीत्ययं हेतुः । इतिशब्दस्य भक्तिरित्यप्यन्वयेन ज्ञापितायां विशिष्योच्यते इति प्रतिज्ञायां प्रधानसाधनत्वादित्ययं हेतुः । अनेन भूयस्त्वादित्यस्यार्थ उक्तो भवति । सूत्रे चोऽप्यर्थोऽवधारणार्थश्रुतिसूचकश्च । प्रधानसूत्रात्तदुक्तमित्यनुवर्तते । तथा च 'अपि' यद्यपि 'एतैरुपायैः' इति श्रुतेः 'परेण च' परमात्मनैव तद्दर्शनादिकं, न तु भक्त्या । तथाऽपि 'भक्तिरेनम्' इति श्रुतेः 'ताद्विध्यं' ईश्वरकर्तृत्वश्रुतिवत्कर्तृताप्रतिपादकत्वमुपपद्यते । कथम्? यतः 'अनुबन्धस्य' भक्तेः 'एतैः' इति श्रुतौ तत्करणत्वमुक्तमतः । तथा च करणे कर्तृत्वोपचार इति भावः । मुख्यकर्तृत्वाङ्गीकारे तु 'एतैरुपायैः' इति निरवकाशविशेषश्रुतिविरोध इति तुशब्दाभिप्रायः । न च साधनान्तराणि विहाय किं विशिष्याभिधीयते 'भक्तिरेनम्' इति श्रुतावनुबन्धो भक्तिरिति वाच्यम् । तस्याः 'भूयस्त्वात्' साधनेषु प्रधानत्वादिति सूत्रार्थः ॥

(४) अत्रैव स्मृतिमाह—मायेति ॥ मायावैभवाख्यग्रन्थ इत्यर्थः । भक्तौ तिष्ठतीति भक्तिरत्र तिष्ठतीति वा भक्तिस्थः । भक्त्यामधिकारिणो भक्तेः नियामकश्चेति तत्त्वप्रदीपोक्तेः । 'तया' अनादिसिद्धया भक्त्यैव 'एनं' स्वात्मानं 'वशं नयेत्' जीववशोऽस्मीति ज्ञापयेत् । यद्वा—'एनं' जीवं 'वशं नयेत्' तस्य भगवदीयोऽहमिति स्मृतिं जनयेदित्यर्थः । 'तयैव' गुरुप्रसादेनाभिव्यक्तभक्त्यैव करणेन दर्शनं 'यातः' प्राप्तस्तद्विषयो भूत्वा 'एतया' अतिपरिपक्वया भक्त्या जीवा

स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव करणं परमेशितुः ॥
इति ।

( ५ ) सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥ ५४ ॥

—*—

३५. अधिकरणम् ॥

( १ ) जीवांशानां पृथगुत्पत्तेर्नानादियोग्यताऽपेक्षेति न म

य मुक्तिं प्रदद्यादित्यर्थः । भक्तिरित्यनेनानुबन्धशब्दार्थ उक्तः । तत्र प्रमाणमाह—स्नेहेति । अनु स्वानुकूलं यथा तथा बध्नाति बद्धमिव वशयति स्वप्रभुमित्यनुबन्धः । 'यस्तस्मिन्' विष्णौ 'बहुमानपुरस्सरः' बहुः पूर्णता मानं ज्ञानं देशकालगुणैः पूर्णत्वज्ञानपूर्वकः स्नेहः स एवानुबन्धः सैव भक्तिरित्युच्यते इत्यर्थः । ननु दर्शनादौ हरेरेव कर्तृत्वे कथं 'भक्तिरेवैनम्' इति श्रुतिरुपपद्यत इत्यत आह—सैवेति । 'परमेशितुः' परमेश्वरस्य दर्शनादिदाने सा भक्तिरेव करणमित्यर्थः । करणे कर्तृत्वोपचार इति भावः । करणं साधनेषु प्रधानमित्यनेन साधनान्तराण्यनुक्त्वा भक्तेरेवाभिधाने कारणमुक्तं भवति । इतीत्यस्य मायावैभव इत्यनेनान्वयः ॥

( ५ ) एवं 'हन्ता रामशरः' इतिवत्करणेऽपि कर्तृत्वव्यपदेशदर्शनात्करणार्थत्वेन 'भक्तिरेवैनम्' इति श्रुतिमुपपाद्य प्रकारान्तरेणाप्युपपादयति—सर्वेति ॥ भक्तिरित्यादिसर्वपदानामित्यर्थः । 'ब्रह्मणि' परब्रह्मणि 'प्रवृत्तेः' समन्वयात् परममुख्यवृत्तेः सत्त्वात् । ब्रह्मैवैनं नयतीत्याद्यर्थोपपत्तेश्चोपपन्ना श्रुतिरित्यर्थः । अनेन 'च' यतः 'परेण' वाच्येन निमित्तेन भक्त्यादिशब्दस्य 'ताद्विध्यं' तस्य 'एतैरुपायैः' इत्यादिवाक्यस्य विधा प्रकार इव प्रकारो यस्य स तद्विधस्तस्य भावस्ताद्विध्यं तद्वन्नारायणस्य कर्तृत्ववादित्वं युक्तम्, अतो नेश्वरस्य दर्शनादिकर्तृत्वे श्रुत्यनुपपत्तिरिति सूत्रखण्डस्य अर्थान्तरमुक्तं भवति ॥ ३४ ॥

॥ इति परेणाधिकरणम् ॥

—*—

३५. अधिकरणम् ॥

( १ ) अत्राधिकरणे उपासनस्यानादियोग्यतासापेक्षत्वं समर्थ्य

न्तव्यम्, कुतः ?

सू—ॐ ॥ एक आत्मनश्शरीरे भावात् ॥ ॐ ॥ ५५ ॥

अंशांशिनोरेकत्वमेव । अंशिकर्मविनिर्मितशरीर ए वांशस्य भावात् ॥ ५५ ॥

( २ ) सू—ॐ ॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५६ ॥

ते । तत्र ‘ उपलब्धिवत्, व्यतिरेकः ’ इत्याभ्यां सूचितहेतूक्तिपूर्वकं पूर्वपक्षयति—जीवेति ॥ उपासनादाविति शेषः । पृथगिति भिन्नं पदं पृथक्त्वादित्यर्थः। तथा च नोपासनाद्यर्थं योग्यताऽपेक्षाऽस्ति। कुतः? योग्यतायाः सादित्वे तद्वदुपासनस्याप्यागन्तुकत्वप्रसंगात् अनादित्वं वाच्यम् । तच्च न युक्तं यत इन्द्रादिजीवांशानामर्जुनादीनां योग्यता नानादिः । न चासिद्धिः । इन्द्रादिजीवांशानामुत्पत्तेः सादित्वात् । धर्मिण एव सादित्वे तद्धर्मभूतयोग्यताया अनादित्वायोगादिति भावः। न चांशिनोऽनादित्वात् कथमंशानामुत्पत्तिः तयोरैक्यादिति वाच्यम्। इन्द्राद्यंशिजीवेभ्यस्तदंशानां पृथक्त्वात् भिन्नत्वात्। न चासिद्धिः। अंशानामिन्द्रादिर्जीवेभ्यः पृथक्त्वात् ज्ञानसुखादौ अनुसन्धानाननुसन्धानाख्यवैलक्षण्यवत्त्वादिति योजना । एवं प्राप्तं पूर्वपक्षं प्रतिषेधति—नेति । कुतो न मन्तव्यमित्याक्षिपति—कुत इति । तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे—एक इति । अत्र अंशोंशी चैक एवेति योजनामभिप्रेत्य एक इति प्रतिज्ञावाक्यतात्पर्यमाह—अंशेति । कुत इत्यतः षष्ठ्यर्थोक्तिपूर्वकं आत्मनश्शरीरे भावादिति हेत्वंशं व्याचष्टे-अंशीति। ‘ भावात् ’ अभिमानितया सत्त्वादित्यर्थः । अनेनात्मांश आत्मना अंशिना एक एव, न भिन्नः कर्मनिर्मितशरीरे आत्मनोंशस्य भावात्सत्त्वादिति सूत्रार्थ उक्तो भवति ॥

( २ ) ननु ज्ञानादिभेदादंशांशिनोर्भेद एव युक्तो नाभेद इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—व्यतिरेक इति ॥ ज्ञानं वृत्तिरूपम्। आदिशब्देन तादृशसुखादिर्गृह्यते। व्यतिरेकशब्दार्थो भेद इति सप्तम्यन्ताद्वतिरिति भावेन भेद इति सप्तमीप्रयोगः। आत्मनोरिति विपरिणतपदस्यार्थः—अंशांशिनोरिति ।. पृथग्भाव इत्यनेन व्यतिरेकशब्दस्योपमानोपमेययोरन्वयो दर्शितः । एवेति तुशब्दस्यार्थः । अनेनात्मनोर्नोपलब्धिवद्व्यतिरेक इति प्रतिज्ञांशो व्याख्यातः । कुत इत्यतस्तदुत्तरत्वेन तद्भावभावित्वादिति हेत्वंशं व्याचष्टे—तदुपासनादीति।

ज्ञानादिभेदे विद्यमानेऽपि नांशांशिनोः पृथग्भात्र एव ।
तदुपासनादिभोगादंशस्य ।

( ३ ) परमसंहितायां च—
अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा ॥ इति ॥ ५६ ॥

——:*:——

अंशिकर्तृकोपासनादिजातमहाफलभावादित्यर्थः । उपासनाजनितम हाफलानुसन्धानमेवाभेदे प्रयोजकं तदभावस्त्वसिद्ध इत्युक्तं भवति। अनेन 'उपलब्धिवत' उपलब्ध्यादौ धर्मे व्यतिरेक इव भेद इव अनु सन्धानाननुसन्धानात्मकवैलक्षण्यमिव आत्मनोरंशांशिनोः धर्मिणोर पि परस्परं 'व्यतिरेक एव' अन्योन्याभावरूपपृथग्भाव एव, न त्व भेद इति न वाच्यम् । कुतः ? 'तद्भावभावित्वात्' भावशब्द आवर्त ते । तत्रैकस्यानुभवोऽर्थः । भवतेरनुभवार्थत्वात । अन्यस्य मानसक्रि यारूपध्यानाख्यमुपासनमर्थः । अपरस्योपासनफलमानन्दवृद्धिरर्थः । 'भावो वृद्धिः समुद्दिष्टा क्वचिद्भावो मनः स्मृतम्' इति वचनात । तु शब्दस्यात्रान्वयः । स चाप्यर्थः । तथा च आत्मन उपलब्ध्यादौ ज्ञा नादावनुसन्धानाननुसन्धानरूपे अल्पत्वमहत्त्वरूपे वा व्यतिरेके वि द्यमानेऽप्यात्मनोंशस्याल्पे वृत्तिज्ञानसुखादौ मानुषान्नोपभोगादिनाऽनु सन्धानाभावेऽपीति यावत् । 'तद्भावभावित्वात्' तस्यांशिनो भात्र स्य तत्कर्तृकप्रधानसाधनोपासनादिसम्बन्ध्यानन्दवृद्धिरूपमहाफल स्य भावित्वात् अनुसन्धातृत्वात् अंशत्वेऽपीति सूत्रार्थ उक्तो भवति॥

( ३ ) आद्यसूत्रार्थे स्मृतिं प्रमाणयति—परमेति ॥ न केवलं सूत्र इति चार्थः । 'अंशाः' अर्जुनादयः । 'तस्यैव' अंशिन एव 'कर्मणा' तत्कर्मनिमित्तेनैव शरीरेण सह 'अंशिनः' इन्द्रादेः 'पृथक्' विभक्त तया भूम्यादौ जाताः सन्तः 'पुनः' कर्मपर्यवसानानन्तरं स्वस्थानं ग ताः अंशिनैक्यं 'प्रतिपद्यन्ते' प्राप्स्यन्तीत्यर्थः । न त्वन्यकर्मणेत्येवश ब्दार्थः । अत्रार्थे 'विचारणा' चर्चा न कार्येत्यर्थः । इति परमसंहिता यां सूत्रकृदुक्तमुक्तमित्यन्वयः ॥ ३५ ॥

॥ इति एकाधिकरणम ॥

——*——

३६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ॐ॥५७॥
ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते ।

---

३६. अधिकरणम् ॥

( १ ) अत्राधिकरणे भगवदुपासनस्य यथायोग्यं ब्रह्माद्यङ्गदेवतोपासनस्य युक्तत्वेन कर्तव्यता प्रतिपाद्यते । 'अन्या वाचो विमुञ्चथ' (मु. २-२-५.) 'पूजयेन्नान्यदेवताः' इत्यादेर्नाङ्गाश्रितान्यदेवतोपासनं कार्यं, किन्तु केवलं ब्रह्मोपासनमेव, कार्यत्वे वा एकस्य प्रतीतगुणाः सर्वेषूप संहर्तव्या इति प्राप्ते सिद्धान्तयत्सूत्रं पठति–अङ्गेति॥ अत्राङ्गशब्देन 'विष्णोरङ्गसमुद्भूते, विष्णोरङ्गानि देवताः' इति वचनादीशाङ्गजातत्वान्निमित्ताद्ब्रह्मादिदेवाः अङ्गानीत्युच्यन्ते । भावप्रधानोऽयमावर्तनीय इति भावेन अङ्गावबद्धा इति प्रतिज्ञांशं व्याचष्टे–ब्रह्मादीति । ब्रह्मादयश्च ताः देवताश्च तदवबद्धं तत्सम्बद्धं च तदङ्गत्वावबद्धं च तत् उपासनादि चेति विग्रहः । प्रथमादिशब्देन रुद्रादयो गृह्यन्ते । द्वितीयेन परिचर्या नमस्काराद्युच्यते । कार्यमेव अधिकारिभिरिति शेषः । एवेत्यनेन सौत्रतुशब्दोऽवधारणार्थतयाऽपि व्याख्यातः । अङ्गावबद्धा इति वचनेनोदाहृतश्रुत्यादिविरोधः परिहृतः । श्रुत्यादौ प्राधान्येनोपासनस्यैव निषिद्धत्वात् अङ्गत्वेनोपासनस्य चाभ्युपगतत्वात् । अत एव—

सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारतयैव तु ॥

इति वचनम् । अनेन अङ्गावबद्धाः ब्रह्मादिदेवविषयाः अङ्गत्वसम्बद्धाः तत्प्रकारकाः उपासनाद्याः कार्या एव सर्वैर्मुमुक्षुभिः । कुत एतत्? हि शब्दसूचितायाः 'समत्वात' इति स्मृतेरेवेति सूत्रांशस्यार्थ उक्तो भवति । तर्हि सर्वगुणाः सर्वत्रोपसंहृत्योपास्याः स्युरिति शङ्कते—त्विति । तदुत्तरत्वेन—न शाखासु प्रतिवेदमित्येतद्व्याचष्टे–प्रतिशाखमिति । 'प्रतिवेदं' सर्ववेदानां 'प्रतिशाखं' सर्वशाखास्वित्यन्वयः । उक्तमुत्तमानां गुणजातमवमेष्विति शेषः । चस्समुच्चये । शाखास्वित्येव पूर्तौ प्रतिवेदमित्याद्युक्तिः अविभक्तमूलवेदापेक्षयेत्युक्तं तत्त्वप्रदीपे। 'नोपसंह्रियते' अवमेषु नोपसंहार्यमिति । अनेन प्रतिवेदं प्रतिशाखा

हिशब्दात्
समत्वाद्धोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।
उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः ॥
इति ब्रह्मतर्कवचनात् ॥ ५७ ॥

(२) सू—ॐ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ॐ ॥ ५८ ॥

सूक्ता अङ्गावबद्धा उत्तमाङ्गदेवतासम्बन्धिनो ब्रह्मणः सर्वेगुणाः 'वेदाहमेतं पुरुषं महान्तम्' (तै.आ.३-१२.) इत्युक्ताः 'अवमेषु' रुद्रादिषु तद्गुणाः 'त्र्यम्बकाय त्रिपुरान्तकाय कालाग्निरुद्राय नीलकण्ठाय' (व्यासनमस्कृतिः)इत्युक्ताः इन्द्रादिषु च नोपसंहर्तव्याः,किन्तु योग्या एवेति सूत्रखण्डस्यार्थ उक्तो भवति । न चायं विभागो न दृष्ट इति वाच्यम् । यथा खलु भगवत्परवाक्यानां न सर्वेषामन्यत्र ब्रह्मादिष्वन्वयः, अपि तु योग्यानामेव 'हिरण्यगर्भस्समवर्तताग्रे' (तै.सं.४-१-८.) इत्यादीनां,तद्वदुपपत्तेरिति भावः । कुत एतत्सिद्धमित्यतः प्रवृत्तं हीत्येतद्व्याचष्टे—समत्वादिति ॥ सूचितादिति शेषः। अस्य वचनादित्यनेनान्वयः । स्मृतौ कार्यमिति उत्तमानां गुणजातमधमेष्विति च शेषः। उपासनशब्द आवर्तते । तत्रैकः कर्मणि ल्युडन्तो गुणजातपरः । आदिशब्देन गन्धर्वादयो गृह्यन्ते । तथा च अङ्गदेवाद्युपासनं कार्यं मुमुक्षुभिः, परं तु उत्तमानां ब्रह्मादीनां गुणजातमधमेषु नोपसंहार्यमित्याहुरित्यर्थः । कुत इत्यतो हेतुमाह—समत्वादिति । वाशब्दौ चार्थौ परस्परसमुच्चये । अयमर्थः—अन्यगुणानामन्यत्र उपसंहारे सर्वदेवानां साम्येनैव भाव्यं, तच्च नास्ति केषां चित्समत्वात् केषां चिदुत्तमत्वादिति सर्वसाम्याभावात् । तत्त्वप्रदीपे तु असमानां समत्वेनोपासनस्य उत्तमानां अधमत्वेनोपासनस्य च निषिद्धत्वादित्येवंप्रकारसमर्पकतया व्याख्यातम् । हेत्वसिद्धिपरिहारायाह—वेदेति । वेदनिर्णायकग्रन्थवेदिन इत्यर्थः। तथा च वेदसिद्धान्ते नानागुणत्वेनैव तेषामुक्तेर्नासिद्धिरिति भावः । वचनादित्यस्य नोपसंह्रियत इत्यनेनान्वयः । इति ज्ञायत इति शेषः ॥

(२) एवमेकत्र प्रतीतानां सर्वगुणानामन्यत्रोपसंहाराभाव उक्तः। इदानीमुपसंहाराभ्युपगमेऽपि न विरोध इत्याह सूत्रकृत्—मन्त्रादिवदिति ॥ अत्रादिशब्देन बहुवाक्यसमूहरूपविद्योच्यते। षष्ठ्यन्ताद्वतिरिति भावेन सूत्रं व्याचष्टे—सर्वेति । अग्न्याद्यधमसर्वदेवतामन्त्रादय

सर्वदेवतामन्त्रा यथाऽधीयन्ते एवमविरोधो वा ।
( ४ ) उपासनाऽङ्गदेवानां परमाङ्गतया भवेत् ।
उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ॥
पुरुषाणां विशेषाद्वा यथायोगं भविष्यति ।

इत्यर्थः । अधीयन्त इति । अध्येतृभिरुत्तमसर्ववेदेष्विति शेषः । तेषां तत्प्रतिपादकत्वादिति भावः। 'एवं' अधमगुणानामुत्तमेपूपसंहारे 'अविरोधो' विरोधाभावस्तेषु तद्गुणसत्त्वादित्यर्थः । अनुपसंहारस्यैवमुत्तमगुणविषयत्वात् उपसंहारवचनस्याधमगुणविषयत्वादिति भावेन भाष्ये सूत्रे च व्यवस्थितविकल्पार्थकवाशब्दः ॥

( ४ ) यदुक्तं अङ्गदेवतोपासनं कार्यं एकत्र प्रतीतानामन्यत्र यथा योग्यगुणानामुपसंहारश्च कार्य इति, तदूद्वयं किं सर्वैः कार्यं न वेत्यपेक्षायामाह–उपासनेति॥ सर्वैः कार्येति शेषः । 'अङ्गदेवानां' ब्रह्मादीनां 'परमाङ्गतया' परमात्मपरिवारत्वेनोपासना 'सर्वैः' मोक्षयोग्यैः कार्या भवेत्, न तु प्राधान्येनेति । तर्हि गुणोपसंहृतिरपि तथा स्यादित्यतो गुणोपसंहृतौ विशेषमाह–उपसंहृतिरिति। विशेष इति तादर्थ्ये सप्तमी । उपसंहृतिस्तु ' फलानां विशेषे ' अतिशयितफलार्थं तदपेक्षायामेव कार्या, 'अन्यथा' तदनपेक्षायां केवलमोक्षाय न कार्येत्यर्थः । यथोक्तं तत्त्वप्रदीपे—यथा विषभयादौ गरुडादिषु विषहरत्वादिगुणोपसंहृतिरिति । फलविशेषापेक्षाऽपि पुरुषविशेषाणामेवेत्याह—पुरुषाणामिति। 'विशेषात्' उत्तमाधिकारित्वरूपात् । अत्र फलविशेषार्थिनः पुरुषविशेषाश्चैके एव, वाशब्दस्तु पुरुषाणां विशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तौ सत्यां उत्तमाधिकारिभिरपि फलातिशयापेक्षायां कर्तव्या, अन्यथा नेति उपसंहृतिरूपसाधनविषय एव विकल्पबोधकः, न तु फलविशेषार्थिभिः कर्तव्या नान्यैरिति ज्ञातव्यम् । तथा च उपसंहृतिस्तु पुरुषाणां विशेषं उत्तमाधिकारित्वमपेक्ष्य ' यथायोगं फलानां विशेषे ' यथायोग्यफलविशेषार्थं ' भविष्यति ' भवति । 'अन्यथा ' उत्तमाधिकारित्वाभावे तादृशफलयोग्यताया एवाभावात् न वा न कर्तव्या वेति व्यवस्थितो विकल्पः । यद्वा—ये फलविशेषार्थिनः ते गुणोपसंहारपूर्वकं उपासका इति पूर्वमुपासकपुरुषप्रतिपत्तौ फलाति

इति बृहत्तन्त्रे ॥ ५८ ॥

—— * ——

३७. अधिकरणम ॥

( १ ) सू—ॐ ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॥ॐ॥५९॥
सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत् सर्वत्र सह भावात् । दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुः ।

---

शयार्थित्वं साधनतयोक्तं, इदानीं तु ये पुरुषविशेषा उत्तमाधिकारिणः तेषां गुणोपसंहारपूर्वकं उत्तमाधिकारित्वं साधनतयोच्यत इति उपासकप्रतिपत्तौ साधन एव विकल्पो वाशब्दार्थः, नोपासकविकल्पः । सा चोपसंहृतिः 'यथायोगं' उपास्यानां देवानां योग्यगुणविषयिण्येव 'भविष्यति' भवतीत्यर्थः । बृहत्तन्त्र इति । उक्तमिति शेषः ॥ ३६ ॥

॥ इति अङ्गावबद्धाधिकरणम ॥

—— * ——

३७. अधिकरणम ॥

( १ ) अत्र भूमगुणस्य सर्वोपासकसाधारणत्वं समर्थ्यते । व्यर्थत्वाद्भूमगुणो न सर्वोपास्य इति पूर्वपक्षे सिद्धान्तयितुं सूत्रं-भूम्न इति॥ अत्र भूम्नः सर्वोपास्यत्वमिति साध्याध्याहारमभिप्रेत्य तत्र हेतुपरतया ज्यायस्त्वमित्येतद्व्याचष्टे-सर्वेति । क्रतुवदित्यस्योभयत्रान्वयः । तथा च विष्णोर्ज्ञानानन्दादिसर्वगुणेषु मध्ये 'भूमगुणस्य' पूर्णत्वरूपशुभधर्मस्य 'यो वै भूमा' ( छा०७-२४. ) इत्यत्र श्रुतस्य 'ज्यायस्त्वं' क्रतुवद्विशिष्टत्वमित्यर्थः । कुत इत्यतो भूमत्वमृते कस्यापि गुणस्यानुपास्यत्वात् सर्वस्यापि पूर्णज्ञानः पूर्णानन्द इत्यादिक्रमेण तदनुबन्धेनैवोपास्यत्वादिति भावेन विशिष्टत्वे साध्ये हेतुपरतयाऽपि क्रतुवदित्यंशं व्याचष्टे—क्रतुवदिति । सर्वत्रेति । सर्वयागेष्विति दृष्टान्तार्थः । दार्ष्टान्तिके तु 'सर्वत्र' आनन्दादिगुणेष्वित्यर्थः । 'सहभावात्' स्वानुष्ठस्याऽङ्गिनः साफल्यसाधकत्वात् । अनेन सूत्रे क्रतुवदित्यस्यावृत्त्या साध्यहेत्वोरन्वयः । सर्वत्र सहभावादिति हेत्वध्याहारश्च सूचितः ।

(२) भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः॥

ननु क्रतुशब्दः स्वाङ्गक्रियावचनः, न च तस्य सर्वक्रतुष्वनुवर्तिरस्तीत्यतो नात्र क्रतुशब्दः स्वाङ्गप्रधानपरः, किन्तु अङ्गकलापपर इति भावेन क्रतुशब्दार्थमाह—दीक्षेति। ज्योतिष्टोमे दीक्षा नाम यजमानसंस्काररूपकर्मविशेषः। प्रायणीयोदयनीयौ तस्याद्यन्तयोः कर्तव्येष्टिविशेषौ। प्रातस्सवनं माध्यन्दिनसवनं तृतीयसवनं चेति सोमाभिषवरूपसवनत्रयम्। अवभृथो नाम 'अप्स्ववभृथेन चरन्ति' ( ) इत्युक्तेष्टिविशेषः। एतदात्मकाङ्गकलापः सर्वत्र कर्तुं योग्यत्वान्निमित्तादिह क्रतुशब्देनोक्त इत्यर्थः।

(२) सूत्रकृदुक्तोक्तार्थस्य प्रामाणिकत्वप्रदर्शनाय तथा दर्शयति श्रुतिरित्याह। तमर्थं व्याचष्टे—भूमैवेति॥ अत्र भूमन्शब्दो धर्मपरो धर्मिपरश्च। तथा च 'परमो देवो' नारायणो 'भूमा' सर्वगुणपूर्ण इति पूर्णत्वेनैव सर्वोपास्यो, नैवाभूमा। कस्मात्? 'हि' यतो भूमगुणो गुणराशितः क्रतुवद्विशिष्टः, यथा 'क्रतुः' दीक्षाद्यङ्गकलापः कर्ममध्ये विकृतियागेषु विशिष्टः तेषां स्वसाहित्येन साफल्यप्रदत्वात्। तथा भूमगुणो 'गुणतो' गुणराशितो गुणेभ्यो वा 'विशिष्टः' प्रधानः। कथं विशिष्टः? 'हि' यस्मात् भूमैव गुणः सर्वगुणेषु प्रविष्टतयोपासितः 'एषां' अधिकारिणां फलं 'विधत्ते' ददाति। 'न त्वभूमा' अपूर्णत्वमुपासितं अपूर्णत्वेनोपासितो वा देवः, तस्मादित्यर्थः। तथा च भूमगुणस्यान्यगुणेभ्यो वैशिष्ट्यं नाम भूमगुणानुबद्ध एव सर्वोऽपि गुणः उपासकानां फलं ददाति, नाभूमेत्येतदेव, न तु विष्णुगुणाः परस्परमुत्तमाधमभाववन्त इति भावः। श्रुतिरित्यस्य तथा च दर्शयतीत्यनुषङ्गेणान्वयः। अनेन—'भूम्नः' पूर्णत्वस्य सर्वोपास्यत्वं, कुतः? 'चः' यतः सर्वगुणेषु क्रतुवज्ज्यायस्त्वम्। तदपि कुतः? क्रतुवत्सर्वत्र सहभावात्। न चैतत्सर्वमप्रामाणिकं, यतः श्रुतिस्तथा दर्शयतीति सूत्रयोजनोक्ता भवति। तथा हीति सूत्रपाठे हिशब्दो यस्मादित्यर्थो ज्ञातव्यः। मायावादखण्डने भूम्नो ज्यायस्त्वमित्युक्तमिति। महाभारततात्पर्यनिर्णये च ज्यायस्त्वं मुख्यतः सर्ववेदादिप्रतिपाद्यत्वमि

इति गोपवनश्रुतिः ॥ ५९ ॥

—*-:*:-*—

३८. अधिकरणम् ॥

( १ ) सू—ॐ ॥ नाना शब्दादिभेदात् ॥ ॐ ॥ ६० ॥

शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते ।
अतः फलस्य नानात्वं नानैवोपासना यतः ॥

---

त्यर्थोऽभिमतः । स च सूत्राक्षराणां बह्वर्थत्वाभिप्रायेण तट्टीकायामुक्तः ॥ ३७ ॥

॥ इति भूमाधिकरणम् ॥

——*——

३८. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽधिकारिणां भूमगुणस्य नानाप्रकारेण प्रतीतिः समर्थ्यते भूमत्वे विशेषकल्पनायोगाद्भूमगुणः सर्वेषामेकप्रकारेणैव प्रतीयत इति प्राप्ते सिद्धान्तयितुं सूत्रं पठति—नानेति ॥ अत्र भूम्न इत्येतत् प्रथमान्ततया विपरिणम्यानुवर्तते । नानेति भावप्रधानम्, नानात्वेनेति । उपास्यते इति शेषः । एवं च प्रतिज्ञावाक्यसिद्धौ तत्र हेतुरुक्तः—शब्दादिभेदादिति । भूमगुणप्रत्यायकैः शब्दानुमाप्रत्यक्षप्रमाणैः अधिकारियोग्यताभेदात् भूम्नो नानारूपेण प्रतीतेरिति तदर्थ इति भावेन अस्मिन्नर्थे प्रमाणोदाहरणपूर्वकं सूत्रं व्याचष्टे—शब्देति । प्रथमं तत्त्वनिर्णयोऽथ वेदार्थनियमोऽथापरोक्षज्ञानमिति कार्यक्रमानुसारेण स्मृतौ शब्दादीनां क्रमेण निर्देशः । एवं सूत्रेऽपि । शब्दः आगमः । अक्षः प्रत्यक्षम् । तथाशब्दः समुच्चये । आहत्यैते 'योग्यताभेदात्' योग्यताविशेषात्सदा ब्रह्मादीनामेकैकमर्थं पूर्णत्वादिरूपं 'बहुधा' अवान्तरविशेषवत्त्वेन 'दर्शयन्ति' ज्ञापयन्ति 'हि' यतोऽतः 'एषां' ब्रह्मादीनामीशस्य पूर्णत्वं नानैव 'प्रदृश्यते' प्रतीयते उपासनकाले । यतः नानाप्रदृश्यतेऽतो नानाप्रकारेणैव पूर्णत्वोपासनं भवेत् । यतो नानोपासनमतः फलस्य 'नानात्वं' तारतम्यमुपपद्यत इति योजना । न चोपास्यभूमत्वप्रतीतेः शब्दानुमानसाध्यत्वेऽपि कथं प्रत्यक्षसाध्य

इति ब्रह्मतर्के। अतो भूमत्वमपि नानैवोपास्यते॥ ६०॥

—— ✻ ——

३९. अधिकरणम्॥

(१) सू—ॐ॥ विकल्पो विशिष्टफलत्वात्॥ ॐ॥ ६१॥

स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्य चिदुपा

---

त्वमिति वाच्यम्। योगिनां मनसाऽपि तत्प्रतीतिसम्भवेन तस्यास्त्रित यसाध्यत्वोपपत्तेः। ब्रह्मतर्के इत्यस्य यतः शब्दादिभेदान्नाना प्रतीयते भूमत्वमतो नानैवोपास्यतेऽपीत्युक्तमित्यन्वयः। न केवलं नाना प्रतीयतेऽपि तु नानैवोपास्यतेऽपीति सिद्धमित्यन्वयः। नानैवोपास्यतेऽपि नानैव फलप्रदमपीत्यपेरर्थः। न च भूमत्वविशेषानुपपत्तिः। अतीतवत्सराणां मासानां चानन्त्ये समेऽपि वत्सरानन्त्यान्मासानन्त्ये विशेषवत् अधिकारियोग्यताविशेषात् प्रतीते। पूर्णत्वेऽपि विशेषसम्भवादिति भावः॥ ३८॥

॥ इति नानाशब्दाधिकरणम्॥

—— ✻ ——

३९. अधिकरणम्॥

(१) अत्र नये बिम्बातिरिक्तरूपोपासनस्याकर्तव्यता निरस्यते। स्वयोग्यरूपातिरिक्तरूपविशेषविषयमुपासनं मुमुक्षुणा न कर्तव्यम्, मोक्षानुपयुक्तत्वात्। प्रत्युतक्रियमाणमपि तदुपासनं स्वयोग्योपासनविघ्नायैव भवेदिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य सामान्योपासनस्येति पदाध्याहारेण व्याचष्टे—विकल्प इति॥ अपिः समुच्चये। तथा च न केवलं स्वयोग्यस्य, किन्तु तदतिरिक्तस्य ' सामान्यस्य ' वैष्णवत्वेन बिम्बसमानतया वर्तमानस्य कस्यचित् नृसिंहरामकृष्णादिरूपविशेषस्याप्युपासनं स्वयोग्योपासनानन्तरं मुमुक्षोः ' विशिष्टफलापेक्षया ' उत्तमफलापेक्षया ज्ञानादिप्रतिबन्धकदुरितविशेषनिवृत्तिलक्षणमोक्षोपयोगिफलेच्छया निमित्तभूतया ' विकल्पेनैव भवति ' प्रकारद्वयोपेतमेव न तु एकप्रकारोपेतमिति योजना। स्वयोग्योपासनानन्तरमिति सामान्योपासनस्य मोक्षार्थोपासनानन्तरभावित्वकथनेन प्रत्युतेत्युक्तदोषो निरस्तः। सूत्रे विशिष्टफलत्वादित्यनेन विकल्पे निमित्तं सूचितम्। तदपेक्षोपलक्षकतया विवृतं—विशिष्टफलापेक्षयेति। ते न मोक्षानुपयुक्तत्वादिति दोषो निरस्तः। अनेन मुमुक्षोः वि

स्नं विकल्पेन भवति विशिष्टफलापेक्षया।
(२) मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम्।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये॥
उपासते यथायोगं न वा फलविभेदतः।
इति ब्रह्मतर्के॥ ६१॥

—*—

शिष्टफलत्वादिति बहुव्रीहिः। इच्छोपलक्षकमेतत्। ल्यब्लोपनिमित्ता पञ्चमी, विशिष्टफलापेक्षत्वमपेक्ष्येति भावेन विशिष्टफलापेक्षयेत्याह। विशिष्टफलापेक्षया सामान्योपासनस्य कर्तव्यतायां यस्य मुमुक्षोः दुरितमस्ति तन्निवृत्तिरूपविशिष्टफलापेक्षा चास्ति तेन कर्तव्यम्। यस्य तु मुमुक्षोर्न दुरितमस्ति तत्सत्त्वे वा स्वयोग्यतीव्रोपासनेनैव दुरितादिनिवृत्तिसिद्धेस्तदनिच्छा तेन न कर्तव्यमिति। अत एव न वैफल्यदोषः॥

(२) अत्रार्थे स्मृतिमाह—मुक्त्यर्थमिति॥ 'आत्मयोग्यं' स्वयोग्यरूपविषयकमुपासनं यतो मुक्त्यर्थं 'हि' प्रसिद्धं, अतः कार्यमेवेत्यर्थः। नृसिंहादिकमन्यच्चेति विशेषणविशेष्यभावः। रूपमिति शेषः। चः समुच्चये। दुरितं दुरदृष्टम्। प्रथमादिशब्देन कृष्णरामहयशीर्षादि वैष्णवरूपं गृह्यते। द्वितीयेन अज्ञानमिथ्याज्ञानकामक्रोधादि। 'यथायोगं' यथायोग्यमुपासते मुमुक्षव इति शेषः। केचित् नरसिंहादिरूपं नैवोपासत इति। उपास्यत इति पाठे तु मुमुक्षुभिरिति शेषः। कुतो विकल्पः? 'फलविभेदतः' दुरितादिनिवृत्तिरूपफलविशेषाकांक्षाभावात्। यद्वा—स्वयोग्योपासनाफलात् नृसिंहाद्युपासनाफलस्य भिन्नत्वात् भेदात् भेदमपेक्ष्येत्यर्थः। केषां चित्तीव्रस्वयोग्योपासनादेव दुरितादिनिवृत्तिरूपफलसिद्धेर्न तदपेक्षेति भावः। यद्यपि नृसिंहादिकमपि केषां चित्स्वयोग्यं रूपं, तथाऽपि तदतिरिक्ताधिकारिणां तत्सामान्यं, तेषामेव सामान्योपासने विकल्प उक्त इति न कुचोद्यावकाशः। ब्रह्मतर्के उक्तत्वादिति शेषः। अस्य विकल्पेन भवतीति पूर्वोक्तेनान्वयः॥ ३९॥

॥ इति विकल्पाधिकरणम्॥

—***—

४०. अधिकरणम् ॥

( १ ) सू—ॐ ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ॐ ॥ ६२ ॥

( २ ) यस्य यस्य हि यः कामः तस्य तस्य ह्युपासनम् ।

---

४०. अधिकरणम् ॥

( १ ) अत्राधिकरणे ज्ञानसाधनोपासनस्यैव आवश्यकत्वं, न कामसाधनभगवद्रूपगुणविषयोपासनस्येति समर्थ्यते । ज्ञानसाधनार्थादिसाधनत्वेन पूर्ववन्मोक्षोपयोगिफलत्वात् काम्योपासनमवश्यं कर्तव्यमिति प्राप्ते सिद्धान्तयत्सूत्रं पठति—काम्या इति ॥ तुशब्दो नृसिंहाद्युपासनादस्य विशेषद्योतकोऽवधारणे च । इतिशब्दोऽध्याहार्यः। विकल्प इत्यनुवर्तते । अत्र कामशब्दो घञन्तः काम्यपरः । कामस्येदं रूपं काम्यं, कामस्येमे गुणाः—

वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् ।
वसुसिद्धिमवाप्नोति ॥

इत्युक्ताः काम्याः । षष्ठ्यर्थसम्बन्धश्च साध्यसाधनभाव इति केचित्। वस्तुतस्तु काम्यत इति काम्यं रूपं, काम्यन्त इति काम्या गुणा इति विग्रहः । रूपगुणयोः काम्यसाधनत्वात्काम्यत्वम् । तथा च 'काम्यास्तु' काम्यसाधनरूपे श्रीकरादौ कामसाधनभगवद्गुणास्तु 'यथाकामं' स्वस्ववित्तादिकामं मोक्षादिकामं वाऽनतिक्रम्य तदनुसारेण 'समुच्चीयेरन्' उपसंह्रियेरन् । न वा विषयलम्पटैरमुमुक्षुभिरुपसंहर्तव्याः, तद्रहितैर्मुमुक्षुभिस्तु नोपसंहर्तव्या इति व्यवस्थितविकल्प एव स्यात्, न तु नियतिः । मुमुक्षुभिर्नेति कुतः ? 'पूर्वहेत्वभावात्' मुमुक्षातः पूर्वकालीनो यो वित्तादिकामाख्यो हेतुस्तदभावात्। यद्वा—मुमुक्षुभिरेव यथाकाममिच्छारूपेश्वरप्रसादमनतिक्रम्य तदर्थमुपसंहार्याः वित्तादिकाममनुरुध्य तदर्थं नोपसंहार्या इति विकल्पः स्यात् । नेति कुतः ? 'पूर्वहेत्वभावात्' पूर्वसूत्रोक्तदुरितादिनिवृत्तिरूपफलविशेषाख्यप्रबलहेतोरभावात् । मुमुक्षापूर्वकालीनान्यकामाख्यहेत्वभावात्, अर्थादिकं विना ज्ञानाभावाख्यहेत्वभावाच्चेति सूत्रार्थः ॥

( २ ) अत्रैव स्मृतिमाह—यस्येति ॥ अत्र प्रथमयच्छब्दौ अधिकारिपरौ । तच्छब्दौ काम्यपरौ । न तु तावेकविषयौ । प्रथमान्तयच्छब्द

तादृशानां गुणानां च समाहारं प्रकल्पयेत् ॥
अकामत्वान्मुमुक्षूणां न वा तेषा मुपासनम्।
तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यति॥ इति बृहत्तन्त्रे ॥ ६२ ॥

४१. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अङ्गेषु यथाऽऽश्रयभावः ॥ ॐ ॥ ६३ ॥

स्याद्वृत्तिः। कामशब्दः सविषयेच्छार्थः। असावसाविति प्राह्यम्। वा शब्दो व्यवस्थितविकल्पार्थः। तथा च यस्य यस्य पुंसोऽधिकारिणः यो यो वित्तादिकामोऽस्ति, असावसौ मुमुक्षुः तस्य तस्य तत्तत्काम्य प्रद भगवद्रूपस्योपासनं 'प्रकल्पयेत्' कुर्यात्। 'हि' प्रसिद्धम्। न केवलमुपासनं, किन्तु 'तादृशानां' कामसाधनानां गुणानां 'समाहारं' एकबुद्ध्यारोपणं च प्रकल्पयेत्। 'मुमुक्षूणामुपासनं नेति वा। कुतः? तेषां 'अकामत्वात्' अन्यकामनारहितत्वात्। एवमधिकारिभेदेन विकल्पमभिधायेदानीं मुमुक्षुष्वेव विकल्पमाह—तुष्ट्यर्थमिति। एवकारो भिन्नक्रमः। चोऽवधारणे। तथा च ईश्वरस्य 'तुष्ट्यर्थे' प्रसादार्थमेव तस्य रूपस्य गुणानां चोपासनं नैव विदुष्यति। अन्यकामार्थे तु दुष्यति। तदर्थं तैर्नैकार्यमित्यर्थः। तत्त्वप्रदीपे तु—यस्य यस्य यो धनैश्वर्यादिकामो भवति। तस्य तस्य तदर्थमुपासनं कार्यं, स चोपासकस्तादृशानाममुक्तचर्थानां गुणानामुपसंहारं च प्रकल्पयेत्। न वा मुमुक्षूणां काम्योपासनं, तेषामकामत्वात्। अतोऽत्यन्तमापद्येव काम्यरूपगुणोपासनं तेषां, तदपि नान्यकामनया, किन्त्वीश्वरस्य तुष्ट्यर्थमेव तदपि ह्याह—तुष्ट्यर्थमिति। 'सकामेभ्योऽमितगुणा या कामैस्तु कृता क्रिया' इत्यन्यत्र चाहेत्येवमेव व्याख्यातम्। इति बृहत्तन्त्रे सूत्रार्थ उक्त इति शेषः ॥ ४० ॥

॥ इति कामाधिकरणम् ॥

——:*:——

४१. अधिकरणम् ॥

( १ ) अत्राधिकरणे अङ्गाश्रितत्वेन देवतोपासनस्य कर्तव्यता समर्थ्यते। द्विविधमङ्गदेवतोपासनं—परिवारत्वेन भगवदङ्गाश्रितत्वेन

अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वम् । 'च क्षोस्सूर्यो अजायत' (ऋ. १०-९०-१३.) इत्यादि, तथा भावना कर्तव्या ॥ ६३ ॥

(२) सू—ॐ ॥ शिष्टेश्च ॥ ॐ ॥ ६४ ॥

यस्मिन्यस्मिन् यो हि चाङ्गे निविष्टः

चेति । तत्राद्यं सर्वमुमुक्षुसाधारणं 'अङ्गावबद्धाः' इत्यत्रोक्तम् । द्वितीयं देवतामात्राधिकारिकमत्र समर्थ्यते इति विवेकस्तत्त्वप्रदीपेऽभिहितः । ब्रह्मादिदेवानामीश्वराङ्गाश्रितत्वेनोपासनं न कर्तव्यम्, निरधिकारिकत्वात् । न तावत्तत्सर्वाधिकारिकम् । 'आनन्दादयः' इत्युक्तचतुर्गुणनियमव्याघातात् । नापि देवाधिकारिकम्, 'ब्रह्मा शिरसि ललाटे रुद्रः' इत्यादितत्प्रकरणेषु देवानामेतदुपासनमित्यनुक्तेरिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—अङ्गेष्विति ॥ अत्राङ्गेष्वित्यावर्तते । तत्रैकं षष्ठ्यन्ततया विपरिणतं देवतावाचि । द्वितीयं प्रकृतपरमाङ्गवाचि । यथेत्यप्यावर्तते । तथा तथेति च लभ्यते । उक्त इति कर्तव्य इति शेषः । भाव इतिशब्दो बुद्ध्या विविक्त उपासनापरपर्यायभावनावाची । तथा च 'चक्षोः सूर्यो अजायत' इत्यादिनामङ्गानां सूर्यादिदेवानामाश्रयिणां भगवतोऽङ्गेषु 'आश्रयभावः' आश्रयत्वं यथा यथोक्तः 'तथा तथा' तेन तेन प्रकारेण तेषां 'भावः' उपासनं कर्तव्य इति योजनामभिप्रेत्य सूत्रं व्याचष्टे—अङ्गेति । परमेश्वराङ्गाश्रयत्वमिति बहुव्रीहिः । अङ्गदेवतानामित्यस्य परमेश्वराङ्गाश्रयत्वमित्यनेन भावनेत्यनेन च सम्बन्धः । उक्तमिति शेषः । इत्यादीति लुप्तविभक्तिको निर्देशः । इत्यादिनेत्यर्थः । यद्यपि श्रुतावङ्गजातत्वमेवोक्तं, न तु तदाश्रितत्वं, तथाऽपि 'तदाश्रिताश्च ते सर्वे' इति वचनाद्यत्र जन्म तत्रैव स्थितिरिति न दोषः । कर्तव्येति सावधारणम् । अत्र हेतुस्तु उत्तरसूत्रे चशब्देन अत्रापि उक्त इत्यध्याहृतपदेन च सूचितः अन्यथा तदुक्तिवैयर्थ्य प्रसङ्गादित्येवंरूपो द्रष्टव्यः ॥

(२) अत्रैव युक्त्यन्तराभिधानाय सूत्रम्—शिष्टेश्चेति ॥ तद्व्याचष्टे—यस्मिन्निति । यो यो देवः 'परस्य' विष्णोः यस्मिन् यस्मिन् अङ्गे 'निविष्टः' प्रविष्टः आश्रितः । 'हि' प्रसिद्धः । स सः 'तथा तथा' तत्तदङ्गनिविष्टत्वेन 'चिन्त्यः' उपास्य इत्यर्थः । 'शिष्टिः' शिक्षाविधायकश्रुतिरिति फलितार्थ इति भावेनाह—श्रुतेरिति । श्रुतेरित्यनन्त

परस्य चिन्त्यः स तथा तथैव ।
इति पौत्रायणश्रुतेः ॥ ६४ ॥

(३) सू—ॐ ॥ समाहारात् ॥ ॐ ॥ ६५ ॥
अङ्गैः परात्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत ।
तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत ॥ इति कापायणश्रुतौ समाहारवचनाच्च ॥ ६५ ॥

रं सूत्रानुसारात् समुच्चयार्थकश्चशब्दोऽध्याहार्यः । अनेन—न केवलं 'चक्षोः' इत्यादावङ्गाश्रयत्वेनोक्तत्वन्यथाऽनुपपत्त्या तथा भावः कर्तव्यः, किन्तु 'शिष्टेः' 'यस्मिन्' इति श्रुतौ तथा विधानाच्चेति सूत्रार्थ उक्तो भवति ॥

(३) ननु निरधिकारिकत्वात्तद्विधानादिवैयर्थ्यस्यैवोचितत्वाच्च नाङ्गदेवतोपासनं युक्तमित्याशङ्कायां सूत्रं—समाहारादिति ॥ अत्र समाहारपदं सम्पूर्वकहृधातुयुक्तश्रुतिसूचकं 'अस्यैव च' इति सूत्रे ऊष्मेतिपदवदिति भावेन समाहारपदसूचितश्रुत्युदाहरणपूर्वकं सूत्रं व्याचष्टे—अङ्गैरिति । क्रियासमुच्चये चः । कर्मसमुच्चयेऽपिशब्दः । तथा च 'परात्' परमात्मनः चक्षुराद्यङ्गैः करणैः ये ये देवाः 'विसृष्टाः' विविधप्रकारेण सृष्टाः 'हि' प्रसिद्धाः 'तत्तद्गुणान्' तत्तद्देवसूर्यसोमादिमहाप्रकाशाह्लादकरत्वादीन् गुणान् 'परमे' परमाङ्गे 'संहरेत' उपसंहरेत । न केवलं गुणानङ्गेषु, किन्तु 'तांस्तान्' तत्तदङ्गजान् देवानपि 'तत्रैव' तत्तज्जनकाङ्गेष्वेव विचिन्तयीत । न चास्य फलाभावः । यत एवं विचिन्त्य 'परमं स्थानं' सायुज्यरूपं व्रजेत 'मुमुक्षुः' देवत्वयोग्य इति तत्त्वप्रदीपदिशा श्रुत्यर्थः । समाहारवचनादिति । अत्रापि समाहारपदं श्रुतिसूचकम् । तथा च कापायणानां समाहारश्रुतिवचनादित्यर्थः । चस्समुच्चये । अनेन-सूत्रेऽपि चशब्दोऽनुषञ्जनीय इति सूचितम् । अस्य तथा भावना कर्तव्या इत्यनेनान्वयः । अनेन संहरेतेति समाहारपदघटितश्रुतेरङ्गदेवतोपासनस्य परमस्थानरूपसायुज्यप्राप्तिफलकत्वावगमात्, अत एव देवताधिकारिकत्वावगमान्न निरधिकारिकत्वं न वा तद्विधानादिवैयर्थ्यं कल्प्यमिति सूत्रार्थ उक्तो भवति । तत्त्वप्रदीपे तु न केवलमङ्गेषु तत्त्वदेवतानां भावनयाऽधिकारी पूर्यते पूर्णफलभाग्भवति, किन्तु हरेरङ्गेषु चक्षुर्मनआदिषु त

( ४ ) सू—ॐ ॥ गुणसाधारण्यश्रुतेश्च ॥ ॐ ॥ ६६ ॥
साधारण्यात्सर्वगुणाः परस्य
समाहार्यास्तत्त्वदृशो मुमुक्षोः । इति माण्डव्यश्रुतेश्च ॥६६॥

४२. अधिकरणम् ॥
( १ ) सू—ॐ ॥ न वाऽतत्सहभावश्रुतेः ॥ ॐ ॥ ६७ ॥

दाश्रितसूर्यसोमादिगुणबिम्बानां महाप्रकाशाह्लादकरत्वादीनां गुणानां समाहारादुपसंहाराच्च । न चास्यासिद्धिः । 'अङ्गैः परात्' इति श्रुतौ समाहारोक्तेरिति व्याख्यातम् । अस्मिन् पक्षे सूत्रेऽनुषक्तश्चः हेतुसमुच्चये । श्रुतौ पूर्वांशस्योपयोगश्च, भाष्ये काषायणानां श्रुतौ समाहारोक्तेरित्यन्वयश्च ऋजुः । टीकाकृत्पक्षे तदन्वयो वक्रः । तत्पक्षे साध्यसमुच्चये चः । पूर्वांशस्तु श्रुतिसूचकः प्रमेयान्तरसूचकश्चेति ध्येयम् ॥

( ४ ) हेत्वन्तरेणाङ्गदेवोपासनस्य कर्तव्यतां समर्थयत्सूत्रं पठति—गुणेति ॥ गुणानां ज्ञानानन्दादीनां सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवद्गुणत्वात् भगवद्गुणानां चोपास्यत्वेन साधारणस्य एते उपास्या एते तु नेति विभागं विहाय योग्यानां सर्वेषामुपास्यत्वस्य 'साधारण्यात्' इति श्रुतावुक्तत्वाद्देवैरङ्गाश्रितत्वेन अङ्गदेवताभावना कर्तव्येति सूत्रयोजनामभिप्रेत्य सूत्रोपात्तश्रुतिमुदाहरन् सूत्रं व्याचष्टे—साधारण्यादिति । 'तत्त्वदृशो' ब्रह्मज्ञानिनो 'मुमुक्षोः' तेन परस्य सर्वे गुणाः 'साधारण्यात्' साधारण्येन एते उपास्या एते तु नोपास्या इति विभागं विहाय यथाशक्ति सर्वे समाहार्या इति श्रुत्यर्थः । श्रुतेश्चेत्यस्य तथा भावना कर्तव्येति पूर्वेणान्वयः । तथाङ्गाश्रितत्वेन देवतोपासनं देवताश्रयत्वेन तद्गुणबिम्बगुणवत्त्वेन च परमात्मोपासनं समनियतं, अतः 'समाहारात्, गुणसाधारण्यश्रुतेः, दर्शनाच्च' इत्येतेषां विरोधो न शङ्कनीयः ॥ ४१ ॥

॥ इति अङ्गाधिकरणम् ॥

४२. अधिकरणम् ॥

( १ ) अङ्गाधिकरणे अङ्गदेवतोपासनस्य सर्वशाखानुक्तत्वेन प्रा

न वाऽङ्गदेवतोपसंहारः कार्यः। उपसंहारस्य सहा श्रवणात् ॥ ६७ ॥

( २ ) सू--ॐ ॥ दर्शनाच्च ॥ ॐ ॥ ६८ ॥

सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।

नान्यत्किञ्चित्समुपासीत धीरस्सर्वैर्गुणैर्देवगणा उपासते ॥

साकर्तव्यत्वशङ्कानिरासेन कर्तव्यता समर्थ्यते । सूत्रमुपन्यस्यति— न वेति ॥ अत्राधिकारिविशेषानिर्देशेन गूढाभिसन्धिना सूत्रकृतोक्तं न वेति प्रतिज्ञांशं व्याचष्टे—न वेति । अङ्गेषु भगवदङ्गेषु अङ्गदेवतोपसंहारः तासामुपसंहृत्योपासनं न कर्तव्यं वेत्यर्थः । अनेन सूत्रे 'अङ्गेषु यथाश्रयभावः' इत्यस्यानुवृत्तिः सूचिता भवति । कुतो नेत्यतः अतत्सहभावश्रुतेरिति हेतुवाक्यं व्याचष्टे—उपसंहारस्येति । उपसंहारपूर्वकाङ्गदेवतोपासनस्येत्यर्थः । सहेति । सर्वशाखागतोपासनसहभावेनेत्यर्थः । अनेन तच्छब्दस्य तेनेत्यावृत्तिः सूचिता । अश्रवणादित्यनेन सूत्रे नञो व्यत्यासेनान्वय उक्तो भवति । अनेन क्वचिदेवोक्तत्वात् सर्वशाखास्वनुक्तत्वात् देवैः कर्तव्यं न वा अन्यैरित्यभिसन्धिः प्रकटितो भवति । तथा च अङ्गेषु देवानां यथाऽऽश्रयभावोऽस्ति तथा भावरूपोपासना देवैः कर्तव्या । कुतः? क्वचित्सहभावश्रुतेः । न कर्तव्या वा देवान्यैः । कुतः? 'अतत्सहभावश्रुतेः' तथोपासनस्य सर्वशाखागतोपासनेन सह सर्वत्र सहभावस्याश्रुतत्वादिति सूत्रार्थ उक्तो भवति ॥

( २ ) देवैरेव तथोपासनं कर्तव्यं, नान्यैरित्येतमेवार्थं युक्तिसिद्धं श्रुत्याऽपि समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति—दर्शनाच्चेति ॥ न केवलं युक्तेः, किन्तु 'सत्यो ज्ञानः' इति श्रुतेश्च अङ्गदेवतोपसंहारो देवैः कार्यः, इतरैर्न वेति सूत्रार्थः । 'नित्यदा' योग्यसर्वकाले स्यात् सर्वमुमुक्षूणामिति शेषः । 'नान्यत्किञ्चित्' गुणादि 'सर्वैः' योग्यसर्वैः 'देवगणाः' ब्रह्मरुद्रादिदेवसमुदायाः । देवानां गणशोऽनेकत्वद्योतनाय गणा इति बहुवचनम् । कमठश्रुतौ दर्शनादुक्तेश्च न वाऽङ्गदेव

इति कमठश्रुतौ ॥ ६८ ॥

——:*※*:——

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये तृतीयस्याध्यायस्य
तृतीयः पादः.

——:*:——

॥ ॐ ॥

—

तोपसंहारो देवेतरैः कार्यः, किन्तु देवैरित्यन्वयः ॥ ४२ ॥

॥ इति नवाधिकरणम् ॥

——*——

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिका
यां तृतीयाध्यायस्य तृतीयः पादः.

——※——

॥ ॐ ॥

—

१. अधिकरणम् ॥

( १ ) ज्ञानसामर्थ्यमस्मिन् पाद उच्यते ॥

सू—ॐ ॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ॐ ॥ १ ॥

यद्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते ।

( २ ) यंयं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तंतं लोकं जयते तांश्च कामान्

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—ज्ञानेति ॥ यदर्थं पूर्वपादे उपासनोक्ता तस्य ब्रह्मापरोक्षज्ञानस्य 'सामर्थ्यं' महिमा 'अस्मिन्' आरभ्यमाणे चतुर्थे 'उच्यते' अनुवर्ण्यत इत्यर्थः। तत्र ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाया एवाभावात्, इच्छाभावेऽपि तत्प्राप्तौ पुरुषार्थत्वहान्यापत्तेः ज्ञानस्य मोक्षमात्रे साधनत्वं, न सर्वेषु पुरुषार्थेषु इति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति—पुरुषार्थ इति ॥ अत्र अतः पुरुषार्थ इति प्रतिज्ञाभागे सङ्गतिसूचकस्य अत इत्यस्यार्थमाह—यद्दर्शनार्थमिति। यस्य ब्रह्मदर्शनस्यार्थमित्यर्थः। 'तस्मात्' अतो दर्शनतः। तत्त्वप्रदीपे तु यस्य विष्णोर्दर्शनार्थं उपासनोक्ता 'तस्मात्' तस्य प्रसादात् सञ्जातादर्शनादित्यर्थ उक्तः। पुरुषार्थ इत्यस्यार्थमाह—सर्वेति। पुरुषैरर्थ्यमानं यावच्छुभं तस्य सर्वस्यैव प्राप्तिर्भवति, न तु मोक्षमात्रस्येत्यर्थः। ब्रह्मदर्शन इति शेषः। अधिकारिणः फलसम्बन्धबोधनाय प्राप्तिपर्यन्तधावनम्। यद्यपि सूत्रे सर्वशब्दो न श्रूयते। तथाऽपि पुरुषैरर्थ्यमानत्वरूपधर्माक्रान्तसर्वपुरुषार्थवाचिपुरुषार्थशब्दपर्यालोचनया तल्लाभ इत्याशयेन सर्वेत्युक्तम्। इति बादरायणो मन्यत इत्यस्य शब्दादित्यनन्तरमन्वयः। वादे ज्ञाने रतानामधिकतया आश्रयत्वेन भगवत्तमो वेदेश्वर उच्यत इति तत्त्वप्रदीपोक्तरीत्या बादरायणशब्दार्थो ज्ञातव्यः॥

( २ ) ज्ञानात्सर्वपुरुषार्थ इत्येतत्कुत इत्यतः शब्दादिति हेत्वंशं व्याचष्टे-यमिति ॥ यस्मात् 'विशुद्धसत्त्वो' निर्मलान्तःकरणो ब्रह्मज्ञानी 'यंयं लोकं' स्वर्गादिरूपं मनसा 'संविभाति' इच्छति, प्राप्तुमिति शेषः 'यांश्च कामान्' काम्यान् 'कामयते' इच्छति तंतं लोकं तान्

तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ( मु. ३-१-१०. ) ॥

इति शब्दात् ॥ १ ॥

( ३ ) सू—ॐ ॥ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ॐ ॥ २ ॥

अस्त्येव मोक्षसाधनत्वं ज्ञानस्य स्वर्गादिषु तत्साधन कर्मशेषत्वेन ।

( ४ ) स्वर्गे धनाद्देहतो वै गृहाच्च

---

कामांश्च 'जयते' प्राप्नोति। तस्मादेवं परमात्मज्ञानस्य सर्वपुरुषार्थ साधनत्वात् तत्सिद्ध्यर्थं 'आत्मज्ञं' ब्रह्मज्ञानिनं 'भूतिकामः' 'स वेदै तत्' इत्युत्तरवाक्योक्तसर्वपुरुषार्थकामो जनः 'अर्चयेत्' पूजयेदित्यर्थः । तत्त्वप्रदीपे तु धातूनामनेकार्थत्वाभिप्रायेण 'संविभाति' मनुते, भा ज्ञान इति धातोरिति व्याख्यातम् । इतिशब्दादिति । इत्याथर्वण श्रुतेरित्यर्थः । अत्र ज्ञानिनां प्रायेणान्येच्छाभावेऽपि यस्य ज्ञानिविशेषस्य सौभरिकर्दमादिवत् भवतीच्छा, तस्य ज्ञानादेव सर्वपुरुषार्थप्राप्तिर्भवतीति सिद्धान्तिनो भावाभ्युपगमात् न 'परीक्ष्य' इत्यादिविरोधः ॥

( ३ ) यदुक्तं ज्ञानस्य सर्वपुरुषार्थसाधनत्वं तदाक्षिपत्सूत्रं पठति-—शेषत्वादिति ॥ अत्रात इत्यनुवर्तते । एतस्येति तदर्थः । पुरुषार्थ इत्यस्य पुरुषार्थसाधनत्ववचनमित्यर्थ इत्याशयेन सोपस्करं शेषत्वात्पुरुषार्थवाद इत्यंशं व्याचष्टे—अस्त्येवेति । एवकारो भिन्नक्रमः । दर्शनादिति पदस्य षष्ठ्यन्ततया विपरिणामेनानुषङ्गः । साधनत्वमित्येतद्बुद्ध्या विविच्यावर्तते । तत्रैकः साधनत्ववचनोपलक्षकः। स्वर्गादिष्विति चावर्तते । तथा चेत्थं सूत्रभाष्ययोजना—'अतः' एतस्य ब्रह्मदर्शनस्य मोक्षसाधनत्वमेवास्ति, न तु स्वर्गादिषु साधनत्वं, तत्साधनं तु कर्मैव। न चैवं 'यंयम्' इति वादविरोधः । यतः 'पुरुषार्थवादः' दर्शनस्य स्वर्गादिषु साधनत्ववचनं 'शेषत्वात् तत्साधनकर्मशेषत्वेन' तस्य स्वर्गादेः पुरुषार्थस्य साधनं यत्कर्म ज्योतिष्टोमादि तच्छेषत्वेन तेनैव सिद्ध्यत्स्वर्गादावाधिक्यसम्पादकत्वेन निमित्तेनैव प्रवृत्तो, न प्रधानसाधनत्वाभिप्रायेणात इति ॥

( ४ ) ननु शेषत्वे प्राधान्यप्रयोगानुपपत्तिः । तथाऽदर्शनादित्यत

प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चित्। इति वदति जैमिनिः ॥ २ ॥

( ५ ) सू--ॐ ॥ आचारदर्शनात् ॥ ॐ ॥ ३ ॥

ज्ञानिनामेव देवादीनामाचारदर्शनात् ॥ ३ ॥

( ६ ) सू--ॐ ॥ तच्छ्रुतेः ॥ ॐ ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यव

स्तदुत्तरत्वेन प्रवृत्तं शेषत्वात्पुरुषार्थवाद इत्यंशमावर्त्य यथाऽन्येष्वि त्यत्राप्यन्वयमभिप्रेत्य व्याचष्टे-स्वर्गं धनादिति। अन्येष्विति सम्बध्य ते। तथा च 'स्वर्ग धनात्' ( ) इति श्रुतौ ज्ञानकर्मभ्यां 'अन्येषु' धनादिषु स्वर्गसाधनकर्मशेषत्वेन प्राधान्यप्रयोगवदित्यर्थः। 'धनात्' बहुवित्तव्ययात् 'देहतः' शरीरात् तदायासादेः 'गृहात्' गृहस्थाद्गृहस्थाश्रमाद्य एतत्साध्याद्यागादेरित्यर्थः। इति जैमिनिर्मन्य त इत्यनुषज्यते ॥

( ५ ) ननु श्रुतिबलात् ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वं किं न स्या त्, कुतः श्रुतेरर्थान्तरपरिकल्पनेत्याशङ्कां परिहरत्सूत्रं पठति—आचा रेति ॥ अत्राध्याहार्यांशं दर्शयन् सूत्रं व्याचष्टे—ज्ञानिनामेवेति। विशे षणसङ्गतैवकारोऽयोगव्यवच्छेदकः । तथा च ' नैव देवपदं प्राप्ताः ब्रह्मदर्शनवर्जिताः ' इति वचनात् पदप्राप्तेः पूर्वं ज्ञानिनामेव अथ देवादित्वं प्राप्तानां न ज्ञानरहितानामित्यर्थः। आदिपदेन प्रजापादीनां ग्रहणम्। आचारः कर्मानुष्ठानं दर्शनात् श्रवणात् 'यज्ञेन यज्ञमयज न्त' ( तै.आ.३-१२-७.) इत्यादाविति शेषः। पूर्वपक्षिणा जैमिनिमतस्य सर्वविषयकत्वाश्रयणाद्देवादीत्युक्तम् । सूत्रे क्वचिच्चशब्दः पठ्यते। तदभिप्रायेण भाष्येऽपि चशब्दप्रयोग इति केचित्। तच्चिन्त्यम्। अ स्य सूत्रस्य शङ्कापरिहारत्वेन हेत्वन्तरपरत्वाभावात्। आचारदर्श नादित्यस्य शेषत्वादेव पुरुषार्थवादः, न तु प्राधान्यादिति प्रकृतसाध्ये नान्वयः ॥

( ६ ) नन्वेवमस्तु ज्ञानकर्मणोरुभयोरपि स्वर्गादिसाधनत्वं, ज्ञान स्य कर्मशेषत्वं कुत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—तदिति ॥ अत्र तदिति व्यस्तं समस्तं च। 'तत्' कर्म प्रति 'तस्य' ज्ञानस्य शे षत्वस्य श्रुतेस्तच्छेषत्वमेव सिद्धमिति सूत्रयोजनामभिप्रेत्य सूत्राभि

त्तरं भवति ’ ( छा. १-१-१०. ) इति शेषत्वश्रुतेः ॥ ४ ॥

( ७ ) सू—ॐ ॥ समन्वारम्भणात् ॥ ॐ ॥ ५ ॥

कर्मैव देहं दैविकं मानुषं वा
ऽप्यन्वारभेन्नापरस्तत्र हेतुः ।
भोगांस्तदीयांश्च यथाविभागं
ददाति कर्मैव शुभाशुभं यत् ॥

---

मतश्रुत्युदाहरणपूर्वकं सूत्रं व्याचष्टे—यदेवेति । ज्ञानस्येत्यनुवर्तते । तथा च छान्दोग्यवाक्ये ज्ञानस्य कर्मशेषत्वश्रुतेरित्यर्थः । ‘ श्रद्धया ’ आस्तिक्यबुद्ध्या युक्तया ‘ उपनिषदा ’ तस्य ब्रह्मण उप समीपं निषादयति गमयति एनमित्युपनिषत् स्वयोग्यविद्या तया ‘स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतम् ’ इति छान्दोग्यभाष्योक्तेः । ‘ विद्यया ’ ज्ञानेन ज्ञानी यत्कर्म करोति तदेव ‘ वीर्यवत्तरं ’ अधिकफलसाधनं भवतीत्यर्थः । इयं श्रुतिः बादरायणमते मानुषविषया तत्कर्तृकज्ञानस्य शेषत्ववादिनी प्रतिबन्धकयुक्तदेवताविषया चेति ज्ञातव्यम् ॥

( ७ ) ननु यथा ज्ञानस्य ‘यं यम् ’ ( मु.३-१-१०. ) इति श्रुतमपि प्राधान्यं न स्वीक्रियते, किन्तु शेषत्वमेव, एवं ‘यदेव विद्यया’ (छा.१-१-१०.) इति श्रुतमपि कर्मणः प्राधान्यं नाङ्गीकार्यं, किं नाम? ज्ञानशेषत्वं कर्मणः साम्यं वा भवेत्, विशेषप्रमाणाभावादित्याशङ्कां परिहरत्सूत्रं पठति–समिति ॥ अत्र समन्वारम्भणमिति विपरिणामेनावृत्तिर्वा तदित्यनुवृत्तिर्वा । तथा च ‘समन्वारम्भणात्’ ‘कर्मैव’ इति कर्मण एव प्राधान्येन स्वर्गाद्यारम्भकत्वश्रुतेः ‘तत्’ समन्वारम्भणं कर्मण एव स्वर्गाद्यारम्भकत्वमिति सूत्रयोजनामभिप्रेत्य समन्वारम्भणशब्दोपलक्षितश्रुत्युदाहरणपूर्वं सूत्रं व्याचष्टे–कर्मैवेति ॥ इतीति । एवंरूपसमन्वारम्भणवाचिमाठरश्रुतेरित्यर्थः । चशब्दोऽवधारणे साध्यसमुच्चये वा । तेन श्रुतेरित्यस्य समन्वारम्भणमिति साध्येनान्वयः सूचितो भवति । ननु कर्मणः स्वर्गाद्यारम्भकत्वमेव सूचितं, न प्राधान्यं, तच्च परस्यापि सिद्धमित्याशङ्कान्तरत्वेन संशब्दस्यार्थमाह—समिति । ‘ दर्शयति ’ प्रतिपादयति कर्मण इति शेषः । सिद्धान्ते मनुष्यविषयेयं श्रुतिः, प्रतिबन्धकयुक्तदेवताविषया च । तथा च ज्ञानोत्तरकालीनं शुभाशुभं कर्मैव ‘ दैविकं ’ मनुष्याणामेव देवलोके ज्योतिर्मयदेहं मानुषं वा देहं प्रतिबन्धकयुक्तदेवानां चोभयं देहमन्वारभेत् । ‘ अपरः ’ कर्मातिरिक्तज्ञानादिः ‘ तत्र ’

इति माठरश्रुतेश्च । संशब्दः प्राधान्यं दर्शयति ॥ ५ ॥

(८) सू—ॐ ॥ तद्वतो विधानात् ॥ ॐ ॥ ६ ॥

ज्ञानी च कर्माणि सदोदितानि
कुर्यादकामः सततं भवेत ।
इति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ॥ ६ ॥

(९) सू—ॐ ॥ नियमाच्च ॥ ॐ ॥ ७ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।

---

शरीराद्युत्पादने 'हेतुः' प्राधान्येन कारणं न भवति । किन्तु कर्मशेष तयैव कारणं भवतीत्यर्थः । 'तदीयान्' देवमानुषीयान् भोगांश्च कर्मैव ददाति 'यथाविभागं' योग्यायोग्यविभागमनतिक्रम्य पुण्यं शुभफलं पापमशुभफलमिति विभागमनतिक्रम्येति वा । कर्मस्वरूपमाह—शुभाशुभं यदिति । पुण्यपापात्मकमित्यर्थः । तत्त्वप्रदीपे तु नापरस्तत्र हेतुरित्यर्थः, विष्णोरितरापेक्षया ना परः पुरुषस्स्वतन्त्रहेतुरिति चार्थसम्भवादित्युक्तम् ॥

(८) ननु तथाऽपि न ज्ञानस्य कर्मशेषत्वं युक्तं, किन्तु स्वयमेव पुरुषार्थहेतुः । कस्मात् ? ज्ञानिकर्मणां फलाभावात् । फलाभावेऽप्याचारस्तु मुक्तवल्लीलयैवेत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—तद्वत इति ॥ अत्राप्यर्थकचशब्दोऽध्याहार्य इत्याशयेन तद्वत इत्यस्यार्थमाह—ज्ञानवत इति । न केवलं ज्ञानरहितस्येत्यपेरर्थः । विधानादिति । कर्मण इति शेषः । श्रुतौ विधानादिति हेतोर्न ज्ञानिनः कर्म लीलामात्रमित्यध्याहृतसाध्येनान्वयः । श्रुतिषु 'उदितानि' उक्तानि कर्माणि 'ज्ञानी च' ज्ञान्यपि सदा कुर्यात् । न केवलमेतावत्, किन्तु ज्ञानी सततमकामश्च भवेतेति श्रुत्यर्थः ॥

(९) इतश्च न ज्ञानिकर्म लीलामात्रमित्यभिदधत्सूत्रं पठति—नियमाच्चेति ॥ अत्र चस्समुच्चये । नियमोऽकरणे प्रत्यवायः । तेन तच्छ्रुतिर्गृह्यते । तथा च न केवलं विहितत्वान्न ज्ञानिकर्म लीलामात्रं, किन्त्वकरणे प्रत्यवायश्रुतेश्चेति सूत्रार्थ इत्याशयेन तां श्रुतिमुदाहरति—कुर्वन्निति । इतीत्यस्य सूत्रेणान्वयः । 'कुर्वन्' इति मन्त्रार्थस्तु—'शतं समाः' शतंवर्षाणि 'इह' मानुषादिजन्मनि यावत् 'जिजीविषेत्' जीवितुमिच्छेत् तावत् 'कर्माणि' स्वोचितानि 'कुर्वन्नेव' आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि स

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ( ई. २. ) ॥
इति ॥ ७ ॥

( १० ) सू—ॐ ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ॐ ॥ ८ ॥

'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे का

---

र्वेथा कुर्यादिति यावत् । 'एवं' कर्माणि कुर्वति 'नरे' मनुष्यमात्रेऽपि 'कर्म' पापं 'न लिप्यते' स्वोचितेनासङ्गकर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि प्रागुत्तराणि पापानि न बाधन्ते । ततश्च ज्ञानाधिकारी भवतीति यावत् । 'इतः' कर्मकरणात् 'अन्यथा' कर्माकरणे 'न लिप्यते इति नास्ति' भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव, ततश्च नासौ ज्ञानेऽधिक्रियते, अतः कर्माणि कार्याणीति ईशावास्यटीकायामुक्तम् । तत्त्वप्रकाशिकायां तु—'एवं' कर्मकरणे त्वयि कर्म न लिप्यते । 'इतोऽन्यथा' अकरणे 'नरे' न क्षीयत इति नरं ज्ञानं तद्वानपि नरः तस्मिन् ज्ञानिन्यपि त्वयि पापं कर्म न लिप्यत इति नास्तीत्यर्थ उक्तः । तत्त्वप्रदीपे तु—'इह' परमेश्वरे अर्पितानि कर्माणि कुर्वन्नेव शतं समाः जिजीविषेत् । एवं त्वयि नरे न कर्म लिप्यते, इतोऽन्यथा कर्म न लिप्यत इति नास्तीत्यर्थ उक्तः । सः ईशावास्यटीकोक्ताम्न भिद्यत इति ध्येयम् ॥

( १० ) एवं जैमिनिमतावलम्बेन चोदिते स्वमतं समर्थयत्सूत्रमुपन्यस्यति—अधिकेति ॥ अत्राधिकोपदेशादिति हेतुवाक्यं व्याचष्टे—ज्ञानादेवेति । तथाऽपीत्युक्तेर्यद्यपीति लभ्यते । अपवर्गो मोक्षः । 'कामाः' काम्याः 'यथा यथा' यद्यत् कुरुते पुरुषः 'तथा तथा' तेन तेन कर्मणा 'अधिको' ज्ञानफले अतिशयितो भवतीत्यर्थः । अनेनाधिकोपदेशादित्यस्य ज्ञानादेव सिद्ध्यत्सु स्वर्गादिष्वधिकभावोपदेशादित्यर्थ उक्तो भवति । तद्दर्शनादिति हेत्वन्तरं, तत् चार्थकतुशब्दान्वयेन तच्छब्दावृत्त्या च व्याचष्टे—युधिष्ठिरादीनामिति ॥ अन्येषां देवजातीनां स्वर्गजुषां मध्ये 'युधिष्ठिरादीनां' धर्मादीनां राजसूयादिना फलाधिक्यस्य लिङ्गस्य दर्शनात् दृष्टत्वादित्यर्थः । उक्तं हि—

राजसूयजितान् लोकान् अश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाभाग तपसश्च महाफलम् ॥

माः सम्पद्यन्ते । तथाऽपि यथा यथा कर्म कुरुते तथा तथाऽधिको भवति ' इति कौण्ठरव्यश्रुतेः । युधिष्ठि रादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बाद रायणस्य मतम् ॥ ८ ॥

(११) सू—ॐ ॥ तुल्यं तु दर्शनम् ॥ ॐ ॥ ९ ॥

इति स्वर्गारोहणपर्वणि । तथा—

ज्ञानिनामपि देवानाम् ॥ इति ब्रह्मतर्के च ॥

'लोकान्' लोके भवान् फलातिशयानित्यर्थः । श्रुतेर्दर्शनादित्यनयोः त स्माद्दर्शनादेव सर्वपुरुषार्थप्राप्तिरिति पूर्वसाध्येनान्वयः । एवं सौत्रहे तोः तदित्यस्य बुद्ध्या विभागेन तुशब्दस्यैवेति व्याख्यानेन च परिष्कृ तेन तदेवमेवेति साध्यवाक्येन परम्परयाऽन्वयः । इतिशब्दाध्याहारे ण बादरायणस्येत्येतद्व्याचष्टे—इतीति । अनेन—' अधिकोपदेशात् ' ज्ञानादेव जायमानेषु स्वर्गादिपुरुषार्थेषु कर्मणा अधिकस्य आधिक्य स्यातिशयस्य ' ज्ञानादेव ' इत्यत्रोपदेशात् उक्तत्वात् ' तद्दर्शनाच्च ' ते षां ज्ञानिनामेवान्येषां देवजातीनां मध्ये युधिष्ठिरादीनां तेन राजसू यादिकर्मणा तस्य फलाधिक्यरूपलिङ्गस्य तत्र ' राजसूयजितान् ' इ त्यादौ दर्शनात् श्रवणाच्च तत्र देवानां ज्ञानादेव सर्वं स्वर्गादिफलं, क र्मणस्तु तत्रातिशयाधायकत्वेन ज्ञानशेषत्वं सिद्धम् । यस्मादेतत्सिद्धं तस्मान्नाचारादिवैयर्थ्यं न वा विध्याद्यनुपपत्तिः, यत एवमतो यदुक्तं ज्ञानादेव सर्वपुरुषार्थप्राप्तिरिति ' तदेवमेव ' तत्तथैव, न तु ज्ञानं कर्म शेषतया पुरुषार्थसाधनमित्येवं बादरायणाचार्यस्य मतमिति सूत्रार्थ उक्तो भवति । तत्त्वप्रदीपे तु जैमिन्युक्तश्रुतीनामेवंगतेरित्यपि एवंश ब्दार्थ उक्तः ॥

(११) नन्वस्तु ज्ञानस्य सर्वपुरुषार्थहेतुत्वं कर्मणस्तु तच्छेषत्वं, शे षत्वं च न ज्ञानफलेऽतिशयाधायकत्वेन, नापि तदुत्पत्त्युपयोगित्वेन त दुत्तरभावित्वात्, किन्तु ज्ञानेन फले साधयितव्ये सामर्थ्यसम्पादकत या ज्ञाने अतिशयाधायकत्वेनेति किं न स्यादित्याशङ्कां परिहरत्सूत्र मुपन्यस्यति—तुल्यं त्विति ॥ अत्र तुशब्दस्यैवार्थत्वं तदित्यस्य विप रिणामेनानुवृत्तिं चाभिप्रेत्य सूत्रार्थमाह—राजसूयादीति । आदिपदेन अश्वमेधादिर्गृह्यते । कृतिः करणम् । सममिति तुल्यमित्यस्य एवेति तु शब्दस्य कृतावकृतौ तेषामिति विपरिणततच्छब्दस्य ज्ञानमिति दर्श

राजसूयादिकृताधिकृतौ च सममेव तेषां विधानम् ।
( १२ ) विज्ञातमेतत्सर्वेषां मुनीनां ब्रह्मदर्शनात् ।
स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ॥
( १३ ) स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः ।
ज्ञानेनाधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ॥
अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते ।

नशब्दस्य व्याख्यानमिति द्रष्टव्यम् । न तु विषममित्येवशब्दार्थः । अन्यथा कर्मकरणे ज्ञानं पुरुषार्थसाधने समर्थं अकरणे असमर्थमिति ज्ञाने विशेषस्स्यादिति भावः । ज्ञानमित्यनन्तरं यत इति शेषः । अतो ज्ञानिकर्म न ज्ञाने अतिशयाधायकं, किन्तु ज्ञानफल इति साध्यसमर्पकैवंशब्देन अस्यान्वयः ॥

( १२ ) नन्वेवं तर्हि भगवन्मतविरोधेन जैमिनिमतस्याप्रामाण्यं प्रसज्यते । न च मुनिमतस्य तद्युक्तम् । जैमिनिमतस्य प्रामाण्ये तु भगवन्मतस्य अप्रामाण्यमित्याशङ्कां स्मृत्या परिहरति—विज्ञातमिति॥ जैमिन्यादीनां व्यासशिष्याणां सर्वेषां मुनीनां ब्रह्मदर्शनादेव मोक्षः स्यात्, नान्यस्मात्कर्मण इत्येव 'विज्ञातं' सम्मतमिति यावत् । 'तत्रापि' तेषां मतेष्वपि मोक्षान्यफलविषयेऽपि 'चित्रता' आधिक्यं नानाप्रकारमस्ति ॥

( १३ ) वैचित्र्यमेव दर्शयति—स्वर्गादय इति ॥ 'अपरे' केचिदृषयः स्वर्गादयः कर्मणैव भवन्ति, न तु कर्मणोऽन्येन तच्छेषभूतेन ज्ञानेनेति 'विदुः' अभ्युपजग्मुः । इदं मतमपरोक्षज्ञानिष्वेव मनुष्येषु येऽधमाः तत्कर्तृकज्ञानविषयम् । केचन जैमिन्याद्यास्तु अपरोक्षज्ञानेन कर्मशेषभूतेन कर्मफले सर्वत्र दृष्टादृष्टरूपे आधिक्यमित्याहुः । इदं मतमुत्तममनुष्यविषयमिति प्राञ्चः भावबोधकाराश्च । अर्वाचीनास्तु इदं मतं योग्यमध्यममनुष्यविषयमित्याहुः । केचित्तु कर्मशेषभूतेन ज्ञानेन 'अदृष्टं' स्वर्गादिकं सर्वमेव 'उपलभ्यते' प्राप्यते, न तु दृष्टं पुत्रवृष्टिधनादिकमपीत्याहुः । इदं मतं मध्यममनुष्यविषयमिति प्राञ्चो भावबोधकाराश्च । अर्वाचीनास्त्विदं मतं योग्येषूत्तममनुष्यविषयमित्याहुः । अत्र यद्यपि प्राचीनपक्षे भावबोधपक्षे च स्वर्गादय इति स्मृतिक्रमभङ्गोऽस्ति । तथाऽपि मानुषा अपि उत्तममध्यमाधमभेदभिन्ना यथायोग्यं विचित्रमतविषया भवन्तीति सुधोक्तेर्यथायोग्यमेव स्मृत्युक्तपक्षे यो

इति केचिद्विदः प्राहुः व्यासशिष्या इमेऽखिलाः ॥
यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् ॥
( १४ ) यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा ।
प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ॥
( १५ ) स्वयन्तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।
अनन्ताकाशवत्पश्यन्निखिलं पुरुषोत्तमः ॥

जनीयः। न चाधमक्रमेण योजने स्मृत्यानुगुण्यं सुधाविरोधश्च नास्ती ति वाच्यम्। प्रमेयबाधात्। कर्मसाध्ये दृष्टादृष्टादौ सर्वत्र ज्ञानस्यानुप्र वेशो ह्युत्तमपक्षे। इष्टमात्रप्रवेशो मध्यमे। अधमे तु न कुत्रापि ज्ञानस्य प्रवेश इति तत्त्वम्। व्युत्क्रमस्यापि क्रमत्वे सुधोक्तानुक्रमविरोधो य थायोग्यमित्युक्तिविरोधश्चात्रेति ध्येयम्। कर्मफले विचित्रतायामपि न मुनिमतानामसत्यत्वं शङ्क्यमित्याह—इम इति। यस्मादिमे एवं वद न्तोऽखिलाः सर्वेऽपि व्यासशिष्याः, तस्मादुक्तं 'सर्वं व्यासमतं' वेद व्यासमतान्तर्भूतं 'ततोऽखिलं' निश्शेषं सर्वं सत्यमेवाधिकारिभेदा दित्यर्थः ॥

( १४ ) अत्र दृष्टान्तमाह—यथेति॥ यथा आकाशोऽनन्तोऽपि 'स त्येन' सत्यत्वेन वर्तते, तथा तत्प्रभेदाश्च 'व्यामः' पुरुषप्रमाणः बाहु द्वयपरिमितो वा 'हस्तावधिः' हस्तपरिमितः प्रादेशपरिमितश्चेत्येते सत्यत्वेन वर्तन्ते, तथा भगवन्मतं तदन्तर्गतान्येतेषां मुनीनां मतानि च साकल्येन सत्यानीत्यर्थः। तुश्चार्थः चस्समुच्चये। तत्त्वप्रदीपे तु—य था आकाशः कात्स्न्र्येन गृह्यमाणोऽनन्तोऽपि परिमाणभेदापेक्षया व्या मो हस्तप्रमाण इत्याद्युज्यते 'सत्येन' सत्यवचनेनैव, तथैतेषां मता न्यधिकारिभेदापेक्षया सत्यानीत्यर्थ उक्तः ॥

( १५ ) ननु ज्ञानादेव सर्वे पुरुषार्थाः कर्मणा तु तदाधिक्यमिति भ गवन्मतं, अन्येषां तु नैवं मतं, अतः कथमनन्ताकाशवदन्तर्भावितान्य मतत्वं बादरायणमतस्येत्यत आह—स्वयं त्विति॥ तुरप्यर्थः। अन न्ताकाशवदित्यस्य पूर्वेणान्वयः। भूतव्यावृत्त्यर्थं—अनन्तेति। व्याप्ते त्यर्थः। दृष्टान्ते विधेयधर्मवैकल्यपरिहारायेदम्। तथा च पुरुषोत्तमो भगवान् अनन्ताकाशवत् व्याप्तज्ञानमहांशुमान् 'महायोगी' महामु निर्व्यासो नानाधिकारिकं निखिलं मतं पश्यन्नपि स्वमतत्वेनेति शेषः। अपरोक्षज्ञानेनैव सर्वं स्वर्गादिकमाप्यते, ज्ञानोत्तरकृतकर्मणा तु तद्

ज्ञानेनैवाप्यते सर्वं कर्मणा त्वधिकं भवेत् ।
इतिप्राह महायोगी पुमर्थानांविनिर्णयम् ॥
इति भविष्यत्पर्वणि ।
( १६ ) ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् ।

धिकं भवेदित्येवं देवतालक्षणाधिकारिविशेषविवक्षया 'पुमर्थानांविनिर्णयं' षष्ठ्या अलुक्, व्यधिकरणबहुव्रीहिरयं, स्वर्गादिपुमर्थसाधनविषयकनिर्णयजनकं स्वमतं पृथक्प्राहेत्यर्थः । आकाशवद्व्याप्तज्ञानमहांशुमान् व्यास इति यथाश्रुतान्वयो न सम्भवति, व्याप्तज्ञानवत्त्वरूपविधेयधर्मस्य पक्षदृष्टान्तोभयान्वयाभावात्, किन्त्वाकाशवद्व्याप्तं च तत् ज्ञानं चेति विधेयैकदेशेनान्वयो वाच्यः । तथा चायमनन्वयदृष्टान्तः । अत एव टीकाकृदनन्ताकाशवदित्यनन्वयदृष्टान्त इत्युक्त्वा तदुपपादयितुं यथाऽऽकाशो व्याप्तस्तथा ज्ञानमित्येकदेशान्वयं प्रदर्शितवान् । न च दृष्टान्तस्य अनेकविधत्वाभावः ।

व्यत्यासोऽनन्वयश्चैव प्रसिद्धोऽभूत एव च ।
सर्वसांहारिकश्चेति दृष्टान्तः पञ्चधा स्मृतः ॥

इत्युक्तेः । 'रमादिवन्नास्वतन्त्रो हरिः' इति व्यत्यासदृष्टान्तः । अनन्वयस्य तु प्रकृतमेवोदाहरणम् । प्रसिद्धो महानसादिः, 'यथोर्णनाभिः' ( मु.१-१-७. ) इति च । अभूतस्य 'दिवि सूर्यसहस्रस्य' इत्याद्युदाहरणम् । सर्वसांहारिकस्य 'कृष्णो नारायणवत्, रामः कृष्णवत्' इत्यादि । सर्वेषां नारायणकृष्णधर्माणां कृष्णे रामे चोपसंहारात् । 'गगनं गगनाकारम्' इत्यादि सर्वसांहारिकस्योदाहरणमिति केचिदाहुः । भविष्यत्पर्वणीति । मतानां प्रामाण्यमुक्तमिति शेषः ॥

( १६ ) नन्वेवं स्मृत्या मतानां प्रामाण्योक्तावपि परस्परविरुद्धत्वात्कथं तत्स्यादित्यतो भगवन्मतं देवताविषयं, जैमिन्यादिमतं मनुष्यविषयमतो न विरोध इति भावेनात्र स्मृतिमाह—ज्ञानिनामिति ॥ तत्त्वप्रदीपे तु राजसूयादिना फलाधिक्यमित्युक्तं सममिति चोक्तम् । तत्र प्रमाणमाह—ज्ञानिनामपीत्यवतारितम् । यद्यपि देवाः ज्ञानिनः, तथाऽपीत्यर्थेऽपिशब्दः । ज्ञानिनां देवानां ज्ञानेन सर्वफलसिद्धावपीति वा । 'विशेषः' आधिक्यं ज्ञानफल एव, न तु ज्ञाने इति शेषः । कुत इत्यत आह—चीर्ण इति । कर्मणि 'चीर्णे' अनुष्ठिते 'अकृते' अननुष्ठिते वा 'ज्ञानस्य' ज्ञाने 'विशेषः' अतिशयः पुरुषार्थसाधनसामर्थ्या

चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणि ॥ इति ब्रह्मतर्के ॥ ९ ॥

——:❀:——

२. अधिकरणम् ॥

( १ ) सर्वेषां पुरुषार्थापेक्षित्वात् ज्ञानाधिकारितेति ।

( २ ) अत आह—

सू—ॐ ॥ असार्वत्रिकी ॥ ॐ ॥ १० ॥

न सर्वेषामधिकारः ॥ १० ॥

( ३ ) सू—ॐ ॥ विभागश्शतवत् ॥ ॐ ॥ ११ ॥

---

सामर्थ्यरूपो नास्तीत्यर्थः । 'हि' यस्माद्ब्रह्मतर्के इति व्यासमतस्य देवताविषयश्लोकेन विरोध इति वाक्यशेषः । यद्वा—तत्त्वप्रदीपानुसारात्फलाधिक्यं ज्ञानानां विशेषश्लोक इति शेषः ॥ १ ॥

॥ इति पुरुषार्थाधिकरणम् ॥

——:❀:——

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे ज्ञाने सर्वेषामधिकाराभावो वर्ण्यते । पूर्वपक्षयति—सर्वेषामिति ॥ 'सर्वेषां' जनाना पुरुषैरर्थ्यमानो यो ज्ञानसाध्यो मोक्षः तदपेक्षित्वात् निर्दुःखसुखमाप्नुयामीति तदर्थित्वादित्यर्थः । उपलक्षणमेतत्—सर्वेषां ज्ञानसाधने श्रवणादौ सामर्थ्यात्तदुपयोगिविद्वत्तासद्भावाच्चेत्यपि ज्ञातव्यम् । ज्ञानाधिकारिता स्यादिति शेषः । सर्वेषामधिकार इत्यनुक्त्वा अधिकारितेति स्त्रीलिङ्गप्रयोगेन वक्ष्यमाणसूत्रं विशेष्यपदोक्त्याऽनुकरोति ॥

( २ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रं पठति—असार्वत्रिकीति । ज्ञानाधिकारिता 'असार्वत्रिकी' सर्वेषां नेति व्याकृतमपि सूत्रं पुनः स्वोक्तिविवरणेन व्याचष्टे—नेति । जनानामिति शेषः॥

( ३ ) नन्वर्थित्वादेः सर्वेषामपि सद्भावात् कथं नाधिकारितेत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—विभाग इति ॥ अत्र तुल्यमित्यतः तुशब्दोऽनुवर्तते । शतवदिति चावर्तते । तत्रैकस्य शतशब्दवतो वचनादित्यर्थ इत्याशयेन सूत्रं व्याचष्टे—नवकोट्य इति । 'नवकोट्यो' नवकोटयः तावत्सङ्ख्याकाः 'हि' प्रसिद्धाः देवानां गणाः सन्तीति शेषः । कोटीशब्दो वा, तथात्वे सङ्ख्या इति शेषः । 'तेषां' नवकोटी

नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।
सोमाधिकारो वेदोक्तो ब्रह्मणी द्वेशताधिके ॥
यथा तथैवासङ्ख्येयाः प्रजास्तासु कियान् जनः ।
ज्ञानाधिकारी संप्रोक्तो विष्णुपादैकसंश्रयः ॥
इति वचनात्सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥ ११ ॥

( ४ ) कस्याधिकारः ?

---

षां मध्ये 'शतस्य तु' शतसङ्ख्याकदेवगणस्यैव 'सोमाधिकारः' सोमरसद्रव्यकयागाधिकार इत्यर्थः । सोमपानाधिकार इति वा । न केवलं शतस्यैव, किन्तु शताधिकयोरपि अधिकारोऽस्तीत्याह—ब्रह्मणी इति । विष्णुचतुर्मुखाख्यपरापरे ब्रह्मणी इत्यर्थः । यथाशब्दः शतस्येत्यतः प्राग्योजनीयः । अत्यन्तसाम्ये एवशब्दः । प्रजाः सन्तीति शेषः । कियान् जन इति जात्यैकवचनम् । अयोग्यजनव्यावृत्त्यर्थमाह—विष्णिवति । वचनादित्यनेन शतवदित्यंशः, सुखापेक्षासाम्येऽपीत्यनेनानुवृत्ततुशब्दश्च सर्वेषां निर्दुःखानन्दरूपपुरुषार्थापेक्षासाम्येऽपीत्यर्थतया व्याख्यातः । इति वचनान्न सर्वेषां ज्ञानाधिकारः, किन्तु ज्ञानाधिकारार्थे शतवद्विभागः 'इष्यते' अङ्गीक्रियते इति योजना । अनेन—'शतवत्' शतस्यैव यथा खलु नवकोटीनां देवत्वसाम्येऽपि न तेषां साधारण्येन सोमाधिकारः किन्तु परापरब्रह्मद्वयाधिकशतस्येति विभाग एव, तथा 'शतवद्वचनात्' शतशब्दयुक्तवचनोद्य इति वचनात् 'तु' अपि सर्वेषां पुरुषार्थापेक्षासाम्येऽपि न ज्ञानाधिकारः, किन्तु तदर्थे ज्ञानाधिकारार्थे 'शतवद्विभागः' पुरुषविभागोऽङ्गीकार्य इति सूत्रार्थ उक्तो भवति । सोमाधिकारिशतदेवास्तु तत्त्वप्रदीपेऽभिहिताः । तेषामयं सङ्ग्रहश्लोकः—

प्रधानवायुर्मरुतोऽश्विनौ च वस्वर्करुद्राः पितरो गुरुश्च ।
द्यावापृथिव्यावृभवोऽपि विश्वे देवाः शतं सोमसवाधि
[कारिणः ॥

इति । अत्र पितृपत्नीनां त्रित्वं, अश्विनोर्द्वित्वं, सहस्रऋभूणामेकत्वं च विवक्षितम् ॥

( ४ ) ननु यद्यर्थित्वादिसाम्येऽपि न सर्वेषामधिकारः, तर्हि कस्याप्यसौ नस्यात् । यदि केषां चिदधिकारोऽस्ति तर्ह्यर्थित्वाद्व्यतिरिक्तमधि

सू—ॐ ॥ अध्ययनमात्रवतः ॥ ॐ ॥ १२ ॥

( ५ ) अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्माद्ध्ययनान्वितः ।
ब्रह्मज्ञाने तु वेदोक्ते ह्यधिकारी सतां मतः ॥
इति ब्रह्मतर्के ।

कार प्रयोजकविशेषणं वक्तव्यम्, न च तदस्तीति भावेनाक्षिपति-कस्येति । अर्थित्वाद्व्यतिरिक्तस्य केन विशेषणेन युक्तस्य अधिकारः? न केनापि युक्तस्येत्यर्थः । कस्याधिकार इति प्रयोगेन वक्ष्यमाणसूत्रापेक्षितसम्बन्धिपदं प्रदर्शितं भवति । एतच्चोद्यपरिहाराय सूत्रं पठति—अध्ययनेति । मात्रशब्दः कात्स्न्यार्थः । तथा च यथाशक्त्यखिलवेदाध्ययनरूपविशेषणवत इत्यर्थः । यथोक्तं तत्त्वप्रदीपे—मात्रशब्दः कात्स्न्येऽवधारणे च । तथा च साङ्गवेदाध्ययनवतः सफलाध्ययनवतः अशक्तौ च यथा सम्भवं वेदाध्ययनवत इति । भवतीति ज्ञानाधिकार इति सम्बन्धः ॥

( ५ ) ननु यद्यध्ययनवतां ज्ञानाधिकारः तर्हि ‘ त्रिभागः ’ इत्युक्तिभङ्गस्स्यात् । सर्वैरपि वेदस्याध्येतुं शक्यत्वादित्यत आह—अवैष्णवस्येति ॥ विष्णुभक्तिविहीनस्येत्यर्थः । अपिः वैदिकेऽपीति समुच्चये, वेदोक्तेऽपि तर्हि अवैष्णवस्यापीति वा । ‘ हि ’ यस्मात् । नञो द्विर्ग्रहणं सर्वत्र सम्बन्धं ज्ञापयति । अथ वा—शूद्रस्य तन्त्रेऽधिकारसत्त्वात् पृथङ्निषेधः । आद्यश्चस्समुच्चये । द्वितीयोऽवधारणे । वर्णावरः शूद्रः । अपिस्समुच्चये । ‘ वेदोक्ते तु ’ वेदजन्य एव ब्रह्मज्ञाने । तन्त्रोक्ते त्वध्ययनानपेक्षेति तुशब्दाभिप्रायः । तृतीयोऽपिः भिन्नक्रमः विष्णुभक्तिरूपविशेषणसमुच्चयार्थः । हिशब्दपाठे पुनः हिशब्दः प्रसिद्धौ, सज्जनसम्मतेर्हेतुत्वद्योतको वा । तस्मादित्यस्य यस्माद्ध्ययने भगवद्भक्तिमतामेवाधिकारो नान्येषां, तस्माद्ध्ययनान्वितो ब्रह्मज्ञानेऽधिकारीति युक्तमित्यन्वयः । इतीति शेषः । न चाभक्तस्यानधिकारित्वे चतुर्मुखस्य विरोचनाध्यापने कथं प्रवृत्तिरिति वाच्यम् । अभक्तानामनधिकारितया तदध्ययनस्य वैफल्यमेवेति ज्ञापनायाध्यापनोपपत्तेः । अत एव तत्त्वप्रदीपे अध्ययनवत इत्येतत् सफलाध्ययन इति व्याख्यातम् । इति ब्रह्मतर्क इति । सूत्रकृदुक्तमुक्तमिति वाक्यशेषः ॥

( ६ ) 'पठेद्वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्'
इति कौषारवश्रुतिः ॥ १२ ॥

———*———

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ नाविशेषात् ॥ ॐ ॥ १३ ॥
न सामान्येनाधिकारो देवादीनाम् ।
( २ ) अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् ।

---

( ६ ) अध्ययनवतो वैदिकब्रह्मज्ञानेऽधिकार इति यत्स्मृत्या सिद्धं तत्र श्रुतिं चाह—पठेदिति ॥ 'वेदान् पठेत्' गुरूच्चारणमनूच्चारयेत् । 'अथ' अनन्तरं 'अर्थान्' वेदार्थान् 'अधीयीत' गुरुमुखाज्जानीयात् । अथैवं श्रवणोपासनानन्तरं 'ब्रह्म विचार्य' मत्वा ध्यात्वा च 'अथ विन्देत्' अपरोक्षतो जानीयात् । अथ प्राप्नुयादित्यर्थः । इति चेति चः पूर्वोक्तस्मृतिसमुच्चये । श्रुतिश्चेत्यन्वेति । अध्ययनवतामेव वैदिक ब्रह्मविद्याधिकार इत्यर्थमाहेति शेषः ॥ २ ॥

॥ इति असार्वत्रिकाधिकरणम् ॥

———:*:———

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे ज्ञानाधिकारे तारतम्यं समर्थ्यते । तारतम्य कल्पकाभावात् सर्वेषां अविशेषेण ज्ञानाधिकार इति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—नेति ॥ अत्राधिकार इत्यनुवर्तते । अविशेषादित्यावर्तते । नाविशेषादित्येकपद्यं च । देवादीनामिति शेष इति भावेन सूत्रं व्याचष्टे—नेति । साम्येत्यावर्तते । तत्र द्वितीयस्य साम्यप्रसंगादित्यर्थः । देवादीनामिति । 'देवानां' ऋषिगन्धर्वाणां मनुष्याणां च न साम्येनाधिकारः, तथा तेषां प्रत्येकमपि न साम्येनाधिकार इत्यर्थः । अनेन—देवादीनां ज्ञाने अधिकारः 'अविशेषात्' साम्येन न, कुतः? तथासति 'अविशेषात्' ज्ञानेऽपि साम्यप्रसङ्गात् । किन्तु 'नाविशेषात्' तारतम्येनेति सूत्रार्थ उक्तो भवति ॥

( २ ) ज्ञानाधिकारतारतम्ये न केवलं युक्तिः प्रमाणमित्याशयेन श्रुतिं चाह—अथेति ॥ आरम्भे अथशब्दः । पुरुषार्थो मोक्षः । तथा च 'अर्थो' वित्तं 'धर्मः' सुकृतं 'ज्ञानं' ब्रह्मदर्शनमित्येतानि त्रीणि पूर्वं पूर्वं उत्तरोत्तरमपेक्ष्य पुमर्थसाधनानीत्यर्थः । तत्रार्थस्य धर्मज्ञानद्वारा

तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्'
इति कौण्डिन्यश्रुतिः ॥ १३ ॥

४. अधिकरणम् ॥

( १ ) 'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति '(बृ. ५-५-१.)

मोक्षसाधनत्वं, धर्मस्य ज्ञानद्वारा, ज्ञानस्य तु साक्षादिति विवेकः । एतेषु योऽधिकारिणः तेषां च तारतम्यमाह—तत्रेति । त्रिष्वित्यर्थः । इत्येते उत्तरोत्तरमतिशयिताः प्रत्येकं प्रत्येकमधिकारिण इत्यर्थः । तत्त्वप्रदीपे तु—अर्थो धर्मो ज्ञानमित्युत्तरोत्तरतः पुमर्थानां कामस्वर्गापवर्गाणां साधनानि साध्यं चोत्तरमधिकमित्यर्थः । तेषु त्रिष्वपि अधिकारिणो मनुष्यर्ष्यादिदेवास्तु ' उत्तरोत्तरं ' प्रत्येकं प्रत्येकं वेत्यर्थ इत्युक्तम् । अस्य नेति पूर्ववाक्येनान्वयः ॥ ३ ॥

॥ इति अविशेषाधिकरणम् ॥

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषः साध्यते । पूर्वपक्षं सूचयति—अथेति ॥ अथेत्यतः प्राक् ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषो नास्तीति साध्यमध्याहृत्य तत्र हेतुतया यतश्शब्दाध्याहारेणाथेत्यादि विधीयत इत्यन्तं वाक्यं योजनीयम् । ईदृश एवेति । इति श्रुताविति शेषः । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति' बृहदारण्यकवाक्यस्यायमर्थः—यस्मादपरोक्षज्ञानान्मोक्षः, तस्माद्यो 'ब्राह्मणो' ब्रह्म अणितुं प्राप्तुं योग्योऽसौ 'पाण्डित्यं' आगमजन्यं श्रवणरूपज्ञानं सम्पादयेत् । पाण्डित्यं 'निर्विद्य' नितरां लब्ध्वा 'बाल्येन' युक्तिरूपबलसहितेन तज्जन्येन मननरूपज्ञानेन 'तिष्ठासेत्' स्थातुमिच्छेत् बाल्यं सम्पादयेदिति यावत् । 'अथ' तदुभयलाभानन्तरं 'मुनिः' ध्यानी भवति मौनममौनं च निर्विद्येत्यनुवादात् अथा मुनिरपरोक्षज्ञानी भवतीति लभ्यते । अत एव व्यासतीर्थीये 'अथ मुनिः' इत्यस्यानन्तरमध्याहृतस्यामुनिरित्यस्यार्थमाहेत्युक्तम् । तथा च

ज्ञानिनो यथेष्टाचरणं विधीयत इति ।

( २ ) अत आह—

सू—ॐ ॥ स्तुतयेऽनुमतिर्वा ॥ ॐ ॥ १४ ॥

---

एवं 'मौनं' उपासनारूपज्ञानं 'अमौनं' अपरोक्षज्ञानं च निर्विद्याथ ब्राह्मणो जीवन्मुक्तो भवति तथोच्यते 'सः' जीवन्मुक्तो येन केन सता वा स्यादसता वा प्रकारेण कर्माचरणेन 'स्यात्' वर्तेत, 'तेन' यथेष्टाचरणेन 'ईदृश एव' ज्ञानफलमोक्षं प्राप्त एव भवति । न ताव ता तस्य मोक्ष हानिरिति । यद्यपि बृहद्भाष्ये 'ब्राह्मणो' मुक्तो भवती त्यर्थः । 'सः' मुक्तो येन केनापि वर्तयन् 'ईदृश एव' परमात्मनः स काशादानन्दभिक्षुक एव, न कदाचित्स्वतन्त्रो भवतीति ब्राह्मणशब्दः परममुक्तपरतया येन केनेत्येतन्निमित्तपरतया च व्याख्यातः । तथा ऽपि तत्रैव

प्रथमब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते ।
अपरोक्षविन्मुक्तयोस्तु तार्तीयेनोभयोर्ग्रहः ॥

इति प्रमाणोदाहरणेन अथमुनिरित्यस्यानन्तरं अध्याहारं विनैव ब्राह्म णपदानुषङ्गेण श्रुतिव्याख्यानायापरोक्षज्ञानिपरत्वस्याप्युक्तत्वादविरो धः । न च प्रमेयदीपिकायां बलेन युतं बालं तस्य भावो बाल्यमित्या शयेन युक्तिबलोपेतत्वं बाल्यं, आगमज्ञत्वं पाण्डित्यं, 'अथ मुनिः' मननशीलो भवतीत्यर्थोक्तेर्विरोध इति वाच्यम् । गीताभाष्ये 'मौनं मननशीलत्वम्' इत्यस्यार्थे अस्याश्श्रुतेरुदाहृतत्वात् तदानुकूल्याय त था व्याख्यानेऽप्यस्य प्रकारान्तरत्वसम्भवात् ॥

( २ ) सिद्धान्तयत्सूत्रमवतारयति—अत इति ॥ सूत्रं पठति—स्तु तय इति । अत्र 'नाविशेषात्' इत्यतः विपरिणामेन नाविशेष इत्य स्यानुवृत्तिं 'परामर्शम्' इत्यतः अचोदनेत्यस्याकर्षणं च अभिप्रेत्य सूत्रं व्याचष्टे—न विधिरिति । न यथेष्टाचारविधिरित्यर्थः । 'केन स्याद्येन स्यात्' इति वाक्यमित्यस्ति । यत इति शेषः । न विधिरि त्यस्यातो न विध्यनुपपत्तिदोष इत्युपक्रान्तेनान्वयः । तस्य च अतो ज्ञानिनः सदसत्प्रवृत्त्योर्नाविशेषः, किन्त्वस्त्येव विशेष इति परमसा ध्येनान्वयः । तर्हि 'येन स्यात्' इति किमर्थमुच्यत इत्यतः तत्सार्थ क्यकथनपरतया स्तुतयेऽनुमतिर्वेत्येतद्योजयति—ज्ञानीति । ज्ञानीत्य तः प्राक् किन्त्वितिशेषः । स्तुतिः सामर्थ्यप्रकटनम् । तथा च यथा

न विधिः । ज्ञानिनः स्तुतयेऽनुमतिमात्रं वा ।

( ३ ) युज्यते च ॥ १४ ॥

( ४ ) सू—ॐ ॥ कामकारेण चैके ॥ ॐ ॥ १५ ॥

'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरनारम्भणम्' ( सामशाखा ) इति चैके पठन्ति ॥ १५ ॥

कंचिद्भृत्यं प्रति स्तुतये कथ्यते यथेष्टं कुर्वेति न तु विधिः तथैतदपि 'ज्ञानिनस्तुतये एव' यदि ज्ञानी सता वाऽसता वा कर्मणा वर्तेत, तदाऽपि 'ईदृश एव' मोक्षवानेवेति ज्ञानिनो गुणवर्णनायैवोच्यते, न तु विधिः । अथ वा—अनुमतिरनुज्ञामात्रमेतत् । यदि ज्ञानी अनुष्ठेयानां सत्कर्मणां मध्ये येन केनापि वा वर्तेत, स्वेच्छया केषां चित्सत्कर्मणां चरणं केषां चिदचरणमित्येवंभाववान् स्यात् तदापीदृश एव महाफलवानेव, तस्यानियतत्वेनावश्यं कार्याभावादित्येवमनुष्ठेयसत्कर्मणां यथेष्टाचाराभ्यनुज्ञामात्रमेतत्, सर्वथा न विधिरिति भावः । अधिकारिभेदेन पक्षद्वयप्रवृत्तेर्वाशब्दः ॥

( ३ ) ननु न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषो युज्यते, तथासत्यसत्प्रवृत्त्या कुण्ठितशक्तेर्ज्ञानस्य मोक्षसाधनत्वाभावप्रसङ्गात् । तथा चानियम श्रुतिकव्याघातः, सत्कर्मसमुच्चितस्य मोक्षसाधनत्वप्रसङ्गाच्चेत्यत आह—युज्यते चेति ॥ चोऽवधारणे । सदसत्प्रवृत्तिभ्यां विशेष इति शेषः ॥

( ४ ) नन्वसत्प्रवृत्त्या कुण्ठितशक्तेर्ज्ञानस्य मोक्षसाधनत्वाभाव प्रसङ्गात्कथं युज्यत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—कामेति ॥ अत्र चोऽप्यर्थः साध्यसूचकः । ज्ञानिनो मोक्षमिति पठन्तीति च शेषः इत्याशयेन सूत्रसूचितश्रुत्युदाहरणपूर्वकं सूत्रं व्याचष्टे—कामचारा इति । ज्ञानिन इति शेषः । अत्र विशेषणत्रयेण सौत्रकामकारपदं कामसञ्चरणभक्षणवचनेषु समं यत्कामकरणं तद्वाचीत्युक्तं भवति । उक्तं हि तत्त्वप्रदीपे—कामकारः कामितकरणं, तत्कामचारभक्षवादेषु त्रिष्वपि सममिति । 'कामेन' इच्छया 'इमं' कर्मनिमित्तं देहं त्यक्त्वा 'अनारम्भणं' अनादिभूतं परात्परं ब्रह्म 'ईयुः' प्राप्नुयुरित्यर्थः । इति चेति । चो यत इत्यर्थे, साध्यसमुच्चये वा । 'एके' अन्ये सामशाखिनः । पठन्तीत्यस्यातो नासत्प्रवृत्त्या कुण्ठितशक्तित्वेन ज्ञानस्य

( ५ ) सू—ॐ ॥ उपमर्दं च ॥ ॐ ॥ १६ ॥
'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च कामसाचरन्तो ब्रह्मानुव्रजन्ति' इति च तु रश्रुतौ ॥ १६ ॥
( ६ ) सू—ॐ ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ ॐ ॥ १७ ॥
न तावता कामचाराणां ज्ञानेऽधिकारः ।
य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् ।

मोक्षसाधनत्वाभावः प्रसज्यत इति चशब्दसूचितसाध्येनान्वयः ॥

( ५ ) इदमेव साध्यं कैमुत्येन साधयत्सूत्रं पठित्वा चशब्दस्य विषभक्षान्मृतेरिवानिवार्यतया प्राप्तस्य प्रारब्धकर्मणोऽपीत्येवमप्यर्थत्वेन कैमुत्यद्योतकत्वमभिप्रेत्य व्याचष्टे—उपमर्दं चेति ॥ उपमर्दः फलह्रासः । अन्तः हृदयस्येति । प्रतिमादेरुपलक्षणम् । तथा च मुक्तियोग्या ओमित्युच्चार्य श्रवणादिकं च कृत्वा हृदयस्य प्रतिमादेरन्तरिमं परमात्मानं 'अभिपश्य' दृष्ट्वा प्रारब्धमनिष्टं पुण्यं पापं च किंचिद्भुक्तं ज्ञानेन 'उपमृद्य' फलह्रासेन विनाश्य 'कामं' यथेच्छं सदसत्कर्माचरन्तोऽपि ब्रह्म 'अनुव्रजन्ति' प्राप्नुवन्त्येवेति श्रुत्यर्थः ॥

( ६ ) ननु यदि कामचाराणामपि ज्ञानिनां मुक्तियोग्यता, तर्हि तद्वज्जिज्ञासूनामपि कामचाराणां ज्ञानाधिकारः स्यादविशेषात्, तथा च 'अध्ययनमात्रवतः' इत्युक्तस्य विष्णुभक्तिशमादिवतामेवाधिकार इत्यस्य बाधः स्यादित्याशङ्कां परिहरत्सूत्रं पठति—ऊर्ध्वेति ॥ अत्र ऊर्ध्वरेतस्स्वित्युक्तिः प्रधानत्वादुपलक्षणमन्यगुणानाम् । च शब्दएवार्थः साध्यसमुच्चये चेत्याशयेन चशब्दसूचितं प्रतिज्ञावाक्यं दर्शयति—न तावतेति ॥ कामचाराणामपि ज्ञानिनां मुक्तियोग्यताऽस्तीत्येतावतेत्यर्थः । तत्त्वजिज्ञासूनां ज्ञानाधिकारो मन्तव्य इति शेषः । सूत्रे हिशब्दो हेत्वर्थ इति ज्ञापनाय श्रुतेरिति पञ्चमीप्रयोगः । श्रुतेरित्यस्य न साक्षात् किन्तु ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशविधानादित्यध्याहृतहेतुद्वारा नेत्यनेनान्वयः । अनेन 'हि' यतः 'शब्दे' 'य इमम्' इति श्रुतौ 'ऊर्ध्वरेतस्सु च' गुरुकुलवासब्रह्मचर्यापरपर्यायोर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशो विहितो न कामचारिष्वतो न तेषां ज्ञानाधिकार इति सूत्रार्थ उक्तो भवति । यः 'इमं' प्रकृतं 'गुह्यं' गोप्यं 'परमं' विष्णुमूर्ध्वरेतस्त्वादिगुणवत्स्वेव 'भाषयेत्' उपदिशे

न तथा विद्यते भूयान्यं प्राप्यान्येऽपि भूयसः ॥
इति माठरश्रुतेः ॥ १७ ॥

( ७ ) सू--ॐ ॥ परामर्शं जैमिनिरचोदना चापवदति हि ॥ ॐ ॥१८॥
'प्रातरुत्थाय सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मै
व तदुपासतेऽथ देवाग्निमेऽजुहुयाद्देदानावर्तयीत नान्य

---

न 'तथा' तद्वत् 'भूयान्' श्रेष्ठो नास्ति 'यं' उपदेशकं प्राप्यस्थिता। शिष्यभावेनेति शेषः। कैमुत्यद्योतकोऽपिः 'अन्ये' शिष्या अपि 'भूयसो' भूयांसः श्रेष्ठा भवन्तीति श्रुत्यर्थः। यद्यप्यस्यां श्रुतावूर्ध्वं रेतस्त्वादिगुणरहितानां कामचाराणामुपदेश्यत्वाभावोऽभिमुखेन परोक्षज्ञानाधिकाराभाव एव अवगम्यते न त्वपरोक्षज्ञाने तदभावः। तथाऽप्यपरोक्षज्ञानस्य परोक्षज्ञानपूर्वकत्वात्परोक्षज्ञानाधिकाराभावे सुतरामपरोक्षज्ञानाधिकाराभावः सिद्ध्यतीति भावः ॥

( ७ ) एवं 'केनस्यात' इत्यस्य यथेष्टाचारविधित्वमनङ्गीकृत्य स्तुत्यनुमतिरूपार्थावुक्तौ। यथेष्टाचारविधित्वानङ्गीकारेणैव यज्जैमिनिनाऽर्थान्तरमुक्तं तत्प्रतिपादयत्सूत्रमुपन्यस्यति—परामर्शमिति ॥ अत्र शब्देनेति कामकार इति विपरिणामेनानुवर्तते। तस्येत्युच्यमान इति च शेषः। अवधारणार्थकश्चशब्दस्तस्येत्यनेन कामशब्देन कामकारपदेन च सम्बध्यते इत्याशयेन सूत्रं व्याचष्टे—प्रातरिति ॥ प्रातरित्यतः प्राक् 'केन स्यात्' इति वाक्ये 'कामचाराः' इति वाक्ये चेत्युपस्कार्यम्। इत्युक्ताचारेति। इत्यादिवाक्योक्तसदाचारपरामर्शेनेत्यर्थः। न च 'कामचाराः' इत्यस्य 'प्रातः' इत्युक्ताचारपरामर्शत्वेऽपि 'केन स्यात' इत्यस्य न तत्परामर्शत्वमिति वाच्यम्। उभयोः समानार्थत्वेन तदुपपत्तेः। परामर्शो ग्रहणम्। परामर्शेनेत्यनन्तरं उच्यमान इति शेषः। 'कामतः' स्वेच्छया। एवशब्दस्य पूर्वेणोत्तराभ्यां च सम्बन्धः। विधिबन्धेति। एवकारव्यावर्त्यार्थकथनम्। 'जायमानो वै ब्राह्मणस्त्रिभि ऋणऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तै.सं.६-३-१०.) इत्यादिश्रुतेरज्ञस्य तदकरणे प्रत्यवायलक्षणो यो विधिबन्धः तद्वर्जितत्वेनेत्यर्थः। तथा च 'कामचाराः, येन स्यात' इत्यादिना 'प्रातः' इत्युक्ताचारपरामर्शेन तं परामृश्य 'उच्यमानो' विधीयमानः कामचारः 'तस्य' सदाचारस्यैव सत्कर्मण एव विधिबन्धवर्जितत्वेन कामत एव नियमेनाचरणरूपमेव न तु, निषिद्धस्या

तिकञ्चिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न विस्मरेदात्मानं सोमं पिबेद्धुतशेषेण वर्तयेत' ( ) इत्युक्ताचारपरामर्शेन विधिबन्धत्र

प्याचरणमिति योजना । नन्वस्य पक्षस्य मनुष्यविषयत्वात्कथं मनुष्याणां 'विधिनियता मनुष्याः' इत्युक्तिः, विधिबन्धवर्जितत्वविधिनियतत्वयोरेकत्र विरोधादिति चेन्न, विहितानामकरणेऽधःपातहेतुप्रत्यवायाभावाद्विधिबन्धवर्जितत्वं, अकरणे प्रत्यवायमात्रफलह्रासादेर्भावाद्विधिनियतत्वमित्येवं तयोरेकत्राविरोधात् । न च सदाचारस्य स्वेच्छयाऽऽचरणे मनुष्याणां चतुर्मुखसाम्यप्रसङ्ग इति वाच्यम् । सर्वे विधय इच्छायां सत्यां विहितं कार्यमित्येव चतुर्मुखं प्रति प्रवर्तन्ते, न त्ववश्यं कार्यमित्येव । इतरान् प्रति तु सत्यामसत्यां चेच्छायां विहितं कार्यमेव, अकरणे फलह्रासप्रत्यवायादेः सत्त्वादित्येवं प्रवर्तन्त इति विशेषसत्त्वात् । अनेन जैमिनिपक्षे तत्त्वप्रदीपरीत्या 'येन केन' इत्यस्य येन केन सन्ध्योपास्त्यादिसदाचारेणेत्यर्थः । स्यादिति विधौ लिङ् । तस्य कामतो नियमेन वर्तेतेत्यर्थः । एवं 'कामचाराः कामभक्षाः कामवादाः' इत्यस्य सन्ध्योपास्तिदेवप्रणामाग्निहोत्रहोमादीन् कामत एव चरन्ति निषिद्धानि नाचरन्तीति कामचाराः । कामत एव सोमादिभक्षणात् सुराद्यभक्षणात्कामभक्षाः । कामत एव वेदानां शब्दतोऽर्थतश्चावर्तनादन्यभाषणवर्जनात् कामवादा इत्यर्थ उक्तो भवति । अनेन—'कामचाराः, येन स्यात्' इति शब्देनोच्यमानः कामचारस्तस्यैव 'प्रातरुत्थाय' इत्युक्ताचारस्यैवानन्दाभिवृद्ध्यर्थं कामचारः 'कामत एव' स्वेच्छयैव नियमेनाचरणमेव पर्यवस्यति, न तु निषिद्धप्रवृत्तेरपि, न वा विधिबन्धेन, न वा सत्कर्ममध्ये कस्य चिद् नाचरणम् । न चात्राचारानुक्तिदोषः । यतोऽयं शब्दस्तस्यैव 'प्रातरुत्थाय' इत्यादिश्रुतिस्मृत्युक्ताचारस्यैव सत्कर्मण एव 'परामर्शे' येन केनेति सर्वनाम्ना आचारादिपदेन च ग्रहणं विदधाति, न निषिद्धस्यापीति जैमिनिः मन्यत इति सूत्रखण्डार्थ उक्तो भवति । श्रुतावुत्थायेत्यनन्तरं शौचदन्तधावनस्नानादिकं कृत्वेत्यपि ग्राह्यम् । सन्ध्याशब्दार्थमाह—ब्रह्मैवेति । सन्ध्यामुपासते जना इति यत् 'तद्ब्रह्मैव' एतद्विषयो ब्रह्मैवेत्यर्थः । अनेन सन्ध्याकाले सम्यग्ध्येयत्वात् सन्ध्याशब्दवाच्यस्य परब्रह्मणो मन्त्रैरुपस्थानमेव सन्ध्योपास्तिरित्युक्तं भवति । 'दे

जितत्वेन कामत एव तस्य चरणं कामचार इति जै
मिनिर्मन्यते ।

( ८ ) न च निषिद्धं कर्म कर्तव्यमेवेति चोदना । 'ब्राह्मणो
न हन्तव्यः' ( ) इत्याद्यपवादश्च ॥ १८ ॥

( ९ ) सू—ॐ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ॐ ॥ १९ ॥

---

वान्' प्राच्यादिदिगवस्थितान् ब्रह्मेन्द्रादीन् 'नमेत्' प्रणमेत् । 'जुहु यात्' अग्निहोत्रहोमादीन् कुर्यात् । 'वेदानावर्तयीत' शब्दतोऽर्थतश्चा भ्यसेदित्यर्थः । 'अन्यत्' निषिद्धम् । तदेव विवृणोति—न सुरामि त्यादिना । 'पलाण्डुं' लशुनं 'न भृशं वदेत्' न निष्ठुरं वदेत् 'आ त्मानं' परमात्मानं 'सोमं' सोमरसम् । हुतशेषेण वर्तयेदिति । पुनः पुनः होमानुष्ठानेन तच्छेषं तदातदा भक्षयेदित्यर्थः । अत्र न भृशं व देदित्यादिकं सर्ववर्णाश्रमिसाधारणम् । सन्ध्योपासनादिकं तु त्रैवर्णि कानामेव । अग्निहोत्रादिकं तु गृहस्थानामेवासाधारणमिति विवेकः प्र मेयदीपोक्तोऽनुसन्धेयः ॥

( ८ ) ननु किमर्थं सत्प्रवृत्तावेव कामचरणं नियमेनात्रोक्तमित्यु च्यते, निषिद्धप्रवृत्तिरप्यत्रोक्ता किं न स्यादित्याशङ्क्य किं निषिद्धं ज्ञा निनां कर्तव्यमिति स्फुटं विधिसद्भावादेतदुच्यते ? उत निषेधाभावा द्वेति विकल्प्याद्योत्तरत्वेन नञः प्रसज्यप्रतिषेधार्थत्वमभिप्रेत्य—अचो दनेत्यंशं व्याचष्टे—न चेति ॥ चस्त्वर्थः । चोदना विधिः । द्वितीयोत्त रत्वेन—अपवदति हीत्यंशं योजयति—ब्राह्मण इति । अपवादो निषे धः । चस्समुच्चये । सूत्रस्थस्यैवायमनुवादः । न चायं निषेधोऽज्ञानि मात्रविषय इति वाच्यम् । सामान्यरूपत्वेन ज्ञानिष्वपि प्रवृत्तेः । अप वादश्चेत्यनन्तरमस्ति यत इति शेषः । अस्यातो न निषिद्धप्रवृत्तिविष योऽप्ययं कामचार इति जैमिनिर्मन्यत इत्यध्याहृतसाध्येनान्वयः । अ नेन—'हि' यतः 'हि' प्रसिद्धा निषिद्धं कर्तव्यमेवेति स्पष्टचोदना विधिर्नास्ति । प्रत्युत 'हि' प्रसिद्धा 'ब्राह्मणः' इति श्रुतिः ब्रह्महन नादि निषिद्धं कर्म 'अपवदति' न कार्यमिति निषेधति च, अतः स दाचारस्यैव 'कामचाराः, येन स्यात्' इति कामचार उक्तः, न तु नि षिद्धस्यापीति जैमिनिर्मन्यत इति सूत्रखण्डार्थ उक्तो भवति ॥

( ९ ) एवं 'येन स्यात्' इति वाक्यस्य जैमिनिमतानुसारेण स्वे च्छया सदाचारविधित्वमेवोक्त्वा यत् स्तुतयेऽनुमितिर्वेत्युक्तमभ्यनु

अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरि
ति बादरायणो मन्यते। 'केन स्याद्येन स्यात्तेनेदृश
एवेति' (बृ.५-५-१.) साम्यश्रुतेः।

(१०) यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।

ज्ञानं तदेव कामचारश्रुत्यर्थतया प्रतिपादयत्सूत्रं पठति—अनुष्ठेयमि
ति॥ अत्रानुष्ठेयमित्येतद्विभक्तिविपरिणामेन व्याचष्टे—अनुष्ठेयानामि
ति। अनुष्ठेयत्वेन विहितकर्मणामित्यर्थः। यद्वा—अनुष्ठेयमपेक्ष्येत्यन्व
यं, अनुष्ठेयं कर्म चरणाचरणवत्त्वेनात्रोच्यत इति वाऽन्वयमुपेत्य तत्ता
त्पर्यमाह-अनुष्ठेयानामिति। निर्धारणषष्ठीत्वाभिप्रायेण मध्य इत्युक्तं,
न तु सर्वकर्मणामित्येवकारार्थः। सूत्रे कामचार इत्यनुवर्तत इत्याश
येन तत्पदं व्याख्याति—कामत इति। इच्छयेत्यर्थः। केषां चिदिति
शेषः। 'चरणं' करणं 'निवृत्तिः' अकरणम्। निवृत्तिरित्यनन्तरमि
त्यनुज्ञानमेव कामचारश्रुत्यर्थ इति शेषः। अनेन सूत्रे अनुमतिरिति
पदस्यानुवृत्तिस्सूचिता। इति मन्यते इति शेषोक्तिः एवं साध्यपदं
व्याख्याय कुत इत्यतस्तत्र हेतुतया साम्यश्रुतेरित्यंशं व्याचष्टे—केन
स्यादिति। तथा चास्मिन् पक्षे ज्ञानी यदि 'येन केन चित्' किञ्चिद्वि
हितानुष्ठानेनाननुष्ठानेन वा 'स्यात्' वर्तेत तदा 'ईदृश एव' सम ए
व, न तु तस्मिन् किञ्चिद्विहिताकरणनिमित्तसाम्यासम्भवो वाच्य इ
ति श्रुत्यर्थः। लिङस्तु आमन्त्रणमर्थ इति भावः। यद्यपि सर्वसदाचा
रपक्षेऽपि साम्यमस्त्येवेत्यप्रयोजकता हेतोः। तथाऽपि जैमिनिपक्षे ज्ञा
निनः सर्वसदाचारसद्भावात्साम्यसम्भावनैव ज्ञाप्यते, न तु बादराय
णपक्ष इव साम्यासम्भवप्रसक्तिपूर्विका तन्निवृत्तिः। असम्भवनिवृत्ति
रेव चेह श्रुतिज्ञाप्यतया ग्राह्या, न तु सम्भवः, सम्भवज्ञापनादप्यस
म्भवनिवृत्तेर्ज्यायस्त्वात्, अतो नोक्तदोष इति भावः। अनेन—'अनु
ष्ठेयं' अनुष्ठेयानां मध्ये कामचारो यस्मिन् करवाणीति कामस्तस्य च
रणं यस्मिन्न करवाणीति कामस्तस्यानाचरणमित्येवमनुष्ठेये कामचा
रानुमतिरेव शब्दे 'येन केन स्यात्' इति श्रुतावुच्यते, न तु सर्वेषां
कामचारः। यद्वा—'अनुष्ठेयं' चरणाचरणवत्त्वेनात्र श्रुतावुच्यत इति
बादरायणो मन्यते। कुतो? ज्ञानिनः करणाकरणयोः 'येन स्यात्' इ
ति साम्यश्रुतेरिति सूत्रार्थ उक्तो भवति॥

(१०) सत्यमस्मिन् पक्षे साम्योक्तिः सम्यक्सम्बध्यत इति। तथा

आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ (गी.३-१७.)
इति भगवद्वचनाच्च ॥ १९ ॥

( ११ ) सू—ॐ ॥ विधिर्वा धारणवत् ॥ ॐ ॥ २० ॥

'केन स्याद्येन स्यात्' ( बृ. ५-५-१. ) इति विधिर्वा। यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम। एवं

ऽपि तन्न युज्यते, कर्तव्यपरित्यागे साम्यायोगात्। अतो मुख्यासम्भवेऽमुख्याऽपि जैमिन्युक्तयोजनैव साध्वीत्यतः सूत्रेऽनुवृत्तचशब्दसमुच्चितगीतास्मृतिं दर्शयति—यस्त्विति ॥ इति वचनादिति । इति ज्ञानिनां कार्याभावोक्तेरित्यर्थः । अस्य न साम्यायोग इत्यध्याहृतसाध्येनान्वयः । 'आत्मरतिः' परमात्मदर्शननिमित्तसुखं प्राप्तः 'आत्मतृप्तः' आत्मना परमात्मना तत्प्रसादेन तृप्तः अन्यत्र विषयसुखेऽलंबुद्धिमान्। न केवलं हरिप्रसादेन तृप्तिः, किन्तु हेत्वन्तरमस्तीत्याह—आत्मनीति । परमात्मनि सन्तोषवान् तत्स्थ एव सन् सन्तुष्टः परमात्मदर्शनादिनिमित्तसुखवानित्यर्थः । 'सन्तोषः तृप्तिकारणं सुखम्' इत्यभिधानात् महासुखवतोऽल्पसुखेऽलंबुद्धिर्भवत्येवेति तस्य तद्धेतुत्वोपपत्तिः । अत्र पूर्वविशेषणमेव पुनस्तृप्तिकारणत्वेनानूद्यत इति न पुनरुक्तिः । य एवंभूतो 'मानवो' ज्ञानी 'तस्य कार्यं' अवश्यं कर्तव्यं कर्म न विद्यत इत्यर्थः । यद्यपि 'यस्तु' इति वचनं तात्पर्यनिर्णये मुक्तपरतया भाष्ये समाधिस्थपरतया व्याकृतं, तथाऽपि समाधिस्थस्यापि ज्ञानित्वाद्वा ज्ञानिसामान्यपरत्वस्यापि सम्भवाद्वाऽत्रोदाहरणोपपत्तिः । न चास्य वाक्यस्य

अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥

इति हरिवंशे कार्योक्तिविरोधः शङ्क्यः । तेषां विहिताकरणे पुष्यदर्थालाभात् तदर्थं कार्यत्वस्य तत्रोक्तावपि सिद्धहान्यभावेन नरकाद्यभावेन च कार्यं न विद्यत इत्युक्तिसम्भवात् ॥

( ११ ) एवं 'केन स्यात्' इति वाक्यस्य यथेष्टाचारविधित्वाभावमभ्युपेत्य नियमेन सर्वदाचारविधित्वमनुष्ठेयानां मध्ये कामचाराभ्यनुज्ञानमित्यर्थद्वयं स्तुत्यनुमतिरूपार्थद्वयं चोक्तं, अथायं स्वेच्छाचरणविधिर्वा भवतीत्यर्थप्रतिपादकं सूत्रं पठति—विधिर्वा धारणवदिति ॥ अत्र विधिरित्यंशं व्याचष्टे—केन स्यादिति । विधिरिति । यथे

स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राध
र्मशङ्का कार्या । नान्येषामिति वा ।
( १२ ) स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।
नाशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ॥
इतरेषां न विहिता स्वेच्छावृत्तिः कथंचन॥ इति ब्राह्मे॥२०॥

ष्टाचरणविधिरित्यर्थः । वाशब्दोऽस्य पक्षान्तरत्वद्योतकः । ननु ज्ञानिनां न स्वेच्छाचरणविधिर्युक्तः, अज्ञानिनामपि तथात्वप्रसङ्गादित्याशङ्कोत्तरत्वेन प्रथमान्ताद्वतिमाश्रित्य धारणवदित्यंशं व्याचष्टे—यथेति । ‘वेदधारणं’ वेदाध्ययनं अधीतवेदस्यापि स्मृत्यर्थं पुनः पुनः पाठो वा । अत एव तत्त्वप्रदीपे वेदपाठादिकमित्युक्तम् । ‘त्रैवर्णिकानां’ ब्रह्मक्षत्रियवैश्यानां सावधारणमेतत् ‘विहितं’ ‘स्वाध्यायोऽध्येतव्यः’ (तै.आ.२-१५-१.)‘ वेदः कृत्स्नोऽधिगन्तव्यः’ इत्यादिनेति शेषः । ‘अन्येषां’ शूद्रादीनाम् । प्रत्युत तेषामध्ययनादौ सति दण्ड एव श्रुत इति भावः। उक्तमर्थं दार्ष्टान्तिके संयोजयति—एवमिति । स्वमतानुसारिणीति । स्वेच्छानुसारिणी प्रवृत्तिः ज्ञानिनामेव विहिता, नान्येषामित्यन्वयः । इति वेति न पक्षान्तरोक्तिः, किन्तु विधिर्वेत्युक्तस्यैव दृष्टान्तविवरणपूर्वं दार्ष्टान्तिकोपपादनव्याजेन विवरणमिति ध्येयम् । ननु नायं यथेष्टाचारविधिः सम्भवति, तथासति ज्ञानिनोऽधर्मकरणस्यापि विधिविषयत्वप्राप्त्याऽचोदनेत्युक्तविरोधः स्यादित्यत आह—न तत्रेति । ‘तत्र’ ज्ञानिप्रवृत्तिविषये ‘अधर्मशङ्का’ अधर्मत्वशङ्का न कार्येत्यर्थः ॥
( १२ ) कुत इत्यत आह—स्वेच्छयेति ॥ ‘ब्रह्मणो’ विधातुः ‘विधिचोदिता’ ‘येन स्यात्’ इति विधिविहितेत्यर्थः । यत इति शेषः । अतः ‘तन्मतं’ तस्य विरिञ्चस्याभिप्रेतं वेदविरुद्धत्वेन प्रतीतमपि पुत्रिकाकामनादि अधर्मत्वेन नाशङ्क्यमित्यर्थः । हेत्वन्तरमाह—विष्णोरिति । यतो विष्णोरेवं कुर्विति ‘प्रत्यक्षचोदना’ प्रेरणा विरिञ्चस्यास्त्यतोऽपि तन्मतं नाशङ्क्यमित्यर्थः । वेदस्तु विष्णोः परोक्षाज्ञारूप इति प्रत्यक्षाज्ञानुसारेण नेतव्य इति भावः । अत्र ब्रह्मण इत्युक्तेऽपि उपलक्षणया ज्ञानिनामित्यर्थो ज्ञातव्यः । अत एव स्ववाक्ये ज्ञानिनां विहितेत्युक्तम् । अन्यथा अत्रैव स्मृतौ ब्रह्मणस्स्वेच्छाचारविधिः मनुष्याणां स्वेच्छाचारेऽचोदनेति विषयव्यवस्थायां पारिप्लवार्था इति वक्ष्यमाणविषयविभागो व्यर्थः स्यात् । तत्त्वप्रदीपे तु द्वितीयवाशब्दा

( १३ ) सू—ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ॐ ॥२१॥
स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामा
न्यविधिस्वीकारादिति चेन्न, अपूर्वत्वात् परवशत्वा
त् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण
एव हि ॥

( १४ ) विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।

---

त् ज्ञानिनामपि केषां चिदेवेति सूचितम् । विषयभेदं प्रकटयति—स्वे च्छयैवेत्यादिनेति । अनेनात्रैव विषयविभागः क्रियत इत्युक्तम् । तत्तु वक्ष्यमाणरीत्या वस्तुस्थित्यभिप्रायकमेवेति ध्येयम् ॥

( १३ ) उक्तमाक्षिप्य समादधत्सूत्रं पठति—स्तुतीति ॥ अत्राक्षेपांशं व्याचष्टे—स्तुतीति । ‘ स्वेच्छाचरणं ’ ‘ येन स्यात् ’ इति स्वेच्छाचरणवचनं ‘ स्तुतिमात्रं ’ ज्ञानिनां स्तुतय इति पूर्वोक्तस्तुतिरेवेत्यर्थः । मात्रशब्दार्थमाह—एवेति । तद्व्यावर्त्यमाह—नेति । ‘ तैः ’ ज्ञानिभिः । कुत इत्यत उपादानादित्येतत्सम्बन्धिप्रदर्शनपूर्वकं व्याचष्टे—सामान्येति । ‘ सन्ध्यामुपासीत ’ इत्यादिसर्वजनसाधारणविधिस्वीकारादित्यर्थः । तत्त्वप्रदीपे तु ज्ञानदानादिसामान्यविधिस्वीकारादित्यर्थ उक्तः । स्वेच्छाचरणविधौ तदयोगादिति भावः । परिहारांशं व्याचष्टे-नेति । ज्ञानिनां स्वेच्छाचरणविधिर्मास्तु, किन्तु स्तुतिमात्रमेतदिति न युक्तमित्यर्थः । कुतो नेत्यतस्तत्र तथा सति ज्ञानिनां सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं स्यादित्युत्तरवाक्यमावृत्त्या योजनीयम् । अथ न च तद्युक्तमिति नेत्यंश आवृत्त्या योज्यः । कुत इत्यतस्तत्र हेतुत्वेन-अपूर्वत्वादित्यंशो योज्यः । तस्य व्याख्यानं—परवशत्वादिति । परब्रह्माधीनत्वादित्यर्थः । न ह्ययं विरिञ्चः पूर्वमनादिब्रह्म भवति, किन्तु तस्य परब्रह्मणो वशग इति तत्त्वप्रदीपोक्तेः । अत्रानादिभिन्नत्वमपूर्वशब्दार्थः । तदधीनत्वं तु न्यायसिद्धार्थः । अनादिभिन्नस्य कस्माच्चिदुत्पत्तेरावश्यकत्वेन तस्य तदधीनत्वात् । परमात्माधीनत्वेऽपि सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वं ज्ञानिनां किं न स्यादित्यत आह—सर्वेति । ‘ हि ’ यस्मात् ‘ सर्वविध्यतिक्रमेण ’ सर्वविधिनिषेधागोचरत्वेन विधिविषयत्वं विना स्तुतिमात्रविषयत्वं परब्रह्मण एव, न तु विरिञ्चस्य, तस्मादित्यर्थः ॥

( १४ ) ननु ज्ञानिनां सन्ध्योपास्त्यादिसामान्यविधिसद्भावात्स्वेच्छा

परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता ॥ इति ब्रह्मतर्के॥२१॥

( १५ ) सू—ॐ ॥ भावशब्दाच्च ॥ ॐ ॥ २२ ॥

यथाविधानमपरे विधिर्भावे प्रजापतेः ।
ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता॥इति च तुरश्रुतौ॥२२॥

( १६ ) सू—ॐ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ॐ ॥२३॥

'केन स्याद्येन स्यात्' ( बृ.५-५-१. ) इत्यादयः स्थिर

---

विध्यभावेऽपि न सर्वविध्यतिदूरत्वमित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं चाह—विधीनामिति ॥ सर्वविधीनामित्यर्थः । निषेधानामप्युपलक्षणम् । 'अन्ये' अज्ञानिनः । वस्तुतस्तु ब्रह्मेतरज्ञानिनः । अत एव तुशब्दात्तेष्वपि विशेषोऽस्ति, वक्ष्यते च 'विशेषितत्वादिति' इति तत्त्वप्रदीपोक्तिः । ब्रह्मण इति ज्ञानिमात्रोपलक्षणम् । हेतुस्तु पूर्वोक्त एव । 'कृतौ' करणे । विधिविषयत्वमिति शेषः । 'हि' यस्मात् । ब्रह्मतर्के उक्तमिति शेषः । अस्य सर्वेत्यादिनाऽन्वयः ॥

( १५ ) ननु ज्ञानिनां स्वेच्छाचरणविधेः स्फुटप्रमाणसिद्धत्वे भवेत् 'येन स्यात्' इति वाक्यं स्वेच्छाचरणविध्यर्थकं, विधेः स्फुटप्रमाणसिद्धत्वमेव कुत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुतिमेवोदाहरति—भावेति ॥ अत्र विधिरित्यनुवर्तते । तथा च इच्छावाचिभावशब्दघटितश्रुतेश्च ज्ञानिनां स्वेच्छाचरणविधिः सिद्ध इति सूत्रार्थः। यतः 'अपरे' ब्रह्मेतरज्ञानिनः वस्तुतस्तु मनुष्यज्ञानिनो 'यथाविधानं' नित्यनैमित्तिकविधिमनतिक्रम्य वर्तन्त इति शेषः । प्रजापतेः तदुपलक्षितज्ञानिनः वस्तुतस्तु विरिञ्चस्य देवानां च 'भावे' इच्छायां स्वेच्छाचरणविषये 'विधिः' येन स्यादित्यादिरूपोऽस्त्यतः परमस्य ब्रह्मणो हरेरेव सर्वविध्यतिदूरता ज्ञातव्या । मुक्तव्यावृत्त्यर्थं—अतीति। सर्वदैवेत्यर्थः । रमाऽपि हर्याज्ञाविधिविषयेति न तत्राप्यतिप्रसक्तिरिति भावः । श्रुतौ चेत्यन्वयः । ज्ञानिनां स्वेच्छाचरणविधिरुक्त इति शेषः। सूत्रे भाष्ये च न केवलं स्वेच्छाचरणविधिविषयत्वं सामान्यविध्यविषयाणां ज्ञानिनां सर्वविध्यतिदूरपरवशत्वान्यथाऽनुपपत्त्या, किन्तु श्रुतेश्चेति समुच्चये चशब्दः ॥

( १६ ) उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्यति—पारिप्लवार्था इति ॥ अत्र पूर्वपक्षांशे पारिप्लवार्था इत्यस्य विशेष्यं दर्शयति—केनेति।

त्वनिवृत्त्यर्था इति चेन्न, 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियता इति। विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियत इति' गौपवनश्रुतौ विशेषितत्वात् ॥ २३ ॥

( १७ ) सू—ॐ ॥ तथा चैकवाक्योपबन्धात् ॥ ॐ ॥ २४ ॥

इत्यादयो व्यपदेशा इति शेषः। पारिप्लवार्था इत्यस्य प्लु गतावित्युक्तेः परिप्लवोऽव्यवस्था तत्सम्बन्धिनः पारिप्लवाः अव्यवस्थिताः ते च तेऽर्था इति विग्रहमभिप्रेत्य तत्पदं व्याख्याति—स्थिरत्वेति। स्थिरत्वस्य निवृत्तिरभावोऽस्थिरत्वं तदेषां ते स्थिरत्वनिवृत्तयः अस्थिरा इति यावत्। तेऽर्था येषां ते तथोक्ताः चञ्चलार्थका इत्यर्थः। अर्थचाञ्चल्यं च बुद्धिकृतमेवेति ध्येयम्। आदिपदेन 'कामचाराः' इत्यादेर्ग्रहणम्। अयमाशयः—'स ब्राह्मणः' इति वाक्यं तावत्सर्वज्ञानिसाधारणमतो मनुष्यादिषु सर्वेषु स्तुतये भवतीति तत्त्वप्रदीपोक्तेः स्तुतिपक्षस्य ज्ञानिसाधारण्येनाविरुद्धत्वेऽपि नियमेन सर्वधर्माचरणानुष्ठेयानां मध्ये कामचारानुज्ञानस्वेच्छाचरणरूपप्रकारत्रयस्य एकधर्म्यगतत्वेन विरुद्धत्वात्तद्व्यपदेशानामपि विरुद्धत्वम्। एवं च यदा विरुद्धधर्मप्रतिपादकानेकवाक्यानामेव न यथाऽर्थबोधकत्वं तदा सुतरामेकस्य 'येन स्यात्' इति वाक्यस्य तद्भावो वस्तुनि विकल्पायोगादिति। सूत्रे परिहारांशं व्याचष्टे—नेति। उक्तं नेत्यर्थः। कुतो नेत्यतो-विशेषितत्वादित्युक्तम्। तस्य ज्ञानिनां मनुष्यदेवचतुर्मुखभेदेनानेकप्रकारत्वादित्यर्थमुपत्य तस्यासिद्धिपरिहाराय श्रुतिपरतयाऽपि तमंशं व्याचष्टे—त्रेधा हीति। विशेषितत्वादिति। विशेषितत्वोक्तेरित्यर्थः। नासिद्धिरिति वाक्यशेषः। श्रुतौ 'हिः' प्रसिद्धौ। वावेत्यवधारणे। त्रैविध्यमेव दर्शयति—विधिनियता इति। विधिबन्धवर्जितत्वेन कामत एव नियमेन विहिताचरणवन्त इत्यर्थः। 'अनियताः' अनुष्ठेयानां मध्ये कामचारानुज्ञावन्तः 'स्वेच्छानियताः' स्वेच्छाचरणविधिनियता इत्यर्थः। इति त्रेधेत्यन्वयः। त्रीन् क्रमेण निर्दिशति—विधीति ॥

( १७ ) ननु ज्ञानिनामनेकप्रकारत्वोक्तथा कथं विरोधपरिहारो जात इत्याशङ्कापरिहाराय सूत्रम्—तथा चेति ॥ अत्रैकवाक्येति भावप्रधानो निर्देशः। समग्रसूत्रस्य चावृत्तिरित्याशयेन सूत्रं व्याचष्टे--एवं

एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च स
म्बन्धो भवति ॥ २४ ॥

( १८ ) सू—ॐ ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ॐ ॥ २५ ॥

सतीति । तथा चेत्यस्य व्याख्यानमेतत् । एतच्चावर्तते । सम्बन्धो भ वतीति चावर्तते । वृत्तिर्वर्तनं चरणम् । एकवाक्यतयेति शेषः । तथा चैवं सति ज्ञानिनां त्रैविध्ये सिद्धे सति विधिवाक्यानां 'प्रातरुत्थाय' इत्यादिसर्वसदाचारविधिवाक्यानां 'यस्त्वात्मरतिः' इति स्वेच्छावृ त्त्यनुज्ञावाक्यानां तथा 'यथाविधानम्' इति स्वेच्छावृत्तिविधिवा क्यानां चैकवाक्यतया 'सम्बन्धः' अविरोधो भवति । एवं सति 'के न स्यात्' इति वाक्यस्यापि तदनुसारेणार्थत्रयेऽप्येकवाक्यतया स म्बन्धो भवतीति योजना । अनेन—'तथा चैवं सति' ज्ञानिनां त्रैवि ध्ये सिद्धे सति 'एकवाक्योपबन्धात्' विधिवाक्यानां स्वेच्छावृत्ति वाक्यानां चैकवाक्यत्वेन ज्ञानिभेदमाश्रित्याविरोधे सति 'केन स्यात्' इति वाक्यस्यापि तदनुसारेणार्थत्रयेऽप्येकवाक्यतया 'उपबन्धात्' उपप न्नत्वात् न 'केन स्यात्' इत्यादिव्यपदेशाः पारिप्लवार्था इति सूत्रार्थ उक्तो भवति । अनेन जैमिनिमतं मानुषज्ञानिविषयम् । द्वितीयं देव ताविषयम् । तृतीयं हिरण्यगर्भविषयम् । स्तुतिपक्षस्तु समान इत्यु क्तं भवति । ननु न देवाः सामान्यविधिविषयाः । नापि चतुर्मुखव त्स्वेच्छाचारविधिविषयाः, उदाहृतवचनात् । एवं च स्तुतिपक्षस्य ज्ञानिमात्रसाधारणत्वे देवानां किञ्चिद्विध्यविषयाणां परमात्मवत्सर्ववि ध्यतिक्रमेण स्तुतिविषयत्वं स्यात् । ततश्च परमात्मन एव तदित्युक्त मयुक्तमिति चेन्न । देवानां चतुर्मुखवत्सर्वात्मना स्वेच्छाचारविधिवि षयत्वाभावेऽपि प्रायः स्वेच्छाचरणविधिसद्भावात् । न चात्र माना भावः ।

स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् ॥

इति वचनात् । किञ्च विध्यभावेऽपि देवानामनुज्ञाविषयत्वाभ्युपगमे न स्तुतिमात्रविषयत्वाभावान्नेश्वरसाम्यमिति ज्ञातव्यम् ॥

( १८ ) एवं ज्ञानिनः 'केन स्यात्' इति श्रुतिबलेन सदसत्प्रवृत्त्यो र्योऽविशेषः शङ्कितः स श्रुतेरर्थान्तरोक्त्या 'परामर्शम्' इत्यादिना परि

अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा ।
(१९) ब्रह्मतर्के च—
येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥
स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।

हृतः । तत्र यदुक्तं ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषे ज्ञानस्यासत्प्रवृत्तिकुण्ठितशक्तेर्न मोक्षसाधनत्वमिति, तत् 'कामकारेण चैके' इत्यादिना परिहृतम् । यच्चाभिहितं मोक्षसाधनत्वे ज्ञानस्य सत्प्रवृत्तिसापेक्षत्वं स्यादिति तत्परिहाराय सूत्रं पठित्वा व्याचष्टे—अत एवेति ॥ 'कामाचाराः' इति श्रुतौ कामचाराणामपि मोक्षस्योक्तत्वादेवेत्यर्थः । न तत्र हेत्वन्तरं वक्तव्यमित्येवकाराभिप्रायः । सूत्रे अत इत्यावृत्तपदं व्याख्याति—ज्ञानस्य मोक्षदान इति । मोक्षदानकर्मणीत्यर्थः । मोक्षसाधन इत्यनुक्त्वा मोक्षदान इत्युक्त्या

अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः ।
विष्णुर्हि दाता मोक्षस्य
मोक्षदस्तु जनार्दनः ॥

इत्यादिवचनात् ज्ञातो भगवानेव मोक्षदाता ज्ञानदाता च । ज्ञाने तु उपचरितं दातृत्वमिति सूचितं भवति । नाग्निहोत्राद्यपेक्षेत्यनेन अग्नेरिन्धनं समन्त्रकं सन्दीपनं यस्मिन् कर्मणि तदग्निहोत्रं तथोक्तम् । आदिपदेन स्वाश्रमवर्णधर्माः ग्राह्याः, तदपेक्षाभाव इत्येव अग्नीन्धनाद्यनपेक्षेति पदं नञ्व्यत्यासेन व्याख्यातं भवति । सूत्रे चोऽप्यर्थः । ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपीति स्फुटत्वान्न व्याख्यातः । द्वितीयचोद्यपरिहारस्याद्यचोद्यपरिहारेण समुच्चये चशब्द इति केचित् ॥

(१९) ननु यदि सत्कर्मणा न मोक्षो निषिद्धकर्मणा न तत्प्रतिबन्धः कथं तर्हि ताभ्यां ज्ञानिनो विशेष इत्यतश्चशब्दसूचितस्मृतिमाह—ब्रह्मतर्के चेति ॥ न केवलं सूत्र इति चार्थः । तेषामित्यनन्तरं शुभाशुभकर्मकरणयोरपीति शेषः । अनेन सर्वसाधारणस्तुतिपक्षः सङ्गृहीतः । तर्हि शुभाशुभाभ्यां को विशेष इति तत्राह—शुभेति । 'आधिक्यं' मोक्षे मनुष्याणामानन्दवृद्धिः । 'विपरीतैः' अशुभैः 'विपर्ययो' ह्रासो भवेत् । भवेदित्यत्राधिक्यमित्यनुषज्यते । मुक्तावपेक्षितसर्वाधिक्यमित्यर्थः । एवकारेण न तदर्थं श्रुतिविहिताग्निहोत्राद्यपेक्षा नापि

देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् ॥ इति ॥ २५ ॥

( २० ) सू--ॐ ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ॐ ॥ २६ ॥

सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ 'विविदिषन्ति यज्ञेन

लोकदृष्ट्या निषिद्धपुत्रिकाकामत्यागाद्यपेक्षाऽस्तीत्युच्यते । सर्वेषां ब्रह्मे तरदेवानामपि उत्तरोत्तरं विशेषादाधिक्येन प्रायशः स्वेच्छानुवृत्त्यैव मुक्तौ कॢप्तसुखाधिक्यं भवेत् न तदर्थं प्रायः शुभाशुभकरणत्यागापे क्षाऽस्तीत्यर्थः । इति ब्रह्मतर्के इत्यन्वयः । उक्तत्वादिति शेषः । अस्य नेत्यनेनान्वयः ॥

( २० ) नन्वस्तु ज्ञानिनः सत्प्रवृत्त्या विशेषः । स च मोक्षप्राप्तिरूप एव, नाधिक्यरूपः । न चैवं ज्ञानिनां सुकृतौ कृतावकृतौ च मोक्षश्रुति विरोधः । तत्प्रवृत्तेः मोक्षहेतुत्वेऽप्यसत्प्रवृत्तेरप्रतिबन्धकत्वेन तदुपप त्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—सर्वेति ॥ अत्र चोऽवधारणे। ज्ञानस्योत्पत्तावित्यध्याहृतेनान्वेतीत्याशयेन सर्वापेक्षेत्यंशं व्याचष्टे— सर्वेति । उत्पत्तौ चेति सम्बन्धः । चशब्दोऽवधारणार्थः । तादर्थ्ये स प्तमी । ज्ञानस्येत्यावर्तते । न मोक्षदान इत्यादि पूर्वभाष्यमिहानुवर्तते । धर्मशब्देनाध्यापनशौर्यवार्ताशुश्रूषणादिरूपा वर्णधर्माः गुरुकुलवासा ग्निहोत्रपञ्चयज्ञतपउपास्त्यादिरूपा आश्रमधर्माः शमदमभक्त्यादिरू पाः सामान्यधर्माः श्राद्धादिरूपा नैमित्तिकधर्माश्च तत्त्वप्रदीपोक्ता गृ ह्यन्ते । तथा च ज्ञानस्य मोक्षदाने नाग्निहोत्रादिसत्प्रवृत्त्यपेक्षा । कु तो ? यतो ज्ञानस्य उत्पत्त्यर्थमेव सर्वधर्मेष्वपेक्षा न तत्फलसाधनत्वेऽ पीपि योजना । ज्ञानोत्पत्त्यर्थं कुतः सर्वापेक्षाऽवगम्यत इत्यतः प्रवृत्त स्य-यज्ञादिश्रुतेरित्यस्य यज्ञादीनां ज्ञानसाधनत्वश्रुतेरपीत्यर्थमाभिप्रेत्य श्रुत्युदाहरणेन तमंशं व्याचष्टे-विविदिषन्तीति । बृहदारण्यकश्रुतिरि यम् । अत्र 'विविदिषन्ति' इत्यस्य पूर्वेणान्वयः । अत्र 'अनाश केन' अनशनेन । 'यज्ञेन दानेन तपसाऽनाशकेन' इत्यस्य 'ए तमेव विदित्वा मुनिर्भवति' इत्युत्तरवाक्येनान्वयः । एतं भगवन्तमपरो क्षतो ज्ञात्वा मुनिनामको भवतीत्यर्थः । वस्तुतस्तु-विविदिषन्तीत्यार भ्य ग्रहणात् ये ब्राह्मणा विविदिषन्ति ते यज्ञादिना वर्तेरन्नित्यन्वयो ध्येयः । केचित्तु—'तमेतं वेदानुवचनेन ब्राह्मणाः' इति पूर्वप्रकृता ब्रा ह्मणाः 'तं' पूर्वोक्तगुणवन्तं 'एतं' परमात्मानं वेदाध्ययनयज्ञादिना 'विविदिषन्ति' ज्ञातुमिच्छन्तीत्युक्तेः अश्वेन जिगमिषन्तीत्यादाविव

दानेन तपसाऽनाशकेन ' ( बृ. ६-४-२२. ) इति श्रुतेः।

( २१ ) यथा गतिनिष्पत्त्यर्थमश्वाद्योऽपेक्ष्यन्ते न निष्पन्नगते ग्रामादिप्राप्तौ ॥ २६ ॥

( २२ ) सू—ॐ ॥ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ ॐ ॥ २७ ॥

यद्यपि ज्ञानेनैव मोक्षो नियतः। तथाऽपि ज्ञानी शम दमाद्युपेतः स्यात्।

( २३ ) ' आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्य शान्तो

---

यज्ञादेः धात्वर्थज्ञानसाधनतैवोक्ता भवतीति प्रकृतसङ्गतिरित्याहुः॥

( २१ ) ननु सर्वसत्कर्मणो ज्ञानार्थे अपेक्षितस्यापि मोक्षार्थमपेक्षितत्वं किं न स्यादित्याशङ्कोत्तरत्वेन अश्ववदित्यंशं अश्वस्य गतावपेक्षा यथेत्यर्थकतयोपलक्षणाभिप्रायेण व्याचष्टे—यथेति ॥ गतिः प्रयाणम्। आदिपदाद्गजयानादयो गृह्यन्ते। निष्पन्नगतेरिति बहुव्रीहिः। निवृत्तगतेः पुरुषस्येत्यर्थः। ग्रामादीति। प्राप्तिस्संयोगः। आदिपदात्पतनादिग्रहणम्। गतिसाध्यफल इति शेषः। अपेक्ष्यन्त इत्यनुषङ्गः॥

( २२ ) ननु यदि सदसत्प्रवृत्तिभ्यां मोक्षतदभावयोरभावः, तर्हि ज्ञानिनस्ताभ्यां विशेषो नास्तीति न तेन सत्कर्म कार्यमसत्कर्म त्याज्यम्। न च ताभ्यां मोक्षे आधिक्यादि भवतीत्युक्तमिति वाच्यम्। 'ज्ञानादेव सर्वे कामाः' (कौण्ठरव्य.) इति श्रुतेर्ज्ञानादेव तदुपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—शमेति ॥ अत्र पूर्ववाद्युक्तानुवादपूर्वं तथाऽपीत्यंशं व्याचष्टे—यद्यपीति। ज्ञानिन इति शेषः। शमेति साध्यभागं व्याचष्टे—ज्ञानीति। 'शमदमाद्युपेतः' शमादिसत्प्रवृत्तियुक्तो निषिद्धहीनश्च स्यादित्यर्थः। यद्यपि शमाद्युपेतः स्यादिति सुवचम्। तथाऽपि श्रुतौ पृथङ्निर्देशात्सर्वत्र साहचर्याच्चोभयोपादानम्॥

( २३ ) कुत इत्यतस्तद्धेतुत्वेन तद्विधेरित्यंशं व्याचष्टे—आचार्यादिति ॥ 'आचार्यात्' तदुपदेशात् 'विद्यां' परोक्षज्ञानं प्राप्य 'एतं' हृद्गतं परमात्मानं 'अभिपश्य' दृष्ट्वा 'शान्तो' भगवन्निष्ठावान् 'दान्तः' इन्द्रियनिग्रहवान्। 'शान्तिस्तु भगवन्निष्ठा दमो ह्यसुविनिग्रहः' इत्यभिधानात्। 'अनुकूलः' सतामिति शेषः। 'परिचरेत्' सेवेत। परिचरेदिति पुनरुक्तिस्तात्पर्यार्था। आचार्यसमं स्वस्माच्छ्रेयांसमाचार्यं बहुमानेन परिचरेदिति वा। ' ये के चास्मद्विधाः श्रेयांसस्तानुपच

भवेद्दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत् परि
चरेदाचार्यम्' इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः ।
( २४ ) 'ब्राह्मीं वाव त उपनिषदमब्रूमेति। तस्यै तपो दमः क
र्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनं यो वा ए

रस्व ' (पौष्यायण. ) इति श्रुतेरिति तत्त्वप्रदीपदिशा श्रुत्यर्थः । तन्त्रा भिप्रायेणोक्तस्य तदित्यस्यार्थो—ज्ञानिनोऽपीति । नियतमोक्षस्यापी त्यपेरर्थः । अपरोक्षज्ञानिन एवेत्यवधारणे वाऽपिशब्दः । तेन श्रुतेः परोक्षज्ञानिपरत्वशङ्का निरस्ता । तद्विधेरिति । शमादिविधानादित्य र्थः । उपलक्षणमेतत् । 'न हन्तव्यः ' ( ) इत्यादिनिषेधाश्चे त्यपि द्रष्टव्यम् । अनेन तस्यां श्रुतौ तस्य ज्ञानिनस्तस्य शमादेर्विधा नादिति सूत्रखण्डो व्याख्यातः ॥

( २४ ) ननु ज्ञानादेव संसारदुःखनिवृत्तिवदानन्दातिशयस्यापि सिद्धेर्व्यर्थः शमादिविधिरित्यतः प्रवृत्तं तदङ्गतयेत्याद्यंशमसिद्धिपरि हाराय श्रुत्युदाहरणपूर्वं व्याचष्टे—ब्राह्मीमिति ॥ प्रथमेतिशब्दः श्रुति स्थः । एवं द्वितीयोऽपि । तृतीयो भाष्यकारीयः । इतीत्यनन्तरं श्रुत्याऽ वगतयेति शेषः । ज्ञानाङ्गतयेति । ज्ञानप्रतिष्ठापकत्वेनेत्यर्थः । निमि त्तभूतयेति शेषः । तेषां ज्ञानोत्तरकालशमादीनां ज्ञानप्रतिष्ठापक त्वं नाम ज्ञानवृद्ध्यर्थत्वं प्रतिदिनं तत्सम्पादकत्वमिति यावत् । यथो क्तं तत्त्वप्रदीपे—शमादीनां ज्ञानवृद्ध्यर्थमवश्यानुष्ठेयत्वादिति । ज्ञानफ लपूर्त्यर्थमित्यर्थः । अनुष्ठेयत्वादित्यस्य न वैयर्थ्यमित्यध्याहृतसाध्ये नान्वयः । 'उपनिषदं भो ब्रूहि ' इत्युमापतिना ब्रह्माणं प्रति भो भगव न्निति सम्बोध्य पृष्टे सति तत्र किमुपनिषत्प्रतिपाद्यं पृच्छसि? किं वो पनिषदुत्पन्नविद्याया अवस्थानकारणं ? किं वा विद्याया उत्पत्तिकार णमिति हृदि विकल्प्याद्यस्योत्तरमाह—ब्राह्मीमिति । 'ते' तुभ्यं 'ब्रा ह्मीं' परब्रह्मविषयां 'वाव' असंशयं 'उपनिषदं' तत्स्वरूपमब्रूमेति ब्रह्मोवाचेत्यन्वयः । द्वितीयस्योत्तरमाह—तस्या इति । 'तस्यै' तस्या विद्यायाः 'तपः' कृच्छ्रचान्द्रायणादि शास्त्रप्रवचनं वा 'दमः' इन्द्रि यनिग्रहः 'कर्म' वर्णाश्रमोचितं 'प्रतिष्ठा' तद्धेतुः । तपआदिमत्सु सर्वविद्या प्रतितिष्ठतीत्यर्थः । तपआदीनां विद्याप्रतिष्ठापकत्वं विद्याऽ भिवृद्ध्यर्थत्वम् । तृतीयस्योत्तरमाह—वेदा इति । 'वेदाः' ऋगादयः तदनुकूलग्रन्थाश्च शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमि

तामुपनिषदमेवं वेद' (केन.४-७..९.) इति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात् ।

(२५) यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा ।
तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः ।
अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत् ॥
इत्याग्नेये । तुशब्दः पूर्णफलार्थत्वं सूचयति ॥२७॥

(२६) सू—ॐ ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ॐ ॥ २८ ॥

---

ति षड्वेदाङ्गानि 'सत्यं' मीमांसा 'निर्णीयते यतः सत्यमिदं सत्यमिति स्फुटम्' इति वचनात् । 'आयतनं' उत्पत्तिकारणं तस्या इत्यनुषङ्गः । एतदुपनिषद्ज्ञानिनः फलमाह—य इति । 'यः' अधिकारी 'एतां' उपनिषदं वेद सः 'अनन्ते' अपरिच्छिन्ने 'स्वर्गे' स्वरूपसुखज्ञानात्मके 'लोके' प्रकाशमाने 'ज्येये' ज्येष्ठे परे ब्रह्मणि प्रतितिष्ठतीति तलवकारश्रुत्यर्थः । यद्यप्यत्र वेदादिकारणकत्वोक्तया परोक्षज्ञानमेव प्रतिपाद्यतया भाति । तथाऽपि 'यो वा वेद' इति फलवाक्यपर्यालोचनया परोक्षज्ञानद्वाराऽपरोक्षज्ञानपर्यवसायित्वमस्य वाक्यस्य वक्तव्यमिति नासङ्गतिः । अत एव भाष्ये फलवाक्यपर्यन्तोदाहरणम् । न चास्य सूत्रस्य 'तुल्यं तु दर्शनं, चीर्णे कृते वा' इत्युक्तिविरोधः शङ्क्यः । ज्ञानस्य मोक्षसाधनत्वेऽविशेषस्य तत्रोक्तत्वादिह च ज्ञानवृद्ध्यर्थत्वोक्तेर्विरोधाभावात् ॥

(२५) ननु ज्ञानादेव मोक्षसिद्धौ किं प्रतिष्ठयेत्यत आह—यस्येति॥ 'ज्ञानं' ब्रह्मापरोक्षज्ञानं 'तस्य' ज्ञानस्य 'शान्त्यादयः' शमादयः 'अङ्गानि' ज्ञानवृद्ध्यर्थानि ज्ञानेन सम्पूर्णमोक्षसाधने उपयुक्तानि भवन्तीत्यर्थः । 'तस्मात्' अङ्गत्वात् 'अन्यथा' शान्त्याद्यननुष्ठानेऽसत्कर्मानुष्ठाने चेत्यर्थः । 'अल्पफलं' प्राप्तव्यह्रासो यावदनभिव्यक्तिश्चेत्यर्थः। नन्वेतत् श्रुत्युक्तं प्रमेयं सूत्रे किं नोक्तमित्यत आह—तुशब्द इति । शमादेरिति शेषः । 'पूर्णफलार्थत्वं' फलपूर्तिप्रयोजकत्वम् । उपलक्षणमेतत् । असत्प्रवृत्तेरल्पफलत्वं च सूचयतीत्यपि द्रष्टव्यम् ॥

(२६) ननु यदि सदसत्प्रवृत्तिभ्यामस्ति ज्ञानिनो विशेषः, तर्हि 'कथमेवंविन्निखिलं भक्षयीत' इति निषिद्धान्नभोजनेऽपि ह्रासाभावोक्तिः सम्भवति । तस्मान्न विशेषस्स्यादिति पूर्वोक्तस्य तर्कपराहतिमाश

'यदि ह वा अप्येवंविन्निखिलं भक्षयतिैवमेव स भवति' (          ) इति सर्वान्नानुमतिः प्राणात्यय विषया। 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्' (छा. १-१०-४.) इति दर्शनात् ॥२८॥

ङ्कय परिहरत्सूत्रं पठति—सर्वेति ॥ अत्र चशब्दः शङ्काव्यावर्तकः। तथा च ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषाभ्युपगमे न 'एवंवित्' इति श्रुतिबाधो वाच्य इति प्रतिज्ञासिद्धौ तत्र हेतुत्वेन श्रुतेरन्यविषयत्वोक्तिपरं—सर्वान्नानुमतिश्च प्राणात्यय इत्यंशं व्याचष्टे—यदीति। इतीति। एवंरूपा शाखान्तरस्था 'सर्वान्नानुमतिः' निषिद्धानिषिद्धसर्वभक्षणानुज्ञाश्रुतिरित्यर्थः। प्राणात्ययविषयेति। यदि प्राणात्ययकाले ज्ञानी निषिद्धं भुञ्जीत, तर्हि न तेन तस्य विशेष इत्येवं प्राणहानिप्रसक्तिकालविषयेत्यर्थः। विषयेत्यनेन सप्तम्यर्थ उक्तः। एवमुक्तप्रकारेण ब्रह्मविद्यदि 'निखिलं' निषिद्धानिषिद्धरूपं सर्वं भक्षयति। तदाऽपि सः 'एवमेव' मुक्त एव भवति, न तु ह्रसत इति श्रुत्यर्थः। साधारणश्रुतेः कुतः प्राणात्ययविषयकत्वकल्पनेत्यतः तद्दर्शनादित्यंशं व्याचष्टे—न वेति। इति तद्दर्शनादिति। इत्येवंरूपाज्जीवनोपयुक्तनिषिद्धभक्षणानुमतितोऽधिकरागप्राप्तानुपान प्रत्याख्यानरूपलिङ्गप्रतिपादकमुनिवचनादित्यर्थः। अतो ह्रासाभावोक्तेरन्यथोपपन्नत्वात् न तद्बलाज्ज्ञानिनः सदसत्प्रवृत्त्योरविशेषः शङ्कनीय इति ज्ञानिनाऽपि निषिद्धं न कार्यमेवेति भावः। अनेन—यतो 'यदि ह वा' इति सर्वान्नानुमतिश्रुतिः प्राणात्ययकालविषया अतो ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषाभ्युपगमे नैतच्छ्रुतिबाधः। कुतः श्रुतेरन्यकालविषयत्वकल्पनं? 'तद्दर्शनात्' तत्र श्रुतेः प्राणात्ययविषयत्वे तस्य लिङ्गस्य दर्शनात् 'न वा' इति तल्लिङ्गप्रतिपादकश्रुतेरिति सूत्रार्थ उक्तो भवति। सूत्रे तल्लिङ्गादित्येव वक्तव्ये दर्शनपर्यन्तधावनमासिद्धिपरिहारार्थमिति ध्येयम्। 'न वा अजीविष्यम्' इति छन्दोगश्रुतेरयमर्थः—चक्रायणस्यापत्यं चाक्रायणः उषस्तिनामा मुनिरतिवृष्ट्या दौर्भिक्ष्ये सति स्वजायया सह कस्यचित् 'इभ्यस्य' धनिकस्य इभपालकस्य वा ग्रामे उवास। स च तत्र तत्रान्नार्थी अटन् 'कुल्माषान्' मुद्गान् कुत्सितवनमाषान् वा खादन्तमिभ्यं यदृच्छयोपलभ्य ययाचे। अथेभ्योऽस्मै कुल्माषान् दत्वा 'अनुपानं' उच्छिष्टजलपानं कुर्विति मुनिं प्रार्थयामास। एवमिभ्येन प्रार्थि

( २७ ) सू—ॐ ॥ अबाधाच्च ॥ ॐ ॥ २९ ॥
अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् ।
अतो विद्वानपि न्याय्यं वर्ततोत्कर्षसिद्धये॥ इति ब्रह्म
तर्के ॥ २९ ॥

( २८ ) सू—ॐ ॥ अपि स्मर्यते ॥ ॐ ॥ ३० ॥
अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।

---

तो मुनिरेतदुदकपाने उच्छिष्टं मया पीतं स्यादित्यनूवाच । तत्रेभ्यो बभाषे एतेऽपि कुल्माषा उच्छिष्टाः 'न स्वित्' न किमिति । तत्र मुनिरुवाच । किमिति? यदि 'इमान्' कुल्माषान् 'नाखादं' नाभक्षयं तर्हि 'न वाऽजीविष्यं' जीविष्यामि अतः प्राणात्यये दोषाभावात्ते मया भक्षिताः उदपानं तु 'मे कामो' ममेच्छाधीनं इदानीं वर्तते । वृथोच्छिष्टस्वीकारे दोषप्राप्तेस्तन्न पिबामीति । श्रुतावखादमिति नञ्पूर्वकशत्रन्तः, अखादन्नाजीविष्यामीत्यन्वयः । लिङयं टीकायां लङ् लिङ् चेति ज्ञेयम् ॥

( २७ ) ननु ज्ञानिनां निषिद्धाकरणे बाधकसद्भावात् न सदसत्प्रवृत्तिभ्यां विशेषो युक्त इत्याशङ्कां परिहरत्सूत्रं पठति—अबाधाच्चेति ॥ न केवलं निषिद्धकरणे साधकप्रमाणाभावात् ज्ञानिनः सदसत्प्रवृत्त्योरविशेषो न युक्तः, किन्तु निषिद्धाकरणे बाधकाभावाच्चेति सूत्रवृत्तिमभिप्रेत्याबाधादिति हेतोरसिद्धिपरिहाराय सूत्रं स्मृत्यैव व्याचष्टे— अन्याय्येति । 'अन्याय्यचरणं' निषिद्धानुष्ठानं 'हि' यतः । 'विद्वान्' ज्ञानी न केवलमविद्वानित्यपिशब्दार्थः । निषिद्धं त्यजेदिति भिन्नक्रमेण समुच्चये वाऽपिशब्दः । 'न्याय्यं' योग्यं सत्कर्म 'वर्तेत' अनुवर्तेत । उत्कर्षो मोक्षानन्दादिशयादिरूपः । ब्रह्मतर्के उक्तादिति शेषः । अस्याबाधादित्यनेनान्वयः । निषिद्धकरणे प्रमाणसत्त्वात् ज्ञानिना तत्कर्तव्यमिति पक्षान्तरं त्वसिद्धत्वादयुक्तमित्युक्तं—'अचोदना' इत्यत्र ॥

( २८ ) ननु ज्ञानिनो निषिद्धकरणनिषेधकप्रमाणाभावाच्च सदसत्प्रवृत्त्योर्विशेषो युक्त इत्याशङ्कां परिहरत्सूत्रं पठित्वा सूत्राभिप्रेतस्मृतिमुदाहरति—अपीति ॥ वक्ष्यमाणश्रुतिसमुच्चयेऽपिशब्दः । हरिवंशेष्विति । स्मर्यतेऽपीत्यपिशब्दान्वयः । यतो निषिद्धाकरणमिति शेषः । अस्यातो नाविशेष इति प्रकृतसाध्यपदेनान्वयः । त्रयो लोकास्त्रैलोक्यं

एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥ इति हरिवंशेषु ॥ ३० ॥

( २९ ) सू—ॐ ॥ शब्दश्चातोऽकामचारे ॥ ॐ ॥ ३१ ॥
'स य एतदेवं विदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत' इति कौण्डिन्यश्रुतौ ।

( ३० ) अत इत्यल्पफलत्वं सूचयति ।
न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया । इतिपाद्मे ॥ ३१ ॥

---

[ तस्य, पापादुद्धरणक्षमः । किमु अनेतादृश इति कैमुत्यमपिशब्दार्थः । श्रुत्युक्तं 'श्रौतं' स्मृत्युक्तं 'स्मार्तं' 'आचारं' तदङ्कं न विसर्जयेदित्यस्य सत्कर्मकरणं निषिद्धाकरणं च न परित्यजेदित्यर्थः ॥

( २९ ) न केवलं स्मृतिरेव निषेधिका, अपि तु श्रुतिरपीत्याह—सूत्रकृत्—शब्द इत्यादिना ॥ यतोऽकामचारे न केवलं स्मृतिः, अपि तु 'शब्दश्च' श्रुतिरप्यस्ति अतः । एवमतश्च कामचारस्याल्पफलत्वाच्च न ज्ञानिनः कामचारो युक्त इत्यतोऽल्पफलत्वाद्योऽयमकामचारस्तत्र शब्दश्चास्तीति वा सूत्रवृत्तिमभिप्रेत्य तत्र शब्दपदोक्तां श्रुतिमुदाहरति—स इति । 'यः' अधिकारी 'एतत्' ब्रह्म 'एवं' उक्तगुणवत्त्वेन 'वित्' श्रवणेन विषयीकुर्वन् 'मन्वानः' तद्विषयकमननध्याने कुर्वन्नथ पश्यन्नास्ते सः 'कामचरितं' कामगमनं 'न चरेत्' न कुर्यात् । यद्वा-कामचरितं यथा भवति तथा 'न चरेत्' न गच्छेदित्यर्थः । 'कामं' अथेच्छं न भक्षयीत, 'कामं' निषिद्धरागं सर्वं काम्यं वा नानुसरेदिति श्रुत्यर्थः । श्रुतावित्यस्य अकामचार उक्त इति विपरिणताध्याहृतपदाभ्यामन्वयः ॥

( ३० ) ननु निषिद्धकरणे बाधकाभावात्तत्क्रियत इत्यतस्तदुत्तरत्वेनात इत्यंशं व्याख्याति—अत इति ॥ अतश्शब्देन निषिद्धकरणसमानाधिकरणज्ञानस्य 'अल्पफलत्वं' तद्धेतुत्वं, यद्वा—निषिद्धकरणस्य 'अल्पफलत्वं' फलह्रासस्साधनत्वं 'सूचयति' परामर्शयति सूत्रकृदित्यर्थः । पूर्वं 'तथाऽपि तु' इति तुशब्देन सत्प्रवृत्तेः पूर्णफलकत्वसूचनेन असत्प्रवृत्तेरल्पफलत्वस्यार्थात् आगतत्वात्तस्य इहातश्शब्देन परामर्शो युक्त इति भावः । निषिद्धस्याल्पफलहेतुत्वमेव कुत इत्यत आह-

(३१) सू—ॐ ॥ विहितत्वाच्चाश्रमकर्माऽपि ॥ ॐ ॥ ३२ ॥
न केवलं निषिद्धाकरणेन पूर्यते। कर्तव्यं च वर्णाश्र मविहितं कर्म।

(३२) पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन्।
यदात्मनस्सु नियतमानन्दोत्कर्षमाप्नुयात् ॥
इति कौषारवश्रुतौ विहितत्वाच्च।
अपिशब्दो वर्णधर्मसमुच्चयार्थः ॥ ३२ ॥

(३३) सू—ॐ ॥ सहकारित्वेन च ॥ ॐ ॥ ३३ ॥

---

नेति। वर्तेतेत्यावर्तते। तथा च यः 'पूर्णज्ञानफलेच्छया' पूर्णं यत् ज्ञानफलं तदिच्छया वर्तेत, तदिच्छुः सन् निषिद्धानि कर्माणि नानु वर्ततेत्यर्थः। पाद्म इति। वचन इति शेषः। अस्याल्पफलत्वमित्यादि नाऽन्वयः ॥

(३१) ननु निषिद्धाचरणे फलह्रासादिबाधकसद्भावादस्तु ज्ञानिनो निषिद्धं वर्ज्यम्, न तु सत्कर्मकरणमावश्यकम्। न चैवं पूर्णफलासिद्धिः। ह्रासकारणाभावे ज्ञानादेव तत्सिद्धेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—विहितत्वादिति ॥ अत्र चशब्दः साध्यांशे कर्तव्यमित्यध्याहृतपदेनाऽप्यन्वेतीत्याशयेन तं निषिद्धाकरणसमुच्चयार्थकतया व्याचष्टे—नेति। 'पूर्यते' कर्मेति शेषः। पूर्णफलयुक्तो भवति पुरुष इति वा। साध्यांशं व्याचष्टे—वर्णेति। वर्णेष्वाश्रमेषु च कर्तव्यतया विहितमित्यर्थः। वर्णेत्यपिशब्दार्थोक्तिः ॥

(३२) कुत इत्यतो विहितत्वादिति हेतुं व्याख्याति—पश्यन्निति ॥ 'इमं' हृदयादिगतं परमात्मानं पश्यन्नपि, न केवलमपश्यन्नित्यपेरर्थः। 'अविचारयन्' असंशयानः कर्म कुर्यात्। कर्म किमित्यत आह—यदिति। 'आत्मनः' कर्तृजीवस्य 'सुनियतं' वर्णाश्रमोचितम्। फलमाह—आनन्देति। येनेति शेषः। यद्वा—'यत्' यस्मादात्मनः 'सुनियतं' योग्यमानन्दोत्कर्षमाप्नुयादित्यर्थः। विहितत्वाच्चेति। न केवलमानन्दातिशयार्थत्वादिति चार्थः। वक्ष्यमाणसहकारित्वसमुच्चयार्थो वा। सूत्रेऽनुक्तो वर्णधर्मः आश्रमधर्मेण सह किमिति भाष्यत इत्यत आह—अपिशब्द इति ॥

(३३) ननु विहितत्वेऽपि न सत्कर्म ज्ञानिना कार्यं फलाभावात्।

यथा राज्ञस्सहकार्येव मन्त्री
तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् ।
एवं ज्ञानं कर्म विनाऽपि कार्यं
सहायभूतं न विचारः कुतश्चित् ॥
इति कमठश्रुतौ सहकारित्वोक्तेश्च ।

( ३४ ) ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वातु वर्धते ॥ इति ब्रह्माण्डे ॥

( ३५ ) सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।

---

न च सम्पूर्णफलार्थं तत्कर्तव्यमिति वाच्यम् । तस्य ह्रासकारणाभावे स्वत एवसिद्धेः अन्यथा ज्ञानकर्मसमुच्चयवादापातादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—सहकारित्वेनेति ॥ सम्पूर्णफलसिद्धौ ज्ञानसहकारित्वेनोक्तेश्च वर्णाश्रमविहितं कर्म कर्तव्यमिति सूत्रार्थः । सूत्रे हेत्वसिद्धिपरिहारायोक्तेरिति शेषः कार्यः, चः साध्यसूचकोऽपीत्याशयेन श्रुत्युदाहरणपूर्वं सूत्रं व्याचष्टे--यथेति । यथा यद्यपि 'क्षितिपो' राजा 'तं' मन्त्रिणमृते राज्यकार्यं 'ऋच्छेत्' प्राप्नोति । तथाऽपि राज्ञो मन्त्री सम्पूर्णकार्यसिद्धेः सहकार्येव 'एवं' तथा यद्यपि ज्ञानं कर्म विनाऽपि मोक्षकार्यं साधयेदिति शेषः । तथाऽपि कर्म सम्पूर्णफलसाधने सहायभूतं फलाधिक्यहेतुत्वात् । नात्र कुतश्चित्कारणात् संशयः कार्य इत्यर्थः । सहकारीति । कर्मणः संपूर्णफलसिद्धौ ज्ञानसहकारित्वेनोक्तत्वाच्चेत्यर्थः । न केवलं विहितत्वादिति चार्थः । एतेन समुच्चयवादो निरस्तः, विनाऽपि कर्म ज्ञानमात्रेण मोक्षस्वरूपसिद्धेः ॥

( ३४ ) 'एवं ज्ञानं कर्म विनाऽपि' इति श्रुत्युक्तार्थे स्मृतिं चाह—ज्ञानादिति ॥ ब्रह्मदर्शनादित्यर्थः । अकार्यं निषिद्धं कर्म । सर्वकार्याकृतावपीत्यपि व्याख्येयम् । ज्ञानिन इति शेषः । 'अकार्यात्' अनापदि निषिद्धकरणात् । 'शुभं' स्वस्ववर्णाश्रमोचितं ज्ञानिमात्रसाधारणं शमादिकर्म च कृत्वा, स्थितस्येति शेषः । वर्धते आनन्दः शुभमिति वा। ब्रह्माण्डे सहकारित्वेनोक्तत्वादित्यन्वयः । एवं ब्रह्मतर्क इत्यस्याऽपि ॥

( ३५ ) ननु यदि सम्पूर्णानन्दप्राप्तौ कर्म सहकृतं ज्ञानं साधनं, त

उपासया कर्मभिश्च भक्त्या चानन्दचित्रता ॥ इति बृहत्तन्त्रे ॥

( ३६ ) धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः ।
स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिताः ॥ इति च पाद्मे ॥ ३३ ॥

——:*:——

र्हि समुच्चयवादापत्तिर्दुर्वारा । न च मोक्षस्वरूपमात्रं ज्ञानमात्रसाध्यं, न तत्र कर्माऽपि कारणमिति न समुच्चय इति वाच्यम् । सम्पूर्णानन्द प्राप्तिमन्तरेण मोक्षस्वरूपस्य पृथगभावादित्यत आह—सर्वेति ॥ स्वानुबन्धिसर्वदुःखनिवृत्तिरित्यर्थः । उपलक्षणमेतत् । बहुतरानन्दानुभवश्चेत्यपि द्रष्टव्यम् । तथा च सर्वदुःखनिवृत्तिरूपो मोक्षो ज्ञानैकसाध्य इति न दोष इति भावः । 'उपासया' ज्ञानोत्तरकृतब्रह्मोपासनेन 'कर्मभिः' निवृत्तकर्मभिः । आनन्दचित्रतेति । आनन्दानुभववैचित्र्यमित्यर्थः । उपलक्षणमेतत् । समग्रानन्दव्यक्तिश्चेत्यपि द्रष्टव्यम्। केचित्तु—आनन्दस्य बहुत्वाद्विचित्रता तारतम्यं क्रमेण आनन्दवृद्धिरित्यर्थ इत्याहुः ॥

( ३६ ) यदुक्तमसत्प्रवृत्त्या आनन्दह्रास इति, न तद्युक्तम् । चतुर्मुखादीनां पुत्रिकाकामाद्यसत्प्रवृत्त्या ह्रासाभावादित्यत आह—धर्मेति॥ शुभकर्मस्वरूपाणां विचित्रत्वादित्यर्थः । धर्मवैचित्र्यं तु यो देवादीनां धर्मः स मनुष्याणामधर्मः । योऽन्येषामधर्मः स देवादीनां धर्म इत्यादिरूपमिति ध्येयम् । 'देवमनोगतः' देवमनोवृत्त्या कर्तव्यतया विषयीकृतः , इतरेषामभावात् । तेषामेवायं विशेषः कथमित्यत आह—न हीति ॥ 'हि' यस्मात् 'एते' देवाः 'लोकसम्मिताः' इतरजनसदृशा नेत्यर्थः। पाद्मे इति । निश्शङ्कं विवक्षितार्थोऽभिहित इति शेषः । इति च ब्रह्माण्ड इत्यारभ्य स्थिताश्चशब्दाः परस्परसमुच्चयार्थाः । 'अबाधाच्च' इत्यादिसूत्राणां 'अचोदना चापवदति हि, शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेः, अत एव चाग्नीन्धनादि' इत्यादिवचनैः पौनरुक्त्यपरिहारस्तु 'अबाधाच्च' इत्यादिसूत्राण्युदाहृत्योक्तमेवार्थं प्रमाणान्तरैः प्रचुरतरं प्रपञ्चयतीति तत्त्वप्रदीप एवाभिहितः ॥४॥

॥ इति स्तुत्यधिकरणम् ॥

——*——

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ सर्वथाऽपि तु त एवोभयलिङ्गात् ॥ ॐ ॥ ३४ ॥
सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये ।

( २ ) 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्ट

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मज्ञानस्याधिकारिमात्रप्राप्यत्वं वर्ण्यते । वेदानधिकारिणामवैष्णवानामपि वेदप्राप्तिदर्शनात् तद्वदनधिकारिभिरपि महाप्रयत्नेन ज्ञानमाप्तुं शक्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—सर्वथाऽपीति ॥ सूत्रे महाप्रयत्नमात्रमप्रयोजकमिति ज्ञापनाय सर्वथाऽपीत्युक्तमिति भावेन तद्व्याचष्टे---सर्वेति । प्रकारः अङ्गम् । उत्साहः प्रयत्नः श्रवणादिरूपः । इत्थंभूतलक्षणे तृतीया । साङ्गश्रवणादिप्रयत्नेऽपीत्यर्थः । अपिः यद्यपितथाऽपीत्यर्थे । त इति तच्छब्दपरामर्शनीयं दर्शयति—य इति । ज्ञानं प्राप्नुवन्तीति शेषोक्तिः । योग्यता त्वनादिभूता तत्तत्फलप्राप्तिसाधनागन्तुकप्रयत्नादृष्टातिरिक्ता कारणानागन्तुकस्वभावविशेषाख्या बोध्या । एवकारव्यावर्त्यमाह—नेति । अन्य इत्यनन्तरं प्रत्युत विपरीतज्ञानं तादृशफलं वेति शेषः । तेन सौत्रतुशब्दो व्याख्यातः । उक्तं हि तत्त्वप्रदीपे—अयोग्यः उत्साहेनापि न ज्ञानं प्राप्नोति तुशब्दाद्विपर्ययं प्राप्नोति च । अमृतार्थं प्रयतमान इव राहुः शिरच्छेदमिति ॥

( २ ) एवं साध्यांशं व्याख्याय कुत इत्यतस्तद्धेतुत्वेनोभयलिङ्गादित्यंशं सर्वथाऽपीत्यस्यात्राप्यन्वयमभिप्रेत्य व्याचष्टे–य आत्मेति ॥ इति श्रुत्येति । अभेदे तृतीया । एवंरूपश्रुत्यात्मको योऽयमाचार्योपदेशः चतुर्मुखकर्तृकोपदेशः तस्य इन्द्रविरोचनयोः समत्वेऽपीत्यर्थः । विरोचनो नामासुरः । विपरीतज्ञानमिति । चक्षुषि प्रतीयमानप्रतिबिम्ब एव अपहत पाप्मत्वादिलक्षणात्मेति विपरीतज्ञानमित्यर्थः । सावधारणमेतत् । न तु सम्यग्ज्ञानमित्यवधारणार्थः । इन्द्र इति च सावधारणम् । न तु विरोचन इत्यवधारणार्थः । सम्यग्ज्ञानमिति । आपेत्यनुषज्यते । इत्युभयविधलिङ्गादिति । इत्येवंरूपमिन्द्रविरोचनयोः सम्यग्ज्ञानप्राप्त्यप्राप्तिरूपं यत् उभयेषां योग्यायोग्यजनानां सम्यग्ज्ञान

व्यः स विजिज्ञासितव्यः' (छा. ८-७-३.) इति श्रुत्या आचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमाप इन्द्रस्सम्यग्ज्ञानमित्युभयविधलिङ्गात् ॥ ३४ ॥

विपरीतज्ञानप्राप्तिरूपोभयविधार्थप्राप्तिसाधकं यल्लिङ्गं तस्मादित्यर्थः। अनेन सूत्रे उभयशब्द आवर्तते। तत्रैक उभयशब्दपर्यायः। अपर उभयविधार्थकः। तथा च उभयोः इन्द्रविरोचनयोर्गुरूपदेशसाम्येऽपि उभयविधात् ज्ञानप्राप्त्यप्राप्तिरूपात् योग्यायोग्यजनानां सम्यग्ज्ञान विपरीतज्ञानप्राप्तिरूपोभयविधार्थस्य साधकलिङ्गादिति हेत्वर्थ उक्तो भवति। एवं हि छन्दोगोपनिषदि श्रूयते। 'तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति। तौ होचतुः य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः..इति ह भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति। तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' (छा. ८-७.) इत्यादि। अस्यार्थः— 'तौ' पूर्वप्रकृताविन्द्रविरोचनौ द्वात्रिंशत्सहस्रसङ्ख्याकानि वर्षसहस्राणि गुह्यनियमाख्यं ब्रह्मचर्यव्रतं चरन्तावूषतुर्ह किल। एवं स्वसमीपवासिनौ प्रजापतिरुवाच ह। किमिति? 'वां' युवामत्र किमिच्छन्तावववास्तमिति। तावेवं पृष्टौ ऊचतुर्ह। तदेवाह—'य आत्मा' इत्यादिना 'विजिज्ञासितव्यः' इत्यन्तेन। इत्येवं 'भगवतः' पूज्यस्य ते 'वचो' वाक्यं 'वेदयन्ते' तदर्थभूतं परमात्मानं वेत्तुमिच्छन्ति देवासुरा इति शेषः। अतस्तमात्मानमुपदेष्टृतो ज्ञातुमिच्छन्तावावां 'अवास्तं' अवात्स्व पुरुषादिव्यत्यासः छान्दसः। 'तौ' एवंप्रकटिताभिप्रायौ प्रजापतिः 'उवाच' उपदिदेश—य एषोऽन्तरक्षिणीति। योऽक्षिस्थो विश्वनामा हरिरात्मा सोऽपगतपाप्मत्वादिगुणकइति। य आत्मेत्यादेरर्थस्तु दहरनयेऽभिहितः। यद्यपि य इत्यादि विजिज्ञासितव्य इत्यन्तं वाक्यं प्रजापतिना पूर्वोक्तमेवेन्द्रविरोचनाभ्यामनूद्यत इति नोपदेशरूपमतो नैतदुदाहरणार्हं, किन्तु य एषोऽन्तराक्षिणीत्याद्येवोदाहरणीयम्। तथाऽपि भगवतो वच इत्यन्ते श्रवणादस्यापि चतुर्मुखोपदेशत्वावगमान्नासङ्गतिः। तथा च भाष्ये विजिज्ञासितव्य इत्यन्तोदाहरणं प्रतीकरूपमुपलक्षणाभिप्रायमन्यस्याप्युदाहरणीयत्वं ज्ञापयतीति द्रष्टव्यम् ॥

( ३ ) सू—ॐ ॥ अनभिभवं च दर्शयति ॥ ॐ ॥ ३५ ॥
'दैवीमेव सम्पत्ति देवा अभिगच्छन्त्यासुरीमेव चा सुरा नैवैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठ ते' इति स्वभावानभिभवं च दर्शयति॥ ३५ ॥

( ४ ) सू--ॐ ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ॐ ॥ ३६ ॥

( ३ ) ननु महता प्रयत्नेन अयोग्यताया अभिभावयितुं शक्यत्वा दयोग्यानामपि ज्ञानप्राप्तिः किं न स्यात् । दृष्टं हि विश्वामित्रस्य मह ता प्रयत्नेन विप्रत्वमित्याशङ्कां परिहरत्सूत्रं पठति—अनभिभवं चेति॥ अत्र नायोग्यताऽभिभवेनायोग्यानामपि ज्ञानप्राप्तिर्युक्ता । कुतः ? अयो ग्यत्वस्य स्वभावत्वादिति हेतुसाध्ये उपस्कृत्य तत्र हेतोरसिद्ध्यप्रयो जकत्वशङ्कापरिहारकतया सूत्रं व्याचष्टे—दैवीमेवेति ॥ देवसम्बन्धि नीं मुक्तियोग्यत्वरूपामित्यर्थः । न त्वयोग्यत्वमित्येवार्थः । 'सम्पत्ति' स्वभावं 'देवाः' मुक्तियोग्याः 'अभिगच्छन्ति' प्राप्नुवन्तीत्यर्थः । अ नेन देवानामपि प्रबलशापमहापचारादिना योग्यताभिभवसम्भवेन मिथ्याज्ञानप्राप्तिरपि स्यादिति शङ्काऽपि निरस्ता भवति । 'आसुरीं' असुरसम्बन्धिनीमयोग्यत्वरूपां सम्पत्तिमसुरा अभिगच्छतीत्यर्थः । 'एतयोः' देवासुरस्वभावयोः। यद्वा—देवासुरयोः तथात्वे स्वभाव स्येति शेषः । 'अभिभवः' अपायः कदाचिदपि नास्ति, किन्त्वेते दे वासुराः 'स्वभावे' योग्यत्वायोग्यत्वरूपेऽवतिष्ठन्त इत्यर्थः । 'हि' य तः इति श्रुतिरिति शेषः । स्वभावानभिभवमिति। देवासुरस्वभावस्या भिभवाभावमित्यर्थः । स्वभावेत्युक्त्या सूत्रे स्वभावस्येति शेषो दर्शि तः । तेन स्वभावत्वादिति हेतुस्सूचितः । सूत्रे भाष्ये च चशब्दः न केवलं स्वभावानभिभवं दर्शयति श्रुतिः, किन्तु योग्यत्वायोग्यत्वयोः देवासुरस्वभावत्वं च प्रतिपादयतीति समुच्चयार्थः । तथा च नासि द्धिर्न वाऽप्रयोजकतेति भावः । एतेन क्षत्रियत्वादिप्रतिबन्दी निरस्ता । तेषामस्वभावत्वात् ॥

( ४ ) ननु मा स्तु तमोयोग्यानां मुक्तियोग्यानां च अतिदार्ढ्येन स्वभावाभिभवायोगात् सम्यग्विपरीतज्ञानप्राप्तिः। तथाऽपि सा मध्यम मनुष्याणां भवतु, कोटिद्वयविषयकतया तज्ज्ञानस्य दार्ढ्याभावेन त त्स्वभावाभिभवस्य कर्तुं शक्यत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य ति—अन्तरेति ॥ अत्रान्तरशब्दस्य ससम्बन्धिकत्वात्प्रकरणलब्धं त

सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवा
सुरभावयोः दार्ढ्यदृष्टेः ॥ ३६ ॥
( ५ ) सू—ॐ ॥ अपि स्मर्यते ॥ ॐ ॥ ३७ ॥
असुरा आसुरेणैव स्वभावेन च कर्मणा ।

त्सम्बन्धिद्वयं दर्शयति—सम्यगिति । 'अन्तरा' मध्ये स्थितानामि ति शेषोक्तिः । मानवानामिति शेषः । अपिशब्दो न केवलं देवासुराणां, किन्तु मिश्रबुद्धीनामपीति समुच्चयार्थः । अपीत्यन्तस्यानभिभव एवेति विपरिणतेन सम्बन्धः । अनेनापिशब्दोऽनभिभवाकर्षकोऽपीत्युक्तं भवति । देवासुरभावयोरित्यत्रापि सम्बध्यते । स्थितिरिति शेषः । तेनान्तराशब्दस्यावृत्तिः सूचिता । एवं साध्यांशं व्याख्याय तद्दृष्टेरिति हेत्वंशं व्याख्याति—देवासुरभावयोरिति । देवासुरोभयस्वभावयोरित्यर्थः । विमिश्रज्ञान इति यावत् । सावधारणमेतत् । दार्ढ्यदृष्टेरिति । विशेषेणेति शेषः । अनेन तदित्येतत् तेषां तत्र तस्येत्यावृत्त्या व्याख्यातम् । तथा चशब्दोऽवधारणार्थतया तुशब्दो विशेषार्थतया च व्याख्यातो भवति । स च विशेषः एकेषामुभयत्रापि बहुमतिः, केषांचिदुभयत्राऽपि निन्दा, औदासीन्यमन्येषामित्यादिरूपस्तत्त्वप्रदीपेऽभिहितः । दृष्टेरित्यस्य श्रुतितो लोकतश्च विशेषो दृश्यत इति तत्त्वप्रदीपवाक्यादर्थो ज्ञेयः । 'लोकतः' स्मृतित इत्यर्थः । अनेन—न केवलं देवासुराणां, किन्तु सम्यग्ज्ञानविपरीतज्ञानयोः 'अन्तरा' मध्ये स्थितानां मानवानामपि अन्तरा देवासुरभावयोः स्थितेर्मिश्रज्ञानत्वस्यानभिभव एव, मिश्रज्ञानित्वमेवेति यावत् । न तु ज्ञानादिप्राप्तिः । कुतः? 'तद्दृष्टेः' तेषां 'तत्रैव' मिश्रज्ञान एव 'तु' विशेषेण 'तस्य' दार्ढ्यस्य दर्शनाच्छ्रुतिस्मृत्युदितत्वादिति सूत्रार्थ उक्तो भवति ॥

( ५ ) ननु देवदानवमानवानां सम्यग्ज्ञानादिस्वभावत्वे तद्योग्यतास्वभावत्वे च भवेदभिभवाभावः । तदेव कुतः, तादृशस्वभावत्वे च तथाफलेन भाव्यम्, तदपि कुत इत्याशङ्कां स्मृत्या परिहरत्सूत्रमुपन्यस्य तां स्मृतिमुदाहरति—अपीति ॥ स्वभावेनेति समासान्तर्गतमासुरस्वभावेनेति भिन्नं च पदं ज्ञानकर्मणोर्विशेषणं, तथा आसुरेणेति पदं समासप्रविष्टदेवपदं च तयोरेव विशेषणम् । ज्ञानादेर्दैवत्वादिकं 'सर्वभूतेषु येनैकम्' इत्यादिगीतावाक्येनोक्तं सात्त्विकताम

ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥
देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥
नानयोरन्यथाभावः कदाचित्क्वापि विद्यते ।
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च ॥ इति स्का
न्दे ॥ ३७ ॥

( ६ ) सू—ॐ ॥ विशेषानुग्रहं च ॥ ॐ ॥ ३८ ॥
शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमानः ।

---

सत्वरूपं ज्ञातव्यम् । केचित्तु—आसुरेण कर्मणा विपरीतेन ज्ञानेनेत्य न्वयमाहुः। एके तु—आसुरेणेत्यस्य विवरणं–विपरीतेनेत्याहुः । तथा च 'असुराः' अयोग्याः 'आसुरेण' तामसेन स्वभावेन योग्यतया 'स्वभावेन' तदनुसारिणा कर्मणा, तथा आसुरेण स्वभावेन विपरी तेन ज्ञानेन च 'विनिश्चयात्' निस्सन्देहं तमो यान्त्येव । 'देवाः' मु क्तियोग्याः 'दैवस्वभावेन' दैवेन सात्त्विकेन स्वभावेन स्वभावानुसा रिणा कर्मणा तादृशेन ज्ञानेन च असंशयं 'परमां वैष्णवीं गतिं' सर्वो त्तमं विष्णुस्वरूपं तत्स्थानं वा गच्छन्ति । 'अनयोः' दैवासुरस्वभा वयोस्तत्फलयोश्च कदाचित्काले क्वापि पुरुषे 'अन्यथाभावो' व्यत्या सो न विद्यते । 'मानुषाः' नित्यसंसृतियोग्याः सम्यग्विपर्ययमिश्रराज सबुद्धयः तादृशकर्मिणश्च, अत एव 'विमिश्रगतयो' विमिश्रफलशा लिनोऽपीति स्मृत्यर्थः । स्कान्द इति । स्मर्यत इत्यन्वयः । अनेन—य तो देवादीनां तत्तत्स्वभावत्वं अपिशब्दात्सूचितं तादृशफलं च स्मर्य ते, अतस्तदुभयं सिद्धमिति सूत्रार्थ उक्तो भवति ॥

( ६ ) हेत्वन्तरेण देवानामेव सम्यग्ज्ञानतत्फले, नान्येषामित्यर्थप्र तिपादकं सूत्रमुपन्यस्य तदपेक्षितं पूरयति—विशेषेति ॥ इति श्रुति रिति शेषः । चो भिन्नक्रमः समुच्चये । तथा च न केवलं स्मृत्युक्तत्वा त्, किन्तु यतः 'शृण्वे' इति श्रुतिः 'देवेषु' योग्येषु परमेश्वरस्य 'विशेषानुग्रहं' तत्फलसद्भावं च 'दर्शयति' प्रतिपादयत्यतोऽपि दे वानामेवेश्वरानुग्रहसाध्ये सम्यग्ज्ञानफले, नान्येषामिति योजना । श्रु त्यर्थस्तु—'वीरः' अध्यवसायान्तगामी स्वनिश्चयानुसारेण स्वकार्य सम्पूर्तिकर्ता नरसिंह इति वा 'स इन्द्रः' परमेश्वरः 'उग्रमुग्रं' स र्वान् दुष्टप्रकृतीन् 'दमायन्' दमयन् नित्यनरकं प्रापयन् । यद्वा-अन्धे

एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनु
ष्यान् ॥ ( ऋ. ६-४७-१६. )
इति विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य ।
( ७ ) असुरान् दमयन् विष्णुः स्वपदं च सुरान्नयन् ।
पुनःपुनर्मानुषांस्तु सृतावावर्तयत्यसौ ॥
इति भविष्यत्पर्वणि ॥ ३८ ॥
( ८ ) सू--ॐ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ॐ ॥ ३९ ॥
देवभागादसुरभाग एव बहुलः । 'तस्मान्न जनतामि

---

तमसि दण्डयन् 'अन्यमन्यं' दुष्टेभ्योऽन्यान् तद्विरुद्धान् सर्वान् स त्स्वभावान् 'अति' संसारमतिक्रम्यातिक्रमयित्वा 'नेनीयमानः' भृशं स्वपदं नयन् सुधारीत्या संसारं भृशमतिक्रमयन्निति वा 'एधमानद्विट्' स्वयोग्यतातिरेकेणैधमानं वर्धमानं द्वेष्टीत्येधमानद्विट् 'शृण्वे' वेदादिषु श्रूयते । कुत एधमानद्विट् ? यतः 'उभयस्य' देवासुरवर्गस्य राजा, किञ्च स एव मनुष्यान् 'विशः' प्रजाः स्वर्गाद्युद्दिश्य कर्मकरणाद्विश इव विशो मध्यमजीवान् 'चोष्कूयते' नित्यं संसार एवावर्तयतीति । परमेश्वरस्येत्यनेन श्रुतिस्थमिन्द्रपदं व्याख्यातं भवति ॥

( ७ ) श्रुत्यर्थनिश्चायकां स्मृतिं चाह—असुरानिति ॥ 'असौ' विष्णुः 'असुरान्' अयोग्यान् । 'स्वपदं' स्वस्थानं 'सुरान्' मुक्तियोग्यान् 'मानुषान्' मिश्रान् पुनःपुनः 'सृतावावर्तयति' स्वर्गे भूमौ नरके च भ्रामयतीत्यर्थः । इति भविष्यत्पर्वणि वचनमिति शेषः । अस्य विशेषानुग्रहमित्यादिनाऽन्वयः । श्रुतिस्मृत्योः समुच्चये चशब्दः ॥

( ८ ) यदुक्तं श्रुतिस्मृतिभ्यां न दैत्यानां तत्स्वभावाभिभवेन देवत्वप्राप्तिरिति, तदेव युक्त्याऽपि समर्थयत्सूत्रं पठित्वा व्याचष्टे—अत इति ॥ देवभागादित्यनेनातश्शब्दः असुरभाग इत्यनेनेतरपदं बहुल इत्यनेन ज्याय इति पदं व्याख्यातं भवति । न तु देवभाग इत्येवशब्दार्थः । बहुल एवेति सम्बन्धः, न तु कदाचिदून इत्येवार्थः । अनेन भिन्नक्रमस्तुशब्दो व्याख्यातः । सूत्रे अतस्तु इत्यपि सम्बन्धः । तेन अवतारिकोक्तार्थस्य व्यापकता सिद्ध्यति । ज्यायस्त्वमेव कुत इत्यतः प्रवृत्तं हेत्वंशं व्याख्याति—तस्मादिति । इति लिङ्गादिति । इति बृहदारण्यकवाक्यबोध्यात ज्याय एवेत्याद्युक्तार्थसाधकात् ज्ञानाङ्कुरसंरक्षणार्थं

यात्’ (बृ.३-३-१०.) इति लिङ्गात् । चशब्दात् ‘ततः कनीयसा एव देवा ज्यायसा असुराः’ (बृ.३-३-१.) इति श्रुतेश्च ॥

(९) असुरा बहुला यस्मात्तस्मान्न जनतामियात् ।
इति च ब्राह्मे ॥३९॥

जनताप्रवेशनिषेधोक्तयन्यथाऽनुपपत्तिरूपलिङ्गादित्यर्थः । सौत्रचशब्दार्थमाह—चशब्दादिति । सूचितताया इति शेषः । ‘ततः’ तयोर्देवासुरभागयोर्मध्ये देवाः ‘कनीयसाः’ कनीयांसः सङ्ख्यातोऽल्पा इत्यर्थः । ‘असुराः’ अयोग्याः ‘ज्यायसाः’ ज्यायांसो बहुला इत्यर्थः । कनीयसा ज्यायसा इत्यकारान्ते पदे । केचित्तु सकारान्ते द्वितीयाबहुवचनान्ते इत्याहुः । पक्षद्वयेऽपि छान्दसं रूपं प्रथमे अकारप्रत्ययस्य द्वितीये दीर्घस्य च प्रापकाभावात् । श्रुतेश्चेत्यस्यापि ज्याय एवेत्यनेनैव सम्बन्धः ॥

(९) ननु जनताप्रवेशनिषेधोऽसुरबाहुल्यनिमित्त एवेति कुत इत्यत आह—असुरा इति ॥ ‘जनतां’ जनसङ्घं ‘नेयात्’ न प्रविशेदित्यर्थः । ब्राह्मे पुराणे उक्तश्चेति शेषः । केचित्तु—‘तस्मान्न जनताम्’ इति स्मृतिवाक्यं लिङ्गप्रदर्शकत्वेन प्रागेकदेशेनोदाहृतं पुनस्तस्यैव समग्रस्य ननु जनताप्रवेशनिषेधोऽसुरबाहुल्यनिमित्त एवेति कुत इत्याशङ्कापरिहारकत्वेनोदाहरणं कृतमित्याहुः । अपरे तु—उभयोः स्मृतित्वमुपेत्य पूर्ववाक्यमन्यदिदं तु समग्रं स्मृत्यनन्तरं भाष्ये चशब्दार्थतयोदाहृतमित्याहुः । तत्राद्यपक्षो बृहदारण्यके ‘तस्मान्न जनतामियात्’ इति स्पष्टं श्रवणेन पूर्ववाक्यस्य श्रुतित्वादुत्तरस्य स्मृतित्वेनोभयोर्भिन्नत्वादनुपपन्नः । द्वितीयपक्षस्तु पूर्ववाक्यस्य स्मृतित्वाभावादेवायुक्तः । सूत्रे अत इत्यावर्तते । अत्रैकोऽनभिभवपरामर्शकः । तुरवधारणे । चस्समुच्चये । तथा च न दैत्यानां स्वभावाभिभवेन देवपदप्राप्तिः, ‘अत एव’ असुरस्वभावानभिभवादेव ‘अतो’ देवभागादितरत् असुरबृन्दं ‘ज्यायस्तु’ बहुलमेवेत्येतदुपपद्यते । अन्यथा तेषां कदाचिदूनत्वापत्त्या तदनुपपत्तिः स्यात् । न च ज्यायस्त्वस्यासिद्धिः, लिङ्गाच्छ्रुतेश्च तत्सिद्धेरिति सूत्रार्थः ॥

( १० ) सू—ॐ ॥ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमात द्रूपाभावेभ्यः ॥ ॐ ॥ ४० ॥

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । 'नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति' ( ) इति नियमश्रुतेः । 'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' ( ) इत्यतद्रूपत्वश्रुतेः । 'तं भूतिरिति देवा उपासांचक्रिरे ते

( १० ) जैमिनिमतेनापि स्वरूपाभिभवो नेत्येतमर्थं समर्थयत्सूत्रं पठति—तद्भूतस्येति ॥ अत्र तच्छब्दो देवासुरनरपरामर्शकः । भूतशब्दः स्वभावरूपजात्यर्थकः । यद्वा—तदिति भावप्रधानं, भूतशब्दः प्राप्तौ, तुशब्दोऽवधारणे । तद्भावस्तत्त्वम् । सिद्धमिति शेषः इत्याशयेन तद्भूतस्य तु तद्भावो जैमिनेरपीति प्रतिज्ञांशं व्याचष्टे—असुरेति । असुरजातेरिति बहुव्रीहिः । जातिः स्वभावः । तथा चासुरस्येत्यर्थः । देवजातेरित्यप्येवमेव व्याख्येयम् । उपलक्षणमेतत् । मनुष्यजातेरेव मनुष्यत्वमित्यपि द्रष्टव्यम् । यद्यप्यभ्यर्हितत्वात् देवजातेरेव देवत्वमिति प्रथमं वक्तव्यम् । तथाऽपि श्रुत्यनुसारेणैवमुक्तम् । जैमिनेरपीति । न केवलं व्यासस्येत्यपेरर्थः । अनेन पुरुषार्थादिनय इवात्र व्यवस्थितविकल्पो नास्तीति सूचितम् । केन हेतुना जैमिनेस्तत्सिद्धिरित्यतो नियमेत्याद्युक्तं सूत्रे । तत्र नियमादिशब्दस्तच्छ्रुतिलक्षकः । तद्रूपं प्राग्विद्यमानस्वभावः, तन्नेत्यतद्रूपं, भावप्रधानमेतत् । अभावशब्दो भावस्याप्युपलक्षक इति भावेन तमंशं व्याचष्टे—नासुरा इति । 'असुराः' अयोग्याः 'दैवीं गतिं' देवस्वभावं 'नेयुः' न प्राप्नुवन्ति । एवं देवा मनुष्याश्च स्वस्वान्यगतिं न यन्ति । किन्त्वात्मीयां स्वीयामेव 'जातिं' स्वभावमनुसृत्य भवन्तीत्यर्थः । रूपमिति । रूप्यते निरूप्यते व्यावर्त्यते वस्त्वनेनेति रूपं सम्यग्ज्ञानादिधर्मः । यो जनो यद्रूपो यल्लक्षणोपेतः स तद्रूप एव । कुतः? 'हि' यस्मात् 'एषः' सम्यग्ज्ञानादिधर्मः 'निसर्गः' स्वभावो भवतीत्यर्थः । 'देवाः' योग्याः 'तं' परमा

बभूवुस्तस्माद्वा अप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्य
भूरित्यसुरास्ते ह पराबभूवुः' (ऐ.आ.२-१-८.) इति
देवासुराणां भावाभावश्रुतेश्च ।

( ११ ) देवानां भूतिरित्येव मनो विष्णौ स्वभावतः ।
असुराणामभूतित्वेनैतन्नेयमतोऽन्यथा ॥
देवाः शापाभिभूतत्वात्प्रह्लादाद्या बभूविरे ।

त्मानं 'भूतिः' ज्ञानैश्वर्यादिभूतिप्रदः तद्रूप इति उपास्ति चक्रिरे । ते न भूतिमन्तो बभूवुः । सुधायां तु मुक्ता इति शेष इत्युक्तम् । तस्माद्देवानां भूतिरित्युपासकत्वादेव 'एतर्हि' अद्यापि सर्वदेवोत्तमः' सुप्तः' सुप्तजनेषु स्थितो वायुः 'भूर्भूरित्येव' ज्ञानैश्वर्यादिरूपस्तत्प्रदश्चेत्येव 'प्रश्वसिति' प्रश्वासनियमपूर्वकं स्तौति । 'अभूतिः' अस्माकमनैश्वर्यहेतुरतद्रूप इति 'असुराः' अयोग्या उपासते । अतस्ते 'पराबभूवुः' भूत्यादिगुणहीना नित्यनिरयं प्राप्ता बभूवुरित्यर्थः । इति श्रुतेरित्यन्वयः । भावाभावशब्दाभ्यां भूत्यभूती तथोपासनं च गृह्यते । तथा च तं भूतिरित्येवंरूपेण देवासुराणां परस्परविपरीतस्य भूतित्वेनाभूतित्वेनोपासननियमस्य भूत्यभूतिरूपतत्फलनियमस्य च श्रुतेरित्यर्थः । अन्यथा स न स्यादिति भावः । चशब्दः पूर्वोक्तश्रुतिसमुच्चये ॥

( ११ ) ननु प्रह्लादादीनां दैत्यानामेव सम्यग्ज्ञानतत्फलयोर्दर्शनात्ते देवानामेवेत्येतत्कथमित्यतः उक्तार्थे स्मृतिं चाह—देवानामिति ॥ यतो देवानां विष्णौ स्वभावतो भूतिरित्येव मनः स्यात् । तेषां तथैवोपासनं स्यादिति यावत् । अतः फलमपि तथैव स्यादिति शेषः । असुराणां 'अभूतित्वेन' तद्विषय एव मनः स्यात् । फलमपि तादृशमेव स्यात् । अत एव तदुपासनं फलं च । 'अतः' उक्तात् 'अन्यथा' अनियतधर्मिकतया 'नेयं' ज्ञेयं नेत्यर्थः । तथा च प्रह्लादादीनां भूतित्वेनोपासकत्वान्न दैत्यत्वमिति नोक्तनियमभङ्ग इति भावः । तर्हि देवानां तेषां प्रह्लादादिभावः किंनिबन्धन इत्यत आह—देवा इति । 'शापाभिभूतत्वात्' शापेन तिरोहितस्वभावत्वादित्यर्थः । 'अतो' देवत्वादेव 'तेषां' प्रह्लादादीनां 'सुगतिः' सम्यग्ज्ञानतत्फले । 'अन्यथा' कारणान्तरात् 'व्यत्ययः' उक्तस्यान्यथाभावो न भवेदित्यर्थः । केचित्तु—'अतो' देवत्वात् 'अन्यथा' दैत्यत्वेन निमित्तेन उक्तस्य व्यत्य

अतस्सुगतिरेतेषां नान्यथा व्यत्ययो भवेत् ॥ इति चाध्यात्मे ॥ ४० ॥

—:*:—

६. अधिकरणम् ॥

(१) सू—ॐ ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ॐ ॥ ४१ ॥

न च परमात्मैश्वर्यादिकमाकांक्ष्यम् । ब्रह्मादीनामपि ना

---

य इत्येतत् न भवेदिति व्याचख्युः । न चैवं यथा कथंचिद्देवानामसुरत्वं प्राप्तमिति वाच्यम् । असुरत्वस्यौपाधिकत्वेन प्राप्तस्यापि निवर्तनात् पुनर्देवत्वप्राप्तेः । तदुक्तं गीतातात्पर्ये—

देवाः शापबलादेव प्रह्लादादित्वमागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ॥
हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ॥

इति । 'अध्यात्मे' ग्रन्थे उक्तत्वादिति शेषः । पञ्चम्यन्तानां सौत्रसाध्यपदेनान्वयः ॥ ५ ॥

॥ इति उभयलिङ्गाधिकरणम् ॥

—:*:—

६. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मज्ञानस्य देवतापदाकांक्षाशून्यैरेव प्राप्यत्वमहिमा वर्ण्यते । देवादिषु नियतं ज्ञानं तदन्यैर्न प्राप्यमित्युक्तम् । ज्ञानाक्षेपकतया सङ्गतं देवतापदमन्यैः प्राप्यं न वेतीदानीं विचार्यते ।

स्वधर्मनिष्ठः शतजन्मभिः पुमान्
विरिञ्चतामेति ततः परं हि माम् ॥

इत्यादेः देवतापदमन्यैः प्राप्यं, किं बहुना ? प्रयत्नैर्भगवदैश्वर्यमपि प्राप्तुं शक्यते, किमु देवतापदमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—न चेति ॥ सूत्रे तदिति व्यस्तं समस्तं च । तत्र व्यस्तेन पूर्वोक्तस्य परामर्शः । तथा च यत्पूर्वपक्षिणा देवतापदं भगवदैश्वर्यं चान्यैः प्राप्यमित्युक्तं, तन्नेत्यर्थः । कुतो नेत्यतस्तदयोगात् इति हेतुर्योज्यः । अत्र तच्छब्देन सूत्रकारबुद्धिस्थदेवपदपरमात्मैश्वर्याकांक्षा गृह्यते । सावधारणमेतत् । तथा च तस्याः तदुभयाकांक्षाया एवायोगादित्यर्थः । तदाप्तिस्तु दूरोत्सारितेति भावः । ननु सूत्रे न चा

काङ्क्ष्यं, किमु परस्येति सूचयितुमपिशब्दः । चशब्द
स्तु ज्ञानार्थिनां पूर्वोक्तादित्थंभावान्तरसूचकः।
( २ ) अयोग्यमारोढुं प्रयतन् प्रपतन् हि दृश्यते। एवमयो
ग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य चाकांक्षायां
पतनमनुमीयते ।

धिकारिकमित्यनेन तदयोगादित्युक्ताकांक्षान्वये सति ब्रह्मादिपदाना काङ्क्षैवोच्यते। अतः कथं न परमात्मैश्वर्यादिकमाकांक्ष्यमिति भण्यते। सूत्रे मुखतस्तदुक्तस्य ब्रह्मादिपदस्यापिपदेन ग्रहणं अपिपदसूचित स्य मुखतो ग्रहणं चायुक्तमित्यत आह—ब्रह्मादीनामिति । पदमिति शेषः। 'नाकांक्ष्यं' नाकांक्षार्हं रुद्रादिपदयोग्यैः। 'परस्य' विष्णोः। ऐश्वर्यमित्यनुवर्तते। ब्रह्मादीनामित्यनेन उत्तमाधिकारिणां ब्रह्मादिदे वानां यस्य यस्मिन्नधिकारः श्रुतिस्मृतिप्रसिद्धः तत्पदमाधिकारिक मित्याधिकारिकपदं व्याख्यातं भवति। कैमुत्यसूचकतया चाप्याधिका रिकमपीत्यपिपदं व्याचष्टे-ब्रह्मादीनामपीति। तथा च कैमुत्ये आक्षेप्या क्षेपकभावापन्नयोरुभयोरप्यपिपदाधिकारिकपदगृहीतत्वात्सौत्रत्वं भाष्यस्य अपिपदेन सूचितस्यापि परमात्मैश्वर्यस्य प्राधान्यान्मुखतो ग्रहणं च युक्तमिति भावः। नन्वेतत्प्रतिपादनं न पादसङ्गतमित्याशङ्का निरासकतया सौत्रं चशब्दं व्याचष्टे—चशब्दस्त्विति। पूर्वोक्तादिति। 'ऊर्ध्वरेतस्सु च' इत्यत्रोक्तादित्यर्थः। समुदायैकवचनमेतत् । इत्थ भावान्तरेति। इत्थंभाव इतिकर्तव्यता। अन्य इत्थंभाव इत्थंभावान्त रम्। तथा च ज्ञानार्थिनामपेक्षितः पूर्वोक्तेभ्यो ब्रह्मचर्यादिभ्योऽन्यो य इत्थंभावः परब्रह्मणो देवानां चैश्वर्याद्याकांक्षाकरणरूपस्तत्सूच क इत्यर्थः ॥

( २ ) ननु भगवदैश्वर्याद्याकांक्षाऽयोगः कुतः प्रमाणादवसीयत इ त्यतः प्रवृत्तं—पतनानुमानादित्यंशं व्याचष्टे—अयोग्यमिति ॥ वृक्षादि कमिति शेषः। 'प्रयतन्' प्रयत्नं कुर्वन् 'प्रपतन्' पतनक्रियावान् हि दृश्यते लोके। अनेन दृष्टान्तभूते अयोग्यारोहप्रयत्नवति जने हेतुसा ध्ये दर्शिते। दार्ष्टान्तिकमाह—एवमयोग्यस्येति। सूत्रे मुखतः पूर्वगृ हीतस्यापि ब्रह्मादिपदस्याप्राधान्यात् पश्चान्निर्देशः। 'आकांक्षायां' प्रयत्नविशेषरूपायां कृतायामिति शेषः। अनेन पक्षे हेतुसत्त्वमुपपादि तम्। 'अनुमीयते' आकांक्षावत इति शेषः। अयोग्यस्येति वचनात्

(३) न देवपदमन्विच्छेत्कुत एव हरेर्गुणान् ।
इच्छन् पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिः ॥
इति ब्रह्माण्डे ।
(४) स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम् ।
इत्याद्यनुमानरूपवाक्याच्च ।
(५) मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः ।

तत्पदयोग्यस्य तत्पदाकांक्षायां नैव दोष इति सूच्यते। अनेनेत्थमनुमानप्रयोगस्सूचितः—ब्रह्मादिपदाकांक्षावान् पतति, अयोग्यारोहप्रयत्नवत्त्वात्, अयोग्यवृक्षारोहप्रयत्नयुक्तवदिति । न च केवलाकांक्षावति प्रयत्नरूपहेतोरसिद्धिः। इच्छाया अपि प्रयत्नविशेषत्वात्, यथोक्तं सुधायाम्—साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरित्युच्येते इति ॥

(३) ननु निर्मूलानुमानमप्रमाणमित्यतोऽनुमानादित्येतदनुकूलस्मृतिमानादित्यर्थकतयाऽपि व्याचष्टे—नेति ॥ यदा चैवं तदा 'हरेर्गुणान्' ऐश्वर्यादीन् 'कुतः' कथमेवान्विच्छेदित्यर्थः। 'यत्र' स्थाने पतितस्येति शेषः। नोत्थितिस्ततः 'पूर्वस्मात्' पूर्वतनस्वस्थानादधस्तात् स्थिते तमसि पततीत्यर्थः। ब्रह्माण्डे उक्तत्वादिति शेषः। अस्यायमर्थोऽनुमीयत इति पूर्वेणान्वयः ॥

(४) नन्वयोग्यारोहप्रयत्नस्य पतनकारणत्वेऽपि इच्छामात्ररूपस्य प्रयत्नस्य तददर्शनान्न तावन्मात्रं बाधकमित्यतः इच्छाया अपि पतनकारणत्वं स्मृत्युक्तानुमानेन दर्शयन् पतनानुमानादित्येतत्प्रकारान्तरेण व्याचष्टे—स्वकीयमिति ॥ पदमिति शेषः। तुरवधारणे। हिः प्रसिद्धौ। प्रथमाद्यपदममात्यादिपरम्। द्वितीयं गन्धर्वादिपरम्। चः परस्परसमुच्चये। यद्वा—एकश्चशब्दः पातयन्तीत्यस्यानुकर्षणार्थः। स्वपदमिच्छतीति स्वपदेच्छुः, स्वार्थे कः। स्वपदेच्छुकं पातयतीत्यन्वयः। इत्यादीति। अनुमानं रूपयति ज्ञापयतीत्यनुमानरूपं, स्वार्थे कः एवमादिरूपं च तदनुमानरूपकवाक्यं चेति विग्रहः। अनेन विमतो देवादिभिः पात्यते, अशक्तत्वे सति तत्पदेच्छुत्वात्, राजपदेच्छुवदित्यनुमानं सूचितं भवति। वाक्याच्चेति। चस्समुच्चये। अस्याप्ययमर्थोऽनुमीयते ज्ञायत इति पूर्वेणान्वयः ॥

(५) नन्वत्र मूलाभाव इत्यतोऽनुमानादित्येतन्मूलभूतश्रुतेरित्यर्थ

अव दस्यूँरधूनुथाः ( ऋ. ८-१४-१४.) इति श्रुतिश्च॥४१॥

( ६ ) सू--ॐ॥ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॥ ॐ४२॥

उपदेवपदं च नाकाङ्क्ष्यमित्येके । भावशमनवदृषिपद्वदेव । तच्चोक्तमिन्द्रद्युम्नश्रुतौ 'अथ यथर्षीन् प्रजाप

कतयाऽपि व्याचष्टे—मायाभिरिति ॥ हे इन्द्र परमेश्वर 'मायाभिः' मोहिकाभिः कुविद्याभिः 'उत्' उत्तमत्वं 'सिसृप्सतः' सृप्लृ गतौ, प्राप्तुमिच्छतः 'द्यां' स्वर्गं, 'आरुरुक्षतः' आरोढुं चेच्छतो 'दस्यून्' 'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुः अनैपुणाः' इत्यादिनोक्तान् ब्रह्मस्तेनान् 'अव' अन्धे तमसि 'अधूनुथाः' अवाक्षिप इति श्रुत्यर्थः। इति श्रुतिश्चेति। उक्तार्थे प्रमाणमिति शेषः । अत्र तत्त्वप्रदीपे रुद्रादिपदयोग्यैरित्यभिप्रायेण ब्रह्मादीनामित्युक्तम्। ते नैवाकांक्षन्ति अतस्तेषामधःपातशङ्का दूराद्दवीयसी, यतस्त उत्पन्नज्ञानाः स्वेच्छानुवृत्त्या प्रायः सुखाद्युत्कर्षवन्तो भवन्ति, ये तूत्पन्नज्ञानत्वेऽपि विधिनियतास्तेषामेव ज्ञानात्प्राक् पूर्वस्मादधःपतनं तत्र वैशेषिको विधिः। ये पुनः श्रुतिस्मृतिभिः बहुभिः निधारिता अप्ययोग्यपदमारुरुक्षन्ति, ते नैव ज्ञानायोग्याः, तानुद्दिश्येह-मायाभिरिति विशेष उक्तः। अस्यार्थः—पदं नाकांक्ष्यं रुद्रादिपदयोग्यैः । 'दूराद्दवीयसी' दूराद्दूरतरा । 'उत्पन्नज्ञानाः' उत्पन्नापरोक्षज्ञानाः रुद्रादियोग्याः 'अनुवृत्त्या' आचारेण । 'विधिनियताः' मनुष्याः 'अधःपतनं' तदाशङ्का। तत्र वैशेषिको विधिरिति। तानुद्दिश्य न ब्रह्मादिदेवपदमिच्छेदिति विधिः प्रवर्तत इति ॥

( ६ ) कैमुत्येनापि देवतापदाकांक्षाऽयोगं साधयत्सूत्रं पठति—उपेति ॥ अत्रोपशब्दः समीपवर्तिवाची। पूर्वपदं च पूर्वसूत्रे आधिकारिकपदेन प्रकृतदेवपरामर्शकम्। अपिशब्दः कैमुत्यार्थकः। यदोपदेवपदं नाकांक्ष्यं किमु देवमित्याशयेनोपपूर्वमित्येतद्व्याचष्टे—उपेति।देवानामुपवर्तिनां गन्धर्वादीनामित्यर्थः । चोऽप्यर्थः । नाकांक्ष्यमिति शेषोक्तिः। 'इत्येके' केचन वदन्तीति शेषः। भावे चित्ते चेष्टायां च शमनात् शान्तेर्भावशमना ऋषयः तेन तत्पदं लक्ष्यत इत्याशयेन भावशमनवदित्येतदनूद्य सावधारणतया व्याचष्टे—भावेति। ऋषिपदेन प्रजापतयोऽप्युपलक्ष्यन्ते। न तत्र दृष्टान्तान्तरं गवेषणीयमित्येवशब्दार्थः। एवेत्यनन्तरं अपरे तु ऋषित्वादिसामान्याकाराश्रयणेनाकांक्ष्यमि

तांश्चाकांक्षेदेवं न गन्धर्वांश्च विद्याधरांश्च सिद्धान्'
इति ।

( ७ ) बृहत्संहितायां च--
न दैवानभिकांक्षेत कुत एव हरेर्गुणान् ।

ति वदन्तीत्युपस्कर्तव्यम् । ऋष्यादिपदाकांक्षायोग एव कुत इत्यत स्तद्धेतुत्वेन तदुक्तमित्येतद्व्याचष्टे—तच्चोक्तमिति । न केवलं सूत्रे, किन्तु श्रुतौ चेदमुदितमिति चशब्दार्थः । आरम्भार्थेऽथशब्दः । 'य थर्षीन्' आर्षान् तद्धर्मान् नाकांक्षेत, एवं ज्ञानार्थी 'प्रजापतीन्' प्रा जापत्यान् 'गन्धर्वान्' गान्धर्वान् 'विद्याधरान्' वैद्याधरान् 'सिद्धा न्' सैद्धान् धर्मान् नाकांक्षेदित्यर्थः । इत्युक्तमित्यन्वयः । यद्यपि गन्ध र्वादिपदस्यानाकांक्ष्यत्वे ततोऽपि न्यूनसृपिपदं न दृष्टान्तीकर्तुं शक्यं, तत्रानाकांक्ष्यत्वानिश्चये ततो न्यूने सुतरां तदनिश्चयात् । तथाऽपि 'य था ऋषीन्' इत्यादि श्रुत्यनुसारेणेयमुक्तिः । साऽपि तस्यापि साध्य त्वाभिप्राया ॥

( ७ ) न चेति उपेति सूत्रद्वयार्थे स्मृतिं दर्शयति—बृहदिति ॥ ज्ञा नार्थी यदा 'दैवान्' देवगुणानेव नाभिकांक्षेत तदा 'हरेर्गुणान्' ऐ श्वर्यादीन् 'कुतः' कथमभिकांक्षेतेत्यर्थः । 'प्राजापत्यान्' कश्यपक र्दमादिप्रजेश्वरगुणान् नाभिकांक्षेतेति सर्वत्र सम्बन्धः । 'आर्षान्' ऋषीणामिमे आर्षाः तान् गुणान्, एवं गान्धर्वान्, आदिपदेन वैद्याध रादयो गृह्यन्ते । 'क्वचित्' काले । एवं सूत्रद्वयार्थे स्मृतिवाक्यमुदा हृत्येदानीं तच्छेषमेव प्रमाणीकृत्यैक इत्युक्तरभिप्रायमाह—ऋष्यादि ष्विति । ऋषिगन्धर्वादिष्वित्यर्थः । स्थित इति शेषः । 'विशेषे' वि शिष्टत्वादिविशेषधर्मे आकांक्ष्यमाणे इति शेषः । तेनैवशब्दान्वयः । य था वसिष्ठस्स्यां विश्वामित्रस्स्यां तुम्बुरुः स्यामिति । दोषो भवतीति शेषः । 'अविशेषतः' अविशेषे सामान्यधर्मे ऋषित्वमात्रे आकांक्ष्यमा णे तु न दोषः, यथाऽहं कश्चिदृषिः स्यामिति तत्त्वप्रदीपदिशा स्मृतिशे षार्थः । अविशेषित इति पाठे ऋष्यादावविशेषिते सतीत्यर्थः । ननु सामान्याकांक्षाऽपि कथं युज्यते 'अयोग्यमिच्छन् पुरुषः' इति दो षोक्तेः । शतकोटिसङ्ख्याकेष्वपि ऋषिषु एकैकेनैक्यज्ञानं विना तथाऽऽ कांक्षाऽयोगेन सामान्याकांक्षायामपि विशेषे पर्यवसानादिति चेन्न, के षां चित् सत्कुलजननतपःकरणादियोग्यानामृषिगन्धर्वक्षितिपादीनां

प्राजापत्यान्नं चार्षांश्च गान्धर्वादीनपि क्वचित् ॥
ऋष्यादिषु विशेषे तु दोषो नैवाविशेषतः ॥
इति विशेषदर्शनार्थमेक इत्युक्तम् ॥ ४२ ॥

(८) सू—ॐ ॥ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ॐ ॥ ४३ ॥

तथाऽऽकांक्षासम्भवात् । न च देवत्वेऽपि केषां चिद्योग्यानां तथाऽऽकांक्षाऽस्त्विति वाच्यम् । यतो यथा देवत्वस्य नवकोटिष्वेव भावोऽन्यत्राभावः न तथा ऋषित्वस्य शतकोटिष्वेव भावोऽन्यत्राभावोऽस्ति । कुत एतत् ? राजर्षीणां दुर्वासःप्रभृतीनां च ऋषित्वदर्शनात् । एवमयोग्यानां द्रमिडादीनां गन्धर्वादित्वदर्शनाच्चेति दिक् । इतीति । इति शब्दः आवर्तते । तत्रैकस्य इति बृहत्संहितायामित्यनेनान्वयः । अन्यस्य इति विशेषदर्शनार्थमित्युत्तरेणान्वयः । योजनाप्रकारस्तु—इत्येवंरूपस्य 'ऋष्यादिषु' इति प्रमाणशेषेणोक्तस्य विशेषविवक्षवो नाकांक्ष्यमिति ब्रुवन्ति, सामान्यविवक्षवस्त्वाकांक्षायां न दोष इत्याहुरिति विशेषस्यार्थविशेषस्य दर्शनार्थं प्रदर्शनार्थमेव सूत्रकृतैक इत्युक्तम्, न तु सामान्यविशेषभावमपहाय एकस्मिन् अनाकांक्ष्यत्वविषये विप्रतिपत्तिसूचनार्थम्, सर्वज्ञेन बादरायणेन आकांक्ष्यत्वानाकांक्ष्यत्वयोरन्यतरस्यानाकांक्ष्यत्वस्य निर्धारितत्वात्, देवपदादौ वस्तुनि आकांक्ष्यत्वतदभावरूपविकल्पासम्भवाच्चेति भाव इति । अनेन यदा 'भावशमनवत्' ऋषिपदवत् यदा ऋषिपदं नाकांक्ष्यं एवं 'उपपूर्वे' पूर्वेषां पूर्वसूत्रे आधिकारिकपदेन प्रकृतानां देवानामुपवर्तमानानां गन्धर्वादीनामपि पदं नाकांक्ष्यम्, तदा किमु देवानां पदं नाकांक्ष्यमिति एके वसिष्ठत्वादिविशेषमवलम्ब्य वदन्ति । ऋषित्वादिसामान्याकारेण त्वाकांक्ष्यमित्यपरे ब्रुवन्ति । न च ऋष्यादिपदाकांक्षायोगासिद्धिः । यतस्तदृष्यादिपदस्यानाकांक्ष्यत्वं श्रुत्युक्तमत इति सूत्रार्थ उक्तो भवति । केचित्तु—सूत्रे पूर्वशब्दः प्रभृत्यर्थकः । आधिकारिकाणामिति षष्ठ्यन्तं पदं चानुवर्तते । तथा च आधिकारिकाणां देवानामुपवर्तिगन्धर्वप्रभृतीनां पदमिति सूत्रखण्डार्थमाहुः । एके तु उपेतिशब्दः पूर्वो यस्य तदुपपूर्वं उपदेवपदं तद्वाच्यानां पदमित्यर्थमाहुः ॥

(८) ज्ञानार्थिना यथा देवादिपदं नाकांक्ष्यं, एवं ज्ञानभक्त्यादिकमाकांक्ष्यं न वेति सन्देहं पराकुर्वत्सूत्रं पठित्वा व्याचष्टे—बहिरिति ॥ सूत्रे बुद्ध्या विवेकेन विपरिणाम्यानुवृत्तस्य पूर्वेभ्य इति पदस्य व्या

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आकांक्षा
यामनाकांक्षायां च न पतनम्।

(९) देवर्षिगन्धर्वाणां पदाकांक्षी पतेद्ध्रुवम्।
अन्यत्र शुभमाकांक्षन्न पतेदविरोधतः॥ इति स्मृतेः॥

(१०) नानात्वमेव कामानां नाकामः क्व च दृश्यते।

---

ख्यानं—देवर्षीत्यादि। आदिपदात् प्रजापत्यादि गृह्यते। पदशब्दः सर्वत्र सम्बध्यते। बहिरित्यस्यार्थः-अन्यत्रेति। तद्विवृणोति-शुभविषय इति। ज्ञानभक्त्यादिरूपशुभधर्मविषय इत्यर्थः। विषय इत्यनन्तरं विशेषार्थकस्तुशब्दः संयोज्यः। उभयथेत्येतद्व्याचष्टे—आकांक्षायामिति। ननु

विज्ञानभक्त्यादिकमप्यतीव न साधनं कामबहिष्कृतं चेत्।
अकामितोऽवाग्गतिमेव दद्यात्॥

इति भारततात्पर्यनिर्णये ज्ञानभक्त्यादेरनाकांक्षायामनर्थोक्त्या आकांक्ष्यत्वविधानादनाकांक्षायां पतनाभावोक्तिः कथमिति चेन्न, नियमाभावे तात्पर्यात्। उक्तवचनस्य सार्वकालिकानाकांक्षाविषयत्वात्। शुभशब्देन ज्ञानसाधनैश्वर्यादि गृह्यते। तदाकांक्षायां अनाकांक्षायां च न पतनमित्यर्थः। ज्ञानं प्रत्यैश्वर्यादेरनियतसाधनत्वादिति भावः। न पतनमिति सूत्रे शेषोक्तिः॥

(९) कुतो न पतनमित्यतः प्राप्तं स्मृतेरिति हेत्वंशं व्याचष्टे—देवर्षीति। पदेष्वाकांक्षा यस्येति वा पदान्याकांक्षन्तीति वा विग्रहः। नित्यसापेक्षत्वात्पदाकांक्षी इति समासः। अन्यत्रेत्यतः प्राक् पतेभ्य इत्युपस्कार्यम्। 'अन्यत्र' अन्यत् 'शुभं' ज्ञानादि तत्साधनैश्वर्यादिकं च। कुतो न पतेदित्यत आह—अविरोधत इति। ज्ञानादिकामस्य श्रुत्याद्यविरुद्धत्वादित्यर्थः॥

(१०) ननु—विहाय कामान्यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति॥

इति मोक्षाङ्गत्वेन सर्वकामप्रहाणिविधानात् कथं शुभकामे पतनाभाव इत्याशङ्कोत्तरत्वेनाचारादित्यंशं स्मृतिपरतया व्याचष्टे—नानात्वमिति॥ स्यादित्यतः परमप्येवशब्दस्य तेनेत्यतः परं चशब्दस्यान्वयः। तथा च कामयमानः पुमान् 'अविरुद्धकामः' अनिषिद्धेच्छावान् स्यादेवेति प्रतिज्ञा। न चाकामत्ववचनविरोधः, यतः पुमान् श्रुत्यविरुद्धा

अतोऽविरुद्धकामस्स्यादकामस्तेन भण्यते ॥ इत्याचा
राच्च ॥ ४३ ॥

७. अधिकरणम् ॥

( १ ) सू—ॐ ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ॐ ॥ ४४ ॥

निषिद्धकामत्वेनाप्यकामो 'भण्यते' उच्यते अतः । तथा च सामा न्याभावोक्तेः विशेषाभावपरत्वादविरोध इति भावः । ननु कुतः सङ्को च इत्यत आह—नानात्वमिति । यतः कामानां 'नानात्वं' निषिद्धका मत्वानिषिद्धकामत्वाभ्यां विलक्षणत्वमतः पुरुषेष्वविरुद्धमेव दृश्यते । अविरुद्धकामत्वमेव युज्यत इति यावत्, न त्वकामत्वमेवातः संकोच इत्यर्थः । यत्किञ्चित्प्रतियोगिमति सामान्याभावासम्भवादिति भावः । ननु पुरुषेषु केवलाकामत्वायोगः कुत इत्यत आह—नेति । यतः 'अ कामः' काममात्रशून्यः पुमान् 'क्वापि' देशे न दृश्यते । यद्वा—'अ कामः' काममात्राभावः 'क्वापि' पुरुषे 'न दृश्यते' न प्रतीयते अतो ऽकामः काममात्राभाववान्न युज्यत इत्यर्थः । तदेतदुक्तं तत्त्वप्रदीपे— निषिद्धकामत्वमनिषिद्धकामत्वमिति कामानां नानात्वं बहुविधत्वमेव दृश्यते लोके न पुनरकामत्वं क्वापि अतः कामयमानः पुमान् 'अवि रुद्धकामः स्यात्' श्रुत्यविरुद्धमेव कामयीत । तेन निषिद्धं न कामय तीत्यकाम उच्यत इति । इत्याचाराच्चेति । एवंरूपं यदविरुद्धकामा चारप्रतिपादकं वाक्यं तस्मादित्यर्थः । चः पूर्वस्मृतिसमुच्चये । न च टीकायामाचारादित्यस्य शङ्कापरिहारकत्वोक्तिविरोधः । शङ्कापरिहा रकत्वेऽप्येतत्समुचितस्यैव स्मृत्याख्यपूर्वहेतोः पतनाभावसाधकत्वेन समुच्चयाविरोधात् । यद्वा—सूत्रभाष्ययोस्तत्त्वप्रदीपोक्तरीत्या 'ऋष भं मां समानानाम्' (            ) इति श्रुतिसमुच्चये चशब्दः । अ स्यामपि श्रुतौ मां समानानां सज्ञानानां ऋषभं श्रेष्ठं कुर्विति ज्ञानाद्य विरुद्धकामस्योक्तत्वेन प्रकृतार्थसाधकत्वात् ॥ ६ ॥

॥ इति आधिकारिकाधिकरणम् ॥

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मज्ञानस्य सन्निधिमात्रेणास्वामिनोऽपि प राधीनस्य ज्ञानिनः कर्तुः फलदातृत्वमहिमा वर्ण्यते । तत्र पूर्वपक्षप्रद

'ब्रह्मविदाप्नोति परम्' ( तै. २-१. ) इत्यादि फलं स्वामिनां देवानामेव भवति । 'यद्ु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यद्ु किं चेमाः प्रजा विजानते देवा एव तद्विजानते देवानां ह्येतद्भव ति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः' इ ति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥

( २ ) सू—ॐ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रि यते ॥ ॐ ॥ ४५ ॥

शेकं सूत्रमुपन्यस्य व्याचष्टे—स्वामिन इति ॥ इत्यादीति लुप्तविभ क्तिकम् । उक्तमिति शेषः । फलं स्वामिनामित्यनेन स्वामिन इति स मुदायैकवचनान्तं हेतुगर्भं, फलेति लुप्तविभक्तिकमिति सूचितम् । त था च 'ब्रह्मवित्' इत्यादिनोक्तं ज्ञानफलं 'स्वामिनो' ज्ञानस्वामिनां देवानामेव भवति, न प्रजानाम् । कुतः? श्रुतेः 'यदु किञ्चेमाः' इति फलश्रुतेः । देवानामिन्द्रियादिप्रेरकत्वेन ज्ञाने स्वामित्वाच्चैवमाचार्य आत्रेयोऽपि मन्यत इति योजना । श्रुतावुशब्द एवार्थः । तथा चेमाः प्रजाः यदेव किञ्चन शुभं कर्माचरन्ति तद्देवा एवाचरन्ति । तेषां कर्म साधनेन्द्रियादिप्रेरकत्वेन तत्स्वामित्वादिति भावः । एवं प्रजाः यदे व किमपि विजानते तद्देवा एव जानन्तीत्यर्थः । भावस्तु पूर्वोक्त एव। ननु प्रजाकर्तृकयोः कर्मज्ञानयोः कथं देवस्वामिकत्वमित्यत आह— देवानां हीति । 'हि' यतो देवानामेतच्छुभकर्मादि भवत्यतस्तेषामेव फलं भवतीत्यर्थः । ननु कर्तुरेव फलावश्यंभावात् कथं स्वामिनः फ लमित्यतो दृष्टान्तमाह—स्वामी हीति । लोक इति शेषः । कृष्यादि स्थले तथा दर्शनादिति हिशब्दार्थः । तत्त्वप्रदीपे तु न ह्यन्य उपास्ते न ह्यन्यः फलमश्नुत इति समञ्जसं भवेदित्यादिना प्रजानामेव फलं न स्वामिनामिति प्राप्ते स्वामिनामपि फलं, तस्य महत्त्वाद्भाष्ये एवश ब्दः । प्रजानां त्वल्पमिति सिद्धान्तपरतयेदं सूत्रं व्याख्यातम् ॥

( २ ) एवमात्रेयमतावलम्बेन पूर्वपक्षिते सिद्धान्तयत्सूत्रं पठति— आर्त्विज्यमिति । अत्रार्त्विज्यमिति लुप्तोपमानम् । ऋत्विजामिदमा र्त्विज्यम् । ऋत्विजां यज्ञफलमिवेति यावदित्याशयेन सूत्रं व्याचष्टे— सत्त्रयागेष्विति । ऋत्विजामपीति । अग्रहपतीनामिति शेषः । न केवलं ग्रहपतेरित्यपेरर्थः । अग्रहपतीनामपीति वा । फलं यज्ञफलम् । अनेन

सत्रयागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते। तदर्थं देवैः क्रियमाणत्वात् ॥ ४५ ॥

(३) सू--ॐ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ॐ॥ ४६ ॥

फलभागित्वं साध्यं पूर्वोक्तस्वामित्वहेतोरप्रयोजकत्वमुक्तं भवति। तस्मा इत्येतत् षष्ठ्यन्ततया प्रथमान्ततया तृतीयान्ततया च विपरिणाम्य व्याचष्टे—अल्पफलमिति। ज्ञानफलमित्यर्थः। प्रजानामपीति। न केवलं देवानामेव फलं, किन्तु प्रजानामपीत्यपेरर्थः। प्रजानामपि फलभाक्त्वं कुत इत्यतः प्रवृत्तं तस्मै हीत्यादि व्याचष्टे—तदर्थमिति। प्रजार्थमेवेत्यर्थः। अनेन सूत्रे तच्छब्दः प्रजापरः, तादर्थ्ये चतुर्थीत्युक्तं भवति। क्रियमाणत्वादिति। सम्पाद्यमानत्वादित्यर्थः। ज्ञानस्येति शेषः। अनेन हि शब्दो हेत्वर्थः परिक्रियत इत्यस्य क्रियते इत्यर्थ उक्तो भवति। तथा चायं सूत्रार्थः 'आर्त्विज्यं' आर्त्विज्यमिव यथा सत्रयागेऽग्रहपतीनामप्यृत्विजां यज्ञफलं तथा 'तासां' प्रजानामस्वामिभूतानामपि तदल्पफलमस्ति। कुतो ? 'हि' यतः 'तस्मै' प्रजाफलार्थं 'तैः' प्रजास्थितैः तत्तत्करणप्रेरकैर्देवैः 'तत्' ज्ञानादि 'परिक्रियते' सम्पाद्यतेऽत इति। तत्त्वप्रदीपे तु यथा सत्रयागेषु न केवलं ग्रहपतेरेव, किन्तु 'ऋत्विजां' इष्टप्रथमयज्ञानां स्वान्स्वानग्नीन् तदग्निषु समारोप्य दीक्षितानामनात्तदक्षिणानामल्पं फलं दृश्यते ग्रहपतेः द्रव्यादिस्वगुरुसमत्वेऽपि, तथा देवैः क्रियमाणस्य ज्ञानयज्ञस्यार्त्विज्यं प्रजाभिः परिक्रियते। 'तत्' आर्त्विज्यं तासामप्यल्पफलदं भवत्येव। कुतो ? 'हि' यतः 'तस्मै' तदर्थं प्रजानामपि फलसिद्ध्यर्थमेव तासु स्थित्वा तत्तत्करणानि व्यापारयद्भिर्देवैः ज्ञानयज्ञः 'परिक्रियते' अनुष्ठीयते अत इति सूत्रार्थो वर्णितः। एतत्पक्षे आर्त्विज्यमित्यावर्तते। एवं परिक्रियत इत्येतदपि। अस्यार्त्विज्यमित्यनेन ज्ञानयज्ञ इत्यध्याहृतेन चान्वयः। तथा च सत्रयागेष्वार्त्विज्यमृत्विजामल्पफलदं तथा देवैर्यो ज्ञानयज्ञः क्रियते तस्यार्त्विज्यं यत्प्रजाभिः क्रियते तदार्त्विज्यं प्रजानामप्यल्पफलदं भवत्येव। कुतो हि यत इत्यादिरूपा सूत्रयोजना द्रष्टव्या ॥

(३) यदि देवैः प्रजार्थं ज्ञानादि साध्यते तर्हि तत्फलं प्रजानामेव

तृतीयः स्वपक्षः ।

भवेत्, न किञ्चिद्देवानां इत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—सहका रीति ॥ अत्र तृतीयमित्यस्यैतदित्यध्याहृतेनान्वयः । पक्षेणेति च भाव प्रधानम् । तथा च 'एतत्' वक्ष्यमाणं पक्षत्वेन तृतीयमित्यर्थ इत्याश येन सम्बन्धिप्रदर्शनपूर्वकं पक्षेण तृतीयमित्यस्य फलितार्थमाह—तृ तीय इति । स्वेति सावधारणम् । तथा च पूर्वोपन्यस्तपक्षद्वयापेक्षया ऽयं तृतीयः स्वस्यैव भगवतो बादरायणस्यैव पक्षः न त्वौडुलोमिना ज्ञात इत्यर्थः । यद्यपि पूर्णफलापेक्षया देवानामेव फलमिति श्रुत्यवष्ट म्भेन प्रवृत्तस्याद्यपक्षस्य, अल्पफलापेक्षया प्रजानामपीति युक्त्यवष्ट म्भेन प्रवृत्तस्य द्वितीयपक्षस्य तदुभयोपपादकस्य अस्य तृतीयपक्ष स्य च विरोधाभावात्पक्षत्रयमपि बादरायणीयमेव, उत्तरप्रस्थाने त थैव विवृतत्वात् । तथाऽपि मन्दानामात्रेयमतस्यापाततो विरुद्धतया प्रतीतेरेवमुक्तम् । न चैवं पक्षत्रयस्य वस्तुतोऽविरोधसम्पादने आद्य द्वितीयाभ्यां तृतीयस्य तदुभयोपपादकस्य कथं भेद इति वाच्यम् । यतो देवानां महाफलं प्रजानां त्वल्पफलमित्येवं सदृष्टान्तमौडुलोमिना ऽभिहितं, न तु वक्ष्यमाणं ज्ञातम्, बादरायणेन तु प्रधानाङ्गभावोक्तिपू र्वकं तदुपपादनं क्रियत इति । उक्तं हि तत्त्वप्रदीपे—देवानामेव मह त्फलमित्यत्र श्रुतिमात्रेण श्रावयामास । प्रजानामप्यल्पफलमस्तीत्य त्र युक्तिमौडुलोमिना प्रयोजयामास । स्वयन्तु सर्वविद्याचार्यतमः आ चार्यप्रवेशेन प्रवक्तृत्वं प्रजासु स्थित्वा तत्तदिन्द्रियप्रवर्तनेन ज्ञापनमि त्येतदुभयं देवानां फलाधिक्ये कारणं, सहकार्यन्तराभावे स्वविहित ज्ञानदानासम्भवेन विहितानुष्ठानाङ्गत्वात्प्रजानामपेक्ष्यत्वं, तासामप्य ल्पफलभावे कारणं, प्रजानामाचार्यस्य देवानां च फलेयत्ताविशेषं चे ति बहून् विशेषानाहेति तृतीयः स्वपक्ष इत्याहेति । एवं प्रथमसूत्रे स्वामिभृत्यभावमुखेन द्वितीये यजमानऋत्विग्भावेन तृतीये प्रधानाङ्ग भावेन महदल्पफलत्वोपपादनाद्भेद इत्यपि समाधानं द्रष्टव्यम् । नन्वे वमपि तत्त्वप्रदीपे सूत्रत्रयमपि सिद्धान्तपरतया व्याख्याय, यत्तु न्या यविवरणेऽन्यथा व्याख्यानम्, तदात्रेयमतानुवादमुखेन मन्दाशङ्कानु वादपरमिति न तत्प्रत्यनीकत्वं सिद्धान्तवादस्येति भाष्यस्य न्यायवि वरणविरोधस्याऽपि परिहृतत्वात्तद्विरोधः स्यादिति चेन्न, आपाततो विरोधमाश्रित्य न्यायविवरणभाष्ययोः प्रवृत्तिसम्भवात् । तदनुसारे

(४) देवानां ज्ञानादिकर्मणि सहकार्यन्तरत्वेन प्रजा विधीयन्ते। यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते। यथा वाऽऽचार्यस्य शिष्याः।

(५) वाराहे च—

ज्ञानादिदानं देवानां विष्णुना साधु चोदितम्।
वेदेषु तेषां विहितं तत्राचार्यो महत्तरः॥

ण टीकाया अपि प्रवृत्तेः। तत्त्वप्रदीपस्य च वस्तुस्थित्या प्रवृत्तत्वात्॥
(४) कोऽसौ तृतीयः पक्ष इत्यतस्तत्प्रदर्शनार्थं प्रवृत्तं सहकार्यन्तरविधिरित्यंशमपेक्षितोपस्कारेण व्याचष्टे—देवानामिति॥ सहकार्यन्तरत्वेनेत्यनेन सूत्रे भावप्रधानो निर्देशः, तृतीयातत्पुरुषश्चेत्युक्तं भवति। सूत्रे भाष्ये च आचार्यापेक्षया प्रजानां सहकार्यन्तरत्वादन्तरशब्दप्रयोगः। केचित्तु—अन्तरशब्दो विशेषार्थकः, स चानुग्राह्यत्वरूप इत्याहुः। विधीयन्त इत्यनन्तरं यत इति शेषः। अस्यात उभयोरपि महदल्पफले स्त इत्युपस्कारेणेतिशब्दाध्याहारेण च तृतीय इत्यनेनान्वयः। तत्र देवानां प्रजाकृतपुण्यफलभाक्त्वमेव, न तु पापफलभाक्त्वं तत्फलं त्वसुराणामिति विवेको द्रष्टव्यः। कथं विधिरित्यतः प्रवृत्तं तद्वतो विध्यादिर्वदित्यंशं व्याचष्टे—यथेति। तद्वत इत्यस्य व्याख्या—प्रजावत इति। तस्य विवरणं—राज्ञ इति। सहकारित्वेनेति। पालनकर्मणीति शेषः। तद्वत इति प्रकारान्तरेण व्याचष्टे—आचार्यस्येति। शिष्यवत इत्यादावुपस्कर्तव्यम्। शिष्याः सहकारित्वेन विधीयन्त इति सम्बन्धः। अत्राप्यत उभयोरपि महदल्पफले स्त इति वाक्यशेषः। तेन सौत्रादिशब्दार्थ उक्तो भवति। यथा प्रजावत इत्यादेः शिष्या इत्यन्तस्य तथाशब्दाध्याहारेण देवानामित्यादिनाऽन्वयः॥

(५) अत्रैवार्थे स्मृतिमाह—वाराहे चेति॥ देवानां प्रजाभ्यो 'साधु' सम्यक्साक्षादिति वा ज्ञानादिदानं विष्णुना 'चोदितं' आज्ञप्तम्। आदिशब्देन मोक्षादिर्गृह्यते। 'तेषां' देवानां वेदे विहितं चेति चशब्दान्वयः। 'तत्र' स्वविहिते ज्ञानदाने 'आचार्यो' गुरुः 'महत्तरो' महान् मुख्यः। स्वार्थे तरप्। 'सहकारित्वे' सहकारित्वेन तद्विषये वा विहितः। सहकार्यन्तरं प्रजा इति पूर्वोत्तराभ्यां सम्बध्यते। तत्र दार्ष्टान्तिके अन्तरशब्दोऽमुख्यान्यपरः दृष्टान्ते व्यक्तिविशेषार्थकः। अ

विहितस्सहकारित्वे सहकार्यन्तरं प्रजाः ।
पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ॥
तस्माच्छ्रुतं फलं तासामाचार्याणां महत्तरम् ।
ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम् ॥ इति ॥ ४६ ॥

———*———

८. अधिकरणम् ॥

(१) सू—ॐ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ॐ ॥ ४७ ॥

त एव प्राक् स्ववाक्ये सहकारित्वेनेत्येतावदेवोक्तम् । राज्ञः पातृत्वेन निमित्तेन प्रजास्तस्य सहकार्यन्तरमित्यन्वयः । पालने व्याख्याने चेति क्रमेण शेषः । तस्माद्देवानां ज्ञानदाने प्रजानां सहकारिमात्रत्वादाचार्याणां मुख्यसहकारित्वात्तासां प्रजानां ' यावच्छ्रुतं ' यावत्प्रमाणसिद्धं तावत्फलं भवति । अतो ' महत्तरं ' महत्फलं आचार्याणां भवति । ' ततः ' आचार्यात् ' देवानां ' ब्रह्मान्तानां ' उत्तरोत्तरं ' महत्तरं ' मुक्तावष्टगुणं शिष्याद्गुरुराप्नोति ' इत्युक्तरीत्याऽतिशयितं फलं भवतीत्यर्थः । इति वाराहे इत्यन्वयः । न केवलं सूत्रकृतेति चशब्दार्थः । वाराह इत्यनन्तरं देवानामित्यादिनोक्तमभिहितमिति वाक्यशेषः ॥

सूत्रार्थस्तु ' तत ' वक्ष्यमाणं ' पक्षेण ' पक्षत्वेन ' तृतीयं ' तृतीयः पक्षः । स च स्वस्य भगवतो बादरायणस्यैव पक्षः, औडुलोमिना ज्ञातः । कोऽसौ ? यो देवानां स्वविहिते ज्ञानदाने कर्मणि प्रजानां ' सहकार्यन्तरविधिः ' यद्वैराचार्याणां सहकारित्वेन प्रजानां सहकार्यन्तरत्वेन कारणम्, अत एवोभयोः फलवैलक्षण्यं च । तत् कथं ? ' तद्वतो विध्यादिवत् ' यथा प्रजावतो राज्ञः शिष्यवतो गुरोश्च पालने व्याख्याने च प्रजानां शिष्याणां च सहकारितया विधिः तथेति । आदिशब्दो गुरो राज्ञश्च महत्फलमिति सूचयति ॥ ७ ॥

॥ इति फलश्रुत्यधिकरणम् ॥

——:*:——

८. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मज्ञाने विशेषाधिकारिणां यतीनां सर्वाश्रमिभ्योऽतिशयसमर्थनेन ज्ञानमहिमा वर्ण्यते । पूर्वपक्षादिप्रदर्शनाय सूत्रं पठति—कृत्स्नेति ॥ अत्र गृहिणोपसंहार इत्यंशसूचितं सयुक्ति

'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिका न्विदधत्' इत्युक्त्वा 'न च पुनरावर्तते न च पुनरा वर्तते' (छा. ८-१५-१.) इति गृहिणोपसंहारः क्रिय

कपूर्वपक्षमाह—कुटुम्ब इति। कुटुम्ब इत्यतः प्राक् तत्रेति, उक्त्वेत्यतः प्राक् मोक्षमिति चोपस्कर्तव्यम्। गृहिणेत्यावर्तते। षष्ठ्यर्थे तृतीया। उपसंहार उपनिषत्समापनम्। तथा चेत्थं योजना—ग्रहस्थस्यैव मुक्तावुत्तमत्वं, कुतो? यस्मात् 'तत्र' छन्दोगोपनिषदि 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति 'गृहिणा' गृहिणः ग्रहस्थस्यैव मोक्षमुक्त्वा 'न च पुनरावर्तते' इति 'गृहिणोपसंहारः' तद्विषयकोपसंहारः क्रियते तस्मादिति। न ह्याधिक्याभावे सर्वेषां मोक्षे समाने विशिष्योक्तिर्युक्तेति भावः। उपसंहारपदप्रयोगेनास्य वाक्यस्याधिक्ये तात्पर्यं सिद्धमिति ज्ञापितम्। उपसंहारस्य तात्पर्यनिर्णायकत्वात्। श्रुत्यर्थस्तु—'यथाविधानं' विधिमनतिक्रम्य 'आचार्यकुलात्' वंशात् वेदमधीत्य 'यथाविधानं' सेवारूपं कर्म 'अतिशेषेण' अशेषेण 'अभिसमावृत्य' कृत्वा 'कुटुम्बे' गृहस्थाश्रमे वर्तमानः शुचौ देशे स्थित्वा 'स्वाध्यायं' वेदमधीयानो 'धार्मिकान्' धर्मसम्बन्धिनो व्यापारान् 'विदधत्' कुर्वन् तादृशजनान् पुत्रादीन् विशेषेण धारयन्निति वा 'आत्मनि' परमात्मनीन्द्रियाणि 'सम्प्रतिष्ठाप्य' नियम्य 'तीर्थेभ्यो' यज्ञेभ्यः 'अन्यत्र' तान्विना सर्वाणि भूतान्यहिंसन् यावदायुषं स्वात्मानमेवं प्रवर्तयन् परमात्मानं दृष्ट्वाऽथ परब्रह्मलोकं 'अभिसम्पद्यते' प्राप्नोति। स्वर्गं प्राप्त इवायं पुनरावर्तते किं? नेत्याह—न चेति। चोऽवधारणे। कदाचिदपि केनापि निमित्तेन नैवावर्तत इति। श्रुतौ कुटुम्बीति क्वचित् पाठः तत्त्वप्रदीपविरुद्धः। पूर्वपक्षं प्रतिषेधति—न च वाच्यमिति। कुतो नेत्यतस्तत्र पूर्वपक्षहेतोरन्यथासिद्ध्युक्ति परं कृत्स्नभावादिति सूत्रांशं हेतुत्वेन व्याचष्टे—यत इति। कृत्स्नगृहस्थानिति हेतुगर्भम्। कृत्स्नाः सम्पूर्णाः गृहस्थधर्मा येषां ते तथोक्ताः। अस्य विवरणं—देवानिति। अनेन कृत्स्नो भावो गृहस्थधर्मो यस्य देववर्गस्य कृत्स्नस्य गृहस्थधर्मस्य भावो यस्मिन्निति वा स तथोक्त इ

ते। तस्माद्गृहस्थस्यैवोत्तमत्वमिति न वाच्यम्। यतः कृत्स्नगृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते।

(२) 'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत एते षां न पुत्रा दायमुपयन्ति न चैते गृहान्विसृजन्त्यरा

---

ति सौत्रपदं व्याख्यातं भवति। सूत्रे एकवचनं जात्यभिप्रायम्। 'अपेक्ष्य' विषयीकृत्येत्यनेन सूत्रे पञ्चमी ल्यब्लोपनिमित्तेत्युक्तं भवति। एवेति तुशब्दार्थोक्तिः। न तु मनुष्यगृहस्थानिति तदभिप्रायः। यतो देवाः कृत्स्नगृहस्थाः अतो योग्यत्वात्कृत्स्नगृहस्थान् देवानपेक्ष्योपसंहारः क्रियते, न तु मनुष्यगृहस्थान्। यत एवमतो न तद्बलात् गृहस्थस्यैवोत्तमत्वमिति वाच्यमिति योजना। तथा च मनुष्योत्तमेषु स्वरूपगृहिभ्यः स्वरूपयतीनामेवोत्तमत्वम्। स्वरूपयतीनां साधनकाले कदाचिद्गृहस्थजन्मप्राप्तावपि यतिजन्मबाहुल्याद्यतित्वमेव। मानुषयतिभ्यस्तु देवानामेवोत्तमत्वं बोध्यम्। क्रियत इत्यनन्तरं न च देवानामपि यतेरुत्तमत्वं कथमिति वाच्यम्। 'कृत्स्नभावात्' कृत्स्नयतिधर्मस्य देवेषु भावात् सद्भावादिति सौत्रपदस्य व्याख्यानान्तरमुपस्कर्तव्यम्॥

(२) ननु देवानां कृत्स्नगृहस्थत्वं कृत्स्नयतिधर्मत्वं च कुतः सिद्धमित्यतः कृत्स्नभावादिति पदोपलक्षितां श्रुतिमाह—कृत्स्ना हीति॥ हिः प्रसिद्धौ। तथा च प्रसिद्धा देवा एव 'कृत्स्नाः' पूर्णाः 'गृहिणो' गृहस्थाः। एते देवाः कृत्स्नाः यतय इति प्रतिज्ञाद्वयम्। तत्र यतित्वसाधकमाह—अत इति। 'अतः' कृत्स्नयतित्वादेव 'एतेषां' देवानां पुत्राः 'दायं' विभागात्पूर्वं पित्रादिसम्पादितं द्रव्यादि दायः तं 'नोपयन्ति' न प्राप्नुवन्तीत्यर्थः। तथा च यथा यतिपुत्राणां यतिसंपादितप्राप्त्यभावः, एवं इन्द्रादिदेवपुत्राणां जयन्तप्रभृतीनां इन्द्राद्यैश्वर्यप्राप्त्यभावोऽपीति देवानां यतित्वं सिद्धमिति भावः। यथोक्तं द्विरीयतात्पर्ये—

अदायादास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः।
नारायणपरा देवाः....॥ इति॥

गार्हस्थ्यसाधकमाह—न चेति॥ एते देवाः 'गृहान्' गृहस्थाश्रमं भवनं वा न विसृजन्तीत्यर्थः। प्रसिद्धगृहस्था अपि तथेति भावः।

गा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः'
इति पौत्रायणश्रुतिः ॥ ४७ ॥

( ३ ) सू—ॐ ॥ मौनवदितरेषामप्युपदेशात् ॥ ॐ ॥ ४८ ॥

न चाश्रमद्वयमेव देवानाम् । 'देवा एव ब्रह्मचारिणो

---

अरागा इत्यादिविशेषणानि त्रीणि यतित्वस्यैवोपपादकान्तराणि । पुनर्गार्हस्थ्ये साधनान्तरमाह—सर्वभोगा इति । पुनर्यतित्वे उपपादकमाह—सर्वज्ञा इति । यथा यतीनां गृहिवद्धयासङ्गाभावादधिकज्ञानसम्पादनं विद्यते एवं देवानां सार्वज्ञ्यं वर्तत इत्यतोऽपि तेषां यतित्वमिति भावः । पुनर्गार्हस्थ्ये साधकान्तरमाह—सर्वकर्तार इति । पुत्रक्रत्वादिसर्वकर्तार इत्यर्थः । अत्र श्रुतौ कृत्स्ना यतय इति यतित्वस्याप्युक्तिर्देवानामपि यत्यपेक्षया कथमुत्तमत्वमिति शङ्कानिरासाय । गार्हस्थ्ययतित्वसाधकहेतूनां व्यामिश्रोक्तिस्तु देवेषु तयोरविरोध इति प्रतिपादनायेति ध्येयम् । इतीति । इति पौत्रायणश्रुतिर्देवानां कृत्स्नगार्हस्थ्ययतित्वे आहेति न हेत्वसिद्धिरिति वाक्यशेषः । तथा चायं सूत्रार्थः—यतः यः 'कुटुम्बे' इत्यादिना गृहिणो मोक्षमुक्त्वा 'न च पुनरावर्तते' इति 'गृहिणा' गृहिणो गृहस्थाश्रमिणः 'उपसंहारः' उपनिषत्समापनं सः 'कृत्स्नभावात्तु' कृत्स्नगृहस्थधर्मवतो देवानपेक्ष्यैव कृतः, अतो यतेरेव सर्वाश्रमिषु उत्तमत्वं, न गृहिण इति सिद्धान्तवादस्य न तद्विरोध इति वाक्यशेषः । देवानपेक्ष्येति कुतः? तेषां 'कृत्स्नभावात्' कृत्स्नगृहस्थधर्मवत्त्वेन गृहिविषयकोपसंहारयोग्यत्वात् । न च देवानामपि यतेः सकाशादुत्तमत्वं कथमिति वाच्यम् । 'कृत्स्नभावात्' कृत्स्नस्य सम्पूर्णयतिधर्मस्य तेषु सद्भावात् । न चाश्रमद्वयसत्त्वे मानाभावः । 'कृत्स्नभावात' कृत्स्नोभयभावश्रुतेरिति ॥

( ३ ) युक्त्यन्तरेण मानुषयतिभ्यो देवानामुत्तमत्वं समर्थयत्सूत्रमुपन्यस्यति—मौनवदिति ॥ अत्रापिशब्दो दृष्टान्तदार्ष्टान्तिकयोः समुच्चये कैमुत्ये च । अप्यन्त आवर्तते । भावस्सिद्ध इति शेष इत्याशयेन सशेषाप्यन्तसूत्रांशोक्तं साध्यमाह-न चेति । आश्रमद्वयमेवेति । गृहयत्याश्रमरूपाश्रमद्वयकर्मित्वमेवेत्यर्थः । न तु सर्वाश्रमकर्मित्वमित्येवशब्दार्थः । देवानामित्यनन्तरं किन्तु सर्वाश्रमकर्मित्वमपीति प्रतिज्ञाशेषः । एतत्सूचनाय चशब्दः । कुत इत्यतस्तद्धेतुत्वेनोपदेशपदोक्तश्रुत्युदाहरणपूर्वकं मौनवदितरेषामप्युपदेशादित्यंशं व्याचष्टे--देवा इति ।

देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वे ह्येते कर्म कुर्वन्ति' इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेन अन्येषामप्युपदेशात् ॥ ४८ ॥

---*---

९. अधिकरणम् ॥

(१) सू—ॐ ॥ अनाविष्कुर्वन्नन्वयात् ॥ ॐ ॥ ४९ ॥

'एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति। स एतां म

---

देवा एव ब्रह्मचारिण इत्याद्युक्तार्थस्य 'यथा ह्येतेमुनयः' इत्यादिनोपपादनं क्रियते। अत्र 'यथा ह्येते' देवाः 'मुनयो' यतयः प्रसिद्धाः 'एवं' तथा सर्वाश्रमा इत्येवंशब्दस्य व्यवधानेनान्वये सर्वाश्रमा इति दार्ष्टान्तिकोक्तिः। एवंशब्दस्य समुच्चयार्थत्वे न केवलं यतयः, किन्तु सर्व वर्णास्सर्वाश्रमाश्चेति स्वस्थानेऽन्वयः। सर्ववर्णास्सर्वाश्रमा इत्युभयत्र हेतुमाह—सर्वे हीति। 'हि' यतः सर्ववर्णाश्रमोचितं कर्म कुर्वन्तीत्यर्थः। मुनेर्भावः कर्म वा मौनमित्याशयेन मौनवदित्येतद्व्याचष्टे—यतित्वेति। कर्माप्युपलक्ष्यते। इतरेषामित्यस्य प्रतिपदं—यतित्वादन्येषामिति। ब्रह्मचर्यादीनामित्यर्थः। 'उपदेशात्' उक्तत्वात्। अनेन देवानां 'मौनवदितरेषामप्युपदेशात्' मौनवद्यतित्ववदितरेषामप्याश्रमधर्माणां तेषु भावः सिद्धः, न त्वाश्रमद्वयकर्मित्वमेव तेषां, तथा च यदाऽऽश्रमद्वयकर्मित्वेनैव देवानां यतिभ्य उत्तमत्वं सिद्ध्यति तदा किमु वाच्यं सर्वाश्रमकर्मित्व इति सूत्रार्थ उक्तो भवति॥ ८ ॥

॥ इति कृत्स्नभावाधिकरणम् ॥

---*---

९. अधिकरणम् ॥

(१) अत्राधिकरणे अपरोक्षज्ञानसङ्गतपरोक्षज्ञानस्यातिगोप्यत्वमहिमा समर्थ्यते। सूत्रं पठति—अनाविष्कुर्वन्निति ॥ अत्र विषयोदाहरणपूर्वकमनाविष्कुर्वन्नित्यनेन सूचितं पूर्वपक्षं दर्शयति—एतामिति। अत्रेत्थं योजना—यतः 'एताम्' इति माठरश्रुतौ विद्यादानं कर्तव्यं श्रूयते, तथा स्वाधिक्यानुसारेण फलप्रदं चोच्यते। अतो ज्ञानदात्रा स्वस्याधिकफलार्थं तदुपयोगितया 'बहूनां' शिष्याणां स्वीकारार्थं 'तत्' विद्यादानं 'आविष्कारेणैव' उच्चैः कार्यमिति। 'एतां' प्रकृ

नुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात्तथा तथाऽधि
को भवति ' इति माठरश्रुतौ विद्यादानं श्रूयते । तच्च
बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम् । अ
न्वयात् युक्तेः । आविष्कारेऽयोग्यानामपि स्वीकार
प्राप्तिः । तच्च निषिद्धम् ।

(२) 'मानस्स्तेनेभ्यो ये अभिद्रुहस्पदे
निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किं च नैकं

---

तां 'विद्यां' ब्रह्मज्ञानसाधनवेदविद्यां 'अधीत्य' तदर्थं मत्वा ध्यात्वा वेदविद्यां विचार्येति वा 'ब्रह्मदर्शी' ब्रह्मापरोक्षज्ञानी भवति शिष्यः इ प्रसिद्धौ । वावेत्यवधारणे । 'सः' गुरुरेतां 'मनुष्येषु' बहुजनमध्ये य था यथाऽधिकमिति शेषः । 'विब्रूयात्' उच्चैः सम्यक् उपदिशेत् 'त थातथा' उपदेशाधिक्यानुसारेण फलेऽधिको भवतीति श्रुत्यर्थः । ए वं प्रदर्शितं पूर्वपक्षं निषेधति—इति न मन्तव्यमिति । किन्त्वनावि ष्कुर्वन्नेवोपदिशेदिति प्रतिज्ञाशेषः । कुत एतदित्यतः प्रवृत्तमन्वयादि ति हेतुमनूद्य व्याचष्टे—अन्वयादिति । 'युक्तेः' उपपत्तेः । काऽसा वुपपत्तिरित्यत आह—आविष्कार इति । सभाचत्वरादावित्यादावुप स्कार्यम् । सभाचत्वरादावुपविश्योपदेशे इत्यर्थः । स्वीकारेति । 'स्वी कारो' विद्यास्वीकारः । नन्वयोग्यानां ग्रहणप्रसङ्गेऽपि कुतोऽनावि ष्कारेण वाच्यमित्यत आह—तच्चेति । चस्त्वर्थः । 'तत्' अयोग्येभ्यः कथनं तु श्रुत्यादिनिषिद्धमित्यर्थः ॥

(२) तां श्रुतिमुदाहरति—मान इति ॥

मा नस्स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽ
[न्नेषु जागृधुः ।
येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित्॥
अथोपशमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुः॥

इति ऋङ्मन्त्रद्वयस्यैतरेयभाष्यसुधातत्त्वप्रदीपटीकारीत्याऽयमर्थः—ए तद्वायुं प्रति विद्यादेवतानां प्रार्थनरूपं वचनम् । तथा च हे ब्रह्मणस्पते 'आसन्यं प्राणमूचिरे . . एष उ एव ब्रह्मणस्पतिः' ( बृ. ३-३. ) इति श्रुतेः ब्रह्मणो वेदस्य पते वायो ये रमणरूपत्वाद्रामो भगवान् स एव स्वामी

ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित्' (ऋ.२-२३-१६.)॥
अथोपशमेनोपरता मनुष्याः
ये धर्मिणो ब्रूहि तेभ्यः सदा नः।
आदेवानामोहते विव्रयो हृदि
बृहस्पते न परः साम्नो विदुः॥ (ऋ. २-२३-१६.)
इति॥

ति ज्ञानमेषामस्ति ते रामिणः तस्मान्निष्क्रान्ताः तस्य विमुखाः निरामिणः भगवदुक्तमत्वाज्ञानिनः, निरो निषेधार्थत्वात् निरामिणस्तदज्ञानिनः प्रत्युत तस्य जीवरूपत्वज्ञानेन तन्नीचतावेत्तृत्वात्तद्विरोधिनः। यद्वा—रामो रमणमस्यास्तीति रामी भगवान् तस्मान्निष्क्रान्ताः तस्य विमुखाः निरामिणः, अत एव तस्य रिपवः 'अन्नेषु' अन्नादिषु भोगेष्वेव 'जागृधुः' आकांक्षां चक्रुः। आकांक्षावन्त इति यावत्। ते 'अभिद्रुहस्पदे' अभितो द्रोहस्य विष्णुवैष्णवद्रोहफलस्य नित्यनिरतिशयदुःखस्यास्पदे आकरे तमसि स्थातुं योग्या भवन्तीति शेषः। यतोऽतस्तेभ्यः स्तेनेभ्योऽस्मान् मा वोचः न ह्यस्मच्छ्रवणवान् दुःखमर्हतीति भावः। एवमेषां एतद्वासुदेवाख्यं परं ब्रह्म न, अपरं तदपरं जगच्च नास्ति, किन्तु 'किञ्च' यत्किञ्चित् निर्गुणं ब्रह्म 'नैकं' एकविधभिन्नं सदसद्विलक्षणं अनिर्वाच्यं च जगदभिमतं 'तेभ्यो' ब्रह्मस्तेनेभ्यो 'नः' अस्मान् मा ब्रूहि। अथ किं नाम? हे 'बृहस्पते' 'वाग्धि बृहती' (छा.१-२-११.) इति श्रुतेः बृहत्या वाचः पते वायो ये 'शमेन' विष्णुनिष्ठया 'उप' समीपे तस्मिन्नेव 'रताः' मनुष्याः मननशीलाः 'धर्मिणो' निष्कामकर्मिणः ये च देवानां 'व्रयः' नपुंसकं पदमेतत्। वरं नियामकं च ब्रह्म हृदि वि आ ओहते व्यौहते वहन्ति। सर्वत्र समत्वात् 'साम्नो' विष्णोः सकाशात् 'परः' परं उत्तमं च न विदुः तेभ्यो नः अस्मान् सदा ब्रूहीति। ऐतरेयभाष्ये तु 'तदेव' सामैव वासुदेवादिरूपेण 'हृदा' स्वेच्छया 'ओहते' प्राप्नोति सर्वामिति ओहते इत्येतत् भगवद्विषयतया व्याख्यातम्। यद्यपि भाष्योदाहृतऋग्द्वये पूर्वोत्तरार्धयोरेव पाठः सांव्यावहारिकः। तथाऽपि 'मा नस्स्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः' इति ऋग्भाष्योक्तेः मध्यगतं 'येषां नैतत्, अथोपशमेन' इत्यर्धर्चद्वयमवान्तरवेदे अन्तर्हितं मूलवेदे पठितमिति ध्येयम्। इतीत्यस्य निषिद्धमित्यनेनान्वयः॥

( ३ ) विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिष्टेऽहमस्मि ।
अनार्यकायानृजवे शठाय
न मां ब्रूया ऋजवे ब्रूहि नित्यम् ॥ इति च ॥ ४९ ॥

——:*:——

१०. अधिकरणम् ॥

( १ ) सू—ॐ ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ॐ ॥ ५० ॥

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या

---

( ३ ) श्रुत्यन्तरं पठति—विद्येति ॥ 'ब्राह्मणं' वायुं प्रति विद्या देवता आजगाम । आगत्य च हे वायो मां 'गोपाय' गोपय रक्ष तेऽहं 'शेवधिः' निधिरस्मि । मां 'अनार्यकाय' भागवते—

तितिक्षवः कारुणिकाः सुहृदः सर्ववेदिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढम् ।
मत्कृते त्यक्तकर्माणः त्यक्तस्वजनबान्धवाः ॥
मदाश्रयकथाहृष्टाः . . . . ॥

इत्यादिनोक्तार्यकलक्षणरहिताय 'अनृजवे' अविपरीतचिन्तादिप्रवृत्तिमान् ऋजुः तद्भिन्नाय 'शठाय' मूर्खाय दोषदृशे वा मा स्म ब्रूयाः । माशब्दोऽयं निषेधार्थः, न माङ् । तर्हि कस्मै वाच्येत्याकांक्षायामाह—ऋजव इति । आर्यकाद्युपलक्षणमेतत् । तथा चार्यकाय अशठाय ऋजवे 'नित्यं' नियमेन मां ब्रूहीति प्रार्थयामासेति श्रुत्यर्थः । अत्रापि इतीत्यस्य निषिद्धमित्यनेनान्वयः । श्रुतिसमुच्चये चः ॥ ९ ॥

॥ इति अन्वयाधिकरणम् ॥

——*——

१०. अधिकरणम् ॥

( १ ) अत्राधिकरणे अपरोक्षज्ञानस्य प्रतिबन्धाभावे साधनसम्पत्तिजन्मन्येवोत्पत्तिः समर्थ्यते । साधनसम्पूर्तावपि ज्ञानानुदये कारणाभावात् साधनसम्पूर्तिजन्मन्येव ज्ञानस्य भाव्यत्वात् । तद्भावे तु कदाऽपि तदनुदय इति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—ऐहिकमिति ॥ अत्र तदिति व्यस्तं समस्तं च । तत्र व्यस्तमावृत्तं विपरिणतं च

सितव्यः' (बृ. ४-४-५.) इति दर्शनार्थं श्रवणादि विधीयते। तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे।

(२) श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य
इहैव दृष्टिं परमस्य विन्देत्।
यद्यारब्धं कर्म निबन्धकं स्या
त्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य॥

---

श्रुतिप्रकृतपरामर्शीत्याशयेन तत्पदार्थं वदन् तस्यैहिकपदेनान्वयं प्रदर्शयति—आत्मेति। तच्च तद्दर्शनं चेति विग्रहः। दर्शनं ब्रह्मदर्शनम्। चशब्दो विशेषणसमुच्चये। तथा च 'आत्मा' इति श्रुतौ यद्दर्शनार्थं श्रवणादि विधीयते तच्छ्रवणादिसाध्यत्वेन श्रुतं दर्शनं 'ऐहिकं' इह जन्मनि भवमेव यस्मिन् जन्मनि श्रवणादिसम्पत्तिः तज्जन्मभवमेव, न तु तस्मिन् जन्मन्येवेति नियम इत्यर्थः। न च क्वचिच्छ्रवणादिसम्पत्तिजन्मनि ज्ञानानुदयविरोध इत्यतः प्रवृत्तस्याप्रस्तुतप्रतिबन्ध इत्यस्यार्थमाह—प्रारब्धेति। ज्ञानोदयविघटकत्वेन प्रसक्तप्रतिबन्धकाभावे इत्यर्थः। तथा च प्रतिबन्धकाभावे तद्दर्शनमैहिकमेव, प्रतिबन्धे तु जन्मान्तर इति अनियमाभ्युपगमात्। क्वचित्कारणे सत्यपि कार्यानुदयस्य प्रतिबन्धकप्रयुक्तत्वान्नोक्तदोष इति भावः। अनेन सूत्रे ऐहिकमित्यावर्तते तच्च सावधारणम्। तदिति व्यस्तमावर्तते। तथा च तच्छ्रुतौ श्रवणादिफलत्वेनोक्तं ब्रह्मदर्शनमैहिकमेव। न च क्वचित्तदभावविरोधः। यतस्तद्दर्शनं प्रस्तुतप्रतिबन्धे जन्मान्तरे भवं 'अप्रस्तुतप्रतिबन्धे त्वैहिकमेवेत्यनियमाभ्युपगमोऽत इति सूत्रखण्डार्थ उक्तो भवति॥

(२) उभयं कुत इत्यतः तद्दर्शनादित्येतद्व्याचष्टे—श्रुत्वेति॥ 'आत्मानं' परमात्मानं श्रुत्वा अथ 'मतिपूर्वं' मननपूर्वकं 'उपास्य' ध्यात्वा 'इहैव' श्रवणादिसम्पत्तिजन्मन्येव 'परमस्य' विष्णोर्दर्शनं 'विन्देत्' प्राप्नुयात्। प्रारब्धप्रतिबन्धाभाव इति शेषः। तत्सत्त्वे त्वाह—यदीति। 'निबन्धकं' नितरां बन्धकं आरब्धं ज्ञानप्रतिबन्धकं कर्म यदि स्यात्। तर्हीति शेषः। 'प्रेत्य' अस्माच्छरीरान्मृत्वा

ज्ञानं तु योगमुद्दिष्टं युज्यते तेन यत्सुखम्।
क्वचिद्योग उपायस्स्यात्क्वचिच्चित्तनिरोधनम्॥

इत्यभिधानाद्योगशब्दोक्तं श्रवणाद्युपायं पुनः किंचित् 'अन्ववेक्ष्य'

इति सौपर्णश्रुतौ तद्दर्शनात् ।

(३) अनादिजन्मसम्बन्धं निर्भेत्तुं पापपञ्जरम् ।
यावत्या सेवया शक्यं तावत्कार्यं न संशयः ॥
यावद्दूरे स्थितो गम्यात्तावद्गन्तव्यमेव हि ।
इह जन्मान्तरे वाऽपि तावत्यैव तु दर्शनम् ॥

(४) श्रवणं मननं चैव निदिध्यासनमेव च ।
परे गुरौ च या भक्तिः परिचर्यादिकं हरेः ॥

---

अपेक्ष्यैव कृत्वैव परमस्य दृष्टिं विन्देदित्यर्थः। श्रुतौ दर्शनादित्यनेन तस्यां श्रुतौ तस्यार्थस्य प्रतिबन्धकसदसत्त्वयोरैहिकानन्तर्यकत्वरूपार्थस्य दर्शनादुक्तत्वादिति सूत्रखण्डार्थ उक्तो भवति ॥

(३) श्रुतिसिद्धार्थे स्मृतिं चाह—अनादीति ॥ पञ्जरशब्दोऽस्त्रीलिङ्गः पतत्रिगतिप्रतिबन्धकनीडवाची। तथा च प्रवाहतोऽनादिजन्मभिः सम्बन्धो यस्य तत्, अनादिजन्मसम्बन्धं अनादिजन्मकारणं पापमेव पञ्जरसदृशं पापरूपज्ञानप्रतिबन्धकं 'यावत्या सेवया' यावज्जन्मभवेन सेवनेन 'निर्भेत्तुं' विदारयितुं शक्यं तावत्सेवनं कार्यमित्यर्थः। अनादीति व्यस्तं वा पदं पापविशेषणम्। तथात्वे जन्मसम्बन्धमिति कर्मणि घञन्तं, जन्मभिः सम्बन्धं यदनादि पापं तदेव पञ्जरमित्यर्थः। अत्र निदर्शनमाह—यावदिति। 'गम्यात्' प्राप्याद्ग्रामादेस्तदपेक्ष्य यावद्दूरे स्थितो जनः तावद्दूरं तेन गन्तव्यमिति हि प्रसिद्धमित्यर्थः। ननु 'तद्यथा पुष्करपलाशे' (छां.४-१४-३.) 'यथैषीकातूलम्' (छा.५-२४-३.) इत्यादिश्रुतेः ब्रह्मदर्शनैकसाध्यः पापपञ्जरनिर्भेदः कथं सेवया भवेदित्यत आह—इहेति। इह सेवाजन्मनि जन्मान्तरे वा यावत्या सेवया पापपञ्जरं निर्भेत्तुं शक्यं तावत्यैव सेवया दर्शनं भवति। अथ पापपञ्जरनिर्भेदो भवतीत्यर्थः। तुशब्दः प्रतिबन्धकाभावभावयोरिह जन्मान्तरे वेति विशेषद्योतकः। तथा च पापपञ्जरनिर्भेदस्येह जन्मनि जन्मान्तरे वा सेवासाध्यदर्शनसाध्यत्वाभ्युपगमात् साक्षात्सेवासाध्यत्वानभ्युपगमात् न श्रुतिविरोध इति भावः ॥

(४) ननु श्रवणाद्येकसाध्यं ज्ञानं कथं शुश्रूषारूपसेवया स्यादित्यत आह—श्रवणमिति ॥ चशब्दः परस्परसमुच्चये। एवशब्दावेवमित्यर्थौ। 'परे' परमात्मनि विषये परिचर्या पूजा। आदिपदान्नमनादि

एषा सेवेति सम्प्रोक्ता यया तद्दर्शनं भवेत् ॥
इति बृहत्संहितायाम् ॥ ५० ॥

——*——

११. अधिकरणम् ॥

( १ ) सू—ॐ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्त दवस्थावधृतेः॥ ॐ ॥ ५१ ॥

एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः।
तद्भावे जन्मान्तराणीत्यनियमः ॥

( २ ) 'धर्मी स्वर्गे विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृतत्वमे

---

प्रहः। प्रथमयच्छब्दस्य या भक्तिः यच्च परिचर्यादिकमित्युभयत्रान्वयः। अयमेव न सर्वत्र सेवाशब्दार्थः, किन्तु ज्ञानसाधनविषयैवेत्याह—ययेति। यया तद्दर्शनं ब्रह्मदृष्टिर्भवति सा सेवा 'एषा' श्रवणादिरूपा सम्प्रोक्तेत्यर्थः। एवं च यावत्या सेवयेत्यत्र सेवाशब्दार्थत्वेन श्रवणादिसेवैव सम्प्रोक्ता, न शुश्रूषा, अतो न ज्ञानस्य श्रवणादिसाध्यत्वप्रतिपादकात्मा वा अरे इत्यादिप्रमाणविरोध इत्यर्थः। बृहत्संहितायामुक्तत्वादुक्तं युक्तमिति शेषः ॥ १० ॥

॥ इति ऐहिकाधिकरणम् ॥

——*——

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मज्ञानस्य स्वोत्पत्तिजन्मानन्तरमेव प्रतिबन्धकाभावे मुक्तिसाधनत्वमहिमा वर्ण्यते। तत्र कारणे सति कार्यानुदये हेत्वभावाद्यच्छरीरे ज्ञानमुत्पन्नं तच्छरीरपातानन्तरमेव मोक्ष इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति--एवमिति ॥ अत्र एवं मुक्तिफलानियम इति साध्यांशं एवकारगर्भिततया व्याचष्टे—एवमेवेति। यथा ज्ञाने चानियमः, एवं मुक्तिफलेऽप्यनियम एव न तु नियम इत्यर्थः। ननु निष्कारणमनियमे कदाऽपि मोक्षाभावप्रसङ्ग इत्यत एवमित्येतद्विवृणोति—प्रारब्धेति। प्रारब्धकर्माख्यमुक्तिप्रतिबन्धकाभाव इत्यर्थः। 'तद्भावे' प्रतिबन्धकसत्त्वे जन्मान्तराणीति द्वितीयाबहुवचनं, बहुत्वमविवक्षितम्। जन्मान्तरमित्यर्थः। प्राप्यैवेति शेषः। तथा च प्रारब्धभावाभावयोरनियमकारणत्वात् नोक्तदोष इति भावः॥

( २ ) ननु कुतोऽत्र प्रतिबन्धककल्पनमित्यतः तत्र हेतुत्वेन तदब

त्येव ब्रह्मसंस्थोऽमृतत्वमेत्येव ' (          ) इति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् ।

( ३ ) विद्वानमृतमाप्नोति नात्र कार्या विचारणा ।
अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ॥

---

स्थावधृतेरित्यंशं तच्छ्रुत्युदाहरणपूर्वकं व्याचष्टे—धर्मीति ॥ ' धर्मी ' पुण्यकर्मवान् ' विधर्मी ' पापकर्मवान् तत्कर्ता ' ब्रह्मसंस्थो ' ब्रह्मदर्शी ' अमृतत्वं ' मुक्तिं ' एति ' प्राप्नोति एवशब्देन क्वचित् तदयोगं व्यवच्छिनत्ति एत्येव ब्रह्मसंस्थोऽमृतत्वमिति । द्विर्वचनं तात्पर्यद्योतनार्थम् । इतीत्यनन्तरं श्रुताविति शेषः । ' ब्रह्मसंस्थस्य ' ब्रह्मदर्शिनः ब्रह्मज्ञानस्येति यावत् । ' मोक्षस्यैव ' मुक्तिहेतुत्वस्यैव । आवर्तनीयोऽयमेवशब्दः । तथा चैवशब्देन मुक्तिहेतुत्वस्यैवावधारणात् एतज्जन्मन्येवेत्यनवधारणादित्यर्थः । अनेन प्रतिबन्धकदशायां सति ज्ञाने मोक्षाभावेनावधारणानुपपत्तिः । प्रतिबन्धकाभावेऽपि ज्ञाने सति मोक्षाभावे तु ब्रह्मसंस्थस्य तद्दर्शनस्य मोक्षहेतुत्वावधारणानुपपत्तिरेव । अतः श्रौतमोक्षहेतुत्वावधारणान्यथाऽनुपपत्त्या प्रतिबन्धककल्पना युक्ता । तथा च प्रतिबन्धकसद्भावोऽनियमहेतुः, तदाक्षेपकं चावधारणं, तस्यासिद्धिनिवारिका श्रुतिरित्युक्तं भवति । अथ वा—ज्ञानिनः तद्देहपातानन्तरमेव मोक्षो जन्मान्तराणि प्राप्य वा इति मोक्षकालानियमे एव श्रुतिः प्रमाणम् । अत्र पक्षे श्रुतौ ज्ञानिनो मोक्षस्यैवावधारणादेतद्देहपातानन्तरमेवेत्येवंरूपनियमस्यानवधारणान्नियमायोगस्याव्यवच्छेदान्नियमानुक्तेरिति हेतुवाक्यार्थस्यैवं मुक्तिफलानियम इति साध्येनान्वयः। अत्र भाष्यस्थैवकारोऽन्ययोगव्यवच्छेदकः, श्रुतिगतस्त्वयोगव्यवच्छेदक इति द्रष्टव्यम् ॥

( ३ ) ननु श्रुतौ नियमानुक्तिमात्रं नानियमसाधकमित्यतः स्मृतिमुदाहरति—विद्वानिति ॥ ' विद्वान् ' ब्रह्मापरोक्षज्ञानी ' अमृतं ' मुक्तिमाप्नोत्येव । नात्र सन्देहः कार्य इत्यर्थः । परन्तु यस्मिन् जन्मनि ज्ञानमुत्पन्नं तद्देहपातानन्तरमेवेति न नियम इत्याह—अवसन्नमिति । ' यत् ' यदि आरब्धं कर्म ' तत्रैव ' तद्देह एव ' अवसन्नं ' पर्यवसन्नं तद्देहपातानन्तरमेवामृतं ' गच्छति ' प्राप्नोति । अवसन्नं न चेत् बहूनि जन्मानि प्राप्यैव जन्मान्तरं प्राप्यैव ' अन्ते ' प्रारब्धक्षयान्ते अमृतं गच्छति नात्र संशय इत्यर्थः । नारायणाध्यात्म इत्यस्य ' प्रारब्धकर्माभावे'

न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः ॥
इति नारायणाध्यात्मे ॥ ५१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्र
भाष्ये तृतीयाध्यायस्य चतुर्थः पादः.
॥ तृतीयाध्यायस्समाप्तः ॥

॥ ॐ ॥

---

इत्यादिनोक्तो नियमः युक्त इति पूर्वेणान्वयः । सूत्रे फलशब्दो ज्ञानफलेषु मोक्षस्य प्राधान्यज्ञापनार्थः । तदुक्तं तत्त्वप्रदीपे—सर्वपुरुषार्थप्राप्तिदर्शनादित्युक्तेऽपि इतरेषामानुषङ्गिकत्वं, साक्षात्फलत्वं मुक्तेरेवेति फलशब्द इति । द्विरुक्तिस्त्वेतदध्यायार्थस्य प्रामाणिकत्वसूचनार्थेति द्रष्टव्यम् । तदुक्तमैतरेयभाष्ये—

सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः ।
अध्यायान्ते द्विरुक्तिस्स्यात्पूर्वोक्तस्यावधारणे ॥ इति ॥

'अवधारणे' निर्णायकग्रन्थे । 'आध्यायमूलतः' अध्यायमूलमारभ्य पूर्वोक्तस्यार्थस्य सर्वप्रमाणसिद्धत्वं वक्तुं अध्यायान्ते द्विरुक्तिस्स्यादित्यर्थः ॥ ११ ॥

॥ इति मुक्तिफलाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां तृतीयाध्यायस्य चतुर्थः पादः.
॥ तृतीयाध्यायस्समाप्तः ॥

॥ ॐ ॥

॥ श्रीः ॥

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

॥ अथ चतुर्थाध्यायः ॥

१. अधिकरणम् ॥

(१) फलं निगद्यतेऽस्मिन्नध्याये। कर्मनाशाख्यं फलमस्मिन् पादे। नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उ

---

॥ अथ चतुर्थाध्यायः ॥

१. अधिकरणम् ॥

(१) एतदध्यायप्रतिपाद्यं दर्शयति—फलमिति ॥ साध्यमित्यर्थः। ब्रह्मदर्शनेत्यादावुपस्कार्यम्। मोक्षरूपमिति शेषः। 'निगद्यते' कीदृशमिति विचार्यतेऽस्मिन् चतुर्थेऽध्याय इत्यर्थः। मोक्षस्य दर्शनसाध्यत्वं तु 'अनियमः, विद्यैव' इत्यादावेवोक्तमिति भावः। एतत्पादार्थं दर्शयति—कर्मेति। निगद्यत इत्यनुषज्यते। मोक्षलक्षणं हि ज्ञानफलं चतुर्विधं—कर्मक्षयोत्क्रान्तिमार्गभोगभेदात्। तत्रास्मिन् पादे दर्शनपूर्वकालीनसञ्चितकर्मनाशाख्यं फलं निगद्यत इत्यर्थः। नन्वावृत्तिरित्यादिसूत्रे कर्मक्षयोक्त्यप्रतीतेः कथमेतत्पादप्रतिपाद्यकथनमित्यत आह—नित्यश इति। सर्वदैवेत्यर्थः। परमादरेणेत्यप्यादावुपस्कार्यम्। किमर्थमेतदुच्यते इत्यत उक्तं—सर्वथा भाव्यमिति। सर्वप्रकारविघ्नेऽपि यावच्छक्त्यनुष्ठेयमित्यर्थः। नित्यशः करणविशिष्टसाधनं विनाऽपरोक्षज्ञानाभावात्तदभावे च चतुर्विधमोक्षेषु मध्ये एकस्यापि मोक्षस्याभावादस्य सर्वथा भाव्यत्वमिति भावः। तथा च यतः सर्वथा भाव्यमतो नित्यशः कार्यमिति योजना। साधनमिति। श्रवणाद्यावृत्त्यादिरूपज्ञानसाधनमित्यर्थः। 'प्रथमतः' सप्ताधिकरण्यां 'उच्यते' कर्तव्यत्वेन प्रतिपाद्यते। सर्ववेदान्तनयेन गतार्थतापरिहाराय—नित्यशः सर्वथेति चोक्तम्। तथा च तत्रोक्तस्यैव साधनस्य सर्वप्रकारविघ्नेऽपि सर्वदा परमादरेण यावच्छक्त्यनुष्ठेयत्वरूपेत्थंभावोऽत्रोच्यत इति न गतार्थतेति भावः। यदि फलाध्याये कर्मक्षयपादे च साधनमेवोच्यते तर्ह्यध्यायपादानामर्थव्यवस्थाऽभावः स्यादित्यत आह—प्रायिकत्वाच्चेति। प्रथमश्चोऽप्यर्थः। द्वितीयस्समुच्चये। तथा चाध्यायपादेष्वर्थान्तरोक्ता

च्यते । प्रायिकत्वाद्ध्यायानां पादानां च न विरोधः ।

( २ ) सू—ॐ ॥ आवृत्तिरसकृदुपदेशात् ॥ ॐ ॥ १ ॥

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ. ४-४-५. ) इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः, किन्त्वावृत्तिः कर्तव्या । 'स

---

वपि न व्यवस्थाऽभावलक्षणविरोधो भवति । कुतः ? समन्वयाध्यायानां नामादिपादानां च 'प्रायिकत्वात्' प्राचुर्येण स्वस्यैकार्थप्रतिपादकत्वादिति योजना । न चास्य पादस्य कर्मक्षये प्रायिकत्वानुपपत्तिः, अधिकरणसप्तके साधनविचारात् फलस्य चैकस्मिन्नेवाधिकरणे विचारादिति वा वाच्यम् । योऽर्थः प्रायेण कात्स्न्र्येन प्राधान्येन च यत्र प्रतिपाद्यते सोऽध्यायादिस्तदर्थक इत्यस्यार्थस्यात्र विवक्षितत्वात् । तथा च कर्मक्षयवत् साधनस्य कात्स्न्र्येन प्राधान्येन एतत्पादविचार्यत्वाभावान्नोक्तानुपपत्तिरिति भावः ॥

( २ ) तत्र सङ्गत्यादिजिज्ञासाजननाय सूत्रमेवादौ पठति—आवृत्तिरिति ॥ सूत्रे आवृत्तिरिति प्रतिज्ञांशं कर्तव्येति पदाध्याहारेणावृत्तिपदसूचितपूर्वपक्षनिषेधपूर्वकं व्याचष्टे—आत्मेति । इत्यादीनामिति । इति श्रुत्या आदीयन्ते उपादीयन्ते वाच्यतयेति इत्यादीनि तेषामित्यर्थः । श्रवणादीनामिति शेषः । यद्वा—इत्यादिश्रुत्युक्तानां श्रवणादीनामित्यर्थः । अत्रादिशब्देनैतज्जातीयवाक्यान्तरं गृह्यते । प्राप्तिरिति प्रथमा पञ्चम्यर्थे । यत इति शेषो वा । नेत्यावर्तते, इतीति च । अग्निष्टोमादीत्यादिशब्देन दर्शपौर्णमासादिकं गृह्यते आवृत्तिरिति सावधारणमेतत् । एकेन वाक्येनावगतस्य तत्त्वस्य पुनः पुनस्तेन वाक्येन अन्येन वा अवगतिः श्रवणावृत्तिः । युक्त्या मननावृत्तिरप्येवमेव । तथा च 'अग्निष्टोमादिवत्' यथा सकृदनुष्ठिताग्निष्टोमादेः स्वर्गफलसिद्धिस्तथा श्रवणादीनामपि 'एकवारेण' सकृदनुष्ठानेनैव 'फलप्राप्तेः' फलसिद्धेः 'आत्मा' इत्यादिश्रुत्युक्तानां श्रवणादीनां नावृत्तिरतोऽनावृत्तिरिति पूर्वपक्षो न, किन्तु श्रवणादीनामावृत्तिरेव कर्तव्येति योजना । कुत इत्यतोऽसकृदुपदेशादिति हेत्वंशं व्याचष्टे—स इति । इत्यादीति । इत्यादिरूपो योऽयमसकृदुपदेशः अनेकवारमुक्तिस्तस्मादित्यर्थः । आदिशब्देन 'स आत्मा तत्त्वमसि' ( छा.६-८-७. ) इति शिष्टवाक्यं गृह्यते । श्वेतकेतुं प्रति उद्दालकवाक्यमेतत् । प्रकृतः परदेवताख्यो विष्णुः सारत्वात्सः ।

य एषोऽणिमैतदात्म्यमिदं सर्वम्' ( छा. ६-८-७. )
इत्याद्यसकृदुपदेशात् ॥ १ ॥
( ३ ) सू—ॐ ॥ लिङ्गाच्च ॥ ॐ ॥ २ ॥
'स तपोऽतप्यत..पुनरेव वरुणं पितरमुपससार'
( तै. ३-१,२. ) इत्याद्यावर्तनलिङ्गाच्च ।

नियमनात् ज्ञानरूपत्वाद्वा यः । सर्वस्येष्टत्वादविघ्नसर्वेच्छारूपत्वाद्वा एषः । सूक्ष्मज्ञानविषयत्वादतिसूक्ष्मपरिमाणत्वाद्वा अणिमा । 'इदं सर्वं' जगत् 'एतदात्म्यं' एतत् सत् आत्मा स्वामी यस्य तत्तथोक्तम् । यद्वा–एष चासावात्मा च तदात्मा विचित्रा हि तद्धितगतिरिति वचनात्, तस्येदमित्यर्थे ष्यञ्प्रत्ययः तद्वशमित्यर्थः । ततत्वात् तत् परमानन्दत्वतः साधुस्वरूपत्वाद्वा सत्यं साधनात् सः पूर्णगुणत्वादात्मा । तत्त्वं अतत् त्वमिति च पदच्छेदः । तथा च त्वं 'तत्त्वं' तत्त्वतः 'अतदसि' तस्मादन्योऽसीति छन्दोगश्रुत्यर्थः । अनेनोद्दालकेन श्वेतकेतुं प्रति परतत्त्वस्य 'असकृत्' नवकृत्वः 'उपदेशादुपदिष्टत्वात् ज्ञानार्थं श्रवणादीनामावृत्तिः एव कर्तव्या । श्रवणादेः सकृदेव कर्तव्यत्वे किमर्थमसावसकृदुपदिशेदिति भाव इति सूत्रार्थ उक्तो भवति ॥

( ३ ) हेत्वन्तरेण श्रवणाद्यावृत्तिं साधयत्सूत्रं पठित्वा व्याचष्टे—लिङ्गाच्चेति ॥ आदिशब्देन 'अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति' ( तै. ३ - २. ) इत्यादिकं गृह्यते । 'स तपः' इत्यतः प्रागपि 'तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते' ( तै. ३ - १. ) इत्यादिकमप्युदाहरणीयम् । इत्थं हि तैत्तिरीये आख्यायिका—वरुणपुत्रो भृगुः ब्रह्माध्यापयेति पितरमुपसादितवान् । अथ वरुणस्तस्मै भृगवे अन्नमयादिरूपाष्टकमुपदिदेश । तेषां जगज्जन्मादिकारणत्वादिलक्षणान्यप्युवाच । एवं श्रुतान्नादिरूपो भृगुः पुनःपुनस्तद्विषय एवापृच्छत् । तथैव वरुणोऽप्युपदिदेश । एवमुपदिष्टस्स भृगुः 'तपः' आलोचनं 'अतप्यत' अकरोत् । स तपस्तप्त्वा अन्नमयाख्यमनिरुद्धरूपं जगज्जन्मादिकर्तृत्वलक्षणवत्तया साक्षात्कृतवान् । स भृगुरेकरूपं साक्षात्कृत्य द्वितीयमपि साक्षात्कर्तुं गुर्वनुग्रहार्थं पुनरेव वरुणं पितरं 'उपससार' उपसादितवान् । हे 'भगवो' भगवन् प्राणमयाख्यं ब्रह्म साक्षात्कर्तुमिति शेषः ।

नित्यशः श्रवणं चैव मननं ध्यानमेव च ।
कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिः ॥
इति बृहत्तन्त्रे ॥ २ ॥

---*---

२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ॐ ॥ ३ ॥

'अधीहि' अनुज्ञां देहि अनुजानीहीति वाच्ये विनयप्रदर्शनायैवमुक्तिः। एवं भृगुणोक्तो वरुण उवाच । किमिति ? 'तपसा' ज्ञानानुसन्धानरूपालोचनेन ब्रह्म विजिज्ञासस्व 'तपो ब्रह्म' ज्ञानरूपं ब्रह्मेति तपसो ब्रह्मज्ञानहेतुत्वात्तपो ब्रह्मेत्यभेदोपचार इति ग्रन्थान्तरे । इत्याद्यावर्तनलिङ्गादिति। एवमादिवाक्यबोध्यं यदनुज्ञाप्रार्थनाऽऽवर्तनादिरूपं श्रवणावर्तनलिङ्गं तस्मादित्यर्थः । चशब्दो न केवलं उपदेशाख्यगुरुव्यापाराद्धेतोरावृत्तेः कर्तव्यतासिद्धिः, किन्तु श्रुतस्य पुनरालोचनेनापरोक्षितत्वरूपाशिष्यव्यापाराख्यलिङ्गदर्शनादपीति हेतुसमुच्चये। लिङ्गाच्चेत्यस्यावृत्तिः कर्तव्येति पूर्वेणान्वयः । अस्य श्रवणादित्रितयावृत्तिसाधकत्वाद्योगविभागः। यद्यपि श्रौतलिङ्गदर्शनबलान्मनननिदिध्यासनयोरेवावृत्तिः सिद्ध्यति, न श्रवणादीनां त्रयाणाम् । तथाऽपि श्रुतान्नमयादीनां जगज्जन्मादिकारणत्वेन यद्ब्रह्मत्वं प्रागुक्तम्, तस्य 'तपो ब्रह्म' इत्यनेन सर्वत्र तद्घटकसार्वज्ञ्योक्तयोपपादनस्य श्रवणाद्यावर्तने लिङ्गत्वं सम्भवत्येव। न चान्नमयरूपे तपश्शब्दोक्तसार्वज्ञ्येन ब्रह्मत्वानुपपादनात्कथमेतदष्टरूपाणां श्रवणाद्यावर्तनलिङ्गत्वमिति वाच्यम् । तत्रालिङ्गत्वेऽपि तदितररूपेषु लिङ्गत्वसम्भवेन ब्रह्मविषयकश्रवणाद्यावृत्तावस्य लिङ्गत्वाविरोधात् । न च भृगुकर्तृकश्रवणादेरेकरूपविषयत्वाभावात्कथमियमावृत्तिरिति वाच्यम् । एकैकरूपविषयेऽपि सामान्यविशेषाभ्यां द्विश्श्रवणादिप्राप्तेः ॥ १ ॥

॥ इति आवृत्त्यधिकरणम् ॥

---*---

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे आत्मत्वोपास्तेर्नित्यशः कार्यत्वं समर्थ्यते । आत्मत्वं न सर्वथा सदोपास्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—आत्मेति ॥ अत्रात्मशब्दः प्रकारार्थः, इतिशब्दश्चावर्तते । तत्रा

आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव। 'नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास आत्मा हि ममैष भवति' ( ) इति ह्युपगच्छन्ति। 'आत्मेत्येवोपास्व आत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ आत्मा ह्येवैष भवति' ( ) इति ग्राहयन्ति च।

द्यो रूढ्या विष्णुपरः। द्वितीयः आदत्ते स्वीयतयाभृत्यानिति स्वामिवाची। उपदेशः उपासनं च कार्यमिति शेषः इति भावेनात्मेति प्रतिज्ञांशं 'आत्मेत्युपासनम्' इति स्मृत्यनुसारेण व्याचष्टे—आत्मेति। सूत्र इवात्राप्यात्मेत्यावर्तते। तत्रैको रूढोऽन्यः स्वामिवचनः। उपदेशश्चेति चशब्दान्वयः। न केवलं तथोपासनमावश्यकं किन्तु तथोपदेशश्च कार्य इति चशब्दार्थः। मोक्षार्थिभिरिति सौत्रतुशब्दस्यार्थान्तरोक्तिः। अनेनात्मत्वोपास्तेरवश्यकर्तव्यत्वे तस्या एव मोक्षसाधनत्वात् तां विना मोक्षासिद्धेरिति हेतुरुक्तो भवति—सर्वथेति। सर्वप्रकारविघ्नेऽपि सदा कार्यमित्यर्थः। तुशब्दस्यार्थः—एवेति, न त्व कार्यमित्येवकारार्थः। कुतः सर्वथा कार्यत्वमित्यतो हेत्वन्तरप्रतिपादनाय प्रवृत्तं आत्मेत्युपगच्छन्ति ग्राहयन्ति चेत्यंशं श्रुत्युदाहरणपूर्वकं व्याचष्टे—नेति। इतीति। इति श्रुत्येत्यर्थः। 'हि' यतः। उपगच्छन्तीति। उपासते गुरूपदेशेन जानन्ति चेत्यर्थः। उक्तं हि सुधायां उपगच्छन्तीत्येतत् ज्ञानार्थं उपासनार्थं चेति। अत एव श्रुतौ विजानीयामुपास इत्युभयोक्तिः। सन्त इति सिद्धमिति च शेषः। तथा च 'हि' यतो 'न' इति श्रुत्या सन्त आत्मेत्युपगच्छन्तीति सिद्धम्, आत्मत्वस्योपास्यत्वं सिद्धमिति यावत्। अतो मोक्षार्थिभिरात्मा विष्णुरात्मा स्वामीत्युपासनं सर्वथा कार्यमेवेति योजना। श्रुत्यर्थस्तु—अहं परमात्मनोऽन्यं न विचिन्तये। परमात्मानमेवात्मेति विजानीयाम्। परमात्मानमेवात्मेत्युपासे। न चैतदविद्यमानोपासनमित्याह—आत्मेति। 'एषः' विष्णुः 'मम' उपासकस्यात्मा स्वामीति हि यतः प्रसिद्ध इति। एवमरे शिष्य आत्मा स्वामीत्येवोपास्व, आत्मेत्येव विजानीहि, विष्णोरन्यं नात्मेति 'विजानथ' विजानीथाः। न चायं मिथ्योपासनोपदेशः, 'हि' यतः 'एषः' विष्णुः आत्मा स्वामी भवति खल्विति। अत्रापीतीत्यनन्तरं श्रुत्येति ग्राहयन्ति चेत्यनन्तरं इति

(२) आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः ।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ॥
इति भविष्यत्पर्वणि ।

(३) आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।
सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः ॥
कर्तव्यो नास्य हानेन कस्य चिन्मोक्ष इष्यते ॥
इति ब्राह्मे ॥ ३ ॥

—:*:—

सिद्धमिति च शेषः । योजना तु पूर्ववदेव । ग्राहयन्तीत्यस्योपदिशन्तीत्यर्थः । सन्तः शिष्यानिति शेषः । चशब्द उपदिशन्तिग्राहयन्त्योः समुच्चये, तुशब्दसूचितहेतुसमुच्चये चेति ध्येयम् ॥

(२) यदात्मत्वोपासनस्य मोक्षसाधनत्वं तुशब्दार्थत्वेनोक्तं मोक्षार्थिभिरित्यनेन, तत् कुतो ज्ञायत इत्यत आह—आत्मेति ॥ 'आत्मा' स्वामीत्युपासनं 'सर्वथा' सर्वप्रकारेण यावच्छक्ति सदा कार्यमेव । 'एतावत्' आत्मत्वमात्रं वा न विस्मरेदित्यर्थः । भविष्यत्पर्वणीत्यस्योक्तत्वादिति शेषेणात्मेति प्रतिज्ञावाक्येनान्वयः ॥

(३) केचित्तु—विष्णुरात्मतया जीवत्वेनोपास्यः । कुतः? यतः 'अहं ब्रह्मास्मि' इत्युपगच्छन्ति 'तत्त्वमसि' इत्यादिना ग्राहयन्ति च शिष्यानित्यहंग्रहे प्रत्यगर्थस्य जीवात्मत्वग्रहणमेतदधिकरणप्रतिपाद्यतया वर्णयन्ति । तदयुक्तमिति भावेनाह—आत्मेति । कर्तव्यमिति विपरिणामेनाकृष्यते । तथा च विष्णुः 'आत्मा' स्वामीति ध्यानं कर्तव्यम् । कथम्? 'विशेषणविशेष्यतः' भावप्रधानः सावधारणश्च । मुमुक्षूणामिति तृतीयार्थे षष्ठी । तथा च सर्वैरपि मुमुक्षुभिर्विष्णुरात्मा स्वामीति विशेषणविशेष्यभावेनैव ध्यानं कर्तव्यम् । न तु विष्णोर्जीवात्मत्वविधानेन । न केवलं ध्यानं, किन्तु तादृशः आत्मा विष्णुरिति विशेषणविशेष्यभावोपेत उपदेशश्च कर्तव्यः । 'अस्य' आत्मत्वस्योपासनस्य 'हानेन' त्यागेनास्याकरणे कस्यापि मोक्षो नेतीष्यते प्रामाणिकैरिति स्मृत्यर्थः । ब्राह्म इत्यनन्तरं अर्थान्तरं दूषितमिति वाक्यशेषः ॥ २ ॥

॥ इति आत्माधिकरणम् ॥

—*—

३. अधिकरणम् ॥

(१) सू—ॐ ॥ न प्रतीके न हि सः ॥ ॐ ॥ ४ ॥

'नाम ब्रह्मेत्युपासीत' ( छा.७-१.५. ) इत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या । किन्तु तत्स्थत्वेनैवोपासनं कार्यम् ।

३. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्म ज्ञानार्थिनो विष्णुप्रतीकैक्योपासनवर्जनमावश्यकमिति प्रतिपाद्यते । 'नाम ब्रह्म' इति श्रुतेर्भगवत्प्रतिमारूपं नामवागादिकं ब्रह्मतयोपास्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—नेति ॥ अत्र प्रतीक इति विषयसप्तमी । सुधोक्तरीत्या पूर्वसूत्रादात्मेतीति पदद्वयमुत्तरसूत्राद्दृष्टिपदं च, यद्वा—उत्तरसूत्राद्ब्रह्मदृष्टिपदमेवात्र सम्बध्यत इति भावेन न प्रतीक इति प्रतिज्ञांशं कर्तव्येति पदाध्याहारेण व्याचष्टे-नाम ब्रह्मेत्युपास्त इत्यादिनेति । आदिशब्देन 'वाचं ब्रह्मेत्युपास्ते' इत्यादीनि गृह्यन्ते । जातयेति शेषः । कर्तव्येत्यनन्तरमितीत्यनुवर्तते । तथा च इत्यादिना वाक्येनैकविभक्तिकत्वरूपसामानाधिकरण्यबलेन जातया अस्मिन् वाक्ये ऐक्योपासनं विधीयत इति शब्दविषयभ्रान्त्या मूलभूतया 'प्रतीके' नामवाङ्मनःसङ्कल्पादिशब्दितोषास्वाहापर्जन्यमित्रादिरूपप्रतिमाविषये 'ब्रह्मदृष्टिः' ब्रह्मत्वोपास्तिः कर्तव्येति यत्पूर्वपक्षिणोक्तं न तद्युक्तमिति योजना । आत्मेत्युक्त्वा ब्रह्मेत्युक्तया प्रतीके आत्मेति दृष्टिर्जीवदृष्टिर्न कार्येति परव्याख्यानं निरस्तं भवति । 'सः' प्रसिद्धो 'यः' अधिकारी नामोषारूपप्रतीकं ब्रह्मेत्युपास्ते, 'अस्य' तस्याधिकारिणो नाम्नो 'यावद्गतं' व्याप्तिस्थानं तत्र 'कामचारो' यथेष्टसञ्चारो भवतीति पूर्वपक्षे श्रुत्यर्थः । सिद्धान्ते तु नाम्नि ब्रह्मास्तीत्युपास्त इत्यर्थः । ननु यद्यभेदोपासनं न युक्तं तर्हि कथं उपासनं कार्यम् । न च न कार्यमेवेति वाच्यम् । श्रुत्यप्रामाण्यप्रसङ्गादित्याशङ्कते—किन्त्विति । परिहरति—तत्स्थत्वेनेति । अनेन सूत्रे प्रतीक इत्यावर्तते । अधिकरणत्वं च सप्तम्यर्थः । ब्रह्मदृष्टिरित्यत्रापि सम्बध्यते । आत्मेति दृष्टिरिति वा । किन्त्विति लभ्यते । तथा च किन्तु प्रतीकाधिकरणे ब्रह्मदृष्टिः कर्तव्येति प्रतिज्ञाशेषो दर्शितो भवति । कुतो नेत्यतस्तद्धेतुत्वेन 'हि' यतः 'सः' आत्मा विष्णुः प्रतीकं न भवतीति सूत्रखण्डो योजनीय इति सिद्धत्वादन्यत्र व्याकृ

( २ ) ब्रह्मतर्के च ।

नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः ।
ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति ॥

तत्वाच्चात्र स न व्याकृतः ॥

( २ ) तत्स्थत्वेनैवोपासनं कार्यं, न त्वभेदेनेत्युक्तार्थे स्मृतिं चाह-ब्रह्मतर्के चेति ॥ अयमर्थ उक्त इति शेषः । न केवलमस्माभिरिति चार्थः । नामादीति । नामशब्दादीत्यर्थः । आदिशब्देन वाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नतेजआकाशस्मराशाशब्दा गृह्यन्ते । 'प्राणपर्यन्तं' प्राणशब्दपर्यन्तं 'उभयोः' नामादिब्रह्मपदयोः । यद्यपि नामादिशब्दास्सर्वानुगतब्रह्मशब्दाश्च बहव इति द्विवचनानुपपत्तिः । तथाऽपि प्रत्येकवाक्यविवक्षया राशिद्वयविवक्षया वा तदुपपत्तिः । प्रथमात्वत इति । प्रथमाविभक्त्यन्तत्वादित्यर्थः । केचित्तु—ननु छान्दोग्ये 'ना..ास्व, वाचमुपास्व' (छा. ७-१..) इत्यादिविधिवाक्यं, 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति.. ..वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य' (छा.७-१..) इत्यादिफलवाक्यं च श्रूयते । तत्र चोभयोः द्वितीयान्तत्वमेव, न प्रथमान्तत्वं तत्कथमेतदिति चेत्—न, यतो 'नाम ब्रह्मेत्युपासीत' इति शाखान्तरीयपाठाभिप्रायेणेदं वचनम् । छान्दोग्यानुसारेण तु 'प्रथमात्वतः' इत्येतद्द्वितीयात्वादित्यस्योपलक्षकम् । द्वितीयात्वेऽपि देवदत्तं सिंहं विद्धीत्यादौ विधिबलेनैक्यप्रतीतेः । यथोक्तं तत्त्वप्रदीपे प्रथमात्वत इति सन्निकृष्टोपलक्षणं, प्रथमात्वात् द्वितीयात्वादित्यर्थः । शाखान्तरे प्रथमात्वादितीत्याहुः । तन्न, भाष्यपुस्तकेषु शाखान्तरपाठस्यादर्शनात्, तत्त्वप्रदीपरीत्या शाखान्तरपाठस्य स्मृत्यभिप्रेतत्वेऽपीह भाष्ये तदुपादाने नियामकाभावाच्च, फलवाक्यगतनपुंसकनामब्रह्मपदयोरितिशब्दशिरस्कयोः प्रथमान्तत्वेन तयोर्विषयत्वे सति सम्भवति द्वितीयान्तत्वमाश्रित्याक्षेपस्य तदज्ञानमूलत्वाच्च । यथोक्तं छान्दोग्यव्यासतीर्थीये—नाम ब्रह्मोपास्वेत्याद्युक्ताः द्वितीयाः स यो नामब्रह्मेत्युपास्ते इत्याद्युक्ताः प्रथमाश्च सप्तम्यर्थतया व्याख्याता इति । तस्मात् छान्दोग्यस्थफलवाक्यानुसारेणैवैतद्वचनम् । परन्तु प्रथमात्वत इत्येतदजहत्स्वार्थलक्षणया द्वितीयात्वत इत्यस्याप्युप

नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।

लक्षकम् । तत्त्वप्रदीपोऽप्युभयोपलक्षकत्वाभिप्रायः। तथा चोपलक्षणापक्षे फलवाक्ये उभयोः प्रथमात्वेन द्वितीयात्वाभावेऽपि विधिवाक्ये ब्रह्मपदानुवर्तनेनोभयोर्द्वितीयात्वं सम्पाद्य द्वितीयात्वत इत्येतत्परतया योजनीयमिति सिद्धयति । अनेन 'वाचं ब्रह्म' इत्यादिवाक्यमपि गृहीतं भवति । शाखान्तरे प्रथमात्वादिति तत्त्वप्रदीपस्तु शाखान्तरीयविधिवाक्य इत्यर्थकः । 'मनो हि ब्रह्म मन उपास्व' (छा॰ ७ - ३. ) इत्यत्रत्यश्रुतिवत् 'नाम हि ब्रह्म, वाग्घि ब्रह्म' इत्यपि शाखान्तरे पाठोऽस्तीति तदभिप्रायको वा भवतीति न तद्विरोधः । अन्ये तु—उपलक्षणां विना 'प्रथमयोः पूर्वसवर्णः' इत्यत्रेव प्रथमात्वत इत्यस्य प्रथमा च द्वितीय्या च प्रथमे तयोः भावः प्रथमात्वम्, तत इत्यर्थ इत्याहुः । एके तु — 'मनो हि ब्रह्म मन उपास्व' इति मनआख्यप्रतीकविषयवाक्ये मनो हि ब्रह्मेति मनोब्रह्मपदयोः प्रथमान्तत्वदर्शनात्तद्वाक्यबलेन 'नाम हि ब्रह्म, वाग्घि ब्रह्म' इत्यादिवाक्यानां सर्वत्रोहे क्रियमाणे नामादिपदानां ब्रह्मपदस्य च सर्वत्र प्रथमान्तत्वमस्तीति भावेन 'नामादि प्राणपर्यन्तमुभयोः प्रथमात्वतः' इत्युक्तम् । एवमेव शाखान्तपाठोऽप्यस्तीति सम्प्रदायविद इत्याहुः । प्रथमात्वत इत्यनन्तरं निमित्तादिति शेषः । उभयोरैक्यदृष्टिरिति । अभेदोपास्तिरित्यर्थः । अत्र कर्तव्यतयोच्यत इति शेषः । भ्रान्तिरित्यस्य भविष्यतीत्यनेनान्वयः । सामानाधिकरण्यबलेन तथा भ्रान्तिसम्भवादिति भावः । भ्रान्तौ मूलकारणमाह—'अबुधानां' अज्ञानामिति । ननु कस्मादियं भ्रान्तिरबुधानां कल्प्यते, बुधानामेवं प्रमैव किं न स्यादित्यत आह—नामादीति । नामादौ स्थितिरवस्थानं 'अत्र' 'नामब्रह्म' इत्यादिवाक्येषु 'ब्रह्मणो' विष्णोः 'हि' यतः 'विधीयते' अभिधीयते । नामेति प्रथमाया वाचमिति प्राणमिति द्वितीयायाश्च तर्हि का गतिः इत्यत आह—सर्वार्थेति । प्रथमेति द्वितीयाया अप्युपलक्षकम् । तथा च यस्मात्प्रथमा 'सर्वार्था' सर्वविभक्त्यर्थका तथा द्वितीया प्रथमा व्यतिरिक्तसर्वार्था 'ततः' तस्मात् 'सप्तम्यर्था' सप्तमीविभक्त्यर्था अधिकरणत्वार्थका मतेति यो

सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता ॥ इति ॥ ४ ॥

—*-:*:-*—

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ॐ ॥ ५ ॥

ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् ।

---

जना । इति ब्रह्मतर्के इत्यन्वयः ॥ ३ ॥

॥ इति नप्रतीकाधिकरणम् ॥

——*——

४. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मत्वोपास्तेरावश्यकत्वं समर्थ्यते । ब्रह्मत्वस्यैव सदा विशिष्योपासने कारणाभावान्न ब्रह्मत्वं सर्वथोपास्यमिति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—ब्रह्मेति ॥ अत्रात्मेति सूत्रात्परमेश्वरवाची सप्तम्यन्ततया विपरिणतः आत्मशब्दोऽनुवर्तते । एवं तुशब्दोऽपि सर्वथेत्यर्थकस्सन् गुणान्तरोपासनादस्य विशेषद्योतकोऽवधारणार्थश्चार्थकश्च । कार्येति शेष इति भावेन ब्रह्मदृष्टिरिति प्रतिज्ञांशं व्याचष्टे—ब्रह्मदृष्टिरिति । चः समुच्चये । एवकारो भिन्नक्रमः । तथा च न केवलमात्म दृष्टिः, किन्तु ‘ परमेश्वरे ’ भगवत्येव ‘ ब्रह्मदृष्टिः ’ सर्वोत्कृष्टत्वोपास्तिश्च कार्येत्यर्थः । सा च परोक्तरीत्या न प्रतीके कार्या ‘ न हि सः ’ इति पूर्वन्यायेन निरस्तत्वात्किन्तु भगवत्येवेति भावेनाह—परमेश्वर इति । उभयोपास्तिप्रकारस्तु वक्ष्यते । कुत इत्यत उत्कर्षादिति हेतुं व्याचष्टे—उत्कृष्टत्वादिति । परमेश्वरस्येति विपरिणामेनानुषङ्गः । यद्वा—ब्रह्मत्वस्येति शेषः । अथ वा—ब्रह्मदृष्टेरिति विपरिणामेनान्वयः । ननु सूत्रे उत्कर्षादित्युक्तम्, भाष्ये चोत्कृष्टत्वादिति तदेवोक्तम् । तत्कथमनेन हेत्वर्थनिर्णयः कथं च हेतुसद्भाव इति चेदुच्यते, यथा आत्मदृष्टिस्तथा ब्रह्मदृष्टिः ब्रह्मत्वोपास्तिश्च परमेश्वर एव कार्येति प्रतिज्ञा । तत्र हेतुः—उत्कर्षादिति तस्यार्थः । परमेश्वरस्योत्कृष्टत्वादिति भगवतो ब्रह्मत्वोपास्त्या उत्कृष्टत्वसिद्धेः । ब्रह्मत्वोपास्तौ उपासकेन कृतायां भगवदुत्कृष्टत्वोपास्तिरेव कृता स्यादिति फलितार्थः । ननु ब्रह्मत्वोपासनेऽपि कथमुत्कृष्टत्वमनेनोपासितमिति चोद्येऽपि उत्कृष्टत्वादित्येतदेवोत्तरम् । सर्वोत्कृष्टत्वस्यैव ब्रह्मशब्दप्रवृत्तिनिमित्त

(२) ब्रह्मदृष्ट्या सदोपास्यो विष्णुस्सर्वैरपि ध्रुवम् ।
महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ।
सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेत् ॥
(३) आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ।
कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत् ॥

---

त्वादित्यर्थः । तदपि कुतः? 'उत्कृष्टत्वात्' ब्रह्मत्वे सर्वगुणान्तर्भावेन ब्रह्मपदप्रवृत्तिनिमित्तब्रह्मत्वस्यान्तर्भावितसर्वगुणत्वेनोत्कृष्टत्वरूपत्वा दित्यर्थः । तथा च ब्रह्मत्वोपासनमुत्कृष्टत्वोपासनं भवत्येवेति भावः । ननु तथाऽपि कुतो गुणान्तरपरित्यागेनास्योपासनमित्यतोऽप्याह---उत्कृष्टत्वादिति । गुणान्तरोपासनेभ्योऽस्यैवोपासनस्योत्कृष्टत्वादतिशयेनोत्कृष्टप्रसादहेतुत्वादिति ॥

(२) सूत्रार्थे स्मृतिं चाह—ब्रह्मेति ॥ धान्येन धनवानितिवदत्रा भेदे तृतीया । तथा च विष्णुस्सर्वैर्ब्रह्मदृष्ट्या सर्वोत्कृष्टत्वोपासनेन 'उपास्यो' विषयीकर्तव्य इत्यर्थः । अनेन ब्रह्मदृष्टिरित्यंशो व्याख्यातः । अत्र हेतुमाह—महत्त्वेति । 'अयं शब्दो' ब्रह्मशब्दः । यत इति शेषः । अनेन हेत्वंशो व्याकृतः । गुणान्तरपरित्यागेनास्यैव उपासने कारणमाह—महत्त्वेति । ज्ञानमुपासनं 'हि' यतः । 'सर्वतो' लक्ष्म्यादि सर्वेभ्यो महत्त्वज्ञानमित्यन्वयः । यद्वा—सर्वतो गुणान्तरोपासनादाधिक्येनेति शेषः । भवेदित्यतः प्राक्कार्यमित्युपस्कार्यम् । तथा चेत्थं योजना—यतोऽयं शब्दो महत्त्ववाची 'हि' यस्मान्महत्त्वज्ञानमेव सर्वतः प्रीतिजनकं, अतस्तन्महत्त्वज्ञानं सर्वथैव कार्यं भवेत्, यत एव मतो विष्णुस्सदोपास्य इति ॥

(३) आत्मत्वोपासनवत् ब्रह्मत्वोपासनं विनाऽपि मोक्षासम्भवाच्चैतत्कार्यमिति भावेन चशब्दज्ञापितार्थे प्रमाणमाह—आत्मेति ॥ यदा विष्णोरात्मेत्युपासा विष्णुर्धर्मिकात्मत्वप्रकारकोपासना मोक्षसिद्ध्यर्थमधिकारिणा कार्यैव, तां विना मोक्षाभावादिति भावः । तदा ब्रह्मत्वोपासनाभावेऽपि मोक्षाभावात् तदर्थं 'ब्रह्मत्वसंयुता' तत्प्रकारिकाऽप्युपासना 'सर्वथा' सर्वप्रकारविघ्नेऽपि कार्यैवेति योजना । अस्मिन् पक्षे न चतुर्गुणनियमः । एतदेव विवृणोति—ब्रह्मत्वमिति । ब्रह्मत्वोपासनमित्यर्थः । अनेन ब्रह्मदृष्टिं विना मोक्षाभावेनोत्कृष्टसाधनत्वादात्मनि ब्रह्मदृष्टिः कार्येति सूत्रस्य वृत्त्यन्तरं दर्शितं भवति । ननु

इति ब्रह्मतर्के ॥ ५ ॥

——:❀:——

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ॐ ॥ ६ ॥

'चक्षोस्सूर्यो अजायत' ( ऋ. १०-९०-१३. ) इत्या

द्युपासनं च देवानां कार्यमेव । स्वोत्पत्तिस्थानत्वा

---

ब्रह्मत्वस्याप्यवश्योपास्यत्वे चतुर्गुणोपासनानियमभङ्गस्स्यादित्यतो वाऽऽह—आत्मेति । अस्मिन् पक्षे यदा आत्मेत्युपासा प्रवर्तते तदा 'ब्रह्मत्वसंयुता' सर्वोत्कृष्टस्वामी विष्णुरित्यात्मत्वविशेषणत्वेन ब्रह्मत्वविषयिणी कार्येति योजना । ब्रह्मतर्के चेति । अयमर्थ उक्त इति शेषः । न केवलमस्माभिरिति चार्थः ॥ ४ ॥

॥ इति ब्रह्माधिकरणम् ॥

——:❀:——

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे विष्ण्वङ्गाश्रितत्वेन देवतोपासनमावश्यकमिति साध्यते । आदित्यादिभिर्देवैः स्वस्वोत्पत्त्यङ्गाश्रितत्वेनोपासनं सदा सर्वथा न कार्यं, तेषां सदा तत्र स्थित्यभावात्, गुणान्तरेषु सत्सु भगवदङ्गाश्रितत्वेन विशिष्य स्वचिन्तने कारणविशेषाभावाच्चेति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—आदित्यादीति ॥ अत्रादित्यादिमतय इति प्रतिज्ञांशं व्याचष्टे—चक्षोरिति । इत्यादीति । इत्यादिनेत्यर्थः । उक्तमिति शेषः । यद्यप्यत्रोपासनं नोक्तम् । तथाऽप्युक्तेरुपासनार्थत्वादमृत इति फलोक्तेश्चार्थादुपासनमुक्तमिति भावः । उपासनमित्यतः प्राक् अङ्ग इत्युपस्कार्यम् । विषयसप्तमीयम् । तथा च स्वाश्रयत्वेन भगवदङ्गोपासनमित्यर्थः । अनेन मतिशब्दो ज्ञानविशेषरूपोपासनोपलक्षक इत्युक्तं भवति । न केवलं पूर्वोक्तमिति चार्थः । देवानामिति । देवैरित्यर्थः । कार्यमित्यनेन सूत्रे कार्या इति शेषो दर्शितः । चशब्दस्यार्थः—एवेति । को विशेषहेतुरित्यतः प्रवृत्तस्य उपपत्तेरित्यस्यार्थमाह—मुक्तौ तत्र 'लयस्य' प्रवेशस्य अपेक्षितत्वादिति । नन्वप्रयोजकोऽयं हेतुरिति चोद्योत्तरत्वेनापि—उपपत्तेरिति हेतुर्योज्यः । उपासनस्य फलसाम्येन कार्यत्वादिति तदर्थः । ननु मुक्तौ तत्र लयोऽसिद्ध इत्यतोऽपि—उपपत्तेरित्याह । तदर्थः—स्वोत्पत्तिस्थानत्वादिति । स्वशब्द

त्स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वाच्चोपपन्नं ते
षां तथोपासनम् ।

( २ ) नारायणतन्त्रे—

आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ॥
स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत् ।
अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते ॥

---

उपासकपरः । यतः यस्योत्पत्तिस्तत्र तस्य लयनियमाच्चासिद्धिरिति भावः । ननु सूर्यादिदेवानां विविधस्थानेषु चरणेन सदा भगवच्चक्षु राद्याश्रितत्वाभावात्तद्भावेऽपि तथोपासनेऽन्यथोपासनप्रसङ्गादेतद युक्तमित्याशङ्कोत्तरत्वेनाप्युपपत्तेरित्येतद्व्याचष्टे—स्वाश्रयत्वादिति । अङ्गानामिति शेषः । तथा च नित्यं रूपान्तरापेक्षया अङ्गानां स्वाश्रय त्वान्नोक्तानुपपत्तिरिति भावः । चशब्दो हेतूनां समुच्चये । निगमयति— उपपन्नमिति । युक्तमित्यर्थः । 'तेषां' देवानां 'तथा' स्वाश्रयत्वेन भ गवदङ्गोपासनमित्यर्थः । तथा चायं सूत्रार्थः—न केवलं ब्रह्मदृष्टिः, कि न्तु 'अङ्गे' भगवदङ्गविशेषविषये आदित्यादिभिर्देवैः 'आदित्यादिमत यः' आदित्याद्याश्रयत्वेनेश्वराङ्गोपासना अपि कार्या एव । को विशेषहे तुः?–उपपत्तेः। मुक्तौ तत्तदङ्गेषु प्रवेशस्यापेक्षितत्वादिति हेतोः । न चा प्रयोजकता । 'उपपत्तेः' उपासनस्य फलसाम्येन कार्यत्वात् । न च मुक्तौ तत्र प्रवेशस्यासिद्धिः । 'उपपत्तेः' स्वोत्पत्तिस्थानत्वात् । न चान्यथोपासनप्रसङ्गादेतदयुक्तम् । 'उपपत्तेः' नित्यं रूपान्तरेणाङ्गा नां स्वाश्रयत्वादिति ॥

( २ ) अतीताधिकरणसहितैतदधिकरणार्थे स्मृतिं चाह—नारा यणेति ॥ अयमर्थ उक्त इति शेषः । आधिर्मानसी व्यथा । व्याधी रो गः । एतदुपलक्षितैर्विघ्नहेतुभिरित्यर्थः । विक्षिप्तमनस इति । अन्यव्या सक्तमनस इत्यर्थः । पुंस इति शेषः । कर्तरि षष्ठीयम् । अशक्तावपी त्यन्वयः । तुशब्दो विशेषार्थः । अन्योऽवधारणे । स्मरणं ध्यानम् । वि ष्णोर्गुणानां स्मरणाशक्तावित्यन्वयः । विष्णोरित्येतद्ब्रह्मत्वमित्यनेना पि सम्बध्यते । 'तत्' ब्रह्मत्वं तदुपासनमिति यावत् । 'चो' यतः 'अ त्र' ब्रह्मत्वे सर्वगुणानां ज्ञानानन्दादिविष्णुधर्माणां 'अन्तर्भावः' तद्रूप त्वमिष्यते प्रामाणिकैरतो ब्रह्मत्वं 'सततं स्मर्तव्यं' उपासितव्यमित्यर्थः।

( ३ ) स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ।
तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः ॥ इति ॥ ६ ॥

——*——

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आसीनस्सम्भवात् ॥ ॐ ॥ ७ ॥
सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात् । त

---

( ३ ) एवमतीताधिकरणार्थोपयुक्तांशमुदाहृत्य एतदधिकरणोपयुक्तं स्मृत्यंशमुदाहरति—स्वोत्पत्त्यङ्गं चेति । 'देवानां' देवैर्विष्णोस्स्वोत्पत्त्यङ्गं च सदैव चिन्त्यम् । स्वाश्रयत्वेनेति शेषः । न केवलं ब्रह्मत्वादीति चशब्दार्थः । अत्र हेतुमाह—'तेषां' देवानामिति । 'तत्र' अङ्गेषु 'हि' यतः । न चान्यथोपासनमेतदित्याह—तदाश्रिताश्चेति । 'ते' देवाः 'नित्यं' रूपान्तरेणाङ्गाश्रिता एवेत्यर्थः । 'ततः' तदाश्रितत्वात् 'विशेषतो' विशिष्य सर्वथा देवाश्रयाङ्गं देवैश्चिन्त्यमित्यर्थः । इति नारायणतन्त्र इत्यन्वयः ॥ ५ ॥

॥ इति आदित्याधिकरणम् ॥

——:*:——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे आसनादिनियमस्साध्यते । प्रयोजनाभावाच्चासनं सर्वथाऽपेक्षितमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—आसीन इति ॥ अत्र पूर्वस्माच्चशब्दोऽनुवर्तते । स चाप्यर्थोऽवधारणे च । जिज्ञासुरुपासनं कुर्यादिति च शेष इति भावेन प्रतिज्ञांशं व्याचष्टे—सर्वदोपासनं कुर्वन्निति । 'सर्वदा' स्थितिगत्यासनादिसर्वकालेषु 'उपासनं' सामान्यस्मरणादि । कुर्वन्निति । जिज्ञासुरिति शेषः । अपिशब्दो हेतुवाक्ये सम्बध्यते । आसीन इति सावधारणम् । तेनानुवृत्तचशब्दो व्याख्यातः । 'विशेषतः' सर्वथा कुर्यादिति । अत्रापि उपासनमिति सम्बध्यते । अत्रोपासनं वस्तुतो ध्यानम् । तथा चेत्थं प्रतिज्ञावाक्ययोजना—उपासनं कुर्वन् जिज्ञासुः 'आसीनः' उपविश्यैवोपासनं विशेषतः 'सर्वथा' सर्वप्रकारविघ्नेऽपि कुर्यादिति । आसीनस्योपासने सर्वदोपासनाऽभावः स्यादिति शङ्कावारणाय-सर्वदोपासनं कुर्वन्नित्याह । तथा चाधिकारी सर्वदोपासनं कुर्वन्नेव भवेत् ।

दा विक्षेपाल्पत्वेनासम्भवात् ॥ ७ ॥

( २ ) सू—ॐ ॥ ध्यानाच्च ॥ ॐ ॥ ८ ॥

स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥

( ३ ) नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ।

---

तच्च आसीन एव कुर्यादित्यर्थः । कुत इत्यतत्सम्भवादिति हेतुं तदाशब्दाध्याहारेण व्याचष्टे—तदेति । सावधारणमेतत् । तस्येति शेषः । तथा च यद्यपि उपासनस्यैव ज्ञानसाधनत्वम् । तथाऽपि तस्य 'तदैव' आसने सत्येव 'सम्भवात्' योगात्, अन्यथाऽसम्भवादिति योजना । कुत इत्यतोऽनुवृत्तचशब्दसूचितं हेतुसाधकहेतुं दर्शयति—विक्षेपेति । तस्येत्यत्राऽपि सम्बध्यते । तथा च तस्यासीनस्यैव विक्षेपस्य चित्तविक्षेपस्य अल्पत्वेन अबहुत्वेनेत्यर्थः । उक्तोपासनविरोधिबहुचित्तविक्षेपाभावादन्यस्य च तन्नियमादिति फलितार्थः । तत्त्वप्रदीपे तु सर्वदोपासनं कुर्वन्नयं नाविशेषतः, किन्तु आसीनो विशेषतः कुर्यादित्युक्तम् ॥

( २ ) ननु सर्वदोपासनं कुर्वन्नासीन एवेत्यनेन सर्वदोपासनं कार्यम्, आसनं चापेक्षितमित्युक्तम् । तन्न युज्यते । विरुद्धत्वेनोभयोरेकदा समावेशायोगात् । तत्रान्यतरस्मिन् त्याज्ये श्रुतिविहितत्वात्सर्वदोपासनमुपादायासनमेव त्यज्यते, तद्विधायकश्रुत्यभावादतो नासनमावश्यकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—ध्यानाच्चेति ॥ अत्र ध्यानादिति भावप्रधानो निर्देशः । उपासनविशेषस्येति शेषः । चशब्दोऽनुक्तसमुच्चये, विरोधाभावसमुच्चये चेति भावेन सप्रमाणकं सूत्रं व्याचष्टे—स्मरणेति । स्मरणं विच्छेदेन मनोवृत्तिः । यथोक्तं तत्त्वप्रदीपे-स्मरणं विच्छेदेन मनसो वृत्तिरिति । स्मरणेति भिन्नपदं, लिङ्गव्यत्ययः छान्दसः । लुप्तविभक्तिको वा निर्देशः । उपासनमिति शेषो वा । चस्समुच्चये । एवकारो न्यूनसङ्ख्याव्यवच्छेदकः । तथा च उपासनं स्मरणोपासनं ध्यानात्मकं चेति द्विधैवेत्यर्थः । 'सर्वदा' स्थितिगत्यासनादिष्वपि । ध्यानोपासनमिति कर्मधारयः । 'आसने' उपवेशने सत्येव । योग्यमित्यनुषज्यते ॥

( ३ ) ध्यानस्वरूपप्रदर्शनपूर्वकं तस्यासनसापेक्षत्वमन्वयव्यतिरे

आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ।
स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।
स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः ।
इति नारायणतन्त्रे । अतो ध्यानत्वाच्च ॥ ८ ॥

( ४ ) सू—ॐ ॥ अचलत्वं चापेक्ष्य ॥ ॐ ॥ ९ ॥

अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् ।

---

काङ्क्ष्यामुपपादयति—नैरन्तर्यमित्यादिना ॥ नैरन्तर्यमविच्छेदः । 'तत्' ध्यानम् । तुशब्दोऽवधारणार्थः । आसीनस्यैवेत्यन्वेति । तद्व्यावर्त्यमाह—नेति । निद्रया शयानस्येत्यन्वयः । गच्छत इति षष्ठी । वाशब्दो विकल्पार्थः । अपिः समुच्चये । कुतो नेत्यत आह—विक्षेपस्येति । मनोविक्षेपस्येत्यर्थः । एवकारसम्भवादेवेत्यन्वेति । तर्हि सुशकेन सार्वकालिकेन स्मरणेनैवालं, किं ध्यानेनेत्यत आह—स्मरणादिति । 'परमं' अधिकं 'तत्र' आधिक्यविषये । नारायणतन्त्र इति । यतोऽभिहितमिति शेषः । ध्यानत्वादिति । तस्य उपासनस्येति शेषः । चशब्दः आसनस्यावश्यकत्वमविरोधश्चेति साध्यसमुच्चये । तथा चेत्थं योजना—यतः उपासनं स्मरणं ध्यानात्मकमिति द्विधा भवति । यतश्च स्मरणोपासनं सर्वदा योग्यम् । यतश्च सर्वदोपासनविधिः सर्वदोपासनं कुर्वन्नित्युक्तिश्च तद्विषयो भवतीति शेषः । यतो ध्यानं मनोवृत्तेर्नैरन्तर्यं उपासनविशेषः । तच्चासनाभावे चित्तविक्षेपप्राप्तेरासने सत्येव युज्यते । यतश्च स्मरणात् ध्यानमधिकमिति नारायणतन्त्रेऽभिहितम् । अतस्तस्यासनसापेक्षतयोच्यमानस्योपासनस्य ध्यानत्वात्तद्रूपत्वान्नासननियमसदोपासनयोर्विरोधः । अत एव ध्यानस्यासनमन्तरेणासम्भवादासनस्यावश्यकत्वं च सिध्यतीति । अत्र सर्वत्र विषयानुक्तिः प्रकृतिसिद्धत्वात्परमात्मा हि प्रकृतः ॥

( ४ ) ननु ध्यानार्थमपि नासनमावश्यकम् । न चैवं चित्तविक्षेपापरिहारः । इन्द्रियाणां विषयेभ्य उपसंहाररूपप्रत्याहारादिना चित्तविक्षेपपरिहारादित्याशङ्क्यां परिहरत्सूत्रं पठति—अचलत्वं चेति ॥ अत्र मनसो देहस्य भवतीति पदत्रयमध्याहार्यम् । सूत्रपदानामावृत्तिश्च । आसीन इत्यनुवर्तते । उपासनं विशेषतः कुर्यादिति च प्रकरणाल्लभ्यते । अचलत्वमिति प्रथमान्तं द्वितीयान्तं च । साधनसमुच्चये चशब्दः । यद्वा—तत्त्वप्रदीपरीत्याऽनिद्रत्वं चकारार्थः । तथा च यतो मनसः 'अ

चलने तु शरीरस्य चञ्चलं च मनो भवेत् ॥ इति ब्र
ह्माण्डे ॥ ९ ॥

( ५ ) सू—ॐ ॥ स्मरन्ति च ॥ ॐ ॥ १० ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ इत्यादि॥

---

चलत्वं ' विक्षेपाभावो न केवलं प्रत्याहारादिना भवति, किन्तु देहस्या चलत्वं चापेक्ष्य भवति । देहस्याचलत्वं चासनमपेक्ष्य भवति । अत आसीन एवोपासनं कुर्यादिति सूत्रवृत्तिमाभिप्रेत्य सूत्रार्थे स्मृतिमुदाहरति—अचलमिति । 'चेत्' यदि अचालनमचलनं स्यादित्युभयत्र सम्बध्यते । चोऽन्वयव्यतिरेकसमुच्चये । अपिः धर्मिसमुच्चये । तुः विशेषे । हिः प्रसिद्धौ । ब्रह्माण्ड इत्यनन्तरं सूत्रार्थोऽभिहित इति शेषः ॥

( ५ ) स्मृतिभिरपि आसनस्यावश्यकत्वं समर्थयत्सूत्रमुपन्यस्य ताः स्मृतीरुदाहरति—स्मरन्ति चेति ॥ कृष्णादयोऽपि स्वयमेतमर्थं बुद्ध्वा तद्विषये ' समं काय ' इत्यादिग्रन्थं कुर्वन्तीति सूत्रार्थः । यथोक्तं भागवततात्पर्ये-'स्मरणं' ग्रन्थकृतिः 'स्मरन्ति च' इत्यादेरिति । 'समम् ' इति गीतास्मृतेरयमर्थः—आसने उपविश्य ' कायशिरोग्रीवं ' कायश्च शिरश्च ग्रीवा चेति द्वन्द्वस्तत एकवद्भावः । तत् समं यथा भवति तथा धारयन् अत एवाचलं धारयन् ' स्थिरः ' स्थिरमनाः अचञ्चलमना भूत्वा स्वकीयनासिकाग्रमेव सम्प्रेक्ष्य ' दिशो ' दिगवस्थितविषयान् ' अनवलोकयन् ' अपश्यन् ' अथात्मविशुद्धये ' आत्मनः स्वस्य पापनिवृत्त्यर्थमानन्दवृद्ध्यर्थं वा समाधियोगं ' युञ्ज्यात् ' कुर्यादिति । इत्यादीति । आदिशब्देन स्मृत्यन्तराणि गृह्यन्ते । अत एव सूत्रे बहुवचनम् । इत्यादि स्मरन्तीत्यन्वयः । ' संप्रेक्ष्य नासिकाग्रं स्वम् ' इत्यनेन दृष्टेरचलत्वं चापेक्ष्य आसीनो भवेदिति पूर्वसूत्रस्य, यतस्तथा स्मरन्तीत्युत्तरसूत्रस्य चार्थान्तरमुक्तं भवति । यद्यप्यस्यां स्मृतावासनस्यावश्यकत्वं नोक्तम् । तथाऽप्यस्याः 'उपविश्यासने युञ्ज्यात् ' इत्यनेन सम्बन्धाद्विवक्षितार्थसिद्धिः । न च 'उपविश्यासने ' इत्यस्यैव विषयत्वात्कथं प्रमाणत्वेनोपन्यास इति वाच्यम् । तत्रोक्तायास्समतया धारणार्थत्वादिति युक्तेरेवात्र प्रमाणत्वेनोपन्यासात् ॥

(६) सू—ॐ ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ॐ ॥११॥
देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् ।

(७) तमेव देशं सेवेत तं कालं तामवस्थितिम् ।
तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥

---

(६) नन्वासनादिनियतिवत् देशकालादिनियतिरप्यङ्गीकार्या ।
पर्वताग्रे नदीतीरे.... इति स्मृतेः ।
ब्राह्मे मुहूर्ते उत्थाय वार्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥

इति भागवतवचनात् ।

ब्राह्मे मुहूर्ते उत्थाय धर्मार्थानुपचिन्तयेत् ।

इति मनुस्मृतेश्चेत्याशङ्कां निवारयत्सूत्रं पठति—यत्रेति ॥ अत्र ध्यानादित्यस्य षष्ठ्यन्ततया विपरिणामेन अनुवृत्ति भवतीति शेषं चाभिप्रेत्य यत्रेति प्रतिज्ञांशं व्याचष्टे—देशेति । यत्र तत्रेत्यनुवादः, देशकालावस्थादिष्विति व्याख्यानम् । अवस्था आसनम् । आदिशब्देन भोगो गृह्यते । 'एकाग्रता' एकविषयता । ध्यानस्येति शेषः । स्थातव्यमित्येतत्तस्मिन्नेव देशे स्थातव्यं तस्मिन्नेव काले ध्यातव्यं तदेवासनं ग्राह्यं तदेव भोग्यं भोक्तव्यमिति सर्वेषां स्मृत्युक्तानामुपलक्षकम् । अनेन सूत्रे तत्रेति सावधानं ध्यानं कार्यमिति शेष इत्युक्तं भवति ॥

(७) अविशेषादिति हेत्वंशस्य स्मृत्यैव व्याख्यानात्तमव्याख्याय समग्रसूत्रार्थे स्मृतिमाह—तमेवेति ॥ अत्र देशकालादीनां किमासनादिवत् ध्यानोपयोगितयाऽऽवश्यकत्वम्, उत पृथगेव ज्ञानोपयोगित्वादिति विकल्प्याद्यस्य दूषणमाह-तमेवेति । अवस्थितिरासनम् । अत्र हेतुमाह—न हीति । यतः 'देशादिभिः' नियतदेशकालादिना 'कश्चिद्विशेषः' अतिशयो नास्ति ध्याने इति शेषः । अतस्तदेव देशादिकं सेवेत न तु नियतमित्यर्थः । द्वितीयस्य दूषणमाह—न हीति । अस्मिन् पक्षे ज्ञान इति शेषः । तथा च ज्ञाने देशादिभिः केवलैर्न कश्चिद्विशेष इत्यर्थः । तत्र हेतुः—मनःप्रसादनार्थमिति । प्रसादनं तृप्तिरचाञ्चल्यं वा । तदर्थं तत्संपादनार्थमित्यर्थः । 'हि' यतः 'चिन्तना' मार्गणं यद्वा—'चिन्तना' विचारः योगशास्त्र इति शेषः । उक्तं हि तत्त्वप्रदीपे—या तु योगशास्त्रे हरिक्षेत्रदिनादिदेशकालविशेषादिचि

न हि देशादिभिः कश्चिद्विशेषस्समुदीरितः।
मनःप्रसादनार्थं हि देशकालादिचिन्तना ॥ इति वा
राहे ॥ ११ ॥

---

७, अधिकरणम् ॥

( १ ) सू—ॐ ॥ आ प्रायणात्तत्रापि हि दृष्टम् ॥ ॐ ॥ १२ ॥
यावन्मोक्षस्तावदुपासनादि कार्यम् ।

---

न्ता क्रियते सा हरेर्विशेषाभिव्यक्तिहेतुत्वेन तेषां मनःप्रसादकरत्वेनै व, नान्यविशेषहेतोरिति । अतोऽन्यथासिद्धत्वात् न देशादेः ज्ञानोप योगित्वमिति भावः। न च देशकालादिवदासनस्याप्यनियतत्वे 'आसी नः' इति तन्नियमोक्तिविरोध इति वाच्यम्। वीरासनमेव पद्मासनमेव ध्यानोपयोगीति विशेषनियमस्यैवात्र निषेधात् । उपवेशनार्थमासन सामान्यनियमस्यानिषेधात् । तस्यैव पूर्वमभिहितत्वात् । न च 'पर्व ताग्रे' इत्याद्युक्तिविरोधः। प्रायेण मनःप्रसादनार्थत्वेन तदुक्तिसंभवा त् । वाराहे इत्यनन्तरमुक्तत्वादिति शेषः । अस्य पूर्वेणान्वयः ॥ ६ ॥
॥ इति आसीनाधिकरणम् ॥

---

७, अधिकरणम् ॥

( १ ) अत्राधिकरणे ध्यानस्य प्रायणान्तत्वं समर्थ्यते । साधनस्य कार्यपर्यन्तमेवानुष्ठेयत्वात् ज्ञानपर्यन्तमेव ध्यानमावश्यकं, न तु मुक्ति पर्यन्तमपीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—आ प्रायणादिति॥ अत्राङ् मर्यादायाम् । टीकारीत्या प्रायणं चरमशरीरोत्क्रमणं, तत्त्वप्र दीपरीत्या तु प्रायणं प्रकर्षेणायनं नारायणं प्रति गमनं मोक्षस्तत्पर्यन्त मित्यर्थ इत्याशयेनाप्रायणादित्यंशं व्याचष्टे—यावन्मोक्ष इति । उपा सनादि कार्यमिति शेषोक्तिः । कार्यमिति सावधारणं, मुमुक्षूणामिति शेषः । उपासनं ध्यानम् । आदिपदेन श्रवणादिर्गृह्यते । तत्त्वप्रदीपरी त्याऽर्चनादिकं वा । तत्रायं विवेकः—ज्ञानात्पूर्वं तावच्छ्रवणादियुत ध्यानं कर्तव्यं, आनन्दातिशयार्थं ज्ञानान्तरमपि प्रायेण केवलं ध्यानं कर्तव्यम् । न च श्रवणादिनाऽपि तत्सिद्धिः । ध्यानस्य प्रधानसाधनत्वे न तदयोगात् । सम्यक् ध्यानाभावे श्रवणादीति ॥

( २ ) 'स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्या यीत' (प्र. ५-१.) इति हि श्रुतिः।

( ३ ) 'सर्वदैनमुपासीत यावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासते' इति सौपर्णश्रुतिः।

( ४ ) शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता।
ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते ॥

---

( २ ) ननु ध्यानस्य ज्ञानफलकत्वेन तत्पर्यन्तमनुष्ठानेऽपि तदनन्तरमपि मुक्तिपर्यन्तं तदनुवर्तनीयमिति कुतो ज्ञायत इत्यतो ज्ञानात्पूर्वं ध्यानस्य कर्तव्यत्वे विवादाभावात्तत्सिद्धवत्कृत्य तदुत्तरं तस्य कार्यत्वे श्रुतिप्रमाणसूचकतया दृष्टं हीत्येतद्व्याचष्टे—स इति ॥ 'हि' यतः इति षट्प्रश्नश्रुतिरस्तीत्यर्थः। अस्य यावन्मोक्ष इत्यनेनान्वयः। हे 'भगवन्' पूज्य 'एतत्' एतेषु ज्ञानिमनुष्येषु स यः कश्चित् 'प्रायणान्तं' प्रायणपर्यन्तं यावच्छरीरादुत्क्रमणं तावदिति यावत्। 'ओंकारं' ओमित्याक्रियमाणं तद्वाच्यं परमात्मानं 'अभिध्यायीत' प्रणवेन सर्वदा हरिं चिन्तयेदिति यावत्। 'सः' पुरुषस्तेन ध्यानेन कतमं लोकं प्राप्नोतीति श्रुत्यर्थः। पिप्पलादं प्रति शैब्यवाक्यमेतत् ॥

( ३ ) कैमुत्येनापि ध्यानस्य मुक्तिपर्यन्तत्वं साधयितुं सूत्रखण्डः—तत्रापीति। तत्रापिः कैमुत्ये। तथा च मुक्तावपि ध्यानं कुर्वन्ति सन्तः, किमु ततः पूर्वमिति तस्यासिद्धिपरिहारार्थमपि दृष्टं हीत्यंशो योज्य इत्याशयेन तत्सूचितश्रुतिं दर्शयति—सर्वदेति ॥ ज्ञानात्पूर्वं तदुत्तरं चेत्यर्थः। अस्योत्तरावधिमाह—यावद्विमुक्तिरिति। एवं कैमुत्योपयुक्तसाध्यमभिधाय तद्धेतुं कैमुत्यमाह—मुक्ता अपीति। अपिशब्दः कैमुत्ये। हिशब्दो यत इत्यर्थे। श्रुतिश्चेत्यन्वयः। चः श्रुतिद्वयसमुच्चये। यत इति शेषः। अस्यातो यावन्मोक्ष इति साध्यवाक्येनान्वयः ॥

( ४ ) ज्ञानपर्यन्तं श्रवणादियुतं ध्यानं कार्यमित्यत्र स्मृतिं चाह—शृणुयादिति ॥ अज्ञानशब्देन तन्निवृत्तिर्लक्ष्यते। तावदिति शेषः। एवमुत्तरत्रापि। मतिर्मननम्। 'अयुक्तता' विपर्ययः। युक्तायुक्तत्वसंशयो वा। एतदपि निवृत्त्युपलक्षकम्। कार्येति कार्यमिति च क्रमेण शेषः। तत्त्वस्येति सर्वत्रान्वीयते। श्रवणादेरिव ज्ञानस्याप्यावृत्तावेव मोक्षो न त्वावृत्त्यभाव इति न वाच्यमिति भावेनाह—नेक्षेति। 'ईक्षा' ब्रह्मदृष्टिः 'क्वचन' कादाचित्काऽपि 'न बाध्यते' न मोक्षासाधिका भ

दृष्टतत्त्वस्य च ध्यानं यदा दृष्टिर्न विद्यते ।
भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा ॥
आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परम् ॥ इति ब्र
ह्माण्डे ॥ १२ ॥

---

वति तत्साधिकैव भवतीत्यर्थः । ज्ञानोत्तरं श्रवणादिरहितं केवलध्या नं प्रायेण कर्तव्यमेवेत्यत्रापि प्रमाणत्वेन स्मृतिशेषमुदाहरति—दृष्टत त्त्वस्येति । प्रायेण केवलमित्यध्याहार्यम् । दृष्टं साक्षात्कृतं तत्त्वं ब्रह्मा ख्यं येन स तथोक्तः तस्येत्यर्थः । न केवलं जिज्ञासोरिति चशब्दार्थः । ध्यानमित्येतदनन्तरमपि अनन्तकालीनेति पदं विपरिणामेन सम्बध्य ते । तथा च 'दृष्टतत्त्वस्य' पुंसः 'परमे ब्रह्मणि' विषये प्रायेण केव लं ध्यानमनन्तकालीनं कर्तव्यमेव । न केवलं ध्यानमनन्तकालीनं, कि न्तु 'स्फुटा' निरुपाधिका भक्तिश्चानन्तकालीना अपेक्षिता । तत्र हे तुः—'यदा' यस्मात् दृष्टिः फलत्वेन न विद्यतेऽसिद्धत्वादिति । फल त्वे ह्यनन्तकालीनत्वं न स्यादिति भावः । अथ वा-अपरोक्षज्ञानकाले वासनामयध्यानायोगादाह—यदेति । 'यदा' यस्मिन् काले 'दृष्टिः' ब्रह्मदर्शनमित्यर्थः । यद्वा—'यदा' यस्य 'दृष्टिर्न विद्यते' तद्विच्छेदो भवति तदा तस्यापाकरणार्थं पुनःपुनः दृष्ट्यर्थं दृष्टतत्त्वस्यापि मध्येम ध्ये ध्यानमपेक्षितमित्यर्थः । उक्तं हि तत्त्वप्रदीपे--दर्शनवतोऽपि यदा तद्विच्छेदस्तदा तस्यापकरणार्थं तस्य परमस्य ध्यातुर्विरिञ्चलोकं नी तस्य ततोऽप्युपदेशं प्राप्य पुनरभ्यस्यतः परं पश्यतोऽप्यामोक्षादुपा स्तिकर्तव्यतायां प्रमाणदर्शनादिति । ननु ज्ञानोत्तरमपि निरवधिकध्या नं किं विहितत्वात्क्रियते अन्यथा वा? । नाद्यः—निरवधिकध्यानस्य वि हितत्वेन कार्यत्वे मोक्षेऽपि तथाकार्यत्वापत्त्या मुक्तस्य विधिबन्ध वर्जितस्वरूपमोक्षविरोधात् । न द्वितीयः—मोक्षात्पूर्वं करणानुपपत्ते रित्यत आह—आ विमुक्तेरिति । मोक्षपर्यन्तमित्यर्थः । नित्यं विधिरि त्यन्वयः । विधिविहितत्वेन करणम् । भक्तिध्यानयोरिति शेषः । 'ततः परं' मुक्तेरनन्तरं 'स्वत एव' स्वभावेनैव करणमिति शेषः । ब्रह्मा ण्डे विवक्षितार्थ उक्त इति शेषः । न केवलं श्रुतिद्वये इति चार्थः ॥७॥

॥ इति आप्रायणाधिकरणम् ॥

८. अधिकरणम् ॥

(१) सू—ॐ ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ॐ ॥ १३ ॥

ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च । 'तद्यथा पुष्करपलाश आपो न लिप्यन्त एवमेवंविदि पापं कर्म न लिप्यते' ( छा. ४-१४-३. ) 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयते एवं हैवास्य सर्वे पाप्मानः प्रदू

८. अधिकरणम् ॥

(१) अत्राधिकरणे प्रासङ्गिकं समाप्य कर्मक्षयाख्यफलसिद्धिस्साध्यते । प्रागापादितकर्मणां भावात् न ज्ञानेन मोक्षस्सम्भवतीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—तदिति । अत्र सम्भवत्येव ज्ञानेन मोक्ष इति साध्याध्याहारं, तद्धेतुत्वेन तदधिगम उत्तरपूर्वाघयोरित्यस्यान्वयं, तत्साधकतया तद्व्यपदेशादित्यस्य प्रवृत्तिं चाभिप्रेत्य सूत्रं व्याचष्टे—ब्रह्मदर्शन इति ॥ निमित्तसप्तम्येषा । ब्रह्मदर्शनादित्यर्थः। अनेन सूत्रे तच्छब्दो ब्रह्मदृष्टिरिति प्रकृतब्रह्मपरामर्शी । अधिगमो ज्ञानम्, निमित्तार्थे सप्तमीत्युक्तं भवति । 'उत्तराघस्य' ज्ञानोत्तरकालीनपापस्याश्लेषः फलतः । पूर्वस्येत्यनन्तरमघस्येति बुद्ध्या विवेकेनानुषज्यते । अप्रारब्धस्येति शेषः । 'विनाशः' स्वरूपतः । चः समुच्चये । भवति यत इति शेषः । अस्याध्याहृतसाध्येनान्वयः । उत्तराघस्याश्लेषो नाम नानन्दह्रासकरत्वाभावः, किन्तु पारलौकिकज्ञानोत्तरपापफलनरकादिश्लेषाभावरूपोऽलेपः, तथा ऐहिकज्ञानोत्तरपापफलाशुचित्वासम्भाष्यत्वादिसंश्लेषाभावश्चेति द्रष्टव्यः । यथोक्तं—

ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ॥

इति अनुव्याख्यानसुधयोः । कुत एतदुभयं ज्ञानाद्भवतीति, तथासति 'नाभुक्तम्' इति स्मृतिविरोधापातात् । न च तस्या अज्ञानिकर्मविषयत्वं, बाधकाभावादित्यतस्तद्व्यपदेशादित्यंशं तस्मिन् व स्य तयोरित्यावृत्त्यभिप्रायेण व्याचष्टे—तद्यथेति । इतीति । एवंरूपे छन्दोगश्रुतिद्वये इत्यर्थः । तद्व्यपदेशादिति । तस्य ज्ञानिनस्तयोरश्लेषविनाशयोरुक्तत्वादित्यर्थः । तथा च श्रुतिरेव बाधिकेति भावः । श्रुत्यर्थस्तु—'तत्' तत्रार्थे वक्ष्यमाणदृष्टान्तो 'यथा पुष्करपलाशे' पद्मप

यन्ते ' ( छा. ५-२४-३. ) इति तद्व्यपदेशात् ॥ १३ ॥

( २ ) सू—ॐ ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ ॐ ॥ १४ ॥

पुण्यस्याप्येवमसंश्लेषः पाते । तुशब्दोऽनुत्थानवाची ।

---

त्रे ' एवं ' तथा ' एवंविदि ' उक्तप्रकारेण ब्रह्मज्ञानिनि पापं कर्म ' न श्लिष्यते ' तत्फलं नरकादिकं न प्राप्नोतीत्यर्थः । इषीका तृणविशेषः, सा च तूलमंशुश्चेति द्वन्द्वैकवद्भावे चेषीकातूलमिति भवति । ' इष्टकेषीक ' इति ह्रस्वाभावश्छान्दसः । ' प्रोतं ' प्रविष्टं ' प्रदूयते ' प्रदह्यते एवमेव ' अस्य ' ज्ञानिनः ' सर्वे ' ज्ञानोत्तरकृताः ' पाप्मानः ' पापानि ' प्रदूयन्ते ' स्वरूपतो नश्यन्तीति ॥

( २ ) एवं ब्रह्मज्ञानिनो मुक्तिसिद्ध्यर्थं ज्ञानादेवाघविनाशाश्लेषावुक्त्वा तत्समानन्यायत्वाद्भगवद्द्वेषिपुण्यस्यापि मिथ्याज्ञानादेव विनाशाश्लेषौ तमस्सिद्ध्यर्थं वदत्सूत्रमुपन्यस्यति—इतरस्यापीति ॥ अत्रेतरस्येत्ययंशब्दस्तन्त्रावृत्त्या प्रकृतज्ञानीतरब्रह्मद्वेषिपरः अघेतरपुण्यपरश्च । अपिस्समुच्चये । एवंशब्दस्तथार्थे । सर्मित्युक्तिः ज्ञान्यघस्य मुक्तावानन्दह्रासकरत्वमिव न द्वेषिपुण्यस्य तमसि सुखलेशरूपकार्यकरत्वमिति द्योतनाय । अत एव अश्लेष इति प्रकृतेऽपि पुनरारम्भः । पात इति सामीप्ये तादर्थ्ये वा सप्तमीत्यभिप्रेत्य सूत्रं व्याचष्टे—पुण्यस्यापीति । भगवद्द्वेषीत्यादावुपस्कार्यम् । ज्ञानिद्वेषिणोः पुण्यपापयोश्च समुच्चयेऽपिशब्दः । एवमित्यतः प्राक् यथा ज्ञानिपापस्येति लभ्यते । एवंशब्दस्तथार्थः । तथा च ' पाते ' प्रत्यासन्ने तमःपतनहेतुभूतमिथ्याज्ञाने पूर्णे सति तमःप्राप्त्यर्थमिति शेषः । यद्वा—पातार्थे यथा ज्ञानिपापस्यासंश्लेषः ' एवं ' तथा द्वेषिपुण्यस्याप्यसंश्लेषः । उपलक्षणमेतत् । विनाशश्चावश्यक इति योजना । पात इत्यनेन विनाशाश्लेषानङ्गीकारे पातो न स्यादिति हेतुः सूचितः । तेन सूत्रे न हेत्वनुक्तिदोषः । ननु पाते प्राप्तेऽपि तदनुभवानन्तरं पुण्यभोगसम्भवात् किं तदश्लेषादिनेत्याशङ्क्य तदुत्तरत्वेन तुशब्दं व्याचष्टे—तुशब्द इति । अनुत्थानं तमोऽनुत्थानम् । अनेन—यथा ज्ञानिनः ' एवं पाते तु ' अनुत्थानतमःपाते प्रत्यासन्ने पातार्थे ' इतरस्य ' ब्रह्मद्वेषिणोऽपि ' इतरस्य ' पुण्यस्यापि असंश्लेषो विनाशश्चावश्यकः, अन्यथा पातो न स्यादिति सूत्रार्थ उक्तो भवति ॥

( ३ ) यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।
एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम् ॥ इति चा
ग्नेये ॥ १४ ॥

( ४ ) सू—ॐ ॥ अनारब्धकार्ये एव तु पूर्वे तदव
धेः ॥ ॐ ॥ १५ ॥

अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः ।

( ५ ) 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते'

---

( ३ ) सूत्रार्थे स्मृतिं चाह—यथेति ॥ 'मुक्तस्य' जीवन्मुक्तस्य प्रत्यासन्नमुक्तस्येति वा । तुशब्दः सौत्रसंशब्दार्थको विशेषार्थः । स च प्रागेवोक्तः । 'विकर्मणो' ज्ञानोत्तरकृतस्य तत्पूर्वस्याप्रारब्धस्य च पापकर्मणः तज्जन्याधर्मस्येति यावत् । अश्लेषो विनाशश्च यथा आव श्यकः 'एवं' तथा 'ध्रुवं' निश्चितं 'तमसि पततः' प्रत्यासन्नपतन वतोऽपि 'सुकर्मणः' पुण्यकर्मणस्तज्जन्यधर्मस्य अश्लेषो विनाशश्चाव श्यक इति योजना । ध्रुवमित्यनेन सौत्रतुशब्दार्थ उक्तः । द्वेषिपुण्य स्यासंश्लेषो नाम इह लोके शुचित्वादिसम्पादकत्वाभावः । परत्र च स्वर्गादिसम्पादकत्वाभावरूपोऽलेपः। इति चाग्नेय इति । सूत्रार्थो दर्शि त इति शेषः । न केवलमस्माभिरिति चार्थः ॥

( ४ ) ननु ब्रह्मज्ञानिद्वेषिणोः ज्ञानादिनैव पापपुण्यक्षये ज्ञानाद्युदय एव सद्यो मोक्षादिप्रसङ्ग इत्याशङ्कां परिहरत्सूत्रं पठति—अनारब्ध कार्ये इति ॥ अत्र न ज्ञानानन्तरमेव मुक्त्यादिप्रसङ्गदोष इति साध्या ध्याहारं, तत्रानारब्धकार्ये एव पूर्वे इत्यस्य यतश्शब्दशिरस्कस्य हेतु त्वं चाभिप्रेत्य सूत्रं व्याचष्टे--अनारब्धेति । यस्य पापस्य कार्यं दुःखं यस्य पुण्यस्य कार्यं सुखं च भोक्तुमारब्धं तदारब्धमित्युच्यते । न आरब्धमनारब्धं, अनारब्धे कार्ये ययोस्ते तथोक्ते । पूर्वे इति । ज्ञान मिथ्याज्ञानपूर्वकालीने इत्यर्थः । अस्य विशेष्यमाह--पुण्येति । पुण्य पापे एवेत्यन्वयः । न तु सर्वपुण्यपापे इत्येवशब्दार्थः । विनश्यतः इति सूत्रे शेषोक्तिः ॥

( ५ ) ननु ज्ञानानन्तरं प्रारब्धप्रतिबन्धकसद्भावः कुतः कल्प्यत इ त्यतस्तदुत्तरत्वेन तदवधेरित्यंशं श्रुत्युपलक्षकतया व्याचष्ट—तस्ये ति ॥ इतीत्यनन्तरं श्रवणादिति शेषः । तदवधेरिति भावप्रधानः । त दिति भिन्नं पदं समस्तं च श्रुतिस्थपरामर्शकोऽयम् । तथा च तस्य

( छा. ६-१४-२.) इति तदवधेः ।

( ६ ) तुशब्दः स्मृतिद्योतकः ।
यदनारब्धपापं स्यात्तद्विनश्यति निश्चयात् ।
पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः ।
द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः ॥

( ७ ) तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्र चित् ।
आरब्धयोश्च नाशस्स्यादल्पयोः पुण्यपापयोः ॥

---

मोक्षस्य तदवधित्वस्य प्रारब्धकर्मनिवृत्त्यवधिकत्वस्य 'तस्य' इत्यादौ श्रवणादित्यर्थः । तथा च ज्ञानोत्तरमपि कर्मसद्भावो ज्ञायत इति वाक्यशेषः । 'तस्य' अपरोक्षज्ञानिनः 'तावदेव' तावानेव 'चिरं' मोक्षविलम्बः । कियत्कालं ? यावत् ज्ञानी प्रारब्धेन कर्मणा 'न विमोक्ष्ये' न विमोक्ष्यते । 'अथ' कर्मनिवृत्त्यनन्तरं ब्रह्म 'सम्पत्स्यते' मुक्तो भवतीति छन्दोगश्रुत्यर्थः । अत्र विमोक्ष्ये इति प्रथमपुरुषः, मुचेः कर्मणि लृट्प्रत्यये विमोक्ष्यते इति रूपं, तस्य व्यत्ययेन विमोक्ष्येतेत्यर्थः। तत्र 'लोपस्त आत्मनेपदेषु' इति तलोपः । सम्पत्स्यत इति प्रथमपुरुषे तु तकारस्सन्नेव । तत्त्वप्रदीपे तु न विमोक्ष्ये इत्यत्र पुरुषव्यत्यय एव, न लार्थव्यत्यय इत्युक्तम् ॥

( ६ ) नन्वस्यां श्रुतौ प्रारब्धकर्मसद्भावो न स्फुटं प्रतीयते इत्यतः प्रयुक्तस्य तुशब्दस्य तदवधेरित्यनेनान्वयं चार्थत्वं चाभिप्रेत्य तद्व्याचष्टे—तुशब्द इति । स्मृतिद्योतक इति । विशेषबोधकस्मृतिसमुच्चायक इत्यर्थः । तां स्मृतिं पठति—यदिति । यथा 'निर्द्वन्द्वं' समाधिकशून्यं ब्रह्म 'पश्यतो' दृष्टवतो 'यदनारब्धपापं' प्रारब्धकार्यकभिन्नं पापं स्यात्तन्निश्चयात् 'विनश्यति' विनश्यत्येव । एवं ब्रह्म 'हीनं' गुणाकृतिहीनत्वेन हीनजीवैक्येन च 'पश्यतो' जानतो ब्रह्म 'द्विषतो वा' द्विषतश्च 'पुण्यनाशो' मिथ्याज्ञानपूर्वकालीनधर्मनाशो भवेदिति योजना । केचित्तु—तमोयोग्यानामपि ब्रह्मसाक्षात्कारोऽस्त्येव, किन्तु धर्मिणि प्रत्यक्षे सति तत्र हीनत्वं दोषांश्च पश्यन्ति रामकृष्णादौ छेदादीनि च । तथा च पश्यत इत्यस्य यथाश्रुत एवार्थ इत्याहुः ॥

( ७ ) उक्तस्यापवादमाह—तस्यापीति ॥ द्वेषिपुण्यस्यापीत्यर्थः । न केवलं ज्ञानिपापस्येत्यपेरर्थः । ज्ञानिद्वेषिसम्बन्धिनोऽपि पुण्यस्य पा

इति नारायणतन्त्रे ॥ १५ ॥

(८) सू—ॐ ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ॐ ॥ १६ ॥

अग्निहोत्राद्यपि तु मोक्षानुभवार्थैव। तुशब्दाद्ब्रह्मदर्शनवतः।

---

पस्येति वा 'विनाशः' स्वरूपतः 'कुत्रचित्' काले देशे च। अत एव परमद्वेषिणोऽपि प्रागधःपातात् कदाचिद्भोगान् भुञ्जते इति भावः। अपवादस्यापवादमाह—आरब्धयोरिति। आरब्धकार्ययोरल्पयोः पुण्यपापयोः 'नाशः' फलह्रासरूपोपमर्दः स्यादित्यर्थः। भोगकालस्याल्पत्वादल्पयोरित्युक्तिः॥

(८) ननु ज्ञानिकृतपुण्यस्य पूर्वोत्तरस्य विनाशाश्लेषौ विद्येते न वा?। आद्ये पूर्वसूत्रे अघशब्दवैयर्थ्यम्। द्वितीये मोक्षासिद्धिः, पुण्यस्यापि बन्धकत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—अग्नीति॥ अत्र किमकाम्यपुण्यविषयोऽयं विकल्पः? उत काम्यपुण्यविषयः?। आद्ये तस्य नाशाश्लेषौ न स्त इति समाधानं, न चैवं बन्धानिवृत्तिरिति साध्योपस्कारं चाभिप्रेत्य तत्र हेतुतया—अग्निहोत्रादि तु तत्कार्यायैवेत्यंशं व्याचष्टे—अग्निहोत्राद्यपीति। ज्ञानपूर्वोत्तरकालीनाकाम्याग्निहोत्रादीत्यर्थः। आदिशब्देन सन्ध्योपासनश्राद्धादिरूपं नित्यनैमित्तिकपुण्यं गृह्यते। तुशब्दव्याख्यारूपादपिशब्दात् टीकारीत्या ध्यानादि समुच्चीयते। यद्वा—तत्त्वप्रदीपरीत्या द्वेषिपापं गृह्यते। उक्तं हि तत्त्वप्रदीपे—अपिशब्दादितरस्य द्वेषिण इतरदपि इतरविशेषायैवेति गम्यत इति। मोक्षानुभवार्थैवेति। मोक्षफले विवक्षिते तद्धेतुब्रह्मापरोक्षानुभवायेत्यर्थः। यद्वा—मोक्षे आनन्दातिशयानुभवायेत्यर्थः। यतो भवतीति शेषः। न तु बन्धाय भवति, न वा कार्यमजनयित्वा नाशाश्लेषौ प्राप्नोतीत्येवकारार्थः। तत्त्वप्रदीपरीत्या तु मोक्षे आनन्दानुभवायेत्येक एवार्थः। उपलक्षणमेतत्। मिथ्याज्ञानपूर्वकालीनं तदुत्तरकालीनं च पापमन्यथाज्ञानकार्याय भवतीत्यपि द्रष्टव्यम्। तथैव तत्त्वप्रदीपोक्तेः। अनेन टीकारीत्या तत्कार्यायेत्येतत् तच्च तत् कार्यं चेति कर्मधारयमाश्रित्य प्रकृतब्रह्मज्ञानाख्यकार्यायेति, तस्य कार्यमिति तत्पुरुषमाश्रित्य तस्य ज्ञानस्य कार्ये मोक्षेऽनुभवायेति द्वेधा, तत्त्वप्रदीपरीत्या त्वेकधा व्याख्यातं भवति। पूर्वं ज्ञानिद्वेषिणोरनुवृत्तत्वादत्राप्युभय

(९) 'स एनमविदितो न भुनक्ति यथा वेदो वाँ अननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' (बृ. ३-४-१५.) इति तद्दर्शनात् ॥१६॥

(१०) सू—ॐ ॥ अतोऽन्यदपीत्येकेषामुभयोः ॥ ॐ ॥ १७ ॥
मुक्तावनुभवकारणाद्यदन्यत्पुण्यमपि विनश्यति ।

---

सम्बन्धिपुण्यविषयमिदं वचनमिति शङ्कानिवर्तकतयाऽपि तुशब्दं व्याचष्टे—तुशब्दादिति । टीकारीत्या 'ब्रह्मदर्शनवतः' तद्योग्यस्येत्यर्थः । इति तमन्यस्माद्विशिनष्टीति शेषः । तथा च ब्रह्मदर्शनवतः 'अग्निहोत्रादि' तत्कृतमेवाग्निहोत्रादीत्यन्वयमभिप्रेत्य सूत्रकारः तुशब्देन द्वेषिणः सकाशात् ज्ञानिनं ब्रह्मदर्शित्वरूपव्यावर्तकधर्मेण विशिनष्टीत्यर्थः ॥

(९) ननु ब्रह्मदर्शिकृतस्यैव पूर्वोत्तरपुण्यस्य ज्ञानमोक्षानुप्रवेशेनाबन्धकत्वं कुत इत्याशङ्कापरिहारकतया तद्दर्शनादित्येतद्व्याचष्टे—स इति । इति दर्शनादिति । एवंरूपायां बृहदारण्यकश्रुतावुक्तार्थस्य 'दर्शनात्' उक्तत्वादित्यर्थः । अनेन तस्यां श्रुतौ विवक्षितार्थस्य दर्शनादिति सौत्रहेत्वर्थ उक्तो भवति । श्रुतिस्तु भाक्तनये व्याख्याता ॥

(१०) काम्यपुण्यविषय इति द्वितीयपक्षोत्तरं सूत्रमुपन्यस्यति—अत इति ॥ अत्रातश्शब्दपरामृश्यं दर्शयन् सूत्रं व्याचष्टे—मुक्तावनुभवकारणादिति । मुक्तौ साध्यायां तत्कारणीभूतो योऽपरोक्षानुभवः तत्कारणादित्यर्थः । यद्वा—मुक्तावतिशयानुभवकारणादित्यर्थः । अकाम्यादित्यनुक्त्वा एवमुक्तिः उक्तविधयाऽर्थद्वयलाभाय । यदिति श्रवणात्तदिति शेषः । तथा च अतो मुक्तावनुभवकारणात् ज्ञानपूर्वोत्तरकालीनाकाम्यादन्यद्यत्काम्यं पुण्यं तदपि नश्यति । न केवलं पापमित्यपेरर्थः । उपलक्षणमेतत् । न श्लिष्यते च । तत्र पूर्वं नश्यति उत्तरं न श्लिष्यत इति सूत्रांशो व्याख्यातो भवति । अतोऽन्यदपि काम्यं अतः प्रारब्धादिष्टाच्चान्यदेव नश्यति, न तु सर्वमित्यपि वृत्तिमुपेय तल्लब्धं विशेषमाह—अप्रारब्धमिति । अस्य पूर्वेणान्वयः । चरसमुच्च

अप्रारब्धमनभीष्टं च। तथा ह्येकेषां पाठ उभयोस्त्यागेन। 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' (शाट्यायन) इति।

(११) अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति।

---

ये। अत्रायं विवेकः—ज्ञानात्पूर्वतनं काम्यं कर्म द्विविधं प्रारब्धमप्रारब्धं च। तत्र प्रारब्धं न नश्यति। अप्रारब्धं द्विविधं इष्टमनिष्टं च। तत्रेष्टमपि न नश्यति अनिष्टमेव नश्यति। यद्यपि पुण्यकरणकाले सर्वमिष्टमेव। तथाऽपि ज्ञानकाले तदेव किञ्चिदिष्टं किञ्चिदनिष्टं भवति। यथा वक्तृत्वाद्यापादकमिष्टं ज्ञानानन्तरमपि तदिच्छायाः सत्वात्। राजत्वाद्यापादकमनिष्टं तस्य ज्ञानभक्त्यादिप्रतिबन्धकत्वेन ज्ञानिनः तदिच्छाया अभावात्, मा भूदिति विपरीतेच्छाभावाच्च। सप्तजन्मसु विप्रत्वापादकं चानिष्टम्। एवं मोक्षातिशयसाधनश्रवणादिसाधनादिप्रापकं पुण्यमिष्टं स्वर्गादिसाधनमनिष्टमिति आनन्दमालोक्तमपि द्रष्टव्यम्। एवमुत्तरकालीनमपि काम्यं करणानन्तरं इच्छाभावाभावाभ्यामिष्टमनिष्टं चेति द्विविधम्। तत्रेष्टस्य संश्लेषः अनिष्टस्य चाश्लेष इति। कुत एतदित्यत एकेषामुभयोरित्यंशं व्याचष्टे—तथा हीति। तथा हीत्युक्त्या इतिशब्दः प्रकारार्थो हेत्वर्थश्चेत्युक्तं भवति। 'एकेषां' सामशाखिनां पाठ इति शेषोक्तिः। 'उभयोः' पापकाम्यपुण्ययोः। तथेत्यस्य विवरणम्—त्यागेनेति। त्यागज्ञापकतयेत्यर्थः। सुहृदां पुण्यप्राप्त्युक्त्या ज्ञानिनस्तत्त्यागोऽवगम्यत इति भावः। इतिशब्दपरामृष्टां श्रुतिं दर्शयति—तस्येति। 'तस्य' ज्ञानिनः। यथेति शेषः। 'दायं' पित्रार्जितं द्रव्यं 'उपयन्ति' प्राप्नुवन्ति। तथा विष्णुभक्ताः 'सुहृदः' प्रत्युपकारमनपेक्ष्योपकर्तारः 'साधुकृत्यां' अप्रारब्धमनभीष्टं काम्यं पुण्यमेव उपयन्ति, न तु अकाम्यं प्रारब्धमिष्टं च। अकाम्यस्य ज्ञाने सुखातिशये च विनियुक्तत्वात् प्रारब्धस्य भोक्तव्यत्वात् इष्टनाशस्यापुरुषार्थत्वात्। 'पापकृत्यां' पापकर्मजनिताधर्मं उपयन्तीत्यर्थः। इत्येकेषां पाठोऽस्तीत्यन्वयः। अनेन—'उभयोः' पापकाम्यपुण्ययोः 'त्यागेन' त्यागज्ञापकतया 'इति सुहृदः' इत्येवंरूपः एकेषां पाठोऽस्तीति हेतोः अतः 'अन्यत्' काम्यपुण्यमपि नश्यति न श्लिष्यते चेति सूत्रार्थ उक्तो भवति॥

(११) ननु तथाऽपि काम्येऽभिहितोऽवान्तरविशेषः श्रुतौ स्पष्टं न

किमु पापं परब्रह्मज्ञानिनो नात्र संशयः ॥ इति पाद्मे ॥१७॥

( १२ ) सू—ॐ ॥ यदेव विद्ययेति हि ॥ ॐ ॥ १८ ॥
ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०.) इति श्रुतेः। 'न ह्यस्य कर्म क्षीयते' (बृ. ३-४-१५.) इति च।

---

प्रतीयत इत्यतोऽपिशब्दसूचितां स्मृतिं दर्शयति—अनभीष्टमिति ॥ परब्रह्मज्ञानिनोऽनभीष्टमनारब्धं पुण्यमपि नश्यति। नात्र संशयः। एवं सति अस्य पापं नश्यतीति किमु वक्तव्यमित्यर्थः। पाद्म इति । अप्रारब्धमनभीष्टं च नश्यतीत्ययं विशेषः स्पष्टमुक्त इति वाक्यशेषः ॥

( १२ ) ननु ज्ञानिकृतोत्तरकालीनाकाम्यपुण्यस्य कथं मोक्षानुप्रवेशः कर्मणो नश्वराल्पफलकत्वादित्याशङ्कां परिहरत्सूत्रं पठति—यदेवेति ॥ अत्र अग्निहोत्रादि तत्कार्यायेति पदद्वयानुवृत्त्या लब्धं साध्यं दर्शयति—ब्रह्मदर्शीति। अपिश्चार्थ एवार्थश्च ब्रह्मदर्शिकृतमित्यनन्तरं स्वस्थाने च सम्बध्यते। तथा च ब्रह्मज्ञानिकृतमेवाग्निहोत्रादिपुण्यं स्वरूपतोऽल्पमपि 'महत्तमं' अतिशयितमहाफलप्रदं 'अनन्तं' अविनाशिफलप्रदं च भवतीत्यर्थः। अतो युक्तस्तस्य मोक्षानुप्रवेश इति भावः। कुत एतदित्यतस्तत्र हेतुतया सूत्रगृहीतश्रुत्युदाहरणपूर्वकं सूत्रं व्याचष्टे—यदेवेति। 'इति श्रुतेः' इति छन्दोगश्रुतेरित्यनेन सौत्रहिशब्दो यत इत्यर्थे। इतिशब्दः श्रुतिपदार्थक इत्युक्तं भवति। श्रुतिस्तु पुरुषार्थनये व्याख्याता। सूत्रे एकश्रुत्युदाहरणमुपलक्षणम्, इतिशब्दो वा आद्यर्थ इति भावेनात्रार्थे श्रुत्यन्तरं स्मृतिं च क्रमेण दर्शयति—न ह्यस्येति। इति च श्रुतेरित्यन्वयः। चः समुच्चये। इयं बृहदारण्यश्रुतिः भाक्तनये व्याख्याता। स्मृतौ ज्ञानवत इति तृतीयार्थे षष्ठी। एवमज्ञानामिति च। एतयोः कृतपदेनान्वयः। 'अल्पमात्रः' स्वरूपतोऽत्यल्पः अल्पमात्रकृत इति समस्तपाठे अल्पमात्रश्चासौ कृतश्चेति विग्रहः। तदा नित्यसापेक्षत्वात्समासः। 'महान्' महाफलप्रदः 'महान्' स्वरूपतः। यद्यपि तथाऽपीत्यर्थेऽपिः उभयत्रान्वेतव्यः। इति चेति। चः समुच्चये। भारते वचनाच्चेति शेषः। हेतुत्रयस्यापि ब्रह्मदर्शीत्यनेनान्वयः। अनेन य

अल्पमात्रकृतो धर्मो भवेत् ज्ञानवतो महान् ।
महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत् ॥ इति
च भारते ॥ १८ ॥

(१३) सू—ॐ॥ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्य
ते ॥ ॐ ॥ १९ ॥

तः ज्ञानिकृताग्निहोत्रादि स्वरूपतोऽल्पमपि 'तत्कार्याय' तच्च तत्कार्यं च तत्कार्यं तस्मै महानन्तफलायैव भवति, न त्वज्ञकर्मवदल्पास्थिरफलाय । कुतः ? 'हि' यतः 'यदेव विद्यया' इति 'न ह्यस्य' इति श्रुतिद्वयं 'अल्प' इति स्मृतिश्चेत्येवमाह, अतो युक्तस्तस्य मोक्षानुप्रवेश इति सूत्रार्थ उक्तो भवति । इदं त्ववधेयम्—द्वेषिणः पूर्वपुण्यस्याप्रारब्धस्य विनाशः उत्तरस्याश्लेष इत्ययमर्थस्तावदितरस्येत्यनेनैवोक्तः । अग्निहोत्रादीत्यनेन ज्ञानिकृताकाम्यपुण्यस्य पूर्वस्य ज्ञानार्थत्वमुत्तरस्य ज्ञानकार्यमोक्षातिशयार्थत्वमिति यो न्यायोऽभिहितः सोऽपि द्वेषिणि तद्वैपरीत्येनानुसर्तव्यः । द्वेषपरिपाकप्राक्कालीनस्याप्रारब्धस्य पापस्य द्वेषाभिवृद्धिहेतुत्वमुत्तरस्य तु साक्षात्तमोऽनुप्रवेशः । एवमतोऽन्यदपीत्यनेन ज्ञानपूर्वकालीनकाम्यपुण्यस्याप्रारब्धस्यानिष्टस्य च नाशस्तदुत्तरकालीनस्य तादृशस्यासंश्लेष इति यो न्यायोऽभिहितः स द्वेषिण्यपि वैपरीत्येनानुसर्तव्यः । द्वेषपरिपाकात्पूर्वतनं काम्यमप्रारब्धं पुण्यमनिष्टं चेन्न नश्यति । यथा दुर्योधनादीनां राजत्वापादकं कुरुवंशादौ जननकारणं पुण्यम् । तस्य कृष्णभीमादिमहाद्रोहद्वारा पूर्णतमोहेतुत्वात् । इष्टं चेन्नश्यति । द्वेषपूर्त्युत्तरकालीनं च काम्यपुण्यमप्रारब्धमनिष्टं चेत् श्लिष्यते । इष्टं चेन्न श्लिष्यते । उत्तरस्याकाम्यस्य तु मनुष्याधमकृतस्य तमसि दुःखातिशयह्रासहेतुत्वं, कल्यादिकृतस्य तु तेषां दुःखस्य कॢप्तत्वात्स्वयोग्याधिकपापविनाशहेतुत्वम् । एवं 'यदेव विद्यया' इत्यनेन ज्ञानिकृतोत्तरपुण्यस्य महानन्तफलत्वमिति यो न्यायोऽभिहितः सः द्वेषिपापेऽप्यनुसर्तव्यः । प्रमाणबलाद्द्वेषिपापस्यापि तमोऽनुप्रवेशोऽवश्यमङ्गीकार्य इति सूत्रत्रयन्यायो द्वेषिपुण्ये पापे चानुसर्तव्य इति ॥

(१३) ननु तथाऽपि ब्रह्मज्ञानिद्वेषिणोः मुक्तितमसी न सिध्यतः उभयोरपि प्रत्येकं प्रारब्धपुण्यपापसद्भावादित्याशङ्कां परिहरत्सूत्रमुपन्य

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते।
अथेति नियमसूचकः।

(१४) आरब्धपुण्यपापस्य भोगेन क्षपणादनु।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः॥
ब्रह्मणांशतकालात्तु पूर्वमारब्धसंक्षयः।
नियमेन भवेन्नात्र कार्या काचिद्विचारणा।

स्यति-भोगेनेति॥ अत्र तुशब्दो ज्ञानिनः प्रारब्धभोगे उपमर्दे चेत्युक्तविशेषद्योतक इति भावेन सूत्रं व्याचष्टे-आरब्धपुण्यपापे इति। अनेन इतरे इत्येतत् प्रकृतानारब्धकार्यकपुण्यपापेतरपरामर्शकमित्युक्तं भवति। 'भोगेन' कार्यद्वाराऽनुभवेन 'क्षपयित्वा' विनाश्यानन्तरम्। ब्रह्मेति शेषोक्तिः। तमो वेत्यस्याप्युपलक्षणमेतत्। 'सम्पत्स्यते' ब्रह्मदर्शीति शेषः। इतर इति च विपरिणामेनात्राप्यन्वीयते। तथा च ब्रह्मदर्शी ब्रह्म 'सम्पत्स्यते' 'इतरो' ब्रह्मद्विट् तमः 'सम्पत्स्यते' प्राप्नोतीति योजना। अतो न प्रारब्धकर्मसद्भावेन मोक्षाद्यभावः शङ्क्य इति भावः। ननु यथा ज्ञानानन्तरं न मोक्षो नियतः, यथा चोपासनानन्तरं ज्ञानमनियतं, तथा कर्मक्षयानन्तरमपि मोक्षोऽनियत इति शङ्कानिवर्तकतयाऽथशब्दं व्याचष्टे--अथेति। शब्द इति शेषः। अनेनाथेत्येतत् अनन्तरमेवेति व्याख्यातं भवति॥

(१४) कुतोऽयं नियमो ज्ञायत इत्यत आह—आरब्धेति॥ 'क्षपणात्' नाशादन्वनन्तरमेवेत्येवकारान्वयः। ब्रह्म प्राप्नोति 'घोरं' असह्यदुःखं तमो वा प्राप्नोतीति 'अत्र' अर्थे न संशय इत्यर्थः। ब्रह्मदर्शी ब्रह्मद्विडिति च शेषः। प्रत्येकमस्यान्वयः। अतो नियमः सिद्ध इति वाक्यशेषः। नन्वारब्धभोगस्य निरवधिकत्वे ज्ञानिद्वेषिणोः ब्रह्मतमःप्राप्ती अनुपपन्ने इत्यत आह—ब्रह्मणामिति। अत्र ब्रह्मणांशतमिति षष्ठ्या अलुक्। तस्य कालो ब्रह्मणांशतकालः तस्मात् तत्समाप्तेः 'पूर्वं तु' पूर्वमेव सर्वेषां ज्ञानिनां 'आरब्धसंक्षयः' प्रारब्धनाशो भवतीत्यर्थः। शतकालानन्तरं न कस्यापि प्रारब्धानुवृत्तिः। किन्तु तत्समाप्तिपर्यन्तमेवेति भावः। 'अत्र' नियमस्य 'काचित्' क्वचित् 'विचारणा' व्यभिचारो नेत्यर्थः। इदमेव वाक्यं तत्त्वप्रदीपरीत्या ब्रह्मणामित्यस्यावृत्तिं तत्रैकस्य समासप्रवेशं चाश्रित्य ब्रह्मणामपि ब्रह्मणांशतकालात्पूर्वमेवारब्धसंक्षयो भवति, एवं ततोऽपि पूर्वं पूर्वमनन्तादीनामिति व्या

इति नारायणतन्त्रे ॥ १९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य
प्रथमः पादः

॥ ॐ ॥

ख्यातं चेद्विशेषनिष्ठं च भवतीति ज्ञातव्यम् । नारायणतन्त्रे वचनादिति शेषः । अस्याप्यध्याहृतेनान्वयः ॥ ६ ॥

॥ इति तदधिगमाधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणा
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां चतुर्थाध्यायस्य प्रथमः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) देवानां मोक्ष उत्क्रान्तिश्चास्मिन् पाद उच्यते—

सू—ॐ ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ॐ ॥ १ ॥

वागभिमानिन्युमा मनोऽभिमानिनि रुद्रे विलीयते। वाचो मनोवशत्वदर्शनात्। 'तस्य यावन्न वाङ्मन

---

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—देवानामिति ॥ स्वपदं गतानां देवानां उत्तरोत्तरप्रवेशात्मको देहान्मोक्षः स्वपदगदेवभिन्नानां मानुषशरीराणां ज्ञानिनां देहाद्ब्रह्मनाड्योत्क्रान्तिश्चास्मिन् चतुर्थस्य द्वितीयपादे उच्यत इति योजना। तत्राधिकार्याधिक्यक्रमात् प्रथमं देवानां लयो निगद्यते पश्चादितरेषामुत्क्रान्तिरिति भावः। न चैवं पादभेदप्रसङ्गः। चतुर्मुखादिदेवानां मनुष्याणां च बह्वल्पगुणविषयकत्वेन उपासनेऽत्रान्तरभेदे विद्यमानेऽप्युपासनत्वेनैकीकरणवदत्रापि देहलयत्वे नैकीकरणसम्भवात्। तत्र प्रथमाधिकरणे वाचो मनसि लयः समर्थ्यते। तत्र न वाङ्मनसि लीयत इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—वागिति। अत्र वाङ्मनश्शब्दार्थोक्तिपूर्वकं विलीयत इति पदाध्याहारेण सूत्रं व्याचष्टे—वागभिमानीति। अत्रोमारुद्रपदाभ्यां लक्षणया वारुणीशेषौ सौपर्णीसुपर्णौ च प्रतिपाद्येते। लक्षणाबीजं तु उमात्ववारुणीत्वादीनामेकद्रव्यसम्बन्धः सौपर्ण्यादीनां पदसादृश्यं चेति सुधोक्तं द्रष्टव्यम्। तत्त्वप्रदीपे तु उमारुद्रादीनामुपरि वारुणीशेषादिभावात् तदानीमपि तेषु पूर्वप्रसिद्धनामप्रयोगोऽर्जुनादिशरीरपातेऽपि स्वर्गारोहणादिकेऽर्जुनादिशब्दप्रयोगवद्भूतपूर्वगत्या न विरुद्ध इत्युक्तम्। कुत इत्यतो—दर्शनादित्येतत् शब्दादित्यनेन पौनरुक्त्यपरिहाराय प्रत्यक्षपरतया व्याचष्टे—वाच इति। प्रत्यक्षतयैवेत्यादावुपस्कर्तव्यम्। मनोऽनुसारेणैव वाक्प्रवृत्तेः सर्वानुभवसिद्धत्वादिति भावः। शब्दादित्येतच्छ्रुतिप्रदर्शनेन व्याचष्टे—तस्येति। छन्दोगश्रुतिरियम्। अत्र जीवस्य मरणकाले अस्वातन्त्र्यं प्रतिपादयितुं तत्त्वाभिमानिदेवताव्यापारोपरमः प्रतिपाद्यते। अत एव प्रमेयदीपे वागिति वाक्येनोत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते इत्युक्तम्। 'तस्य' म्रियमाणस्य पुरुषस्य यावत्पर्यन्तं वागभिमान्युमा मनोऽभिमानिनि 'न सम्पद्य...'

सि सम्पद्यते' (छा. ६-१५-१.) इति शब्दाच्च ।

(२) उमा वै वाक्समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते ॥ इति स्कान्दे ॥

(३) सू—ॐ ॥ अत एव च सर्वाण्यनु ॥ ॐ ॥ २ ॥
अत एव च शब्दात्सर्वाणि दैवतानि यथाऽनुकूलं वि
लीयन्ते 'अग्नौ सर्वे देवा विलीयन्ते अग्निरिन्द्रे इन्द्र
उमायां उमा रुद्रे विलीयते एवमन्यानि दैवतानि यथाऽ

---

तेन प्रस्तव्यापारा न भवन्ति । तावत्स्वीयान् ज्ञात्यादीन् जानाति । यदा तु वाङ्मनसि संपद्यते तदा न जानाति पुरुष इति श्रुत्यर्थः । यद्यपीयं श्रुतिः मरणकालीनदेवताप्रवेशविषयेति नात्रोदाहरणं युक्तं, तथाऽपि मरणकाले देवताप्रवेशस्य प्रलये तल्लयक्रमानुसारित्वेनास्या उभयविषयत्वान्नासङ्गतिः ॥

(२) नन्वेतच्छ्रुतिसूत्रगतौ वाङ्मनःशब्दौ उमारुद्रपरौ कुतो ज्ञायेते इत्यतः स्मृतेरेवेत्याह—उमेति ॥ अत्राप्युमापदेन वारुणी सौपर्णी च रुद्रपदेन च शेषः सुपर्णश्चोच्यते । उमाविवक्षायां तु तस्याः रुद्रद्वारा भारत्यां लयो ज्ञातव्यः । वैशब्दः प्रसिद्धौ । 'तत्' श्रुत्युक्तं 'एतत्' उमारुद्राख्यं वाङ्मनसाख्यं च 'मिथुनं' द्वन्द्वं 'दाम्पत्यात्' ज्यायापतिभावात् । एवं ज्ञातुर्वियुर्ग न भवेदिति भावः । स्कान्द इति। वाक् उमा मनो रुद्र इत्युक्तं यत इति वाक्यशेषः ॥

(३) अस्त्वेवं वाचो लयनिर्णयः । तथाऽपि न सर्वदेवानां मोक्षो युज्यते । लयानिश्चयादित्याशङ्कां परिहरत्सूत्रं पठति—अत एवेति ॥ अत्र अत इति पदमनूद्य तदर्थमाह—अत इति । 'शब्दात्' श्रुतेः । शब्दादेवेत्यन्वयः । न तत्र मानान्तरं गवेषणीयमित्येवार्थः । एवप्रयोगो नियामकानां बाहुल्याल्लयानिश्चय इति शङ्कानिरासार्थः । चशब्दोऽप्यर्थः । सर्वाणीत्यतः परं सम्बध्यते । न केवलं वागिति चशब्दार्थः । तत्त्वप्रदीपे तु चशब्दादिन्द्रियाणि चेत्युक्तम्। दैवतानीति सूत्रे शेषोक्तिः। अन्वित्यस्यार्थमाह यथाऽनुकूलमिति । स्वनियम्यनियामकभावानुसारेणेत्यर्थः । विलीयन्त इति पूर्वत्राध्याहृतपदस्यात्र विपरिणामेनानुषङ्गोक्तिः । कोऽसौ शब्द इत्यतस्तमुदाहरति--अग्नाविति । अत्रोमारुद्रपदाभ्यां सौपर्णीसुपर्णावुच्येते । अग्नेरिन्द्रे लयः सूर्यद्वारेणैव, न तु

नुकूलम् ' इति हि गोपवनश्रुतेः ॥ २ ॥

—*—

२. अधिकरणम् ॥

(१) सू--ॐ ॥ तन्मनः प्राण उत्तरात् ॥ ॐ ॥ ३ ॥

'मनः प्राणे' (छा. ६-१५-१.) इत्युत्तरवचनान्म नोऽभिमानी रुद्रः प्राणे वायौ विलीयते। 'वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रे

साक्षादिति ज्ञातव्यम् । विलीयत इति सर्वत्र सम्बध्यते। श्रुतिरित्यन न्तरं यत इति शेषः। हिशब्दः श्रुतेः प्रसिद्धत्वद्योतकः। शब्दात् श्रुते रिति सामानाधिकरण्यम् ॥ १ ॥

॥ इति वाङ्मनोऽधिकरणम् ॥

—*—

२. अधिकरणम् ॥

(१) अत्राधिकरणे मनसः प्राणे लयस्समर्थ्यते। न प्राणे मनो लीयते, अविशेषात् इति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—तन्मन इति ॥ अत्र शब्दादित्यस्यानुवृत्त्या उत्तरादिति हेतुवाक्यं व्याचष्टे—मन इति। इत्युत्तरवचनादिति। एवंरूपात् ' वाङ्मनसि सम्पद्यते' इति पूर्वनयोदाहृतवाक्यापेक्षयोत्तराद्वाक्यादित्यर्थः। तन्मन इति स मासनिविष्टतच्छब्दस्य पूर्वनयोक्तवाग्लयाधिकरणत्वविशेषितपरत्वे न स्पष्टार्थत्वात् तं विहाय तन्मनः प्राण इति प्रतिज्ञांशं व्याचष्टे—मन इति। विलीयत इति शेषोक्तिः, श्रुतौ सम्पद्यत इत्यनुवृत्तपदार्थकथ नं वा। सावधारणमेतत्। अत्र प्राणवायुपदाभ्यां व्याख्येयव्याख्यान रूपाभ्यां चतुर्मुखो ग्राह्यः। मनोरुद्रपदाभ्यां शेषो गरुडश्च। तयोश्च वा णीद्वारा चतुर्मुखे लयो बोध्यः। एवं श्रुतावपि वायुरुद्रशब्दौ मनःप्रा णशब्दौ व्याख्येयौ। ननु प्राणादनुत्पन्नस्य मनसः कथं प्राणे लय इ त्यतोऽनुवृत्तं शब्दादित्येतच्छ्रुत्यन्तरपरतयाऽपि व्याचष्टे—वायोरिति। वावेत्यवधारणे। 'उदेति' उत्पद्यते, तस्मादुत्पन्नत्वादेव वायौ विली यते रुद्रः। तस्मादित्युत्तरत्रापि सम्बध्यते। 'तस्मात्' रुद्रोत्पत्तिल यहेतुत्वादाहुर्वृद्धाः 'देवानां' रुद्रादीनाम्। श्रुतिरित्यनन्तरं यत इति शेषोऽस्य मनः प्राण इति सिद्धमित्युपस्कृतेनान्वयः। अस्मिन् पक्षे प्रा

ष्ठः' इति च कौण्डिन्यश्रुतिः ॥ ३ ॥

——:*:——

३. अधिकरणम् ॥

( १ ) सू—ॐ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ॐ ॥ ४ ॥

स प्राणः परमात्मनि विलीयते। 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' (         )

---

ण इति निमित्तसप्तमीति ध्येयम् ॥ २ ॥

॥ इति मनःप्राणाधिकरणम् ॥

——:*:——

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे प्राणशब्दोक्त चतुर्मुखस्येश्वरे लयः समर्थ्यते। तदधीनत्वानिश्चयान्न परमात्मनि प्राणो लीयत इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—स इति ॥ सोऽध्यक्षे इति प्रतिज्ञायां स इत्यनुवादेन प्राण इति व्याख्यानं कृतम्। 'प्राणो' हिरण्यगर्भः। अध्यक्षे इत्यस्य 'अध्यक्षोऽधिपतिः श्रेष्ठो यदक्षाण्यस्य चोपरि' इति गीतातात्पर्योदाहृतवचनानुसारेणैतज्जगदधिकृत्याक्षाणि यस्य सोऽध्यक्ष इति विग्रहाश्रयेणार्थं दर्शयति—परमात्मनीति। विलीयत इति शेषोक्तिः। सावधारणमेतत्। कुत इत्यतस्तत्राध्यक्षपदसूचितं तस्य तदधीनत्वादिति हेतुमभिप्रेत्य, ननु तन्निश्चयोपायाभाव इत्यतः प्रवृत्तस्य तदुपगमादिभ्य इति हेतुवाक्यस्य तस्मिन् प्राणे तेषां देवानामुपगमो लयः तस्मिन् अध्यक्षे तस्य प्राणस्योपगमो वा, आदिपदेन सर्वेषां प्राणानुप्राणनं तत्र लयः प्राणस्य अध्यक्षानुप्राणनं तत्र लयो भोगश्च ग्राह्यः, तदसिद्धिशङ्कायां उपगमादीत्यनेन तत्प्रतिपादकश्रुतिस्मृतयो ग्राह्या इत्यर्थमभिप्रेत्य तादृशश्रुतिस्मृत्युदाहरणेन तदुपगमादिभ्य इत्यंशं व्याचष्टे—सर्व इति। देवा इत्यत्रापि सम्बध्यते। ईशलक्ष्मीव्यतिरिक्त सर्वदेवा इत्यर्थः। अन्यथा 'प्राणः परम्' इत्युत्तरवाक्यविरोधः। 'उपगच्छन्ति' प्राप्नुवन्ति 'प्राणो' हिरण्यगर्भः। 'परं' परमेश्वरं 'उपगच्छति' तत्र लीयत इति यावत्। 'देवाः' शेषादयः 'प्राणमनुप्राणन्ति,' प्राणमनुसृत्य चेष्टां कुर्वन्ति। 'परं' परमात्मानं 'तस्मात्' प्राणचेष्टाप्रवर्तकत्वात्। इत्याहुरित्यत्रापि परमिति सम्बध्यते। अत्र 'न

'प्राणः परस्यां देवतायाम्' (            )।

(२) मुक्तास्सन्तोऽग्निमाविश्य देवास्सर्वेऽपि भुञ्जते।
अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु॥
आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान्।
न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथं चन॥
किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः॥

प्राणः किञ्चिदाश्रितः, सोऽन्यं कथमुपाश्रयेत्' इत्यादिप्राणस्वातन्त्र्य श्रुतीनां सावकाशत्वप्रदर्शनाय 'सर्वे प्राणमुपगच्छन्ति, प्राणं देवा अनुप्राणन्ति' इत्यंशोदाहरणम्। तथा च 'सर्वे प्राणमुपगच्छन्ति' इति श्रुत्युक्तन्यायेन भगवदितरस्वातन्त्र्ये श्रुतितात्पर्यमिति भावः। 'प्राणः परस्यां देवतायाम्' इति श्रुत्यन्तरं, 'परस्यां' विष्ण्वाख्यदेवतायां 'प्राणः' चतुर्मुखो लीयत इत्यर्थः॥

(२) मुक्तास्सन्त इति स्मृतिः॥ अग्नेरधमास्तत्र लययोग्याः सर्वे देवाः 'मुक्ताः' कर्मक्षयं प्राप्ताः सन्तोऽग्निं प्रविश्य तत्र स्थितान् भोग्यान् स्वयोग्यानन्दादीन् 'भुञ्जते' अनुभवन्तीत्यर्थः। अपिरभिव्याप्तौ, अग्निरपीति वा। अग्नेरिन्द्रप्रवेशः परम्परया। तथाशब्द उपमायाम्। चः समुच्चये। 'वायुं' विरिञ्चमाविश्येति पूर्वोक्तसौपर्णीसुपर्णवाणीद्वारेणेति द्रष्टव्यम्। 'सः' वायुः। अपिस्समुच्चये। तुशब्दो हिरण्यगर्भस्येतरदेवेभ्यः सर्वाङ्गप्रवेशाख्यविशेषार्थः। अवधारणे वा तुः। 'बाह्यकान् भोगान्' भुज्यन्त इति भोगाः परमात्मस्वरूपानन्दात् मुक्तान्तरानन्दाच्च बाह्यान् स्वयोग्यानन्दानित्यर्थः। बहुवचनमेकत्वार्थे। यद्वा—बाह्यप्राकृतविषयभोगानित्यर्थः। उक्तं हि तत्त्वप्रदीपे। परमात्मस्वरूपादन्दं मुक्तान्तरानन्दाच्च बाह्यं स्वानन्दं भुङ्क्ते। बहिर्निर्गतस्तु बाह्यविषयानपि कांश्चित्स्वयोग्यान् भुङ्क्ते इति। पुनस्तुशब्दोऽवधारणार्थः। बाह्यकानित्येतदेवोपपादयति—न हीति। 'हि' यस्मात् 'तेषां' मुक्तानां मध्ये एकस्य 'निजः' स्वरूपभूत आनन्दः 'परैः' अन्यैः 'कथं चन' केनाप्युपायेन प्राप्यो न भवति। विष्णोः परानन्दस्तु न प्राप्य इति किमु वक्तव्यमित्यर्थः। विष्णुसम्बन्ध्यानन्दोऽन्यैर्न लभ्य इति कुतो ज्ञायत इत्यत आह—न त इति। अन्यथैतच्छ्रुतिविरोधः स्यादिति भावः। व्याख्यातैषा श्रुतिर्जन्माधिकरणे। न च प्र

(३) प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम।
सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम॥
इत्यादिश्रुतिस्मृतिभ्यः॥ ४॥

---*---

४. अधिकरणम॥

(१) सू—ॐ॥ भूतेषु तच्छ्रुतेः॥ ॐ॥ ५॥

---

वेशाभिधायकस्मृत्युदाहरणं प्रकृतासङ्गतमिति वाच्यम।'मुक्तौ लये यद्वत' इत्यनुव्याख्यानोक्तरीत्या मुक्तौ भोगार्थं प्रवेशक्रमस्य लये प्रवेशक्रमस्य च समनियतत्वेन सङ्गतत्वात॥

(३) ननु 'प्राणः परस्याम' ( ) इति श्रुतौ प्राणस्य परमात्मनि लय उक्तः। स नोपपद्यते 'प्राणस्तेजसि' (छा.६-१५-१.) इति श्रुतिविरोधादित्यतः स्मृत्यन्तरमुदाहरति—प्राणस्येति॥ प्राणस्य 'तेजसि' लक्ष्म्यां लयो नाम 'मार्गमात्रं' तत्प्राप्तिमात्रम, न तु जीर्णभाव इति 'उदाहृतं' उक्तमभियुक्तैरित्यर्थः। कुतोऽमुख्यार्थकल्पनेत्यत आह—सर्वेशितुरिति॥ 'तस्य' प्राणस्य 'सर्वादेः' सर्वोत्पत्तिकारणात 'सर्वेशितुः' विष्णोरन्यत्र कथं साक्षाल्लयः अयोग्यत्वात तस्य साक्षात्परमात्मनि लययोग्यत्वादिति भावः। इदं च श्रुतिस्थप्राणशब्दस्य हिरण्यगर्भवाचित्वमाश्रित्योक्तम। उक्तं हि सुधायां-प्राणशब्दस्य हिरण्यगर्भवाचित्वपक्षे भाष्योक्तमिति द्रष्टव्यमिति। यदा तु प्राणशब्दो वायुवाची तदा तस्य 'तेजोऽभिधां तु श्रियमाप्य विष्णुमग्रे ततः पुत्रतयैव वायुः' इत्यनुव्याख्यानोक्तरीत्या साक्षादेव तेजस्येव देहलयो न परमात्मनि, तस्य च चतुर्मुखत्वेन पुनर्जननात 'विलीनो हि प्रकृतौ संसारमेति' (सौपर्णश्रुतिः) इति श्रुतेरिति ध्येयम। इत्यादिश्रुतिस्मृतिभ्य इति। श्रुती च स्मृती चेति विग्रहः। आदिशब्दोक्तश्रुतिस्मृतिविवक्षया बहुवचनम। विलीयत इति शेषोक्तिः। सावधारणमेतत। श्रुतिस्मृतिभ्य इत्यस्य प्राणः परमात्मनि लीयते इति सिद्धमिति साध्येनान्वयः॥३॥

॥ इति अध्यक्षाधिकरणम॥

---*---

४. अधिकरणम॥

(१) अत्राधिकरणे प्राग्विशिष्योक्तेभ्योऽन्येषां देवानां पृथिव्यादिसमस्तभूतेषु लयः समर्थ्यते। 'अग्नौ सर्वे देवा विलीयन्ते' (गौपवन.)

भूतेष्वन्येषां देवानां लयः। 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता' इति बृहच्छ्रुतेः॥ ५॥

——:*:——

५. अधिकरणम् ॥

( १ ) सू—ॐ॥ नैकस्मिन् दर्शयतो हि ॥ ॐ॥ ६॥

नैकस्मिन् भूते सर्वेषां देवानां लयः 'पृथिव्यामृभवो

---

इति श्रुतेरग्नावेव सर्वेषां देवानां लय इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति-भूतेष्विति॥ अत्र स इति विपरिणामेनानुवर्तते। देवा विलीयन्त इति प्रकरणाल्लभ्यत इति भावेन भूतेष्विति प्रतिज्ञांशं व्याचष्टे-भूतेष्विति। पञ्चस्वपि भूतेषु तदभिमानिष्वित्यर्थः। अन्येषामिति। 'वाङ्मनसि' इत्याद्यधिकरणत्रये शेषसुपर्णचतुर्मुखपरमात्मसु लीयमानत्वेन उक्तेभ्यो वारुणीसौपर्णीशेषसुपर्णचतुर्मुखेभ्योऽन्येषां देवानामित्यर्थः। कुत इत्यतः तच्छ्रुतेरित्यंशं व्याचष्टे—भूतेष्विति। 'देवाः' उक्तेभ्योऽन्ये देवाः 'भूतानि' पृथिव्यादीनि 'परे' परमात्मनि लीयन्ते इत्यनुषङ्गः। भूतानां परमात्मनि लयस्तु आकाशोर्व्योः बृहस्पतिद्वारा भूतवायोः प्रवहस्येन्द्रद्वारा अपां सोमद्वारेत्येवं परम्परया द्रष्टव्यः। परस्यापीतरवच्चेतनत्वाल्लयमाशङ्क्याह—न पर इति। 'नोदेति' नोत्पद्यते। 'अस्तं' लयं 'नेति' न प्राप्नोति। कुत इत्यत आह—'एकलः' स्वतन्त्र इति। 'मध्ये' देहमध्ये हृदये 'स्थाता' विद्यमान इत्यर्थः। यद्वा—उत्पत्तिलययोर्मध्ये स्थितावेक एव स्थातेत्यर्थः। अनेन ते विशिष्योक्तेभ्योऽन्ये देवाः पञ्चस्वपि भूतेषु लीयन्ते, नैकस्मिन्नग्नावेव। कुतः? 'तच्छ्रुतेः' तस्य भूतेषु देवानां लयस्य श्रुतेः 'भूतेषु देवाः' इति श्रवणादिति सूत्रार्थ उक्तो भवति॥ ४॥

॥ इति भूताधिकरणम् ॥

——*✿*——

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे देवानां सर्वभूतेषु लयः समर्थ्यते। न च पूर्वेण गतार्थता। अधिकाशङ्कयैवैतदधिकरणप्रवृत्तेः। न च सन्न्यायरत्नावल्यामेकाधिकरणत्वेन व्याख्यानात्तद्विरोधः। अस्य प्रस्थानान्तरत्वेन

विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते।
(२) 'ऋभवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्ते' इति महोपनि

अर्थतोऽभिन्नन्यायमूलत्वेन चाधिकरणभेदेऽप्यविरोधात् । न चानेन पूर्वस्य गतार्थता। 'भूतेषु देवाः' इति श्रुतिविशेषसूचकतया सार्थकत्वात्। 'अग्नौ सर्वे देवाः' इति श्रुतेरग्नावेव सर्वेषां लय इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—नैकस्मिन्निति ॥ अत्र पूर्वसूत्राद्भूतेष्विस्यस्य विपरिणामेनानुवृत्तिं सर्वेषां देवानां लय इति प्रकृतप्रतिज्ञाशेषं चाभिप्रेत्य नैकस्मिन्निति प्रतिज्ञांशं व्याचष्टे—नैकस्मिन्निति । भूते तेजोभिमानिनि अग्नावेव लयो न वाच्य इत्यर्थः। कुतो नेत्यतः प्रवृत्तं दर्शयतो हीति हेत्वंशं श्रुतिद्वयोदाहरणपूर्वकं व्याचष्टे—पृथिव्यामित्यादिना। पृथिव्यभिमानिधरायामृभुनामका देवा विलीयन्त इत्यर्थः।'वरुणे' अबभिमानिनि अश्विनौ विलीयेते इति विपरिणामेनान्वयः। 'अग्नौ' अग्निजडाभिमानिनि देवे 'अग्नयः' अग्निपुत्रा विलीयन्त इत्यर्थः। 'वायौ' प्रधाने हिरण्यगर्भपरोऽयं शब्दः। इतिशब्दः श्रुतिस्थः आद्यर्थे। यथोक्तं तत्त्वप्रदीपे—इतिशब्दस्याद्यर्थत्वादिति। तथा च वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याद्याः सर्वे देवा विलीयन्त इत्यर्थः। तत्रेन्द्रस्य लयः 'इन्द्र उमायाम्' (गौपवन.) इति श्रुत्युक्तक्रमेण सौपर्णीसुपर्णवाणीद्वारेण। सोमस्य चानिरुद्धकामवारुणी शेषवाणीद्वारेण। सूर्यस्य बृहस्पतिशक्रसौपर्णीसुपर्णवाणीद्वारेण। बृहस्पतेः शक्रसौपर्णीसुपर्णवाणीद्वारेण लय इति विवेक्तव्यम्। 'आकाशे' तदभिमानिनि गणपतौ 'साध्याः' तन्नामका देवाः ॥

(२) एवं महोपनिषद्वाक्यमुदाहृत्य चतुर्वेदशिखावाक्यमुदाहरति—मृत्यवः पृथिव्यामिति ॥ मारकत्वान्निमित्तात् मृत्युनामका देवाः पृथिव्यभिमानिदेवतायां लीयन्त इत्यर्थः। ऋभवः पृथिव्यामिति क्वचित्पाठः। न च ऋभुपृथिव्योः शतस्थतासाम्यात्कथमेतत्। किञ्चिन्न्यूनतादिभावात्। 'आपः' वरुणभिन्नाब्देवताः 'तेजसि' तेजोभूताभिमानिन्यग्नौ 'मरुतो' भूतवाय्वादयो मरुद्गणाः 'मारुते' हिरण्यगर्भे लीयन्ते इत्यर्थः। तत्र मरुतां इन्द्रसौपर्णीसुपर्णवाणीद्वारेण हिरण्य

पञ्चतुर्वेदशिखे च दर्शयतः। अतः 'अग्नौ देवा वि

गर्भे लयो न साक्षादिति ध्येयम्। 'विनायकः' गणपतिभृत्याः विनायकपुत्रा इति वा। ब्रह्मचारिवेषेण प्रच्छन्न इति तत्त्वप्रदीपे उक्तम्। वस्तुतो विनायकस्य गृहस्थत्वात् 'इतीति' एवंरूपेत्यर्थः। महोपनिषच्चतुर्वेदशिखा चेत्यनेन सूत्रे महोपनिषच्चतुर्वेदशिखे इति द्विवचनान्तपदाध्याहारः सूचितः। 'दर्शयतः' प्रतिपादयतः। इतीत्यत्रापि सम्बध्यते। तथा च 'इति' इत्येवं प्रत्येकं भूतेषु देवतालयं दर्शयत इत्यर्थः। अनेन सूत्रे पूर्वस्मात्तदित्येतद्विभज्यानुवर्तते। प्रत्येकं भूतेषु देवानां लीनत्वमिति तदर्थस्य दर्शनक्रियायां कर्मत्वेनान्वय इत्युक्तं भवति। ननु प्रत्येकं भूतेषु देवानां लये 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतेः का गतिरित्यत आह—अत इति। इतीत्यनन्तरं श्रुत्या लयाभिधानमिति शेषः। 'अत्र' अनयोः। तथा च यत एवं पृथक् श्रुतिद्वये प्रत्येकं भूतेषु देवानां लयः प्रसिद्धोऽतः 'अग्नौ सर्वे देवाः विलीयन्ते' इति श्रुत्या लयाभिधानं 'अत्र' उदाहृतश्रुतिद्वये 'निर्दिष्टानां' उक्तानामग्निपुत्राणामेव, न सर्वेषां देवानामित्यङ्गीकार्यमित्यर्थः। तथा च श्रुतिस्थाग्निशब्दः कृत्स्नाग्निपुत्रविषय इति न तद्विरोध इति भावः। उपलक्षणमेतत्। प्रायेण भूतान्तराप्रवेशानां सर्वेषामधमानामग्नावेव लय इति तदभिप्रायकः सर्वशब्द इत्यपि द्रष्टव्यम्। तदुक्तमनुव्याख्याने। 'विशन्ति शिष्टा अपि हव्यवाहनम्' इति। अत्रायं गुरुपादोक्तलयक्रमः—मनुष्योत्तमानां निर्ऋतेश्च यमे लयः। यमस्य पितॄणां वैवस्वतादिमनूनां प्रियव्रतादिचक्रवर्तिनां च स्वायम्भुवे मनौ लयः। ऋभूणां पृथिव्यां लयः। साध्यानामाकाशे लयः। अग्निपुत्राणामग्नौ लयः। अग्नेः सूर्ये लयः। सूर्यस्याकाशस्य पृथिव्याश्च गुरौ लयः। भृग्वादीनां दक्षे लयः। मनुगुरुदक्षशचीनां मरुद्गणानां चेन्द्रे लयः। गन्धर्वाणां कुबेरे लयः। शतस्थानामश्विनोश्च अब्भूताभिमानिनि वरुणे लयः। कुबेरस्य वरुणस्य च सोमे लयः। सोमस्य विष्वक्सेनादिपार्षदानां च अनिरुद्धे लयः। अनिरुद्धस्य सनकादियतीनां रत्याश्च कामदेवे लयः। कामदेवस्य वारुण्याम्। वारुण्याः शेषे। शेषस्य सरस्वत्याम्। एवमिन्द्रस्य सौपर्ण्यां लयः। सौपर्ण्या गरुडे। गरुडस्य सरस्वत्याम्। एवं शेषगरुडमार्गभेदेन स्वोदरप्रविष्टाखिलप्रपञ्चायाः सरस्वत्याः विरि

लीयन्ते ' इति अत्र निर्दिष्टानामेव ॥ ६ ॥

——*——

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ॐ ॥ ७ ॥

देशतः कालतश्च व्याप्तया समो ना परमपुरुषो यस्याः

---

श्री लयः । विरिञ्चस्तु लक्ष्मीं प्रविश्य नारायणे लीनो भवतीति ॥ ५ ॥

॥ इति एकस्मिन्नधिकरणम् ॥

——:*:——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे प्रकृतेर्विष्णौ लयाभावस्समर्थ्यते । विष्णवधीनत्वाल्लक्ष्मीः विष्णौ लीयत इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—समनेति ॥ अत्र समनेत्येतद्धेतुगर्भं विशेषणम् । तद्बलात्प्रकृतिरिति विशेष्यं लभ्यते । इदं चावर्तते । अध्यक्ष इति चानुवर्तते इत्याशयेन समनेत्येतद्व्याचष्टे—देशत इति । नेत्यस्य व्याख्या—परमपुरुष इति । परमपुरुषवत्सर्वगता नित्या चेत्यर्थः । समनेत्यनन्तरं न लीयत इति वाक्यशेषः । तेनाद्यचशब्दो नञनुकर्षणार्थ इति सूचितम् । कुतो न लीयत इत्यतोऽमृतत्वं चानुपोष्येत्येतद्व्याचष्टे—स्वत एवामृतत्वं तस्या इति । यस्याः सा समनेत्यस्य तस्या इत्यनेनान्वयः । तथा च तस्याः समनायाश्रितप्रकृतेरमृतत्वमित्यर्थः । अनेन समनेति प्रथमा षष्ठ्यर्थेऽपीत्युक्तं भवति । यथोक्तं तत्त्वप्रदीपे—प्रथमायाः षष्ठ्यर्थत्वेनेति । तस्याश्चेत्यपि सम्बन्धः । अनेनाद्यश्चो न केवलं नुः किन्तु समनाया अप्यसृत्युपक्रमादमृतत्वमिति समुच्चयार्थतयाऽपि व्याख्यातः । अनुपास्येत्यर्थकस्यानुपोष्येत्यस्य प्रतिपदं—स्वत इति, द्वितीयचशब्दस्यानुपोष्येत्यनेनान्वयमुपेत्य तदर्थमाह—एवेति । ' अमृतत्वं ' नित्यमुक्तत्वम् । यत इति शेषः । तेन द्वितीयश्चो यत इत्यर्थेऽपि व्याकृतः । नित्यमुक्तत्वमेव तस्याः कुत इत्याशङ्कानिवारकतयाऽसृत्युपक्रमादित्यंशं व्याचष्टे-संसारानुपक्रमादिति । उपक्रम उपसङ्क्रमणं सम्बन्धस्तदभावादित्यर्थः । कदाचिदपि संसाराभावादिति फलितार्थः । संसाराभावादित्यनुक्त्वाऽनुपक्रमादित्युक्त्याऽयमर्थो ज्ञायते । समनेति विशेषणप्रयोगेन असृत्युपक्रमादित्यस्यासिद्धिशङ्का परिहृता । संसा

सा समना । संसारानुपक्रमात्स्वत एवामृतत्वं त
स्याः।

(२) बृहच्छ्रुतिश्च—द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परम
श्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चैतौ ज्ञात्वा
विमुच्यते इति। नैतावता साम्यम् ॥ ७ ॥

रित्वे नित्यत्वस्य सर्वगतत्वस्य चायोगात्ताभ्यां तत्सिद्धिरिति भावः। न च तदधीनत्वयुक्तिविरोधः । तस्याः प्रबलयुक्तिविरोधेनाभासत्वात् । संसारित्वेन सोपाधिकत्वाच्च । अनेन—न केवलं नुः, किन्तु यतः समनायाः देशतः कालतश्च व्याप्त्या परमपुरुषसमायाः तद्वत्सर्वगताया नित्यायाश्च देव्या अपि 'असृत्युपक्रमात्' कदाऽपि संसारसम्बन्धाभावात् 'अनुपोष्य च' अनुपास्यैवामृतत्वमस्त्यतः समना प्रकृतिरध्यक्षे परमात्मनि न लीयत इति सूत्रार्थ उक्तो भवति । 'तेजः परस्यां देवतायाम्' (छा.६-१५-१.) इति लयोक्तिस्तु गुरौ वसतीतिवत् अतिसमीपस्थित्यर्थतया योजनीयेति न तद्विरोधः। यथोक्तमेकादशस्कन्धतात्पर्ये—'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः' इति॥

(२) यदुक्तं प्रकृतेरीश्वरवन्नित्यत्वेन सर्वगतत्वेन चानुपक्रान्तसंसारित्वान्नित्यमुक्तत्वमिति, तदयुक्तं तदुभयज्ञापकाभावादित्यत आह—बृहदिति ॥ उक्तार्थे प्रमाणमिति शेषः । न केवलं सौत्रयुक्तिरिति चशब्दार्थः। वावेत्यवधारणे । द्वावेव निर्दिशति—प्रकृतिरिति । चित्प्रकृतिरित्यर्थः। 'परमः' परमात्मा । चौ परस्परसमुच्चये । सृत्यनुपक्रमादिति नित्यमुक्तावित्यत्र हेतुः । 'नित्यौ' देहतोऽपि नित्यौ सर्वगतौ चेति असृत्युपक्रमे हेतुः। पूर्ववच्चशब्दद्वयार्थः । प्रकृतिपरमशब्दयोरन्यपरत्वशङ्कानिरासाय—एतौ ज्ञात्वेति शेषोदाहरणम् । इति बृहच्छ्रुतिरित्यन्वयः। अनेन सूत्रे श्रुतिसमुच्चयेऽपि चशब्द इत्युक्तं भवति । ननु प्रकृतेरपि नित्यमुक्तत्वाङ्गीकारे भगवता सर्वसाम्यमापिततमित्यत आह—नैतावतेति । तस्या इत्यनुषज्यते । परमेणेति शेषः । तथा च प्रकृतिपुरुषयोः नित्यमुक्तत्वादिना साम्यमस्तीत्येतावता न सर्वधर्मेण साम्यमिति सम्बन्धभाष्यस्यार्थः । नेत्यनेन सूत्रे नञनुकर्षकः चशब्दोऽनुवर्तनीय इत्युक्तं भवति ॥

( ३ ) सू—ॐ ॥ तदपीतेस्संसारव्यपदेशात् ॥ ॐ ॥ ८ ॥
'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्य मुक्तौ असमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेति' इति सौपर्णश्रुतेः ॥ ८ ॥

---

( ३ ) नैतावतेत्युक्तसाध्ये हेतुतया सूत्रं पठित्वा सूत्रव्याख्यानस्य श्रुत्यैव करणात्तद्विहाय सूत्रोपात्तश्रुतिमेवोदाहरति—तदिति ॥ एतावित्युक्तावेव दर्शयति—प्रकृतिश्चेति। 'नित्यौ' देहतोऽपि नित्यौ। समावेतावित्यारभ्य नित्यमुक्तावित्यन्तेन नित्यमुक्तत्वादिनैव साम्यमित्यर्थे प्रमाणमुक्तं भवति, न तु सर्वसाम्यमिति प्रतिज्ञायाम। तद्धेतौ मोचकत्वामोचकत्वरूपविरुद्धधर्माधिकरणत्वे च प्रमाणत्वेन श्रुतिशेषमुदाहरति—असमावेताविति। 'हि' यतः 'परमे' परमात्मनि 'विलीनः' अन्यैरदृश्य एव तं प्राप्तः 'अमृतत्वं' मुक्तिमेतीति। अनेन सौत्रतच्छब्दः परमात्मपरोऽपीत्युक्तं भवति। विलीन इत्यनेनापीतिशब्दो व्याकृतः। श्रुतेरिति व्यपदेशपदार्थोक्तिः। अनेन—तदपीतेरिति हेतौ पञ्चमी। संसारेति तन्निवृत्तेरप्युपलक्षकम्। अनुवृत्तचशब्देन नेति लभ्यते। तथा च तस्यां प्रकृतौ अपीतेः लयात्संसारव्यपदेशात् 'विलीनो हि' इति श्रुतौ संसारप्राप्त्युक्तेः तथा तस्मिन् परमात्मनि अपीतेः अमुक्तैरदर्शनविशिष्टप्राप्तेरमृतत्वोक्तेः मोचकत्वामोचकत्वरूपविरुद्धधर्मवतोः प्रकृतिपुरुषयोर्न सर्वधर्मेण साम्यम, किन्तु नित्यमुक्तत्वादिनैवेति सूत्रार्थ उक्तो भवति। यद्वा—तदपीतेरिति षष्ठी। संसारपदं करणव्युत्पत्त्या तद्धेतुपरं भावप्रधानम्। तथा च तदपीतेः संसारहेतुत्वोक्तेरित्यर्थः। संसारनिवृत्तिरूपमुक्तिहेतुत्वस्याप्युपलक्षणमेतत्। तत्त्वप्रदीपे तु—तदापीतेरिति पठित्वा अपीतिरविज्ञातप्रवेशः 'अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते' इति वचनात्। आ समन्तादपीतिरापीतिः स्वपरोभयाविज्ञातप्रवेशः। तस्या इत्यर्थः। आङ्प्रश्लेषाभावे 'अप्ययोऽयं समुद्दिष्टः तदन्येषामदर्शनम्' ( ) इति तत्त्वनिर्णयोदाहृतश्रुतिवचनात्प्रवेशस्यान्याविज्ञातत्वमेव प्रतीयते। पूर्वस्यानेन सावकाशत्वात्। तन्मा प्रत्यायीत्याङ्प्रश्लेषः। तथा च तदा स्वस्याप्यविज्ञात एव प्रकृतौ प्रवेश इत्यर्थ इति व्याख्यातः।

(४) सू—ॐ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ॐ ॥ ९ ॥
सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः। ज्ञानानन्दैश्वर्यादि प्रमाणाधिक्यं च।
सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः।
ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोः॥ इति च तुरश्रुतिः॥ ९॥

(५) सू—ॐ ॥ नोपमर्दनातः ॥ ॐ ॥ १० ॥

---

टीकाकृतोऽप्याङ्प्रश्लेषः अपीतिशब्देन चादर्शनविशिष्टा प्राप्तिरेवा भिप्रेता, न तु प्रध्वंसः। प्रध्वंसस्तु प्रमाणान्तरगम्य इति तत्त्वनिर्णय टीकोक्तिविरोधात्॥

(४) हेत्वन्तरेण प्रकृतिपुरुषयोः सर्वसाम्यं प्रतिषेधत्सूत्रं पठति—सूक्ष्ममिति॥ अत्र पूर्वस्मात्तदिति विभज्यानुवृत्तमावर्तते। प्रमाणशब्दः परिमाणवाची। तथा च यतस्तद्ब्रह्म तस्याः समनायाः प्रकृतेरपि सूक्ष्मं, न केवलमेतावत्, किन्तु 'प्रमाणतः' ज्ञानानन्दादिगुणतश्चाधिकम्। कुतः? 'तथोपलब्धेः' तथा श्रुतेरतो न साम्यमिति सूत्रवृत्तिमभिप्रेत्य तदभिप्रेतश्रुत्युदाहरणपूर्वकं तद्व्याचष्टे—सूक्ष्मत्वं चेति। अतिसूक्ष्मत्वं चाधिकमित्यर्थः। न केवलं मोचकत्वमिति चशब्दार्थः। 'प्रमाणाधिक्यं' परिमाणाधिक्यम्। चशब्दः सूक्ष्मत्वसमुच्चये। आधिक्यं ब्रह्मणः यत इति शेषः। अस्यातोऽपि न साम्यमिति पूर्वेणान्वयः। श्रुतौ सर्वपदं ब्रह्मादिपरं, प्रकृतिः श्रीः, प्रकृतेरिति पञ्चमी। परमेश्वर इत्यनन्तरं सूक्ष्म इति विपरिणामेनानुवर्तते। तथाशब्दः समुच्चये। ऐश्वर्यमणिमादि। 'अन्ये' बलाद्या गुणादिधर्माः। न केवलं प्रभोरीश्वरस्य सूक्ष्मत्वं प्रकृतेरधिकं, किन्तु ज्ञानादयोऽप्यधिका इति समुच्चये चशब्दः। इति चेति चशब्दस्स्वोक्तिश्रुतिसमुच्चये॥

(५) यदि प्रकृतेः न पुरुषेण सर्वसाम्यं तर्हि नित्यमुक्तत्वादिसाम्यमपि न स्यात् ब्रह्मादिवत्। तथा च लयसद्भाव इत्याशङ्कां परिहरत्सूत्रमुपन्यस्यति—नेति॥ अत्र अत इत्यस्य समनेत्यादिसूत्रत्रयप्रकृतसाम्यतदभावपरत्वम्। नोपमर्देनेति नसमासः। अनुपमर्देनेत्यर्थः। तदपीतेरित्यतस्तदिति विभज्यानुवर्तते। तच्च विपरिणामेनावर्तते। साम्यमस्त्येवेति शेषः। तथा चातस्साम्यतदभावयोरेव साधितत्वात्तस्य परमेश्वरस्य ये स्वातन्त्र्याद्यसाधारणगुणास्तेषां यदसाधार

अतस्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम्।

(६) देशतः कालतश्चैव समा प्रकृतिरीश्वरे।
उभयोरप्यबद्धत्वं तदबन्धः परात्मनः॥
स्वत एव परेशस्य सा चोपास्ते सदा हरिम्।
प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना॥

ण्यं तन्मात्रनिष्ठत्वं तस्य 'अनुपमर्देन' अबाधेन तस्याः प्रकृतेः तेन परमेश्वरेण तेन नित्यमुक्तत्वादिना साम्यमस्त्येवेति सूत्रार्थ इत्यभिप्रेत्य सूत्रं व्याचष्टे—अत इति। 'विशेषगुणाः' असाधारणगुणाः स्वातन्त्र्यादयः। तेषामनुपमर्देनेत्यस्य तेषामसाधारण्यस्यानुपमर्देनेत्यर्थः। अन्यथा लक्ष्मीस्वातन्त्र्यादावपि विष्णुस्वातन्त्र्यादेरबाधादसङ्गतत्वापत्तेः। तन्मात्रनिष्ठत्वरूपासाधारण्यस्य तु अस्त्येव बाध इति भावः। साम्यमस्तीति शेषः। अनेनैवशब्दस्यान्वयः॥

(६) यदि प्रकृतेरीश्वरेण नित्यमुक्तत्वादिसाम्यं तर्ह्यस्त्येव विशेषगुणासाधारण्योपमर्दः, प्रकृतेर्नित्यमुक्तत्वे तत एव स्वातन्त्र्यप्राप्तेरित्यत आह—देशत इति॥ 'ईश्वरे' ईश्वरेण 'उभयोः' प्रकृतीश्वरयोः 'अबद्धत्वं' नित्यमुक्तत्वमित्यर्थः। अस्तीति शेषः। अपिः यद्यपि तथाऽपीत्यर्थोऽबद्धत्वमित्यस्यानन्तरो योज्यः। नित्यमुक्तत्वादिसाम्येऽपि न स्वातन्त्र्यादि प्रकृतेरित्याह—तदबन्ध इति। स चासावबन्धश्च तदबन्धः परमात्मनः परेशस्येति सामानाधिकरण्यम्। तथा च यद्यप्युभयोरबद्धत्वमस्ति, तथाऽपि 'परमात्मनः' परमचेतनस्य 'परेशितुः' विष्णोः 'तदबन्धः' अबद्धत्वमित्युक्तोऽबन्धः 'स्वत एव' अपराधीन एव, न प्रकृतेरतो न तस्याः स्वातन्त्र्यादीत्यर्थः। अथ वा—'तदबन्धः' तस्याः प्रकृतेरबन्धः नित्यमुक्तत्वं 'परमात्मनो' हरेः सकाशादागतं, परस्य तु स्वत एवेति वैयधिकरण्येनान्वयः। प्रकृतेर्हर्यधीनाबद्धत्वे युक्तिमाह—सा चेति। 'चो' यतः 'सा' प्रकृतिः 'सदा हरिमुपास्ते' सदा हरिसमीपे तिष्ठति अतो नित्यमुक्तत्वं तस्या इति भावः। यद्वा—प्रकृतेरबद्धत्वे उपासनावैयर्थ्यमित्यत उपासनं न फलार्थं, किन्तु आदरादित्युक्तन्यायेन स्वाभाविकमित्याह—सा चेति। चोऽवधारणे। स्वभावत इति शेषः। गुणान्तरेऽपि हर्यधीनत्वं प्रकृतेरित्याह—प्रकृतेरिति। 'गुणाः' ज्ञानानन्दाद्याः विष्णुना नियताः। न केवलं प्रकृतेः, किन्तु 'प्राकृतस्य' ब्रह्मादेर्ये गुणाः 'ते तु' तेऽपि 'वि

नियता नैव केनापि नियता हि हरेर्गुणाः ॥ इति भवि
ष्यत्पर्वणि ॥ १० ॥

(७) सू—ॐ ॥ अस्यैव चोपपत्तेरूष्मा ॥ ॐ ॥ ११ ॥

'द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मा वत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति । अथानूष्मावत्प्रकृतिश्च प्राकृतं च यन्न

---

ष्णुना नियताः' तदधीना एवेत्यर्थः । स्वत एवेत्यत्र हेतुमाह—नैवेति । हिर्हेतौ प्रमाणप्रसिद्धौ वा । भविष्यत्पर्वणीति वचनाच्चोद्यपरिहारादिति शेषः । अस्य तेषामनुपमर्देन साम्यं युक्तमेवेति पूर्वेणान्वयः ॥

(७) श्रुतिरूपयुक्त्यन्तरेण किञ्चित्साम्यं प्रतिपादयत्सूत्रं पठति—अस्यैवेति ॥ अत्रोष्माशब्देन घ्राणनाद्यविषयत्वाद्यनुकूलसामर्थ्यमुच्यते । तेन तद्वत्त्वप्रतिपादिका श्रुतिर्गृह्यते । उपपत्तेरिति षष्ठीति भावेन तां श्रुतिमुदाहरन् सूत्रं व्याचष्टे—द्विधा हीति । हिशब्दः प्रसिद्धौ । 'इदं' चेतनजातं 'द्विधा' द्विप्रकारोपेतमेव 'दृश्यते' प्रतीयते । तदेव प्रकारद्वयं दर्शयति—ऊष्मावदिति । ऊष्मावदित्यावर्तते । इदं ऊष्मावदनूष्मावच्चेति द्विविधमित्यर्थः । प्रकारिणावेवाह—तत्रेति । तयोर्मध्ये परं ब्रह्म 'ऊष्मावत्' चक्षुराद्यगोचरत्वानुकूलसामर्थ्यवत् । ऊष्मशब्दस्य सामर्थ्यवाचित्वं च 'ऊष्मनामा स भगवान् समर्थत्वात्प्रकीर्तितः' इत्यैतरेयभाष्योक्तिसिद्धम् । न चाकारान्तोष्माशब्दः न वर्णवाचकोष्मशब्दसमानार्थक इति वाच्यम् । किञ्चिद्वैरूप्येप्यर्थसाम्यसम्भवात् । केचित्तु-उष दाहे इत्युक्तेः पराभितापनसामर्थ्यविशेषवत्त्वं ऊष्मावत्त्वं, तच्च परमात्मनि 'भासस्तवोग्राः प्रतपन्ति विष्णो' इति वचनात् स्वभावतः सिद्धमित्याहुः । अन्ये तु-घ्राणाद्यविषयत्वमेवोष्मापदार्थ इत्याहुः । अत्र केचित्—नायं मतुप्, किन्तु वतिः न जिघ्रन्तीति श्रुत्यानुगुण्यात् । तथा चोष्मावत्त्वं ईषदूष्मसदृशत्वं परमात्मनः सर्वथा प्रत्यक्षाविषयत्वात् तत्प्रतिपादिका श्रुतिरूष्मा इत्याहुः । ब्रह्मणः ऊष्मावत्त्वं उपपादयति—यदिति । इदं च 'यत्' ब्रह्म यस्मान्न जिघ्रन्ति न शृण्वन्ति न विजानन्ति मनसा साकल्येन जनास्तस्मादूष्मावदिति व्याख्येयम् । एवमुत्तरत्रापि । यद्यपि घ्राणश्रोत्राविषयत्वं द्रव्यमात्रसाधारणं, तथाऽपि तद्गन्धादेः घ्राणाद्यविष

जिघ्रन्ति जिघ्रन्ति च यत्र पश्यन्ति पश्यन्ति च यत्र शृण्वन्ति शृण्वन्ति च यत्र जानन्ति जानन्ति च ' इति सौपर्णश्रुतेः किञ्चित्साम्योपपत्तेः ॥ ११ ॥

(८) सू—ॐ ॥ प्रतिषेधादिति चेन्न शारीरात् ॥ ॐ ॥ १२ ॥

' असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्ति

---

यत्वमादायासाधारण्यं युज्यत इति ध्येयम् । अनूष्मावद्दर्शयितुं प्रतिजानीते—अथेति । आनन्तर्यार्थोऽयं शब्दः । उच्यत इति शेषः । प्रतिज्ञातमाह—प्रकृतिश्चेति । ' प्रकृतिः ' श्रीः ' प्राकृतं ' ब्रह्मादि । प्राकृतं रुक्मिण्यादीति व्याख्यानं तु प्रकरणविरुद्धम् । चावन्योन्यसमुच्चये । ' यत् ' यस्मात् ' यत् ' प्रकृतिप्राकृतम् । उभयरूपत्वोपपादनाय भावाभावोक्तिः । चशब्दाः समुच्चये । सौपर्णश्रुतिश्चेति । न केवलं साम्यतदभावान्यथाऽनुपपत्तिरूपयुक्तिरिति चशब्दार्थः । अनेन सूत्रे ऊष्मा च ऊष्मावत्त्वप्रतिपादिका श्रुतिश्चेति चशब्दान्वयो दर्शितः । अस्येति पदे प्रातिपदिकार्थमाह—किञ्चित्साम्योपपत्तेरिति । देशकालव्याप्तिनित्यमुक्तत्वादिसाम्यस्योपपत्तेरर्थे भवतीत्यर्थः । किञ्चित्साम्योपपादिका भवतीति यावत् । अतोऽप्यस्ति किञ्चित्साम्यमिति वाक्यशेषः ॥

(८) किञ्चित्साम्यमाक्षिप्य समादधत्सूत्रमुपन्यस्यति—प्रतिषेधादिति ॥ अत्र पूर्वपक्षांशेन प्रकृतिपुरुषयोः किञ्चित्साम्यमिति साध्याध्याहारमभिप्रेत्य प्रतिषेधकश्रुत्युदाहरणपूर्वकं पूर्वपक्षांशं व्याचष्टे—असमो वेति । वैशब्दोऽवधारणे । ' परः ' परमात्मा ' असम एव ' न तु केनापि प्रकारेण सम इत्यर्थः । कुत इत्यत आह—न हीति । ' हि ' यतो लोके कश्चित्पुरुषः ' एवं ' परमात्मवत् न दृश्यते अत इत्यर्थः । असाम्यमेव विरुद्धधर्मोक्त्योपपादयति—सर्वे इति । ' एते ' जीवाः ' अणवः ' अपूर्णाः ' छिद्राः ' दोषिणः । दोषमेव लेशतो दर्शयति—देहतो जायन्ते नश्यन्ति चेति । ' परः ' परमात्मा तु देहतोऽपि न जायते न म्रियते पूर्णः सर्वगतो निर्दोष इति चशब्दार्थः । तत्त्वप्रदीपे तु अणुत्वप्रतियोगिभूतं सर्वगतत्वं चशब्दार्थः छिद्रत्वमपूर्णत्वमित्युक्तम् । साम्येत्यतः प्राक् ' अथ परः ' इत्यादिना परमेश्वरस्यैव नित्यसर्वगतत्वादिकमुक्त्वा ' सर्वे ह्येतेऽणवः ' इत्यादिनाऽन्येषां तदभावमुक्त्वा

अथ परो न जायते न म्रियते पूर्णश्चैव भवति' इति चतुर्वेदशिखायां साम्यप्रतिषेधान्नेति चेन्न शारीराद्धि साम्यं प्रतिषिध्यते ॥ १२ ॥

(९) कुतः ?

सू—ॐ ॥ स्पष्टो ह्येकेषाम् ॥ ॐ ॥ १३ ॥

'अथातस्समासमासमाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येतद्भवत्यथासमाः ब्रह्मेन्द्रो रुद्रः प्र

---

'भसमो वा' इत्यनेनेत्युपस्कृत्य योजनीयम्। साम्यप्रतिषेधादिति। परमेश्वरेणान्येषां किञ्चित्साम्यस्यापि प्रतिषिद्धत्वादित्यर्थः। साम्येत्यनेन सूत्रे तद्वाचकस्य अस्येत्यस्यानुवृत्तिः सूचिता। परिहारांशं व्याचष्टे—नेति। न प्रकृतेर्भगवत्साम्यमत्र प्रतिषिद्ध्यत इत्यर्थः। किं तर्हीत्यतः शारीरादित्यंशं व्याचष्टे—शारीरादिति। शरीरमात्रमधिकृत्य तदभिमानितया स्थिताच्छरीरकृतोत्पत्तिनाशयुक्ताच्चेत्यर्थः। हेतुगर्भविशेषणमेतत्। अत एव हेत्वर्थकहिशब्दः। जीवादिति शेषः। साम्यमिति। ईश्वरस्येति शेषः। साम्यमित्यनेन सूत्रे साम्यस्येति शेषः। प्रतिषिद्ध्यत इत्यनेन शारीरादित्यनन्तरमपि प्रतिषेधादित्यस्यानुवृत्तिश्च सूचिता। सूत्रभाष्ययोः शारीरादिति सावधारणं, न तु प्रकृतेरित्यवधारणार्थः। तृतीयार्थे पञ्चमीत्यवधेयम् ॥

(९) नन्वस्याः श्रुतेः सामान्यरूपत्वादत्र परमात्मनः शारीरेण साम्यं प्रतिषिध्यते, न प्रकृतेरिति कुत इत्याक्षिपति—कुत इति ॥ एतत्परिहाराय सूत्रं पठित्वा व्याचष्टे—स्पष्ट इति। 'हि' यतः 'एकेषां' माध्यन्दिनायनानां समादिवादः स्पष्टोऽस्ति, अतो हरेश्शारीरेणैव साम्यं प्रतिषिध्यते, न प्रकृतेरिति सूत्रार्थः। 'अथ' अनन्तरं 'अतः' प्रयोजनसत्त्वाद्धरेः प्रसादाद्वा 'समाः' सर्वधर्मैः 'समासमाः' केन चिद्धर्मेण समाः सर्वधर्मैरसमाः चेतना इति शेषः। अभिधीयन्त इत्यनुषज्यते। प्रतिधर्मिप्रदर्शनारम्भेऽथशब्दः। 'ब्रह्मणः' परब्रह्मणः 'रूपाणि' अवतारगानि मत्स्यादीनि समानीत्यन्वयः। 'यैः' रूपैः 'नियतिः' नियमनं नियम्यत्वलक्षकमेतत्। उत्पत्तिस्थितिलयोन्नियतीति समस्तपाठेऽपि 'उन्नियतिः' नियमनं, 'सर्वो द्वन्द्वः' इत्येकवद्भावः। छान्दसो

जापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पित रोऽसुरा यत्किञ्चेदं चरमचरं चाथ समाऽसमा प्रकृ तिर्वा समाऽसमा सैषा हि नित्या अजरा तद्वशा च ' इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ॥१३॥

(१०) सू—ॐ॥ स्मर्यते ॥ ॐ ॥ १४ ॥

मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः ।
ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समाऽसमा ॥ इ ति वाराहे ॥ १४ ॥

——*:*:*——

नपुंसकत्वाभावः । ' आयतिः ' नियमनसाध्या प्रवृत्तिर्जगतो भवतीति शेषः । उक्तमेवोपपादयति—एकमिति । ' हि ' यतः ' एतत् ' अव तारजातं रूपैः ' एकं ' अभिन्नं भवतीत्यर्थः । ' असमाः ' चेतनाः । ' ब्र ह्मा ' हिरण्यगर्भः 'प्रजापतिः' दक्षः ये केचिदन्ये देवाः ' असुराः ' सु रद्विषः इत्येतेऽसमा इत्यन्वयः । यत्किञ्चेदमिति विस्तरः । ' चरं ' चेत नम् । ' अचरं ' अचेतनम् । समा च साऽसमा च समाऽसमा । पूर्वे बहुवचनोक्तिः रूपबाहुल्यात् । नित्याऽजरेति साम्योपपादकम् । ' तद्व शा ' ईश्वरवशेत्यसाम्योपपादकम् । ' हि ' यस्मात् । एकेषामित्यस्या र्थमाह—माध्यन्दिनायनानामिति । समादिवाद इति शेषोक्तिः । वादो वचनं, तथा च समवादोऽसमवादः समासमवादश्चेत्यर्थः । अस्य त स्मादिति शेषेण शारीराद्धि साम्यं प्रतिषिद्ध्यत इति पूर्वसाध्येना न्वयः ॥

( १० ) न केवलं साम्यश्रुतेर्विशेषश्रुतिबलात्सङ्कोचः, किन्तु विशेष स्मृत्याऽपीत्याह सूत्रकृत्—स्मर्यते चेति ॥ अत्र साम्यादिरित्यस्या ध्याहारं चशब्दस्य स्मृतिसमुच्चायकत्वं पूर्वसाध्येनान्वयं चाभिप्रेत्य सूत्राभिमतस्मृत्युदाहरणेन सूत्रं व्याचष्टे—मत्स्येति । आद्यशब्देना न्येऽप्याविर्भावा गृह्यन्ते । विष्णोस्सर्वधर्मैः समा इत्यत्र हेतुः—अभे दत इति । तुर्विशेषार्थः । चस्त्वर्थः । वाराहे पुराणे स्मर्यते चेत्यन्व यः ॥ ६ ॥

॥ इति समनाधिकरणम् ॥

——*——

७. अधिकरणम् ॥

( १ ) सू—ॐ ॥ तानि परे तथा ह्याह ॥ ॐ ॥ १५ ॥

प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते ।

( २ ) 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्य चिन्त्ये ' इति कौषारवश्रुतिः ॥ १५ ॥

—*—

८. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अविभागो वचनात् ॥ ॐ ॥ १६ ॥

---

७. अधिकरणम् ॥

( १ ) अत्राधिकरणे चतुर्मुखेतरदेवानां परमात्मनि लयः समर्थ्यते । न विरिञ्चेतरदेवानां परमात्मनि लयस्तदप्रतिबिम्बत्वादिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—तानीति ॥ अत्र तानीत्यनेन 'भूतेषु ' इत्यत्र येषां देवानां भूतप्रवेशो निगदितस्तेषां सर्वेषां ग्रहणम् । प्राणद्वारेण लीयन्त इति शेष इत्यभिप्रेत्य सूत्रं व्याचष्टे—प्राणद्वारेणेति । श्रुत्यन्तरोदितद्वारान्तरप्रवेशपूर्वकं भूतवृत्त्या प्राणशब्दवाच्यविरिञ्चद्वारेणेत्यर्थः । सर्वाणि दैवतानीत्यनेन सम्यग्दर्शी देवभाग एव सङ्गृहीतो वेदितव्यः । तथैव तत्त्वप्रदीपोक्तेः । अनेन ऋष्यादीनामपि प्राणद्वारा हरिप्रवेश उक्तो भवति । पर इत्यस्यार्थः—परमात्मनीति । तथा चेत्थं योजना । सर्वाणि दैवतानि परमात्मनि 'विलीयन्ते ' प्रविशन्त्येव । न च 'प्रतिबिम्बो हरेः प्राणः प्राणस्यान्याः कलाः क्रमात् ' इति वचनसिद्धप्राणप्रतिबिम्बत्वविरोधः । यतः प्राणद्वारेण विलीयन्ते इत्यङ्गीक्रियत इति ।

( २ ) नन्वत्र प्रमाणाभाव इत्यतः प्रवृत्तं तथा ह्याहेति हेत्वंशं व्याचष्टे—सर्वे देवा इति । विरिञ्चेतरदेवा इत्यर्थः । 'प्राणं ' विरिञ्चदेवमित्यन्वयः । 'मुक्ताः ' कर्मणः 'लयं ' प्रवेशं, हिशब्दो हेतौ । श्रुतिरित्यनेनाहेत्यस्य कर्ता दर्शितः । सौत्रतथाशब्दस्तु प्राणप्रवेशद्वारा परमात्मप्रवेशपर इति सिद्धत्वान्न व्याख्यातः । श्रुतिरित्यनन्तरं यत इति शेषः । अस्यातो विलीयन्त इति साध्येनान्वयः ॥ ७ ॥

॥ इति पराधिकरणम् ॥

—*-:*:-*—

८. अधिकरणम् ॥

( १ ) अत्राधिकरणे देवादिमुक्तानां ईश्वराधीनत्वं समर्थ्यते । मु

'एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसङ्कल्पा यथा निकाममन्तर्बहिः परिचरन्ति' इति गोपवनश्रुतिः। तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम्।

(२) 'कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः' (तै.आ.३-१५-४.) इति वचनात्।

---

काः स्वतन्त्रा एव नेशाधीनाः, मुक्तत्वादेव 'एते देवाः' इति श्रुतेश्चेति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—अविभाग इति॥ अत्र मुक्तानां परमात्माधीनत्वात् 'अविभागः' तदधीनत्वमेवेति साध्यवाक्यार्थमभिप्रेत्य तत्र श्रुतिसिद्धसत्यकामत्वादियुक्तिविरोधमाशङ्क्य तत्परिहारायाप्यविभाग इत्यंशं व्याचष्टे—एते देवा इति। श्रुतिरित्यनन्तरं यत्सत्यकामत्वं वक्तीति शेषः। आदिपदेन सङ्कल्पो गृह्यते। तथा चेत्थं योजना। 'एते' इति श्रुतिर्यन्मुक्तानां सत्यकामत्वं वक्ति, तत्तेषां सत्यकामत्वं, उपलक्षणमेतत्। आदिशब्दस्योत्तरत्रापि सम्बन्धो वा। तथा च सत्यसङ्कल्पत्वं च यतः परमेश्वरकामाद्यविभागेनैव तदभेदेनैव तद्विषयविषयकत्वेनैव अङ्गीक्रियते, न स्वातन्त्र्येणातो न तद्विरोध इत्यतः तेषामविभाग इति। अनेन अविभाग इत्यस्य भगवत्कामाद्विभागस्तदविरुद्धार्थविषयकत्वं, तथा तत्कामितलाभस्येश्वरकामनिमित्तकत्वादविभाग इति द्वेधाऽर्थ उक्तो भवति। 'एते' प्रकृताः सायुज्यं प्राप्ता देवाः 'एतं' हरिमनुप्रविश्य 'सत्याः' नित्याः 'सत्यकामाः' सत्याभीष्टाः 'सत्यसङ्कल्पाः' अबाधितमानसिकसङ्कल्पयुताः 'यथानिकामं' यथेच्छं ईश्वरदेहान्तर्बहिः सञ्चरन्तीत्यर्थः।

(२) कुतः सत्यकामत्वश्रुतेरन्यानुसारिकामत्वरूपामुख्यार्थत्वकल्पनमित्यतो वचनादित्यंशं व्याचष्टे—कामेनेति॥

कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः।

यदमीषामदः प्रियं तदैतूप मामभि॥

इति ऋङ्मन्त्रस्यायमर्थः—'मृत्योः' संहर्तुः विष्णोः 'कामेन' इच्छया मे 'कामः' कामितं 'आगात्' आगतम्। ईशेच्छानन्तरं प्राप्तत्वात्तस्तदागतमित्युच्यते। कथमीश्वरेच्छायाः कारणत्वमित्यतो—हृदयाद्धृदयमित्याह। 'हृदयं' ममेच्छा 'हृदयात्' ईशेच्छया भवति।

(३) मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु ।
कामानुकूलकामत्वं नान्यत्तेषां विधीयते ॥ इति ब्रा
ह्मे ॥ १६ ॥

——*——

९. अधिकरणम् ॥

(१) सू—ॐ ॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्या
सामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृही
तः शताधिकया ॥ ॐ ॥ १७ ॥

भगवदिच्छानुसारिणीति यावदिति टीकारीत्या परममुक्तवाक्यमे तत् । शेषवाक्यार्थस्तु 'अमीषां' सर्वसंहारकभगवत्प्रमुखदेवानां यत्प्रियं एतन्मां प्रति प्रियमभ्युपैत्विति तत्त्वप्रदीपेऽभिहितः । विष्णुतत्त्वनिर्णयटीकायां तु मृत्योः 'कामेन' इच्छानुसारेणैव मे काम आगात् । लुङ् लोडर्थे । मुक्तावागच्छतु । मृत्योः 'हृदयात्' हृदयं सङ्कल्पमनुसृत्यैव मे 'हृदयं' सङ्कल्पः आगच्छतु । 'अमीषां' मनुष्यमृत्योर्यददः प्रियं तदेव मामभि आ सम्यगेतु ममापि प्रियं भवत्विति तत्त्वप्रदीपानुसारेण जीवन्मुक्तवचनतया व्याख्यातम् ॥

(३) सत्यकामत्वश्रुतेरमुख्यार्थत्वे स्मृतिमप्याह—मुक्तानामिति । तुरवधारणे । मुक्तानां सत्यकामत्वं सामर्थ्यं चेश्वराधीनमिति शेषः । तत्र सत्यकामत्वं निर्वक्ति—परस्य त्विति । 'तुः' एव । 'परस्य' परमात्मनः कामानुकूलकामत्वमेव तेषां सत्यकामत्वं नान्यदित्यर्थः । 'न विधीयते' नोच्यते । ब्राह्मे वचनादित्यनुवर्तते । अस्य तत्परमेश्वरेत्यनेनान्वयः ॥ ८ ॥

॥ इति अविभागाधिकरणम् ॥

——*——

९. अधिकरणम् ॥

(१) अत्राधिकरणे प्रतीकालम्बनाप्रतीकालम्बनतदितरमनुष्याणां मुक्त्यर्थं देहोत्क्रमणस्याज्ञानिमरणविलक्षणत्वं समर्थ्यते । ज्ञानिनां देहादुत्क्रमणं पामरमरणवदेव न विशेषोऽस्तीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—तदिति ॥ अत्र न ज्ञानिमरणस्याज्ञमरणाविशिष्टतेति साध्याध्याहारमभिप्रेत्य तत्र हेतुतया तदोकोऽग्रज्वलनमिति सूत्रांशं व्याचष्टे-उत्क्रान्तिकाल इति । अर्थलब्धोक्तिरियम् । यद्वा-तन्त्र

उत्क्रान्तिकाले हृदयस्याग्रज्वलनं भवति । 'तस्य है तस्य हृदयस्याग्रं प्रद्योतते' (बृ. ६-४-२.) इति श्रुतेः । तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात् ।

(२) यंयं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ ( गी.८-६. )

---

माश्रित्य तदित्यस्यार्थोक्तिः । तस्मिन्नुत्क्रान्तिकाल इति । अत एव तत्त्वप्रदीपे तदोत्क्रान्तिकाल इति तदर्थोक्तिः । विदुष इति शेषः । तेन तच्छब्दस्य विदुष इति चार्थः । तदोकस इत्यस्य भगवदोकसो हृदयस्येत्यपि तच्छब्दार्थ इत्याशयेन ओकश्शब्दितं स्थानं दर्शयति—हृदयस्येति । अग्रे ज्वलनं प्रकाशो भवति । अग्रं प्रकाशत इति फलितार्थः । हृदयस्याग्रज्वलनं भवतीति कुतो ज्ञायत इत्यतस्तच्छब्दसूचितश्रुतेरेवेत्याह—तस्येति । 'तस्य' उत्क्रमिष्यतः 'एतस्य' ज्ञानिनो हृदयस्याग्रं प्रकाशते । 'ह' खलु इत्यर्थः । अत्र तस्येति मरणवैशिष्ट्यमात्रपरमिति प्रमेयदीपोक्तिः, अस्यान्यथा वैयर्थ्यापत्तेरिति भावः । 'श्रुतेः' छन्दोगश्रुतेर्वाजसनेयश्रुतेश्चेत्यर्थः । हृदयाग्रप्रवेशनेऽपि ज्ञान्युत्क्रमणस्य को विशेष इत्यतो निष्क्रामतीति पदाध्याहारेण तत्प्रकाशित इत्यंशं व्याचष्टे—तत्प्रकाशित इति । तेन प्रकाशेन प्रकाशितनाडीद्वारस्सन्नित्यर्थः । 'निष्क्रामति' देहात् ज्ञानी, अतोऽस्ति विशेष इति वाक्यशेषः । ननु ज्ञानिनः प्रारब्धकर्मवतः कथमयं विशेष इत्यतः प्रवृत्तं विद्यासामर्थ्यादित्यंशं व्याचष्टे—विद्येति । भगवत्साक्षात्कारसामर्थ्यादित्यर्थः । तथा च प्रारब्धकर्मसद्भावेऽपि ज्ञानिनो ज्ञानसामर्थ्याद्विशिष्टोत्क्रान्तिर्युज्यते । ज्ञानस्य स्वोदयमारभ्यैव फलप्रदत्वादिति भावः ॥

(२) यदि ज्ञानिनः ज्ञानसामर्थ्यादेवमुत्क्रमणं भवति, तर्हि ज्ञानिनः ज्ञानजन्मदेहवियोगाख्यप्रथममरणमेवैवं किं न स्यादित्यतः—तच्छेषगत्यनुस्मृतियोगादित्यंशः प्रवृत्तः, तं व्याचष्टे—यं यमिति ॥ हे 'कौन्तेय' अर्जुन 'अन्ते' अन्त्यकाले यंयं वाऽपि 'भावं' आकृतिविशेषं पदार्थं वा पूर्वकर्मानुवशात् स्मरन् 'कलेबरं' देहं त्यजति पुरुषः सः तंतं तमेव भावं 'एति' प्राप्नोति । अन्त्यकालस्मरणे उपायमाह—सदा तद्भावभावित इति । भावोऽन्तर्गतं मनः तस्मिन्नाकारे पदार्थे वा भावस्तद्भावस्तद्विषयकं मनः तेन भावितोऽतिवासित इत्यर्थः । अत्र भावि

इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च।
( ३ ) 'आचार्यस्तु ते गतिं वक्ता' ( छा. ४-१४-१. ) इति हि लिङ्गम् ।
( ४ ) हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु ।

तस्य संस्कृतत्वं मनोधर्मस्तेन चात्मोपचर्येत इति ध्येयम् । 'स्मृतेः' गीतास्मृतेः । विद्याशेषेति हेतुगर्भं विशेषणम् । तथा च तस्या विद्यायाः ज्ञानस्य शेषः फलोपकार्यङ्गं शरीरत्यागकाले यत्स्वहृदयमारभ्य ब्रह्मपर्यन्तगम्यविषयानुस्मरणं तेन योगः साहित्यं तस्मादित्यर्थः । न केवलं विद्यासामर्थ्यादिति चशब्दार्थः । तथा च ज्ञानी न केवलं विद्यासामर्थ्याद्देहान्निष्क्रामति, येनातिप्रसङ्गः, किन्तु गत्यनुस्मृतियोगाच्च । न चैवं सत्युत्क्रमणे ज्ञानस्याहेतुत्वं प्राप्नोति । न चोभयोः साम्यम् । यतो गत्यनुस्मरणं विद्याशेषः । ननु भवेच्छेषः, यदि गत्यनुस्मरणं गतिप्राप्तिकारणं स्यात् । तदेव कुतः? 'यंयं वापि' इति स्मृतेरेवेति योजना ॥

( ३ ) ननु तथाऽपि 'यंयम्' इति सामान्येनोक्तत्वात् गत्यनुस्मरणं तत्प्राप्तिकारणमित्यर्थे न विशेषप्रमाणमस्तीत्यत आह—आचार्यस्त्विति ॥ 'आचार्यः' सत्यकामः । छन्दोगे उपकोसलं प्रत्यग्नीनां वाक्यमेतत् । 'इति' एवंरूपं स्मरणार्थं गतिश्रवणोत्तरभावीदं वाक्यमित्यर्थः । यद्वा—एतद्वाक्योक्तं गतिश्रवणमित्यर्थः । वक्तृत्वोक्त्या श्रोतृत्वस्याप्युक्तत्वादिति भावः । 'हि' यतः 'लिङ्गं' गतिस्मरणस्य तत्प्राप्तिसाधनत्वे ज्ञापकमस्तीत्यर्थः । अन्यथा स्मरणार्थं गतिश्रवणं व्यर्थं स्यादिति भावः । लिङ्गमित्यस्यात इति शेषेण गत्यनुस्मृतियोगाच्चेति पूर्वेणान्वयः ॥

( ४ ) इदं चोत्क्रमणं न गत्यनुस्मरणयुक्तेन सामर्थ्येन स्वतन्त्रेण भवति, किं तर्हि ? ज्ञानादिना प्रसन्नस्य भगवतोऽनुग्रहेणैवेति वक्तुं-हार्देत्यंशः प्रवृत्तः । तं तत्पदसूचितस्मृत्युदाहरणेन व्याचष्टे हृदिस्थेनेति ॥ सहयोगे तृतीया । तुरवधारणे । उपासत इति बहुष्वेकवचनम् । तथा च हृदिस्थेन हरिणा सहैव तस्यानुग्रहेणैवान्त्यकाले तं हरिमेव'उपासतां'ध्यायतां प्रतीकालम्बनानां अप्रतीकालम्बनानां च पुंसां 'ब्रह्मरन्ध्रेण' ब्रह्मनाड्योत्क्रान्तिर्भवेदित्यर्थः । यथोक्तं बृहद्भाष्ये—

विष्णोर्लोकं परं गच्छन् निष्क्रामन् मूर्ध्न एव तु ।

उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतां भवेत् ॥ इति चा
ध्यात्मे ।

( ५ ) शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनि
स्सृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भ
वन्ति (कठ.२-६-१६.) ॥ इति च ॥ १७ ॥

( ६ ) सू—ॐ ॥ रश्म्यनुसारी ॥ ॐ ॥ १८ ॥
निष्क्रामति । ' सहस्रं वा आदित्यस्य रश्मयः आसु

---

तथैव ब्रह्मणो लोकं सुषुम्नाया विभेदतः॥ इति ॥
अध्यात्म इतिवचनात् हार्दानुगृहीतः शताधिकयेत्यर्थः । सिद्ध इति वाक्यशेषः । अनेन सूत्रे हृदयस्यायं हार्दस्तेनेति विग्रहः । तथा च हार्देन हृदिस्थेन हरिणा सहैव हार्देनानुगृहीतस्तस्यानुग्रहं प्राप्त एव ज्ञानीदेहान्निष्क्रामतीति सूत्रखण्डार्थ उक्तो भवति ॥

( ५ ) प्रकाशितद्वारो निष्क्रामतीत्युक्तम् । तत्र नाड्यां विशेषो किंपरं—शताधिकयेत्यंशं तत्सूचितश्रुत्युदाहरणेन व्याचष्टे—शतमिति ॥ हृदयस्य नाड्यः तत्सम्बन्धिन्यः नाड्यः 'शतं चैका च' एकोत्तरशतसङ्ख्याका भवन्ति । तासां मध्ये 'एका' नाडी 'मूर्धानं अभि' प्रति ' निस्सृता' मूर्धपर्यन्तं गता । 'तया' शतोत्तरया सुषुम्नाख्यनाड्योर्ध्वे गच्छन् पुरुषोऽमृतत्वं 'एति ' प्राप्नोति । तत्रायं विवेकः-ये प्रतीकालम्बनाः सुषुम्नाप्रभेदात निष्क्रान्तास्ते 'अमृतत्वं ' ब्रह्मलोकं, अन्ये अप्रतीकालम्बनाः ' अमृतत्वं ' वैकुण्ठलोकं यान्तीति । 'अन्याः ' शतं नाड्यो ' विष्वगुत्क्रमणे ' तादर्थ्ये सप्तमी । लोकान्तरगमनार्थं भवन्तीति कठश्रुत्यर्थः । श्रुतिश्चेत्यनन्तरं शताधिकयेत्यर्थे प्रमाणमिति शेषः । न केवलं स्मृतिरितिचार्थः ॥

( ६ ) ननु यदि प्रकाशितनाडीद्वारो निष्क्रामति तर्ह्यज्ञानिवन्नाड्यन्तस्तमसैव गमनं स्यात । यद्यन्तरप्यस्ति प्रकाशः, तर्हि द्वारपदवैयर्थ्यमित्याशङ्कां परिहरत्सूत्रं पठित्वा तच्छेषमात्रं पूरयति—रश्मीति ॥ ज्ञानी नाड्यन्तराततादित्यरश्म्यनुसारी सन् ईश्वरमनुसृत्य देहान्निष्क्रामतीत्यर्थः । अतो न नाड्यन्तस्तमसोत्क्रामति , न वा द्वारपदवैयर्थ्यमिति वाक्यशेषः । द्वारप्रकाशस्य वैष्णवत्वादस्य च सौरत्वाद्भिति भावः । नाड्यन्तराततसौररश्म्यनुसारेणोत्क्रामतीत्येतत्कु

नाडीष्वाततास्तत्र श्वेतस्सुषुम्नो ब्रह्मयानस्सुषुम्नाया
माततस्तत्प्रकाशेनैष निर्गच्छति ' इति मैत्रायणश्रु
तिः ॥ १८ ॥

( ७ ) सू—ॐ ॥ निशि नेति चेन्न सम्बन्धात् ॥ ॐ ॥ १९ ॥
रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चे
न्न, सर्वदा सम्बन्धाद्रश्मीनाम् ॥ १९ ॥

( ८ ) कियत्कालम् । ?

सू—ॐ ॥ यावद्देहभावित्वाद्दर्शयति च ॥ ॐ ॥ २० ॥

तो ज्ञायत इत्यत आह—सहस्रमिति । वैशब्दः प्रसिद्धौ । आसु द्वैरा श्येन पञ्चशतभेदभिन्नाः पुनः प्रत्येकं पञ्चशतभेदभिन्नाः सहस्रसङ्ख्याकाः तासु नाडीषु 'आतताः' अन्तराश्रिताः सन्ति । 'तत्र' सहस्रसङ्ख्याकेषु रश्मिषु पूर्वोत्तरवर्गेषु मध्ये वर्णतः श्वेतो, नामतः सुषुम्नः, कर्मतो 'ब्रह्मयानो' ब्रह्मप्रापको रश्मिविशेषः । शताधिकायां सुषुम्नाख्यायां नाड्यामन्तराततोऽन्योऽस्ति । तत्प्रकाशेन 'एषः' ज्ञानी जीवो देहान्निष्क्रामतीत्यर्थः । श्रुतिरित्यनन्तरं उक्तार्थे प्रमाणमिति शेषः ॥

( ७ ) उक्तमाक्षिप्य समादधत्सूत्रं पठति—निशीति ॥ अत्राद्यन आवृत्त्या 'निशि' रात्रौ यतस्सूर्यरश्मयो न सन्ति अतः तदा पर्यवसितकर्मणां केषां चित् ज्ञानिनामपेक्षितमुत्क्रमणं न युक्तं, केषां चित् ज्ञानिनामेवं, केषां चिदनेवमिति वैलक्षण्यमपि न युक्तमित्याक्षेपांशयोजनामभिप्रेत्य तमंशं व्याचष्टे—निशीति । ज्ञानिन इति । परिसमाप्तप्रतिबन्धककर्मणो ज्ञानिन इत्यर्थः । न विलक्षणमपि कस्य चिद्युक्तमित्यपि व्याख्येयमेतत् । परिहारांशं व्याचष्टे—नेति । निशि मृतानां ज्ञानिनां बाह्यादित्यरश्म्यभावात्सर्वेषां रश्म्यनुसारेण उत्क्रमणानुपपत्तिर्नेत्यर्थः । कुतो नेत्यतः—सम्बन्धादिति । तद्व्याचष्टे—सर्वदेति । 'रश्मीनां' अन्तस्थादित्यरश्मीनां सर्वदा नाडीसम्बन्धसत्त्वादित्यर्थः । तथा च निशि बाह्यादित्यरश्म्यभावोऽप्रयोजकः । आन्तरादित्यरश्म्यभावस्त्वसिद्ध इति भावः ॥

( ८ ) ननु नाडीरश्मिसम्बन्धः सर्वदाऽस्तीति कोऽर्थः । किं सदातनः? किं वा देहपातपूर्वकालीनः? उत यावद्देहभावी ? । नाद्यः, सदा नाडीनामभावात् । न द्वितीयः, कदाचित् ज्ञानिनोऽपि तमसोत्क्रान्तिप्रसङ्गात् । न तृतीयः, यावद्देहं तन्नियमे प्रमाणाभावादिति भावेन पृ

यावद्देहो विद्यते तावद्रश्मिसम्बन्धोऽस्त्येव ।

( ९ ) 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो या वदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते' इति माध्यन्दिनायनश्रुतिः ॥ २० ॥

( १० ) सू—ॐ ॥ अतश्चायनेऽपि हि दक्षिणे ॥ ॐ ॥ २१ ॥

दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायणे ।
इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते ।

---

च्छति—कियदिति । कियत्कालं रश्मीनां नाडीसम्बन्धोऽस्तीति विपरिणामेनान्वयः । एतत्परिहाराय सूत्रमुपन्यस्यति—यावदिति ॥ अत्र सम्बन्धादिति पदं षष्ठ्यन्ततया विपरिणम्य अनुवर्तते । चशब्दो न पूर्वपक्ष्युक्तदोष इति साध्यसमुच्चायक इति भावेन यावद्देहभावित्यादिति हेतुवाक्यं व्याचष्टे—यावदिति । अस्त्येव यत इति शेषः । अस्य अध्याहृतातो नेत्यनेनान्वयः ॥

( ९ ) नन्वत्रापि प्रमाणाभावो दोष उक्त इत्यतः प्रवृत्तं दर्शयति चेत्यंशं व्याचष्टे—संसृष्टा इति ॥ 'एते' आदित्यरश्मयः 'संसृष्टाः' सम्बद्धा इत्यर्थः । चावन्योन्यसमुच्चये । 'वियोगो' विभागः 'इदं' प्रमितं स्थूलशरीरं 'एतैः' रश्मिभिः 'पश्यति' नाड्यन्तमार्गमिति शेषः । 'एतैः' प्रकाशैः निमित्तभूतैरुत्क्रान्तौ 'प्रवर्तते' प्रयतते ततः एतैरेवोत्क्रामत्युत्क्रान्तिकाले ज्ञानीत्यर्थः । श्रुतिरिति सूत्रशेषोक्तिः । यत इति शेषः । अस्यास्त्येवेति साध्येनान्वयः ॥

( १० ) ननु व्यर्थोऽयं ज्ञानिनः रात्रौ उत्क्रमणसम्भवप्रतिपादनायासः 'दक्षिणे मरणात्' इति वचनात् मोक्षार्थं ज्ञानिना दक्षिणायनोत्क्रान्त्ययोगात् । तद्वद्रात्रावप्युत्क्रान्त्यभावोपपत्तेरित्याशङ्कां परिहरत्सूत्रं पठति—अतश्चेति ॥ अत्रापिशब्दः स्मृतिसत्त्वेऽपि दक्षिणायनेऽपीति समुच्चये । चशब्दः साध्यसमुच्चये । हिशब्दो हेताविति भावेन अयनेऽपि हि दक्षिणे इति साध्यांशं उत्क्रान्तिर्युज्यत इति पदद्वयाध्याहारेण व्याचष्टे—दक्षिणेति । उत्तरायणमरणात् ब्रह्म यातीत्यन्वयः । उक्तं वचनं, भावे क्तः । इति स्मृतिसद्भावेऽपि दक्षिणायने उत्क्रान्तिर्युज्यत इत्यर्थः । अस्यातो न स्मृतिबलेन ज्ञानिनो दक्षिणायनोत्क्रान्त्ययोगदृष्टान्तेन रात्रावपि तदभावो वाच्य इति चशब्दसूचितसाध्येनान्वयः ॥

(११) शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तार उत्तरायणरश्मिभिः ॥
निर्गच्छन्तीतरैश्चापि यैरेष्ट्व्येतरा गतिः ।
उत्तरं दक्षिणमिति त एव तु निगद्यते ॥
न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ।

---

(११) कुत इत्यतः प्रवृत्तमत इति हेत्वंशं प्रकृतसम्बन्धपरामर्शकतया स्पष्टत्वात् अव्याकृत्य समग्रसूत्रार्थं स्मृत्या विशदयति—शतमिति ॥ सूर्यस्य दक्षिणायनरश्मयः 'शतं पञ्चैव' पञ्च शतान्येवेत्यर्थः । 'तावन्त एव' पञ्च शतान्येव ते रश्मयः । उभयेषां प्रयोजनमाह—महर्लोकादीति । महर्लोक एव आदिर्येषां ते महर्लोकादयः तान् गन्तारः प्रतीकालम्बनाः । अतद्गुणसंविज्ञानोऽयम् । तेन जनलोकादिगन्तार इति पर्यवस्यति । यथाश्रुते 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि' इति गीताभाष्योदाहृतवचनविरोधापत्तेः । अत्र जनलोकमारभ्यैव ततः परतः स्थितेषु जन्माद्यभावोक्तेः । उक्तं हि गीतातात्पर्ये—

नियमाज्जन्मनोऽभावो मुक्तस्यैव तथाऽपि तु ।
महर्लोकमतीतानां न जन्मांशलयौ विना ॥ इति ॥

अत्र न्यायदीपिका–जन्मपदं मरणस्याप्युपलक्षकम् । अंशलयावित्यंशेन भूमौ जननं लयान्ते च तदादौ मरणं चास्तीत्यर्थ इति । जनादावल्पजननादिभावादिति च । तथा चाल्पस्य अविवक्षितत्वात् अपुनरावृत्तित्वं युक्तम् । प्रतीकालम्बनप्राप्यसत्यलोकस्याप्रतीकालम्बनप्राप्यवैकुण्ठाद्यमुक्तस्थानरूपस्य च साक्षान्मोक्षस्य सुषुम्नानामकरश्म्येकसाध्यत्वेन रश्म्यन्तरासाध्यत्वात् महर्लोकादीत्युक्तम् । न च 'ब्रह्मोत्तरायणे' इत्युक्तिविरोधः । जनलोकादीनामपि अपुनरावृत्तित्वेन ब्रह्मलोकत्वात् तदेकार्थोपपत्तेः । 'इतरा' महर्लोकादिभ्योऽन्या 'गतिः' स्वर्गादिलोकान्तरप्राप्तिरूपा 'यैः' रश्मिभिः 'एष्ट्व्या' प्राप्या 'तैरितरैः' दक्षिणायनरश्मिभिः इतरे जनाः गच्छन्तीत्यन्वयः । उत्तरायणदक्षिणायनगत्युक्तेः प्रकृतसङ्गतिमाह—उत्तरमिति । 'ते एव' पञ्चशते एव तयोरेकैकमेव । तथा चोत्तरायणरश्मिपञ्चशतमेव 'दक्षिणे मरणात्'

ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ॥
अत्युत्तमानां केषां चिन्न विशेषोऽस्ति कालतः ।
इति नारायणाध्यात्मे ॥ २१ ॥

—*—

१०. अधिकरणम् ॥

( १ ) सू—ॐ ॥ योगिनः प्रति स्मर्येते स्मार्ते चैते॥ ॐ ॥ २२ ॥

इति स्मृतौ 'उत्तरं' उत्तरायणमिति निगद्यते । दक्षिणायनरश्मिप्रशतमेव दक्षिणायनमिति निगद्यत इत्यर्थः, अयं च तत्त्वप्रदीपोक्तः । अनेन 'ते' इति नपुंसकद्विवचनं षष्ठीद्विवचनत्वेन विपरिणतव्यमित्युक्तं भवति । ते रश्मयः निगद्यते निगद्यन्त इति वा । एवकारव्यावर्त्यं आपातप्रतीतार्थं निषेधति—न त्विति । स्मृतौ दक्षिणमुत्तरमिति शब्दोक्तः कालविशेषो 'नास्ति' न भवतीत्यर्थः । कुतोऽयमर्थो 'दक्षिणे मरणात्' इति स्मृतेः कल्प्यत इत्यत आह—न त्विति । उत्क्रमणायेति शेषः । तथा च ज्ञानिनां उत्क्रमणार्थं कालनियमो नास्तीत्यर्थः । कुतो नास्तीत्यत आह—नियमादिति । ज्ञानमिति शेषः । ज्ञानिनामुत्क्रान्तौ कालनियमाभावे कथं भीष्मादीनां उत्तरायणकालप्रतीक्षणमित्यत आह—कालेऽनुगुण इति । उत्तरायणशुक्लपक्षादिकाले अनुकूले सति फलं किञ्चिद्‌दतिशिष्यत इत्यर्थः । कालेऽनुगुण इत्यत्र अहः पूर्वपक्षादि विवक्षितमिति तत्त्वप्रदीपोक्तिः । उक्तस्यापवादमाह—अतीति । 'अत्युत्तमानां' भीष्मादेरप्युत्तमानां केषां चित् ज्ञानिनां सर्वकालस्याप्यतिशयितत्वात् न कालविशेषेण अतिशयो भवतीत्यर्थः । नारायणाध्यात्म इति । सूत्रार्थो विशदीकृत इति शेषः ॥ ९ ॥

॥ इति तदोकोधिकरणम् ॥

१०. अधिकरणम् ॥

( १ ) अत्राधिकरणे गत्यनुस्मरणादेः आवश्यकत्वं साध्यते । न गत्यर्थं विद्याऽनुस्मृती अपेक्षिते इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—योगिन इति ॥ अत्र योगिनः प्रति स्मर्येते इति हेतुवाक्यान्वययोग्यं पूर्वपक्षनिषेधरूपं साध्यवाक्यं दर्शयति—न केवलमिति । नेत्यावर्तते । केवलं 'कालादिकृते' कालादिमात्रकृते इत्यर्थः । आदिपदेन अग्न्यादिग्रहणं, 'गतिः' प्राप्तिः । ब्रह्मगतिः चन्द्रगतिश्चेति विग्रहः ।

न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु
ज्ञानयोगिनः कर्मयोगिनश्च ।
अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।

'अग्निर्ज्योतिः' इत्यादेरितीत्यन्तस्य स्मर्येते इत्यनेनापि सम्बन्धः । अतस्तदर्थं ते अपेक्षिते इति शेषः । तथा चेत्थं योजना—यतः 'अग्निर्ज्योतिः' इत्यादिना ब्रह्मचन्द्रगती केवलं ज्ञानकर्मरहितकालादिकृते स्मर्येते, अतो न गत्यर्थं मोक्षाय विद्याऽनुस्मृती अपेक्षिते इति नाति । ननु ते यदि न कालादिकृते तर्हि किंहेतुके स्मर्येते इति पृच्छति—किन्त्विति । तदुत्तरत्वेन योगिनः प्रति इति हेत्वंशं व्याचष्टे—ज्ञानेति । यत इत्यादावुपस्कार्यम् । अस्य प्रति इति सौत्रपदेनान्वयः । चस्समुच्चये । स्मर्येते इत्यनुषज्यते । इत्यत्र योगीति विशेषणादित्युपलक्षणम् । ब्रह्मविद इति विशेषणाच्चेत्यपि द्रष्टव्यम् । तथा च यतो ब्रह्मचन्द्रगती ज्ञानयोगिनः कर्मयोगिनश्च प्रति 'स्मर्येते' योगशब्दितविद्याकर्मकृते एव स्मृत्या उच्येते । कुतः 'अग्निः' इत्यत्र योगी, ब्रह्मविद इति विशेषणात्, अतो नैतत्स्मृतिबलेन गत्योः कालादिकृतत्वं मन्तव्यमिति वा । न केवलं कालादिदेवताप्रयाणकृते एते गती स्मर्येते, किन्तु ज्ञानकर्मसहितकालादिकृते एव, ज्ञानकर्मभ्यां विना कालादिदेवताप्रयाणस्यैवाभावादिति योजना । टीकाऽप्येवमेव योज्या । स्मृतावग्न्यादिशब्देन तदभिमानिदेवता गृह्यन्ते । तथा अहःशुक्लपक्षादिशब्दाः न कालवचनाः किन्तु देवतावचनाः । तथा च यत्र मार्गे प्रथमं अग्न्यभिमानिदेवतालोकः, अथ 'ज्योतिः' अर्चिषो लोकः, ततोऽहर्देवतालोकः, ततश्शुक्लपक्षदेवलोकः, ततः 'षण्मासाः' प्रत्येकं प्रत्येकं षण्मासाभिमानिदेवतालोकाः, ततः उत्तरायणाभिमानिदेवलोकाः सन्ति । 'तत्र प्रयाताः' अग्न्यादिदेवतायुतमार्गेण गच्छन्तो 'ब्रह्मविदः' तद्दर्शिनो विष्णवाख्यं परब्रह्म 'गच्छन्ति' प्राप्नुवन्ति । ततो न पुनरावर्तन्त इत्यर्थः । तत्र शुक्लपक्षलोकानन्तरं पूर्णिमादेवलोको मासदेवलोकानन्तरं मेषतुलाख्यविष्वभिमानिदेवतालोकश्च ग्राह्यः । तथा चोक्तं गीताभाष्ये—

तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
(गी. ८-२४,२५.)
इत्यत्र योगीति विशेषणात्स्मरणनिमित्ते चैते गती ॥
(२) गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम ।

---

देवेनाभिजिता शुक्लपक्षेन च सपूर्णिमा ।
विषुवा चायनेनासौ पूजितः केशवं व्रजेत् ॥ इति ॥

एवं प्रतिज्ञातमार्गद्वये अपुनरावृत्तिमार्गमभिधाय पुनरावृत्तिसाधनमाह—धूम इति । यत्रादौ धूमाभिमानिदेवस्य लोकः, तदनुरात्रिदेवस्य, ततः कृष्णपक्षदेवस्य, अथ षण्मासाभिमानिनां लोकाः, तदनु दक्षिणायनदेवलोको वर्तते । 'तत्र' तेन मार्गेण 'योगी' काम्यकर्मी 'चान्द्रमसं' चन्द्रसम्बन्धि ज्योतिः प्राप्य पुनः भूमौ जायत इत्यर्थः । न चैतावता दक्षिणायने मृतस्य ज्ञानिनो ब्रह्मप्राप्त्यभावश्शङ्कयः । 'विद्वान् ब्रह्म समाप्नोति यत्र तत्र मृतोऽपि सन्' इति गीतातात्पर्योदाहृतवचनात्तत्सिद्धेः । यत्रतत्रेत्यस्य अहरादिषु रात्र्यादिषु चेत्यर्थ इति न्यायदीपिकोक्तेः । नन्वस्तु गतौ विद्यापेक्षा, तथाऽपि तदनुस्मृतेरनुपयोग इत्यतः प्रवृत्तं स्मार्ते इत्यंशं व्याचष्टे–स्मरणेति । बहुव्रीहिः । च एव । 'एते' ब्रह्मचन्द्रगती । अनेन स्मृतेरिमे स्मार्ते तथा चैते गती स्मार्ते गत्यनुस्मृतिसाध्ये एव, न तां विना भवत इति सूत्रखण्डार्थ उक्तो भवति । गती इत्यनन्तरं यत इति शेषः । अस्यातस्तदर्थे गतिस्मृतिरपेक्षतेत्युपस्कृतवाक्येनान्वयः ॥

(२) कुतस्स्मार्ते एते ज्ञायेते इत्यतोऽपि प्रयुक्तस्य स्मर्येते इत्यस्य यतः स्मरणनिमित्ते स्मर्येते इत्यन्वयमभिप्रेत्य तां स्मृतिमुदाहरति—गतीति॥ ब्रह्म गच्छति चन्द्रं वा गच्छतीत्यन्वयः । वा विकल्पे । ध्रुवमेव । हन्तैवं ज्ञानिनोऽपि गतिप्रकारमभावयतो गत्यभावात समप्रयोजकत्वं ज्ञानस्मृत्योरित्यत आह—अननुस्मरत इति । ब्रह्मविदः ज्ञानात्पूर्वं गतिप्रकारमभावयतोऽपि ज्ञानानन्तरं ज्ञातब्रह्मप्रसादादुत्क्रान्तिकाले स्मरणं प्राप्य गतिर्भवत्येवेति न ज्ञानसाम्यं स्मृतेः, किन्तु ज्ञानस्य प्राधान्यं तच्छेषत्वं स्मृतेरेव । 'काले' उत्क्रान्तिकाले अज्ञानादिनाऽननुस्मरतः कर्मयोगिनोऽपि जन्मान्तरे काले स्मरणं प्राप्यैव गतिर्भवेत् । न च ब्रह्मविदः उत्क्रान्तिकाले बुद्धिमोहो भ्रंशो वा शङ्कनीयः । प्रारब्धकर्मणा प्राप्तक्लेशस्यापि तावत 'काले स्मरणं प्राप्य वै गतिः'

अननुस्मरतः काले स्मरणं प्राप्य वै गतिः ॥ इत्यध्यात्मे ॥ २२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य
द्वितीयः पादः.

॥ ॐ ॥

---

इति वचनादेवेति तत्त्वप्रदीपोक्तिः । अध्यात्मे ग्रन्थे वचनादिति शेषः । अस्य स्मरणनिमित्ते चैते इति पूर्ववाक्येनान्वयः ॥ १० ॥

॥ इति योग्यधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिका
यां चतुर्थाध्यायस्य द्वितीयः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) मार्गो गम्यं चास्मिन् पाद उच्यते ।

सू—ॐ ॥ अर्चिरादिना तत्प्रथितेः ॥ ॐ ॥ १ ॥

'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम' (छा. ५-१०-१.) इत्यर्चिषः प्राथम्यं श्रूयते । 'यदा ह वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' (बृ. ७-१०-१.) इति वायोः ।

( २ ) तत्रार्चिषः प्राप्तिरेव प्रथमा ।

( ३ ) द्वावेव मार्गौ प्रथितावर्चिरादिः विपश्चिताम् ।

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—मार्गेति ॥ ब्रह्मप्राप्तौ मार्ग इत्यर्थः । उत्क्रान्तानामिति शेषः, ब्रह्मनाड्या नाड्यन्तरेण चोत्क्रान्तानामिति तदर्थः, न तु ब्रह्मनाड्येत्येव । नाड्यन्तरोत्क्रान्तानां स्वस्वलोकप्राप्तौ मार्गान्तराभावात् । 'गम्यं' प्राप्यं कार्याकार्यब्रह्मरूपं, तेन मार्गेण गतानामिति शेषः । चः समुच्चये । 'अस्मिन्' चतुर्थस्य तृतीये । सङ्गत्यादिजिज्ञासाजननाय सूत्रमेवादौ पठति—अर्चिरादिनेति । एतदधिकरणाङ्गसन्देहबीजं श्रुतिविरोधं दर्शयति—तेऽर्चिषमिति । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते श्रद्धातपःप्रभृत्यनुतिष्ठन्ति श्रद्धया तपःपदोक्तज्ञानस्वरूपं ब्रह्मोपासते वा ते उत्क्रान्ताः 'अर्चिषं' तन्नामकाग्निपुत्रं 'अभिसम्भवन्ति' प्राप्नुवन्ति 'अहः' तदभिमानिदेवं 'आपूर्यमाणपक्षं' शुक्लपक्षाभिमानिदेवम् । इतीति । इति छन्दोगश्रुतावित्यर्थः । 'सर्वे वा एते उत्क्रामन्ति तेऽर्चिषमेवाभिसंयन्ति' इति श्रुत्यन्तरसमाख्यात्वद्योतनायाधिकांशोदाहरणम् । यदाऽयं 'पुरुषो' ज्ञानी 'अस्माल्लोकात्' शरीरात् 'प्रैति' उत्क्रान्तो भवति । सः प्रवहाख्यं वायुं प्रत्यायातीत्यर्थः । इतीत्यनन्तरं बृहदारण्यकश्रुताविति शेषः । वायोः प्राथम्यं श्रूयत इत्यनुषङ्गः । यत एवं श्रूयतेऽतः संशयः श्रुतिद्वयबलादुभयोरपि मार्गभेदेन प्राथम्यमिति पूर्वपक्षश्च प्राप्त इति वाक्यशेषः ॥

( २ ) सिद्धान्तयत्सूत्रं व्याचष्टे—तत्रेति ॥ ज्ञानिप्राप्यमार्ग इत्यर्थः । न तु वायुप्राप्तिरपीत्येवार्थः । अनेनार्चिरादिनेत्येतत्तात्पर्यतो व्याख्यातं भवति ॥

( ३ ) नन्वेक एव मार्गः अर्चिरादिरेवेत्येतत् कुतः इत्यतः प्रवृत्तस्य

धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ॥
अग्निर्ज्योतिरिति द्वेधैवार्चिषस्सम्प्रतिष्ठितिः।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ॥ इति ॥
एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान् ॥
इति ब्रह्मतर्के ॥ १ ॥

—:*:—

तत्प्रथितेरित्यस्य तस्यां स्मृतौ तेषां तस्य मार्गैकत्वस्य अर्चिरादित्वस्य च प्रसिद्धत्वादित्यर्थमुपेत्य तां स्मृतिं दर्शयति—द्वावेवेति ॥ अर्चिरादिरिति बहुव्रीहिः । तथा च 'सर्ववेदविनिर्णयात्' सर्ववेदान्निश्चित्य विचार्य ज्ञानिनामेकः कर्मिणां चापर इति द्वावेव मार्गौ 'प्रथितौ' प्रसिद्धौ ज्ञानिभिर्निर्णीताविति यावत् । न त्वेकस्त्रयो वा । 'विपश्चितां' उत्क्रान्तज्ञानिनां यो मार्गः सोऽर्चिरादिरेव ज्ञेयः । काम्यकर्मिणां मार्गस्तु धूमादिरेवेति योजना । ननु 'अग्निर्ज्योतिः' इति गीतास्मृतावग्नेः प्राथम्यमुच्यते, तत्कथमत्रार्चिषो ज्योतिश्शब्दितस्य द्वितीयप्राप्यत्वेनोक्तस्य प्राथम्यमुच्यत इत्यत आह—अग्निरिति । एकस्याग्निपुत्रस्यार्चिष एवाग्निर्ज्योतिरिति 'द्वेधा' द्विरूपेण 'सम्प्रतिष्ठितिः' सम्यगवस्थानं भवति नार्चिषोऽन्योऽग्निः । तत्र ब्रह्म संव्रजन् ज्ञानी प्रथममग्निमेत्याथ ज्योतिराप्नोति । तथाऽपि पृथक्किं नोच्यते 'तेऽर्चिषम्' इत्यादिश्रुतावित्यत आह—एकस्मिन्निति । 'महान्' पूज्यो अर्चिर्नामकोऽग्निर्ज्योतिर्भेदेन 'द्विरूपो' द्विविधोऽपि यत एकस्मिन् पुरे संस्थः, अतः 'तेऽर्चिषम्' इति श्रुतौ पृथक् नोच्यते। यतः प्रथमं द्विविधोऽपि क्रमेण ज्ञानिप्राप्योऽतो नार्चिषः प्राथम्यविरोधः । नन्वग्नेः सोमादनन्तरं प्राप्तिः 'सोमं वैश्वानरम्' इति वचनात्, अतः कथमेतदित्यत आह—अग्नेः सुत इति । तथा च यतोऽग्नेस्सुतोऽतः 'सोमं वैश्वानरम्' इति वक्ष्यमाणविरोधोऽपि न, अस्य प्रधानाग्निपुत्रत्वादिति योजना । ब्रह्मतर्क इत्यस्य प्रथितेरिति सौत्रपदेनान्वयः । सूत्रार्थस्तु—उत्क्रान्तो ज्ञानी ब्रह्म गच्छन्नेकेनैवार्चिरादिना मार्गेण गच्छति, न तु मार्गभेदेन । मार्गस्यार्चिरादित्वं एकत्वं च कुतः सिद्धम्? 'तत्प्रथितेः' तस्य ज्ञानिमार्गस्यार्चिरादित्वस्यैकत्वस्य च 'सर्वे वा' ( ) इति श्रुतौ 'अग्निः' इति स्मृतौ च प्रसिद्धत्वादिति ॥ १ ॥

॥ इति अर्चिराद्यधिकरणम् ॥

२. अधिकरणम् ॥

(१) सू—ॐ ॥ वायुशब्दादविशेषविशेषाभ्याम् ॥ ॐ ॥ २ ॥
अर्चिषो वायुं गच्छति 'स वायुमागच्छति' (बृ. ७-१०-१.) इति सामान्यवचनात् ॥

(२) 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरह

---

२. अधिकरणम् ॥

(१) अत्राधिकरणे वायोर्द्वितीयप्राप्यत्वं समर्थ्यते । तत्र 'द्वावेव मार्गौ' इति स्मृतेः समग्रमार्गस्यैकत्वेऽपि अर्चिःपूर्वपक्षयोर्मध्ये मार्गभेदसम्भवात् । 'स वायुमागच्छति, अर्चिषोऽहः' इति श्रुतिद्वयप्रामाण्याद्वाय्वह्नोरुभयोरधिकारिभेदेन द्वितीयप्राप्यत्वमिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—वायुशब्दादिति ॥ सूत्रेऽध्याहार्यप्रतिज्ञां दर्शयति—अर्चिष इति । अनन्तरमिति शेषः । तथा चैकेनैव मार्गेण ब्रह्म गच्छन् ज्ञानी तस्मिन् मार्गेऽर्चिषोऽनन्तरं वायुमेव गच्छति न त्वहरित्यर्थः । कुत एतदित्यतोऽत्र हेतुतया प्रवृत्तं सूत्रं अविशेषविशेषाभ्यां वायुशब्दात् वायुश्रुतेरित्यन्वयमुपेत्य व्याचष्टे—स इति । सामान्येत्यविशेषपदव्याख्यानम् । 'वचनात्' बृहदारण्यकश्रुतेः । 'सः' उत्क्रान्तोऽपरोक्षज्ञानी अर्चिर्द्वारा 'वायुं' प्रवहाख्यमागच्छतीति सिद्धान्ते श्रुत्यर्थः । सामान्यश्रुतेः द्वितीयप्राप्यतानिर्णायकत्वं तु न्यायानुगृहीतत्वेन । न्यायस्तु टीकायामेव प्रदर्शितः ॥

(२) ननु श्रुतेः सामान्यवचनत्वादेव प्रथमप्राप्यप्रतिपादकत्वं किं न स्यादित्याशङ्कायां न केवलमेवंन्यायानुगृहीतसामान्यश्रुत्या वायोर्द्वितीयप्राप्यतासिद्धिः, येनोक्तदोषस्स्यात् । अपि तु विशेषश्रुतितश्चेति भावेन प्रवृत्तं विशेषेत्यंशं व्याचष्टे—स इति ॥ 'सः' ज्ञानी 'इतः' शरीरात् 'गतः' उत्क्रान्त इत्यर्थः । यद्वा—'इतः' अर्चिषो 'गतः' तल्लोकान्निर्गत इत्यर्थः । द्वितीयां गतिमिति सामानाधिकरण्यं, 'गतिं' प्राप्य अहरागच्छतीत्यन्वयः । एवमुत्तरत्रापि । 'विशेषवचनात्' विशेषश्रुतेः । चस्सामान्यश्रुतिसमुच्चये । स्पष्टस्सूत्रार्थः । अत्र टीकायां पूर्वाधिकरणगुणसूत्रत्वेनापीदं सूत्रं व्याख्यातं, तस्मिन् पक्षे 'वायुशब्दात्' वायोः द्वितीयप्राप्यत्वश्रुतेः सकाशाद्वायुशब्दस्य वायोः प्राथम्येन प्राप्यत्वश्रुतेः 'अविशेषविशेषाभ्यां' भावप्रधानोऽयं सामान्यविशेषभावाभ्यां निमित्ताभ्यां बाधो द्वितीयप्राप्यत्वप्र

रन्न आपूर्यमाणपक्षम्' (          ) इति विशेषवच
नाच्च ॥ २ ॥

---*---

३. अधिकरणम् ॥

सू—ॐ ॥ तडितोऽधि वरुणस्सम्बन्धात्॥ ॐ ॥ ३ ॥

(१) 'मासेभ्यस्संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकम्' इति कौण्डिन्यश्रुतिः । 'संवत्सरात्तडितमागच्छति तडितः प्रजापतिलोकम्' इति च गौपवनश्रुतिः ।

---

तिपादकत्वं सम्भवतीति नार्चिःप्राथम्यश्रुतेस्तद्विरोध इति सूत्रार्थः । तदनुसारेण सामान्यवचनत्वाद्विशेषवचनत्वादिति भाष्यार्थश्च द्रष्टव्यः । एवमस्मिन् पक्षे प्रतिज्ञाभाष्यस्यापि सामान्यश्रुतेरर्चिषोऽनन्तरं वायुं गच्छतीत्यर्थ इत्युपस्कारेण व्याख्यानं द्रष्टव्यम् ॥ २ ॥

॥ इति वायुशब्दाधिकरणम् ॥

---:*:---

३. अधिकरणम् ॥

(१) अत्राधिकरणे तडिदभिमानिलोकस्य संवत्सराभिमानिलोकानन्तरप्राप्यत्वं समर्थ्यते । तत्र सन्देहबीजं श्रुतिविगानं दर्शयति—मासेभ्य इति ॥ यद्यपि छन्दोगे 'संवत्सरादादित्यम्' (          ) इति आदित्यस्यापि संवत्सरानन्तर्यं श्रुतमस्ति । तथाऽपि अनुक्तित उक्तेर्बलवत्त्वात्कौण्डिन्यगौपवनश्रुतिद्वयबलात्संवत्सरात्पश्चादादित्यात्पूर्वं प्रजापतेः प्राप्यत्वमविचारेणैव सिद्धमिति प्रजापतेः पूर्वं संवत्सरादनन्तरं वरुणतडितोरुभयोरपि अधिकारिभेदेन प्राप्यत्वम्, उत संवत्सरानन्तर्यं तडित एव, न वरुणस्य, तस्य तु तडिदानन्तर्यमिति विचार्यत इति भावः । श्रुत्योर्माससंवत्सरतडिच्छब्दास्तत्तद्देवतालोकपराः । प्रजापतिशब्दः प्रजेश्वरपरो दक्षपरो वा बोध्यः । पूर्वश्रुतौ गच्छतीति शेषः । कौण्डिन्यश्रुतिरित्यनन्तरं वरुणस्य संवत्सरादानन्तर्यं वक्तीति, गौपवनश्रुतिरित्यनन्तरं तडितः संवत्सरादानन्तर्यं वक्तीति च शेषः । यत एवं श्रुतिद्वयविरोधः संशयबीजमस्ति अतः संशय इति भावः॥

( २ ) 'तत्र तटितो वरुणं गच्छति । तटिता ह्यूह्यते वरुण लोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो रा जा सत्यानृते विविञ्चति' ( ) इत्युपरिस म्बन्धश्रुतेः ॥ ३ ॥

—:✿:—

४. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आतिवाहिकस्तल्लिङ्गात् ॥ ॐ ॥ ४ ॥

पूर्वोक्तस्त्वातिवाहिको वायुः । पूर्वगमनलिङ्गात् ॥ ४ ॥

---

( २ ) सिद्धान्तयत्सूत्रं व्याचष्टे—तत्रेति ॥ उपरीत्यत्रापि सम्ब ध्यते । तथा चोत्क्रान्तो ज्ञानी सर्वोऽपि 'तत्र' स्वगम्ये मार्गे संवत्सरा नन्तरं तटितमेव गच्छति । तटित उपरि तदनन्तरं वरुणं गच्छतीत्य र्थः । अनेन 'तटितोऽधि' तटित उपरि वरुणः प्राप्यो, न तु ततः प्रा क्, इति सौत्रप्रतिज्ञा व्याकृता भवति । कुत एतदवगतमित्यतस्सम्ब न्धादित्यंशं व्याचष्टे—तटिता हीति । 'हि' यस्मात्तटिल्लोकेन 'ऊह्य ते' धार्यते वरुणलोकस्तस्मात्तदुपरि तटिदुपरिगते तत्र स्वलोके 'मु क्तामयो' वीतरोगः वरुणो राजते मुक्तामयो मौक्तिकपुरुष इत्यपि के चित् । तटित उपरि मुक्तामयोऽसौ वरुणलोको 'राजते' प्रकाशते । लो कस्य वीतरोगत्वं तत्रत्यवरुणापेक्षयेति वा । 'तत्र' वरुणलोके वरुणो राजा प्रजाकृते सत्यानृते 'विविञ्चति' विवेचयतीत्यर्थः । उपरिसम्ब न्धश्रुतेरिति । तटित इत्यनुवर्तते । अनेन सम्बन्धादित्येतच्छ्रुत्युपलक्ष कं, वरुणस्येति विपरिणामेनानुवर्तते । अधीत्यन्तस्य हेतुवाक्येऽप्य न्वयः । तथा च तटितोऽधि वरुणस्य सम्बन्धश्रुतेरिति हेत्वर्थ उक्तो भवति । संवत्सरानन्तरं तटिदुपरि सम्बन्धित्वश्रुतेरित्यपि हेत्वर्थ माहुः ॥ ३ ॥

॥ इति तटिदधिकरणम् ॥

—:✻:—

४. अधिकरणम् ॥

( १ ) अत्राधिकरणेऽर्चिरनन्तरप्राप्यस्य वायोरातिवाहिकत्वं सम र्थ्यते । पूर्वं प्राप्यत्वेनोक्तो वायुर्मुख्य इति पूर्वपक्षे सिद्धान्तयत्सूत्रमु पन्यस्यति—आतिवाहिक इति ॥ अत्रातिवाहिक इति प्रतिज्ञांशं व्या चष्टे—पूर्वोक्त इति । तुशब्दोऽवधारणे । तथा च योऽयं पूर्वप्राप्यतयो

( २ ) कुतः ?

सू—ॐ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ॐ ॥ ५ ॥

'स वायुमागच्छति' (बृ. ७-१०-१.) इति प्रथममुच्यते। 'उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' (        ) इत्यन्तेऽपि वायुगमनश्रुतेः।

---

क्तो वायुरसौ प्रवहाख्यः 'आतिवाहिकः' अतिशयितं विष्णुं वहतीत्यतिवहो मुख्यवायुस्तस्यायं तत्पुत्रः स एवेत्यर्थः। न मुख्य इत्येवकारार्थः। प्रवहस्य प्राप्यत्वं वायुपुत्रत्वं च—

प्रवहं वायुपुत्रं च सूर्यसोमौ च विद्युतम्।
प्राप्य प्रधानवायुं च याति तत्परमं पदम् ॥

इति बृहद्भाष्योदाहृतप्रमाणसिद्धम्। अत एव सूत्रस्य वायुपुत्रत्वज्ञापनार्थमेव प्रवह इत्यल्पाक्षरं पदं विहायातिवाहिक इत्यधिकाक्षरपदप्रयोगः। कुत इत्यतः प्रवृत्तं तल्लिङ्गादिति हेत्वंशं तच्च लिङ्गं चेति विग्रहाश्रयणेन व्याचष्टे—पूर्वेति। गमनं प्राप्तिः। तर्ह्यमुख्यस्यैव भवेन्न मुख्यस्येति भावः ॥

( २ ) ननु तथाऽपि कथं पूर्वप्राप्यस्य वायोरातिवाहिकत्वसिद्धिः, तथा सति मुख्यप्राप्त्यभावापातात्। अथैतद्दोषपरिहाराय उत्तरत्रापि कश्चिद्वायुः प्राप्योऽस्तीत्युच्यते। तथाऽप्यनिवृत्तस्संशयः। किं पूर्वोक्त आतिवाहिको मुख्यो वा? एवमुत्तरोक्त आतिवाहिको मुख्यो वेति। मुख्यस्यापि प्रथमप्राप्तेरमुख्यस्याप्युत्तरप्राप्तेश्च सम्भवात्। न चात्र विशेषहेतुरस्ति, येन पूर्वप्राप्यस्यातिवाहिकत्वसिद्धिरुत्तरप्राप्यस्य च मुख्यत्वसिद्धिरिति भावेनाक्षिपति—कुत इति ॥ पूर्वोक्तस्यातिवाहिकत्वसिद्धिरुत्तरोक्तस्य मुख्यत्वसिद्धिश्च कुत इत्यर्थः। प्राप्यत्वलिङ्गस्य सावकाशत्वसम्भवादिति भावः। एतत्परिहाराय सूत्रं पठित्वा—तत्र पञ्चम्याः सप्तम्यर्थत्वं तदित्यस्य बुद्धिस्थपरामर्शित्वं तन्त्रावृत्तिं चाभिप्रेत्य व्याचष्टे—उभयेति। तुरवधारणेऽपिः समुच्चये। यथेत्यादौ तथेत्यन्ते चोपस्कर्तव्यम्। वायुगमनमिति बुद्ध्या विविच्य प्रथममित्यत्रापि सम्बध्यते। उत्तर इति पूर्वोत्तरयोरन्वेति। उक्तस्येत्युभयत्र शेषः। आतिवाहिकस्येति भावप्रधानम्। मुख्यस्याप्युपलक्षकमेतत्। श्रु

पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे दिव
स्पतिरिति विशेषणात्पूर्वत्रातिवाहिकस्यैव सिद्धेः।

(३) ब्रह्मतर्के च—

उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा।

तेरित्येतद्व्यामोहे हेतुत्वेनान्वेति। तथा चेत्थं योजना—यथा 'स वायुमागच्छति' इति 'प्रथमं' पूर्वं 'वायुगमनं' वायोः प्राप्तिः 'उच्यते' श्रूयते तथा 'अन्तेऽपि' उत्तरत्रापि 'उत्क्रान्तो विद्वान्' इति वायुगमनश्रुतेः ज्ञानिप्राप्यवायुत्वस्य उभयत्र समानत्वात्पूर्वोक्त आतिवाहिकः परो मुख्यो वा? उत्तरे उत्तरत्रोक्तः परः आतिवाहिको वेति 'व्यामोहे' सन्देहे 'उत्तरे' उत्तरस्मिन् दिवस्पतित्वविशेषणाल्लिङ्गादुत्तरोक्तस्य मुख्यत्वस्यैव सिद्धेः पूर्वोक्तस्यातिवाहिकत्वस्यैव सिद्धेरिति। अस्य पूर्वोक्तस्त्वातिवाहिको वायुरिति पूर्वप्रतिज्ञयाऽन्वयः। केचित्तु—सूत्रे ल्यब्लोपनिमित्ता पञ्चमी व्यामोहं निराकृत्येति। भाष्येऽपि व्यामोह इति प्रथमान्तम्। तस्य नञाऽध्याहृतेनान्वय इत्याहुः। अनेन—'उभयव्यामोहात्' 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' 'उत्क्रान्तो विद्वान्' इत्युभयविधवाक्यादुभयत्रादावन्ते च प्राप्ये वायौ प्रत्येकं मुख्यत्वातिवाहिकत्वोभयकोटिकव्यामोहे सन्देहे प्रसक्तेऽपि तस्माद्दिवस्पतित्वविशेषणात्तस्योत्तरोक्तस्य तत्सिद्धेर्मुख्यत्वसिद्धेस्तस्य पूर्वोक्तस्यातिवाहिकत्वसिद्धेश्च पूर्वोक्त आतिवाहिक एवेति सूत्रार्थ उक्तो भवति। श्रुत्यर्थस्तु उत्क्रान्तो ज्ञानी हरिमधिगच्छन् 'अन्ततः' अन्ते विद्युतमेव प्राप्नोति। कथं वरुणावराया विद्युतोऽन्ततो गम्यत्वमित्यतो विद्युत्स्वरूपमाह—द्यौरिति। 'द्यौः' भारत्येव 'विद्युत्' तच्छब्दवाच्या तस्याः पतिं वायुं प्राप्य 'तेनैव' तन्मुखेनैव परं ब्रह्मप्राप्नोति, न तु तदनन्तरं प्राप्यान्तरमस्तीति॥

(३) नन्वस्तूत्तरस्य मुख्यत्वं, तथाऽपि पूर्वोक्तस्यातिवाहिकत्वानिश्चयः। मुख्यस्यैवोभयत्रावस्थानसम्भवादित्याशङ्कां परिहर्तुं सर्वं मार्गं स्मृत्या दर्शयति—ब्रह्मतर्के चेति॥ चोऽवधारणे। समुच्चये च। सर्वोऽपि मार्ग उक्तः शङ्का च परिहृतेति वाक्यशेषः। स्मृतौ तुश

तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥ इति ॥ ५ ॥

---*---

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ॐ ॥ ६ ॥

प्रकारान्तरेण तत्रतत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति नाशङ्कनीयम् । विद्युत्प

---

ब्दः पूर्वोक्ताद्विशेषमाह । ‘ स्वाच्छरीरात् ’ स्वाभिमन्यमानजडदेहादुत्क्रान्तो ज्ञानी प्रथममर्चिषमेव गच्छतीत्यन्वयः । द्वितीयस्तुशब्दोऽर्चिषोऽग्निपुत्रत्वद्विरूपत्वलक्षणविशेषद्योतकः । ‘ ततः ’ तदनन्तरं ‘ हि ’ प्रसिद्धौ । ‘ वायोः ’ मुख्यस्य पुत्रं गच्छतीत्यन्वयः । तस्य नाम स्मारयति—य इति । यो नाम्ना आतिवाहिकः प्रवहः प्रसिद्धोऽसौ वायुपुत्रः इह द्वितीयप्राप्यत्वेन विवक्षित इत्यर्थः । ‘ पूर्वपक्षं ’ शुक्लपक्षं ‘ उदक् ’ उत्तरायणं ‘ प्रजापं ’ दक्षं तत्संज्ञिकदेवतान्तरं वा । ‘ सोमं ’ चन्द्रं ‘ वैश्वानरं ’ मूलाग्निं शौंशुमारचक्रप्राप्तेरुपलक्षकमेतत् । ‘ ध्रुवं ’ ध्रुवराजं ‘ देवीं दिवं ’ भारतीं ततः परं वायुं ‘ परं ’ मुख्यं वायुमिति वा । ‘ तेन ’ वायुना तद्द्वारा ‘ पुरुषोत्तमं ’ हरिं ‘ एति ’ प्राप्नोतीत्यर्थः । एतीत्यन्ते गच्छतीत्यादौ च पर्यायधातुद्वयोपादानं मध्येऽपि सर्वत्र सम्बन्धज्ञापनार्थम् । चापितथाशब्दाः परस्परसमुच्चये । इति ब्रह्मतर्क इत्यन्वयः ॥ ४ ॥

॥ इति आतिवाहिकाधिकरणम् ॥

---*---

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुख्यवायोरन्तिमत्वं समर्थ्यते । परब्रह्मणोऽर्वाक् वायोरन्यः प्राप्योऽस्तीति पूर्वपक्षं तन्निषेधरूपं सिद्धान्तं च दर्शयन् सूत्रमुपन्यस्यति—वैद्युतेनेति ॥ तत इत्यस्यार्थमाह—प्रकारान्तरेण तत्रतत्रोच्यमानत्वादिति । ‘ तत्र ’ श्रुत्यादौ मार्गे ‘ प्रकारान्तरेण ’ तारतम्यक्रमं विहाय सोमानन्तरं तदवरस्याग्नेरिन्द्रानन्तरं ध्रुवस्य प्राप्तेः प्रतिपाद्यमानत्वादित्यर्थः । तत इत्यस्यार्थान्तरमाह—वायोरपि परत इति । ऊर्ध्वमित्यर्थः । न केवलमर्चिरादेः परत इत्यपेरर्थः । अपीत्यनेन

तिना वायुनैव 'स एनान् ब्रह्म गमयति' (छा.५-१०-२.)
इति ब्रह्मगमनश्रुतेः ।
( २ ) विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम् ॥

तथाऽभ्युपगमे बाधकाभावादिति पूर्वपक्षे युक्तिरपि सूचिता । तत इत्यस्यैव पुनरर्थान्तरमाह—ब्रह्मण इति । परेत्यादौ ग्राह्यम् । 'अर्वाक्' अधस्तात् । सूत्रे तत इत्यनन्तरं अध्याहार्यं प्रतिज्ञाशेषं दर्शयति—गन्तव्योऽस्तीति न शङ्कनीयमिति । प्राप्यः कश्चिद्वर्तत इति नाक्षेप्तव्यमित्यर्थः । किन्तु वायुरेव अन्तिमप्राप्य इति शेषः । यद्वा—विद्युत्पतिना वायुनेत्यत्राप्याकृष्यते । तत्र तृतीया प्रथमार्थे । गन्तव्य इत्यस्ति । अन्तिम इति शेषः । तथा च किन्तु विद्युत्पतिः वायुरेव अन्तिमप्राप्य इति प्रतिज्ञाशेषस्सिद्धः । एवं सूत्रेऽपि विपरिणामेन प्रतिज्ञासिद्धिरिति ध्येयम् । कुतो न शङ्कनीयमित्यतो ब्रह्मप्राप्तिरिति पदाध्याहारेण वैद्युतेनेत्यंशं सावधारणं कृत्वा व्याचष्टे—विद्युदिति । ब्रह्मगमनमिति बुद्ध्या विविच्य अत्रापि सम्बध्यते । तथा च विद्युत्पतिना वायुनैव 'ब्रह्मगमनम्' तत्प्राप्तिर्भवतीत्यर्थः । यत इति शेषः । न तु द्वारान्तरं मध्ये अपेक्षितमित्येवकारार्थः । विद्युत्पतिनेत्यनेन विद्युतो भारत्या अयं वैद्युत इति वृत्तिर्दर्शिता । ब्रह्मप्रापकत्वं वायोः कुत इत्यतः तच्छ्रुतेरित्यंशं व्याचष्टे—स इति । वायुनेत्येतत् विपरिणामेनात्राप्यन्वेति । तथा च वायोरेव 'स एनान्' इति ब्रह्मप्रापकत्वश्रुतेरित्यर्थः । अनेन सूत्रे हेत्वंशे वैद्युतेनेत्यस्य पञ्चम्यन्ततया विपरिणामेनान्वयो वा तत इत्यस्य आवृत्त्या अन्वयो वा दर्शितः । 'सः' वायुः 'एनान्' अप्रतीकालम्बनान् परं ब्रह्म प्रतीकांस्तु कार्यं नयतीति छन्दोगश्रुत्यर्थस्तु प्रागेवोक्तः ॥

( २ ) ननु वायोरिव अन्यस्यापि ब्रह्मप्रापकत्वे अन्तिमत्वं सम्भवतीत्यत आह—विद्युदिति ॥ 'विद्युत्पतिः' भारतीभर्ता । न श्रीरपि पृथग्गन्तव्येति भावेन प्रयुक्तस्य एवशब्दस्य व्यावर्त्यमाह—न चेति । चोऽवधारणे । साक्षादिति शेषः । तुशब्दार्थो वा । कुतो नेत्यत आह—कुत इति । 'प्राणनायकं' इन्द्रियेश्वरं 'तं' वायुमृते तदन्यस्य जीवस्य 'शक्तिः' ब्रह्मगमयितृत्वसामर्थ्यं 'कुतो भवेत्' न कुतोऽपीत्यर्थः । अत्र विशेषः—

इति बृहत्तन्त्रे ॥ ६ ॥

——:*:——

६. अधिकरणम् ॥

( १ ) सू—ॐ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ॐ ॥ ७ ॥
'स एनान् ब्रह्म गमयति' ( छा. ५-१०-२. ) इति का
र्यं ब्रह्म गमयतीति बादरिर्मन्यते ।

( २ ) ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात्क्वचित् ॥
यद्यपि ब्रह्मदृष्टिस्स्याद्ब्रह्मलोकमवाप्नुयात् ॥

---

विश्वाद्या अनिरुद्धाद्याः ते द्विधा सम्प्रकीर्तिताः ।
विष्णुरूपास्तदन्ये च तान् सर्वान् याति मोक्षगः ॥
तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः ।
ते वायुं प्रापयन्त्येनं स वायुं स हरिं पृथक् ॥
विश्वादिरूपं तुर्यश्च वासुदेवश्च नापरः ।

इति सप्तमस्कन्धतात्पर्योक्तोऽनुसन्धेयः । बृहत्तन्त्र इति । उक्तत्वादिति शेषः । अस्य नाशङ्कनीयमित्यनेनान्वयः ॥ ५ ॥

॥ इति वैद्युताधिकरणम् ॥

——*——

६. अधिकरणम् ॥

( १ ) अत्राधिकरणे पूर्वं विचारितेनार्चिरादिना मार्गेण गतानां अल्पाधिकारिणां देवानां च गम्यं निरूप्यते । वायुरेव ब्रह्मगमयतीति यद्गम्यत्वेनोक्तं ब्रह्म तच्चतुर्मुखाख्यमेवेति पूर्वपक्षं प्रापयत्सूत्रमुपन्यस्यति—कार्यमिति ॥ अत्र यावदुपस्कार्यं तावद्दर्शयन् कार्यं बादरिरिति प्रतिज्ञांशं व्याचष्टे—स इति । अत्रेति उच्यत इति च शेषः । तथा च 'स एनान् ब्रह्म गमयति' इत्यत्र वाक्ये 'कार्यं' उत्पत्तिमच्चतुर्मुखाख्यं ब्रह्म स वायुर्गमयतीत्युच्यत इति शुको मन्यते इति योजना ॥

( २ ) ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात्कथमयमर्थ इत्यतः प्रवृत्तमस्यैव गत्युपपत्तेरित्यंशं पूर्वस्मादेवततश्शब्दयोरनुवृत्त्या व्याचष्टे—ऋत इति । वचनादित्यनन्तरं ततः चतुर्मुखमुक्तेरर्वागिति शेषः । तेन तत इत्यस्यार्थद्वयमुक्तं भवति 'तस्यैव' चतुर्मुखस्यैव 'गतेः' प्राप्तेरुक्तत्वादित्यर्थः । न तु परस्येत्येवशब्दार्थः । अध्यात्मेति ग्रन्थविशेषसंज्ञा। वचनादित्यस्योपपत्तेरवगमादित्यध्याहारेणान्वयः । अनेनोत्क्रान्तानां

इत्यध्यात्मवचनात्तस्यैव गत्युपपत्तेः ॥ ७ ॥

( ३ ) सू—ॐ ॥ विशेषितत्वाच्च ॥ ॐ ॥ ८ ॥

'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति कौषारवश्रुतौ ॥ ८ ॥

( ४ ) सू—ॐ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ॐ ॥ ९ ॥

'ब्रह्मविदाप्नोति परम्' ( तै. २-१. ) इति तद्व्यपदेश

परप्राप्त्यनुपपत्तौ देवभिन्नत्वे सति बद्धत्वादिति युक्तिरुक्ता भवति । तथा च युक्तिबलाद्ब्रह्मश्रुतेरमुख्यार्थोऽङ्गीकार्य इति भावः । यद्वा—सूत्रे उपपत्तेरित्यनन्तरं चेत्याकृष्यत इत्याशयेन तदर्थतया वचनादित्युक्तम् । तस्य च गतेर्वचनात् स्मृत्युक्तत्वाच्चेत्यर्थ इति ध्येयम् । स्मृत्यर्थस्तु—यद्यपि देवेतरेषां ब्रह्मदृष्टिः स्यात्, तथाऽपि देवान् 'ऋते' विना को वा पुमान् 'कश्चित्' बन्धकाले चतुर्मुखमुक्तिपर्यन्तं परब्रह्म 'प्राप्नुयात्' प्राप्तुं शक्तः स्यात्, न कोऽपि । देवानां साक्षाद्ब्रह्मप्राप्तिश्च देहलयानन्तरं मुक्तिदशायां वा ततःपूर्वं मानुषत्वेन जातानां देवानां उत्क्रान्त्यनन्तरं बन्धदशायामेवेति द्रष्टव्यम् । न च दृष्टिवैयर्थ्यम् । यतः सोऽधिकारी 'ब्रह्मलोकं' चतुर्मुखलोकमवाप्नुयादिति ॥

( ३ ) कार्यस्यैव प्राप्तौ न केवलं युक्तिः, नापि स्मृतिः साधिका, किन्तु विशेषश्रुतिरपीत्याह सूत्रकृत्—विशेषितत्वाच्चेति ॥ तत्सूत्रं व्याचष्टे—यदीति । 'यदि वाव' यद्यपि 'परं' परमात्मानमभिपश्यति, तथाऽपि देवभिन्नो ज्ञानी बन्धकाले चतुर्मुखाख्यमेव ब्रह्म प्राप्नोतीत्यर्थः । प्रमाणबलादन्यज्ञानादन्यप्राप्तिरुचितेति हशब्दार्थः । द्विरुक्तिस्तात्पर्यार्था । भाष्यस्य सूत्रेणान्वयः । प्राप्यब्रह्मणश्चतुर्मुखत्वेन विशेषितत्वाच्चेति सूत्रार्थः । अस्य हेतोः पूर्वप्रतिज्ञयाऽन्वयः ॥

( ४ ) ननु कथं परज्ञानिनः कार्यप्राप्तिरुच्यते । 'ब्रह्मविदाप्नोति परम्' इति परप्राप्तेरेव श्रुतत्वादन्यथा तद्विरोधादित्याशङ्कां परिहरत्सूत्रं पठति—सामीप्यादिति ॥ अत्र तुशब्दस्य तद्व्यपदेशस्त्वित्यन्वयः । स चासौ व्यपदेशश्चेति विग्रहः हेतौ पञ्चमी चेत्यभिप्रेत्य व्याचष्टे—ब्रह्मेति । 'व्यपदेशः' श्रुतिः 'समीपतः' समीपे कालत इति शेषः । तुशब्दः सामान्यश्रुतित्वरूपविशेषद्योतकः । कार्यप्राप्तेरिति शेषः । न तु दूर इत्येवशब्दार्थः । 'परमपि' परब्रह्मापि न केवलं कार्यमित्यपि शब्दार्थः । अपीति एवेति च तुशब्दस्यार्थान्तरकथनम् । इतीत्यनन्तरं

स्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थ एव ॥ ९ ॥

(५) कदा ?

सू—ॐ ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ॐ ॥१०॥

'ते ह ब्रह्माणमभिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ति' इति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ॥ १० ॥

वक्तीति न विरोध इति वाक्यशेषः । न तु चतुर्मुखप्राप्तिं प्रतिषेधति, नापि परब्रह्मप्राप्तिं ब्रूते इत्येवशब्दार्थः । तथा चेत्थं योजना—यतस्तद्व्यपदेशो 'ब्रह्मविदाप्नोति परम्' इति श्रुतिस्तु 'सामीप्यात्' कार्यपरप्राप्त्योः कालसामीप्यान्निमित्तादेव प्रवृत्ता ज्ञानी कार्यप्राप्तेः समीपकाल एव कार्यं प्राप्याचिरेणैव परमपि प्राप्नोतीत्येतदर्थमेव वक्ति, न तु कार्यप्राप्तिं प्रतिषेधति, अवधारणशून्यत्वात्, नापि प्रथमत एव परप्राप्तिं ब्रूते तच्छब्दाभावादिति यावत् । अतो न तद्विरोधः कार्यप्राप्तिवचनस्येति । सामान्यश्रुतेः 'यदि ह वा' इति विशेषश्रुत्या बाधोपपत्तेरिति भावः ॥

(५) ननु समीपत एव परं ब्रह्म प्राप्नोतीति कोऽर्थः । प्रलयादर्वाक्प्रलय एव वा । नाद्यः । प्रथमं परप्राप्तौ बाधकत्वेनोक्तस्य बद्धत्वस्यात्रापि बाधकत्वसाम्यात् । तथात्वे वा प्रथममेव परप्राप्त्युपपत्तेः । न द्वितीयः । विशेषप्रमाणाभावादिति भावेन पृच्छति—कदेति ॥ कस्मिन् काले परं प्राप्नोतीत्यर्थः । तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे—कार्यात्यय इति । श्रुतेरित्यनेनाभिधानादित्यस्य महाप्रलये इत्यनेन कार्यात्यय इत्यस्य ब्रह्मणेत्यनेन तदध्यक्षेणेति पदस्य चार्थ उक्तो भवति । गच्छन्तीति शेषोक्तिः । अनेन सूत्रे ज्ञानी 'कार्यात्यये' सकलकार्याणां विनाशरूपप्रलये 'तदध्यक्षेण' तेषां कार्याणां स्वामिना चतुर्मुखेन सह 'अतः' चतुर्मुखात्तद्द्वारा 'परं' सर्वोत्तमं ब्रह्म गच्छतीत्यभ्युपगम्यते । अतो नोक्तविकल्पावकाशः, द्वितीयपक्षाङ्गीकारात् । न च बद्धत्वविरोधः । प्रलये ज्ञानिनां लिङ्गशरीरान्मुक्तत्वेन तदभावादिति भावः । न च तत्प्रमाणाभावः 'अभिधानात्' 'ते ह' इति श्रुतेरिति सूत्रार्थ उक्तो भवति । सूत्रे तदध्यक्षेणेत्युक्तिप्रयोजनं चतुर्मुखस्य कार्यप्रपञ्चाधिकृतत्वात्तद्ब्रह्मजिगमिषूणां तेनैव सहगमनं युक्तम् । न तमतिहायेति युक्तिसूचनमिति तत्त्वप्रदीपेऽभिहितम् । श्रुत्यर्थस्तु—'ते'

( ६ ) सू—ॐ ॥ स्मृतश्च ॥ ॐ ॥ ११ ॥
ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते परात्मानः प्रविशन्ति परं पदम् ॥ इति ॥ ११ ॥
( ७ ) सू—ॐ ॥ परं जैमिनिर्मुख्यत्वात् ॥ ॐ ॥ १२ ॥
ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् परमेव ब्रह्म गमयती ति जैमिनिर्मन्यते ॥ १२ ॥
( ८ ) सू—ॐ ॥ दर्शनाच्च ॥ ॐ ॥ १३ ॥

---

देवेतरज्ञानिनः ' ब्रह्माणं ' चतुर्मुखं ' अभिपद्य ' प्राप्य ' यदा ' यत्काले एतत्कार्यं विलीयते ' अथ ' तदा प्रलयकाले कार्यब्रह्मणा सह परं ब्रह्म ' अभि गच्छन्ति ' प्राप्नुवन्तीति ॥

( ६ ) स्मृत्याऽप्येतमर्थं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—स्मृतेश्चेति ॥ न केवलमभिधानादिति चशब्दार्थः । परे परमात्मनि म नो येषां ते परात्मानः ' सर्वे ते ' ज्ञानिनः ' परस्य ' ब्रह्मायुषः ' अ न्ते ' ब्रह्मणां संवत्सरशतानन्तरं ' प्रतिसञ्चरे ' प्रलये संप्राप्ते सति तदा ' ब्रह्मणा ' चतुर्मुखेन सह ' परं पदं ' ब्रह्म प्रविशन्तीति स्मृत्यर्थः । इति स्मृतेरित्यन्वयः । स्मृतेरित्यस्य कार्यात्यय इति प्रकृतसाध्येना न्वयः । इति ज्ञायत इति शेषः ॥

( ७ ) पूर्वपक्षान्तरं सूचयत् सूत्रमुपन्यस्यति—परमिति ॥ अत्र मुख्यत्वादिति हेतुं व्याचष्टे—ब्रह्मशब्दस्येति । तत्रैवेति । परब्रह्मण्येवे त्यर्थः । अन्यत्रामुख्यत्वादित्येवशब्दार्थः । परमिति साध्यवाक्यं सो पस्करं व्याचष्टे—परमेवेति । ' स एनान् ब्रह्म गमयति ' इति पूर्वभा ष्यमिहापि सम्बध्यते । तच्चावर्तते । एवकारो भिन्नक्रमः । अर्थ इत्य ध्याहारः । तथा च ' स एनान् ब्रह्म गमयति ' इत्यत्र वाक्ये ' सः ' वायुरेनान् परं ब्रह्म गमयतीत्येवोच्यते, न कार्यमिति जैमिनिराचार्यो मन्यते इति योजना ॥

( ८ ) ननु ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि प्रागुक्तोपपत्तिश्रुति स्मृतिविरोधात्तद्ग्रहणानुपपत्तेरमुख्यार्थकल्पना युक्तेत्याशङ्कां परिहर त्सूत्रमुपन्यस्यति—दर्शनाच्चेति ॥ अत्र परमित्येतत्परस्येति विपरि णामेनानुवर्तते । तेनैवार्थकचशब्दस्यान्वयः । साध्यसमुच्चयेऽपि चश ब्द इति भावेन सूत्रं व्याचष्टे—दृष्टत्वाच्चेति । चोऽवधारणे । परब्रह्म णश्चेत्यन्वेति । ज्ञानिभिरिति शेषः । अस्य परमेवेति पूर्वेणान्वयः । अ

दृष्टत्वाच्च परब्रह्मणः ॥ १३ ॥

( ९ ) सू—ॐ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ ॐ ॥ १४ ॥

न हि कार्ये प्रतिपत्तिः प्राप्नवानीत्यभिसन्धिश्च ॥ १४ ॥

( १० ) यदुपास्ते पुमान् जीवन्यत्प्राप्तुमभिवाञ्छति ।

यच्च पश्यति तृप्तस्सन् तत्प्राप्नोति मृतेरनु ॥ इति पाद्मे ॥

( ११ ) सू—ॐ ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभ

यथा च दोषात्तत्क्रतुश्च ॥ ॐ ॥ १५ ॥

---

नेन ज्ञानिभिः श्रवणादिसाधनैरपरोक्षतया परब्रह्मण एव 'दर्शनात्' ज्ञातत्वात् अन्यस्यादृष्टत्वाद्वायुस्तान् परं गमयतीत्युपपन्नमिति सूत्रार्थ उक्तो भवति ॥

( ९ ) हेत्वन्तरेण परप्राप्तिरेवोपपन्नेत्येतमर्थं प्रतिपादयत्सूत्रमुपन्यस्यति—न चेति ॥ अत्र चो यत इत्यर्थे, अवधारणे, तुशब्दार्थे वा। प्रतिपत्तिसहितोऽभिसन्धिरिति विग्रहः । कार्ये इति विषयसप्तमी । तथा च यतो ज्ञानिनां कार्ये एव प्रतिपत्तिरभिसन्धिश्च नास्ति । न तु परविषयेऽपि तयोरभावः । परविषय एव प्रतिपत्तिरभिसन्धिश्चास्ति कार्ये तु नास्तीति वा । अतो वायुः परमेव तान् गमयति न कार्यमिति सूत्रयोजनामभिप्रेत्य तद्व्याचष्टे—न हीति । 'हि' यतः 'प्रतिपत्तिः' उपास्तिः 'अभिसन्धिः' इच्छा । चः समुच्चये । अस्ति ज्ञानिनामिति शेषः । अस्मातः परमेवेति पूर्वसाध्येनान्वयः ॥

( १० ) सन्तु ज्ञानिनां परविषय एव दर्शनप्रतिपत्त्यभिसन्धयः, तथाऽपि तेषां परप्राप्तिरेव न कार्यप्राप्तिरिति कुत इत्यत आह—यदिति॥ 'जीवन्' देहयुक्तः पुमान् यदुपास्ते उत्क्रान्तिकाले यत्प्राप्तुमभिवाञ्छति 'तृप्तस्सन्' तृप्ततया यत्पश्यति दर्शनसमये परमानन्दमप्राप्त्वा दन्यत्रालंबुद्धिमान् सन् पश्यति 'मृतेरनु' देहवियोगानन्तरं 'तच्च' तदेव प्राप्नोति नान्यदिति स्मृत्यर्थः । पाद्म इत्यनन्तरं उक्तत्वाच्च सौत्रहेतोरप्रयोजकता शङ्क्येति वाक्यशेषः ॥

( ११ ) अथाधिकारिभेदेनोभयप्राप्तिरिति सिद्धान्तयत्सूत्रमुपन्यस्यति—अप्रतीकेति ॥ अत्र परमिति कार्यमिति चानुवर्तते । अन्यानिति शेषः । उभयथा दोषाच्चेत्यन्वयः । चशब्दस्सिद्धान्ते दोषाभावसमुच्चायकः । क्रतुशब्दः तद्घटितश्रुतिपरः । द्वितीयश्चशब्दो यत इत्यर्थे,

क्रमानुरागी भगवान् क्रमात्पुम्भिरवाप्यते ।

( १२ ) प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्।
न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥
अप्रतीका देवतास्तु ऋषीणां शतमेव च।
राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ॥

सप्रतीकाश्चतुर्मुखमप्रतीकाः परमिहैते गच्छन्ति ॥

'प्रतीकं देहः' इत्यादिश्रुतिस्मृतिसूचकश्च।

इतीत्यनन्तरं स इति श्रुतेरर्थ इति शेष इति भावेन सूत्रं व्याचष्टे—प्रतीकमिति। ' स एनान् ब्रह्म गमयति ' इति पूर्वभाष्यमिहापि सम्बध्यते। प्रथमेतिशब्दात्परोऽर्थशब्दोध्याहार्यः। गारुडवचनादित्यस्य आवृत्त्या उभयत्रान्वयः। तथा च इत्थं योजना—' स एनान् ब्रह्म गमयति ' इत्यत्र वाक्ये ' सः ' वायुः ' एनान् ' अप्रतीकालम्बनान् परं ब्रह्म ' गमयति ' नयति। अन्यांस्तु कार्यं नयतीत्युच्यत इति भगवन्मतम्। कुत एतत ? उभयत्रोक्तदोषात्। सर्वेषां कार्यप्राप्तिरेव, सर्वेषां परप्राप्तिरेवेत्यन्यतरनियमपक्षे गत्यनुपपत्त्यादीनां ब्रह्मशब्दामुख्यत्वादीनां च दोषाणामुक्तत्वात् व्यवस्थयोभयप्राप्तिपक्षे च दोषाभावाच्च। न च पक्षद्वयोक्तदोषापातः। गारुडवचनात् अप्रतीकालम्बनान् परं नयति, अन्यान् कार्यं नयतीत्यवगमात् प्राप्तेऽर्थे च दोषाणां यथा कथं चित् परिहर्तव्यत्वादिति भावः। न च क्रमं विहाय यथेष्टं गमनमस्त्विति वाच्यम्। चशब्दबोधित 'क्रमानुरागी' इति श्रुतेः। न च 'यत्प्राप्तुमभिवाञ्छति तत्प्राप्नोति ' इति वचनादिच्छयैव प्राप्तिः न क्रमापेक्षेति वाच्यम्। 'स यथाकामो भवति' (बृ. ६-४-५.) इति बृहदारण्यकश्रुतेस्तत्सिद्धेः। न चात्र उपासनानुक्तिः, यत उपासनं कर्मपदवाच्यमेव। न च क्रमोऽपि सौकर्यरूप एव, न योग्यतारूप इति वाच्यम्। चशब्दसूचितात् ' प्रतीकं देहः ' इत्यादिगारुडवचनात् ' सप्रतीकाश्चतुर्मुखम् ' इति वचनाच्च योग्यतारूपत्वेनैव तस्य निश्चितत्वादिति। एवमेव सूत्रयोजनाऽपि द्रष्टव्या ॥

( १२ ) अधिकारिणो द्विविधाः। प्रतीकालम्बनाप्रतीकालम्बनभेदात्। तत्रान्योन्याश्रयदोषपरिहारायाद्यान् लक्षणमुखेन दर्शयति—प्रतीकमिति ॥ ' देहो ' देहादिः प्रतीकमिति ' उद्दिष्टः ' अभिहितः। आदिशब्दाच्चक्षुरादीन्द्रियं गृह्यते। तत्र देहादावेव एषां ब्रह्मदर्शनं जायते। न तु ' क्वापि ' काले ' व्याप्ततया ' सर्वत्र हरेर्दर्शनमस्ति ते प्रती

एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् ।
अयोग्यदर्शने यत्नाद्भ्रंशः पूर्वस्य चापि तु ॥
अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्मसलोकताम् ॥
ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम् ।

---

कालम्बना इत्युच्यन्ते । तान् दर्शयितुं प्रतिजानीते—अप्रतीका इति । अप्रतीकालम्बनास्त्वित्यर्थः । उच्यन्ते इति शेषः । तान् दर्शयति—देवता इति । शतं चेत्युभयत्रान्वयः । एवशब्दोऽन्यव्यावर्तकः । चो समुच्चये । एवं तथेत्यपि । गन्धर्वादि च तदप्सरसां शतं चेति विग्रहः । गन्धर्वेष्वप्यष्टकं ग्राह्यम् । एतेषामप्रतीकत्वे हेतुमाह-एतेऽधिकारिणो यतो व्याप्तदर्शिन इति । 'अन्ये' एतद्भिन्ना ऋषयो नरोत्तमाद्याः क्वचिदपि काले व्याप्तदर्शिनस्तद्योग्या न भवन्तीत्यर्थः । 'तत्रैव' देहादावेव । न तु व्याप्ततयेत्यस्यैव विवरणमेतत् । नन्वयोग्यस्यापि यत्नात्प्राप्तिसम्भव इत्यत आह—अयोग्येति । अयोग्यं च तद्दर्शनं चेति कर्मधारयः । द्रष्टुमयोग्यस्य दर्शनमिति वा । तादर्थ्ये सप्तमी । 'यत्नात्' श्रवणादिरूपयत्नकरणात् । 'पूर्वस्य' पूर्वोत्पन्नस्यापि दर्शनस्य 'भ्रंशः' तत्फलाभावो भवेदित्यर्थः । अयोग्ययत्नवर्जनस्यापीतिकर्तव्यतारूपत्वात्तदभावे फलाभावादिति । विशेषस्तुशब्दार्थः । उभयेषां फलमाह—अप्रतीकाश्रया इति । ये 'अप्रतीकाश्रयाः' व्याप्तविष्णुदर्शनाः 'हि' प्रसिद्धाः ते वैकुण्ठस्थमेव परं यान्ति न कार्यमात्रम् । प्रतीकालम्बनास्तु स्वदेह एव ब्रह्मदृष्ट्या ब्रह्मसलोकतामेव 'गच्छेत्' गच्छेयुः । प्रलयादर्वाक् परब्रह्मसमानलोकत्वमेव प्राप्नुयुः, न तु वैकुण्ठमित्येवार्थः । परब्रह्मणो वैकुण्ठेतरलोकेष्वप्यवस्थानात् । प्रलयपर्यन्तं चतुर्मुखं प्राप्तास्तदुपदेशेन ज्ञानमुज्ज्वलीकुर्वन्तः वैकुण्ठेतरमहरादिलोकेष्वेवास्ते आसत इति भावः । न च—

ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।
तत्र मुख्याः हरिं यान्ति तदन्ये वायुमेव तु ॥
अपक्वा ये न ते यान्ति वायुं वा हरिमेव वा ।
स्थानमात्राश्रितास्ते तु पुनर्जातिविवर्जिताः ॥

इति वचनविरोधः । अत्र 'तत्र' ज्ञानिषु मुख्याः अप्रतीकालम्बनाः इ

इति गारुडवचनात् उभयत्रोक्तदोषाच्चाप्रतीकालम्ब नान् परं नयति ।
'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति त त्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते' (बृ. ६-४-५.) इति श्रुतेश्च । अत्र कर्मोपासनमेव अन्यान्कार्ये नयतीति भगवन्मतम् ॥ १५ ॥

(१३) सू—ॐ ॥ विशेषं च दर्शयति ॥ ॐ ॥ १६ ॥
'अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशा देवा वाव सर्वप्रकाशा ऋषयोऽन्तः प्रकाशाः मनुष्या एव बहिः

---

रिं यान्ति, तदन्ये प्रतीकालम्बना वायुं, 'अपक्वाः' समाधिपरिपाक रहितास्तु हरिं वायुं वा न यान्तीत्येवं पारयोगिनां प्रथमतो वायुशब्दि तचतुर्मुखप्राप्तिनिषेधेऽपि स्थानपदोक्तमहरादिलोके किञ्चित्कालं साधनमनुष्ठाय वायुद्वारा कालान्तरे चतुर्मुखप्राप्त्यङ्गीकारे विरोधाभावादिति भावः । अथ 'संहारे' सर्वकार्यात्ययरूपे प्रलये प्राप्ते तु ब्रह्मणा चतुर्मुखेन सह 'परमं पदं' ब्रह्म गच्छेयुरित्यर्थः । 'सः' ईश्वरो 'यथाकामो भवति' यदिच्छावान् भवति जीवोऽपि तथाकामो भवति 'तत्क्रतुर्भवति' इत्थं करिष्याम्येवेति निश्चयरूप कामनावान् भवति । स जीवो 'यत्क्रतुः' यन्निष्ठावान् भवति 'तत्' तादृशं तद्विषयमुपासनाख्यं कर्म कुरुते ततश्च 'तदभिसम्पद्यते' त दापरोक्ष्यवान् भवति अथ तत्प्राप्तिरूपफलं च 'अभिसम्पद्यते' प्राप्नोतीति बृहद्भाष्यदिशा श्रुत्यर्थो ज्ञातव्यः ॥

(१३) यदुक्तं नेच्छानुसारेण प्राप्तिः, अपि तु प्रतीकालम्बनादिक्रमेणैवेति, तन्न, केचिदप्रतीकालम्बनाः केचित्प्रतीकालम्बना इति नियमे प्रमाणाभावेन यथेष्टमप्रतीकालम्बनत्वापादनस्यापि सम्भवादित्याशङ्कां श्रुत्या परिहरन्सूत्रं पठित्वा तां श्रुतिमुदाहरति—विशेषं चेति ॥ उच्यत इति शेषः । अन्तर्बहिस्सर्वत्रेति क्रमेण विभक्तान् ज्ञानिनः प्राधान्यक्रमेण निर्दिशति—देवा इति । प्रतीकालम्बनेतरमनुष्योत्तमास्तु बहिर्दृष्टय इत्यर्थः । चतुर्वेदशिखायां श्रुतमिति शेषः । अस्य सूत्रेणान्वयः । सूत्रार्थस्तु—'चो' यतश्चतुर्वेदशिखायां श्रुतं 'अन्तःप्रकाशाः' इति वाक्यमधिकारिणां 'विशेषं' अप्रतीकालम्बनत्वादिरूपं 'दर्शय

प्रकाशः ' इति चतुर्वेदशिखायाम् ॥ १६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य
तृतीयः पादः

॥ ॐ ॥

ति ' प्रतिपादयति अतोऽप्रतीकालम्बनानित्याद्युक्तं युक्तमिति ॥ ६ ॥
॥ इति कार्याधिकरणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्ना
थयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपि
कायां चतुर्थाध्यायस्य तृतीयः पादः.

॥ ॐ ॥

१. अधिकरणम् ॥

( १ ) भोगमाहास्मिन् पादे--

सू--ॐ ॥ सम्पद्याविहाय स्वेन शब्दात् ॥ ॐ ॥ १ ॥

'स य एवंविदेवंमन्वान एवंपश्यन्नात्मानमभिसम्पद्यै तेनात्मना यथाकामं सर्वान् कामाननुभवति' इति सौपर्णश्रुतेः 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा. ८-३-४. ) इति च । 'एतं सेतुं तीर्त्वाऽ

---

१. अधिकरणम् ॥

( १ ) एतत्पादार्थं दर्शयति—भोगेति ॥ मुक्तौ सूत्रकार इति शेषः। अत्राधिकरणे मुक्तस्य ब्रह्मानतिक्रमेणैव भोग्यानुभवः साध्यते । तत्र मुक्तौ ब्रह्मातिक्रम्यैव भोगान् भुङ्क्त इति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—सम्पद्येति । अत्र 'परं जैमिनिः' इत्यतो ब्रह्मार्थकस्य परमित्यस्यानुवृत्तौ अविहायेत्यतः परं भोगान् भुङ्क्ते इति शेषे आ विहायेत्यपि पदच्छेदे अन्यथारूपमिति चाध्याहारे स्वेनेत्यतः परं रूपेण अवस्थानादित्युपस्कारे च ज्ञानी परं ब्रह्म सम्पद्य तदविहायैव भोगान्भुङ्क्ते । न चैवममुक्तत्वं , अन्यथारूपमाविहाय सम्परित्यज्य स्वेन रूपेणावस्थानादिति सूत्रार्थस्संपन्न इति भावेन तत्र ब्रह्म प्राप्य अविहाय भोगान् भुङ्क्ते इत्येतत्कुत इत्यतः सम्पद्येत्यंशेन सूचितां तत्पदघटितां श्रुतिमुदाहरति—स इति । 'सः' अधिकारी 'एवं' उक्तप्रकारेण परमात्मानं विजानन् 'एवंमन्वानः' विचारयन् अथ पश्यन् तत आत्मानं 'अभिसम्पद्य' प्राप्य 'एतेन' परमात्मना सह सर्वान् काम्यान् अनुभवतीति श्रुत्यर्थः । ब्रह्मानतिक्रम्याप्याविर्भूतस्वरूपत्वेन भोगो मुक्तानामित्येतत्कुत इत्यत्रापि स्वेनेति सूत्रांशेन सूचितां तत्पदघटितां श्रुतिमुदाहरति—परमिति । चस्समुच्चये । इतीत्यनन्तरं श्रुतिरित्यनुवर्तते । व्याख्यातैषा श्रुतिर्दहरनये । नन्वेवं यदि ब्रह्मानतिक्रमेऽपि स्वरूपेणाविर्भावस्तर्हि 'एतम्' इति श्रुतिविरोध इत्यत आह—एतमिति । श्रुतिरित्यस्ति । चोऽप्यर्थः । तथा च यद्यपि 'एतम्' इति श्रुतिरस्ति। तथाऽपि नोक्तस्य तद्विरोध इत्यर्थः । कुतो न विरोध इत्यत आह—तत्रेति । यत इत्यादावुपस्कार्यम् । यद्वा—नामशब्दो हिशब्दार्थे । उच्यत इति शेषः । तथा च 'नाम' यतः 'तत्र' श्रुतौ 'तत्प्राप्तये' परमात्मप्राप्तये 'अन्यतरणं' संसारतरणमेवोच्यते, न तु ब्रह्मतरणमत

न्धस्सन्ननन्धो भवति ' ( छा. ८-४-२. ) इति च । त
त्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव । ' इमां घोराम
शिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमो
दत आनन्दी भवति ' इति मौद्गल्यश्रुतेः ॥ १ ॥

---*---

२. अधिकरणम् ॥

( १ ) सू—ॐ ॥ मुक्तः प्रतिज्ञानात् ॥ ॐ ॥ २ ॥

मुक्त एवात्रोच्यते । ' अहरहरेनमनुप्रविशत्युपसङ्क्र

---

इत्यन्वयः । खल्वर्थे वा नामशब्दः । अनेन न केवलं परमात्मा, किन्तु तस्मादपहतपाप्मन आत्मनस्तत्प्रसादात्पूर्वं संसृतौ बद्धस्सन् अविद्यावृतः सन् यस्तदन्यो जीवः सोऽपि ' एतं सेतुं ' जगदाश्रयं हरिं गन्तुं अन्यदविद्यादिकं तीर्त्वा ' अनन्धः ' अदोषवान् भवतीति छन्दोगश्रुत्यर्थ उक्तो भवति । कुत इत्यत आह—इमामिति । यत इति शेषः । अस्य तत्रेत्यादिनाऽन्वयः । ' अशिवां ' अमङ्गलां दुःखकरत्वाद्घोरां भवाख्यनदीं तीर्त्वा ' सेतुं ' विश्वाश्रयमेतं परमात्मानं प्राप्यैतेन सेतुनैव सह तमविहायैव ' मोदते ' अप्रकृष्टविषयोत्थं सुखमाप्नोति ' प्रमोदते ' प्रकृष्टविषयोत्थं सुखमाप्नोति ' आनन्दी ' स्वरूपसुखाभिव्यक्तिमान् भवतीति श्रुत्यर्थः। मोदते इत्यादिवाक्यशेषो विषयभोगे प्रमाणत्वेनोक्तः । त्रिर्गृहीतस्य श्रुतिरित्यस्य सौत्रशब्दपदोक्तेत्यध्याहृतेनान्वयः। न चैवं टीकाविरोधः । विशेषाकारस्य सूत्रांशसूचितत्वात् । शब्दादित्यस्यापि सूत्रांशत्वाच्च ॥ १ ॥

॥ इति संपद्याधिकरणम् ॥

---*---

२. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्म प्राप्य तदविहायैव भोगभोक्तुर्मुक्तत्वं साध्यते । ' स तत्र पर्येति ' इति श्रुत्युक्तोऽमुक्त एवेति पूर्वपक्षे सिद्धान्तयत्सूत्रं पठति—मुक्त इति ॥ अत्र मुक्त इति प्रतिज्ञांशं सावधारणं कृत्वा व्याचष्टे—मुक्त इति । नामुक्त इत्येवकारार्थः । अत्रोच्यत इति शेषोक्तिः । ' अत्र ' स्त्रेनेति गृहीते ' स तत्र पर्येति ' इति वाक्य इत्यर्थः। कुत इत्यस्यापीदमेवोत्तरम् । अत्र मुक्त इति सप्तमी । उपपन्नो

मते न च तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येव तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' इति बृहच्छ्रुतौ प्रतिज्ञानात् ॥ २ ॥

——*——

३. अधिकरणम् ॥

( १ ) सू—ॐ ॥ आत्मा प्रकरणात् ॥ ॐ ॥ ३ ॥

---

भोग इति शेषः। तथा च यतो मुक्तजन एवोपपन्नोऽन्यत्रानुपपन्नः स्वप्नादिदिव्यभोगोऽत्रोच्यतेऽतो मुक्त एवात्रोच्यत इति योजना। ननु ब्रह्म प्राप्य अमुक्तस्याप्यसौ भोग उपपद्यत इत्यस्योत्तरत्वेन प्रतिज्ञानादितिहेतुं व्याचष्टे—अहरिति। मुक्त इत्येतत् षष्ठ्यन्ततया विपरिणतमेवशब्दशिरस्कमिहानुवर्तते। तत्र तया तस्येति शेषः। तथा च 'अहरहरेनम्' इति श्रुतौ सुप्तौ परमात्मानं प्राप्तस्याप्यमुक्तस्य दिव्यभोगाभावमुक्त्वा मुक्तस्यैव परमात्मादिप्राप्त्या दिव्यभोगानुभवप्रतिपादनादित्यर्थः। अत्र तत्त्वप्रदीपे मुक्तस्य कामानुभवप्रतिज्ञानादिति सौत्रहेतुनैव सिद्धान्तः कृतः। तत्पक्षे बृहच्छ्रुतावुत्तरांशस्य साक्षादुपयोगः। टीकाकृता त्वध्याहृतहेतुना सिद्धान्तः कृतः। तत्पक्षे पूर्वांशस्य साक्षादुपयोग इति ध्येयम्। श्रुत्यर्थस्तु—'अहरहः' प्रतिदिनं 'एनं' परमात्मानं 'उपसङ्क्रमे' सुप्तौ प्रविशति जीवः। उपसङ्क्रमत इति पाठे प्राप्नोति च सुप्तौ जीव इत्यर्थः। 'तत्र' सुप्तौ। मोदप्रमोदशब्दार्थः पूर्ववत्। 'कामान्' कामितान् अनुभवति न तानेव भुङ्क्ते 'हि' यतः 'एषः' जीवः 'तदा' सुप्तौ। न चास्य वाक्यस्यैतावन्तं कालमित्यनुस्मृतिविरोधश्शङ्क्यः। सौषुप्तिकेतरदिव्यभोगाभावस्यात्रोक्तेः। 'अथ' देहनाशानन्तरं 'यदा' काले च मुक्तः 'एनं' ईश्वरमनुप्रविशति तदा मोदते प्रमोदते कामितानेवानुभवति। नेतरान् काम्याननुभवत्येव चेत्यर्थः। चौ परस्परसमुच्चये। द्विरुक्तिस्तात्पर्यार्था ॥ २ ॥

॥ इति मुक्ताधिकरणम् ॥

——:*※*:——

३. अधिकरणम् ॥

( १ ) अत्राधिकरणे मुक्तप्राप्यस्य ज्योतिषो ब्रह्मत्वं साध्यते। 'परं

परंज्योतिश्शब्देन परमात्मैवोच्यते तत्प्रकरणत्वात् ।
(२) परंज्योतिः परंब्रह्म परमात्मादिका गिरः ।
सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथं चन ॥
इति ब्रह्माण्डे ॥ ३ ॥

—*—

४. अधिकरणम् ॥

(१) सू—ॐ ॥ अविभागेन दृष्टत्वात् ॥ ॐ ॥ ४ ॥

ज्योतिरुपसंपद्य' (छा. ८-३-४.) इति श्रुत्युक्तं ज्योतिरादित्य एव 'स तेजसि सूर्ये सम्पन्नः' ( प्रश्न.५-५. ) इति श्रुतौ ज्योतिश्शब्दपर्यायतेजश्शब्दस्य सूर्ये प्रयोगात्, तत्समाख्यानादिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—आत्मेति ॥ अत्र आत्मेति प्रतिज्ञांशं सावधारणं कृत्वा सोपस्करं व्याचष्टे—परमिति । 'सम्पद्य' इति गृहीतवाक्यस्थ परंज्योतिश्शब्देनेत्यर्थः । यद्यपि पूर्वपक्षिणा परं ज्योतिरिति भिन्नपदत्वाभिप्रायेण ज्योतिश्शब्द एवान्यपरतयाऽऽक्षिप्तः । तथाऽपि वस्तुतः 'परंज्योतिः परंब्रह्म' इति स्मृतिपर्यालोचनया परंज्योतिरित्यस्यैकपदत्वात्तस्यैवानुवादः कृतः । कुत इत्यतः प्रकरणादित्यंशं तच्छब्दान्वयेन व्याचष्टे—तदिति । अस्येत्यादावुपस्कार्यम् । तथा च 'अस्य' परंज्योतिश्शब्दस्य 'तत्प्रकरणत्वात्' परमात्मप्रकरणपठितत्वादित्यर्थः । 'य आत्मा अपहतपाप्मा' इति परमात्मन एवात्र उपक्रम्याधीतत्वेनैतद्वाक्यजातस्य तत्प्रकरणस्थात्समाख्यायाश्च प्रकरणात् दुर्बलत्वादिति भावः ॥

(२) नन्वस्य परमात्मप्रकरणत्वेऽपि सावित्रप्रकरणे 'ह्वयाम्यग्निम्' (ऋ.१-३५-१.) इत्यन्यपरोक्तिवत्प्रसङ्गादादित्योक्तिः किं न स्यादित्यत आह-परंज्योतिरिति ॥ परंज्योतिरित्येकं पदम् । एवं परंब्रह्मेत्यपि । आदिपदेन परमक्षरमित्यादिकं गृह्यते । 'गिरो' वाचः । 'सर्वत्र' सर्वागमेषु स्थिताः 'एकं' मुख्यं वाच्यम् । एवेत्यस्य विवरणं-नान्यमिति । 'कथं चन' केनापि निमित्तेन । ब्रह्माण्ड इत्यनन्तरं उक्तत्वाच्चेति शेषः । अस्य परंज्योतिश्शब्देनेत्यादिनान्वयः ॥ ३ ॥

॥ इति आत्माधिकरणम् ॥

—:*:—

४. अधिकरणम् ॥

(१) अत्राधिकरणे सायुज्यभाजां भगवद्भुक्तभोगभोक्तृत्वं समर्थ्य

ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते। 'यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि ताने वैत इदं शरीरं विमुच्यानुभवन्ति' इति दृष्टत्वाच्चतुर्वेदशिखायाम्।

(२) भविष्यत्पुराणे च—

मुक्ताः प्राप्य परं विष्णुं तद्भोगाल्लेशतः क्वचित्।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथं चन॥

ते। तत्र मुक्तभोगाः परमात्मनाऽभुक्ता अपि सन्ति न तद्भुक्ता एवेति नियमः। तथा सति केषां चित्संजातभोगेच्छानामपि मुक्तानां भोगाभावप्रसङ्गात्। ईश्वरस्य नित्यपूर्णानन्दत्वेन कदाचिदभोगस्यापि सम्भवात्। ततश्च मोक्षस्यापुरुषार्थत्वापत्तिरिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—अविभागेनेति॥ अत्र सायुज्यभाजां भोगाः 'अविभागेनैव' केचित्परमात्मना भुक्ताः केचित्तदभुक्ता इति विभागमन्तरेणैव सन्ति। ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैः भुज्यन्ते न तदभुक्ता इति यावत्। कुतः? 'तथादृष्टत्वात्' तथाश्रुतेरिति योजनामभिप्रेत्य अविभागेनेति प्रतिज्ञांशं व्याचष्टे—य इति। 'भोगाः' स्वरूपसुखविशेषव्यक्तिहेतुविषयदर्शनविषयाः, न तु तदभुक्ता इत्येवशब्दार्थः। 'मुक्तैः' सायुज्यभाग्भिः। दृष्टत्वादिति हेत्वंशं व्याचष्टे—यानेवेति। अहमिति परमात्मोच्यते। 'एते' मुक्ताः 'इदं शरीरं' कर्मारब्धजडशरीरम्। चतुर्वेदशिखायामिति। 'दृष्टत्वात्' श्रवणादित्यन्वयः॥

(२) ननु भगवद्भुक्ताः अशेषभोगाः मुक्तैर्भुज्यन्ते? किं वा केचित्। आद्ये मुक्तपरमात्मनोः साम्यापातः। न द्वितीयः, 'यानेव' इति सामान्यतः सर्वभोगश्रवणादित्यत आह—भविष्यदिति॥ इति भविष्यत्पुराणे उक्तत्वाच्चेति योजना। 'तद्भोगान्' तेनेश्वरेण भोग्यान् विषयान् 'बहिष्ठान्' ईश्वरदेहाद्बहिस्स्थितान् अस्वरूपभूतान्। परमेश्वरस्वरूपानन्दादिव्यावृत्त्यर्थमेतत्। अत एवाह—नेति। बाह्यानामपि न सर्वेषां भोगः, लक्ष्म्यात्मकानामभोगादत उक्तं—क्वचिदिति। प्राकृतानामपि न सर्वात्मना भोगः, परमात्मेन्द्रियविषयरसादीनामभोगादतो—लेशत इति। कांश्चिदित्यर्थः। बहिष्ठानेव न त्वन्तःपुरस्थानिति तत्त्वप्रदीपोक्तिः। 'कथं चन' सामस्त्येन वा लेशतो वेत्यर्थः। तथा च द्वितीयपक्षमाश्रित्य विशेषश्रुत्या सामान्यश्रुतेः सङ्कोचः कार्य

इति ॥ ४ ॥

——:*:——

५. अधिकरणम् ॥

( १ ) सू—ॐ ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ॐ ॥ ५ ॥

सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगा न् भुञ्जत इति जैमिनिर्मन्यते ।

---

इति भावः ॥ ४ ॥

॥ इति अविभागाधिकरणम् ॥

——:*:——

५. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मप्राप्तस्य सायुज्यमुक्तस्य भोगः समर्थ्यते। तत्र मुक्तस्य देहभावे मुक्तत्वायोगात् तदभावे च भोगाभावप्राप्तेर्न तस्य भोगो युज्यत इति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति—ब्राह्मेणेति॥ अत्र पूर्वसूत्रात्सर्वविनिर्मुक्तस्य विभागेनेति पदस्य अनुवृत्तिमभिप्रेत्य तदर्थमाह-सर्वदेहेति ॥ सर्वशब्दः चिदतिरिक्तपरः। तथा च स्थूलदेहस्य सूक्ष्मलिङ्गदेहस्य च परित्यागेनेत्यर्थः । उक्तं हि तत्त्वप्रदीपे सर्वदेहपरित्यागेनेति स्थूलसूक्ष्मविवक्षयोच्यते, न तु चिन्मात्रदेहविवक्षयाऽपि, श्रुतौ मर्त्यमिति विशेषणात्, 'अतिसृज्य ब्रह्माभिसम्पद्य' इति चोक्तेश्च । भावमित्युभयदेहाङ्गीकारिणो जैमिनेश्चिन्निषेधायोगाच्च । 'इदं शरीरमर्त्यमतिसृज्य' इति श्रुत्युक्तेस्स्थूलशरीरमेवातिसृज्येति शङ्का मा भूदिति सर्वदेहपरित्यागेनेत्युक्तम् । सूक्ष्मदेहस्यापि साक्षिसिद्धत्वादिदंत्वं, प्रलयेऽपक्षयान्मुक्तौ विनाशाच्च मर्त्यत्वमिति । सूत्रेऽध्याहार्यांशमाह—मुक्ता इति । एतच्चावर्तते । विशेषणत्वख्यापनाय—सन्त इत्युक्तम् । यत इति शेषः । सूत्रे सावधारणत्वाभिप्रायेण ब्राह्मेणेत्युक्तमित्याशयेन तद्विशेष्यपदप्रदर्शनपूर्वकं व्याचष्टे—ब्राह्मेणेति । परब्रह्मसम्बन्धिनेत्यर्थः । ब्राह्मातिरिक्तस्थूलसूक्ष्मशरीराभाव एवकारार्थः । तत्त्वप्रदीपे तु ब्राह्मेणैवेत्ययोगव्यवच्छेदः । न च ब्राह्मेण देहेन विना भोगोऽस्तीति, यतो ब्राह्मेण देहेन भोगान् भुञ्जते अतो न भोगानुपपत्तिरिति हेत्वर्थो वा इत्युक्तम् । अप्यर्थश्चैवकारः । भोगान् भुञ्जते मन्यत इति च सूत्रशेषोक्तिः । तथा चेत्थं योजना—मुक्ताः भोगान् भुञ्जते एव, न तेषां भोगोऽयुक्त इति यावत् । न चोक्तविकल्पः । यतो-

(२) 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्मा भिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति ' इति माध्यन्दिनायनश्रुतावुपन्यासात् ।

(३) आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥ इति स्मृतेः ॥

(४) गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।
इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यति ॥

---

'ब्राह्मेणैव देहेन सन्तः' तदतिरिक्तदेहरहिता इत्यभ्युपगम्यते । कुतो देहाभावः? यतः सर्वदेहपरित्यागेन मुक्ताः । अभेदे तृतीया । सर्वदेहपरित्यागरूपमुक्तियुक्ता इति । न च देहाभावे भोगायोगः । यतः स्वदेहाभावेऽपि ब्राह्मेणैव ग्रहवद्भोगान् भुञ्जते अत इति जैमिनिराचार्यो मन्यते इति ॥

(२) कुत एतदित्यतः उपन्यासादिति हेतुं तत्पदसूचितश्रुत्युदाहरणपूर्वकं व्याचष्टे—स इति ॥ 'उपन्यासात्' उक्तत्वादित्यर्थः । श्रुत्यर्थस्तु—'स एष ब्रह्मनिष्ठो' ब्रह्मज्ञानी 'मर्त्यं' विनाश्यं 'इदं' प्रत्यक्षसिद्धं स्थूलसूक्ष्माख्यं देहं 'अतिसृज्य' विसृज्य परं ब्रह्म प्राप्य परब्रह्मणा तद्देहेन पश्यति शृणोति च, इदं सर्वं भोग्यमनुभवति ब्रह्मणेति ॥

(३) नन्वत्र मुक्तभोगो ब्रह्मणा श्रूयते, न पुनस्तद्देहेनेति श्रुतौ ब्रह्मणेत्यस्य तत्प्रसादादित्यप्यर्थसम्भवादित्यत उपन्यासादित्येतच्छ्रुत्यन्तरसूचकतया व्याचष्टे—आदत्ते इति ॥ 'हरिदृष्ट्या' विष्णुचक्षुषा ॥

(४) ननु स्वयं देहविधुरस्य कथमन्यदेहेन भोगो युज्यते प्रलयादावभावादित्यतः सौत्रादिशब्दगृहीतां युक्तिमसिद्धिवारणाय स्मृत्यैव दर्शयति—गच्छामीति ॥ मुक्ताविति शेषः । तथा चाहं मुक्तौ विष्णुपदाभ्यां गच्छामि गमिष्यामि 'विष्णुदृष्ट्या' तच्चक्षुषा तु तेनैव मे दर्शनं भविष्यतीत्याद्युपासनानुसारेण पूर्वस्मिन् संसारकाले स्मरणरूपोपासनात् मुक्तस्य सायुज्यमुक्तियोग्यस्य 'एतत्' अन्यदेहेन भोजनं मुक्तौ भविष्यतीत्यर्थः । यद्वा—मुक्तेः पूर्वं संसारदशायां अहं स्वदेहस्थविष्णुपादाभ्यां गच्छामि तत्रस्थविष्णुदृष्ट्यैव दर्शनं करो

इति बृहत्तन्त्रोक्तयुक्तेश्च ॥ ५ ॥

( ५ ) सू—ॐ ॥ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ॐ॥६॥
चितिमात्रो देहो मुक्तानां पृथग्विद्यते तेन भुञ्जते । 'सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते' इत्युद्दालकश्रुतेश्चिदात्मकत्वादित्यौडुलोमिर्मन्यते ॥ ६ ॥

---

मीत्यादिस्मरणरूपोपासनादित्यर्थः । अनेन पूर्वस्मिन् संसारे स्वदेहगतविष्णुपदाभ्यामहं गच्छामीत्युपासितसद्भावादिति युक्तिरुक्ता भवति । पञ्चम्यन्तानां ब्राह्मेणेति प्रतिज्ञावाक्येनान्वयः ॥

( ५ ) एवं देहाभावमभ्युपगम्य भोगं मुक्तस्य समर्थ्य देहसद्भावमप्यभ्युपगम्य तत्समर्थयत्सूत्रमुपन्यस्यति—चितीति ॥ अत्र मुक्ता भुञ्जते पृथग्विद्यत इति च शेषः । तदिति व्यस्तं समस्तं च । तत्र व्यस्तमावर्तते । चितिमात्रेणेति हेतुगर्भम् । तथा च मुक्ताः भुञ्जते एव तेषां भोगो युक्त एवेति यावत् । न च पृथग्देहाभावादयुक्तता । यतस्तेषां मुक्तानां तच्छरीरं तस्माद्ब्रह्मदेहात्पृथग्विद्यते । न चैवं पुनस्संसारापत्त्या मुक्तत्वायोगः । यतस्ते 'चितिमात्रेण' शरीरेण भुञ्जते यतस्तच्छरीरं केवलं चैतन्यस्वरूपमिति यावत् । न चाप्रयोजकता 'तदात्मकत्वात्' तेषां मुक्तानां चिदात्मकत्वात् तस्य चितिमात्रशरीरस्य च मुक्तस्वरूपत्वात् स्वरूपस्य चाकृत्रिमत्वेन संसारानापादकत्वादिति भावः । मुक्तानां चिदात्मकत्वमेव कुतः ? 'तत्' तस्माच्छ्रुतिवाक्यादेवेत्यौडुलोमिराचार्यो मन्यत इति योजनामभिप्रेत्य सूत्रं व्याचष्टे—चितीति । 'पृथक्' ब्रह्मदेहात् । 'तेन' देहेन भुञ्जते मुक्ता इति विपरिणतमनुवर्तते । 'चिदात्मकत्वात्' चिन्मात्रत्वादिति । अत्र मुक्तानामित्यनुषज्यते । तथा च मुक्तानां चितिमात्रत्वात्तेषां देहश्चितिमात्रः, यत एवं अतः सर्वदेहपरित्यागेन मुक्ता इति योजना । श्रुत्यर्थस्तु 'तत्' प्रत्यक्षसिद्धं सर्वं 'अचित्' जडात्मकं स्थूलसूक्ष्मशरीरं परित्यज्यैष जीवश्चिन्मात्र एव भवति तथा व्यज्यते । व्यक्तस्य चिन्मात्रत्वस्य पुनर्नापगम इत्याह—चिन्मात्र एवावतिष्ठत इति । एष इत्यनुषज्यते । 'तामेतां' दशां मुक्तिरित्याचक्षते विद्वांस इति ॥

( ६ ) सू—ॐ ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ॐ ॥ ७ ॥

'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्री भवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिरिति' सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य च भावादुभयत्राप्यविरोधं बादरायणो मन्यते।

( ६ ) ननु न सूत्रद्वयोक्तपरिहारौ युक्तौ, देहभावाभावयोर्विरुद्धत्वादित्याशङ्कापरिहारकं सूत्रमुपन्यस्यति—एवमपीति ॥ अत्रैवं शब्द औडुलोम्युक्तचिन्मात्रदेहसाध्यभोगपरामर्शक आवर्तते। अपिः मुनिद्वयोक्तप्रकारद्वयसमुच्चये श्रुतिसमुच्चये च। तथा च बादरायणाचार्य उभयोर्मतयोरविरोधं मन्यते। कुतः? 'एवं' औडुलोमिनोक्तस्य चिन्मात्रेण भोगस्य प्रमाणेषु भावात् प्रामाणिकत्वादिति यावत्, तथा 'पूर्वभावात्' पूर्वस्य ब्राह्मेणैव भोग इति जैमिन्युक्तस्यापि प्रमाणेषु भावात् प्रामाणिके च विरोधाभावादिति भावः। न चौडुलोमिमते प्रमाणाभावः। 'सर्वं वा' इति श्रुतौ मुक्तस्य चिच्छरीरमात्रोक्तावपि तस्य भोगकारणत्वानुक्तेरिति वाच्यम्। 'एवमप्युपन्यासात्' 'स वा एषः' इति सौपर्णश्रुतौ औडुलोम्युक्तचिच्छरीरभोगस्याप्युपन्यासात् प्रतिपादनात्। न केवलं माध्यंदिनायनश्रुतौ जैमिन्युक्तस्योपन्यास इत्यपेरर्थ इति सूत्रार्थमुपन्यासपदसूचितश्रुत्युदाहरणपूर्वमाह—स वा इति। भोगस्येत्युभयत्र शेषः। न केवलं ब्राह्मेण भोगस्येत्यपेरर्थः श्रुत्युपन्यस्तत्वमात्रे समुच्चयः। न त्वेकश्रुत्युपन्यस्तत्वे। चिन्मात्रेण भोगस्येत्येतत् भावादित्यनेनाप्यन्वीयते। अत एव भावादिति हेतुरनन्तरमुपन्यस्तः आदौ योजनीयः। 'उभयत्र' उभयोः। न केवलमेकत्रेत्यपेरर्थः। तथा च नोभयोः पक्षयोर्विरोधोऽस्ति चिन्मात्रेण भोगस्य ब्राह्मेण भोग इति जैमिन्युक्तस्य च प्रमाणेषु भावात् प्रमिते च विरोधाभावात्। न चान्त्ये प्रमाणाभावः। न केवलं 'सः' इति श्रुतौ ब्राह्मेण भोगस्योपन्यासः। किं नाम? 'सः' इति श्रुत्यन्तरे औडुलोम्युक्तस्याप्युपन्यासादिति उभयोः पक्षयोः 'अविरोधं' विरोधाभावं भगवान् बादरायणो मन्यत इति योजना। श्रुत्यर्थस्तु—'सः' मुक्तो 'मर्त्यात्' विनाश्यात् कर्मारब्धजडशरीराद्विमुक्तः 'चिन्मात्री' चि

(७) नारायणाध्यात्मे च—
मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥
तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम्।
कुर्वन्ति भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ॥ इति ॥ ७ ॥

———*———

दात्मकदेहवान् व्यक्तो भवति। 'अथ' अनन्तरं 'तेनैव रूपेण' चित्स्वरूपेणैवेन्द्रियेण 'अभिपश्यति' रूपादिकं 'शृणोति' शब्दान् 'मनुते' सामान्यतः स्वयोग्यं सर्वं 'विजानाति' विशेषतः। तां दशाम् ॥

(७) ननु देहभावाभावयोर्विरोधस्य कः परिहारो जात इत्यतो जैमिनिमतं जडदेहाभावविषयम्, औडुलोमिमतं तु चितिमात्रदेहविषयमतो न विरोध इत्याशयेन अविरोधप्रकारं अपिशब्दसूचितस्मृत्या दर्शयति—नारायणेति ॥ 'मर्त्यं' विनाशिनं 'चितिमात्रात्मदेहिनः' केवलचिदात्मकस्वरूपदेहयुक्ताः। चस्समुच्चये। न त्वदेहिनो चिद्देहिनोऽनिन्द्रियाश्चेत्येवार्थः। अव्ययं विष्णुं प्रविष्टा इति सायुज्यभाज उच्यन्ते। अत एव 'तदङ्गानुगृहीतैः' भगवदङ्गानुगृहीतैरित्याद्युक्तिः। 'स्वाङ्गैः' स्वरूपकरचरणादिभिः। न तु भिन्नैः विष्णवीयैरेवेत्येवार्थः। 'प्रवर्तनं' व्यापारं भुञ्जते चेति सम्बन्धः 'भोगान्' भोग्यान् 'तदन्तः' विष्णुदेहस्यान्तः बहिश्चेति सम्बन्धः। यथेष्टमेवेत्यन्वयः। 'परिवर्तन्ते' सञ्चरन्ति 'तस्य' विष्णोः 'अनुग्रहेरिताः' प्रसादेन प्रेरिताः तदिच्छया विषयीकृता इत्यर्थः। अनुग्रहैधिता इति पाठे तदभिवर्धिता इत्यर्थः। तस्यैवानुग्रहेरिता इत्यनेन ब्राह्मेणेति सूत्रखण्डस्य ब्रह्मणः प्रसादेनेत्यप्यर्थः सूचितः, अत एव प्रमेयदीपे अनुभवशक्तिस्त्वीश्वरप्रसादादित्यत्र ब्राह्मेणेति सूत्रं प्रमाणीकृतम्। इति नारायणाध्यात्म इत्यन्वयः ॥ ५ ॥

॥ इति ब्राह्माधिकरणम् ॥

—*-:*:-*—

६. अधिकरणम् ॥

(१) सू—ॐ॥ सङ्कल्पादेव च तच्छ्रुतेः ॥ ॐ॥ ८॥

न तेषां भोगादिषु प्रयत्नापेक्षा। 'स यदि पितृलोक कामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति'

६. अधिकरणम् ॥

(१) अत्राधिकरणे मुक्तस्य सङ्कल्पमात्रसाध्यभोगः समर्थ्यते। तत्र मुक्तानां भोगादिषु तत्तदुपायसाध्यसाधनापेक्षाऽऽवश्यकीति पूर्व पक्षे सिद्धान्तयत्सूत्रं पठति—सङ्कल्पादेवेति ॥ अत्र चशब्दो निपा तत्वेनानेकार्थत्वात् नञर्थः सन् पूर्वपक्षनिवृत्तिरूपार्थमाह। तत्त्वप्रदी परीत्या एवशब्दो वा एतमर्थमाहेत्याशयेन तमर्थं दर्शयति—न तेषा मिति। 'तेषां' मुक्तानां भोग इष्टानुभवः। आदिपदेन तत्त्वप्रदीपरी त्या सौत्रचशब्दार्थभूता निष्ठा परमा गृह्यते। प्रयत्नापेक्षेति। तत्तदु पायसाध्यसाधनापेक्षेत्यर्थः। प्रयत्नापेक्षेत्यनन्तरं किन्तु सङ्कल्पादेव तत्सिध्यतीति वाक्यशेषः। एवं सूत्रेऽपि। कुत एतदित्यतः प्रवृत्तं तच्छ्रु तेरिति हेतुपदं सा च सा श्रुतिश्चेति विग्रहं तच्छब्दस्य सङ्कल्पादेवे त्येतद्रूपपरामर्शित्वं चाभिप्रेत्य श्रुत्युदाहरणपूर्वं व्याचष्टे—स यदी ति। आदिपदेन 'तेन पितृलोकेन महीयते। अथ यदि मातृलोकका मो भवति' इत्यारभ्याम्नातं 'यं यमन्तमभिकामो भवति यं कामं का मयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते' इत्यन्तं समग्रवाक्यं गृह्यते। 'स यदि' इतिच्छन्दोगश्रुतेरयमर्थः—'सः' मुक्तो यदि पितॄणां विष्णुलोको भूयात् तदनन्तरं तदवलोकोऽपि म म भूयादिति 'पितृलोककामः' तदपेक्षो भवति। तदा 'अस्य' मुक्तस्य 'सङ्कल्पात्' अपेक्षावशादेव अस्य पितरः 'समुत्तिष्ठन्ति' स्वयोग्य साधनमापाद्य संसारान्मुक्ताः सन्तः पुरस्स्थिता भवन्ति। ततश्च 'तेन पितृलोकेन' तद्दर्शनेन 'सम्पन्नो' युक्तः सन् 'महीयते' स्वा वरैः पूज्यत इति। एवमन्यान्यपि वाक्यानि व्याख्येयानि भवन्ति। अत्र पित्रादयः स्वरूपपित्रादयो विवक्षिताः ते च चरमशरीरपित्राद य एव 'चरमे तु यथा निजम्' इति वचनात्ते च योग्या एवेति स म्प्रदायविदः। उपसंहरति—यं यमिति। 'अन्तं' देशमवसानं निर्णयं वा। 'कामं' काम्यम्। इति सूत्रे तदिति व्यस्तं समस्तं चावर्तते। त

( छा. ८-२-१. ) इत्यादिश्रुतेः ॥ ८ ॥

---*---

७. अधिकरणम् ॥

( १ ) सू—ॐ॥ अत एव चानन्याधिपतिः ॥ ॐ ॥ ९ ॥

सत्यसङ्कल्पत्वादेव ।

( २ ) परमोऽधिपतिस्तेषां विष्णुरेव न संशयः ।
ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ॥
ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ॥
आचार्याश्चैव सर्वेऽपि येषां ज्ञानं सुप्रतिष्ठितम् ।

---

था च न तेषां मुक्तानां भोगादिषु प्रयत्नापेक्षा, किन्तु सङ्कल्पादेव तद्भोजनं सिध्यति । कुतः ? 'तच्छ्रुतेः' 'स यदि' इति श्रुतेरित्यर्थः । एवशब्दः श्रुतेः प्राबल्यसूचकः । सङ्कल्पानन्तरमेव, न तु विलम्बं कृत्वेति वा ॥ ६ ॥

॥ इति संकल्पाधिकरणम् ॥

---*:*:*---

७. अधिकरणम् ॥

( १ ) अत्र ब्रह्मप्राप्तिमतां मुक्तानां स्वाधमनियाम्यत्वराहित्येन भोगस्साध्यते । तत्र मुक्तस्याधमा अप्यधिपतयः सन्तीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—अत एवेति । अत्र 'मुक्तः प्रतिज्ञानात्' इत्यतो मुक्त इत्यनुवर्तते । चशब्दो विपक्षव्यावृत्त्यर्थः । तथा च मुक्तो न संसारिसमधर्मभागिति प्रतिज्ञासिद्धौ कुत एतदित्यतो यतोऽनन्याधिपतिरित्याह । कॢप्तपतिभ्योऽन्याधिपतियुक्तो नेति तदर्थः । अत्रापि हेत्वाकांक्षायां अत इत्युक्तमित्याशयेन तमंशं व्याचष्टे—सत्यसङ्कल्पत्वादेवेति । अयमस्माकमेव नियम्यस्स्यादित्यधिपतीनां सत्यसङ्कल्पत्वात्तदनुसारेण अहमेतेषामेव नियम्यस्स्यामिति नियम्यमुक्तस्यापि सत्यसङ्कल्पत्वादेवेति तत्त्वप्रदीपरीत्याऽस्यार्थो ज्ञातव्यः । टीकाकृद्रीत्या एवकारः सिद्धान्तिहेतोः परग्रहगतत्वादिति पूर्वपक्षिहेत्वपेक्षया प्राबल्यमाह । नात्र हेत्वन्तरं गवेषणीयमित्यर्थो वा ॥

( २ ) अत्रार्थे स्मृतिं चाह—परम इति ॥ अनेन सौत्रचशब्दः स्मृतिसमुच्चायकतयाऽपि व्याख्यातः । यथोक्तं तत्त्वप्रदीपे—चकारा

एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः ॥
इति वाराहे ॥ ९ ॥

———*———

८. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अभावं बादरिराह ह्येवम् ॥ ॐ ॥ १० ॥
चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बाद
रिः । 'अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं

दनन्याधिपतित्वे प्रमाणादिति । स्मृत्यर्थस्तु—ब्रह्मादिमानुषान्तानां सर्वेषां तेषां मुक्तानां 'परमो' मायाः परो विष्णुरेव मुख्याधिपतिर्नात्र सन्देहः । परम इत्यनेन लक्ष्मीरपि गृहीता । 'ततः' तदनन्तरं 'प्राणादिनामान्ताः' ब्रह्माद्युषःपर्यन्ताः सर्वेऽपि स्वावराणां क्रमेणाधिपतयः। यैरुक्तज्ञानं 'सुप्रतिष्ठितं' समुत्पन्नं त एते सर्वे आचार्या गुरवश्च पतयः । एतेभ्यः क्लृप्ताधिपतिभ्यः अन्योऽधिपतिः मुक्तानां नास्त्येव, नात्र संशय इति । वाराहे इत्यनन्तरं वचनाच्चेति शेषः । हेतुद्वयस्यापि सौत्रप्रतिज्ञयाऽन्वयः ॥ ७ ॥

॥ इति अनन्याधिपत्यधिकरणम् ॥

———*✿*———

८. अधिकरणम् ॥

( १ ) अत्राधिकरणे परमेश्वरं प्राप्तानां भोगानुपपत्तिः परिह्रियते । न मुक्तानां भोगो युज्यत इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—अभावमिति ॥ अत्र 'मुक्तः प्रतिज्ञानात्' इत्यतो मुक्त इति पदं षष्ठ्यन्ततया विपरिणतं चितिमात्रेणेति पदं चेहानुवर्तते । विना अन्यस्येति शेषः । देहस्येति श्रुतिरिति च लभ्यते । तथा च यतो मुक्तानां चितिमात्रेण विना तदन्यस्य प्राकृतदेहस्याभावोऽसत्त्वमतो न तेषां प्राकृतदेहसदसद्भावविकल्पमूलकभोगानुपपत्तिरिति शेषः । कुतः तेषां देहाभावः ? 'हि' यस्मादेवं मुक्तानां शरीराभावं 'अशरीरो वा' इत्यादिका श्रुतिराह, तस्मादिति बादरिः 'आह' मन्यते इति योजनेत्यभिप्रेत्य सूत्रं व्याचष्टे—चिन्मात्रं विनेति । प्रकृतत्वाच्चिन्मात्रस्यैव प्रतियोगित्वमिति भावः । बादरिराहेत्यन्वयः । देहाभावः कुत इत्यतः प्रवृत्तमाह ह्येवमित्यंशं व्याचष्टे—अशरीरो वेति । इति कौण्ठरव्यश्रुता

न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते ' इत्येवं काण्ठरव्यश्रुतावाह हि ॥ १० ॥

( २ ) सू—ॐ ॥ भावं जैमिनिर्विकल्पाम्नानात् ॥ ॐ ॥ ११ ॥
' स वा एष एवं वित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथानन्दी ह्येवैष भवति नानानन्दं कंचिदुपस्पृश

वित्यन्वयः । ' एवं ' मुक्तानां प्राकृतदेहाभावं, श्रुताविति सप्तमी प्रथमार्थे । ' हि ' यस्मात् । अनेन आहेति सौत्रपदस्यावृत्तिस्सूचिता । श्रुत्यर्थस्तु—' तदा ' मुक्तिकाले ' एषः ' मुक्तः ' अशरीरो वाव ' प्राकृतदेहशून्य एव भवति यतोऽत एनं न ' प्रियाप्रिये ' सुखदुःखे स्पृशतः । अशरीरं सन्तमित्यनुवादः । प्रियाप्रियस्पृष्ट्या भवदनिष्टमाह—याभ्यां प्रियाप्रियाभ्यामिति । अनेनात्र प्रियशब्देन ' परेयं प्रियनामकम् ' इत्युक्तेः पराधीनसुखसामान्यवाचकेन प्राकृतं सुखं ग्राह्यमिति सूचितम् । तस्यैवानित्यत्वविकारित्वादिरूपोन्मादापादकत्वादिति तत्त्वप्रदीपोक्तेः । यद्यपि ' न हवै शरीरस्य ' (छा.८-१२-१.) इति छन्दोगेऽपि श्रुतिरस्ति । तथाऽपि सा परमात्मपरेति नात्रोदाहृता ॥

( २ ) मुक्तानां देहसद्भावमभ्युपगच्छत्सूत्रमुपन्यस्यति—भावमिति ॥ पूर्ववद्विपरिणामानुवृत्त्यध्याहाराः कर्तव्याः । तथा च जैमिनिर्मुक्तानां चितिमात्रेणविना तदन्यस्य प्राकृतदेहस्यापि ' भावं ' सद्भावं मन्यते । कुतः ? ' विकल्पाम्नानात् ' चिन्मात्रदेहेनैवावतिष्ठत इत्यनुक्त्वा श्रुतौ ' चिता वाऽचिता वा ' इति विकल्पोक्तेरिति सूत्रार्थमभिप्रेत्य श्रुत्युदाहरणपूर्वकं तद्व्याचष्टे—स इति । ' परं ' परमात्मानं ' एवं ' उक्तप्रकारेण ' वित् ' अपरोक्षज्ञानी ' स एषः ' मुक्तः ' चिता ' अप्राकृतचैतन्यात्मकेन वा ' अचिता ' शुद्धसत्वात्मकप्राकृतकर्मानारब्धजडात्मकेन वा ' ज्योतिषा ' प्रकाशमानेन ' रूपेण ' शरीरेणैव ' अभिपश्यत्यभिशृणोति ' दर्शनश्रवणोपलक्षितसर्वविषयानुभववान्भवतीत्यर्थः । तेन च ' आनन्द्येव ' व्यक्तसुखवानेवैष भवति न दुःखी । हीति प्रसिद्धम् । कुतो ? ' हि ' यतो ' नानानन्दं ' आनन्दविरुद्धं दुःखं ' काञ्चित् ' कमपि मुक्तं नोपस्पृशत्यत इत्यर्थः । अत्र नित्येनेत्येतत् चितेत्यस्य अनित्येनेत्येतत् अचितेत्यस्य विशेषणम्, न तु विकल्पद्वयमत्रोच्यते । उभयत्रवाशब्दोऽवधारणार्थः । तत्राचितोऽनित्यत्वं नाम स्वस्य स

ति ' इत्यौद्दालकश्रुतौ विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥ ११ ॥

( ३ ) सू—ॐ॥ द्वादशाहवदुभयविधं बादरायणोऽतः॥ ॐ॥१२॥

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति।

दाऽविद्यमानत्वमेव न तु सर्वथाऽनित्यत्वम्। मौक्तसकलपदार्थानां मनादिनित्यत्वेन तदयोगादिति केचित्। अन्ये तु अनित्येन वेति। अने न मुक्तानां बाह्यदेहोऽनादिनित्य एव कंचुकवृत्त्या स्वीकारादित्येतत् निरस्तं भवति। प्राकृतशरीरादीनां मौक्तानां प्रलयात्पूर्वमुत्पत्तेः प्रल ये विनाशाच्चेत्याहुः। विकल्पाम्नानादिति। प्रकारद्वयाभिधानादित्य र्थः। अन्यदेहस्येति। चिन्मात्रं विनैवेत्यनुषज्यते। तथा च चिन्मात्रं विना तदन्यदेहस्यापीत्यर्थः। न केवलं चिन्मात्रस्येत्यपेरर्थः। ' भा वं ' सत्त्वम् ॥

( ३ ) नन्वेतन्मतद्वयस्य परस्परविरुद्धत्वात्किं तत्स्वमतमित्याश ङ्कां परिहरत्सूत्रं पठति—द्वादशेति ॥ अत्र मुक्तानां देहभावाभावा ख्यमुभयविधमपि मतं स्वमतमेव। कुतः ? अतः उभयविधस्यापि म तद्वयोक्तप्रमाणवत्त्वात् इति सूत्रखण्डार्थमभिप्रेत्य कथमुभयं विरुद्धं स्वमतं भवेदित्याशङ्कापरिहाराय प्रवृत्तं द्वादशाहवदित्यंशं व्याचष्टे— यथेति। क्रतुरहीनः। यथोक्तं तत्त्वप्रदीपे—क्रतुरित्यहीनो विवक्ष्यते। अ हीनैकाहेष्वस्य श्रेष्ठत्वात्क्रतुशब्दः प्रयुक्तः। तथा च श्रुतिः—'श्रेष्ठयज्ञो वा एष यद्द्वादशाहः' ( ) इति। अत्र द्विविधो द्वादशाहः सत्र महीनश्चेति। तत्रैकादशाहपर्यन्तमहर्गणा अहीना एव। त्रयोदशाहादि कं सत्रमेव। मध्यमं तु यजमानेच्छया एकयजमानकत्वेऽहीनसंज्ञकं, अ नेकयजमानत्वे सत्रसंज्ञकम्। सति चैवं अहीनात्मकः सत्रात्मक इति व क्तव्ये क्रतुविशेषेऽहीने क्रतुपदप्रयोगः कुरुपाण्डवन्यायेनेति प्राचीनग्र न्थोक्तो विशेषो ज्ञातव्यः। द्वादशाहवदिति दृष्टान्तवाक्येन लब्धमर्थं दर्शयति—एवमिति। ' भोगः ' इच्छया भोगः ' बाह्यशरीरकृतः ' प्रा कृतदेहनिमित्तः ' चिन्मात्रकृतः ' स्वरूपदेहकृतः। चस्समुच्चये। भव तीत्यनन्तरमतो मुक्तस्येच्छया भोगार्थं देहभावाभावयोरविरोधेनोपप त्तिरिति बादरायणो मन्यत इति वाक्यशेषः। एतत्सूत्राभिप्रायस्तु मु क्तानां स्वतः इच्छां विना प्राकृतदेहाभावमपरेषामिच्छयाऽप्यभावं बादरिराचार्यो मन्यते। न च द्वितीये मुक्तानां सत्यकामत्वविरोधः।

एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मात्रकृतश्च भवती ति बादरायणो मन्यते ॥ १२ ॥

( ४ ) उपपत्तिश्च—

सू—ॐ ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ ॐ ॥ १३ ॥

सन्ध्यं स्वप्नः 'सन्ध्यं तृतीयं स्वप्नस्थानम्' ( बृ. ६-३-९. ) इति श्रुतेः ॥ १३ ॥

( ५ ) सू—ॐ ॥ भावे जाग्रद्वत् ॥ ॐ ॥ १४ ॥

---

यतस्तेषामिच्छाऽपि नास्ति तद्भोगस्याल्पीयस्त्वेन तदर्थे शरीरान्त राक्षेपाभावात्। जैमिन्याचार्यस्तु कदाचिन्मुक्तस्यापि कस्य चिदुत्त मस्य भोगार्थमिच्छया प्राकृतदेहस्यापि भावं मन्यते। सर्वेषामपि चि दात्मकदेहेनैव भोगः, केषां चिदिच्छयैव बाह्यदेहेनापि। तत्रापि वि शेषः—चिन्मात्रदेहेन भोगे बाह्यदेहापेक्षा नास्ति, बाह्यदेहेन भोगे तु चिदात्मकदेहोऽधिष्ठानत्वेन अपेक्षित इति। यद्यपि चिद्देहेनैव समस्त भोगो युज्यते, चिद्देहानां बहुरूपत्वात्। तथाऽपि वश्यप्रकृतीनां वैचि त्र्यकौतुकवतां शरीरयोगेन च सुशक इति गुण एव। अतो मुनिमत द्वयं साध्विति मुनिद्वयगुरवो मन्यन्त इति तत्त्वप्रदीपेऽभिहितः ॥

( ४ ) ननु भवतु देहभावाभावयोरविरोधः। तथाऽपि कथं भोगो पपत्तिः। देहसत्त्वे सदुःखादिः स्यात्, न चेद्भोगायोग इत्यनुपपत्तेरु क्तत्वादित्यत आह—उपपत्तिश्चेति ॥ चोऽवधारणे। तथा च पक्षद्व येऽपि भोगस्य युक्तैवेत्यर्थः। कथमुपपत्तिरित्याशङ्कां परिहर्तुं देहा भावे भोगोपपत्तिप्रतिपादनाय सूत्रं पठित्वा दुर्गमांशं सप्रमाणकं व्या चष्टे—तन्विति। जाग्रत्सुषुप्त्यपेक्षया तृतीयं स्वप्नावस्थाख्यं स्थानं 'सन्ध्यं' जाग्रत्सुषुप्तिसन्धौ भवमिति वाजसनेयश्रुत्यर्थः। अनेन सप्त म्यर्थे वतिः। तन्वभाव इत्यावर्तते। भोगेत्युपस्कार्यम्। अत एवेत्यन श्चोऽनुवर्तते, स च विपक्षव्यावृत्त्यर्थोऽप्यर्थश्च। तथा च न देहाभावे भोगानुपपत्तिः। कुतः? 'सन्ध्यवत्' यथा स्वप्नावस्थायां 'तन्वभा वे' शरीराभावेऽपि तदभिमानाभावेऽपि भोगो दृष्टस्तथा 'तन्वभावे' तद्दशायां मुक्तौ 'तन्वभावे' देहाभावेऽपि भोगोपपत्तेरिति सूत्रार्थ उ क्तो भवति ॥

( ५ ) देहसद्भावे तत्र तत्त्वप्रदीपरीत्या मिथ्याभिनिवेशरूपाभिमाना भावेऽपि लक्ष्म्यादिसाधारणस्य स्वकीयत्वज्ञानमात्ररूपाऽभिमानस्या

( ६ ) ब्रह्मवैवर्ते च—

स्वप्नस्थानां यथा भोगो विना देहेन युज्यते।
एवं मुक्तावपि भवेद्विना देहेन भोजनम् ॥
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित्।
स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदा चन॥ इति ॥ १४ ॥

पि भावात्सुतरां भोगोपपत्तिरिति भावेन सूत्रमुपन्यस्यति—भाव इति ॥ अत्र भाव इत्यतः पूर्वं तन्वा इति विच्छिद्यान्वेति। सप्तम्यन्ता श्रुतिः। तन्वभावेऽपि भोगोपपत्तेरिति हेतुरत्रापि सम्बध्यते। तथा च 'जाग्रद्वत्' यथा जाग्रद्दशायां तनोर्भावे देहसत्त्वेऽपि भोगोपपत्तिस्तथा 'तन्वभावे' मुक्तावपि तनोर्भावेऽपि भोगोपपत्तेः न तदनुपपत्तिरिति सूत्रार्थस्य स्मृत्यैवोक्तत्वान्न पृथगुक्तः। ननु देह सद्भावे भोगानुपपत्तेरनापादितत्वात्तत्परिहारायेदं सूत्रं व्यर्थमिति चेन्न, अस्य सूत्रस्य प्रदीपवदावेश इत्यत्र वक्ष्यमाणं यद्दुःखादिप्राप्तिरूपदूषणस्य निराकरणं तत्प्रस्तावाय तत्प्रतियोगिप्रसञ्जकप्रतिपादनाय प्रवृत्तत्वेन सार्थकत्वात् ॥

( ६ ) ननु सन्ध्यवत् जाग्रद्वद्भोग इव सुषुप्त्यादिवद्भोगाभावोऽपि किं न स्यादिति प्रतिदृष्टान्तस्यापि वक्तुं शक्यत्वात्। देहाभावे स्वप्नवद्देहसद्भावे जाग्रद्वद्भोग इत्येतत्कुत इत्यतः पूर्वसूत्रसहितैतत्सूत्रार्थे स्मृतिं चाह ब्रह्मवैवर्ते चेति॥ उक्तमिति शेषः। न केवलं सूत्रकृता इदमुक्तमिति चशब्दार्थः। 'स्वप्नस्थानां' स्वप्नावस्थापन्नानां 'देहेन विना' तदभिमानेन विनाऽपि। अनभिमानस्याऽपि भोगाभावापादकत्वेनाभावसाम्यादेवमुक्तिः। 'देहेन' प्राकृतेन 'भोजनं' भोगः। युज्यत इत्यनुषज्यते। 'शरीराणि' प्राकृतानि 'कदा चन' भोगानन्तरकाले। इतिशब्दस्य ब्रह्मवैवर्त इत्यनेनान्वयः। बृहद्भाष्यरीत्या तु सूक्ष्मस्यैव स्वरूपदेहस्य मुक्तौ वृद्ध्यङ्गीकारेण भोगः। तदुक्तं बृहद्भाष्ये षष्ठाध्याये—

अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ।
तथा च सुमहत्तेजः करोति भगवान् महत् ॥
अतो नवतरं चैतत् ब्रह्मादीनां करोत्यजः ॥ इति ॥

व्यासतीर्थैः अल्पं परिमाणवत् भगवान् मुक्तौ रूपं सुमहत् तेजो मह्

(७) सू—ॐ ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ ॐ ॥ १५ ॥
शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगान
नुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादि
षु प्रविष्टः तत्स्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि ।
'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति'

त्करोतीत्यर्थ इति । अत्र स्वरूपदेहस्य महत्त्वं च स्वस्वचरमशरीरसम त्वेन तूलपिण्डवत् प्रचय एव । न च प्रचयशब्दितविकाराङ्गीकारे अनित्यत्वापत्तिः । ईश्वरशक्त्या तदभावोपपत्तेः । उक्तं हि गीताभा ष्ये 'शरीरं जायते तेषाम्' इति द्वितीयाध्यायव्याख्यानावसरे । प्रमे यदीपे तु विकारित्वाद्विनाशः स्यादित्यत उक्तं-ईश्वरशक्त्येतीति ॥

(७) ननु देहसद्भावे भोगोपपत्तावपि दुःखमप्यापद्यते एवेत्युक्त मेवेत्याशङ्कां परिहरत्सूत्रं पठति—प्रदीपवदिति ॥ अत्र मुक्तानामिति प्रकरणाल्लभ्यते । प्रदीपवदिति षष्ठ्यन्ताद्वतिः । आवेशः प्रवेशः । स्व कीयत्वज्ञानरूपाभिमानः । तथा च 'अपि' यद्यपि मुक्तानां 'आवेशः' शुद्धप्रकृतिमयज्योतीरूपसुखैकायतनबाह्यदेहप्रवेशः तदभिमानोऽस्ति तथापि न ते दुःखादीननुभवन्ति किंतु साधून्येव प्रदीपवदिति सदृ ष्टान्तं प्रतिज्ञावाक्यस्य अर्थमभिप्रेत्याह—शरीरमिति । शुद्धप्रकृतिम यज्योतीरूपशरीरमित्यर्थः । समुदायैकवचनमेतत् । 'अनुप्रविश्य' इच्छानुसारेण प्रविश्य तदभिमानिनो भूत्वा । तत्कार्यमाह-तदिति । 'पुण्यान्' तत्साध्यान् साधून् 'भोगान्' भोग्यान् । पुण्यानित्यनेनाग्नि होत्रादीत्यत्र ज्ञानोत्तरपुण्यभाजो यद्भोगबाहुल्यमुक्तं तत्सूचयतीत्यु क्तं तत्त्वप्रदीपे । मुक्ताः न दुःखादीननुभवन्ति, किन्तु पुण्यानेवेति यो जना । न पापसाध्यानसाधून् दुःखादीनित्येवार्थः । आदिशब्देनासह्य विषया गृह्यन्ते । 'तत्स्थं' दीपिकास्थितं 'भुङ्क्ते' गृह्णाति । द्वितीया न्तप्रथमादिशब्देन घृताद्युच्यते द्वितीयेन धूल्यादिकम् । तुरप्यर्थः । 'कार्ष्ण्यादीन्' मालिन्यादीनपीति । भुङ्क्ते इत्यनुषज्यते । तथेति शे षः । तथेत्यन्तं भाष्यं शरीरमित्यादेः प्राक् संयोज्यम् । 'तत्' शरीरं प्रकाशयन्तः चित्स्वरूपाद्विवेचयन्तः आत्मज्योतिषा प्रकाशयन्तो वा इत्यनेन प्रदीपवदिति प्रदीपदृष्टान्तं वक्तुः सूत्रकारस्य यथा प्रदीपो दीपिकां प्रकाशयन् तत्स्थं तैलाद्येव भुङ्क्ते, न प्रकाशविरोधीन् का

( बृ. ६-३-२२. ) इति हि दर्शयति ॥ १५ ॥
(८) न च ' स्वर्गे लोके न भयं किञ्चनास्ति ' ( कठ.१-१२.) इत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः—

ष्पर्यादीन् । तथा मुक्ताः जडशरीरं प्रकाशयन्तो देहविवेकज्ञानवत्त्वाद्गुणानेव भोग्याननुभवन्ति, न तन्निमित्तकं दुःखादीति विवक्षोक्ता भवति। न च ' न ह वै सशरीरस्य' (छा.८-१२-१.) इति श्रुतिविरोधः । तस्याः कर्मारब्धदेहविषयत्वादिति भावः । ननु देहसद्भावे कुतो मुक्तस्य दुःखाभावः, कुतश्च श्रुतेरर्थान्तरपरत्वं दृष्टान्तमात्रस्यासाधकत्वादित्यतः प्रवृत्तं तथा हि दर्शयतीति हेत्वंशं व्याचष्टे—तीर्णो हीति । श्रुतिरिति शेषः । ' हि ' यस्मात् तं ' दर्शयति ' प्रतिपादयति । ' तीर्णो हि ' इति वाजसनेयश्रुतिस्तु हानिनये व्याकृता । तथा च देहसद्भावः ' चिता वा ' इत्यादिश्रुतिसिद्धः, दुःखाभावेऽपि ' तीर्णो हि ' इति श्रुतिरस्ति, अतो न देहमात्रं दुःखहेतुरिति सिद्ध्यति श्रुतेरर्थान्तरं च सिध्यतीति भावः ।

(८) ननु 'तीर्णो हि' इत्येतद्वाक्यं स्वर्गादिविषयं किं न स्याद्बाधकाभावात्, तथा च न मुक्तानामदुःखत्वे प्रमाणमेतत् । न च वाच्यं स्वर्गेऽपि कथं दुःखाभाव इति । ' स्वर्गे लोके ' इत्यादिना स्वर्गे दुःखाभावसिद्धेरित्याशङ्कां परिहरति–न चेति ॥ इत्यादिना काठकवाक्येनेत्यनन्तरं स्वर्गे दुःखाभावसिद्धेरिति वाक्यशेषः । प्रथमादिपदेन 'न तत्र त्वं जरयाबिभेति ' इत्यादेर्ग्रहणम् । यमं प्रति नचिकेतोवाक्यमेतत् । द्वितीयादिपदेन पुण्यलोकान्तरग्रहणम् । स्वर्गादिस्थस्येति सम्बन्धमात्रे षष्ठी । 'एतत्' शोकतरणम् । यद्वा–'एतत्' 'तीर्णो हि' इति वाक्यं, तथात्वे षष्ठ्यर्थो विषयता । कुतो न वाच्यमिति पृच्छति–यत इति । 'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ' इत्यत्रैव प्रश्नार्थोऽयं शब्दः । एतत्परिहाराय सूत्रं पठित्वा व्याचष्टे—स्वाप्ययेति । सुप्तावित्यनेन सम्पत्तिशब्दो मोक्ष इत्यनेन स्वाप्ययशब्दश्च व्याख्यातः । यत्र यस्य रुचिः स एवार्थो ह्यस्य व्याख्येयः, न तु स्वाप्ययसम्पत्त्योर्मध्ये एक एवार्थ इति ज्ञापनाय वाशब्दप्रयोगः । यद्वा—तत्त्वप्रदीपदिशा वाशब्दश्चार्थः समुच्चये । तेन सौत्रान्यतरशब्दः उभयार्थतया व्याख्यातः । न स्वर्ग इत्यवधारणेऽपि वाशब्दः । तदिति । ' तत् ' संसारतरणं तेन ' तीर्णो हि ' इत्यनेनोच्यत इत्यर्थः । यत इत्येतदावृत्त्याऽत्रापि सं यो

सू—ॐ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ॐ ॥ १६ ॥

सुप्तौ मोक्षे वा तदुच्यते। 'अत्र पिताऽपिता भवति..

ज्यम्। हेत्वर्थे चायं, अतो न वाच्यमित्यन्वयः। यद्वा—सुप्तौ मोक्ष इति विषयसप्तमी। 'तत्' तीर्णो हीति वाक्यं 'उच्यते' पठ्यत इत्यर्थः। यद्यपि सूत्रनिर्देशानुसारेण मोक्षे सुप्तौ चेति वक्तव्यम्। तथापि 'तीर्णो हि' इति वाक्यस्योभयपरत्वेऽपि मुख्यत्वमेव, न त्वेकत्र मुख्यताऽन्यत्रामुख्यतेति ज्ञापनायैवं व्यत्यासेनोक्तिः। कुतोऽस्य वाक्यस्य सुप्तयादिविषयतेत्यतः प्रवृत्तमाविष्कृतं हीत्यंशं व्याचष्टे—अत्रेति। इत्यादीति। आदिशब्दस्योभयत्र सम्बन्धः। 'अत्र पिताऽपिता भवति' इत्यादिना वाजसनेयवाक्येनेति। अत्रत्यादिशब्देन 'माताऽमाता भवति' (बृ. ६-३-२२.) इत्यादिशिष्टवाक्यं गृह्यते। 'अनन्वागतं पुण्येनानन्वागतं पापेन' ( बृ. ६-३-२२. ) इत्यादिशब्देन लिङ्गान्तरबोधकं वाक्यान्तरं गृह्यते। आविष्कृतत्वादिति। व्यक्तीकृतत्वादित्यर्थः। एतद्वाक्यस्य सुप्तयादिविषयत्वस्येति शेषः। अनेन हिशब्दो हेत्वर्थतया व्याख्यातः। भगवत्सम्परिष्वक्तो जीवः पूर्वं स्वपुत्राणां पिता 'अत्र' सुप्तौ मुक्तौ चापिता भवति। दायादानात् तेषां दुःखाद्दुःखाच्चेति भावः। पूर्वं माता अमाता भवति। एवमनिष्टपुण्येन पापेन च 'अनन्वागतं' अन्वागमनं न भवतीति श्रुत्यर्थः। नन्वपितृत्वादिलिङ्गं पुण्यपापाद्यसङ्गत्वादिलिङ्गं च कथं सुप्ते सङ्गतमिति चेदुच्यते। सुप्तिसमये स्वपुत्राणां दायादानेन पुत्रेष्वभिमानाभावेन च सुप्तस्यापितृत्वममातृत्वं च युक्तम्। यथोक्तं बृहद्भाष्ये—

तेनाश्लिष्टः स्वपुत्राणां दायादानात् न वै पिता।
तेषां दुःखाद्दुःखित्वान्न माता लोकमान्यपि ॥ इति ॥

एवं सुप्ते वृत्तिसुखदुःखयोरभावेन तत्साधनपुण्यपापयोरसम्बन्धो भाविदुःखशङ्काभावेन शोकतरणं च युक्तमिति द्रष्टव्यम्। सूत्रार्थस्तु-'तीर्णो हि' इति वाक्यं 'स्वाप्ययसम्पत्त्योः' मुक्तिसुप्त्योर्मध्ये 'अन्यतरापेक्षं' उभयापेक्षमुभयविषयमेव, न स्वर्गविषयम्। कुतो? 'हि' यस्मात् अस्योभयविषयत्वं 'अत्र पिता' इत्यादिना 'आविष्कृतं' प्रकटितं तस्मादिति। सूत्राक्षरस्वारस्यं तु कर्मनिर्णयटीकायां बृहद्भाष्ये चोक्तम्। तथा हि—यदि स्वाप्ययसम्पत्त्यपेक्षमित्युच्यते, तदा

अनन्वागतं पुण्येनानन्वागतं पापेन' (बृ. ६-३-२२.)
इत्याद्याविष्कृतत्वात्।

(९) ब्रह्मवैवर्ते च—

ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः।
भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन॥

---

स्वाप्यये मोक्षे या सम्पत्तिः सुप्तिस्तदपेक्षं तद्विषयमिदं वाक्यमिति प्रतीतिः स्यात्, तथा च मोक्षेऽपि सुप्तिरस्तीति शङ्का प्राप्ता, तन्निवृत्त्यर्थं स्वाप्ययसम्पत्त्योर्मध्येऽन्यतरापेक्षमित्युक्तम्। न चाज्ञाननिवृत्तिरूपे मोक्षे कथमज्ञानकार्यसुप्तिशङ्का स्यादिति वाच्यम्। प्रेक्षावतां तच्छङ्काभावेऽपि मोक्षस्याज्ञाननिवृत्तिरूपत्वं सुप्तेरज्ञानकार्यत्वं चाजानतो मन्दस्यैतच्छङ्कोदयात्। न चान्यतरपदं प्रयोक्तुः सूत्रकारस्य 'तीर्णो हि' इति वाक्यस्यैकार्थविवक्षैवास्त्विति वाच्यम्। यद्येतयोर्मध्ये एक एवार्थो विवक्षितः स्यात्तदा स्वाप्ययापेक्षमिति वा सम्पत्त्यपेक्षमिति वा ब्रूयात्, न तु विकल्पवाचकान्यतरपदप्रयोगः, वस्तुनि विकल्पायोगात्। न च सूत्रकृतोऽप्ययमेवार्थ इति निश्चयाभावादेवं प्रयोग इति वाच्यम्। सर्वज्ञस्य संशयायोगात्। अन्यथा तत्कृतस्य सूत्रत्वव्याहतेः। ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरित्येव कुतो न कृतं, तावताऽप्युक्तशङ्कापरिहारादिति चेदुच्यते। अनेकार्थस्य 'तीर्णो हि' इति वाक्यस्यैकार्थव्याख्याने रुचिरेव व्याख्यातुः प्रमाणं, न तु मुख्यामुख्यताविशेषोऽस्तीति सूचयितुमन्यतरापेक्षमितीति। एतेन 'तीर्णो हि' इति वाक्यस्य स्वर्गस्थविषयत्वं पराकृतं भवति। प्रलये लिङ्गभङ्गलक्षणपरमुक्तियुक्तस्यैव तस्य पुत्रकृतश्राद्धादिभोक्तुरपितृत्वाद्यसम्भवात्, पुण्याद्यनन्वागमनाद्ययोगाच्च॥

(९) अधिकरणार्थे स्मृतिमुदाहरति—ब्रह्मवैवर्ते चेति॥ 'विश्वमोक्षिणः' सर्वे मुक्ताः 'गुणमात्रस्वरूपिणः' ज्ञानानन्दादिगुणैकस्वरूपिणः सर्वशोकान् तीर्णाश्च भवन्ति 'हि' यस्मात्ते गुणमात्रस्वरूपिणः तस्मात्स्वेच्छागृहीतेषु 'ज्योतिर्मयेषु' शुद्धसत्त्वात्मकेषु देहेषु 'सुसुखान्येव' दुःखासम्भिन्नसुखादीन्येव भुञ्जते यस्मात् ते सर्वशोकान् तीर्णाः तस्मात् कदाचन दुःखादीन् नैव भुञ्जते इत्यन्वयः। ते मुक्ताः अनिष्टकाम्यपुण्यपापादिवर्जिताः सर्वदोषनिवृत्ता इत्यनुवादः। गुणमात्रस्वरूपिणः सर्वशोकान् तीर्णा इत्यनेन भुञ्जते सुसुखान्येव, न दुः

तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः ।
निवृत्तसर्वदोषास्ते गुणमात्रस्वरूपिणः ॥ इति ॥ १६ ॥

९. अधिकरणम् ॥

( १ ) सू—ॐ ॥ जगद्व्यापारवर्जम् ॥ ॐ ॥ १७ ॥
'सर्वान् कामानाप्त्वाऽमृतः समभवत्' ( ऐ. आ. २-५-४. ) इत्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारानाप्नोति ॥ १७ ॥

( २ ) कुतः ?

त्वादीनित्यनेन वा, अस्यार्थस्य प्राप्तत्वात् । ननु सर्वेषां ज्योतिर्मयदेहाभावात्कथं विश्वमोक्षिण इत्युक्तिरिति चेत्, अत्र केचित्—विश्वपदस्य सङ्कोच इति । अन्ये तु—एतद्वाक्यबलादस्तु विश्वेषां ज्योतिर्मयदेह इत्याहुः । एके तु—विश्वमोक्षिण इत्यस्य कर्मक्षयोत्क्रान्तिमार्गभोगाख्य चतुर्विधमोक्षवन्त इत्यर्थः । तेन नोत्क्रामन्तीति वक्ष्यमाणमुक्तव्यावृत्तिरित्याहुः । इति ब्रह्मवैवर्त इत्यन्वयः ॥ ८ ॥

॥ इति अभावाधिकरणम् ॥

९. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्मप्राप्तस्य मुक्तस्य भोगेयत्ता समर्थ्यते । तत्र 'सर्वान् कामान्' इति श्रुतेर्मुक्ता जगत्सृष्ट्यादिसर्वकाम्यानाप्नुवन्तीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—जगदिति ॥ आप्नोतीत्यनन्तरमेवशब्दशिरस्कमुच्यत इत्येतदनुषज्यते । अपीति शेषः । तथा च अपि यद्यपि 'सर्वान् कामानाप्त्वाऽमृतः समभवत्' इत्यैतरेये 'अमृतो' मुक्तः सर्वान् काम्यभोगानाप्नोतीत्युच्यते । तथाऽपि 'तत्र' सर्वपदोदितेषु मध्ये सृष्ट्यादिभ्योऽन्यानेव सर्वानाप्नोति । न च श्रुतिविरोधः । यतस्तत्र श्रुतौ सृष्ट्यादिभ्योऽन्यान् कामानाप्नोतीत्येवोच्यते, न तु सृष्ट्याद्याप्नोतीति योजना । अनेन सूत्रे मुक्त इत्यनुवर्तते । सर्वान् कामानाप्नोतीति श्रुत्यर्थ इति शेषः । जगद्व्यापारवर्जमिति सावधारणम् । मुक्तो जगद्व्यापारवर्जं सर्वान् कामानाप्नोति । न च श्रुतिविरोधः । यतो मुक्तो जगद्व्यापारवर्जमेव सर्वान् कामानाप्नोतीति श्रुत्यर्थो युज्यत इति सूत्रार्थ उक्तो भवति ॥

सू—ॐ ॥ प्रकरणादसन्निहितत्वाच्च ॥ ॐ ॥ १८ ॥

जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च ।

(३) वाराहे च—

स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामस्स्यादन्यान् कामांस्तु भुञ्जते ॥
तद्योग्यता नैव तेषां कदाचित्क्वापि विद्यते ।
न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत् ॥ इ
ति ॥ १८ ॥

---

(२) कुतः सर्वश्रुतेस्सङ्कोच इत्याक्षिपति—कुत इति ॥ तत्परिहाराय सूत्रं पठित्वा प्रतिज्ञायाः पूर्वसूत्रेणैव प्राप्तत्वात्तामनुक्त्वा सौत्रहेतुं व्याचष्टे—प्रकरणादिति ॥ अस्य जीवप्रकरणत्वादित्यनेन सूत्रे जीवेत्यादौ ग्राह्यं भावप्रधानो निर्देश इत्युक्तं भवति। अयं हेतुसाधको हेतुः। साक्षाद्धेतुस्तु अत्रोच्यमानस्य जीवत्वादिति जीवपदसूचितः। तादृगिति। जगद्व्यापारशक्तिरहितत्वादित्यर्थः। अयं च हेतुः। साक्षाद्धेतोरप्रयोजकत्वशङ्कापरिहारकः। अत्रापि जीवत्वादित्येव हेतुस्सोऽपि द्वितीयजीवपदेन सूचितः, अत एव सूत्रे हेतूनां समुच्चये चशब्दः प्रायोजि ॥

(३) ननु संसारिजीवानां तादृक्सामर्थ्यविदूरत्वेऽपि सत्यकामानां मुक्तजीवानां तत्सम्भवत्यतो जीवत्वहेतुरसत्यकामत्वोपाधियुक्तोऽप्रयोजक इत्यतश्चशब्दसूचितां स्मृतिमुदाहरति—वाराहे चेति ॥ न केवलं सूत्र इति चार्थः। अयमर्थ उक्त इति शेषः। स्वेति। स्वयोग्याद्धिकेत्यर्थः। अपिस्समुच्चये। तुश्चार्थः। प्राप्तिश्च न स्यादिति उक्तादन्यांस्तु कामयन्ते कामितांश्च भुञ्जत इत्यन्वयः। स्वाधिकेति उत्तराधिकरणोपयोगितयोक्तम्। कुतोऽकाम इत्यत आह—तदिति। ‘कदाचित्क्वापि’ स्थाने अधिकानन्दे सृष्ट्यादिव्यापारे च ‘तेषां’ मुक्तानां ‘योग्यता’ सामर्थ्यं न विद्यत एव, यतोऽतो नैव कामः स्यादित्यन्वयः। नन्वयोगस्याप्यप्राप्त्यकामौ कुतो, व्याप्त्यभावादित्यत आह—न चेति। विशेषणान्तरसमुच्चयेऽपिः। तथा च सत्यकामोऽपीत्यर्थ इति केचित्। न केवलं संसारीत्यपरे। वस्तुतस्तु यः कोऽपीत्यर्थेऽपिशब्दः। अनेन व्याप्तिरुक्ता भवति। आद्यश्चोऽवधारणे। द्वितीयस्समुच्चये। इ

(४) सू—ॐ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ ॐ ॥ १९ ॥

'ता यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ.१-५.) इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्य

---

ति वाराह इत्यन्वयः। असत्यकामत्वं तु 'नैव योग्यता' इति स्मृत्या निश्चितसाध्यवति पक्षे अभावेन साध्याव्यापकत्वान्नोपाधिरिति भावः॥

(४) मुक्तस्य जगदैश्वर्याभावमाक्षिप्य समादधत्सूत्रमुपन्यस्य पूर्वपक्षांशं व्याचष्टे—प्रत्यक्षेति ॥ इति वाक्ये प्रत्यक्षं स्फुटमेव मुक्तस्याखिलदेवतापूज्यत्वप्रथमोत्पन्नत्वाद्युपदेशाच्छ्रवणादित्यर्थः। सूत्रेऽध्याहार्यां पूर्वपक्षप्रतिज्ञां दर्शयति–जगदैश्वर्यमस्तीति। अशेषमुक्तानामित्युपस्कार्यम्। 'ता वा एताश्चतस्रश्चतुर्धा, चतस्रश्चतस्रो व्याहृतयः, ता यो वेद' (तै.उ.१-५.) इत्यादितैत्तिरीयश्रुतेरयमर्थः। भूर्भुवस्सुवर्मह इति चतस्रो व्याहृतयः तच्छब्दवाच्याः लोकज्योतिःप्राणवेदेषु स्थिता अनिरुद्धादिभगवद्रूपविशेषाः प्रत्येकमनिरुद्धादिभेदेन चतुर्धा भवन्ति। ते तु अनिरुद्धानिरुद्धः अनिरुद्धप्रद्युम्नोऽनिरुद्धसङ्कर्षणोऽनिरुद्धवासुदेव इत्यादिरूपाः। ता एव चतस्रः चतस्रः षोडशमूर्तयः। यथोक्तं तैत्तिरीयभाष्ये—

लोकज्योतिः प्राणवेदेष्वेकः स पुरुषोत्तमः।
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः॥ इति॥

व्याहरणान्निमित्ताद्व्याहृतिशब्दिताः। 'ताः' मूर्तीर्यो वेद स एव परं ब्रह्म वेद। 'अस्मै' षोडशात्मविदे सर्वे देवाः 'बलिं' करं 'आवहन्ति' प्रयच्छन्ति। सर्वदेवपूज्यो भवतीति यावदिति। परिहारांशं व्याचष्टे—नेति। नैतच्छ्रुतिबलेनाशेषमुक्तानां जगदैश्वर्यसिद्धिरित्यर्थः। कुतो नेत्यतः श्रुतावशेषमुक्तानुक्तेरित्याशयेन आधिकारिकेति हेत्वंशं सावधारणं भावप्रधानत्वं आवृत्तिं चाभिप्रेत्य व्याचष्टे—आधिकारिकेति। आधिकारिकमण्डलाधिपत्ये इत्यर्थः। प्रकारसमर्पकमिदं ब्रह्मेत्यनन्तरं योज्यम्। 'हि' यस्मात्। अत्राधिकारिकशब्दो यौगिको न तु आधिकारिका इति पुरुषविशेषसंज्ञा 'प्रजापाश्च तथा देवाः' इति वचनादिति प्रमेयदीपिकोक्तरीत्या रूढः। तथा च तत्रोदाहृतवाक्ये ये आधिकारिकाः स्वावरप्रेरणाधिकारे विष्णुना नियु

स्तीति चेन्न, आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते।

(५) गारुडं च—

आत्मेत्येव परं देवमुपास्य हरिमव्ययम्।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन॥

---

काश्चतुर्मुखेतरमुक्तदेवाः तेषां मण्डलं समूहः तत्र स्वामित्वेन तिष्ठतीति तत्स्थः तदधिपतिः तस्यैव मुक्तविरिञ्चस्यैव आधिकारिकमण्डलस्थत्वस्यैव मुक्ताधिकारिकदेवतापूज्यत्वस्यैव उक्तेरिति हेत्वर्थ उक्तो भवति। 'ता यो वेद' इति श्रुतेः विरिञ्चपरत्वं 'माहाचमस्यः' (तै.उ. १-५.) इत्युपक्रमात्सिद्धम्। माहाचमस्यशब्दश्च

महाचमसनामाऽसौ यस्मादतिचमत्कृतिः।
माहाचमस्यस्तज्ज्ञानी ब्रह्मा संपरकीर्तितः॥

इति तैत्तिरीयभाष्योदाहृतवचनाच्चतुर्मुखपरः। सूत्रे मुक्तदेवमण्डलेति वाच्ये अत्राधिकारिकेत्युक्तिर्मुक्तब्रह्मान्यदेवानामपि मुक्तस्वावरनियमनाधिकारित्वमस्तीति सूचनार्येति ध्येयम्॥

(५) ननु मुक्तानां देवानां मुक्तस्वावरनियामकत्वं मुक्तहिरण्यगर्भस्य त्वशेषमुक्तजीवनियामकत्वमित्येतत्कुत इत्यतः सौत्रोक्तिपदसूचितस्मृतिमुदाहरति—गारुडे चेति॥ चस्समुच्चये। तथा च गारुडे पुराणेऽप्येषोऽर्थः कथित इत्यर्थः। पुराणवचनार्थस्तु—'केचित्' एकगुणोपासनयोग्याः अत्यल्पा मानुषाः 'आत्मेति' आत्मत्वेनैव प्रकारेणाव्ययं परं देवं हरिमुपास्य अथ दृष्ट्वा प्रारब्धं कर्म भोगेन क्षपयित्वा 'अत्रैव' भूम्यादावेव देहबन्धान्मुच्यन्ते स्वरूपानन्दं चानुभवन्ति। ते कदाऽपि ब्रह्मनाड्या नाड्यन्तरेण वा नोत्क्रामन्ति किन्तु देहनाशपर्यन्तं देह एव स्थित्वा अथ मुक्तिं गच्छन्ति। 'तेषां' उत्क्रान्तिरहितानां 'अत्र' पृथिव्यादावेव निवासो भवतीति। 'तदोकः' इति वचनं तु—

केचित्तु मानुषाः मुक्तिमनुत्क्रम्यैव देहतः।
देहपाते तु देहस्य दोषान् भुक्त्वैव सर्वशः॥
मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान्।
देहे जीर्णे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया॥
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः॥

अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ॥

इति बृहद्भाष्योक्तैकगुणोपासकातिरिक्तविषयमिति न तद्विरोधः । स्मृतौ केचिदल्पपाः मानुषाः अपरोक्षज्ञानिनो देहपाते प्रत्यासन्ने स्वीयारब्धकर्मजान् ‘ मरणोच्छूनतादीन् ’ मरणदेहोपचयादीन् देहस्य दोषान् ‘ सर्वशः ’ सर्वतो भुक्त्वैव स्थिताः, अथ देहे जीर्णे देहतो ब्रह्मनाड्या नाड्यन्तरेण वाऽनुत्क्रम्यैव देहनाशपर्यन्तं तत्रैव स्थिताः अथ प्रलये मुक्तिं लिङ्गभङ्गरूपां ‘ गच्छन्ति ’ प्राप्नुवन्ति । तदनन्तरं सकृच्छ्वेतद्वीपं गच्छन्ति । तत्र विष्णुं दृष्ट्वा तदनुज्ञया ‘ पुनरत्रैव ’ भूलोक एव नित्यानन्दैकभोगिनः ‘ सन्ति ’ तिष्ठन्तीति योजना । तत्त्वप्रदीपे तु नोत्क्रामन्तीत्यस्य सकृच्छ्वेतद्वीपगमनात्परमस्माद्देहदेशान्नोत्क्रामन्तीत्यर्थः । अन्यथा ‘ बहुनात्र ’ इति वचनविरोधात् । ‘तदोकोऽग्रज्वलनम् ’ इत्यादिना ज्ञानिनो देहदेशान्निर्गमनस्योक्तत्वाच्चेत्युक्तम् । तस्य—‘ परं ’ अनन्तरमस्मान्नोर्ध्वं गच्छन्ति । ‘ अन्यथा ’ कदाऽपि श्वेतद्वीपगमनात्पूर्वमपि नोत्क्रामन्तीत्यर्थाभ्युपगमे । नोत्क्रामन्तीत्यस्य ब्रह्मनाड्युत्क्रमणाभावार्थत्वं किं न स्यादित्यत आह–तदोक इत्यादीत्यर्थः। अस्मिन् पक्षे ‘ तदोकः ’ इति सूत्रमेकानेकगुणोपासकज्ञानिसामान्यपरम् । बृहद्भाष्यं तु श्वेतद्वीपगमनात्परमस्माद्देहदेशादनुत्क्रम्यैवेत्यर्थकमिति ध्येयम् । केचित्तु—‘ नोत्क्रामन्ति कदाचन ’ इत्यस्य इतरमुक्तवदेकवारं ब्रह्मनाड्योत्क्रमणेन मुक्तौ सत्यां पुनः स्वयोग्यस्थाने स्थित्यनन्तरं ‘ नोत्क्रामन्ति ’ नोर्ध्वं गच्छन्तीत्यर्थमाश्रित्य अत एव ‘ अत्रैव च स्थितिस्तेषां अन्तरिक्षे च केचन ’ इत्युक्तम् । अन्यथा लिङ्गशरीरभङ्गाभावान्मुक्तिरेव तेषां न स्यादिति तत्त्वप्रदीपरीत्यैवाऽर्थमाहुः । ‘ आत्मेत्येवोपास्व ’ इति वचनस्य ‘ आनन्दादयः प्रधानस्य ’ इत्युक्तिविरोधपरिहारस्तु तस्याश्चतुर्विधमोक्षार्थचतुर्गुणोपासकविषयत्वात् अस्याश्च कतिपयमोक्षयोग्यैकगुणोपासकविषयत्वाद्भिन्नविषयत्वेन विरोधाभावादिति तत्रैव कृतः । केचित्तु—आत्मेत्युपलक्षणम् । आनन्दादयोऽपि ग्राह्याः । एकगुणोपासकविषयकल्पनया समाधानटीका तु ‘ अस्तु वा ज्ञातता ’ इत्यादिवत्प्रौढवादेनैव प्रवृत्ता नाभ्युपगमवादेनेत्याहुः । तन्न, आनन्दमालायां—अथ चतुर्गुणोपास्तेरशक्य

केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।

त्वे आनन्दादीनां आत्मत्वगुणैकीकारेणापि कथं चिदुपास्तिरस्ति, तथा च सच्चिदानन्दो विष्णुरात्मेत्युपास्य इत्यन्वय इत्युक्तिविरोधात् । 'तेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम्' इति छान्दोग्यभाष्योक्तेरेकगुणोपासनाख्यविशेषवतां मनुष्याणां भूर्भुवस्स्वराख्यलोकप्राप्तिस्सिद्धा । तत्र भूलोकस्था उक्ताः । भुवस्स्वर्गस्थमुक्तानाह— अन्तरिक्षे त्वित्यादिना । तुशब्दोऽप्यर्थः । 'केचन' पूर्वोक्ता उत्तमा मनुष्याः । मुच्यन्त इत्यन्तं उभयत्राप्यनुषज्यते । नोत्क्रामन्तीत्येतत्तु पूर्वत्रैव योज्यम् । एवं किमुशब्दैरुक्तानां मनुष्याणां स्थितिमुक्त्वा तेभ्योऽधिकानां स्थितिमाह—महरिति । 'जने' जनलोके 'तपसि' तपोलोके । चस्समुच्चये । 'सत्ये' सत्यलोके । सर्वत्र मुच्यन्त इत्यनुषज्यते । 'महाज्ञानाः' बहुकालं ब्रह्मदर्शिनः अप्रतीकालम्बनाख्याः बहुगुणोपासकास्तु 'क्षीरसागरं' तत्रत्यश्वेतद्वीपं गच्छन्तीत्यर्थः । उपलक्षणमेतत् । तिष्ठन्तीत्यपि द्रष्टव्यम् । न च अत्रैव मुच्यन्ते, अत्रैव च स्थितिस्तेषाम्, महाज्ञाना गच्छन्ति क्षीरसागरम्' इत्युक्त्या महाज्ञानातिरिक्तानां एकगुणोपासकादीनां श्वेतद्वीपागमनप्राप्तेः

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तस्स्यात् . . . . ॥

इत्यत्र च सर्वेषां श्वेतद्वीपगमनोक्तेर्विरोध इति वाच्यम् । सर्वेषामपि सकृच्छ्वेतद्वीपगमनाभ्युपगमात् । तथाचाण्डलयकाले स्वोत्तमप्रवेशे नोर्ध्वं गताः भग्नलिङ्गाः सकृच्छ्वेतद्वीपं गत्वा पुनर्धरादिकमागत्यानन्तरमत्रैव तिष्ठन्तीत्याशयेन 'अत्रैव च स्थितिः' इत्याद्युक्तिरित्युक्तं भवति । उक्तं हि छान्दोग्यभाष्ये—

श्वेतद्वीपं ततो गत्वा दृष्ट्वा विष्णुं च तेन ते ।
अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ॥ इति ॥

ननु गीताभाष्ये—ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात्तत्र यान्ति योग्यत्वं चात्र विवक्षितमित्युक्तेः सर्वेषां श्वेतद्वीपगमने तद्विरोधस्स्यादिति चेन्न, तस्य क्षीराब्धावावस्थानाय योग्यत्वं विवक्षितमित्येतदर्थकत्वात् । अत एव प्रमेयदीपिकायां अत्रेत्यनन्तरं निवास इति शेषः कृतः । तथा च महाज्ञानित्वलक्षणयोग्यत्वं चात्र क्षीराब्धिगत

(६) तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ।
सालोक्यं च सरूपत्वं सामीप्यं योग एव च ॥
इमामारभ्य सर्वत्र यावत्सुक्षीरसागरे ।
पुरुषोऽनन्तशयनः श्रीमान्नारायणाभिधः ॥

श्वेतद्वीपे निवासे तदर्थं विवक्षितम्, न तु गतिमात्र इति तद्वाक्यार्था भ्युपगमान्न विरोध इति ध्येयम् ॥

(६) श्वेतद्वीपेऽपि मुहूर्ताधिकज्ञानित्वरूपमहाज्ञानित्ववतां न सा म्यमित्याह—तत्रापीति ॥ श्वेतद्वीपेऽपि महाज्ञानिष्वपीत्यर्थः । क्रमेति। क्रमस्तारतम्यं स एव योग उपायस्तेनेत्यर्थः । इदं चोभयत्रान्वीयते । तथा च क्रमयोगेन ज्ञानाधिक्यात् ज्ञाने आधिक्ये तारतम्याख्योपायात् तदनुसारेण महाज्ञानाः क्रमयोगेन 'आदघ्नासः' (ऋ.१०-७१-७.) इत्या द्युक्तरीत्या 'समीपगाः' भगवत्समीपवर्तिन इत्यर्थः । ननु भूम्यादिषु मुक्तानां स्थितौ न मोक्षोऽयं स्यात् सालोक्यादिचातुर्विध्यानन्तर्भावादि त्यत आह-सालोक्यं चेति । समानलोकस्थत्वं सालोक्यं समीपस्थत्वं सामीप्यं चतुर्भुजत्वादिरूपसाम्यं सारूप्यं भगवदङ्गप्रवेशः सायुज्यं योग एव चेत्येवशब्दस्यास्तीत्यध्याहृतेनान्वयः । चस्समुच्चये । इ मामिति वाक्ये उक्तक्रमेण तावत्स्विति पदे अध्याहार्ये तथा च 'इ मां' पृथिवीमारभ्य

केचनात्रैव मुच्यन्ते, केचनान्तरिक्षे,
केचित्स्वर्गे महर्लोके जने तपसि चापरे ।
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ॥

इत्याद्युक्तक्रमेण यावत्सु स्थानेषु श्रीमन्नारायणाभिधोऽनन्तशयनः पु रुषोऽस्ति 'तावत्सु' सर्वत्र स्थानेष्वपि सालोक्यं समीपत्वं च सारू प्यं योगश्चास्त्येवेति योजना । केचित्तु यावत् सुक्षीरसागर इति पद विभागं कृत्वा शोभने क्षीरसागरे यावन्नारायणाभिधः तावदिमामार भ्य सर्वत्र सालोक्याद्यस्तीत्यर्थमाहुः । तथा चेश्वरस्य सर्वदा सर्वत्रा वस्थानात् भूम्यादिषु मुक्तानामपि भगवत्सामीप्यादिरूपो मोक्षो यु क्त इति भावः । न चैतावताऽत्रैव मुक्तानां सायुज्याद्यप्यस्तीति मन्त व्यम् । यदि चतुर्मुखाद्याः पृथिव्यादिषु मुक्तस्थानं प्रति आगच्छन्ति, तदा तेषां तत्रस्थभगवत्सायुज्याद्यप्यस्तीत्यर्थोपपत्तेः ॥

( ७ ) मानुषा वर्णभेदेन तथैवाश्रमभेदतः ।
क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ॥
आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ।
रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तरोत्तराः॥
नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च ।
सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम ॥
पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः ।
स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता॥

( ७ ) ननु मानुषाः सर्वेऽप्येकविधाः, तथा च कथं तत्र केचन भूमौ, केचनान्तरिक्षे, केचित्स्वर्गे, इत्येवंरूपावान्तरभेदः सम्भवतीत्यतो वर्णाश्रमभेदेन तेषां बाहुविध्यं प्रदर्शयन् क्रमयोगेनेत्युक्तं मुक्तानां तारतम्यं च दर्शयति–मानुषा इत्यादिना॥ 'वर्णाः' ब्रह्मक्षत्रादयः 'आश्रमाः' ब्रह्मचर्यादयः मुक्तौ सन्तीति शेषः । 'क्षितिपाः' चक्रवर्तिनः 'देवाः' देवगन्धर्वाः 'चिराः पितरः' इति सामानाधिकरण्यम । 'आजानजाः' अनाख्यातदेवाः 'कर्मजाः' कर्मणा देवत्वं प्राप्ताः बल्याद्याः कार्तवीर्याद्याश्च 'तात्विकाः' तत्त्वाभिमानिनो बृहस्पत्यादयः देवा इत्यनुषज्यते । 'शचीपतिः' इन्द्रः 'रुद्रः' शेषः 'ब्रह्मा' हिरण्यगर्भ इत्येते क्रमशः क्रमेण 'पूर्वस्मात' पूर्वपूर्वनिर्दिष्टात् 'उत्तरोत्तराः' उत्तमोत्तमा इति सम्बन्धः । एवं स्वरूपे तारतम्यमुक्त्वा गुणेषु तदाह– 'तेषु' उक्तेषु मध्य इति । नित्यानन्दे भोगे ज्ञानैश्वर्यरूपगुणेषु सर्वेऽपि 'पूर्वस्मात' पूर्वपूर्वतः 'उत्तरोत्तरं' पश्चात्पश्चान्निर्दिष्टाः शतगुणोत्कृष्टा इत्यर्थः । शतशब्दो बहुवाची । द्वितीयगुणशब्दो गणनापरः। यदर्थं तारतम्यमुक्तं तन्मुक्तानां स्वावरपूज्यत्वम्, चतुर्मुखस्य सर्वपूज्यत्वमिदानीमाह--पूज्यन्ते इति । 'ते' मुक्ताः । सर्वपूज्य इति । ईशलक्ष्मीव्यतिरिक्तसर्वपूज्य इत्यर्थः । न केवलं स्वावरपूज्यत्वमात्रं तेषां, किन्तु स्वजगद्व्यापृतिश्चास्तीत्याह—स्वेति । 'तेषां' मुक्तानां स्वप्रतिबिम्बभूतमुक्तजीवेषु व्यापारश्चास्तीति तत्त्वप्रदीपादिशाऽस्यार्थो ज्ञातव्यः। अत्राधममुक्तेषु उत्तमानां व्यापारो नाम सतीपतिन्यायेन बहिस्स्थत्वा नियामकत्वं, अन्तस्स्थत्वा नियामकस्तु मुख्यप्राण एव। यथोक्तं छान्दोग्यभाष्ये—तुरीयायामवस्थायां प्राणादेव निबोधनम । इति ॥ मोक्षावस्थायामित्यर्थः। 'पूर्ववत्' संसार इव यथा संसारे स्व

(८) सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।
चिद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन ॥
भुञ्जते मुक्तिरं ते विस्पष्टं समुदाहृता ॥ इति ॥ १९ ॥
(९) सू—ॐ ॥ विकारावर्ति च तथा हि दर्शयति ॥ ॐ ॥ २० ॥
विकारावर्तिव्यापारो मुक्तानां न विद्यते ' इमं मानव

---

जगद्व्यापृतिस्तथेत्यर्थः ॥

(८) मानुषादिभ्यो देवाः श्रेष्ठाः योगशब्दोक्तसायुज्यभाक्त्वात्, तेषु चतुर्मुखश्रेष्ठ इत्युक्तम्, तद्विवरीतुं तेषां ऐक्यशङ्कां च वारयितुं सयुजां महिमानमाह—सयुज इति ॥ सयुजः परमात्मानं प्रविश्य कदाचिद्बहिर्गताश्च भवन्ति । तत्र चिद्रूपान् प्राकृतान् अबन्धकशुद्धसत्त्वात्मकान् कांश्चन भोगान् स्वोत्तमैकभोग्यान् विना अन्यान् चिद्रूपान् प्राकृतांश्च भोगान् भुञ्जते इत्यर्थः । यद्वा—कांश्चन लक्ष्म्यात्मकान् स्वोत्तमरूपांश्च चिद्रूपान् प्राकृतानपि भगवदसाधारणभोग्यगन्धादींश्च विना स्वयोग्यभोगान् भुञ्जते इत्यर्थः । निगमयति—एवमिति । एवं क्रमेण ' विस्पष्टं ' अतिस्पष्टं मुक्तिस्ते ' समुदाहृता ' अभिहितेत्यर्थः । मयेति शेषः । नारदं प्रति ब्रह्मवाक्यमेतत् । इति गारुडे इत्यन्वयः ॥

(९) ननु ब्रह्मादिमुक्तानां मुक्तजगद्व्यापार एव कुतः, अमुक्तजगद्विषयोऽपि किं न स्यादित्याशङ्कां परिहरत्सूत्रं पठति—विकारेति ॥ अत्र चशब्दो नञनुषङ्गार्थः । विकारावर्तीति नपुंसकं पदम् । मुक्तानामिति शेषः । तथा च विविधाकारत्वान्मनोविकारदुःखमूलत्वाद्वा विकारशब्दितं संसारमावर्तयति प्रवर्तयतीति ' विकारावर्ति ' संसारविषयकव्यापरणं मुक्तानां न विद्यते । यद्वा—विकारपदं प्रकृतिविकारशरीराभिमानिसंसारिपरम्, तमावर्तयतीति विकारावर्ति मुक्तानां न विद्यते । कुतो ? ' हि ' यस्मात्तथा श्रुतिः ' दर्शयति ' प्रतिपादयतीति योजनामभिप्रेत्य सूत्रं व्याचष्टे—विकारेति । व्यापारेति लब्धार्थकथनम् ' हि ' यस्माच्छ्रुतिर्दर्शयतीति शेषः । मानवाः मनुष्याः यत्रावर्तन्ते जन्ममृत्यादि प्राप्नुवन्ति स मानवावर्तः संसारः । अधिकरणे घञ् , तत्पुरुषोऽयम्, मुमागमश्छान्दस इति केचित् । छान्दोग्य

मावर्तं नावर्तन्ते' (छा. ४-१५-६.) इति श्रुतिः।

(१०) वाराहे च—

स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम्।
बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत्॥
सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः।
न विकाराधिकारस्तु मुक्तानामन्य एव तु॥
विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना॥ २०॥

—*—

व्यासतीर्थीये तु मानवमावर्तमिति अलुक्समास इत्युक्तम्। एतत्पक्षे द्वितीयायाः षष्ठ्यर्थत्वमभिप्रेतम्। तं प्रति 'नावर्तन्ते' न प्रवर्तयन्तीत्यर्थः। तत्त्वप्रदीपे तु मानवं मनुष्यसम्बन्धिनं 'आवर्तं' संसारमिति भिन्नपदत्वाभिप्रायेण श्रुतिर्व्याख्याता। तथा प्रकृतिविकारशरीराद्यभिमानिषु जन्ममृत्यादिविकारवत्सु संसारिषु मुक्तानां व्यापरणं आवृत्तिस्तेषां तद्व्यापारो न विद्यत इति यावदिति सूत्रार्थ उक्तः। एतत्पक्षे चस्त्वर्थ एवार्थः स्मृतिसूचको वाऽवगन्तव्यः॥

(१०) ननु मुक्तदेवानाममुक्तविषयव्यापाराभावे संसारावस्थानमेव न स्यात् प्रवर्तकाभावादित्याशङ्कां परिहर्तुमुक्तार्थे चशब्दसूचितां स्मृतिमुदाहरति—वाराहे चेति॥ न केवलं श्रुतिर्दर्शयति, किन्तु वाराहेऽप्येवं श्रुतिरस्तीति चार्थः। 'स्वाधिकारेण' स्वस्वयोग्यतानुसारेण यद्वा—स्वस्वाधिपत्येन युक्ता वा वर्तन्त इत्यर्थः। अपिस्समुच्चये। 'स्फुटं' प्रत्यक्षम्। न तु रहस्यतयेति भावः। 'बलिं' करं 'हरन्ति' प्रयच्छन्ति 'पूर्ववत्' संसारे यथा। 'सब्रह्मकाः' सविरिञ्चा देवास्त्वित्यन्वयः। 'विशेषतः' आधिक्येन बलिं हरन्तीति च वर्तते। अत एव वाक्यभेदकस्तुशब्दः। चस्समुच्चये। नेति। मुक्तानां 'विकाराधिकारः' संसारप्रवर्तकत्वं तु न विद्यत इत्यर्थः। तर्हि कस्मात्संसारप्रवृत्तिर्न स्यादित्यत आह—अन्य इति। तुरेव। तथा च ये मुक्तेभ्योऽन्ये विष्णुना नियुक्तास्त एव संसाराख्यविकाराधिकृतास्तत्प्रवर्तकाः विज्ञेया इत्यर्थः। इति वाराह इत्यन्वयः॥ ९॥

इति जगद्व्यापाराधिकरणम्॥

१०. अधिकरणम् ॥

(१) सू—ॐ॥ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ॐ ॥ २१ ॥

'एतत्साम गायन्नास्ते' (तै.उ.३-१०.) इत्युच्यते तत्रानन्दादीनां वृद्धिह्रासश्च न विद्यते। किन्त्वेकप्रकारेणैव सर्वदा स्थितिः। 'स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शयेव ब्रह्म दर्शयिधात्मानं तस्यैवं दर्शयतो नापत्तिर्न विपत्तिः' इत्याह जाबालश्रुतौ। यत्र गत्वा न म्रियते यत्र गत्वा न जायते।

---

१०. अधिकरणम् ॥

(१) अत्राधिकरणे ब्रह्मप्राप्तानां मुक्तानां भोगादिना वृद्धिह्रासो निराक्रियते। अस्त्येवमुक्तस्यानन्दवृद्ध्यादीति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्यति—स्थितिमिति। अत्रैवंचेति चशब्दोऽप्यर्थोऽवधारणार्थश्च तत्रानुपङ्गार्थो वा। तत्रेति शेषः। स्थितिमित्यावर्तते। तत्रैकस्य विपरिणामः। तथा च 'एतत्' इति श्रुतिर्यद्यपि तत्र मुक्तावुपासनं 'आह' एवमपि तथापि यतस्सएष इतिश्रुतिः मुक्तस्य स्थितिमेकप्रकारेणैवावस्थानमाह वक्ति न केवलं श्रुतिरेवमाह, किन्तु 'प्रत्यक्षानुमाने' महतां प्रत्यक्षं मुक्तो न वृध्यादिमान् तत्कारणशून्यत्वादित्यनुमानं चैवमेकप्रकारेण स्थितिं दर्शयतो ज्ञापयतोऽतो मुक्तस्यैवमेव वृद्धिह्रासशून्यतयैव स्थितिर्मुक्तता न तु वृद्धिह्रासवत्त्वमिति योजनामभिप्रेत्य सूत्रं व्याचष्टे— एतदिति। 'इति' इत्यादिना। यद्यपीत्यादावुपस्कार्यम्। तथा च यद्यपि 'एतत्सामगायन्' इत्यादिना तत्र मुक्तौ तस्य मुक्तस्य तद्भगवदुपासनं सामगायनाख्यमुच्यते। तथाऽपि न तस्यानन्दबलज्ञानादीनां वृद्धिह्रासौ विद्येते किन्त्वेकप्रकारेणैव सर्वदा स्थितिः। कुतो? यतः 'स एषः' इति जाबालश्रुतौ 'नापत्तिर्न विपत्तिः' इत्याह वेदपुरुषः। प्रथमार्थे सप्तमी वा। एवं श्रुतिसमाख्यारूपे 'यत्र गत्वा' इत्यादिमोक्षधर्मेऽपि न हीयते न वर्धत इत्याह व्यासः। यतश्च 'विद्वत्प्रत्यक्षात्' विदुषां महतां प्रत्यक्षात्, कारणशून्यत्वलिङ्गाच्चैतत्सिद्धमत इति योजना। श्रुत्यर्थस्तु—यः 'एतस्मिन्' मोक्षे 'ब्रह्मणि' विष्णौ 'सम्पन्नः' तं प्राप्तः'स एषः' मुक्तः देहतोऽपि न जायते न म्रियते। न केवलं संसार

न हीयते यत्र गत्वा यत्र गत्वा न वर्धते । इति मोक्षधर्मे । विद्वत्प्रत्यक्षात्कारणाभावलिङ्गाच्च ।

( २ ) ब्रह्मवैवर्ते च—

न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् ।
विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोऽनुमा ॥
हरेरुपासना चात्र सदैव सुखरूपिणी ।

---

इव स्वरूपत इत्यध्याहृतवाक्यगताऽपिशब्दार्थः । न केवलमेतावत्, किन्तु आनन्दादिगुणतोऽपि ' न हीयते ' न ह्रसते न वर्धते, किन्तु सदा एकप्रकारेण स्थित एव भवति स मुक्तः । यद्यपि ब्रह्म दर्शन्नुत्कृष्टमिति पश्यन्नुपासीन एवमात्मानं स्वामीति च दर्शन्नुपासीन आस्ते, तथा चोपासनरूपकारणाद्वृद्ध्यादिप्रसक्तिरस्ति । तथाऽपि एवं ' दर्शयतः' पश्यतः उपासीनस्य तस्य मुक्तस्य 'नापत्तिः ' न वृद्धिः 'न विपत्तिः' न ह्रासश्चास्तीति । यथोक्तं तत्त्वप्रदीपे-आपत्तिरविद्यमानस्यागमः । विपत्तिर्विद्यमानस्यापगमः । इति श्रुतौ तस्यैवं दर्शयत इत्यनुवादेन दर्शयतश्चोपासनस्यापि स्थितिमाह श्रुतिरिति । दर्शयत इत्यस्यावृत्त्या सूत्रयोजना दर्शिता । स्मृतौ न जायते न म्रियते देहत इति शेषः । न हीयते न वर्धते गुणत इति चाध्याहारः । यच्छब्दस्य स मोक्ष इति तत्रत्यतच्छब्देनान्वयः । श्रुतिस्मृत्योर्जननमरणयोर्व्यत्यस्तोक्तिः तयोरनियतक्रमत्वज्ञापनार्था ॥

( २ ) परप्रत्यक्षस्याप्रत्यक्षत्वात्कथं तेनास्माकमर्थसिद्धिरित्यतो विद्वत्प्रत्यक्षानुमाने दर्शयत इत्युक्तार्थे स्मृतिं चाह—ब्रह्मवैवर्ते चेति ॥ चस्समुच्चये । ' मुक्तानां ' मुक्तगुणानां क्वचित्काले विद्वत्प्रत्यक्षसिद्धत्वात् वृद्ध्याद्यभावस्येति शेषः । कारणाभावत इति सार्वविभक्तिकस्तसिः । 'यतो यतो धावति ' इत्यादिवत् । तथा च वृद्ध्यादिकारणाभावरूपानुमानं चास्मिन् विषयेऽस्तीत्यर्थः । यत इति शेषः । यद्वा—कारणाभावतो लिंगादनुमाऽनुमिति रत्रविषये साधकतया प्रवर्तत इत्यर्थः । ननूपासनाख्यकारणसद्भावात्कथं तदभाव इत्यत आह—हरेरिति । कर्मणि षष्ठीयम् । 'अत्र ' मुक्तौ स्थिताः मुक्तैः क्रियमाणेति यावत् । चस्त्वर्थः । सदैव हरेरेव सुखरूपिण्येव यतोऽतो न साधनभूतेत्यन्वयः । ननु कुतः सुखरूपत्वं, तत्साधनत्वमपि किं न स्यादित्यत

न तु साधनभूता सा सिद्धिरेवात्र सा यतः ॥ इति ॥ २१ ॥

( ३ ) सू — ॐ ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ ॐ ॥ २२ ॥

न च भोगविशेषादिविरोधः । 'एतमानन्दमयमात्मा नमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते

---

आह—सिद्धिरेवेति । अत्र सेत्यनुवर्तते । पुनः अत्रसेत्येकं पदम् । तथा च 'अत्र' मुक्तौ सा उपासना यतः 'अत्रसा' भयरहिता सिद्धिरेव मोक्षफलरूपैवातस्सुखरूपैव न तत्साधनभूतेत्यर्थः । मुक्तेरभयत्वं च 'अथ सोऽभयं गतो भवति' (तै.उ.२-७.) इति श्रुतिसिद्धम् । हरेरित्यादिना दर्शयतश्चेत्यनेन यदुपासनस्य वृद्ध्याद्यकारणत्वमुक्तं योजनान्तरे तत्स्पष्टीकृतं भवति ॥

( ३ ) ननु न मुक्तानां वृद्ध्यादौ कारणाभावः, भोगविशेषसद्भावात्, कारणाभावाभ्युपगमे च प्रामाणिकभोगविशेषविरोधापातादित्याशङ्कां परिहरन्सूत्रं पठति—भोगेति ॥ अत्र चशब्दोऽवधारणार्थो न अनुकर्षकश्च । स चावर्तते। मात्रशब्दात्परो विशेषशब्दोऽध्याहृत्य योजनीयः । तथा च न मुक्तस्य वृद्ध्यादिकारणाभावाभ्युपगमे भोगविशेषादिविरोधः । कुतः ? यतो मुक्तभोगविशेषादिस्तदानन्दादिवृद्धिह्रासकारणं न, कुत एतत् ज्ञायते ? 'भोगमात्रविशेषसाम्यलिङ्गात्' भोगमात्रस्य च रमणपानाद्यनेकविशेषयुक्तभोगसामान्यस्य 'एतमानन्दमयम्' इति श्रुतौ रमते उपरमत इति विषयभोगभावाभावोक्त्या सूचिते भोगविशेषे तदभावे च सत्यपि यन्मुक्तस्वरूपानन्दादेर्न ह्रसते न वर्धत इत्युक्तं वृद्ध्यादिशून्यत्वरूपं साम्यमेतस्मादेव लिङ्गाद्भोगमात्रविशेषस्य मौक्तानन्दवृद्ध्याद्यकारणत्वज्ञापकाद्भोगविशेषादेर्वृद्ध्याद्यकारणत्वं विना तस्मिन् सति कार्याभावरूपान्वयव्यभिचारस्यानुपपत्तेरिति भाव इति रूपाल्लिङ्गाच्च भोगविशेषो वृद्ध्यादिकारणम्, न्यायामृतोक्तरीत्या यदि भोगविशेषः आनन्दादिवृद्ध्यादिकारणं तर्हि भोगसामान्य एव साम्यमुच्येत, न तु तद्विशेषेऽपि । अतो भोगमात्र इव तद्विशेषेऽपि साम्योक्तिः कारणमिति वा सूत्रवृत्तिमभिप्रेत्य तद्व्याचष्टे—न चेति । मुक्तस्य वृद्ध्यादिकारणाभावाभ्युपगम इत्यादावुपस्कार्यम् । भोगविशेषो भोगातिशयः । आदिपदेन भोगाभाव उच्यते । तस्य विरोधोऽनुपपत्तिः । विरोध इत्यन्तेन चशब्दानुकृष्टनञर्थे

यथाकाममुपरमते ' ( तै.उ. २-८. ) इति भोगमात्रसा
म्यलिङ्गात् ।

( ४ ) अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निषिध्यते ॥ इति कौर्मे ॥

---

उक्तो भवति । कुतो नेत्यतस्तत्र नेत्यस्यावृत्त्या यतो न भोगविशेषा दिस्तद्वृद्ध्यादौ कारणमिति सूचितश्चशब्दसमुच्चितो हेतुरन्वेतव्यः । भोगविशेषादेर्वृद्ध्याद्यकारणत्वं कुतो ज्ञायत इत्यतस्तत्र ' एतमानन्द मयम् ' इत्यारभ्य लिङ्गादित्यन्तो हेतुर्योज्यः । सायुज्यमुक्तः ' आनन्द मयं ' आनन्दपूर्णमेतं परमात्मानं प्रविश्य पुनर्देहतो न जायते न म्रिय ते गुणतो न ह्रसते न वर्धते ' यथाकामं ' यथेच्छं ' चरति ' भक्षयति पिबति चेत्यर्थः । रमते उपरमत इत्याभ्यां भोगविशेषतदभावावुच्ये ते । इति श्रुतादिति शेषः । भोगमात्रेति हेतुवाक्यार्थः पूर्ववत् ॥

( ४ ) ननु यदि भोगो न वृद्धिहेतुस्तर्हि व्यर्थोऽसौ किमिति मुक्तैः क्रियत इत्यतः क्रीडयेति परिहारे स्थिते मुक्तविरिञ्चेतरमुक्तानां चश ब्दसूचितं विशेषं चाह—अवृद्धीति ॥ वृद्धिह्रासरहितज्ञानादिधर्मवत्त्व मित्यर्थः । ' मुक्तानां ' विरिञ्चेतरमुक्तानाम् । यथोक्तमनुव्याख्याने—

मुक्तानां तु तदन्येषां समुद्रतरलोपमा ॥ इति ॥

व्याख्यातं चैतत्सुधायाम्—

ब्रह्मण इति विशिष्याभिधाने को हेतुरित्यत आह—मुक्तानां त्वि ति । विशेषबलेन वृद्धिह्रासवतीत्यर्थः । यथोक्तं—'अवृद्धिह्रासरूपत्वम्' इत्यादीति । अत्र मतिविवक्षया स्त्रीलिङ्गनिर्देशः । आदिशब्देन प्रवाह तो वचनं गृह्यते । भोगादिना तर्हि किञ्चिद्वृद्धिविरोध इत्यत आह— प्रायिकमिति । बाहुल्येन सार्वकालिकमित्यर्थः । प्रायिकमित्युक्तेः कृत्य माह—कादाचित्केति । विशेषो वृद्ध्यादिः । ' तेषां ' विरिञ्चेतरमुक्ता नां ' नैव निषिध्यते' किन्त्वङ्गीक्रियत इत्यर्थः । अवृद्धिह्रासरूपत्वहान्या पादकत्वाभावादिति भावः । केचित्तु—मुक्तानामित्यस्य यथाश्रुत एवा र्थो न विरिञ्चेतरेषामिति । कादाचित्कविशेष इत्यादेस्तु मुक्तौ तत्त त्कालीनभोगबाहुल्येन आनन्दे कश्चिद्विशेषो नैव निषिध्यते इत्यर्थः । न चाणुभाष्यविरोधः, तत्र तदन्येषामित्युक्तेरिति वाच्यम् । तत्र चतुर्मु खस्य सर्वज्ञत्वेन तज्ज्ञाने विशेषाभावस्योक्तत्वात् । यदा दक्षिणाना

(५) प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् ।
न प्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ॥
कुत एव तु दुःखं स्यात्सुखमेव सदोदितम् ।
भोगानां तु विशेषेषु वैचित्र्यं लभ्यते क्वचित् ॥

मपि सुखविशेष उक्तस्तदा सुतरां चतुर्मुखस्य सुखविशेष इत्याहुः। तत्र 'अवृद्धि' इत्यादिवचनस्य धर्मसामान्यवाचिरूपशब्दघटितत्वेन आनन्दवज्ज्ञानेऽपि कादाचित्कविशेषप्रतिपादकत्वात् । द्वितीये कुत्र चिदित्युक्तया ज्ञानस्यापि लब्धत्वात् । अन्यथा सुधायां सम्मतित्वे नोदाहरणविरोधात् । कौर्मे विशेष उक्त इति शेषः ॥

(५) तर्हि 'न हीयते यत्र गत्वा' (मोक्षधर्म.) इत्यादेः का गति रित्यतो यदुक्तं मुक्तानां प्रायिकं अवृद्धिह्रासरूपत्वमिति तदेव स्मृत्य न्तरेण विवृणोति—प्रवाहत इति ॥ यथा कावेर्यादिप्रवाहस्य कदा चिद्वृद्धिः कदाचिद्ध्रासः, एवं मुक्तानां 'कुत्रचित्' स्वगुणादौ 'प्रवा हतः' सामग्र्येण कदाचिद्वृद्धिः ह्रासो वा नास्तीत्यर्थः । यद्वा— प्रायस्तेषां गुणेषु वृद्धिर्नास्त्येव, भोगादिना तु केषां चित्किंचित् वृद्धि र्भवति, सा च प्रवाहतोऽनन्तकालीनेति न दोषः । अत एव 'न ह्यस्य कर्म क्षीयते' (बृ.३-४-१५.) इत्याह । ह्रासस्तु मुक्तानां 'कुत्रचित्' गुणे 'क्वचित्' कालेऽपि सर्वथा नास्त्येव । एवं किञ्चिदप्यप्रियं न विद्यत एव, दुःखं तु कुतः स्यात् । किन्तु 'सदोदितं' व्यक्तं सुखमेव स्यादित्यर्थः । 'अस्माद्ध्येवात्मनः' (बृ.३-४-१५.) इति श्रुतिविरोधमाशङ्क्याह—भोगानां त्विति । सुखे इति विपरिणतम स्ति । तथा च भोगानां 'विशेषेषु' वैचित्र्येषु सत्सु 'सुखे' आनन्दे 'किञ्चिद्वैचित्र्यं' विशेषो 'लभ्यते' सिद्ध्यतीत्यर्थः। तथा च यथैकस्यै व सुवर्णस्याङ्गुलीयकात्मकत्वं कुण्डलात्मकत्वं च तथा चूतफलभक्ष णादिप्रयुक्तो य आनन्दविशेषस्तदात्मकत्वरूपवैचित्र्यमेक एव व्य क्तानन्दो लभ्यते इति भावः । अन्ये तु 'भोगानां तु विशेषेषु वैचि त्र्यं लभ्यते क्वचित्' इत्यस्य स्वेनानुभूयमानेषु विषयकृतानेकत्वयु क्तेषु मध्ये एकस्मिन् आनन्दे अत्यन्तमासक्तचित्तस्य शक्त्यात्मना प्रागपि स्थिते कस्मिंश्चिदानन्दे वनितादिभोगविशेषैः व्यक्त्याख्यं वैचित्र्यं लभ्यत इत्यर्थमाहुः । न चात्रानन्दवैचित्र्यं प्रति भोगवैचि

इति नारायणतन्त्रे ॥ २२ ॥

—*—

११. अधिकरणम् ॥

( १ ) सू—ॐ ॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ ॐ ॥ २३ ॥

अथस्य कारणत्वोक्तेः प्रागुक्तो वृद्ध्यादौ कारणाभावहेतुरसिद्ध इति वाच्यम् । बहुतरवृद्ध्यादिकारण शून्यत्वादिति हेतोर्विशेषणात् । इति नारायणतन्त्रे विवक्षितार्थो विवृत इति शेषः ॥ १० ॥

॥ इति स्थित्यधिकरणम् ॥

११. अधिकरणम् ॥

( १ ) अत्राधिकरणे ब्रह्म प्राप्यभोगान् भुञ्जानस्य मुक्तस्यापुनरावृत्तिस्समर्थ्यते । अस्ति मुक्तस्य पुनरावृत्तिः । स्वर्गादिगतानां पुनरावृत्तिदर्शनात् । न च स्वर्गादिगतानां युगमन्वन्तरादिमात्रवासित्वाद्युक्ता पुनरावृत्तिः, न तु मुक्तस्य, तस्य समस्तकालवासित्वादिति वाच्यम् । समस्तस्यापि कालस्य कदाचित्समाप्तिसम्भवात् । न च कालस्यानन्तत्वात्समाप्त्ययोगः । भारतयुद्धे दुर्योधनपातसमये महोत्पातसूचनाय त्रयोदश्या एव पञ्चदशीत्वदर्शनात् । तत्र तिथित्रयस्य युगपत्समाप्तिवदनन्तत्वेऽपि कालस्य समस्तस्यापि युगपत्समाप्तिसम्भवात् । यथाऽऽह भारते व्यासः—

चतुर्दशीं पञ्चदशीं भूतपूर्वां तु षोडशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ॥ इति ॥

अस्यार्थः–तिथिक्षयपक्षे 'पञ्चदशीं' पञ्चदशदिनत्वयोग्यां अमावास्यां 'चतुर्दशीं' चतुर्दशदिनसम्बन्धिनीं भूतपूर्वां जानामि प्रतिपदमारभ्य क्षये सति । वृद्धौ च 'षोडशीं' षोडशदिनजातामपि भूतपूर्वामिति जानामि । 'इमां' अवस्थां नाभिजानामि । काऽसाववस्थेत्यत आह—अमावास्यां त्रयोदशीमिति । अमावास्यां 'त्रयोदशीं' त्रयोदशदिने जातां नाभिजानामीति । अतो मुक्तौ पुनरावृत्तिसद्भावादपुरुषार्थत्वं मुक्तेरिति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—अनावृत्तिरिति ॥ अत्र मुक्तस्यानावृत्तिरेव, न तु भारतयुद्ध इव युगपत्सर्वकालस्यापि समाप्त्या स्वर्गवन्मुक्तस्थानात् 'पुनरावृत्तिः' संसारं प्रत्यागतिरिति प्रतिज्ञावाक्यार्थस्य स्फुटत्वात् शब्दादिति हेतुमा

'न च पुनरावर्तते न च पुनरावर्तते' (छा. ८-१५-१.)

र्थं व्याचष्टे—न चेति। छन्दोगश्रुतौ—'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' (छा. ८-१५-१.) इति पूर्ववाक्ये प्रकृतो मुक्तः ब्रह्मलोकं हित्वा पुनः 'नावर्तते' न संसृतिं प्राप्नोतीत्यर्थः। चशब्द एवार्थः। शब्दादित्येतत्प्रकारान्तरेण व्याचष्टे—सर्वानिति। ऐतरेये द्वितीयारण्यके 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतस्समभवत्समभवत्' (ऐ.आ.२-५-१-१५.) इति श्रूयते। अस्यायमर्थः—'सः' उपासक एवं विद्वान् 'अस्माच्छरीरभेदात्' शरीरसम्बन्धात् 'ऊर्ध्वमुत्क्रम्य' ब्रह्मनाड्योत्क्रम्य 'अमुष्मिन् स्वर्गे लोके' स्वरानन्दो विष्णुरत्र गत इति व्युत्पत्त्या विष्णुलोके 'अमृतो' मुक्तस्सन् 'सर्वान् कामान्' अपेक्षित सर्ववस्तूनि 'आप्त्वा' स्वीकृत्य 'समभवत्' तानेव सर्वान् कामाननुभवतीति। आदिपदेन 'यो वा एतामुपनिषदं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति' (केन.४-९.) इति तत्त्वप्रदीपोदाहृत तलवकारश्रुतिर्गृह्यते। 'स्वर्गे' स्वरूपभूतरमणज्ञानवति 'लोके' प्रकाशरूपे 'ज्येये' श्रेष्ठे विष्णावित्यर्थः। अनेन शब्दादित्येतदनावृत्तिबोधकशब्दात्, तथा सर्वकामावाप्तिप्रतिपादकशब्दात्, तथा सर्वपापक्षयपूर्वकमनन्तलोकप्राप्तिबोधकशब्दादित्यनेकधा व्याख्यातं भवति। आदिपदोपात्तश्रुत्यपेक्षया श्रुतिभ्य इति बहुवचनप्रयोगः। समस्तशास्त्रार्थस्यैवमेवेत्यवधारणार्था समस्तसूत्रस्य द्विरुक्तिः। पूर्वपक्ष्युक्ता समस्तकालसमाप्तिस्तु कालसमाप्तेः क्वचित्काल एव वक्तव्यत्वेन व्याहतत्वादुपेक्षणीया॥

अत्रायमाचार्योक्तोऽध्यायार्थसङ्ग्रहः—येऽप्रतीकालम्बनाः देवाः भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः चेतनोत्क्रमणात्प्रागेव देहनाशादर्चिरादिलोकानां च नष्टत्वादुत्क्रमणेनार्चिरादिमार्गेण च रहितास्तत्त्वेतरदेवाःअण्डलयकाले तत्त्वदेवाः अण्डलयानन्तरं यथायोग्यं स्वस्वोत्तमप्रवेशेन परित्यक्तदेहाः स्वोचितेन पथा गरुडमार्गेण शेषमार्गेण च पुन्नामकहिरण्यगर्भेण सह वैकुण्ठवासिनं भगवन्तं प्राप्तास्तेन सह विरजास्नानेन भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति। ये तु ऋषयः देवानुगाः पितरः प्रतीकालम्बनाः भगवदपरोक्षानन्तरं भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टक

'सर्वान् कामानाप्त्वाऽमृतः समभवत्समभवत्'
(ऐ. आ. २-५-१-१५.) इत्यादिश्रुतिभ्यः॥ २३॥

(२) ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे॥

र्माणः उत्क्रमणेन त्यक्तदेहाः अर्चिरादिपथा यथायोग्यस्थाने स्थिताः अण्डलयकाले स्वोत्तमान् प्रविष्टाः वैकुण्ठवासिनं हरिं प्राप्ताः हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति। ये तु मनुष्योत्तमाः निष्कामुकभगवदर्थश्रुत्यादिविहितकार्यानुष्ठानेन शुद्धान्तःकरणाः प्रक्षीणरागादिदोषाः सञ्जातभगवद्भक्तिमन्तः श्रवणमनननिदिध्यासनाभ्यासवन्तः परमभागवताः स्वयोग्यभगवदपरोक्षानन्तरं अत्यन्तनिवृत्तानिष्टसञ्चितकर्माणः आगामिदुष्कर्मलेपविधुराः यावत्प्रारब्धं भागवतधर्मनिष्ठाः उत्तरायणमार्गेण त्यक्तदेहाः भगवल्लोकगमनार्थमर्चिरादिपथा महरादिलोके समासीनाः लयकाले स्वोत्तमप्रवेशेनोर्ध्वं गताः ब्रह्माण्डलयानन्तरं लिङ्गशरीरभङ्गकाले उपस्थिते सुषुम्नामार्गेण त्यक्तान्यदेहाः हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीराः प्रध्वस्तस्वगुणाच्छादिकाः विध्वस्तप्रकृतयः अत्यन्तनिवृत्तानिष्टा भवन्ति। ये त्वत्यल्पाः मानुषाः स्थावरादयश्च एकगुणोपासकाः कार्यब्रह्मकालान्त्यभागे स्वस्वयोग्यावतारापरोक्षिणः उत्क्रमणार्चिरादिमार्गरहिताः प्रभुक्तात्यल्पप्रारब्धकर्माणः अण्डलयकाले स्वोत्तमप्रवेशेनोर्ध्वं गताः ब्रह्मणा सह त्यक्तलिङ्गशरीराः विध्वस्तप्रकृतयोऽत्यन्तनिवृत्तानिष्टाः भवन्ति। ते सर्वेऽपि महाप्रलये भगवदुदरे स्थित्वा पुनस्सृष्टौ भगवल्लोकाविर्भावे श्वेतद्वीपगतभगवद्दर्शनेनापगतभगवदिच्छावरकाः सम्यगाविर्भूतज्ञानानन्दादिगुणाः वासुदेवपरिक्लृप्तस्वस्वयोग्यस्थानेषु स्थिताः भगवन्तमुपासीनाः सयुजः भगवद्देहे बहिश्च अन्ये बहिरेव स्वरूपदेहेन लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान् दिव्यान् भोगान् तारतम्येन भुञ्जानाः न कदाचित्पुनरावर्तन्त इति॥

(२) अथायं भाष्यकारो यं गुणगणार्णवतया आदौ प्रतिपादितवान्। यच्छिष्यतया चैतादृशीमतिविशदां संविदं लब्धवान्। यस्मिन् आत्मनो निरुपाधिकप्रीतिस्तमेव देवतात्वेन गुरुत्वेन चान्तेऽपि नमति--ज्ञानेति॥ गुणैरित्यस्य विवरणं—सर्वैरिति। अनेन नम्यताप्र

(३) यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शितमित्थमेव निहितं देवस्य भर्गो महत्।

योजकं विशिष्टत्वमुक्तं भवति। गुरवे इति निमित्तान्तरोक्तिः। 'सर्वथा' सर्वस्मात्सर्वप्रकारेण 'अतिप्रियो' निरुपाधिकप्रियः। अनेनेष्टत्वम्, ब्रह्मशब्दसमानार्थक विष्णुशब्दप्रयोगेन ब्रह्मविचारात्मकशास्त्राधिकृतत्वम्, सूत्रसङ्ख्या चोक्ता भवति॥

(३) अथ स्वभाषितभाष्यस्याभिमूलत्वसमर्थनाय श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्नाह—यस्येति॥ यद्वा—मुमुक्षोर्भगवज्ज्ञानस्येव स्वज्ञानस्याप्यपेक्षितत्वात्स्वस्वरूपं ख्यापयन् स्वकृतिं भगवति समर्पयति—यस्येति। 'यस्य' वायोः वायुनामकस्य देवस्य 'बळित्था' इत्यादिवेदवचनेऽलं 'दिव्यानि' क्रीडादिगुणयुक्तानि अत्यन्तप्रकाशवन्ति स्तुत्यानि देवसेव्यानि च त्रीणि रूपाणि उदितानि, तस्य यत्तृतीयं रूपं तेनेदं श्रीमद्ब्रह्मसूत्रभाष्यं 'हरौ' हरिविषयतया कृतमित्यन्वयः। 'हि' प्रसिद्धौ। तत्त्वप्रदीपे तु 'मध्वो यत्तु तृतीयमेतदमुना भाष्यं कृतं केशवे' इति पठित्वा 'यस्य त्रीणि' इति श्लोकानन्तरं 'ज्ञानानन्दादिभिः' इति श्लोकोऽवतारितः। कीदृशं चास्य मूलं, किं च स्वरूपं, कानि च त्रीणि रूपाणि कीदृशानि च, तत्राह—अलमिति। तस्य वायोः 'तत्' मूलरूपं 'बट्' बलात्मकं 'दर्शितं' ज्ञानरूपं ज्ञानात्मकं ततमिति वा। अनेन केन निमित्तेन तन्मूलं वायुनामकमिति प्रश्नस्याप्युत्तरमदायि। वशब्दस्य बलवाचित्वात् अयतेर्ज्ञानार्थत्वात्। तन्मूलं 'भर्गः' सकारान्तोऽयं शब्दः। जगद्भरणगमनगुणं 'महत्' महनीयं च। मूलरूपादवताररूपस्येन्द्रार्जुनादेरिव गुणवैषम्यं न मन्तव्यमित्याह—इत्थमेवेति। यदुक्तगुणं तन्मूलरूपं यद्गुणकं तद्गुणकमेवावतारायापि भगवता 'निहितं' प्रेरितमवतीर्णं चेत्यर्थः। त्रयाणामपि रूपाणां सव्यापारं नामान्याह—रामेत्यादिना। 'प्रथमकं' प्रथमं वपुः हनुमदाख्यं 'रामवचोनयं' रामवचांसि सीतां प्रति नीतवत्। रामविषयवचांसि मूलरामायणरूपाणि शिष्येषु नीतवद्वा। रामस्य वचसि यो नयो न्यायः आज्ञारूपः तद्युक्तं वा। तथात्वे बहुव्रीहिः। द्वितीयं वपुः भीमनामकं कुरुपृतनाक्षयकारित्वात्पृक्षः। यत्तु तृतीयकं 'तन्मध्वः' मध्वनामकमानन्दरूपस्य हरेः प्रतिपादकशास्त्रकृत्त्वात्। आनन्दसन्त्वायिसुशास्त्रनिर्मातृत्वाद्वा।

वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि॥
नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे॥

—:*:—

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्र
भाष्ये चतुर्थाध्यायस्य चतुर्थः पादः.
॥ चतुर्थाध्यायस्समाप्तः ॥

—*—

॥ ॐ ॥

॥ श्रीमद्ब्रह्मसूत्रभाष्यं ॥

॥ सम्पूर्णम् ॥

यथोक्तम्—

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥ इति ॥

अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सकलैस्सुजनैरादरेणाङ्गीकार्यमिति भावः ॥ ११ ॥

॥ इति अनावृत्त्यधिकरणम् ॥

—:✿:—

भाष्यान्ते 'नित्यानन्द' इति श्लोकान्तरं क्वचित्पठ्यते। तस्येत्थं गमनिका—भक्त्यतिशयात्पौनःपुन्येन प्रीतिप्रार्थनपूर्वकं विष्णुं नमति—नित्येति। नित्यानन्दो देशकालगुणैः 'पूर्णः' अपरिच्छिन्नो हरिः 'नित्यदा' सर्वदा मम प्रीयताम्। तस्मै विष्णवे मम नमश्चास्त्वित्यन्वयः॥

—*:*:*—

कुशाग्रबोधैर्जयतीर्थपादैः कृतामहं व्याकृषि सूत्रभाष्यम् ।
टीकां तथाऽऽर्योरुवचोऽनुसृत्य ततोऽनुघस्कुर्म भवेन्ममागः ॥
मन्मानसाम्बुजस्थेन हरिणा कृतयाऽञ्जसा ।
भाष्यदीपिकया कृष्णः प्रीयतां कमलाकरः ॥

—*-:*:-*—

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः.

॥ चतुर्थाध्यायस्समाप्तः ॥

——:*:——

॥ ॐ ॥

॥ श्रीमद्ब्रह्मसूत्रभाष्यदीपिका ॥

॥ सम्पूर्णा ॥

## ॥ प्रथमः परिशिष्टः ॥

——:*:——

## ॥ ब्रह्मसूत्राणां भगवता मध्वाचार्येण कृतात् भाष्यात् ॥
## ॥ प्रतीयमानः सिद्धान्तः ॥

——:*:——

( १ ) प्र ॥ जगत्कारणं किम् ?

उ ॥ विष्णुः, स एव परं ब्रह्म ॥ १-१-२.

( २ ) प्र ॥ विष्णुरिति कथं ज्ञातव्यम् ?

उ ॥ शास्त्रात् ॥ १-१-३.

( ३ ) प्र ॥ कानि शास्त्राणि प्रमाणानि ?

उ ॥ सर्वे वेदाः भारतं पञ्चरात्रं मूलरामायणं एतानि शास्त्राणि, तेषां अनुकूलानि इतरशास्त्राणि च प्रमाणानि, नेतराणि ॥ १-१-३.

( ४ ) प्र ॥ अन्यशास्त्राणि केन रचितानि, कस्मात् तान्यप्रमाणानि ?

उ ॥ अयोग्यजीवानां मोहनार्थं विष्णोराज्ञया तानि शास्त्राणि रुद्रेण कृतानि कारितानि च ॥ १-१-१.

( ५ ) प्र ॥ वेदे अनेकपरस्परविरोधाः सन्ति, एकत्र आकाशः जगत्कारणमिति उक्तं, अन्यत्र परमात्मेति । एकत्र पृथिवीस्वर्गाद्याधारः रुद्र इति, अन्यत्र विष्णुरिति उक्तम् । इत्यादिपरस्परविरोधाः बहवः सन्ति, एतादृशवेदः कथं प्रमाणमिति अङ्गीकर्तव्यः ?

उ ॥ यद्यपि वेदे आपाततः परस्परं विरोधाः प्रतीयन्ते, तथाऽपि पूर्वापरवाक्यपर्यालोचनया उपक्रमोपसंहारादिभिः विमर्शे कृते सति वेदे एकवाक्यता सिध्यति । युष्माभिः उक्ताः आकाशरुद्रादिशब्दाः विष्णुपराः नेतरपराः, मुख्यवृत्त्या सर्वे शब्दाः परमात्मवाचकाः, य

त्र मुख्यार्थग्रहणे बाधकं नास्ति तत्र मुख्यार्थ एव ग्राह्यः यत्र मुख्यार्थग्रहणे बाधकं तत्र अमुख्यार्थग्रहणं युक्तम् ॥ १-१-१०, १-१-४, १-३-३, १-४-२, १-१-६, २-१-१३.

( ६ ) प्र ॥ विष्णुः जगत्कारणमिति भवद्भिः उक्तं, सृष्टेः पूर्वं जीवाः सन्ति वा न वा ?

उ ॥ सृष्टेः पूर्वं जीवाः सन्त्येव, यथा परमात्मा अनादिः तथा जीवा अपि अनादयः, जीवानां बाह्यदेहसम्बन्धः परमात्मना भवति, सैव जीवसृष्टिः ॥ २-३-१८, २-३-१९, २-३-३०.

( ७ ) प्र ॥ स्वप्नादिषु दृष्टद्रव्याण्यपि परमात्मना सृष्टानि वा, मायाकल्पितानि वा ?

उ ॥ तान्यपि परमात्मना सृष्टानि न मायाकल्पितानि तेषां सृष्टिः विनाशश्च परमात्मना भवति ॥ ३-२-१, ३-२-५.

( ८ ) प्र ॥ तथा सति स्वप्नप्रतीताः यथार्था वा ?

उ ॥ स्वप्नदृष्टपदार्थाः सत्या एव, तथाऽपि जाग्रति दृष्टपदार्थ एव अयमिति यत् ज्ञानं तत् भ्रमात्मकम् ॥ ३-२-१, ३-२-३.

( ९ ) प्र ॥ सृष्ट्या परमात्मनः किं प्रयोजनम् ?

उ ॥ प्रयोजनं नास्ति, लोके आनन्दोद्रेकवतः पुरुषस्य नृत्तगानादिवत् प्रयोजनानपेक्षयैव सृष्टिः ॥ २ - १ - ३३, २-१-३४.

( १० ) प्र ॥ जीवाः परमात्मनः अत्यन्तभिन्ना वा ?

उ ॥ जीवाः परमात्मनः अत्यन्तभिन्नाः ॥ २-३-२८, २-३-४३, ३-२-१८, २-१-१४.

( ११ ) प्र ॥ जीवः अणुर्वा व्यापी वा ?

उ ॥ जीवः अणुरेव । सः हृदये वर्तते । तथाऽपि यथा चन्द

नं एकस्थले वर्तमानमपि अन्यत्र अंशेन व्यापकं भवति, यथा दीपः एकत्र विद्यमानोऽपि प्रकाशगुणेन व्यापको भवति तथा जीवः अंशेन वा गुणेन वा देहे सर्वत्र व्यापी भवति ॥ २-३-२०, २-३-२४, २-३-२५, २-३-२६.

(१२) प्र ॥ जीवस्य स्वरूपं कीदृशम् ?

उ ॥ त्रिविधं, मुक्तियोग्यानां ज्ञानानन्दस्वरूपं, तमोयोग्यानां अज्ञानदुःखस्वरूपं, नित्यसंसारिणां मिश्रस्वरूपम्॥ २-३-३२.

(१३) प्र ॥ एवं सति त्रिविधानां विपरीतानुभवः कथं संभवति ?

उ ॥ स्वरूपं अविद्यया आवृतं, अतः अन्यथाऽनुभवः औपाधिकः ॥ २-३-३२.

(१४) प्र ॥ जीवाः भगवदधीना वा स्वतन्त्रा वा ?

उ ॥ परमात्माधीना एव, तथाऽपि तेषां किञ्चित् भगवद्दत्त स्वातन्त्र्यं अस्ति, तथा न चेत् शास्त्रस्य निष्प्रयोजनत्वं स्यात् खलु ॥ २-३-३३, २-३-४१, २-३-४२.

(१५) प्र ॥ जीवानां भूतसम्बन्धः देहान्ते निवर्तते वा न वा ?

उ ॥ न निवर्तते, जीवाः कर्मानुसारेण भूयोभूयः जन्मान्तरं प्राप्नुवन्ति ॥ ३-१-१, ३-१-८.

(१६) प्र ॥ जीवानां जन्मान्तरादिक्लेशात् कथं मुक्तिः ?

उ ॥ परमात्मानुग्रहजन्यतदपरोक्षेण मोक्षः सम्भवति ॥ ३-२-२३, ३-२-२७, ३-३-४८, ३-३-४९, ३-३-५४.

(१७) प्र ॥ परमात्मानुग्रहः कथं सम्भवति ?

उ ॥ श्रवणमननादिभिः हरिगुरुभक्तिशमदमादिभिः सम्भवति ॥

(१८) प्र ॥ कर्मणः प्रयोजनं नास्ति किम् ?

उ ॥ अस्ति, कर्म द्विविधं काम्यं अकाम्यं इति, काम्यकर्म

ऐहिकफलं ददाति, अकाम्यकर्म अपरोक्षात् पूर्वभावि चेत् ज्ञानसाधनं भवति, उत्तरभावि चेत् मोक्षे अतिशयं ददाति ॥ ३-१-७.

(१९) प्र ॥ स्वर्गादिफलं केन भवति ?

उ ॥ देवाद्यंशानां ज्ञानेनैव सर्वफलं भवति, कर्मणा अतिशयः, इतरेषां तु मोक्षेतरदृष्टादृष्टफलं कर्मणा भवति, ज्ञानेन अतिशयः ॥ ३-४-१, ३-४-९.

(२०) प्र ॥ वेदाधिकारिणः के ?

उ ॥ त्रिवर्णानां मध्ये ये विष्णुभक्ताः गुरुभक्ताः शमदमादिमन्तः त एव वेदाधिकारिणः ॥ ३-४-१२.

(२१) प्र ॥ शूद्राणां वेदविद्याऽधिकारः नास्ति वा ?

उ ॥ पूर्वजन्मनि प्राप्तापरोक्षज्ञानव्यतिरिक्तशूद्राणां वेदविद्याऽधिकारो नास्ति ॥ १-३-३८.

(२२) प्र ॥ सर्वे वेदाधिकारिणः अपरोक्षयोग्याः किम् ?

उ ॥ न, केचित् जीवा एव स्वभावेन योग्याः तेषां एव भगवदपरोक्षं भवति, केचित् जीवाः नित्यसंसारिणः केचित् जीवाः स्वभावेन तमोयोग्याः । तेषां अपरोक्षं कदाऽपि न भवति । सर्वे जीवाः योग्यताऽनुसारेण कर्म कुर्वन्ति, सम्यग्ज्ञानं वा विपरीतज्ञानं वा प्राप्नुवन्ति, तदनुसारेण फलं अनुभवन्ति । श्रवणमननादिषु यत्नवतामपि अयोग्यानां जीवानां ज्ञानं कदाऽपि न सम्भवति, तेषां नित्यनरकस्यैव प्राप्तिः, नित्यसंसारिणां नित्यं संसार एव स्थितिः ॥ ३-४-३४, ३-४-३५, ३-४-३६, ३-४-३७, ३-४-३८, ३-४-४०.

(२३) प्र ॥ वेदाध्ययनाधिकाराभावे केवलशूद्रादीनां ज्ञानं कथं सम्भवति ?

उ ॥ भारतादिपुराणश्रवणादिषु तेषां अधिकारः, तच्छ्रवणादिना अपरोक्षज्ञानं सम्भवति, अतः मोक्षः ॥ १-१-१.

( २४ ) प्र ॥ स्त्रीणां वेदाधिकारः अस्ति वा न वा ? नास्ति चेत् तासां ज्ञानं कथम् ?

उ ॥ देवऋष्यादिस्त्रीणां वेदाधिकारो वर्तते, इतरासां वेदाधिकारो नास्ति, तासां शूद्रवत् पुराणश्रवणादिना ज्ञानं. अतः मोक्षः ॥ १-१-१.

( २५ ) प्र ॥ भगवदपरोक्षात् मोक्ष इति भवद्भिः उक्तम, रामकृष्णाद्यवतारकाले अनेकजनानां भगवदपरोक्षं आसीत्खलु, तेषां सर्वेषां मोक्षः अस्ति किम् ?

उ ॥ तेषां उत्तमलोकप्राप्तिरेव, न मोक्षः, हृदयस्थबिम्बदर्शनादेव मुक्तिर्भवति ॥ ३-३-५३.

( २६ ) प्र ॥ भगवदपरोक्षात्परं ज्ञानिनां यथेच्छानुचरणं युक्तं वा ?

उ ॥ भगवदपरोक्षानन्तरं दुष्कर्मणा मोक्षहानिः नास्ति, किन्तु आनन्दह्रासः भवति, सत्कर्मानुष्ठानेन मोक्षे फलातिशयो भवति, तस्मात् स्वेच्छया सत्कर्मानुष्ठानमेव कर्तव्यम् ॥ ३-४-१९, ३-४-३३.

( २७ ) प्र ॥ सत्कर्मानुष्ठानं कर्तव्यं इति भवद्भिः उक्तं तत्कर्म इच्छानुसारेण कर्तव्यं वा विध्यनुसारेण वा ?

उ ॥ मनुष्याः विधिप्रकारेणैव कर्म कुर्युः, देवाः अनुष्ठेयकर्ममध्ये यत्कर्मणि इच्छा, तत्कर्म कुर्युः, विरिञ्चस्तु इच्छानुसारेण कर्म कुर्यात् तस्य इच्छैव विधिः ॥ ३-४-२२, ३-४-२३, ३-४-२४.

( २८ ) प्र ॥ मोक्षः कीदृशः ?

उ ॥ मूलबन्धनिवृत्तिरेव मोक्षः ॥ ३-१-१.

( २९ ) प्र ॥ मोक्षे फलतारतम्यं अस्ति वा ?

उ ॥ अस्ति, मोक्षे जीवानां योग्यताऽनुसारेण आनन्दः ॥ ३-३-३३.

(३०) प्र ॥ अपरोक्षानन्तरं तत्क्षणमेव विष्णुलोकप्राप्तिः भवति वा ?

उ ॥ प्रारब्धकर्मप्रतिबन्धाभावे शरीरपातानन्तरं मुक्तिः, तद्भावे तत्फलभोगानन्तरमेव ॥ ३-४-५१.

(३१) प्र ॥ प्रारब्धकर्मसद्भावे अपरोक्षः कथं भवति ?

उ ॥ अपरोक्षप्रतिबन्धकप्रारब्धकर्मसद्भावे अपरोक्षः न भवति, प्रतिबन्धककर्माभावे अपरोक्षो भवति ॥ ३-४-५०.

(३२) प्र ॥ अपरोक्षानन्तरं पूर्वकृतं अप्रारब्धकाम्यकर्म कुत्र गच्छति ?

उ ॥ तत् पुण्यकर्म सुहृदं प्राप्नोति, पापकर्म द्वेषिणं प्राप्नोति ॥ ४-१-१७.

(३३) प्र ॥ जीवाः केन मार्गेण विष्णुलोकं गच्छन्ति ?

उ ॥ वक्ष्यमाणदेवतादिव्यतिरिक्तज्ञानिनः देहान्ते अर्चिरादिमार्गेण आतिवाहिकवायुलोकं प्राप्य तस्मात् तटिल्लोकं ततः वायुलोकं प्राप्नुवन्ति, ततः विरिञ्चेन सह विष्णुलोकं गच्छन्ति । देवताः शतऋषयः शतगन्धर्वाः शतं राजानः स्वोत्तमदेहे निलीय परम्परया उत्तमोत्तमद्वारेण परमात्मानं प्राप्नुवन्ति ॥ ४-३-१, ४-३-५, ४-३-१०, ४-३-१५, ४-२-१, ४-२-२, ४-२-३, ४-२-४, ४-२-६, ४-२-१५.

(३४) प्र ॥ मुक्ताः विष्णुलोकं प्रविश्य किं कुर्वन्ति ?

उ ॥ विष्णुलोकं प्रविश्य तत्र वा विष्णोरनुज्ञया तदितरलोकेषु वा योग्यताऽनुसारेण सालोक्यं वा सारूप्यं वा सामीप्यं वा सायुज्यं वा प्राप्तास्सन्तः, स्वसंकल्पानुसारेण सृष्ट्यादिव्यतिरिक्तसर्वकामान् चिद्रूपेण वा शुद्धसत्त्वरूपेण वा देहेन भुञ्जते, सायुज्यभाजस्तु परब्रह्मदेहेनापि स्वयोग्यभोगान् भुञ्जते, तेषां सर्वेषां पुनरावृत्तिर्नास्ति ॥ ४-४-५, ४-४-६, ४-४-८, ४-४-११, ४-४-१२, ४-४-१४, ४-४-१७, ४-४-१९, ४-४-२३.

(३५) प्र ॥ कर्मिणां देहान्ते का गतिः ?

उ ॥ पुण्यकर्मिणः धूमादिमार्गेण चन्द्रलोकं प्राप्य तत्र भोगान् भुक्त्वा शेषेण कर्मणा इमं लोकं आयान्ति। पापकर्मिणः तिर्यग्जन्म वा नरकं वा प्राप्नुवन्ति, तत्र दुःखं अनुभूय केचित् जीवाः पुनरपि मनुष्यजन्म प्राप्नुवन्ति, केचित् जीवाः तमसि अवरोहन्ति ॥ ३-१-८, ३-१-९, ३-१-१८, ३-१-१४.

(३६) प्र ॥ नरके भेदः अस्ति किम् ?

उ ॥ अस्ति, नरकाणि सप्त, द्वे नित्ये, पञ्च अनित्यानि, नित्यनरके पतितस्य आरोहणं नास्ति ॥ ३-१-१६, ३-१-१४.

(३७) प्र ॥ मोक्षदातुः विष्णोः लक्षणानि ज्ञातुं इच्छामि ?

उ ॥ विष्णुः आनन्दपूर्णः ॥ १-१-१३.

(२) सर्वान्तर्यामी ॥ १-१-१८.

(३) पृथिवीस्वर्गाद्याधारः ॥ १-३-१.

(४) अदृश्यः ॥ १-२-२१.

(५) प्राकृतरूपरहितः ॥ ३-२-१४.

(६) गुणगुणिभेदरहितः ॥ ३-२-२८.

(७) अवयवावयविभेदरहितः ॥ १-१-१५.

(८) ज्ञानानन्दाद्यात्मकशरीरवान् ॥ २-२-४१.

(९) सर्वपालकः ॥ ३-२-२२.

(१०) सृष्टिसंहारकर्ता ॥ १-१-२.

(११) अव्यक्तः ॥ ३-२-२३.

(१२) मुक्तप्राप्यः ॥ १-३-२.

(१३) सर्वगतः ॥ १-२-१.

(१४) सर्वशब्दवाच्यः ॥ १-४-१०, १-४-११.

(१५) युक्तिविरुद्धाविरुद्धचिन्त्याचिन्त्यसर्वगुणोपेतः ॥ २-१-३८.

(३८) प्र ॥ विष्णुः अदृश्यश्चेत् उपासकानां कथं तस्य साक्षात्कारः भवति ?

उ ॥ अदृश्योऽपि स्वप्रसादात् उपासकानां व्यक्तः भवति ॥ ३-२-२७.

(३९) प्र ॥ परमात्मा अवाच्य इति वेदे उक्तं खलु तस्य गुणाः कथं वर्णनीयाः ?

उ ॥ परमात्मा साकल्येन अवाच्योपि यत्किञ्चिद्रूपेण वाच्य एव ॥ १-१-५.

(४०) प्र ॥ विष्णोः गुणाः अनन्ताः खलु, तस्य गुणोपासना कथम्?

उ ॥ विष्णुः सत्यं ज्ञानं आनन्दं ब्रह्म इति चतुर्गुणैः मानुषैः उपसंहारः कर्तव्यः देवैः योग्यताऽनुसारेण एककाले यावन्तो गुणाः स्फुरन्ति तावद्गुणैः उपसंहारः कर्तव्यः। विरिञ्चस्तु सर्वगुणैः उपासनां कर्तुं योग्यः। सर्वैरपि परमात्मा मम स्वामी इति उपासना कार्या ॥ ४-१-३, ३-३-१०, ३-३-१२, ३-३-१४, ३-३-१८.

(४१) प्र ॥ अधिकगुणोपासनेन किं प्रयोजनं ?

उ ॥ अधिकफलं भवति ॥ ३-३-११.

(४२) प्र ॥ मोक्षानन्तरमपि जीवानां उपासना अस्ति किम् ?

उ ॥ मोक्षे मुक्ताः स्वेच्छया उपासनां कुर्वन्ति, न बद्धतया ॥ ३-३-२९, ४-१-१२.

(४३) प्र ॥ लक्ष्मीः नित्यमुक्ता खलु तस्या अपि उपासना अस्ति किम् ?

उ ॥ साऽपि भक्तिविशेषात् स्वेच्छया उपासनां करोति ॥ ३-३-४१.

(४४) प्र ॥ स्वयोग्यबिम्बरूपव्यतिरिक्तरूपाणि उपास्यानि किम् ?

उ ॥ अमुमुक्षुभिः काम्यार्थं उपास्यानि। मुमुक्षुभिः मोक्ष प्रतिबन्धकदुरितादिनिवारणार्थं उपास्यानि ॥ ३-३-६२, ३-३-६१.

——:*:——

## ॥ द्वितीयः परिशिष्टः ॥

---

## ॥ शंकरभगवत्पादभाष्यानुसारी सिद्धान्तः ॥

---

( १ ) प्र ॥ किं ब्रह्म ?

उ ॥ यतः सर्वज्ञात् सर्वशक्तेः कारणात् जगतः जन्मस्थितिभङ्गं भवति तत् नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म ॥ १-१-२.

( २ ) प्र ॥ ब्रह्म नित्यशुद्धतया निर्गुणं चेत् तथाविधस्य ब्रह्मणः सर्वज्ञत्वं सर्वशक्तित्वं च कथम् ?

उ ॥ ब्रह्मणो निर्गुणस्यापि सर्वज्ञत्वं सर्वशक्तित्वं चाविद्यात्मकोपाधिपरिच्छेदापेक्षं न परमार्थतः ॥ २-१-१४.

( ३ ) प्र ॥ अविद्या सत्पदार्थो वा असत्पदार्थो वा ?

उ ॥ सती असती इति वक्तुं न शक्यते ? अविद्या सर्वज्ञस्य ईश्वरस्य माया शक्तिः प्रकृतिः इति श्रुतिस्मृतिषु उच्यते ॥ २-१-१४.

( ४ ) प्र ॥ ब्रह्म जगतः कारणं चेत् किं उपादानकारणं किं वा निमित्तकारणम् ?

उ ॥ जगतः उपादानकारणं निमित्तकारणं च ब्रह्मैव ॥ १-४-२३,

( ५ ) प्र ॥ ब्रह्म जगतः उपादानकारणं चेत् ब्रह्म एकदेशेन परिणमते किम् ?

उ ॥ ब्रह्म अखण्डं तस्य एकदेशः परिणमते इति वक्तुं न शक्यते ॥ २-१-२७.

( ६ ) प्र ॥ ब्रह्म विशिष्टं परिणमते किम् ?

उ ॥ न ॥ २-१-२७.

( ७ ) प्र ॥ खण्डेन वा अखण्डरूपेण वा परिणामाभावे ब्रह्मणः उपादानकारणत्वं कथम् ?

उ ॥ उपादानकारणं द्विविधं परिणाम्युपादानं विवर्तोपादानं चेति, ब्रह्म विवर्तोपादानकारणं न परिणाम्युपादानकारणम् ॥ २-१-२७.

(८) प्र ॥ विवर्तोपादानकारणं कीदृशम् ?

उ ॥ रज्जौ सर्पभ्रमे रज्जुः सर्पस्य कारणं इति यत् तादृशं विवर्तोपादानकारणम् ॥

(९) प्र ॥ सर्परज्जुदृष्टान्ते सर्पः यथा मिथ्या तथा जगदपि मिथ्या किम् ?

उ ॥ मिथ्यैव, न सत्यं, तर्हि स्वप्नदृष्टकल्पितपदार्थ इव जगत् केवलं मिथ्या? न, यत् स्वप्ने दृष्टं तत् स्मृतमात्रं यत् जागरे दृष्टं तत् उपलब्धं, अतः स्वप्नकाले दृष्टपदार्थ इव केवलं मिथ्या न, ब्रह्म विना सत्पदार्थ एव नास्ति अतः जगत् सत्यमिति वक्तुमपि न शक्यते॥ २-२-२९,१-४-२३.

(१०) प्र ॥ जगत् केवलं मिथ्या न केवलं सत्यं न इति चेत् किमिति मन्तव्यम् ?

उ ॥ व्यवहारे सत्यं पारमार्थिकदशायां असत्यं इति मन्तव्यं स्वप्ने दृष्टपदार्थाः स्वप्नान्तपर्यन्तं यथा सत्याः तथा सर्वं ब्रह्म इति ज्ञानात्पूर्वं जगत् सत्यं अनन्तरं मिथ्या इति मन्तव्यम् ॥ २-१-१४.

(११) प्र ॥ ब्रह्मणः अन्यस्य वस्तुनः अभावे जगत् ब्रह्म कथं सृजति?

उ ॥ अविद्याकल्पिते प्रपञ्चस्य बीजभूते अनिर्वचनीये नामरूपे स्तः ते ब्रह्म प्रकटीकरोति, तदेव सृष्टिः॥ २-१-१४, १-४-१५.

(१२) प्र ॥ नामरूपाभ्यां ईश्वरः अन्यो वा अनन्यो वा ?

उ ॥ अन्यः ॥ २-१-१४.

(१३) प्र ॥ जगत्सृष्ट्या ब्रह्मणः किं प्रयोजनम् ?

उ ॥ प्रयोजनं नास्ति लीलया सृष्टिं करोति ॥ २-१-३३.

(१४) प्र ॥ ब्रह्म कांश्चित् जनान् दुःखभाजः करोति कांश्चित् जनान् सुखभाजः करोति तस्य कारणं किम् ?

उ ॥ जीवानां अनादिकर्म कारणम् ॥ २-१-३४, २-१-३५.

(१५) प्र ॥ यः इदं इदमिति जानाति स जीवोऽपि जगदिव मिथ्या किम् ?

उ ॥ न, जीवः ब्रह्मैव, तथाऽपि मायाकल्पितदेहेन्द्रियोपाधिवशात् तस्य भेदव्यपदेशः ॥ १-२-२०, १-४-२२.

(१६) प्र ॥ ब्रह्मणः उपाधिः कथं आगतः ?

उ ॥ उपाधिः अनादिः ॥ २-१-१४.

(१७) प्र ॥ जीवः ब्रह्मणः अभिन्नश्चेत् शास्त्रे विधिनिषेधयोः किं प्रयोजनम् ?

उ ॥ यथा स्वप्नदृष्टपदार्थाः स्वप्नान्तपर्यन्तं सत्याः अनन्तरं मिथ्या, तथा यावत्पर्यन्तं अहमेव ब्रह्म इति ज्ञानं जीवस्य न सम्भवति तावत्पर्यन्तं जीवभेदादिकं सत्यं भेदसत्यताज्ञानात् तावत्पर्यन्तं जीवः शास्त्रोक्तप्रकारेण कर्म कुर्यात् एव । व्यवहारकाले विधिनिषेधयोः प्रयोजनं अस्ति ॥ २-३-४८, २-१-१४.

(१८) प्र ॥ जीवानां देहसम्बन्धरूपसंसारात् मुक्तिः अस्ति वा ?

उ ॥ अस्ति, अहं ब्रह्मैव इति ज्ञानं यदा सम्भवति तदा मुक्तिः ॥ १-१-१९, ३-३-३२, ४-३-१४.

(१९) प्र ॥ कर्मणां प्रयोजनं नास्ति किम् ?

उ ॥ प्रयोजनं अस्ति, कर्म परम्परया ज्ञानसाधकम् ॥ ४-१-१६, १८, ३-४-२७.

(२०) प्र ॥ ज्ञानानन्तरं पूर्वकृतं कर्म किं भवति ?

उ ॥ सुकर्म सुहृदं प्राप्नोति, दुष्कर्म द्वेषिणं प्राप्नोति । प्रार

ब्धकर्म अनुभवेनैव नश्यति अनुभवानन्तरं ब्रह्मज्ञानी ब्रह्म प्राप्नोति ॥ ४-१-१५, ३-३-२६.

(२१) प्र ॥ काम्यकर्मापि ज्ञानसाधनं किम् ?

उ ॥ न ॥ ४-१-१७.

(२२) प्र ॥ जीवः कर्ता वा ?

उ ॥ यथा तक्षा यावत् उपकरणवान् तावत् कर्ता भवति, स्वगृहप्राप्त्यनन्तरं निर्व्यापारः सुखी च भवति, तथा जीवः यावत् अविद्यासम्बन्धी तावत् कर्ता, अनन्तरं न ॥ २-३-४०.

(२३) प्र ॥ जीवानां कर्तृत्वं भगवदधीनं वा न वा ?

उ ॥ भगवदधीनमेव, पूर्वकर्मानुसारेण परमात्मा जीवैः कर्म कारयति मोक्षोऽपि भगवदनुग्रहादेव ॥ २-३-४२.

(२४) प्र ॥ ब्रह्मणः जीवस्य एकत्वे उपास्योपासकभावः कथम् ?

उ ॥ ब्रह्म द्विरूपं, एकं नामरूपविकारभेदोपाधिविशिष्टं अन्यत् तद्विपरीतं जीवस्य अविद्यावस्थायां नामरूपविशिष्टस्य ब्रह्मणः उपास्योपासकादिलक्षणव्यवहारः ॥ १-१-१२, ४-३-१४.

(२५) प्र ॥ ब्रह्म सगुणत्वनिर्गुणत्वभेदेन द्विरूपं इति भवद्भिः उक्तं । तत् द्विरूपं कालभेदेन वा एककाले वा ?

उ ॥ एककाले द्वे रूपे स्तः ॥

(२६) प्र ॥ उपासना कथं कार्या ?

उ ॥ ब्रह्म मम आत्मा इति उपासना कार्या ॥ ४-१-३.

(२७) प्र ॥ ज्ञानानन्तरं ब्रह्म विना किमपि नास्ति खलु अतः वेदोऽपि मिथ्या वा ?

उ ॥ ज्ञानानन्तरं मिथ्यैव ॥ ४-१-३.

(२८) प्र ॥ मिथ्यारूपवेदोक्तोपासनेन सत्यज्ञानं कथं भवति ?

उ ॥ स्वप्नं असत्यमपि स्वप्नदर्शनेन जाग्रति सत्यफलप्राप्तिः यथा सम्भवति तथा वेदोक्तोपासनया यथार्थज्ञानं सम्भवति । यः स्वप्ने कृष्णं कृष्णदन्तं पुरुषं पश्यति स एनं हन्ति यः स्वप्नेषु स्त्रियं पश्यति स समृद्धिं प्राप्नोति इत्यादिश्रुतिवचनात् असत्येन कारणेन सत्यफलं सम्भवतीति सिद्धम् ॥ २-१-१४.

(२९) प्र ॥ मायाविशिष्टस्य सगुणब्रह्मणः उपासना केवलं ज्ञान साधनमेव वा सा अन्यफलमपि ददाति वा ?

उ ॥ सगुणोपासना उपासकस्य जीवस्य सङ्कल्पमात्रेण सर्वापेक्षितप्राप्तिरूपजगदैश्वर्यं ददाति ॥ ४-३-१४.

(३०) प्र ॥ सुकर्मिणां मरणात्परं का गतिः ?

उ ॥ धूमादिमार्गेण चन्द्रलोकं गत्वा तत्र भोगाननुभूय कर्मशेषेण इमं लोकं पुनरागच्छन्ति कर्मानुसारेण जन्म प्राप्नुवन्ति ॥ ३-१-८.

(३१) प्र ॥ दुष्कर्मिणां अकर्मिणां च का गतिः ?

उ ॥ ते यमलोकं गच्छन्ति तत्र दुःखं अनुभूय इमं लोकं पुनः प्रविशन्ति ॥ ३-१-१३, १४.

(३२) प्र ॥ निर्गुणोपासकानां का गतिः ?

उ ॥ गम्याभावात् तेषां गतिः नास्ति । ज्ञानात् ब्रह्मत्वमेव सिध्यति ॥ ४-३-१४.

(३३) प्र ॥ सगुणोपासकानां का गतिः ?

उ ॥ अर्चिरादिमार्गेण चतुर्मुखब्रह्म प्राप्नुवन्ति तल्लोकप्रळ

यकाले तत्रोत्पन्नसम्यग्ज्ञानवन्तः ब्रह्मणा सह विष्णुपदं प्राप्नुवन्ति ॥ ४-३-१.

( ३४ ) प्र ॥ सगुणोपासकानां ब्रह्मलोकप्राप्त्यनन्तरं पुनरावृत्तिः अस्ति वा ?

उ ॥ न, सगुणशरणानां अपि क्रमेण निर्वाणं अस्ति अतः पुनरावृत्तिर्नास्ति ॥ ४-४-२२.

——:*:——

☞ प, महादेवशास्त्री.

## ॥ तृतीयः परिशिष्टः ॥

---*---

## ॥ भगवद्रामानुजभाष्यानुसारिसिद्धान्तसंग्रहः ॥

---:※:---

( १ ) प्र ॥ जगत्कारणं किम् ?

उ ॥ यत् जगदिति व्यवह्रियते तत् स्थूलचिदचिद्विशिष्टं ब्रह्म। तस्य कारणं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म ॥ १-१-१.

( २ ) प्र ॥ विशेषणीभूतस्य चिदचिद्रूपजगतः कारणं किम् ?

उ ॥ ब्रह्मैव ॥

( ३ ) प्र ॥ ब्रह्म निमित्तकारणं वा उपादानकारणं वा ?

उ ॥ उभयं च ॥

( ४ ) प्र ॥ संकल्पद्वारा ब्रह्म निमित्तकारणं भवतु। उपादानकारणं कथं भवति ?

उ ॥ चिदचितोः अपृथक्सिद्धाधारत्वात् तादृशचिदचिद्विशिष्टरूपकार्यकारणावस्थायोगात् उपादानकारणं भवति ॥ १-१-१.

( ५ ) प्र ॥ ब्रह्म किंलक्षणकम् ?

उ ॥ ब्रह्म निखिलजगज्जन्मादिकारणं निरस्तनिखिलदोषं समस्तकल्याणगुणाकरं सत्यं ज्ञानमनन्तं सर्वात्मकमनवधिकातिशयानन्दं च ॥ १-१-१,२. ३-२-११.

( ६ ) प्र ॥ ब्रह्मणस्सर्वात्मकत्वे सर्वदोषास्पदत्वमपरित्याज्यमिति कथं तस्य निरस्तनिखिलदोषता ?

उ ॥ सर्वात्मकत्वं हि न सर्वाभिन्नत्वं। किन्तु सर्वान्तर्यामित्वं यद्वेवसर्वशरीरत्वमित्युच्यते। यथा च सर्वव्यापिनोऽपि वाय्वादेः न व्याप्यगतदोषास्पदत्ता। यथा वा शरीरगतैर्दोषैः शारीरश्चेतनो नस्पृश्यते तथा सर्वान्तर्याम्यपि ब्रह्म निरस्तनिखिलदोषमेव ॥ ३-२-११.

( ७ ) प्र ॥ ब्रह्म चैतन्यस्वरूपं वा चैतन्यगुणकं वा ?

उ ॥ चैतन्यगुणकं चैतन्यस्वरूपं च ॥ ३-२-१५.

( ८ ) प्र ॥ ब्रह्म कथं ज्ञातव्यम् ?

उ ॥ शास्त्रात् ॥

( ९ ) प्र ॥ ब्रह्मणः सर्वचिदचित्कारणत्वे स्वप्नपदार्थानां अपि ब्रह्मैव कारणं किम् ?

उ ॥ ब्रह्मैव ॥ ३-२-१.

(१० ) प्र ॥ स्वप्नपदार्थाः मिथ्या न किम् ?

उ ॥ न । किंतु तत्तत्कालावसायिनः तत्तत्पुरुषमात्रानुभाव्याः ईश्वरसृष्टाः सत्या एव ॥ १-१-१.

(११ ) प्र ॥ सृष्ट्या परमात्मनः प्रयोजनं किम् ?

उ ॥ लीलैव ॥ २-१-३३.

(१२ ) प्र ॥ जीवाः परमात्मनः भिन्ना वा अभिन्ना वा ?

उ ॥ भिन्ना एव ॥ २-१-२२.

(१३ ) प्र ॥ जीवः अणुर्वा व्यापको वा ?

उ ॥ अणुः हृदयस्थः ॥ २-३-२०, १-२-१८.

(१४ ) प्र ॥ अणुश्चेत् सकलशरीरव्यापिनी वेदना कथं उपपद्यते ?

उ ॥ यतो जीवः स्वगुणेन ज्ञानेन सकलदेहं व्याप्य अवस्थितः दीपवत् ॥ २-३-२६.

(१५ ) प्र ॥ जीवः कर्ता वा ?

उ ॥ कर्ता एव ॥ २-३-३३.

(१६ ) प्र ॥ जीवः स्वतन्त्रकर्ता वा परतन्त्रकर्ता वा?

उ ॥ परतन्त्रकर्ता एव ॥ २-३-४०.

(१७) प्र ॥ जीवः परतन्त्रकर्ता चेत् विधिनिषेधशास्त्रस्य निष्प्रयोजनत्वं नापतति किम् ?

उ ॥ शास्त्रं हि इदं कार्यं इति इदं अकार्यं इति ज्ञानाय प्रवृत्तम् । जीवः शास्त्रानुसारेण अनुष्ठाने अननुष्ठाने च स्वतन्त्रः अतः विधिनिषेधशास्त्रं सप्रयोजनम् । शास्त्रार्थानुष्ठानप्रवृत्त्यनन्तरं भगवत्प्रेरणं विना कार्यं न निष्पद्यते । अतः जीवः परतन्त्रकर्ता ॥ २-३-४१.

(१८) प्र ॥ जीवानां भूतसंबन्धः देहान्ते निवर्तते वा न वा ?

उ ॥ मुक्तिपर्यन्तं न निवर्तते । कर्मानुसारेण भूयोभूयः जन्मान्तरं प्राप्नुवन्ति ॥ ३-१-१.

(१९) प्र ॥ जीवानां जन्मान्तरादिक्लेशात् कथं मुक्तिः ?

उ ॥ भगवदुपासनातः प्रीतः परमात्मा मुक्तिं ददाति ॥ ३-४-१, १-१.

(२०) प्र ॥ कर्मउपासकेनाप्यनुष्ठेयं किम् ?

उ ॥ कर्म उपासनायाः अङ्गम् । अतः अवश्यं अनुष्ठेयम् ॥ ३-४-२६.

(२१) प्र ॥ उपासना का ?

उ ॥ उपासना अविच्छिन्नस्मृतिसन्ततिरूपा ध्यानवेदनभक्तिज्ञानादिशब्दवाच्या संस्कारपरिपाकसमासादित विशदतमप्रत्यक्षाकारा ॥ ३-४-२६.

(२२) प्र ॥ उपास्यं ब्रह्म उपासितुः अन्यत्वेन उपास्यं किं उत आत्मत्वेन ?

उ ॥ जीवः शरीरस्य यथा आत्मा तथा स्वस्यापि परब्रह्म आत्मेति उपासीत ॥ ४-१-३.

(२३) प्र ॥ ऐहिकमामुष्मिकं च फलं किं कर्मभिरेवतैरतैः साक्षात् भवति ?

उ ॥ न। तेन तेन कर्मणा प्रीतः परमात्मा तत्तत्फलं ददाति ॥३-२-३७.

(२४) प्र ॥ वेदोक्तकर्माधिकारिणः के ?

उ ॥ वेदोक्तानि कर्माणि द्विविधानि साधारणानि असाधारणानि चेति। तत्र साधारणानि यानि अग्निविद्यानपेक्षाणि सत्यवदनाहिंसादीनि तेषु सर्वेषामेवाधिकारः। यानि तु असाधारणानि अग्निविद्यासापेक्षाणि तेषु अधिकारिणः ब्रह्मक्षत्रियवैश्या एव। शूद्राणां तु तत्राधिकारो नास्ति। अतः ब्रह्मविद्यायां अपि नाधिकारः ॥ १-३-३३.

(२५) प्र ॥ तर्हि त्रैवर्णिकेतरेषां मुक्तिर्नास्ति किम् ?

उ ॥ तेषामपि भागवतधर्मनिष्ठत्वे स्वानुरूपेण भगवत्समाराधनेन भवति मुक्तिः ॥ २-२-४२.

(२६) प्र ॥ मुक्तिस्वरूपं किम् ?

उ ॥ सकलकर्मनिवृत्तिपूर्वकपरमात्मानुभवः मुक्तिः ॥ १-२-१२.

(२७) प्र ॥ जीवः परमात्मानं पृथक्भूतं अनुभवति उत अपृथक्भूतं अनुभवति ?

उ ॥ तच्छरीरतया अविभागेन अहं ब्रह्म अस्मि इत्यनुभवति ॥ ४-४-४.

(२८) प्र ॥ मुक्तः सदेहस्सन् अनुभवति वा विदेहस्सन् अनुभवति वा ?

उ ॥ यथेच्छं उभयविधस्सन् अनुभवति ॥ ४-४-१२.

(२९) प्र ॥ मुक्तस्य परब्रह्मणा परमसाम्यश्रवणात् सर्वप्रकारेणापि साम्यं भवति किम्

उ ॥ मुक्तस्य जगत्स्रष्टृत्वं विना ब्रह्मणा साकं भोगतस्साम्यं अस्ति ॥ ४-४-१७.

(३०) प्र ॥ मुक्तानां पूर्वकृतकर्म कथं निवर्तते ?

उ ॥ उपासनायाः पूर्वकृतं प्रारब्धभिन्नं कर्म उपासनातो विनश्यति। उत्तरकृतं कर्म न श्लिष्यते। प्रारब्धकर्म तु अनुभवेन एव नश्यति ॥ ४-१-१३, ४-१-१९.

(३१) प्र ॥ तथा चेत् शत्रुमित्रयोः संबन्ध्यमानं कर्म किम् ?

उ ॥ पूर्वोक्तं विनश्यत् श्लिष्यमाणं च कर्म एव तौ प्राप्नुतः ॥ ४-१-१७.

(३२) प्र ॥ देहान्ते जीवानां का गतिः ?

उ ॥ ब्रह्मोपासनानिष्ठाः अर्चिरादिमार्गेण विष्णुलोकं गत्वा तत्र परमात्मानं अनुभवन्ति। बद्धानां मध्ये यागादिकारिणः धूमादिमार्गेण चन्द्रलोकं गत्वा ततः स्वर्गादिकं अनुभूय पुनः निवर्तन्ते। पापकर्माणस्तु चन्द्रलोकात् यमलोकं गत्वा तत्र वेदनां अनुभूय पुनरुत्पद्यन्ते ॥ ४-३-१, ३-१-१२.

(३३) प्र ॥ मुक्तानां पुनरागतिरस्ति वा ?

उ ॥ न। अपुनरावृत्तिश्रवणात् ॥ ४-४-२२.

---*---

कस्तूरिरंगाचार्यन्.

## ॥ चतुर्थः परिशिष्टः ॥

## ॥ शाङ्कररामानुजयोः भाष्यप्रकारेण पूर्वपक्षसूत्राणि ॥

| सूत्रसङ्ख्या. अ. | पा. | †शं. | $रा. | ‡म. | सूत्राणि. | |
|---|---|---|---|---|---|---|
| १ | ३ | ३१ | ३० | ३१ | मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ | रामानुजीये पूर्वपक्षसूत्राणि शाङ्करे सिद्धान्तसूत्राणि |
| | | ३२ | ३१ | ३२ | ज्योतिषि भावाच्च ॥ | |
| २ | १ | ४ | ४ | ४ | न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ | |
| | | ५ | ५ | ६ | अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ | |
| | | ८ | ८ | ९ | अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ | |
| | | २१ | २१ | २२ | इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ | |
| | | २६ | २६ | २७ | कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ | |
| | | ३२ | ३२ | ३३ | न प्रयोजनवत्त्वात् ॥ | |
| २ | २ | ४२ | ३९ | ४२ | उत्पत्त्यसम्भवात् ॥ | रामानुजीये पू॰ शाङ्करे सि॰ |
| | | ४३ | ४० | ४३ | न च कर्तुः करणम् ॥ | |
| २ | ३ | १ | १ | १ | न वियदश्रुतेः ॥ | |
| | | २ | २ | २ | अस्ति तु ॥ | शां॰ पू॰ रा॰ सि॰ |
| | | ३ | ३ | ३ | गौण्यसम्भवात् ॥ | |
| | | ४ | ३ | ४ | शब्दाच्च ॥ | |
| | | | | | गौण्यसम्भवाच्छब्दाच्च ॥ इति रामानुजः । | |

† शाङ्करभाष्यप्रकारेण ॥

$ रामानुजभाष्यप्रकारेण ॥

‡ मध्वभाष्यप्रकारेण ॥

| सूत्रसङ्ख्या. | | | | | | |
|---|---|---|---|---|---|---|
| अ. | पा. | †शां | $रा | ‡म. | सूत्राणि. | |
| २ | ३ | ५ | ४ | ५ | स्याच्चैकस्य ब्रह्मशब्दवत् ॥ | |
| | | | | | स्याच्चैकस्यापि ब्रह्मशब्दवत्॥ इति शङ्करः। | |
| | | १० | १० | १० | तेजोऽतस्तथा ह्याह ॥ | रामानुजीये पूर्वपक्षः शाङ्करे सिद्धान्तः |
| | | ११ | ११ | ११ | आपः ॥ | |
| | | १२ | १२ | १२ | पृथिव्यधिकाररूपशब्दान्तरादिभ्यः॥ इति मध्वः। | |
| | | | १३ | | पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ इति शङ्करः। | |
| | | | | | पृथिवी ॥ इति रामानुजः। | |
| | | | | | अधिकाररूपशब्दान्तरेभ्यः॥ इति रामानुजः। | |
| | | १९ | २० | २० | उत्क्रान्तिगत्यागतीनाम् ॥ | शाङ्करे पूर्वपक्षः रामानुजीये सिद्धान्तः |
| | | २० | २१ | २१ | स्वात्मना चोत्तरयोः ॥ | |
| | | २१ | २२ | २२ | नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ | |
| | | २२ | २३ | २३ | स्वशब्दोन्मानाभ्यां च ॥ | |
| | | २३ | २४ | २४ | अविरोधश्चन्दनवत् ॥ | |
| | | २४ | २५ | २५ | अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ | |
| | | २५ | २६ | २६ | गुणाद्वालोकवत् ॥ | शाङ्करे पूर्वपक्षसूत्राणि रामानुजीये सिद्धान्तसूत्राणि |
| | | २६ | २७ | २७ | व्यतिरेको गन्धवत् ॥ | |
| | | २७ | | | तथा च दर्शयति ॥ | |
| | | | | | व्यतिरेकोगन्धवत्तथा च दर्शयति॥ इति मध्वरामानुजौ | |
| | | २८ | २८ | २८ | पृथगुपदेशात् ॥ | |
| २ | ४ | ५ | ४ | ६ | सप्तगतेर्विशेषितत्वाच्च ॥ | |

| सूत्रसङ्ख्या. | | | | | | |
|---|---|---|---|---|---|---|
| अ. | पा. | †शं | $रा | ‡म. | सूत्राणि. | |
| ३ | १ | ९ | ९ | १० | चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः<br>चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ इति शङ्करः ॥ | रा० पू० शा० सि० |
| ३ | १ | १२ | १२ | १३ | अनिष्टादिकारिणामपि च श्रुतम् ॥ | |
| ३ | १ | १३ | १३ | १४ | संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ | रामानुजीये पूर्वपक्ष सूत्राणि शाङ्करे सिद्धान्तसूत्राणि |
| | | १४ | १४ | १५ | स्मरन्ति च ॥ | |
| | | १५ | १५ | १६ | अपि सप्त ॥<br>अपि च सप्त ॥ इति शङ्करः । | |
| | | १६ | १६ | १७ | तत्रापि च तद्व्यापारादविरोधः ॥<br>तत्रापि तद्व्यापारादविरोधः। इति रामानुजः ॥ | |
| ३ | २ | १ | १ | १ | सन्ध्ये सृष्टिराह हि ॥ | |
| | | २ | २ | २ | निर्मातारं चैके पुत्रादयश्च ॥ | |
| | | १९ | १९ | १९ | अम्बुवद्ग्रहणात्तु न तथात्वम्॥ | |
| | | २७ | २६ | २८ | उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ | |
| | | २८ | २७ | २९ | प्रकाशाश्रयवद्वा तेजस्त्वात्॥ | |
| | | ३१ | ३० | ३२ | परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ | |
| | | ४० | ३९ | ४१ | धर्मं जैमिनिरत एव ॥ | |
| ३ | ३ | ६ | ६ | ७ | अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॥ इति मध्वः ॥<br>अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ | रा० पू० शा० सि० |

| सूत्रसङ्ख्या. | | | | | | |
|---|---|---|---|---|---|---|
| अ. | पा. | †शं | §रा | ‡म. | सूत्राणि. | |
| ३ | ३ | २० | २० | २१ | सम्बन्धादेवमन्यत्रापि ॥ | |
| | | २९ | २९ | ३० | गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ | रा० पू० शं० सि० |
| | | ४० | ३९ | ४१ | आदरादलोपः ॥ | शं० पू० रा० सि० |
| ३ | ३ | ४५ | ४४ | ४६ | पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ | |
| | | ४६ | ४५ | ४७ | अतिदेशाच्च ॥ | |
| ३ | ३ | ५३ | ५१ | ५५ | एक आत्मनश्शरीरे भावात् ॥ | |
| | | ६१ | ५९ | ६३ | अङ्गेषु यथाऽऽश्रयभावः ॥ | |
| | | ६२ | ६० | ६४ | शिष्टेश्च ॥ | |
| | | ६३ | ६१ | ६५ | समाहारात् ॥ | |
| | | ६४ | ६२ | ६६ | गुणसाधारण्यश्रुतेश्च ॥ | |
| ३ | ४ | २ | २ | २ | शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ | |
| | | ३ | ३ | ३ | आचारदर्शनात् ॥ | |
| | | ४ | ४ | ४ | तच्छ्रुतेः ॥ | |
| | | ५ | ५ | ५ | समन्वारम्भणात् ॥ | |
| | | ६ | ६ | ६ | तद्वतो विधानात् ॥ | |
| | | ७ | ७ | ७ | नियमाच्च ॥ | |
| | | १८ | १८ | १८ | परामर्शं जैमिनिरचोदना चापवदति हि ॥<br>परामर्शं जैमिनिरचोदनाच्चापवदति हि॥ इति रामानुजः | शं० पू० रा० सि० |
| | | ४१ | ४१ | ४१ | न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ | |
| | | ४४ | ४४ | ४४ | स्वामिनः फलश्रुतेरित्यात्रेयः | |
| ४ | २ | १२ | १२ | १२<br>१४३ | प्रतिषेधादिति चेन्न शारीरात्॥ | शं०पू०रा०सि० |

| सूत्रसङ्ख्या. | | | | | | |
|---|---|---|---|---|---|---|
| अ. | पा. | †शं | $रा | ‡म. | सूत्राणि. | |
| | | | | | प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ इति रामानुजः ॥ | |
| ४ | ३ | ७ | ६ | ७ | कार्यं बादरिरस्य गत्युपपत्तेः ॥ | रा० पू० शं० सि० |
| | | ८ | ७ | ८ | विशेषितत्वाच्च ॥ | |
| | | ९ | ८ | ९ | सामीप्यात्तु तद्व्यपदेशः ॥ | |
| | | १० | ९ | १० | कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ | |
| | | ११ | १० | ११ | स्मृतेश्च ॥ | |
| ४ | ३ | १२ | ११ | १२ | परं जैमिनिर्मुख्यत्वात् ॥ | |
| | | २३ | १२ | १३ | दर्शनाच्च ॥ | रा० पू० शं० सि० |
| | | १४ | १३ | १४ | न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ न च कार्ये प्रत्यभिसन्धिः ॥ इति रामानुजः ॥ | |
| ४ | ४ | ५ | ५ | ५ | ब्राह्मेण जैमिनिरुपन्यासादिभ्यः | |
| | | ६ | ६ | ६ | चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ इति शंकररामानुजौ ॥ | शं० सि० रा० पू० |
| | | १० | १० | १० | अभावं बादरिराह ह्येवम् ॥ | |
| | | ११ | ११ | ११ | भावं जैमिनिर्विकल्पाम्नानात् ॥ भावं जैमिनिर्विकल्पामननात् ॥ इति शंकररामानुजौ ॥ | |

—*:*:*—

## ॥ पञ्चमपरिशिष्टः ॥

## ॥ अधिकरणविभागः ॥

---

| अ. | पा. | अधि. | मध्वः (सूत्रसङ्ख्या) | शङ्करः (सूत्रसङ्ख्या) | रामा० (सूत्रसङ्ख्या) |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| | | २ | २ | २ | २ |
| | | ३ | ३ | ३ | ३ |
| | | ४ | ४ | ४ | ४ |
| | | ५ | ५-११ | ५-११ | ५-१२ |
| | | ६ | १२-१९ | १२-१९ | १३-२० |
| | | ७ | २०-२१ | २०-२१ | २१-२२ |
| | | ८ | २२ | २२ | २३ |
| | | ९ | २३ | २३ | २४ |
| | | १० | २४ | २४-२७ | २५-२८ |
| | | ११ | २५-२७ | २८-३१ | २९-३२ |
| | | १२ | २८-३१ | | |
| १ | २ | १ | १-८ | १-८ | १-८ |
| | | २ | ९-१० | ९-१० | ९-१२ |
| | | ३ | ११-१२ | ११-१२ | १३-१८ |
| | | ४ | १३-१७ | १३-१७ | १९-२१ |
| | | ५ | १८-२० | १८-२० | २२-२४ |
| | | ६ | २१-२३ | २१-२३ | २५-३३ |
| | | ७ | २४-३२ | २४-३२ | |
| १ | ३ | १ | १-७ | १-७ | १-६ |
| | | २ | ८-९ | ८-९ | ७-८ |
| | | ३ | १०-१२ | १०-१२ | ९-११ |
| | | ४ | १३ | १३ | १२ |
| | | ५ | १४-२१ | १४-२१ | १३-२२ |
| | | ६ | २२-२३ | २२-२३ | २३-२४ |
| | | ७ | २४-२५ | २४-२५ | २५-२९ |
| | | ८ | २६-३३ | २६-३० | ३०-३२ |
| | | ९ | ३४-३८ | ३१-३३ | ३३-४१ |
| | | १० | ३९ | ३४-३८ | ४२-४४ |
| | | ११ | ४० | ३९ | |
| १ | ३ | १२ | ४१ | ४० | |
| | | १३ | ४२ | ४१ | |
| | | १४ | ४३ | ४२-४३ | |
| १ | ४ | १ | १-९ | १-७ | १-७ |
| | | २ | १०-११ | ८-१० | ८-१० |
| | | ३ | १२-१४ | ११-१३ | ११-१३ |
| | | ४ | १५ | १४-१५ | १४-१५ |
| | | ५ | १६-२३ | १६-१८ | १६-१८ |
| | | ६ | २४-२८ | १९-२२ | १९-२२ |
| | | ७ | २९ | २३-२७ | २३-२८ |
| | | ८ | | २८ | २९ |
| २ | १ | १ | १-३ | १-२ | १-२ |
| | | २ | ४-५ | ३ | ३ |
| | | ३ | ६-७ | ४-११ | ४-१२ |
| | | ४ | ८-१३ | १२ | १३ |
| | | ५ | १४ | १३ | १४ |
| | | ६ | १५-२१ | १४-२० | १५-२० |
| | | ७ | २२-२७ | २१-२३ | २१-२३ |
| | | ८ | २८-३२ | २४-२५ | २४-२५ |
| | | ९ | ३३-३४ | २६-२९ | २६-३१ |
| | | १० | ३५-३७ | ३०-३१ | ३२-३६ |
| | | ११ | ३८ | ३२-३३ | |
| | | १२ | | ३४-३६ | |
| | | १३ | | ३७ | |
| २ | २ | १ | १-४ | १-१० | १-९ |
| | | २ | ५ | ११ | १०-१६ |
| | | ३ | ६ | १२-१७ | १७-२६ |
| | | ४ | ७-८ | १८-२७ | २७-२९ |
| | | ५ | ९-१० | २८-३२ | ३० |
| | | ६ | ११-१७ | ३३-३६ | ३१-३४ |

| | | | सूत्रसङ्ख्य. | | |
|---|---|---|---|---|---|
| अ. | पा. | अधि. | मध्वः. | शङ्करः. | रामा. |
| २ | २ | ७ | १८-२५ | ३७-४१ | ३५-३८ |
| | | ८ | २६-२९ | ४२-४५ | ३९-४२ |
| | | ९ | ३०-३२ | | |
| | | १० | ३३-३६ | | |
| | | ११ | ३७-४१ | | |
| | | १२ | ४२-४५ | | |
| २ | ३ | १ | १-७ | १-७ | १-९ |
| | | २ | ८ | ८ | १०-१७ |
| | | ३ | ९ | ९ | १८ |
| | | ४ | १० | १० | १९-३२ |
| | | ५ | ११ | ११ | ३३-३९ |
| | | ६ | १२ | १२ | ४०-४१ |
| | | ७ | १३ | १३ | ४२-५२ |
| | | ८ | १४ | १४ | |
| | | ९ | १५-१६ | १५ | |
| | | १० | १७ | १६ | |
| | | ११ | १८-१९ | १७ | |
| | | १२ | २०-२६ | १८ | |
| | | १३ | २७ | १९-३२ | |
| | | १४ | २८-२९ | ३३-३९ | |
| | | १५ | ३० | ४० | |
| | | १६ | ३१-३२ | ४१-४२ | |
| | | १७ | ३३-४२ | ४३-५७ | |
| | | १८ | ४३-५० | | |
| | | १९ | ५१-५३ | | |
| २ | ४ | १ | १-३ | १-४ | १-३ |
| | | २ | ४ | ५-६ | ४-५ |
| | | ३ | ५ | ७ | ६-७ |
| | | ४ | ६-७ | ८ | ८-११ |
| | | ५ | ८ | ९-१२ | १२ |
| | | ६ | ९-१० | १३ | १३-१४ |

| | | | सूत्रसङ्ख्य. | | |
|---|---|---|---|---|---|
| अ. | पा. | अधि. | मध्वः. | शङ्करः. | रामा. |
| २ | ४ | ७ | ११-१२ | १४-१६ | १५-१६ |
| | | ८ | १३ | १७-१९ | १७-१९ |
| | | ९ | १४ | २०-२२ | |
| | | १० | १५-१७ | | |
| | | ११ | १८-२० | | |
| | | १२ | २१ | | |
| | | १३ | २२-२३ | | |
| ३ | १ | १ | १ | १-७ | १-७ |
| | | २ | २ | ८-११ | ८-११ |
| | | ३ | ३ | १२-२१ | १२-२१ |
| | | ४ | ४ | २२ | २२ |
| | | ५ | ५ | २३ | २३ |
| | | ६ | ६ | २४-२७ | २४-२७ |
| | | ७ | ७ | | |
| | | ८ | ८ | | |
| | | ९ | ९ | | |
| | | १० | १०-१२ | | |
| | | ११ | १३-१५ | | |
| | | १२ | १६ | | |
| | | १३ | १७ | | |
| | | १४ | १८ | | |
| | | १५ | १९-२३ | | |
| | | १६ | २४ | | |
| | | १७ | २५ | | |
| | | १८ | २६-२७ | | |
| | | १९ | २८ | | |
| | | २० | २९ | | |
| ३ | २ | १ | १-४ | १-६ | १-६ |
| | | २ | ५ | ७-८ | ७-८ |
| | | ३ | ६ | ९ | ९ |
| | | ४ | ७ | १० | १० |

सूत्रसङ्ख्य.

| अ. | पा. | अधि. | मध्वः. | शङ्करः. | रामा० |
|---|---|---|---|---|---|
| ३ | २ | ५ | ८ | ११-२१ | ११-२५ |
| | | ६ | ९ | २२-३० | २६-२९ |
| | | ७ | १० | ३१-३७ | ३०-३६ |
| | | ८ | ११-१३ | ३८-४१ | ३७-४० |
| | | ९ | १४-१७ | | |
| | | १० | १८ | | |
| | | ११ | १९ | | |
| | | १२ | २०-२१ | | |
| | | १३ | २२ | | |
| | | १४ | २३-२७ | | |
| | | १५ | २८-३१ | | |
| | | १६ | ३२-३४ | | |
| | | १७ | ३५-३६ | | |
| | | १८ | ३७ | | |
| | | १९ | ३८ | | |
| | | २० | ३९-४२ | | |
| ३ | ३ | १ | १-५ | १-४ | १-५ |
| | | २ | ६-९ | ५ | ६-९ |
| | | ३ | १० | ६-८ | १० |
| | | ४ | ११ | ९ | ११-१७ |
| | | ५ | १२ | १० | १८ |
| | | ६ | १३ | ११-१३ | १९ |
| | | ७ | १४ | १४-१५ | २०-२२ |
| | | ८ | १५-१६ | १६-१७ | २३ |
| | | ९ | १७ | १८ | २४ |
| | | १० | १८ | १९ | २५ |
| | | ११ | १९ | २०-२२ | २६ |
| | | १२ | २०-२१ | २३ | २७-३१ |
| | | १३ | २२-२३ | २४ | ३२ |
| | | १४ | २४ | २५ | ३३-३४ |
| | | १५ | २५ | २६ | ३५-३७ |

सूत्रसङ्ख्य.

| अ. | पा. | अधि. | मध्वः. | सङ्करः. | रामा० |
|---|---|---|---|---|---|
| ३ | ३ | १६ | २६ | २७-२८ | ३८-४० |
| | | १७ | २७-२८ | २९-३० | ४१ |
| | | १८ | २९-३१ | ३१ | ४२ |
| | | १९ | ३२ | ३२ | ४३ |
| | | २० | ३३-३४ | ३३ | ४४-५० |
| | | २१ | ३५-३७ | ३४ | ५१-५२ |
| | | २२ | ३८ | ३५-३६ | ५३-५४ |
| | | २३ | ३९ | ३७ | ५५ |
| | | २४ | ४०-४२ | ३८ | ५६ |
| | | २५ | ४३ | ३९ | ५७-५८ |
| | | २६ | ४४ | ४०-४१ | ५९-६४ |
| | | २७ | ४५ | ४२ | |
| | | २८ | ४६-४७ | ४३ | |
| | | २९ | ४८-४९ | ४४-५२ | |
| | | ३० | ५० | ५३-५४ | |
| | | ३१ | ५१ | ५५-५६ | |
| | | ३२ | ५२ | ५७ | |
| | | ३३ | ५३ | ५८ | |
| | | ३४ | ५४ | ५९ | |
| | | ३५ | ५५-५६ | ६० | |
| | | ३६ | ५७-५८ | ६१-६६ | |
| | | ३७ | ५९ | | |
| | | ३८ | ६० | | |
| | | ३९ | ६१ | | |
| | | ४० | ६२ | | |
| | | ४१ | ६३-६६ | | |
| | | ४२ | ६७-६८ | | |
| ३ | ४ | १ | १-९ | १-१७ | १-२० |
| | | २ | १०-१२ | १८-२० | २१-२२ |
| | | ३ | १३ | २१-२२ | २३-२४ |
| | | ४ | १४-३३ | २३-२४ | २५ |

सूत्रसङ्ख्य.

| अ. | पा. | अधि. | मध्व:. | शङ्कर:. | रामा. |
|---|---|---|---|---|---|
| ३ | ४ | ५ | ३४-४० | २५ | २६ |
| | | ६ | ४१-४३ | २६-२७ | २७ |
| | | ७ | ४४-४६ | २८-३१ | २८-३१ |
| | | ८ | ४७-४८ | ३२-३५ | ३२-३५ |
| | | ९ | ४९ | ३६-३९ | ३६-३९ |
| | | १० | ५० | ४० | ४०-४३ |
| | | ११ | ५१ | ४१-४२ | ४४-४५ |
| | | १२ | | ४३ | ४६-४८ |
| | | १३ | | ४४-४६ | ४९ |
| | | १४ | | ४७-४९ | ५० |
| | | १५ | | ५० | ५१ |
| | | १६ | | ५१ | |
| | | १७ | | ५२ | |
| ४ | १ | १ | १-२ | १-२ | १-२ |
| | | २ | ३ | ३ | ३ |
| | | ३ | ४ | ४ | ४-५ |
| | | ४ | ५ | ५ | ६ |
| | | ५ | ६ | ६ | ७-११ |
| | | ६ | ७-११ | ७-१० | १२ |
| | | ७ | १२ | ११ | १३ |
| | | ८ | १३-१९ | १२ | १४ |
| | | ९ | | १३ | १५ |
| | | १० | | १४ | १६-१८ |
| | | ११ | | १५ | १९ |
| | | १२ | | १६-१७ | |
| | | १३ | | १८ | |
| | | १४ | | १९ | |
| ४ | २ | १ | १-२ | १-२ | १-२ |

सूत्रसङ्ख्य.

| अ. | पा. | अधि. | मध्व:. | शङ्कर:. | रामा० |
|---|---|---|---|---|---|
| ४ | २ | २ | ३ | ३ | ३ |
| | | ३ | ४ | ४-६ | ४ |
| | | ४ | ५ | ७ | ५-६ |
| | | ५ | ६ | ८-११ | ७-१३ |
| | | ६ | ७-१४ | १२-१४ | १४ |
| | | ७ | १५ | १५ | १५ |
| | | ८ | १६ | १६ | १६ |
| | | ९ | १७-२१ | १७ | १७ |
| | | १० | २२ | १८-१९ | १८ |
| | | ११ | | २०-२१ | १९-२० |
| ४ | ३ | १ | १ | १ | १ |
| | | २ | २ | २ | २ |
| | | ३ | ३ | ३ | ३ |
| | | ४ | ४-५ | ४-६ | ४-५ |
| | | ५ | ६ | ७-१४ | ६-१५ |
| | | ६ | ७-१६ | १५-१६ | |
| ४ | ४ | १ | १ | १-३ | १-३ |
| | | २ | २ | ४ | ४ |
| | | ३ | ३ | ५-७ | ५-७ |
| | | ४ | ४ | ८-२ | ८-९ |
| | | ५ | ५-७ | १०-१४ | १०-१६ |
| | | ६ | ८ | १५-१६ | १७-२२ |
| | | ७ | ९ | १७-२२ | |
| | | ८ | १०-१६ | | |
| | | ९ | १७-२० | | |
| | | १० | २१-२२ | | |
| | | ११ | २३ | | |

## ॥ ग्रन्थोदाहृतप्रमाणाकराः ॥

—*—

—*—

## एकायनश्रुतिः ।



—*—

## ऐतरैयआरण्यकम् ।

—*—

## ऐतरेयब्राह्मणम् ।



—*—

## ऐतरेयोपनिषत् ।



—*—

## कठोपनिषत् ।

—*—

## कमठश्रुतिः।



—*—

## काषायणश्रुतिः।



—*—

## केनोपनिषत्।



—*—

## गारुडपुराणम् ।



—*—

## गीता ।

—*—

## गौतमधर्मसूत्रम ।



—*—

## गोपवनश्रुतिः ।



—*—

## घृतसूक्तं ॥



—*—

## चतुर्वेदशिखा ।



—*—

## छान्दोग्योपनिषत ।

—:o:—

## जाबालश्रुतिः ।



—:o:—

## जैमिनिः ।



—:o:—

## तलवकारब्राह्मणम् ।



—:o:—

## तुरश्रुतिः ।



—:o:—

## तैत्तिरीयारण्यकम् ।

—:o:—

## तैत्तिरीयोपनिषत् ।

—:o:—

## तैत्तिरीयब्राह्मणम् ।



—:o:—

## तैत्तिरीयसंहिता ।



## देवमीमांसान्त्यसूत्रद्वयम् ।



—:o:—

## नाममहोदधिः ।



—:o:—

## नारदीयपुराणम् ।



—:o:—

—*—

पुरुषोत्तमतन्त्रम ।



—:o:—

पैङ्गिश्रुतिः ।



—:o:—

पैङ्गिब्राह्मणम ।



—:o:—

पौत्रायणश्रुतिः ।



—:o:—

पौष्यायणश्रुतिः ।



—:o:—

प्रश्नोपनिषत् ।



—*—

—*—

ब्रह्मतर्कः ।



—*—

ब्रह्मवैवर्तपुराणम् ।



—*—

ब्रह्मसूक्तम् ।



—*—

ब्रह्माण्डपुराणम् ।



—*—

ब्राह्मपुराणम् ।

—*—

## भविष्यत्पर्वम् ।



—*—

## भविष्यत्पुराणम् ।



—*—

## भागवतम् ।

—*—

भागवततन्त्रम् ।



—*—

भाल्लवेयश्रुतिः ।



—*—

मनुस्मृतिः ।



—*—

महाकूर्मपुराणम् ।



—*—

महानारायणोपनिषित् ।

—*—

## महाभारतम् ।



—*—

## महासंहिता ।



—*—

## महोपनिषत् ।



—*—

## माठरश्रुतिः ।



—*—

## मांडव्यश्रुतिः ।

—:o:—

## मांडूक्योपनिषत् ।



—*—

## मात्स्यपुराणम् ।



—:○:—

## माध्यंदिनायनश्रुतिः ।



—:○:—

## मायावैभवः ।



—:o:—

## मुक्तिकोपनिषत् ।



—:o:—

## मुंडकोपनिषत् ।

—*—

## मैत्र्युपनिषत् ।



—:०:—

## मोक्षधर्मः ।



—:०:—

## मौद्गल्यश्रुतिः ।



—:०:—

## मंत्रप्रश्नः ।



—:०:—

## याज्ञिकी ।



—:०:—

## वत्सश्रुतिः ।



—*—

## वामनपुराणम् ।

—*—

वायुप्रोक्तः ।



—*—

वाराहसंहिता ।



—*—

वाराहपुराणम् ।



—*—

विष्णुपुराणम् ।



—*—

विष्णुस्मृतिः ।



—*—

व्यासस्मृतिः ।



—*—

व्योमसंहिता ।



—*—

शतपथब्राह्मणम् ।

—:o:—

## स्कान्दपुराणम् ।



—:o:—

## हरिवंशे ।



—:*:—

## ॥ अनाङ्कितकराः अनुपलभ्यमानाकराश्च ॥

### ॥ श्रुतयः ॥

—:*:—

## ॥ अनुपलभ्यमानाकराः ॥

### ॥ स्मृतयः ॥

—:*:—

—:*:—

## ॥ सूत्रघटकशब्दाः ॥

—:*:—

## ॥ शुद्धाशुद्धपत्रिका ॥

—*-:*:-*—

| पृष्टे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २ | २७ | द्वतीया | द्वितीया |
| ,, | २९ | विशेषण | विशेषण |
| ४ | २४ | भावे। | भावेन |
| ५ | ७ | अजानानां | अजानानानां |
| ,, | १५ | आधर्वणादधर्व | आथर्वणादथर्व |
| ६ | ६ | इत्यधर्वण | इत्यथर्वण |
| ,, | ११ | अधर्वणाख्य | अथर्वणाख्य |
| ७ | ७ | कत्वात् | कत्वाच्च |
| ९ | ७ | पूनस्तस्यार्थ | पुनस्तस्यार्थ |
| ११ | ११ | अन्यभा | अन्यथा |
| ,, | २४ | व्यासः | व्यासाः |
| १२ | २५ | मूख्यामुख्य | मुख्यामुख्य |
| १३ | १६ | अन्यधा | अन्यथा |
| ,, | १९ | जीविनो | जीविनी |
| १६ | १ | मंगळार्थों | मंगलार्थों |
| ,, | ८ | श्रवण | स्रवण |
| ,, | २२ | मङ्गळा | मङ्गला |
| ,, | २३ | मङ्गळं | मङ्गलं |
| ,, | २५ | मङ्गळा | मङ्गला |
| ,, | २६ | मङ्गळ | मङ्गल |
| १७ | ६ | विषम | विषय |
| ,, | १७ | मङ्गळं | मङ्गलं |
| १९ | ५ | ळार्थे | लार्थे |
| ,, | ६ | ळार्थे | लार्थे |
| ,, | ७ | मङ्गळ | मङ्गल |
| २० | २१ | मङ्गळा | मङ्गला |
| २२ | ८ | वक्ति। "यत्प्रभोः" | वक्तियत्प्रभोः ॥ |
| २५ | २८ | सन्यासो | सन्न्यासो |
| २७ | २ | बृ. ४-४-२३. | बृ. ६-४-२३. |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २९ | १ | वृणुते | विवृणुते |
| ,, | ६ | वृणुते | विवृणुते |
| ३० | २४ | स्वप्राधान्येन | न स्वप्राधान्येन |
| ३१ | ९ | मं. प्र. १-१६. | मं. प्र. १६-२. |
| ,, | १० | पतिःमेकेवलंकुरु | पतिमेकेवलंकृधि |
| ,, | १९ | कुलोन्पन्न | कुलोत्पन्न |
| ३३ | १५ | त्यन्यघा | त्यन्यथा |
| ३४ | ५ | शब्दे | शब्दो |
| ३८ | २२ | केवल | केवलं |
| ३९ | १ | म. ना. १. | म. ना. ३-१६. |
| ४२ | २६ | आम्भृणी | अम्भृणी |
| ४३ | २१ | आम्भृण्याः | अम्भृण्याः |
| ,, | २५ | इत्यधिरणे | इत्यधिकरणे |
| ४५ | ३० | प्राय | प्राया |
| ४७ | २४ | सर्वधा | सर्वथा |
| ५२ | ४ | ऋ. ७-९९-१२. | ऋ.७-९९-१. |
| ५४ | २५ | बृ. ३-९-२६. | बृ. ५-९-२६. |
| ५६ | ९ | स्फुठ | स्फुट |
| ५८ | ३ | त्यर्थ | त्यर्थः |
| ,, | १७ | सिद्धि | सिद्धिः |
| ५९ | २४ | एवं | मेंवे |
| ६० | ९ | इत्यारभ्यो | इत्यारभ्य |
| ,, | १४ | पाञ्च | पञ्च |
| ६३ | ९ | स्थानंपूर्वे | पूर्वपूर्व |
| ६४ | २५ | ससम्यक् | संसम्यक् |
| ६५ | १३ | लोकः | लोके |
| ,, | १४ | प्यार्यो | प्याचार्यो |
| ६७ | २२ | अरूपंस्वरू | अरूपंरू |
| ६९ | १६ | बृ. २-४-५. | बृ. ४-४-५. |
| ,, | १७ | बृ. ४-४-२०. | बृ. ६-४-२०. |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ,, | १८ | बृ. ४-४-२१. | बृ. ६-४-२१. |
| ७० | १६ | तदुद्देशेन | यदुद्देशेन |
| ७१ | १८ | अप्रसिद्ध | अप्रसिद्धि |
| ,, | २२ | सर्वे | सर्वं |
| ७२ | ५ | त्प्राधानस्य | त्प्रधानस्य |
| ७३ | १० | व्याख्यातः | व्याख्यातं |
| ७५ | २२ | ङः | उ |
| ७६ | १ | बृ. २-५-१९. | बृ. ४-५-१९. |
| ,, | १४ | विष्णु | विष्णू |
| ७७ | १९ | बृ. ४-४-३१. | बृ. ६-४-१३. |
| ,, | २२ | अह | आह |
| ,, | २५ | । | त् |
| ७८ | ७ | बृ. ५-१-१. | बृ. ७-१-१. |
| ८४ | ९ | स्त्र । ति | स्त्रयति |
| ,, | १४ | दी ृया | दीघ्रूया |
| ८५ | ४ | भूमार्थे | भूमार्थे |
| ,, | १८ | ग्रन्ध | ग्रन्थ |
| ,, | ३१ | काअपूर्व | कापूर्व |
| ८७ | १३ | त्वा ः | त्वात् |
| ८७ | १५ | नन्तत्व | नन्दत्व |
| ,, | २० | भुतं | भूतं |
| ८८ | ४ | द्विविधा | द्विविधाः |
| ८९ | २१ | रूद्र | रुद्र |
| ९० | २६ | देहत्व | देवत्व |
| ९२ | १७ | वाचक | वाचिक |
| ९६ | ५ | श्रति | श्रुति |
| १०० | २८ | घटकेति | घटिकेति |
| १०३ | २९ | देशश्य | देशस्य |
| १०४ | ३ | भवात | भवति |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १०७ | १७ | श्रुतिश्च । अपिः | श्रुतिस्थः अपिः |
| ११० | २४ | रक | एक |
| ११४ | १० | सयुच्चये | समुच्चये |
| ११७ | १९ | वाक्येन विजा | वाक्ये नविजा |
| १२३ | ९ | पुर्वे | पूर्वे |
| ,, | १० | पुर्वे | पूर्वे |
| ,, | १५ | पुर्वे | पूर्वे |
| ,, | १६ | श्रत्यु | भुत्यु |
| १२५ | ३ | ऋ. ७-९८-१. | ऋ. ७-९९-१. |
| ,, | ८ | सोरलोपेनरु | सोरु |
| १२९ | २५ | कर्नोदि | कर्णादि |
| १३० | ५ | ऋ. ७-९८-१. | ऋ. ७-९९-१. |
| १३२ | ३ | विधानार्थः | विधानार्थे |
| १३४ | १९ | प्रकररण | प्रकरण |
| १३५ | १ | छां. ६-१२-१. | छां. ३-१२-१. |
| १३६ | १९ | भूताति | भूतानि |
| ,, | ३० | पूरुषसक्त | पुरुषसूक्त |
| ,, | ,, | चऽभ्य | चाऽभ्य |
| १३८ | ११ | ग्नीरानभो | ग्नीरनभो |
| १३९ | १६ | विण्णु | विष्णु |
| ,, | २८ | माहारा | महारा |
| १४२ | ५ | * युज्यते | * विद्यते |
| १४४ | ६ | देवाः | वेदाः |
| १५० | २६ | ऐ.आ. ५-२-१. | ऐ.आ. ३-२-१-१. |
| १५१ | २५ | हेतूपादक | हेतूपपादक |
| १५३ | ३१ | पूपास्य | पूपास्य |

॥ इतिप्रथमः पादः ॥

| | | | |
|---|---|---|---|
| १५६ | १० | ण्यइति | ण्यमिति |

* पाठान्तरम्.

